अथ ह भगवानादिदेव एतस्य गुणविसर्गस्य परिबृंहणानुध्यानव्यवसितसकलजगदभिप्राय आत्मयोनिरखिलनिगमनिजगणपरिवेष्टितः स्वभवनादवततार ॥ ७ ॥ स तत्रतत्र गगनतल उडुपतिरिव विमानावलिभिरनुपथममरपरिवृढैरभिपूज्यमानः पथिपथि च वरूथशः सिद्धगंधर्व साध्यचारणमुनिगणैरुपगीयमानो गंधमादनद्रोणीमवभासयन्नुपससर्प ॥ ८ ॥

पालनायोपामंत्रितो नियुक्तो नैवाभ्यनंदन्नैच्छत् । अथ ह तदैव भगवानादिदेवो ब्रह्मा स्वभवनादवततारेत्यन्वयः । उपामंत्रणे हेतुः । आम्नाता राज्ञां शास्त्रेणोक्ता ये प्रवराः श्रेष्ठा गुणास्तेषां गणस्यैकांतभाजनतया नियताश्रयत्वेन । अनिच्छायां हेतुः । परमार्थसत्तत्त्वमात्मयाथात्म्यमवगतं तद्येन स तथा । अतो ब्रह्मसत्रेणात्मध्यानेन कार्येण दीक्षिष्यमाणो नियमं ग्रहीष्यन् । प्रागपि वासुदेव एव निरंतरसमाधियोगेन चित्तैकाग्र्येण समावेशितः समर्पितः सकलकारकाणामिंद्रियाणां याः क्रियास्तासां कलापो येन सः । यद्यपि तत्पित्रोक्तं न प्रत्याख्येयं तथापि तदधिकरणे राज्याधिकारेऽसतोऽपि मिथ्याभूतादपि राज्यप्रपंचादात्मनः पराभवमालोचयन्नाभ्यनन्दत् ॥ ६ ॥ गुणविसर्गस्य गुणसृष्टेः परिबृंहणं समृद्धिस्तदनुचिंतया व्यवसितः सकलजगतामभिप्रायो येन सः । यथा राज्ञा चारैर्मंडलेश्वराणामभिप्रायो निश्चीयते तद्वत् । अखिलैर्निगमैर्मूर्तिमद्भिर्वेदैर्निजगणैश्च मरीच्यादिभिः परिवृतः सत्यलोकादवतीर्णः ॥ ७ ॥ स च ब्रह्मा तत्रतत्रोडुपतिश्चन्द्र इव प्रकाशमानो गन्धमादनस्य द्रोणीं दरीमवभासयन्नुपससर्पेत्यन्वयः ।

कार्यमिति नियमं कर्त्तुमुद्यत इत्यर्थः । समर्पणं च 'यत्करोषि यदश्नासि' इत्यादि 'ब्रह्मार्पणं ब्रह्म हविः' इत्यादि श्रीगीतोक्तप्रकारेण ज्ञेयम् । राजपुत्र इति नववयस्त्वं ज्ञापितम् । संदर्भः—स्वभावत एव परमभागवतः ततो नारदेत्यादि, ततो भगवति वासुदेवेत्यादि, ततो ब्रह्मसत्रेणेत्यादि, ततोऽवनितलपरिपालनायेत्यादि, ततो नैवाभ्यनंददित्यादि योज्यम् ॥ ६ ॥ भूतलमिति शेषः । प्रियव्रतं प्रत्युपदेष्टव्ये धर्मे प्रमाणीकरणार्थं सत्यलोकादवतीर्ण इत्यर्थः । तत्र प्रियव्रतं बाल्यमारभ्यैव विरक्तं गृहान्निर्विद्य वन एव कृतवासं ज्ञात्वा तदाज्ञया कनिष्ठोऽप्युत्तानपादो राज्यं चकार तद्वंश्याश्च प्रचेतःपर्यंतं यथासमयं राज्यं चक्रुरेवं च स्वायंभुवमन्वंतरस्यार्द्धादप्यधिकः कालो गतवान् प्राचेतसो दक्षश्च स्वायंभुवमन्वंतर एव लब्धजन्मा पौर्वभविकैश्वर्यकामनया तपसे जगाम । ततश्चाराजकं वीक्ष्य मनुरुपायांतरमलभमानो विरक्तमपि प्रियव्रतं वनादानिनीषन्नप्यानेतुं यदा न शशाक तदा ब्रह्मैवागत्य प्रियव्रतं राज्ये प्रवर्त्तयामास । ततश्च पञ्चममन्वंतरपर्यंतं क्रमेण प्रियव्रतस्य तद्वंश्यानां च राज्याधिकारः तृतीयचतुर्थपञ्चममनूनामुत्तमतामसरैवतानां प्रियव्रतपुत्रत्वात् । द्वितीयमनोः स्वारोचिषस्यापि तदंतःपातात् तत्तन्मनुपुत्रपौत्राद्यास्तु प्रैयव्रता एव राज्ये खंडमंडलेश्वररूपा राजानो बभूवुः । ततश्च षष्ठस्य चाक्षुषमन्वंतरस्याप्यारंभे तपसो निवृत्तेन दक्षेण प्रजासृष्टिस्तत्रैव तस्य साम्राज्यञ्च यदुक्तं "चाक्षुषे त्वंतरे प्राप्ते प्राक्सर्गे कालविद्रुते । यः ससर्ज प्रजा इष्टाः स दक्षो दैवनोदितः" इति । चाक्षुषस्य मनोरुत्तानपादवंश्यत्वात्तन्मन्वंतरपर्यंतमेव स्वायंभुवमनोरधिकार इति ज्ञेयम् । स्वारोचिषस्य गांधर्वत्वेपि 'तन्मध्यपतितस्तद्ग्रहणेन गृह्यते क्षीरांबुवत्' इति न्यायेन स्वायंभुवमनुतत्पौत्रोत्तमयोरंतर्गतत्वात्स्वायंभुवत्वमेवेति तस्य गांधर्वत्वं तु मार्कंडेयमनुवर्णनोपाख्यानादवसेयम् ॥ ७ ॥ भूतलं प्रति तस्यावतरणे शोभामाह—तत्र तत्र लोके देशे वांतरिक्षस्य

तत्र ह वा एनं देवर्षिर्हंसयानेन पितरं भगवंतं हिरण्यगर्भमुपलभमानः सहसैवोत्थायार्हणेन सह पितापुत्राभ्यामवहितांजलिरुपतस्थे ॥ ९ ॥
भगवानपि भारत तदुपनीतार्हणः सूक्तवाकेनातितरामुदितगुणगणावतारसुजयः प्रियव्रतमादिपुरुषस्तं सदयहासावलोक इति होवाच ॥ १० ॥
श्रीभगवानुवाच ॥ निबोध तातेदमृतं ब्रवीमि माऽसूयितुं देवमर्हस्यप्रमेयम् ॥ वयं भवस्ते तत एष महर्षिर्वहाम सर्वे विवशा यस्य दिष्टम् ॥ ११ ॥
न तस्य कश्चित्तपसा विद्यया वा न योगवीर्येण मनीषया वा ॥ नैवार्थधर्मैः परतः स्वतो वा कृतं विहंतुं तनुभृद्विभूयात् ॥ १२ ॥

अमरपरिवृढैर्देवेंद्रादिभिः ॥ ८ ॥ हंसयानेनोपलक्षणेनैनं पितरमुपलभमानो मत्पिताऽयमिति लक्षयन्पितापुत्राभ्यां मनुप्रियव्रताभ्यां सह नारदः कृतांजलिः सन्सहसैवाभ्युत्थायार्हणेन पूजया सहोपतस्थे तुष्टाव । प्रियव्रतं तदा मंदरद्रोण्यां नारद उपदिशति मनुश्च तं नेतुमागतोऽस्तीति ज्ञातव्यम् ॥ ९ ॥ हे भारत भगवानादिपुरुषो ब्रह्माऽपि तं प्रियव्रतमिति होवाचेत्यन्वयः । तेन नारदेनोपनीतमर्हणं यस्य सः। सूक्तवाक्येन यथोचितवाक्येन अतिशयेनोदिता वर्णिता गुणगणा अवताराः सुजयाः सर्वोत्कर्षाश्च यस्य ॥ १० ॥ प्रवृत्तिनिष्ठं मद्वाक्यं प्रतिकूलं मत्वा मय्यसूयां करिष्यतीति शंकमानो नाहमेवं वदामि किं तु मन्मुखेन हरिरेव त्वामाज्ञापयतीति वदन्प्रवृत्तिनिवृत्तिरहस्यमाह । निबोधेति नवभिः । ऋतं सत्यम् । अप्रमेयं देवमसूयितुं दोषारोपेण द्रष्टुं नार्हसि । ते तव ततस्तात एष त्वद्गुरुश्च महर्षिः दिष्टमादिष्टमाज्ञा विवशा अस्वतंत्राः संतो वहामः ॥ ११ ॥ विवशत्वमेवाह चतुर्भिः । नेति । तस्य कृतं तेन निर्मितं तनुभृज्जीवस्तपआदिभिर्विहंतुमन्यथा कर्तुं न विभूयात्प्रभुर्न भवेत् । मनीषया सामादिबुद्धिब

अमराणां परिवृढैः प्रभुभिः "प्रभौ परिवृढः" इति निपातनात् । विमानानामावलयः पंक्तयो येषां तैः । द्रोणी पर्वतांतरालभूमिः ॥ ८ ॥ तदा नारदस्तत्र मंदरद्रोण्यां गंधमादनस्य नामांतरं मंदरमपि 'मंदरो गंधमादनः' इत्यभिधानात् ॥ ९ ॥ हे भारतेति । त्वं तु साक्षादाकाशवाग्रूपभगवत्समर्पितराज्यभरतकुले जातोसीत्यतोऽत्र राज्यदानार्थं ब्रह्मागमने विस्मयं मा कुर्विति भावः । यद्वा—तैर्नारदमनुप्रियव्रतैरुपनीतमर्हणमर्घ्यादि यस्य स तथा । यद्वा—सूक्तवाक्येन "हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्" इत्यादिवैदिकसूक्तेन । गुणानां वात्सल्यौदार्यादीनां गणः । विश्वनाथस्तु—उदितो वर्णितो गुणगणः स्वप्रजासु वात्सल्यादिस्तत एव हेतोरवतारः सत्यलोकादवतरणं तत एव सुजयोऽत्युत्कर्षो यस्य स तथा । सदयेति । तस्याभिवांछितभक्तिज्ञानवैराग्याणामहमेव प्रतिबंधकोऽभूवं तद्वार्हस्थेप्यस्य भक्तिर्वर्द्धतामेवेत्याशीर्व्यंजकः सदयावलोकः । अहं राज्यं न करोमीति तव प्रौढिः । त्वामहं राज्यं कारयामीति मम प्रौढिस्तत्र पश्यामः कस्याद्यप्रौढिस्तिष्ठतीति नर्मस्मेरि प्रियव्रते सहासावलोकश्च यस्य सः ॥ १० ॥ निबोध स्वबुद्ध्यैवेदं परामृशेत्यर्थः । हे तातेति । नाहं तव शत्रुर्यत्त्वां दुःखयामीति भावः । ऋतं सत्यमेव न तु त्वामहं प्रतारयामीति भावः । ब्रवीमीत्यहं ब्रह्मा न तु स्वपितेवाहमप्रमाणीकर्त्तव्य इति भावः । किं सत्यं तत्राह-वयमिति । तातो मनुः स खलु यस्मैयस्मै हृदा यद्यदादिशति तथैव चेष्टते इति तदाज्ञयैव त्वामहं राज्ये प्रवर्त्तयामीति भावः । यमहं सर्वात्मना भजे स प्रभुरेव मां संसारसिंधौ निमज्जयतीति स्वेष्टदेवेपि दोषदर्शी मा भूरित्याह—मासूयितुमिति । अमेयं प्रमातुमशक्यं कमपि संसारेऽपि प्रवर्त्य उद्धरति । कमपि वनेऽपि प्रस्थाप्य नोद्धरतीति कस्तस्य चरितं वेदेति भावः ॥ ११ ॥ न चात्र स्वहठं रक्षितुमात्मनस्तपोविद्यायोगबलं प्रदर्शयितव्यमित्याह—ननु त्वद्द्वारा मां राज्ये प्रभुः प्रवर्त्तयति

भवाय नाशाय च कर्म कर्तुं शोकाय मोहाय सदा भयाय ॥ सुखाय दुःखाय च देहयोगमव्यक्तदिष्टं जनतांग धत्ते ॥ १३ ॥ यद्वाचि तंत्यां गुणकर्मदामभिः सुदुस्तरैर्वत्स वयं सुयोजिताः ॥ सर्वे वहामो बलिमीश्वराय प्रोता नसीव द्विपदे चतुष्पदः ॥ १४ ॥ ईशाभिसृष्टं ह्यवरुंध्महेंग दुःखं सुखं वा गुणकर्मसंगात् ॥ आस्थाय तत्तद्यदयुंक्त नाथश्चक्षुष्मतांधा इव नीयमानाः ॥ १५ ॥

लेन । परतो बलवदाश्रयात् ॥ १२ ॥ तत्र देहयोगे तावत्पारतंत्र्यं प्रसिद्धमित्याह । भवायेति। भवो जन्म । भवाद्यर्थमव्यक्तेनेश्वरेण दिष्टं दत्तं देहयोगं जनता जीवसमूहः सदा धत्ते न त्वन्यथा कर्तुं शक्नोति । अंग हे प्रियव्रत ॥ १३ ॥ कर्मकरणेऽपि पारतंत्र्यमाह । यद्वाचीति । यस्य वाचि वेदलक्षणायां तंत्यां दामन्यां गुणाः सत्त्वाद यस्तत्पूर्वकाणि च यानि कर्माणि तन्निबन्धनैर्दामभिर्ब्राह्मणादिशब्दैः सुदुस्तरैः सुदृढैर्हे वत्स वयं सर्वे सुयोजिता निबद्धाः संतस्तस्मै ईश्वराय बलिं वहामस्तदिच्छया कर्म कुर्मः । नसि नासिकायां प्रोता बद्धाः सन्तश्चतुष्पदो बलीवर्दा यथा द्विपदे पुरुषाय ॥ १४ ॥ भोगेषु पारतंत्र्यमाह । ईशा ईश्वरेणाभिसृष्टं दत्तमेवांग हे प्रियव्रतावरुंध्महे स्वीकुर्मः । यथा स्वामिना दत्तमेव कणिशादि बलीवर्दा भक्षयंति न स्वेच्छया तद्वत् । न चैवं वैषम्यमीश्वरस्य यतो गुणकर्मसंगान्नाथो यद्यद्देवतिर्यगादिलक्षणं देहमयुंक्त

यथा तथा नारदद्वारा मां राज्यात्प्रव्राजयति चेति किमत्र निश्चिनोमीति चेद् बुद्धिबलेन मां परमेश्वरं विजिगीषस्वेत्याह—मनीषया वेति । तेनोत्तरमपि भगवदादिष्टं मत्वा राज्यं कुर्वन्नेव तत्रानासक्त्या प्रव्रज्यामपि कुर्वीति भावः । न च यथेष्टद्रव्यदानतः स्वप्रतिमूर्त्तिकल्पनेन राज्यं चिकीर्षयस्व नापि मां विपदं बहुधर्मैर्बलवदाश्रयेण वा स्वबाहुबलेन वोत्तितीर्षेत्याह—नैवार्थेति ॥ १२ ॥ तत्र संसारे । अंगेति स्नेहाधिक्यद्योतनाय । नात्र किमपि शोचनीयं यतो देहधारिण ईश्वराधीना भद्रमभद्रं वा स्वेच्छया परेच्छया वा सर्वं सहंत एवेत्याह—भवायेति । भवनाशौ पुनःपुनर्जन्ममृत्यू तदाद्यर्थं धत्ते स्वकर्मोपार्जितमपि देहमीश्वराज्ञां विना न प्राप्नोति यथा साध्वसाधुक्रियाद्युपार्जितमपि शालिक्षेत्रकारागारादिकं नृपाज्ञां विना प्रजा न प्राप्नोति नृपः खल्वन्यथापि कुर्यादित्यतो हेतोः ॥ १३ ॥ देहधारणे पारतंत्र्यमिव कर्मकरणेपि पारतंत्र्यमाह—तन्निबंधनैः कर्महेतुकैः ते बलीवर्दा यथा मनुष्यदत्तस्य भारस्यावहने गमनागमनक्रियादिषु स्वातंत्र्ये च दंडं प्राप्नुवंति तथा वयमपीति भावः । हे वत्सेति । यद्यस्माभिर्बलीवर्दायमानैस्तदायत्तत्वमंगीकृतं तदा यं त्वं वत्सायमानो नांगीकरिष्यसीति भावः॥ १४ ॥गुणेति । तमआदिगुणनिबंधनानि यानि कर्माणि तेषु संगादासक्तत्वात् । यथा स्वीयत्वात्समेष्वपि बलीवर्देषु मध्ये साध्वसाधुकर्मकरणतारतम्यानुरूपमेव केभ्यश्चिदुत्तमगृहाभ्यं तरस्थापितेभ्यः सघृतदुग्धौदनादिकं तत्स्वामी दत्ते केभ्यश्चन रूक्षबंधिचणकमाषादिकं केभ्यश्चन कणिशघासादिकं केभ्यश्चन नीहारातपपंकादिमाति बहिःस्थले स्थापितेभ्यः साक्रोशदंडप्रहारं विरसं दलपलालादिकमिति किं कृत्वोवरुंध्महे नाथः स्वामी यद्यदयुंक्त भद्रमभद्रं वा फलं ददौ तत्तदास्थाय अस्मद्वैगुण्यसाद्गुण्यानुरूपमेव ददाति स्वामिनः को दोष इति मनसि विश्वस्येत्यर्थः । प्रत्युत परमेश्वरस्यात्र गुण एव द्रष्टव्य इति दृष्टांतेनाह—चक्षुष्मतेति । शीतलमातपतप्तं वा वर्त्म नीयमानास्तत्र कदाचिच्छीतले वर्त्मनि कंटककूर्पादिकं दृष्ट्वा यदा तप्तं वर्त्म नीयंते तेन किमंधैश्चक्षुष्मानुपालभ्यतेऽपि तु हितकृदयमिति विश्वस्य प्रशास्यत एवेति भावः ॥ १५ ॥

**मुक्तोपि तावद्बिभृयात्स्वदेहमारब्धमश्नन्नभिमानशून्यः ॥ यथाऽनुभूतंप्रतियातनिद्रः किं त्वन्यदेहाय गुणान्न वृंक्ते ॥ १६ ॥ भयं प्रमत्तस्य वनेष्वपि स्याद्यतः स आस्ते सहषट्सपत्नः ॥ जितेंद्रियस्यात्मरतेर्बुधस्य गृहाश्रमः किं नु करोत्यवद्यम् ॥ १७ ॥ यः षट् सपत्नान्विजिगीषमाणो गृहेषु निर्विश्य यतेत पूर्वम् ॥ अत्येति दुर्गाश्रित ऊर्जितारीन्क्षीणेषु कामं विचरेद्विपश्चित् ॥ १८ ॥ त्वं त्वब्जनाभांघ्रिसरोजकोशदुर्गाश्रितो निर्जितषट्सपत्नः ॥ भुंक्ष्वेह भोगान्पुरुषातिदिष्टान्विमुक्तसंगः प्रकृतिं भजस्व ॥ १९ ॥**

योजितवांस्तत्तदास्थाय स्वीकृत्य । यथांधाश्चक्षुष्मता छायामातपं वा नीयमानाः संतस्तत्रैव गच्छंति तद्वत् ॥ १५॥ नन्वेतत्सर्वमविदुष एव न त्वात्मविद इत्याशंक्याह । मुक्तोऽपीति यावत्प्रारब्धं कर्म तावत् । यथा स्वप्नेऽनुभूतं प्रतियातनिद्रो गतनिद्रोऽभिमानशून्य एवानुस्मरति। तर्हि भोगवासनया पुनर्जन्म भवेत्तत्राह किं तु देहांतरारंभकान्गुणान्कर्माणि वासनाश्च न वृंक्ते न संभजते ॥ १६ ॥ ननु गृहे वर्तमानस्य भोगान् भुंजानस्य कुतोऽभिमानाभावो मोक्षो वा अतस्तत्त्यागेन वनवास एव युक्तस्तत्राह । भयं संसारः स्यादेव प्रमत्तस्याजितेंद्रियस्य । वनेष्विति । संगभिया वनाद्वनांतरं गच्छतोऽपीत्यर्थः । सहैव षट् सपत्नाः शत्रवो मनोबुद्धींद्रियाणि च यस्य स तथाभूत एव वनेष्वपि यत आस्ते बुद्धत्वेन जितेंद्रियत्वादात्मरतेरात्मारामस्यावद्यं रागादिदोषं किं नु करोति न करोत्येव ॥ १७ ॥ ननु गृहे वसतः पुरुषस्य रागादयः संभवंति न तु वन इत्याशंक्याह । य इति । यः षड्वैरिणः षडिन्द्रियाणि विजिगीषमाणः स पूर्वं गृहेषु स्थित्वा तेषामत्यन्तं निरोधमकुर्वन् जेतुं यतेत । क्षीणेष्वरिषु कामं गृहेऽन्यत्र वा विचरेत् । यतो लोके ऊर्जितारीन्दुर्गाश्रित एवात्येति जयति पश्चाद्दुर्गे वाऽन्यत्र वा वर्तेत । युद्ध्येतेति पाठे प्रहरेदित्यर्थः ॥ १८ ॥ इदं च गृहदुर्गाश्रयणं प्राकृतानाम् । त्वं त्वब्जनाभस्यांघ्रिसरोजकोश एव दुर्गं तदाश्रितोऽत एव निर्जितषट्सपत्नश्च तथापि पुरुषेणेश्वरेणातिदिष्टान्दत्तान्भोगांस्तावद्भुंक्ष्व । पश्चाद्विमुक्तसंगः सन्प्रकृतिं स्वरूपं भजस्व । आत्म

अत्राक्षिपति—नन्विति । अविदुषः सकर्मण एव न तु कर्मग्रंथित उत्तीर्णस्यात्मज्ञानिनः । पुनराक्षिपति—तर्हीति ॥ १६ ॥ पुनराक्षिपति नन्विति—अतः मोक्षाभावात् । इत्यर्थ इति । नह्यजितेंद्रियस्य वनवासादिना मोक्षं सेत्स्यति मृगादीनां मोक्षापत्तेरिति भावः । तथाभूत एव षडिंद्रियशत्रुसहित एव । जितेंद्रियस्य तत्राप्यात्मारामस्य तत्रापि बुधस्य वनगृहयोस्तारतम्याभावं बुध्यमानस्य ॥ १७ ॥ पुनराक्षिपति—नन्विति । अजितेंद्रियो जितेंद्रिय इंद्रियजयेप्सुरित्यत्र लोके त्रिविधो जनस्तत्राद्ययोर्गृहाश्रमो न दोष इत्युक्तम् । अंत्यस्य तु प्रत्युत गुण एवेत्याह यो विजिगीषमाणः विजेतुमिच्छति । इत्यर्थ इति । युधधातोः संप्रहारार्थत्वादिति भावः ॥ १८ ॥ त्वं तु त्रिषु मध्ये न कोपीत्याह—त्वमिति । तुर्भिन्नोपक्रमे । अब्जनाभेति । न त्वन्यप्राकृतवद्गृहदुर्गाश्रितः न चान्यवज्जितेंद्रियश्च यतो निर्जितेति जितषट्सपत्नेभ्यो निर्गतः तत्र षडिंद्रियाणि भगवत्सौंदर्येष्वासक्तानि परममित्राण्येव न तु शत्रवः अतः पुरुषेण स्वप्रभुणैवातिशयेन दिष्टान्दत्तान् भोगानिति कर्मजन्यानामेव भोगानां बंधकत्वं न त्वीश्वरदत्तानामिति भावः । इत्यर्थ इति । राज्यभारं स्वपुत्रे

श्रीशुक उवाच ॥ इति समभिहितो महाभागवतो भगवतस्त्रिभुवनगुरोरनुशासनमात्मनो लघुतयाऽवनतशिरोधरो बाढमिति सबहुमानमुवाह ॥ २० ॥ भगवानपि मनुना यथावदुपकल्पितापचितिः प्रियव्रतनारदयोरविषममभिसमीक्षमाणयोरात्मसमवस्थानमवाङ्मनसं क्षयमव्यवहृतं प्रवर्तयन्नगमत् ॥ २१ ॥ मनुरपि परेणैव प्रतिसंधितमनोरथः सुरर्षिवरानुमतेनात्मजमाखिलधरामंडलस्थितिगुप्तये आस्थाप्य स्वयमतिविषमविषयविषजलाशयाशया उपरराम ॥ २२ ॥

निष्ठो भवेत्यर्थः ॥ १९ ॥ आत्मनस्ततो लघुतयाऽल्पतया तच्छासनमंगीचकार । यद्वा । आत्मनो यदनुशासनं तदलघुतया गौरवेण बाढं तथा करिष्यामीत्यवनतकंधरः सञ्जग्राह ॥ २० ॥ मनुना संतुष्टेनोपकल्पिता पूजा यस्य । प्रियव्रतस्य योगभ्रंशान्नारदस्य च शिष्यनाशात्कुटिलमीक्षणं संभवति तत्तु नास्तीत्याह । अविषमं यथा तथा तयोरभिसमीक्षमाणयोः सतोरात्मनः सम्यगवस्थानमवाङ्मनसं वाङ्मनसयोरविषयं क्षयं निवासं जगाम । पाठांतरे अवाग्वाचामगोचरं कथंचिन्मनसः क्षयं विषयमतोऽव्यवहृतं व्यवहारशून्यं ब्रह्मनिवृत्तं प्रवर्तयन् । व्यवहाराद्विषण्णः सन् व्यवहारातीतं स्वरूपं चिंतयन्नंतर्हित इत्यर्थः ॥ २१ ॥ पुत्रं राज्येऽभिषिच्य वनं यास्यामीत्येवं यो मनोरथः स परेण ब्रह्मणैव प्रतिसंधितः संपादितो यस्य सः । नारदस्यानुमतेन राज्ये स्थापयित्वाऽतिविषमो दुस्तरो यो विषयविषजलाशयो गृहं तस्याशा दिक् प्रवृत्तिवासना भोगेच्छा

न्यस्य वने तिष्ठेतीयमेव प्रकृतिः सर्वराजन्यानामिति भावः ॥ १९ ॥ अल्पतया तत्पौत्रत्वादित्यर्थः । स्वस्य लघुता तु प्रसिद्धैव न केवलं तदभिप्रायेणैव तदंगीचकार किं तु भगवता 'पश्चात्प्रकृतिं भजस्व' इति यदुक्तं तदभिप्रायेणैव तदुररी चकारेत्याह—यद्वेति ॥ २० ॥ यथावदिति । तत्कालदेशोचितसपर्ययेत्यर्थः । वाङ्मनसयोः प्राकृतयोरविषयं सर्वनिवासस्थानत्वात्क्षयमाश्रयत्वमित्यर्थः । पाठांतरे 'अवाङ्मनसः क्षयम्' इति पाठे । न विद्यंते वाचस्त्रैगुण्यविषया विधिनिषेधात्मिकाः श्रुतयो यत्र तथाभूतं यन्मनस्तस्य क्षयं निस्त्रैगुण्यमनोविषयमित्यर्थः । यद्वा—अव्यवहृतं प्रियव्रतं व्यवहारे प्रवर्त्तयन्क्षयं सत्यलोकमगमत् । कीदृशमात्मनः स्वस्य सम्यगवस्थानं यत्र तत् । प्रियव्रतं कीदृशम् अवाङ्मनसमात्माराममहाभागवतत्वात्प्राकृतवाङ्मनसशून्यमित्यर्थः । यद्वा वासुदेवे वाङ्मनसं यस्य तम् । यद्वा—तयोर्नारदप्रियव्रतयोरात्मसमवस्थानं ब्रह्म प्रवर्त्तयन् जगामेत्यर्थः । इत्यर्थ इति । सर्वसुखानां ब्रह्मानंदेंतर्भूतत्वादिति भावः ॥ २१ ॥ स्थितिगुप्तये मर्यादापालनाय । संदर्भः—मनुरपीत्यादिवाक्येन प्रियव्रतस्य राज्यं पूर्वमिति गम्यते तथैव विष्णुपुराणेऽपि दृश्यते तथैव च तत्पुत्राणां तृतीयचतुर्थपञ्चममनुत्वमुत्तानपादवंशजस्य तु चाक्षुषस्य षष्ठमनुत्वं तद्वंशांतिमस्य प्राचेतसस्य दक्षस्य च षष्ठमन्वंतरे राज्यं घटतेऽन्यथा परिवेत्तृत्त्वादिकमापद्येत । न च तयोर्ज्येष्ठानुक्रमेणैव राज्यं किं तु वंशेषु कदाचित्कस्यचित्साम्राज्यमिति वेनमृत्यौ प्रचेतसां तपस्यायां चाराजकत्वसंभवात् । किं तूत्तानपादस्य चिरकालेनैव सुतोत्पत्तिरिति गम्यते । यत्तु चतुर्थे "प्रियव्रतोत्तानपादौ मनुपुत्रौ महौजसौ । तत्पुत्रपौत्रनप्तृणामनुवृत्तं तदंतरम् ॥" इति । तदपि तद्वंशस्य मनूनामपि तद्ग्रहणेन गृहीतत्वात् । स्वारोचिषस्यापि तदंतःपातात् । यच्च श्रीपृथुं प्रति ब्रह्मवचनं "न वध्यो भवतामिन्द्रो यद्यज्ञो भगवत्तनुः" इति यज्ञस्येन्द्रत्वेन तद्राज्यस्य स्वायंभुवसमकालत्वं बोधयति । अत्रापि तदादरायैव तदभेदनिर्देशो ज्ञेयः । तद्वंशावेशेनैवान्यथासिद्धत्वात् । शब्दार्थस्तु तत्रैव दर्शितः । तत्र प्रायः प्रियव्रतादिराज्यं तृतीमन्वंतरावसानमुत्तानपादादिराज्यं

इति ह वाव स जगतीपतिरीश्वरेच्छयाऽधिनिवेशितकर्माधिकारोऽखिलजगद्बंधध्वंसनपरानुभावस्य भगवत आदिपुरुषस्यांघ्रियुगलानवरतध्यानानुभावेन परिरंधितकषायाशयोऽवदातोऽपि मानवर्धनो महतां महीतलमनुशशास ॥ २३ ॥ अथ च दुहितरं प्रजापतेर्विश्वकर्मण उपयेमे बर्हिष्मतीं नाम तस्यामुह वाव आत्मजानात्मसमानशीलगुणकर्मरूपवीर्योदारान्दश भावयांबभूव कन्यां च यवीयसीमूर्जस्वतीं नाम ॥ २४ ॥ आग्नीध्रेध्मजिह्वयज्ञबाहुमहावीरहिरण्यरेतोघृतपृष्ठसवनमेधातिथिवीतिहोत्रकवय इति सर्व एवाग्निनामानः ॥ २५ ॥ एतेषां कविर्महावीरः सवन इति त्रय आसन्नूर्ध्वरेतसस्त आत्मविद्यायामर्भभावादारभ्य कृतपरिचयाः पारमहंस्यमेवाश्रममभजन् ॥२६॥ तस्मिन्नु ह वा उपशमशीलाः परमर्षयः सकलजीवनिकायावासस्य भगवतो वासुदेवस्य भीतानां शरणभूतस्य श्रीमच्चरणारविंदाविरतस्मरणाविगलितपरमभक्तियोगानुभावेन परिभावितांतर्हृदयाधिगते भगवति सर्वेषां भूतानामात्मभूते प्रत्यगात्मन्येवात्मनस्तादात्म्यमविशेषेण समीयुः ॥ २७ ॥ अन्यस्यामपि जायायां त्रयः पुत्रा आसन्नुत्तमस्तामसो रैवत इति मन्वंतराधिपतयः ॥ २८ ॥ एवमुपशमायनेषु स्वतनयेष्वथ जगतीपतिर्जगतीमर्बुदान्येकादश परिवत्सराणामव्याहताखिलपुरुषकारसारसंभृतदोर्दंडयुगलापीडितमौर्वीगुणस्तनितविरमितधर्मप्रतिपक्षो बर्हिष्मत्याश्चानुदिनमेधमानप्रमोदप्रसरणयौषिण्यव्रीडाप्रमुषितहासावलोकरुचिरक्ष्वेल्यादिभिः पराभूयमानविवेक इवानवबुध्यमान इव महामना बुभुजे ॥ २९ ॥

वा तस्या उपरतोऽभूत् ॥ २२ ॥ यत्पृष्टं गृहे कथमरमत तत्रोक्तमुत्तरमुपसंहरति । इति ह वाव इत्थमेव हि । अधिनिवेशितः प्रापितः कर्माधिकारो यस्य । अखिलस्य जगतो बंधध्वंसनः परोऽनुभावो यस्य तस्य यदंघ्रियुगलं तस्यानवरतं ध्यानं तदनुभावेन परिरंधितकषायो दग्धरागादिमल आशयो यस्य । अतोऽवदातः शुद्धोऽपि महतां ब्रह्मादीनामाज्ञापालनेन मानवर्धनः ॥ २३ ॥ उ इति विस्मये । ह इति प्रसिद्धौ । वावेति निश्चये । आत्मनः समानैः शीलादिभिरुदारान्महतो दश पुत्रान् जनयामास ॥ २४ ॥ तानाह । आग्नीध्र इध्मजिह्वो यज्ञबाहुर्महावीरो हिरण्यरेता घृतपृष्ठः सवनो मेधातिथिर्वीतिहोत्रः कविश्चेत्यग्नीनां नामानि येषां ते ॥ २५ ॥ अर्भभावाद्बाल्यादारभ्य ॥ २६ ॥ तस्मिन्पारमहंस्याश्रमे श्रीमच्चरणारविंदयोरविरतस्मरणेनाविगलितोऽखंडितो यः परमो भक्तियोगस्तस्यानुभावेन विशोधितांतःकरणे प्रतीतो यो भगवांस्तस्मिन्नात्मनस्त्वंपदार्थस्य तादात्म्यविशेषेण विशेषो देहाद्युपाधिस्तदपोहेन प्रापुः ॥ २७ ॥ २८ ॥ उपशमाश्रयेषु सत्सु । दशकोटिभिरेकमर्बुदम् । एतादृशानि वर्षाणामेकादशार्बुदानि जगतीं



तु षष्ठावसानं प्रियव्रतवंश्ययोस्तामसरैवतयोस्तु मनुत्वं राजत्वं चातीतचरमावस्थायां ज्ञेयं चाक्षुषवत् । तस्मात्सर्वमेतत्समंजसमतः कथन एव विपर्यासो न कथनीये यथा दशमे कुरुक्षेत्रयात्रादाविति ॥ २२ ॥ अतो रागादिदोषराहित्यात् ॥ २३ ॥ अथातो राज्याद्धेतोरेव ॥ २४ ॥ २५ ॥ २६ ॥ तादात्म्यमैक्यं तत्साम्यं वा । अपोहेन निराकरणेन ॥ २७ ॥ २८ ॥ अर्बुदं कोटिपर्यायं तथैव ह्यष्टमस्कंधे बलेः स्वर्गविजये व्याख्यातं

यावदवभासयति सुरगिरिमनुपरिक्रामन्भगवानादित्यो वसुधातलमर्धेनैव प्रतपत्यर्धेनावच्छादयति तदा हि भगवदुपासनोपचितातिपुरुषप्रभाव स्तदनभिनंदन्समजवेन रथेन ज्योतिर्मयेन रजनीमपि दिनं करिष्यामीति सप्तकृत्वस्तरणिमनुपर्यक्रामद्द्वितीय इव पतंगः ॥ ३० ॥

बुभुज इत्यन्वयः । राज्ञो धर्मपालनविषयभोगप्रभावैर्भाव्यम् । तत्रानायासेनैव धर्मपालनमाह । अव्याहता अखिलाः पुरुषकाराः पौरुषाणि यस्मात्तेन सारेण बलेन संभृतौ पूर्णौ दोर्दंडौ तयोर्युगलं तेनापीडित आकृष्टो मौर्वीगुणस्तस्य स्तनितं टंकारस्तेनैव युद्धं विना विरमिता निरस्ता धर्मप्रतिपक्षा येन। भोगातिशयमाह । बर्हिष्मत्याः स्वभार्याया अनु दिनमेधमानैः प्रमोदादिभिः पराभूयमानविवेक इवात एव विषयासक्त्यात्मानमनवबुध्यमान इव बुभुजे।तत्र प्रमोद आयांतं पतिं दृष्ट्वा हर्षस्ततः प्रसरणमभ्युत्थानादिलीला ततो यौषिण्यं योषित्स्वभावकृतश्रृंगारानुभावप्रकाशनं ततो व्रीडया प्रमुषिताः संकुचिता हासावलोकास्ततो रुचिरक्ष्वेल्यादयः परिहासवाक्यादीनि तैः ॥२९॥ प्रभावातिशयमाह।

तथामरकोशे क्षीरस्वामिधृतं प्रमाणवचनं "दशशतसहस्राण्ययुतं प्रयुताख्यलक्षमथ नियुतम्। अर्बुदकोटिन्यर्बुदपद्मे खर्वं निखर्वमिति दशभिः ॥ गुणनान्महाशंखसमुद्रमध्यान्तमथ परार्द्धकं च । स्वहतं परार्द्धमगितं तत्स्वहतं भूर्य्यतोऽसंख्यम् ॥" इति प्रयुताख्यलक्षमिति तयोरेकपर्यायत्वमित्यर्थः । एवमर्बुदकोव्योरपि अर्बुदाख्यकोटिरिति मध्यपदलोपी समासः । तथा च माध्यंदिनशाखायाम् "इमा मेऽग्नय इष्टिका धेनवः संत्येकादश च शतं च सहस्रं च सहस्रायुतं च प्रयुतं चार्बुदं च न्यर्बुदं च समुद्रं मध्यं वांत्यश्च परार्द्धं च" इत्यादिश्रुतेः कोटिरेवार्बुदमित्यर्थः । दोर्दंडौ भुजदंडौ । तत्र प्रमोदादिषु । आदिना स्वांगावरणविवर्त्तनस्थानांतर गमनादिग्रहः श्रृंगारानुभावप्रकाशनम्-अपांगचालननासामुक्तोन्नयनकर्णकंडूयनादि स्वयं दूत्यं ततः पत्युरौत्सुक्यमालक्ष्य संकोचिताहासावलोकाः । अत्रेवशब्दद्वयेन तस्य विवेकज्ञानयोः संक्षुब्धयोरपि वैषयिकलोकैर्दुर्गमत्वं व्यंजितं तत्र हेतुर्महामना विषयासक्तितदभावयोर्योगपद्येन सद्भावा दुस्तर्कमनस्तत्त्व इत्यर्थः ॥ २९ ॥ तदा हि प्रियव्रतराज्याधिकारसमये इत्यर्थः । तदनभिनंदन् अर्द्धेनावच्छादनमप्रशंसन् तरणिं सूर्यमनुलक्षीकृत्य तरणे रस्ताचलावरोहसमये स्वयमुदयाचलमारोहन्नित्यर्थः । पतंगः सूर्यः पर्यक्रामत्परिक्रांतवान् । प्रजाभ्यः सुखदानेच्छयैव न तु सूर्यस्पर्द्धया तेन ज्यैष्ठादिमासेषु प्रियव्रताख्यसूर्यस्य चंद्रादप्यातिशीतलत्वं मार्गादिमासेषु तु सूर्यादपि प्रातःसायंकालयोरौष्ण्यमधिकमिति ज्ञेयम्। एवञ्च प्रियव्रतस्य सौभर्यादेरिव योगबलेनैव राजत्वसूर्यत्वे कार्यद्वैधेनैवेति ज्ञेयम् । 'पतंगः पक्षिसूर्ययोः' इति विश्वः । 'द्युमणिस्तरणिर्मित्रः' इत्यमरः । सप्तावृ त्तिरथकरणानंतरं तद्वारणं च पुना रथकरणप्रवृत्तस्य ब्रह्मणा कृतमिति ज्ञेयम् । तदाज्ञयैव तस्य राज्ये प्रवृत्तिश्रवणात् । अत्रेदं ज्ञेयं—समुद्राणां सप्तसंख्यत्वाद्रथा अपि सप्तैव स्वयोगबलकल्पिता एकचक्राः सूर्यरथा दप्युच्चतराः मंडलावृत्तिरीत्या भ्राम्यमाणा ज्ञेयाः । तत्र च बहिर्बहिर्मंडलानामधिकप्रमाणत्वाद्रथा अपि क्रमेणाधिकप्रमाणा अवगम्यंत इति संदर्भः । मदीयो दूरस्थोऽपि रथ आर्यावर्त्तगतमदीयराजधानीस्थप्रजानां दृष्टिगोचरी भवत्विती‌च्छया पूर्वपूर्वरथाद्द्विगुणोच्चताविशालताक उत्तरोत्तरोरथः कृत इत्यन्ये प्राहुः । अत एव रथचक्राग्राणामधिकाधिकप्रमाणत्वात्तत्तत्परिखाताः समुद्रा अप्यधिकप्रमाणा दृश्यंते । तेषु चोत्तरोत्तराधिक प्रमाणेषु सप्तसु रथेषु मध्ये पञ्चविंशत्या दिनैः सार्द्धपंचचत्वारिंशद्घटिकाधिकैकरथस्यारोहणमेवं सूर्य्यस्येव दक्षिणायनस्योपक्रममारभ्य प्रियव्रतस्योत्तरदेशतो दक्षिणदेशगमनं पौषपर्यंतं पुनरुत्तरायणस्योपक्रममारभ्य परि समाप्तिपर्यंतं तावत्संख्याकदिनैर्व्युत्क्रमेण पुनरपि तत्तद्रथारोहणम् । एवं दक्षिणदेशात उत्तरदेशगमनमाषाढपर्यंतं किं तु स्वगत्या मेरुं वामावर्त्तेनैव परिक्राम्यतोऽपि सूर्यस्य ज्योतिश्चक्राधीनैरेव प्रदक्षिणीकृत्य क्रमेण शीघ्र गमनैर्दक्षिणायने दिनानि मासिमासि ह्रसंति उत्तरायणे तु क्रमेण मंदगमनैर्दिनानि वर्द्धंते प्रियव्रतस्य तु सूर्यकृतरात्रिलोपार्थं स्वेच्छयैव मेरुं प्रदक्षिणीकृत्य परिक्रामतः स्वेच्छयैव मंदीकृतैर्गमनैरुत्तराणि दिनानि वर्द्धंते दक्षिणायने तु स्वेच्छाधीनया शीघ्रगत्या दिनानि ह्रसंतीति ज्ञेयम् । रथानां योगप्रभावत्वाद्यथासमयं प्राकट्याप्राकट्ये च ज्ञेये तेषां सप्तसंख्यत्वेनैव सप्तकृत्व इति पूर्वमुक्तं ज्ञेयं, व्याख्येयं सप्तदिनानंतरं प्रियव्रतस्य

ये वा उ ह तद्रथचरणनेमिकृतपरिखातास्ते सप्त सिंधव आसन्यत एव कृताः सप्त भुवो द्वीपाः ॥ ३१ ॥ जंबूप्लक्षशाल्मलिकुशक्रौंचशाकपुष्करसंज्ञास्तेषां परिमाणं पूर्वस्मात्पूर्वस्मादुत्तरोत्तरो यथासंख्यं द्विगुणमानेन बहिः समंतत उपक्लृप्ताः ॥ ३२ ॥ क्षारोदेक्षुरसोदसुरोदक्षीरोददधिमंडोदशुद्धोदाः सप्त जलधयः सप्तद्वीपपरिखा इवाभ्यंतरद्वीपसमाना एकैकश्येन यथानुपूर्वं सप्तस्वपि बहिर्द्वीपेषु पृथक् परित उपकल्पितास्तेषु जंब्वादिषु बार्हिष्मतीपतिरनुव्रतानात्मजानाग्नीध्रेध्मजिह्वयज्ञबाहुहिरण्यरेतोघृतपृष्ठमेधातिथिवीतिहोत्रसंज्ञान् यथासंख्येनैकैकस्मिन्नेकमेवाधिपतिं विदधे ॥ ३३ ॥ दुहितरं चोर्जस्वतीं नामोशनसे प्रायच्छद्यस्यामासीद्देवयानी नाम काव्यसुता ॥ ३४ ॥ नैवंविधः पुरुषकार उरुक्रमस्य पुंसां तदंघ्रिरजसा जितषड्गुणानाम् ॥ चित्रं विदूरविगतः सकृदाददीत यन्नामधेयमधुना स जहाति बंधम् ॥ ३५ ॥

यावद्वसुधातलं लोकालोकपर्यंतमवभासयति मेरुं प्रदक्षिणी कुर्वन्नादित्यस्तस्मिन्नर्धेनैवोपलक्षितं प्रतपति प्रकाशयत्यर्धेन चावच्छादयति तमसावृणोति तदा द्वितीयः पतंगः सूर्य इव पर्यक्रामत् न चेदमसंभावितम् । यतो भगवदुपासनेनोपचितोऽतिपुरुषः पुरुषानतिक्रांतः प्रभावो यस्य ॥ ३० ॥ ये वै उ ह अतिप्रसिद्धास्तस्य रथचक्राग्रकृताः परिखाता गर्ताः । यतो यैरेव कृताः ॥ ३१ ॥ तानाह जंब्विति । तेषां परिमाणं–शृण्विति शेषः । पूर्वस्य यद्विस्तारमानम् उत्तरस्ततो द्विगुणेन विस्तारमानेनेत्येवं सिंधुभ्यो बहिः समंतत उपक्लृप्ता रचिताः ॥ ३२ ॥ यथा सिंधुभ्यो बहिरेकैकशो द्वीपा एवं द्वीपानामपि बहिः सिंधव इत्याह । क्षारोदेति । दधिमंडो मथितं दधि । एते सप्त जलधयः सप्तद्वीपानां परिखा इवाभ्यंतरे तैः संवेष्टिता ये द्वीपास्तैः समाना विस्तारतः । बहिर्नीतः पृथगसंकीर्णतया ॥ ३३ ॥ ३४ ॥ अहो आश्चर्यं राज्ञः सामर्थ्यमिति परीक्षिदभिशायज्ञो भगवान्बादरायणिराह । नैवमिति । जिताः षड्गुणा इंद्रियाणि षडूर्मयो वा यैस्तेषाम् । एवंविधः पुरुषकार इति न चित्रं नासंभावितम् । यतो विदूरविगतोंत्यजोऽपि यस्योरुक्रमस्य नाम सकृदुच्चारयेद्यः सोऽधुना तत्क्षणमेव बंधं संसारम् । तत्त्वमिति पाठेऽप्ययमेवार्थः । पाठांतरे तत्त्वं चांडालत्वम् । जहाति शुद्धो भवतीत्यर्थः ॥ ३५ ॥

स्वयं निवृत्त्यनौचित्यादन्येन केनाप्यनिवर्तनश्रवणाच्च नासमंजसा ॥ ३० ॥ यतो येभ्यस्सिंधुभ्य एव हेतुभ्यः । तीर्थस्तु–वा इत्यनेन समुद्राणां पूर्वसद्भावप्रसिद्धिं ध्वनयति । अयं तु तेषां स्थौल्यं कृतवानिति । “ पूर्वसृष्टान्यथावृत्त्या स्थूलांश्चक्रे प्रियव्रतः । समुद्रांस्तेन तत्कर्त्तेत्याहुरेनं प्रियव्रतम् ” इति । एवशब्दः प्रधानभूतः । सन्त्येवान्येऽवांतरद्वीपा बहवः संतीति विशेषबोधनार्थः ॥ ३१ ॥ तान् द्वीपान् । तेषां द्वीपानां, समंततः सर्वदिक्षु ॥ ३२ ॥ एकस्मिनेकस्मिन्नित्येकैकस्मिन् एकमेकमित्येकैकम् “ एकं बहुव्रीहिवत् ” इति द्विरुक्त एकशब्दो बहुव्रीहिवत्स्यात्तेन सुब्लोपपुंवद्भावौ इह द्वयोरपि सुपोर्लुकि सति बहुव्रीहिवद्भावादेव प्रातिपदिकत्वात्सुदायात्सुप् ॥ ३३ ॥ पारिबर्हदाने सुतानां मिथो विवादः स्यादिति कृत्वा कन्यादानमपि स्वयं चकारेत्याह–दुहितरमिति । उशनसे शुक्राय “ उशना भार्गवः कविः ” इत्यमरः । तत्पुत्र्यपि राजकुलवृद्धिकर्यभूदित्याह–यस्यामिति ॥ ३४ ॥ एवंविधः समुद्रद्वीपादिकरणरूपो माहात्म्यविशेषः । गुणाः कामादयः मनसा सह शब्दादयो वा । अंघ्रिरजसापि यैरतीव दुर्जया गुणा जिता इति विरोधः यतो विदूरेति । विप्रा

स एवमपरिमितबलपराक्रम एकदा तु देवर्षिचरणानुशयनानुपतितगुणविसर्गसंसर्गेणानिर्वृतमिवात्मानं मन्यमान आत्मनिर्वेद इदमाह ॥ ३६ ॥ अहो असाध्वनुष्ठितं यदभिनिवेशितोऽहमिंद्रियैरविद्यारचितविषमविषयांधकूपे तदलमलममुष्या वनिताया विनोदमृगं मां धिग्धिगिति गर्हयांचकार ॥ ३७ ॥ परदेवताप्रसादाधिगतात्मप्रत्यवमर्शेनानुप्रवृत्तेभ्यः पुत्रेभ्य इमां यथादायं विभज्य भुक्तभोगां च महिषीं मृतकमिव सहमहाविभूतिमपहाय स्वयं निहितनिर्वेदो हृदि गृहीतहरिविहारानुभावो भगवतो नारदस्य पदवीं पुनरेवानुससार ॥ ३८ ॥ तस्य ह वा एते श्लोकाः ॥ प्रियव्रतकृतं कर्म को नु कुर्याद्विनेश्वरम् ॥ यो नेमिनिम्नैरकरोच्छायां घ्नन्सप्तवारिधीन् ॥ ३९ ॥ भूसंस्थानं कृतं येन सरिद्गिरिवनादिभिः ॥ सीमा च भूतनिर्वृत्यै द्वीपेद्वीपे विभागशः ॥ ४० ॥

तस्य पराक्रममुपसंहरन्निवृत्तिक्रममाह । स एवमिति । देवर्षिचरणयोरनुशयनमुपसत्तिस्तदनुपतितो यो गुणविसर्गो राज्यादिप्रपंचस्तत्संसर्गेण आत्मनि मनसि निर्वेदो यस्य ॥ ३६ ॥ तमाह । मयाऽसाध्वनुष्ठितं यद्यतोऽभिनिवेशितः तत्ततः अलमलं विषयैः । विनोदमृगं मर्कटम् ॥ ३७ ॥ परदेवताया हरेः प्रसादेनाधिगतः प्राप्तो य आत्मप्रत्यवमर्शो विवेकस्तेन नारदस्य पदवीं तदुपदिष्टमार्गमेव पुनरनुससारेत्यन्वयः । किं कृत्वा । अनुगतेभ्यः पुत्रेभ्य इमां पृथ्वीं विभज्य । भुक्तः भोगो यस्यास्तां भार्यां महाविभूतिः साम्राज्यसंपत्तत्सहितां महिषीं मृतशरीरमिव परित्यज्य । तत्र हेतुः । हृदि निहितो निर्वेदो येन । हृदीत्यस्योत्तरत्राप्यन्वयः । हृदि गृहीतो निश्चितो हरिविहारस्तेनानुभावस्त्यागसामर्थ्यं यस्य ॥ ३८ ॥ तस्य महिमोपनिबंधनश्लोकाः पूर्वसिद्धाः कथ्यंते । यथा वेदे "तदप्येष श्लोको भवति" इति तद्वदुक्तिरियम् । को नु को नाम कुर्यात् । छायां घ्नन् तमो निरस्यन् ॥ ३९ ॥ भूसंस्थानं द्वीपैः कृतम् । सरिद्गिरिवनादिभिः सीमा च येन कृता । भूतानां निर्वृत्यै सुखायाविवा

दूरो विदूरः पृषोदरादित्वाद्विप्रस्य विरादेशः । शूद्रस्तस्मादपि विप्रकृष्टं दूरं गतः विगतश्चांडालोंत्यजोपीत्यत्रापिना गृहीतश्चांडालादिरपि तन्वं तनुं तत्क्षणे तनुत्यागादर्शनात्तन्वारंभकं कर्मेति तेन प्रारब्धकर्मक्षय उक्तः । तत्वं महदादिपृथिव्यंतं स्थूलसूक्ष्मदेहावित्यर्थः । तदापि तद्देहस्थितिरिति नाम्न एवाचिंत्यप्रभावत्वादिति ध्येयं गत्यंतराभावात् । स्वामिचरणैस्तत्त्वं चांडालत्वमिति यद्व्याख्यातं तत्तच्छब्दस्य बुद्धिस्थपरामर्शित्वाभिप्रायेणैवेति ध्येयम् । इत्यर्थ इति । 'श्वादोपि सद्यः सवनाय कल्पते' इत्याद्युक्तेरिति भावः ॥ ३९ ॥ तस्य प्रियव्रतस्य । गुणानां संध्यादीनां विसर्गः ."संधिश्च विग्रहश्चैव यानमासनमेव च । द्वैधीभावं संश्रयं च गुणान्षट् कवयो विदुः ॥" इत्युक्तेर्नीतिशास्त्रोक्तेः । गुणानामिंद्रियाणां विसर्गो विषयप्रपञ्चो वा । "गुणो मौर्व्यामप्रधाने रूपादौ सूद इंद्रिये । त्यागशौर्यादिसत्त्वादिसंध्याद्यावृत्तिरज्जुषु ॥" इति मेदिनी । इदं वक्ष्यमाणम् ॥ ३६ ॥ तं निर्वेदम् । धिग्धिगिति आत्मानम् ॥ ३७ ॥ अनुगतेभ्यो भक्तिश्रद्धादिनाऽनुसृतेभ्यः । तत्र त्यागे ॥ ३८ ॥ तस्य प्रियव्रतत्य । ह वै प्रसिद्धा एते श्लोकाः श्लोकलक्षणलक्षितानि वाक्यानि यशांसि वा 'श्लोकः पद्ये यशस्यपि' इत्यभिधानात् । "श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पंचमम् । द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥" इति श्लोकलक्षणोक्तेः । श्लोकस्य वेदेपि वर्णितत्वादस्य श्रीभागवतस्य साक्षाद्वेदरूपत्वात् । वेदे यथा 'तदप्येष श्लोको भवति' इति वर्णितं तथात्राप्युक्तं तस्य वा एते श्लोका इति । नेमिनिम्नैः रथचक्राग्रकृतैर्गर्तैः । तमो निरस्यन्रात्रिं विलोपयन्नित्यर्थः ॥ ३९ ॥ संस्थानं रचनाविशेषः । भूतानां ग्रामजनपदाद्यधिपानाम् ॥ ४० ॥

भौमं दिव्यं मानुषं च महित्वं कर्मयोगजम् ॥ यश्चक्रे निरयौपम्यं पुरुषानुजनप्रियः ॥ ४१ ॥ इति श्रीभागवते महापुराणे पंचमस्कंधे प्रियव्रतविजयो नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ एवं पितरि संप्रवृत्ते तदनुशासने वर्तमान आग्नीध्रो जम्बूद्वीपौकसः प्रजा औरसवद्धर्मावेक्षमाणः पर्यगोपायत् ॥ १ ॥ स च कदाचित् पितृलोककामः सुरवरवनिताक्रीडाचलद्रोण्यां भगवंतं विश्वसृजां पतिमाभृतपरिचर्योपकरण आत्मैकाग्र्येण तपस्वी आराधयांबभूव ॥ २ ॥ तदुपलभ्य भगवानादिपुरुषः सदसि गायंतीं पूर्वचित्तिं नामाप्सरसमभियापयामास ॥३॥ सा च तदाश्रमोपवनमतिरमणीयं विविधनिबिडविटपिविटपनिकरसंश्लिष्टपुरटलतारूढस्थलविहंगममिथुनैः प्रोच्यमानश्रुतिभिः प्रतिबोध्यमानसलिलकुक्कुटकारंडवकलहंसादिभिर्विचित्रमुपकूजितामलजलाशयकमलाकरमुपबभ्राम ॥ ४ ॥ तस्याः सुललितगमनपदविन्यासगतिविलासायाश्चानुपदं खणखणायमानरुचिरचरणाभरणस्वनमुपाकर्ण्य नरदेवकुमारः समाधियोगेनामीलितनयननलिनमुकुलयुगलमीषद्विकचय्य व्यचष्ट ॥ ५ ॥

दाय ॥ ४० ॥ भौमं पातालजं दिव्यं स्वर्गजं मानुषं मर्त्यलोकजं महित्वं वैभवं यो निरयतुल्यं मेने। पुरुषानुजना विष्णुभक्तास्त एव प्रिया यस्येति ॥ ४१ ॥ इति पंचमे टीकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये प्रोक्तमाग्नीध्रचरित्रं स्त्रैणसंमतम् ॥ पत्न्यां हि पूर्वचित्त्यां यो नाभिमुख्यानजीजनत् ॥ १ ॥ अस्मिन्वंशे प्रसिद्धोऽयमाग्नीध्रः स्त्रैणपुंगवः ॥ विहसन्निव तस्येदं चरितं मुनिरब्रवीत् ॥२॥ जंबूद्वीपमोको यासां ताः प्रजाः पुत्रवत्पालयामास । धर्मावेक्षमाणः धर्ममवेक्षमाणो धर्मेणेत्यर्थः ॥१॥ पितृलोककामः पुत्रकामः । सुरवराणां वनितास्तासामाक्रीडाचलो मंदरस्तस्य द्रोण्याम् । आभृतानि संपादितानि परिचर्योपकरणानि पुष्पादीनि येन ॥ २ ॥ तदुपलभ्य ज्ञात्वा ब्रह्माऽभियापयामास संभोगार्थं प्रस्थापयामास ॥ ३ ॥ सा च तदाश्रमोपवनमुपबभ्रामेत्यन्वयः । रमणीयत्वमेवाह । विविधाश्च निबिडाश्च ये विटपिनस्तेषां विटपाः शाखास्तेषां निकरास्तैः संश्लिष्टाः पुरटलताः स्वर्णवल्ल्यस्तास्वारूढाः स्थलविहंगमा मयूरादयस्तेषां मिथुनैः प्रोच्यमानाभिः श्रुतिभिरुच्चार्यमाणैः षड्जादिस्वरैः प्रतिबोध्यमाना ये सलिलकुक्कुटादयस्तैर्विचित्रं यथातथोपकूजिता नादिता अमला जलाशयास्तेषु कमलानि तेषामाकरमुपबभ्राम् ॥ ४ ॥ सुललिते गमने ये पदविन्यासास्तैर्गतौ विलासो यस्याः । चकारस्तस्याश्चेत्येकवाक्यत्वाय । अनुपदं प्रतिपदम् । खणखणेति ध्वनिं कुर्वतो रुचिरस्य

निरयतुल्यं त्याज्यत्वेनेत्यर्थः । तत्र हेतुः पुरुषेति ॥ ४१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ स्त्रैणाः स्त्रीवशवर्त्तिनस्तेषां संमतमंगीकृतम् ( १ ) स्त्रैणपुंगवः स्त्रैणशिरोमणिः । मुनिः श्रीशुकः । इवशब्देन कामिषु नाद्भुतं तदित्युक्तम् ( २ ) संप्रवृत्ते सम्यङ्नारदोपदिष्टप्रकारेण भगवद्भजने प्रवृत्ते सति । यद्वा—सम्यक्प्रवृत्तं प्रवृत्तिर्हरिभजने यस्य स संप्रवृत्तस्तस्मिन् । औरसो ब्राह्मप्राजापत्यार्षविवाहविधिगृहीतभार्योत्पन्नपुत्रः । इत्यर्थ इति । धर्मशब्दो नांतोप्यस्ति । यद्वा—द्वितीयातत्पुरुषः कार्योऽत्राऽऽर्ष इति भावः ॥ १ ॥ विश्वसृजां पतिं ब्रह्माणम ॥ २ ॥ तद् पुत्रकामनया तपः ॥ ३ ॥ सा पूर्वचित्तिः । निबिडाः सांद्राः । विटपिनो वृक्षाः । ' पुरटं हेम दुर्वर्णम् ' इति । आदिना शुकादिग्रहः । आदिना मध्यमादिग्रहः । आदिना सारसादिग्रहः । आकरं खनिः ॥ ४ ॥ मुकुलमविकासितपुष्पम् ॥ ५ ॥

तामेवाऽविदूरे मधुकरीमिव सुमनस उपाजिघ्रंतीं दिविजमनुजमनोनयनाह्लाददुघैर्गतिविहारव्रीडाविनयावलोकसुस्वराक्षरावयवैर्मनसि नृणां कुसुमायुधस्य विदधतीं विवरं निजमुखविगलितामृतासवसहासभाषणामोदमदांधमधुकरनिकरोपरोधेन द्रुतपदविन्यासेन वल्गुस्पंदनस्तनकलशकबरभाररशनां देवीं तदवलोकनेन विवृतावसरस्य भगवतो मकरध्वजस्य वशमुपनीतो जडवदिति होवाच ॥ ६ ॥ श्लोकाः ॥ का त्वं चिकीर्षसि च किं मुनिवर्य शैले मायाऽसि कापि भगवत्परदेवतायाः ॥ विज्ये बिभर्षि धनुषी सुहृदात्मनोऽर्थे किं वा मृगान् मृगयसे विपिने प्रमत्तान् ॥ ७ ॥

चरणाभरणस्य स्वनम् । आमीलिते नयने एव नलिनमुकुले तयोर्युगलमीषद्विकचय्य किंचिदुन्मील्य व्यचष्ट ददर्श ॥ ५ ॥ तामेव देवीं मकरध्वजस्य वशमुपनीतः सन् जडवदिति ह वक्ष्यमाणान्दश श्लोकानुवाच । जाड्यानुकरणं च वैदग्ध्येन तद्वशीकारार्थम् । दिविजानां देवानां मनुजानां च यानि मनांसि नयनानि च तेषामाह्लाददुघैर्गत्यादिभिर्नृणां मनासि कामस्य विवरं प्रवेशद्वारं विदधतीम् । गतिश्च विहारश्च व्रीडाविनययुक्तोऽवलोकश्च सुस्वराण्यक्षराणि चावयवाश्च नेत्रादयस्तैर्निजमुखाद्विगलितममृतमिव स्वादु आसव इव मादकं च यत्सहासं भाषणं तस्मिन्नामोदो निःश्वासगंधस्तेन मदांधा ये मधुकरनिकरास्तैरुपरोध आवरणं तेन भयाद्द्रुतः शीघ्रो यः पदविन्यासस्तेन वल्गुस्पंदनं किंचिच्चलनं स्तनकलशयोः कबरभारे रशनायां च यस्यास्ताम् । तस्या अवलोकनेन विवृतावसरस्य दत्तावकाशस्य ॥ ६ ॥ का त्वं शैले गिरावस्मिन्किं चिकीर्षसि । मुनिवर्येत्यादि पुंस्त्वेन संबोधनादि जाड्यानुकरणार्थम् । हे मुनिवर्य नूनं भगवतः परदेवताभूतस्य मायाऽसि । भ्रुवावालक्ष्याह । हे सुहृत्सखे विज्ये निर्गुणे धनुषी बिभर्षि किमात्मनोऽर्थे तवैवाभ्यां किं कार्यमस्ति । किं वा प्रमत्तानजितेंद्रियान्मृगतुल्यानस्मदादीन्मृगयसे । तान्वशीकर्तुं धनुषी धारयसी

वैदग्ध्येन चातुर्य्येणाप्सरोमोहनार्थम् । आह्लाददुघैरानंदपूरकैः । कबरभारे केशसमूहे । रशना क्षुद्रघंटिका । रसनारशना चोभे क्षुद्रघंटिकाजिह्वारज्जुषु वर्त्तेते इति । भगवतः भगो योनिर्विद्यते निवासत्वेनास्येति भगवांस्तस्य 'भगे हि स्मरमंदिरे' इति कोशांतरोक्तेः ॥ ६ ॥ का त्वमित्युक्तेर्बाल्यमारभ्य तपस्यतः स्त्रीपुंविशेषज्ञानं नास्तीति द्योतयन्नाह—मुनिवर्येति । अहमिव त्वमपि तपोऽर्थमेवात्र तिष्ठासि किमिति भावः । किञ्च त्वं मुनिवर्यो भूत्वा मुनिं मां यन्मोहयस्यत्र किं कारणमिति क्षणं विभाव्य 'आः' ज्ञातमित्याह—मायासीति । भगवानेव परदेवता तस्या मायैव मुनिवर्यरूपेणात्र वर्त्तस इति भावः । वस्तुतस्तु—मुनिरहं वर्यो वरणीयो यस्येति मुनिवर्योसि त्वं मद्वरणार्थमेवात्राऽऽगतोसीति भावः । यद्वा—शीलमेव शैलं मुनिवर्ये शैलं यस्यास्सा मुनिवर्यशैला तत्संबुद्धौ तथा । अप्सरसां मुनिवरणशीलत्वं स्वत एव प्रसिद्धमतस्तन्नान्यथा कार्यमिति भावः । काप्यनिर्व

बाणाविमौ भगवतः शतपत्रपत्रौ शांतावपुंखरुचिरावतितिग्मदंतौ ॥ कस्मै युयुंक्षसि वने विचरन्न विद्मः क्षेमाय नो जडधियां तव विक्रमोऽस्तु ॥ ॥ ८ ॥ शिष्या इमे भगवतः परितः पठंति गायंति साम सरहस्यमजस्रमीशम् ॥ युष्मच्छिखाविलुलिताः सुमनोभिवृष्टीः सर्वे भजंत्यृषिगणा इव वेदशाखाः ॥ ९ ॥ वाचं परं चरणपंजरतित्तिरीणां ब्रह्मन्नरूपमुखरां शृणवाम तुभ्यम् ॥ लब्धा कदंबरुचिरंकविटंकबिंबे यस्यामलातपरिधिः क च वल्कलं ते ॥ १० ॥ किं संभृतं रुचिरयोर्द्विज शृंगयोस्ते मध्ये कृशो वहसि यत्र दृशिः श्रिता मे ॥ पंकोरुणः सुरभिरात्मविषाण ईदृग्येनाश्रमं सुभग मे सुरभी करोषि ॥ ११ ॥

त्यर्थः ॥ ७ ॥ कटाक्षावालक्ष्याह । बाणाविमौ शतपत्रे नेत्रकमले ते एव पत्राणि पिच्छानि ययोः । शांतौ विभ्रमेण मंथरौ पुंखाभ्यां विनापि रुचिरौ पत्रतया कल्पितनेत्राभ्यां परभागस्य पुंखस्थानीयस्याभावात् । अतितिग्मौ तीक्ष्णौ दंतावग्रभागौ ययोस्तौ कस्मै प्रयोक्तुमिच्छसीति न विद्मः अतो भयादेतावत्प्रार्थयामहे तवायं विक्रमोऽस्माकं क्षेमायास्तु ॥ ८ ॥ तदंगपरिमललोभेनानुगच्छतो भ्रमरानालक्ष्याह । शिष्या इति । अजस्रं संततं युष्मच्छिखातो विलुलिता विगलिताः सुमनसामभितो वृष्टीर्गलितानि कुसुमानि भजंतीत्यर्थः । शुद्धत्वेनोपमा वेदशाखा इवेति ॥ ९ ॥ नुपूरस्वनमाकर्ण्याह । वाचमिति । तुभ्यं तव चरणगतपंजरयोर्नुपूरयोस्तित्तिरीणामंतर्गत रत्नानां परं केवलं वाचं शृणुमः । कथंभूताम् । अरूपा अदृष्टवक्तृका मुखरा अतिप्रकटा च तां च तां च । पीतं परिधानवस्त्रं नितंबकांतित्वेन प्रकल्प्याह । कदंबकुसुमस्य रुचिर्दीप्तिरिंकविटंकबिंबे नितंबस्य सुंदरमंडले क लब्धा । पाठांतरे अंगेति संबोधनम् । मेखलामालक्ष्याह । यस्यामलातपरिधिर्वर्तते । वस्त्रं नितंबकांतित्वेन प्रकल्प्य वस्त्रमदृष्ट्वैव पृच्छति । क च ते वल्कलमिति ॥ १० ॥ स्तनावालक्ष्याह । शृंगयोः स्तनयोः किं संभृतं किं पूर्णमस्ति । मनोहरं किंचिदस्तीत्येतावत्तु जानामि ।

चनीया कृपासीति भावः । इत्यर्थ इति । वयं तु स्वत एव त्वद्वशवर्त्तिन इति भावः ॥ ७ ॥ यदि प्रयोक्ष्यसे तर्ह्यनयोर्ज्वालया नैव जीविष्याम इति भावः ॥ ८ ॥ हस्तवारणलक्षणशिक्षायोग्यत्वाच्छिष्या इति भगवत इति पुंस्त्वनिर्देशः पूर्ववत् । ईशमीश्वरप्रतिपादकं बृहद्रथांतरादि साम । केचित्त्वीशेति संबुद्धिमाहुः । तत्र मन्मनोरथसंपादनसमर्थोसीति संबुद्ध्यभिप्रायः ॥ ९ ॥ पाठांतरे 'रुचिरंग विटंक' इतिपाठे "विटंकः सुंदरे पक्षिनिवासेऽनंबुपर्वते" इति निरुक्तिः । "तित्तिरिर्नूपुरांतस्थरत्नपक्षिविशेषयोः । वक्रमार्गे यजुर्वेदशाखायामपि कथ्यते॥" इति तीर्थः । "वल्कं वल्कलमस्त्रियाम्" इत्यभिधानात् । तुभ्यं त्वामानंदयितुम् । मुखरां पारस्परिककलहमयीम् । ब्रह्मन्निति । तव तपोयोगबलविलसितमेवैतदिति भावः । यस्यां पीतकांतौ अलातपरिधिर्ज्वलदंगारमंडलमहो ते तपस्तीव्रतेति भावः । क च वल्कलं ते इति । किं स्वाश्रम एव वल्कलं भ्रमादेवापहाय मन्निकटं नग्न एवायासीति भावः । भंग्या सुरतप्रार्थना च द्योतिता ॥ १० ॥ अन्यथा मनोहरत्वाभावे । इत्यर्थ इति । कष्टेन धारणमप्यनर्घवस्तुन एव भवति दृष्टिरपि सुंदरवस्तुन्यव पततीति द्वयमेवान्यथा न संभवतीत्याशयः । अत्र विश्वनाथः—हे द्विज शृंगयोः किं संभृतं किमद्भुतं बहुमूल्यरत्नं धृतं वर्त्तते यद्यस्मान्मद्दृष्टिपातसमय एव मुहुराच्छादयसीति भावः । ब्राह्मणो भूत्वापि शृंगद्वयं धत्से तत्रापि रक्षसि तत्रापि मनोहरमेव वस्तु

लोकं प्रदर्शय सुहृत्तम तावकं मे यत्रत्य इत्थमुरसाऽवयवावपूर्वौ ॥ अस्मद्विधस्य मनउन्नयनौ बिभर्ति बह्वद्भुतं सरसरासमुधादि वक्रे ॥ १२ ॥ का वात्मवृत्तिरदनाद्धविरंग वाति विष्णोः कलास्यनिमिषोन्मकरौ च कर्णौ ॥ उद्विग्नमीनयुगलं द्विजपंक्तिशोचिरासन्नभृंगानिकरं स्मर इन्मुखं ते ॥ १३ ॥ योऽसौ त्वया करसरोजहतः पतंगो दिक्षु भ्रमन् भ्रमत एजयतेऽक्षिणी मे ॥ मुक्तं न ते स्मरसि वक्रजटावरूथं कष्टोऽनिलो हरति लंपट एष नीवीम् ॥ १४ ॥

यतो मध्ये कृशोऽपि त्वं कृच्छ्रेण वहसि धारयसि । यत्र च मे दृशिर्दृष्टिः श्रिता संलग्नास्ति । अन्यथेदं द्वयं न घटत इति भावः । स्तनगतं कुंकुममालक्ष्याह । पंकोऽरुण आत्मनस्तव विषाणे शृंगे ईदृगत्यपूर्वः कुत इत्यत आह । येन पंकेनाश्रमं सुरभी करोषि सुगंधयुक्तं करोषीति ॥ ११ ॥ लोकं स्थानम् । यत्रत्यो जन उरसा इत्थम पूर्वावयवौ बिभर्ति । मनस उन्नयनौ क्षोभकौ । पाठांतरे "इत्थंभूतलक्षणे" तृतीया । वक्त्रे च बह्वद्भुतं बिभर्ति । किं तदाह । रसो मधुरालापो रासो विलासस्ताभ्यां सहिता सुधा अधरामृतमादिशब्दात्स्मितनर्मादिः ॥ १२ ॥ का वा तव लोके आत्मनो देहस्य वृत्तिराहारः । अंग हे सखे अदनाच्चर्वणाद्धविरिति तत्संबंधी गंधो वात्यागच्छति इति तांबूलाभिप्रायम् । अदनाद्बहिरंग भातीति पाठ मम तावद्भोजनाद्बहिर्भूतैव वृत्तिर्भातीत्यर्थः । यतस्त्वं विष्णोः कलाऽसि विष्णुश्च नाश्नाति । "अनश्नन्नन्यो अभिचाकशीति" इति श्रुतेः । विष्णोः कलासीत्यत्र हेतुः । तव च कर्णौ विष्णोरिवानिमिषोन्मकरौ अनिमिषौ रत्ननेत्रत्वेन निमेषशून्यावुल्लसंतौ मकरौ तदाकारे कुंडले ययोस्तौ । किं च तव मुखं सर इत्सर इव । तदेवाह । उद्विग्नं चंचलं मीनयुगलमिव नेत्रद्वयं यस्मिन् । द्विजा दंतास्तेषां पंक्त्या शोचिः शोभा यस्मिन् । सरसि तु द्विजा राजहंसाः । आसन्नो भृंगनिकर इव केशस्तोमः परिमललुब्धभृंगस्तोमो वा यस्मिन् ॥ १३ ॥ पतंगः कंदुको भ्रमतो भ्रमचित्तस्य मेऽक्षिणी एजयते

धत्से यतो मध्ये कृशोपि कृच्छ्रेणापि वहसि यत्र मद्दृष्टिर्लग्ना मद्दृष्टिरेवात्र प्रमाणमिति भावः । तेनाच्छादनमुद्घाट्य स्वयमेव दर्शयित्वा मत्संदेहमपाकुरु किं वा आज्ञापयसि चेत्सौहार्देनाहमेवोद्घाटयामि तपस्विनो मम वस्तुनि प्रयोजनं नास्ति केवलं दर्शन एवेति भावः । स्तनस्य शृंगत्वं तुङ्गतातिशयविवक्षयैव । स्तनगतकुंकुममालक्ष्याह—आत्मनः स्वस्य विषाणे शृंगे ईदृक् पंको धृतः कस्य सरोवरस्य सुरभिररुणश्च पंकस्तमहमपि वक्षासि धित्सामीति भावः ॥ ११ ॥ अस्मद्देशे मनुष्योऽपि वक्षसि शृंगद्वयं धत्त इति चेत्तत्रैव गत्वा तपश्चिकीर्षामीत्याह—लोकमिति । हे सुहृत्तमेति सौहार्देनैवेति भावः । नन्वेते शृंगे न भवत इत्यत आह—यत्रत्यो जनः इत्थमुरसा वक्षसा । मनसोन्नयनावितिपाठे च तृतीयेत्थंभूतलक्षणे ज्ञेया ॥ १२ ॥ तांबूलगंधमनुभूतं व्यंजयन्नाह—हविरिति । इत्यर्थ इति । अन्नभुजां हि वलिपलितदौर्गंध्यादिकमस्ति तव तदभावात्तन्नास्तीति भावः । तत्र हेतुमाह—यतस्त्वमिति । अन्य ईश्वरः । अभिचाकशीति देदीप्यते इत्यर्थः । अन्यदाह—किञ्चेति । इदित्यव्ययमिवार्थे । तदेव सरस्तुल्यत्वमेवाह ॥ १३ ॥ न स्मरसि किमेतावांस्तव कंदुकक्रीडायामावेश इति

रूपं तपोधन तपश्चरतां तपोघ्नं ह्येतत्तु केन तपसा भवतोपलब्धम् ॥ चर्तुं तपोर्हसि मया सह मित्र मह्यं किं वा प्रसीदति स वै भवभावनो मे॥१५॥ न त्वां त्यजामि दयितं द्विजदेवदत्तं यस्मिन् मनो दृगपि नो न वियाति लग्नम् ॥ मां चारुशृंग्यर्हसि नेतुमनुव्रतं ते चित्तं यतः प्रतिसरंतु शिवाः सचिव्यः ॥ १६ ॥ श्रीशुक उवाच ॥ इति ललनाऽनुनयातिविशारदो ग्राम्यवैदग्ध्यया परिभाषया तां विबुधवधूं विबुधमतिरधिसभाजयामास ॥ १७ ॥ सा च ततस्तस्य वीरयूथपतेर्बुद्धिशीलरूपवयःश्रियौदार्येण पराक्षिप्तमनास्तेन सहायुतायुतपरिवत्सरोपलक्षणं कालं जंबूद्वीपपतिना भौमस्वर्गभोगान् बुभुजे ॥ १८ ॥ तस्यामु ह वा आत्मजान् स राजवर आग्नीध्रो नाभिकिंपुरुषहरिवर्षेलावृतरम्यकाहिरण्मयकुरुभद्राश्वकेतुमालसंज्ञान् नव पुत्रानजनयत् ॥ १९ ॥

चंचलतां नयति । वक्रकेशसमूहं मुक्तबंधनं न स्मरसि न संभावयसि किम् । कष्टो धूर्तोऽनिलो नीवीं हरत्येतन्न स्मरसि किम् ॥ १४ ॥ उपलब्धं प्राप्तम् । मह्यं मम । हे मम मित्र मया सह तपश्चर्तुमर्हसि । किंच स वै भवभावनः संसृतिविस्तारको ब्रह्मा मे प्रसीदति । त्वां भार्यां कल्पयतीत्यर्थः ॥ १५ ॥ द्विजदेवेन ब्रह्मणा दत्तम् । दृक् मनश्च लग्नं सन्नापयाति । हे चारुशृंगि यतस्ते चित्तं तत्र मां त्वदधीनं नेतुमर्हति । सचिव्यस्तव सख्योऽपि शिवा अनुकूलाः सत्यो मां प्रतिसरंत्वनुवर्ततताम् । यद्वा । एतावत्पर्यंतं मे याः सचिव्यः सख्यः शिवाः फेरवस्ताः प्रतिसरंतु निर्यांतु । यद्वा । वनवासे सहचर्यो हरिण्यः शिवाः प्रतिसरंतु प्रदक्षिणं गच्छंतु ॥ १६ ॥ ग्राम्येषु वैदग्ध्यं यस्यास्तया परिभाषया वाचा । सभाजयामास पूजयामास संमुखी चकारेत्यर्थः ॥१७॥ बुद्ध्यादीनां द्वंद्वैक्यम् ॥ १८ ॥ १९ ॥

भावः ॥१४॥ तपस्विनो मम तपस्विसंगोऽपेक्षित एवेत्याह—रूपमिति । हे मम मित्रेति नहि भार्यासमं मित्रमित्यभिप्रेत्योक्तम् । इत्यर्थ इति । विना भार्यां सृष्टिवृद्धेरदृष्टत्वादिति भावः । तपोधनेति । मनस्संतापजननमेव तव धनमिति भावः ॥ १९ ॥ ननु त्वया मम किं फलं तदितो यामीति तत्राह । न त्वामिति । हे चारुशृंगीति । उन्नतस्तनीति स्त्रीलिंगेन संबोधनमतिकामवैवश्येनावहित्थाया नाशं द्योतयति । यतो यत्र देशे । ननु शिवानां तत्र किमानुकूल्यं तासामतीव विकृतध्वनित्वेन भयहेतुत्वादिति चेत्तत्राह—यद्वेति । निर्यांतु आसां समक्षमपि त्वां भोक्तुं नाहमुत्सह इति भावः । सखीनां समक्षमपि भोगे सति दांपत्ये न दोषस्तदेव न जातमतः पुनराह—यद्वेति । प्रदक्षिणं गच्छन्तु मदभीष्टसाधकशकुनं कुर्वन्त्विति भावः ॥ १६ ॥ ललनानां युवतीनामनुनयेऽनुकूलीकरणेऽतिनिपुणः ग्राम्येषु विषयभोगेषु वाक्येषु वैदग्ध्यं पाटवं यस्या वाचस्तया तामप्सरसमधिसभाजयामासानुकूलीं चकार ॥ १७ ॥ ततो नृपत्यानुकूल्योत्तरम् । श्रियेत्यत्रैयडार्षः । पराक्षिप्तमना आकृष्टचेताः । स्तेन राज्ञा । अयुतायुतं न्यर्बुदं भौमभोगान् नृपत्वे । स्वर्गभोगान्देवत्वे ॥ १८ ॥ तस्यां विप्रचित्याम् ॥ १९ ॥

सा सूत्वाऽथ सुतान् नवानुवत्सरं गृह एवापहाय पूर्वचित्तिर्भूय एवाजं देवमुपतस्थे ॥ २० ॥ आग्नीध्रसुतास्ते मातुरनुग्रहादौत्पत्तिकेनैव संहनन बलोपेताः पित्रा विभक्ता आत्मतुल्यनामानि यथाभागं जंबूद्वीपवर्षाणि बुभुजुः ॥२१॥ आग्नीध्रो राजाऽतृप्तः कामानामप्सरसमेवानुदिनमधिमन्य मानस्तस्याः सलोकतां श्रुतिभिरवारुंध यत्र पितरो मादयंते ॥ २२ ॥ संपरेते पितरि नव भ्रातरो मेरुदुहितॄर्मेरुदेवीं प्रतिरूपामुग्रदंष्ट्रीं लता। रम्यां श्यामां नारीं भद्रां देववीतिमिति संज्ञा नवोदवहन् ॥ २३ ॥ इति श्रीभा० म० पंचम० आग्नीध्रचरितादिवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥

श्रीशुक उवाच ॥ नाभिरपत्यकामोऽप्रजया मेरुदेव्या भगवंतं यज्ञपुरुषमवहितात्माऽयजत् ॥१॥ तस्य ह वाव श्रद्धया विशुद्धभावेन यजतः प्रवर्ग्येषु प्रचरत्सु द्रव्यदेशकालमंत्रर्त्विग्दक्षिणाविधानयोगोपपत्त्या दुरधिगमोऽपि भगवान् भागवतवात्सल्यतया सुप्रतीक आत्मानमपराजितं निजजनाभिप्रे तार्थविधित्सया गृहीतहृदयो हृदयंगमं मनोनयनानंदनावयवाभिराममाविश्चकार॥२॥अथ ह तमाविष्कृतभुजयुगलद्वयं हिरण्मयं पुरुषविशेषं कपि शकौशेयांबरधरमुरसि विलसच्छ्रीवत्सललामं दरवरवनरुहवनमालाऽच्छूर्यमृतमणिगदादिभिरुपलक्षितम् ॥ स्फुटकिरणप्रवरमणिमयमुकुटकुंडलक टककटिसूत्रहारकेयूरनूपुराद्यंगभूषणविभूषितमृत्विक्सदस्यगृहपतयोऽधना इवोत्तमधनमुपलभ्य सबहुमानमर्हणेनावनतशीर्षाण उपतस्थुः ॥ ३ ॥

सूत्वा प्रसूय । उपतस्थेऽभजत् ॥ २० ॥ औत्पत्तिकेनैव स्वभावेन संहननं दृढांगत्वम् ॥ २१ ॥ कामानां भोगैः अध्यधिकं मन्यमानः । श्रुतिभिर्वेदोक्तैः कर्मभिः अवारुंध प्राप । मादयंते मोदंते ॥ २२ ॥ इत्येवंभूता संज्ञाः यासां ताः परिणीतवंतः ॥ २३ ॥ इति पंचमस्कंधे टीकायां द्वितीयोऽध्यायः ॥ २ ॥

तृतीये चरितं नाभेः परं मंगलमीर्यते ॥ यस्य यज्ञे प्रतीतः सन्पुत्रोऽभूदृषभो हरिः ॥ १ ॥ नाभिराग्नीध्रसुतः । अपुत्रया मेरुदेव्या भार्यया सह ॥ १ ॥ प्रवर्ग्यसंज्ञकेषु कर्मसु क्रियमाणेषु । द्रव्यादयः सप्त ये योगा उपायास्तेषामुपपत्त्या संपत्त्या दुरधिगमो दुष्प्रापोऽपि भागवतेषु कृपालुतया सुप्रतीकः शोभनावयवः सन्नात्मानमाविश्चकार । अपराजितं स्वतंत्रम् । निजभक्तानां येऽभिप्रेतार्थास्तेषां विधित्सया गृहीतमाकृष्टं हृदयं चित्तं यस्य । हृदयंगमं सुखकरम् । यतो मनोनयनान्यानंदयंति येऽवयवास्तैर भिरामं सुंदरम् ॥ २ ॥ अथहेत्यादिनिपातबाहुल्यं वाक्यालंकाराय । आविष्कृतं भुजानां युगलद्वयं चतुष्टयं येन । हिरण्मयं तेजोमयम् । पुरुषेषु विशिष्यत इति तथा । पुरु

अनुवत्सरं प्रतिवत्सरं, गृहे राज्ञो भवन एवापहाय अप्सरस्त्वात्तेषु वात्सल्यमपि पूर्वकृतं त्यक्त्वा ॥ २० ॥ अनुग्रहात्तदीयस्तनपानात् । आत्मतुल्यनामानि स्वतुल्यनामाक्षराणि । 'वर्षं खंडाब्दयोर्वृष्टौ' इत्यभिधानात् ॥ २१ ॥ सलोकतां समानलोकताम् । यत्र लोके तत्र पितॄणामधिकारित्वमरर्तीति गम्यते । मादयन्ते 'मदी–हर्षे' अतः स्वार्थिकाणिचि लटस्तङ् । अप्सरोलोक एव पितृलोक इति तीर्थः ॥ २२ ॥ संपरेते मृते । मेरुसंज्ञप्रजापतेः पुत्रीः । देववीथिमिति कचित्पाठः ॥ २३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ प्रतीतः प्रकटः ( १ ) ॥ १ ॥ द्रव्यादयो विधानांताः सप्त ॥ २ ॥ अथाविर्भावानंतरम् । इत्यर्थ इति । क्षराक्षरातीतस्वरूपमिति भावः । श्रीवत्सस्यैव मुख्यचिह्नत्वम् "आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ" इति वक्ष्यमाणत्वात । 'ललामं चिह्नभूषयोः' इति

ऋत्विज ऊचुः॥ अर्हसि मुहुरर्हत्तमार्हणमस्माकमनुपथानां नमोनम इत्येतावत्सदुपशिक्षितं कोऽर्हति पुमान् प्रकृतिगुणव्यतिकरमतिरनीश ईश्वरस्य परस्य प्रकृतिपुरुषयोरर्वाक्तनाभिर्नामरूपाकृतिभी रूपनिरूपणम् ॥४॥ सकलजननिकायवृजिननिरसनाशिवतमप्रवरगुणगणैकदेशकथनादृते॥५॥ पीरजनानुरागविरचितशबलसंशब्दसलिलसितकिसलयतुलसिकादूर्वाकुरैरपि संभृतया सपर्यया किल परम परितुष्यसि ॥ ६ ॥ अथानयाऽपि न भवत इज्ययोरुभारभरया समुचितमर्थमिहोपलभामहे ॥ ७ ॥

षोत्तममित्यर्थः। अर्हणेनार्घ्येण सहोपतस्थुरभजन्नित्यन्वयः। विलसन् श्रीवत्स एव ललामं चिह्नं यस्य। दरवरः शंखश्रेष्ठः।वनरुहं पद्मम्।अच्छूरि चक्रम्।अमृतमणिः कौस्तुभः। एवमादिभिरुपलक्षितम्। स्फुटकिरणा ये प्रवरा मणयस्तन्मयानि यानि मुकुटादीन्यंगानां भूषणानि तैर्विभूषितम्। बहुमाने दृष्टान्तः—अधना इवोत्तमधनं निधिम् ॥ ३ ॥ अर्हसीत्यादिना निगदेन स्तुवंति। हे अर्हत्तम परिपूर्णोऽपि त्वमनुपथानां भृत्यानामस्माकमर्हणं मुहुः स्वयमेव स्वीकर्तुमर्हसि न तु वयं स्तोतुं शक्ता इत्याहुः। नमोनम इत्येतावदेवास्माकं सद्भिरुपशिक्षितंत्वद्रूपस्य दुर्ज्ञेयत्वात्। तदेवाहुः। कोऽर्हतीति। प्रकृतिगुणानां व्यतिकरः प्रपंचस्तस्मिन्नेव मतिर्यस्यात एवानीशः। प्रकृतिपुरुषयोः पर स्यात एवेश्वरस्यार्वाक्तनाभिस्त्वामस्पृशंतीभिः प्रपंचांतर्गताभिर्नाम च रूपं चाकृतिश्चाकारस्ताभिस्तव रूपनिरूपणं कर्तुं को नाम पुमानर्हति ॥ ४ ॥ स ह्येतन्मात्रमेवार्हति नाधिकमित्याहुः। सकलजननिकायस्य वृजिनं निरस्यंतीति तथा शिवतमाः प्रवराश्च ये गुणगणास्तेषामेकदेशस्तस्य कथनाद्विनाऽधिकं नार्हति ॥ ५ ॥ वाङ्मनसाऽगोचरोऽपि त्वं भक्तानां सुखाराध्य एवेत्याहुः। परिजनेति। हे परम परिजनैरनुरागेण विरचिता ये शबलसंशब्दा गद्गदाक्षरस्तुतयः सलिलं च सितकिसलयाश्च शुद्धपल्लवाः। शिलेति पाठे शिलं कुशादिमंजरी। एवमादिभिः संभृतया संपादितया पूजया परितुष्यसि ॥ ६ ॥ अथेति प्रकारांतरे। अन्यथा त्वनयेज्यया यागेनाप्युरुभारभरया

धराणिः। अत्तीत्यत् 'शूर शूरिरुभौ शूरे' इति कोशोक्तेः। शूरीणामत् अच्छूरि क्लीबत्वम्पूर्वत्वञ्चार्षम्। अमृतेन सहोद्भूतो मणिरमृतमणिर्मध्यपदलोपी समासः। आदिना रमांकादिग्रहः। कपिशेति। श्यामवर्णमिति बुध्यते 'पीतांशुकं वक्षसि लक्षितं श्रिया' इत्यत्र पीतांशुकपदेन ध्वन्यते श्यामवर्णतेति भागवतामृतोक्तेः। नूपुरं मंजीरम् ॥ ३ ॥ अर्हत्तमेति। यज्ञे त्वदितरामराणां पूज्यत्वेपि मुख्यपूज्यत्वं तवैवेति भावः। अत्र विश्वनाथः—यथा भक्तियोगस्तमनुवर्त्तमानानामनुपथानां न तु साक्षात्प्राप्तानां सकामत्वात्। तथाभूता येयेऽनुपथास्तेषामपि पूजां मुहुरर्हसि स्वीकर्त्तुं योग्योसि तव कृपालुत्वादेव न तु वयं योग्या इति भावः। अस्माकमनुपथत्वेप्येतावदेव लक्षणमस्ति नाधिकमित्याहुः। नमोनम इति। सतां सकाशाच्छिक्षितं न तु पूजापरिचर्यास्तुत्यादिकं जानीम इति भावः। ननु विद्वांसो मद्भक्ताश्च यूयं सर्वं जानीथैव तत्किं स्तोतुं संकुचथेति तत्राहुः—कोर्हतीति। मुखाद्यंगानां चंद्राद्युपमाभिस्तुतिर्भवति तव त्वर्वाक्तनाभिः प्रपंचांतर्गताभिर्नाम इंद्रनीलमण्यादिरूपं तच्छयामताकृतिस्तत्प्रतिमा ताभी रूपस्य निरूपणमपि कर्त्तुं कोर्हति स्तुतेर्वाक्यं तु दूरे वर्त्ततामित्यर्थः। तव कीदृशस्य प्रकृतिपुरुषयोरपि परस्य नहि प्रकृतिपुरुषातीतं रूपं प्राकृतेंद्रनीलमण्यादिभिः सदृशीकर्त्तुमुचितं न त्वप्राकृतपदार्थैरेव मद्रूपमुपमायितां तत्राहुः—गुणव्यतिकरेति। प्राकृतजीवलोकस्याप्राकृतपदार्थेषु बुद्धिप्रवेशासंभवादिति भावः। अत एव भक्तवात्सल्यगुणानां केनाप्यंशेन कीर्त्तनमात्रं कर्तुमर्हतीत्याहुः ॥ ४ ॥ ५ ॥ हे परमेति। न हि परा सर्वोत्कृष्टा मा लक्ष्मीर्यस्य तस्य तवानल्पोपचारापेक्षास्तीत्यभिप्रायः ॥६॥ अस्माकं तु भक्तिर्नो

आत्मन एवानुसवनमंजसाऽव्यतिरेकेण बोभूयमानाशेषपुरुषार्थस्वरूपस्य किं तु नाथाशिष आशासानानामेतदभिसंराधनमात्रं भवितुमर्हति ॥८॥ तद्यथा बालिशानां स्वयमात्मनः श्रेयः परमविदुषां परमपुरुष प्रकर्षकरुणया स्वमहिमानं चापवर्गाख्यमुपकल्पयिष्यन् स्वयं नापचित एवेतरवदिहोपलक्षितः ॥ ९ ॥ अथायमेव वरो ह्यर्हत्तम यर्हि बर्हिषि राजर्षेर्वरदर्षभो भवान्निजपुरुषेक्षणविषय आसीत् ॥ १० ॥ असंगनिशितज्ञानानलविधूताशेषमलानां भवत्स्वभावानामात्मारामाणां मुनीनामनवरतपरिगुणितगुणगणपरममंगलायनगुणगणकथनोऽसि ॥ ११ ॥ अथ कथंचित् स्खलनक्षुत्पतनजृंभणदुरवस्थानादिषु विवशानां नः स्मरणाय ज्वरमरणदशायामपि सकलकश्मलनिरसनानि तव गुणकृतनामधेयानि वचनगोचराणि भवंतु ॥ १२ ॥

ऽनेकांगसमृद्ध्याऽपि भवतः समुचितमपेक्षितं प्रयोजनं नैव पश्यामः ॥ ७ ॥ अत्र हेतुः । आत्मनः स्वत एवानुसवनं सर्वदांजसा साक्षादव्यतिरेकेण समन्वयेन बोभूयमाना अतिशयेन भवंतो येऽशेषाः पुरुषार्थास्ते स्वरूपं यस्य परमानंदस्य । न चैवं सत्यपि यागानर्थक्यमित्याहुः । किं त्विति । सकामानामस्माकमेवैतदुपपद्यते न तवेत्यर्थः ॥८॥ स्वोपयोगमेव प्रदर्शयंति । तद्यथेति । परमेभ्योऽपि हे परमपुरुष प्रकर्षयुक्तया करुणया । उपकल्पयिष्यन्संपादयिष्यन् । चकारात्कामितं च । नापचितोऽपूजित एव पूजाऽनपेक्षत्वात्स्वयमेवोपलक्षितो दृष्टोऽसि इतरवत्सापेक्षवत् ॥ ९ ॥ यद्यपि त्वं वरान्दातुमाविर्भूतोऽसि । तथापि हे अर्हत्तम राजर्षेर्बर्हिषि यज्ञे निजपुरुषाणां त्वद्भक्तानामस्माकमीक्षणविषयो भवान् यर्हि यदा आसीत्तदा ह्ययमेव वरः संजातः ॥ १० ॥ दर्शनस्य दुर्लभतामाहुः । असंगेन वैराग्येण निशितं यज्ज्ञानं स एवानलस्तेन विधूता अशेषा मला येषाम् अतो भवत इव स्वभावो येषाम् । तानेवाहुः । आत्मारामाणामेवंभूतानां मुनीनामपि परममंगळायनं गुणगणकथनमेव न तु दर्शनं यस्य अतस्तैरनवरतं परिगुणिता अभ्यस्ता गुणगणा यस्येति संबोधनम् ॥ ११ ॥ दर्शनेनैव कृतार्था अपि वरमेकं प्रार्थयंते । अथेति । स्मरणाय विवशानां त्वां स्मर्तुमशक्तानां नः ॥ १२ ॥

स्तीत्यतः कथं ते परितोषो भविष्यतीत्याहुः । अन्यथा तु भक्तिं विना तु ॥ ७ ॥ अत्र प्रयोजनाभावे । व्यतिरेको विच्छेदस्तदभावोऽव्यतिरेकस्तेनेति वा । इत्यर्थ इति । अस्माकं तु सकामत्वेन पूजने प्रयोजनमस्तिं तव सर्वथा परिपूर्णस्य पूजनं नापेक्षितमिति भावः ॥ ८ ॥ ननु तर्हि कथं संतुष्टोऽहं युष्मत्प्रत्यक्षीभूतोस्मीति तत्राहुः—तत्तस्माद्यथा बाळिशानामज्ञानामपि समीपमनाहूतोप्यपजितोपि विज्ञः कृपावशात्तानुद्धर्तुमायाति तथैव त्वं परमेभ्योपि विज्ञेभ्योऽपि परमः प्रकृष्टः पुरुषः प्रकर्षयुक्तया निरुपाधिकया करुणया स्वमहिमानं स्वमहैश्वर्यं तदनुभवमित्यर्थः । अपवर्ग इत्याख्या यस्य तं चकारात्कामितं वस्तु चोपकल्पयिष्यन्दास्यन्स्वयं नापचित एवास्मद्भक्त्यभावादपूजित एवेतरवद्यज्ञकौतुकदर्शीतरजन इव ॥ ९ ॥ यथा तथा भवतु तथापि यूयं वरं वृणुथेति चेत्तत्राहुः—अथायमिति । निजपुरुषाणां भक्तानामीक्षणविषयोपि राजर्षेर्यज्ञेप्याविरभूदयमेव वर इति । हे अर्हत्तमेति । अहो ते महत्वमिति भावः ॥ १० ॥ सर्वैरतिदुर्लभात्त्वद्दर्शनादप्यधिको वरो वरणीय इति मूढानामेव मतं न तु विज्ञानामित्याहुः । यद्वा—विधुताशेषसकामत्वमलानां भवत्येव स्वीयो भावो येषामत एवात्मनि त्वय्येव रममाणानाम् । अतो दर्शनाभावात्तैर्मुनिभिः ॥ ११ ॥ अस्माकं त्वस्थिरमनसामेतावत्त्वं भवत्वित्याहुः । अथेति । दर्शनानन्तरम् । स्खलनमकस्मात्पतनम् । क्षुतं छिक्का । पतनमुच्च

किं चायं राजर्षिरपत्यकामः प्रजां भवादृशीमाशासान ईश्वरमाशिषां स्वर्गापवर्गयोरपि भवंतमुपधावति प्रजायामर्थप्रत्ययो धनदमिवाधनः फलीकरणम् ॥ १३ ॥ को वा इह तेऽपराजितोऽपराजितया माययाऽनवसितपदव्याऽनावृतमतिर्विषयविषरयानावृतप्रकृतिरनुपासितमहच्चरणः ॥१४॥ यदु ह वाव तव पुनरदभ्रकर्तरिह समाहूतस्तत्रार्थधियां मंदानां नस्तद्यद्देवहेलनं देवदेवार्हसि साम्येन सर्वान् प्रतिवोढुमविदुषाम् ॥ १५ ॥ श्रीशुक उवाच ॥ इति निगदेनाभिष्टूयमानो भगवाननिमिषर्षभो वर्षधराभिवादिताभिवंदितचरणः सदयमिदमाह ॥ १६ ॥

अन्यच्च प्रार्थनीयमस्तीत्याहुः । किं चेति । आशिषामैहिकानां स्वर्गापवर्गयोरपीश्वरं त्वामुपधावति । प्रजायामेव पुरुषार्थ इति प्रत्ययो यस्य । अधनो यथा फलीकरणं तुषकणादिकमाशासानो धनदमुपधावति ॥ १३ ॥ इदं च नातिचित्रमित्याहुः । इह संसारे तेऽपराजितया माययाऽनवसितपदव्याऽलक्षितमार्गयाऽपराजितः को वै न कोऽपि । अतस्तयाऽनावृतमतिः कः अत एव विषय एव विषं तस्य रया वेगास्तैरनावृता प्रकृतिर्यस्य । स कः । यश्चानुपासितमहच्चरणः । अतस्त्वन्मायया मोहितस्यैवमाशंसा घटत इत्यर्थः ॥ १४ ॥ अदभ्रकर्तः हे बहुकार्यकारिन् अल्पीयसे कार्याय त्वं यद्यस्मादिह समाहूतोऽसि तत्र प्रजायामर्थे धीर्येषां मंदानां तेषां नो यद्देवहेलनमवज्ञानं तत्सर्वान्प्रति तव साम्येन हेतुना प्रतिवोढुं सोढुमर्हसि ॥ १५ ॥ इति निगदेन गद्यात्मकस्तोत्रेण । वर्षधरो भारतवर्षपतिर्नाभिस्तेनाभिवादिता ये ऋत्विजस्तैरभिवंदितौ चरणौ यस्य ॥ १६ ॥

स्थलादधःपातः । जृंभणमालस्येन गात्रस्फोटनपूर्वकं मुखप्रसरणम् । दुःखस्थानानि सिंहादियुतवनादीनि । आदिना दुःखनिमित्तादिग्रहः । गुणा वात्सल्यादयः । कृतानि कंसहननादीनि । नामानि नारायणादीनि । यद्वा—गुणैर्वात्सल्यादिभिः कृतानि नामानि भक्तवत्सलदीनदयालिवत्यादीनि वनगोचराणि कथनविषयाणि ॥ १२ ॥ निवेदयितुमयोग्योप्यावश्यकत्वेनैवैकं निवेदयाम एवेत्याहुः । किंचेति । अयमस्मद्यजमानो राजर्षिरपत्यकामोऽपत्यं तु देवतांतरयजनेनापि भवति तदपि त्वां भगवन्तमुपधावति । ननु तदप्यहं स्वर्गापवर्गादिकमपि दास्यामीत्याशंक्याहुः । आशिषामैहिकानां स्वर्गापवर्गयोरीश्वरमप्युपधावति । अथ च प्रजायामेवार्थः पुरुषार्थः इति प्रत्ययो यस्य न त्वपवर्गादिषु यस्य स इति मौढ्यम् । न च तावतैव स्थितिः किन्तु भवादृशीमिति । धाष्टर्यञ्च पश्येति भावः ॥ १३ ॥ इदं पुत्राद्याशासनं च । अतः पराजितत्वात् । अत एव आवृतमतित्वादेव । प्रकृतिः स्वभावः । अत अनुपासितमहच्चरणत्वात् । इत्यर्थ इति । राजर्षिरयमपि तादृश एवेति भावः । यद्वा पराजित इति ते इत्यस्य विशेषणम् । 'महतः परमव्यक्तम्' इत्युक्तेः परां मायां जयति तत् पराजित् तस्य क्विबंतं रूपम् ॥ १४ ॥ यजनस्य सकामत्वलक्षणमपराधं क्षमयंतः स्तोत्रमुपसंहरंति—यदुहेति । अदर्भकर्त्तरिति । ब्रह्मादिदुर्लभमपि त्वद्दर्शनं सकामेभ्योप्यस्मभ्यमदा इति भावः । देवस्य तव हेलनं, सहने हेतुः सर्वान्प्रति यत्तव साम्यं तेन । देवदेवेति । देवानामपि देवत्वात्तवातीवमहत्त्वम् । "महांतो हि क्षमावंतः क्षुद्राः क्रोधादिसंयुताः" इत्याद्युक्तेरित्याह ॥ १५ ॥ "निगदमपरिमितवर्णमाख्यातांतमनेकधा

श्रीभगवानुवाच ॥ अहो बताहमृषयो भवद्भिरवितथगीर्भिर्वरमसुलभमभियाचितो यदमुष्य आत्मजो मया सदृशो भूयादिति ममाहमेवाभिरूपः कैवल्यादथापि ब्रह्मवादो न मृषा भवितुमर्हति ममैव हि मुखं यद् द्विजदेवकुलम् ॥ १७ ॥ तत आग्नीध्रीयेंशकलयावतरिष्याम्यात्मतुल्यमनुपलभमानः ॥ १८ ॥ श्रीशुक उवाच ॥ इति निशामयंत्या मेरुदेव्याः पतिमभिधायांतर्दधे भगवान्॥ १९ ॥ बर्हिषि तस्मिन्नेव विष्णुदत्त भगवान् परमर्षिभिः प्रसादितो नाभेः प्रियचिकीर्षया तदवरोधायने मेरुदेव्यां धर्मान् दर्शयितुकामो वातरशनानां श्रमणानामृषीणामूर्ध्वमंथिनां शुक्लया तनुवाऽवततार ॥ २० ॥ इति श्रीमद्भागवते म० पंचमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ श्रीशुक उवाच ॥ अथ ह तमुत्पत्त्यैवाभिव्यज्यमानभगवल्लक्षणं साम्योपशमवैराग्यैश्वर्यमहाविभूतिभिरनुदिनमेधमानानुभावं प्रकृतयः प्रजा ब्राह्मणा देवताश्चावनितलसमवनायातितरां जगृधुः ॥ १ ॥ तस्य ह वा इत्थं वर्ष्मणा वरीयसा बृहच्छ्लोकेन चौजसा बलेन श्रिया यशसा वीर्यशौर्याभ्यां च पिता ऋषभ इतीदं नाम चकार ॥ २ ॥

असुलभत्वे हेतुः । ममाहमेवाभिरूपः सदृशः कैवल्याददद्वितीयत्वात् । द्विजेषु देवा इव ये ब्राह्मणास्तेषां कुलम् ॥ १७ ॥ आग्नीध्रीये नाभौ ॥ १८ ॥ पतिं नाभिम् ॥ १९ ॥ हे विष्णुदत्त तस्यावरोधायनेंतःपुरे मेरुदेव्यां शुक्लया शुद्धसत्त्वरूपया मूर्त्याऽवततार । केषां धर्मान् । वातरशनानां दिग्वाससाम्। पाषंडिव्यावृत्त्यर्थमाह । श्रमणानां तपस्विनाम् । ऋषीणां ज्ञानिनाम् । ऊर्ध्वमंथिनां नैष्ठिकब्रह्मचारिणाम् ॥ २० ॥ इति श्रीभागवते महापुराणे पंचमस्कंधे टीकायां तृतीयोऽध्यायः ॥ ३॥ चतुर्थादित्रिभिः प्रोक्तमृषभस्येहितं महत् ॥ लोकार्थं येन सत्कर्म नैष्कर्म्यं च निदर्शितम् ॥ १ ॥ चतुर्थे शतपुत्रस्य राज्यं तस्योपवर्ण्यते ॥ यस्य राज्ये जनः सर्वः संतोषामृतनिर्वृतः ॥ २ ॥ अभिव्यज्यमानानि भगवल्लक्षणानि पादतलादिषु वज्रांकुशादीनि यस्य । महाविभूतिः सर्वसंपत्तिः । साम्यादिभिः सह वर्धमानप्रभावम् । प्रकृतयोऽमात्यादयः । जगृधुरभिकांक्षंति स्म ॥ १ ॥ वर्ष्मणा देहेन । तस्य विशेषणद्वयम् । वरीयसा श्रेष्ठतमेन । बृहंतः श्लोकाः पद्यानि कवीनां यस्मिंस्तेन च । ओजस्तेजः । वीर्यं

ज्ञेयम् ।. मुक्तकचूर्णकवृत्तगंधोत्कलिकादिभेदतो विज्ञैः ॥" इत्युक्तलक्षणेन निगदेन । अनिमिषर्षभो देवश्रेष्ठो हरिः । इदं वक्ष्यमाणम् ॥ १६ ॥ अहो बतेति अद्भुतम् । अवितथगीर्भिरमोघवाग्भिः । "ब्राह्मणोस्य मुखमासीत्" इति श्रुतेः ॥ १७ ॥ ततो द्विजदेवोक्तेः ॥ १८ ॥ १९ ॥ यद्वा–शुचं शोकं लापयति नाशयतीति शुक्ला शुकं ज्ञानं लाति ददातीति वा शुक्ला 'शुक–गती । वातो वायुस्स एव रशना कटिसूत्रं येषां ते तथा । श्राम्यंति तपंतीति श्रमणाः । 'श्रमु–तपसि खेदे च' ऊर्ध्वमुपस्थोर्ध्वदेशे मंथंति रुन्द्धंति रेतो न तूपस्थदेश इत्यूर्ध्वमंथिनस्तेषां येषामुपस्थदेशे रेतः कदापि नायातीति भावः ॥२०॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे तृतीयोऽध्यायः॥३॥महत् श्लाघ्यम्। सत्कर्म वैदिकं कर्म (१) (२) अभिव्यज्यमानानि प्रकटीभूतानि । आदिना ध्वजशंखादिग्रहः । अमात्यादयः "स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च ।. राज्यांगानि प्रकृतयः" इत्यमरः । उपशमः बाह्यांतरिंद्रियनिग्रहः ॥१॥ वर्ष्मणा देहेतुना पिता यद्यपि 'उत्तरस्थः स्मृतः श्रेष्ठः' इति मेदिन्युक्तेः केवलर्षभशब्दस्य श्रेष्ठवाचकत्वं नास्ति तथाप्यत्रार्थमार्गेण तादृश एव भवति । यथोक्तं वर्ष्मणार्षभः ।

तस्य हींद्रः स्पर्धमानो भगवान्वर्षे न ववर्ष तदवधार्य भगवानृषभदेवो योगेश्वरः प्रहस्यात्मयोगमायया स्ववर्षमजनाभं नामाभ्यवर्षत् ॥ ३ ॥ नाभिस्तु यथाऽभिलषितं सुप्रजास्त्वमवरुध्यातिप्रमोदभरविह्वलो गद्गदाक्षरया गिरा स्वैरं गृहीतनरलोकसधर्मं भगवंतं पुराणपुरुषं मायाविलसित मतिर्वत्स तातेति सानुरागमुपलालयन्परां निर्वृतिमुपगतः ॥ ४ ॥ विदितानुरागमापौरप्रकृति जनपदो राजा नाभिरात्मजं समयसेतुरक्षायाम भिषिच्य ब्राह्मणेषूपनिधाय सह मेरुदेव्या विशालायां प्रसन्ननिपुणेन तपसा समाधियोगेन नरनारायणाख्यं भगवंतं वासुदेवमुपासीनः कालेन तन्महिमानमवाप ॥ ५ ॥ यस्य ह पांडवेय श्लोकावुदाहरंति ॥ को नु तत्कर्म राजर्षेर्नाभेरन्वाचरेत्पुमान् ॥ अपत्यतामगाद्यस्य हरिः शुद्धेन कर्मणा ॥ ६ ॥ ब्रह्मण्योऽन्यः कुतो नाभेर्विप्रा मंगलपूजिताः ॥ यस्य बर्हिषि यज्ञेशं दर्शयामासुरोजसा ॥ ७ ॥

प्रभावः । शौर्यमुत्साहः । एतैर्गुणैरतिश्रेष्ठत्वादृषभः श्रेष्ठ इति नाम चकार ॥ २ ॥ तस्य वर्षे मंडले ॥ ३ ॥ अवरुध्य प्राप्य । स्वैरमिच्छया गृहीतो नरलोकसमानधर्मो मनुष्याकारो येन तम् । अत एव मायया स्वपुत्र इति विलसिता मतिर्यस्य ॥ ४ ॥ आपौरप्रकृति पौरान्प्रकृतींश्चाभिव्याप्य विदितोऽनुरागो यस्मिन् । कथंभूतो नाभिः । जनपदः जनाः पौरादयः पदं प्रमाणं यस्य सः।आत्मजं धर्ममर्यादारक्षणार्थमभिषिच्य। ब्राह्मणानामुत्संगे निधाय विशालायां बदरिकाश्रमे । प्रसन्नं परानुद्वेजकं निपुणं तीव्रं च तेन । उपासीनः सेवमानः कालेन तन्महिमानं जीवन्मुक्तिमवाप ॥५॥ नाभेस्तत्प्रसिद्धं कर्म । अनु तदनन्तरं को नु पुमानाचरेत् । न कोऽपीत्यर्थः ॥६॥ मंगलैर्दक्षिणाभिः

अत्रार्थे क्रियमाणे वर्ष्मर्षभ ओजऋषभ इत्यादिनामैव जायते इति । आर्षत्वात्केवलोपि वा श्रेष्ठार्थाभिधायीति॥२॥इंद्रस्पर्द्धा तु शतयज्ञविधायित्वादेव 'क्रतुभिः शतक्रत्व इयाज' इति वक्ष्यमाणत्वात् । अजऋषभो नाभिस्तत्पिता ताभ्यां रक्षितमजनाभमिति । वृद्धिस्तु पाक्षिकत्वान्न॥३॥ "सुप्रजास्त्वमंगिरसो वो अस्तु प्रतिगृह्णीत मानवं सुमेधस इति । रायस्पोषाय सुप्रजास्त्वाय सुवीर्याय" इति च श्रुतौ प्रसिद्धोऽयं प्रयोगोऽतोऽत्राशुद्धिर्नाशंक्यति । मायया पुत्रज्ञानेन विलसिता विकासिता मतिर्यस्य सः । 'स्यान्माया शांबरीबुद्ध्योः' इति त्रिकांडशेषः ॥ ४ ॥ प्रमाणं राज्याभिषेक एव "पदं व्यवसितित्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः । समयानां सदाचाराणां या मर्यादा तस्या रक्षणे ब्राह्मणानामुत्कृष्टसंगे शास्त्रश्रवणादिरूपे निधाय त्वया हे पुत्र सर्वदा शास्त्रविद्ब्राह्मणसंगः कार्य इत्युक्त्वा " विशालेन नृपतिना यतस्तत्तं विशेषतः । अतो विशाला सा प्रोक्ता बदरीवनमेदिनी ॥ " इति बाराहे । " समयः शपथाचारसिद्धांतेषु तथा धियि " इति मेदिनी । " सेतुः स्याद्वालमर्य्यादा जललंघनसाधने " इति कोशात् । स्वमहिमानं चापवर्गाख्यमुपकल्पयिष्यन्निति पूर्वाध्याय ऋत्विगाद्युक्तेस्तन्महिमानं मोक्षम् । यद्वा"मदीयं महिमानं परं ब्रह्मेति शब्दितम् " इति श्रीमत्स्योक्तेः । परं ब्रह्मावाप्येत्यर्थः । उभयथैक एवार्थः संपद्यते परब्रह्मावाप्तेरेव मोक्षत्वात् ॥ ५ ॥ यस्य नाभेः संबंधिनौ । इत्यर्थ इति । तत्तुल्यस्यान्यस्याभावा दिति भावः । शुद्धेन कर्मणा भक्तियोगेन । पांडवेयेति । त्वमप्यतिप्रसिद्धसुकर्मपांडुवंशोद्भूतत्वात्तादृश एवेति भावः ॥ ६ ॥ ' मंगलं भगवान्विष्णुः ' इत्याद्युक्तेर्मंगलत्वेन विष्णुधिया पूजिताः । मंगलमिति भाव प्रधाननिर्देशः । यद्वा–" हिरण्यं दधि रत्नानि गावो भूमिश्च कन्यकाः । लाजास्तिला हरिद्रा च रोचनागुरुकुंकुमाः ॥ मंगलार्था इमे शब्दास्सितदूर्वा च मंगले ॥ " इत्यभिधानाद्दक्षिणास्तुतिपाठादिभिरर्चिता ओजसा

अथ ह भगवानृषभदेवः स्ववर्षं कर्मक्षेत्रमनुमन्यमानः प्रदर्शितगुरुकुलवासो लब्धवरैर्गुरुभिरनुज्ञातो गृहमेधिनां धर्माननुशिक्षमाणो जयंत्यामिंद्रदत्तायामुभयलक्षणं कर्म समाम्नायाम्नातमभियुंजन्नात्मजानामात्मसमानानां शतं जनयामास ॥ ८ ॥ येषां खलु महायोगी भरतो ज्येष्ठः श्रेष्ठगुण आसीद् येनेदं वर्षं भारतमिति व्यपदिशंति ॥ ९ ॥ तमनु कुशावर्त इलावर्तो ब्रह्मावर्तो मलयः केतुर्भद्रसेन इंद्रस्पृग् विदर्भः कीकट इति नव नवतिप्रधानाः ॥ १० ॥ कविर्हरिरंतरिक्षः प्रबुद्धः पिप्पलायन आविर्होत्रोथ द्रुमिलश्चमसः करभाजनः ॥ ११ ॥ इति भागवतधर्मदर्शना नव महाभागवतास्तेषां सुचरितं भगवन्महिमोपबृंहितं वसुदेवनारदसंवादमुपशमायनमुपरिष्टाद्वर्णयिष्यामः ॥ १२ ॥ यवीयांस एकाशीतिर्जायंतेयाः पितुरादेशकरा महाशालीना महाश्रोत्रिया यज्ञशीलाः कर्मविशुद्धा ब्राह्मणा बभूवुः ॥ १३ ॥ भगवानृषभसंज्ञ आत्मतंत्रः स्वयं नित्यनिवृत्तानर्थपरंपरः केवलानंदानुभव ईश्वर एव विपरीतवत्कर्माण्यारभमाणः कालेनानुगतं धर्ममाचरणेनोपाशिक्षयन्नतद्विदां सम उपशांतो मैत्रः कारुणिको धर्मार्थयशःप्रजानंदामृतावरोधेन गृहेषु लोकं नियमयत् ॥ १४ ॥

पूजिताः संतः ओजसा मंत्रबलेन ॥ ७ ॥ अन्येषां ग्रहणाय प्रदर्शितो गुरुकुलवासो येन । अनुशिक्षमाणोऽनुशिक्षयन् उभयविधं श्रुतिस्मृतिलक्षणं कर्मविधिमभियुंजन्ननुतिष्ठन् जयंत्यां भार्यायामात्मजानां शतं जनयामास ॥ ८ ॥ ९ ॥ तं भरतमनु कुशावर्तादयो नव पुत्रा नवतेः प्रधाना ज्येष्ठाः ॥ १० ॥ ११ ॥ तदनंतरं कविप्रमुखा नव भागवतधर्मप्रदर्शकाः । वसुदेवनारदयोः संवादो यस्मिन् । उपरिष्टादेकादशस्कंधे ॥ १२ ॥ महाशालीना अतिविनीताः ॥ १३ ॥ केवलः शुद्धः । विपरीतवदनीश्वरवत्कर्माणि कुर्वन् । नियमयत् नियमितवान् । पाठान्तरे नितरामरमयत् । कर्मकरणे हेतुः । अनुगतमुत्सन्नं धर्मं स्वयमाचरणेनातद्विदामुपशिक्षयन् । कथम् ।

तपोबलेन ' नासाध्यं तपसा किञ्चित् ' इत्युक्तेः । यज्ञेशं यज्ञफलदं विष्णुं तन्नेत्रगोचरी चक्रुः । तत्र हेतुमाह—विप्रा इति । विशेषेण प्रांति निजार्चकाभीष्टं पूरयंतीति विप्राः विपूर्वकात् प्रा पूरण इति धातोः " आतश्चोपसर्गे " इति कः । ' समीहितार्थार्पणकामधेनवः ' इति स्मृतेः ॥ ७ ॥ अन्येषां ग्रहणाय शिक्षणाय यद्यहं गुरुसेवापूर्वकं शास्त्राध्ययनं करिष्ये तदान्येपि तथा करिष्यंतीति बोधनायेत्यर्थः । लब्धवरैः प्राप्तदक्षिणैः " विद्यां श्रुत्वा ये गुरुं नाद्रियंते प्रत्यासन्नाः कर्मणा वा धनैर्वा । तेषां पापं भ्रूणहत्याविशिष्टं तेभ्यो लोके पापकृन्नैव चान्यः ॥" इति भारतोक्तेर्विना गुरुदक्षिणादानं गृहे न गंतव्यमिति भावः । सम्यगाम्नायेन ब्राह्मणोपदेशेनाम्नातमभ्यस्तम् । " आम्नायो निगमेपि च उपदेशेपि" इति मेदिनी ॥ ८ ॥ येषां शतानां मध्ये येन भरतेनाधिकृतत्वाद्भारतनाम्ना कथयंति ॥ ९ ॥ कुत्रचित् ब्रह्मावर्ताद्ग्रे आर्यावर्त इति पाठमंगीकृत्य मलयकेतुरित्येकं नामेत्युक्तम् । पूर्वत्र तु भेदेन नामद्वयमुक्तं तत्कल्पभेदेन ध्येयम् ॥ १० ॥ ११ ॥ १२ ॥ ब्राह्मणा यजनयाजनाध्यापनादिविप्रकर्मनिष्ठत्वेन तच्छब्दवाच्याः । वस्तुतो ब्राह्मणप्रसादावाप्तब्राह्मणभावाः । यद्वा—युगांतरे ब्राह्मणकर्मणा क्षत्रियादेरपि ब्राह्मणता भवति " कलौ ब्राह्मणता वीर्योत्तपश्चर्यादिना नहि " इति वारतंतव्युक्तेः । यवीयांसः कनिष्ठाः " युवाल्पयोः कनन्यतरस्याम् " इति कनादेशाऽभावे " स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः " इति पाणिनिशासनात् ॥ १३ ॥ पाठांतरे न्यरमयदिति पाठे । अतद्विदामिति । द्वितीयार्थे षष्ठी । धर्ममवि

यद्यच्छीर्षण्याचरितं तत्तदनुवर्तते लोकः ॥ १५ ॥ यद्यपि स्वविदितं सकलधर्मं ब्राह्मं गुह्यं ब्राह्मणैर्दर्शितमार्गेण सामादिभिरुपायैर्जनतामनुशशास ॥ १६ ॥ द्रव्यदेशकालवयःश्रद्धर्त्विग्विविधोद्देशोपचितैः सर्वैरपि क्रतुभिर्यथोपदेशं शतकृत्व इयाज ॥ १७ ॥ भगवतर्षभेण परिरक्ष्यमाण एतस्मिन्वर्षे न कश्चन पुरुषो वांछत्यविद्यमानमिवात्मनोऽन्यस्मात्कथंचन किमपि कर्हिचिदवेक्षते भर्तर्यनुसवनं विजृंभितस्नेहातिशयमंतरेण ॥ १८ ॥ स कदाचिदटमानो भगवानृषभो ब्रह्मावर्तगतो ब्रह्मर्षिप्रवरसभायां प्रजानां निशामयंतीनामात्मजानवहितात्मनः प्रश्रयप्रणयभरसुयंत्रितानप्युपशिक्षयन्निति होवाच ॥ १९ ॥ इति श्रीभागवते म० पंचमस्कंधे ऋषभदेवानुचरितं ना० चतुर्थोऽध्यायः ॥ ४ ॥ ऋषभ उवाच ॥ नायं देहो देहभाजां नृलोके कष्टान्कामानर्हते विड्भुजां ये ॥ तपो दिव्यं पुत्रका येन सत्त्वं शुध्येद्यस्माद्ब्रह्मसौख्यं त्वनंतम् ॥ १ ॥

धर्मादीनामवरोधेन संग्रहेण आनंदो भोगः । अमृतं मोक्षः ॥ १४ ॥ शीर्षण्यः श्रेष्ठस्तेनाचरितम् । तत्तदनुवर्त्तते यतः ॥ १५ ॥ सकलो धर्मो यस्मिंस्तद्ब्राह्मं गुह्यं वेदरहस्यम् । यद्यपि स्वेनैव विदितम् । तथाऽपि ब्राह्मणान् पृष्ट्वैव करोतीत्यर्थः ॥ १६ ॥ द्रव्यादिभिरुपचितैर्यज्ञैरिष्टवान् । तत्र वयो यौवनम् । युवैव धर्ममन्विच्छेदिति वचनात् । विविधोद्देशा नानादेवतोद्देशाः । यथोपदेशं यथाविधि ॥ १७ ॥ अन्यस्मात्सकाशादात्मनः कश्चिदपि किमपि कथंचनापि न वांछति । इच्छानुदये दृष्टान्तः । अविद्यमानं खपुष्पादिकमिव । न चान्यदीयमवेक्षतेऽपीत्यर्थः । भर्तरि ऋषभदेवे प्रतिक्षणमुल्लसितस्नेहोद्रेकं विनाऽन्यन्न वांछति ॥ १८ ॥ अवहितात्मनः संयतचित्तानपि प्रजानुशासनार्थमुपशिक्षयन्निति ह वक्ष्यमाणमुवाच ॥ १९ ॥ इति श्रीभागवते महापुराणे पंचमस्कंधे भावार्थदीपिकायां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ पंचमे मोक्षधर्मोपदेशैः पुत्रानुशासनम् ॥ उक्तं पारमहंस्यं च तस्य द्वंद्वतितिक्षया ॥ १ ॥ विड्भुजामपि ये संति तान्कष्टान्दुःखदान्कामान्विषयान्नार्हति तद्योग्योऽयं मनुष्यदेहो न भवति । दिव्य

दुष इत्यर्थः ॥ १४ ॥ १९ ॥ इत्यर्थ इति । "यो पृष्ट्वा ब्राह्मणं धर्मं कुरुते तद्भवेन्मुधा" इति स्मृतिसिद्धत्वर्थं ब्राह्मणमपृष्ट्वा न किञ्चिद्धर्मादिकार्यमिति लोकशिक्षणार्थं वेति भावः ॥ १६ ॥ द्रव्याणि व्रीह्यादीनि । देश आर्यावर्त्तादिः । कालो वसंतादिः ॥ १७ ॥ १८ ॥ अटमानोऽटितुकामः । शानजत्र ताच्छीलिकार्थः । निशामयंतीनां शृण्वंतीनाम् । प्रश्रयो नम्रता । प्रणयः स्नेहस्तयोर्भरेणाधिक्येन सुयंत्रितान्वशीकृतानपि ॥ १९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ तस्यर्षभस्य ( १ ) पुत्राणां तत्त्वोपदेशव्याजेन लोकहिताय सकलशास्त्रसारभूतं तत्त्वं निरूपयत्यस्मिन्नध्याये तत्रादौ विषयसेवा मुमुक्षुणाऽवश्यं वर्जनीयेत्याशयेनाह–नायमिति । कामान् योषिद्दर्शनस्पर्शनादीन् । कुतो नार्हते ये विड्भुजां श्वशूकरादीनामपि संति कामार्हत्वे तु मनुष्यदेहशूकरदेहयोस्तुल्यतापत्तेरिति भावः । तेन शूकरादिदेहेन यन्न लभ्यते तदेव मनुष्यदेहेन लब्धुं यतनीयं तदेव मनुष्यत्वचिह्नं तत्किं तत्राह--तप इति । तच्चानाहारवर्षातपसहनादिकं वृक्षादीनामपि वर्त्तते तद्व्यावृत्त्यर्थमाह दिव्यमप्राकृतं भगवत्संबंधीत्यर्थः ।

महत्सेवां द्वारमाहुर्विमुक्तेस्तमोद्वारं योषितां संगिसंगम् ॥ महांतस्ते समचित्ताः प्रशांता विमन्यवः सुहृदः साधवो ये ॥ २ ॥ ये वा मयीशे कृतसौहृदार्था जनेषु देहंभरवार्तिकेषु ॥ गृहेषु जायात्मजरातिमत्सु न प्रीतियुक्ता यावदर्थाश्च लोके ॥ ३ ॥ नूनं प्रमत्तः कुरुते विकर्म यदिंद्रियप्रीतय आपृणोति ॥ न साधु मन्ये यत आत्मनोऽयमसन्नपि क्लेशद आस देहः ॥ ४ ॥ पराभवस्तावदबोधजातो यावन्न जिज्ञासत आत्मतत्त्वम् ॥ यावत्क्रियास्तावदिदं मनो वै कर्मात्मकं येन शरीरबंधः ॥ ५ ॥

मुत्कृष्टम् । येन तपसा । यस्माच्छुद्धात्सत्त्वादनंतं ब्रह्मसुखं भवति ॥ १ ॥ मोक्षबंधयोर्निदानमाह । महत्सेवामिति । तमसः संसारस्य द्वारं योषितां ये संगिनस्तेषां संगम् । महतां लक्षणमाह सार्धेन । महांत इति । साधवः सदाचाराः ॥ २ ॥ मयि ईशे कृतं सौहृदमेवार्थः पुरुषार्थो येषाम् । वाशब्देनान्यनिरपेक्षस्यैवास्य लक्षणत्वं दर्शयति । देहं बिभर्तीति देहंभरा विषयवार्तैव न धर्मविषया येषु तेषु जनेषु जायादियुक्तेषु गृहेषु च । रातिर्मित्रं धनं वा पाठांतरे जायादिप्रदेषु । यावदर्थाश्च यावदर्थमेवार्थो येषामिति मध्यमपदलोपी समासः । देहनिर्वाहाधिकस्पृहाशून्या इत्यर्थः ॥ ३ ॥ कामान्नार्हतीति यदुक्तं तदुपपादयति । नूनमिति । यद्यदा इंद्रियप्रीतये आपृणोति व्याप्रियते तदा प्रमत्तः सन्विकर्म पापं नूनं कुरुते यतो विकर्मणः प्राचीनादयम् असन्नपि नश्वरोपि क्लेशदो देहो जातस्तस्यैव पुनःकरणं साधु न मन्ये ॥ ४ ॥ देहादेर्नश्वरत्वात्क्रियानयमनर्थ इत्याशंक्याह । पराभवो देहादिना स्वरूपाभिभवोऽज्ञानकृतस्तावद्भवति । तत्र हेतुः । यावत्क्रियाः स्युस्तावदिदं मनो हि कर्मस्वभावमेव स्यात् । येन कर्मात्मकेन

हे पुत्रका इति । कृपायां कन् । कृपाविषयत्वाद्युष्मानहं शास्मीति भावः । 'सत्त्वं द्रव्ये गुणे जीवे धैर्येन्तःकरणे सति' इति निरुक्तिः ॥ १ ॥ मनुष्यदेहादेवोद्धारोऽधःपातश्च भवतीति तयोः कारणमपि मनुष्यदेहेस्तीत्याह-महदिति । विमुक्तेर्विविधमुक्तेः । 'ब्रह्मसौख्यं ह्यनंतम्' इति पूर्वोक्तेर्ब्रह्मसौख्यस्य च निर्विशेषसविशेषब्रह्मसंबंधित्वेन द्वैविध्यान्मुक्तिरपि सायुज्यं भक्तिमत्पार्षदत्वं चेति द्विविधा विशब्दाव्याख्येया । महान्तोऽपि द्विविधा ब्रह्मोपासका भगवदुपासकाश्च तेषां लक्षणं तंत्रेणैवाह—समचित्ता अभेददर्शिनः अकुटिलचित्ताश्च । मा लक्ष्मीस्तया सहितः समो नारायणस्तत्रचित्ता इति वा । प्रशांताः प्रशमादियुक्ताः प्रकृष्टं शं येन स प्रशो भक्तियोगस्तत्रांतो निश्चयो येषां ते तथा वा । 'यद्वा–मन्निष्ठता बुद्धेः' इत्युक्तेर्भगवन्निष्ठधिय इत्यर्थः । विमन्यव इत्यादिविशेषणत्रयमुभयत्र तुल्यार्थम् । साधवः परदोषाग्राहिणः ॥ २ ॥ उत्तरेषामसाधारणं लक्षणं पुनराह—य इति । मत्प्रीतेरन्यद्वस्तु ये पुरुषार्थं न मन्यंते इत्यर्थः । देहंभराणां भोजनपानाद्यासक्तानां या वार्त्ता जीविका कथा वा ताभिरेव ये दीव्यंति तेषु जनेषु वा । पाठांतरे 'रातिदेषु' इति पाठे । ननु तर्हि किमर्थं तेषु तिष्ठंतीत्यत्राह—यावद्भिरेव धनादिभिरर्थो मत्पादसेवात्मिका भक्तिर्भवेत्तावंत एवोपादेया येषां ते तावदादिपदानां वृत्तावंतर्भावस्तेन तावदुपादेय इत्यादेर्लोपोपि सिद्ध इति । इत्यर्थ इति । तथा च तेषां गृहवासो न दोषाय "नैनः प्राप्नोति वै विद्वान्यावदर्थपरिग्रहः" इति श्रीवामनोक्तेरिति भावः ॥ ३ ॥ तमोद्वारं योषितां संगिसंगादेहिन एवाधःपातः स्यात्तं दर्शयति—शोचते च । विकर्म परदारादिग्रहणं देहः कीदृश आत्मनो जीवस्यासन्नपि मिथ्याभूतोऽपि । "असंगो ह्ययं पुरुषः" इति श्रुतेः ॥ ४ ॥ तर्हि पुण्यं कर्त्तव्यमिति चेन्न तस्यापि संसारहेतुत्वेन क्लेशदत्वात् । तस्मात्पुण्यपापयोर्निरासकं ज्ञानमेवाभ्यसनीयमित्याह—पराभवः कर्मपारतंत्र्यं तदेव जीवस्य बंधः स चाज्ञानकृतस्तावदेव भवति यावन्न जिज्ञासत इति । "ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुन" इति श्रीगीतोक्तेः । यावच्च ज्ञानं नो

एवं मनः कर्मवशं प्रयुंक्ते अविद्ययात्मन्युपधीयमाने ॥ प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत् ॥ ६ ॥ यदा न पश्यत्ययथा गुणेहां स्वार्थे प्रमत्तः सहसा विपश्चित् ॥ गतस्मृतिर्विंदति तत्र तापानासाद्य मैथुन्यमगारमज्ञः ॥ ७ ॥ पुंसः स्त्रिया मिथुनीभावमेतं तयोर्मिथो हृदयग्रंथिमाहुः ॥ अतो गृहक्षेत्रसुताप्तवित्तैर्जनस्य मोहोऽयमहं ममेति ॥ ८ ॥ यदा मनोहृदयग्रंथिरस्य कर्मानुबद्धो दृढ आश्लथेत ॥ तदा जनः संपरिवर्ततेऽस्मान्मुक्तः परं यात्यतिहाय हेतुम् ॥ ९ ॥ हंसे गुरौ मयि भक्त्याऽनुवृत्त्या वितृष्णया द्वंद्वतितिक्षया च ॥ सर्वत्र जंतोर्व्यसनावगत्या जिज्ञासया तपसेहानिवृत्त्या ॥ १० ॥

मनसा ॥ ५ ॥ उक्तमुपसंहरति। एवं पूर्वकृतं कर्म कर्तृभूतं मनः कर्मभतं वशं प्रयुंक्ते पुनः कर्मनिष्ठं करोतीति। जीवन्मुक्तकर्मव्यावृत्त्यर्थमाह। अविद्ययेति। अविद्यया आत्मनि उपधीयमाने आच्छाद्यमाने सति । एवं मनः कर्तृ पुरुषं कर्मवशं प्रयुंक्त इति वा ॥ ६ ॥ न केवलं देहयोगमात्रमनर्थांतरं चेत्याह । यदा गुणानामिन्द्रियाणामीहां चेष्टामयथा मिथ्या आत्मीया न भवतीति विपश्चिद्विवेकी सन्न पश्यति । 'नु पश्यति' इति पाठे अयथा आत्मीयत्वेनेत्यर्थः । तत्र तदा सहसा गतस्मृतिः स्वरूपस्मृतिशून्यः सन्नज्ञो मूढो मैथुनसुखप्रधानं गृहं प्राप्य तापान्विंदति ॥ ७ ॥ ननु यथोपयोगं स्त्रिया मिथुनीभूय सुखमात्रमनुभवतः कुतस्तापाः स्युस्तत्राह । पुंस इति । प्रत्येकं तयोरेकैको हृदयग्रंथिरस्त्येव । एतं मिथः परस्परं स्थूलमन्यं हृदययोर्ग्रंथिं दुर्भेदं वदंति । कुत इत्यत आह । अतोऽस्मान्मिथुनीभावात् । प्रत्येकं हृदयग्रंथिना तु देहेंद्रियमात्रेऽहंममेति मोहोऽस्मात्तु गृहादिभिर्विषयभूतैर्महान्मोहो भवेदित्यर्थः ॥ ८ ॥ कदा तर्हि तस्य निवृत्तिरत आह । यदाऽस्य जनस्य कर्मभिरनुबद्धो दृढो मनोरूपो हृदयग्रंथिः शिथिलो भवेत्तदाऽस्मान्मिथुनीभावान्निवर्तते । ततश्च हेतुमहंकारं त्यक्त्वा मुक्तः सन्परं पदं याति ॥ ९ ॥ हेतुमतिहायेत्युक्तं तत्र पंचविंशतिसाधनान्याह चतुर्भिः । हंसे मयि गुरौ भक्तिः

द्भवेत् तावत्कर्माणि न नश्यंति यावत्क्रियाः पुण्यपापकर्माणि स्युस्तावदिदं मनः कर्मात्मकं कर्मस्वभावमेव स्यात् ॥ ५ ॥ येन प्रकारेण मनः कर्मात्मकं स्यात्तमाह—कर्म प्राचीनमर्वाचीनं वा । एवमनेन प्रकारेण मनः कर्मात्मकं स्यात् यद्वस्तु यदधीनं स्यात्तच्च तदात्मकमेव भवेदित्यर्थः । आत्मनि जीवे । उपधीयमाने युज्यमाने सति । उपधिरुपाधिर्लिंगं तदध्यासात्तद्रूपी क्रियमाण इत्यर्थः । किं च सर्वकर्मनिर्मूलीकरणी भक्तिरेवेत्याह-प्रीतिरिति । स्नेहलक्षणा भक्तिः प्रीतिः ॥ ६ ॥ इत्यर्थ इति । गुणचेष्टामात्मीयां पश्यतीति भावः । अत्र विश्वनाथः—एवं च भक्तिमिश्रस्य ज्ञानस्य परिपाकदशायामेव नैष्कर्म्यं न त्वपरिपाकदशायामित्याह—यदा गुणेषु शब्दादिष्वर्थेषु । ईहां वाञ्छाम् अयथामनर्थरूपाम् । विपश्चित् ज्ञानवानपि न पश्येत् । 'यदानुपश्यति' इति पाठे गुणानामिंद्रियाणामीहां चेष्टामयथा ममात्मन एव चेष्टेत्यर्थः । तत्र तदा सहसा गतस्मृतिः संस्तापान्विंदति मैथुनार्हमगारं प्राप्य त्वतितापानित्यर्थः ॥ ७ ॥ इंद्रियचेष्टानामात्मीयत्वाभिमननसद्भावेऽपि स्वकुटुंबसंगवतो यथा मोहस्तथा तद्रहितस्य नेत्याह—पुंस इति । प्रत्येकं तयोरेकैकं ग्रंथिर्यथा ममेयं स्त्रीत्येकोयं ग्रंथिस्तदुपरि ममायं पतिरिति द्वितीयो ग्रंथिस्तेन पुंसा वैराग्येण त्यक्तुमिष्टोऽपि स्त्री न तं त्यजतीति बंधस्य गाढत्वम् । उपलक्षणमेतत्पितृपुत्रादेरपीति । कुटुंबराहित्ये तु वस्त्रासनपात्रादिष्वात्मीयत्वेनाभिमानसद्भावेऽपि मिथो ग्रंथ्यभावान्न तादृशो बंध इति भावः । इत्यर्थ इति । अहं गृही मम गृहमित्येवं महामोहो भवेदिति भावः । यत्तु कुटुंबी शुचौ देशे इत्याद्युक्त्वा 'न स पुनरावर्त्तते' इति श्रुत्या कुटुंबिनोऽपि पुनरनावृत्तिलक्षणमुक्तिरुक्ता तत्प्रायिकाभिप्रायेण । "ब्रह्माद्या याज्ञवल्क्याद्या मुक्ताः स्युः स्त्रीसहायिनः । बध्यंते केचनैतेषां विशेषं च विदो बुधाः ॥" इति तीर्थोक्तेः ॥ ८ ॥ ९ ॥ भक्तिमिश्रज्ञानेन लिंगभंगमुक्त्वा ज्ञानमिश्रया

मत्कर्मभिर्मत्कथया च नित्यं मद्देवसंगाद् गुणकीर्तनान्मे॥निर्वैरसाम्योपशमेन पुत्रा जिहासया देहगेहात्मबुद्धेः॥ ११॥अध्यात्मयोगेन विविक्तसेवया प्राणेंद्रियात्माभिजयेन सध्र्यक् ॥ सच्छ्रद्धया ब्रह्मचर्येण शश्वदसंप्रमादेन यमेन वाचाम् ॥१२॥ सर्वत्र मद्भावविचक्षणेन ज्ञानेन विज्ञानविराजितेन ॥ योगेन धृत्युद्यमसत्त्वयुक्तो लिंगं व्यपोहेत् कुशलोऽहमाख्यम् ॥ १३ ॥ कर्माशयं हृदयग्रंथिबंधमविद्ययाऽऽसादितमप्रमत्तः ॥ अनेन योगेन यथोपदेशं सम्यग्व्यपोह्योपरमेत योगात् ॥ १४ ॥ पुत्रांश्च शिष्यांश्च नृपो गुरुर्वा मल्लोककामो मदनुग्रहार्थः ॥ इत्थं विमन्युरनुशिष्यादतज्ज्ञान्न योजयेत्कर्मसु कर्ममूढान् ॥ कं योजयन्मनुजोऽर्थं लभेत निपातयन्नष्टदृशं हि गर्ते ॥ १५ ॥

सेवा । अनुवृत्तिस्तत्परता । विगततृष्णया । सर्वत्र लोकांतरेऽपि व्यसनावगत्या दुःखानुसंधानेन । ईहानिवृत्त्या काम्यकर्मत्यागेन ॥१०॥ मदर्थैः कर्मभिः । अहमेव देवो येषां तैः संगात् । हे पुत्राः देहगेहयोरात्मबुद्धेरहंममेति बुद्धेः ॥ ११ ॥ अध्यात्मयोगेनाध्यत्मशास्त्राभ्यासेन सध्र्यक् सम्यगिति सर्वत्र संबन्धः । असंप्रमादेन कर्तव्यस्यापरित्यागेन ॥ १२ ॥ सर्वत्र मद्भावो मद्भावना तत्र विचक्षणेन निपुणेन विज्ञानविराजितेनानुभवपर्यंतेन ज्ञानेन योगेन समाधिना धृत्युद्यमसत्त्वयुक्तो धैर्यप्रयत्नविवेकैर्युक्तः सन्नहंकाराख्यमुपाधिं व्यपोहेन्निरस्येत् ॥ १३ ॥ ततः साधनादुपरमेदित्याह । कर्माण्याशेरते यस्मिन् । योगेनोपायेन । यद्यपि फले सिद्धे साधनोपरमः सिद्ध एव । तथापि यावद्देहपातं तदभ्यासशंकावारणायोक्तम् ॥ १४ ॥ किं च । पुत्रान्पिता शिष्यान्वा गुरुर्नृपश्च प्रजा एवमनुशिक्षयेत् मम लोकं यः कामयते । यद्वा । मदनुग्रह एवार्थो यस्य । विमन्युः शिक्षितस्याकरणेऽपि कोपशून्यः । अतज्ज्ञांस्तत्त्वमविदुषः । श्रेयोबुद्ध्या कर्मसु मूढान् । अन्यथोपदेशे प्रत्यवायमाह । मनुजः काम्यकर्मसु पुरुषं योजयन्

च भक्त्या पंचविंशत्यंगया लिंगमाह चतुर्भिः । तत्रापि शुद्धभक्तानां केवलयैव भक्त्या पंचदशांगया लिंगभंगमाह प्रथमद्वाभ्याम् । हंसे परमहंसस्वरूपे । जिज्ञासया भक्तेर्भजनीयेश्वरस्य वेति शेषः । तपसा एकादशी कार्त्तिकादिव्रतलक्षणेन विष्णुवैष्णवसेवानिबंधनस्वीयभोजनशयनादिसंकोचलक्षणेन वा “ आत्मनो विहितं कर्म वर्जयित्वान्यकर्मणः । काम्यस्य वा परित्यागो निरीहेत्याहुरुत्तमाः ॥” इति तीर्थोक्तिमालक्ष्योक्तं काम्यकर्मपरित्यागेनेति ॥ १० ॥ अहं देव उपास्यो येषां तैः संगात् । निर्वैरमद्वेष्टृत्वम् । साम्यमन्यस्य सुखदुःखयोः स्वसुखदुःखसाम्यभावना । उपशमः क्रोधाद्यभावः । देहगेहादिष्वात्मीयत्वबुद्धित्यागासामर्थ्येपि त्यागेच्छया । एतादृशकर्मभिरेव पूर्वपावनरूपपुत्रशब्दार्थश्चरितार्थो भवतीत्यभिप्रायेणाह—हे पुत्रा इति ॥ ११ ॥ १२ ॥ अनुभवजनकत्वमेव ज्ञानस्य विराजनमिति भावः ॥ १३ ॥ ततः अहमाख्योपाधिनिवृत्तेरनंतरम् । साधनात् लिंगभंगसाधनात् । यथोपदेशं योगेन गुरूपदेशमनतिक्रम्य यो योग उपायस्तेन न तु पांडित्यबलात् । पुस्तकदर्शनमात्रादेव स्वोत्प्रेक्षितेन विरमेदिति लिंगव्यपोहनार्थमेव विरमेत् न तु तत्पदार्थज्ञानार्थमित्यर्थः । तदर्थं तु भक्तिं कुर्वीतैव । तदुक्तं “ ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति । समस्सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥” इति । तत्पदार्थानुभवसिद्धेऽपि भक्तेः सर्वथैवात्यागः । ‘ आत्मारामाश्च मुनयः ’ इत्यादिप्रमाणाद्व्याख्येय एवेत्यतो भक्तिभिन्नादुपायादुपरमेदिति केचिदाहुः ॥ १४ ॥ एवं भक्तेर्गुणभावमंतर्भूतं कैवल्यं चोक्त्वा भ

लोकः स्वयं श्रेयसि नष्टदृष्टिर्योऽर्थान्समीहेत निकामकामः ॥ अन्योऽन्यवैरः सुखलेशहेतोरनंतदुःखं च न वेद मूढः ॥१६॥ कस्तं स्वयं तदभिज्ञो विपश्चिदविद्यायामंतरे वर्तमानम् ॥ दृष्ट्वा पुनस्तं सघृणः कुबुद्धिं प्रयोजयेदुत्पथगं यथांधम् ॥ १७ ॥ गुरुर्न स स्यात्स्वजनो न स स्यात्पिता न स स्याज्जननी न सा स्यात् ॥ दैवं न तत्स्यान्न पतिश्च स स्यान्न मोचयेद्यः समुपेतमृत्युम्॥१८॥इदं शरीरं मम दुर्विभाव्यं सत्त्वं हि मे हृदयं यत्र धर्मः ॥ पृष्ठे कृतो मे यदधर्म आरादतो हि मामृषभं प्राहुरार्याः ॥ १९ ॥

गर्ते संसारकूपे तं पातयति स मनुजः कमर्थं पुरुषार्थं लभेत । न कमपीत्यर्थः ॥ १५ ॥ न योजयेदित्येतदुपपादयति । लोक इति त्रिभिः । नष्टदृष्टित्वे हेतुः । य इति । निकाममतिशयेन कामो यस्य ॥ १६ ॥ तमीदृशं कुबुद्धिं दृष्ट्वा तत्रैव कस्तं प्रवर्तयेन्न कोऽपि । उत्पथेन गच्छंतमंधं यथा तेनैव गच्छेति को ब्रूयात् ॥ १७ ॥ समुपेतः संप्राप्तो मृत्युः संसारो येन तम् । ततो भक्तिमार्गोपदेशेन यो न मोचयेत्स गुर्वादिर्न भवतीत्यर्थः । यद्वा यस्तं मोचयितुं न शक्नुयात्स तस्य गुर्वादिर्न स्यादिति निषेधः । ततश्च पिता न स्यादिति पुत्रोत्पत्तौ यत्नो न कार्य इत्यर्थः । दैवं देवता न स्यादिति पूजा न ग्राह्येत्यर्थः । एवमन्यदपि द्रष्टव्यम् ॥ १८ ॥ एवं मोक्षधर्मानुपदिश्य भ्रातृशुश्रूषणलक्षणं धर्मं स्पर्धादिनिवृत्तये तेषां जन्मकथनपूर्वकमाह द्वाभ्याम् । इदं मनुष्याकारं शरीरं मम दुर्विभाव्यमवितर्क्यं मदिच्छाविलसितम् । न त्वहं प्राकृतो मनुष्य इत्यर्थः ।

क्तेरुपदेष्टापि कृतार्थः स्यादित्याह–पुत्रानिति । कर्मैव कुरुतेति नोपदिशेत् । 'जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरेत्' इति तु ज्ञानोपदेष्टृविषयं न तु भक्त्युपदेष्टृविषयमिति ज्ञेयम् । विहितकर्माचरणाधीन चित्तशुद्धिं विना ज्ञानानुत्पत्तेस्तत्र कर्मकरणस्यावश्यकत्वं भक्तेस्तु स्वत एव चित्तशोधनहेतुत्वान्न तत्र कर्मापेक्षेति तत्त्वम् । यद्वा–अथ वा मल्लोककामनया मदनुग्रहप्रयोजनेन वेत्यर्थः । इत्यर्थ इति । प्रत्युत ज्ञानचक्षूरहितस्याधःपातहेतुकाम्यकर्मोपदेष्टृत्वेन स्वस्यापि नरकपातः स्यादिति भावः ॥ १९ ॥ अर्थान् भोग्यपदार्थान्दृष्टानदृष्टांश्च । न केवलं पुरुषार्थानवाप्तिरपि तु दुःखावाप्तिश्च स्यादित्याह–अन्योन्येति ॥ १६ ॥ १७ ॥ एवं भक्तेरुपदेष्टारमभिनंद्य तदनुपदेष्टॄणां गुरुत्वबन्धुत्वाद्यभावं तद्धेतुकं तेषां त्यागं चाभिव्यंजयति–गुरुर्नेति । इत्यर्थ इति । तं त्यजेदित्यर्थः । ननु गुरुं कृत्वा पुनस्त्यागेऽपि दोष एव । वस्तुतस्तु–परमार्थानुपदेष्टृगुरुत्यागे दोषो नास्ति तथापि "अन्ते रंडाविवाहश्चेदादावेव कुतो न सः" इति न्यायेन तादृशो गुरुरेव न कार्य इत्याह–यद्वेति । इत्यर्थ इति । नाहं पुत्रोद्धरणसमर्थ इति विमृश्येति भावः । इत्यर्थ इति । यो देवोप्यसमर्थो मोचने तं न पूजयेदिति भावः । अन्यत्स्वजनजनन्यपि मोचनासमर्थं स्वजनं मातरं च तथाविधां स्वजनबुद्ध्या मातृबुद्ध्या च नाश्रयेदिति भावः । अत्र विश्वनाथः-यो न मोचयेद्भक्तिमार्गोपदेशेन स गुर्वादिर्न भवेत्।बलिः शुक्रमिव तं गुरुं त्यजेदेव तस्य प्रणत्यनुवृत्त्याद्यभावेऽपि न प्रत्यवायी स्यादिति भावः । एवं विभीषणो रावणमिव तं स्वजनम् । प्रह्लादो हिरण्यकशिपुमिव तं पितरम् । श्रीभरतः कैकेयीमिव तां जननीम् । खट्वांगं इंद्रादिकमिव तद्दैवम् । याज्ञिकब्राह्मणीयाज्ञिकविप्रमिव तं पतिं च त्यजेदेवेत्यर्थः।यद्वा-स्यादिति विधिलिङा यस्तं मोचयितुं न शक्नुयात्स तस्य गुर्वादिर्न स्यात्प्रणत्यनुवृत्त्यादिकं न गृह्णीयाद्यदि गृह्णीयात्तर्हि प्रत्यवायी स्यादिति तेन च यदि मोचयितुं न शक्नुयात्तर्हि गुरुर्भवितुमन्यं शिष्यं न कुर्यात् । स्वजनो भवितुं बंधुतां न दध्यात् । पिता भवितुं पुत्रोत्पत्तौ नं यतेत जननी भवितुमन्यं गर्भं न दध्यात् दैवं भवितुं पूजां न गृह्णीयात् पतिर्भवितुं पाणिं न गृह्णीयादिति द्योतितम्॥१८॥यस्य भक्तिः कर्त्तव्या स क भगवांस्तथा भक्तिप्राप्त्यर्थं भागवतसेवा चापेक्षणीयेति क वा स भागवत इति युष्माकमल्पोपि प्रयासो नास्ति यतो गृहे एव भगवानहं वः।पिता तथैव गृह एव भागवतोऽयं

तस्माद्भवंतो हृदयेन जाताः सर्वे महीयांसममुं सनाभम्॥अक्लिष्टबुद्ध्या भरतं भजध्वं शुश्रूषणं तद्भरणं प्रजानाम् ॥ २० ॥ भूतेषु वीरुद्भ्य उदुत्तमा ये सरीसृपास्तेषु सबोधनिष्ठाः ॥ ततो मनुष्याः प्रमथास्ततोऽपि गंधर्वसिद्धा विबुधानुगा ये ॥ २१ ॥ देवासुरेभ्यो मघवत्प्रधाना दक्षादयो ब्रह्मसुतास्तु तेषाम् ॥ भवः परः सोथ विरिंचवीर्यः स मत्परोऽहं द्विजदेवदेवः ॥ २२ ॥ न ब्राह्मणैस्तुलये भूतमन्यत्पश्यामि विप्राः किमतः परं तु ॥ यस्मिन्नृभिः प्रहुतं श्रद्धयाऽहमश्नामि कामं न तथाऽग्निहोत्रे ॥ २३ ॥

मे हृदयं तु सत्त्वम् । किं तद्धृदयम् । यत्र धर्मस्तत् । शुद्धं सत्त्वमित्यर्थः । कुतः । यद्यस्मान्मयाऽधर्मो दूरादेव पृष्ठे कृत उत्सारितः अत एव मामृषभं श्रेष्ठं प्राहुः ॥ १९ ॥ भवंतश्च हृदयेन शुद्धसत्त्वमयेन जातास्तस्मान्मत्सरं हित्वा महत्तमं सनाभं सोदरं भजध्वम् । ननु त्वत्पुत्रत्वात्त्वां वयं भजेम राजपुत्रत्वात्प्रजाश्च पालयेमेति चेदत आह । तदेव मे शुश्रूषणं प्रजानां च पालनम् । भरतानुवृत्त्यैव सर्वं कृतं स्यादिति भावः ॥ २० ॥ इदानीं ब्राह्मणाश्च सेव्या इत्याशयेन तेषां सर्वेभ्यः श्रैष्ठ्यमाह पंचभिः । भूतेषु चेतनाचेतनेषु । विरोहंतीति वीरुधः स्थावरा उदुच्चैरतिशयेनोत्तमाः तेभ्योऽपि ये सरीसृपाः सर्पंतीति जंगमास्ते उदुत्तमा इति सर्वत्रानुषंगः । तेष्वपि सबोधा निष्ठा स्थितिर्येषां पश्वादीनां ते कीटकादिभ्यः । ततस्तेष्वपि मनुष्याः । ततोऽपि प्रमथा भूतप्रेतादयः । ततोऽपि गन्धर्वाः । ततः सिद्धाः । ततोऽन्ये विबुधानुगाः किन्नरादयः ॥ २१ ॥ तेभ्योऽसुराः । देवा असुरेभ्यः । संधिरार्षः। देवाश्च मघवत्प्रधानाः। देवेभ्य इंद्रः श्रेष्ठ इत्यर्थः । ततोऽपि ब्रह्मसुता दक्षादयः । तेषां मध्ये भवः परः श्रेष्ठः । स भवो विरिंचवीर्यो विरिंचो वीर्यं शक्तिः कारणं यस्य स विरिंचवीर्यः अतस्तज्जनकत्वाद्विरिंचस्ततः पर इत्यर्थः ॥ स विरिंचो मत्परः अहं परो यस्य । द्विजदेवाः ब्राह्मणा एव देवाः पूज्या यस्य सोऽहम् ॥ २२ ॥ ब्राह्मणैरन्यद्भूतं न तुलये समं न पश्यामि । अतो ब्राह्मणात्परं तु भूतं किं पश्यामि न किंचित् । विप्रा इति तत्रत्यानां ब्राह्मणानां संबोधनम् ।

वो भ्राता वर्तत इत्याह-इदमिति । इत्यर्थ इति। चिद्वस्तुनस्तत्त्वस्य यन्मूर्त्तत्वमेतदेव दुर्विभाव्यत्वमन्येषां पृथिव्यादीनां तत्त्वानां दुर्विभाव्यत्वाभावादिति भावः। हि निश्चितं यत्र मे धर्मः मत्प्रापको भक्तियोगस्तत्रैव मे हृदयं मनः 'साधवो हृदयं मह्यम्' इति मदुक्तेः । मे अधर्मो मद्धर्मभिन्न इत्यर्थः । आराद्दूरत एव पृष्ठे कृतः ततः पराङ्मुखोऽहं तत्र न मे मन इत्यर्थः । अतो हेतोर्द्धर्मस्वीकाराधर्मत्यागरूपाद्धेतोः ॥ १९ ॥ हृदयेन उरसा जाता अत एव पुत्रा औरसा उच्यंते भरतं भजध्वम् । ननु जायात्मजरातिमत्सु न प्रीतियुक्ता इत्यनेन स्वसंबंधिभक्तिस्त्याजितैव सा पुनः कथमुपदिश्यते तत्राह—महीयांसमिति । 'महत्सेवां द्वारमाहुः' इत्यादिना महतां संग उपदिष्टस्तेषामपि मध्ये श्रेष्ठमित्यर्थः । अक्लिष्टबुद्ध्येति । भ्रातृत्वेन तुल्यैरस्माभिः कथमयं भजनीय इति व्यवहारदृष्टिर्न कार्येति भावः । अत्राक्षिपंति—नन्विति । भक्तिहेतुत्वेन नारदादीन्महतः सेवेमहि । इति भाव इति । ज्येष्ठानुवृत्त्या राष्ट्रभेदाद्यभावेन भरतं शुश्रूषद्भिर्भवद्भिरपि प्रजापालनमनुष्ठितं मम शुश्रूषणं च कृतमित्याशयः॥२०॥तेष्वपि जंगमेष्वपि । ततस्तदनु । तेषु पशुष्वपि । भूतादयो रुद्रगणत्वात् । गंधर्वा देवगायकत्वात् सिद्धा देवकार्यसाधकत्वात् । किन्नरादयोऽद्भुतमूर्त्तित्वात्॥२१॥तेभ्यः किन्नरादिभ्यः । असुरास्तपोनिष्ठतया ब्रह्माराधकत्वात् । इत्यर्थ इति । देवराजत्वादिति भावः । अतो विरिंचवीर्यत्वात् । इत्यर्थ इति । ततो रुद्राद्ब्रह्मा श्रेष्ठस्तत्पितृत्वादिति भावः । अत्र द्विजेषु दीव्यंति तप आदिना द्योतंते इति द्विजदेवा विप्रास्त एव देवा देववत्पूजनीया यस्य स तथा मत्तोपि ब्राह्मणाः पूज्या इत्यर्थः ॥ २२ ॥ अन्यद्भूतं स्थावरजंगमादिशरीरम् ।

धृता तनूरुशती मे पुराणी येनेह सत्त्वं परमं पवित्रम्॥शमो दमः सत्यमनुग्रहश्च तपस्तितिक्षाऽनुभवश्च यत्र ॥२४॥ मत्तोप्यनंतात्परतः परस्मात्स्वर्गापवर्गाधिपतेर्न किंचित् ॥ येषां किमु स्यादितरेण तेषामकिंचनानां मयि भक्तिभाजाम् ॥२५॥ सर्वाणि मद्धिष्ण्यतया भवद्भिश्चराणि भूतानि सुता ध्रुवाणि ॥ संभावितव्यानि पदेपदे वो विविक्तदृग्भिस्तदुहार्हणं मे ॥ २६ ॥ मनोवचोदृक्करणेहितस्य साक्षात्कृतं मे परिबर्हणं हि ॥ विना पुमान्येन महाविमोहात्कृतांतपाशान्न विमोक्तुमीशेत् ॥ २७ ॥

समस्यैवाभावादधिकं कुतस्त्यमित्यर्थः । तत्र हेतूनाह सार्धाभ्याम् । यस्मिन् ब्राह्मणे श्रद्धया प्रकर्षेण हुतमन्नादि कामं यथेच्छमहमश्नामि ॥ २३ ॥ मे तनूर्मूर्तिर्वेदाख्या येन ब्राह्मणेनेह लोके धृता यत्र च ब्राह्मणे सत्त्वादयोऽष्टौ गुणाः संति ततः परं किं पश्यामीत्यन्वयः ॥ २४ ॥ निःस्पृहत्वमाह । मत्तोऽपि येषां न किंचित्प्रार्थनीयमस्ति तेषामितरेण राज्यादिना किमु स्यान्न किमपि ॥ २५ ॥ तदेवं ब्राह्मणसंमानं विधायेदानीं सर्वभूतसंमानं विधत्ते सर्वाणीति । हे सुताः सर्वाणि जंगमानि स्थावराणि च भूतानि मदधिष्ठानतया वो युष्माभिः संमाननीयानि । पदेपदे क्षणेक्षणे । विविक्ता पूता मत्सरादिरहिता दृष्टिर्येषां तैः । तदेव ममार्हणम् ॥ २६ ॥ सर्वकर्मणामीश्वरार्पणं विधत्ते । मनोवचोदृशामन्येषां च करणानामीहितस्य व्यापारस्य मे परिबर्हणमाराधनमेव साक्षात्कृतं फलम् । येन परिबर्हणेन विना कालपाशाद्विमोक्तुं न ईशे न समर्थो भवेत् ॥ २७ ॥

तत्रत्यानां सभाशालागतानाम् । इत्यर्थ इति । सर्वेश्वरस्यापि मम पूज्यदेवत्वात् 'ब्रह्म दैवं परं हि मे' इति सनकादीन्प्रति मदुक्तेरिति भावः । तत्र ब्राह्मणाविक्ये । यस्मिन्ब्राह्मणे इति । ब्राह्मणद्वारैव मत्तृप्तिः स्यान्नान्यथेति "विप्राशितं देवा अश्नंति विप्राशितं पितरोऽश्नंति विप्राशितं देवदेवो विष्णुरश्नाति" इति श्रुतेः । तत्रापि श्रद्धया पादशौचासनार्चनादिकपूर्वयाऽन्यथा "अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह" इति गीतोक्तेः । कर्मानर्थक्यं स्यादिति ॥२३॥ ननु "ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम्" इत्युक्तेरग्नेरपि तादृक्त्वात्को विशेषो ब्राह्मणे तत्राह–धृतेति । पुराणी अनादिनिधना । परमं पवित्रं सत्त्वं शुद्धं सत्त्वमित्यर्थः । सत्यं यथार्थभाषणं समदर्शनं वा अनुग्रहः परदुःखप्रहाणेच्छा अनुभवो भगवद्रूपसाक्षात्कारः ॥ २४ ॥ द्विजदेवत्वे कारणविशेषमाह–मत्त इति । येषां ब्राह्मणानां मद्भक्तिं विना न किंचिदपेक्षणीयमित्याह–ओं वासुदेव एव किञ्चन येषां तेऽकिञ्चनास्तेषामत एव मयि भक्तिं कुर्वताम् । यद्वा–अहंतास्पदममतास्पदयोर्मह्यमेव दत्तत्वान्न विद्यते किञ्चनापि येषां मयि भक्तिः प्रेमा तामेव भजतां प्रतिक्षणं प्राप्नुवतामित्यर्थः । अत एव ते नित्यं तथा बुभूषुभिराराध्या इति भावः ॥ २५ ॥ स्पर्द्धावज्ञादिदोषशान्त्यर्थं सर्वभूतसंमानमपि विधत्ते । चराणि जंगमानि ध्रुवाणि स्थावराणि । हे सुता इति । पुत्रत्वाद्भवद्भ्य इदमतिगुह्यमुक्तमिति भावः । तदेव मम मुख्यं पूजनं न तु केवलप्रतिमादिपूजनं "सर्वभूतेषु मद्भावो मनोवाक्कायकर्मभिः । इदं ममार्चनं मुख्यं न प्रतीकादिपूजनम्" इति भगवद्‌दुक्तेः ॥ २६ ॥ समासेन भक्तेर्लक्षणं

श्रीशुक उवाच ॥ एवमनुशास्यात्मजान्स्वयमनुशिष्टानपि लोकानुशासनार्थं महानुभावः परमसुहृद्भगवानृषभापदेश उपशमशीलानामुपरतकर्मणां महामुनीनां भक्तिज्ञानवैराग्यलक्षणं पारमहंस्यधर्ममुपशिक्षमाणः स्वतनयशतज्येष्ठं परमभागवतं भगवज्जनपरायणं भरतं धरणिपालनायाभिषिच्य स्वयं भवन एवोर्वरितशरीरमात्रपरिग्रह उन्मत्त इव गगनपरिधानः प्रकीर्णकेश आत्मन्यारोपिताहवनीयो ब्रह्मावर्तात्प्रवव्राज ॥ २८ ॥ जडांधमूकबधिरपिशाचोन्मादकवदवधूतवेषोऽभिभाष्यमाणोऽपि जनानां गृहीतमौनव्रतस्तूष्णीं बभूव ॥ २९ ॥ तत्रतत्र पुरग्रामाकरखेटवाटखर्वटशिबिरव्रजघोषसार्थगिरिवनाश्रमादिष्वनुपथमवनिचरापसदैः परिभूयमानो मक्षिकाभिरिव वनगजस्तर्जनताडनावमेहनष्ठीवनग्रावशकृद्रजःप्रक्षेपपूतिवातदुरुक्तैस्तदविगणयन्नेवासत्संस्थान एतस्मिन्देहोपलक्षणे सदपदेश उभयानुभवस्वरूपेण स्वमहिमावस्थानेनासमारोपिताहंममाभिमानत्वादविखंडितमनाः पृथिवीमेकचरः परिबभ्राम ॥ ३० ॥

स्वत एव सुशिक्षितानपि लोकानुशासनार्थमनुशास्य मुनीनां पारमहंस्यधर्ममुपशिक्षयिष्यन्भरतमभिषिच्य ऋषभ इत्यपदेशो नाम यस्य स भगवान् ब्रह्मावर्तात्स्वदेशात्प्रवव्राजेत्यन्वयः । उर्वरितोऽवशिष्टः शरीरमात्रपरिग्रहो यस्य ॥ २८ ॥ अभिभाष्यमाणोऽपि जनानां मध्ये जडादिवद्वर्तमानस्तूष्णीं बभूव । अवधूतस्येव वेषो यस्य ॥ २९ ॥ तत्रतत्र पुरादिष्वनुपथं मार्गेमार्गेऽवनिचरापसदैर्दुर्जनैस्तर्जनादिभिः परिभूयमानोऽपि तदविगणयन्नेवैकचर एकाकी पृथिवीं परिबभ्रामेत्यन्वयः । तत्र पुरं पत्तनम् । ग्रामा हट्टहीनाः । आकरः खनिः । खेटः कृषीवलग्रामः । वाटः पुष्पादिवाटिका । खर्वटः पर्वतप्रांतग्रामः । शिबिरं सेनाया वासस्थानम् । व्रजो गवां स्थानम् । घोषो गोपानां स्थानम् । सार्थो यात्रिकजनसंघातः । आश्रम ऋषीणाम् । तर्जनं भयजननम् । ताडनं प्रहारः । अवमेहनमुपरिमूत्रणम् । ष्ठीवनं फूत्कृत्य श्लेष्मप्रक्षेपः । ग्राव्णां शकृतो रजसश्च प्रक्षेपः । पूतिवातोऽधोवायुः । दुरुक्तं शापः एतैः । अगणने दृष्टांतः मक्षिकाभिरिवेति । तत्र हेतुः । असति मिथ्याभूते संस्थाने सांनिवेशे देह इत्युपलक्षणमाकारो यस्य । सदित्यपदेशमात्रं यस्य तस्मिन् । निरभिमानत्वात् । केन हेतुना । उभयोः सदसतोर्योऽनुभवस्तत्स्वरूपेण यत्स्वमहिम्न्यवस्थानं तेन । अत एवाविखं

तांश्च विना निस्ताराभावश्चोपपादयन्नुपसंहरति—मन इति । यद्वा—मे साक्षात्कृतं साक्षान्मत्संबंधित्वेन यत्करणं प्रवृत्तिस्तदेव मे परिबर्हणमाराधनमित्यर्थः ॥ २७ ॥ गगनपरिधानो दिगंबरः । आत्मनि स्वस्मिन्नेवारोपित आहवनीयोऽग्निविशेषो येन स तथानेन प्रव्रज्या लक्ष्यते । "आत्मन्यग्नीन्समारोप्य न्यस्ताग्निः प्रव्रजेत्ततः" इत्युक्तेः ॥ २८ ॥ २९ ॥ तत्र पुरादिषु तत्रैवागणत एव । असत्संस्थान इत्यादिकं लोकशिक्षणाय व्यंजनमात्रम् । "इदं शरीरं मम दुर्विभाव्यं तत्त्वम्" इत्याद्युक्तेरिति संदर्भः । किञ्च—ऋषभदेवदेहस्य वक्तृपरोक्षत्वादेतच्छब्दवाच्यत्वं न घटेत तस्मादेवं व्याख्येयम् । एतस्मिन् जगति नश्वरत्वादसत्संस्थाने समष्टित्वेन

अतिसुकुमारकरचरणोरःस्थलविपुलबाह्वंसगलवदनाद्यवयवविन्यासः प्रकृतिसुंदरस्वभावहाससुमुखो नवनलिनदलायमानशिशिरताराऽरुणायतनयनरुचिरः सदृशसुभगकपोलकर्णकंठनासो विगूढस्मितवदनमहोत्सवेन पुरवनितानां मनसि कुसुमशरासनमुपदधानः परागवलंबमानकुटिलजटिलकपिशकेशभूरिभारोऽवधूतमलिननिजशरीरेण ग्रहगृहीत इवादृश्यत ॥३१॥ यर्हि वाव स भगवाँल्लोकमिमं योगस्याद्धा प्रतीपमिवाचक्षाणस्तत्प्रतिक्रियाकर्म बीभत्सितमिति व्रतमाजगरमास्थितः शयान एवाश्नाति पिबति खादत्यवमेहति हदति स्म चेष्टमान उच्चरित आदिग्धोद्देशः ॥ ३२ ॥

डितं मनो यस्य स परिबभ्राम ॥३०॥ स च तदा ग्रहगृहीत इवादृश्यत । तत्र हेतुः । पराक् पुरतोऽवलंबमानाश्च ते कुटिलाश्च ते जटिलाश्च कपिशाश्च केशास्तेषां भूरिभारो यस्य सः । अवधूतमनादृतमत एव मलिनं निजशरीरं तेन । कथंभूतोऽप्येवमदृश्यत । अतिसुकुमाराणि करचरणोरःस्थलानि तथा विपुला बाह्वादयस्त एवावयवास्तेषां विशिष्टो न्यासः संनिवेशो यस्य सः । तथा प्रकृत्यैव सुंदरः स्वभावसिद्धो हासस्तेन शोभनं मुखं यस्य । तथा नवनलिनदलवदाचरती ये शिशिरतारे तापहारिकनीनिके अरुणे आयते नयने ताभ्यां रुचिरः । तथा सदृशा अन्यूनाधिकाः सुभगाश्च कपोलकर्णकंठनासिका यस्य । तथा विगूढस्मितं यद्वदनं तस्य महोत्सवेन विभ्रमेण पुरांगनानां मनसि काममुद्दीपयन् । एवंभूतोऽपि तथादृश्यतेत्यन्वयः ॥ ३१ ॥ यर्हि यदा लोकं जनं योगस्य प्रतिपक्षमाचक्षाणः पश्यन्बभूव । तस्य प्रतिक्रियाकरणं कर्म च निंदितमित्याचक्षाणस्तदाऽऽजगरं व्रतमास्थितः सन् शयान एवाश्नाति स्मेत्यन्वयः । आजगरं व्रतं नाम एकत्रैव स्थित्वा प्रारब्धकर्मोपभोगः । अवमेहति मूत्रयति । हदति पुरीषमुत्सृजति । उच्चरिते पुरीषे चेष्टमानो विलुठन् तेनैवादिग्धा आलिप्ता उद्देशा देहप्रदेशा यस्य सः ॥ ३२ ॥

देहमुपलक्षयतीति जगदपि प्राकृतं स्वदेहस्तस्मिन्निरभिमानत्वादिति । तर्जनादिकृज्जनसमुदायवतो जगतः स्वदेहत्वेनाभिमाने हंतहंत एतादृशमहदपराधदोषदुष्टो जगदात्मको मद्देह इति खेदेन मनः खंडितं स्यात् । अतः स्वमहिम्नि चिन्मयानंदे यदवस्थानं तेन हेतुना । तत्र देहे निरभिमानत्वात् । कीदृशेन उभयोश्चिच्छक्तिमायाशक्त्योः स्वीयस्वरूपास्वरूपत्वाभ्यां योऽनुभवस्तेन यत्स्वमहिमावस्थानं तेन ॥ ३० ॥ स च ऋषभदेहः तत्र गृहगृहीततुल्यत्वे । कुटिला वक्राः । जटिला ग्रथिताः । कपिशाः श्यावाः । अत एवानादृतत्वादेव ॥ ३१ ॥ इमं देहम् । प्रतीपं क्षुत्पिपासालोकोपद्रवाद्यैर्विक्षेपकारणैः प्रतिकूलम् । इवेत्यारूढयोगानां प्रायः प्रातिकूल्याभावात् । एकत्रेति । एकत्रावस्थाने सति परिचितत्वाद्देर्लोकोपद्रवाद्यधिकं न स्यादिति भावः । यद्वा—योगस्य समाध्यादेः प्रतिपक्षं लोकानामत्रा गमने वार्त्तालापादिना योगभ्रंशो भविष्यतीति विचार्य पुनस्तस्य लोकागमनादेः अन्यकर्तृकप्रतिकूलाचरणस्य वा प्रतिक्रियाकरणं तद्वारणं यथैतेऽत्र नागच्छेयुस्तत्र कर्म बीभत्सितं भ्रष्टाचरणरूपं निंदितमेव तत्स्वीकारेणैते स्वयमेव मत्पार्श्वं नागमिष्यंति निंदिताचारवानयमेतत्पार्श्वे न गंतव्यमित्यामृश्येतील्यत एतदेव मया स्वीकार्यमित्याचक्षाणः पश्यन्नाजगरं व्रतमास्थितवानिति भावः ॥ ३२ ॥

तस्य ह यः पुरीषसुरभिसौगंध्यवायुस्तं देशं दशयोजनं समंतात्सुरभिं चकार ॥ ३३ ॥ एवं गोमृगकाकचर्यया व्रजंस्तिष्ठन्नासीनः शयानः काक मृगगोचरितः पिबति खादत्यवमेहति स्म ॥ ३४ ॥ इति नानायोगचर्याचरणो भगवान्कैवल्यपतिर्ऋषभोऽविरतपरममहानंदानुभव आत्मनि सर्वेषां भूतानामात्मभूते भगवति वासुदेव आत्मनोऽव्यवधानानंतरोदरभावेन सिद्धसमस्तार्थपरिपूर्णो योगैश्वर्याणि वैहायसमनोजवांतर्धानपरकायप्रवेशदूरग्रहणादीनि यदृच्छयोपगतानि नांजसा नृप हृदयेनाभ्यनंदत् ॥ ३५ ॥ इति श्रीभागवते म० पं० ऋषभदेवानुचरिते पंचमोऽध्यायः ॥ ५ ॥

राजोवाच ॥ न नूनं भगव आत्मारामाणां योगसमीरितज्ञानावभर्जितकर्मबीजानामैश्वर्याणि पुनः क्लेशदानि भवितुमर्हंति यदृच्छयोपगतानि ॥ १ ॥

बीभत्समिवाशंक्याह। तस्येति । पुरीषस्य सुरभिणा गंधेन सौगंध्यं यस्य स वायुः ॥ ३३ ॥ एवं गवादिचर्यया पानादि करोति स्म । तदेवाह । व्रजन्नित्यादिना । काकमृगगवामिवान्यदपि चरितं वृत्तिर्यस्य ॥ ३४ ॥ नानायोगचर्या आचरतीति तथा । लोकयात्रापरिहाराय योगिभिरेवं वर्तितव्यमिति प्रदर्शनाय तथा कृतवान् । वस्तुतस्तु भगवान्यतोऽविरतः परममहानुत्तरोत्तरशतगुणत्वेनोक्तो य आनंदस्तदनुभवस्वरूपः । किं च वासुदेवे आत्मनोऽव्यवधानेनाभेदेन न विद्यतेऽन्येषामिवांतरा मध्ये उदरस्य देहोपाधेर्भावस्तेन । नित्यनिवृत्तोपाधित्वेनेत्यर्थः । स्वत एव सिद्धैः समस्तैरर्थैः फलैः परिपूर्णत्वाद्योगैश्वर्याणि नाभ्यनंदत् । वैहायसं खेचरत्वम् । मनोजवं मनस इव देहस्य वेगम् । दूरग्रहणं दूरदर्शनम् । हे नृप हृदयेन मनसा ॥ ३५ ॥ इति श्रीमद्भागवते पंचमे टीकायां पंचमोऽध्यायः ॥ ५ ॥ ॥ षष्ठे लीनाभिमानस्य देहत्यागक्रमाभिधा ॥ प्रदहंतं दवाग्निं यः पश्यन्नपि न पश्यति ॥ १ ॥ योगैश्वर्याणि नाभ्यनंददित्युक्तं तत्र पृच्छति । नेति । भगव हे भगवन् योगेन समीरितमुद्दीपितं यज्ज्ञानं तेनावभ

तस्य चिन्मयशरीरस्यैतदतिबीभत्सितमेवेति चेद्वस्तुतस्तन्नास्तीत्याह—तस्येति । किं च—यद्यपि " मलमूत्रादिरहिताः पुण्यश्लोकाः प्रकीर्तिताः " इत्युक्तेर्भगवत ऋषभस्य पुरीषोत्सर्गाद्येवासंभावितं तथापि योगभ्रंशप्रतीकारार्थमेव तदा तथा दर्शितम् । न वस्तुतस्तस्मिंस्तदस्तीति ज्ञेयम् । ननु सौगंध्ये बीभत्सता न संभवति कथमुक्तं बीभत्सितमिति चेदत्रेदं बोध्यम्—सौगंध्येऽपि पुरीषस्यास्पृश्यत्वादिना बीभत्सत्वैवेति । सुगंधिस्तु तत्र समागतसिद्धिपरित्यागादिनाऽमर्त्यीयत्वादिति ज्ञेयम् । अत्र व्याख्याने इवशब्दस्यानुल्लेखादिवशब्दरहित एव पाठः स्वामिसंमत इति भाति दृश्यते च सर्वत्रेवशब्दः स च स्वरूपावस्थितस्यान्यकर्तृकप्रतिकूलाचरणं वस्तुतो न संभवतीति सूचनार्थः । यद्वा—प्रतिक्रियाकरणं बीभत्सितं निंदितं योगशास्त्रनिषिद्धमिति यावत् । विक्षेपजनकत्वादिति भावः ॥ ३३ ॥ अन्यदपि गमनशब्दादि रूपं चरितम् ॥ ३४ ॥ " शतगुणत्वेन तस्यैवानंदस्य मात्रामुपजीवंति " इत्यादिश्रुतावुक्तो य आनंदस्तत्साक्षात्कारविग्रहः । कैवल्यपतिरित्यन्येभ्योऽपि कृपया यः कैवल्यं ददाति तस्येयं लीला ध्येयैव न तु चिकीर्षणीयेति । अन्यदद्भुतमाह—किं चेति । भगवानपि भगवति वासुदेवे वसुदेवनंदने तस्यैव सर्वावताराणामाराधनीयत्वात् । यदुक्तं भीष्मेण " अस्यानुभावं भगवान्वेद गुह्यतमं शिवः । देवर्षिर्नारदः साक्षाद्भगवान्कपिलो मुनिः॥ " इति ईश्वरबाहुल्यं वारयति—आत्मनीति । स्वस्यांशित्वात्स्वस्मिन्नेवेत्यर्थः । इत्यर्थ इति । देहस्य भेदो हि प्रातीतिक एव न वस्तुत इति भावः । यद्वा—आत्मनः स्वस्याव्यवधानः साक्षाद्भूतः । अनंतोऽपारः । रोदो रोदनमश्रु राति आददातीति रोदरो भावः प्रेमा तेनैव सिद्धैः समस्तैरर्थैः परिपूर्णः । अंजसा साक्षादुपगतानि । नृपेति । नृपाणामेतद्दुर्लभमित्याह ॥ ३५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ य ऋषभः ( १ ) हे भगव इत्यार्षो नलोपः । योगेन भक्तियोगेन यतो न क्लेशदानि अतो हेतोः । इत्यर्थ इति । न ह्यकस्मात्प्राप्तेषु भोगेष्वनपकुर्वत्सु विरज्यत इति भावः ॥ १ ॥

ऋषिरुवाच ॥ सत्यमुक्तं किंत्विह वा एके न मनसोऽद्धा विश्रंभमनवस्थानस्य शठः किरात इव संगच्छंते ॥ २ ॥ तथा चोक्तम् ॥ न कुर्यात्कर्हिं चित्सख्यं मनसि ह्यनवस्थिते ॥ यद्विश्रंभाच्चिराच्चीर्णं चस्कंद तप ऐश्वरम् ॥३॥ नित्यं ददाति कामस्य च्छिद्रं तमनु येऽरयः ॥ योगिनः कृतमैत्रस्य पत्युर्जायेव पुंश्चली ॥ ४ ॥ कामो मन्युर्मदो लोभः शोकमोहभयादयः ॥ कर्मबंधश्च यन्मूलः स्वीकुर्यात्को नु तद्बुधः ॥ ५ ॥ अथैवमखिललोकपालललामोऽपि विलक्षणैर्जडवदवधूतवेषभाषाचरितैरविलक्षितभगवत्प्रभावो योगिनां सांपरायविधिमनुशिक्षयन्स्वकलेवरं जिहासुरात्मन्यात्मानमसंव्यवहितमनर्थांतरभावेनान्वीक्षमाण उपरतानुवृत्तिरुपरराम ॥ ६ ॥

जितानि दग्धानि कर्मबीजानि रागादीनि यैस्तेषां यदृच्छया प्राप्तानि योगैश्वर्याणि पुनः क्लेशदानि भवितुं नार्हंति अतः किमिति नाभ्यनंददित्यर्थः ॥ १ ॥ अंगीकृत्य परिहरति । सत्यमिति । एके बुद्धिमंतोऽनवस्थानस्य चंचलस्य मनसो विश्वासं न संगच्छंते न सम्यक् प्राप्नुवंति । शठः किरातो यथा धृतेष्वपि मृगेषु । शठे किराते यथा मृगा इति सप्तम्यंतं वा । पाठांतरे शठो वंचकः किरातो वणिग्व्यवहर्तरि यथा तस्मिन्वा व्यवहर्ता विश्वासं न यातीत्यर्थः । पाक्षिकोऽपि दोषो वर्जनीय इत्युपदेष्टुं नाभ्यनंददिति भावः ॥ २ ॥ तत्र हेतुः । यद्विश्रंभायस्य मनसो विश्वासाच्चिराच्चीर्णं बहुकालसंचितं तपश्चस्कंद सुस्राव । ऐश्वरं विष्णोर्मोहिनीरूपदर्शनेन । यद्वा । ईश्वराणां समर्थानामपि सौभरिप्रभृतीनां तपः ॥ ३ ॥ नित्यमिति । कृतविश्वासो यो योगी तदीयं मनः कामस्य तमनु येऽरयस्तेषां च छिद्रमवकाशं ददाति । यथा कृतविश्वासस्य पत्युः पुंश्चली जाया जाराणामवकाशं दत्त्वा पतिं घातयति तथा मनोऽपि कामादिभिर्योगिनं भ्रंशयतीत्यर्थः ॥ ४ ॥ अरीन्कथयन्नुपसंहरति । काम इति । यन्मूलो यन्निमित्तो भवति तन्मनः को नु बुधः स्वीकुर्यात्स्वाधीनमिति मन्येत ॥ ५ ॥ प्रासंगिकं समाप्य प्रस्तुतमाह । अथेति । अखिलानां

ऋषिः शुकः । पाठांतरे 'शठकिराट' इति पाठे । इत्यर्थ इति । उभयोः परस्परं स्वतुल्यभावनया विश्वासाभाव इति भावः । पाक्षिकोऽपि दोषो वर्जनीय इति दोषो भवति न वेति संदिह्यमानदोषोपीत्यर्थः । इति भाव इति । वस्तुतस्तु—किरातपदस्य साधकमात्रविषयत्वात्तानपि शिक्षयितुमिति तात्पर्यम् । अत्र विश्वनाथः—अर्द्धांगीकारेण परिहरति—सत्यमिति । क्लेशदानि न भवंत्येव तदपि एके सुधियः कुतः अनवस्थानस्य प्रतिक्षणमेव प्राप्तनानादशाकस्येत्यर्थः । तेन शुद्धमपि भूत्वाप्यशुद्धं भवितुं न तस्य विलंब इति भावः । शठे धूर्त्ते किराते नीचजातौ च धूर्त्तो यथा सौहार्दं प्रदर्श्य लुंठितुमेव विश्वसितारं हंति तथैव मनः खलु कामक्रोधाद्यनभिभवरूपां स्वशुद्धिं प्रदर्श्य स्वनिरोधे शिथिलप्रयत्नं साधकमेकस्मिन्दिने कामाद्यैराकस्मिकैस्तमधः पातयति यथा च नीचजातिर्मुहुरपि धर्ममध्यापितोऽपि साधुतां दधानोऽपि गृहकोशादिषु विश्वस्तस्तत्समये दुस्त्यजस्वभावप्राप्तं चौर्य्यमेव करोति तथैव मनः शमदमादिभिः शोधितमपि श्रवणमननादिष्वैश्वर्यं दधानमपि विश्वस्तं सदनिरुध्यमानं कस्मिंश्चित्क्षणे दुर्विषयेष्वपि निमज्जद्विवेकज्ञानादिकमपहरति ॥ २ ॥ यथा मनोविश्वासादनर्थो भवति तथा चोक्तं श्रीकृष्णमुनिना—नेति । ऐश्वरं शांभवम् । ननु श्रीशंकरेण तु स्वयं संप्रार्थ्य भगवदैश्वर्यं श्रीसतीं बोधयितुं तथा कृतं "यमामपृच्छस्त्वमुपेत्य योगात्" इत्याद्युक्तेरतः कथमुक्तं शांभवमिति तत्राह—यद्वेति । प्रभृतीत्युक्तेर्ऋष्यशृंगादिग्रहः ॥ ३ ॥ तं काममनु येऽरयः क्रोधलोभादयः । इत्यर्थ इति । अतो मनसो विश्वासो न कार्य इति भावः ॥ ४ ॥ आदिना मात्सर्यादिग्रहः ॥ ५ ॥ प्रासंगिकं प्रसंगप्राप्तम् । प्रस्तुतमाह प्रकृतमनुसरति । अथ कदाचिदर्थे । विलक्षितोऽलक्षितः देहत्यागानुकरणेनैव शिक्षयन्नित्यर्थः । तद्देहस्य चिन्मयत्वात् । वस्तुतस्तु—आत्मनि परमात्मनि स्वस्मिन्नात्मानं श्रीऋषभदेवा

तस्य ह वा एवं मुक्तलिंगस्य भगवत ऋषभस्य योगमायावासनया देह इमां जगतीमभिमानाभासेन संक्रममाणः कोंकवेंककुटकान्दक्षिणकर्नाटका न्देशान्यदृच्छयोपगतः कुटकाचलोपवन आस्यकृताश्मकवल उन्माद इव मुक्तमूर्धजोऽसंवीत एव विचचार ॥ ७ ॥ अथ समीरवेगविधूतवेणु विकर्षणजातोग्रदावानलस्तद्वनमालेलिहानः सह तेन ददाह ॥ ८ ॥ यस्य किलानुचरितमुपाकर्ण्य कोंकवेंककुटकानां राजाऽर्हन्नामोपशिक्ष्य कलावधर्म उत्कृष्यमाणे भवितव्येन विमोहितः स्वधर्मपथमकुतोभयमपहाय कुपथपाषंडमसमंजसं निजमनीषया मंदः संप्रवर्तयिष्यते ॥ ९ ॥

लोकपालानां ललामो मंडनभूतोऽप्युपरता बाधितानुवृत्तिर्यस्मात्स उपरराम देहाभिमानं जहौ । विलक्षणैरनेकप्रकारैरवधूतवेषादिभिः । न विलक्षितो भगवत्प्रभावो यस्मिन् । सांपरायविधिं देहत्यागप्रकारम् । आधाराधेयभावव्यावृत्त्यर्थमाह । अनर्थांतरभावेनाभेदेन । उपासनाव्यावृत्त्यर्थमाह । असंव्यवहितम् ॥ ६ ॥ मनसा स्वयंत्यक्तेऽप्यभिमाने केनापि संस्कारेण देहः प्रचलति यथा कुलालचक्रं सोऽयमभिमानाभासस्तेन । स च जीवन्मुक्तानामविद्यावासनया भवतीति ततो विशेषमाह । योगमायावासनयेति । कोंकादीन् देशान्गतः सन्कयापि वासनयाऽऽस्ये कृतोऽश्मकवलो येन । असंवीतो नग्नः ॥ ७ ॥ समीरवेगेन विधूतानां कंपितानां वेणूनां संघर्षणेन जात उग्रो दावानलः । आलेलिहानः सर्वतो ग्रसन् ॥ ८ ॥ अवधूतवेषेण ऋषभदेवस्तत्र गत इत्येतस्य सूचकमाह । यस्य किलाश्रमातीतमनुचरितं तद्देशवासिभ्य उपाकर्ण्य अर्हन्निति नाम यस्य स राजा स्वयं तदुपशिक्ष्य शिक्षित्वा कुपथश्चासौ पाषंडश्च तं निजमनीषया संप्रवर्तयिष्यत इत्यन्व

स्वयं शरीरमव्यवहितं मायाव्यवधानरहितमत एवानार्थांतरभावेनाभेदेनान्वीक्षमाणः प्रतिक्षणं पश्यन् । उपरतानुवृत्तिरवधूतत्वानुकरणं यस्य स उपरराम स्वावतारलीलातो विरराम । अत एव स्वकलेवरं जिहासुः स्वकलेवरे प्राकटयं त्यक्तुमिच्छुरिति वास्तवोर्थः ॥ ६ ॥ तस्य देहांतर्द्धानप्रकारमाह—तस्येति । भगवतोऽपि मुक्तलिंगस्य त्यक्तभगवच्चित्तस्य मुक्तानामिव लिंगं यस्येति वा । यथा योगिनां केनापि संस्कारेण देहः प्रचलति निष्पन्नघटमपि कुलालचक्रमिव सोयमभिमानाभासः स च जीवन्मुक्तानामविद्याभासवासनया भवतीति ततो विशेषमाह—योगमायावासनया अवधूतलीलेच्छासंस्कारेण । यथातिबालको यद्यत्प्राप्नोति तदपि स्वमुखे निःक्षिपति तथैवास्ये कृतोऽश्मनः पाषाणस्य कवलो ग्रासो येन स तथा । नान्यद्वोक्तव्यं वक्तव्यं वा किञ्चिदित्यभिप्रायाभासेनेति संदर्भः । नागपुरतः पूर्वतो नदीतटे कुटकाचलोस्ति तस्योपवने उन्माद इवोन्मत्तो यथा चेष्टते तथा ॥ ७ ॥ तेन सह श्रीऋषभदेवसहित एव दावानलस्तद्वनं ददाह तथा च तद्वनवर्त्तितरुमृगादीनां स्थूलं देहं दावानलो ददाह सूक्ष्मं तु देहं श्रीऋषभ इति तद्वनवर्त्तिनः सर्वे तत्प्रसादान्मुक्ता बभूवुः "यैः संस्पृष्टोऽभिदृष्टो वा संविष्टोनुगतोऽपि वा । कोशलास्ते ययुः स्थानं यत्र गच्छंति योगिनः ॥" इतिवत् । ततोऽनलसाधर्म्यमुक्त्वा तद्वदंतर्द्धानमेव तस्येति व्यंजितमत एव तस्य तृतीयेध्याये आविर्भाव एवोक्तो न तु जन्मेति ॥ ८ ॥ अस्यावतारलीलाश्रवणकीर्त्तनादिभिरेव कलिकालवर्त्तिनः पराग्दर्शिनो जीवाः कृतार्था भवंति न त्वाचरितानुष्ठानेन कलौ प्रायः प्रत्यग्दर्शनासंभवात् । श्रद्धयाऽपि तदीयकेवलबाह्याचरणनिष्ठा भ्रष्टा एव भवंतीत्याह—यस्येति । अर्हन्नामा कलौ जनिष्यमाणो लोकशास्त्रद्वारा श्रीऋषभदेवोत्कर्षं श्रुत्वा तादृशाचरणेन वयमपि तादृशा भवामेति मत्वा तदीयचेष्टामुपशिक्ष्याधिक्येन शिक्षित्वा भवितव्येन तादृशदुरदृष्टेन

येन ह वाव कलौ मनुजापसदा देवमायामोहिताः स्वविधिनियोगशौचचारित्रविहीना देवहेलनान्यपव्रतानि निजनिजेच्छया गृह्णाना अस्ना नाचमनाशौचकेशोल्लुंचनादीनि कलिनाऽधर्मबहुलेनोपहतधियो ब्रह्मब्राह्मणयज्ञपुरुषलोकविदूषकाः प्रायेण भविष्यंति ॥ १० ॥ ते च ह्यर्वाक्तनया निजलोकयात्रयांधपरंपरयाश्वस्तास्तमस्यंधे स्वयमेव प्रपतिष्यंति ॥ ११ ॥ अयमवतारो रजसोपप्लुतकैवल्योपशिक्षणार्थः ॥ तस्यानुगुणाञ्श्लोकान्गायंति ॥ १२ ॥ अहो भुवः सप्तसमुद्रवत्या द्वीपेषु वर्षेष्वधिपुण्यमेतत् ॥ गायंति यत्रत्यजना मुरारेः कर्माणि भद्राण्यवतारवं ति ॥ १३ ॥ अहो नु वंशो यशसाऽवदातः प्रैयव्रतो यत्र पुमान्पुराणः ॥ कृतावतारः पुरुषः स आद्यश्चचार धर्मं यदकर्महेतुम् ॥ १४ ॥

यः । तत्र हेतुः कलावित्यादि । भवितव्येन प्राणिपूर्वसंचितपापफलेन ॥ ९ ॥ येन प्रवर्तकेन मनुजेष्वपसदा निकृष्टाः स्वविधिना नियोगो यस्मिन् शौचचारित्रे तद्विहीना देवावज्ञारूपाण्यस्नानादीनि कुव्रतानि गृह्णाना वेदादीनां विदूषका भविष्यंति ॥ १० ॥ तत्फलं चांधं तमः प्राप्स्यंतीत्याह । ते चेति । अर्वाक्तनया अवेदमूलया । निजलो कयात्रया स्वेच्छाकृतप्रवृत्त्या आश्वस्ताः कृतविश्वासाः ॥ ११ ॥ ननु तर्ह्यनर्थकारी किमर्थोऽयमृषभावतारस्तत्राह। अयमिति । रजोव्याप्तानां जनानां मोक्षमार्गोपशिक्षणा र्थः । तस्य कैवल्योपशिक्षणस्यानुरूपान् ॥ १२ ॥ अधि अधिकं पुण्यं यस्मिन् । एतद्भारतं वर्षम् । ऋषभाद्यवतारयुक्तानि कर्माणि ॥ १३ ॥ प्रियव्रतस्य वंशः अवदातः

यदवश्यभवितव्यं तेनेति विश्वनाथः । संदर्भस्तु—तदेवं सर्वहितमपि तच्चरितं वैदिकवेदाद्यपराधसंस्कारवतां त्वन्यथैव भातमित्याह—यस्येति । अन्येषां तु रजसोपरक्तानामपि तद्द्वयश्रवणेनान्वयव्यतिरेकाभ्यां हितायैव जायते तदित्याह-मंदः कुमनीषी। असमंजसमयोग्यं वेददूषकत्वा त्॥९॥स्वविधिना स्वकल्पितेन विधिना नियोगः कुव्रतादीनां यस्मिन्ग्रंथे स स्वविधिनियोगस्तेन हेतुना शौचादिहीनाः।स्वामिचरणैस्तु-स्वविधिना वेदविधिना नियोग आज्ञा शौचस्य जलमृदादिना दैहिकमलापकर्षणस्य चारित्रे करणे 'मृज्जलाभ्यां देहं मृज्यात्' इत्यादिविधिना विहिते 'मलवद्वाससा न संवदेत्' इत्यादिनिषेधेन च निषिद्धेऽपि तद्रहिता इत्यभिप्रायेण व्याख्यातं स्नानादि विना देवपूजानधिकारात् । कुव्रतानि निंदिताचरणानि। आदिना दंतधावनादित्यागादेर्ग्रहः—कुव्रतत्वं चास्नानादेः "अस्नाताशी मलं भुंक्ते ह्यजापी पूयशोणितम्" इत्यादिस्मृत्योक्तमवधेयम् । प्रायेणेत्युक्तेः केचिन्निंदादिशून्या अपि स्वदृष्टवशाद्भविष्यन्तीत्यर्थः ॥ १० ॥ अंधे तमस्यंधतामिस्रे नरके ॥ ११ ॥ अत्राक्षिपति—नन्विति । अनर्थकारी तदाचरणश्रवणप्रवृत्तजननरकहेतुत्वात् । किञ्च—श्रीऋषभदेवाचरणं तु तत्समकालीनै रेवानुवर्त्तितव्यमित्याह—अयमिति । रजसा गुणेनोपप्लुतं कालेन विनष्टीकृतं यत्कैवल्यं ज्ञानयोगस्तस्योपशिक्षणार्थः । अर्थांतरं तु स्वामिभिरुक्तमेव तेन सत्यादियुगत्रये तच्चरितमनुवर्त्तितव्यं कलौ तु तत्कथैव श्रोतव्येति व्यवस्थितिरिति विश्वनाथः । अत्र प्रमाणं च श्रीदशमे वक्ष्यति "ईश्वराणां वचः सत्यं तथैवाचरणं क्वचित् । कुशलाचरितेनैषामिह स्वार्थो न विद्यते॥ विपर्ययेण वानर्थः" इति । किञ्च—"तेषां यत्स्ववचोयुक्तं बुद्धिमांस्तत्तदाचरे त्" इति च ॥ १२ ॥ अवतारा विद्यंते वर्ण्यत्वेन येषु तानि । अहो इत्यानंदे ॥ १३ ॥ वंशेष्वपि प्रियव्रतवंशो धन्य इत्याह । यत्र पुराणः पुमान् पुरुषः कृतावतारोऽभूदिति शेषः । किं तेन कृतमिति चेत्तत्राह—स आद्यः सर्वकारणीभूतो विष्णुः पुरुषो मनुष्यमूर्त्तिः तन् यद्यतो मोक्षहेतुं धर्मं पारमहंस्यं धर्मं चचारातो हेतोर्यशसावदात इत्यन्वयः । "नाभेरसावृषभ आस सुदेविसूनुर्यो वै चचार समदृग्जडयोगचर्याम् । यत्पारमहंस्यमृषयः

को न्वस्य काष्ठामपरोऽनुगच्छेन्मनोरथेनाप्यभवस्य योगी ॥ यो योगमायाः स्पृहयत्युदस्ता ह्यसत्तया येन कृतप्रयत्नाः ॥ १९ ॥ इति ह स्म सकलवेदलोकदेवब्राह्मणगवां परमगुरोर्भगवत ऋषभाख्यस्य विशुद्धाचरितमीरितं पुंसां समस्तदुश्चरिताभिहरणं परममहामंगलायनमिदमनुश्रद्धयोपचितयाऽनुशृणोत्याश्रावयति वाऽवहितो भगवति तस्मिन्वासुदेव एकांततो भक्तिरनयोरपि समनुवर्तते ॥ १६ ॥ यस्यामेव कवय आत्मानमविरतं विविधवृजिनसंसारपरितापोपतप्यमानमनुसवनं स्नापयंतस्तयैव परया निर्वृत्या ह्यपवर्गमात्यंतिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियंते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः ॥ १७ ॥

शुद्धः । यत्र वंशे । यद्यस्मात् । अकर्म मोक्षस्तस्य हेतुं धर्मं चचार ॥ १४ ॥ अपरः को नु योगी अस्य काष्ठां दिशमप्यनुगच्छेत् । यो योगी येन ऋषभेणासत्तयाऽवस्तुत्वेनोदस्ता निरस्ता योगमायाः सिद्धीर्वांछति । कथंभूताः । कृतः प्रयत्नो यासु तदर्थं प्रयत्नं च करोतीत्यर्थः । यद्वा कथंभूताः उदस्ताः कृतप्रयत्नाः सेवितुमुद्यता अपीत्यर्थः ॥ १५ ॥ विशुद्धाचारितं यदीरितं कथितं तत्समस्तं दुश्चरितमभितो हरतीति तथा परममहामंगलानामयनं च । अवहितः सन् । अनयोरपि श्रोतृश्रावयित्रोरविशेषेण भक्तिः सम्यगनुवृत्ता भवतीत्यर्थः ॥ १६ ॥ भक्तेः परमपुरुषार्थत्वमाह । यस्यां भक्तावेव न तु योगादिषु । अनुसवनमविरतमात्मानं स्नापयंतः । स्वयमासादितमप्रार्थितं भगवता स्वयमेव दीयमानमपि । अनादरे हेतुः । भगवदीयत्वेनैव परितः समाप्ताः सम्यक् प्राप्ताः सर्वे पुरुषार्थाः यैस्ते ॥ १७ ॥

पदमामनंति स्वस्थः प्रशांतकरणः परिमुक्तसंगः'' इति नारदं प्रति ब्रह्मोक्तेः। संदर्भस्तु स्वतः पुराणः पुमानेव यत्र कृतावतारेपि नान्यथात्वं प्राप्तः किन्तु स आद्यः पुरुष एव यत्राकर्महेतुं कर्माभावकारणं धर्मं चचारेत्यर्थः। यद्यप्येवं ज्ञानपर्यवसानं तच्चरितं तथापि तत्पराणां भक्तय एव पर्यवस्यति तथा स्वभावत्वादित्याह ॥ १४ ॥ योगिष्वपि मध्ये श्रीऋषभदेव एव धन्य इत्याह । मनोरथेनापि किमु कर्मणा अस्य कीदृशस्याभवस्य नास्ति भवो यस्मात्तस्य । इत्यर्थ इति । लोकख्यात्यर्थं सिद्धिषु प्राकृता योगिन एव सयत्ना भवंति न तु विज्ञास्तासां भगवत्प्राप्तावंतरायत्वात्तदुक्तमेकादशे श्रीकृष्णेनोद्धवं प्रति—''अन्तरायान्वदंत्येता युंजतो योगमुत्तमम्'' इत्यादिना चतुर्दशेऽध्याये । नन्ववाञ्छितास्ताः कथं प्राप्ता इति चेन्मुख्यस्वाधारतयेत्यभिप्रायेणाह—यद्वेति । इत्यर्थ इति । श्रीऋषभदेवोऽस्मान्स्वीकरोत्विति भावः ॥ १९ ॥ किं च—सत्यादियुगवर्त्तिभ्यो योगिभ्यस्तच्छिक्षितयोगानुष्ठातृभ्योपि सकाशात्कलियुगवर्त्तिनो जनास्तल्लीलाश्रवणकीर्त्तनवंतोऽधिकफलभाजो भवंतीत्याह—इति हेति हस्मेति निपाती श्रद्धातिशयजननार्थौ । न केवलं रामाद्यवतारवद्दुष्टभंजन एवायमवतारोऽपि तु व्यासाद्यवतारवज्ज्ञानस्योपदेष्टेति ज्ञापनाय परमगुरोरिति । विशुद्धमाचरितं च ईरितं 'नायं देहो देहभाजां नृलोके' इत्याद्युपदेशवाक्यं च विशुद्धमित्युक्तेरर्हता राज्ञाऽभिप्रायापरिज्ञानाद्विपरीतमेव गृहीतं न तेन तच्चरितेऽशुद्धा शंका कार्येति । अत एवोक्तं 'समस्तदुश्चरितापहरणम्' इति । यद्वा—विशुद्धाचरितेनर्थः । इत्यर्थ इति । अपिकारात्स्मर्त्तुरनुमोदितुरपीति भावः ॥ १६ ॥ भगवत इमे भगवदीयास्तेषां भावस्तत्त्वं तेन भगवदीया वयं न ह्यस्माकं किंचिदपेक्षितमस्ति सर्वगुरुणा ब्रह्मणापि ''येनाहमेकोऽपि भवज्जनानां भूत्वा निषेवे तव पादपल्लवम्'' इत्युक्तेर्भगवदीयत्वस्य प्रार्थितत्वान्न तु प्राप्तद्वयं तु तत्प्राप्ता अहो कृतार्था वयमिति भावः ॥ १७ ॥

राजन्पीतर्गुरुरलं भवतां यदूनां दैवं प्रियः कुलपतिः क्व च किंकरो वः ॥ अस्त्वेवमंग भगवान्भजतां मुकुंदो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् ॥ १८ ॥ नित्यानुभूतनिजलाभनिवृत्ततृष्णः श्रेयस्यतद्रचनया चिरसुप्तबुद्धेः ॥ लोकस्य यः करुणयाऽभयमात्मलोकमाख्यान्नमो भगवते ऋषभाय तस्मै ॥ १९ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे ऋषभदेवानुचरितवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ श्रीशुक उवाच ॥ भरतस्तु महाभागवतो यदा भगवताऽवनितलपरिपालनाय संचिंतितः तदनुशासनपरः पंचजनीं विश्वरूपदुहितरमुपयेमे ॥१॥ तस्यामु ह वा आत्मजान्कात्स्न्येंनानुरूपानात्मनः पंच जनयामास भूतादिरिव भूतसूक्ष्माणि ॥ २ ॥

ननु भगवतोऽतिसुलभत्वदर्शनान्मोक्षस्य चातिदुर्लभत्वादियमतिस्तुतिरेवेत्याशंक्याह । हे राजन् भवतां पांडवानां यदूनां च पतिः पालकः । गुरुरुपदेष्टा । दैवमुपास्यः । प्रियः सुहृत् । कुलस्य पतिर्नियंता । किं बहुना । क्व च कदाचिद्दौत्यादिषु वः पांडवानां किंकरोऽप्याज्ञानुवर्ती । अस्तु नामैवं तथाऽप्यन्येषां नित्यं भजतामपि मुक्तिं ददाति न तु कदाचिदपि सप्रेमभक्तियोगम् ॥ १८ ॥ वर्णितमृषभावतारं नमस्करोति । नित्यमनुभूतं यन्निजं रूपं स एव लाभस्तेन निवृत्ता तृष्णा यस्य सः अतद्रचनया देहाद्यर्थमनोरथेन श्रेयसि विषये चिरं सुप्ता बुद्धिर्यस्य तस्य जनस्य करुणया निर्भयमात्मस्वरूपं य आख्यातवांस्तस्मै नमः ॥ १९ ॥ इति पंचमस्कंधे टीकायां षष्ठोध्यायः ॥ ६ ॥ अध्यायानां त्रयेणैवमृषभाख्यानमीरितम् ॥ अष्टभिर्भरताख्यानमतः प्रस्तूयतेऽमृतम् ॥ १ ॥ सप्तमे भरतो राज्ये चिरं यज्ञैर्हरिं यजन् ॥ आरब्धकर्मनिर्वाणे हरिक्षेत्रेऽभजद्धरिम् ॥ २ ॥ संचिंतितः संकल्पेनैव राज्यादौ नियुक्तः ॥ १ ॥ आत्मनोनुरूपान् । भूतादिरहंकार इव भूतसूक्ष्माणीति संततिवृद्धौ दृष्टांतः ॥ २ ॥

इयं मोक्षानादरेण भक्त्यादरणरूपा । हे राजन्निति।त्वं तु मातरं द्वारीकृत्य तद्भक्त्यैव लब्धांगत्वाद्राजसे कथं तव भक्तावनुत्कर्षधीरिति भावः।अत्र विश्वनाथः—धन्योऽयं प्रियव्रतवंशो यत्र भगवानृषभदेवोऽवतीर्णः । उत्तानपादवंशोऽपि धन्यो यत्र पृथुः । रघुवंशोऽपि धन्यो यत्र रामः । यदुवंशपुरुवंशयोरेककालिकयोरपि मध्ये यदुवंश एव सुभगो यत्र कृष्णः अस्मदीयः । पुरुवंशस्तु सर्वतोपि दुर्भगो यत्र भगवान्नावततारेति मनोनुतापेन विषीदंतं राजानं सर्वज्ञतयैव ज्ञात्वा मोक्षाद्भक्तेरुत्कर्षेण प्रतिपादितेनैव तमानंदयति । हे राजन्निति।भवतां पांडवानां यदूनां च पतिः पालकः इत्यादिभिः यदुष्ववतरतोपि कृष्णस्य तेषु भवत्सु च तुल्य एव व्यवहारो दृष्टः।किं च-क्व च कदाचित् वः पांडवानां दूत्यादिषु किंकरः। न च तथा यदूनामिति । यदुभ्योऽपि प्रेमवत्त्वेन भवतामाधिक्यमेवेति भावः । भवद्भयोऽभजद्भयोपि परमप्रेमाधिक्यदानस्य वार्त्ता कियती वक्तव्या सा सर्वोपरि विराजिता अन्येभ्यो भजद्भयोऽपि भक्तियोगं भावभाक्तिमपि प्रायो न ददाति ।किं तु ततोऽपि ।निकृष्टां मुक्तिमेवेत्याह-अस्त्वेवमिति।अत्र कर्हिंचिदपीत्युक्तेर्मुक्तिमनिच्छद्भयः शुद्धभक्तेभ्यस्तु भक्तिमेव ददातीत्यर्थो लभ्यते।केचित्तु—भक्तिदाने भगवतः कैंकर्य्यादिप्रसक्तेरुग्रसेनयुधिष्ठिरादिषु तथा दर्शनात्तां न ददातीत्याहुः॥१८॥यद्वा आत्मलोकं वैकुंठमभयं'न मत्पराः शांतरूपे नंक्ष्यंति' इत्यादिश्रीकपिलोक्तेः।कालभयहीनं करुणयोपदिष्टेन भक्तियोगेन चाख्यातवांस्तस्मै॥१९॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे षष्ठोऽध्यायः ॥६॥ अतः परम् मृतवत्स्वादु (१) आरब्धकर्मणां निर्वाणः समाप्तिर्यत्र तस्मिन् संकल्पेनैव भगवत्सिद्धसंकल्पत्वाद्बाह्यानियोगादिकं नास्तीत्यर्थः ॥१॥ २ ॥

सुमतिं राष्ट्रभृतं सुदर्शनमावरणं धूम्रकेतुमिति ॥ अजनाभं नामैतद्वर्षं भारतमिति यत आरभ्य व्यपदिशंति ॥ ३ ॥ स बहुविन्महीपतिः पितृपितामहवदुरुवत्सलतया स्वेस्वे कर्मणि वर्तमानाः प्रजाः स्वधर्ममनुवर्तमानः पर्यपालयत् ॥ ४ ॥ ईजे च भगवंतं यज्ञक्रतुरूपं क्रतुभिरुच्चावचैः श्रद्धयाहृताग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुसोमानां प्रकृतिविकृतिभिरनुसवनं चातुर्होत्रविधिना ॥ ५ ॥ संप्रचरत्सु नानायागेषु विरचितांगक्रियेष्वपूर्वं यत्तत्क्रियाफलं धर्माख्यं परे ब्रह्मणि यज्ञपुरुषे सर्वदेवतालिंगानां मंत्राणामर्थनियामकतया साक्षात्कर्तरि परदेवतायां भगवति वासुदेव एव भावयमान आत्मनैपुण्यमृदितकषायो हविःष्वध्वर्युभिर्गृह्यमाणेषु स यजमानो यज्ञभाजो देवांस्तान्पुरुषावयवेष्वभ्यध्यायत् ॥ ६ ॥

भारतमिति स्वनामख्यापकत्वेन धर्माद्यतिशयः सूचितः ॥ ३ ॥ बहुवित्सर्वज्ञः ॥ ४ ॥ यज्ञा अयूपाः क्रतवः सयूपास्तद्रूपम् । उच्चावचैर्महद्भिरल्पैश्च क्रतुभिः कर्मभिः श्रद्धया ईजे च । तानेवाह । आहृताः स्वाधिकारेणात्मसात्कृता येऽग्निहोत्रादयस्तेषां प्रकृतिविकृतिभिः । अग्निहोत्रादयो द्विविधाः सकलांगयुक्ताः प्रकृतयः विकलांगा विकृतय इति तैर्द्विविधैरपीष्टवानित्यर्थः । अनुसवनमित्यंतं वा चातुर्होत्रविधिनेत्यंतं वा गद्यम् ॥ ५ ॥ किं च संप्रचरत्सु प्रवर्तमानेषु नानायागेषु विरचितानुष्ठितांगाक्रिया येषां तेषु यदपूर्वं तद्वासुदेव एव भावयमानश्चिंतयन्स यजमानो यज्ञभाजो ये देवाः सूर्यादयस्तान्पुरुषस्य वासुदेवस्यावयवेषु चक्षुरादिष्वभ्यध्यायन्न तु पृथक्त्वेनेत्यन्वयः । अपूर्वं पक्षद्वयं मीमांसकानाम् । तदानीमेव सूक्ष्मत्वेनोत्पन्नं फलमेवापूर्वं कालांतरफलोत्पादिका कर्मशक्तिर्वेति । तदुक्तं—"यागादेव फलं तद्धि शक्तिद्वारेण सिद्ध्यति । सूक्ष्मं शक्त्यात्मकं वाऽपि फलमेवोपजायते" इति । तदेवाह । क्रियाफलं धर्माख्यमिति च । ननु यद्यंगं देवताः कर्म प्रधानमिति मतं तर्हि कर्तृनिष्ठमपूर्वं स्यात् । तदुक्तम् । "कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा । योग्यता शास्त्रगम्या या परा सापूर्वमिष्यते" इति । अथ देवताप्रधानं कर्म तु देवताराधनार्थं तदा देवताप्रसादरूपत्वादपूर्वस्य देवताश्रयत्वमेव युक्तं प्रोक्षणाद्यपूर्वस्येव व्रीह्याद्याश्रयत्वम् । कुतो वा वासुदेवाश्रयमपूर्वं भावयति । उच्यते । यदि कर्तृनिष्ठमपूर्वं तर्हि वासुदेवस्यांतर्यामिणः प्रवर्तकत्वेन मुख्यकर्तृत्वात्तदाश्रयमेवापूर्वं न तु तत्प्रयोज्ययजमानाश्रयम् । 'शास्त्रफलं प्रयोक्तरि' इति न्यायात् । अन्यथा ऋत्विजामप्यपूर्वाश्रयत्वप्रसंगात् । तदेवाह । साक्षात्कर्त

अजस्य ऋषभदेवस्य नाभेश्चैतद्वर्षस्वामित्वादजनाभं नाभिश्चाजश्चेत्यजनाभी अभ्यर्हितत्वात्स्वराद्यदंतत्वाच्चाजपदस्य पूर्वनिपातः । तयोरिदमजनाभं संज्ञापूर्वकविधेरनित्यत्वाद्वृद्ध्यभावः । भारतस्वामिकत्वात् ॥ ३ ॥ ४ ॥ इत्यर्थ इति । अनुसवनमवसरेऽवसरे "काले यज्ञेऽभ्यनुज्ञाने स्नानपीडनयोरपि । सवनं त्रिषु चोत्पत्तौ" इति निरुक्तिः । सर्वथा समर्थत्वादुभयविधयागांश्चकारेति भावः ॥ ५ ॥ ननु "तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥" इति भगवदुक्तेर्भगवत्कथादिषु प्रौढश्रद्धस्य निष्कामस्य शुद्धभक्त्यधिकारिणो भरतस्य कर्मकर्तृत्वं कर्मफलभोक्तृत्वं च कथं संगच्छतामित्यत आह—किं चैति । संप्रचरत्स्विति । चिंतयन् अस्य कर्मणो यत्फलं भावि तत्र न मे लिप्सा किन्तु तद्वासुदेवप्रीत्यर्थं वासुदेवायैव समर्पितमिति तत्र न मे स्वत्वमिति चिंतयन्नित्यर्थः । तदुक्तं पूर्वे

**एवंकर्मविशुद्ध्या विशुद्धसत्त्वस्यातर्हृदयाकाशशरीरे ब्रह्मणि भगवति वासुदेवे महापुरुषरूपोपलक्षणे श्रीवत्सकौस्तुभवनमालाऽरिदरगदादिभिरुपलक्षिते निजपुरुषहृल्लिखितेनात्मनि पुरुषरूपेण विरोचमान उच्चैस्तरां भक्तिरनुदिनमेधमानरयाऽजायत ॥ ७ ॥**

रीति । देवताश्रयत्वेऽपि वासुदेवाश्रयत्वमेवेत्याह । परदेवतायामिति । परदेवतात्वे हेतुः । सर्वदेवतालिंगानां तत्तद्देवताप्रकाशकानां मंत्राणां येऽर्था इंद्रादिदेवतास्तेषां नियामकतया तस्यैव प्रसादनीयत्वात्फलदातृत्वाच्च युक्तमेवापूर्वाश्रयत्वमित्यर्थः । एवं भावनमेवात्मनो नैपुण्यं कौशलं तेन मृदिताः क्षीणा कषाया रागादयो यस्य । अध्वर्युभिरिति बहुवचनं नानाकर्माभिप्रायेण ॥ ६ ॥ एवंभूतया कर्मविशुद्ध्या विशुद्धसत्त्वस्य भक्तिरजायतेत्यन्वयः । क्व । अंतर्हृदये य आकाशः स एव शरीरमभिव्यक्तिस्थानं यस्य तस्मिन्ब्रह्मणि । कीदृशे । महापुरुषरूपस्योपलक्षणमाकारो यस्य तस्मिन् । किं च श्रीवत्सादिभिरुपलक्षिते । निजपुरुषाणां नारदादीनां हृदि लिखितवन्निश्चलतया स्थितेनोक्तेन पुरुषरूपेणा

मीमांसायां क्रियाफलं सूक्ष्मरूपेणोत्पन्नं फलमित्यर्थः । धर्माख्यमिति च कालांतरे फलजनकशक्त्यात्मकमदृष्टशब्दवाच्यमित्यर्थः । अत्राशंकते—नन्विति । अत्र प्रमाणमाह—तदुक्तमिति । पक्षांतरमाह—अथेति । शास्त्रफलं शास्त्रेणोक्तं फलं प्रयोक्तरि प्रयोजककर्त्तरीति सूत्रार्थः । अन्यथैतदनंगीकारे । इत्यर्थ इति । वासुदेवस्यैव मुख्यकर्तृत्वात्सर्वदेवरूपत्वाच्चापूर्वाश्रयत्वमुचितमेति भावः । अत्र विश्वनाथः—कर्मकर्तृप्रधानं देवताप्रधानं वेति पक्षद्वयं मीमांसकानामस्ति । तत्राद्यपक्षे कर्तृनिष्ठमपूर्वं द्वितीये कर्मणो देवताराधनार्थत्वाद्देवतानिष्ठं तत्र भरतस्य निष्कामत्वादपूर्वस्य देवतानिष्ठत्वे एव युक्ते देवतानां चंद्रसूर्यादीनां बाहुल्यात्कथमेकस्मिन्वासुदेव एव कर्मफलभावनेत्यत आह—सर्वदेवतालिंगानां तत्तद्देवताप्रकाशकानां मंत्राणां येऽर्था इंद्रादिदेवतास्तेषां नियामकतया यज्ञपुरुषे यज्ञभोक्तरीत्यर्थः । नन्वेवं भरतस्य मास्तु भोक्तृत्वं कर्मकर्तृत्वं तु तस्य दुर्वारमित्यत आह—साक्षात्कर्त्तरि वासुदेवस्यैवांतर्यामिणः प्रवर्तकत्वेन स्वतंत्रकर्तृत्त्वात्साक्षात्कर्तृत्वं न तु तत्प्रयोज्यस्य यजमानस्यास्वतंत्रस्यान्यथार्त्विजामपि साक्षात्कर्तृत्वप्रसंगात् ''यज्ञभुग्यज्ञकृद्यज्ञः'' इति तन्नामस्मृतेश्च तस्य स्वतंत्रकर्तृत्वेप्यज्ञानादहं करोमीति स्वस्य स्वतंत्रकर्तृत्वमननमेव कर्तृत्वगमकं बंधकारणं च ज्ञेयम् । आत्मनैपुण्यमेवंभावनमेव तेन मृदिताः क्षीणाः कषायाः कर्मकरणवासनात्मिका येन सः । अध्वर्युभिरित्यनेन तथाविधानां भक्तानां कर्तृत्वाद्यभिमानशून्यानां कर्मफलत्यागिनां स्वप्रतिमूर्त्तिद्वारा कर्मकरणमपि श्रद्धाराहित्यात्कर्माकरणमेव ज्ञेयमिति ज्ञेयं द्योतितम् ''अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् । असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह॥'' इति भगवद्गीतोक्तेः । अत एवांबरीषादीनां श्रद्धया भगवद्भक्त्यैव यापिताऽष्टयामानामपि पितृपैतामहसदाचारपरंपराप्राप्तयज्ञादिकर्माचरणं प्रतिनिधिद्वारैव श्रूयतेऽर्वाचीनानामपि प्राच्यादिदेशवर्त्तिनां सुप्रतिष्ठानां गृहस्थमहाभागवतानां विवाहोपनयनादावपि सर्वथैव वर्णधर्माभावे लौकिकादपि सांकर्यदोषाद्बिभ्यतां प्रतिनिधिद्वारैव कर्मकरणं दृश्यते च अत एव 'स कर्माणि कुर्वीत' इत्यात्मनेपदप्रयोगादण्यंतनिर्देशाच्चानात्मगामिकफलत्वे सति प्रतिनिधिद्वारा कर्मकरणमपि शुद्धसत्त्वभक्तानां न दूषणं तथैव शुद्धभक्तिलक्षणेप्यन्याभिलषिताशून्यमितिवज्ज्ञानकर्मादिशून्यमित्यनुक्त्वा ज्ञानकर्माद्यनावृतमित्यनावृतपदोपन्यासात् प्रतिनिधिद्वारा कर्मकरणेऽपि स्वीयेंद्रियैः प्रतिक्षणश्रवणादिभक्त्यवकाशप्राप्त्या भक्तेः कर्मानावृतत्वाच्छुद्धत्वमेवेति केचिद्व्याचक्षते । नन्वेवंभूतत्वेन भरतस्य मास्तु कर्मकरणे दोषः । यज्ञानां भगवतोऽवयवेषु बाह्वादिषु अभ्यध्यायत् इंद्रायस्वाहेत्युक्तेर्मत्प्रभोर्बाहुपूजेयं सूर्याय स्वाहेत्युक्तेर्लोचनपूजेयमिति भावयामास । पृथक्पृथग्देवतात्वेन पूजा ह्यनन्यताविघातिनी न तु तदंगत्वेनेति ॥ ६ ॥ एवं कर्मकर्तुरन्तःकरणं विशेषतः शुद्ध्यतीत्याह—एवमिति । अक्लिष्टबुद्ध्या भरतं भजध्वमिति भगवद्वाक्यादेवोत्पत्तित एव शुद्धांतःकरणस्य तस्य पिष्टपेषणन्यायेनैवं कर्मविशुद्ध्यापि शुद्धांतःकरणस्य । यद्वा—एवमनेन प्रकारेण कर्मणो विशुद्धिर्यस्मिन्स चासौ विशुद्धसत्त्वश्चेति तस्य भक्तिरौत्पत्तिक्येव प्रतिदिनमुच्चैस्तरां वर्द्धमानवेगा गंगेव भुवनपावन्य जायतेति योज्यम् । क्व वासुदेवे वसुदेवनंदने कृष्णे य एव परमात्मब्रह्मभगवच्छब्दैरुपासनाभेदेनोच्यते इत्याह—अंतर्हृदयाकाशे शरीरं योगिभिर्ध्येयं यस्य तस्मिन्परमात्मनीत्यर्थः । ''केचित्स्वदेहांतर्हृदयावकाशे प्रादेशमात्रं पुरुषं वसंतम् । चतुर्भुजम् '' इत्यादिना परमात्मनोपि साकारत्वश्रवणात् । तथा ब्रह्मणि ज्ञानिभिरुपास्ये भगवति भक्तैरुपास्ये वसुदेवपुत्रत्वेऽपि महापुरुषस्य वैकुंठनाथस्य यद्रूपं शास्त्रेषु प्रसिद्धं तदुपाधिक्येन लक्ष्यते दृश्यते

एवं वर्षायुतसहस्रपर्यंतावसितकर्मनिर्वाणावसरोऽधिभुज्यमानं स्वतनयेभ्यो रिक्थं पितृपैतामहं यथादायं विभज्य स्वयं सकलसंपन्निकेतात्स्वनिकेतात्पुलहाश्रमं प्रवव्राज ॥८॥ यत्र ह वाव भगवान्हरिरद्यापि तत्रत्यानां निजजनानां वात्सल्येन सन्निधाप्यत इच्छारूपेण ॥९॥ यत्राश्रमपदान्युभयतोनाभिभिर्दृषच्चक्रैश्चक्रनदी नाम सरित्प्रवरा सर्वतः पवित्रीकरोति ॥ १० ॥ तस्मिन् वाव किल स एकलः पुलहाश्रमोपवने विविधकुसुमकिसलयतुलसिकांबुभिः कंदमूलफलोपहारैश्च समीहमानो भगवत आराधनं विविक्त उपरतविषयाभिलाष उपभृतोपशमः परां निर्वृतिमवाप ॥ ११ ॥ तयेत्थमविरतपुरुषपरिचर्यया भगवति प्रवर्धमानानुरागभरद्रुतहृदयशैथिल्यः प्रहर्षवेगेनात्मन्युद्भिद्यमानरोमपुलककुलक औत्कंठ्यप्रवृत्तप्रणयबाष्पनिरुद्धावलोकनयन एवं निजरमणारुणचरणारविंदानुध्यानपरिचितभक्तियोगेन परिप्लुतपरमाह्लादगंभीरहृदयह्रदावगाढधिषणस्तामपि क्रियमाणां भगवत्सपर्यां न सस्मार ॥ १२ ॥ इत्थं धृतभगवद्व्रत ऐणेयाजिनवाससाऽनुसवनाभिषेकार्द्रकपिशकुटिलजटाकलापेन च विरोचमानः सूर्यर्चा भगवंतं हिरण्मयं पुरुषमुज्जिहाने सूर्यमंडलेऽभ्युपतिष्ठन्नेतदु होवाच ॥ १३ ॥

त्मनि स्वमनसि विरोचमाने । कीदृशी भक्तिः । अत्यंतातिशयेनैधमानो रयो वेगः प्रकर्षो यस्याः॥ ७॥एवमनुवृत्त्या वर्षाणामयुतानि तेषां सहस्रं तत्पर्यंतकालेऽवसितो निश्चितः कर्मनिर्वाणावसरो राज्यभोगादृष्टसमाप्तिसमयो येन सः । अधिकृत्य भुज्यमानं रिक्थं धनं यथाविभागं विभज्य सकलसंपदां निकेतादाश्रयात्स्वगृहात्पुलहाश्रमं हरिक्षेत्रं प्रवव्राज ॥ ८ ॥ यत्र क्षेत्रे विद्याधरकुंडे वात्सल्यं कर्तृ तेन सन्निहितः क्रियते । भक्तानामपेक्षितेन रूपेण सन्निहितो भवतीत्यर्थः ॥ ९ ॥ आश्रमस्थानान्युभयत उपर्यधश्च नाभिर्येषां तैर्दृषच्चक्रैः शिलामध्यगतैश्चक्रैश्चक्रनदी गंडकी सरितां श्रेष्ठा पवित्री करोति ॥ १० ॥ एकल एकः । आराधनं समीहमानः कुर्वाणः । विविक्तः शुद्धः अत एवोपरतो विषयाभिलाषो यस्य । उपभृतः संवृद्ध उपशमो यस्य ॥ ११ ॥ प्रवर्धमानानुरागस्य भरेण यद्द्रुतं द्रवीभूतं हृदयं तस्मिन् शैथिल्यमनुगमो यस्य । आत्मनि देहे उद्भिद्यमानं रोमपुलककुलं रोमांचवृंदं यस्य ककारः समासांतः । औत्कंठ्यात्प्रवृत्तेन प्रणयबाष्पेण निरुद्धोऽवलोको ययोस्ते नयने यस्य सः एवं वर्तमानस्तामपि भगवत्सपर्यां न सस्मारेत्यन्वयः । तत्र हेतुः । निजरमणस्य स्वप्रीतिदातुये अरुणे चरणारविंदे तयोरनुध्यानेन परिचितः समृद्धो भक्तियोगस्तेन परिप्लुतः सर्वतो व्याप्तः परम आह्लादः परमानंदो यस्मिन्गंभीरहृदयह्रदे तस्मिन्नवगाढा निमग्ना धिषणा यस्य ॥ १२ ॥ धृतानि भगवद्व्रतानि येन स भगवंतं

यत्र तस्मिन् । श्रीवत्सादिभिरपि चिह्नितै निजपुरुषाणां नारदादीनां हृदि चित्रपट इव लिखितवन्निश्चलतया स्थितेन पुरुषरूपेण नराकारस्वरूपेण विरोचमाने । क आत्मनि मनसि ॥ ७ ॥ तद्राज्यभोगस्य भक्त्यानुषंगिकफलत्वात्कर्मफलत्वाभावेऽपि कर्मफलत्वमननं दैन्यादेवेति ज्ञेयम् ॥ ८ ॥ इत्यर्थ इति । इच्छाविषयीभूतेन श्रीरामकृष्णादिरूपेण । कदाचिद्दर्शनं तत्र भवतीति भावः ॥ ९ ॥ चक्रैः शालग्रामैरुपलक्षितत्वात्तन्नामापि चक्रनदीति । यत्र हरिक्षेत्रे ॥ १० ॥ तस्मिन्पुलहाश्रमोपवने । किशलयानि पत्राणि शम्यादिनामित्युक्तं चतुर्थस्कंधे ध्रुवोपाख्याने ॥ ११ ॥ अत एव शुद्धत्वादेव । तत्र सपर्याविस्मृतौ ॥ १२ ॥ तमपि प्रेमविकारं भगवत्पूजायां

परोरजः सवितुर्जातवेदो देवस्य भर्गो मनसेदं जजान ॥ सुरेतसाऽदः पुनराविश्य चष्टे हंसं गृध्राणं नृषद्रिंगिरामिमः ॥ १४ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भरतचरित्रे भगवत्परिचर्यानि॰ सप्तमोऽध्यायः ॥ ७ ॥ श्रीशुक उवाच ॥ एकदा तु महानद्यां कृताभिषेकनैयमिकावश्यको ब्रह्माक्षरमभिगृणानो मुहूर्तत्रयमुदकांत उपविवेश ॥ १ ॥

सूर्यमंडलेऽभ्युपतिष्ठन्नेतदु होवाचेत्यन्वयः । कीदृशः । एण्या हरिण्या अजिनमैणेयं तदेव वासस्तेनानुसवनाभिषेकेणार्द्राः कपिशाश्च याः कुटिला जटास्तासां कलापेन च विरोचमानः । सूर्यप्रकाशिकया ऋचा हिरण्मयं "ध्येयः सदा सवितृमंडलमध्यवर्ती" इत्यादिनोक्तम् । उज्जिहाने उद्गच्छति सति । सकारांतपाठे सन्नंतात्पचाद्यच् । अर्थस्तु स एव ॥ १३ ॥ परोरजः रजसः प्रकृतेः परं शुद्धसत्त्वात्मकं सवितुर्देवस्य सूर्यस्य भर्गः स्वरूपभूतं तेजः । जातं वेदो धनं कर्मफलं यस्मात्तत्कर्मफलदमित्यर्थः । अत्र हेतुः । यन्मनसैवेदं विश्वं जजान ससर्ज । पुनश्च अदः सृष्टं विश्वमंतर्यामिरूपेण प्रविश्य गृध्राणं कांक्षंतं हंसं जीवं सुरेतसा चिच्छक्त्या विचष्टे पश्यति पालयतीत्यर्थः । नृषु सीदत्युपाधितया तिष्ठतीति नृषद् बुद्धिस्तस्यां रिंगिं रिंगणं गतिं राति ददातीति नृषद्रिंगिराम् । "वा छंदसि" इत्यमि पूर्वरूपत्वाभावः । तद्भर्गः इमः शरणं व्रजामः ॥ १४ ॥ इति पंचमस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे भजतो विष्णुं तस्य कर्मांतरायतः ॥ एणरक्षाप्रसक्तस्य जातमेणत्वमीर्यते ॥ १ ॥ कृपयाऽपि कृतः संगः पतनायैव योगिनः ॥ इति प्रदर्शयन्नाह भरतस्यैणपोषणम् ॥ २ ॥ नैयमिकं नित्यनैमित्तिकविधिप्राप्तम् । आवश्यकमर्थप्राप्तं मूत्रोत्सर्गादि ।

विघ्नमित्र मत्त्वा प्रेमविकारेणापि मे बुद्धिर्न खल्वाश्रियतामिति विमृश्य बुद्धिप्रकाशकेन केन च भगवन्मंत्रेण भगवंतमुपासितुं प्रवृत्ते इत्याह—इत्थमिति । सूर्यर्चा सूर्यमंडले भगवत्प्रकाशिकया "ध्येयः सदा सवितृमंडलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः । केयूरवान्मकरकुंडलवान्किरीटी हारी हिरण्मयवपुर्धृतशंखचक्रः" इत्यनेन मंत्रेणोक्तम् । सकारांतपाठे 'उज्जिहासे' इति पाठे ॥ १३ ॥ भर्गस्तन्मंडलस्थं "सशंखचक्रं रविमंडले स्थितं कुशेशयं कान्तमनंतमव्ययम्" इत्यादिमंत्रवाच्यं तेजः । इत्यर्थ इति । कालरूपेण सर्वकर्मदात्रिति भावः । अत्र सर्वकर्मफलदातृत्वे । मनसा संकल्पमात्रेण गृध्राणं दुर्विषयसुखं कांक्षंतम् । इत्यर्थ इति कृपया दुर्विषयेभ्यो रक्षतीत्यर्थः । केन प्रकारेणेत्यपेक्षायां स्वस्मिन्बुद्धिवृत्तिप्रेरणयैवेत्याह—रिंगिं स्वास्मिन्नेव गतिं ततस्तद्विषयिणी मे बुद्धिः केनावृता मास्त्विति भावः । मंत्रोऽयं गायत्रीसहोदर इति संदर्भः ॥ १४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे सप्तमोऽध्यायः ॥७॥ तस्य भरतस्य । कर्मैवान्तरायो विघ्नस्तस्मात् । एणो मृगः(१) अभिषेकः स्नानम् । नैयमिकं नित्यनियमप्राप्तमावश्यकं संध्यावंदनादि । नैमित्तिकं शौचादि । अत्र जायंदतत्वेप्यल्पस्वरत्वादभिषेकशब्दस्य पूर्वनिपातः । अक्षरमक्षरात्मकं ब्रह्म श्रीकृष्णमंत्रं वा मुहूर्तत्रयमित्युक्तेः । प्रातस्संध्यां कृत्वा मुहूर्तत्रयादधिके काले गते पुनः संध्यांगीभूतं जपं समाप्य पुनर्जलसमीपे जपो न विधेय

तत्र तदा राजन्हरिणी पिपासया जलाशयाभ्याशमेकैवोपजगाम ॥ २ ॥ तया पेपीयमान उदके तावदेवाविदूरेण नदतो मृगपतेरुन्नादो लोकभयंकर उदपतत् ॥ ३ ॥ तमुपश्रुत्य सा मृगवधूः प्रकृतिविक्लवा चकितनिरीक्षणा सुतरामपि हरिभयाभिनिवेशव्यग्रहृदया पारिप्लवदृष्टिरगततृषा भयात्सहसैवोच्चक्राम ॥ ४ ॥ तस्या उत्पतंत्या अंतर्वत्न्या उरुभयावगलितो योनिनिर्गतो गर्भः स्रोतसि निपपात ॥ ५ ॥ तत्प्रसवोत्सर्पणभयखेदातुरा स्वगणेन वियुज्यमाना कस्यांचिद्दर्यां कृष्णसारसती निपपाताथ च ममार ॥ ६ ॥ तं त्वेणकुणकं कृपणं स्रोतसाऽनूह्यमानमभिवीक्ष्यापविद्धं बंधुरिवानुकंपया राजर्षिर्भरत आदाय मृतमातरमित्याश्रमपदमनयत् ॥ ७ ॥ तस्य ह वा एणकुणक उच्चैरेतस्मिन्कृतनिजाभिमानस्याहरहस्तत्पोषणपालनलालनप्रीणनानुध्यानेनात्मनियमाः सहयमाः पुरुषपरिचर्यादय एकैकशः कतिपयेनाहर्गणेन वियुज्यमानाः किल सर्व एवोदवसन् ॥ ८ ॥

कृतमभिषेकादिकं येन । ब्रह्माक्षरं प्रणवं जपन् उदकांते नद्यास्तीरे ॥ १ ॥ जलाशयाभ्याशं नद्याः समीपम् ॥ २ ॥ पेपीयमाने अत्यासक्त्या पीयमाने सति । तावदेव तत्क्षणमेव । अविदूरेण सन्निधौ । मृगपतेः सिंहस्य उन्नादो महान्नाद उद्गतः ॥ ३ ॥ प्रकृत्या स्वभावत एव विक्लवा व्याकुला । सुतरां तु हरिभयस्याभिनिवेशेन व्यग्रं व्याकुलं हृदयं यस्याः । पारिप्लवदृष्टिः परिभ्रांतनेत्रा । न गता तृषा तृट् यस्याः । उच्चक्राम नदीमुल्लंघितवती ॥ ४ ॥ अंतर्वत्न्या गर्भिण्याः । उरुभयेन स्थानाद्विचलितो योनेर्निर्गतः सन् स्रोतसि प्रवाहे निपतितः ॥ ५ ॥ तत्प्रसवो गर्भपातः उत्सर्पणमुल्लंघनं भयं च एतैः खेदेनातुरा पीडिता दर्यां गिरिगुहायां हरिणवधूर्निपपात अथानन्तरं मृता च॥ ६॥एणकुणकं हरिणबालकम् अपविद्धं बंधुभिस्त्यक्तम् इत्येतैः कृपणत्वादिहेतुभिर्योऽनुकंपा तया अनयत्॥ ७॥कृतो निजः स्वीय इत्यभिमानो येन । पोषणं तृणादिना पालनं वृकादिभ्यो रक्षणं लालनं चुंबनादिना प्रीणनं कंडूयनादिना एतैर्यदनुध्यानमासक्तिस्तेनात्मनो नियमाः स्नानादयो यमा अहिंसादयस्तत्सहिता ईश्वरपरिचर्यादयश्च

इति ज्ञेयम् । यद्वा—'ओमित्येकाक्षरं ब्रह्म' इति गीतोक्तेः प्रणवं जजापेत्यर्थः । यद्वाऽक्षरमक्षररूपं ब्रह्म वेदमित्यर्थः ॥१॥ तत्र नदीतटे । तदा जपावसरे राजन्निति । तत्तुल्यकर्मणा त्वमप्यधुना तादृशदीप्तिमानसीति भावः । "समीपे भोजने व्याप्तौ सतालव्यः प्रकीर्त्तितः । अभ्याशस्तु सदंत्यःस्यादावृत्तिक्षेपणादिषु" इति वर्णविवेकोक्तेः ॥२॥३॥ "पारिप्लवश्चाकुले स्याच्चंचले च" इति मेदिनी । अविशब्दस्त्वर्थे सुतरां त्विति॥४॥उत्पतंत्या ऊर्ध्वं गत्वा पतंत्या उच्छलंत्या इत्यर्थः ॥ ५ ॥ तत्प्रसवः उच्चाकाशादेव गर्भपातः । 'कंदरे तु दरी स्मृता' इति मेदिनी । कृष्णसारः श्यामहरिणः । "श्यामैणे कृष्णभके च कृष्णसारोऽसितायसि" इति निरुक्तिः ॥ ६ ॥ 'एणो मृगे ज्ञानगत्योः' इति निरुक्तिः । 'कुणको ध्वनिबालयोः' इति च । कृपणं दीनम् । 'कदर्ये कृपणे दीने समर्थे च दयावति' इति च । कृपणादिभिश्चतुर्भिर्हेतुभिः ॥७॥ आदिना संध्यादिग्रहः । द्वितीयादिनाऽस्ते

अहो बतायं हरिणकुणकः कृपण ईश्वररथचरणपरिभ्रमणरयेण स्वगणसुहृद्बंधुभ्यः परिवर्जितः शरणं च मोपसादितो मामेव मातापितरौ भ्रातृज्ञाती न्यौथिकांश्चैवोपेयाय नान्यं कंचन वेद मय्यतिविस्रब्धश्चात एव मया मत्परायणस्य पोषणपालनप्रीणनलालनमनसूयुनाऽनुष्ठेयं शरण्योपेक्षादोषविदुषा ॥ ९ ॥ नूनं ह्यार्याः साधव उपशमनशीलाः कृपणसुहृद एवंविधार्थे स्वार्थानपि गुरुतरानुपेक्षंते ॥ १० ॥ इति कृतानुषंग आसनशयनाटनस्थानाशनादिषु सह मृगजहुना स्नेहानुबद्धहृदय आसीत् ॥ ११ ॥ कुशकुसुमसमित्पलाशफलमूलोदकान्याहरिष्यमाणो वृकसालावृकादिभ्यो भयमाशंसमानो यदा सह हरिणकुणकेन वनं समाविशति ॥ १२ ॥ पथिषु च मुग्धभावेन तत्रतत्र विषक्तमतिप्रणयभरहृदयः कार्पण्यात्स्कंधेनोद्वहति एवमुत्संग उरसि चाऽऽधायोपलालयन्मुदं परमामवाप ॥ १३ ॥ क्रियायां निर्वर्त्यमानायामंतरालेऽप्युत्थायोत्थाय यदैनमभिचक्षीत तर्हि वाव स वर्षपतिः प्रकृतिस्थेन मनसा तस्मा आशिष आशास्ते स्वस्ति स्ताद्वत्स ते सर्वत इति ॥ १४ ॥ अन्यदा भृशमुद्विग्नमना नष्टद्रविण इव कृपणः सकरुणमतितर्षेण हरिणकुणकविरहविह्वलहृदयसंतापस्तमेवानुशोचन्किल कश्मलं महदभिरंभित इति होवाच ॥ १५ ॥ अपि बत स वै कृपण एणबालको मृतहरिणीसुतोऽहो ममानार्यस्य शठकिरातमतेरकृतसुकृतस्य कृतविस्रंभआत्मप्रत्ययेन तदविगणयन्सुजन इवागमिष्यति ॥ १६ ॥

प्रत्यहमेकैकशो वियुज्यमानाः संतः कतिपयेनाहर्गणेन सर्वे उत्सन्ना बभूवुः ॥ ८ ॥ आसक्तिं प्रपंचयति । अहो इत्यादिना इतिकृतानुषंग इत्येतत्पर्यंतेन । ईश्वररथचरणः कालचक्रं तस्य परिभ्रमणवेगेन स्वगणादिभ्यो विभ्रंशितः । मा इति मां च शरणं प्रापितः । मामेव मातापित्रादिबुद्ध्योपेयाय प्राप्तः । यौथिकान्यूथसंघातिनः । अनसूयुना एतन्निमित्तं मम स्वार्थो भ्रश्यतीति दोषदृष्टिमकुर्वता ॥ ९ ॥ तदेवाह । नूनं हीति ॥ १० ॥ इत्येवं कृतोऽनुषंग आसक्तिर्येन । मृगजहुना मृगापत्येन सह स्नेहेनानुबद्धं हृदयं येन ॥ ११ ॥ स्नेहानुबन्धमेव प्रपंचयति । कुशकुसुमेत्यादिना स्वधयतीत्यंतेन । सालावृकाः श्वानः । यदा भयं शंकमानो भवति तदा तेन सह वनं समाविशति ॥ १२ ॥ अतिशयितः प्रणयभरो यस्य तद्धृदयं यस्य सः ॥ १३ ॥ क्रियायां देवपूजादिलक्षणायाम् । वर्षपतिर्भरतः । प्रकृतिस्थेन स्वस्थेन । स्तात् भूयात् ॥ १४ ॥ अन्यदाऽदर्शने सकरुणं यथा भवत्येवमनुशोचन्निति होवाचेत्यन्वयः । अतितर्षेणात्यौत्सुक्येन । हरिणकुणकविरहेण विह्वले हृदये संतापो यस्य । कश्मलं मोहं प्रापितः सन् ॥ १५ ॥ अपीति संभावनायाम् ।

यादिग्रहः । तृतीयादिना जपादिग्रहः । उत्सन्ना नष्टाः ॥ ८ ॥ ''शरणस्य परित्यागे महापातकयुग्भवेत्'' इत्यादिस्मृतिपरिभाषितं दोषं ज्ञातवता ॥ ९ ॥ तदेव शरण्यानुपेक्षणमेव । एवंविधार्थे दीनपालनादिलक्षणकर्मणि । गुरुतरान्बहुलाभयुतानपि ॥ १० ॥ ''अल्पापत्ये जहुः प्रोक्तम्'' इति तीर्थः ॥ ११ ॥ ''वृको व्याघ्रे कपिक्रोष्टुश्वानः शालावृकाः स्मृताः'' इत्यभिधानात् । आदिना सिंहादिग्रहः । तीर्थस्त्वत्र यदेति न पपाठ ॥ १२ ॥ तत्रतत्र महाकर्दमोपरितले कोमले तृणादौ मुग्धभावेन कर्दममध्ये निमज्जामीति ज्ञानराहित्येन विषज्जमानम् ॥ १३ ॥ क्रियायां भगवत्परिचर्यायामपि । अंतरालेऽपि । अभिचक्षीत ''न जाने क्व गतो मे हरिणबालकः'' इत्युत्थाय पश्येत् । प्रकृतिस्थेन तद्दर्शनानंदमात्यर्थम् ॥ १४ ॥ दैवाददर्शने सति ॥ १५ ॥ सुजन इव 'आत्मवन्मन्यते जगत्' इति न्यायेन स्वस्य शुद्धचित्तत्वात्त्वामपि शुद्धचित्तं प्रतियन्नित्यर्थः ॥ १६ ॥

अपि क्षेमेणास्मिन्नाश्रमोपवने शष्पाणि चरंतं देवगुप्तं द्रक्ष्यामि ॥ १७ ॥ अपि च न वृकः सालावृकोऽन्यतमो वा नैकचर एकचरो वा भक्षय ति ॥ १८ ॥ निम्लोचति ह भगवान्सकलजगत्क्षेमोदयस्त्रय्यात्माऽद्यापि मम न मृगवधून्यास आगच्छति ॥ १९ ॥ अपिस्विदकृतसुकृतमागत्य मां सुखयिष्यति हरिणराजकुमारो विविधरुचिरदर्शनीयनिजमृगदारकविनोदैरसंतोषं स्वानामपनुदन् ॥ २० ॥ क्ष्वेलिकायां मां मृषासमाधिना ऽऽमीलितदृशं प्रेमसंरंभेण चकितचकित आगत्य पृषदपरुषविषाणाग्रेण लुठति ॥ २१ ॥ आसादितहविषि बर्हिषि दूषिते मयोपालब्धो भीतभी तः सपद्युपरतरास ऋषिकुमारवदवहितकरणकलाप आस्ते ॥ २२ ॥ किं वा अरे आचरितं तपस्तपस्विन्याऽनया यदियमवनिः सविनयकृ ष्णसारतनयतनुतरसुभगशिवतमाखरखुरपदपंक्तिभिर्द्रविणविधुरातुरस्य कृपणस्य मम द्रविणपदवीं सूचयंत्यात्मानं च सर्वतः कृतकौतुकं द्विजानां स्वर्गापवर्गकामानां देवयजनं करोति ॥ २३ ॥

बतेत्यनुकंपायाम् । अहो इति खेदे । शठकिरातयोरिव वंचनपरा क्रूरा च मतिर्यस्याकृतसुकृतस्य निर्भाग्यस्य मम तच्छाक्यादिकमगणयन्नचिंतयन्नागमिष्यति किम् । अपराधाचिंतने हेतुः । आत्मप्रत्ययेन स्वचित्तशुद्ध्या कृतविश्वासः सन्सुजनो यथा न गणयति तद्वत् ॥ १६ ॥ शष्पाणि कोमलतृणानि ॥ १७ ॥ नैकचरो यूथचरः सूकरादिः यद्वा एक एव चरति यः क्रूरस्वभावो व्याघ्रादिर्न भक्षयति किम्॥ १८॥सकललोकस्य क्षेमो यस्मात्स उदयो यस्य वेदत्रयी आत्मस्वरूपं यस्य स सूर्यो निम्लोचत्यस्तं याति । मृगवध्वा न्यासो निक्षेपभूतः॥ १९॥हरिण एव राजकुमार आगत्य मामपिस्वित्सुखयिष्यतीत्यन्वयः। किं कुर्वन् । विविधै रुचिरैर्दर्शनीयैर्निजैर्मृगदारक विनोदैः स्वीयानां खेदमपनुदन् ॥ २० ॥ संभवति चैतदित्याह । क्ष्वेलिकायां क्रीडायां मृषा यः समाधिस्तेनामीलिते दृशौ येन तं मां प्रेमसंरंभेण प्रणयकोपेन पृषज्जल बिंदुस्तद्वदपरुषेण मृदुना विषाणाग्रेण लुठति संघट्टयति ॥ २१ ॥ आसादितं हविर्यस्मिन्बर्हिषि दर्भे दंताकर्षणादिना चापलेन दूषिते सति । दूषित्वेति पाठे बर्हिषि विषये दूषणं कृत्वेत्यर्थः । मयाऽधिक्षिप्तः संस्तत्क्षणमेवोपरतक्रीडो निश्चल आस्ते ॥ २२ ॥ इति बहुधा प्रलप्योत्थाय बहिर्निर्गत्य तत्खुरखातभूभागोपलंभसंभ्रांतहृदय आह ।

देवेन कृपालुनामदिष्टदेवेन श्रीकृष्णेन रक्षितम् ॥ १७ ॥ तीर्थस्तु–नैकचरोऽष्टपान्मृगविशेष इत्याह ॥१८॥ "त्रय्येषा तपति" इति श्रुतेः । केवलमहमेव वेदोक्तदयाधर्मविमुख इति भावः ॥ १९ ॥ प्रेम्णैव तद्गुणमुत्कीर्त्त यन्प्रलपति–अपीति॥२०॥"पृषंति बिंदुपृषतः पुमांसो विप्रुषः स्त्रियाम्"इत्यमरः। रे मूढ त्वां पुष्यतो मे श्रवणकीर्त्तनादिनित्यकृत्यं न निर्वहति तत्त्वं मया त्यक्तो यथेष्टमितो याहीति मृषैवाक्रुश्य मृषा समाधिनेति तच्चेष्टित दिदृक्षायाः प्राबल्यात् । प्रेमसंरंभेण प्रणयकोपेन ॥ २१ ॥ दूषणं कृत्वा स्थितवतीत्यर्थः । आः किं करोषीति मयाऽधिक्षिप्तः ॥ २२ ॥ प्रेम्णैव भूभागेष्वारोपितमाहात्म्येन स्वं साधिक्षेपं संबोध्य विलपति–अरे मंदभाग्य भरत वृथातपस्विन् अनयाऽवन्या किं तप आचरितं तत्तपस्त्वया न तप्तमिति भावः । यद्वा–विशेषानुक्त्वा अरे चतुर्दशलोका ब्रूत रे ब्रूत युष्मासु मध्येऽनयेति युष्माकमीदृशं तपो नास्तीति भावः । ननु तरेत्यादिविशे षणैस्तन्माधुर्यास्वादः स्वस्य व्यंजितः । द्रविणपदवीं सूचयन्तीति । भो दुःखिन् भरत किं रोदिषि अनयैव खुरक्षुण्णया पदव्या वनं प्रविशंतं मृगबालकं स्वप्राणधनं प्राप्स्यसीति मां कृपयाश्वासयतीत्यर्थः ॥ २३ ॥

अपि स्विदसौ भगवानुडुपतिरेनं मृगपतिभयान्मृतमातरं मृगबालकं स्वाश्रमपरिभ्रष्टमनुकंपया कृपणजनवत्सलः परिपाति ॥ २४ ॥ किं वात्मज विश्लेषज्वरदवदहनशिखाभिरुपतप्यमानहृदयस्थलनलिनीकं मामुपसृतमृगीतनयं शिशिरशांतानुरागगुणितनिजवदनसलिलामृतमयगभस्तिभिः स्वधयतीति च ॥ २५ ॥ एवमघटमानमनोरथाकुलहृदयो मृगदारकाभासेन स्वारब्धकर्मणा योगारंभणतो विभ्रंशितः स योगतापसो भगवदारा धनलक्षणाच्च । कथमितरथाजात्यंतर एणकुणक आसंगः साक्षान्निःश्रेयसप्रतिपक्षतया प्राक्परित्यक्तदुस्त्यजहृदयाभिजातस्य तस्यैवमंतराय विहतयोगारंभणस्य राजर्षेर्भरतस्य तावन्मृगार्भकपोषणपालनप्रीणनलालनानुषंगेणाविगणयत आत्मानमहिरिवाखुबिलं दुरतिक्रमः कालः करालरभस आपद्यत ॥ २६ ॥

किं वेति । अरे अहो अनया क्षित्या किं वा तप आचरितं तपस्विन्या सभाग्यया । यद्यस्मादियं सविनयस्य कृष्णसारतनयस्य तनुतराः सुभगाश्च शिवतमाश्च।खराश्च खुरा येषु तेषां पदानां तत्रतत्रांकितानां पंक्तिभिर्द्रविणं मृगस्तेन रहितस्यात एवातुरस्य दुःखितस्य मम द्रविणमार्गं सूचयंती सती स्वात्मानं च ताभिः कृतमण्डनं द्विजानां देवयजनं यज्ञभूमिं करोति । "यस्मिन्देशे मृगः कृष्णस्तस्मिन्धर्मान्निबोधत" इति स्मृतेः॥ २३ ॥तावदुदिते चन्द्रे मृगं दृष्ट्वा स्वमृगत्वं संभावयन्नाह । अपिस्विदिति ॥ २४ ॥ चंद्ररश्मिस्पर्शसुखं प्राप्याह । किं वेति संभावनायाम् । आत्मजविश्लेषेण ज्वरस्तापः स एव दवदहनस्तस्य ज्वालाभिरुपतप्यमाना हृदयरूपा स्थलनलिनी यस्य । जलस्थं पद्मं तापं सोढुं न क्षममिति स्थलग्रहणम् । उपसृतोऽनुगतो मृगीतनयो येन तं मां चंद्रः स्वधयति शांतिं गमयति । कैः । शिशिरं शांतं मय्यनुरागेण गुणितं चावर्तितं पुनःपुनःस्रवद्यद्वदनसलिलं तदेवामृतमया गभस्तयस्तैः । लोके हि मंत्रवादिनो वदनसलिलैस्तापं शमयंतीति प्रसिद्धम् । उपसृत्य मृगीतनय इति पाठे मनोरथां तरमेतत् उपसृत्य मृगीतनयः किं वा मां स्वधयिष्यतीति । शेषं समानम् ॥ २५ ॥ मृगदारकवदाभासमानेन भगवदाराधनलक्षणात्कर्मणश्च विभ्रंशितः । प्रारब्धकर्मत्वे

स्वाश्रमात्परिभ्रष्टमिति । ममैव पापिष्ठस्यानवधानादिति भावः । भगवानिति । भगवत्त्वं विनेदृशं भाग्यं न संभवेदिति भावः ॥ २४ ॥ चंद्रकिरणानां दाहकत्वमनुभूयाहो मदात्मजविरहे शीतकिरणोऽप्युष्णकिरणो भवति हंतहंत किं मे समयो भविष्यति यत्र स मृगीतनयो भूयोपि मामुपैष्यति । चंद्रोप्ययं मां शिशिरयिष्यतील्यभिलपन्नाह–किं चेति । उपसृतो मृगीतनयोऽयं तथाविधं मां चंद्रोऽयं सुखयति विरहसंततस्यां गस्य सुधाप्लुतीकरणात्सुधावंतं किन्न करिष्यतीति "विन्मतोर्लुक्" इति मतुपो लुका रूपम् । कैः शिशिरं च तत् शांतमनुग्रं च मय्यनुरागेण गुणितं च यद्वदनसलिलं पुनःपुनः स्रवत्तदेवामृतमया गभस्तयस्तैः । यथा मांत्रिका अभिमंत्रितमुखांबुभिस्तापं घ्नंति तथायमपीत्यर्थः । मृगीतनयः प्रेम्णा निजसुखस्पर्शेन मामिहागत्य सुखयिष्यतीति ल्यबंतपाठपक्षेऽर्थः ॥ २५ ॥ एवमिति श्रीशुकोक्तिः । मृगदारकमाभासयति प्रका शयतीति यत्तेन स्वारब्धकर्मणा प्रारब्धं हि द्विविधं शोभनमशोभनं च तत्राद्यं भक्तप्रियेणापि नयनतीव्रांजनदानन्यायेन स्वभक्तयुत्कर्षवर्द्धनविदग्धेन भगवतैव स्वेच्छयैव प्रारब्धतुल्यत्वात्प्रारब्धमुपपाद्यते यदुदर्को भक्त्युद्रेक

तदानीमपि पार्श्ववर्तिनमात्मजमिवानुशोचंतमभिवीक्षमाणो मृग एवाभिनिवेशितमना विसृज्य लोकमिमं सह मृगेण कलेवरं मृतमनु नमृतजन्मा नुस्मृतिरितरवन्मृगशरीरमवाप ॥२७॥ तत्रापि ह वा आत्मनो मृगत्वकारणं भगवदाराधनसमीहानुभावेनानुस्मृत्य भृशमनुतप्यमान आह ॥२८॥ अहो कष्टं भ्रष्टोऽहमात्मवतामनुपथाद्यद्विमुक्तसमस्तसंगस्य विविक्तपुण्यारण्यशरणस्यात्मवत आत्मनि सर्वेषामात्मनां भगवति वासुदेवे तदनुश्रव णमननसंकीर्तनाराधनानुस्मरणाभियोगेनाशून्यसकलयामेन कालेन समावेशितं समाहितं कात्स्न्येंन मनस्तत्तु पुनर्ममाबुधस्यारान्मृगसुतमनु परिसुस्राव ॥ २९ ॥ इत्येवं निगूढनिर्वेदो विसृज्य मृगीमातरं पुनर्भगवत्क्षेत्रमुपशमशीलमुनिगणदयितं शालग्रामं पुलस्त्यपुलहाश्रमं कालं जरात्प्रत्याजगाम ॥ ३० ॥

हेतुः । कथमितरथेति । साक्षात्स्वपुत्रवत्कथमासंगः स्यात् । पूर्वं पारित्यक्ता दुस्त्यजा औरसा येन । अंतरायेण विहतं योगारंभणं यस्य । आत्मानमविगणयत आत्मचिं तामकुर्वतः । तावदेव तीव्रवेगः कालो मृत्युसमयश्चापद्यत ॥ २६ ॥ लोकं देहं मृगेण सहितं विसृज्य प्राकृत इव मृगशरीरमवाप । कथंभूतः । कलेवरं मृतमनु न मृता न विनष्टा पूर्वजन्मानुस्मृतिर्यस्य ॥ २७ ॥ आह स्वे चित्ते ॥ २८ ॥ अहो कष्टं धीराणां मार्गाद्भ्रष्टोऽहम् । भ्रंशमेवाह । यद्यतो विमुक्ताः समस्ताः संगा येन । विविक्तं पुण्यारण्यं शरणं यस्य । आत्मवतो धीरस्य मम मनः सर्वेषां भूतानामात्मनि वासुदेवे समावेशितं समाहितं च निश्चलं सदारादूरादेव परिसुस्राव गलितं निःसृतम् । केन समावेशितम् । तस्यानुश्रवणादिष्वभियोगेनाभिनिवेशेनाशून्याः सकला यामा यस्मिंस्तेन कालेन ॥ २९ ॥ निगूढोऽनाविष्कृतो निर्वेदो येन । शालवृक्षोपलक्षितं

एव स्यात्तत्खलूत्सन्नवर्त्तिनामपि संभवेदेव । द्वितीयं तु प्राचीनप्राकृतकर्ममयमेव यदुदर्को विषयाभिनिवेश एव स्यात् । अत्र तु शोभनेनारब्धेनेति साक्षात्सुशब्द एवोपन्यस्तः । योगेन भक्तियोगेन हेतुना तापसः सर्व विषयत्यागरूपं तपः कुर्वाणः । यद्यपि भक्तियोगो बहुविघ्नाकुलो न भवति तथापि भगवदिच्छया भगवदाराधनाद्विभ्रंशित इत्यर्थः । इतरथा प्रारब्धकर्माभावे । जात्यंतरे भिन्नजातौ । कथमासक्तिस्स्यान्न कथमपी त्यर्थः । साक्षान्निःश्रेयसस्य भगवत्प्राप्तेः प्रतिपक्षतया विरोधित्वेन “ पुत्रदारमयैः पाशैः पुमान्बद्धो न मुच्यते ” इत्युक्तेस्तत्प्राप्तिबंधकरूपत्वेन । प्राक् पूर्वं परित्यक्ता दुस्त्यजास्त्यक्तुमशक्या हृदयाभिजाता औरसात्मजा येन तस्य । अंतरायेण मृगरूपविघ्नेन योगो यमनियमादिस्तस्यारंभणं करणम् । आखुर्मूषिकः ॥ २६ ॥ तदानीमपि देहत्यागावसरेपि । अनुशोचंतं मृगम् । इतरवत् इतरः प्राकृतः सकर्मा तद्वदिति । भरतस्तु कर्मातीत एवात एव तस्य प्रारब्धाभावः प्राक्समर्थितः ॥ २७ ॥ तत्रापि मृगशरीरप्राप्तावपि । भगवदाराधनस्य समीहाऽनुष्ठानं तस्यानुभावः प्रभावस्तेन ॥ २८ ॥ २९ ॥ शालग्रामं तदाख्यं क्षेत्रं गंडकीतटम् ॥३०॥

तस्मिन्नपि कालं प्रतीक्षमाणः संगाच्च भृशमुद्विग्न आत्मसहचरः शुष्कपर्णतृणवीरुधा वर्तमानो मृगत्वनिमित्तावसानमेव गणयन्मृगशरीरं तीर्थोदकक्लिन्नमुत्ससर्ज ॥ ३१ ॥ इति श्रीमद्भागवते महापु० पंचमस्कंधे भरतचरिते मनुष्यदेहत्यागपूर्वकमृगशरीरप्राप्तित्यागवर्णनं नामाऽष्टमोऽध्यायः ॥८॥ श्रीशुक उवाच ॥ अथ कस्यचिद्द्विजवरस्याऽऽगिरःप्रवरस्य शमदमतपःस्वाध्यायाध्ययनत्यागसंतोषतितिक्षाप्रश्रयविद्याऽनसूयात्मज्ञानानंदयुक्तस्यात्मसदृशश्रुतशीलाचाररूपौदार्यगुणा नव सोदर्या अंगजा बभूवुर्मिथुनं च यवीयस्यां भार्यायाम् ॥ १ ॥ यस्तु तत्र पुमांस्तं परमभागवतं राजर्षिप्रवरं भरतमुत्सृष्टमृगशरीरं चरमशरीरेण विप्रत्वं गतमाहुः ॥ २ ॥ तत्रापि स्वजनसंगाच्च भृशमुद्विजमानो भगवतः कर्मबंधविध्वंसनश्रवणस्मरणगुणविवरणचरणारविंदयुगलं मनसा विदधदात्मनः प्रतिघातमाशंकमानो भगवदनुग्रहेणानुस्मृतस्वपूर्वजन्मावलिरात्मानमुन्मत्तजडांधबधिरस्वरूपेण दर्शयामास लोकस्य ॥ ३ ॥

ग्रामम् । कालंजराद्यत्र हरिणो जातस्तस्मात्पर्वतात् ॥ ३० ॥ आत्मैव सहचरो यस्य एकाकी । प्रतीक्षमाणस्यैव प्रपंचः मृगत्वनिमित्तेति । तीर्थोदकेन क्लिन्नमार्द्रमर्धोदकस्थमित्यर्थः ॥ ३१ ॥ इति श्रीमद्भागवते पंचमस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥ नवमे जडविप्रत्वे तस्य रागाद्यभावतः ॥ भद्रकालीपशुत्वेऽपि निर्विकारत्वमीर्यते ॥ १ ॥ पितुः प्राप्तात्मविज्ञानो भरतो मृगतां गतः ॥ प्रारब्धकर्मवेगेन तदंते जडविप्रताम् ॥ २ ॥ आंगिरसगोत्रजानां प्रवरस्य श्रेष्ठस्य । शमादियुक्तस्य । त्यागोऽत्रातिथ्यादिभ्योऽन्नदानादि । विद्या कर्मविद्या । आत्मज्ञानं देहादिव्यतिरिक्तभोक्त्रात्मज्ञानम् । आनंदो धर्मसंपत्तिजः । आत्मना सदृशाः श्रुतादयो गुणा येषां ते समानोदरा नव पुत्रा बभूवुः । यवीयस्यां कनिष्ठायां च मिथुनं स्त्रीपुरुषयुग्मम् ॥ १ ॥ उत्सृष्टं मृगशरीरं येन तम् । "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते" इति स्मृतेः ॥ २ ॥ तत्रापि चान्यसंगादात्मनो भ्रंशमाशंकमानश्चात्मानमुन्मत्तादिरूपेण दर्शयामासेत्यन्वयः । किं कुर्वन् । कर्मबंधविध्वंसनं श्रवणं स्मरणं गुणानां विवरणं कथनं च यस्य तस्य भगवतश्चरणारविंदयुगलं मनसा विशेषेण धारयन् । प्रतिघातशंकायां हेतुः । अनुस्मृता स्वीयपूर्वजन्मनामावलिः परंपरा येन सः ॥ ३ ॥

तस्मिन्नपि क्षेत्रे ॥ ३१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥ तस्य उत्सृष्टमृगशरीरास्तविप्रदेहस्य । भद्रकाली दुर्गा ( १ ) तदंते प्रारब्धकर्मान्ते ( २ ) अथ मृगदेहत्यागानंतरम् । स्वाध्यायाध्ययनं स्वशाखोचितवेदाध्ययनम् । संतोषो यदृच्छालाभेनालंबुद्धिः । परापराधसहनं तितिक्षा प्रश्रयः । प्रणयः ॥ १ ॥ तत्र मिथुने । चरमशरीरेणांत्यदेहेन । मोक्षे मुख्याधिकारित्वेन ब्राह्मणदेहस्यैव चरमत्वमेतच्च स्वयं भगवता श्रीकृष्णेन श्रीदशमे मुचुकुंदोपाख्याने स्फुटीकृतम् । " भूत्वा द्विजवरस्त्वं वै मामुपैष्यसि केवलम् " इत्यादिना ॥ २ ॥ तत्रापि ब्राह्मणशरीरेपि । चादन्यसंगात् । लोकस्य

तस्यापि ह वा आत्मजस्य विप्रः पुत्रस्नेहानुबद्धमना आसमावर्तनात्संस्कारान्यथोपदेशं विदधान उपनीतस्य च पुनः शौचाचमनादीन्कर्मनियमाननभिप्रेतानपि समशिक्षयत्। अनुशिष्टेन हि भाव्यं पितुः पुत्रेणेति ॥ ४ ॥ स चापि तदु ह पितृसन्निधावेवासध्रीचीनमिव स्म करोति छंदांस्यध्यापयिष्यन्सह व्याहृतिभिः सप्रणवशिरस्त्रिपदीं सावित्रीं ग्रैष्मवासंतिकान्मासानधीयानमप्यसमवेतरूपं ग्राहयामास ॥ ५ ॥ एवं स्वतनुज आत्मन्यनुरागावेशितचित्तः शौचाध्ययनव्रतनियमगुर्वनलशुश्रूषणाद्यौपकुर्वाणककर्माण्यनभियुक्तान्यपि समनुशिष्टेन भाव्यमित्यसदाग्रहः पुत्रमनुशास्य स्वयं तावदनधिगतमनोरथः कालेनाप्रमत्तेन स्वयं गृह एव प्रमत्त उपसंहृतः ॥ ६ ॥ अथ यवीयसी द्विजसती स्वगर्भजातं मिथुनं सपत्न्या उपन्यस्य स्वयमनुसंस्थया पतिलोकमगात् ॥ ७ ॥ पितर्युपरते भ्रातर एनमतत्प्रभावविदस्त्रय्यां विद्यायामेव पर्यवसितमतयो न परविद्यायां जडमतिरिति भ्रातुरनुशासननिर्बंधान्न्यवृत्सत ॥ ८ ॥

पुत्रस्नेहेऽनुबद्धं मनो यस्य।जडस्य गार्हस्थ्यानधिकारात्समावर्तनांतान्संस्कारान्विदधानस्तमुपनीयोपनीतस्य पुनः शौचादींस्तस्यानभिप्रेतानपि शिक्षितवान्।तत्र हेतुः । अनुशिष्टेन हि भाव्यं पितुः सकाशात्पुत्रेणेति ॥४॥ सोऽपि च पितुः शिक्षानिर्बंधनिवृत्तये असध्रीचीनमसमीचीनमिव करोति स्म । उपाकरणवेदव्रताद्यनन्तरं श्रावणादिमासेषु वेदानध्यापयिष्यन्नादौ तावद्व्याहृतिभिः सह प्रणवशिरःसहितां त्रिपदीं चैत्रादिचतुरो मासानधीयानमप्यसमवेतरूपं यथाभवत्येवं ग्राहयामास । तावतापि कालेन स्वरानुपूर्व्या युक्तं व्याहृत्यादि तस्य नागतमित्यर्थः ॥५॥ आत्मभूते स्वतनुजेऽनुरागेणावेशितं चित्तं येन । शौचादीनि यान्यौपकुर्वाणकस्य सावधिब्रह्मचर्यवतः कर्माणि तेनानभियुक्तान्यनादृतान्यपि तं पुत्रं प्रत्यनुशास्याप्यप्राप्तपुत्रपांडित्यमनोरथः स्वयं कालेनोपसंहृतो मृत इत्यर्थः । अनुशासननिर्बंधे पुनस्तमेव हेतुमाह । अनुशिष्टेन भाव्यमित्यसन्नयोग्य आग्रहो यस्य ॥ ६ ॥ सपत्न्यै समर्प्य । अनुसंस्थयाऽनुमरणेन । सप्तम्यंतपाठेऽप्ययमेवार्थः ॥ ७ ॥ न्यवृत्सत निवर्तितुमैच्छन् । निवृत्ता इत्यर्थः ॥ ८ ॥

लोकम् ॥ ३ ॥ तस्यापि जडस्वरूपस्यापि । समावर्त्तनं संस्कारभेदः । अनभिप्रेतांस्तस्मै अरोचमानानपि । तत्र शिक्षणे । अनुशिष्टेन शिक्षितेन ॥ ४ ॥ इत्यर्थ इति । पितृकर्तृपाठनहठनिवृत्त्यर्थं जानन्नेव तथा चकारेति भावः ॥ ५ ॥ " आत्मा वै पुत्रनामासि " इति श्रुतेरात्मभूते स्वस्वरूपे । इत्यर्थ इति । उपसंपूर्वस्य हरतेः समाप्त्यर्थकत्वादिति भावः । समनुशिष्टेन सम्यग्विशिक्षितेन पुत्रेण भाव्यं भवितव्यम् । पितुः सकाशादिति । बालपाठने " माता वैरी पिता शत्रुर्बालो याभ्यां न पाठितः " इत्यादिना मातापित्रोरपि निंदाश्रवणात्तन्निवृत्तये यथाबलं स्वविद्यानिष्णात एवात्मजः कारयितव्य इति ॥ ६ ॥ अथ भर्तृमरणोत्तरम् । यत्तु " मृतानुगमनं नास्ति ब्राह्मण्या ब्रह्मशासनात् " इति हारीतेनोक्तं तत्पृथक्चितिविषयं " पृथक्चितिं समारूढा न विप्राऽग्निं समाविशेत् " इति बृहन्नारदीयोक्तेः ॥ ७ ॥ पितरीति । अनुशिष्टवतीति शेषः । एनमनुशिष्टवति । पितर्युपरते सति । इत्यर्थ इति । न तु पितेव तस्मिन्नाग्रहवंत इति भावः । सन्नताल्लङि लुङि वा रूपमिदमार्षमेवेति ज्ञेयम् । न परविद्यायामित्यनेन "त्रैगुण्यविषया वेदाः" इत्यादिभगवदुक्तेस्त्रयीविद्याती

स च प्राकृतैर्द्विपदपशुभिरुन्मत्तजडबधिरेत्यभिभाष्यमाणो यदा तदनुरूपाणि प्रभाषते कर्माणि स च कार्यमाणः परेच्छया करोति विष्टितो वेतनतो वा याच्ञया यदृच्छया वोपसादितमल्पं बहु मिष्टं कदन्नं वाऽभ्यवहरति परं नेंद्रियप्रीतिनिमित्तम् ॥ नित्यनिवृत्तनिमित्तस्वसिद्धविशुद्धानुभवानंदस्वात्मलाभाधिगमः सुखदुःखयोर्द्वंद्वनिमित्तयोरसंभावितदेहाभिमानः ॥ ९ ॥ शीतोष्णवातवर्षेषु वृष इवानावृतांगः पीनः संहननांगः स्थंडिलसंवेशनानुन्मर्दनामज्जनरजसा महामणिरिवानभिव्यक्तब्रह्मवर्चसः कुपटावृतकटिरुपवीतेनोरुमषिणा द्विजातिरिति ब्रह्मबंधुरिति संज्ञया अतज्ज्ञजनावमतो विचचार ॥ १० ॥ यदा तु परत आहारं कर्मवेतनत ईहमानः स्वभ्रातृभिरपि केदारकर्मणि निरूपितस्तदपि करोति किं तु न समविषमन्यूनमधिकमिति वेद कणपिण्याकफलीकरणकुल्माषस्थालीपुरीषादीन्यप्यमृतवदभ्यवहरति ॥ ११ ॥

यदाऽभिभाष्यमाणस्तदा तदनुरूपाणि प्रभाषते । मूल्यमंतरेण बलाद्यत्कर्म कार्यते सा विष्टिः । वेतनं मूल्यम् । विष्ट्यादिभिरुपसादितमन्नमभ्यवहरति परं भुंक्ते केवलं न त्विंद्रियप्रीतये । अत्र हेतुद्वयमाह । नित्यं सदा निवृत्तं निमित्तं यस्मात्स उत्पादकशून्यः स्वसिद्धोऽभिव्यंजकशून्यो विशुद्धः केवलो योऽनुभवः स एवानंदरूपः स्वात्मा तस्य लाभ एवंभूतोऽहमिति ज्ञानं तस्याधिगमः प्राप्तिरस्ति यस्य । द्वंद्वानि सन्मानावमानादीनि तद्धेतुकयोः सुखदुःखयोरकृतदेहाभिमानः तस्मान्नेंद्रियप्रीतिनिमित्तमभ्यवहरतीत्यन्वयः॥९॥ अत एव शीतोष्णादिष्वनावृतांगो विचचारेत्यन्वयः । कीदृशः । पीनः पुष्टः संहननांगः संहन्यंते निबिडी भवंति स्मांगानि यस्य । कठिनावयव इत्यर्थः । स्थंडिलसंवेशनं भूमिशयनम् अनुन्मर्दनं मर्दनाभावः अमज्जनं स्नानाभावः तैर्यद्रजस्तेनाप्रकटं ब्रह्मवर्चसं ब्राह्मं तेजो यस्य । यथा महामणिरनभिव्यक्ततेजा भवति कुत्सितेन पटेनावृता कटिर्यस्य । उरुमषिणाऽतिमलिनेन । तत्त्वतस्तं न जानंति ये तैर्जनैरवमतः सन् ॥ १० ॥ यदा तु परेभ्यः कर्ममूल्येनाहारमपेक्षमाणो भवति तदा केदारकर्मणि शालिक्षेत्रे

तत्त्वं परविद्यात्वं च दर्शितं तत्रापीत्यादिगद्ये तस्य भक्त्येकनिष्ठताया दर्शितत्वात् । अत्र चैवं ज्ञेयम्—सोयमंतर्भगवन्निष्ठ एव आत्मारामता तु शुकादिवद्बहिरंगैव तदावरणाय प्रयुक्ता तस्या अप्यावरणायोन्मत्तचेष्टेति । किञ्च—भगवद्भक्तिरेव परविद्या ' सा विद्या तन्मतिर्यया ' इति नारदोक्तेः । ' विद्यान्या केवलं विद्या परविद्या हरौ मतिः ' इत्युक्तेश्च । क्वचिन्न्यवृत्तसन्नित्यपि पाठः ॥ ८ ॥ स च जडभरतः । प्राकृतैः मूढैः । अस्य विवरणं द्विपदेत्यादि । चतुष्पदः पशोर्द्विपदत्वमेव विशेषः । तादृशैर्मनुष्यैर्यदा हे उन्मत्त इत्यादिनाभिभाष्यमाणो भवति तदा तदनुरूपाण्युन्मत्तादिवचनानुकूलवचनानि भाषते । यद्वा—तदनुरूपाणि प्रतिध्वनिवत्तदुक्तानेव शब्दान्वदतीत्यर्थः । कदन्नं रसादिहीनम् । इंद्रियप्रीतये जिह्वादींद्रियतृप्तये अत्र इन्द्रियप्रीत्यभावे । निमित्तं कारणम् । अन्यानपेक्षिस्वरूपानंदावाप्तेरिंद्रियप्रीतिनिमित्ताभाव इत्यर्थः । द्वितीयमाह—त्यक्तदेहाभिमानत्वादित्यर्थः । अत्र विश्वनाथः—नित्यं सदैव । पूर्वजन्मन्यपि निवृत्तं निमित्तं कर्म यस्य सः । स्वसिद्धेन स्वत एव सिद्धेन । विशुद्धेन प्राकृतेनानुभवानंदेन दृष्टेनैव स्वात्मनः स्वेष्टदेवस्य कृष्णस्य लाभाधिगमो लाभप्रतीतिर्यस्मिन् स च स च सः । अत एव द्वंद्वयोरिति पूर्ववत् ॥९॥ इत्यर्थ इति । संपूर्वस्य हंतेर्दृष्टसंघातार्थत्वमुक्तम् । वररुचिनोक्तत्वादिति भावः॥ १०॥सर्वं दिनं कर्म कारयित्वाऽऽहारमात्रं चेद्ददति तर्हि वयमेव तथा कारयामोऽप्रतिष्ठा च न

अथ कदाचित्कश्चिद्वृषलपतिर्भद्रकाल्यै पुरुषपशुमालभतापत्यकामः ॥ १२ ॥ तस्य ह दैवमुक्तस्य पशोः पदवीं तदनुचराः परिधावंतो निशि निशीथसमये तमसा वृतायामनधिगतपशव आकस्मिकेन विधिना केदारान्वीरासनेन मृगवराहादिभ्यः संरक्षमाणमंगिरःप्रवरसुतमपश्यन् ॥ ॥ १३ ॥ अथ त एनमनवद्यलक्षणमवमृश्य भर्तृकर्मनिष्पत्तिं मन्यमाना बद्ध्वा रशनया चंडिकागृहमुपनिन्युर्मुदाविकसितवदनाः ॥ १४ ॥ अथ पणयस्तं स्वविधिनाऽभिषिच्याऽहतेन वाससाच्छाद्य भूषणालेपस्रक्तिलकादिभिरुपस्कृतं भुक्तवंतं धूपदीपमाल्यलाजकिसलयांकुरफलोपहारोपेतया वैशससंस्थया महता गीतस्तुतिमृदंगपणवघोषेण च पुरुषपशुं भद्रकाल्याः पुरत उपवेशयामासुः ॥ १५ ॥ अथ वृषलराजपणिः पुरुषपशोरसृगासवेन देवीं भद्रकालीं यक्ष्यमाणस्तदभिमंत्रितमसिमतिकरालनिशितमुपाददे ॥ १६ ॥

कर्दमविलोडनादावाहारप्रलोभनेन नियुक्तः सन्करोति किं त्वत्र कर्दमस्य प्रक्षेपे क्षेत्रं समं भवेदित उद्धरणे विषमं स्यादित्यादि न वेद । भ्रातृभिर्दत्तान्कणादीनप्यमृतवद्भुंक्ते । कणाश्चूर्णतंडुलाः । पिण्याकं तैलयंत्रोद्धृतं तिलकिट्टम् । फलीकरणं तुषाः । कुल्माषाः कीटदष्टा माषाः । स्थालीपुरीषं स्थालीलग्नं दग्धान्नम् ॥ ११ ॥ तस्य रागादिराहित्यमलौल्यं चैवमीरितम् । अथान्यच्चरितं प्राह चित्रं मृत्यावसंभ्रमम् ॥ वृषलपतिः शूद्रसामंतश्चोरराजः आलभताऽऽलब्धुं प्रवृत्तः ॥ १२ ॥ दैवाद्बंधनविमुक्तस्य पशोः तमसा व्याप्तायां निशि तत्रापि निशीथसमयेऽर्धरात्रावसरे । आकस्मिको दैवनिर्मितो विधिः प्रकारस्तेन । वीरासनेनोर्ध्वावस्थानेन ॥ १३ ॥ अवमृश्य ज्ञात्वा ॥ १४ ॥ पणयश्चोराः । अहतेन नूतनेन । उपस्कृतमलंकृतम् । वैशससंस्थया हिंसाविधानेन गीतादिघोषेण सह ॥ १५ ॥ वृषलराजस्य पणिः पुरोहितत्वेन वर्तमानश्चोरः । तदभिमंत्रि

तावती भविष्यतीति भावः । आदिना कोद्रवादिग्रहः ॥ ११ ॥ अथेति चरितांतरारम्भसूचनाय । अलौल्यमचाञ्चल्यम् । असंभ्रमं भयाभावम् ( १ ) भद्रं कालयति दुष्टानां कल्याणं चालयतीति भद्रकाली वा भद्राणां सुकृतिनां कं सुखं तेनालते शोभत इति भद्रकाली तस्यै । अत्रोपाख्यान एव भद्रकालीपदार्थद्वयं चरितार्थं भविष्यतीति ज्ञेयम् ॥१२॥ तत्रापि निश्यपि ॥१३॥ अथ तद्दर्शनानंतरम् । अनवद्यानि निर्दोषाणि लक्षणानि हीनांगत्वादिराहित्यानि यस्य तम् । भर्तृकर्मणः संततिप्राप्तिरूपस्य सिद्धिम् । रशनया रज्वा ॥ १४ ॥ स्वविधिना बलिदानविधिना । लाजाभृष्टव्रीहयः । किसलयो बिल्वपत्रादि । अंकुरो यवांकुरः न तु दूर्वांकुरः 'दुर्गां नैव तु दूर्वया' इति पाद्मोक्तेः । तत्पूजनस्यापि दुर्गापूजनांगतयांगांगिनोरभेदत्वा दुर्गार्चनत्वमेवेति ॥ १५ ॥ वृषो धर्मो लीयते एभिरिति वृषलः " हिंसाचौर्यानृतैर्धर्मो लीयते सर्वदेहिनाम् " इत्युक्तेरेषु प्रसक्तास्तेषां राजा तस्य पणिः "पणिस्तोतारि चौरे च व्यवहर्तृपुरोधसोः" इति तीर्थस्वामिनौ । भद्रकाल्या मंत्रेण "गृध्रकर्णि विरूपाक्षि लंबस्तनि महोदरि । हन शत्रुं त्रिशूलेन क्रुद्धस्य पिब शोणितम् ।" इत्यादिना "कालिकालि महाकालि" इत्यादिनावाभिमंत्रितमर्चितम् ॥ १६ ॥

इति तेषां वृषलानां रजस्तमःप्रकृतीनां धनमदरजउत्सिक्तमनसां भगवत्कलावीरकुलं कदर्थीकृत्योत्पथेन स्वैरं विहरतां हिंसाविहाराणां कर्मातिदारुणं यद्ब्रह्मभूतस्य साक्षाद्ब्रह्मर्षिसुतस्य निर्वैरस्य सर्वभूतसुहृदः सूनायामप्यननुमतमालंभनं तदुपलभ्य ब्रह्मतेजसा अतिदुर्विषहेण दंदह्यमानेन वपुषा सहसोच्चचाट सैव देवी भद्रकाली ॥ १७ ॥ भृशममर्षरोषावेशरभसविलसितभ्रुकुटिविटपकुटिलदंष्ट्रारुणेक्षणाटोपातिभयानकवदना हंतुकामेवेदं महाऽट्टहासमतिसंरंभेण विमुंचंती तत उत्पत्य पापीयसां दुष्टानां तेनैवासिना विवृक्णशीर्ष्णां गलात् स्रवंतमसृगासवमत्युष्णं सह गणेन निपीयातिपानमदविह्वलोच्चैस्तरां स्वपार्षदैः सह जगौ ननर्त च विजहार च शिरःकंदुकलीलया ॥ १८ ॥ एवमेव खलु महदभिचारातिक्रमः कात्स्न्येनाऽऽत्मने फलति ॥ १९ ॥

तं भद्रकालीमंत्राभिमंत्रितम् ॥ १६ ॥ धनमद एव रजस्तेनोत्सिक्तं त्यक्तमर्यादं मनो येषाम् । भगवत्कलायुक्तं वीराणां ब्राह्मणानां कुलं तुच्छीकृत्य यथेच्छं वर्तमानानां यत्कर्म तदुपलभ्य देवी उच्चचाट प्रतिमां त्यक्त्वा बहिर्निर्गता । कथंभूतमालंभनम् । सूनायामप्यापत्कालेऽनुज्ञातायामपि हिंसायामननुज्ञातम् । भद्रकालीत्यंतं गद्यम् ॥ १७॥ अमर्षोऽपराधासहनं रोषश्च वपुषो दाहनं तयोरावेशस्तस्य रभसेन वेगेन विलसित उत्तंभितो भ्रुकुटिलक्षणो विटपः शाखा कुटिला दंष्ट्राश्चारुणानीक्षणानि च तेषामाटोपः संभ्रमस्तेनातिभयानकं वदनं यस्याः । इदं जगद्धंतुमुद्यतेव । महांतमट्टहासं सनादं हासम् । ततः स्थानादुत्पत्य विवृक्णानि छिन्नानि शीर्षाणि येषाम् । गणेन पारिवारेण सह । शिरांस्येव कंदुकानि तेषां लीलया चिक्रीड च ॥ १८ ॥ ननु कथं देव्याराधकानामेवं विपरीतं फलं तत्राह । एवमेवेति महत्स्वभिचाररूपोऽतिक्रमोऽपराधः ॥ १९॥

भगवानेव कला वेदास्तेषामध्ययनाध्यापनविचारे ये वीरा अग्रण्यो ब्राह्मणास्तेषां कुलम् 'वेदो नारायणः साक्षात्' इति षष्ठस्कंधे वेदस्य साक्षान्नाराणरूपत्वोक्तेः । 'यत्र मूर्तिधराः कलाः' इत्यष्टमस्कंधे कलाशब्दस्य वेदपरत्वस्योक्तत्वाच्च एतेन भगवद्रूपवेदविचाराग्रगण्यब्राह्मणकुलमित्यर्थो लब्ध इति 'अननुज्ञातं मनुष्यं नालभेद्देव्यै ब्राह्मणं तु कदापि न' इत्याद्यागमशास्त्रेणापि ब्राह्मणालंभनं नानुज्ञातमित्यर्थः । अत एव हरिश्चन्द्रमखे भार्गवः शुनःशेफो देवैर्न गृहीतो बलित्वेन किन्तु रक्षित एव तत एव स देवरातत्वञ्च प्राप्तवानिति व्यक्ती भविष्यति नवमस्कंधे । यत्तु "ब्रह्मणे ब्राह्मणाꣳ क्षत्राय राजन्यम्" इति यजुर्वेदे पुरुषमेधप्रकरणे प्रोक्तम् । तत्र ब्राह्मणस्य यूपसमीपे पर्यग्निमात्रं कृत्वा त्याग एव तत्स्थाने घृतहोमविधानात् तथा च श्रुतिः-"तत्पर्यग्निकृताः पशवो बभूवुरसंज्ञप्तास्तान्पर्यग्निकृतानेवोदसृजत्तद्देवत्या आहुतीरजुहोत्ताभिस्ता देवता अप्रीणात्ता एनं प्रीता अप्रीणन्सर्वैकामैः आज्येन जुहोति तेजो वा आज्यं तेजसैवास्मिंस्तत्तेजो दधाति" इति तद्भाष्यात् । यद्वा–भगवतः कला रक्षा भगवत्कला तद्युतं वीरकुलं ब्राह्मणकुलम् "विप्रैः संवर्धितो विष्णुर्जपहोमार्चनादिभिः । भगवद्रक्षका एते वीरा एव न संशयः ॥" इति संहितोक्तेस्तत्रैव वीरशब्दो ब्रह्मणवाचको दृष्टस्तथाहि 'वीरः शूरे जिने विष्णौ रसे विप्रेर्जुने द्रुमे । शृंग्यां नले तंडुलीये किरिकंदे च पौष्करे ॥ आरूकोशीरमरिचकाञ्जिके च करञ्जके । वायौ श्रेष्ठे तथा वीराचारनिष्ठेऽपि कीर्त्तितः॥" इति । यद्वा सैव या यष्टुमाकांक्षिता प्रतिमारूपा देव्येवोच्चचाट छिन्नभिन्ना बभूव न तु तदीयासिना भरतः छिन्नो बभूवेत्येवकारार्थो व्यक्तः ॥ १७ ॥ १८ ॥ अत्राशंकते–नन्विति । कात्स्न्येन सामस्त्येन न त्वेकदेशेन । आत्मने व्यभिचारतर्के । फलत्यभिचारफलं ददाति "यो हि यस्य विषमं विचिंतयेत्प्राप्नुयात्स कुमतिर्हि तत्फलम्" इति लोकिवोक्तेः ॥ १९

न वा एतद्विष्णुदत्तमहदद्भुतं यदसंभ्रमः स्वशिरश्छेदन आपतितेऽपि विमुक्तदेहाद्यात्मभावसुदृढहृदयग्रंथीनां सर्वसत्त्वसुहृदात्मनां निर्वैराणां साक्षाद्भगवता आनिमिषारिवरायुधेनाप्रमत्तेन तैस्तैर्भावैः परिरक्ष्यमाणानां तत्पादमूलमकुतश्चिद्भयमुपसृतानां भागवतपरमहंसानाम् ॥ २० ॥ इति श्री भागवते महापुराणे पंचमस्कंधे जडभरतचरितं नाम नवमोऽध्यायः ॥ ९ ॥ श्रीशुक उवाच ॥ अथ सिंधुसौवीरपते रहूगणस्य व्रजत इक्षुमत्यास्तटे तत्कुलपतिना शिबिकावाहपुरुषान्वेषणसमये दैवेनोपसादितः स द्विजवर उपलब्ध एष पीवा युवा संहननांगो गोखरवद्धुरं वोढुमलमिति पूर्वविष्टिगृहीतैः सह गृहीतः प्रसभमतदर्ह उवाह शिबिकां स महानुभावः ॥ १ ॥

नन्वसंभावितमिदमेवं यन्मरणेऽप्यव्याकुलत्वं मारकेषु च क्रोधाभाव इत्यादि तत्राह । न वा इति । विमुक्तो देहाद्यात्मभावलक्षणः सुदृढो हृदयग्रंथिर्यैः सर्वसत्त्वानां सुहृद आत्मा नश्च ये तेषाम् । न च तेषां देहाद्यभिमानसद्भावेपि मरणादिभयमस्तीत्याह । साक्षाद्भगवताभितो रक्ष्यमाणानाम् । केन । अनिमिषः कालः स एवारिचक्रं तेन वरायुधेन तैस्तैर्भावैश्चांतर्यामितया प्रवर्त्यमानैर्भद्रकाल्यादिरूपैः । न कुतश्चिदपि भयं यस्मिन् । भागवतानां भगवदुपासकानां परमहंसानाम् ॥ २० ॥ इति पंचमस्कंधे टीकायां नवमोध्यायः ॥९॥ दशमे क्षिपता राज्ञा शिबिकां स्वां वहन्मुनिः ॥ स्वदुर्वादानुवादेन विज्ञायाशु प्रसादितः ॥ १ ॥ एवंभूताविकारित्वमज्ञसर्वज्ञयोः समम् ॥ इति सर्वज्ञतासिद्ध्यै रहूगणकथेरणम् ॥ २ ॥ रहूगणो नाम सिंधुसौवीरदेशयो राजा तत्त्वजिज्ञासुः कपिलाश्रमं यदा गच्छति स्म तदा यद्वृत्तं तदाह । अथेति । इक्षुमत्या नद्यास्तीरे । तेषां शिबिकावाहानां कुलस्य नाथेन एष गौरिव खर इव च भारं वोढुं समर्थ इति धिया पूर्वं ये केचन विष्टया बलाद् गृहीतास्तैः सह प्रसभं बलाद गृहीतः सन्नतदर्होऽपि स

पुनराक्षिपति—नन्विति । केन रक्ष्यमाणानां तत्राहानिमिषेति—विष्णुरातेति । यथा त्वमतीवदुर्निवार्यब्रह्मास्त्रतो विष्णुना सुदर्शनास्त्रेण रक्षितस्तथायमपीति भावः ॥ २० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे नवमोऽध्यायः ॥ ९ ॥ क्षिपता तिरस्कुर्वता रहूगणेन स्वस्य दुर्वादा दुरुक्तयस्तेषामनुवादेन यथावत्प्रतिपादनेन ( १ ) एवंभूतं स्वमारकेष्वपि क्रोधानुत्पादनरूपं यदविकारित्वं तदज्ञस्यातीवबालस्य सर्वज्ञस्य देहाद्यतिरिक्तात्मानुसंधानवतश्च सममेवातस्तत्र को विशेष इति हेतोः ( २ ) तदेवं भरतस्य कणपिण्याकादिभिः स्वपालकेषु भ्रात्रादिषु तत्प्रतिवेशितेषु च सकर्मित्वाद्राजसेष्वपि कृपां चकारैव यतो बहुकालं तेभ्यो दर्शनं ददौ तथैव वृषलराजे दुराचारसक्तत्वादतितामसे स्वघातकेऽपि कृपां चकारैव यतस्तेनापि प्रकारेण स्वस्य देव्याश्च साक्षाद्दर्शनं जन्मांतरेऽपि तन्मुक्तिकारणं कारयामासैव तथैव रहूगणे ज्ञानित्वात्सात्त्विके राजत्वोचितशिबिकां वाहयत्यपि कृपां चकारेति तत्र रजस्तमसोः प्रकाशकत्वाभावादारात्सत्त्वस्य तु प्रकाशकत्वाद्रहूगण एव भरतस्य भक्तिज्ञानादिप्रकाशो न पूर्वयोरिति ज्ञापयंस्तदुपाख्यानमारभते—अथेति कदाचिदर्थे । परमहंसत्वेन सर्वत्र तस्य साम्यस्यौचित्येपि महाभागवतत्वादेव कृपा व्याख्येया भरतस्य भक्तिज्ञानवैराग्यादिकं भगवत्कृपया शतगुणी बभूवेति एतत्कथं ज्ञायते इत्येतदर्थं रहूगणोपाख्यानमिति च केचिदाहुः । शिबिका नरयानं "काश्यां पुर्यां नृयाने च शिबिका प्रोच्यते बुधैः" इति । उपसादितः प्रापितः उपलब्धः आसीदिति शेषः । एवं च वाक्यभेदेनाग्रिमस इत्यस्यापि न पौनरुक्त्यम् । पीवा पुष्टांगः । संहननांगो बलिष्ठश्च । अतदर्हः ब्राह्मण

यदा हि द्विजवरस्येषुमात्रावलोकानुगतेर्न समाहिता पुरुषगतिस्तदा विषमगतां स्वशिबिकां रहूगण उपधार्य पुरुषानधिवहत आह॥हे वोढारः साध्व तिक्रमत किमिति विषममुह्यते यानमिति ॥ २ ॥ अथ त ईश्वरवचः सोपालंभमुपाकर्ण्योपायतुरीयाच्छंकितमनसस्तं विज्ञापयांबभूवुः ॥ ३ ॥ न वयं नरदेव प्रमत्ता भवन्नियमानुपथाः साध्वेव वहामः ॥ अयमधुनैव नियुक्तोऽपि न द्रुतं व्रजति नानेन सह वोढुमु ह वयं पारयाम इति ॥ ४ ॥ सांसर्गिको दोष एव नूनमेकस्यापि सर्वेषां सांसर्गिकाणां भवितुमर्हतीति निश्चित्य निशम्य कृपणवचो राजा रहूगण उपासितवृद्धोऽपि निसर्गेण बलात्कृत ईषदुत्थितमन्युरविस्पष्टब्रह्मतेजसं जातवेदसमिव रजसाऽऽवृतमतिराह ॥ ५ ॥ अहो कष्टं भ्रातर्व्यक्तमुरु परिश्रांतो दीर्घमध्वानमेक एव ऊहिवान् सुचिरं नातिपीवा न संहननांगो जरसा चोपद्रुतो भवान् ॥ सखे नो एवापर एते संघट्टिन इति बहुविप्रलब्धोऽप्यविद्यया विहितद्रव्यगुणकर्माशयस्वचरमकलेवरेऽवस्तुनि संस्थानविशेषेऽहंममेत्यनध्यारोपितमिथ्याप्रत्ययो ब्रह्मभूतस्तूष्णीं शिबिकां पूर्ववदुवाह ॥ ६ ॥

महानुभावः शिबिकामुवाहेत्यन्वयः ॥ १ ॥ हिंसापरिहारार्थमिषुमात्रप्रदेशावलोकस्यानु पश्चाया गतिस्तस्या हेतुभूतायाः पुरुषाणां गतिर्न सम्यगाहिता एकरूपा नाभूत् ॥ २ ॥ सोपालंभं साक्षेपम् । सामदानभेददंडेषूपायेषु चतुर्थाच्छंकितचित्ताः ॥ ३ ॥ भवन्नियमानुपथास्त्वदाज्ञानुवर्तिनः । न पारयामो न शक्नुमः ॥ ४ ॥ कृपणानां वचो निशम्य सांसर्गिकः संसर्गनिमित्त एकस्यापि दोषः सर्वेषामेव भवितुमर्हतीति निश्चित्य रहूगण आहेत्यन्वयः । कथंभूतः ॥ उपासिता वृद्धा येन सोऽपि स्वभावेन बलात्परवशः कृतः सन् । कथंभूतं प्रत्याह न विस्पष्टं ब्रह्मतेजो यस्मिन् । भस्मनाच्छन्नमग्निमिव स्थितम् ॥ ५ ॥ भ्रातरिति संबोधनमाक्षेपाभिप्रायम् । व्यक्तं

त्वाच्छिबिकावहनायोग्यः तत्रापि महानुभवोऽतीवपूज्यतमः ॥१॥ उपधार्य ज्ञात्वा ॥२॥ अथ तदानीं, ते वोढारः, ईश्वरवचो राजवचनम् । तं राजानम् ॥३॥ नरदेवेति । अस्माकं नराणां त्वं देव एवातस्त्वदाज्ञां सर्वथा वयं गृह्णीम इति भावः ॥ ४ ॥ कृपणवचो दीनवाक्यम् ॥ ५ ॥ भ्रातः सख इत्यादिसंबोधनेन भ्रात्रादिभिः सह लोके विरोधो दृश्यते नान्यैरिति सूचितम् । विपरीतार्थकानि तेन श्रांतोऽसि यतोऽधुनैवात्र नियोजितः अतिपीवा भवसि दृढांगश्चासि युवा चासि एतेऽपरेऽन्ये तव संघट्टिनश्च तथा न संति तदपि विरुद्धगत्या वोढुं न शक्नोषीति मयि राजन्यपि दुष्टतां किं प्रकाशयसीत्यर्थः । अविद्यया मायया । अवस्तुनि मायिकत्वादनित्ये । यद्यपि भरतस्य तच्छरीरं शुकदेवादीनामिवाप्राकृतत्वादनश्वरं नित्यमेव तदपि तस्य तदानीमुत्पन्नप्रेमत्वादेव भगवंतं विनाऽन्यत्र स्वदेहादौ ममत्वासंभवात्तदानीं तेन देहेन साक्षात्सेवाऽलाभादौत्कंठ्यवृद्ध्यातिदैन्येनाहंत्वस्यार्पणात् सर्वज्ञत्वेऽपि तत्र स्वदेहे प्राकृतत्वभानमेवातस्तत्संमत्या श्रीशुकदेवेनापि तत्प्राकृतमिव वर्णितम् । वस्तुतस्तु-स्वसंमत्या तदप्राकृतमेव व्याख्यातम् । सा व्याख्या च यथाऽविद्यया मायया न विहिता द्रव्यगुणकर्माशया यत्र तथाभूते स्वस्य चरमेऽवशिष्टे पूर्वपूर्वेभ्यो नष्टेभ्यः कलेवरेभ्योऽवशिष्टेऽनश्वरे इत्यर्थः । यद्वाऽसुष्ठु अचरमेऽनिकृष्टे कलेवरे कर्मारब्धत्वाभावाद्वस्तुनि परमसत्ये सम्यगवस्थानविशेषो वैकुंठलोको यस्य

अथ पुनः स्वशिबिकायां विषमगतायां प्रकुपित उवाच रहूगणः॥किमिदमरे त्वं जीवन्मृतो मां कदर्थीकृत्य भर्तृशासनमतिचरसि प्रमत्तस्य च ते करोमि चिकित्सां दंडपाणिरिव जनताया यथा प्रकृतिं स्वां भजिष्यस इति ॥ ७ ॥ एवं बह्वबद्धमपि भाषमाणं नरदेवाभिमानं रजसा तमसाऽनुविद्धेन मदेन तिरस्कृताशेषभगवत्प्रियनिकेतं पंडितमानिनं स भगवान् ब्राह्मणो ब्रह्मभूतः सर्वभूतसुहृदात्मा योगेश्वरचर्यायां नातिव्युत्पन्नमतिं स्मयमानं इव विगतस्मय इदमाह ॥ ८ ॥

निश्चितमुरु अधिकं परिश्रांतोऽसीत्यादीनि विपरीतार्थानि षड्वाक्यानि । ऊहिवान्प्रापितवान् । तत्रापि सुचिरम् । जरसा च वृद्धत्वेन । संघट्टिनः सहचराः । बहु यथा भवत्येवं विप्रलब्धोऽपि वक्रोक्त्योपहसितोऽपि तूष्णीमुवाहेत्यन्वयः । तूष्णींभावे हेतुः । अविद्यया रचिता द्रव्यादयो यस्मिंस्तस्मिन्स्वचरमकलेवरे नाध्यारोपितो मिथ्याप्रत्ययो येन । तत्र द्रव्याणि महाभूतानि । गुणा इंद्रियाणि । कर्माणि पुण्यपापानि । आशयोंतःकरणम् । यतो ब्रह्मभूतः ॥ ६ ॥ मामनादृत्य भर्तुः स्वामिनो मम शासनमाज्ञामतिक्रामसि चिकित्सां शास्तिम् । दंडपाणिर्यमो यथा जनसमूहस्य शास्तिं करोति तथा । स्वां प्रकृतिमप्रमत्तताम् ॥७॥ अबद्धमनन्वितम् । नरदेवोऽहमित्यभिमानो यस्य तम् । अनुविद्धेन संगुणितेन । तिरस्कृतोऽशेषः संपूर्णो भगवतः प्रियो निकेत आश्रयो येन तम् । यद्वा । अशेषाणां भगवत्प्रियाणां निकेतः सर्वेषां भूतानां सुहृच्च आत्मा च योगेश्वराणां चर्या जडादिवदाचरणं तस्यां नात्यंतं व्युत्पन्ना परिचिता मतिर्यस्य स तम् । स्मयमानो हसन्निवेति मुखप्रसत्तिर्द्योत्यते । विगतस्मयो गतगर्वः ॥ ८ ॥

तस्मिन्नपि प्रेमोत्थदैन्योदयादेव प्राकृतदेह इवाहं ममेति नाध्यारोपितो मिथ्याप्रत्ययो येन स तथेति ॥ ६ ॥ अथ तदुपालंभानंतरम् ॥ ७ ॥ एवमिति शुकवाक्यं संगुणितेन वर्द्धितेन । आश्रयो भरताख्यो येन तम् । एवं व्याख्याने भक्तांतरेषु भगवत्कर्तृकप्रियत्वाभावः सेत्स्यतीत्यत आह–यद्वेति । सर्वभगवद्भक्ताश्रयीभूतस्तत्कालीनहरिभक्तमुख्य इति यावत् । पुनस्तिरस्कृतपदेन बहुव्रीहिः कार्यः यद्वा–अशेषो न्यूनत्वविधुरोऽर्थात्परिपूर्णतमश्चासौ भगवांश्चेति अशेषभगवाञ्छ्रीकृष्ण एव । "एते चांशकलाः सर्वे कृष्णस्तु भगवान्स्वयम्" इत्युक्तेः तस्य प्रियनिकेतः "न ब्राह्मणान्मे दयितं रूपमेतच्चतुर्भुजम्" इति श्रीदशमे श्रीमुखोक्तेश्च ब्राह्मणदेह एव । यद्वा–भगवान्निकेतो येषां ते जीवात्मानो भगवन्निकेता अशेषाश्च भगवन्निकेता अशेषभगवन्निकेता अशेषभगवन्निकेतास्तेषु प्रियोऽशेषभगवन्निकेतप्रियः । यद्वा–अशेषाश्च ये भगवत्प्रिया अशेषभगवत्प्रियाः सर्वे देवाः 'प्रिया देवाः सदा मम' इति श्रीभगवदुक्तेस्तेषां निकेतो ब्राह्मणदेह एव । "सर्वा देवता वेदविदि ब्राह्मणे सन्तीति" इति श्रुतेः । पुनस्तिरस्कृशब्देन बहुव्रीहिः कार्यः । यद्वा–भगवतः प्रियो भगवत्प्रियः स चासौ निकेतो देहो ब्राह्मणदेहः । 'ब्रह्मज्ञो ब्राह्मणप्रियः' इति सहस्रनामसु पठितत्वात् । अशेषेषु सर्वेषु भगवत्प्रियनिकेतोशेषभगवत्प्रियनिकेतस्तिरस्कृतोऽशेषभगवत्प्रियनिकेतो भरताख्यब्राह्मणदेहो येन तं "निकेतं स्याद् द्वयोर्देहे पुरे स्थाननिवासयोः" इति कोशात् । यद्वा–सर्वभूतानां सुहृदात्मा स्वरूपं यस्य स तथा । अपराधिन्यपि कृपालुरिति भावः । पंडितमानिनं तस्य किंचि

ब्राह्मण उवाच ॥ त्वयोदितं व्यक्तमविप्रलब्धं भर्तुः स मे स्याद्यदि वीर भारः ॥ गंतुर्यदि स्यादधिगम्यमध्वा पीवेति राशौ न विदां प्रवादः ॥ ९ ॥ स्थौल्यं कार्श्यं व्याधय आधयश्च क्षुत्तृड्भयं कलिरिच्छा जरा च ॥ निद्रा रतिर्मन्युरहंमदः शुचो देहेन जातस्य हि मे न संति ॥ १० ॥ जीवन्मृतत्वं नियमेन राजन्नाद्यंतवद्यद्विकृतस्य दृष्टम् ॥ स्वस्वाम्यभावो ध्रुव ईड्य यत्र तर्ह्युच्यतेऽसौ विधिकृत्ययोगः ॥ ११ ॥

तत्र वक्रोक्त्या यदुक्तं त्वं न श्रांतो न च दीर्घमध्वानमागत इति तत्रोत्तरमाह।त्वया यदुदितमुक्तं श्रमादि नास्तीति तद्व्यक्तं स्फुटं तत्तथैव। अविप्रलब्धं विप्रलंभो न भवति। तदेवाह। हे वीर यदि भारो नाम कश्चित्स्यात्स च भर्तुर्वोढुर्देहस्य यदि स्यात् स च मे यदि प्रसक्तः स्यात्तर्हीदानीं भाराभावाद्विप्रलंभः स्यान्न त्वेतदस्ति भारस्य वोढुश्चानिरूप्यत्वान्मम च तत्संबंधाभावात् । तथा गंतुरधिगम्यं प्राप्यमध्वा वा यदि स्यात् । अद्धेति पाठे साक्षात्परमार्थतः तच्च मे यदि स्यादित्यादि योज्यम् । यत्त्वयोक्तं नातिपीवेति तत्राह । चेतनमुद्दिश्य त्वं पीवेति प्रवादो विदां विदुषां न भवति किं तु मूर्खाणाम् । यतोऽयं प्रवादो राशौ भूतसंघे देहे एव न त्वात्मनि । देह एव पीनो नाहमित्यर्थः ॥ ९ ॥ एतत्प्रपंचयति । स्थौल्यमिति । कलिः कलहः । अहंकारेण मदश्च । देहेन सह तदभिमानेन जातस्य हि भवंति । मम तु निरभिमानस्य न संति । यद्वा । देहे जाते यो जातस्तस्यैव तानि मम तु तत्र न जातस्य न संति ॥ १० ॥ यच्चोक्तं जीवन्मृतोऽसीति तत्राप्याह । जीवन्मृतत्वं न केवलं मम किं तु विकृतस्य सर्वस्यापि परिणामिनो दृष्टम् । यद्यस्माद्विकृतं प्रतिक्षणमाद्यंतवत् । यदुक्तं भर्तृशासनमतिचरसीति तत्राह । स्वं च स्वाम्यं च तयोर्भावः सत्ता हे ईड्य यत्र पक्षे ध्रुवो यदि व्यवस्थितः स्यादित्यर्थः । तर्हि विधिर्नियोगः कृत्यं कर्म तयोर्योगो ध्रुव उच्यते उचितो भवति । उच समवाये इति धातुः । यदि तु तव राज्यभ्रंशो मम च राज्यं स्यात्तदा सर्वमेतद्वि

न्मात्रज्ञानित्वं सर्वज्ञत्वेन ज्ञात्वेत्यर्थः । स्मयमान इत्यसी स्वं ज्ञानिनं जानात्यथ चाज्ञानिवदुक्तिरिति इवेति तस्य बहिरनिष्क्रमात् ज्ञानित्वगर्वरहितः ॥ ८ ॥ ज्ञानिमानिनमेनं ज्ञानेनैव परास्तीकृत्य कृपयिष्यामीत्यभिप्रायवानाह–तत्रेति । तत्र मयि । विप्रलंभो विसंवाद आक्षेपो न किन्तु यथार्थमेव । तदेव यथार्थत्वमेव । हे वीरेति । वाक्यवीर एव त्वमसि न तु ज्ञानवीरोऽसि । यद्वा–वीन् एकदेशन्यायेन विदुष ईरयति. कंपयति पंडितमानित्वेनेति वीरो न तु पंडितोऽसीति भावः । यदि स्यादित्यस्य विवरणं स च भारो यदि मे प्रसक्तः स्यादिति न त्वेतदस्ति भारेण मम देहाद्भिन्नस्य चिद्रूपस्य संबंधो नास्तीत्यतो नाहं वोढा भवामीति भावः । भारवोढ्रोरनिरूप्यत्वं चाग्रे ‘ अयं जनो नाम चलन्पृथिव्याम् ’ इत्यग्रिमाध्याये स्वयमेव वदिष्यति । प्राप्यं स्थानादिकमध्वा मार्गो वा । इत्यर्थ इति । “ अत एव ह्रस्वम् ” इत्यादिश्रुतेरिति भावः । यद्वा–राशौ भूतानां राशिरूपे देहे विदुषां प्रवादो न भवति किन्तु सत्यमेव पीवत्वम् । मयि चेतनस्वरूपे तु प्रवादः कलह एवेति भावः ॥ ९ ॥ न केवलं पीवत्वमेव मे नास्त्यपि त्वन्येपि देहधर्मा मे न संतीत्याह–एतत्प्रपंचयंतीति । स्थौल्यमिति । देहाभिमानस्तु देहेन सह न जायते तस्य चिरपश्चाद्भावित्वदर्शनादिति चेत्तत्राह–यद्वेति । यो जातो जीवस्तस्यैव तानि स्थौल्यादीनि मम तु साक्षाद्ब्रह्मरूपत्वेन मयाऽजातत्वात्तानि न संति “ न जायते जायमाने शरीरे ” इत्यादिश्रुतेः ॥ १० ॥ सत्ता विद्यमानत्वम् । ध्रुवः स्थिरः । इत्यर्थ इति । व्यवपूर्वस्यतेर्निश्चयार्थत्वादयमर्थः । यद्वा–विधिकृतो योगः शिबिकावहनादिकर्मणि योगः । अयं जनो युज्यतामित्युच्यते कथ्यते इत्यर्थः । इत्यर्थ इति । त्वामहं शिबिकां वाहयन् किमिदमरे इत्यादि कथयेयमित्याशयः । राजन्निति । रजोगुणव्याप्तबुद्धित्वात्त्वामेतन्न भासत इति भावः । ईड्येत्यपि विपरीतलक्षणयोपहासा

विशेषबुद्धेर्विवरं मनाक् च पश्यामि यन्न व्यवहारतोऽन्यत्॥क ईश्वरस्तत्र किमीशितव्यं तथापि राजन् करवाम किं ते॥१२॥उन्मत्तमत्तजडवत्स्वसं स्थां गतस्य मे वीर चिकित्सितेन ॥ अर्थः कियान्भवता शिक्षितेन स्तब्धप्रमत्तस्य च पिष्टपेषः॥१३॥श्रीशुक उवाच ॥ एतावदनुवादपरिभाषया प्रत्युदीर्य मुनिवर उपशमशील उपरतानात्म्यनिमित्त उपभोगेन कर्मारब्धं व्यपनयन्राजयानमपि तथोवाह ॥ १४ ॥ स चापि पांडवेय सिंधुसौवी रपतिस्तत्त्वजिज्ञासायां सम्यक्छ्रद्धयाऽधिकृताधिकारस्तद्धृदयग्रंथिविमोचनं द्विजवच आश्रुत्य बहुयोगग्रंथसंमतं त्वरयाऽवरुह्य शिरसा पादमूलमुप सृतः क्षमापयन् विगतनृपदेवस्मय उवाच ॥ १५ ॥

परीतं स्यादित्यर्थः ॥ ११ ॥ ननु यावद्राजाऽहं तावत्तव स्वामी भवाम्येवेति चेत्तत्राह । विशेषो राजभृत्यादिभेदस्तद्बुद्धेर्विवरमवकाशं व्यवहारादन्यन्न पश्याम । मनाक् च ईषदपि । अथापि तवायमभिमानश्चेत्तर्हि ब्रूहि किं ते करवामेति ॥ १२ ॥ यत्तूक्तं प्रमत्तस्य ते चिकित्सां करोमि यथा स्वां प्रकृतिं भजिष्यस इति तत्राह । उन्मत्तादिवद्वर्तमानस्य वस्तुतः स्वसंस्थां ब्रह्मभावं गतस्य भवता कृतेन चिकित्सितेन दंडेन शिक्षितेन वा कियानर्थः मुक्तस्यार्थानर्थयोरसंभवात् । यदि पुनरहं न मुक्त किंतु प्रमत्तः स्तब्ध एव तथापि मम शिक्षादिकं पिष्टपेषणवद्व्यर्थमित्यर्थः । नहि जडस्वभावः शिक्षयापि पटू कर्तुं शक्यत इति ॥ १३ अनुवादरूपया परिभाषया भाषणेन तं प्रत्युत्तरं दत्त्वा उपरतमनात्म्ये देहात्मत्वे निमित्तमविद्या यस्य । आरब्धफलं कर्म क्षपयन् ॥ १४ ॥ हे पांडवेय सम्यग्या श्रद्धा तयैव तत्त्वजिज्ञासायां प्राप्तो धिकारो येन । यथा दर्शपूर्णमासाधिकृतस्यैव गोदोहनेन पशुकामस्यापः प्रणयेदिति गुणफलसंबंधेऽप्याधिकारः । एवं सात्त्विकश्रद्धायामधिकृतस्यैवास्यामधिकार इत्यर्थः ।

भिप्रायैव संबुद्धिः ॥ ११ ॥ अत्राशंकते—नन्विति । त्वां पृच्छामि क ईश्वरः । ईशितव्यं नियमनीयम् । तत्र ईश्वरत्वे सति । राजन्निति मूर्खेषु राजमानत्वादुक्तम् ॥ १२ ॥ कायिकेन वाचिकेन वा दंडेन कियानर्थः साधयितव्यः । इत्यर्थ इति । यथा पिष्टं वस्तु प्रहारेणाप्यपिष्टं न भवति किं त्वतिपिष्टं भवति तथा प्रमत्तस्य दंडेन प्रमत्तता न शाम्यति किं त्वतिप्रमत्तता स्यादिति भावः ॥ १३ ॥ ननु स्वदेहाभिमा नं विना तद्वचोनूच्य सोढुमसमर्थ इव समादधानः कथं तया प्रत्युक्तव्यस्तत्राह—उपभोगेन राजोचितैश्वर्यभोगेन प्रापितं यद्बहुगणस्य प्रारब्धं कर्म तदपि व्यपनयन् व्यपनेतुमनुवादमिषेण कृपया स्वोपदिष्टतदनुष्ठितया भक्त्यैव तत्प्रारब्धमपि दूरीकर्तुमित्यर्थः । यद्वा—प्रेमोत्थदैन्येन स्वस्य भक्तत्वामननात् उपभोगेन शिबिकाभारोद्वहनादिना प्रारब्धफलं कर्म व्यपनयन्व्यपनयामीति मनसि भावयन्नित्यर्थः ॥ १४ ॥ हे पांडवेयेति । अहो ज्ञानार्थं कपिलाश्रमं गच्छतः कथमित्थं ब्राह्मणवाहने प्रमाद इति विमृशतं परीक्षितं प्रति विरक्तस्यापि वने वसतोपि पांडोस्तव प्रपितामहस्य । राजस्वभावाद्धृतमृगरूपद्विजहननप्रवृत्तिवदस्यापि तादृश स्वभावत्वेन नैतदद्भुतमित्यभिप्रायः । नन्वेवं प्रमत्तस्य कथं तत्त्वजिज्ञासाधिकारस्साधनचतुष्टयसपन्नप्रमातुरेव वेदांतश्रवणाधिकारात् । “ साधनचतुष्टयसंपन्नः प्रमाताधिकारी ” इति भगवत्पूज्यपादैरुक्तत्वादिति तत्राह— सम्यक्छ्रद्धयेति । ‘सर्वे पदा हस्तिपदे निमग्नाः’ इति न्यायेन सम्यक्श्रद्धायामेव सर्वसाधनानां निविष्टत्वाच्छ्रद्धां विना कर्मफलं न सूत इत्यभियुक्तोक्तेः । “ अश्रद्धया हुतं दत्तम् ” इति श्रीगीतोपनिषदुक्तेश्च । श्रद्धैव

कस्त्वं निगूढश्चरसि द्विजानां बिभर्षि सूत्रं कतमोऽवधूतः॥कस्यासि कुत्रत्य इहापि कस्मात् क्षेमाय नश्चेदसि नोत शुक्लः ॥१६॥ नाहं विशंके सुरराजवज्रान्न त्र्यक्षशूलान्न यमस्य दंडात् ॥ नाग्न्यर्कसोमानिलवित्तपास्त्राच्छंके भृशं ब्रह्मकुलावमानात् ॥१७॥ तद् ब्रूह्यसंगो जडवन्निगूढविज्ञानवीर्यो विचरस्यपारः॥ वचांसि योगग्रथितानि साधो न नः क्षमं ते मनसाऽपि भेत्तुम् ॥१८॥ अहं च योगेश्वरमात्मतत्त्वविदां मुनीनां परमं गुरुं वै ॥ प्रष्टुं प्रवृत्तः किमिहारणं तत् साक्षाद्धरिं ज्ञानकलाऽवतीर्णम् ॥ १९ ॥ स वै भवाँल्लोकनिरीक्षणार्थमव्यक्तलिंगो विचरत्यपिस्वित् ॥ योगेश्वराणां गतिमंधबुद्धिः कथं विचक्षीत गृहानुबंधः ॥ २० ॥

बहुयोगग्रंथसंमतं द्विजस्य तद्वचः श्रुत्वा विगतो नृपदेवोऽधिराज इति गर्वो यस्य ॥ १५ ॥ द्विजानां मध्ये कतमः । यतः सूत्रमुपवीतं बिभर्षि । यद्वा । दत्तात्रेयादीनां मध्ये कतमोऽवधूतः । इहापि कस्माद्धेतोः प्राप्तः । नोऽस्माकं क्षेमाय चेत्प्राप्तस्तर्हि शुक्लः कपिलो मुनिर्न भवसि किम् । उतेति वितर्के ॥ १६ ॥ किमनया चिंतया शिबिकां तावद्वहामीति चेदत आह । नाहमिति । वित्तपः कुबेरः ॥१७॥ यस्माद्भृशं शंके तत्तस्मात्कस्त्वमित्यादिप्रश्नानामुत्तरं ब्रूहि । निगूढं पिहितं विज्ञानरूपं वीर्यं प्रभावो येन । अपारोऽनंतमहिमा । तत्र हेतुः । नो मनसापि भेत्तुं न क्षमं न शक्यम् । किं भेत्तुमित्यपेक्षायामाह ते वचांसीति । यद्वा मनसा युक्ताः सूक्ष्मदृष्टयोऽपि भेत्तुं न शक्नुवंतीत्यर्थः ॥ १८ ॥ स्वस्य ज्ञानार्थितां दर्शयति । अहं चेति इह संसारे यदरणं शरणं तत्किमिति प्रष्टुं प्रवृत्तोऽस्मि । ज्ञानशक्त्याऽवतीर्णं कपिलम् ॥ १९ ॥ स एव भवान्किंस्विदेवं

सर्वत्र मुख्यं साधनमिति । तथा च श्रद्धासंपन्नत्वेन तस्य तदधिकारित्वेन विकल्पो न्याय्य इति दर्शपूर्णमासयज्ञाधिकृतस्य पुरुषस्य पशुकामसत्त्वे गुणफलविधावपि तदधिकारो यथा गोदुह्यते यस्मिंस्तद्गोदोहनं पात्रं तेन पशुकामस्यापो जलानि कर्मण्युपयोगार्थं प्रणयेदानयेदिति गुणः साधनं फलं कर्मजन्यं स्वर्गादि । यथा "दध्ना यजेत्पुष्टिकामः" इह दधि गुणः पुष्टिः फलमिति । इत्यर्थ इति । सम्यक्श्रद्धा सात्त्विकश्रद्धा तद्युक्त एव जिज्ञासाधिकारी तस्यैव ज्ञानप्राप्तियोग्यत्वस्य 'श्रद्धावाल्लँभते ज्ञानम्' इति भगवता प्रतिपादितत्वादिति भावः । बहुयोगग्रंथसंमतमनेकयोगशास्त्रसिद्धम् । योगोत्र ज्ञानयोग एव प्रकृतत्वात् ॥ १९ ॥ यद्वा—पक्षांतरम् । कस्य पुत्रोऽसि कुत्रत्यः किंदेशजन्मासि । शुक्लो नारायणस्तदवतारः कपिलोसि ॥ १६ ॥ नाहमिति । सुरराजादयो वज्रादिभिर्युधि मां हंतुं यदि प्रवर्त्तेरंस्तदपि स्वस्य वीरत्वस्वभावान्न शंके प्रत्युतोत्साहसुखमेव प्राप्नोमीति भावः । यद्वा—सुरराजादिषु जातापराधादहं तेषां कुपितानां वज्रादिप्रहारादपि न शंक इत्यर्थः ॥ १७ ॥ कस्त्वं ब्रूहीति तव शिबिकावाहकोऽस्मीति चेदलमतः परमपि मद्विडंबनैस्त्वामहं कमपि महायोगींद्रमज्ञासिषमेवेत्याह । तद्ब्रूहीति । तत्र अपारमहिमत्वे वचांसि भेत्तुं क्षममित्यन्वयस्यार्षत्वाश्रयणं विनाऽनुचितं मत्वाह—यद्वेति । इत्यर्थ इति । यत्रातीवसूक्ष्मबुद्धयोप्यसमर्थास्तत्र कोहं वराक इति भावः । विश्वनाथः—वचांसि योगैर्ग्रथितान्यपि योगेश्वराणामुपदेशवाक्यानि कर्तॄणि नोऽस्मानतिकठोरान् भेत्तुं भिन्नसंशयीकर्तुं न क्षमंते न शक्नुवंति । किं भूतान्मनसा सहितानवहितमनसोऽपि तानि जिघृक्षूनपीत्यर्थः । तव त्वेतावता प्रतिवचनेनैव भिन्नसंशयोस्मि संवृत्त इति भावः ॥ १८ ॥ योगेश्वराणामतिमुख्य एव मत्संशयं छेत्तुं समर्थ इति द्योतयन्स्वस्य ज्ञानार्थितामाह—ज्ञानकलया ज्ञानकलायै ज्ञानशक्त्या ज्ञानज्ञापनाय वाऽवतीर्णं "कला रक्षाषोडशांशशक्तिबोधनकृपामायासु" इत्यभिधानात् ॥ १९ ॥ लोकानां साध्वसाधूनां निरीक्षणार्थं परीक्षणार्थम् । अंधबुद्धिर्व्यवहारासक्ति

दृष्टः श्रमः कर्मत आत्मनो वै भर्तुर्गंतुर्भवतश्चानुमन्ये ॥ यथाऽसतोदानयानाद्यभावात् समूल इष्टो व्यवहारमार्गः ॥ २१ ॥ स्थाल्यग्नितापात्प यसोऽभितापस्तत्तापतस्तंडुलगर्भरंधिः ॥ देहेंद्रियास्वाशयसन्निकर्षात्तत्संसृतिः पुरुषस्यानुरोधात् ॥ २२ ॥ शास्ताऽनुगोप्ता नृपतिः प्रजानां यः किंकरो वै न पिनष्टि पिष्टम् ॥ स्वधर्ममाराधनमच्युतस्य यदीहमानो विजहात्यघौघम् ॥ २३ ॥ तन्मे भवान्नरदेवाभिमानमदेन तुच्छीकृत सत्तमस्य ॥ कृषीष्ट मैत्रीदृशमार्तबंधो यथा तरे सदवध्यानमंहः ॥ २४ ॥

विचरति । गृहाविष्टः कथं विचक्षीत पश्येत् ॥ २० ॥ एवं तत्स्वरूपं पृष्ट्वा तदुक्तोत्तराण्याक्षिपति । तत्र यदुक्तं मम श्रमो नास्तीति तत्राह । दृष्ट इति । आत्मनो मे । अनुमन्ये अनुमिमे । अनुमानं चैवम्—भवान्भारवाहनादिना श्रांतः कर्तृत्वात् । यः कर्ता स श्राम्यति । यथाऽहं युद्धादिकर्तेति । नन्विदं व्यवहारमात्रं न तु सत्यम् । यदुक्तं व्यवहारतोऽन्यन्न पश्यामीति तत्राह । यथेति । व्यवहारमार्गः प्रपंचः समूलः सप्रमाणक एव इष्टः । यथा यथावत् । असता घटादिनादकोनयनादे रभावात् । एवं प्रयोगः—प्रपंचः सत्यः । अर्थक्रियाकारित्वात् यः पुनरसत्यः नासावर्थक्रियाकारी । यथा मिथ्याघटादिरिति ॥ २१ ॥ यदुक्तमुपाधिधर्माऽस्थौल्या दयो मे न वस्तुतः संतीति तत्रौपाधिकत्वेऽपि सत्यत्वं किं न स्यादित्याह । स्थाल्याः अग्निना तापात्तन्मध्यवर्तिनः क्षीरस्य तापः तस्य तापात्तंडुलानां बहिर्भागस्य ततस्तद्गर्भस्य च रंधिः पाकः । न चात्र किंचिन्मिथ्या । एवं देहादिभिः सन्निकर्षात्संबंधात्तन्निमित्ता संसृतिः पुरुषस्य भवति । असवः प्राणाः आशयो मनः अनुरोधादु पाधिधर्मानुवृत्तेः । तथाहि । निदाघादिना देहे तप्ते इंद्रियाणां तापस्ततः प्राणस्य ततो मनस इत्येवं यथायथमूह्यम् ॥ २२ ॥ यदुक्तं स्वस्वाम्यभावो ध्रुव इति तत्राह । शास्तेति अध्रुवत्वेऽपि यदा यो नृपतिः स प्रजानां शास्ता गोप्ता च । यच्चोक्तं स्तब्धादेः शिक्षा पिष्टपेष इति तत्राह । योऽच्युतस्य किंकरः स पिष्टं न पिनष्टि निष्फलं न करोति । स्तब्धत्वाद्यनपगमेऽपि शास्तुरीश्वराज्ञासंपादनेनैव सफलत्वात्तदाह स्वधर्मरूपमच्युतस्याराधनं कुर्वन्यस्मादघौघं विजहाति ॥ २३ ॥ यस्मादेवं मम त्वदुक्तं विपरीतं प्रतिभाति तत्तस्मान्नरदेवाभिमानमदेन तुच्छीकृतास्तिरस्कृताः सत्तमा भवादृशा येन तस्य मे मैत्रीदृशं स्नेहयुक्तां दृष्टिं कृषीष्ट करोतु सतामवज्ञारूपं पापं यथा

तर्वीः ॥ २० ॥ तत्स्वरूपं जडविप्रस्वरूपम्। तत्र तेषूत्तरेषु । अत्राक्षिपति—व्यावहारिका एवेत्थं जल्पंति न तु पारमार्थिका इति चेत्—व्यवहारमार्गस्यापि निर्मूलीकर्तुमशक्यत्वादित्याह—यथेति । घटादिकरणकं जलमाहरे त्युक्तेऽसता घटादिनोदकानयनादेरदृष्टत्वाद्व्यवहारः सत्य एवेति ॥ २१ ॥ उपाधिधर्मा देहधर्माः ॥२२॥ तदा शास्ता गोप्ता भवत्येव किंकरो मद्विधः । तत् ईश्वराज्ञासंपादनमेव । न हन्यंते समूलानि विना ज्ञानमित्यघानि दुःखानि पापानि वा तेषामोघं समूहम् । एतेन मम धर्मस्य शासनादिलक्षणस्य त्वद्दृष्ट्या विगुणत्वेऽपि मम तु श्रेयस्करमेव तत् 'श्रेयान्स्वधर्मो विगुणः' इति श्रीमुखोक्तेः ॥ २३ ॥ नरदेवोऽहमित्यभिमानेन यो विज्ञंमन्यत्वादि मदस्तेन तुच्छीकृता इमे किं जानंतीत्यनादृताः । स्नेहयुक्तां दुर्जीवोऽयं नरके पतिष्यतीति विचार्य प्रीतियुक्ताम् । आर्त्तानां संसृतिपीडितानां मादृशानां बंधो प्रीतिकर्तः त्वादृशाः सन्त एव संसृतेर्बिभ्यतां रक्षका इति

न विक्रिया विश्वसुहृत्सखस्य साम्येन वीताभिमतेस्तवापि ॥ महद्विमानात् स्वकृताद्धि मादृक् नंक्ष्यत्यदूरादपि शूलपाणिः ॥ २५ ॥ इति श्रीमद्भा० महापु० पंचमस्कंधे रहूगणजडभरतसंवादो नाम दशमोऽध्यायः ॥ १० ॥ ब्राह्मण उवाच ॥ अकोविदः कोविदवादवादान्वदस्यथो नातिविदां वरिष्ठः ॥ न सूरयो हि व्यवहारमेनं तत्त्वावमर्शेन सहामनंति ॥ १ ॥ तथैव राजन्नुरुगार्हमेधवितानविद्योरुविजृंभितेषु ॥ न वेदवादेषु हि तत्त्ववादः प्रायेण शुद्धो नु चकास्ति साधुः ॥ २ ॥

तरिष्यामि ॥ २४ ॥ ननु ममावज्ञाकृतविकाराभावात्कुतः पापं तत्राह । नेति । यद्यपि तव विक्रिया नास्ति । विश्वस्य सुहृच्चासौ सखा च तस्य । अतः सर्वत्र साम्येन स्वदेहे विगताभिमानस्य तथापि महतामवमानान्मादृशो विनंक्ष्यति । अदूरात्क्षिप्रम् । शूलपाणिरिवातिसमर्थोऽपीत्यर्थः ॥ २५ ॥ इति पंचमे टीकायां दशमोऽध्यायः ॥ १० ॥ एकादशेथ संपृष्टो रहूगणमहीभृता ॥ उपादिशत्परं ज्ञानं स योगीति निगद्यते ॥ १ ॥ अकोविदोऽविद्वानपि त्वं कोविदानां वादा उद्ग्रहणिकास्तत्तुल्यान्वादानेव वदसि । अथो अतः अत्यंतं विदुषां मध्ये श्रेष्ठो न भवसि । कुतः । हि यस्मात् यं स्वामिभृत्यादिलौकिकव्यवहारं त्वं सत्यमात्थ । एनं सूरयस्तत्त्वविचारेण सह न वदंति किं त्वविचारसुंदरं वदंति अतो न सत्यः ॥ १ ॥ वैदिकोऽपि कर्मव्यवहारो न सत्य इत्याह । तथैवेति । उरवो गार्हा गृहसंबंधिनो मेधा यज्ञास्तेषां वितानो

भावः । 'संतोऽर्वाग्बिभ्यतोऽरणम्' इत्येकादशे श्रीकृष्णेनैवोद्धवं प्रति वक्ष्यमाणत्वात् । 'अंहो दुरितदुष्कृतम्' इत्यमरः ॥ २४ ॥ अत्राक्षिपति—त्वत्कृतेन तिरस्कारेण मादृशां दुःखं नोत्पद्यते कुतस्तवापराध इत्येवम् । नन्विति । इत्यर्थ इति । इह लुप्तोपमा बोध्येति भावः । इत्यभिप्रेत्यैव "सेर्ष्यं महापुरुषपादपांशुभिर्निरस्ततेजस्सु" इति सत्योक्तम् ॥ २५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे दशमोऽध्यायः ॥ १० ॥ अथ रहूगणप्रार्थनोत्तरम् । परं संसृतिवारकम् ( १ ) उद्ग्रहणिका उदाहरणानि हठान्निजदक्षसाधनवाक्यानि वा । व्यवहारं व्यावहारिकं वस्तु च तत्त्वविचारेण सम्यग्विचारेण तत्त्ववस्तुना च नामनंति दृष्टान्तादिना च नाम्यस्यंति । तयोः परस्परातिवैधर्म्यात् । तथा हि स्थालीतापात्पयस्तापस्तत्तापात्तण्डुलताप इति तंडुलस्य जडस्य स्थाल्यादिभिर्जडैर्वह्निनापि जडेन यथा संसर्गस्तथा देहेंद्रियादिभिर्जडैर्मुक्तजीवस्य चिद्वस्तुनः संसर्गाभावादेव देहादिश्रमैर्न श्रमः सिध्यति बद्धजीवस्य तु जडदेहाध्यासाज्जडत्वेन तैर्भवत्येव श्रम इति बद्धजीवैर्युष्माभिर्मुक्तजीवानामस्माकं सादृश्यासंभवादनुमानं न घटत इति ॥ १ ॥ ननु मीमांसकाः कर्मफलात्स्वर्गसुखादतिरिक्तं पुरुषार्थं न मन्यंत इत्यतः किं तत्त्ववादेनेति चेत्सत्यं तेष्वज्ञेष्वनधिकारिषु तत्त्वोपदेशो नैव समुचितः । तथैवेति । यथैव भवद्विधानां दृष्टफलेषु व्यवहारकर्मसु तथैवादृष्टफलेषु वेदवादेषु तत्त्ववादः परब्रह्मस्वरूपविषयज्ञानसिद्धांतो न चकास्ति । अत्र प्रमाणमाह—तथा चेति । इह ब्रह्मणि । किं च "नापि नाना—नानात्वं नास्ति" इति श्रुत्या ब्रह्मणि नानात्वनिषेधेन शुद्धत्वं प्रतिपादितं तच्च वेदवादेषु नास्ति । "स्वर्गकामो यजेत" इत्यादिकर्मप्रतिपादकानां "ब्रह्मविदाप्नोति परम्" इत्यादिब्रह्मज्ञानप्रतिपादकानां च यथैकवाक्यत्वं तथा न प्रकाशते इत्यर्थः । किं च शुद्धो हिंसाशून्योपि न प्रतीयते "अग्नीषोमीयं पशुमालभेत" इति श्रुतेः । यद्यपि "या वेदविहिता हिंसा न सा हिंसेति कीर्त्यते" इत्युक्तेर्विधिविहितालंभनस्य हिंसात्वं नास्ति तथापि प्राणवियोगानुकूलव्यापारस्यैव हिंसात्वेन तत्रापि सात्त्वेवेति । "रागादिशून्यश्च न श्येनेनाभिचरन्यजेत" इति श्रुतेर्द्वेषस्य प्रतिपादितत्वान्न हि द्वेषं विनाभिचारे प्रवृत्तिः । किञ्च "पुत्रकामः प्राजापत्या यजेत" इति श्रुते रागस्यापि प्रतिपादितत्वाच्च रागं विना पुत्रेष्ट्यादावप्रवृत्तेर्दर्शनाच्च रागद्वेषयोरनित्यत्वेन तत्कृतकर्मणां सुत

न तस्य तत्त्वग्रहणाय साक्षाद्वरीयसीरपि वाचः समासन् ॥ स्वप्ने निरुक्त्या गृहमेधिसौख्यं न यस्य हेयानुमितं स्वयं स्यात् ॥ ३ ॥
यावन्मनो रजसा पूरुषस्य सत्त्वेन वा तमसा वाऽनुरुद्धम् ॥ चेतोभिराकूतिभिरातनोति निरंकुशं कुशलं चेतरं वा ॥ ४ ॥ स वासनात्मा विषयोपरक्तो गुणप्रवाहो विकृतः षोडशात्मा ॥ बिभ्रत्पृथङ्नामभिरूपभेदमंतर्बहिष्ट्वं च पुरैस्तनोति ॥ ५ ॥ दुःखं सुखं व्यतिरिक्तं च तीव्रं कालोपपन्नं फलमाव्यनक्ति ॥ आलिंग्य मायारचितांतरात्मा स्वदेहिनं संसृतिचक्रकूटः ॥ ६ ॥

विस्तारस्तद्विषयासु वियासु उरु अधिकं विजृंभितेषु विलासितेषु वेदवादेषु तत्त्ववादो नु निश्चितं न चकास्ति न प्रकाशते । तथाच श्रुतिः । "नेह नानाऽस्ति किंचन" इत्यादि । शुद्धो हिंसादिशून्यः साधू रागादिशून्यश्च । प्रायेणेतीश्वरार्पितकर्मणां परमार्थफलत्वाभिप्रायेणोक्तम् ॥ २ ॥ ननु श्रुतवेदांतस्यापि पुंसः कर्मसु प्रवृत्तेः कथमसत्यता तत्राह । नेति साक्षाद्यथावत्तत्त्वज्ञानाय वरीयस्योऽपि वेदांतवाचस्तस्य न सम्यगासन्बभूवुः । स्वप्ने या निरुक्तिस्तया स्वप्नदृष्टांतेन दृश्यत्वादिहेतुना स्वयमेव हेयत्वेनानुमितं यस्य न स्यात् ॥ ३ ॥ एवं प्रपंचस्य सत्यत्वं तदुक्तं निराकृत्य संसारस्यापि तदुक्तां सत्यतां निराकर्तुं तस्य मनोनिमित्ततामाह । यावदित्यादिना यावत्समाप्ति । मनो यावद्रजआदिभिर्गुणैरनुरुद्धं वशीकृतं भवति तावत्तन्मनो निरंकुशं सत्पुरुषस्य कुशलं धर्ममितरमधर्मं वा आतनोति । कैः । चेतोभिर्ज्ञानेंद्रियैः आकूतिभिः कर्मेंद्रियैश्च ॥ ४ ॥ ततश्च धर्माधर्मवासनायुक्तं तदेवानेकदेहादिवैचित्र्यं करोतीत्याह । स इति । पुंस्त्वमात्मशब्दविशेषणत्वेन तन्मन इत्यर्थः । वासनायुक्त आत्मोपाधित्वादात्मा । अतो विषयैरुपरक्तोऽनुविद्धः । अतो गुणप्रवाहो गुणैरितस्ततश्चाल्यमानः । अत एव विकृतः कामादिपरिणामवान् । षोडशात्मा षोडशकलासु भूतेंद्रियरूपासु मुख्यः । पृथङ्नामभिः सह पृथग्रूपभेदं देवतिर्यगादिरूपं बिभ्रत् । अंतर्बहिष्ट्वमुत्कृष्टत्वं निकृष्टत्वं च पुरैस्तैरेव देहैर्हेतुभूतैस्तनोति । नामभिरित्यत्र रेफलोपे दीर्घाभाव आर्षः॥५॥ फलं च तदनुरूपं करोतीत्याह । दुःखं सुखं व्यतिरिक्तं च मोहं तीव्रं दुर्निवारं कालप्राप्तं सर्वतोऽभिव्यनक्ति सृजति । ननु जडः कथं सृजति तत्राह । स्वदेहि

रामसत्यत्वम् ॥२॥ अत्राक्षिपति–नन्विति । स्वप्ने भोगानां स्वल्पकालमात्रस्थायित्वं स्वप्नस्य स्वतो विनाशित्वं मिथ्यात्वं चेति या निरुक्तिः कथनं तया स्वप्नदृष्टांतेनेत्यर्थः । सुकर्मणां नश्वरमसार्वकालिकं क्षुद्रं वैषयिकमेव सुखं तथा वैषयिकेण सुखेनात्मनो वस्तुतः संबंधाभावात् तत्सुखमात्मनः शशस्य शृंगमिव मिथ्याभूतं च ज्ञानिनां न नश्वरं सार्वकालिकं महद्ब्रह्मसुखमिति बह्वेवान्तरमित्यत एवैव युक्तिरहस्य तत्त्वग्रहण इति ज्ञेयम् ॥ ३ ॥ नन्वेवं सद्भिः प्रबोधिताः सर्वे जनाः प्रायो वैषयिकसुख एव प्रवर्त्तमानाः कथं दृश्यंते तत्राह–निरंकुशं मत्तमतंगजोपमं गुणमयं मन एव बलाद्विवेकादिकमपि निगीर्य पुण्यपापकर्मणोः प्रवर्त्तयति पुरुषस्य को दोष इति भावः ॥ ४ ॥ इत्यर्थ इति । मनोवाचकत्वादत्रात्मपदस्येति भावः । अतो वासनायुक्तत्वात् । अतो विषयानुविद्धत्वात् । अत एव गुणैश्चाल्यमानत्वादेव । आदिना नरादिग्रहः ॥ ५ ॥ अत्राक्षिपति–नन्विति । स्वदेहिनं जीवात्मानम् । माययाऽविद्यया । उपाधिश्च समीपे स्थित्वा स्वधर्मस्य तत्राधानं यः करोति स एवेति । तथा च मनोऽपि स्वधर्मान्संकल्पविकल्पादीन्निजतादात्म्याध्यासेनात्मन्यादधातीति तस्योपाधित्वम् ।

तावानयं व्यवहारः सदाविः क्षेत्रज्ञसाक्ष्यो भवति स्थूलसूक्ष्मः ॥ तस्मान्मनो लिंगमदो वदंति गुणागुणत्वस्य परावरस्य ॥ ७ ॥ गुणानुरक्तं व्यसनाय जंतोः क्षेमाय नैर्गुण्यमथो मनः स्यात् ॥ यथा प्रदीपो घृतवर्तिमश्नञ्छिखाः सधूमा भजति ह्यन्यदा स्वम् ॥ पदं तथा गुणकर्मानुबद्धं वृत्तीर्मनः श्रयतेऽन्यत्र तत्त्वम् ॥ ८ ॥ एकादशासन्मनसो हि वृत्तय आकूतयः पंच धियोऽभिमानः ॥ मात्राणि कर्माणि पुरं च तासां वदंति हैकादश वीरभूमीः ॥ ९ ॥ गंधाकृतिः स्पर्शरसश्रवांसि विसर्गरत्यर्त्यभिजल्पशिल्पाः ॥ एकादशं स्वीकरणं ममेति शय्यामहं द्वादशमेक आहुः ॥ ॥ १० ॥ द्रव्यस्वभावाशयकर्मकालैरेकादशामी मनसो विकाराः ॥ सहस्रशः शतशः कोटिशश्च क्षेत्रज्ञतो न मिथो न स्वतःस्युः ॥ ११ ॥

नमालिंग्य । आलिंगने कारणमाह । मायारचितोंऽतरात्मा जीवोपाधिः । उपाधितामाह । संसृतिचक्रे कूटयति छलयतीति तथा यथा ग्रामकूटक इति ॥ ६ ॥ एवमयं मनोनिबंधनः । संसारो जीवे फलतीत्याह । तावानिति । आविः प्रकाशमानः सदा क्षेत्रज्ञस्य साक्ष्यो दृश्यो भवति । स्थूलसूक्ष्मो जाग्रत्स्वप्नस्वरूपः । मनसः संसारहेतुत्व मुपसंहरन्मोक्षस्यापि तदेव कारणमित्याह । तस्मादिति । अदो मनः लिंगं कारणम् । गुणत्वं गुणाभिमानित्वमगुणत्वं तद्राहित्यं तदेव परमवरं च तस्य ॥ ७ ॥ कथमेक मेव विलक्षणयोः कारणमवस्थाभेदादित्याह । गुणेति । नैर्गुण्यं निर्गुणम् । अथो इति कार्त्स्न्येन दृष्टांतेन स्फुटयति । यथेति । अन्यदा तु घृतक्षये । स्वं पदं शुक्लभास्वर रूपं महाभूतात्मत्वं वा । अन्यत्रान्यदा ॥ ८ ॥ वृत्तीर्दर्शयति । एकादश वृत्तय आसन् । आकूतयः क्रियाकाराः पंच धियश्च ज्ञानाकाराः पंच अभिमानश्चेति । हे वीर भूमीर्विषयान् ॥ ९ ॥ विषयानेवाह । गंधादयः पंचज्ञानेंद्रियद्वारा धीवृत्तीनां विषयाः । आकृतिः रूपम् । श्रवः शब्दः ' विसर्गादयः पंचकर्मेंद्रियद्वारा कर्माकारवृत्तीनां विषयाः । रतिः संभोगः । अर्तिर्गतिः । पुरस्याभिमानविषयत्वप्रकारमाह एकादशं पुरम् । स्वी क्रियत इति स्वीकरणम् । अयमर्थः । शरीरमभिमानस्य न ज्ञेयतया गंधा दिवद्विषयः नापि कार्यतया विसर्गादिवत् किं तु ममेति भोगायतनत्वेन स्वीकार्यतया विषय इति। एके तु विवेकिनामेव पुरं ममत्वाभिमानविषयो न तु मूढानामतो मूढदृष्ट्या अहमहंकारं द्वादशं वृत्त्यंतरमाहुः । तस्य च पुरमेव शय्यासंज्ञं द्वादशं विषयमाहुः । तत्र हि जीवोऽहंकारेण सह शेते यतः पुरि शयनात्पुरुष इत्युच्यते ॥ १० ॥ तासां वृत्तीनामवांतरभेदैरा

ग्रामस्थः कूटकः छद्मी ग्रामकूटकः स यथा ग्रामस्थान्निजमायया वंचयति तथा मनोप्यात्मानमिति भावः ॥ ६ ॥ अयं मनोनिबंधनं कारणं यस्य स मनोनिबंधनः । गुणाभिमानित्वं संसारः तद्राहित्यं मोक्षः । विश्वनाथस्तु—तौ संसारमोक्षौ कस्य स्यातामित्यत आह--परावरस्य उत्कृष्टनिकृष्टजनस्य । पाठक्रमोत्र न विवक्षितः । निकृष्टस्य संसार उत्कृष्टस्य मोक्ष इत्याह ॥ ७ ॥ व्यसनाय संसाराय । क्षेमाय मोक्षाय । अन्यत्र तुच्छीकृतविषयसंपर्कत्वे । तत्त्वमनारोपितं ब्रह्मस्वरूपं श्रयते भजति ॥ ८ ॥ हे वीरेति । रागद्वेषदलनसमर्थस्य तव विचारमार्गेपि कातर्यं न युक्तमिति भावः । यद्वा—ज्ञानग्रहणरूपनिश्चयांतगामिन् । "आकारे सर्वथा यत्ने रूपे चाकृतिरुच्यते " इति निरुक्तिः ॥ ९ ॥ शिल्पो लिप्यादिर्हस्तविषयः । अत्राशयमाह—अयमर्थ इति ॥ १० ॥ द्रव्येति । कोटिश इतः पूर्वं लक्षश इत्यपि ज्ञेयम् । द्रव्याणां चंदनकस्तूरीकुंकुमादीनां

क्षेत्रज्ञ एता मनसो विभूतीर्जीवस्य मायारचितस्य नित्या ॥ आविर्हिताः क्वापि तिरोहिताश्च शुद्धो विचष्टे ह्यविशुद्धकर्त्तुः ॥ १२ ॥ क्षेत्रज्ञ आत्मा पुरुषः पुराणः साक्षात्स्वयंज्योतिरजः परेशः ॥ नारायणो भगवान्वासुदेवः स्वमाययात्मन्यवधीयमानः ॥ १३ ॥

नंत्यमाह । द्रव्याणि विषयाः स्वभावः परिणामहेतुः आशयः संस्कारः कर्म अदृष्टं कालः क्षोभकः तैर्निमित्तभूतैः प्रथमं शतशस्ततः सहस्रशस्ततः कोटिशः स्युर्न तु मिथः स्युर्न च स्वतः किं तु क्षेत्रज्ञतः परमेश्वरात् । तस्य चानंतशक्तित्वादनन्ताः स्युरित्यर्थः । यद्वा तासां मिथ्यात्वमनेनोच्यते । कोटिशो भवंत्यतस्ताः क्षेत्रज्ञत एव स्युस्तत्स त्तयैव सत्तां लभेरन्न तु मिथो न च स्वत इति । यद्वा क्षेत्रज्ञो जीवस्तस्मान्न स्युस्तस्याविकारित्वात् । न मिथः इतरेतराश्रयत्वापत्तेः । न स्वतः आत्माश्रयत्वापत्तेः । अतो मिथ्याभूता एव ॥ ११ ॥ तदेवं श्लोकत्रयेण गुणकर्मानुबद्धं मनोवृत्तीः श्रयत इति यदुक्तं तत्प्रपंचितम् । अन्यदा तत्त्वं श्रयत इति यदुक्तं तदेव तत्त्वमाह । क्षेत्रज्ञ इति । जीवस्य जीवोपाधेः अविशुद्धकर्तुर्मनसः नित्याः प्रवाहरूपेणाविच्छिन्ना जाग्रत्स्वप्नयोराविर्भूताः पश्यति क्वापि सुषुप्तौ तिरोभूताः पश्यति । अवस्थात्रयसाक्षी क्षेत्रज्ञ आत्मा तत्त्वमित्यर्थः ॥ १२ ॥ क्षेत्रज्ञो द्विविधः त्वंपदार्थो जीवः तत्पदार्थ ईश्वरश्च । तत्राद्यो निरूपित इदानीं तत्राप्यमीश्वरं निरूपयति । क्षेत्रज्ञ आत्मा व्यापी । पुराणो जगत्कारणभूतः । पुरुषः पूर्णः । साक्षादपरोक्षः । स च स्वयंज्योतिः न तु ज्ञानस्य विषयत्वेनाश्रयत्वेन वा परोक्षः । अजो जन्मादिशून्यः परेषां ब्रह्मा दीनामपि ईशः । नारं जीवसमूहः सोऽयनं यस्य नियंतुः भगवानैश्वर्यादिषड्गुणवान् । वासुदेवः सर्वभूतानामाश्रयः स्वाधीनया माययाऽऽत्मनि जीवेऽवधीयमानोऽवस्थाप्य

स्वर्णरजतादीनां चानंत्यात् । कोपि गंधरूपादिः । कस्मैचिद्रोचत इति स्वभावानन्त्यात् । आशयोंतःकरणं तस्य शिष्टतादुष्टताभ्यां कर्मादृष्टं तद्वशादपि कालो बाल्ययौवनादिस्तद्वशादपि प्रत्येकमनंता एव गंधादयः स्युरिति चार्थः । अनन्तवृत्तिस्वीकारे संसाराभावप्रसंममाशंक्याह—यद्वेति । सांतवृत्तिस्वीकारेऽपि तदुत्पादकः क इत्याकांक्षायामाह—यद्वेति । परस्परसिद्धौ परस्परापेक्षणमन्योन्याश्रयः । यथा प्रथमवृत्तिगतैकत्वमपेक्ष्य द्वितीयवृत्तौ द्वित्वसिद्धिर्द्वितीयवृत्तिगतद्वित्वमपेक्ष्य प्रथमायामेकत्वसिद्धिरित्यन्योन्याश्रयः । स्वसिद्धौ स्वस्यापेक्षणमात्माश्रयः स्वस्मात्स्वभवनांगीकारे आत्माश्रयो भवतीत्यर्थः । अतो वृत्तीनामुत्पादकनिर्णयाभावात्ता मिथ्याभूता एवेति भावः ॥ ११ ॥ इत्यर्थ इति । आत्मैव सत्यत्वात्तत्वं तदितरत्सर्वमसत्यत्वादतत्त्वमिति भावः । अत्र संदर्भः—यश्शुद्धोऽपि मायारचितस्य वक्ष्यमाणसर्वक्षेत्रज्ञस्य मायया कल्पितस्य मनसोंतःकरण स्यैताः प्रसिद्धा विभूतीर्वृत्तीर्विचष्टे विशेषेण पश्यति पश्यंस्तत्राविष्टो भवति स खल्वसौ जीवनामा स्वशरीरद्वयलक्षणक्षेत्रस्य ज्ञातृत्वात् क्षेत्रज्ञ उच्यत इत्यर्थः । तदुक्तं “यया संमोहितो जीव आत्मानं त्रिगुणात्मकम्” इत्यादि । मनसः कीदृशस्य जीवस्य जीवोपाधितया जीवतादात्म्येन रचितस्य ततश्च तत्तयोपचर्यमाणस्येत्यर्थः । ततश्च कीदृशस्याविशुद्धं भगवद्बहिर्मुखं कर्म करोतीति तादृशस्य कीदृशीर्विभूतीर्नित्या अनादित एवो पगताः कथं तर्हि सदा न दृश्यंत इत्यत आह आविर्हिताः क्वापीति ॥ १२ ॥ इत्यर्थ इति । जीवानां नियंतेश्वर इति भावः । अत्र संदर्भः—यस्तु—पुराणः पुरुषः ‘आद्योऽवतारः पुरुषः परस्य’ इत्यादिना द्वितीयस्कंधादौ

यथाऽनिलः स्थावरजंगमानामात्मस्वरूपेण निविष्ट ईशेत् ॥ एवं परो भगवान्वासुदेवः क्षेत्रज्ञ आत्मेदमनुप्रविष्टः ॥ १४ ॥ न यावदेतां तनुभृन्नरेंद्र विधूय मायां वयुनोदयेन ॥ विमुक्तसंगो जितषट्सपत्नो वेदात्मतत्त्वं भ्रमतीह तावत् ॥ १५ ॥ न यावदेतन्मन आत्मलिंगं संसारतापावपनं जनस्य ॥ यच्छोकमोहामयरागलोभवैरानुबंधं ममतां विधत्ते ॥ १६ ॥

मानः । कर्मकर्तरि प्रयोगः । तन्नियंतृत्वेन वर्तमान इत्यर्थः ॥ १३ ॥ एतत्सदृष्टांतमाह । यथेति । आत्मस्वरूपेण प्राणरूपेण ईशेन्नियमयति । इदं विश्वम् ॥ १४ ॥ तदेवमात्मनः शुद्धत्वं संसारस्य च मिथ्यात्वं प्रदर्श्येदानीं तन्निवृत्तिमाह । तनुभृद्देही वयुनोदयेन ज्ञानोत्पत्त्या यावन्मायां विधूयात्मतत्त्वं न वेद तावदिहं भ्रमति ॥ १५ ॥ यावच्च विषयानुरक्तं मन एवानर्थहेतुरिति न वेद तावन्निर्वेदाभावात्परिभ्रमत्येवेत्याह । नेति । आत्मनो लिंगमुपाधिभूतं मनः संसारतापानामावपनं क्षेत्रं यावन्न वेद तावद्भ्रम

प्रसिद्धः साक्षादेव स्वयंज्योतिः स्वप्रकाशः न तु जीववदन्यापेक्षया अजो मायिकजन्मादिशून्यः । स्वमायया स्वरूपशक्त्यात्मनि स्वरूपेऽवधीयमान इति मायायां मायिकेष्वंतर्यामित्वेन प्रविष्टोऽपि स्वरूपशक्त्या स्वरूपस्थ एव न तत्संसक्त इत्यर्थः । यद्वा-सुष्ठु अमायया हेतुना मुक्तर्जीवेनात्मनि मनस्यवधानविषयीक्रियमाण इति । वासुदेवत्वेन सर्वक्षेत्रज्ञातृत्वात्सोऽपरः क्षेत्रज्ञः आत्मा परमात्मेति । तदेवं मुख्यं क्षेत्रज्ञत्वं परमात्मन्येव । तदुक्तं "सर्वं पुमान्वेदगुणांश्च तज्ज्ञो न वेद सर्वज्ञमनंतमीडे" इति तथा श्रीगीतोपनिषत्सु "इदं शरीरं कौंतेय क्षेत्रमित्यभिधीयते । एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत । क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम॥" इति । अत्र खलु क्षेत्रज्ञं चापि मां विद्धि इति सर्वेष्वपि क्षेत्रेषु मां च क्षेत्रज्ञं विद्धि न तु जीवमिव स्वस्वक्षेत्र एवेत्यर्थं वहति । 'ज्ञेयं यत्तत्प्रवक्ष्यमि'इत्यादौ 'सर्वतः पाणिपादं तत्' इत्यादिना सविशेषत्वस्यैव निर्दिष्टत्वात् । अमानित्वमित्यादिना ज्ञानस्य च तथोपदिष्टत्वात् । किं च क्षेत्रज्ञं चापीत्यत्र "तत्त्वमसि" इतिवत्सामानाधिकरन्येन तन्निर्विशेषज्ञाने विवक्षिते क्षेत्रज्ञेश्वरयोर्ज्ञाने विवक्षिते क्षेत्रज्ञेश्वरयोर्ज्ञानमित्यनूद्येत न तु क्षेत्रक्षेत्रज्ञयोर्ज्ञानमिति । किं तु क्षेत्रक्षेत्रज्ञयोरित्यस्यायमर्थः ज्ञेयस्यैकत्वेन निर्दिष्टत्वाद्योग्यत्वाच्च । न च निरीश्वरसांख्यवत् क्षेत्रक्षेत्रज्ञमात्रविभागात् 'अत्र ज्ञानं मतं मम'इत्यनेनेश्वरस्यापेक्षितत्वात् । न च विवर्त्तवदीश्वरस्यापि भ्रममात्रप्रतीतिपुरुषत्वं तद्वचनलक्षणसवेदगीतादिशास्त्राणामप्रामाण्याद्बौद्धवादापत्तेः । तस्यां च सत्यां बौद्धानामिव विवर्त्तवादिनां तद्व्याख्यानायुक्तेरिति । तीर्थेणात्र-श्रुतयोपि सर्वपदेषु प्रमाणिताः ताश्च "आत्मेति यदाप्नोति यच्चादत्ते महांतं विभुमात्मानम्" इति 'अत्रायं पुरुषः स्वयंज्योतिः' इति । "अजो नित्यः"इति । "परेशः" इति । "ब्रह्मणोऽधिपतिः" इति । नारायणत्वं तु कस्यचिद्ग्रामाधिपतेरपि स्यादत उक्तं भगवानिति । 'उत्पत्तिं प्रलयं चैव' इत्युक्तलक्षणः स ज्ञेयः । एतादृशस्तु-'ऋषिस्त्रिकालदर्शी स्यात्' इत्युक्तेः । कश्चिदृषिः स इत्यत आह-वासुदेव इति ॥१३॥ स भगवान्मुक्तर्जीवेन सुलभ एवेति सदृष्टांतमाह-यथेति । "वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रति रूपो बभूव । एकस्तथा सर्वभूतांतरात्मा रूपंरूपं प्रतिरूपो बहिश्च ॥" इति काठकश्रुतेः॥ १४॥ज्ञानोत्पत्त्या शास्त्रश्रवणादिना ज्ञानोद्भवेन । नरेन्द्रेति । नरेणाप्येतज्ज्ञातुं शक्यते त्वन्तु नरेन्द्रोऽसीति भावः ॥ १५ ॥ मायाविधूननं च सम्यक्तया कथं ज्ञातव्यमिति चेद्यावद्विषयानुरक्तं मनस्तावन्मायाविधूननं तत्त्वज्ञानं च न स्यादित्याह-नेति । 'तदेवं मनः श्रयतेऽन्यत्र तत्त्वम्' इति यदुक्तं तत् श्लोकपंचकेन प्रपंचितम् ॥ १६ ॥

भ्रातृव्यमेनं तददभ्रवीर्यमुपेक्षयाऽध्येधितमप्रमत्तः ॥ गुरोर्हरेश्चरणोपासनास्त्रो जहि व्यलीकं स्वयमात्ममोषम् ॥ १७ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भरतचरिते भरतरहूगणसंवादे रहूगणाय मनोविजयवर्णनं नाम एकादशोऽध्यायः ॥ ११ ॥ रहूगण उवाच ॥ नमोनमः कारण विग्रहाय स्वरूपतुच्छीकृतविग्रहाय ॥ नमोऽवधूत द्विजबंधुलिंगनिगूढनित्यानुभवाय तुभ्यम् ॥ १ ॥

तीत्यनुषंगः । तापावपनत्वे हेतुः । यन्मनः शोकाद्यनुबंधं ममतां च विधत्ते ॥ १६ ॥ तत्तस्मात् भ्रातृव्यं शत्रुम् । अध्येधितं संप्रवृद्धं स्वयं व्यलीकं मिथ्याभूतं तथाऽऽत्मानं मुष्णातीति तथा तं गुरुरेव हरिस्तस्य चरणोपासनमेवास्त्रं यस्य तथाभूतः सन् जहि घातय ॥ १७ ॥ इति पंचमस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे पुनरापृष्टः संदेहेन महीभृता ॥ स योगी सर्वसंदेहानपानुददितीर्यते ॥ १ ॥ कारणमीश्वरस्तस्यैव लोकसंरक्षणार्थो विग्रहो देहो यस्य । स्वरूपेण परमानंदप्रकाशेन तुच्छी

तस्मान्मन एव निग्रहीतव्यमित्याह–भ्रातृव्येति । उपेक्षयैव जहि निगृहाण तदुपेक्षणमेव तद्वध इति भावः।न तु तदिष्टविषयभोगप्रदानलक्षणयाऽपेक्षयाऽनुगृहाणेत्यर्थः।सर्वथैव तद्वधस्त्वनभिप्रेत एव।''तस्मान्मनोलिंगमदो वदंति गुणागुणत्वस्य परावरस्य''इति । 'श्रूयतेऽन्यत्र तत्त्वम्''इति च पूर्वोक्तेः दृष्टान्ते च भ्रातुः पुत्रस्यावध्यत्वात् श्लेषाभिप्रायेणैतज्ज्ञेयं'भ्रातृव्यो भ्रातृपुत्रेऽरौ' इति कोशात्। मनः कीदृशमाधिकमेधितं स्ववृत्तीः संश्रित्य संवृद्धम्। ननु बलवन्तमिमं दुर्बलोऽहं कथं निगृह्णामीत्यत आह-गुरोः सकाशात्प्राप्तस्य मंत्ररूपस्य हरेश्चरणयोरुपासनाश्रवणादिनवविधभक्तिरेवास्त्रं यस्य सः । व्यलीकमप्रियं यतः स्ववृत्तिदर्शनया संमोह्यात्मानं परमात्मरूपं सर्वस्वमेव मुष्णातीति तं महाचौरमित्यर्थः । '' भक्त्यस्त्रेण त्याजयित्वा विषयान्स्वमनो यतिः । ध्वस्ताविद्योऽवधत्ते यः कृष्णं मुक्तः स उच्यते ॥ भक्त्यभावान्मनोवृत्तीराश्रयद्वासनामयम् । अविद्यां यस्य पुष्णाति स पुमान्बद्ध उच्यते ॥ '' इति । अत्र विजयध्वजः–मनो हि द्विविधं चिदचिद्भेदात् । तत्र चिन्मनस्तु स्वरूपमभिन्नं मुक्तावानंदानुभवसाधनं तन्नाशे स्वरूपनाश एव स्यात्तथा च–'' अविनाशी वा अयमात्मानुच्छित्तिधर्मा '' इति श्रुतिव्याकोपः स्यात् । इतरं मन आदिमप्रलये लिंगशरीरवत्सूक्ष्मं यावन्मुक्ति तदीयतया स्थितं सत्सृष्ट्यादुपस्थितं स्थूलशरीरवर्त्तिनश्चेतनस्य ममेदमहमित्यभिमानमुत्पाद्य संसारापादनपटुरवामिनश्चिदानंदलक्षणस्य दुःखापादकत्वेन वैरि मनो जहि तस्य हननं तन्निमित्ताभिमानलक्षणमोहनाशेन । व्यलीकं विगता चिन्मनः संसर्गं स्वयं स्वरूपभूतं सच्चिन्मनः स्वयमिति द्विरावर्त्तनीयं सुपूजितमिमामिष्टप्रदं दैवं श्रीनारायणाख्यं जहि गमय तद्विषयं कुरु । अत्रार्थद्वयाभिप्रायेण 'हन-हिंसागत्योः' इत्ययं धातुः प्रयुक्त इति ज्ञायते । अनेनाहमित्यभिमानः संसारहेतुरतन्मूला चिन्मनोनाशेन तदभावेन तदभाव इति परिहारः सूचित इत्याह॥ १७॥इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ स भरताख्यः । अपानुदत् दूरीं चकार ( १ ) ब्राह्मणस्तुतिव्याजेनेश्वरं स्तौति–'करणं कारणं कर्त्ता' इति सहस्रनामसु पठितत्वात्कारणमीश्वरः । विग्रहो देहः । कारणाय लोकानुग्रहलक्षणाय विग्रहो यस्येति वा । यद्वा–कस्यानंदस्यारणं शरणं विग्रहो यस्य यद्वैकदेशन्यायेन कष्ट आसमंताद्रणो येषां, को ब्रह्मा वरदानादिनाऽरणं रक्षिता येषां ते वा । कारणा असुरास्तैर्विग्रहो विरोधो यस्य तस्मै । ''मायाभिरुत्सिसृक्षत इंद्र द्यामारुरुक्षत अवदस्त्रं रघुनुथा'' इति श्रुतेः । हे अवधूतेति । संबुद्धिः । अवधूयंते नाश्यंते पापा अनेनेति व्युत्पत्तेर्मामाप्यज्ञानं पापं च नाशयेति भावः । लिंगेनोन्मत्तवेषेण ।

ज्वरामयार्त्तस्य यथाऽगदं सन्निदाघदग्धस्य यथा हिमांभः ॥ कुदेहमानाहिविदष्टदृष्टेर्ब्रह्मन्वचस्तेऽमृतमौषधं मे ॥ २ ॥ तस्माद्भवंतं मम संशयार्थं प्रक्ष्यामि पश्चादधुना सुबोधम् ॥ अध्यात्मयोगग्रथितं तवोक्तमाख्याहि कौतूहलचेतसो मे ॥ ३ ॥ यदाह योगेश्वर दृश्यमानं क्रियाफलं सद्व्यवहार मूलम् ॥ नह्यंजसा तत्त्वविमर्शनाय भवानमुष्मिन् भ्रमते मनो मे ॥ ४ ॥ ब्राह्मण उवाच ॥ अयं जनो नाम चलन् पृथिव्यां यः पार्थिवः पार्थिव कस्य हेतोः ॥ तस्यापि चांघ्र्योरधिगुल्फजंघाजानूरुमध्योरशिरोधरांसाः ॥ ५ ॥ अंसेधि दार्वी शिबिका च यस्यां सौवीरराजेत्यपदेश आस्ते ॥ यस्मिन् भवान् रूढनिजाभिमानो राजाऽस्मि सिंधुष्विति दुर्मदांधः ॥ ६ ॥

कृतो विग्रहो येन । हे अवधूत योगेश्वर द्विजबंधोर्लिंगेन वेषेण निगूढो नित्यानुभवो येन तस्मै नमः ॥ १ ॥ विशेषतः प्रष्टुं तद्वाक्यमभिनंदति । ज्वर एवामयो रोगस्तेनार्तस्य यथा सत्स्वाद्वगदमौषधम् । यथा च निदाघेन दग्धस्य संतप्तस्य हिमांभः शीतलमुदकं गंगोदकं वा । तथा हे ब्रह्मन्कुत्सिते देहे यो मानोऽहंकारः स एवाहिस्तेन विशेषेण दष्टा दृष्टिर्विवेकलक्षणा यस्य तस्य मे तवेदं वचोऽमृततुल्यमौषधम् ॥ २ ॥ मम संशयविषयमर्थं पश्चात्प्रक्ष्यामि अधुना तावत्त्वदुक्तं वचोऽध्यात्मयोगेन ग्रथितं दुर्बोधं सुबोधं यथा भवत्येवं व्याख्याहि । कौतूहलयुक्तं चेतो यस्य तस्य मम ॥ ३ ॥ त्वयोदितं व्यक्तमविप्रलब्धमित्यादिना भारवहनादिक्रिया च तत्फलं च श्रमादिप्रत्यक्षादिभिर्दृश्यमानं सदबाधितमपि व्यवहारमात्रमूलम् । यद्वा । सतोऽबाधितव्यवहारस्य मूलं कारणमपि नह्यंजसा तत्त्वविमर्शनाय क्षममिति भवान्यदाह । अमुष्मिन्नर्थे मम मनो भ्रमति ॥ ४ ॥ अबाधितत्वमसिद्धमित्याह । हे पार्थिव यः पार्थिवो विकारः स एव कस्य हेतोः कस्माच्चित्कारणात्पृथिव्यां चलन्नयं भारवाहकादिर्जनो नाम प्रसिद्धः । यस्तु न चलति स पाषाणादिरित्येतावानेव भेदः । तस्य च जडत्वान्न भारः श्रमश्च । किं च । भवेदेवं यदि श्रमस्याश्रयो निरूप्येत न त्वेतदस्ति । अवयव व्यतिरेकेण श्रमास्पदस्यावयविनोऽनिरूपणादित्याशयेनाह । तस्यापि पृथ्वीविकारस्यापि । अंघ्र्योरध्युपर्युपरि गुल्फादयः । उरसः सलोप आर्षः ॥ ५ ॥ शिबिकाया मप्यवयवी नास्ति त्वय्यपि नास्ति तदाह । सौवीरराजेत्यपदेशो नाममात्रं यस्य स पार्थिवो विकार आस्ते । राजेति संधिरार्षः । यस्मिन्भवान्निरूढात्माभिमानः सिंधुषु

निगूढो नितरां छन्नो नित्यानुभवो ज्ञाननिष्ठारूपो यस्य स तथा स चासौ स चेति तथा तस्मै । यद्वा—अवधूतद्विजा दत्तात्रेयादय एव बंधवो यस्य स तथा ॥ १ ॥ "निदाघस्तापपापयोः" इति कोशमपेक्ष्योक्तं गंगोदकं वेति । अमृततुल्यममृतमिव लुप्तोपमा । ब्रह्मन्निति । वेदविदस्तवैतन्नाद्भुतमिति भावः॥२॥३॥अमुष्मिन्नर्थे स्पष्टाभिप्रायाप्राप्त्या मे मनो न स्थिरी भवति । योगेश्वरेति । योगीश्वरत्वात्तवात्र संदेहाभावेपि मम संदेहोऽस्त्येवेति भावः ॥ ४ ॥ पूर्वं स्वमतेन भंग्या दत्तोत्तरमबुद्ध्वैव पुनः पृच्छंतं राजानमवजानन्निव भो राजंस्तव व्यवहारोऽयमप्रमाण एवेति मतांतरमाश्रित्य पुनः प्रत्याह—हे पार्थिवेति । यथा पृथिवीविकारो घटपाषाणादिर्बोधितो न बुध्यते तथा त्वमपीत्यभिप्रायः । 'कस्माच्चिददृष्टादिरूपात्कारणात् । श्रमासंभवमाह—किंचेति । एवं त्वदुक्तरीत्या ॥ ५ ॥ समासांतविधेरनित्यत्वाश्रयणे त्वार्षत्वं नास्तीत्यपि ज्ञेयम् । राजास्मीत्यभिमान एव न

शोच्यानिमांस्त्वमधिकष्टदीनान् विष्टचा निगृह्णन् निरनुग्रहोऽसि ॥ जनस्य गोप्ताऽस्मि विकत्थमानो न शोभसे वृद्धसभासु धृष्टः ॥ ७ ॥ यदा क्षितावेव चराचरस्य विदाम निष्ठां प्रभवं च नित्यम् ॥ तन्नामतोऽन्यद्व्यवहारमूलं निरूप्यतां सत् क्रिययाऽनुमेयम् ॥ ८ ॥ एवं निरुक्तं क्षिति शब्दवृत्तमसन्निधानात् परमाणवो ये ॥ अविद्यया मनसा कल्पितास्ते येषां समूहेन कृतो विशेषः ॥ ९ ॥

राजाऽस्मीति दुर्मदेनांधः सन् ॥ ६ ॥ शोच्यानिमान्विष्टया निगृह्णन्निष्कृपो वर्तसेऽतो मिथ्यैव गोप्ताऽस्मीति श्लाघमानो महतां सभासु न शोभसे । यतो धृष्टः ॥ ७ ॥ न चोत्तरोत्तरावयवभारः पूर्वपूर्वावयवानां भवेदिति वाच्यम् । तेषामप्यनिरूपणादित्याशयेनाह । यदेति । निष्ठां नाशं प्रभवमुत्पत्तिं विदाम विद्मस्तत्तदा क्षितेरन्यस्य विकारस्याभावान्नाममात्रादन्यद्व्यवहारस्य मूलं कारणमर्थक्रियया सदित्यनुमेयं निरूप्यताम् । तथा च श्रुतिः "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति ॥ ८ ॥ तर्हि क्षितेः सत्यता स्यात्तत्राह । एवं क्षितिशब्दस्यापि वृत्तं वर्तनमर्थं विनैव निरुक्तम् । यद्वा । क्षितिशब्दस्य वृत्तं यस्मिंस्तदपि मिथ्यात्वेन निरुक्तमित्यर्थः । कुतः असत्सु सूक्ष्मेषु परमाणुषु स्वकारणभूतेषु निधानाल्लयात् अतः परमाणुव्यतिरेकेण क्षितिर्नास्तीत्यर्थः । परमाणवस्तर्हि सत्याः स्युस्तत्राह । ते मनसा कार्यानुपपत्त्या वादिभिः कल्पिताः । कल्पनाबीजमाह । येषां समूहेन विशेषः कृतस्तेषां समूहः पृथ्वीबुद्ध्यालंबनमित्यर्थः । अवयविनो निरस्तत्वात्समूहग्रहणम् । तथापि सत्याः स्युः न अवि

वस्तुतः । अत्र पृथिव्यादीनां शिबिकांतानां भारवहनात्किं सर्वेषां श्रम उत कस्यचित्कस्यचित् न तावत्सर्वेषां पृथिव्याः शिबिकायाश्च श्रमादर्शनात् । अंघ्र्यादीनां श्रम उपलभ्यत इति चेन्न । शिबिकाया अभावे गुल्फादिभारवाहिनामपि तेषां श्रमानुपलब्धेः । अंघ्र्याद्यावयविनः शिबिकावहनाच्छ्रम इति चेदवयवेभ्यः पृथगवयविनः श्रमाश्रयस्यानिरूपणात् । नन्वस्तु नास्तु वाऽवयवी भारवाहिनः श्रमदुःखमनुभूयत एवेति चेत्तदपि नैकांतिकम् । अतिसुकुमार्या अपि नार्या रत्नालंकारान्वहंत्या रतौ स्वदेहे पतिं स्वबालकं च वहंत्याः श्रमदुःखानुपलब्धेः प्रत्युत सुखोपलब्धेश्च तस्मादभिमानविशेषेणैव सुखदुःखे स्तः । यथा राजास्मीति दुर्मदेन दुरभिमानमत्ततयांधः किमपि न पश्यसीत्येतावदेव तव सुखं निरभिमानानां तु न ते दुःखसुखे इति भावः ॥ ६ ॥ ज्ञानाभावेपि राज्ञः प्रजाशासनं धर्म इति यदुक्तं तत्राह—शोच्यानिति । ईदृशमेव प्रजापालनं धर्म एव । धृष्ट इति । अविनीतोसि तदपि अच्युतस्य किंकरोऽस्मि जिज्ञासुरस्मीति कल्मष इति भावः ॥ ७ ॥ नन्वभिमानशून्यस्य मुक्तस्यापि प्रारब्धसुखदुःखभोगश्रवणात्तवापि भारवहनक्रियाफलस्य श्रमस्य प्रत्यक्षादिभिर्दृश्यमानत्वेनाबाधितत्वाद्व्यवहारस्याप्रामाण्यं त्वदुक्तं न घटेतेति चेत्सत्यम् । मुक्तानां मादृशानां बाधितानुवृत्त्यैव दुःखसुखाभासौ यथा स्वप्नात्प्रबुद्धस्य जनस्य स्वप्नदृष्टसर्पस्य मिथ्यात्वज्ञानेऽपि किञ्चित्क्षणपर्यंतं भयकंपादिकिञ्चित्करावेव । अप्रबुद्धानां तु स्वाप्निकः सर्पः सत्य एव भाति यथा युष्माकं व्यवहारस्तदपि व्यवहारस्यासत्यत्वं युक्त्या दर्शयामि शृण्वित्याह—यदेति । चराचरस्य जगतः क्षितावेव निष्ठां नाशमुत्पत्तिञ्च विद्मस्तत्तस्मात्सर्वेषां विकाराणां क्षितिभिन्नत्वाभावात् निरूप्यतां यदि युक्तिः प्रतिभातीति भावः । विकाराणां मिथ्यात्वे श्रुतिं प्रमाणयति । तथा चेति । स्पष्टार्थत्वान्न व्याख्यातेति ॥ ८ ॥ अर्थं विनैव तात्त्विकस्वरूपं विनैव निश्चयेनोक्तम् । नन्वत्र क्षितिशब्दस्येत्युक्तेः क्षितिः शब्दो मृषेति सिद्ध्यति न तु क्षितिर्मृषेति चेत्तत्राह—यद्वेति । यस्मिन्पदार्थे क्षितिशब्दो वर्त्तते सोऽपि मृषेति भावः । अत्र हेतुमाह—

एवं कृशं स्थूलमणुर्बृहद्यदसच्च सज्जीवमजीवमन्यत् ॥ द्रव्यस्वभावाशयकालकर्मनाम्नाऽजयाऽवेहि कृतं द्वितीयम् ॥ १० ॥ ज्ञानं विशुद्धं परमार्थमेकमनंतरं त्वबहिर्ब्रह्म सत्यम् ॥ प्रत्यक् प्रशांतं भगवच्छब्दसंज्ञं यद्वासुदेवं कवयो वदंति ॥ ११ ॥

यथा प्रपंचस्य भगवन्मायाविलसितत्वादज्ञानेन कल्पिताः ॥९॥ एवमन्यदपि कृशत्वादिधर्मकं बुद्ध्या प्रतीतं द्वितीयं द्वैतं द्रव्यादिनाम्नोपलक्षितयाऽजया मायया कृतमवेहि । तत्र कृशं ह्रस्वम् स्थूलं तत्प्रतियोगि । अणुबृहतोः पृथगुपादानात् असत्कारणम् । सत्कार्यम् । जीवं चेतनम् । अजीवं जडम् ॥ १० ॥ तर्हि किं सत्यं तदाह । ज्ञानं सत्यम् । व्यावहारिकसत्यत्वं व्यावर्तयति । परमार्थम् । वृत्तिज्ञानव्यवच्छेदार्थानि षड्विशेषणानि । विशुद्धं तत्त्वाविषयकम् । एकं तत्तु नानारूपम् । अनन्तरं त्वबहिर्बाह्याभ्यंतरशून्यं तत्तु विपरीतम् । ब्रह्म परिपूर्णं तत्तु परिच्छिन्नम् । प्रत्यक् तत्तु विषयाकारम् । प्रशांतं निर्विकारम् । तदेवं स्वरूपज्ञानं सत्यमित्युक्तम् । कीदृशं तत् । ऐश्वर्यादिषड्गुणत्वेन भगवच्छब्दः संज्ञा यस्य यच्च ज्ञानं वासुदेवं वदंति ॥ ११ ॥

कुत इति । अतः परमाणुषु लयात् । इत्यर्थ इति । कारणमंतरेण कार्यस्यासिद्धेः कारणमेव सत्यमिति भावः । इत्यर्थ इति । परमाणुसमूहं विनाऽन्या पृथिवी नाम कापि नास्तीति भावः । तेषामप्यवयविवन्निरूपणाशक्यत्वात्तेप्यज्ञानेनैव कल्पिता इत्यर्थः ॥ ९ ॥ तत्र कृशादिषु । तत्प्रतियोगि यदपेक्ष्य ह्रस्वत्वं निश्चीयते तत्स्थूलमित्यर्थः ॥ १० ॥ वृत्तिरूपज्ञानस्य व्यवच्छेदार्थानि भेदकानि । तत्तु वृत्तिरूपं तु । अविद्याया मलिनसत्त्वप्रधानत्वात्तज्ज्ञानमपि मलिनमेवेत्यर्थः । वृत्तीनामानंत्यान्नानारूपत्वं विपरीतं बाह्याभ्यंतरधर्मकं प्रत्यगात्माकारम् । अत्र विश्वनाथः—तर्हि किं सत्यं पूर्वोक्तं तत्त्वमेव शब्दप्रमाणवेद्यं तच्च तत्त्वं "वदंति तत्तत्त्वविदस्तत्त्वं यज्ज्ञानमद्वयम्" इति प्रथमस्कंधोक्तवदेवाह—ज्ञानं सत्यं किंविधं विशुद्धं गुणातीतं परमोर्थो मोक्षादिको यस्मात्तत् । एकमद्वयम् । अनंतरमबहिर्व्यापकमित्यर्थः । तच्च ज्ञानं "ब्रह्मेति परमात्मेति भगवानिति शब्द्यते" इतिवदेवाह—ब्रह्म ब्रह्मशब्दवाच्यं निर्विकल्पकं ज्ञानिनामुपास्यं प्रत्यक् प्रशांतं परमात्मशब्दवाच्यं योगिनामुपास्यं प्रशांतमिति जीवात्मव्यावृत्त्यर्थं भगवच्छब्दः संज्ञा यस्य तत् । भक्तानामुपास्यम् । यत्त्रिरूपमिदमपि वासुदेवं वसुदेवनंदनं वदंति 'पूर्णं ब्रह्म सनातनम्' इति 'कृष्णाय परमात्मने' इति 'ततश्च भगवन्कृष्ण' इत्यादिभ्यः तत्रापि "ब्रह्मणो हि प्रतिष्ठाहम्" इति "विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत्" इति 'वासुदेवो भगवताम्' इत्यादिभ्यो वसुदेवनंदनस्यैव परमपूर्णत्वम् । अत्र भगशब्दस्यैश्वर्यवाचित्वादैश्वर्यस्य चेशितव्यापेक्षितत्वादीशितव्यानां मायिकानां चोक्तयुक्त्या मिथ्यात्वादुक्तारतद्धामवासिन एवेशितव्या नित्या अवगतास्तेषां तद्धाम्नश्च नित्यसत्यत्वं भगवत इव शब्दप्रमाणसिद्धमेव प्रथमस्कंधादौ प्रपंचितमेव तथैव मत्सेवायां च निर्गुणेत्यादिभिरेकादशे भक्तिसंबंधिवस्तुमात्रस्यैव नित्यसत्यत्वं प्रपंचयिष्यते च । प्रकरणाभिप्रायश्चायं—भो राजन् युष्माकं प्रत्यक्षप्रमाणसिद्धस्यापि व्यवहारस्य मायाजीवस्य मायारचितस्य नित्या आविर्हिताः कापि तिरोहिताश्चेत्यनेन स्वमतेन कालदेशादिपरिच्छिन्नत्वान्नश्वरत्वमंगीकुर्वता कालदेशाद्यपरिच्छिन्ने तत्त्वे चिद्घन वस्तुनि व्यवहारो वैजात्यादेव नाशीयते इत्युक्तं तदपि व्यवहारमेव पुनःपुनरुत्थापयसि चेदेनं मन्ये वादिनो मिथ्यैवाचक्षते इति तन्मतमुदाहृतम् । शब्दप्रमाणसिद्धे तत्त्वे तु तेऽपि न विप्रतिपद्यंते इत्यनेन 'ज्ञानं विशुद्धम्' इति पद्यमुक्तमिति । ननु देहेंद्रियादिव्यापारः श्रीकृष्णैकनिष्ठो भक्तिरिति भक्तिर्लक्षिता तस्याश्च "लक्षणं भक्तियोगस्य निर्गुणस्येत्युदाहृतम्" इति भगवदुक्तेर्निर्गुणत्वमवसीयते । तच्च परिणामवादे कार्यस्य सत्त्वात् प्राकृतदेहेंद्रियादीनामेव भक्तिसंसर्गेणाप्राकृतत्वं स्पर्शमणिन्यायेन बुद्ध्यामहे । विवर्तवादे तु—कार्यमात्रस्यैवासत्त्वाद्देहेंद्रियादीनां मिथ्याभूतत्वाद्भक्तेः स्थितिरेव नास्ति कुतस्तया

रहूगणैतत्तपसा न याति न चेज्यया निर्वपणाद्गृहाद्वा ॥ न च्छंदसा नैव जलाग्निसूर्यैर्विना महत्पादरजोऽभिषेकम् ॥ १२ ॥ यत्रोत्तमश्लोकगुणानु
वादः प्रस्तूयते ग्राम्यकथाविघातः ॥ निषेव्यमाणोऽनुदिनं मुमुक्षोर्मतिं सतीं यच्छति वासुदेवे ॥ १३ ॥

एतत्प्राप्तिस्तु महत्सेवां विना न भवतीत्याह । हे रहूगण एतज्ज्ञानं तपसा पुरुषो न याति । इज्यया वैदिककर्मणा । निर्वपणादन्नादिसंविभागेन । गृहाद्वा तन्निमित्तपरोपकारेण । छंदसा वेदाभ्यासेन । जलाग्न्यादिभिरुपासितैः ॥ १२ ॥ महत्सेवायास्तत्प्राप्त्युपायतामाह । यत्र येषु महत्सु उत्तमश्लोकस्य हरेर्गुणानुवादः ग्राम्यकथानां विघातो

निर्गुणत्वं घटतां तथा हि निर्गुणां भक्तिमयमुपदेष्टव्य इति । गुरूपदेशकाले उपदेष्टव्यजनस्य मिथ्याभूतत्वादाकाशक्षेत्रे बीजवपनमिव गुरूपदेश एव तावन्न भवेत् कुतः कृष्णभक्तिः कुतस्तरां तदभ्यासेन प्रेमादयः । कुतस्तमां तेन भगवद्वशीकार इति । सत्यम् । महाचिंत्यशक्तौ भगवति काप्यसंभावना न भावनीया । यदुक्तं स्वयं भगवतैव "एषा बुद्धिमतां बुद्धिर्मनीषा च मनीषिणाम् । यत्सत्यमनृतेनेह मर्त्येनाप्नोति मामृतम् ॥" इति । अस्यार्थः—यद्यतः अनृतेन मिथ्याभूतेनापि मर्त्येन मरणधर्मवता देहेंद्रियप्राणादिना पत्रपुष्पधूपदीपगंधविविधनैवेद्यच्छत्रचामराद्युपचारेण च यदाप्नोति एषैव बुद्धिमतां बुद्धिरेषैव मनीषिणां परमपरामर्शवतां मनीषा विचार इति । प्राप्तिप्रकारश्च स्वयं भगवतैवोक्तो यथा " मर्त्यो यदा त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे । तदामृतत्वं प्रतिपद्यमानो मयात्मभूताय च कल्पते वै ॥ " अस्यार्थः—यदा मर्त्यस्त्यक्तसमस्तकर्मा गुरूपदेशकाले त्यक्तसमस्तवर्णाश्रमकामनः मयि श्रीगुरुरूपे निवेदितावात्मानावहंतास्पदममतास्पदे येन सः । योऽहं ममास्ति यत्किंचिदिह लोके परत्र च तत्सर्वं नाथचरणेषु समर्पितमिति व्यवसायवान्भवति तदा स जनो मिथ्याभूतोऽपि मे मया विचिकीर्षितः स्याद्विशिष्टः कर्तुमिष्टः स्यात् ' निर्गुणो मदपाश्रयः ' इति मदुक्तेर्निस्त्रैगुण्य एव स्यादित्यर्थः । स हि मायाकार्यत्वान्न नश्वरः सत्यः नाप्यज्ञानकार्यत्वान्मिथ्याभूतः किन्तु स्वरूपभूतो मत्कार्यत्वान्निर्गुण एव स्यात् । किं च मया विशिष्टः कृतः स्यादित्यप्रयुज्य विचिकीर्षित इति सन्प्रत्ययप्रयोगान्निर्गुणः कर्तुमारभ्यमाण एव स शनैःशनैर्भक्त्या भासवान् निष्ठारुच्यासक्तिरतिभूमिकारूढ एव सम्यक् निर्गुणः स्यात्ततो मिथ्याभूतवस्तुभिः सह तस्य व्यवहारो न स्यात्तत्पूर्वं तु यथायोगं व्यवहारस्तैश्च सह लभ्यते । अयमर्थः-अचिंत्यशक्त्या भक्त्युपदेशकाल एव तस्य गुणातीतानि देहेंद्रियमनांसि मया भक्तिमाहात्म्यदर्शनार्थमलक्षितमेव सृज्यंते मिथ्याभूतानि तान्यप्यलक्षितमेव लयं यांति यथा "नैवंविधः पुरुषकार उरुक्रमस्य पुंसां तदंघ्रिरजसा जितषड्गुणानाम् । चित्रं विदूरविगतः सकृदाददीत यन्नामधेयमधुना स जहाति तन्वम् ॥ " इति । अस्यार्थः—एवंविधः प्रियव्रतकर्तृकसप्तसमुद्रनिर्माणप्रपंच इव पुरुषकारो न चित्रम् । चित्रं खल्वेतदेव यद्विदूरविगतोंऽत्यजोऽपि यस्योरुक्रमस्य नामधेयं सकृदाददीत अधुना तत्क्षणमेव तन्वं तनुं विजहातीति तदानीं तनोर्दृश्यमानत्वेऽपि प्रारब्धकर्मसंवलिततनुत्यागोऽलक्षित एवेत्यर्थः । ततश्च तदाऽमृतत्वं मरणधर्माभावं प्रतिपद्यमानस्तदानीमेव प्राप्नुवन्मया सहात्मभूयाय स्वभावायात्मनः स्वस्य स्थित्यै कल्पते यत्राहं तिष्ठामि तत्रैव सोऽपि मत्सेवार्थं तिष्ठतीत्यर्थः । एवञ्च जगत्यस्मिन्यानियानि वस्तूनि मिथ्याभूतान्युपलभ्यंते तेषामेव भक्तिसंपर्कान्मिथ्याभूतत्वं प्रविलाप्य भगवता स्वभक्तेच्छानुकूलेन परमसत्यत्वमेव तत्क्षण एव सृज्यते ' किमशक्यमचिंत्यशक्तेर्भगवतः ' इत्यत एव 'मत्सेवायां तु निर्गुणे'ति ' मन्निकेतं तु निर्गुणम् ' इत्यादिकानि संगच्छंते । " अचिंत्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यत्तु तदचिंत्यस्य लक्षणम् ॥" इत्युद्योगपर्ववचनं भाष्यकारेणापि धृतम् । तत्र भावा इति बहुवचनेनाद्वैतभंगो न ध्येयस्तेषामैक्यादिति सर्वमवदातम् ॥ ११ ॥ हे रहूगणेति । नाम्ना संबुद्धिस्तु तस्याज्ञत्वादनादरविषयेति भावः । एतत् उक्तलक्षणं त्रिविधं ज्ञानमिति विश्वनाथः । तपः चित्तैकाग्र्यम् ॥ १२ ॥ ते च महान्तः कृष्णभक्ता एवेत्यभिव्यंजयति यत्र महत्पादरजोभिषेके सति यत्र महत्सु वा उत्तमश्लोकस्य कृष्णस्य गुणानां भक्तवात्सल्यादीनामनुवादः पुनःपुनः कथनं प्रस्तूयते प्रसज्यते प्रकर्षेण श्लाघ्यते वा । ग्राम्यकथानां विषयवार्त्तानां मुमुक्षोर्मुक्तिकामस्यापि वसुदेवनंदने सतीं मोक्षेच्छाराहित्येन शुद्धाम् ।

अहं पुरा भरतो नाम राजा विमुक्तदृष्टश्रुतसंगबंधः ॥ आराधनं भगवत ईहमानो मृगोऽभवं मृगसंगाद्धतार्थः ॥ १४ ॥ सा मां स्मृतिर्मृगदेहेऽपि वीर कृष्णार्चनप्रभवा नो जहाति ॥ अथो अहं जनसंगादसंगो विशंकमानोऽविवृतश्चरामि ॥ १५ ॥ तस्मान्नरोऽसंगसुसंगजातज्ञानासिनेहैव विवृक्णमोहः ॥ हरिं तदीहाकथनस्मृतिभ्यां लब्धस्मृतिर्यात्यतिपारमध्वनः ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे ब्राह्मणरहूगणसंवादे श्रीभगवत्कथास्वरूपनिरूपणवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ ॥ छ ॥ ब्राह्मण उवाच ॥ दुरत्ययेऽध्वन्यजया निवेशितो रजस्तमःसत्त्ववि भक्तकर्मदृक् ॥ स एष सार्थोऽर्थपरः परिभ्रमन् भवाटवीं याति न शर्म विंदति ॥ १ ॥ यस्यामिमे षण्नरदेव दस्यवः सार्थं विलुंपंति कुनायकं बलात् ॥ गोमायवो यत्र हरंति सार्थिकं प्रमत्तमाविश्य यथोरणं वृकाः ॥ २ ॥

यस्मात् ॥ १३ ॥ विषयसंगस्तु योगभ्रंशक इति वदन्कस्त्वं निगूढश्चरसीति प्रश्नस्योत्तरमाह । अहमिति द्वाभ्याम् । विमुक्तो दृष्टश्रुताभ्यां संगनिमित्तो बंधो येन । हतोऽर्थः प्रयोजनं यस्य ॥ १४ ॥ श्रीकृष्णार्चनं भ्रष्टमप्युद्धरतीत्याह । सेति । जनसंगादि शंकमानः अविवृतोऽप्रकटः ॥ १५ ॥ असंगैर्महद्भिर्यः सुसंगस्तेन जातं ज्ञानमेवासिः खड्गस्तेन छिन्नमोहः सन् अध्वनः संसारमार्गस्यातिशायितं श्रेष्ठं पारं हरिं याति । यद्वा । पारमति अतिक्रम्य हरिं याति “ अतिरतिक्रमणे च ” इति कर्मप्रवचनीयत्वाद्द्वितीया । यस्य हरेरीहानां कथनस्मृतिभ्यां लब्धा स्मृतिर्येन सः ॥ १६ ॥ इति पंचमस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२ ॥ छ ॥ त्रयोदशेऽविरक्ताय वृथा तत्त्वनिरूपणम् ॥ इति वैराग्यदार्ढ्याय भवाटव्युपवर्ण्यते ॥ १ ॥ अध्वनः पारमित्युक्तं तमेवाध्वानं प्रसिद्धमार्गरूपकेण वैराग्याय प्रपंचयति । दुरत्यये दुस्तरेऽध्वनि प्रवृत्तिमार्गे रजस्तमःसत्त्वैर्विभक्तानि कर्माणि कार्यतया पश्यतीति तथा स एष प्रसिद्धः । सार्थो जीवसमूहोऽर्थपरः सुखार्थः सन् । यथा वणिक्सार्थोऽर्थार्जनाय गच्छन्नटवीं याति तद्वत् ॥ १ ॥ अस्याध्यायस्य व्याख्यानरूप उत्तराध्यायोऽस्ति तथापि सुखप्रतिपत्तये किंचित्किंचिद् व्याख्यायते । यस्यां भवाटव्या

यच्छति ददाति ॥ १३ ॥ मह्यं स्वापराधिने महापामरायाप्येवं ज्ञानमुपदिशन्परमकृपालुः को भवानित्यपेक्षायामाह-अहमिति । दृष्टे श्रुते च व्यवहारे राज्यादौ स्वर्गादौ च संगबंध आसक्तिलक्षणो बंधो विमुक्तो येन सः । तदपि दैवादसावधानोऽभवमित्याह–मृग इति ॥ १४ ॥ या पूर्वजन्मनि कृष्णार्चनजाता साऽधुनापि वर्त्तत इत्यर्थः । वीरेति । शत्रुहननवदज्ञानहननेपि प्राप्ताधिकारत्वात्समर्थोऽसि कथं ममोद्धारः स्यादिति मा शोचेति भावः । यतः संगोऽनर्थहेतुरथो अतः ॥ १५ ॥ यस्मात्कृष्णार्चनमीदृक्प्रभावं तस्माद्धेतोः । ओ वासुदेवस्तत्र संगो येषां तेऽसंगाः श्रीकृष्णभक्तास्तैः । पारं हरिं ''यस्तस्य पारेऽभिविराजते विभुः'' इत्युक्तेस्तस्य पारस्थत्वश्रवणान्नपारत्वमिति चेत्तत्राह–यद्वेति।पारं मोक्षं वातिक्रम्य हरिं श्रीकृष्णं याति भजते ''सालोक्यसार्ष्टिसामीप्यम्'' इत्यारभ्य ''दीयमानं न गृह्णंति विना मत्सेवनं जनाः'' इति कपिलोक्तेः । असंगो व्यवहारानासक्तिः सुसंगो महत्संगस्ताभ्यां जातज्ञानखड्गेन वा ॥१६॥ इति श्रीमद्भागवतभावार्थदिपिकाप्रकाशे पञ्चमस्कंधे द्वादशोऽध्यायः ॥१२॥ अविरक्ताय अनिर्विण्णाय । 'अटव्यरण्यं विपिनम्' इत्यमरः ( १ ) 'सार्थो वणिक्समूहे स्यात्' इति मेदिन्युक्तेः प्रसिद्धः सार्थो वणिक्समूहो यथा तथा एष सार्थोपीति योज्यम् ॥ १ ॥ इत्यर्थ इति । भगवत्सेवार्थं विनियुक्तमपि धनं स्वस्वविषयभोगार्थं हरंतीति भावः । 'बहुमायगोमायुर्मृगधूर्त्तकाः'

प्रभूतवीरुत्तृणगुल्मगह्वरे कठोरदंशैर्मशकैरुपद्रुतः ॥ क्वचित्तु गंधर्वपुरं प्रपश्यति क्वचित्क्वचिच्चाशुरयोल्मुकग्रहम् ॥ ३ ॥ निवासतोयद्रविणात्मबुद्धिस्ततस्ततो धावतिभो अटव्याम् ॥ क्वचिच्च वात्योत्थितपांसुधूम्रा दिशो न जानाति रजस्वलाक्षः ॥ ४ ॥ अदृश्यझिल्लीस्वनकर्णशूल उलूकवाग्भिर्व्यथितांतरात्मा ॥ अपुण्यवृक्षाञ्छ्रयते क्षुधाऽर्दितो मरीचितोयान्यभिधावति क्वचित् ॥ ५ ॥ क्वचिद् वितोयाः सरितोऽभियाति परस्परं चालषते निरंधः ॥ आसाद्य दावं क्वचिदग्नितप्तो निर्विद्यते क्व च यक्षैर्हृतासुः ॥ ६ ॥

मिमे इंद्रियनामानः षड् दस्यवश्चौराः । कुत्सितो नायकः सारथिर्बुद्धिर्यस्य तं सार्थं विलुंपंति तस्य धर्म्यं धनमुपभोगेन मुष्णंतीत्यर्थः । गोमायवः सृगालतुल्या दारापत्यादयस्त्वं मे भर्ता पितेत्येवं प्रविश्य प्रमत्तं सार्थिकं सार्थे स्थितं हरंति इतस्तत आकर्षंति । उरणं मेषम् ॥ २ ॥ वीरुधो लतास्तृणानि च गुल्माश्च लतादिजालानि प्रभूतैस्तैर्गह्वरे दुष्प्रवेशे क्षेत्रे कठोरैस्तीव्रैर्दंशैर्मक्षिकाविशेषैर्मशकैश्च यथा कश्चिदुपद्रुतो भवत्येवं कामकर्मादिभिर्गह्वरे गृहाश्रमे वर्तमानो दुर्जनैरुपद्रुतो भवतीत्यर्थः । गंधर्वपुरवदघटमानमेव देहादिकं प्रकर्षेण सत्यमेवेदमिति पश्यति । क्वचित्क्वचित्कापिक्काप्याशुरयोऽतिवेगो य उल्मुकाकारो ग्रहः पिशाचस्तत्तुल्यं सुवर्णमुपादेयत्वेन प्रपश्यतीत्यर्थः ॥ ३ ॥ निवासादिष्वात्मा स्वभावो यस्याः सा बुद्धिर्यस्य स ततस्ततो धावतीत्युभयत्र तावानेवार्थः । वात्या चक्रवातस्तस्यामुत्थितः पांसुस्तेन धूम्रा दिशो रजस्वले रजोव्याप्ते अक्षिणी यस्य स यथा न जानाति तथा वात्येव भ्रमयंती या स्त्री तस्यामुद्रतै रागादिभिरप्रकाशमाना दिग्देवताः कर्मसाक्षिभूता न जानातीत्यर्थः ॥ ४ ॥ अदृश्यानां झिल्लीनां भृंगारिकासंज्ञानां कीटविशेषाणां स्वनैः कर्णयोः शूलो व्यथा यस्य । उलूका घूकास्तेषां वाग्भिर्व्यथितोऽन्तरात्मा मनो यस्य अत्र च परोक्षमप्रियवक्तारो झिल्लीतुल्याः प्रत्यक्षमप्रियवक्तारो घूकतुल्याः येषां छायापि पापहेतुस्ते अपुण्यवृक्षास्तत्तुल्यानधार्मिकान्सेवते । मरीचितोयानिति निष्फलत्वेन विज्ञातानपि विषयान् ॥ ५ ॥ वितोयासु सरित्सु पतितस्य गात्रभंगात्सद्यो दुःखं भवति न चोदकलाभस्तद्वदिह च परत्र दुःखदान्पाखंडानभियाति । आलषते दायादादिभ्योऽन्नादि वांछति । उभयत्रापि स एवार्थः । दावं दावाग्नितुल्यं दुःखदं गृहं प्राप्य शोकाग्निना तप्तो निर्विद्यते विषीदति । तत्र च यक्षराक्षसतुल्यै राजभिर्हृतमसुवत्प्रेष्ठं धनं यस्य स निर्विद्यते ॥ ६ ॥

इति।'कोक ईहामृगो वृकः' इति 'मेढ्रोरभ्रोरणोर्णायुमेषवृष्णय एडकः' इति चामरः । गोमायव इति लुप्तोपमा।सार्थे स्थितमन्नवस्त्रादिसंपुटं प्रमत्तं परमार्थदृष्टिविमुखम्।आविश्य तस्य गृह इवांतःकरणेऽपि प्रविश्येत्यर्थः ॥२॥ इत्यर्थ इति । पिशाचवन्मृत्युहेतुभूतमपि स्वर्णमुपादेयमिदमिति पश्यतीति भावः ॥ ३ ॥ उभयत्र संसारपक्षे वनपक्षे च तुल्य एवार्थः दिशंति स्वाभिमतं प्रयच्छंतीति दिशो देवाः । इत्यर्थ इति । जीवकृतपुण्यपापकर्मसाक्षिभूता आदित्यादिदेवता अपि न गणयति । कामांधस्य दिग्देवतादिज्ञानं सर्वमेव नश्यतीति भावः ॥ ४ ॥ 'झिल्ली भृंगारिकायां स्यात्' इत्यभिधानात् । येषां छायापीति " दिवा विभीतकच्छाया रात्रौ चलदलस्य च। दिवारात्रौ कपित्थस्य हंति पुण्यं पुराकृतम्॥" इत्युक्तेः ॥ ५ ॥ 'अंधोन्नम्' इत्यमरः । निर्विद्यते धिङ् मां धनरहितमिति खिन्नो भवतीत्यर्थः । "हिरण्यं हि मनुष्यस्य प्राणा ह्येते बहिश्चराः" इति कौमोक्तेरसव

शूरैर्हृतस्वः क्व च निर्विण्णचेताः शोचन् विमुह्यन्नुपयाति कश्मलम् ॥ क्वचिच्च गंधर्वपुरं प्रविष्टः प्रमोदते निर्वृतवन्मुहूर्तम् ॥ ७ ॥ चलन् क्वचित् कंटकशर्करांघ्रिर्नगारुरुक्षुर्विमना इवास्ते ॥ पदेपदेऽभ्यंतरवह्निनाऽर्दितः कौटुंबिकः क्रुध्यति वै जनाय ॥ ८ ॥ क्वचिन्निगीर्णोऽजगराहिना जनो नावैति किंचिद्विपिनेऽपविद्धः ॥ दष्टः स्म शेते क्व च दंदशूकैरंधोंधकूपे पतितस्तमिस्रे ॥ ९ ॥ कर्हि स्म चित्क्षुद्ररसान् विचिन्वंस्तन्मक्षिकाभिर्व्यथितो विमानः ॥ तत्रातिकृच्छ्रात्प्रतिलब्धमानो बलाद्विलुंपत्यथ तं ततोऽन्ये ॥ १० ॥ क्वचिच्च शीतातपवातवर्षप्रतिक्रियां कर्तुमनीश आस्ते ॥ क्वचिन्मिथो विपणन् यच्च किंचिद्विद्वेषमृच्छत्युत वित्तशाठ्यात् ॥ ११ ॥ क्वचित् क्वचित् क्षीणधनस्तु तस्मिञ्छय्यासनस्थानविहारहीनः ॥ याचन् परादप्रतिलब्धकामः पारक्यदृष्टिर्लभतेऽवमानम् ॥ १२ ॥ अन्योऽन्यवित्तव्यतिषंगवृद्धवैरानुबंधो विवहन् मिथश्च ॥ अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैर्विहरन् विपन्नः ॥ १३ ॥

अन्यैश्च शूरैर्हृतं स्वं वित्तं यस्य । निर्विण्णं विषण्णं चेतो यस्य । कश्मलं मूर्छाम् । गंधर्वपुरमिव मनोरथोपगतपितृपुत्रादिसमाजं प्रविष्टः सन् ॥ ७ ॥ कंटकादिविद्धांघ्रिरिव विघ्नैरभिभूतः सन्नगतुल्यं महत्कर्मारोढुं कर्तुमिच्छुर्विमना इव आस्ते । पदेपदे क्षणेक्षणे । अभ्यंतरेण वह्निना जाठरेण ॥ ८ ॥ अजगराहिना निद्रारूपेण गिलितो न वेत्ति । विपिने त्यक्तः शव इव दंदशूकैर्हिंस्रैर्दुर्जनैर्दष्टः पीडितोंधो लुप्तविवेकोंधकूपे मोहे पतितस्तमिस्रे दुःखे शेते लीयते ॥ ९ ॥ क्षुद्ररसान्परयोषादीन्विचिन्वन्गवेषयंस्तन्मक्षिकाभिर्योषादिस्वामिभिर्विमानोऽवज्ञातस्ताडितः सन्व्यथितो भवति । यदि कथंचित्तत्रातिक्लेशेन प्रतिलब्धमानः प्राप्तयोषादिर्भवति तदा बलादन्येऽपहरंति तान्यदाऽभियुंक्ते तदा ततोऽप्यन्ये हरंति ॥ १० ॥ यत्किंचिदत्यल्पमपि मिथो व्यवहरन् क्रयादिना गृह्णन् । वित्तशाठ्याद्धनवंचनात् ॥ ११ ॥ शाय्यादिहीनः । आस्यतेऽस्मिन्नित्यासनं कंबलादि । स्थीयतेऽत्रेति स्थानं गृहम् । विहरंत्यनेनेति विहारो यानादि । याचमानोऽपि यदा परस्मादप्राप्तकामस्तदा परकीये वस्तुनि दृष्टिरभिलाषो यस्य सोऽवमानं प्राप्नोति ॥ १२ ॥ एवमन्योन्यं वित्तव्यतिषंगेण धनविनिमयेन विवृद्धो वैरानुबंधो यस्य तथाविधोऽपि परस्परं विवहन् विवाहादिसंबंधं कुर्वन्नुरुभिः कृच्छ्रैः श्रमैर्वित्तबाधैरुपस

एव धनमिति वा ॥ ६ ॥ मनोरथेनैव पितृपुत्रादिसमाजं संपाद्य तत्र मानोरथिकं सुखमनुभवतीत्यर्थः ॥ ७ ॥ महत्कर्म वैदिकमिष्टापूर्त्तादि कन्यापुत्रोद्वाहादि यशो वा विमना इव सहायकाभावात्कथमहमेतत्पारयिष्यामीति चिंतयन्नास्ते ॥ ८ ॥ ९ ॥ तत्र तदाऽतिक्लेशेन वित्तव्ययादिना बलाद्वृद्धवित्तव्ययादितः अभियुंक्ते उपभुंक्ते ॥ १० ॥ अनीशोऽसमर्थः ॥ ११ ॥ अभिलाषश्चौर्यादिना हरिष्येऽस्येदं धनमितीच्छा । अवमानं बधबंधादिरूपम् ॥ १२ ॥ वित्तस्य धनस्य बाधैर्नाशैः । यद्वा—उरुकृच्छ्रेणाप्तं वित्तमुरुकृच्छ्रवित्तं मध्यपदलोपी समासः । तस्य बाधेन नाशेन ये उपसर्गा वैक्लव्यादयस्तैः ॥ १३ ॥

तांस्तान् विपन्नान् स हि तत्र तत्र विहाय जातं परिगृह्य सार्थः ॥ आवर्ततेऽद्यापि न कश्चिदत्र वीराध्वनः पारमुपैति योगम् ॥ १४ ॥ मनस्विनो निर्जितदिग्गजेंद्रा ममेति सर्वे भुवि बद्धवैराः ॥ मृधे शयीरन् न तु तद्व्रजंति यन्न्यस्तदंडो गतवैरोऽभियाति ॥ १५ ॥ प्रसज्जति क्वापि लताभुजाश्रयस्तदाश्रयाव्यक्तपदाद्विजस्पृहः ॥ कचित्कदाचिद्धरिचक्रतस्त्रसन् सख्यं विधत्ते बककंकगृध्रैः ॥ १६ ॥ तैर्वंचितो हंसकुलं समाविशन् न रोचयञ्छीलमुपैति वानरान् ॥ तज्जातिरासेन सुनिर्वृतेंद्रियः परस्परोद्वीक्षणविस्मृतावधिः ॥ १७ ॥ द्रुमेषु रंस्यन् सुतदारवत्सलो व्यवायदीनो विवशः स्वबंधने ॥ क्वचित् प्रमादाद्गिरिकंदरे पतन् वल्लीं गृहीत्वा गजभीत आस्थितः ॥ १८ ॥

गैश्च द्वेषादिभिर्विपन्नो मृतप्रायो भवति ॥ १३ ॥ दुरत्ययत्वमध्वनो दर्शयति । तांस्तान्विपन्नान्मृतान्विहाय जातंजातं परिगृह्य विहरन्यतः प्रस्थितस्तं प्रति नावर्तते । हे वीर अध्वनः पारं यो योगस्तं च नोपैति । अत्र सार्थे । कश्चिदतिसमर्थोऽपि ॥ १४ ॥ तदेवाह । मनस्विनः शूराः निर्जिता दिग्गजेंद्रा यैः ममेयं भूर्ममेयमिति भुवि निमित्तभूतायां बद्धं वैरं यैः । न्यस्तदंडः संन्यासी । यद्विष्णोः पदमभियाति तत्तु न व्रजंति ॥ १५ ॥ सिंहावलोकनेन पुनर्भवाटवीमेवानुवर्णयति । प्रसज्जत्यासक्तिं करोति । कीदृशः । लतानां भुजाः शाखास्तद्वत्सुकुमारा ये स्त्रीणां भुजास्तदाश्रयः सन् । तदाश्रया अव्यक्तपदा अस्फुटाक्षराः कलभाषिणो ये द्विजाः पक्षिणस्तत्तुल्येषु स्त्रीसंगप्रसक्तेष्वपत्येषु स्पृहा यस्य तादृशो भूत्वा हरिचक्रं सिंहसमूहस्तत्तुल्यात्कालचक्रनिमित्ताज्जन्ममरणादेस्त्रसंस्तत्परिहाराय कैश्चित्प्रलोभितो बकादिवद्वंचकैः क्षुद्रैः क्रूरैश्च पाखंडैः सह सख्यं करोति तेषु प्रविशति ॥ १६ ॥ तैर्वंचितस्तत्र फलाभावं ज्ञात्वा हंसानां ब्राह्मणानां कुलं पुनः प्रविशंस्तेषां शीलं प्रायश्चित्तपूर्वकं पुनरुपनयनाद्याचारमरोचयन्नप्रियं पश्यन्वानरतुल्यान् भ्रष्टाचारान् शूद्रप्रायानुपैति । तज्जातिरासेन वानरजातिक्रीडया स्त्रिया मिथुनीभूय परस्परमुखोद्वीक्षणेन विस्मृतो जीवितावधिर्मरणकालो येन ॥ १७ ॥ द्रुमवत्केवलदृष्टार्थेषु गृहेषु व्यवायदीनः सुरतेच्छया कृपणः एवं स्वस्य यद्बंधनं प्राप्तं तस्मिन्विवशः परिहर्तुमशक्तः । पाठांतरे तु वने संसारे चर

विपन्नान्मृतप्रायान् । योऽविपन्नः स हीति जातंजातमविपन्नमविपन्नं यतः परमेश्वराच्चलितरतं प्रतीत्यर्थः । तत्प्राप्तिसाधनं योगमुपायं भक्तिज्ञानादिकं पारं पारप्रापकं नोपैति । अत्र सार्थमध्ये । वीरेति । हे वाक्छूरेत्यभिप्रायः ॥ १४ ॥ तदेव तदनावर्तनमेव ॥ १५ ॥ पक्षे भार्योत्संगवर्त्तिनि अस्फुटाक्षरभाषिणि । द्वाभ्यां स्त्रीपुंसाभ्यां जातत्वात् द्विजे बालके दर्शनस्पर्शनादिस्पृहा यस्य तादृशो भूत्वा कदाचित्काले क्वापि देशे स्वयमेव कथमरे संसारं तरिष्यामीति दैवात्पाषंडानां वाक्येन वा त्रस्यन् ॥ १६ ॥ शूद्रप्रायान् लिंगिनः । जटाभस्मदेवमुद्राकाषायांबरधारिणः "नास्तिकानुगता बौद्धाः कापालाद्यास्तु लिंगिनः । कलौ ते बहुधा लोकान्निगमात्पेशलोक्तिभिः॥ध्यावयिष्यंति राजेंद्र ते दंड्या नृपसत्तमै ॥" इत्यादिपुराणात् । तज्जातिरासेन तज्जातौ भोजनपानस्त्रीसंगादिस्वाच्छंद्येन लिंगिमध्य एव सुखं नान्यत्रेति प्रसन्नमना भवतीत्यर्थः ॥१७॥ पाठांतरे चरन्वने

अतः कथंचित् स विमुक्त आपदः पुनश्च सार्थं प्रविशत्यरिंदम ॥ अध्वन्यमुष्मिन्नजया निवेशितो भ्रमञ्जनोऽद्यापि न वेद कश्चन ॥ १९ ॥ रहूगण त्वमपि ह्यध्वनोऽस्य संन्यस्तदंडः कृतभूतमैत्रः ॥ असज्जितात्मा हरिसेवया शितं ज्ञानासिमादाय तराति पारम् ॥ २० ॥ राजोवाच ॥ अहो नृजन्माखिलजन्मशोभनं किं जन्मभिस्त्वपरैरप्यमुष्मिन् ॥ न यद्धृषीकेशयशःकृतात्मनां महात्मनां वः प्रचुरः समागमः ॥ २१ ॥ न ह्यद्भुतं त्वच्चरणाब्जरेणुभिर्हतांहसो भक्तिरधोक्षजेऽमला ॥ मौहूर्तिकाद्यस्य समागमाच्च मे दुस्तर्कमूलोऽपहतोऽविवेकः ॥ २२ ॥ नमो महद्भ्योऽस्तु नमः शिशुभ्यो नमो युवभ्यो नम आवटुभ्यः ॥ ये ब्राह्मणा गामवधूतलिंगाश्चरंति तेभ्यः शिवमस्तु राज्ञाम् ॥ २३ ॥

न्नित्यर्थः । गिरिकंदरवदतिभयानके रोगादिदुःखे पतन्कंदरस्थगजतुल्यान्मृत्योर्भीतः सन् वल्लीतुल्यं प्राचीनं कर्मावलंब्यावस्थितो भवति ॥ १८ ॥ सार्थं प्रविशति यथा पूर्वं प्रवृत्तिमार्गे रमते न वेद परमपुरुषार्थम् ॥ १९ ॥ त्वमपि अध्वनि निवेशित इत्यनुषंगः । अतोऽस्याध्वनः पारमातितर । असज्जितात्मा विषयेष्वनभिनिवेशितचित्तः सन् । हरिसेवया शितं तीक्ष्णीकृतम् ॥ २० ॥ अखिलजन्मसु शोभनं नृजन्मैव । न परं श्रेष्ठं येभ्यो देवादिजन्मभ्यस्तैरपि किम् । अमुष्मिन् स्वर्गेऽपि जन्मभिः किं न किंचित् । यद्येषु जन्मसु यत्र स्वर्गे वा वो महात्मनां समागमः प्रचुरो न भवति । हृषीकेशस्य यशसा कृतः शोधित आत्मा यैस्तेषाम् ॥ २१ ॥ संततमुपासितैस्त्वत्पदाब्जरेणुभिर्हतमंहो यस्य तस्याधोक्षजे निर्मला भक्तिर्भवतीति नैवाद्भुतम् । यस्य तव मुहूर्तमात्रभवात्समागममात्रादपि दुस्तर्केण बद्धमूलोपि ममाविवेको नष्टः ॥ २२ ॥ ब्रह्मविदः केन रूपेण विचरंतीत्यज्ञानात्सर्वान्नमस्यति । नम इति । ये बटवः क्रीडारतत्वादश्रद्धेयधौरेयास्तानप्यभिव्याप्य सर्वेभ्यो नम इत्यर्थः । स्वदृष्टांतेन राज्ञां महद

इति पाठे । इत्यर्थः इति व्याख्येयम् ॥ १८ ॥ अतः संसाररूपाया आपदः । कथंचित्सत्संगादिना । अरिंदमेति । त्वमज्ञानशत्रुदमनेऽपि समर्थो भवेत्यभिप्रायः ॥ १९ ॥ रहयति त्यजति संसारमनयेति रहूः श्रीकृष्णभक्तिः तया गण्यते संख्यायते लोक इति रहूगण तत्सम्बुद्धौ इत्यन्वर्थनामा भवेति भावः ॥ २० ॥ कथमहमकस्मादेव कृतार्थोभूवमिति साश्चर्यं सवितर्कमाह–अखिलेति । अहो अद्भुतेऽस्मिन्मर्त्यलोके । हृषीकेशस्य स्वभक्तसर्वेंद्रियाकर्षकस्य । आत्मा बुद्धिः ॥ २१ ॥ ननु प्रचुर इत्युक्त्या किं स्वल्पसंगस्यानर्थकत्वं ब्रूषे । मैवम् । अत्यौत्सुक्ययंत्रित एव तथा ब्रवीमीत्याह–नहीति । ब्रह्मादिभिरपि दुर्लभा भगवत्यमला भक्तिर्युष्मच्चरणधूलिप्राप्तिमात्रेणैव भवतीत्येतदपि नाश्चर्यम् आश्चर्यं खल्वेतदेव यन्मद्विधानां ज्ञानलवदुर्विग्धानां कूटयुक्तिविप्लुतधियां चेतःपरावृत्तं भक्तियोगोन्मुखीकरणं तच्च मौहूर्तिकादेव समागमाद्यद्भूत्तर्हि प्रचुरस्य समागमस्य माहात्म्यं को वक्तुं क्षमतामिति तत्र मया स्वौत्सुक्यमेव व्यंजितमिति भावः ॥ २२ ॥ हंतहंत शिबिकां वहंस्तत्र भवान् स्वं यदि नाज्ञापयिष्यत्तदा ममापराधिनः का गतिरभविष्यदिति सभयं प्रणमति–नम इति ।

श्रीशुक उवाच॥इत्येवमुत्तरामातः स वै ब्रह्मर्षिसुतः सिंधुपतय आत्मसतत्त्वं विगणयतः परानुभावः परमकारुणिकतयोपदिश्य रहूगणेन सकरुणम
भिवंदितचरण आपूर्णार्णव इव निभृतकरणोर्म्याशयो धरणिमिमां विचचार ॥ २४ ॥ सौवीरपतिरपि सुजनसमवगतपरमात्मसतत्त्व आत्मन्य
विद्याऽध्यारोपितां देहात्ममातिं विससर्ज ॥ एवं हि नृप भगवदाश्रिताश्रितानुभावः ॥ २५ ॥ राजोवाच ॥ यो ह वा इह बहुविदा महाभागवत त्वयाऽ
भिहितः पारोक्ष्येण वचसा जीवलोकभवाध्वा स ह्यार्यमनीषया कल्पितविषयो नांजसाऽव्युत्पन्नलोकसमधिगमः ॥ अथ तदेवैतद्दुरवगमं समवेतानु
कल्पेन निर्दिश्यतामिति ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भवाटव्युपवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ स होवाच ॥ य एष
देहात्ममानिनां सत्त्वादिगुणविशेषविकल्पितकुशलाकुशलसमवहारविनिर्मितविविधदेहावलिभिर्वियोगसंयोगाद्यनादिसंसारानुभवस्य द्वारभूतेन ष
डिंद्रियवर्गेण तस्मिन् दुर्गाध्ववदसुगमेऽध्वन्यापतित ईश्वरस्य भगवतो विष्णोर्वशवर्तिन्या मायया जीवलोकोऽयं यथा वणिक्सार्थोऽर्थपरः स्वदेह
निष्पादितकर्मानुभवः श्मशानवदशिवतमायां संसाराटव्यां गतो नाद्यापि विफलबहुप्रतियोगेहस्तत्तापोपशमनीं हरिगुरुचरणारविंदमधुकरानु
पदवीमवरुंधे यस्यामु ह वा एते षडिंद्रियनामानः कर्मणा दस्यव एव ते ॥ १ ॥

वज्ञां संभाव्याह । राज्ञां शिवमस्त्विति॥ २३ ॥उत्तरा माता यस्य हे उत्तरामातः । विगणयतो न गणयतः । अवमंतर्यपि परमकरुणाकरत्वेन सिंधुपतये आत्मतत्त्वमुपदिश्य । निभृताः शांताः करणानामूर्मयो यस्मिन्स आशयो यस्य॥ २४ ॥सुजनात्तस्मात्सम्यगवगतं परमात्मसतत्त्वं येन तथाभूतः संस्तदानीमेव देहे आत्ममतिं च विससर्ज।हेनृप भगव दाश्रितो भरतस्तदाश्रितो रहूगणो यस्तस्यानुभावः सद्यो देहाहंकारत्यागः॥ २५ ॥परोक्षेण वणिक्सार्थरूपकेण । आर्याणां विवेकिनां मनीषयैव दस्युस्थानीयानींद्रियाणि गो मायुस्थानीयान्यपत्यादीनीत्येवं कल्पितविषयः अव्युत्पन्नस्य तु लोकस्य तु जनस्य सम्यगधिगमो न भवति।अथ अतस्तदेतदेव भवाध्वरूपं समवेतानुकल्पेन प्रस्तुते तत्तदनुरूपार्थो पकल्पनेन॥ २६ ॥इति पंचमस्कंधे टीकायां त्रयोदशोऽध्यायः॥ १ ३ ॥चतुर्दशे भवारण्यरूपकव्याकृतिः कृता॥प्रस्तुते तस्य गोमायुमशकाद्यर्थकल्पनम्॥ १ ॥यः परीक्षिता पृष्टः

अश्रद्धेषु धौरेया मुख्याः ॥२३॥ हंतहंत महाभूरिभाग एव रहूगणो यत्तादृशब्रह्मतेजसि शिबिकावाहनादपराद्धोऽपि तदनुग्रहामृतवृष्ट्याभिषिक्तः कृतार्थी बभूव । अहं त्वतिमंदभाग्यो विप्रगले सर्पार्पणापराधात्तदपराधाक्षमापणा त्तदभिशापविषदष्टो न जाने किमंधं तमो यास्यामीति विषीदंतं राजानमाश्वासयति–इत्येवमिति । उत्तरा माता यस्येति । भो राजन् त्वन्मातुर्गर्भे प्रविश्य ब्रह्मतेजसः सकाशाद्भगवान्स्वयमेव त्वां ररक्ष स्वं दर्शयामास च पुनरपि सांप्रतं ब्रह्मतेजसो रक्षितुं मामेतांश्च नारदादिमहामुनीन्प्रेर्य त्वदंतिकमानीयैतेषामपारकृपामृतेन त्वामभिषिच्य भागवतामृतं मद्द्वारा पाययन्स एव प्रभुर्ब्रह्मतेजोऽपि व्यर्थीचकारेति रहूगणात्तस्माद्भरताच्च मत्तश्चैतेभ्यो महामुनिभ्यश्च त्वदीयं सौभाग्यमतिमहत्तमं व्यंजयामास तदपि किं विषीदसीति भावः । न गणयतस्तिरस्कुर्वतोपि । संबंधसामान्यविवक्षया षष्ठी । परोऽनुभावो यस्माद्यस्य वेति सः । करणानामिंद्रियाणामूर्मयो वृत्तयः ॥ २४ ॥ सुजनाच्छ्रीमद्भरतात् । आत्मनि स्वस्मिन्याऽनादित एव प्रवृत्ताऽविद्या तयारोपितां देहात्मबुद्धिम् ॥ २५ ॥ समवेतं योग्यं यथा भवति तथा आनुकूल्येन पुनःपुनःकथनेन वा ॥ २६ ॥ इति श्रीम द्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ ॥ भवारण्यरूपकस्य व्याकृतिर्व्याख्या ( १ ) श्रीगुरुचरणाश्रयं विना संसाराटव्यां भ्रमत्येवेति भावः । ननु जीवसंसारस्य मायाकृतत्वान्माया

तद्यथा पुरुषस्य धनं यत्किंचित् साक्षाद्धर्मौपयिकं बहुकृच्छ्राधिगतं साक्षात्परमपुरुषाराधनलक्षणो योऽसौ धर्मस्तं तु सांपराय उदाहरंति तद्धर्म्यं धनं दर्शनस्पर्शनश्रवणास्वादनावघ्राणसंकल्पव्यवसायगृहग्राम्योपभोगेन कुनाथस्याजितात्मनो यथा सार्थस्य तथाऽजितात्मनो विलुंपंति ॥ २ ॥ अथ च यत्र कौटुंबिका दारापत्यादयो नाम्ना कर्मणा वृकसृगाला एव अनिच्छतोऽपि कदर्यस्य कुटुंबिन उरणकवत् संरक्ष्यमाणं मिषतोऽपि हरंति ॥ ३ ॥ यथा ह्यनुवत्सरं कृष्यमाणमप्यदग्धबीजं क्षेत्रं पुनरेवावपनकाले गुल्मतृणवीरुद्भिर्गह्वरमिव भवत्येवमेव गृहाश्रमः कर्मक्षेत्रं यस्मिन् न हि कर्माण्युत्सीदंति यदयं कामकरंड एष आवसथः ॥ ४ ॥

स श्रीशुक उवाच।हेति सूतोक्तिः।दुरत्ययेऽध्वन्यजया निवेशित इति यदुक्तं तदेव निवेशनप्रकारकथनेन प्रपंचयति।य एष प्रसिद्धो जीवलोकोऽयं विष्णोर्माययाऽसुगमेऽध्वन्यापतितो भवाटवीं गतः सन् हरिरूपस्य गुरोश्चरणारविंदे ये मधुकराः सेवकास्तेषामनुपदवीं तैरनुष्ठितं भक्तिमार्गमद्यापि नावरुंधे न संप्राप्नोतीत्यन्वयः। मायायाः स्वकार्यद्वारेण संसारमार्गे पातहेतुत्वमाह।देहात्ममानिनां सत्त्वादिगुणविशेषैर्विकल्पितानि विभक्तानि यानि कुशलाकुशलविमिश्रकर्माणि तैर्विनिर्मिताभिर्विविधदेहावलिभिर्वियोगसंयोगादिर्योऽनादिः संसारस्तदनुभवस्य द्वारभूतेन षडिंद्रियवर्गेण तस्मिन्संसाररूपे दुर्गमार्गवदसुगमेऽध्वन्यापतितो यथा वणिजां सार्थः समूहोऽर्थार्जनपरः । स्वदेहनिष्पादितानां कर्मणां फलद्वारेणानुभवो यस्य विफलाश्च बहुशर्तयोगा बहुविघ्नाश्च ईहाश्चेष्टा यस्य सः।तस्यां संसाराटव्यां ये तापास्तेषामुपशमनीं नाशनीम्।यस्यामित्यादि व्याचष्टे।यस्यां भवाटव्याम्॥ १ ॥ दस्युतुल्यं तेषां कर्म दर्शयति । तद्यथेति । धर्मौपयिकं धर्मकारणम् । तमेव स्वाभिप्रेतं धर्ममाह । साक्षादिति । तं तु सांपराये परलोकार्थमुदाहरंति तद्धर्म्यं धर्मार्हं धनम् । दर्शनाद्याः पंचज्ञानेंद्रियाणां वृत्तयः संकल्पव्यवसायावंतःकरणस्य एतैर्गृहे यो ग्राम्य उपभोगस्तेन कुनाथस्य कुबुद्धेरजितात्मनो विलुंपंति । यथा चौराः कुपालकस्यानवहितात्मनः । सार्थस्य धनं हरंति तद्वत् ॥ २ ॥ गोमायवो यत्रेत्येतद्व्याचष्टे । अथ चेत्यर्थांतरोपन्यासे । कर्मणा ते तु वृकाः सृगालाश्च कदर्यस्यातिलुब्धस्य ॥ ३ ॥ प्रभूतवीरुत्तृणगुल्मगह्वरमित्येतद्व्याचष्टे । यथाहीति । न दग्धानि बीजानि यस्मिन् । यद्यस्माद्योऽयमावसथ आश्रम एष कामानां करंडः यथा कर्पूरभाजने कर्पूरक्षयेऽपि परिमलो न

देवीमेव जीवः प्रपद्यतां सैव प्रसन्ना तं संसारान्मोचयिष्यति किं हरिगुरुचरणप्रपत्त्या तत्राह–विष्णोर्वशवर्त्तिन्या माययेति । संसारान्मोचने न तस्याः स्वातंत्र्यमिति भावस्तदुक्तं ''दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥'' इति गीतायां, तत्र श्लोके एवकारेण समुच्चयपक्षोपि निरस्तः । ''विघ्ने च तुल्ययोर्योगे प्रतियोगस्तथोद्यमे' इति निरुक्तिः ॥ १ ॥ २ ॥ कर्मणा स्वस्वव्यापारेण दर्शनादिना संरक्ष्यमाणं स्वार्थिकमन्नगुडघृतादिसंपुटम् । उरणकवन्मेषवत् ॥ ३ ॥ आवसथो गृहस्थाश्रमः । ''आवसथो ग्रामगेहशिबिरादिषु युज्यते'' इति । ''करंडोऽसिकोशपिटकासरघापटलेषु च'' इति निरुक्तिः । इत्यर्थ

तत्र गतो दंशमशकसमापसदैर्मनुजैः शलभशकुंततस्करमूषकादिभिरुपरुध्यमानो बहिःप्राणः क्वचित्परिवर्तमानोऽस्मिन्नध्वन्यविद्याकामकर्मभिरुपरक्तमनसाऽनुपपन्नार्थं नरलोकं गंधर्वनगरमुपपन्नमिति मिथ्यादृष्टिरनुपश्यति ॥ ५ ॥ तत्र च क्वचिदातपोदकनिभान् विषयानुपधावति पानभोजनव्यवायादिव्यसनलोलुपः ॥ ६ ॥ क्वचिच्चाशेषदोषनिषदनं पुरीषविशेषं तद्वर्णगुणनिर्मितमतिः सुवर्णमुपादित्सत्यग्निकामकातर इवोल्मुकपिशाचम् ॥ ७ ॥ अथ कदाचिन्निवासपानीयद्रविणाद्यनेकात्मोपजीवनाभिनिवेश एतस्यां संसाराटव्यामितस्ततः परिधावति ॥८॥ क्वचिच्च वात्यौपम्यया प्रमदयाऽऽरोहमारोपितस्तत्कालरजसा रजनीभूता इवासाधुमर्यादो रजस्वलाक्षोऽपि दिग्देवता अतिरजस्वलमतिर्न विजानाति ॥९॥

क्षीयते एवमत्र वासनानामक्षीणत्वान्न कर्माण्युत्सीदंतीत्यर्थः ॥ ४ ॥ दंशमशकतुल्यैरपसदैर्नीचैः शलभादिभिश्चोपरुध्यमानः पीड्यमानो बहिःप्राणो वित्तं यस्य तथाविधोऽप्यस्मिन्नध्वनि परिभ्रमन्नविद्यादिभिरुपरक्तेन मनसा गंधर्वपुरतुल्यमघटमानं नरलोकं सत्यतया मिथ्यादृष्टिरनुपश्यति ॥ ५ ॥ प्रपश्यतीति प्रशब्दसूचितमर्थांतरं दर्शयति । तत्र च गंधर्वपुरे क्वचिदातपोदकं मृगतृष्णाजलं तत्तुल्यान्विषयानुपधावतीति॥६॥क्वचित्क्वचिच्चाशुरयोल्मुकग्रहमित्येतद्व्याचष्टे। क्वचिच्चाशेषाणां दोषाणां निषदनं स्थानं पुरीषविशेषमग्नेर्विष्ठा तस्य पुरीषस्येव लोहितो वर्णो यस्य रजोगुणस्य तेन निर्मिता तद्विषया मतिर्यस्य स सुवर्णमुपादातुमिच्छति । अग्निकामेन कातरः परवश उल्मुकसदृशं पिशाचमिव । शीतातुरो ह्यरण्येऽग्निवज्ज्वाज्वल्यमानं ततस्ततो धावंतमुल्मुकपिशाचमग्निबुद्ध्याऽनुधावति न तु तं प्राप्नोति कथंचित्प्राप्तश्चेत्तर्हि तेन भक्षितः सन् म्रियते । एवं सुवर्णमनुधावन्नपीत्यर्थः ॥ ७ ॥ निवासतोयद्रविणेत्येतद्व्याचष्टे । अथेति । निवासादिष्वनेकेष्वात्मन उपजीव्येष्वभिनिवेशो यस्य ॥८॥ क्वचिच्च वात्योत्थितेत्येतद्व्याचष्टे ।

इति । सर्वथा नाशस्तु कर्मणां विना ज्ञानं न संभवति गृहस्थस्य सर्वदा कर्मासक्तत्वाज्ज्ञानं दुर्लभमेवातो गृहस्थे कर्मणामनवरतास्थितिरेवेति भावः ॥४॥ 'गर्ह्यो नीचोपसदनिंद्या' इति कोशात् । 'वित्तं बहिश्चराः प्राणाः' इत्यभियुक्तोक्तेः । परिवर्त्तमानः परावृत्त्य परामृशन् । न उपपन्नोऽर्थो वित्तं यस्य तं नरलोकवञ्चकनृपादिकं पश्यति ततश्च तदुपासनया वाञ्छितवित्तादिकमुपपन्नमिति गंधर्वनगरमिव तमनुपश्यति ॥ ५ ॥ आदिना गानादिग्रहः ॥ ६ ॥ पुरीषविशेषं मलविशेषम् । तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं भवतीति वक्ष्यमाणत्वात् । 'पुरीषं मलहेययोः' इति कोशात् । इत्यर्थ इति । सुवर्णार्थमितस्ततस्तत्प्राप्तये यत्नं कुर्वन्यदि तदाप्नोति तदा चौरादिस्ततस्तदुपाहर्तुं तमेव मारयतीति भावः । स्वर्णमत्र द्रव्यमात्रोपलक्षकं परकीयस्येति केचित् ॥ ७ ॥ आदिना वस्त्रादिग्रहः । 'अत्रोपजीव्याभिनिवेशः' इति पाठष्टीकानुरोधात्प्रतिभाति । उपजीव्येषूपजीवनसाधनेषु ॥ ८ ॥ वात्यया धूलिचक्रेण सहौपम्यमुपमा यस्यास्तया । अत एव रजश्छन्नमतित्वादेव । देवता वह्निसूर्याद्याः । असाधुमर्यादस्त्यक्तशास्त्रमर्यादः ॥ ९ ॥

---

१–दृष्टाश्चायं पाठोऽग्रदेशाङ्कितपुस्तकेषु ।

क्वचित्सकृदवगतविषयवैतथ्यः स्वयं पराभिध्यानेन विभ्रंशितस्मृतिस्तयैव मरीचितोयप्रायांस्तानेवाभिधावति ॥१०॥ क्वचिदुलूकझिल्लीस्वनवदतिपरुषरभसाटोपं प्रत्यक्षं परोक्षं वा रिपुराजकुलनिर्भर्त्सितेनातिव्यथितकर्णमूलहृदयः ॥ ११ ॥ स यदा दुग्धपूर्वसुकृतस्तदा कारस्करकाकतुंडाद्यपुण्यद्रुमलताविषोदपानवदुभयार्थशून्यद्रविणान् जीवन्मृतान् स्वयं जीवन् म्रियमाण उपधावति ॥१२॥ एकदाऽसत्प्रसंगान्निकृतमतिर्व्युदकस्रोतःस्खलनवदुभयतोऽपि दुःखदं पाखंडमभियाति ॥ १३ ॥ यदा तु परबाधयांध आत्मने नोपनमति तदा हि पितृपुत्रबर्हिष्मतः पितृपुत्रान् वा स खलु भक्षयति ॥ १४ ॥

क्वचिच्चेति आरोहमंकम् । तस्मिन्काले यद्रजो रागस्तेन स्वदृष्ट्यावरकेण रजन्यां रात्रौ भूता इव । ह्रस्वपाठे रजनीभूतस्तमोमय इवातीव रजसाच्छन्नमतिरत एव रजोव्याप्तचक्षुरिव दिक्षु स्थिता मर्यादातिक्रमसाक्षिभूता देवता न जानाति ॥ ९ ॥ अनुपादेयमेवोपादेयतया गृह्णातीति प्रक्रमसाजात्यादुत्तरश्लोकचतुर्थपादं प्रथमं व्याचष्टे । क्वचित्सकृदिति । क्वचिदातपोदकनिभानित्यत्र मिथ्याविषयेषु लंपटत्वमुक्तम् । निवासतोयेत्यत्र तदर्जनप्रयास उक्तः । अत्र तु बाधितेष्वपि पुनः प्रवृत्तिरुच्यते इत्यपौनरुक्त्यम् । स्वयमेव सकृदवगतं विषयाणां वैतथ्यं विफलत्वं येन । पराभिध्यानेन देहाभिनिवेशेन विभ्रंशिता स्मृतिर्यस्य । तयैव विभ्रंशितया स्मृत्या स्मृतिभ्रंशादेवेत्यर्थः ॥ १० ॥ अदृश्यझिल्लीस्वनेत्येतद्व्याचष्टे । क्वचिदुलूकेति । अतिपरुषो रभस उत्साहस्तेनाटोपः संभ्रमो यथा भवत्येवं रिपूणां राजकुलस्य च निर्भर्त्सितेनातिव्यथितं कर्णमूलं हृदयं च यस्य ॥ ११ ॥ अपुण्यवृक्षानित्येतद्व्याचष्टे । स यदेति । दुग्धमुपभुक्तं पूर्वसुकृतं येन तदा कारस्करो विषतिंदुस्तत्प्रमुखा येऽपुण्यद्रुमास्तथाविधा लताश्च विषोदपानाश्च विषकूपास्तत्तुल्यान् दृष्टादृष्टप्रयोजनशून्यधनान् ॥ १२ ॥ क्वचिद्वितोयाः सरित इत्येतद्व्याचष्टे । एकदा क्वचिदसतां प्रसंगान्निकृता वंचिता मतिर्यस्य सः निरुदकनदीगर्तपाते यथा सद्यः शिरः स्फुटति पश्चादपि तद्वेदनाऽनुवर्तते एवमिह परत्र च दुःखदम् ॥ १३ ॥ परस्परं चालयते निरंध इत्येतद्व्याचष्टे । यदात्विति । अंधोऽन्नम् । नोपन

उत्तरश्लोकचतुर्थपादं पूर्वाध्यायस्थपंचमश्लोकस्य मरीचितोयानीति चतुर्थं पादमित्यर्थः। अत्र क्वचित्क्रमेण क्वचित्क्रमोल्लंघनेन क्वचित्पौनरुक्त्येनापि व्याख्यानं नावगणनीयं न हि महाटव्यां सर्व एव पंथा ऋजुः कर्तुं शक्य इति। अत्र स्वप्रौढिमपहाय यथास्थितमेव व्याख्यायते मरीचितोयान्यभिधावति क्वचिदिति व्याचष्टे—क्वचिदिति । इत्यर्थ इति । न हि यथावत्स्मृतिकोऽन्यथा चरति किं तु तद्धीन एवेति भावः ॥१०॥ ११ ॥ दृष्टप्रयोजनं भोगः अदृष्टप्रयोजनमिष्टापूर्त्तादिकरणमेतदुभयानुपयुक्तद्रव्यान् । दृष्टादृष्टप्रयोजनशून्यधना एव जीवन्मृता लोके कथ्यंत इत्यर्थः । किञ्च—दृष्टादृष्टप्रयोजनशून्यधनसेवी यः स एव जीवन्म्रियमाण इत्युच्यते इति भावः॥१२॥ तद्वेदना शिरःस्फुटनपीडा । पाखंडमिह लोकापत्राददुःखं परत्र नरकदुःखम् ॥१३॥ इत्यर्थ इति । शृणु भो मत्पुत्रान्मत्पितुर्वा सकाशात्त्वत्पुत्रेण त्वया च गताद्गतवर्षे कुशत्रयं गृहीतं तच्च न दत्तमधुना तद्ग्रैष्मिकहैमंतिकान्नतृणादि

क्वचिदासाद्य गृहं दाववत् प्रियार्थविधुरमसुखोदर्कं शोकाग्निना दह्यमानो भृशं निर्वेदमुपगच्छति ॥१५॥ क्वचित् कालविषमितराजकुलरक्षसाऽपहृत प्रियतमधनासुः प्रमृतक इव विगतजीवलक्षण आस्ते॥१६॥ कदाचिन्मनोरथोपगतपितृपितामहाद्यसत् सदिति स्वप्ननिर्वृतिलक्षणमनुभवति॥१७॥ क्वचिद्गृहाश्रमकर्मचोदनाऽतिभरगिरिमारुरुक्षमाणो लोकव्यसनकर्शितमनाः कंटकशर्कराक्षेत्रं प्रविशन्निव सीदति ॥१८॥ क्वचिच्च दुःसहेन कायाभ्यंतरवह्निना गृहीतसारः स्वकुटुंबाय क्रुध्यति ॥ १९ ॥ स एव पुनर्निद्राऽजगरगृहीतोंधे तमसि मग्नः शून्यारण्य इव शेते नान्यत् किंचन वेद शव इवापविद्धः ॥ २० ॥ कदाचिद् भग्नमानदंष्ट्रो दुर्जनदंदशूकैरलब्धनिद्राक्षणो व्यथितहृदयेनानुक्षीयमाणविज्ञानोंधकूपेंधवत् पतति ॥ २१ ॥

मति नोपतिष्ठति पितृपुत्राणां बर्हिः कुशस्तद्वतः पितुः पुत्राणां वा कुशादितृणमात्रमपि येषु पश्यति तान्भक्षयति बाधत इत्यर्थः । पितृपुत्रबर्हिष्ठानिति तु पाठः सुगमः ॥ १४ ॥ आसाद्य दावमित्येतद्व्याचष्टे । क्वचिदासाद्येति ॥ १५ ॥ क्व च यक्षैर्हृतासुरित्येतद्व्याचष्टे । क्वचित्कालेन विषमितं प्रतिकूलतां नीतं यद्राजकुलं तदेव रक्षस्तेनापहृताः प्रियतमधनरूपा असवो यस्य । विगतानि जीवलक्षणानि हर्षादीनि यस्य शूरैर्हृतस्व इत्यप्यनेनैव व्याख्यातम् ॥ १६ ॥ क्वचिच्च गंधर्वपुरं प्रविष्ट इत्येतद्व्याचष्टे । कदाचिन्मनोरथप्राप्तं पित्राद्यसदेव सदिति मत्वा । पूर्वं गंधर्वपुरवदघटमानदर्शनमुक्तमिदानीं तन्निमित्तसुखासाक्तिरुच्यत इति भेदः ॥१७॥ चलन् क्वचिदित्येतद्व्याचष्टे । क्वचिद् गृहाश्रमे याः कर्मचोदनास्तासामतिभरोऽतिविस्तारः स एव गिरिस्तमारुरुक्षंस्तदंतं गंतुमिच्छन् ॥ १८ ॥ पदेपदेऽभ्यंतरवह्निनेति व्याचष्टे। क्वचिच्च दुःसहेनेति ॥ १९ ॥ क्वचिन्निगीर्ण इत्येतद्व्याचष्टे । स एवेति ॥ २० ॥ दष्टः स्म शेते इति व्याचष्टे। कदाचिदिति । मानो गर्व एव दंष्ट्रा परपीडाकरत्वात् । भग्ना मानदंष्ट्रा

दानवर्द्धमानत्वरीत्या''अन्नं सपादं षण्मासे तृणं हि द्विगुणं भवेत्'' इत्यतः प्रथमषण्मासे द्विगुणं भवेत्पुनर्द्वितीये तद्द्विगुणं तृतीये तद्द्विगुणमेवमग्रेऽपि ज्ञेया वर्द्धनरीतिस्तथा च भारो जात इति तत्तत्तन्मौल्यं वा झटिति देहि नो चेदहं राज्ञे कथयामीति तान्पीडयतीति भावः । अथ वा बालं पुत्रमपि दुर्भिक्षे विक्रीय तद्विक्रयलब्धान्नभक्षणं तद्भक्षणमेव तथैव वृद्धं पितरं कस्यचिद्द्वारपालं विधाय ततो लब्धद्रव्येण स्वपालनं यत्तत्पितृभक्षणमेवेति भावः । पितृपुत्रयोर्बर्हिषि तिष्ठंति भुंजंतीति तथा बर्हिःपदमत्र बर्हिरुत्पादकक्षेत्रपरतया व्याख्येयम् ॥ १४ ॥ दाववद्दुनवद्दहिवद्वा प्रियार्थैर्विधुरं रहितं दुःखाधिकम् । अहो गृहमतिदुःखरूपं कदास्य त्यागो भविष्यतीति निर्वेदं प्राप्नोति ॥ १५ ॥ विगतजीवलक्षणः शोकमूर्च्छितः ॥ १६ ॥ असन्मृतमपि सत्पुनः परलोकादागतमिति मत्वा स्वप्न इव निर्वृतिरानंदस्तत्स्वरूपम् ॥ १७ ॥ कर्मचोदनाः कर्मविधयो विवाहाश्वमेधादिरूपाः । लोकानां प्रतिवेशिजनानां व्यसनं तादृशबृहत्कर्मासक्तिस्तेन कर्शितमनाः । एते स्वप्रतिष्ठार्थं बृहत्कर्म कुर्वंति तदहं कथं न करोमीति विक्षुब्धचित्तः कंटकशर्कराभिर्युक्तं क्षेत्रं प्रविशन्पुरुषो यथाऽवसीदति तथा स कस्यचिदृणेन धनं गृहीत्वोपस्थितं कर्म कृत्वोत्तमर्णगृहीतो दातुमशक्तोऽतीव दुःखी भवतीति भावः ॥ १८ ॥ गृहीतसारो दग्धवैर्यः ॥ १९ ॥ अपविद्धः त्यक्तः ॥ २० ॥ अत एव भग्नमानदंष्ट्रत्वादेव । अंधकूपे

कर्हिस्मचित् काममधुलवान् विचिन्वन् यदा परदारपरद्रव्याण्यवरुंधानो राज्ञा स्वामिभिर्वा निहतः पतत्यपारे निरये ॥ २२ ॥ अथ च तस्मादुभयथाऽपि हि कर्मास्मिन्नात्मनः संसारावपनमुदाहरंति ॥ २३ ॥ मुक्तस्ततो यदि बंधाद्देवदत्त उपाच्छिनत्ति तस्मादपि विष्णुमित्र इत्यनवस्थितिः ॥२४॥ क्वचिच्च शीतवाताद्यनेकाधिदैविकभौतिकात्मीयानां दशानां प्रतिनिवारणे अकल्पो दुरंतचिंतया विषण्ण आस्ते ॥ २५ ॥ क्वचिन्मिथो व्यवहरन् यत्किंचिद्धनमन्येभ्यो वा काकिणिकामात्रमपहरन् यत्किंचिद्वा विद्वेषमेति वित्तशाठ्यात् ॥ २६ ॥ अध्वन्यमुष्मिन्निम उपसर्गास्तथा सुखदुःखरागद्वेषभयाभिमानप्रमादोन्मादशोकमोहलोभमात्सर्येर्ष्याऽवमानक्षुत्पिपासाधिव्याधिजन्मजरामरणादयः ॥ २७ ॥ क्वापि देवमायया स्त्रिया भुजलतोपगूढः प्रस्कन्नविवेकविज्ञानो यद्विहारगृहारंभाकुलहृदयस्तदाश्रयावसक्तसुतदुहितृकलत्रभाषितावलोकविचेष्टितापहृतहृदय आत्मानमजितात्माऽपारेंधे तमसि प्रहिणोति ॥ २८ ॥

यस्य अत एव न लब्धो निद्रायाः क्षणोऽपि येन ॥ २१ ॥ कर्हिस्मचित्क्षुद्ररसानित्येतद्व्याचष्टे । कर्हिस्मचित्काममधुलवानिति । यदा निहतौ भवति तदा सद्य एव निरये पतति ॥ २२ ॥ प्रसंगात्प्रवृत्तस्य कर्मणः संसारहेतुत्वं स्फुटयति । अथ चेति । यस्मादेवं तस्मात् । अथ अनंतरमेव । उभयथा इह च परत्र च अस्मिन्प्रवृत्तिमार्गे । संसारस्यावपनं जन्मक्षेत्रं कर्मोदाहरंति ॥ २३ ॥ तत्रातिकृच्छ्रात्प्रतिलब्धमान इत्येतद्व्याचष्टे । मुक्त इति । यदि बंधान्मुक्तो भवति तर्हि ततः सकाशादन्यो हरति तस्मादप्यन्यः न त्वसौ भोक्तुं लभत इत्यर्थः ॥ २४ ॥ क्वचिच्च शीतातपेत्येतद्व्याचष्टे । क्वचिच्चेति । शीतादयोऽनेका आधिदैविकाद्या या दशा दुःखावस्थास्तासाम् ॥ २५ ॥ क्वचिन्मिथ इत्येतद्व्याचष्टे । क्वचिन्मिथो यत्किंचिद्धनं व्यवहरन्काकिणिकामात्रं विंशतिकपर्दकमात्रं ततोऽपि न्यूनं वा यत्किंचिदपहरन्विद्वेषमेति ॥ २६ ॥ अध्वन्यमुष्मिन्नुरुकृच्छ्रवित्तबाधोपसर्गैरित्युक्तानुपसर्गान्प्रपंचयति । अध्वन्यमुष्मिन्निमे उरुकृच्छ्रवित्तबाधादयस्तथा सुखदुःखादयश्च ॥ २७ ॥ व्युत्क्रमैः पुनरुक्तैश्च नानापाठैरतः परम् ॥ दुर्गमोऽपि भवाध्वायं संप्रदायेन तीर्यते । तत्र प्रसज्जति क्वापीत्यादिना । सिंहावलोकनन्यायेनोक्तमर्थमपकृष्य क्रमेण व्याचष्टे क्वापि देवमाययेति । प्रस्कन्नमपगतं विवेकविज्ञानं यस्य । यस्याः स्त्रिया विहारगृहं क्रीडागृहं तदारंभे आकुलं हृदयं यस्य अनेन प्रसज्जतीति व्याख्यातम् । तदाश्रयेत्यादि व्याचष्टे । तस्या आश्र

शोकलक्षणे ॥ २१ ॥ अवरुंधानः स्वीकुर्वाणः । स्वामिभिर्दारादिपतिभिर्निहतो मृतो भवति निरये पतति अपमृत्युमरणादिति भावः ॥ २२ ॥ यस्मादेवं कर्मफलमवश्यं भुज्यते तस्माद्धेतोः । अथ कर्मप्रवृत्त्यनंतरमेव । उभयथा पुण्यप्रकारेण पापप्रकारेण च । अस्मिन् जगति । आत्मनो जीवस्य ॥२३॥ बंधात्तत्स्वामिदत्तबंधप्रहारादेर्यदि द्रव्यादिव्ययेन मुक्तः संस्तद्दारान्संभोक्तुं प्राप्नोति तदा देवदत्तोऽन्यः कश्चिल्लम्पटस्तत आच्छिद्य ततोऽपि बहुधनादिव्ययेन भुंक्ते तस्मादप्यन्य इति न प्रकामं भोक्तुं लभते । इत्यर्थ इति । अनंतधनबलादेरभावादिति भावः । देवदत्तविष्णुमित्राविरयेतौ सर्वजनमात्रे प्रयोक्तव्यशब्दौ ॥२४॥ दैविकाश्च भौतिकाश्चात्मीयाश्चेति दैविकभौतिकात्मीयाः अधिना सहिता दैविकभौतिकात्मीया अधिदैविकभौतिकात्मीयास्तथा चाधिदैविका अधिभौतिका अध्यात्मीयाश्च या देशास्तासामित्यर्थः ॥ २५ ॥ "शाठ्यं लोभे च वञ्चने" इत्यभिधानात् ॥२६॥ २७ ॥ व्युत्क्रमैर्विपरीतक्रमैः । संप्रदायेन सद्गुरुकृपया । तत्र भवाटव्याम् । सैव स्त्री यस्या आश्रये संलग्ना सेत्यर्थः । यद्वा—कलत्रं पुत्रवधूः । अंधे तमसि अंध तामिस्रे । अपारे पारयितुमशक्ये ॥ २८ ॥

कदाचिदीश्वरस्य भगवतो विष्णोश्चक्रात् परमाण्वादिद्विपरार्धापवर्गकालोपलक्षणात् परिवर्तितेन वयसा रंहसा हरत आब्रह्मतृणस्तंबादीनां भूतानाम निमिषतो मिषतां वित्रस्तहृदयस्तमेवेश्वरं कालचक्रं निजायुधं साक्षाद् भगवंतं यज्ञपुरुषमनादृत्य पाखंडदेवताः कंकगृध्रबककवटप्राया आर्यसम यपरिहृताः सांकेत्येनाभिधत्ते ॥ २९ ॥ यदा पाखंडिभिरात्मवंचितैस्तैरुरुवंचितो ब्रह्मकुलं समावसंस्तेषां शीलमुपनयनादिश्रौतस्मार्तकर्मानुष्ठा नेन भगवतो यज्ञपुरुषस्य आराधनमेव तदरोचयञ्छूद्रकुलं भजते निगमाचारेऽशुद्धितो यस्य मिथुनीभावकुटुंबभरणं यथा वानरजातेः ॥ ॥ ३० ॥ तत्रापि निरवरोधः स्वैरेण विहरन्नतिकृपणबुद्धिरन्योन्यमुखनिरीक्षणादिना ग्राम्यकर्मणैव विस्मृतकालावधिः ॥ ३१ ॥

येऽवसक्ताः संलग्नाः सुता दुहितरश्च कलत्रं च सैव स्त्री तेषां भाषितादिभिरपहृतं हृदयं यस्य । प्रहिणोति प्रक्षिपति ॥ २८ ॥ क्वचित्कदाचिद्धरिचक्रतस्त्रसन्नित्येतद्व्याचष्टे । कदाचिदीश्वरस्येति । परमाणुरादिः द्विपरार्धोऽपवर्गांतः तदेवोपलक्षणं यस्य तस्मात् कालोपलक्षणादिति पृथक्पदत्वेन पाठे कालस्वरूपादित्यर्थः । रंहसा शीघ्रेण परिव र्तितेन परिभ्रमणेन वयसा बाल्यादिक्रमेण ब्रह्माणमभिव्याप्य तृणस्तंबादीनि भूतानि हरतश्चक्रतः सकाशाद्वित्रस्तहृदयः सन्पाखण्डदेवता आभिमुख्येन धत्त इत्यन्वयः । अनिमिषतो निमेषमकुर्वतः । अप्रमत्तादित्यर्थः । मिषतां प्रतिकर्तुमशक्तानामित्यर्थः । कर्मणि षष्ठ्यः । कालचक्रं निजं नित्यमायुधं यस्य । सांकेत्येन मूलप्रमाणशून्येन पाखंडागमेन ॥ २९ ॥ तैर्वंचित इत्येतद्व्याचष्टे । यदा त्विति । आत्मना वंचितैरुरु अधिकं वंचितः सन् । तेषां ब्राह्मणानां यच्छीलमुपनयनादि तदरोचयन् शूद्रवद्व र्तते । निगमोक्ताचारे अशुद्धितः स्वस्य शुद्ध्यभावात् यस्य शूद्रस्य केवलं मिथुनीभावः कुटुम्बभरणं च व्यापारो नाग्निहोत्रादिः ॥३०॥ तज्जातिरासेनेत्यादि व्याचष्टे ।

परमाणुरादिर्द्विपरार्द्धोऽपवर्गांतो यस्यैवंविधो यः कालस्तदेवोपलक्षणं यस्येति । तदिति नपुंसकं तूपलक्षणविशेषणत्वात् । पृथक्पदत्वेन पाठे 'द्विपरार्द्धापवर्गात्कालोपलक्षणात्' इति पाठे । आभिमुख्येन धत्ते सेव्यत्वेनांगी करोति । इत्यर्थ इति । सावधानात्स्वावसरे हंतुमुद्युक्तादिति भावः । इत्यर्थ इति । असमर्थ एव हंतुं प्रवृत्तं पश्यन् क्षमत इति भावः । अकारप्रश्लेषे व्यवहारे प्रमत्तानामित्यर्थः । कर्मणि षष्ठ्य इति । भूतानि हरत इत्यर्थः । यद्वा—आयुरित्यध्याहार्यं तेषामायुर्हरत इति । आर्यसमयपरिहृताः शिष्टाचाररहिताः । कंकादयः पक्षिणः । कश्मलवृत्तयो यथा तादृशा एव कश्मला देवता यासामर्चनादौ स्नानाद्यपेक्षा नास्ति ताः कश्मलदेवतास्ताश्च सेविताः स्वसेविनां कश्मलमेव लोकं वैतरिण्याद्युपलक्षितं नयंति 'देवान्देवयजो यान्ति' इति न्यायेन नहि सिंहग्रस्तं कंकादयो मोचयितुं समर्था अपि तु सिंहकर्तृकतद्धनने प्रमुदिता भवंति । सिंहावशिष्टमेतन्मांसादि वयमपि भक्षयाम इति विमृश्येति भावः ॥ २९ ॥ आत्मना वांचितैः स्वकल्पितकुपथगामित्वादिति उरु वंचितः कल्पितकिंचिन्मात्रापराधमिषेण धनाद्यपहृत्य स्वधर्मात्प्रच्याव्य स्वगणान्निःसारितः । शूद्रकुलं शूद्रकुलाचारम् । निगमोक्ताचारमध्ये याऽशुद्धिरुच्यते तयैव यस्य मिथुनीभावः । विधवायास्त्यक्तधवाया वा मूल्यादिप्रदानेन परिणयः ॥ ३० ॥ तत्रापि शूद्राचारस्वी

क्वचिद् द्रुमवदैहिकार्थेषु रंस्यन् यथा वानरः सुतदारवत्सलो व्यवायक्षणः ॥ ३२ ॥ एवमध्वन्यवरुंधानो मृत्युगजभयात्तमसि गिरिकंदरप्राये ॥ ३३ ॥ क्वचिच्छीतवाताद्यनेकदैविकभौतिकात्मीयानां दुःखानां प्रतिनिवारणे अकल्पो दुरंतविषयविषण्ण आस्ते ॥ ३४ ॥ क्वचिंन्मिथो व्यवहरन् यत्किंचिद्धनमुपयाति वित्तशाठ्येन ॥ ३५ ॥ क्वचित्क्षीणधनः शय्यासनाशनाद्युपभोगविहीनो यावदप्रतिलब्धमनोरथोपगतादानेऽवसितमतिस्ततस्ततोऽवमानादीनि जनादपि लभते ॥ ३६ ॥ एवं वित्तव्यतिषंगविवृद्धवैरानुबंधोऽपि पूर्ववासनया मिथ उद्वहत्यथापवहति ॥ ३७ ॥ एतस्मिन् संसाराध्वनि नानाक्लेशोपसर्गबाधित आपन्नविपन्नो यत्र यस्तमु ह वावेतरस्तत्र विसृज्य जातंजातमुपादाय शोचन् मुह्यन् बिभ्यद् विवदन् क्रंदन् संहृष्यन्गायन्नह्यमानः साधुवर्जितो नैवावर्त्ततेऽद्यापि यत आरब्ध एष नरलोकसार्थो यमध्वनः पारमुपदिशंति ॥ ३८ ॥

तत्रापि निरवरोधः प्रतिबंधरहितः स्वैरेण स्वेच्छया क्रीडन्विस्मृतमृत्युकालः सन् ॥ ३१ ॥ द्रुमेषु रंस्यन्नित्येतद्व्याचष्टे । क्वचिद् द्रुमवदिति व्यवायक्षणो मैथुनोत्सवो भवति ॥ ३२ ॥ कचित्प्रमादादित्येतद्व्याचष्टे । एवमध्वनि सुखदुःखाद्यवरुंधानो गिरिकंदरप्राये तमसि रोगाद्यापदि पततीति शेषः ॥ ३३ ॥ क्वचिच्छीतवातेत्यादिपूर्वस्मादधिकोक्तिः । रोगाद्यापदि पतितः सन् शीतादिभिः क्लिश्यन्नास्त इत्यर्थः ॥ ३४ ॥ तदेवं सिंहावलोकनन्यायेनोक्तमर्थं यथास्थानमपकृष्य व्याख्याय क्रमस्थमनुवर्तयितुं पूर्वोक्तमेवानुवदति । क्वचिन्मिथ इति । वित्तशाठ्येन कदाचिद्यत्किंचिद्धनमुपयाति ॥ ३५ ॥ क्वचित्क्वचित्क्षीणधनस्त्विति व्याचष्टे । क्वचित्क्षीणधन इति । अप्रतिलब्धं यन्मनोरथेनोपगतं वांछितं तस्याऽऽदाने स्वीकारे निश्चितमतिः सन् ॥ ३६ ॥ अन्योन्यावित्तव्यतिषंगेणेत्येतद्व्याचष्टे । एवं वित्तव्यतिषंगेति । अपवहति त्यजति ॥ ३७ ॥ अध्वन्यमुष्मिन्नित्यादि व्याचष्टे । एतस्मिन्निति । आपन्न आपदं प्राप्तः विपन्नो विनष्टो वा यत्र यस्तमितरस्तत्र विसृज्य नह्यमानो वध्यमानः साधुवर्जितः साधुव्यतिरिक्तः ॥ ३८ ॥

कंारेऽपि । निरवरोधो धर्ममर्यादाभिरनवरुध्यमानः ॥ ३१ ॥ व्यवाय एवोत्सवो यस्य न तु भक्तिज्ञानसुसंगादावित्यर्थः ॥ ३२ ॥ ३३ ॥ इत्यर्थ इति । असमर्थः सन्केवलदुःखमेवावशो भुंक्त इति भावः ॥ ३४ ॥ पुनस्तदेव स्थूणानिखननन्यायेनाह–तदेवमिति । उपयाति प्राप्नोति ॥ ३५ ॥ आदाने स्वीकारे । यावत्तावतोर्नित्यसंबंधात्तावदवमानादीनीति योज्यम् । आदिना ताडनादिग्रहः ॥ ३६ ॥ व्यतिषंगेण ऋणादानप्रत्यर्पणादिसंबंधेन विवृद्धो वैरानुबंधो वैरपरंपरा यस्य तादृशोऽपि पूर्ववासनया पूर्वप्रीतिवासनानुरोधेन उद्वहति विवाहादिसंबंधं करोति । अथापवहति पुनरुद्वाहं त्यजति च ॥ ३७ ॥ जातंजातं धनादिभिः प्रसिद्धंप्रसिद्धंम् । बिभ्यत् भयं प्राप्नुवन् । क्रंदन्रुदन् । साधुवर्जितो हरिभक्तसंगे सत्येव तरतीति भावः । यतः परमेश्वरादारब्धः प्रचलितोऽयमध्वा यश्चाध्वनः पारं पारप्रापकं वदंति

यदिदं योगानुशासनं न वा एतदवरुंधते यन्न्यस्तदंडा मुनय उपशमशीला उपरतात्मानः समवगच्छंति ॥३९॥ यदपि दिगिभजयिनो यज्विनो ये वै राजर्षयः किं तु परं मृधे शयीरन् ॥ अस्यामेव ममेयमिति कृतवैरानुबंधा यांति विसृज्य स्वयमुपसंहृताः ॥ ४० ॥ कर्मवल्लीमवलंब्य तत आपदः कथंचिन्नरकाद्विमुक्तः पुनरप्येवं संसाराध्वनि वर्तमानो नरलोकसार्थमुपयाति एवमुपरि गतोऽपि ॥ ४१ ॥ तस्येदमुपगायंति ॥ आर्षभस्येह राजर्षेर्मनसाऽपि महात्मनः ॥ नानुवर्त्मार्हति नृपो मक्षिकेव गरुत्मतः ॥ ४२ ॥ यो दुस्त्यजान् दारसुतान् सुहृद्राज्यं हृदिस्पृशः ॥ जहौ युवैव मलवदुत्तमश्लोकलालसः ॥ ४३ ॥ यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम् ॥ नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवाऽनुरक्तमनसामभवोऽपि फल्गुः ॥ ४४ ॥

अनावृत्तौ हेतुमाह । यदिदमिति ॥ ३९ ॥ मनस्विन इत्यादि व्याचष्टे । यदपीति । ये वै राजर्षयस्तेऽपि नावरुंधते । किं तु परं केवलं मृधे शयीरन् ॥ ४० ॥ प्रसज्जतीत्यादिगिरिकंदर इत्यंतमपकृष्य व्याख्यातं ग्रंथमतिक्रम्य वल्लीं गृहीत्वेत्यादिग्रंथं व्याचष्टे । कर्मवल्लीमिति । एवमुपरि स्वर्गं गतोऽपि नरलोकसार्थमेवोपयाति ॥ ४१ ॥ तदेवं भरतोक्तिं व्याख्याय तच्चरितसंग्रहश्लोकानाह । तस्येदं कर्म श्लोकैरुपगायंति । आर्षभस्य ऋषभपुत्रस्य अन्यो नृपोऽनुवर्त्म नार्हति वर्त्मानुगंतुं न शक्नोति ॥ ४२ ॥ तत्र हेतुमाह । य इति । सुहृद्राज्ययोर्द्वंद्वैक्यम् । यो दुस्त्यजान्दारादीन्विष्ठामिव जहौ तस्यार्षभस्येति संबंधः । दुस्त्यजत्वे हेतुः हृदिस्पृशो मनोज्ञान् । त्यागे हेतुः । उत्तमश्लोके लालसा लंपटत्वं यस्य ॥ ४३ ॥ तस्यैवं विषयत्यागो न चित्रमित्याह । य एवंभूतोऽसौ नृपः स क्षित्यादीन्नैच्छदिति यत्तदुचितम् । सदयावलोकां भरतस्य दया यथा भवत्येवमव

तं प्रति नावर्त्तते इति साधुसंगं विना तत्प्राप्तिर्नास्ति "विना महत्पादरजोभिषेकम्" इत्युक्तेः ॥ ३८ ॥ यद् यतः । इदमुक्तं योगयोर्भक्तिज्ञानयोगयोरनुशासनं कथनं समवगच्छंति ये ते वै निश्चयेन एतद्विश्वं नावरुंधते नाप्नुवंति । ततो हेतोरिति । इदं । किं यन्न्यस्तदंडस्समवगच्छंतीत्यावृत्त्या योज्यम् । न्यस्तस्त्यक्तो भूतेषु कायिकवाचिकमानसरूपो दंडो यैस्ते न्यस्तदंडाः । उपरतो निवृत्तो विषयेभ्य आत्मा मनो येषां ते तथा ॥ ३९ ॥ यदपि यद्यपि तदपि अस्यां पृथिव्याम् । उपसंहृता मृताः ॥ ४० ॥ कर्मवल्लीमिति । वल्लीवत्प्राचीनकर्मावलंब्येति ॥ ४१ ॥ भरतोक्तिं भरतोपाख्यानम् । व्याख्यायोपसंहृत्य । तच्चरिते तन्महिमनि । प्राचां सम्मतिमाह–तस्येति । तस्य भरतस्य । न शक्नोति योग्यताभावादिति भावः । मनसा मनोरथेनापि किमुत कर्मणा । मक्षिका सूक्ष्मपतगी ॥ ४२ ॥ तत्र वर्त्माऽननुगमने । तस्य प्रेमानुभावमाह–य इति । अस्योत्तरवाक्यगतत्वान्न तत्पदापेक्षा । 'मीलितं यदभिरामताधिके' इतिवत् । युवैवेति । वार्द्धवयत्यागिभ्यः प्रियव्रतादिभ्योऽप्युत्कर्षः । मलवदिति । यथा मलस्य त्याग एव निर्वृतिस्त्यागाभावे कष्टं त्यक्तस्य तस्य स्मरणे ष्ठीवनोद्यमस्तथैवेति । त्यागेऽप्यन्येभ्यो वैलक्षण्यादुत्कर्षः । उत्तमः सर्वोत्कृष्टो रूपगुणलीलामाधुर्य्यैश्वर्यस्य संबंधी श्लोको यशो यस्य तस्मिन् लालसो दर्शनाद्यौत्सुक्यं यस्य सः । तेन भगवत्सौंदर्य्याद्यना विष्टसर्वेन्द्रियाणां विरक्तानां दारादयो न मलभूता भवंतीति भरतस्योत्तमभक्तत्वं ध्वनितम् ॥ ४३ ॥ तस्य भरतस्य । उक्तमेवार्थं पुनरुल्लासेन स्पष्टीकृत्याह–य इति । परिजनावलोकोऽमात्याद्यवलोकः अमात्याद्यैः सदैवैवं निरीक्ष्यते यथा महाराजश्रीभरतस्यास्मासु दया जायेत तेषामवलोकः श्रियामुपचर्य्यते गौणत्वेन वर्ण्यते तेषामपि राज्ञः श्रीरूपत्वादिति । यद्वा–भरतो वैराग्योत्थं शारीरकष्टं मा स्वीकरोतु मया लाल्यमानो गृह एव

यज्ञाय धर्मपतये विधिनैपुणाय योगाय सांख्यशिरसे प्रकृतीश्वराय ॥ नारायणाय हरये नम इत्युदारं हास्यन् मृगत्वमपियः समुदाजहार ॥ ४५ ॥ य इदं भागवतसभाजितावदातगुणकर्मणो राजर्षेर्भरतस्यानुचरितं स्वस्त्ययनमायुष्यं धन्यं यशस्यं स्वर्ग्यापवर्ग्यं वाऽनुशृणोत्याख्यास्यति अभिनंदति च सर्वा एवाशिष आत्मन आशास्ते न कांचन परत इति ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भरतोपाख्याने ब्राह्मणरहूगणसंवादे पारोक्ष्यविवरणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीशुक उवाच ॥ भरतस्यात्मजः सुमतिर्नामाभिजितो यमु ह वाव केचित्पाखंडिन ऋषभपदवीमनुवर्तमानं चानार्या अवेदसमाम्नातां देवतां स्वमनीषया पापीयस्या कलौ कल्पयिष्यंति ॥ १ ॥ तस्माद्वृद्धसेनायां देवताजिन्नाम पुत्रोऽभवत् ॥ २ ॥

लोको यस्या इति परिजनावलोकः । श्रियमुपचर्यते । यतो मधुद्विषः सेवायामनुरक्तं मनो येषां तेषां महतामभवो मोक्षोऽपि फल्गुस्तुच्छ एव ॥ ४४ ॥ तस्य सेवानुरागमेवाह । यज्ञायेति । यज्ञरूपाय धर्मपतये यज्ञादिफलदात्रे विधौ नैपुण्यं यस्य तस्मै धर्मानुष्ठात्रे योगोऽष्टांगस्तस्मै । सांख्यं ज्ञानं तच्छिरः प्रधानं फलं यस्य तस्मै योगाय प्रकृतीश्वराय मायानियंत्रे अत एव नारं जीवसमूहः सोऽयनमाश्रयो यस्य सर्वजीवनियंत्रे एवं कर्मज्ञानदेवताकांडैः प्रतिपादिताय हरये नम इत्युदारमुच्चैर्यः सम्यगुच्चारितवान् मृगत्वं मृगदेहमपि हास्यन् त्यक्ष्यन् य एवंभूतस्तस्य तदुचितमिति वा तस्यानुवर्त्म नार्हतीति वा संबंधः ॥ ४५ ॥ भरतचरितश्रवणादिफलमाह । य इदमिति । भागवतैः सभाजिता अवदाताः शुद्धा गुणाः कर्माणि च यस्य तस्य भरतस्यानुचरितं योऽनुशृणोति स आत्मन एव सकाशात्सर्वा आशिष आशास्ते स्वत एव प्राप्नोति । न तु कांचिदपि परस्मादपेक्षत इत्यर्थः ॥ ४६ ॥ इति पंचमे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ एवमष्टभिरध्यायैर्भरतस्योक्तमीहितम् ॥ ततः पंचदशे तस्य कीर्त्यंते वंशजा नृपाः ॥ १ ॥ ऋषभपदवीं जीवन्मुक्तमार्गमनुवर्तमानम् । यं दृष्ट्वेति शेषः । यद्वा । यं सुमतिमवेदसमाम्नातां देवतां कल्पयिष्यंति । बुद्धोऽयं साक्षादवतीर्ण इति मंस्यंत

तिष्ठत्विति सदयोऽवलोको यस्यास्ताम् । तुच्छ एव तत्रापि विरज्यंतीति भावः ॥ ४४ ॥ यज्ञायेति । त्रिभिः पादैः क्रमेण कर्मज्ञानभक्तिमार्गाणां यथोत्तरमुत्कर्षो व्यंजितः । अत एव मायानियंतृत्वादेव । य एवंभूतः परमभक्तो भरतस्तस्येति । वाथ वा पक्षांतरमाह ॥ ४५ ॥ भागवतेऽस्मिञ्शास्त्रे वा सभाजिताः श्लाघिताः । इत्यर्थ इति । सर्ववांछितानि तस्यानायासेन स्वत एव सिध्यंतीति भावः ॥ ४६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥ ईहितं चरितम् । ततो भरतचरितकथनानंतरम् । तस्य भरतस्य ( १ ) दृष्ट्वेति । शेषे गौरवं प्रयोजनाभावं च मत्वाह–यद्वेति । इत्यर्थ इति । पापाविष्टबुद्धित्वादिति भावः । चक्रवर्ती तु–कलौ तस्य चरितं श्रुत्वा तादृशाचारवन्तोऽस्माकं सुमतिरेव देवता यथा बुद्ध इति बौद्धसंप्रदायाद्विच्छिद्य कल्पयिष्यंतीत्याह ॥ १ ॥ तस्मात् सुमतेः ॥ २ ॥

अथासुर्यां तत्तनयो देवद्युम्नस्ततो धेनुमत्यां सुतः परमेष्ठी तस्य सुवर्चायां प्रतीह उपजातः ॥ ३ ॥ य आत्मविद्यामाख्याय स्वयं संशुद्धो महा पुरुषमनुसस्मार ॥ ४ ॥ प्रतीहात्सुवर्चलायां प्रतिहर्त्रादयस्त्रय आसन्निज्याकोविदाः सूनवः प्रतिहर्तुः स्तुत्यामजभूमानौ अजनिषाताम् ॥ ५ ॥ भूम्न ऋषिकुल्यायामुद्गीथस्ततः प्रस्तावो देवकुल्यायां प्रस्तावान्नियुत्सायां हृदयज आसीद्विभुः ॥ विभो रत्यां च पृथुषेणस्तस्मान्नक्त आकूत्यां जज्ञे नक्ताद्द्रुतिपुत्रो गयो राजर्षिप्रवर उदारश्रवा अजायत साक्षाद्भगवतो विष्णोर्जगद्रिरक्षिषया गृहीतसत्त्वस्य कलात्मवत्त्वादिलक्षणेन महापुरुषतां प्राप्तः ॥ ६ ॥ स वै स्वधर्मेण प्रजापालनपोषणप्रीणनोपलालनानुशासनलक्षणेनेज्यादिना च भगवति महापुरुषे परावरे ब्रह्मणि सर्वात्मनार्पितपरमार्थलक्षणेन ब्रह्मविच्चरणानुसेवयापादितभगवद्भक्तियोगेन चाभीक्ष्णशः परिभावितातिशुद्धमतिरुपरतानात्म्य आत्मनि स्वयमुपलभ्यमानब्रह्मात्मानुभवोऽपि निरभिमान एवावनिमजूगुपत् ॥ ७ ॥ तस्येमां गाथां पांडवेय पुराविद उपगायंति ॥ ८ ॥ गयं नृपः कः प्रतियाति कर्मभिर्यज्वाऽभिमानी बहुविद्धर्मगोप्ता ॥ समागतश्रीः सदसस्पतिः सतां सत्सेवकोऽन्यो भगवत्कलामृते ॥ ९ ॥

इत्यर्थः ॥ १ ॥ २ ॥ तत्तनयो देवताजितः पुत्रः ॥ ३ ॥ आत्मविद्यां बहुभ्य आख्याय व्याख्याय व्याख्यानेनैव स्वयं संशुद्धोऽनुसस्मारापरोक्षतयाऽनुभूतवान् ॥ ४ ॥ प्रतिहर्ता प्रस्तोता उद्गातेति त्रयो यज्ञनिपुणाः सूनव आसन् । अजनिषातां जातौ ॥ ५ ॥ हृदयजः पुत्रः । जगतो रिरक्षिषया रक्षितुमिच्छया गृहीतं सत्त्वं येन तस्य विष्णोः कलांशः सन् ॥ ६ ॥ महापुरुषत्वमेवाह । स वै इति । धर्मस्तस्य द्विविधः । अभिषिक्तत्वात्प्रजापालनादिरेकः । गृहस्थत्वादिज्यादिश्चापरः । द्विविधोऽपि भगवति सर्वात्मनाऽर्पितः सन् परमार्थलक्षणस्तेन परिभाविता संस्कृताऽतिशुद्धा मतिर्यस्य अत एवोपरतमनात्म्यं देहाद्यहंभवो यस्मिंस्तस्मिन्नात्मनि चित्ते स्वयमेवोपलभ्यमाने ब्रह्मण्यात्मानुभवो यस्य तादृशोऽपि निरभिमान एवावनिमजूगुपत्पालयामास ॥ ७ ॥ ८ ॥ कर्मभिर्गयं कः प्रतियात्यनुकरोति न कोपि । अत्र हेतुः । यज्वादिरूपो भगवत्कलां गयमृतेऽन्यः क इत्यनुषंगः । अभिमानी सर्वतो मानास्पदं मनस्वीति वा । समागता संप्राप्ता श्रीर्येन यमिति वा । सतां सदसः सभायाः पतिः । सतां सेवकः । यद्वा यज्वादिरूपोऽपि भगवत्कलामृते गयं कोऽन्यः प्रतियातीत्यन्वयः ॥ ९ ॥

अथ अनंतरम् । ततो देवद्युम्नात् । तस्य परमेष्ठिनः । सुवर्चासंज्ञायाम् । अत्र सुवर्चलेति पाठो लेखकप्रमादादवसेयस्तीर्थेण सुवर्चायामिति पठितत्वात् ॥ ३ ॥ यः प्रतीहः ॥ ४ ॥ अत्र सुवर्चलेति पूर्वनिगदे सुवर्चेति नामभेदः ॥ ५ ॥ तत उद्गीथात् । तस्मात् पृथुषेणात् । द्रुत्यां जातः पुत्रो द्रुतिपुत्रः । महापुरुषतां पूज्यपुरुषतां परमभक्ततामिति यावत् ॥ ६ ॥ अत एव विशुद्धमतित्वादेव । आत्मानुभवो ब्रह्मैवाहमित्यनुभवः ॥ ७ ॥ ८ ॥ अत्राननुकरणे । अनुषंगोऽन्वयः । प्रसिद्धार्थमाह—मनस्वी वेति । यत्नवान्सर्व एव श्रियं प्राप्नोति 'उद्यमेन यथा लक्ष्मीः' इत्युक्तेरत्र को विशेषोऽत आह—यमिति । वेति । यज्वादिरूपामित्येवं

यमभ्यर्षिचन्परया मुदा सतीः सत्याशिषो दक्षकन्याः सरिद्भिः ॥ यस्य प्रजानां दुदुहे धराशिषो निराशिषो गुणवत्सस्नुतोधाः ॥ १० ॥ छंदांस्यकामस्य च यस्य कामान् दुदूहुराजह्रुरथो बलिं नृपाः॥ प्रत्यंचिता युधि धर्मेण विप्रा यदाशिषां षष्ठमंशं परेत्य ॥ ११ ॥ यस्याध्वरे भगवानध्वरात्मा मघोनि माद्यत्युरुसोमपीथे ॥ श्रद्धाविशुद्धाचलभक्तियोगसमर्पितेज्याफलमाजहार ॥ १२ ॥ यत्प्रीणनाद्बर्हिषि देवतिर्यङ्मनुष्यवीरुत्तृणमाविरिंचात् ॥ प्रीयेत सद्यः स ह विश्वजीवः प्रीतः स्वयं प्रीतिमगाद्गयस्य ॥ १३ ॥ गयाद्गयंत्यां चित्ररथः सुगतिरवरोधन इति त्रयः पुत्रा बभूवुश्चित्ररथादूर्णायां सम्राडजनिष्ट ॥ १४ ॥ तत उत्कलायां मरीचिर्मरीचेर्बिंदुमत्यां बिंदुमानुदपद्यत तस्मात् सरघायां मधुनामाऽभवत् मधोः सुमनसि वीरव्रतस्ततो भोजायां मंथुप्रमंथू जज्ञाते मंथोः सत्यायां भौवनस्ततो दूषणायां त्वष्टाऽजनिष्ट त्वष्टुर्विरोचनायां विरजो विरजस्य शतजित्प्रवरं पुत्रशतं कन्या च विषूच्यां किल जातम् ॥ १५ ॥

सतीः सत्यः सत्या आशिषो यासां ताः दक्षकन्याः श्रद्धामैत्रीदयेत्याद्याः । निराशिषोऽपि यस्य प्रजानामाशिषः कामान् धरा दुदुहे । तस्य गुणा एव वत्सस्तेन स्नुतमूधो यस्याः पृथिव्याः । यच्छब्दानां तं गयं कः प्रतियातीति सम्बन्धः ॥ १० ॥ छन्दांसि वेदास्तद्विहितकर्माणि च दुदूहुर्ददुहुः । युधि प्रत्यंचिता बाणैः प्रतिपूजिता नृपा यस्य । बलिमाजह्रुरर्पयामासुः । धर्मेण पालनेन दक्षिणादिभिश्च यदा प्रत्यंचिता विप्रास्तदा परेत्य लोकांतरे आशिषां धर्मफलानां षष्ठमंशमाजह्रुः । " पुण्यषड्भागमादत्ते न्यायेन परिपालयन् " इति स्मृतेः ॥ ११ ॥ उरुसोमपीथे बहुसोमपानेऽध्वरे मघोनि इंद्रे माद्यति मदं प्राप्नुवति सति श्रद्धया विशुद्धो योऽचलो भक्तियोगस्तेन समर्पितमिज्याफलमाजहार । अर्हणमिव प्रत्यक्षतः स्वीकृतवानित्यर्थः ॥ १२ ॥ यस्य भगवतः प्रीणनात् । देवादीनां द्वंद्वैक्यम् । तत्सद्यः प्रीयेत प्रीतिं गच्छेत् । स विश्वजीवः सर्वांतर्यामी स्वयं प्रीतरूप एव बर्हिषि यज्ञे गयस्य ह स्फुटं प्रीतिमगात्तृप्तोऽस्मीति प्रत्यक्षं प्रीतिमाविष्कृतवानित्यर्थः ॥ १३ ॥ १४ ॥ सुमनसि स्त्रियाम् ॥ १५ ॥



रूपं व्याख्यानं न शब्दबोधितमपि तु नेयमेव प्रथमांताद्वितीयांतयोरन्योन्यं विशेष्यविशेषणभावेनान्वयस्यानुपलब्धेरत आह–यद्वेति ॥९॥ ऊधो दुग्धाशयः ॥ १० ॥ दुदूहुरिह दीर्घ आर्षः । षष्ठो भागः षड्भाग इति तद्धितनिवृत्तिरप्याष्र्येव । स्मृतेर्याज्ञवल्क्योक्तेः ॥ ११ ॥ यस्य गयस्य । अध्वरात्मा यज्ञमूर्त्तिर्विष्णुः । इत्यर्थ इति । 'न हि परोक्षतया ब्रह्मार्पणम्' इति न्यायेन भगवति यज्ञफलं तेनार्पितं किंतु तद्भक्तिपरवशः संकल्पितं वस्तु ब्राह्मण इव साक्षात्तद्धस्ततो स्वहस्तेनैव स्वीचकारेति भावः ॥ १२ ॥ इत्यर्थ इति । तद्यशो लोके ख्यापयितुं स्वयं भगवांस्तस्मा अहो ते यज्ञो यत्र मेऽतीव तृप्तिर्जातेत्याहेति भावः ॥ १३ ॥ १४ ॥ ततः सम्राजः ।

तत्रायं श्लोकः ॥ प्रैयव्रतं वंशमिमं विरजश्चरमोद्भवः ॥ अकरोदत्यलं कीर्त्या विष्णुः सुरगणं यथा ॥१६॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे प्रियव्रतवंशानुकीर्तनं नाम पंचदशोऽध्यायः ॥ १५ ॥ राजोवाच ॥ उक्तस्त्वया भूमंडलायामविशेषो यावदादित्यस्तपति यत्र चासौ ज्योतिषां गणैश्चंद्रमा वा सह दृश्यते ॥ १ ॥ तत्रापि प्रियव्रतरथचरणपरिखातैः सप्तभिः सप्त सिंधव उपक्लृप्ता यत एतस्याः सप्तद्वीपविशेषविकल्पस्त्वया भगवन् खलु सूचितः ॥ एतदेवाखिलमहं मानतो लक्षणतश्च सर्वं विजिज्ञासामि ॥ २ ॥ भगवतो गुणमये स्थूलरूप आवेशितं मनो ह्यगुणेऽपि सूक्ष्मतम आत्मज्योतिषि परे ब्रह्मणि भगवति वासुदेवाख्ये क्षममावेशितुं तदु हैतद्गुरोऽर्हस्यनुवर्णयितुमिति ॥ ३ ॥

कीर्त्या अतिशयेनालमकरोद्भूषितवान् ॥ १६ ॥ इति श्रीमद्भागवते पंचमस्कन्धे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ पूर्वोक्तद्वीपसिंध्वादिमानचिह्नस्वरूपतः ॥ स्पष्टं प्रव क्तुमारब्धा पंचाध्यायी ततः परम् ॥ १ ॥ षोडशेऽथ तथा चोर्ध्वं परितः सन्निवेशतः ॥ मेरोः स्थितिर्महीकंजकर्णिका चोपवर्ण्यते ॥ २ ॥ प्रियव्रतचरित्रोक्तावुक्ता द्वीपादिकल्पना ॥ तद्विशेषविजिज्ञासुः कथांते परिपृच्छति ॥ ३ ॥ उक्त इति । किंपर्यंतमुक्तस्तदाह । यावदादित्यस्तपति यत्र चासौ शुक्लकृष्णपक्षयोर्नक्षत्रगणैः सह चंद्रमा वा दृश्यते तावत् ॥ १ ॥ यतो येभ्यः सिंधुभ्यः । एतस्या भुवः सूचितः संक्षेपतो दर्शितः ॥ २ ॥ जिज्ञासायाः फलमाह । भगवत इति ॥ ३ ॥

तस्मात् बिन्दुमतः । ततो वीरव्रतात् । ततो भौवनात् ॥ १५ ॥ विरजमाहात्म्यबोधकं प्राचां श्लोकमाह—तत्रायमिति । तत्र विरजविषये । अयं वक्ष्यमाणः । इमं कथितम् । चरमाणां शतजिदादीनामुद्भवो यस्मात्स तथा ॥ १६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ आदिना वर्षादिग्रहः ( १ ) परितः सर्वतः संनिवेशतः महीरूपकंजस्य कर्णिका मध्यवर्त्ति बीजकोशस्तद्रूपत्वेन मेरोः स्थितिर्वर्णिता । अत्र चशब्दः पादपूरणे ( २ ) प्रियव्रतचरित्रस्योक्तौ कथने प्रथमाध्याये । तेषां द्वीपादीनां विशेषो भेदस्तज्ज्ञातुमिच्छुः परीक्षित् ( ३ ) भूमंडलस्यायामविशेषः । तपति प्रकाशयति । तावत् तत्प्रमाणं तत्पर्यंतमित्यर्थः ॥ १ ॥ तत्रापि भूमंडलमध्येपि । रथचक्रस्य परिखातैर्नेमिनैशित्योद्धृतभूदेशैः । सप्तद्वीपानां ये विशेषा भेदास्तेषां यो विकल्पः प्रभेदः खंडादिरूपः । सूचित इति । विशेषो नोक्त इति भावः । भगवन्निति । परावरगतिज्ञत्वाद्भवत एतज्ज्ञाद्धुतमिति भावः । एतत्सिंधुद्वीपादिकमखिलमुर्वरितं यथा न भवेत्तथा । मानं परिमाणम् । लक्षणं वर्तुलचतुरस्राकारादि । न केवलमिदंमेवं किं तु यत्सप्तसागरादिभ्यः परस्तात्काञ्चनभूम्यादिकं न केवलं तावतालमपि तु तत्रापि विद्यमानं सर्वमनुर्वरीकृत्यैतदभिप्रायेण पुनः सर्वशब्दं प्रयुनक्ति सर्वमिति । जिज्ञासामीत्यनेन ज्ञानेच्छैव न तु विचारः । परस्मैपदप्रयोग आर्षः । अहमित्यनेनान्येषां प्रयोजनसद्भावेऽपि ममातीव प्रयोजनमस्तीति सूचयति अन्यथा विजिज्ञासामीत्येव वदेत् ॥ २ ॥ एवं किं तदतीव प्रेयाजनमत्राह—भगवत इति । इतः पूर्वं गुणमये सत्त्वादिगुणविरचिते स्थूलरूपे पातालाद्यचेतनावयवविशिष्टे आवेशितं निधायाभ्यस्तं विशेषस्मरणसमर्थं हि यन्मनस्तदगुणेऽपि सत्त्वादिगुणप्रवृत्तिशून्येऽपि सच्चिदानंदाकारेऽत एव सूक्ष्मेऽनुग्रहमंतरेणादृश्ये । तर्हि किं तमोमयं नेत्याह—आत्मज्योतिषि स्वयं प्रकाशे किन्नाम्नि परे ब्रह्मणि परब्रह्मसंज्ञे भगवति ऐश्वर्यादिगुणे वैदिकमंतरेण लौकिकं नाम किं तत्राह—वासुदेवाख्ये । अनेनात्र किंवदंती प्रमाणमिति सूचितम् । क्षमं समर्थम् । अत्र मयेति कर्तृपदानुक्त्या तत्रत्यानां भक्तिमिश्रयोगवतां मनोनिधित्सानुरोधेनैव मयैतत्पृच्छ्यते । मम तु त्वन्मुखकमलस्पंदमानभगवत्कथारूपमकरंदस्य कर्णाभ्यां पानमेव भगवत्प्राप्तिसाधनमिति द्योतितम् । किञ्च—इह भगवतो गुणमये स्थूलरूपे इति भेदबोधिकया षष्ठ्याऽगुणे भगवतीत्यभेदबोधकेन सामानाधिकरण्येन च भगवत्त्वस्य गुणातीतत्वं बोधितम् । गुरो इति । तव सर्वमुनिजनगुरुत्वादवश्यवक्तव्यमेवैत

ह्रदाश्चत्वारः पयोमध्विक्षुरसमृष्टजला यदुपस्पर्शिन उपदेवगणा योगैश्वर्याणि स्वाभाविकानि भरतर्षभ धारयंति ॥ १३ ॥ देवोद्यानानि च भवंति चत्वारि नंदनं चैत्ररथं वैभ्राजकं सर्वतोभद्रमिति ॥ १४ ॥ येष्वमरपरिवृढाः सहसुरललनाललामयूथपतय उपदेवगणैरुपगीयमानमहिमानः किल विहरंति ॥ १५ ॥ मंदरोत्संग एकादशशतयोजनोत्तुंगदेवचूतशिरसो गिरिशिखरस्थूलानि फलान्यमृतकल्पानि पतंति ॥ १६ ॥ तेषां विशीर्यमाणानामतिमधुरसुरभिसुगंधिबहुलारुणरसोदेनारुणोदा नाम नदी मंदरगिरिशिखरान्निपतंती पूर्वेणेलावृतमुपप्लावयति ॥ १७ ॥ यदुपजोषणाद्भवान्या अनुचरीणां पुण्यजनवधूनामवयवस्पर्शसुगंधवातो दशयोजनं समंतादनुवासयति ॥ १८ ॥ एवं जंबूफलानामत्युच्चनिपातविशीर्णानामनस्थिप्रायाणामिभकायनिभानां रसेन जंबूनामनदी मेरुमंदरशिखरादयुतयोजनादवनितले निपतंती दक्षिणेनात्मानं यावदिलावृतमुपस्पंदति ॥ १९ ॥ तावदुभयोरपि रोधसोर्या मृत्तिका तद्रसेनानु विध्यमाना वाय्वर्कसंयोगविपाकेन सदाऽमरलोकाभरणं जांबूनदं नाम सुवर्णं भवति ॥ २० ॥ यदु ह वाव विबुधादयः सह युवतिभिर्मुकुटकटककटिसूत्राद्याभरणरूपेण खलु धारयंति ॥ २१ ॥ यस्तु महाकदंबः सुपार्श्वनिरूढो यास्तस्य कोटरेभ्यो विनिःसृताः पंचायामपरिणाहाः पंच मधुधाराः सुपार्श्वशिखरात् पतंत्योऽपरेणात्मानमिलावृतमनुमोदयंति ॥ २२ ॥

विस्तारो येषाम् ॥ १२ ॥ यदुपस्पर्शिनो यत्सेविनः ॥ १३ ॥ १४ ॥ ललामो भूषणम् । सुरललनानां भूषणभूताः श्रेष्ठा याः स्त्रियस्तासां यूथस्य पतयः सह संभूय येषु विहरंति ॥ १५ ॥ एकादशशतयोजनमुत्तुंगो यो देवचूतस्तस्य शिरसः सकाशात् । फलप्रमाणमुक्तं वायुपुराणे । "अरत्नीनां शतान्यष्टावेकषष्ट्यधिकानि च ॥ फलप्रमाणमाख्यातमृषिभिस्तत्त्वदर्शिभिः" इति ॥ १६ ॥ अतिमधुरश्चासौ स्वतः सुरभिश्च सुगंधिश्च न चान्येषां गंधैरधिवासितः । बहुलश्चारुणश्च रसः स एव उदमुदकं तेन ॥ १७ ॥ यदुपजोषणाद्यस्य रसस्य सेवनात् ॥ १८ ॥ अनस्थिप्रायाणामतिसूक्ष्मबीजानाम् । यत्र निपतति ततश्चारभ्यात्मनो दक्षिणतः सर्वमिलावृतं व्याप्य वहतीत्यर्थः ॥ १९ ॥ तावत्सर्वतः रोधसोस्तटयोः ॥ २० ॥ २१ ॥ आयामोऽत्र व्यामः । स च "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगंतरम्" इत्युक्तलक्षणः

पादपा गिरिकेतवः" इति पुराणांतरात् ॥ १२ ॥ मृष्टं निर्मलं पयश्च मधु माक्षिकम् च इक्षुरसश्च मृष्टजलं च तानि पयोमध्विक्षुरसमृष्टजलानि तानि विद्यंते येषु ते तथा । मत्वर्थीयोऽच् प्रत्ययः । भरतर्षभेति । तवाप्येतादृशैश्वर्यं स्वाभाविकमेव महाराजभरतवंशश्रेष्ठत्वादतस्त्वं तादृशस्थानाभिलाषी मा भूरिति भावः ॥ १३ ॥ १४ ॥ अमराणां परिवृढाः प्रभवः "प्रभौ परिवृढः" इति निपातितत्वात् । येषु उद्यानेषु । उपदेवा गंधर्वादयस्तेषां समूहैः ॥ १५ ॥ देवचूतो देवाम्रः । 'बद्धमुष्टिकरोऽरत्निः' इत्यमरः ॥ १६ ॥ तेषामाम्रफलानां विशीर्यमाणानां स्फुटितानाम् । इलावृतस्य पूर्वदिग्देशमुपप्लावयति सर्वतः स्वप्रवाहव्याप्तं करोति ॥ १७ ॥ पुण्यजनवधूनां यक्षांगनानाम् । अनुवासयति सौरभ्ययुक्तं करोति ॥ १८ ॥ इत्यर्थ इति । आत्मनः पतनदेशाद्दक्षिणस्यां सर्वमिलावृतमुपप्लावयतीति भावः । चक्रवर्त्ती तु–दक्षिणस्यां दिशि यावदिलावृतं तावदात्मानं बर्द्धयंतीति शेषः । नवयोजनसहस्रपर्यंतं निःसृत्येत्यर्थमाह ॥ १९ ॥ तावत्पर्यंतमेव अनुविध्यमाना युज्यमाना या मृत्तिका सा सुवर्णं भवति । तत्र हेतुः–वाय्वर्केति ॥ २० ॥ यत्सुवर्णम् । आदिना गंधर्वादिग्रहः । पुनरादिना ताटंकादिग्रहः ॥ २१ ॥ सुपार्श्वे मेर्ववष्टंभीभूतपश्चिमदिक्स्थगिरौ । निरूढः स्थितः । कोटरेभ्यो महाशाखाछिद्रेभ्यः । इत्यर्थः–इति समास इति भावः । अनुमोदयंति तत्र लोकप्रशंसाभिरात्मानं हर्षयंति ॥ २२ ॥

या ह्युपयुंजानानां मुखनिर्वासितो वायुः समंताच्छतयोजनमनुवासयति ॥ २३ ॥ एवं कुमुदनिरूढो यः शतवल्शो नाम वटस्तस्य स्कंधेभ्यो नीचीनाः पयोदधिमधुघृतगुडान्नाद्यंबरशय्यासनाभरणादयः सर्व एव कामदुघा नदाः कुमुदाग्रात्पतंतस्तमुत्तरेणेलावृतमुपयोजयंति ॥ २४ ॥ यानुपजुषाणानां न कदाचिदपि प्रजानां वलीपलितक्लमस्वेददौर्गंध्यजरामयमृत्युशीतोष्णवैवर्ण्योपसर्गादयस्तापविशेषा भवंति ॥ यावज्जीवं सुखं निरतिशयमेव ॥ २५ ॥ कुरंगकुररकुसुंभवैकंकत्रिकूटशिशिरपतंगरुचकनिषधशिनीवासकपिंजलशंखवैदूर्यजारुधिहंसर्षभनागकालंजरनारदादयो विंशतिगिरयो मेरोः कर्णिकाया इव केसरभूता मूलदेशे परित उपक्लृप्ताः ॥२६॥ जठरदेवकूटौ मेरुं पूर्वेणाष्टादशयोजनसहस्रमुदगायतौ द्विसहस्रं पृथुतुंगौ भवतः ॥ एवमपरेण पवनपारियात्रौ दक्षिणेन कैलासकरवीरौ प्रागायतौ॥एवमुत्तरतस्त्रिशृंगमकरावष्टभिरेतैः परिस्तृतोऽग्निरिव परितश्चकास्ति कांचनगिरिः ॥ २७ ॥ मेरोर्मूर्धनि भगवत आत्मयोनेर्मध्यत उपक्लृप्तां पुरीमयुतयोजनसाहस्रीं समचतुरस्रां शातकौंभीं वदंति ॥ २८ ॥ तामनु परितो लोकपालानामष्टानां यथादिशं यथारूपं तुरीयमानेन पुरोऽष्टावुपक्लृप्ताः ॥२९॥ इति श्रीभा०म०पंच०भुवनकोशवर्णनं नाम षोडशोऽध्यायः ॥१६॥

पंच व्यामाः परिणाहः स्थौल्यं यासामित्यर्थः । केचित्तु पंच व्यामपरिणाहा इत्येवं पठंति ॥ २२ ॥ २३ ॥ नीचीना अधोमुखाः ॥२४ ॥ २५ ॥ २६ ॥ चतुर्दिक्षु मेरुमूलाद्योजनसहस्रं त्यक्त्वाग्नेः परितः परिधय इव जठरदेवकूटादयस्तिष्ठंति अतोऽष्टादशयोजनसहस्रं प्रमाणमत्रोक्तम् । "वैष्णवादिपुराणेषु परिमाणादि यत्पुनः । अन्यथा वर्णितं तत्तु कल्पभेदाद्यपेक्षया" ॥ द्विसहस्रं पृथू च तुंगौ च ॥ २७ ॥ २८ ॥ यथादिशं प्राच्यादिदिक्षु यथारूपमिंद्रादिवर्णानतिक्रमेण । तुरीयमानेन सार्धद्विसहस्रप्रमाणेन । नामानि पुराणांतराज्ज्ञातव्यानि । यथोक्तम् " मेरौ नव पुराणि स्युर्मनोवत्यमरावती ॥ तेजोवती संयमनी तथा कृष्णांगना परा ॥ श्रद्धावती गंधवती तथा चान्या महोदया ॥ यशोवती च ब्रह्मेंद्रवह्न्यादीनां यथाक्रमम्" इति ॥ २९ ॥ इति पंचमे टीकायां षोडशोऽध्यायः ॥ १६ ॥

या मधुधाराः । उपयुंजानानां भुंजताम् ॥ २३ ॥ कुमुदोत्तरदिक्स्थोऽवष्टंभगिरिः । आदिना शर्करान्नादिग्रहः । उपयोजयंति भोजयंति ॥ २४ ॥ यान् नदान् । उपसर्गो भूताद्युपद्रवः । आदिना दैवादिग्रहः ॥२५॥ 'शितिवास' इति पाठोऽपि क्वचित् । आदिनामापि कश्चित्पर्वत एव ज्ञेयोऽन्यथा विंशतिसंख्यापूर्त्तिर्न स्यादिति । मेर्वाख्यकर्णिकायाः उपक्लृप्ता रचिताः ॥ २६ ॥ परिधयो हि कुंडस्थाग्नेः संति तत्प्रकारो हि कुंडनिर्माणग्रंथेभ्योऽवसेयः । अतस्तिर्यग्भूतयोर्जठरदेवकूटयोरुदगायतयोर्मंदरागिरेः परस्तात्स्थितिर्ज्ञेया । एवमपरेण पश्चिमायां सुपार्श्वात्परत्र पवनपारियात्रयोरप्युदगायतोरष्टादशसहस्रयोजनयोः स्थितिस्तथैव मेरुमंदरात्परत्र दक्षिणस्यां कैलासकरवीरयोस्तथा कुमुदादवष्टंभगिरेः परत्रोत्तरस्यां त्रिशृंगमकरयोः पृथुत्वं तुंगत्वं चाष्टानां तुल्यमेव तथैवायामोऽपि । परिस्तृतः कुशैः कृतपरिस्तरणः । परितः सर्वतः ॥ २७ ॥ मूर्द्धनि द्वात्रिंशत्सहस्रयोजनविस्तृते । समाश्चत्वारोऽस्रयो यस्यास्तामम् । शातकौंभीं स्वर्णमयीम् । नाम तु तस्याः मनोवतीति पुराणांतरवाक्यात् ॥ २८ ॥ तां ब्रह्मपुरीमनु । परित इत्यस्य विवरणं यथादिशमिति ॥ २९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ ॥

श्रीशुक उवाच ॥ तत्र भगवतः साक्षाद् यज्ञलिंगस्य विष्णोर्विक्रमतो वामपादांगुष्ठनखनिर्भिन्नोर्ध्वांडकटाहविवरेणांतःप्रविष्टा या बाह्यजलधारा तच्चरणपंकजावनेजनारुणकिंजल्कोपरंजिताखिलजगदघमलापहोपस्पर्शनाऽमला साक्षाद् भगवत्पदीत्यनुपलक्षितवचोऽभिधीयमानाऽतिमहता कालेन युगसहस्रोपलक्षणेन दिवो मूर्धन्यवततार यत् तद् विष्णुपदमाहुः ॥ १ ॥ यत्र ह वाव वीरव्रत औत्तानपादिः परमभागवतोऽस्मत्कुलदेवताचरणारविंदोदकमिति यामनुसवनमुत्कृष्यमाणभगवद्भक्तियोगेन दृढं क्लिद्यमानांतर्हृदय औत्कंठ्यविवशामीलितलोचनयुगलकुड्मलविगलितामलबाष्पकलयाऽभिव्यज्यमानरोमपुलककुलकोऽधुनाऽपि परमादरेण शिरसा बिभर्ति ॥ २॥ ततः सप्त ऋषयस्तत्प्रभावाभिज्ञा यां ननु तपस आत्यंतिकी सिद्धिरेतावती भगवति सर्वात्मनि वासुदेवेऽनुपरतभक्तियोगलाभेनैवोपेक्षितान्यार्थात्मगतयो मुक्तिमिवागतां मुमुक्षव इव सबहुमानमद्यापि जटाजूटैरुद्वहंति ॥ ३ ॥

ततःसप्तदशे गंगागमनं तच्चतुर्दिशम् ॥ इलावृते च रुद्रेण संकर्षणनिषेवणम् ॥ १ ॥ यज्ञलिंगस्य बलेर्यज्ञे लिंगं त्रिविक्रममूर्तिर्यस्य । विक्रमतो दक्षिणेन पदा भुवं क्रांत्वा वामपदमुत्क्षिपतो वामपादांगुष्ठनखेन निर्भिन्नमूर्ध्वमुपरिभागो यस्यांडकटाहस्य तस्य विवरेणांतः प्रविष्टा या बाह्यजलधारा सा दिवो मूर्धन्यवततारेत्यन्वयः । तस्य यच्चरणपंकजं तस्यावनेजनेन क्षालनेनारुणं तद्गतं कुंकुमं तदेव किंजल्कास्तैरुपरंजिता अत एवाखिलस्य जगतोऽघमलापहमुपस्पर्शनं यस्यास्तथाऽप्यमला तन्मलसंगशून्या साक्षाद्भगवत्पदीति यदनुपलक्षितं जाह्नवीभागीरथीत्याद्युपलक्षणांतररहितं वचो नाम तेनाभिधीयमाना तस्मिन्समये भगवत्पदी नाम पश्चान्नामांतराणि जातानीत्यर्थः । कोऽसौ दिवो मूर्धा तमाह । यदिति ॥ १ ॥ किं तद्विष्णुपदं तदाह । यत्रेति । वीरव्रतो दृढसंकल्पः अस्मत्कुलदेवताया हरेश्चरणारविंदोदकमिति हेतोः परमादरेण बिभर्तीत्यन्वयः । कथंभूतः सन् । प्रतिक्षणं वर्धमानेन भगवद्भक्तियोगेन दृढमत्यंतं क्लिद्यमानमंतर्हृदयं यस्य । अत एवौत्कंठ्येन विवशमामीलितं यल्लोचनयुगलं तदेव कुड्मले ताभ्या विगलितममलं बाष्पं तस्य कलया सहाभिव्यज्यमानं रोमपुलकानां कुलं यस्य ॥ २ ॥ ततः सप्तऋषयस्तस्या गंगायाः प्रभावाभिज्ञाः संतो यां जटाजूटैरुद्वहंतीत्यन्वयः ।

ततः सुमेरुवर्णनोत्तरम् । तच्चतुर्दिशं सुमेरुचतुर्दिशम् ( १ ) एवं मेरोः परिधिकेसरादिशोभां वर्णयित्वा सर्वशोभाचूडामणिमतिदीर्घतरशाखाशिखरहीरकमुकुटविशेषायमाणां तन्मूर्ध्नि विराजमानां श्रीगंगां वर्णयंस्तत्प्रादुर्भावप्रकारमाह—तत्र बुद्धिस्थपरामर्शकत्वात्त्यदादीनां वामनावतारसमये विक्रमतः 'त्रिसाम्यसदनादुरुकंपयानम्' इति । ब्रह्मोक्तौ तस्य प्रकृत्यावरणपर्यंतव्याप्तिश्रवणाद्बाह्यपृथिव्याद्यष्टावरणेभ्यो बहिर्भूता कारणार्णवसंबंधिनी या चिन्मयी जलधारा सा दिवो मूर्द्धनि ध्रुवलोके अवततारेत्यन्वयः । अत एव भगवच्चरणपंकजावनेजनत्वादेव । शालग्रामशिलाभिषेकांबुवन्न त्वौपचारिकं किं तु साक्षादीति । यद्वा—यत्तत्प्रसिद्धं विष्णुपदं विज्ञा आहुस्तत्रावततारेति संबंधोऽग्रिमनिगदेन । युगमिह ज्योतिःशास्त्रप्रसिद्धं पञ्चवर्षात्मकं ज्ञेयम् 'युगं भवेद्वत्सरपंचकेन' इति श्रीपत्युक्तेः ॥ १ ॥ यत्र विष्णुपदे । औत्तानपादिर्ध्रुवः । अत एव क्लिद्यमानांतर्हृदयत्वादेव । रोमपुलकानां रोमांचानाम् । कुलं समूहम् ॥ २ ॥ ततो ध्रुवादनंतरम् । तत्र तपस आत्यंतिकसिद्धित्वे । उपेक्षिताः त्यक्ताः । अन्ये धर्मार्थकामरूपाः ॥ ३ ॥

ततोऽनेकसहस्रकोटिविमानानीकसंकुलदेवयानेनावतरंतींदुमंडलमावार्य ब्रह्मसदने निपतति॥४॥तत्र चतुर्धा भिद्यमाना चतुर्भिर्नामभिश्चतुर्दिशमभि
स्पंदंती नदनदीपतिमेवाभिनिविशति सीताऽलकनंदा चक्षुर्भद्रेति॥५॥सीता तु ब्रह्मसदनात्केसराचलादिगिरिशिखरेभ्योऽधोऽधः प्रस्रवंती गंधमादन
मूर्धसु पतित्वा अंतरेण भद्राश्ववर्षं प्राच्यां दिशि क्षारसमुद्रमभिप्रविशति ॥ ६ ॥ एवं माल्यवच्छिखरान्निष्पतंती ततोऽनुपरतवेगा केतुमालमभि
चक्षुः प्रतीच्यां दिशि सरित्पतिं प्रविशति ॥ ७ ॥ भद्रा चोत्तरतो मेरुशिरसो निपतिता गिरिशिखराद् गिरिशिखरमतिहाय शृंगवतः शृंगादव
स्यंदमाना उत्तरांस्तु कुरूनभित उदीच्यां दिशि जलधिमभिप्रविशति ॥ ८ ॥ तथैवालकनंदा दक्षिणेन ब्रह्मसदनाद् बहूनि गिरिकूटान्यतिक्रम्य
हेमकूटहिमकूटान्यतिरभसतररंहसा लुठयंतीभारतमभिवर्षं दक्षिणस्यां दिशि जलधिमभिप्रविशति यस्यां स्नानार्थं पानार्थं चागच्छतः पुंसः पदेप
देऽश्वमेधराजसूयादीनां फलं न दुर्लभमिति ॥ ९ ॥

एतावत्येव नातोऽधिकास्तीत्यभिप्रायवंतः । तत्र हेतुः । भगवति संततं भक्तियोगलाभेनैवोपेक्षिता अन्ये पुरुषार्था आत्मज्ञानं च यैः । कामिव क इव धारयंति । प्रत्यक्षं
मुक्तिमिव तामागताम् । मुमुक्षवो जना इव ते ॥ ३ ॥ ततोनेकसहस्रकोटीनां विमानानामनीकैः संकुलेन देवयानेनाकाशमार्गेणावतरंती । सप्तऋषिभ्योऽर्वागेव प्रायशः
कर्मिणां गतिरिति तवोऽर्वागेव संकुलत्वमुक्तम् । आवार्य आप्लाव्य । मेरुमूर्धस्थे ब्रह्मसदने निपतति ॥ ४ ॥ अभिस्पंदंती अभितो गच्छंती ॥ ५ ॥ केसराचलानां
मेरुसमानोच्छ्रायत्वात्प्रथमं तेषामादिशिखरेषु मुख्यशृंगेषु पतति ततस्तेभ्योऽधोधः प्रस्रवंती सती ॥ ६ ॥ माल्यवच्छिखरात् केतुमालाभिमुखं निष्पतंती चक्षुःसंज्ञा ॥ ७ ॥
गिरिशिखरादिति । कुमुदशिखरादुच्चलिता नीलशिखरं तत उच्चलिता श्वेतशिखरं तदप्यतिहाय शृंगवतः शृंगादधः स्रवंती ॥ ८ ॥ अतिरभसतररंहसा अस्खलिततीव्रतरवे

ततः सप्तर्षिमंडलात् ॥ ४ ॥ तत्र ब्रह्मसदनांगणे । नदनदीपतिं समुद्रम् ॥ ५ ॥ अंतरेण भद्राश्ववर्षे भद्राश्ववर्षमध्ये । पतित्वेति । इलावृतमुल्लंघ्येत्यर्थः ॥ ६ ॥ ततो निपतनादप्यनुपरतवेगा पूर्णवेगा
सती ॥ ७ ॥ अभिलक्ष्य अधः स्रवंती इलावृतादिवर्षत्रयमुल्लंघ्येत्यर्थः ॥ ८ ॥ तथैव वर्षत्रयमुल्लंघ्य गिरिशिखराद्गिरिशिखरे पतंततीत्यर्थः । भारतमभिलक्ष्य । पतित्वेति शेषः । अत्र द्वीपमध्यवर्त्तीनि उल्लंघ्यो
ल्लंघ्यापि चलंती प्राच्यादिषु चतुर्षु समुद्रसमीपवर्त्तिष्वेव वर्षेषु । कुलाचलेशादवरुह्य भूमौ यन्निपतति तत्खलु स्वपतिं समुद्रमभिलक्ष्य लज्जानम्रमुखी स्त्रमौद्धत्यं परिहरंतीवेति ज्ञेयम् । हेमकूटहिमकूटानीति । हेमकूटहिमालयो
र्मध्ये व्योम्नः पतंती कूटान्यतिक्रम्य लुठंती स्खलित्वा परिवर्तमाना भुवं पतंती सतीत्यर्थः । यस्याम् अलकनंदायाम् । स्नानार्थं पानार्थं चेति । बहुषु पुस्तकेषु यस्यामित्यारभ्य न दुर्लभमित्यंतः पाठो नास्ति बहुषु चास्ति
तत्रापि केषु चित्पानार्थमिति नास्तीति परं चातीतपञ्चशताब्दलिखितपुस्तके पानार्थमिति पाठसहित एवायं निगदो दृष्टस्तत एवात्र लिखितः । अत्रादिना सर्वमेधादिग्रहः । न दुर्लभं किन्तु सुलभमतोऽप्याधिकफलस्य

अन्ये च नदा नद्यश्च वर्षेवर्षे संति बहुशो मेर्वादिगिरिदुहितरः शतशः ॥ १० ॥ तत्रापि भारतमेव वर्षं कर्मक्षेत्रमन्यान्यष्टवर्षाणि स्वर्गिणां पुण्यशेषोपभोगस्थानानि भौमानि स्वर्गपदानि व्यपदिशंति ॥ ११ ॥ एषु पुरुषाणामयुतपुरुषायुर्वर्षाणां देवकल्पानां नागायुतप्राणानां वज्रसंहननबलवयोमोदप्रमुदितमहासौरतमिथुनव्यवायापवर्गवर्षधृतैकगर्भकलत्राणां तत्र तु त्रेतायुगसमः कालो वर्तते ॥ १२ ॥ यत्र ह देवपतयः स्वैः स्वैर्गणनायकैर्विहितमहाऽर्हणाः सर्वर्तुकुसुमस्तबकफलकिसलयश्रियानम्यमानविटपलताविटपिभिरुपशुंभमानरुचिरकाननाश्रमायतनवर्षगिरिद्रोणीषु तथा चामलजलाशयेषु विकचविविधनववनरुहामोदमुदितराजहंसजलकुक्कुटकारंडवसारसचक्रवाकादिभिर्मधुकरनिकराकृतिभिरुपकूजितेषु जलक्रीडादिभिर्विचित्रविनोदैः सुललितसुरसुंदरीणां कामकलिलविलासहासलोलाऽवलोकाकृष्टमनोदृष्टयः स्वैरं विहरंति ॥ १३ ॥ नवस्वपि वर्षेषु भगवान् नारायणो महापुरुषः पुरुषाणां तदनुग्रहायात्मतत्त्वव्यूहेनात्मनाऽद्यापि सन्निधीयते ॥ १४ ॥

गेन ॥ ९ ॥ बहुशो बहुविधाः । मेर्वादिगिरीणां दुहितरस्तत्प्रसूताः ॥ १० ॥ दिव्यभौमबिलभेदात्त्रिविधः स्वर्गः । तत्र भौमस्वर्गस्य पदानि स्थानानि व्यपदिशंति ॥ ११ ॥ अयुतं पुरुषमानेन आयुर्वर्षाणि येषाम् । वज्रवद्दृढं संहननं शरीरं तस्मिन्बलवयोमोदास्तैः प्रमुदितानि यानि महासौरतानि मिथुनानि तेषां व्यवायापवर्गे संभोगावसाने एक वर्षशेषे आयुषि धृत एको गर्भो यैस्तादृशानि कलत्राणि येषाम् । त्रेतायुगसमः विषयसुखोत्कर्षात् । कृतयुगे हि सर्वे ध्याननिष्ठाः । द्वापारादौ दुःखबहुलाः ॥ १२ ॥ यत्र ह येषु हि वर्षेषु देवपतयः स्वैःस्वैः सेवकगणेषु मुख्यैः कृतमहोपचाराः संतः स्वैरं विहरंतीत्यन्वयः । केषु स्थानेषु । सर्वेषु वर्षेषु ऋतुषु कुसुमस्तबकादीनां श्रिया समृद्ध्यात्यंतं नम्यमाना विटपास्तदाश्रिता लताश्च येषु तैर्विटपिभिरुपशुंभमानानि शोभमानानि रुचिराणि काननानि येषु तेष्वाश्रमायतनेषु वर्षगिरिद्रोणीषु च । तथा अमलेषु जलाशयेषु विकचानि विकासीनि विविधानि नवानि च यानि वनरुहाणि नीरजानि तेषामामोदेन मुदितै राजहंसादिभिर्मधुकरनिकराणां चाकृतिभिर्जातिविशेषैरुपकूजितेषु कामेन कलिलैः क्षुभितैर्विलासादिभिराकृष्टं मनो दृष्टिश्च येषां ते ॥ १३ ॥ नवस्वपि वर्षेषु ये पुरुषास्तेषां तदनुग्रहाय स चासौ वक्ष्यमाणोऽनुग्रहस्तदर्थमात्मतत्त्वव्यूहेन स्वमूर्तिसमूहेन सन्निधीयते सन्निहितो भवति ॥ १४ ॥

मोक्षस्य शास्त्रेषु श्रवणादित्यर्थः ॥ ९ ॥ १० ॥ तत्रापि नववर्षशोभित जंबूद्वीपेऽपि । क्वचिदत्रापीति पाठ उभयत्रार्थस्तुल्य एव । तत्र त्रिविधेषु ॥ ११ ॥ पुरुषमानेन मनुष्यप्रमाणेन । मिथुनानि स्त्रीपुरुषयुगलानि । बहुपुस्तकेष्वत्र 'तत्र तु' इति पाठोऽस्ति स त्वाधुनिक एवासंबद्धत्वात्सर्वथानुपयुक्त एव ॥ १२ ॥ वर्षगिरयो वर्षख्यातिकरपर्वतास्तेषां द्रोणीषु । उपकूजितेष्वत्राधिकरणे निष्ठा षष्ठ्यभावश्चार्ष एव ॥ १३ ॥ नवस्विति । सर्वेषामवताराणां नित्यं प्राकट्यं दर्शितं तत्र चात्मनेति स्वरूपेणैव न तु प्रतिमारूपेणेत्यर्थः । प्रद्युम्नाविर्भावे गतिविलासादेरपि वर्णयिष्यमाणत्वात् । अद्याप्यवतारसमयादारभ्याद्यापि सर्वदेत्यर्थ इति संदर्भः ।

इलावृते तु भगवान् भव एक एव पुमान् न ह्यन्यस्तत्रापरो निर्विशति भवान्याः शापनिमित्तज्ञो यत् प्रवेक्ष्यतः स्त्रीभावस्तत् पश्चाद् वक्ष्यामि॥ १५॥ भवानीनाथैः स्त्रीगणार्बुदसहस्रैरवरुध्यमानो भगवतश्चतुर्मूर्तेर्महापुरुषस्य तुरीयां तामसीं मूर्तिं प्रकृतिमात्मनः संकर्षणसंज्ञामात्मसमाधिरूपेण सन्निधाप्यैतदभिगृणन् भव उपधावति ॥ १६ ॥ श्रीभगवानुवाच ॥ ॐ नमो भगवते महापुरुषाय सर्वगुणसंख्यानायानंतायाव्यक्ताय नम इति ॥ १७ ॥ भजे भज न्यारणपादपंकजं भगस्य कृत्स्नस्य परं परायणम् ॥ भक्तेष्वलं भावितभूतभावनं भवापहं त्वा भवभावमीश्वरम् ॥ १८॥

अपरोऽर्वाचीनः पश्चान्नवमस्कंधे ॥ १५ ॥ भवानी नाथः स्वामिनी येषां तैः स्त्रीगणानामर्बुदसहस्रैरवरुद्ध्यमानः सर्वतः सेव्यमानः आत्मनः प्रकृतिं कारणम् । आत्मनि समाधिर्ध्यानं यस्य तेन रूपेण । एतद्वक्ष्यमाणं मंत्रादिकमभिगृणन् जपन् ॥ १६ ॥ सर्वेषां गुणानां संख्यानं प्रकाशो यस्मात् । स्वयं त्वव्यक्तायाप्रमेयाय ॥ १७ ॥ हे भजन्य भजनीय त्वा त्वां परमेश्वरं भज इत्यन्वयः । अरणं शरणं पादपंकजं यस्य । कृत्स्नस्य भगस्यैश्वर्यादिषाड्गुण्यस्य परमयनमाश्रयम् । भक्तेष्वलमत्यर्थं भावितं प्रकटितं भूतभावनं स्वरूपं येन । भवापहं संसारहरम् । भक्तेष्वित्यनुषंगः । भवं भावयतीति तथा तम् । अर्थादभक्तेष्विति द्रष्टव्यम् ॥ १८ ॥

अत्रोपास्यदेवता वर्षेषु भगवन्मूर्त्तय एव ज्ञेयाः । आविराविर्भवेति प्रह्लादस्योपरिष्टादुक्तेरिति विश्वनाथः । मम त्वित्थं प्रतिभाति तत्रत्यावतारमूर्त्तिषूपास्त्या झटित्याविर्भावो जायते इत्यत उक्तं संनिधाप्यत इति ॥ १४ ॥ १५ ॥ तामसीं तमःकार्यभूतस्य संहारस्य संप्रवर्त्तयित्रीम् । वस्तुतस्तु—तुरीयां तमोरजःसत्त्वेभ्योऽपि परां शुद्धचिन्मयीमित्यर्थः । 'न यस्य माया' इत्यादिना 'त्रिभिर्विहीनम्' इत्यादिना च तथा प्रतिपादयिष्यमाणत्वात् । आत्मनः स्वस्य कारणं "यस्य भ्रमद्भ्रुवोरंतरेण सांकर्षणो रुद्रव्यूह उदतिष्ठत्" इति वक्ष्यमाणत्वात् । स्त्रीणां बहुत्वं भगवता पार्वतीसेवार्थं युगपदेवाविर्भावितं तासां पुनरुत्पत्त्यादयः संतीति ध्येयम् ॥ १६ ॥ १७ ॥ हे भजनीयेति । न हि स्वकारणं विहायान्यभजनमुचितमिति भावः । यद्वा 'भजेभजे न्यारणपादकपङ्कजम्' इति पाठे नितरामा सम्यगेवारणं शरणं पादपंकजं यस्य तं भजेभजे इति हर्षाद्द्वित्वम् । भूतेष्वलमलंकारवद्वर्त्तमानं भावितः सृष्टो ध्यानं कारितो वा भूतभावनो ब्रह्मा एनं त्वा त्वां भवस्य मल्लक्षणस्य । दासस्य भावः प्रेमा यत्र तमिति वार्थः । स्वामिचरणैस्तु—भवं संसारं भावयतीति व्याख्यातम् । यद्वा—भजन्यं भजनीयं चारुणं च पादपंकजं यस्य तम् । हे भक्तेष्वलंभावित अत्यर्थं ध्यात वशीकृतेति वा नित्यतृप्ततया स्थितेति । भवं संसारमपजहाति त्यजतीति भवापहो नित्यमुक्तस्तं भक्तसंसारं नाशयतीति वा । भवस्य पुण्यलक्षणभद्रस्य भाव उत्पत्तिर्यस्मात्स तथा तं भगस्येति पूर्ववत् । ईश्वरं सर्वसमर्थशीलं "स्थेशभासपिसकसो वरच्" इति ताच्छीलिको वरच् । अनेन शेषाभिन्नत्वेन हरिस्तुतिर्ध्वनिता । यद्वा हे भक्ते मयि इष्पुर्यस्य स भक्तेषुः कामस्तस्या लंभोऽभावो यस्मात्स भक्तेष्वलंभः क्रोधः । "कामं दहंति कृतिनो ननु रोषदृष्टेः" इति ब्रह्मवाक्यात् । तस्मादवित इति भक्तेष्वलंभावितस्तत्संबुद्धौ तथा हे क्रोधाद्रक्षितेत्यर्थः । दक्षयज्ञेऽतीवावज्ञातोऽपि महादेवः क्रोधं न चकार तदपेक्ष्येयं संबुद्धिः । स्वात्मानं प्रत्येव रुद्रस्येति ज्ञेयं त्वमीश्वरमंतर्यामिणं भज निषेवस्व । किंभूतम् । ईर्लक्ष्मीस्तया भजन्यं सेव्यमरुणपादपकजं यस्य तं कृत्स्नस्य सौभाग्यस्य परंपराया आश्रयम् । अनेन ब्रह्मादिसकलचेतनसमवेतसौभाग्यपरंपरायास्तारतम्योपेताया अयनमित्युक्तं भूतभावनमतीतानागतवर्तमानजगज्जनकं भवत्युत्पद्यत इति भवो जगत्तस्यापहर्त्तारं स्वीयत्वेनांगीकर्त्तारम् । 'ओहाङ्—गतौ' अतो डप्रत्यये रूपम्

न यस्य मायागुणचित्तवृत्तिभिर्निरीक्षतो ह्यण्वपि दृष्टिरज्यते ॥ ईशे यथा नोऽजितमन्युरंहसां कस्तं न मन्येत जिगीषुरात्मनः ॥ १९ ॥ असद्दृशो यः प्रतिभाति मायया क्षीबेव मध्वासवताम्रलोचनः ॥ न नागवध्वोऽर्हण ईशिरे ह्रिया यत्पादयोः स्पर्शनधर्षितेंद्रियाः ॥ २० ॥ यमाहुरस्य स्थितिजन्मसंयमं त्रिभिर्विहीनं यमनंतमृषयः ॥ न वेद सिद्धार्थमिव क्वचित्स्थितं भूमंडलं मूर्धसहस्रधामसु ॥ २१ ॥ यस्याद्य आसीद्गुणविग्रहो महान् विज्ञानधिष्ण्यो भगवानजः किल ॥ यत्संभवोऽहं त्रिवृता स्वतेजसा वैकारिकं तामसमैन्द्रियं सृजे ॥ २२ ॥

ईश्वरत्वमुपपादयंस्तामसत्वेन प्रसक्तमनादरं वारयति । न यस्येति । यस्य निरीक्षमाणस्यापि दृष्टिर्मायागुणैर्विषयैश्चित्तवृत्तिभिः करणैश्चाण्वपीषदपि नाज्यते न लिप्यते किमर्थं निरीक्षमाणस्य । ईशे ईशनाय नियमनाय । ईशनमीट् संपदादित्वाद्भावे क्विप् । अत्र वैधर्म्ये दृष्टांतः। यथा अजितक्रोधवेगानां नोऽस्माकं दृष्टिरज्यते न तथेति। अत आत्मन इंद्रियाणि जिगीषुर्जेतुमिच्छुर्मुमुक्षुस्तं को न मन्येत नाद्रियेत॥ १९ ॥ ननु सुरामद्याभ्यां मत्तस्य पुंसः कुतो दृष्टिर्नाज्यते तत्राह । असती दृष्टिर्यस्य तस्य स्वमायया क्षीबा मत्त इव यो भयंकरः प्रतिभाति मध्वासवाभ्यां ताम्रलोचन इव च॥ नागवधूविमोहनेन तथा प्रतिभानं युक्तमित्याह। नेति । पादार्चनेन यस्य पादयोः स्पर्शनेन धर्षितं मोहितमिंद्रियं मनो यासां ताः ह्रिया लज्जया भुजाद्यर्हणेन ईशिरे न शेकुः । कस्तं न मन्येतेति पूर्वेणैवान्वयः ॥ २० ॥ अस्य विश्वस्य स्थितिजन्मसंयमहेतुं यमाहुः । अत एव त्रिभिः स्थित्यादिभिर्विहीनमनंतं च यमाहुः । ऋषयो मंत्राः । छंदोऽनुरोधेन दीर्घपाठे ऋकारो देवमाता लक्ष्मीः सा च ऋषयश्चेत्यर्थः । अनंतत्वं दर्शयति । मूर्धसहस्रमेव धामानि स्थानानि तेषु क्वचिदेकदेशस्थितं भूमंडलं यो न वेद । सिद्धार्थं सर्षपमिव । तस्मै नम इति चतुर्थेनान्वयः ॥ २१ ॥ तत्र जन्महेतुत्वं महदादिद्वारेण प्रपंचयति । यस्य गुणनि

यद्वा—हरतेष्टिलोपे रूपम् । " ईर्लक्ष्मीः प्रोच्यते विज्ञैरिः स्मर उर्भवः स्मृतः " इत्येकाक्षरकोशात् ॥ १८ ॥ संपदादिसूत्रे समुपसर्गयोगाद्यद्यपि सोपसर्गादेव क्विप् भवति तथाप्यत्रार्षत्वमाश्रित्यैव निर्वाहोऽन्यथा पदादिभ्यः क्विप् इत्येव वदेदिति ॥ १९ ॥ अत्राक्षिपति—नन्विति । यद्वा—असदृशः कुबुद्धीन्प्रति । क्षीबेति । 'क्षीबृ—मदे' अतो ग्यादित्वादौणादिके कनि प्रथमैकवचनांतम् । यथान्यः सुरासवाभ्यां ताम्रलोचनो विवेकहीनो भवति तथैवेत्यर्थः । वस्तुतस्तु—भवान्न तथाभूतः किन्तु नित्यानंदसद्विवेक इति भाव इतीव शब्देनोक्तम् । सुरादिकं तु " पानसद्राक्षमाधूकं खार्जूरं तालमैक्षवम् । माधूत्थं सारमादिष्टं मैरेयं नारिकेलजम् ॥ समानानि विजानीयान्मद्यान्येकादशैव हि । द्वादशं तु सुरा मद्यं सर्वेषामधमं स्मृतम् ॥ सुरा वै मलमन्नानां पाप्मा च मलमुच्यते । गौडी माध्वी च पैष्टी च विज्ञेया त्रिविधा सुरा ॥ " इति पुलस्त्यः । एषां लक्षणानि विस्तरभिया नोक्तानि । सामान्यलक्षणं तु यंत्रनिष्कृष्टत्वे सति मादकत्वे च सति द्रवद्रव्यत्वं मद्यत्वम् । भंगारसादावतिव्याप्तिवारणाय प्रथमं विशेषणम् । शतपुष्पार्कादावतिव्याप्तिवारणाय परं विशेषणम् । विशेष्यमात्रस्य लक्षणत्वे जलेऽतिव्याप्तिरतः सर्वमुपादेयम् । नागांगनाविमोहनेन हेतुना तथा प्रतिभातं मत्तवत्प्रतीयमानत्वम् । न शेकुरिति । अस्माकमंतःक्षोभं सर्वज्ञत्वादयं जानाति संप्रति कथं सेवेमहीति भावः ॥ २० ॥ अत एव सर्वकारणत्वादेव । यद्यपि चतुस्त्रिंशल्लक्षोनपञ्चाशत्कोटियोजनप्रमाणस्य भूमंडलस्याधस्तादेव स्थितत्वात्तस्मात्सकाशात्तन्मूर्ध्नां तावद्विस्ताराधिक्यं न युज्यते तदपि तत्र गतैर्जनैस्तदीयाचिंत्यशक्त्यैव तन्मूर्ध्नां प्रमाणापरिच्छेद्यत्वं भूमंडलस्य च सर्षपायमानत्वं दृश्यते तच्च वास्तवमेव न तु मायिकमित्येतदप्येकमद्भुतमनस्तत्त्वमिति तथोक्तम् ॥ २१ ॥ सृजामि—सर्गोपयोगितां प्राप्नोमि । अग्निरेवान्नं पचतीतिवन्मत्क

एते वयं यस्य वशे महात्मनः स्थिताः शकुंता इव सूत्रयंत्रिताः ॥ महानहं वैकृततामसेंद्रियाः सृजाम सर्वं यदनुग्रहादिदम् ॥ २३ ॥ यन्निर्मितां कर्ह्यपि कर्मपर्वणीं मायां जनोऽयं गुणसर्गमोहितः ॥ न वेद निस्तारणयोगमंजसा तस्मै नमस्ते विलयोदयात्मने ॥ २४ ॥ इति श्रीभागवते म० पंचमस्कंधे इलावृतखंडे भगवत्संकर्षणवर्णनं नाम सप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुक उवाच ॥ तथा च भद्रश्रवा नाम धर्मसुतस्तत्कुलपतयः पुरुषा भद्राश्ववर्षे साक्षाद् भगवतो वासुदेवस्य प्रियां तनूं धर्ममयीं हयशीर्षाभिधानां परमेण समाधिना सन्निधाप्येदमभिगृणंत उपधावंति ॥ १ ॥ भद्रश्रवस ऊचुः ॥ ॐ नमो भगवते धर्मायात्मविशोधनाय नम इति ॥ २ ॥

मितो महान्नाम विग्रह आसीत् । विज्ञानं सत्त्वं धिष्ण्यमाश्रयो यस्य सः तस्य चित्तरूपत्वेन सत्त्वप्रधानत्वात् । स एव किलाधिदैवो वासुदेवाभेदविवक्षया भगवानजो ब्रह्मा । यत्संभवो यस्माद्ब्रह्मणः संभूतोऽहं रुद्रः । त्रिवृता त्रिगुणेन स्वतेजसा स्वविभूतिरूपेणाहंकारेण वैकारिकं देवतावर्गं तामसं भूतवर्गमैंद्रियमिंद्रियवर्गं च सृजे सृजामि ॥ २२ ॥ किं च एते वयं महदादयः सर्वे यस्यानुग्रहादिदं ब्रह्मांडं सृजामः । कथंभूताः यस्य महात्मनो वशे स्थिताः संतः यतः सूत्रेण क्रियाशक्त्या यंत्रिताः प्रोताः शकुंताः पक्षिण इव लौकिकेन सूत्रेण वयमित्युक्तं तानेवाह । महानहंकारश्च वैकृतादयः पूर्वोक्ता वर्गाश्च ॥ २३ ॥ स्थितिलयहेतुत्वं दर्शयन्प्रणमति । येन निर्मितामेतां मायामेवायं जनोंजसा वेद न तु तन्निस्तारणयोगमुपायं कर्हिचिदपि वेदेति स्थितिहेतुत्वं दर्शितम् । कीदृशीम् । कर्माण्येव पर्वाणि ग्रंथयरतानि नयति प्रापयतीति तथा ताम् । प्रलयहेतुत्वमाह । विलीयतेऽस्मिन्निति विलयः उदेत्यस्मादित्युदयः विलयश्चोदयश्चात्मा स्वरूपं यस्य तस्मै नमः ॥ २४ ॥ इति श्रीभा० पंचमस्कं० टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ अष्टादशे ततो मेरोः पूर्वादिक्रमतस्त्रिषु ॥ त्रिषु चोत्तरवर्षेषु सेव्यसेवकवर्णनम् ॥ १ ॥ भद्रश्रवा वर्षपतिः तस्य कुलपतयः सेवकमुख्याश्च ॥ १ ॥ भद्रश्रवस ऊचुरिति । "प्राणभृत

र्तृकत्वमिति भावः ॥ २२ ॥ अन्यदाह–किंत्वेति । महात्मनः सर्वेश्वरस्य ॥ २३ ॥ निर्मितां प्रापितां मायामेवायं जनो न वेद किमुत त्वामिति कैमुत्यं चोक्तम् । मायावृताः संसार एव तिष्ठंति तदंतमितास्संसारं तरंतीति स्थितिहेतुतोक्ता । निस्तारणोपायं भक्तियोगम् । तस्या मायाया विलयो भक्तेषु उदयस्त्वभक्तेषु यतस्तस्मा आत्मने परमात्मने । 'तद्विलयोदयात्मने' इति पाठ एव चक्रवर्त्यादिभिर्व्याख्यातः । स्वामिचरणैस्तु–नमस्त इति पाठोंगीकृतः प्रतीयते ॥ २४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥ तत्र इलावृतवर्णनोत्तरम् । पूर्वादिक्रमतः प्रथमद्वितीयतृतीयेत्येवं क्रमेणोत्तरदिक्स्थखंडेषु ( १ ) साक्षाद्भगवतः वासुदेवस्य श्रीकृष्णस्य प्रियां वेदाविर्भावकर्तृत्वात् । हयंति बुध्यंते सर्वमिति हयाः सर्वज्ञास्तेषां शीर्षा प्रधान इति हयशीर्षा स एवाभिधानं नाम यस्यास्ताम् । संनिधाप्य साक्षात्कृत्य इदं वक्ष्यमाणम् । "ॐ नमो भगवते" इत्यादिमंत्रमित्यर्थः । उपधावंति स्तुवंति ॥ १ ॥ भद्रश्रवःशब्देनाजहत्स्वार्थलक्षणया तद्गणोऽप्युच्यतेऽतः प्राणभृत उपदधातीति । तद्योगाद्भद्रश्रवःशब्दयोगात् । गणिषु भद्रश्रवःसंबंधिषु । लिंगस्य वाच्यार्थस्य समवायः समुदाये प्रवेशः । तथाहि "अयं पुरो भुवस्तस्य प्राणो भौवायनः" इत्येकस्यैव मंत्रस्य प्राणभृत्त्वेऽपि प्राणशब्दवत्त्वेपि तत्सहिताः सर्वे मंत्राः प्राणभृच्छब्देन

अहो विचित्रं भगवद्विचेष्टितं घ्नंतं जनोऽयं हि मिषन्न पश्यति ॥ ध्यायन्नसद् यर्हि विकर्म सेवितुं निर्हृत्य पुत्रं पितरं जिजीविषति ॥ ३ ॥ वदंति विश्वं कवयः स्म नश्वरं पश्यंति चाध्यात्मविदो विपश्चितः ॥ तथाऽपि मुह्यंति तवाऽज मायया सुविस्मितं कृत्यमजं नतोऽस्मि तम् ॥ ४ ॥ विश्वोद्भवस्थाननिरोधकर्म ते ह्यकर्तुरंगीकृतमप्यपावृतः ॥ युक्तं न चित्रं त्वयि कार्यकारणे सर्वात्मनि व्यतिरिक्ते च वस्तुतः ॥ ५ ॥ वेदान् युगांते तमसा तिरस्कृतान् रसातलाद् यो नृतुरंगविग्रहः ॥ प्रत्याददे वै कवयेऽभियाचते तस्मै नमस्तेऽवितथेहिताय इति ॥ ६ ॥ हरिवर्षेचापि भगवान् नरहरिरूपेणास्ते तद्रूपग्रहणनिमित्तमुत्तरत्राभिधास्ये ॥ तदयितं रूपं महापुरुषगुणमहाभागवतो दैत्यदानवकुलतीर्थीकरणशीलाचरितः प्रह्लादोऽव्यवधानानन्यभक्तियोगेन सह तद्वर्षपुरुषैरुपास्ते इदं चोदाहरति ॥ ७ ॥

उपदधाति" इतिवद्गणलक्षणया तद्योगाद्गणिषु लिंगसमवायन्यायेन बहुवचनम् ॥ २ ॥ अयं जनो मिषन्नपि पश्यन्नपि घ्नंतं हिंसंतं न पश्यति नालोचयतीति भगवद्विचेष्टितमेव तच्च विचित्रम् । अदर्शने लिंगम् । पुत्रं बालं पितरं वृद्धं मृतं निर्हृत्य दग्ध्वा स्वयं तदुभयधनैर्जिजीविषति जीवितुमिच्छति । पाठांतरे तु छन्दःसामंजस्यम् किं धर्मायर्थम् । न यर्हि यतोऽसत्तुच्छं विषयसुखं सेवितुं विकर्म पापमेव ध्यायन् ॥ ३ ॥ नन्वविद्वान्न पश्यति किमत्र चित्रं तत्राह । नश्वरं वदंति स्म शास्त्रतः पश्यंति च समाधौ । हे अज तथापि मायया मुह्यंति एतच्च तव कृत्यं चेष्टितं सुविस्मितमतिचित्रमतः शास्त्रादिश्रमं विहाय तं त्वामजं नतोऽस्मि ॥ ४ ॥ इदमपरं चित्रवत्प्रतीयमानमपि त्वयि न चित्रमित्याह । विश्वोद्भवादिकर्माकर्तुरप्यपगता आवृदावरणं यस्मात्तादृशस्यापि तेंगीकृतं वेदेन । त्वयि तन्न चित्रम् । यतो मायया सर्वात्मनि कार्यस्य कारणे स्रष्टरि कर्म युक्तम् । वस्तुतः सर्वव्यतिरिक्ते निरुपाधावनावृतत्वमकर्तृत्वं च युक्तम् ॥ ५ ॥ परमेश्वरत्वेन स्तुत्वा प्रस्तुतावतारचारितमाह । वेदानिति । तमसा दैत्यरूपेण तिरस्कृतानपनीतान् । ना च तुरंगश्च नृतुरंगौ तद्रूपो विग्रहो यस्य । कवये ब्रह्मणे । तदर्थमवितथेहिताय सत्यसंकल्पाय ॥ ६ ॥ उत्तरत्र प्रह्लादचारित्रे । महापुरुषस्य गुणा

च्यंते छत्रिणो यांतीतिवद्बहुवचनमिति । आत्मनो जीवस्याविद्यामालिन्यापाकरणाद्विशोधनायेत्यर्थः ॥ २ ॥ बालं स्वजनितं वृद्धं स्वजनकं जनस्तन्मध्यवर्ती जिजीविषुर्जिजीविषन्नित्युभयविधपाठांतरे छंदःसामंजस्यं छंदोभंगाभावः । मृत्युर्मां कथं हास्यतीति नानुसंधत्ते इत्यतिमौढ्यमिति भावः । ननु पञ्चषानपि वासरान् जिजीविषा भगवद्भक्त्यर्थं तादृश्यपि न विगीतेत्यभिप्रेत्याह—किं धर्मार्थमिति । परिहरति—नेति । ननु भद्राश्वादिवर्षाणां भौमस्वर्गरूपत्वात्तद्वासिनां पितुः पुत्रस्य च युगपन्मृत्युदर्शनं न घटते । सत्यम् । सर्वा एव वाचो भारत भूमिवर्तिनो जनानालक्ष्यैवोच्यंते । 'वयमधन्याः स्वकर्मफलं भुंजानाः अत्र भद्राश्वादिवर्षे पशुवद्वर्त्तामहे ये त्वतिधन्या अपवर्गसाधने भारतभूमंडले लब्धजन्मानः श्वपचादिजातयोऽपि यत्रानायासेनैव वैकुंठपदमपि साधयंति तत्रापि कथमेवं मुह्यंति इति रीत्या ॥ ३ ॥ अत्राक्षिपति—नन्विति । त्वां भजन्त एव विद्वांस इति भावः ॥ ४ ॥ अत्र विश्वनाथः—ननु विद्वांसोऽपि ममैव मायया मुह्यंति चेत्तर्हि मय्येव दोषं प्रसंजयसीति तत्र मायायास्तत्कार्यस्य च त्वदीयत्वेऽपि त्वं ततः पृथक् वर्त्तसे इत्याह—विश्वोद्भवेति । अकर्तुरिति । गुणानामेव कर्तृत्वादिति भावः । उक्तं त्वय्युपचारादिति भावः । न च जीववत्कर्तृत्वाभिमानादित्याह—अपावृतस्त्वं गुणैरावृतो न भवसीत्यर्थः । यद्वापावृत इति षष्ठ्यंतम् । एतच्च त्वयि युक्तमेव न तु चित्रं मायायास्त्वच्छक्तित्वात्तत्कार्याणामपि कारणेऽतः सर्वात्मनि सर्वस्वरूपे मायायाः स्वरूपशक्तित्वाभावात्सर्वतोव्यतिरिक्ते च ॥ ५ ॥ दैत्यरूपेण मधुनामकदैत्येन ॥ ६ ॥ नरहरिरूपेण नृसिंहरूपेण । उत्तरत्र प्रह्लादचरित्रे

ॐ नमो भगवते नरसिंहाय नमस्तेजस्तेजसे आविराविर्भव वज्रनख वज्रदंष्ट्र कर्माशयान् रंधयरंधय तमो ग्रसग्रस ॐस्वाहा अभयमभयमा त्मनि भूयिष्ठाः ॐ क्ष्रौम् ॥ ८ ॥ स्वस्त्यस्तु विश्वस्य खलः प्रसीदतां ध्यायंतु भूतानि शिवं मिथो धिया ॥ मनश्च भद्रं भजतादधोऽक्षज आवे श्यतां नो मतिरप्यहैतुकी ॥९॥ माऽगारदारात्मजवित्तबंधुषु संगो यदि स्याद्भगवत्प्रियेषु नः ॥ यः प्राणवृत्त्या परितुष्ट आत्मवान्न सिध्यत्यदूरान्न तथेंद्रियप्रियः ॥ १० ॥

नां भाजन आश्रयः । दैत्यदानवकुलस्य तीर्थीकरणं शीलमाचरितं च यस्य । फलसंकल्पेन व्यवधानशून्यश्चासावनन्यश्चाव्यभिचारी यो भक्तियोगस्तेनोपास्ते सेवते ॥७॥ तेजसामपि तेजसे । आविराविः अतिप्रकटो भव वीप्सा वा । कर्माशयान्कर्मवासनाः । कर्माश्रयानिति पाठे रागादीन् रंधय निर्दह ! भूयिष्ठाः भूयाः ॥ ८ ॥ विश्वस्य स्वस्तिप्रार्थने खलस्यापि भवेत्तच्च साधुपीडां विना न स्यात् । अन्योन्यममंगलं ध्यायतां च भूतानामन्योन्यघातं विना न भवेदित्याशंक्याह । खलः प्रसीदतां प्रसीदतु क्रौर्यं त्यजतु । भूतानि च मिथः शिवमेव ध्यायंतु । तेषां मनश्च भद्रमुपशमादिकं भजतु । नोऽस्माकमपि मतिरपिशब्दाद्भूतानां च मतिरहैतुकी निष्कामा सती ॥ ९ ॥ नः संगः क्वापि मा स्यात यदि कथंचित्स्यात्तर्ह्यगारादिषु मा स्याकिन्तु भगवत्प्रियेष्वेव । अगारादिसंगे दोषमाह । य इति । इंद्रियप्रियो गृहाद्यासक्तः ॥ १० ॥

सप्तमस्कंधे । भाजन इह पुस्त्वमार्षम् । महापुरुषगुणा वीर्यशौर्यादयो भक्तिज्ञानादयो वा । प्रकृष्टो ह्लादः शांत्यादिगुणो यस्य स तथा । इदं वक्ष्यमाणम् ॥ ७ ॥ आत्मनि मन्मनसि । "क्ष्रौम्" इति नृसिंहबीजम् । इति बीजकोशे ।"बीजं देवस्य मूर्त्तिर्हि तत्स्मृतेः स प्रसीदति" इति तांत्रिकसिद्धांतानुसारेणात्र तानि लिखितानीति ज्ञेयम् । महारोगाद्युपद्रवेऽस्य जपो झटितिसिद्धिः ॥ ८ ॥ मंत्रं जपित्वा प्रार्थयते—तच्च खलस्य स्वस्ति च साधूनां पीडां कृत्वैव भवति. नान्यथेति भावः । अमंगलमभद्रं न भवेत्स्वस्ति न स्यादिति । ननु विषयासक्तिमतां विषयत्यागं विना स्वस्ति न स्यादित्यत आह मनश्चेति । भद्रमनासक्तिं तदपि भक्तिं विना भद्रमप्यभद्रमेवेति चेदाह—अधोक्षजे श्रीकृष्णे नो मत्सहितानां विश्वेषामेव मतिरहैतुकी निष्कामा सती आवेश्यतामधोक्षजेनैव स्वदयालुतयेत्यर्थः । अत्राद्यैवेति युगपदिति पदोपन्यासाभावात्क्रमेण कालतः प्रह्लाद वांछितं भगवान्संपादयिष्यत्येव न च तर्हि सर्वमुक्तौ ब्रह्मांडानां शून्यत्वप्रसंग इति वाच्यं जीवशक्तिमायाशक्त्योर्नित्यत्वात्तदैव तेषामनंतानां जीवानां प्रसवादिति विश्वनाथः ॥ ९ ॥ अधोक्षजासक्तेश्च यद्यपि सत्संग दुःसंगौ साधकबाधकौ तदपि सत्संगस्य प्राबल्यात्तस्मिन्सति दुःसंगः स्वत एवापयातीत्याह—मेति । नोऽस्माकं यदि भगवत्प्रियेषु संगः स्यात्तदागारादिषु मैव स्यात् । अत एव तेष्वासक्तिः शनैरपयास्यतीत्यर्थः । ननु अगारादिराहित्ये भोगासिद्ध्या क्लिष्टदेहः कथं वर्त्तेतेत्यत आह—य इति । भिक्षान्नादिभिरुदरपूर्त्त्यैव तुष्टः यत आत्मवान् धृतियुक्तः । अदूरादिति । इंद्रियप्रियस्तु विलंबेनैवेत्यर्थः । यद्वा—यदि भगवत्प्रियेषु संगः स्यात्तदाऽगारादिषु संगो मास्तु यतो युगपदुभयसंगे सति भक्त्यसिद्ध्याऽसंगस्य ज्ञानजनकस्यापि वैफल्यमेवेति भावः । ननु तर्ह्यलमसंगेन केवलसाधुसंग एव प्राथ्यर्तां सत्यं तदपि असंगसहितः साधुसंगः शीघ्रफलप्रदो भवतीत्याह—य इति । लब्धभगवत्प्रियसंगः । किञ्च—यदि संगः स्यात्तदागारादिषु मा स्यात्किं तु भगवत्प्रियेषु स्यादिति व्याख्यानेऽसंगादपि भगवत्प्रियसंगस्यापकृष्टत्वे व्यंजनयावगमिते भक्तिसिद्धांतापगम उत्तरश्लोकस्यासंगतिः। 'तुल्याम लवेनापि' इत्यादि वचनं च विरुध्येत इत्याद्यवधेयम् । प्राणवृत्त्या क्षुत्तृण्मात्रनिवृत्त्या अत्रेत्थं विचार्यं चुल्लीस्थाग्निस्तु कमंडलुजलमात्रेणैव शाम्यति दावाग्निस्तु जलघटकोटिभिरपि न शाम्यती

यत्संगलब्धं निजवीर्यवैभवं तीर्थं मुहुः संस्पृशतां हि मानसम् ॥ हरत्यजोंतः श्रुतिभिर्गतोंगजं को वै न सेवेत मुकुंदविक्रमम् ॥ ११ ॥ यस्यास्ति भक्तिर्भगवत्यकिंचना सर्वैर्गुणैस्तत्र समासते सुराः ॥ हरावभक्तस्य कुतो महद्गुणा मनोरथेनासति धावतो बहिः ॥ १२ ॥ हरिर्हि साक्षाद्भगवाञ्छरीरिणामात्मा झषाणामिव तोयमीप्सितम् ॥ हित्वा महांस्तं यदि सज्जते गृहे तदा महत्त्वं वयसा दंपतीनाम् ॥ १३ ॥

भगवत्प्रियसंगे गुणमाह । येषां भगवत्प्रियाणां संगाल्लब्धं मुकुंदविक्रमं श्रुतिभिः श्रवणादिभिः संस्पृशतां सेवमानानां पुंसामंतर्गतोऽजो मानसं मलं हरति । कथंभूतं विक्रमम् । निजमसाधारणं वीर्यवैभवं प्रभावातिशयो यस्य । तीर्थं तु गंगादि मुहुः संस्पृशतामंगजं मलं केवलं हरति न तु वासनाः । तान्को वै न सेवेतेत्यन्वयः ॥ ११ ॥ मानसमलापगमफलमाह । यस्येति । अकिंचना निष्कामा । मनःशुद्धौ हरेर्भक्तिर्भवति ततश्च तत्प्रसादे सति सर्वे देवाः सर्वैर्गुणैर्धर्मज्ञानादिभिः सह तत्र सम्यगासते नित्यं वसंति । गृहायासक्तस्य तु हरिभक्त्यसंभवात्कुतो महतां गुणा ज्ञानवैराग्यादयो भवंति । असति विषयसुखे मनोरथेन बहिर्धावतः ॥ १२ ॥ ननु हरिविमुखस्य गृहायासक्तस्यापि लोके महत्त्वं दृश्यते सत्यं दृश्यते तत्तूपहासास्पदमिति सहेतुकमाह । हरिर्हीति । यथा झषाणां मीनानामीप्सितं तोयमेवात्मा तेन विना जीवनाभावात् । महानतिप्रसिद्धोऽपि गृहे यदि सज्जते तदा दंपतीनां मिथुनानां शूद्रादिष्वपि प्रसिद्धं वयसैव केवलं यन्महत्त्वं तदेतस्य भवति न तु ज्ञानादिना । मिथुनेषु पूज्यमानेषु स्त्रीभ्यः पुंसां महत्त्वं

त्यतोऽतितृष्णाव्याप्तमनसां संगे तद्वत्तृष्णावृद्धौ महाननर्थ एव स्याद्विरक्तसंगे तु तद्वद्वैराग्योत्पत्त्या क्षुद्वारकान्नशीतादिवारकवस्त्रमात्रावाप्त्यैव संतोषान्मनःस्थैर्येऽतीव सुखं स्यादिति ॥ १० ॥ भगवत्प्रियसंगस्य माहात्म्यमाह—येषां संगादेव लब्धं निजवीर्यवैभवं गोवर्द्धनधारणादि प्रभावोत्कर्षं सत्त्वशोधकत्वात् तीर्थं श्रुतिभिः संस्पृशतां कर्णैराचम्यतां जनानां मानसमंगजं मनःसंबंधिनं कामं वासनामयम्। अजः श्रीकृष्णो हरति दूरीकरोति श्लेषेण मानसं मनश्चाकर्षति कीदृशः सन् श्रुतिभिः श्रवणेंद्रियैरेवांतर्गतः । अतः को मुकुंदस्य विक्रमं गोवर्द्धनोद्धरणादिवीर्यं न सेवेतेति तस्य च मुकुंदविक्रमस्य भगवत्प्रियसंगं विना दुर्लभत्वात्तस्यैवोत्कर्षः ॥ ११ ॥ मुकुंदविक्रमसेवनस्य भक्तित्वात्तस्याश्च साधुसंगलब्धायाः परमोत्कर्षत्वात्तद्वतो भक्तस्याप्युत्कर्षमाह—यस्येति। नित्यं वसंतीति । सर्वदेवमयः स एव स्यात्तत्सेवयैव सर्वदेवसेवा स्यादिति भावः । यद्वा—सुरा इंद्रियाविष्ठातारो रुद्रादयः सर्वैर्गुणैरेव सह न तु दोषैरित्यर्थः । तेन तस्याहंकारादीनामिंद्रियाणां दुरभिमानादयो दोषा नैव भवंतीति भावः।अभक्तस्य तु महद्गुणा महतो भक्तिमतस्तस्य ये निर्दोषा गुणास्ते कुतः । यदि च शास्त्रज्ञत्वादयो गुणाः स्युस्तदा खल्वीर्ष्यामत्सरादिदोषसहिता एव स्युः । असति संद्भिर्निंद्येऽविद्यमाने वा बहिर्लाभप्रतिष्ठादिसुखे मनोरथेनापि धावतः । यद्वा—समासते इति सुरा इंद्रियाधिष्ठातारोऽन्यत्र सांसारिकलोके संसारप्रवर्त्तकत्वेन दोषैरेव सहासते ज्ञानिलोके नित्यमध्यात्मादिलयभावनावति न सम्यगासते किन्तु असमत्त एव ज्ञानमवाप्य पुनरस्मानेव संजिहीर्षावस्मिन्कृतघ्ने पुंसि स्थिता वयमद्य श्वो वा मरिष्याम एवेति सभयोत्कंपमेवासते । भक्तजने तु प्रतिदिनं भगवन्माधुर्य्य एवाध्यात्मादिकं संचारयति सति सर्वैर्गुणैरेव सम्यगासते।वयं कृष्णायसजातयः प्राकृता अप्यप्राकृताः कृष्णस्पर्शसंयोगात् कार्ष्ण्यप्राप्तदिव्यजातरूपगुणा नित्यमेव भगवन्माधुर्यामृते विहरंतोऽत्र पुंसि नूनमतिमृत्यवो भवामेति सानंदचमत्कारं निश्चली भवंतीत्यर्थः । अन्यत्समानम् ॥ १२ ॥ इत्यर्थ इति । वयोमहत्त्वं हि न महत्त्वहेतुरपि तु ज्ञानमहत्त्वस्यैव " छंदोभ्योऽन्यत्र नो ब्रह्मन्वयोज्यैष्ट्यस्य कारणम् " इति न्यायेन तद्धेतुत्वश्रुतेरिति भावः । अत्र विश्वनाथः—कश्चिज्झषजातिर्यथा तोयमपि हित्वा बहिस्तटादिषु सुखार्थं प्रचरन् जीवन्मृतो भवति तथैव हरिविमुखो जीवन्मृत एव स न तु महानिति भावः । तदपि यदि लोके महान्स्यात्तदा वयसा यौवनेनैव

तस्माद्रजोरागविषादमन्युमानस्पृहाभयदैन्याधिमूलम् ॥ हित्वा गृहं संसृतिचक्रवालं नृसिंहपादं भजताऽकुतोभयमिति ॥ १४ ॥ केतुमालेऽपि भगवान् कामदेवस्वरूपेण लक्ष्म्याः प्रियचिकीर्षया प्रजापतेर्दुहितॄणां पुत्राणां तद्वर्षपतीनां पुरुषायुषाऽहोरात्रपरिसंख्यानानां यासां गर्भा महापुरुषमहास्त्रतेजसोद्वेजितमनसां विध्वस्ता व्यसवः संवत्सरांते विनिपतंति ॥ १५ ॥ अतीवसुललितगतिविलासविलसितरुचिरहासलेशावलोकलीलया किंचिदुत्तंभितसुंदरभ्रूमंडलसुभगवदनारविंदश्रिया रमां रमयन्निंद्रियाणि रमयते ॥ १६ ॥ तद्भगवतो मायामयं रूपं परमसमाधियोगेन रमादेवी संवत्सरस्य रात्रिषु प्रजापतेर्दुहितृभिरुपेताऽहस्सु च तद्भर्तृभिरुपास्ते इदं चोदाहरति ॥ १७ ॥ ॐ ह्रां ह्रीं ह्रूँ ॐ नमो भगवते हृषीकेशाय सर्वगुणविशेषैर्विलक्षितात्मने आकूतीनां चित्तीनां चेतसां विशेषाणां चाऽधिपतये षोडशकलाय छंदो मयायान्नमयायामृतमयाय सर्वमयाय सहसे ओजसे बलाय कांताय कामाय नमस्ते उभयत्र भूयात् ॥ १८ ॥

बालमिथुनेभ्यश्च वृद्धमिथुनानां वयसा महत्त्वं यथेत्यर्थः ॥ १३ ॥ यस्मादेवं तस्माद्गृहं हित्वाऽकुतोभयं नृसिंहपादं भजतेत्यसुरानुपादिशति । कीदृशं गृहम् । रजस्तृष्णारागोऽभिनिवेशः रजआदीनां मूलं कारणमत एव संसृतीनां जन्ममरणादीनां चक्रवालं मंडलमविच्छेदो यस्मात् ॥ १४ ॥ केतुमालेऽपि कामदेवस्वरूपेणास्त इति शेषः। किमर्थमास्तेऽत आह। लक्ष्म्या इति। प्रजापतिः संवत्सरः। "संवत्सरो वै प्रजापतिः" इति श्रुतेः। तस्य दुहितरो रात्र्यभिमानिन्यो देवताः पुत्रा दिवसाभिमानिनो देवास्तेषां च प्रियचिकीर्षया। पुरुषायुषा वर्षशतेन यान्यहोरात्राणि तैः परिसंख्यानं गणना येषाम् । षट्त्रिंशत्सहस्राणामित्यर्थः । यासां दुहितॄणां महापुरुषस्य महास्त्रं चक्रं तस्य तेजसा ॥ १५ ॥ रमां रमयन् स्वीयानींद्रियाणि रमयते । केन साधनेन रमयंस्तदाह । अतीव सुललितया गत्या यो विलासस्तेन विलसितो रुचिरो हासलेशो मंदस्मितं तत्सहितोऽवलोक एव लीला तया किंचिदुत्तंभितमुत्तुंगितं सुंदरं यद्भ्रूमंडलं तेन सुभगं यद्वदनारविंदं तस्य श्रिया ॥ १६ ॥ तद्भर्तृभिर्दिवसाधिष्ठातृभिरुपेता ॥ १७ ॥ सर्वैर्गुणविशेषैः श्रेष्ठवस्तुभिर्विलक्षितो लक्षीकृत आत्मा

दंपतीनां यथा महत्त्वं तथा यूनोर्दंपत्योर्यथा परस्परमादरस्तथा न वृद्धयोर्नापि बालयोः दंपतिपूजायाञ्च यौवनविशिष्टावेव दंपती वस्त्रालंकारादिभिरधिकं पूज्येते न तथा वृद्धाविति ॥ १३ ॥ यस्मादेवं गृहे महत्त्वं नास्ति तस्माद्धेतोः। अत एव रजआदिमूलत्वादेव । गृह एव संसृतिस्तिष्ठतीति भावः ॥ १४ ॥ लक्ष्मीस्तु दास्यसंवलितशुचिरसेन स्तौति कामेन कंदर्पविलासेन दीव्यतीति कामदेवस्तत्स्वरूपेण । संवत्सरप्रजापतित्वे श्रुतिमाह—सँव्वत्सर इति । प्रजापतिः संवत्सरात्मकः कालस्तदभिमानी देव एव तस्य दुहितॄणां पुत्राणां च रात्रिदिवसाभिमानिनां देवानां प्रियचिकीर्षया पुरुषायुषेति कथनसमकालकलियुगापेक्षयोक्तवर्षशतेन यान्यहोरात्राणि तैर्गणना येषाम् । इत्यर्थ इति । यः शतवर्षं जीवति स षट्त्रिंशत्सहस्रदिनानि जीवतीति भावः । दुहितॄणां पतिवत्नीनां दिवससहितानां रात्रीणामित्यर्थः । महास्त्रतः कालचक्ररूपात् । गर्भाः क्षणलवाद्यात्मकाः कालाः । यद्वा—त्रर्षभोज्यानि लोकानां प्रारब्धकर्मफलान्येव ता रात्रीर्निमित्तीकृत्योद्भूतत्वात्तासामेव गर्भा इत्युत्प्रेक्षंते । तथा तेषां संवत्सरात्मकस्थूलकालांते भोगेन क्षय एव गर्भपातत्वेनोत्प्रेक्षितः । अहोरात्र्यधिष्ठात्र्यो देवतास्ताः प्राकृतलोकवर्तिन्यो भगवंतमुपास्य वैकुंठ एव तद्भक्तानामनश्वरप्रेमसेवासुखनिमित्तरूपा भविष्यंतीत्युपासनाफलं च द्रष्टव्यम् ॥ १५ ॥ १६ ॥ मायामयं कृपाप्रचुरम् । यद्वा—मायया जीवाविद्याया आमयो रोगो यतस्तम् ॥ १७ ॥ कृपामयत्वमेव वितृण्वती

स्त्रियो व्रतैस्त्वां हृषिकेश्वरं स्वतो ह्याराध्य लोके पतिमाशासतेऽन्यम् ॥ तासां न ते वै परिपांत्यपत्यं प्रियं धनायूंषि यतोऽस्वतंत्राः ॥ १९ ॥ स वै पतिः स्यादकुतोभयः स्वयं समंततः पाति भयातुरं जनम् ॥ स एक एवेतरथा मिथो भयं नैवात्मलाभादधिमन्यते परम् ॥ २० ॥ या तस्य ते पादसरोरुहार्हणं निकामयेत् साऽखिलकामलंपटा ॥ तदेव रासीप्सितमीप्सितोऽर्चितो यद्भग्नयाच्ञा भगवन् प्रतप्यते ॥ २१ ॥

यस्य आकूतीनां क्रियाणाम्। चित्तीनां ज्ञानानाम्। चेतसां संकल्पाध्यवसायादीनाम्। विशेषाणां तत्तद्विषयाणाम्। षोडश कला अंशा एकादशेंद्रियपंचविषयलक्षणा यस्य। छंदोमयाय वेदोक्तकर्मप्राप्याय। अन्नमयायान्नोपष्टभ्यत्वात्। अमृतमयाय परमानंदाविष्कारत्वात्। सर्वमयाय सर्वविषयत्वात् सहसे ओजसे बलाय तद्धेतुत्वात् ॥ १८ ॥ त्वत्कामेनैव त्वत्सेवकत्वादहं कृतार्थाऽस्मि। अन्यकामनया तु त्वामर्चंत्यो न परिपूर्णमनोरथाः स्युरित्याह। स्त्रिय इति। स्वत एव हृषीकाणामीश्वरं पतिं संतं त्वामाराध्य याः स्त्रियोऽन्यं पतिं प्रार्थयंते। पतिकामानां हि कामाराधनं व्रतेषु प्रसिद्धम्। तासामपत्यादीनि ते पतयो न पातुं शक्ताः॥ १९॥ अतस्ते पतय एव न भवंतीत्याह। स वा इति। स चैवंभूतः पतिर्भवानेक एव नान्यो यो भवानात्मलाभात्परमन्यदधिकं न मन्यते इतरथाऽन्याधीनसुखस्य न स्वतंत्रता। स्वतंत्रनानात्वे च मंडलेश्वराणामिव मिथो भयं स्यादित्यर्थः ॥ २० ॥ किं च निष्कामभजनेऽप्रार्थिता एव सर्वे कामा भवंति सकामभजने तु कामितमात्रमनित्यं चेत्याह। या स्त्री तस्योक्तलक्षणस्य तव पादसरोरुहस्यार्हणं पूजामेव काम

मंत्रं जपंती एतन्मंत्रोपासकोऽन्योऽप्येवं स्वसंबंधेन मंत्रार्थं भावयेदिति व्यंजयंती प्रणमति—कांताय मत्पतये कामाय नम इत्यन्वयः। देवपदानुक्तिस्तु पत्युः संपूर्णनामोच्चारणानौचित्यात्। "पत्युर्नाम ना गृह्णीयादेकदेशादिकं विना" इति। केचित्तु "उच्चारे न हि दोषः स्याद्व्यावहारिकनामनि। जन्मनाम न गृह्णीयात्कलत्रादेर्विनाऽऽपदम् ॥" इति संहितोक्तेः। अन्यस्तु लक्ष्म्या दासीभावेनैवात्मानं ध्यात्वा मंत्रमिममुच्चारयेदिति संप्रदायः। हृषीकेशाय स्वसौंदर्यादिना मन्नेत्रादींद्रियाकर्षकाय मन्नेत्रादिमाधुर्य्यसंभोक्त्रे इति वा। स्वस्य तथा योग्यतायां हेतुः सर्वैर्गुणविशेषैरप्राकृतैर्गुणैर्विलक्षिता विलक्षणी कृता आत्मान देहमनोबुद्ध्यादयो भवंति यतस्तस्मै। हृषीकेशत्वं विवृणोति—आकूतीनां मम कर्मेंद्रिणां चित्तीनां ज्ञानेन्द्रियाणां चेतसां चित्ताहंकारबुद्धिमनसां विशेषाणां तद्वृत्तीनां तत्तद्विषयाणां वाऽधिपतये स्वामिने तत्तन्माधुर्य्यस्वामिने अन्योपासकपक्षेऽधिष्ठात्रे तेषामप्राकृतीकरणात्स्वयमेवाधिष्ठाता न तु दिगादिदेवसमूह इति भावः। षोडशकलाय राकाचंद्रतुल्यत्वात्पूर्णाय। छंदोमयाय वेदरूपिणे स्वभक्त्युपदेष्ट्रे। अन्नमयाय अन्नरूपेण साधकभक्तपरिपालकाय। अमृतमयाय अमृतवदास्वाद्यरूपगुणलीलादिकाय मोक्षरूपाय वा। सर्वमयाय मम सर्वस्वरूपाय। महसे ओजसे बलाय त्वत्सेवायां मच्चित्तेंद्रियदेहसामर्थ्यप्रदाय। उभयत्रेहलोके परलोकेंतर्बहिश्च। अत्र लज्जाबीजत्रिकं सप्रणवं चतुर्वर्गसिद्धिद्योतनायादौ लक्ष्म्या प्रयुक्तं कामो मे लज्जां रक्षतु वर्गचतुष्टय इति द्योतनाय वा ॥ १८ ॥ स्वयं निष्कामा सकामभक्तिमतीरन्याः शोचंत्याह—त्वत्कामेनैवेति ॥ १९ ॥ यतः पातुं न शक्ता अतो हेतोः। इत्यर्थ इति। स्वप्रजापालकानामपि मिथो भयं ततश्च प्रजानामपि भयमतस्तदपालनमेवेति भावः। अत्र विश्वनाथः—पतिशब्दार्थमेव ता न जानंतीत्याह—स इति। यश्चात्मानमपि पातुं न शक्नोति स कथमन्यान्पातीत्यतः प्रथममकुतोभयः स्यात्स चैको भवानेव। इतरथा प्रकारांतरेण। पतिशब्दस्य व्याख्यायामित्यर्थः। यद्वा—सतम्यर्थे थाल्प्रत्ययः। इतरत्रेति पूर्ववत्। अत एवात्मनः परमात्मनस्तव लाभात्। अधि अधिकं परं वस्तु न मन्यते शास्त्रैरिति शेषः। त्वत्प्राप्तेः सकाशादन्यप्राप्तिर्नैवाधिकेति त्वमेव वस्तुतः पतिशब्दवाच्य इत्यर्थः ॥ २० ॥ निष्कामसेवनस्याधिक्यमाह—किञ्चेति। इत्यर्थ इति। सा निष्का

मत्प्राप्तयेऽजेश सुरासुरादयस्तप्यंत उग्रं तप ऐंद्रियेधियः ॥ ऋते भवत्पादपरायणान्न मां विंदंत्यहं त्वद्धृदया यतोऽजित ॥ २२ ॥ स त्वं ममाप्य
च्युत शीर्ष्णि वंदितं करांबुजं यत्त्वदधायि सात्वताम् ॥ बिभर्षि मां लक्ष्म वरेण्य मायया क ईश्वरस्येहितमूहितुं विभुरिति ॥ २३ ॥

येन्न फलांतरं साखिलेषु कामेषु लम्पटा सर्वान्कामान्प्राप्नोतीत्यर्थः । ईप्सितमीप्सितः फलान्तरमातुमपेक्षितः सन्नर्चितश्चेत्तार्हि तदेवैकं रासि ददासि । किं च । यद्यतः फल भोगानंतरं भग्ना याच्ञा याचितोऽर्थो यस्याः सा प्रतप्यते दुःखं प्राप्नोति तदेव रासि न तु नित्यम् ॥ २१ ॥ ननु ममार्हणे कुतः सर्वकामप्राप्तिस्त्वमेव कामार्थिभिः सेव्यसेऽत आह । मत्प्राप्तये ब्रह्मादयस्तपस्तप्यंते कुर्वंति । कथंभूताः । ऐन्द्रिये सुखे धीर्येषां अलुक्समासः तथापि भवत्पादपरायणादृते मां न विंदंति । मत्कटाक्षविलसिता विभूतीर्न लभंत इत्यर्थः । यतस्त्वय्येव हृदयं यस्याः साऽहं त्वत्परतंत्रत्वात्त्वदनुवर्तिनमेव विलोकयामि नान्यमित्यर्थः ॥२२॥ इदानीं कृपां प्रार्थयते । स त्वमिति । यद्भजनं विना न कश्चित्पुरुषार्थः स त्वं त्वदिति त्वया यत्करांबुजं सात्वतां भक्तानां शीर्ष्ण्यधायि कृपया न्यस्तं तन्ममापि शीर्ष्णि निधेहीति शेषः । कथंभूतम् । वंदितं सर्वकामव र्षित्वेन सद्भिः स्तुतम् । न च मयि तवानादरः यतो हे वरेण्य मां वक्षसि लक्ष्म बिभर्षि । अहो विचित्रमेतत् मयि केवलमादरमात्रं भक्तेषु तु परमा कृपाऽत ईश्वरस्य तव

माऽपि सकामापदवाच्येति भावः । भगवन्निति । सर्वसंपद्दानसामर्थ्यमाह । अत्रेप्सितांतरकामायाः परितापः स्वस्वभावप्रातिकूल्यदृष्ट्यैव।लक्ष्म्या तामधिक्षिपंत्योक्तः । वस्तुतस्तु—सकामभजनादपि कृतार्थत्वमुपरिष्टाद्वक्ष्यते ' चतु र्विधा भजते माम् ' इत्यारभ्य । ' उदाराः सर्व एवैते' इत्यंतेन । श्रीगीतासु भगवतापि तस्याप्युदारत्वं वर्णितमिति ॥ २१ ॥ अत्राक्षिपति—नन्विति । केचित्सकामास्त्वामपहाय मामेव ये सेवंते ते धूलिमेव लभंते इति तान्निंदत्याह—मत्प्राप्तये इति । इत्यर्थ इति । भवत्परायणा ध्रुवप्रह्लादादय एव विंदंतीति भावः । इत्यर्थ इति । या तु त्वदभक्तेष्वपि देवासुरादिषु संपद्दृश्यते सा तु गुणमयी प्रतिस्वकर्मफलरूपा मायाशक्तिदुर्गाया एव प्रसा दाद्वा कामादितरंगजनिका कादाचित्की न तु स्वरूपभूताया ममेति मम मायात्वाभावात् मत्प्रसादोत्थायाः संपत्तेरपि त्वद्वैमुख्यापादकत्वाभावादिति भावः। अहो ब्रह्मादयोऽपि मया जिता न त्वमित्यभिप्रायेणाह—अजितेति । ॥ २२ ॥ तदेवं ब्रह्मादीनामाराध्याऽपि तव भार्य्याप्यहं निष्किंचनो भक्तो यथा त्वत्तः सौभाग्यं लभते तथा नाहं लभे एवं मे ललाटमित्याह—स इति । ननु त्वत्सौभाग्यतोऽप्यधिकं यतस्त्वामहं हृदय एव नित्यं दधामीति तत्र सत्रपं सांचलमुखाच्छादनं सहुंकारं नीचैराह—बिभर्षीति । हेवरेण्येति । वरेण्यानामयमेव धर्मो यत्सर्वेषामाश्वासनमिति भावः । मा माम् । लक्ष्म कनकरेखाम् । चिह्नतया यद्वक्षसि दधासि तन्माययैव । हे अच्यु तेति । च्युतिमतामेव स्पृहाकांक्षा भवति न त्वच्युतस्य तवेति भावः । मद्भक्तसौभाग्यं दृष्ट्वा कुबुद्धिरेषा मय्यसूयां मा कार्षीदिति कपटेनैवेति भावः । ननु कोऽप्येवं न ब्रूते तत्राह—कः खल्वीश्वरस्य तवेहितमूहितुं वित र्कितुं क्षमः यतः " न च संकर्षणो न श्रीर्नैवात्मा च यथा भवान् " इति तव भक्तमुद्धवं प्रति निभृतोक्तिमहमश्रौषमेवेति ध्वनिः । संदर्भस्तु—स त्वमिति दैन्योक्तिः यत्त्वया यत्करांबुजं स्वीकारव्यंजकं सात्वतानां शीर्ष्णि अधायि तन्ममापि तादृशभक्तिहीनायाः शीर्ष्णि अधायीत्येकमाश्चर्यम् किञ्च—स तादृशस्त्वं मायया कृपया मा मां वक्षसि लक्ष्मरूपत्वेन बिभर्षीति ततोऽपि परमाश्चर्यं तस्मात्कः खल्वीश्वरस्येति ॥ २३ ॥

रम्यके च भगवतः प्रियतमं मात्स्यमवताररूपं तद्वर्षपुरुषस्य मनोः प्राक् प्रदर्शितम् ॥ स इदानीमपि महता भक्तियोगेनाराधयतीदं चोदाहरति ॥ ॥ २४ ॥ ॐ नमो भगवते मुख्यतमाय नमः सत्त्वाय प्राणायौजसे सहसे बलाय महामत्स्याय नम इति ॥ २५ ॥ अंतर्बहिश्चाखिललोकपालैरदृष्टरूपो विचरस्युरुस्वनः ॥ स ईश्वरस्त्वं य इदं वशे नयन्नाम्ना यथा दारुमयीं नरः स्त्रियम् ॥ २६ ॥ यं लोकपालाः किल मत्सरज्वरा हित्वा यतंतोऽपि पृथक् समेत्य च ॥ पातुं न शेकुर्द्विपदश्चतुष्पदः सरीसृपं स्थाणु यदत्र दृश्यते ॥ २७ ॥ भवान् युगांतार्णव ऊर्मिमालिनि क्षोणीमिमामोषधिवीरुधां निधिम् ॥ मया सहोरुक्रम तेऽज ओजसा तस्मै जगत्प्राणगणात्मने नम इति ॥ २८ ॥ हिरण्मयेऽपि भगवान् निवसति कूर्मतनुं बिभ्राणस्तस्य तत्प्रियतमां तनुमर्यमा सह वर्षपुरुषैः पितृगणाधिपतिरुपधावति मंत्रमिमं चानुजपति ॥ २९ ॥

यन्मायया ईहितं तत्को वितर्कयितुं समर्थः ॥ २३ ॥ २४ ॥ सत्त्वाय सत्त्वप्रधानाय । मुख्यतमाय प्राणाय सूत्रात्मने ॥ २५ ॥ उरुः स्वनो वेदात्मको नादो यस्य । य इदं विश्वं ब्राह्मणादिनाम्ना विधिनिषेधालंबनभूतेन वशेऽनयन्नियमितवान्स त्वमीश्वरः । तथा च श्रुतिः । "यस्य वाक्तंतिर्नामानि दामानि" इति ॥२६॥ नन्विंद्रादयो वशं नयंति लोकपालत्वात्कुतोऽहं तत्राह । यमिति । मत्सर एव ज्वरो येषां ते । यं हित्वा द्विपदश्चतुष्पदः सरीसृपं जंगमं स्थाणु स्थावरं च यदत्र दृश्यते तत्किंचिदपि पातुं न शक्ताः स त्वमेव प्राणरूपेण पालक ईश्वरश्चेत्यर्थः । तथा च श्रुतिः—" ता अहिंसंताहमुक्थमस्म्यहमुक्थमस्मि" इत्यादि ॥ २७ ॥ अवतारचरितमाह । भवानिमां क्षोणीं मया मनुना सह मत्सहितां धृत्वेत्यध्याहारः ऊर्मिमालावति प्रलयार्णवे ओजसा क्रमते विचरति । यद्वा पातुमित्यस्यानुषंगः । क्षोणीं पातुं क्रमते उत्सहत इत्यर्थः । यतोऽजः । कीदृशीम् । ओषधीनां वीरुधां च निधिमाश्रयभूताम् । तस्मै नमः जगतो यः प्राणगणस्तस्यात्मने नियंत्रे ॥ २८ ॥ तत्प्रियतमां तां प्रियतमाम् ॥ २९ ॥

प्राक् चाक्षुषमन्वंतरांते प्रलये सत्यव्रतराजावस्थायाम् मत्स्यत्वेन निकृष्टदृष्टिं प्रत्याह—प्रियतममिति । तदपि भगवतः परमस्वरूपमेव जानीयादित्यर्थः । तद्वर्षपुरुषस्य रम्यकखंडमुख्यस्य । मनोः वैवस्वतस्य ॥२४॥२५॥ सर्वत्रैवांतर्बहिरपि चरसि अथ च लोकपालैरप्यदृष्टस्वरूपः कुतोऽन्यैः । ननु तर्हि ममास्तित्वमेव मास्तु तत्राह—ऊरुस्वन इति । " यतो वा " इत्यादिवेद एव तवास्तित्वं प्रतिपदमुच्चैर्ब्रूत इत्यर्थः । अत एव य इदमिति । दारुमयीं पांचालिकां विश्वस्य पारतंत्र्यादपि स्वतंत्र ईश्वरस्त्वमनुमानेनापि ज्ञाप्यस इति भावः ॥ २६ ॥ अत्राक्षिपति—लोकपालत्वादीश्वराः स्वतंत्राश्चेति चेत्तेषां लोकपालकत्वादिकमौपचारिकमेवेत्याह—यमिति । हित्वा पृथग्भूता वा समेता मिलित्वा वा । मत्सरज्वरत्वे प्रमाणमाह—तथा चेति । ता देवता अहिंसंत समत्सरा बभूवुः । तत्र प्रत्येकं साभिमानमाहुः उ भो अहं कमाश्रित्यास्मि वर्त्ते अपि तु न कमपीति श्रुतेरर्थः । एवं त्वमेव प्राणरूपेण पालक ईश्वरश्चेत्यर्थः ॥ २७ ॥ भक्त्या तु त्वं दृष्टरूपः प्रत्यक्षतयाऽप्युपलभ्यसे तत्र भक्ताभासोऽहमेव प्रमाणमित्याह—भवानिति । युगांतार्णवे मन्वंतरातार्णवे । क्षोणीं धृतनौकारूपां ' नाव्यारोप्य महीमय्याम् ' इत्युक्तेः धृत्वेत्यध्याहारे प्रयोजनापेक्षा न निवर्त्तेत इत्यत आह—यद्वेति । इत्यर्थ इति । इह क्षोणीत्युपलक्षणं मां च पातुमपाद्वैवस्वतं मनुमिति भावः ॥ २८ ॥ सा चासौ प्रिय

ॐ नमो भगवते अकूपाराय सर्वसत्त्वगुणविशेषणाय नोपलक्षितस्थानाय नमो वर्ष्मणे नमो भूम्ने नमोनमोऽवस्थानाय नमस्ते ॥ ३० ॥ यद्रूपमेतन्निजमाययाऽर्पितमर्थस्वरूपं बहुरूपरूपितम् ॥ संख्या न यस्यास्त्ययथोपलंभनात् तस्मै नमस्तेऽव्यपदेशरूपिणे ॥ ३१ ॥ जरायुजं स्वेदजमंडजोद्भिदं चराचरं देवर्षिपितृभूतमैंद्रियम् ॥ द्यौः खं क्षितिः शैलसरित्समुद्रद्वीपग्रहर्क्षेत्यभिधेय एकः ॥ ३२ ॥ यस्मिन्नसंख्येय विशेषनामरूपाकृतौ कविभिः कल्पितेयम् ॥ संख्या यया तत्त्वदृशाऽपनीयते तस्मै नमः सांख्यनिदर्शनाय त इति ॥ ३३ ॥ उत्तरेषु च कुरुषु भगवान् यज्ञपुरुषः कृतवराहरूप आस्ते तं तु देवी हैषा भूः सह कुरुभिरस्खलितभक्तियोगेनोपधावति इमां च परमामुपनिषदमावर्तयति ॥३४॥

अकूपाराय कूमार्य। सर्वः संपूर्णः सत्त्वगुणो विशेषणं यस्य न उपलक्षितं स्थानं यस्य वारिचरत्वात्। वर्ष्मणे वर्षीयसे कालानवच्छिन्नाय भूम्ने सर्वगताय अवस्थानायाधाराय ॥ ३० ॥ निजमाययार्पितं प्रकाशितमेतदर्थं स्वरूपं दृश्यं पृथिव्यादि यस्यैव रूपं यतः पृथङ्नास्ति। कथंभूतम्। बहुभी रूपै रूपितं निरूपितम्। यस्य च संख्या नास्ति। कुतः अयथा मिथ्यैवोपलंभनात्। न हि मरीचिजलमेतावदिति संख्यातुं शक्यते। अव्यपदेशरूपिणे निरुक्तप्रपंचाकाराय॥ ३१ ॥ बहुरूपत्वं दर्शयंस्तस्येश्वरादव्यतिरेकमाह। जरा युजमिति। द्वीपग्रहर्क्षमित्यभिधेयस्त्वमेवैको न त्वद्व्यतिरिक्तोऽस्ति। "सर्वं खल्विदं ब्रह्म" इत्यादि श्रुतेरित्यर्थः ॥ ३२ ॥ सप्रपंचतामनूद्य तन्निरासेन प्रणमति यस्मिन्निति। असंख्येया अनंता विशेषा येषां तानि नामानि रूपाण्याकृतयश्च यस्य तादृशे यस्मिंस्त्वयि कविभिः कपिलादिभिरियं चतुर्विंशत्यादिसंख्या कल्पिता सती यया तत्त्वदृशा येन तत्त्वज्ञानेनापनीयते तस्मै। ते सांख्यसिद्धांतरूपाय नमः परमार्थज्ञानरूपायेति वा ॥ ३३ ॥ एषा भूरुपधावति हेत्यन्वयः ॥ ३४ ॥

तमा तत्प्रियतमा ताम्। वर्षपुरुषैर्हिरण्मयखंडजनैः ॥ २९ ॥ न कूपे आरो गतिर्यस्य सोऽकूपारस्तस्मै कूर्म्मरूपायेत्यर्थः। प्रायः कूपे कूर्मो न भवतीति विशेषणमाकारः शुद्धसत्त्वमूर्त्तये इत्यर्थः। यद्वा—सर्वे सत्त्वगुणा ज्ञानानंदादयो विशेषणं यस्येति। सत्त्वस्य धैर्यस्य वा गुणाः क्षमादयः सर्वे विशेषणं यस्येति। नोपलक्षितं सर्वैरदृष्टं वैकुंठाख्यं स्थानं यस्येति वा। वर्ष्मणे महाप्रमाणाय ॥३०॥ माययाऽर्पितं न तु स्वरूपभूतमिति वाऽर्थ स्वरूपं वस्तुस्वरूपं न त्ववस्तुभूतं त्वद्रूपत्वात्। बहुभिर्नरगोपशुपक्षिमत्स्यादिरूपै रूपितं निरूपितं किन्तु संख्या यस्य नास्ति। अयथोपलंभनाद्यथावदुपलब्धुमशक्यत्वात्। यैः प्रकारैरिदं विश्वमभूत्तेषामुपलंभनाशक्यत्वादित्यर्थः। तथा हि एकस्य स्थूलस्य नरजातेरेव प्रतिशरीरं वर्णस्वभावकंठस्वरादिभेदादनंतप्रकारा ज्ञातुमशक्याः सूक्ष्माणां स्वेदजोद्भिज्जादीनां का वार्त्तेत्यनंतस्य तव शक्तिकार्यस्याप्यानंत्यमिति भावः। अतस्तव स्वरूपभूतस्य रूपस्य सर्वागम्यत्वे कैमुत्यमेवेत्याह—अव्यपदेशं वक्तुमशक्यम्। नित्यं रूपं यस्य तस्मै। संदर्भस्तु—यस्य च तव संख्या नास्तीत्याह ॥ ३१ ॥ तदेवमनंतभेदस्यापि विश्वस्य त्वदेककारणत्वादेकविधत्वमपीत्यभिप्रायेणाह—बहुरूपत्वमित्यादि। ग्रहर्क्षेतीत्यार्षः। इत्यर्थ इति। श्रुत्या ज्ञानदृष्ट्या सर्वस्यैक्यमेवोक्तमिति भावः ॥ ३२ ॥ किञ्च—विश्वस्य नश्वरत्वाज्ज्ञानिभिरनुपादेयत्वमाह—यस्मिन्निति। इयं जरायुजादिरूपा वा ॥ ३३ ॥ उपनिषदं षट्कर्णागोचरं

ॐ नमो भगवते मंत्रतत्त्वालिंगाय यज्ञक्रतवे महाऽध्वरावयवाय महापुरुषाय नमः कर्मशुक्लाय त्रियुगाय नमस्ते ॥ ३५ ॥ यस्य स्वरूपं कवयो विपश्चितो गुणेषु दारुष्विव जातवेदसम् ॥ मथ्नंति मथ्ना मनसा दिदृक्षवो गूढं क्रियाऽर्थैर्नम ईरितात्मने ॥ ३६ ॥ द्रव्यक्रियाहेत्वयनेशकर्तृभिर्मायागुणैर्वस्तुनिरीक्षितात्मने ॥ अन्वीक्षयांऽगातिशयात्मबुद्धिभिर्निरस्तमायाकृतये नमो नमः ॥ ३७ ॥ करोति विश्वस्थितिसंयमोदयं यस्येप्सितं नेप्सितमीक्षितुर्गुणैः ॥ माया यथाऽयो भ्रमते तदाश्रयं ग्राव्णो नमस्ते गुणकर्मसाक्षिणे ॥ ३८ ॥

मंत्रैस्तत्त्वेन लिंग्यत इति तथा तस्मै।यज्ञा अयूपाः क्रतवः सयूपास्तद्रूपाय अत एव महांतोऽध्वरा अवयवभूता यस्य।कर्मणा शुक्लाय शुद्धाय यज्ञानुष्ठात्रे।त्रियुगाय कृतयुगे यज्ञाभावात् यद्वा।कलियुगे छन्नत्वात्॥ ३५॥ कवयो विद्वांसो विपश्चितो निपुणा गुणेषु देहेंद्रियादिषु मथ्नंति विचिन्वंति । मथ्ना विवेकसाधनेन मनसा। क्रियार्थैः कर्मभिस्तत्फलैश्च गूढमप्रकाशमानं दिदृक्षवः।एवं मथने ईरितः प्रकटित आत्मा स्वरूपं यस्य तस्मै नमः॥ ३६॥ मथनमेव दर्शयंत्याह । द्रव्येति । द्रव्यं विषयः क्रिया इंद्रियव्यापारः हेतुर्देवता अयनं देहः ईशः कालः कर्ताऽहंकारः एतैर्मायागुणैः कार्यैरुपलक्षणैर्वस्तुत्वेन निरीक्षितो य आत्मा तस्मै । अन्वीक्षया विचारेणांगैर्यमनियमादिभिरतिशयात्मा निश्चयवती बुद्धिर्येषां तैर्निरस्ता मायानिमित्ता आकृतिर्यस्मात्तस्मै ॥ ३७ ॥ तदेवं निर्गुणरूपेण नत्वा परमेश्वररूपेण प्रणमति । करोतीति । यस्येक्षितुर्जीवार्थमीप्सितम् । अत्यंतानिच्छायामीक्षणायोगात् । स्वार्थं तु नेप्सितम् । विश्वस्थित्यादि स्वगुणैर्माया करोति तस्या जडत्वेऽपीश्वरसन्निधानात्प्रवृत्तिं दृष्टांतेनाह । यथाऽयो लोहं ग्राव्णोऽयस्कांता

मंत्रम् । "उपनिषत्तु द्विजाध्येयवेदभागे समीपगे । षट्कर्णागोचरे मंत्रे" इति धरणिः । आवर्तयति जपति । इमाम् ॐ 'नमो भगवते' इत्यादिकाम् ॥ ३४ ॥ मंत्रैर्वेदमंत्रैः "सहस्रशीर्षा पुरुषः" इत्यादिभिरेव तत्त्वेन याथार्थ्यतो यो ज्ञायते तस्मै । यद्वा—मंत्रा एव तत्त्वं लिंगं मूर्तिर्यस्य तस्मै । 'मंत्रमूर्त्तिममूर्त्तिकम् ' इति नारदोक्तेः । कृतयुगे यज्ञाभावात् "पुरूरवस एवासीत्त्रयी त्रेतामुखे नृप" इति नवमस्कंधे वक्ष्यमाणत्वेन यज्ञकारणीभूतवेदत्रय्याःकृतयुगेऽनाविर्भूतत्वेन यज्ञानुष्ठानासिद्धेः । ननु कृतयुगेऽपि प्रथमोद्भूतहिरण्यगर्भादिकृतं "यज्ञेन यज्ञमयजंत देवाः" इत्यादिश्रुतेर्यज्ञानुष्ठानं श्रूयते तत्कथमुक्तं कृतयुगे यज्ञाभावादिति चेत्तत्राह—यद्वेति । कलियुगे हि परमप्रीतिपूर्वकमत्यंतभक्त्या कदाचित्प्रादुर्भवति न हि युगांतरवत्सर्वगोचरी भवतीति भावः ॥ ३५॥ विपश्चितो भाक्तिचतुरा यस्य गणेषु शब्दरूपादिषु कृष्णरामेति नीलोत्पलदूर्वादलश्यामेत्यादिषु मनसा मथ्ना मथनसाधनेन यस्य स्वरूपं दिदृक्षवो 'मथ्नंति दारुष्विव जातवेदसम्' इति यथा मथनेनैव जातवेदा वह्निः प्रत्यक्षी:भवति तथैवात्र यस्य नामरूपादिषु पुनःपुनर्मनोनिधानमेव मथनं तेनैव यत्स्वरूपंप्रत्यक्षी कुर्वं तीत्यर्थः।कीदृशं क्रियार्थैः कर्मभिस्तत्फलैश्च गूढं भक्त्यैव नैष्कर्म्ये सत्येव द्रष्टुं शक्यमित्यर्थः । एवमेवेरितः कथित आत्मा स्वभावो यस्य यत्नो वा यत्र तस्मै । यद्वा—गुणेषु श्रोत्रवागादिष्विंद्रियेषु यस्य स्वरूपं स्वरूप भूतं नामगुणलीलादि श्रूयमाणकीर्त्यमानादि मनसा मथ्ना मथ्नंति । मनःसहितश्रवणकीर्त्तनादिदृढाभ्यासेनैव यं प्रत्यक्षी कुर्वंतीत्यर्थः। अन्यत्समानम् ॥ ३६॥ एवं स्थूलसूक्ष्ममायिकदेहद्वयसंभवे एव मथनं संभवेत्सति च मथने तत्स्वरूपं दृश्यं स्यादित्याह—द्रव्यमिति।एतैर्मायागुणैः श्रवणकीर्त्तनपरिचरणादिभिर्भजनसाधकैरन्वीक्षया मनःकृतपुनःपुनःपरामर्शेन च अंगानां श्रवणकीर्त्तनादीनामतिशय आधिक्ये आत्मा यत्नो बुद्धिर्वा येषां तैर्वस्तुत्वेन सत्यत्वेन निरीक्षित आत्मा स्वरूपं यस्य तस्मै । तच्च ते स्वरूपं चिन्मयमेवेत्याह—निरस्तमायेति । संदर्भस्तु—मायागुणैरुपलक्षितं यद्वस्तु शुद्धजीवतत्त्वं तत्रापि निरीक्षितो य आत्मा परमात्मा तत्स्वरूपायेत्याह ॥ ३७ ॥ जगतो मायाकार्यत्वं दर्शयंती

प्रमथ्य दैत्यं प्रतिवारणं मृधे यो मां रसाया जगदादिसूकरः ॥ कृत्वाऽग्रदंष्ट्रे निरगादुदन्वतः क्रीडन्निवेभः प्रणताऽस्मि तं विभुमिति ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे भुवनकोशवर्णनं नामाष्टादशोऽध्यायः ॥ १८ ॥ श्रीशुक उवाच ॥ किंपुरुषे वर्षे भगवंतमादिपुरुषं लक्ष्मणाग्रजं सीताऽभिरामं श्रीरामं तच्चरणसन्निकर्षाभिरतः परमभागवतो हनुमान् सह किंपुरुषैरविरतभक्तिरुपास्ते॥१॥ आर्ष्टिषेणेन सह गंधर्वैरनुगीयमानां परमकल्याणीं भर्तृभगवत्कथां समुपशृणोति स्वयं चेदं गायति ॥ २ ॥ ॐ नमोभगवते उत्तमश्लोकाय नम आर्यलक्षणशीलव्रताय नम उपशिक्षितात्मन उपासितलोकाय नमः साधुवादनिकषणाय नमो ब्रह्मण्यदेवाय महापुरुषाय महाराजाय नम इति ॥ ३ ॥ यत्तद्विशुद्धानुभवमात्रमेकं स्वतेजसा ध्वस्तगुणव्यवस्थम् ॥ प्रत्यक्प्रशांतं सुधियोपलंभनं ह्यनामरूपं निरहं प्रपद्ये ॥ ४ ॥

न्निमित्ताद्भ्रमति तदाश्रयं तदभिमुखं सत् गुणानां कर्मणां जीवादृष्टानां च साक्षिणे तस्मै ते नमः ॥ ३८ ॥ अवतारचरितमाह । प्रमथ्येति । यो जगतामादिः कारणभूतः सूकरो मां पृथ्वीमग्रदंष्ट्रे दंष्ट्राग्रे कृत्वा रसातलादारभ्योदन्वतः प्रलयार्णवादिभो गज इव निरगात् ततश्च प्रतिगजतुल्यं दैत्यं प्रमथ्य यः क्रीडन् स्थितस्तं विभुं प्रणतास्मीत्यन्वयः ॥ ३९ ॥ इति श्रीभा० पंचमस्कं० टीकायामष्टादशोऽध्यायः ॥ १८ ॥ छ ॥ ऊनविंशे किंपुरुषे भारते चोपवर्ण्यते ॥ सेव्यसेवकभावश्च भारतश्रैष्ठ्यमेव च ॥ १ ॥ १ ॥ भर्ता चासौ भगवांश्च तस्य कथाम् ॥ २ ॥ आर्याणि लक्षणानि शीलं व्रतं च यस्मिन् । उपशिक्षितात्मने संयतचित्ताय उपासितोऽनुसृतो लोको येन । साधुवादः साधुत्वप्रसिद्धिस्तस्य निकषणाय निकषाश्मवन्निर्धारस्थानाय परमसीम्न इत्यर्थः ॥ ३ ॥ श्रीरामं परमार्थरूपेण प्रणमति । यदेकं वेदांतेषु प्रसिद्धं तत्त्वं

प्रणमति—करोतीति । यस्य भगवतः अयस्कांतात् चुंबकमणेः ॥ ३८ ॥ स्वस्मिन्कृपातिशयं द्योतयंत्यवतारचरितमाह—सुष्ठुकरोति लोकस्थित्यर्थं धरोद्धरणलक्षणं शुभनं विदधातीति सूकर उपसर्गस्य दीर्घो निपातनात् । यद्वा—शूमित्यनुकारशब्दं करोतीति शूकरः शसयोरभेदो ज्ञेय आलंकारिकमतानुरोधात् । रसातलोपलक्षितादुद्भोदात् । इति शब्दः समाप्तौ ॥ ३९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ श्रैष्ठ्यं महत्त्वम् ( १ ) सीतयाभिरामः सुंदरतम् ॥ १ ॥ आर्ष्टिषेण ऋषिविशेषो भारते प्रसिद्धः । भर्तृभगवत्कथामित्यनेन नारदादिरिव नावतारांतरकथायामनुरज्यतीति द्योतितम् ॥ २ ॥ आर्य्याणि सर्वैः शिरोधार्य्याणि लक्षणानि चरणतलगतध्वजवज्रादीनि आजानुबाहुत्वादीनि च शीलानि धीरोदात्तादीनि व्रतानि धर्मनिष्ठत्वादीनि यस्य तस्मै । उपशिक्षितात्मने गुरुब्राह्मणादिशिक्षाग्राहिणे उपासितलोकाय स्वस्वब्रह्माद्युपास्यत्वेपि मयास्वाचरणेन रजकपर्यंता अपि लोकाः प्रसादनीया इति विचारवत्त्वाल्लोकानां तदुपासितत्वं साधुवादानां ब्रह्मण्यत्वसत्यसंधत्वकृपालुत्वादीनां निकषणाय परमोत्कर्षप्रापकाय लोका हि साधुवादैरुत्कृष्यंते रामं प्राप्य साधुवादा अप्युत्कृष्टा भवंतीत्यर्थः । यथा परमोत्कृष्टस्यापि कनकस्य निकषं प्राप्तस्यैवोत्कर्षो लोके प्रमाणी भवति तद्वदित्यर्थः ॥ ३ ॥ ननु शंखचक्रादिमत्त्वगरुडवाहनाद्यैश्वर्य्यानाविष्कारादवतारस्यास्य ब्रह्मत्वे केचित्संशेरते तत्र ये संशेरते ते संशेरतां नाम अहं तु साक्षादिमं परब्रह्मरूपमेवानुभवामीत्याह—यदिति । विशुद्धो मायासंबंधशून्यो योऽनुभवस्तन्मात्रम् । अन्यत् "न चक्षुषा

मर्त्यावतारस्त्विह मर्त्यशिक्षणं रक्षोवधायैव न केवलं विभोः ॥ कुतोऽन्यथा स्याद्रमतः स्व आत्मनः सीताकृतानि व्यसनानीश्वरस्य ॥ ५ ॥
न वै स आत्मात्मवतां सुहृत्तमः सक्तस्त्रिलोक्यां भगवान् वासुदेवः ॥ न स्त्रीकृतं कश्मलमश्नुवीत न लक्ष्मणं चापि विहातुमर्हति ॥ ६ ॥

तत्परये । तत्कथंभूतम् । विशुद्धश्चासावनुभवश्च स एव मात्रा स्वरूपं यस्य । विशुद्धत्वे हेतुः । प्रशांतम् । तत्रापि हेतुः । स्वतेजसा स्वरूपप्रकाशेन ध्वस्ता गुणानां विविधा जाग्रदाद्यवस्था यस्मिन् । अनुभवमात्रत्वे हेतुः । प्रत्यक् दृश्यादन्यत् । तत्कुतः । अनामरूपम् । ननु वस्तुत एवंभूतस्यापि जीवस्योक्तसर्वविपर्ययो दृश्यते तत्राह । निरहं अहंकाराभावान्न तथा वैपरीत्यमित्यर्थः । ननु श्रीरामस्य स्वरूपं नैवं प्रतीयते तत्राह । सुधिया पुंसा उपलभ्यत इत्युपलंभनम् । शुद्धचित्तेन ब्रह्मत्वेनैवोपलभ्यत इत्यर्थः ॥ ४ ॥ कथं तर्हि दशरथपुत्रत्वं तत्राह । विभोर्मर्त्यावतारस्तु रक्षसो रावणस्य वधाय तस्य मनुष्यादन्यतोऽवध्यत्वात् । न केवलमेतावत्किं त्विह संसारे स्त्रीसंगादिकृतं दुःखं दुर्वारमिति मर्त्यानां शिक्षणं च शिक्षार्थमपीत्यर्थः । अन्यथा स्वे स्वरूपे रममाणस्य जगदात्मनः सीताविरहकृतानि व्यसनानीति कुतः स्यात् ॥ ५ ॥ विषयासक्त्यभावेन व्यसनानर्हत्वमुपपादयति । न वै स भगवांस्त्रिलोक्यां क्वापि सक्तः यत आत्मवतां धीराणामात्मा सुहृत्तमश्च । अतो न स्त्रीकृतं मोहं प्राप्नुयात् । न लक्ष्मणं चेति । देवदूतेन

पश्यति रूपमस्य यमेवैष वृणुते तेन लभ्यस्तस्यैवात्मा विवृणुते तनुं स्वाम्'' इति श्रुतेः । तत्कुतः अनामरूपं यतः ''एतास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि'' इति प्रसिद्धप्राकृतनामरूपरहितं तत्र हेतुर्निरहमिति । आत्मशब्देनास्यां श्रुतौ परमात्मनो जीवाख्यशक्तिरूपोंश उच्यतेऽनेनेति पृथङ्निर्देशात् । तद्रूपेण च प्रवेशो नाम देवताशब्दवाच्यतेजोवारिमृल्लक्षणोपाध्यभिनिवेशः स च तस्य जीवस्य तत्राध्यासादेव भवति । ततोंतर्यामिरूपेण स्वयं तत्र स्थितस्यापि तदध्यासाभावादुपाधिकृतनामरूपराहित्यं युक्तमेवेत्यर्थः । सर्वथाहंकारराहित्ये सति व्याकरवाणीति प्रयोगानर्हत्वादिति भावः । अत्राक्षिपति—नन्विति । इत्यर्थ इति । चित्तशुद्धिं विना''दृश्यते त्वग्र्यया बुद्ध्या'' इति श्रुतेस्तत्साक्षात्कारो न भवतीति भावः॥ ४॥नन्वेवंभूतस्य मर्त्येषु प्राकट्यं ।किं प्रयोजनकमित्यत्रोच्यते—गौणे सत्यपि प्रयोजनांतरे मुख्यं तु भक्तेषु लीलामाधुर्याभिव्यंजनमेवेत्याह—मर्त्येति । इत्यर्थ इति । मर्त्या हि द्विविधा धर्मवन्तो भक्तिमन्तश्च तेभ्यः क्रमेण स्वस्य धार्मिकत्वप्रेमवश्यत्वयोः प्रदर्शनया धर्मशिक्षणार्थं प्रेमशिक्षणार्थं चेति भावः । अन्यथा मर्त्यशिक्षणाभावे कुतः स्यात्—स्युः किन्तु साध्वी स्वभार्या धार्मिकैः सर्वथैव नोपेक्षितव्या तदर्थं प्राप्तानि दुःखान्यपि सोढव्यानीति शिक्षणार्थं स्वस्मिन्नसंत्यपि दुःखानि दर्शितानीति प्रथमे पक्षे । द्वितीये तु—सीताविरहकृतानि विषादादीनि कुतो दुःखानि किन्तु प्रेम्णः स्थायिभावस्य विप्रलंभेन रसास्वादनजनितानि दुःखत्वेन भासमानानि परमसुखान्येव न तु दुःखानीत्यर्थः । आत्मारामत्वदुःखित्वयोर्युगपदेकत्र विरोधात् । न च सीतया रममाणस्य कुत आत्मारामत्वमिति वाच्यं सीतायाः स्वरूपशक्तित्वेनात्मभूतत्वात् । ननु सीतायाः स्वरूपभूतत्वे कथं तद्विरहः संभवेत् । उच्यते । एकमेव परमतत्त्वं चिच्छक्तिवृत्तिभेदेन महासारेण प्रेमाख्येनानादित एव द्विधा विभक्तं तिष्ठति ह्लादषडैश्वर्यमयं केवलं ह्लादमयं च प्रथमम्।प्रथमं परमेश्वराख्यं द्वितीयं भक्त्याख्यं पुनश्च तेनैव प्रेम्णा स्वस्य चतसृभिर्वृत्तिभिर्द्वितीयं तत्त्वं चतुर्द्धा विभक्तं दाससखिपित्रादिप्रेयस्याख्यं प्रथमस्य तदेव तत्त्वस्य दास्यादिभावभावितत्वं व्यवस्थापितं प्राकृतेष्वपि जीवेषु यदृच्छयैतादृशभक्तिसाधनवत्सु भक्तिपरिपाके स्वयमाविर्भूयैतच्चतुष्कमावेश्यतेऽपि दासादित्वेन यथाकालं नित्यलोकं प्रापय्य चतुष्केण तेन समनुगम्यते पुनरपि तेनैव प्रेम्णा स्थायिभावतां प्राप्तेन स्वशक्त्यैवाविर्भाविताभिर्विभावादिभिः स्वं रसरूपीकृत्य तदेव युगलं स्वस्य विषयाश्रयीभावभावितं कृत्वा स्वाधीनीकृत्य योगवियोगाभ्यां सुखदुःखायितं स्वमाधुर्यमसाधारणमपारमास्वाद्यता कोऽप्यानंदचमत्कार एव निष्पाद्यते । अतद्विदां तु केषांचित् रामकृष्णादीनामप्येतावद्दुःखमनिर्वाच्यमिति केषांचिज्जीवप्रदर्शनार्थे अनुकृतमित्येवं व्यामोह एव ॥ ५ ॥ तस्य प्रेमवश्यत्वसत्यव्रतत्वब्रह्मण्यत्वादिभि

न जन्म नूनं महतो न सौभगं न वाङ्न बुद्धिर्नाकृतिस्तोषहेतुः ॥ तैर्यद्विसृष्टानपि नो वनौकसश्चकार सख्ये बत लक्ष्मणाग्रजः ॥ ७ ॥ सुरोऽसुरो वाऽप्यथ वा नरोऽनरः सर्वात्मना यः सुकृतज्ञमुत्तमम् ॥ भजेत रामं मनुजाकृतिं हरिं य उत्तराननयत् कोसलान् दिवमिति ॥ ८ ॥ भारतेपि वर्षे भगवान् नरनारायणाख्य आकल्पांतमुपचितधर्मज्ञानवैराग्यैश्वर्योपशमोपरमात्मोपलंभनमनुग्रहायात्मवतामनुकंपया तपोऽव्यक्तगतिश्चरति ॥ ॥ ९ ॥ तं भगवान् नारदो वर्णाश्रमवतीभिर्भारतीभिः प्रजाभिर्भगवत्प्रोक्ताभ्यां सांख्ययोगाभ्यां भगवदनुभावोपवर्णनं सावर्णेरुपदेक्ष्यमाणः परमभक्तिभावेनोपसरति इदं चाभिगृणाति ॥ १० ॥

श्रीरामं संमंत्रयता विज्ञापितमत्रागतस्त्वया वध्य इति तदैव द्वारि स्थितं लक्ष्मणं दुर्वाससमागतं विज्ञापयितुं प्रविष्टं हंतुमुद्यतो वसिष्ठवाक्यात्तत्याज तच्च न युज्येतेत्यर्थः ॥ ६ ॥ अतः श्रीराम एव सर्वैः सेव्य इति वक्तुं न तस्य तोषहेतुः सत्कुलजन्मादि किं तु भक्तिरेवेत्याह । न जन्मेति । महतः पुरुषाज्जन्म महतः श्रीरामस्येति वा । सौभगं सौंदर्यम् आकृतिर्जातिः । यद्यस्मात्तैर्जन्मादिभिर्विसृष्टांस्त्यक्तानपि नो वनचरान् बत अहो लक्ष्मणस्याग्रजोऽपि सखित्वे कृतवान् ॥ ७ ॥ तस्मात्सुरो वान्यो वा यः कोऽपि श्रीराममेव सर्वप्रकारेण भजेत । सुकृतज्ञमल्पीयस्यपि भजने बहुमानिनम् । उत्तरान्कोशलानयोध्यावासिनः ॥ ८ ॥ उपचितैर्धर्मादिभिरात्मोपलभ्यते येन तत्तपश्चरति । तत्रोपशम इंद्रियाणां संयमः । उपरमो निरहंकारता आत्मवतामनुग्रहाय न स्वार्थम् । ईश्वरत्वात्॥ ९ ॥ भगवदनुभाव उपवर्ण्यते येन पंचरात्रेण तत् । सावर्णेर्मनोः । उपसरति सेवते ॥ १० ॥

रप्राकृतैर्गुणैरेवैतदुपपद्यते नान्यथेत्याह—नेति । न सक्तोऽत्र हेतुः—आत्मा परमात्मा भगवान् परिपूर्णैश्वर्यादिः वासुदेवः सर्वाश्रयश्चेति । किं त्वात्मवतामात्मा स्वयमेव नाथत्वेन विद्यते येषां तेषां स्वविषयकममताधारिणां भक्तविशेषाणामित्यर्थः । तेषामेव सुहृत्तमः । तस्माद्यथान्ये स्त्रीकृतं स्त्रीहेतुकं कश्मलमश्नुवते तथा नासावश्नुवीत अतस्तस्यात्मवत्त्वेनैव तादृशकश्मलहेतुतत्प्रीतिविषयतापीति भावः । तथा देवदूतसमयातिक्रमेणात्मवतोऽपि लक्ष्मणस्य परित्यागो यः स खलु नात्यंतिक इत्याह—न लक्ष्मणमिति । इत्यर्थ इति । मर्यादारक्षणार्थमेव किञ्चित्तत्तदनुकरणमिति भावः ॥ ६ ॥ यतः परमदयालुस्स रामोऽतो हेतोः । न हि रामादपरो महानिति कथमुक्तं महतः पुरुषादिति ततः पक्षांतरमाह—श्रीरामस्य वेति । लक्ष्मणस्य सर्वसद्गुणलक्षितस्य श्रीसुमित्रानंदनस्याग्रजोप्यग्रजत्वेन तमपि दास्ये विदधानोऽस्मान्सर्वसल्लक्षणरहितत्वेन दास्ययोग्यानपि सीतान्वेषणादिभक्तितुष्टत्वेन सखित्वे कृतवान् । सहविहारादिना सखीनिव स्वीकृतवान्सुग्रीवमनुलक्ष्य वेयमुक्तिः ॥ ७ ॥ तस्माद्भजनीयेषु सर्वावतारेषु मध्ये राम एव कृपासिंधुरतिशयेन भजनीयो यद्भजने सर्व एवाधिकारीत्याह—सुर इति । दिवं वैकुंठम् ॥ ८ ॥ नरनारायणाख्य इति । द्वयोरभेदो दर्शितः । आत्मवताम् आत्मा स एव भगवान् विद्यते नाथत्वेन येषां तेषां भक्तानामनुकंपया हेतुना तद्विषयकानुकंपाधीनः सन् तेषां मंगलार्थं स्वयमेव तपश्चरतीत्यर्थः । अहो एतावानपि तदनुकंपापरिणाम इति भावः । उपचितैर्वर्द्धितैः । आत्मा त्वंपदार्थ उपलभ्यते ज्ञायते । तत्र धर्मादिषु । यद्वात्मोपलंभनं भगवत्स्फूर्त्तिहेतुकमित्यर्थः । लोकैस्तथा कथं नावगम्यत इति चेत्तत्राह—अव्यक्तगतिरिति । ईश्वरस्य स्वार्थं तदसंभवाद्व्यक्तगतिर्वा ॥ ९ ॥ प्रजाभिः सह ताश्च मुनिरूपा एव न सर्वाः । भगवता नरनारायणाख्येन प्रोक्ताभ्यां सांख्ययोगाभ्यां सारासारविवेकभगवन्निष्ठाभ्यां

ॐ नमो भगवते उपशमशीलायोपरतानात्म्याय नमोऽकिंचनवित्ताय ऋषिऋषभाय नरनारायणाय परमहंसपरमगुरवे आत्मारामाधिपतये नमोनम इति ॥ ११ ॥ गायति चेदम् ॥ कर्ताऽस्य सर्गादिषु यो न बध्यते न हन्यते देहगतोऽपि दैहिकैः ॥ द्रष्टुर्न दृग् यस्य गुणैर्विदूष्यते तस्मै नमोऽसक्तविविक्तसाक्षिणे ॥ १२ ॥ इदं हि योगेश्वर योगनैपुणं हिरण्यगर्भो भगवान् जगाद यत् ॥ यदंतकाले त्वयि निर्गुणे मनो भक्त्यादधीतोज्झितदुष्कलेवरः ॥ १३ ॥ यथैहिकामुष्मिककामलंपटः सुतेषु दारेषु धनेषु चिंतयन् ॥ शंकेत विद्वान् कुकलेवरात्ययाद्यस्तस्य यत्नः श्रम एव केवलम् ॥ १४ ॥ तन्नः प्रभो त्वं कुकलेवरार्पितां त्वन्माययाऽहंममतामधोक्षज ॥ भिंद्याम येनाशु वयं सुदुर्भिदां विधेहि योगं त्वयि नः स्वभावमिति ॥ १५ ॥

उपरतानात्म्याय निरहंकाराय ॥ ११ ॥ असक्तश्चासौ विविक्तश्च साक्षी च तस्मै नमः । असक्तत्वं दर्शयति । अस्य विश्वस्य सर्गादिषु कर्तापि यो न बद्ध्यतेऽहंकर्तेति न मन्यते । विविक्तत्वमाह । देहगतोऽपि दैहिकैः क्षुत्पिपासादिभिर्यो न हन्यते नाभिभूयते । साक्षित्वमाह । यस्य द्रष्टुरपि सतो दृष्टिर्गुणैर्दृश्यैर्न विदूष्यते न विक्रियते ॥ १२ ॥ योगकौशलं निरूपयन्योगं प्रार्थयते । इदमिति त्रिभिः । हे योगेश्वर हिरण्यगर्भो यद्योगनैपुणं जगाद इदमेव तत् । किम् । जन्मप्रभृति भक्त्यांतकाले पुमांस्त्वयि मनो धारयेदिति यत् । कथंभूतः सन् । उज्झितं दुष्कलेवरं तदभिमानो येन ॥ १३ ॥ अन्यथा तस्य शास्त्राभ्यासादिश्रमो व्यर्थ इत्याह । यथैहिकामुष्मिककामेषु लंपटो मूर्खः सुतादिषु योगक्षेमं चिंतयन्कुत्सितस्य कलेवरस्यात्ययान्मृत्योः शंकते तथा विद्वानपि सन्यः शंकेत तस्य यत्नः शास्त्रश्रवणादिः श्रम एव ॥ १४ ॥ यस्माद्विदुषोऽपीयमेव दशा तत्तस्माद्धे प्रभो अधोक्षज त्वमेव नो योगं विधेहि । कीदृशम् । त्वयि स्वभावं सहजवासनारूपम् । येन योगेन वयं त्वन्मायया नः कुकलेवरेऽर्पितामहंममतां शीघ्रं

यद्भगवदनुभावोपवर्णनं तत्सावर्णिं प्रत्युपदेक्ष्यति यः स इत्यर्थः । तीर्थस्तु—सांख्ययोगाभ्यां यथार्थज्ञानतत्साधनाभ्यामित्यर्थमाह ॥ १० ॥ न विद्यते आत्मा ज्ञातव्यत्वेन यस्य सोऽनात्मा तस्य भावोऽनात्म्यमुपरतमनात्म्यं यस्मात्तस्मै निवृत्तदेहादिधर्माय ॥ ११ ॥ आत्मारामचूडामणित्वमाह—कर्त्तेति ॥ १२ ॥ योगाभ्यासिनां रहस्यमाह—इदमिति । यदिति शत्रंतम् । अंतकाले यत् गच्छच्चपलमिति यावत् । मनस्त्वयि दधीत स्थिरी कुर्यादित्यर्थः । योगेश्वरेति । भगवतो निजेष्टदाने सामर्थ्यमाह—उज्झितेति । वर्त्तमाने निष्ठा ॥ १३ ॥ शंकेत मयि मृते सति मत्पुत्रादयः कथं वर्त्तेरन्निति भावयेत श्रम एव तस्य शास्त्राभ्यासादि व्यर्थमेवेति भावः ॥ १४ ॥ कुकलेवरेति । कलिभवलोकापेक्षयोक्तम्—प्रभो इति । त्वमेवास्मदभिमतसंपादने समर्थ इति भावः । अधोक्षजेति । तव कृपां विना तव ज्ञानं दुर्लभमिति भावः । यद्वा—यथा विषयेषु स्वभावस्तथा

भारतेप्यस्मिन् वर्षे सरिच्छैलाः संति बहवो मलयो मंगलप्रस्थो मैनाकस्त्रिकूट ऋषभः कूटकः कोल्लकः सह्यो देवगिरिर्ऋष्यमूकः श्रीशैलो वेंकटो महेंद्रो वारिधारो विंध्यः शुक्तिमानृक्षगिरिः पारियात्रो द्रोणश्चित्रकूटो गोवर्धनो रैवतकः ककुभो नीलो गोकामुख इंद्रकीलः कामगिरिरिति चान्ये च शतसहस्रशः शैलास्तेषां नितंबप्रभवा नदा नद्यश्च संत्यसंख्याताः ॥ १६ ॥ एतासामपो भारत्यः प्रजा नामभिरेव पुनंतीनामात्मना चोपस्पृशन्ति ॥ १७ ॥ चंद्रवशा ताम्रपर्णी अवटोदा कृतमाला वैहायसी कावेरी वेणी पयस्विनी शर्करावर्ता तुंगभद्रा कृष्णा वेण्या भीमरथी गोदावरी निर्विंध्या पयोष्णी तापी रेवा सुरसा नर्मदा चर्मण्वती सिंधुरंधः शोणश्च नदौ महानदी वेदस्मृती ऋषिकुल्या त्रिसामा कौशिकी मंदाकिनी यमुना सरस्वती दृषद्वती गोमती सरयू रोधस्वती सप्तवती सुषोमा शतद्रूश्चंद्रभागा मरुद्वृधा वितस्ता असिक्नी विश्वेति महानद्यः ॥ १८ ॥ अस्मिन्नेव वर्षे पुरुषैर्लब्धजन्मभिः शुक्ललोहितकृष्णवर्णेन स्वारब्धेन कर्मणा दिव्यमानुषनारकगतयो बह्व्य आत्मन आनुपूर्व्येण सर्वा ह्येव सर्वेषां विधीयंते यथा वर्णविधानमपवर्गश्चापि भवति ॥ १९ ॥

भिंद्याम त्यजेम । सुदुर्भिदामुपायांतरैः सर्वथा त्यक्तुमशक्याम् ॥ १५ ॥ इलावृतवदस्मिन्नपि वर्षे सरितः शैलाश्च संति नितंबप्रभवास्तटेभ्यः संभूताः ॥१६॥ आत्मना च देहेनाप्युपस्पृशंति ॥१७॥१८॥ लब्धं जन्म यैस्तैः पुरुषैः । सात्त्विकादिना स्वकृतेन कर्मणा दिव्यादिगतय आत्मनो विधीयंते साध्यंते । हि यस्मात् । सर्वा एव गतयः कर्मानुसारेण सर्वेषां भवंति यस्य वर्णस्य यद्विधानं मोक्षप्रकारः संन्यासवनस्थत्वादिस्तदनतिक्रमेणास्मिन्नेव वर्षे नृणामपवर्गश्च भवति । एतच्च कर्मादि बहुसाधनसंभवाभिप्राये

त्वयि स्वभावो निसर्गोऽस्त्वित्यर्थः ॥ १९ ॥ गोवर्द्धनोऽयं शास्त्रलोकप्रसिद्धः श्रीवृंदावनगतः श्रीकृष्णक्रीडत्वेन तमनु रैवतोऽपि पठ्यतेऽधुना तस्य स्वल्पत्वादिदृष्टिस्तु दिनेदिनेंतर्द्धानात् । चित्रकूटस्याभ्यां पूर्वपाठो हि श्रीरामावतारस्य कृष्णावतारात्प्राक्तनत्वेन तद्वासस्थानस्य तस्यापि प्राक्तनत्वेनैवेति ज्ञेयम् ॥ १६ ॥ एतासां भारतस्थानां नामभिर्नामोच्चारणमात्रेणैव 'गंगागंगेति यो ब्रूयात्' इत्युक्तन्यायेन ॥ १७ ॥ काश्चिन्नामतोऽपि निर्दिशति—नर्मदेति । चर्मण्वत्या विशेषणं तेन न पौनरुक्त्यं कचिद्द्वयोरेकतरा एव पठितास्ति । अंधो ब्रह्मपुत्रः॥ १८ ॥तदनतिक्रमेण यथा ब्राह्मणस्य चत्वार आश्रमाः । क्षत्रियस्य त्रयो विना संन्यासम् । वैश्यस्य द्वौ विना वानप्रस्थसंन्यासौ । शूद्रस्यैको गृहस्थाश्रम एव नान्ये त्रयस्तस्यावैदिकत्वादिति निर्णीतमस्माभिराद्यपद्यव्याख्याशतके । एतच्च भारत एवापवर्गकथनं च । अन्यत्र भारतेतरवर्षेषु स्वर्गादिषु चापवर्गो नास्तीत्यभिप्रायेण नोक्तम् । अन्यत्रापि तत्सत्त्वे पारमर्षं सूत्रं प्रमाणयति—तदुपर्यपीति । देवादीनां ब्रह्मविद्याधिकारोऽस्ति नास्ति वेति संदेह आह—तेषां मनुष्याणामुपरि ये देवादयस्तेषामपि ब्रह्मविद्याधिकारोऽस्ति । संभवात् । अर्थित्वसामर्थ्याद्यधिकारकारणस्य संभवात् । इति बादरायणो मन्यत इति सूत्रार्थः । अत्र विश्वनाथः—अस्मिन्नेव वर्षे नान्यत्र तत्रापि सहस्रयोजनप्रमाणे प्रदेश एवेति ज्ञेयम्।तदुक्तं विष्णुपुराणे—"भारतस्यास्य वर्षस्य नव भेदान्निशामय । इन्द्रद्वीपः कशेरुश्च ताम्रवर्णो गभस्तिमान् ॥ नागद्वीपस्तथा सौम्यो गांधर्वस्त्वथ वारुणः । अयन्तु नवमस्तेषां द्वीपः सागरसंभृतः ॥ योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरात्" सागरसंभृत इति । समुद्रप्रां

योऽसौ भगवति सर्वभूतात्मन्यनात्म्येऽनिरुक्तेऽनिलयने परमात्मनि वासुदेवेऽनन्यनिमित्तभक्तियोगलक्षणो नानागतिनिमित्ताऽविद्याग्रंथिरंधनद्वारे
ण यदा हि महापुरुषपुरुषप्रसंगः ॥ २० ॥ एतदेव हि देवा गायंति ॥ अहो अमीषां किमकारि शोभनं प्रसन्न एषां स्विदुत स्वयं हरिः ॥ यैर्जन्म
लब्धं नृषु भारताजिरे मुकुंदसेवौपयिकं स्पृहा हि नः ॥ २१ ॥ किं दुष्करैर्नः क्रतुभिस्तपोव्रतैर्दानादिभिर्वा द्युजयेन फल्गुना ॥ न यत्र नारायणपा
दपं कजस्मृतिः प्रमुष्टाऽतिशयेंद्रियोत्सवात् ॥ २२ ॥ कल्पायुषां स्थानजयात् पुनर्भवात् क्षणायुषां भारतभूजयो वरम् ॥ क्षणेन मर्त्येन कृतं मन
स्विनः संन्यस्य संयांत्यभयं पदं हरेः ॥ २३ ॥

णोक्तं न त्वन्यत्रापवर्गाभावेन । तदुपर्यपि बादरायणः संभवादिति देवानामपि मोक्षस्य सूचितत्वात्॥ १९॥ अपवर्गस्वरूपमाह । योऽसाविति । अनात्म्ये आत्मनि भवमात्म्यं
रागादि तद्रहिते । अनिरुक्ते वाचामगोचरे । अनिलयनेऽनाधारे । अनन्यनिमित्तोऽहैतुको भक्तियोग एव लक्षणं स्वरूपं यस्य । कथं भवति । नानागतीनां निमित्तं यो
विद्याग्रंथिस्तस्य रंधनं छेदनं तद्द्वारेण महापुरुषपुरुषा विष्णुभक्तास्तैः प्रकृष्टः संयोगो यदा भवति तदा ॥ २० ॥ एतदेव मानुष्यमेव सर्वपुषार्थसाधनं गायंति । अमीषा
मेभिः उत स्वित् । अथवा स्वयमेव साधनं विनैव हरिरेषां प्रसन्नोऽभूत् । एवंभूतस्य पुण्यस्य दुष्करत्वात् । भारताजिरे भारतांगणे नः केवलं स्पृहैव यत्र तन्मुकुंदसेवोपयो
गि नृषु जन्म यैर्लब्धम् ॥ २१ ॥ स्पृहामेवाहुः किमित्यादिसप्तभिः । दुष्करैः क्रत्वादिभिर्नः फल्गुना तुच्छेन द्युजयेन स्वर्गप्राप्त्या किं न किंचित्फलं कुतः यत्र नारायणपा
दपंकजस्मृतिर्नास्ति । प्रत्युतातिशयितादिंद्रियाणामुत्सवाद्भोगात्प्रमुष्टाऽभूत्॥ २२॥ क्षणमल्पमेवायुर्येषाम् । वरत्वे हेतुः । मर्त्येनापि देहेन क्षणेनैव कालेन कृतं कर्म संन्यस्य

तवर्त्तीति श्रीस्वामिव्याख्या नवमस्यास्य पृथङ्नामाकथनान्नाम्नापि नवद्वीपोऽयमिति गम्यते । विशेषश्च तत्रैव "पूर्वे किराता यस्यांते पश्चिमे यवनाः स्मृताः । पूर्वदेशादिकाश्चैव कामरूपनिवासिनः ॥ उंड्राः कलिंगा मगधां
दाक्षिणात्याश्च कृत्स्नशः । मारुका मालवाश्च" इत्यादि । "चत्वारि भारते वर्षे युगान्यत्र महामुने । कृतं त्रेता द्वापरश्च कलिश्चान्यत्र न कचित् ॥" इति । वायवीये च "भारतस्यास्य वर्षस्य नव भेदान्निबोधत सागरां
तरिता ज्ञेयास्ते त्वगम्याः परस्परम् ॥" इति । शुक्ललोहितकृष्णवर्णेन सात्त्विकराजसतामसेन कर्मणा क्रमेण दिव्यादिगतयो बह्वय आत्मनः स्वस्य विधीयंते साध्यंते । हि यस्मात्सर्वा एव गतयः सर्वेषां यथावर्णविधान
मिति वर्णानां धर्मस्याधर्मस्य च करणं संभवेदिति विधीयंते वेदेनेति शेषः । तथाऽपवर्गश्चेति तस्य विधातुमशक्यत्वात्स स्वयमेव भवतीति चकारेणापवर्गस्य वैरल्यं द्योतितमिति ॥ १९ ॥ ननु किंस्वरूपोऽपवर्गः कदा
वा भवेदित्याकांक्षायामपवर्गस्वरूपमाह–भगवति परमकल्याणसौंदर्यादिगुणवति अत एव सर्वभूतानामात्मा मनो यत्र माधुर्येण सर्वभूतचित्ताकर्षके इत्यर्थः । अनिलयने लयरहिते वा वासुदेवे श्रीनंदनंदने ॥ २० ॥
ननु दुरात्मनामपि तत्र जन्म दृश्यतेऽतो विशिंषंति मुकुंदसेवाया उपयोगिब्राह्मणादिजन्मेत्यर्थः ॥ २१ ॥ ननु भवद्भिरपि भारते जन्म प्राप्यैव सत्कर्मभिर्दिवि सुखमुपभुज्यते इति चेदस्माकं तज्जन्म धिक् तत्प्राप्यं
दिवमपि धिक् तत्रत्यं सुखमपि धिगित्याद्यभिव्यंजयंत आहुः–किमिति । यत्र दिवि ॥ २२ ॥ ब्रह्मलोकादपि भारतभूमेरुत्कर्षः खल्वपूर्व एवेत्याहुः–कल्पायुषामिति । ब्रह्मलोके द्विपरार्द्धपर्यंतनिवासादपि भारतभूमौ क्षण

न यत्र वैकुंठकथासुधापगा न साधवो भागवतास्तदाश्रयाः ॥ न यत्र यज्ञेशमखा महोत्सवाः सुरेशलोकोऽपि न वै स सेव्यताम् ॥ २४ ॥ प्राप्ता नृजातिं त्विह ये च जंतवो ज्ञानक्रियाद्रव्यकलापसंभृताम् ॥ न वै यतेरन्नपुनर्भवाय ते भूयो वनौका इव यांति बंधनम् ॥ २५ ॥ यैः श्रद्धया बर्हिषि भागशो हविर्निरुप्तमिष्टं विधिमंत्रवस्तुतः ॥ एकः पृथङ्नामभिराहुतो मुदा गृह्णाति पूर्णः स्वयमाशिषां प्रभुः ॥ २६ ॥ सत्यं दिशत्यर्थितमर्थितो नृणां नैवार्थदो यत् पुनरर्थिता यतः ॥ स्वयं विधत्ते भजतामनिच्छतामिच्छापिधानं निजपादपल्लवम् ॥ २७ ॥

हरेः पदं सम्यग्यांति॥२३॥अतो यत्र वैकुंठकथामृतनद्यो न संति तदाश्रयाः कथाश्रयापगा महांतो नृत्याद्युत्सवा येषु तादृशा यज्ञेशस्य मखाश्च पूजाः। स सुरेशस्य ब्रह्मणोऽपि लोको न सेव्यताम् ॥२४॥ अमुमुक्षून्नरान्निंदति। प्राप्ता इति। ज्ञानं च तदर्थाः क्रियाश्च तदर्थानि द्रव्याणि च तेषां कलापेन संभृतां पूर्णाम्। अपुनर्भवाय मोक्षाय वनौकस इव वनौकसः पक्षिणो यथा लुब्धकान्मुक्ता अपि पुनर्यदि तस्मिन्नेव वृक्षे प्रमत्ता विहरंति तर्हि यथा बध्यंते तद्वत् ॥२५॥ अहो भारतवासिनां भाग्यमित्याहुः। यैरिति। "अग्नये जुष्टं निर्वपामि इंद्राय जुष्टं निर्वपामि" इत्येवं भागशो निरुप्तं पृथक्कृतम्।कथम्।विधिना प्रकारेण मंत्रेण च वस्तुतश्चरुपुरोडाशादिभेदेन चेष्टं देवतामुद्दिश्य त्यक्तं निरुप्तं च ममेदमिति स्वीकृत्य त्यागानंतरमश्नातीत्यर्थः पृथगिंद्रादिनामभिराहुत आहूतः आशिषां प्रभुः स्वयं पूर्णोऽपि हरिः ॥ २६ ॥ तत्रापि निष्कामाः कृतार्था

मात्रं वासोऽपि श्रेष्ठ इत्यर्थः। तत्र हेतुः—पुनर्भवाद्ब्रह्मलोके तावान्वासोऽपि पुनर्भवप्रद इत्यर्थः। भारते तु मर्त्येन मरणधर्मकेणापि देहेन मनस्विनो भगवच्चरणदत्तमनसः हरेः पदं वैकुंठं ब्रह्मलोकमूर्धन्यपि पादौ निधाय कृतं शुभाशुभं सर्वमपि कर्म संन्यस्य त्यक्त्वा 'यत्करोषि यदश्नासि' इति प्रोक्तन्यायेन भगवति समर्प्येत्यर्थः। "एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः। त एवात्मविनाशाय कल्पंते कल्पिताः परे॥" इत्युक्तेर्भगवदर्पितकर्मणां मोक्षहेतुत्वश्रवणादिति भावः॥ २३ ॥ यतस्तत्र हरिकथादि नास्ति अतो हेतोरिति स्वामी। विवेकिनामयमेव विवेक इत्याहुः—नेति। सुधेव सर्वत आधिक्येन स्वाद्वी तदापगेव भूयसी न तु ज्ञानयोगादिकथेव श्रव्याऽल्पीयसी च। भागवता भगवदालंबिनः। तदाश्रयास्तामेवाश्रयन्ते न तु परमात्मालंबिनः ज्ञानादिसिद्ध्यर्थं तां किञ्चिन्मात्रीमपेक्षमाणाः। यज्ञानां ब्रह्मयज्ञादीनामांगिरसबृहस्पतिसवादीनामन्येषामपीशस्य हरेर्मखाः " यज्ञैः संकीर्त्तनप्रायैर्यजंति हि सुमेधसः " इति प्रमाणोक्तलक्षणाः संकीर्त्तनबहुलाः परिचरणरूपाः महांत उत्सवा गीतनृत्यवाद्यभक्त्याराधनाद्या येषु ते यत्र न संति स सुरेशस्य ब्रह्मणोऽपि लोकः न सेव्यतां नाश्रीयताम् ॥ २४ ॥ तादृशं भारतं प्राप्ता अप्यकृतार्था अतिशयेन शोच्या एव। यथा लब्धचिन्तामणयोऽपि पूर्ववत्कृषीवला एवेत्याहुः—प्राप्ता इति। ज्ञानमधिदैवम् क्रिया अध्यात्मम् द्रव्यमधिभूतं तेषां समूहैः संभृतां पूर्णां श्रवणादिसर्वेंद्रियैः पूर्णामिति। हरिनामश्रवणकीर्त्तनादिसंभवेऽपीति भावः। अपुनर्मृताय भक्तियोगाय शेषं समानम् ॥ २५ ॥ अत्र भारते 'एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्' इत्यादिश्रीभगवदुक्तं भगवद्विभूतिबुद्ध्या विश्वरूपोपासनामपि कुर्वाणा धन्या एवेत्याहुः—यैरिति। इत्यर्थ इति। तमुद्दिश्यैव तत्तन्नाम्ना त्यक्तत्वादिति भावः॥ २६ ॥ तत्रापि भारतेऽपि विश्वनाथस्तु—शुद्धां भक्तिं कुर्वाणाः सकामा अपि कृतार्था

यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य सूक्तस्य कृतस्य शोभनम् ॥ तेनाजनाभे स्मृतिमज्जन्म नः स्याद् वर्षे हरिर्यद्भजतां शं तनोति ॥ २८ ॥ श्रीशुक उवाच ॥ जंबूद्वीपस्य च राजन्नुपद्वीपानष्टौ हैक उपदिशंति सगरात्मजैरश्वान्वेषण इमां महीं परितो निखनद्भिरुपकल्पितान् ॥ २९ ॥ तद् यथा स्वर्णप्रस्थश्चंद्रशुक्ल आवर्तनो रमणको मंदरहरिणः पांचजन्यः सिंहलो लंकेति ॥ ३० ॥ एवं तव भारतोत्तम जंबूद्वीपवर्षविभागो यथोपदेशमुपवर्णित इति ॥ ३१ ॥ इति श्रीभा० म० पंचम० जबूद्वीपवर्णनं नामैकोनविंशतितमोऽध्यायः ॥ १९ ॥

इत्याहुः । सत्यमिति । प्रार्थितः सन्नर्थितं ददातीति सत्यं तथापि परमार्थदो न भवत्येव । यद्यस्माद्यतो दत्तादनंतरं पुनरप्यर्थिता भवति । ननु नार्थितश्चेत्किमपि न दद्यादित्याशंक्याहुः । अनिच्छतां निष्कामानां तु इच्छानां पिधानमाच्छादकं सर्वकामपरिपूरकं निजपादपल्लवं स्वयमेव संपादयति ॥ २७ ॥ स्विष्टस्य सम्यग्यजनस्य । सूक्तस्य प्रवचनस्य । कृतस्यान्यस्यापि कर्मणः स्वर्गसुखादुपभुक्तादवशेषितं यदि किंचिदस्ति तेनाजनाभे वर्षे नोऽस्माकं जन्म स्यात् । कीदृशं स्मृतिमत् हरिरेव सेव्य इत्यनुसंधानयुक्तम् । यतो हरिर्भजतां शं सुखं तनोति ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ इति श्रीभा० पंचमस्कंधे टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥

निष्कामभक्ततुल्या एव भवंतीत्याहुः—सत्यमिति । नृणां भजताम् । अर्थितं कामितं पदार्थं तैरार्थितः सन् दिशति ददातीति सत्यम् किं तु यत् यथा पुनरर्थिता भोगांते याचकत्वं स्यात् तथा नैवार्थदः एतत्कथमवगतमित्यत आह—यतः निजपादपल्लवमनिच्छतामपि भजतां स्वयमेव ध्रुवादीनामिवेच्छापिधानं सर्वकामाच्छादकं तदेव निजपादपल्लवं विधत्ते कृपया ददाति निजपादपल्लवं स्वयमेव बलाद्दत्त्वा इच्छायाः पिधानमाच्छादनं करोतीति वा । ततश्चानभीप्सितामपि सितशर्करां पितुः सकाशात्प्राप्य शिशवो यथा मृदि स्पृहां त्यजंति तथैव कामानपीत्यर्थः।अत एव 'अकामः सर्वकामो वा' इत्यादौ तीव्रेण ज्ञानकर्माद्यमिश्रेण भक्तियोगेन यजेतेत्युक्तम् । तत्र सकामानां निष्कामाणां च भक्तानामंततः पादपल्लवप्राप्तावपि नैकरूप्यं भावनीयं न हि जात्यैव शुद्धं बलाच्छोधितं च तुल्यमूल्यं भवत्यतो ध्रुवादिभ्यः सकाशाद्भरतादीनामुत्कर्षः परम एव दृश्यत इति।अत्र संदर्भः—अर्थितः प्रार्थितः सन्नृणामार्थितं सत्यमेव ददाति न तत्र कदाचिदपि व्यभिचार इत्यर्थः । किन्तु तथापि तन्मात्रेणार्थदो न भवति तन्मात्रं दत्त्वा निवृत्तो न भवतीत्यर्थः । यत उपासकस्तत्रापूर्णत्वाद्योगक्षये सति तदेव पुनरप्यर्थिता भवति । " न जातु कामः कामानामुपभोगेन शाम्यति " इत्यादेस्तदेवमभिप्रेत्य स तु परमकारुणिकस्तत्पादपल्लवमाधुर्यज्ञानेन तदनिच्छतामपि भजतामिच्छापिधानं सर्वकामसमापकं निजपादपल्लवमेव विधत्ते तेभ्यो ददातीत्यर्थः । यथा माता चर्वमाणां मृत्तिकां बालकमुखादपसार्य्य तत्र खंडं ददाति तद्वदिति भावः । तथोक्तं गरुडे—" यद्दुर्लभं यद्दुष्प्राप्यं मनसो यन्न गोचरम् । तदप्यप्रार्थितं ध्यातो ददाति मधुसूदनः ॥ " इति ॥ २७ ॥ अत एव प्रार्थयंते शोभनं सुकृतम् । तेन शोभनेन ॥ २८ ॥ अश्वान्वेषणे अश्वमेधीयाश्वमार्गणावसरे ॥ २९ ॥ तद्यथा तान् दर्शयति ॥ ३० ॥ जंबूद्वीपस्य वर्षाणां विभागः । भारतोत्तमेति । भरतवंशे उत्तमस्त्वमेवासि राजन्यतस्तव विचित्रहरिलीलाकर्णनरतिरस्तीति भावः ॥ ३१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥

श्रीशुक उवाच॥अतः परं प्लक्षादीनां प्रमाणलक्षणसंस्थानतो वर्षविभाग उपवर्ण्यते॥१॥जंबूद्वीपोऽयं यावत्प्रमाणविस्तारस्तावता क्षारोदधिना परिवेष्टितो यथा मेरुर्जंब्वाख्येन लवणोदधिरपि ततो द्विगुणविशालेन प्लक्षाख्येन परिक्षिप्तो यथा परिखाबाह्योपवनेन प्लक्षो जंबूप्रमाणो द्वीपाख्याकरो हिरण्मय उत्थितो यत्राग्निरुपास्ते ॥ सप्तजिह्वस्तस्याधिपतिः प्रियव्रतात्मज इध्मजिह्वः स्वं द्वीपं सप्तवर्षाणि विभज्य सप्तवर्षनामभ्य आत्मजेभ्य आकलय्य स्वयमात्मयोगेनोपरराम ॥ २ ॥ शिवं यवयसं सुभद्रं शांतं क्षेममममृतमभयमिति वर्षाणि तेषु गिरयो नद्यश्च सप्तैवाभिज्ञाताः ॥ ३ ॥ मणिकूटो वज्रकूट इंद्रसेनो ज्योतिष्मान् सुपर्णो हिरण्यष्ठीवो मेघमाल इति सेतुशैलाः ॥ अरुणा नृम्णांगिरसी सावित्री सुप्रभाता ऋतंभरा सत्यंभरा इति महानद्यः ॥ यासां जलोपस्पर्शनविधूतरजस्तमसो हंसपतंगोर्ध्वायनसत्यांगसंज्ञाश्चत्वारो वर्णाः सहस्रायुषो विबुधोपमसंदर्शनप्रजननाः स्वर्गद्वारं त्रय्या विद्यया भगवंतं त्रयीमयं सूर्यमात्मानं यजंते ॥ ४ ॥ प्रत्नस्य विष्णो रूपं यत् सत्यस्यर्तस्य ब्रह्मणः ॥ अमृतस्य च मृत्योश्च सूर्यमात्मानमीमहीति ॥ ५ ॥

विंशे प्लक्षादिषड्द्वीपस्थितिमाह सहार्णवैः ॥ लोकालोकस्थितिश्चांतर्बहिर्भागादिमानतः ॥ १ ॥ १ ॥ तावता लक्षविस्तारेण परिक्षिप्तः परिवेष्टितः । उपास्ते तिष्ठति । आकलय्य समर्प्य ॥ २ ॥ अभिज्ञाताः प्रसिद्धाः सप्तैव । अन्ये च पर्वता नद्यश्च सहस्रशः संतीत्यर्थः । मानसोत्तरस्य मंडलाकारत्वोक्तेरेतेषु प्लक्षादिपंचद्वीपेषु वर्षाद्रयस्तिर्यग्रेखाकाराः उभयतोऽब्धिस्पृश इति गम्यते अन्यथा सप्तभिः सप्तवर्षविभागासंभवात् । वैष्णवे वर्षाणां पूर्वादिक्रमोक्तेश्च ॥ ३ ॥ जलोपस्पर्शनेन विधूतं रजस्तमश्च येषाम् । हंसादयो ब्राह्मणादिस्थानीयाः । विबुधोपमं संदर्शनं क्लमस्वेदादिरहितं रूपं प्रजननमपत्योत्पादनं च येषाम् ॥ ४ ॥ विगीता अपि द्वीपमंत्रा व्याख्यायंते प्रत्नस्य पुराणपुरुषस्य विष्णोर्यद्रूपं तं सूर्यमीमहि शरणं व्रजेम । कथंभूतम् । सत्यादीनामात्मानमधिष्ठातारम् । तत्र सत्यमनुष्ठीयमानो धर्मः । ऋतं प्रमीयमाणो धर्मः ।

स्थितिः मर्यादा ( १ ) अतो जंबूद्वीपात् । परं परत्र ॥ १ ॥ ततो जंबूद्वीपात् । द्विगुणाविशालेन द्विलक्षयोजनविस्तारेण । परिखा दुर्गादिपरितोऽधः संकुचितः क्रमेणोपर्युपरिविस्तृतो भूसमः शत्रुप्रवेशवारकः खातविशेषः । ‘ प्लक्षस्तु पर्कटी जटी ’ इत्यमरः । उप आधिक्येनास्ते । तस्य प्लक्षद्वीपस्य । सप्तवर्षाणां नामान्येव नामानि येषां ते सप्तवर्षनामानस्तेभ्यो वैयधिकरण्यबहुव्रीहित्वान्मध्यमपदलोपी समासः ॥ २ ॥ यंवसमित्यत्र यशस्यमिति तीर्थः पपाठ । इत्यर्थ इति । मुख्यानामेव गणना भवति सूर्यादिवन्न त्वमुख्यानामपि तारादिवदिति भावः । अन्यथा उभयतोब्धिस्पर्शतिर्यग्रेखाकारत्वानंगीकारे मंडलाकारत्वांगीकारे च । वर्षाष्टकं स्याद्विष्णुपुराणोक्तवर्षाणां पूर्वादिक्रमोऽपि न सेत्स्यतीत्यर्थः ॥ ३ ॥ ४ ॥ विगीता ग्रंथांतरेष्वदर्शनादनिश्चिता अपि । यद्वा स्पष्टार्थत्वाद्विगतं गीतं व्याख्यानं येषां ते सुगमा अपीत्यर्थः । न तु निंदिताः श्रीशुकदेवेन श्रावि

प्लक्षादिषु पंचसु पुरुषाणामायुरिंद्रियमोजः सहो बलं बुद्धिर्विक्रम इति च सर्वेषामौत्पत्तिकी सिद्धिरविशेषेण वर्तते ॥ ६ ॥ प्लक्षः स्वसमानेने क्षुरसोदेनावृतो यथा तथा द्वीपोऽपि शाल्मलो द्विगुणविशालः समानेन सुरोदेनावृतः परिवृंक्ते ॥ ७ ॥ यत्र ह वै शाल्मली प्लक्षायामा यस्यां वाव किल निलयमाहुर्भगवतश्छंदःस्तुतः पतत्रिराजस्य सा द्वीपहूतय उपलक्ष्यते ॥ ८ ॥ तद्द्वीपाधिपतिः प्रियव्रतात्मजो यज्ञबाहुः स्वसुतेभ्यः सप्तभ्यस्तन्नामानि सप्त वर्षाणि व्यभजत् ॥ सुरोचनं सौमनस्यं रमणकं देववर्षं पारिभद्रमाप्यायनमविज्ञातमिति ॥ ९ ॥ तेषु वर्षाद्रयो नद्यश्च सप्तैवाभिज्ञाताः ॥ स्वरसः शतशृंगो वामदेवः कुंदः मुकुंदः पुष्पवर्षः सहस्रश्रुतिरिति ॥ अनुमतिः सिनीवाली सरस्वती कुहू रजनी नंदा राकेति ॥ १० ॥ तद्वर्षपुरुषाः श्रुतधरवीर्यधरवसुंधरेषंधरसंज्ञा भगवंतं वेदमयं सोममात्मानं वेदेन यजंते ॥ ११ ॥ स्वगोभिः पितृदेवेभ्यो विभजन् कृष्णशुक्लयोः ॥ प्रजानां सर्वासां राजांऽधः सोमो न आस्त्विति ॥ १२ ॥ एवं सुरोदाद्बहिस्तद् द्विगुणः समानेनावृतो घृतोदेन यथा पूर्वः कुशद्वीपो यस्मिन् कुशस्तंबो देवकृतस्तद्द्वीपाख्याकरो ज्वलन इवापरः स्वशष्परोचिषा दिशो विराजयति ॥ १३ ॥

ब्रह्मणस्तद्बोधकस्य वेदस्य अमृतस्य शुभफलस्य । मृत्योरशुभफलस्य ॥ ५ ॥ ६ ॥ ७ ॥ "सुपर्णोसि गरुत्मान् त्रिवृत्ते शिरः" इत्यादिश्रुतेश्छंदोभिः स्वावयवभूतैः श्रीविष्णुं स्तौतीति छंदःस्तुत् तस्य गरुडस्य । निलयनं स्थानम् । सा शाल्मली । द्वीपस्य हूतये व्यपदेशाय ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ स्वगोभिः स्वरश्मिभिः । अंधोऽन्नम् । सोमो नो राजा आस्तु आभिमुख्येन भवतु । ह्रस्वपाठे त्वविवक्षया संध्यभावः ॥ १२ ॥ एवं सुरोदाद्बहिर्घृतोदेनावृतः कुशद्वीप इत्यन्वयः ।

तत्वादिति । रूपं प्रतिमास्थानीयम् । तत्र सत्यादिषु । प्रमीयमाणः श्रुत्यादिबोधितोऽवश्यं कर्त्तव्य इत्यर्थः ॥ ५ ॥ सर्वेषां पुरुषाणां स्वाभाविकी सिद्धिरापुराद्याधिक्यरूपा सामान्यतोऽस्तीत्यर्थः । आपुरादिशब्दाः स्वाधिक्ये लाक्षणिकाः सप्त ॥ ६ ॥ द्विगुणविशालः चतुर्लक्षयोजनविशालः । परिवृंक्ते पृथग्वर्त्तते । 'वृजी–वर्जने–रुधादिरुदात्तेत् । आत्मनेपदमार्षम् ॥ ७ ॥ यत्र द्वीपे । शाल्मली तूलपूर्णफलवान्कंटकी वृक्षः । श्रुतौ त्रिवृदाख्यवेदभागस्य गरुडशिरस्त्वेनोक्तत्वाद्वेदभागानां गरुडावयवत्वं निश्चीयते ॥ ८ ॥ तन्नामानि पुत्रनामकानि ॥ ९ ॥ तेषु खंडेषु ॥ १० ॥ तस्य शाल्मलीद्वीपस्य वर्षेषु पुरुषाः । वेदमयं वेदप्रतिपाद्यम् ॥ ११ ॥ संधौ सति नो इति पाठे छंदोभंगः स्यादिति भावः ॥ १२ ॥ एवं पूर्ववत् । तस्माच्छाल्मलीद्वीपात् । द्विगुणोऽष्टलक्षयोजनप्रमाणकः । यथा पूर्वः शाल्मलः सुरोदेनावृतस्तद्वदित्यर्थः । यस्मिन् द्वीपे ।

तद्वीपपतिः प्रैयव्रतो राजन् हिरण्यरेतो नाम स्वं द्वीपं सप्तभ्यः स्वपुत्रेभ्यो यथाभागं विभज्य स्वयं तप आतिष्ठत ॥ वसुवसुदानदृढरुचिनाभिगुप्त स्तुत्यव्रतविविक्तवामदेवनामभ्यः ॥ १४ ॥ तेषां वर्षेषु सीमागिरयो नद्यश्चाभिज्ञाताः सप्तसप्तैव चक्रश्चतुःशृंगः कपिलश्चित्रकूटो देवानीक ऊर्ध्वरोमा द्रविण इति ॥ रसकुल्या मधुकुल्या मित्रविंदा श्रुतविंदा देवगर्भा घृतच्युता मंत्रमालेति ॥ १५ ॥ यासां पयोभिः कुशद्वीपौकसः कुशलकोविदाभियुक्तकुलकसंज्ञा भगवंतं जातवेदसरूपिणं कर्मकौशलेन यजंते ॥ १६ ॥ परस्य ब्रह्मणः साक्षाज्जातवेदोऽसि हव्यवाट् ॥ देवानां पुरुषांगानां यज्ञेन पुरुषं यजेति ॥ १७ ॥ तथा घृतोदाद् बहिः क्रौंचद्वीपो द्विगुणः स्वमानेन क्षीरोदेन परित उपक्लृप्तो वृतो यथा कुशद्वीपो घृतोदेन यस्मिन् क्रौंचो नाम पर्वतराजो द्वीपनामनिर्वर्तक आस्ते ॥ १८ ॥ योऽसौ गुहप्रहरणोन्मथितनितंबकुंजोऽपि क्षीरोदेनासिच्यमानो भगवता वरुणेनाभिगुप्तो विभयो बभूव ॥ १९ ॥ तस्मिन्नपि प्रैयव्रतो घृतपृष्ठो नामाधिपतिः स्वे द्वीपे वर्षाणि सप्त विभज्य तेषु पुत्रनामसु सप्त रिक्थादान् वर्षपान् निवेश्य स्वयं भगवान् भगवतः परमकल्याणयशस आत्मभूतस्य हरेश्चरणारविंदमुपजगाम ॥ २० ॥ आमो मधुरुहो मेघपृष्ठः सुधामा भ्राजिष्ठो लोहितार्णो वनस्पतिरिति घृतपृष्ठसुतास्तेषां वर्षगिरयः सप्त सप्तैव नद्यश्चाभिख्याताः शुक्लो वर्धमानो भोजन उपबर्हणो नंदो नंदनः सर्वभद्र इति ॥ अभया अमृतौघा आर्यका तीर्थवती वृत्तिरूपवती पवित्रवती शुक्लेति ॥ २१ ॥ यासामंभः पवित्रममलमुपयुंजानाः पुरुषऋषभद्रविणदेवकसंज्ञा वर्षपुरुषा आपोमयं देवमपां पूर्णेनांजलिना यजंते ॥ २२ ॥

स्वशष्पाणि स्वकोमलशिखास्तेषां रोचिषा ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ हे जातवेदस्त्वं साक्षात्परस्य ब्रह्मणो हरेर्हव्यवाडसि अतो देवानां यज्ञेन पुरुषं हरिमेव यज । अंगानां नाम्ना दत्तमंगिने समर्पयेत्यर्थः ॥ १७ ॥ उपक्लृप्तो वेष्टितः । यथा कुशद्वीपो घृतोदेन वृतः ॥ १८ ॥ गुहस्य कार्तिकेयस्य प्रहरणेनायुधेनोन्मथिता नितंबाः कुंजानि च यस्य ॥ १९ ॥ स्वयं भगवान् ज्ञानी । परमकल्याणं यशो यस्य ॥ २० ॥ २१ ॥ आपोमयमंभोमयम् ॥ २२ ॥

कुशस्तंबः कुशगुल्मः तं द्वीपमाख्यातीति तद्वीपाख्यायनः । ल्युटि 'आतो युक्' इति युक् । ज्वलनो वह्निः ॥ १३ ॥ तद्वीपपतिः कुशद्वीपपतिः । राजन्निति । राज्ञामियमेव गतिरिति भावः ॥ १४ ॥ तेषां वस्वादीनाम् ॥ १५ ॥ यासां रसकुल्यादीनाम् । जातवेदःस्वरूपिणं वह्निं क्रियानैपुण्येन ॥ १६ ॥ हव्यवाट् हविषो नेता यतो हरेरपि हविर्नेतास्यतो हेतोः । यज्ञेन यजनेन । इत्यर्थ इति । यथा पुरुषहस्ते दत्तं पुरुषदत्तं भवति तथेति भावः ॥ १७ ॥ तथा बहिः ततो घृतोदाद्बहिरग्रे द्विगुणः कुशद्वीपादिति शेषः । षोडशलक्षयोजनप्रमाणकः द्वीपनाम निर्वर्त्तयति साधयतीति तथा ॥ १८ ॥ योऽसौ क्रौंचः आयुधेन तारकहननार्थं प्रक्षिप्तशक्त्या॥ नितंबा रोधांसि 'कटकोऽस्त्री नितंबोद्रेः' इत्यमरः । कुंजानि लतापिहितोदराणि च । 'नितंबः स्कंधरोधसोः' इति मेदिनी । ''कुंजोऽस्त्रियां निकुंजेऽपि हनौ दंते च दंतिनाम्'' इति च । 'स्यान्निकुंजो लतागृहे' इति च । विभयो निर्भयः ॥ १९ ॥ तस्मिन् क्रौंचेऽपि स्वयं भगवान् ज्ञानी 'ज्ञानी त्वात्मैव मे मतः' इति श्रीमुखोक्तेः । यद्वा—स्वयं भगवतो हरेः भगवान् 'उत्पत्तिं प्रलयं चैव' इत्याद्युक्तलक्षणः ॥ २० ॥ २१ ॥ २२ ॥

आपः पुरुषवीर्याः स्थ पुनंतीर्भूर्भुवः सुवः ॥ ता नः पुनीतामीवघ्नीः स्पृशतामात्मना भुव इति ॥ २३ ॥ एवं पुरस्तात् क्षीरोदात् परित उपवेशितः शाकद्वीपो द्वात्रिंशल्लक्षयोजनायामः समानेन च दधिमंडोदेन परीतः ॥ यस्मिन् शाको नाम महीरुहः स्वक्षेत्रव्यपदेशको यस्य ह महासुरभिगंधस्तं द्वीपमनुवासयति ॥ २४ ॥ तस्यापि प्रैयव्रत एवाधिपतिर्नाम्ना मेधातिथिः सोऽपि विभज्य सप्त वर्षाणि पुत्रनामानि ॥ तेषु स्वात्मजान् पुरोजवमनोजवपवमानधूम्रानीकचित्ररेफबहुरूपविश्वधारसंज्ञान् निधाप्याधिपतीन् स्वयं भगवत्यनंत आवेशितमतिस्तपोवनं प्रविवेश ॥ २५ ॥ एतेषां वर्षमर्यादागिरयो नद्यश्च सप्तसप्तैव ॥ ईशान उरुशृंगो बलभद्रः शतकेसरः सहस्रस्रोतो देवपालो महानस इति॥ अनघाऽऽयुर्दा उभयस्पृष्टिरपराजिता पंचपदी सहस्रस्रुतिर्निजधृतिरिति ॥ २६ ॥ तद्वर्षपुरुषा ऋतव्रतसत्यव्रतदानव्रतानुव्रतनामानो भगवंतं वाय्वात्मकं प्राणायामविधुतरजस्तमसः परमसमाधिना यजंते ॥ २७ ॥ अंतः प्रविश्य भूतानि यो बिभर्त्यात्मकेतुभिः ॥ अंतर्यामीश्वरः साक्षात् पातु नो यद्वशे स्फुटम् ॥ ॥ २८ ॥ एवमेव दधिमंडोदात् परतः पुष्करद्वीपस्ततो द्विगुणायामः समंतत उपकल्पितः समानेन स्वादूदकेन समुद्रेण बहिरावृतो यस्मिन् बृहत्पुष्करं ज्वलनशिखामलकनकपत्रायुतायुतं भगवतः कमलासनस्याध्यासनं परिकल्पितम् ॥ २९ ॥ तद्द्वीपमध्ये मानसोत्तरनामैक एवार्वाचीनपराचीनवर्षयोर्मर्यादाचलोऽयुतयोजनोच्छ्रायायामो यत्र तु चतसृषु दिक्षु चत्वारि पुराणि लोकपालानामिंद्रादीनां यदुपरिष्टात् सूर्यरथस्य मेरुं परिभ्रमतः संवत्सरात्मकं चक्रं देवानामहोरात्राभ्यां परिभ्रमति ॥ ३० ॥ तद्द्वीपस्याप्यधिपतिः प्रैयव्रतो वीतिहोत्रो नामैतस्यात्मजौ रमणकधातकिनामानौ वर्षपती नियुज्य स स्वयं पूर्वजवद् भगवत्कर्मशील एवास्ते ॥ ३१ ॥

हे आपः पुरुषवीर्या ईश्वराल्लब्धसामर्थ्याः स्थ भवथ अत एव भूर्भुवः स्वस्त्रैलोक्यं पुनंत्यस्ता भवत्यो नोऽस्माकं स्पृशतां स्पर्शनं कुर्वतां भुवः शरीराणि पुनंतु । यत आत्मना स्वरूपेणैवामीवघ्नीः पापहंत्र्यः ॥ २३ ॥ दध्नो मंडं रसः स एवोदकं यस्य । यस्य पर्णान्यंतःखरस्पर्शानि बहिर्मृदुस्पर्शानि स शाको नाम वृक्षः ॥ २४ ॥ २५ ॥ २६ ॥ ॥ २७ ॥ आत्मकेतुभिः प्राणादिवृत्तिभिः ॥ २८ ॥ ज्वलनशिखावदमलानां कनकपत्राणामयुतानामयुतानि यस्य तत ॥ २९ ॥ देवानामहोरात्राभ्यामुत्तरदक्षिणायनाभ्यामित्यर्थः ॥ ३० ॥ ३१ ॥

अत एवेश्वराल्लब्धसामर्थ्यत्वादेव ॥ २३ ॥ अनुवासयति सुगंधयति ॥ २४ ॥ तस्यापि शाकद्वीपस्यापि । निधाप्य स्थापयित्वा ॥ २५ ॥ २६ ॥ २७ ॥ स्फुटं व्यक्तं जगदिति यावत् ॥ २८ ॥ ततः क्रौंचद्वीपात् । द्विगुणश्चतुःषष्टिलक्षयोजनप्रमाणकः ॥ २९ ॥ तस्य पुष्करद्वीपस्य मध्ये मानसोत्तरमंडलाकारत्वात्तत्पार्श्ववर्त्तिनी द्वे वर्षे अपि मंडलाकारे एवेत्याह—अर्वाचीनेति ॥ ३० ॥ ३१ ॥

तद्वर्षपुरुषा भगवंतं ब्रह्मरूपिणं सकर्मकेण कर्मणाराधयंति इदं चोदाहरंति ॥३२॥ यत्तत् कर्ममयं लिंगं ब्रह्मलिंगं जनोर्चयेत् ॥ एकांतमद्वयं शांतं तस्मै भगवते नम इति ॥ ३३ ॥ ऋषिरुवाच ॥ ततः परस्ताल्लोकालोकनामाऽचलो लोकालोकयोरंतराले परित उपक्षितः ॥३४॥ यावन्मानसोत्तरमेर्वोरंतरं तावती भूमिः कांचन्याऽऽदर्शतलोपमा यस्यां प्रहितः पदार्थो न कथंचित्पुनः प्रत्युपलभ्यते तस्मात्सर्वसत्त्वपरिहृतासीत् ॥ ३५ ॥ लोकालोक इति समाख्या यदनेनाचलेन लोकालोकस्यांतर्वर्तिनाऽवस्थाप्यते ॥३६॥ स लोकत्रयांते परित ईश्वरेण विहितो यस्मात् सूर्यादीनां ध्रुवापवर्गाणां ज्योतिर्गणानां गभस्तयोऽर्वाचीनांस्त्रीँल्लोकानावितन्वाना न कदाचित पराचीना भवितुमुत्सहंते तावदुन्नहनायामः ॥ ३७ ॥ एतावाँल्लोकविन्यासो मानलक्षणसंस्थाभिर्विचिंतितः कविभिः स तु पंचाशत्कोटिगणितस्य भूगोलस्य तुरीयभागोऽयं लोकालोकाचलः ॥ ३८ ॥

ब्रह्मरूपिणं कमलासनमूर्तिम् । सकर्मकेण ब्रह्मसालोक्यादिसाधनेन ॥ ३२ ॥ कर्ममयं कर्मफलरूपम् । ब्रह्म लिंग्यते यस्मात् एकस्मिन्नेव परमेश्वरेंतो निष्ठा यस्य तदत एव वस्तुतोऽद्वैतम् ॥ ३३ ॥ ततः शुद्धोदात्परस्तात् । लोकः सूर्याद्यालोकवान्देशः अलोकस्तद्रहितस्तयोरंतराले मध्ये तयोर्विभागार्थमित्यर्थः ॥ ॥ ३४ ॥ ततः परस्तादित्युक्तं तदेव कियतांतरेणेत्यपेक्षायां तदंतर्वर्तिनीं भूमिमाह । यावन्मानसोत्तरमेर्वोरंतरं सार्धसप्तलक्षोत्तरसार्धकोटि परिमितं तावती भूः शुद्धोदात्पराऽस्ति तत्र च प्राणिनोऽपि संति ततः कांचनी भूमिरन्याऽस्तीत्यर्थः । सा चैकोनचत्वारिंशल्लक्षोत्तरकोटयष्टकपरिमिता ज्ञेया । एवं हि सति मेरुलोकालोकयोरंतरं सार्धद्वादशकोटिपरिमितं वक्ष्यमाणमुपपन्नं भवति । एतदेव शैवतंत्रेषूक्तम् । "कोटिद्वयं त्रिपंचाशल्लक्षाणि च ततः परम् ॥ पंचाशच्च सहस्राणि सप्तद्वीपाः ससागराः ॥ ततो हेममयी भूमिर्दशकोट्यो वरानने ॥ देवानां क्रीडनार्थाय लोकालोकस्ततः परम् ॥" इति । अत्र च दशकोटित्वं पूर्वोक्तभूम्या सह द्रष्टव्यम् । सर्वसत्त्वपरिहृतेति देवव्यतिरेकेणेति विज्ञेयं देवानां क्रीडनार्थायेत्युक्तत्वात् ॥ ३५ ॥ ३६ ॥ लोकत्रयस्यांते परितो मर्यादारूपो विहितः । यस्मात्प्रतिबंधकात् । सूर्य आदिर्येषाम् । ध्रुवोपवर्गोंतो येषाम् आवितन्वानाः समंतात्प्रकाशयंतः परतो गंतुं न शक्नुवंति तावदुन्नहनमुत्सेधस्तदनुरूप आयामश्च विस्तारो यस्य । ध्रुवादप्युच्छ्रितत्वात्त्रिलोकीमर्यादाभूत इत्यर्थः ॥ ३७ ॥ सोऽयं तु लोकालोकाचलस्तुरीयभागश्चतुर्थांशः सार्धद्वादशकोट्यः मेरोरेकत इति द्रष्टव्यम् ॥ ३८ ॥

सकर्मकेण यतः कर्मणा कर्माण्येवोद्भवंति न तु कर्मक्षयस्तेन सकामेनेत्यर्थः ॥ ३२ ॥ कर्ममयं 'स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिंचतामेति' इत्युक्तेः कर्मप्राप्यं लिंगं मूर्त्तिमत् ब्रह्म लिंग्यते ज्ञायते येन तत् । अत एव ब्रह्मनिष्ठत्वादेव । वस्तुतः सत्यमेवाद्वैतं 'यो यच्छ्रद्धः स एव सः' इति न्यायेन परमेश्वरादभिन्नम् ॥ ३३ ॥ परितोऽष्टदिक्षु मंडलाकारतयोपक्षिप्तो रचितः । इत्यर्थ इति । अन्यथा विभागः कथं स्यादिति भावः ॥ ३४ ॥ तत्र च मृण्मयभूमौ च । इत्यर्थ इति । अन्या मृण्मयभूम्यपेक्षया भिन्नेति भावः । एतदेवोक्तप्रमाणमेव । प्रहितोऽवगलितः ॥ ३५ ॥ समाख्या निरुक्तिः । अनेन मध्यवर्तिनाऽवस्थाप्यते तुल्यतया ज्ञाप्यते ॥ ३६ ॥ इत्यर्थ इति । त्रिलोकमिर्यादापर्यंतोन्नतावाँल्लोकालोकगिरिरिति भावः ॥ ३७ ॥ स तु लोकालोकस्तु । भूगोलकस्य भूसंबद्धांडगोलकस्येत्यर्थः ॥

सूर्यस्येव भुवोप्यंडगोलकयोर्मध्यवर्त्तित्वात् । खगोलमिव भूगोलमपि पंचाशत्कोटियोजनप्रमाणं तस्य तुरीयभागः सार्द्धद्वादशकोटियोजनबिस्तारोच्छ्राय इत्यर्थः । भूस्तु चतुस्त्रिंशल्लक्षोनपंचाशत्कोटियोजनप्रमाणा ज्ञेया । यथा मेरुमध्यान्मानसोत्तरमध्यपर्यंतं सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटियोजनप्रमाणं मानसोत्तरमध्यात्स्वादूदकसमुद्रपर्यंतं षण्णवतिलक्षयोजनप्रमाणं ततः काञ्चनी भूमिः सार्द्धसप्तपञ्चाशल्लक्षोत्तरकोटियोजनप्रमाणा । एवमेकतो मेरुलोकालोकयोरंतरालमेकादशलक्षाधिकचतुष्कोटिपरिमितमन्यतोऽपि तथेत्यतो लोकालोकाल्लोकपर्यंतं स्थानं द्वाविंशतिलक्षोत्तराष्टकोटिपारिमितं लोकालोकाद्बहिरप्येकत एतावदेवान्यतोप्येतावदेव यद्वक्ष्यते यौंतर्बिस्तार एतेन द्युलोकपरिमाणञ्च व्याख्यातं यद्बहिर्लोकालोकाचलादिति । एकतो लोकालोकः सार्द्धद्वादशकोटियोजनप्रमाणोऽन्यतोपि स तथेत्येवं चतुस्त्रिंशल्लक्षोनपञ्चाशत्कोटियोजनप्रमाणा भूः साब्धिद्वीपपर्यंता ज्ञेयाऽत एवांडगोलकात्सर्वतो दिक्षु सप्तदशलक्षयोजनावकाशे वर्त्तमाने सति पृथिव्याः शेषनागेन धारणं दिग्गजैश्च निश्चलीकरणं सार्थकं भवेदन्यथा तु व्याख्यांतरे पञ्चाशत्कोटिप्रमाणत्वादंडगोलकलग्नत्वे तत्तत्सर्वमकिंचित्करं स्यात् । चाक्षुषमन्वंतरे चाकस्मान्मज्जनं श्रीवाराहदेवेनोत्थापनं च दुर्घटं स्यादित्यादिकं विवेचनीयम् । श्रीमन्महाभारतीयभीष्मपर्वणि श्रीनीलकंठेनाप्यत्र विचारितम्—अत्रेयं शास्त्रानुभवयोरविरोधेन भूकल्पना प्रतिभाति । यथा हस्तमात्रस्य चतुरस्रस्य चतुर्विंशत्यंगुलानि परिणाहः षण्णवत्यंगुलानि परिधिः । किञ्चिन्न्यूनानि कर्णौ भवति एवमष्टादशसहस्राणि षट्शतानि च जंबूपर्वसंज्ञिताया भुवः प्रमाणमुक्तं तदेवात्र परिधित्वेन कल्पितं तच्चतुर्थांशत्वेन चत्वारि सहस्राणि षट्शतानि पंचाशच्च योजनानि एकैको भुज इति तदेव समचतुरस्रस्य विष्कंभप्रमाणम् । अस्य कर्णः शुल्बशास्त्रोक्तरीत्या षट्सहस्राणि पंचशतानि षट्सप्ततिश्च योजनानि तस्यास्य भूचतुरस्रस्य चतुर्भिः समुद्रैर्वेष्टितस्य कोणा दिक्षु वर्तते तेन दक्षिणस्यां दिशि रामसेतौ द्वयोः समुद्रयोः संधिः । एवमितरास्वपि दिक्षु समुद्रसंधयो ज्ञेयाः । यस्त्वत्र ज्योतिर्विदां भूपरिधिः सप्तांगनंदाब्धि ४९६७ योजनसंमितोऽभिमतः स एवास्माकं चतुरस्रविष्कंभः खबाणरसवेद ४६५० मितः । यत्तु एतयोरंतरं सप्तेंदुरामा ३१७ स्तदपि यजमानेनोर्ध्वबाहुना प्रपदोच्छ्रितेन समपादस्थितेन वा उन्मितस्य सूत्रस्य यः पंचमोंशः स हस्त इति विकल्पस्य कात्यायनादिभिरुक्तत्वाद्धस्तप्रमाणभेदकल्पनया योजनबहुत्वाल्पत्ववचनेन समाधेयम् । तथा भूमेश्चतुरस्रत्वेपि तन्मध्यस्थमत्युच्छ्रितं मेरुं प्रदक्षिणी कुर्वतः सूर्यस्य मार्गो मंडलाकारोऽस्तीति न बौद्धाभिमतं सूर्यद्वयं कल्प्यं भवति । अन्यत्सर्वं युक्त्यविरुद्धं ज्योतिर्विन्मतमेवात्रानुसर्त्तव्यम् । यत्तु पुराणे पञ्चाशत्कोटियोजनं भूगोलप्रमाणमित्युक्तं तदपि "अचिंत्याः खलु ये भावा न तांस्तर्केण साधयेत्" इत्यनेनैव प्रत्युक्तमव्यवस्थितत्वान्मतानामनिर्वचनीयवाद एव शरणीकरणीय इत्येव वरम् । यद्वा—सर्वत्र यत्प्रमाणं दृष्टं तद्विंशांशेन तद्बोद्धव्यं तेन पञ्चाशत्कोटिस्थाने सार्द्धकोटिद्वयविस्तारा भूमिः।लक्षस्थाने पञ्चसहस्रविस्तारो जंबूद्वीपः । नवसहस्रस्थाने सार्द्धचतुःशतयोजनायामं भारतखंडम् । अस्मिन्पक्षे उदाहरिष्यमाणवैष्णवादिवाक्येभ्यो जंबूद्वीपश्चतुर्दलकमलाकारस्तस्य चांतःपरिधिः षट्शताधिकान्यष्टादशयोजनसहस्राणि । त्रयस्त्रिंशच्छतानि मध्यव्यासः । तेन फलतः पंचसहस्रव्यासता ज्ञेया । एवं सति यदा प्रागायतो हिमाचलः पूर्वपश्चिमसमुद्रौ स्पृष्ट्वास्ति तदायं भरतवर्षस्त्रिकोणो भवति । तेन पृथिवी त्रिकोणेति लोकप्रवादोऽनुभवश्चानुसृतो भवति । अन्यथा भरतवर्षस्य धनुराकारत्वे भूमध्यरेखाया लंकातः सेतुमार्गेण प्रस्थितायाः "पुरी रक्षसां देवकन्याथ कांची सितः पर्वतः पर्यली वत्सगुल्मम् । पुरी चोज्जयिन्याह्वया गर्गराटं कुरुक्षेत्रमेषा भुवो मध्यरेखा ॥" इति स्मर्यमाणया मध्यरेखया कुरुक्षेत्रस्य रामसेतुः सन्निहितो द्वारका च दूरे स्यात् । द्वारकासमीपे सेतुश्च दूरे इति प्रत्यक्षमुपलभ्यते । भारतवर्षस्य त्रिकोणत्वमित्येषैव कल्पना साधीयसीति दिक् । इत्थं नीलकंठेन भारते तदुक्तरीत्या विचारितं विरोधोप्यपहृत इति । किञ्च "हस्तोंगुलिविंशत्या चतुरान्वितया चतुष्करो दंडः । तद्द्विसहस्रं क्रोशो योजनमेकं चतुष्क्रोशम् ॥" इति स्मृतिसारादौ द्वात्रिंशत्सहस्रहस्तैरेकं योजनं भवति । "द्वात्रिंशत्सहस्रैस्तु हस्तैस्स्याद्योजनं भुवः" इति संहितोक्तेः । "चतुर्विंशैरंगुलैस्तु हस्त एकोभिधीयते" इति च । अत्र च सद्योजातबालयुवाद्यंगुलभेदस्य तारतम्यवशाद्धस्तस्यापि तारतम्यं भवति तेन च क्रोशयोजनादेरपि तारतम्यं सेत्स्यति । यद्वा—"पाणिः शयः शमो हस्तः पंचशाखः करस्तथा" इति कोशात्प्रसिद्धमणिबंधादुपरितनो भागः कनिष्ठाद्यंगुलितोष्टांगुलनवांगुलान्यतरमित एव हस्तो भवति । "दानानि देयानि च विप्रहस्ते" इत्युक्तेर्भुग्नहस्तेनैव संकल्पग्रहणात्तत्रापि हस्तशब्दप्रयोगात् । सोपि भुग्नांगुलित्वे चांगुलचतुष्टयात्मकोपि भवति । बालस्य ततोऽपि तथैव न्यूनो भवति । तथा च तत्तन्मितहस्तैर्योजनगणनया ज्योतिःशास्त्रपुराणेतिहासानां विरोधो यथाकथंचित्परिहृतः स्यादेव । न हि 'व्यासो नारायणः स्वयम्' इत्यादिपुराणोक्तेः साक्षान्नारायणोक्ति

तदुपरिष्टाच्चतसृष्वाशास्वात्मयोनिनाखिलजगद्गुरुणाऽधिनिवेशिता ये द्विरदपतय ऋषभः पुष्करचूडो वामनोऽपराजित इति सकललोकस्थितिहेतवः ३९ आशासु दिक्षु येऽधिनिवेशितास्ते आसते ॥ ३९ ॥

मुल्लंघ्य ज्योतिःशास्त्रं प्रवृत्तम् । किञ्च 'ज्यौतिषं चक्षुरुच्यते' इति साक्षाद्वेदचक्षूभूतं ज्योतिःशास्त्रमुल्लंघ्य श्रीव्यासोऽपि प्रवृत्तस्तेन तत्तदंगुलहस्ताद्यभिप्रायैव तत्तद्योजनोक्तिस्तत्रतत्रोह्या । किञ्चासुरजनकर्तृकशास्त्रप्रवृत्तिसंकोचार्थं श्रीव्यासदेवस्तत्रतत्र ज्योतिःशास्त्रविरुद्धमिव वदति न वस्तुत इति तत्त्वमन्यथा श्रीव्यासस्य वेदांधकारता स्यादिति ध्येयं सुधीभिः ॥ ननु कथं तर्हि भागवतज्योतिःशास्त्रयोर्विरोधः भागवते लक्षयोजनमिता जंबूद्वीपभूर्वर्णिता ज्योतिःशास्त्रे पञ्चसहस्रयोजनपरिमितैवाखिलेति चेदस्य समाधिर्गोलादर्शे विहिता तदनुरोधेन सारतः किञ्चिदुच्यते–पृथिव्या आकारद्वयमस्ति एको महत्परिमाणको विशेषाकारः । द्वितीयो ज्योतिःशास्त्रोक्तः स्वल्पपरिमाणको गोलाकार एव । एवमेव परीक्षिन्महाराजेन पृष्टं श्रीशुकयोगीन्द्रेणाप्युत्तरितं भूगोलकविशेषं नामरूपमानलक्षणतो व्याख्यास्याम इति भूगोलकपदेन ज्योतिःशास्त्रोक्तो गोलाकारो मार्त्तिकोऽण्डः । विशेषपदेन मंडलाकारपुराणोक्तो हिरण्मयोऽण्डः । उक्तं च योगिनिर्याणे द्वितीयस्कंधे 'ततो विशेषं प्रतिपद्य निर्भयः' इति । पञ्चमेऽप्युक्तं–"काञ्चनी ततोन्यादर्शतलोपमा" इत्यादि । तृतीयेप्युक्तम् "एतदण्डं विशेषाख्यं क्रमवृद्धैर्दशोत्तरैः" इत्यादि । "यस्येदं क्षितिमण्डलं भगवतोऽनन्तमूर्त्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते" इति सिद्धार्थदृष्टान्तेन गोलाकारत्वं प्रतीयते ॥ "प्रेक्षयित्वा भुवो गोलं यावद्यद्वै स्वसंस्थया" इति कर्दमविहारेप्युक्तम् । श्रीदशमेऽप्यष्टमाध्याये "सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः । साद्रिद्वीपाब्धिभूगोलम्" इत्यादिप्रामाण्यात्पृथिवीद्वयं स्वीकार्यम् । ननु स्वल्पा पृथिवीयं महती कुत्रास्ति परेति । उच्यते । महती तु नक्षत्रकक्षाया ऊर्ध्वं प्रतिबिम्बरूपा तन्मानं पञ्चमे लक्षोत्तरसार्द्धनवकोटियोजनं परिमंडलं भूवलयस्येति स्थूलदृष्ट्या भकक्षोर्ध्वभाग एवायाति । अथ कथं प्रतिबिम्बवत् कथमेतदाकारा स्ा तद्यथा समंतात्पञ्चसहस्रयोजनात्मकस्य समंताद्योजनान्तारितोऽनलगोलस्तेन दूरकान्तवत्स्वल्पाया अप्यस्या नक्षत्रकक्षाया उपरि या कांचनी भूमिर्निर्मलरूपा तत्तेजोव्यवधानकारी तत्र महत्प्रतिबिम्बस्समंतात् यथा दूरकांते एकत्र महतोऽल्पत्वं दृश्यते परत्राल्पस्य महत्त्वम् एवं बाह्यांगानां चन्द्रादीनामल्पत्वमंतर्गतस्य भूगोलस्य महत्त्वम् । नन्वनलगोले किं प्रमाणम् । उच्यते । सवासनं प्रमाणं भूपृष्ठतः खगकक्षापर्यंतमष्टौ वायव आवहादयः संति उभयोर्योगे जलगोलः तदुक्तं पुलिशसिद्धान्ते–"भूवातोद्वहयोर्योगे जलगोलोस्ति काचवत् । दृश्यंते येन संलग्ना भिन्नाः सूर्यादिरश्मयः" इति । सूर्यसिद्धान्तेऽपि–"अत्यासन्नतया तेन ग्रीष्मे तीव्राः करा रवेः" इति अत्यासन्नत्वं दूरत्वं चानलगोलप्रतिबिंबतारकेण विना न संभवति । श्रीशुकयोगींद्रैस्तु पुराणानुगैर्महत्प्रमाणमेव व्याख्यातम् । स्वल्पप्रमाणन्तु सूचितमेव इत्थं कैश्चिद्विरोधः परिहृतः ॥ एवं खगोलविरोधोऽपि प[रि]हृतस्तथाहि–"एतेन दिवो मानं तद्विद उपदिशंति"इति।अस्यार्थः–एतेन भूगोलकेन्द्रेण दिवो मंडलानां ग्रहनक्षत्रादिकक्षादिकक्षाणामौच्यपरिध्यादीनामिति।"यथा द्विदलयोर्निष्पावादीनामंतरेणान्तरिक्षमुभयसंधितम्"इति। अस्यार्थः–भूगोलद्युमंडलयोः संधितम् अंतरिक्षमंतरेण मानं विनांतरिक्षस्य तु मानं नास्ति यथा द्विदलयोर्निष्पावादीनां मानं नास्ति । "यन्मध्यंगतो भगवांस्तपतां पतिः"इति । अस्यार्थः–यस्यांतरिक्षस्य मध्यमिव मध्यं जलगोलः यथांतारिक्षस्य मध्याभावस्तथा गोलरूपत्वाज्जलगोलस्यापि तत्र गतः प्रतिबिंबरूपेण संस्थित इति । बिंबरूपेण तु भूकेन्द्रात्सपादलक्षयोजनेष्वस्ति।एवं "नवकोटय एकपञ्चाशल्लक्षाणि मानसोत्तरपरिवर्तनस्योपदिशंति"इति । अस्यार्थः–मानसश्चेन्द्रस्तदपेक्षया उत्तरः परः शनिस्तन्मंडलस्य मानं ज्यौतिषोक्तकरणार्थं शन्यंशयुतं जातं द्वादशकोटिमितमष्टषष्टिलक्षमिति । "सूर्य्याण्डगोलयोर्मध्ये कोटयः स्युः पञ्चविंशतिः ।" अस्यार्थः–सूर्यस्य बिंबितार्कस्यांडगोलो हिरण्मयोंडपरिधिस्तयोर्मध्येंतः पञ्चविंशतिकोटयः स्युरिति । "अंडमध्यगतः सूर्यो द्यावाभूम्योर्यदन्तरम्" अस्यार्थः–द्यावाभूम्योर्नक्षत्रकक्षाभूम्योर्यदंतरं तदेवांडस्य हिरण्मयांडस्य । तत्रांतः सूर्यो जलगोलप्रतिबिंबितार्को भवतीति ज्ञेयम् । एवमादि समाधानं गोलदर्पणे तत्तद्रीत्या ज्ञेयम् । अनेन यथार्थार्थसार्थसमर्थनेन निःसंशयं श्रीमद्भागवतं परमाप्तवाक्यत्वात्सर्वथा प्रमाणमेवाप्रतिहतं सकलशास्त्रसिद्धान्तसाद्गुण्यादिति हि निर्विवादम् । एतद्विरोधपरिहारो यः पूर्वमेव मायाऽलेखि स एव समीचीनः प्रतिभातीति किं बहुना ॥ ३८ ॥ तस्य लोकालोकस्योपरिष्टादुपरिदेशे परत्र वा सकललोकानां

तेषां स्वविभूतीनां लोकपालानां च विविधवीर्योपबृंहणाय भगवान् परममहापुरुषो महाविभूतिपतिरंतर्याम्यात्मनो विशुद्धसत्त्वंधर्मज्ञानवैराग्यै श्वर्याद्यष्टमहासिद्ध्युपलक्षणं विष्वक्सेनादिभिः स्वपार्षदप्रवरैः परिवारितो निजवरायुधोपशोभितैर्निजभुजदंडैः संधारयमाणस्तस्मिन् गिरिवरे समंतात् सकललोकस्वस्तय आस्ते ॥ ४० ॥ आकल्पमेवं वेषं गत एष भगवानात्मयोगमायया विरचितविविधलोकयात्रागोपीथायेत्यर्थः ॥ ॥ ४१ ॥ योंतर्विस्तार एतेन ह्यलोकपरिमाणं च व्याख्यातं यद् बहिर्लोकालोकाचलात् ततः परस्ताद् योगेश्वरगतिं विशुद्धामुदाहरंति ॥ ४२ ॥ अंडमध्यगतः सूर्यो द्यावाभूम्योर्यदंतरम् ॥ सूर्यांडगोलयोर्मध्ये कोट्यः स्युः पंचविंशतिः ॥ ४३ ॥ मृतेंड एष एतस्मिन् यदभूत् ततो मार्तंड इति व्यपदेशः ॥ हिरण्यगर्भ इति यद्धिरण्यांडसमुद्भवः ॥ ४४ ॥

तेषां दिग्गजानां स्वविभूतीनां स्वांशभूतानां महेंद्रादीनां च विविधवीर्योपबृंहणाय सकललोकस्वस्तये च भगवांस्तस्मिन्नास्ते इत्यन्वयः । किं कुर्वन् आत्मनः स्वस्य यद्विशुद्धं सत्त्वं तत्संधारयमाण आविष्कुर्वन् । कीदृशम् । धर्मज्ञानादीन्यष्टमहासिद्धयश्चोपलक्षणं यस्य तत् । दोर्दंडैरुपलक्षितः सन्महाविभूतेः परमैश्वर्यस्य पतित्वादेकयैव मूर्त्या समंतादास्ते ॥ ४० ॥ नन्वंतर्यामिणांतःस्थेनैव सर्वं कर्तुं शक्यं किं तस्य बहिः समंतादवस्थानेनेत्याशंक्य तस्यार्थं स्वयमेव व्याचष्टे । आत्मनो योगमायया विरचिता या विविधलोकयात्रा तस्या गोपीथाय रक्षणाय एष भगवानेवंभूतमाकल्पं वेषं गतो लीलया प्राप्त इति समंतादास्त इत्यस्यार्थः ॥ ४१ ॥ अलोकपरिमाणं च मेरोरेकतः सार्धद्वादशकोटयः ततो लोकालोकात् अलोकाद्वा । परस्तात् विशुद्धां द्विजपुत्रानयनेऽर्जुनस्य श्रीकृष्णेन प्रदर्शिताम् ॥ ४२ ॥ विस्तरेणोक्तं ब्रह्मांडमानं सर्वतोऽपि निरूपयति । अंडमध्यगतः किं तन्मध्यं तदाह । द्यावाभूम्योः पूर्वोत्तरकपालयोर्यदंतरं मध्यस्थानम् । सर्वतः पंचविंशतिकोटयः ॥ ४३ ॥ अंडमध्यावस्थाने कारणं तन्नामनिर्वचनेनाह । मृतेऽचेतने एष सूर्यो वैराजरूपेण यस्मा

स्थितिहेतवोऽन्यथा भूमेर्नमनोन्नमनादिना लोकस्थितिर्भ्रश्येतेति भावः ॥ ३९ ॥ आदिना यशःश्रियोर्ग्रहणम् । पुनरादिना नंदसुनंदादिग्रहः ॥ ४० ॥ अत्राशंकते नन्विति । 'आकल्पः कल्पने वेषे' इति मेदिनी । यद्वाऽऽकल्पपर्यंतमेवं प्रकारेण गतः लोकालोकं प्राप्त इत्यर्थः । स्वशक्त्या रचितं विश्वं स चेन्न पालयेत्तर्हि कः पालयेदिति भावः ॥ ४१ ॥ विश्वनाथस्तु—द्वात्रिंशतिलक्षोत्तरं कोट्यष्टकं बहिः सर्वदिक्ष्वित्याह । लोकालोकात्परत्र तु तम एव "लोकालोकं तथातीत्य विवेश सुमहत्तमः" इति श्रीदशमे वक्ष्यमाणत्वाद्योगेश्वरास्तमो गच्छंतीत्यायातं तत्राहालोकाद्वेति । योगेश्वराणामावरणाष्टकं विभिद्य मुमुक्षूणां नारदादीनां वा । विशेषेणशुद्धो विशुद्धः श्रीकृष्णस्तेन दर्शितां विशुद्धाम् वृद्धिङीबभावौ त्वार्षौ ॥ ४२ ॥ द्यावाभूम्योर्भूलोकभुवर्लोकयोः । सूर्यादूर्ध्वगोळकपर्यंतं यथा पंचविंशतिकोट्यस्तथाऽधोगोलकपर्यंते चेत्यर्थः । उपरिष्टादुपपत्तिमत्रत्यां व्याख्यास्यामः ॥ ४३ ॥ एष सूर्य इत्यन्तर्याम्यभेदविवक्षयोक्तम् । स एव क इत्यत आह—हिरण्यगर्भः समष्टिजीवसूक्ष्मोपाधिरूपः यद्यत एष हिरण्यांडस्य तदीयस्थूलस्य संभवः

सूर्येण हि विभज्यंते दिशः खं द्यौर्मही भिदा ॥ स्वर्गापवर्गौ नरका रसौकांसि च सर्वशः ॥ ४५ ॥ देवतिर्यङ्मनुष्याणां सरीसृपसवीरुधाम् ॥ सर्वजीवनिकायानां सूर्य आत्मा दृगीश्वरः ॥ ४६ ॥ ॥ इति श्रीभा० महा० पंचमे भुवनकोशवर्णने समुद्रद्वीपवर्षसन्निवेशपरिमाणलक्षणो नाम विंशतितमोऽध्यायः ॥ २० ॥ श्रीशुक उवाच ॥ एतावानेव भूवलयस्य सन्निवेशः प्रमाणलक्षणतो व्याख्यातः ॥ १ ॥ एतेन हि दिवो मंडलमानं तद्विद उपदिशंति ॥ यथा द्विदलयोर्निष्पावादीनां ते अंतरेणांतरिक्षं तदुभयसंधितम् ॥ २ ॥ यन्मध्यगतो भगवां स्तपतां पतिस्तपन आतपेन त्रिलोकीं प्रतपत्यवभासयत्यात्मभासा ॥ स एष उदगयनदक्षिणायनवैषुवतसंज्ञाभिर्मांद्यशैघ्र्यसमानाभिर्गतिभिरारोहणावरोहणसमान स्थानेषु यथासवनमभिपद्यमानो मकरादिषु राशिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ॥ ३ ॥

त्प्रविष्टः ॥ ४४ ॥ किं च । सूर्येणैव विभज्यंते दिशः । खमंतरिक्षम् । भिदा अन्योऽपि विभागः । स्वर्गापवर्गौ भोगमोक्षदेशौ रसौकांस्यतलादीनि ॥ ४५ ॥ उपासनार्थमाह । देवादीनां सूर्य आत्मा दृगीश्वरो नेत्राधिष्ठाता च ॥ ४६ ॥ इति श्रीभा० पंचमस्कंधे टीकायां विंशतितमोऽध्यायः ॥ २० ॥ एवमध्यायविंशत्या भूमर्यादा निरूपिता ॥ अतः परं द्युमर्यादापालनं त्रिभिरुच्यते ॥ १ ॥ एकविंशे रवेः कालचक्रेण भ्रमतोऽन्वहम् ॥ स्वगत्या राशिसंचारैर्लोकयात्रा निरूप्यते ॥ २ ॥ एतावान्विस्तारेण कोटचः पंचाशत् । उत्सेधेन पंचविंशतिः ॥ १ ॥ द्विदलयोर्मध्ये यथैकस्य मानेनापरस्य मानमुपदिश्यते तद्वत् ते अंतरेण तयोर्मध्ये तदुभयसंधितं ताभ्यामुभयतः संलग्नम् ॥ २ ॥ उदगयनादिसंज्ञाभिर्मंदक्षिप्रसमगतिभिर्यथाकालमारोहणादिस्थानेष्वारोहणाद्यभिपद्यमानो मकरादिष्वहोरात्राणि दीर्घह्रस्वसमानानि विधत्ते ॥ ३ ॥

सम्यग्विद्यमानता ॥ ४४ ॥ अन्यद्विशेषमाह—किं चेति । अत्रोपपत्तिमाह—दिशां विभागस्तूदयादिना यत्रोदेति सा प्राची यत्रास्तमेति सा प्रतीची यत्र मध्याह्नं सा दक्षिणा यत्र निशीथः सोत्तरेति यत्र दिक्कस्थेन स्पृश्यते सा विदिगिति । खदिवोस्तु विभागस्तदंतर्गत्या मह्यास्तु प्रकाश्यत्वेन तद्विदानां द्वीपादीनामपि तथैव स्वर्गापवर्गयोस्तत्प्राप्तिद्वारत्वेन सूर्यमंडलं प्राप्तस्यैव तत्प्राप्तिश्रुतेः । 'तरणिर्देवयानं द्वारं विमुक्तेः' इत्यष्टमे वक्ष्यमाणत्वात् । " तेऽर्चिरभिसंभवंति " इत्यादिश्रुतेश्च नरकरसौकसां विभागस्तु स्वप्रकाशवर्जनद्वारेति ध्येयं सुधीभिः । सर्वशः सर्वथा प्रकारेऽपि शस् अत्रार्षः ॥ ४५ ॥ " सूर्य आत्मा जगतस्तस्थुषश्च " इति श्रुतेः । सर्वेषां जीवानां ये निकाया संघास्तेषामात्मा दृग् द्रष्टा च । "निकायस्तु पुमांल्लक्ष्ये सधर्मिप्राणिसंहतौ । समुच्चये संहतानां निलये परमात्मनि॥" । इति मेदिनी । तान्निर्दिशति—देवेति ॥ ४६ ॥ इति श्रीमद्भागवतभावार्थदीपिका प्रकाशे पञ्चमस्कन्धे विंशोऽध्यायः ॥ २० ॥ अतो भूमर्यादाकथनानंतरम् ( १ ) कालचक्रेण शिशुमारेण सह ( २ ) भूवलयस्येति । भुवः पर्यक् स्थितानां देशानां ग्रहणम् ॥ १ ॥ एतेन भूगोलकमानेन । तद्विदः ज्योतिःसिद्धांतज्ञाः । निष्पावः शूकशिंबी राजमाषो वा । तदादीनामिति तद्गुणसंविज्ञानबहुव्रीहिणा कलायादीनामित्यर्थः । " निष्पावः शूर्पपवने राजमाषे कडंगके । पवने शिबिकायां ना निर्विकल्पेऽन्य लिंगकः ॥ " इति मेदिनी । ते अंतरेणेति । विनादियोगे द्वितीया । अंतरिक्षं लक्षद्वयप्रमाणमिति चक्रवर्ती । यस्यांतरिक्षस्य मध्यगतः ॥ २ ॥ मांद्यशैघ्र्येति स्वार्थष्यजंतम् । उदगयननाम्ना मंदया गत्याऽऽरोहणस्थाने यथा

यदा मेषतुलयोर्वर्तते तदाऽहोरात्राणि समानानि भवंति यदा वृषभादिषु पंचसु च राशिषु चरति तदाऽहान्येव वर्धते ह्रसति च मासिमास्येकैका घटिका रात्रिषु॥४॥यदा वृश्चिकादिषु पंचसु वर्तते तदाऽहोरात्राणि विपर्ययाणि भवंति॥५॥यावद्दक्षिणायनमहानि वर्धते यावदुदगयनं रात्रयः॥६॥ एवं नवकोटय एकपंचाशल्लक्षाणि योजनानां मानसोत्तरगिरिपरिवर्तनस्योपदिशंति ॥ तस्मिन्नैंद्रीं पुरीं पूर्वस्मान्मेरोर्देवधानीं नाम दक्षिणतो याम्यां संयमनीं नाम पश्चाद्वारुणीं निम्लोचनीं नाम उत्तरतः सौम्यां विभावरीं नाम तासूदयमध्याह्नास्तमयनिशीथानीति भूतानां प्रवृत्तिनिमित्तानि समयविशेषेण मेरोश्चतुर्दिशम् ॥ ७ ॥

तत्प्रपंचयति । यदेति । अत्यंतवैषम्याभावात्समानानीत्युक्तं सर्वथा साम्यं त्वेकस्यैवाहोरात्रस्य यद्यपि वृषभमिथुनयोरेवाह्नां वृद्धिः कर्कटादिषु ह्रासस्तथापि रात्र्यपेक्षयाऽधिकत्वाद्वर्धंत इत्युक्तम् । एवं रात्रिवृद्धावपि दिनापेक्षया ह्रसतीत्युक्तम् । एकैकेति स्थूलदृष्ट्योक्तम् । वृद्धिह्रासयोः प्रतिमासवैषम्यात् ॥ ॥ ४ ॥ विपर्ययाणीति अहानि न्यूनानि रात्रयोऽधिका इत्यर्थः ॥ ५ ॥ तद्वृद्धिह्रासकालमाह । यावदिति ॥ ६ ॥ एवं मंदर्मदिगतिभिः नव कोटय इति मेरोरुभयतो मानसोत्तरस्यांतर्विस्तारेण पंचदशलक्षाधिककोटित्रयपरिमितेनेदं परिमंडलमानमुन्नेयम् । एवं पंचदशभिर्घटिकाभिरित्यादिष्वपि त्रैराशिकगणितेन तत्तन्मानमुन्नेयम् । अत्रापेक्षितो विशेषः पुराणांतरादवगंतव्यः । तत्रारोहणादिस्थानानि वायुपुराणे दर्शितानि । "सर्वग्रहाणां त्रीण्येव स्थानानि द्विजसत्तमाः ॥ स्थानं जरद्गवं मध्यं तथैरावतमुत्तरम् ॥ वैश्वानरं दक्षिणतो निर्दिष्टमिह तत्त्वतः" इति तदेव मध्यमोत्तरदक्षिणमार्गत्रयं प्रत्येकं वीथीत्रयेण त्रिधा भिद्यते । त्रिभिस्त्रिभिरश्विन्यादिनक्षत्रैर्नागवीथी गजवीथी ऐरावती चेत्युत्तरमार्गे वीथीत्रयम् । आर्षभी गोवीथी जरद्गवी चेति वैषुवते मध्यममार्गे वीथीत्रयम् । अजवीथी मृगवीथी वैश्वानरी चेति दक्षिणमार्गे वीथीत्रयम् । तदप्युक्तं तत्रैव । "अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता ॥ रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥ पुष्याश्लेषा तथाऽऽदित्या वीथी चैरावती स्मृता ॥ एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते ॥ तथा द्वे चापि फाल्गुन्यौ मघा चैवार्षभी मता ॥ हस्तश्चित्रा तथा स्वाती गोवीथीति तु शब्दिता ॥ ज्येष्ठा विशाखाऽनुराधा वीथी जारद्गवी मता॥एतास्तु वीथयस्तिस्रो मध्यमो मार्ग उच्यते ॥ मूलाषाढोत्तराषाढा अजवीथ्यभिशब्दिता॥श्रवणं च धनिष्ठा च मार्गी

सवनं सवनमतिक्रम्याभिपद्यमानश्चलन् मकरादिषु पंचसु राशिषु अहानि क्रमेण दीर्घाणि रात्रीश्च ह्रस्वा विधत्ते । दक्षिणायननाम्ना क्षिप्रगत्याऽवरोहणे कर्कादिषु पंचसु राशिषु अहोरात्रान् ह्रस्वदीर्घान् विधत्ते । वैषुवतसंज्ञया उत्तरायणदक्षिणायनमध्यवर्त्तिन्या समानया गत्याऽहोरात्रान्समानान्विधत्ते ॥ ३ ॥ तत् पूर्वोक्तम् । यदेति । एकस्य दक्षिणोत्तरगोलसंज्ञस्येत्यर्थः ॥ ४ ॥ इत्यर्थ इति । वृषादिपंचापेक्षया विपरीतानि भवंतीति भावः ॥ ५ ॥ यावद्दक्षिणायनमिति । उत्तरायणाद्दक्षिणायनपर्यंतमित्यर्थः एवमग्रेपि ॥ ६ ॥ मेरुमानसोत्तरयोरंतरस्य मानं पञ्चदशलक्षाधिककोटित्रयं सूर्यरथवर्त्मनश्च लक्षद्वयमित्येवं सप्तदशलक्षोत्तरकोटित्र

तत्रत्यानां दिवसमध्यंगत एव सदादित्यस्तपति सव्येनाचलं दक्षिणेन करोति ॥ ८॥

शतभिषस्तथा ॥ वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता ॥ एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते " इति । याम्या भरणी आदित्या अदितिदेवताका पुनर्वसुः । मार्गी मृगवीथी । एवं स्थिते उत्तरायणे ध्रुवेण युगाक्षकोटिनिबद्धवायुपाशद्वयाकर्षणे रथस्यारोहणम् । तदाभ्यंतरमंडलप्रवेशो गतिमांद्यं चेति दिनवृद्धी रात्रिह्रासश्च । दक्षिणायने च पाशप्रेरणादवरोहणे बहिर्मंडलप्रवेशो गतिशैघ्र्यं चेत्यहोरात्रयोर्विपर्ययः । वैषुवते तु पाशसाम्यात्समावस्थाने मध्यमंडलप्रवेशो गतिसाम्यं चेत्यहोरात्रयोः साम्यमिति । तथा च पुराणांतरे । "आकृष्येते यदा तौ तु ध्रुवेण समधिष्ठितौ ॥ तदाभ्यंतरतः सूर्यो भ्रमते मंडलानि तु ॥ ध्रुवेण मुच्यमानेन पुना रश्मियुगेन तु ॥ तथैव बाह्यतः सूर्यो भ्रमते मंडलानि च" इति । तदेतदुक्तम्—"यदा मेषतुलयोः" इत्यादिना । उदयास्तादिकं वक्तुमाह । तस्मिन्मानसोत्तरे मेरोः पूर्वत ऐंद्रीं पुरीमुपदिशंतीत्यनुषंगः । तासु पुरीषूद यादीन्युपदिशंति। चतुर्दिशमित्युक्ते ये मेरोर्दक्षिणे देशे तेषामैंद्रीमारभ्य पूर्वादयः। ये पश्चिमे तेषां याम्यामारभ्य ये उत्तरे तेषां वारुणीमारभ्य ये पूर्वे तेषां सौम्यामारभ्य ॥७॥ तत्रत्यानां मेरुस्थानाम् । सव्येनेति । नक्षत्राभिमुखतया स्वगत्या मेरुं वामतः कुर्वन्नपि प्रदक्षिणावर्तप्रवहाख्यवायुभ्राम्यमाणज्योतिश्चक्रवशात्प्रत्यहं दक्षिणतः करोति । अत श्चक्रगतिवशादतिदूरतो भूसंलग्नस्येव दर्शनमुदयः आकाशमारूढस्येव दर्शनं मध्याह्नः भूमिं प्रविष्टस्येव दर्शनमस्तमयः ततोऽतीवदूरगमने निशीथ इति समुद्रतीरस्थदृष्ट्या च । "अद्भ्यो वा एष प्रातरुदेत्यपः सायं प्रविशति " इति श्रुतिव्यवहारो न वस्तुतः । तदुक्तं वैष्णवे । "उदयास्तमये चैव सर्वकालं तु संमुखे ॥ दिशास्वशेषासु तथा मैत्रेय विदिशासु च ॥ यैर्यत्र दृश्यते भास्वान्स तेषामुदयः स्मृतः ॥ तिरोभावं च यत्रैति तत्रैवास्तमनं रवेः ॥ नैवास्तमनमर्कस्य नोदयः सर्वदा स्मृतः ॥ उदयास्तमनाख्यं

येण त्रिगुणीकृतेनैतत्परिमंडलमानं सर्वमंडलमानम् । एवं त्रिविधगतिभिस्त्रिविधराशिषु वर्त्तमानस्य सूर्यरथस्यैकस्मिन्नहोरात्रे मानसोत्तरशिखरे यत्परिवर्त्तमानं परितो गमनं तस्य मार्गमेकपञ्चाशल्लक्षाधिकनवकोटय इति तन्मार्गज्ञा उपदिशंतीत्यर्थः । एवं परिमंडलमानवत् । त्रैराशिको नाम सूत्रमस्ति लीलावत्यां " प्रमाणमिच्छा च समानजाती आद्यंतयोस्तत्फलमन्यजातिः । मध्ये तदिच्छाहतमाद्यहृत्स्यादिच्छाफलम् " इत्युक्तलक्षणं तच्च गणितज्ञज्ञेयमस्ति । तत्तन्मानं तस्यतस्य लंघितदेशादेः प्रमाणमुन्नेयं ज्ञेयम् । अत्र प्रकृतेऽपेक्षितोऽपेक्षाविषयो विशेषो भेदः । तत्र विशेषापेक्षायाम् । उदयमध्याह्नयोः प्रवृत्तिनिमित्तत्वं निशीथास्तमनयोर्निवृत्तिनिमि त्तत्वं समयविशेषेण संकेतविशेषेण । न हि सर्वदा संचरत उदयादिकमस्तीति भावः । " समयः शपथाचारसिद्धांतेषु तथा धियि । क्रियाकारेऽथ निर्देशे संकेते कालभाषयोः ॥ " इति मेदिनी । आभ्यंतरमंडलप्रवेशो मंदगतिश्चेति आभ्यंतरमंडलस्य स्वल्पभूमित्वात्परिवर्त्तस्य बहुंशेऽपि सूर्यादिदृष्टिविषयो भवति मेढीसंनिकृष्टवृषभवद्गतेश्च मांद्यं भवतीत्यर्थः । मंडलं चेदमेतद्वर्षोपर्य्येव गच्छति उत्तरायणमध्याह्ने मूर्द्धन्येव सूर्यो दृश्यत इति । एवं बहिर्मंडलस्य बहुभूमित्वादस्तमारभ्य परिवर्तस्य स्वल्पांश एव सूर्यादिर्दृश्यते मेढीविप्रकृष्टवृषभवद्गतेश्च शैघ्र्यं भवतीत्यर्थः । एवमग्रेऽपि ॥ ७ ॥ उदयास्तमध्याह्ननिशीथानां वर्षभेदेन व्यवस्थामाह—यत्रेति । समान सूत्रनिपाते निश्चितसंमुखदेशे । निम्लोचत्यस्तं गच्छति । उदयानंतरं त्रिंशद्घटिकांते स्पंदेनाकाशमध्यस्थः सन्प्रस्वेदोद्गमेन तस्य देशस्य समानसूत्रपातविषयीभूते देशे त्रिंशद्घटिकानंतरं गतः सन्निति शेषः । प्रस्वापयति

यत्रोदेति तस्य ह समानसूत्रनिपाते निम्लोचति यत्र क्वचन स्यंदेनाभितपति तस्य हैष समानसूत्रनिपाते प्रस्वापयति तत्र गतं न पश्यंति ये तं समनुपश्येरन् ॥ ९ ॥ यदा चैंद्र्याः पुर्याः प्रचलते पंचदशघटिकाभिर्याम्यां सपादकोटिद्वयं योजनानां सार्धद्वादशलक्षाणि साधिकानि चोपयाति ॥ १० ॥ एवं ततो वारुणीं सौम्यामैंद्रीं च पुनस्तथाऽन्ये च ग्रहाः सोमादयो नक्षत्रैः सह ज्योतिश्चक्रे समभ्युद्यंति सह वा निम्लोचंति ॥ ११ ॥ एवं मुहूर्तेन चतुस्त्रिंशल्लक्षयोजनान्यष्टशताधिकानि सौरो रथस्त्रयीमयोऽसौ चतसृषु परिवर्तते पुरीषु ॥ १२ ॥

हि दर्शनादर्शनं रवेः ॥ शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् ॥ विकर्णौ द्वौ विकर्णस्थस्त्रीन्कोणान् द्वे पुरे तथा " इति । अत एव तत्रैवोक्तम् "तस्माद्दिश्युत्तरस्यां वै दिवा रात्रिः सदैव हि॥ सर्वेषां द्वीपवर्षाणां मेरोरुत्तरतः स्थितिः"इति। यतो यत्र यः पश्यति सैव तस्य प्राची तस्य वामतो मेरुस्तिष्ठतीति॥८॥ यथोक्तमुदयास्तमनाद्यनियमं दर्शयति यत्रोदेतीत्यादिना । स्यंदेन स्वेदोद्गमेन । प्रस्वापयति निशीथं करोति । ये तं समनुपश्येरन् प्रस्वापसमानसूत्रस्थाः॥९॥ साधिकानि पंचविंशतिसहस्राधिकानि ॥ १० ॥ सह वा सहैव। यद्यपि वस्तुतः सूर्यस्यापि नक्षत्रैः सहैवोदयास्तमयौ तथापि तस्य तत्साहित्यादर्शनात्सोमादीनामेव तत्साहित्यमुक्तम्॥ ११ ॥ त्रयीमय इत्याद्युपासनार्थम्॥ १२॥

निशीथं करोति येऽस्तमुदयञ्चानुपश्येरंस्ते जनास्तत्र गतं सूर्यं न पश्यंत्यत एव स्वपंति तेन च मेरोर्दिक्चतुष्टये स्थितेषु मध्ये यदा यत्र सूर्यस्योदयो दृश्यते तदैव तस्मात्पूर्वे वर्षे मध्याह्नः पश्चिमे वर्षे निशीथः उत्तरवर्षे निम्लोचो ज्ञेयः । एवं मध्याह्नदर्शनसमय एव पूर्ववर्षे निम्लोचः पश्चिमवर्षे उदय उत्तरवर्षे निशीथश्च ज्ञेयः । अस्तदर्शनसमये एव पश्चिमवर्षे मध्याह्नः पूर्ववर्षे निशीथ उत्तरवर्षे उदयश्च ज्ञेयः । तदेवं सर्ववर्षस्था अपि मेरोर्दक्षिणदेशस्थाने चात्मनो मन्यमानाः स्ववर्षे सूर्यस्योदयमध्याह्ननिम्लोचान्पश्यंत एवान्येषु वर्षेषु तान्पूर्वोक्तविवेकेन जानंतीति संक्षेपः । विष्णुपुराणीयश्लोकव्याख्या—यदा शक्रपुर्यां तिष्ठति तदा पुरत्रयमिंद्रयमसौम्यानां पुरं विकर्णौ द्वावीशानवह्निकोणौ स्पृशति अन्यपुरेषु विकर्णेषु च स्पर्शाभावो मेरुणा व्यवायात् ।एवं विकर्णस्थो वह्निपुरस्थो यदा भवति तदा त्रीन्वह्निनिर्ऋतीशानकोणान्द्वे पुरे इंद्रयमपुरे च स्पृशति नान्यद्वोक्तयुक्तेरिति । एवं याम्यादिपुरस्थस्यापि बोद्धव्यम्। एतद्भंग्यंतरेणाह—शक्रपुरे तिष्ठन् शक्रदिग्वर्षे मध्याह्नं दक्षिणदिग्वर्षे उदयम् उत्तरदिग्वर्षेऽस्तमनं करोतीति पुरत्रयस्पर्शः । अग्निकोणवर्षे प्रथमं याममीशानकोणवर्षे तृतीयं यामं करोतीति विकर्णद्वयस्पर्शः । विकर्णस्य अग्न्याद्यन्यतमकोणस्थः संस्त्रीन्कोणान्द्वे पुरे द्वे दिशौ च स्पृशति । तथाहि—अग्निकोणे तिष्ठन् अग्निकोणवर्षे मध्याह्नं नैर्ऋतकोणवर्षे उदयम् । ईशानकोणेऽस्तमनं करोतीति कोणत्रयस्पर्शः । तथा दक्षिणदिग्वर्षे प्रथमो यामः पूर्वदिग्वर्षे तृतीयो याम इति पुरद्वयस्पर्शो दिग्द्वयस्पर्शश्च एवमन्येषु कोणेष्वपि च द्रष्टव्यम् । अत एव रव्युदयास्तमनस्यानियतत्वादेव । तत्रैव विष्णुपुराण एव ॥ ८ ॥ ९ ॥ साधिकानीति । पादोनाष्टत्रिंशल्लक्षोत्तरकोटिद्वयमित्यर्थः । चतुर्गुणितान्येतानि योजनान्येकपञ्चाशल्लक्षाधिकनवकोटिसंख्याकानि भवंतीति तत्त्वम् ॥ १० ॥ ११ ॥ चतुस्त्रिंशदिति । मानसोत्तरमानं न त्वन्यत्र एवं पूर्वत्रापि । यत्तु ज्योतिःशास्त्ररीत्या तत्तद्देशे रव्युदयक्रमविचारेण रविपरिक्रमणीयं मंडलमिदं स्वल्पमेव प्रतीयते तत्स्वल्पचलताविदूरस्य स्वल्पस्यापि वृक्षादेः समसूत्रता बहुलदेशेन

यस्यैकं चक्रं द्वादशारं षण्णेमि त्रिणाभि संवत्सरात्मकं समामनंति तस्याक्षो मेरोर्मूर्धनि कृतो मानसोत्तरे कृतेतरभागो यत्र प्रोतं रविरथचक्रं तैलयंत्रचक्रवद् भ्रमन्मानसोत्तरगिरौ परिभ्रमति ॥ १३ ॥ तस्मिन्नक्षे कृतमूलो द्वितीयोऽक्षस्तुर्यमानेन संमितस्तैलयंत्राक्षवद् ध्रुवे कृतोपरिभागः ॥१४॥ रथनीडस्तु षट्त्रिंशल्लक्षयोजनायतस्तत्तुरीयभागविशालस्तावान् रविरथयुगो यत्र हयाश्छंदोनामानः सप्तारुणयोजिता वहंति देवमादित्यम् ॥१५॥ पुरस्तात् सवितुररुणः पश्चाच्च नियुक्तः सौत्ये कर्मणि किलास्ते ॥१६॥ तथा वालखिल्या ऋषयोंगुष्ठपर्वमात्राः षष्टिसहस्राणि पुरतः सूर्यं सूक्तवाकाय नियुक्ताः संस्तुवंति ॥ १७ ॥ तथान्ये च ऋषयो गंधर्वाप्सरसो नागा ग्रामण्यो यातुधाना देवा इत्येकैकशो गणाः सप्त चतुर्दश मासि मासि भगवंतं सूर्यमात्मानं नानानामानं पृथङ्‌ नानानामानः पृथक्कर्मभिर्द्वंद्वश उपासते ॥ १८ ॥

द्वादश मासा अरा यस्य । षडृतवो नेमयो यस्य । त्रीणि चातुर्मास्यानि नाभयो यस्य । कृत इतरभागो यस्य । मानसोत्तरगिरौ लक्षार्धादुपरि वायुबद्धभूमाविति द्रष्टव्यं चक्रं वा तावदुच्छ्रितमिति मंतव्यम् । अन्यथाऽयुतमात्रोच्छ्रायत्वान्मानसोत्तरस्य मेरोश्चतुरशीत्युच्छ्रायत्वादक्षस्य साम्यानुपपत्तेः ॥ १३ ॥ तस्मिन्नक्षे चक्रप्रांते कृतमूलो निबद्धपूर्वभागः प्रथमाक्षो मेरुमानसोत्तरो यतः सार्धसप्तलक्षाधिकसार्धकोटिप्रमाणस्तस्य तुर्यमानेन सार्धसप्तत्रिंशत्सहस्राधिकैकोनचत्वारिंशल्लक्षमानेन । ध्रुवे कृतो वायुपाशेन निबद्ध उपरिभागो यस्य ॥ १४ ॥ नीड उपवेशस्थानम् । गायत्र्यादिच्छंदोनामानः । अरुणेन योजिताः संतो देवं वहंति ॥ १५ ॥ पुरस्तात्स्थितोऽपि पश्चात्प्रत्यङ्मुख आस्ते । यद्वा । यत्सूर्यस्य पुरस्तात्तस्य वै पश्चिमत्वात्पश्चादित्युक्तम् । अश्वस्थानं च वायुनोक्तम् "सप्ताश्वरूपच्छंदांसि वहंते वामतो रविम् ॥ चक्रपक्षनिबद्धानि चक्रे चाक्षः समाहितः" इति ॥१६॥ सूक्तवाकाय सुभाषिताय ॥१७॥ एकैकशश्चतुर्दश द्वंद्वशः सप्तगणाः संतो मासिमास्युपासत इत्यन्वयः॥१८॥

नैव त्यक्तुं शक्यते तथातिदूरं व्योमगतेनापि रविणा स्वल्पभूमिसमसूत्रतेति रविचलनस्य स्वल्पत्वव्यवहारान्न विरुद्धं न च दृष्टिभ्रममात्रमिदं छायापि दृश्यमानतद्गतिमांद्यमनुकरोतीति ॥ १२ ॥ यस्य रथस्य ॥ १३ ॥ अक्षो धूः । तस्मिन्नक्षे दीर्घाक्षे ॥१४॥ रथनीडोऽत्र रथाश्रयानुगतवायुमयभूमिर्न तु सूर्योपवेशरथमध्यपीठं रथस्य स्वल्पप्रमाणत्वात् । तथैव वैष्णवे-"योजनानां सहस्राणि भास्करस्य रथो नव" इति । एवमेव हि दशसहस्रयोजनात्मकं वक्ष्यमाणं तन्मंडलं घटेतेति संदर्भः । गायत्र्यादीत्यादिना उष्णिगनुष्टुब्बृहतीपंक्तित्रिष्टुब्जगतीनां ग्रहः । तदुक्तं मात्स्ये पञ्चविंशाध्याये-" गायत्री चैव त्रिष्टुप् च जगत्यनुष्टुप्तथैव च ॥ पंक्तिश्च बृहती चैव उष्णिगेव तु सप्तमः । सप्ताश्वरूपाः छंदांसि वहंते वायुरंहसः ॥" इति ॥१५॥ पुरस्तात्पश्चाच्च नियुक्त इति कायव्यूहेनापि घटेतेति संदर्भः । प्रत्यङ्मुखः सूर्याभिमुख इत्यर्थः । ननु सूर्याभिमुखस्थितौ तु पूर्वाभिमुखता स्यात्सूर्यस्य प्रत्यङ्मुखत्वादित्यभिप्रेत्याह-यद्वेति । सूर्यस्य यः पुरस्तात्पुरोभागस्तस्यैव पश्चिमत्वादत उक्तं-पश्चादिति । सूर्यस्य पुरस्तात्पश्चिमाभिमुख एव स्थितः सारथ्यं करोतीत्यर्थः । यद्वा-पश्चात्पदेन प्रत्यङ् लक्ष्यते तच्च प्रत्यभिमुखमंचति प्राप्नोतीति प्रत्यङ् संमुख इत्यर्थः । नियोगोऽत्र ब्रह्मण एव ज्ञेयः ॥ १६ ॥ नियुक्ता ब्रह्मणाज्ञाप्ताः ॥ १७ ॥ तथा बालखिल्यादिवत् । ग्रामण्यो यक्षाः । यातुधाना राक्षसाः । " यक्षे ग्रामाधिपे

लक्षोत्तरं सार्धनवकोटियोजनपरिमंडलं भूवलयस्य क्षणेन सगव्यूत्युत्तरं द्विसहस्रयोजनानि स भुंक्ते ॥ १९ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे ज्योतिश्चक्रसूर्यरथमंडलवर्णनं नामैकविंशतितमोऽध्यायः ॥ २१ ॥ राजोवाच ॥ यदेतद्भगवत आदित्यस्य मेरुं ध्रुवं च प्रदक्षिणेन परिक्रामतो राशीनामभिमुखं प्रचलितं चाप्रदक्षिणं भगवतोपवर्णितममुष्य वयं कथमनुमिमीमहीति ॥ १ ॥ स होवाच ॥ यथा कुलालचक्रेण भ्रमता सह भ्रमतां तदाश्रयाणां पिपीलिकादीनां गतिरन्यैव प्रदेशांतरेष्वप्युपलभ्यमानत्वादेवं नक्षत्रराशिभिरुपलक्षितेन कालचक्रेण ध्रुवं मेरुं च प्रदक्षिणेन परिधावता सह परिधावमानानां तदाश्रयाणां सूर्यादीनां ग्रहाणां गतिरन्यैव नक्षत्रांतरे राश्यंतरे चोपलभ्यमानत्वात् ॥ २ ॥ स एष भगवानादिपुरुष एव साक्षान्नारायणो लोकानां स्वस्तय आत्मानं त्रयीमयं कर्मविशुद्धिनिमित्तं कविभिरपि च वेदेन विजिज्ञास्यमानो द्वादशधा विभज्य षट्सु वसंतादिषु ऋतुषु यथोपजोषमृतुगुणान् विदधाति ॥ ३ ॥ तमेतमिह पुरुषास्त्रय्या विद्यया वर्णाश्रमाचारानुपथा उच्चावचैः कर्मभिराम्नातैर्योगवितानैश्च श्रद्धया यजंतोंजसा श्रेयः समधिगच्छंति ॥ ४ ॥

गव्यूतिः क्रोशद्वयं सगव्यूत्युत्तरं यथा भवति तथा ॥ १९ ॥ इति श्रीमद्भागवते पंचमे टीकायामेकविंशोऽध्यायः ॥ २१ ॥ द्वाविंशे सोमशुक्रादेः स्थानमाहोत्तरोत्तरम् ॥ तत्तद्वृत्त्यनुसारेण इष्टानिष्टे तथा नृणाम् ॥ १ ॥ राशीनामभिमुखमप्रदक्षिणं चोपवर्णितं सव्येन चलन् दक्षिणेन करोतीति वदता । अमुष्य वयं कथमनुमिमीमहि एतत्कथं ज्ञास्यामो विरुद्धत्वादित्यर्थः ॥ १ ॥ चक्रवशात्स्वतश्च गतिद्वयमविरुद्धमिति परिहारार्थः ॥ २ ॥ तत्तत्कालनियमेन कर्मणां विशुद्धेः साद्गुण्यस्य निमित्तभूतमात्मानं विभज्य । विजिज्ञास्यमानो वितर्क्यमाणः । यथोपजोषं यथाकर्मभोगम् ऋतुगुणान् शीतोष्णादीन् ॥ ३ ॥ वर्णाश्रमाचारानुवर्तिनः पुरुषास्त्रय्या

तक्षिण नापिते ग्रामणीर्मतः'' इति निरुक्तिः । 'यातुधाना रक्षांसि नैर्ऋता' इति नाममाला।देवा इहादित्या एव तदन्यानुक्तस्तेऽपि स्वीयोपासनं कुर्वते ।'भगवंतं सूर्यमात्मानम्' इत्युक्तेश्च मासिमासि एकैकस्मिन्मासि द्वाभ्यांद्वाभ्यामृष्यादिभ्यां सप्त गणा भवंतः । अत एव द्वादशे वक्ष्यति 'संयुक्तानामधीश्वरैः ' इति । एकैकस्यर्ष्यादेरेकैको नियंता नामतोऽनुक्तोऽपि संयुक्तानामधीश्वरैरित्युक्तेर्ज्ञेयः । किं च द्वंद्वशः स्त्रीसहितास्संतः । सप्तेत्यर्थांगीकारे तु महाभारतशांतिपर्वांतर्गतमोक्षधर्मोपाख्यानीयात्रेयद्विजपद्मनाभनागोपाख्यानविरोधः स्यात् तथाहि—कश्चनात्रेयो विप्रस्समागतातिथेः सकाशाद्धर्मनिश्चयमलभमानस्तत्प्रेरितो गोमतीतीरस्थनागपुरे पद्मनाभनागपार्श्वं तन्निश्चयार्थं गतः स च तत्पत्न्याऽर्चित उक्तश्च—भो विप्र मत्पतिः पद्मनाभः सूर्यरथं परिवोढुं स्वावसरप्राप्तमासि गतस्तं समाप्यात्रागमिष्यतीत्यतः स्त्रीरहिता एव सूर्यं प्रति मासमृष्यादय उपासतेऽन्यथा विरोधः स्यादस्य प्रक्रतस्येति व्याख्यातृभिरपि महाविज्ञैः प्राक्तनैरित्थमव्याख्यातत्वाच्चेत्यलम् ॥ १८ ॥ संदर्भस्तु—भूवलयस्येत्यंतं गद्यमाह । गव्यूतिरूपं यदुत्तरमधिकं तत्सहितं यथा भवति तथेत्यर्थः । सः सूर्यः । " निमेषस्त्रिलवो ज्ञेय आम्नातास्ते त्रयः क्षणः " इत्युक्तेस्त्रिनिमेषलक्षणकालेन क्षणेन । यत्तु भविष्ये उक्तं " योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्द्धेन क्रममाण नमोस्तु ते ॥ " इति । तदित्थं समाधेयं निमेषौ चार्द्धे चैषां समाहारो निमेषार्द्धं तेन निमेषार्द्धेन । एकेन किंचिदधिकेनान्येन तेन द्वे शते इति लभ्यते । कर्त्तुः श्रीव्यासदेवस्योभयत्रैकत्वादेवान्यथोन्मत्तप्रलापितत्वापतेः ॥ १९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे. एकविंशोऽध्यायः ॥ २१ ॥ ॥ तत्तद्वृत्त्यनुसारेण वक्रादिरूपगत्या ( १ ) अमुष्येति द्वितीयार्थे षष्ठी । इत्यर्थ इति । न ह्येकस्य युगपद्गतिद्वयं संभवतीति भावः ॥ १ ॥ सह भ्रमतां चक्रवैपरीत्येन चलताम् । अन्यैव स्वप्रयत्नसाध्या गतिः पृथगेव । तत्र हेतुः—प्रदेशांतरेष्विति ॥ २ ॥ स प्रसिद्धः । एष कालरूपी ॥ ३ ॥ वर्णाश्रमाचारमनुपथंतीति तथा । ' पथे—गतौ ' धातुः । तमेतं सूर्यम् ॥ ४ ॥

अथ स एष आत्मा लोकानां द्यावापृथिव्योरंतरेण नभोवलयस्य कालचक्रगतो द्वादशमासान् भुंक्ते राशिसंज्ञान् संवत्सरावयवान् मासः पक्षद्वयं दिवा नक्तं चेति सपादर्क्षद्वयमुपदिशंति यावता षष्ठमंशं भुंजीत स वै ऋतुरित्युपदिश्यते संवत्सरावयवः ॥५॥ अथ च यावताऽर्धेन नभोवीथ्यां प्रचरति तं कालमयनमाचक्षते ॥ ६ ॥ अथ च यावन्नभोमंडलं सह द्यावापृथिव्योर्मंडलाभ्यां कात्स्न्येंन सह भुंजीत तं कालं संवत्सरं परिवत्सरमिडावत्सरमनुवत्सरं वत्सरामिति भानोर्मांद्यशैघ्र्यसमगतिभिः समामनंति ॥ ७ ॥ एवं चंद्रमा अर्कगभस्तिभ्य उपरिष्टाल्लक्षयोजनत उपलभ्यमानोऽर्कस्य संवत्सरभुक्तिं पक्षाभ्यां मासभुक्तिं सपादर्क्षाभ्यां दिनेनैव पक्षभुक्तिमग्रचारी द्रुततरगमनो भुंक्ते ॥ ८ ॥ अथ चापूर्यमाणाभिश्च कलाभिरमराणां क्षीयमाणाभिश्च कलाभिः पितॄणामहोरात्राणि पूर्वपक्षापरपक्षाभ्यां वितन्वानः सर्वजीवनिवहप्राणो जीवश्चैकमेकं नक्षत्रं त्रिंशता मुहूर्तैर्भुंक्ते ॥ ९ ॥

आम्नातैः कर्मभिरिंद्रादिरूपं योगवितानैश्च ध्यानादिभिरंतर्यामिरूपं पूजयंतः ॥ ४ ॥ स एव स्वगत्या मासादिव्यवहारकारणमित्याह । स एष लोकानामात्मा द्यावापृथिव्योरंतरेण मध्ये यन्नभोवलयमंतरिक्षं तस्य मध्ये यत्कालचक्रं तद्गतः । राशिभिर्मेषादिभिः संज्ञा येषाम् । चैत्रादिसंज्ञास्तु चांद्रमासानाम् । मासमाह । पक्षद्वयं मास इति चांद्रेण मानेन सपादं महानक्षत्रद्वयम् । सौरेण दिवानक्तं चाहोरात्रमिति पित्र्येण । षष्ठमंशं राशिद्वयम् ॥ ५ ॥ ६ ॥ मंडलाभ्यां सह भुंजीत । स ह स हि सूर्यः । यदा शुक्लप्रतिपदि संक्रांतिर्भवति तदा सौरचांद्रयोर्मासयोर्युगपदुपक्रमो भवति स संवत्सरः ततः सौरमानेन वर्षे षट् दिनानि वर्धंते चांद्रमानेन षट् ह्रसंतीति द्वादशदिनव्यवधानादुभयोरग्रपश्चाद्भावो भवति। एवं पंच वर्षाणि गच्छंति तन्मध्ये द्वौ मलमासौ भवतः ततः पुनः षष्ठः संवत्सरो भवति । तदेवमवांतरभेदेन संवत्सरादिपंचकं समामनंति ॥ ७ ॥ सोमादीनामपि स्थानं कार्यं चाह । एवं चंद्रमा इति। अर्कगभस्तिभ्यो मंडलरूपेभ्यः सपादर्क्षाभ्यां सपाददिनद्वयेन॥८॥सर्वेषां जीवनिवहानां प्राणः अन्नमयत्वादमृतमयत्वा

अथ वाक्यालंकारे ॥ ५ ॥ अर्द्धेन मासषट्केन ॥ ६ ॥ द्यावापृथिव्योरिति । द्युमंडलपृथिवीमंडलयोर्मध्यवर्त्तिना नभोमंडलेन तुल्यत्वमेव ज्ञापितं न त्वाधिक्यम् । यदा शुक्लप्रतिपदीत्यादि तृतीयस्कंधे विवृतमेवेत्युपरम्यते ॥ ७ ॥ अर्कगभस्तयोऽर्कमंडलं ततो लक्षयोजनत इति भूतलाद्द्विलक्षयोजनत इत्यर्थः । यद्यग्रचारी कदाचित्स्यात्तदा द्रुततरगमनः सन् दिनेनैव पक्षभुक्तिं भुंक्तेऽन्यथा तु सार्द्धसप्तघटिकोत्तरेण दिनेनेत्यर्थः ॥ ८ ॥ आ पूर्यमाणाभिरिति । शुक्लकृष्णपक्षाभ्यां देवानामहोरात्रौ कृष्णशुक्लपक्षाभ्यां पितॄणामिति देवपितृपूजार्थमहोरात्रव्यवस्थेयम् । वस्तुतो देवाहोरात्रौ त्वयनद्वयेनैव 'वर्षेण दैवत' इत्युक्तेः । ओषधीशत्वेनान्नमयत्वात्प्राणः

य एष षोडशकलः पुरुषो भगवान् मनोमयोऽन्नमयोऽमृतमयो देवपितृमनुष्यभूतपशुपक्षिसरीसृपवीरुधां प्राणाप्यायनशीलत्वात् सर्वमय इति वर्णयंति ॥ १० ॥ तत उपरिष्टात् त्रिलक्षयोजनतो नक्षत्राणि मेरुं दक्षिणेनैव कालायन ईश्वरयोजितानि सहाभिजिताऽष्टाविंशतिः ॥ ११ ॥ तत उपरिष्टादुशना द्विलक्षयोजनत उपलभ्यते पुरतः पश्चात् सहैव वाऽर्कस्य शैघ्र्यमांद्यसाम्याभिर्गतिभिरर्कवच्चरति लोकानां नित्यदाऽनुकूल एव प्रायेण वर्षयंश्चारेणानुमीयते स वृष्टिविष्टंभग्रहोपशमनः ॥१२॥ उशनसा बुधो व्याख्यातः तत उपरिष्टाद्द्विलक्षयोजनतो बुधः सोमसुत उपलभ्यमानः प्रायेण शुभकृद्यदाऽर्काद् व्यतिरिच्येत तदाऽतिवाताभ्रप्रायानावृष्ट्यादिभयमाशंसते ॥१३॥ अत ऊर्ध्वमंगारकोऽपि योजनलक्षद्वितय उपलभ्यमानस्त्रिभिस्त्रिभिः पक्षैरेकैकशो राशीन् द्वादशानुभुंक्ते यदि न वक्रेणाभिवर्तते प्रायेणाशुभग्रहोऽघशंसः ॥ १४ ॥

च अत एव जीवने हेतुत्वाज्जीवश्च ॥९॥ तदेवाह । य एष इति ॥१०॥ दक्षिणेनैव न तु तेषां पृथगन्या गतिरस्तीत्यर्थः । कालायने कालचक्रे उत्तराषाढाश्रवणसंधावभिजिन्नक्षत्रं फलविशेषेण पृथक्कल्पितं तेन सह । तथा च श्रुतिः "अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामधस्ताच्छ्रोणायाः" इति ॥ ११ ॥ पुरतः सूर्येण भोक्ष्यमाणे नक्षत्रे पश्चाद्भुंक्ते । सहैव भुज्यमाने चारेण क्रमस्थनक्षत्राद्यतिक्रमेण । वृष्टेर्विष्टंभः स्तंभनं यस्माद्ग्रहात्तमुपशमयतीति तथा ॥ १२ ॥ बुधो व्याख्यातः पुरतः पश्चात्सहैव वा चरतीति किंचिद्विशेषं चाह तत इत्यादिना । आशंसते सूचयति ॥ १३ ॥ अघशंसो दुःखसूचकः । यदि न वक्रेणाभिवर्तते तर्हि त्रिभिस्त्रिभिः पक्षैः ॥ १४ ॥

' अन्नं हि प्राणिनां प्राणः ' इति स्मृतेः । अत एव जीवनहेतुत्वादमृतमयत्वाच्च जीवः ॥ ९ ॥ पुरुषः सर्वतोऽग्रगामी । ' पुर—अग्रगमने ' धातुः । भगवान्सुरूपः मनोधिष्ठातृत्वान्मनोमयः । अमृतमयः जलमयः । ' पयः कीलालममृतम् ' इत्यमरः । सुधामयो वा । प्राणानामाप्यायनं पूरणं स्वरश्मिभिरमृतवर्षणद्वारा धारणं तत्स्वभावत्वात्सर्वमयः सर्वपालकः ॥ १० ॥ ततः चन्द्रात् । त्रिलक्षेति । भूतलात्तु पंचलक्षयोजनतः । इत्यर्थ इति । नक्षत्राणामपि कालचक्रस्थत्वात्तद्गत्यैव तेषां गतिः । मेरुं प्रदक्षिणीकुर्वता कालचक्रेण तान्यपि प्रदक्षिणी कुर्वंतीति भावः । अभिजित्सत्त्वे प्रमाणमाह—तथा चेति । उत्तराषाढाचरमपादः श्रवणघटिकाचतुष्कश्चाभिजिन्मानं ज्योतिःशास्त्रे प्रोक्तमिति ॥ ११ ॥ ततो नक्षत्रेभ्यः । उशना शुक्रः । द्विलक्षेति । भूतलात्तु सप्तलक्षयोजनतः । वर्षयन्वर्षं कुर्वन् । क्रमस्थनक्षत्राद्यतिक्रमो यथा—अश्विनीतो भरणी गंतव्या तामुल्लंघ्य कृत्तिकासु गमनमित्येवंरूपः यस्माद् ग्रहाद्धौमादेः तं ग्रहम् । स्वदृष्ट्या स्वयोगेन वोपशमयति वृष्टिं कारयतीति भावः । "बुधशुक्रसमीपस्थः करोत्येकार्णवां महीम्" इत्याद्युक्तेः ॥ १२ ॥ तत उशनसः । द्विलक्षेति । भूतलात्तु नवलक्षयोजनतः । प्रायेणेत्युक्तेः । कदाचिदशुभमपि करोतीति तदाह—यदार्कादिति । व्यतिरिच्येत पृथग्भवति । अतिवाताभ्राधिक्यवर्षणाद्यभावरूपं भयम् । आदिना करकादिग्रहः ॥ १३ ॥ अतो बुधात् । योजनलक्षद्वितय इति । भूतलादेकादशलक्षयोजने । अघशंसः प्रायेणेत्युक्तया "दशमेंगारको यस्य स जातः कुलदीपकः" इत्यादिसूचितम् । यदि वक्रः स्यात्तदा बहूनपि मासानेकत्र तिष्ठतीत्यर्थः ॥१४॥

तत उपरिष्टाद्द्विलक्षयोजनांतरगतो भगवान् बृहस्पतिरेकैकस्मिन् राशौ परिवत्सरं चरति यदि न वक्रः स्यात् प्रायेणानुकूलो ब्राह्मणकुलस्य ॥ ॥ १५ ॥ तत उपरिष्टाद् योजनलक्षद्वयात् प्रतीयमानः शनैश्चर एकैकस्मिन् राशौ त्रिंशन्मासान् विलंबमानः सर्वानेवानुपर्येति तावद्भिरनुवत्सरैः प्रायेण हि सर्वेषामशांतिकरः ॥ १६ ॥ तत उत्तरस्मादृषय एकादशलक्षयोजनांतर उपलभ्यंते य एव लोकानां शमनुभावयंतो भगवतो विष्णोर्यत् परमं पदं प्रदक्षिणं प्रक्रमंति ॥ १७ ॥ इति श्रीमद्भागवते महापुराणे पंचमस्कंधे ज्योतिश्चक्रवर्णने द्वाविंशोऽध्यायः ॥ २२॥ श्रीशुक उवाच ॥ अथ तस्मात् परतस्त्रयोदशलक्षयोजनांतरतो यत्तद्विष्णोः परमं पदमभिवदंति यत्र ह महाभागवतो ध्रुव औत्तानपादिरग्निनेंद्रेण प्रजापतिना कश्यपेन धर्मेण च समकालयुग्भिः सबहुमानं दक्षिणतः क्रियमाण इदानीमपि कल्पजीविनामाजीव्य उपास्ते तस्येहानुभाव उपवर्णितः ॥ ॥ १ ॥ स हि सर्वेषां ज्योतिर्गणानां ग्रहनक्षत्रादीनामनिमिषेणाव्यक्तरंहसा भगवता कालेन भ्राम्यमाणानां स्थाणुरिवावष्टंभ ईश्वरेण विहितः शश्वदवभासते ॥ २ ॥ यथा मेढीस्तंभ आक्रमणपशवः संयोजितास्त्रिभिस्त्रिभिः सवनैर्यथास्थानं मंडलानि चरंत्येवं भगणा ग्रहादय एतस्मिन्नंतर्बहिर्योगेन कालचक्र आयोजिता ध्रुवमेवावलंब्य वायुनोदीर्यमाणा आकल्पांतं परिचंक्रमंति नभसि यथा मेघाः श्येनादयो वायुवशाः कर्मसारथयः परिवर्तंते ॥ एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्मनिर्मितगतयो भुवि न पतंति ॥ ३ ॥

यदि न वक्रः स्यात्तर्हि परिवत्सरम् ॥ १५ ॥ १६ ॥ १७ ॥ इति श्रीमद्भागवते पंचमे टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ त्रयोविंशे ध्रुवस्थानं ज्योतिश्चक्राश्रयं ततः ॥ शिशुमारस्वरूपेण हरेश्च स्थितिरुच्यते ॥ १ ॥ यत्तत्प्रसिद्धं विष्णोः पदं यत्र ध्रुव उपास्ते तिष्ठतीत्यन्वयः। समकालमेव युज्यंत इति तथा तैर्नक्षत्ररूपैः ॥ १ ॥ २ ॥ मेढीस्तंभे बद्धा धान्याक्र

ततोंगारकात् । द्विलक्षेति । भूतलात्त्रयोदशलक्षे । वक्रत्वे तु परिवत्सरादधिकमपि भुंक्त इत्यर्थः । प्रायेणेत्युक्तेः स्थानविशेषस्थित्या दुःखमपि ददातीत्यर्थः ॥ १५ ॥ ततो बृहस्पतेः । लक्षद्वयेति । भूतलात्तु पंचदशलक्षेति । तावद्भिस्त्रिंशद्भिः । प्रायेणेत्युक्तेस्त्रिषडायगतः शांतिकरोऽपि स्यादित्यर्थः ॥ १६ ॥ ततः शनैश्चरात् । उत्तरस्मादुत्तरदिशि सप्तम्यर्थे पंचमी । एकादशलक्षेति । भूतलात्तु षड्विंशल्लक्षयोजनेति । परमं पदं ध्रुवलोकम् ॥ १७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥ ततो ध्रुवस्थानवर्णनोत्तरम् । शिशुमारो जलचरो जीवविशेषः ( १ ) अथेति । ध्रुवाधिक्यवर्णने । तस्मादृषिमंडलात् । त्रयोदशलक्षेति--भूतलात्त्वेकोनचत्वारिंशल्लक्षेति । ध्रुवेण समकालयुग्भिः सायुज्यभाग्भिरिति तीर्थः । आजीव्य आश्रयः कल्पजीविनो हि भृग्वादयस्तावत्कालमेव तिष्ठंति यावद्ध्रुवलोकस्तिष्ठति ध्रुवलोकस्यापि " किमन्यैः कालनिर्धूतैः कल्पान्ते वैष्णवादिभिः " इति हिरण्यकशिपोरभिप्रायं वर्णयद्भिर्देवैर्ब्रह्मणे प्रोक्तत्वादनित्यत्वमेवेति उपास्ते हरिमिति शेषः ( १ ) स्थाणुरिवेति । श्लेषेण कालचक्रेण चालयितुमशक्यत्वात्स एवैको रुद्रवत्स्थिर इत्यर्थः । प्रत्युत कालचक्रस्यावष्टंभः । तेन सर्वे कालचक्राधीना ध्रुवस्तु कालचक्रमप्यधीनी करोतीति ध्वनिः । नन्वीदृशी योग्यता तस्य कथमभूत्तत्राह—ईश्वरेण कर्त्तुमकर्तुमन्यथा कर्त्तुमपि समर्थेन विहितः स्वभक्तोत्कर्षज्ञापनार्थमिति भावः ॥ २ ॥ खलमध्ये निखातस्तंभो मेढी तत्र संयोजितः कृषीबलेनेत्यर्थः । त्रिभिः सवनैर्मेढीस्तंभनिकटमध्यदूरवर्त्तिभिर्विभागैर्यथास्थानं

केचनैतज्ज्योतिरनीकं शिशुमारसंस्थानेन भगवतो वासुदेवस्य योगधारणायामनुवर्णयंति ॥ ४ ॥ यस्य पुच्छाग्रेऽवाक्शिरसः कुंडलीभूतदेहस्य ध्रुव उपकल्पितस्तस्य लांगूले प्रजापतिरग्निरिंद्रो धर्म इति पुच्छमूले धाता विधाता च कट्यां सप्तर्षयस्तस्य दक्षिणावर्तकुंडलीभूतशरीरस्य यान्युदगयनानि दक्षिणपार्श्वे तु नक्षत्राण्युपकल्पयंति ॥ दक्षिणायनानि तु सव्ये यथा शिशुमारस्य कुंडलाभोगसन्निवेशस्य पार्श्वयोरुभयोरप्यवयवाः समसंख्या भवंति पृष्ठे त्वजवीथी आकाशगंगा चोदरतः ॥ ५ ॥ पुनर्वसुपुष्यौ दक्षिणवामयोः श्रोण्योरार्द्राश्लेषे च दक्षिणवामयोः पश्चिमयोः पादयोरभिजिदुत्तराषाढे दक्षिणवामयोर्नासिकयोर्यथासंख्यं श्रवणपूर्वाषाढे दक्षिणवामयोर्लोचनयोर्धनिष्ठा मूलं च दक्षिणवामयोः कर्णयोर्मघादीन्यष्ट नक्षत्राणि दक्षिणायनानि वामपार्श्ववङ्क्रिषु युंजीत तथैव मृगशीर्षादीन्युदगयनानि दक्षिणपार्श्ववङ्क्रिषु प्रातिलोम्येन प्रयुंजीत शतभिषाज्येष्ठे स्कंधयोर्दक्षिणवामयोर्न्यसेत् ॥ ६ ॥

मणपशवो बलीवर्दाः कर्म सारथिः सहायो येषाम्॥ ३॥ईश्वराधारत्वात्पतनशंकैव नास्तीति वक्तुं मतांतरमाह। केचनेति।ज्योतिरनीकं ज्योतिश्चक्रम्।योगधारणायां स्थितमिति शेषः ॥ ४ ॥ लांगूले अग्रादधोभागे । उदगयनान्यभिजिदादीनि पुनर्वस्वंतानि चतुर्दश दक्षिणपार्श्वे । दक्षिणायनानि पुष्यादीन्युत्तराषाढांतानि चतुर्दश वामपार्श्वे ॥ ५ ॥ तदेव स्थानवि शेषेण विभज्य दर्शयति । पुनर्वसुपुष्यावित्यादिना । पुनर्वसुरुदगयनांत्यं नक्षत्रं पुष्यो दक्षिणायनस्याद्यम् आर्द्राऽऽश्लेषे तयोर्निरंतरे अभिजिदुत्तराषाढे उत्तरदक्षिणायनयोराद्यंत नक्षत्रे श्रवणपूर्वाषाढे तयोरुत्तरपूर्वे धनिष्ठामूलं च तयोरप्युत्तरपूर्वे मघादीनि यान्यनुराधांतानि दक्षिणायनान्यष्ट तानि वामपार्श्वावङ्क्रिषु वामपार्श्वा स्थिषु । मृगशीर्षादीनि प्रातिलो म्येन पूर्वाभाद्रपदांतानि यान्युदगयननक्षत्राण्यष्ट तानि दक्षिणपार्श्ववङ्क्रिषु । शतभिषग्ज्येष्ठे उत्तरदक्षिणायनयोर्ये अवशिष्टे ते स्कंधयोः ॥ ६ ॥

स्वस्वस्थानस्थितिमनतिक्रम्य चरंति । दार्ष्टांतिके त्रिभिः सवनैरुत्तरायणवैषुवतदक्षिणायनैः समयैः । अंतरधोधःस्थलं बहिरुपर्य्युपरितनं स्थलं तत्र योगेन स्थित्या कालचक्र एव योजिताः । यथा सप्तर्षीणामधोधःस्थित्या योजिताः शनैश्चरादयस्तथा सूर्यादीनामुपर्युपरि स्थित्या योजिताः सोमादयस्तत्रतत्रायोजिता ईश्वरेणैव । वायुना तु प्रवहादिनोदीर्यमाणाश्चाल्यमानाः पुरुषाधिष्ठितमायावशीकृताः ॥ ३ ॥ नन्वेते निरालंबाः कथं न पतंतीति शंकां निराकर्त्तुमाह–ईश्वराधीनत्वादिति । केचन योगिनः योगधारणायां विराडुपासनावेशार्थं यथेष्टकल्पनामय्याम् । अत एव मनसि चंद्र इति वक्ष्यमाणेन मनोपि कल्पयिष्यते स्पष्टमपि वक्ष्यते एतदु हैवेति ॥ ४ ॥ कुंडलीभूतदेहस्य चक्रीकृतशरीरस्य कुंडलीभूतत्वं पार्श्वतः न तु पृष्ठतः क्रीडतो बाऽत एव दक्षिणपार्श्वे उदगयनानि मंतव्यानि । अत्र यद्वैपरीत्यं दृश्यते तत्तु मंडलत्वेऽपि तिर्यगूर्ध्वाधो बहुधा वक्रत्वं मंतव्यमतो नारायणादीनां हृदयादौ स्थितत्वम् । अजवीथी दक्षिणमार्गस्य प्रथमो भागः । "मूलाषाढोत्तराषाढा अजवीथीति शब्दिते" इत्युक्तेः । यदेषां कर्णादौ स्थितिं वक्ष्यति तत्रतत्रापि तत्तदंशस्य क्रोडभागो मंतव्यः । आकाशगंगायास्तत्रागमनादिति भावः ॥ ५ ॥ श्रोण्योर्नितंबयोः वङ्क्रिषु अस्थिषु "नितंबः श्रोणिराख्यातो वङ्क्रि प्रोक्तं तथास्थिनि" इति विश्वनाथः । प्रातिलो

उत्तराहनावगस्तिरधराहनौ यमो मुखेषु चांगारकः शनैश्चर उपस्थे बृहस्पतिः ककुदि वक्षस्यादित्यो हृदये नारायणो मनसि चंद्रो नाभ्यामुशनाः स्तनयोरश्विनौ बुधः प्राणापानयो राहुर्गले केतवः सर्वांगेषु रोमसु सर्वे तारागणाः ॥ ७ ॥ एतदु हैव भगवतो विष्णोः सर्वदेवतामयं रूपमहरहः संध्यायां प्रयतो वाग्यतो निरीक्षमाण उपतिष्ठेत नमो ज्योतिर्लोकाय कालायनायानिमिषां पतये महापुरुषायाभिधीमहीति ॥ ८ ॥ ग्रहर्क्षतारा मयमाधिदैविकं पापापहं मंत्रकृतां त्रिकालम् ॥ नमस्यतः स्मरतो वा त्रिकालं नश्येत तत्कालजमाशु पापम् ॥ ९ ॥ इति श्रीमद्भा०म०पंच० शिशुमारसंस्थानं नाम त्रयोविंशतितमोऽध्यायः ॥ २३॥ श्रीशुक उवाच ॥ अधस्तात् सवितुर्योजनायुते स्वर्भानुर्नक्षत्रवच्चरतीत्येके योऽसावमरत्वं ग्रहत्वं चाऽलभत भगवदनुकंपया स्वयमसुरापसदः सैंहिकेयो ह्यतदर्हस्तस्य तात जन्मकर्माणि चोपरिष्टाद्वक्ष्यामः ॥ १ ॥

यमो नक्षत्ररूपः तथा नारायणोश्विनौ च । ककुदि गलपृष्ठशृंगे ॥ ७ ॥ ज्योतिषो लोकायाश्रयाय । कालायनाय कालचक्ररूपाय । नमोऽभिधीमहीति मंत्रेणोपतिष्ठेत ॥ ८ ॥ मंत्रकृतां पूर्वोक्तं मंत्रं जपताम् ॥ ९ ॥ इति पंचमे टीकायां त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ एवं त्रिभिर्द्युमर्यादापालनं वर्णितं तथा ॥ अधोभुवनमर्यादापालनं त्रिभिरुच्यते ॥ १ ॥ चतुर्विंशे रवेरर्वाक्स्वर्भान्वादिस्थितिः क्रमात् ॥ अतलादिबिलस्वर्गमर्यादाः सप्त वर्णिताः ॥ २ ॥ सूर्यमारभ्य ध्रुवांतं संनिवेशं निरूप्येदानीं सूर्यादधस्तान्निरूपयति । अधस्तादिति । स्वर्भानू राहुः । अलभत लेभे । सिंहिकायाः पुत्रः ॥ १ ॥

म्येन मृगशिरां रोहिणी : कृत्तिका भरणीत्येवं व्युत्क्रमेण । वंक्रिष्विति पाठो हि लेखकप्रमादत एव ॥ ६ ॥ उत्तराहनावुत्तरकपोलावयवेऽधरकपोलावयवे " हनुर्हट्टविलासिन्यां सूनावज्रे गदे स्त्रियाम् । द्वयोः कपोलावयवे " इति मेदिनी । यद्यप्यंगारकादीनां राश्यन्तरचलनत्वं तथापि तत्तदंगस्थितत्वमंगानां चलनत्वमननाद्बोध्यम् । केतव इति । बहुत्वं केतूनां सहस्रत्वं शतत्वं च ज्योतिःशास्त्रे वार्णतामिति तदपेक्षम् ॥ ७ ॥ न निमिषंति निमीलनं कुर्वंतीत्यनिमिषो देवाः । ' मिष–दर्शने ' इति क्विपि रूपम् ॥ ८ ॥ मंत्रं कुर्वंति वाग्विषयमिति मंत्रकृतस्तेषां पूर्वोक्तं ' नमो ज्योतिर्लोकाय ' इत्यादिकं मंत्रं जपतां पापापहम् । अधिदैविकं परमेश्वरस्य रूपमिदं नमस्यतः स्मरतो वा पुंसः पापं नश्येतेत्यन्वयः । अत्र सूर्यमंडलादष्टत्रिंशल्लक्षे ध्रुवः ध्रुवात्कोटियोजने महर्लोको महर्लोकात्कोटिद्वये जनलोको जनलोकात्कोट्यैक्ये तपोलोक स्तपोलोकाद्द्वादशकोटिषु सत्यलोकः । एवं सूर्यात्सत्यलोकपर्य्यंतमष्टत्रिंशल्लक्षोत्तरत्रयोविंशतिकोट्यः सत्यलोकाद्द्विषष्टिलक्षोत्तरायां कोटौ वैकुंठस्ततोंडगोलक इति विष्णुपुराणदर्शितया दिशा सूर्यात्पंचविंशती कोटिषु कटाहः। एवं सूर्याल्लक्षे भूतलं ततः सप्तसप्ततिसहस्रेषु सप्तपातालानि ततस्त्रिंशत्सहस्रेषु शेषः । एवं सूर्याल्लक्षद्वये गर्भोदः स च लक्षद्वयन्यूनपञ्चविंशतिकोटिपरिमित एवं मिलित्वोर्द्धाधः पञ्चाशत्कोटिपरिमाणमंडगोलकमिति ॥९॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥ तथा द्युमर्य्यादापालनवत् ( १ ) अर्वाक् प्राक्तनदेशे । आदिना पिशाचादिग्रहः ( २ ) एके पौराणिकाः । नक्षत्राणि यथा

यददस्तरणेर्मंडलं प्रतपतस्तद्विस्तरतो योजनायुतमाचक्षते द्वादशसहस्रं सोमस्य त्रयोदशसहस्रं राहोर्यः पर्वणि तद्व्यवधानकृद्वैरानुबंधः सूर्याचंद्रमसावभिधावति ॥२॥ तन्निशम्योभयत्रापि भगवता रक्षणाय प्रयुक्तं सुदर्शनं नाम भागवतं दयितमस्त्रं तत्तेजसा दुर्विषहं मुहुः परिवर्तमानमभ्यवस्थितो मुहूर्तमुद्विजमानश्चकितहृदय आरादेव निवर्तते तदुपरागमिति वदंति लोकाः ॥ ३ ॥ ततोऽधस्तात् सिद्धचारणविद्याधराणां सदनानि तावन्मात्र एव ॥ ४ ॥ ततोऽधस्तात् यक्षरक्षःपिशाचप्रेतभूतगणानां विहाराजिरमंतरिक्षं यावद्वायुः प्रवाति यावन्मेघा उपलभ्यंते ॥ ५ ॥ ततोऽधस्ताच्छतयोजनांतर इयं पृथिवी यावद्धंसभासश्येनसुपर्णादयः पतत्रिप्रवरा उत्पतंतीति ॥ ६ ॥ उपवर्णितं भूमेर्यथासंनिवेशावस्थानमवनेरप्यधस्तात् सप्त भूविवरा एकैकशो योजनायुतांतरेणायामविस्तारेणोपक्लृप्ताः ॥ अतलं वितलं सुतलं तलातलं महातलं रसातलं पातालमिति ॥ ७ ॥ एतेषु हि बिलस्वर्गेषु स्वर्गादप्यधिककामभोगैश्वर्यानंदविभूतिभिः सुसमृद्धभवनोद्यानाक्रीडविहारेषु दैत्यदानवकाद्रवेया नित्यप्रमुदितानुरक्तकलत्रापत्यबंधुसुहृदनुचरा गृहपतय ईश्वरादप्यप्रातिहतकामा मायाविनोदा निवसंति ॥ ८ ॥

ग्रहणं वक्तुमाह । यददः प्रतपतस्तरणेर्मंडलम् । अमृतपाने मध्यप्रवेशेन तयोर्व्यवधानं करोतीति तथा । अत एवैताभ्यां सूचितत्वाद्वैरमनुबध्नातीति तथा ॥ २ ॥ भागवतं चक्रं परिवर्तमानं परिभ्रमदभि अभिमुखं मुहूर्तमवस्थितः सन् इत्येवमंतरा तदवस्थानमुपरागं ग्रहणं वदंति । तत्र च ऋजुवक्रस्थितिभ्यां सर्वग्रासासर्वग्रासौ न तु वस्तुतो ग्रासोऽस्ति दूरांतरत्वात् ॥ ३ ॥ तावन्मात्रे योजनायते ॥ ४ ॥ अंतरिक्षं ग्रहहीनम् । तस्यावधिमाह । यावद्वायुः प्रवाति तीव्रो वाति । तस्याप्यवधिमाह । यावन्मेघाः ॥ ५ ॥ पृथिव्या उपरि भूर्लोकावधिमाह । यावद्धंसादयः पार्थिवा विकाराः ॥ ६ ॥ योजनायुतांरेण प्रत्येकमुच्छ्रिताः आयामो यः कटाहस्य तावद्विस्तारेण ॥ ७ ॥ सामान्येन विवराणि वर्णयति । एतेष्वित्यादिना अथातल इत्यतः प्राक्तनेन ग्रंथेन । एतेषु दैत्यादयो निवसंतीत्यन्वयः । कथंभूतेषु । अधिकः कामभोगश्च

कालचक्रयोजितानि मेरुं प्रक्रमंति तथेत्यर्थः । स्वमते तु प्रवहाख्यवायुबहिर्भूतत्वान्नक्षत्रवच्चरणं नास्ति किन्तु स्वगत्यैवेति । अतदर्होऽमरत्वानर्हः। तस्य राहोः । उपरिष्टात् षष्ठस्कंधादौ ॥ १ ॥ अदो विश्वं मंडलं रथनीडाभ्यंतरस्थितं तेजश्चक्रम् । पर्वणि अमावास्यापौर्णमास्योः । तयोर्भूतलस्थजनचक्षुषां व्यवधानं कर्तुममृतपाने तयोर्मध्यप्रवेशेन व्यवधानं पूर्वं कृतवानिति । अत एव व्यवधानकरणादेव ॥ २ ॥ तं वैरानुबंधम् । निशाम्य दृष्ट्वा। उभयत्रापि सूर्ये चंद्रे च । तत् प्रसिद्धम् । दृष्ट्वेति शेषः । आरात् दूरात् अंतरा मध्ये। तदवस्थानं राह्ववस्थानम् । तत्र चोपरागे । "उपरागो ग्रहो राहुग्रस्ते त्विंदौ च पूष्णि च" इत्यमरः । दूरांतरत्वादयुतयोजनांतरत्वात् ॥ ३ ॥ ततो राहोरधस्तात् ॥ ४ ॥ ततः सिद्धादिस्थानादधस्तात् । अत्र प्रमाणानुक्तेः पूर्ववत्प्रमाणमुन्नेयम् । 'अनुक्ते पूर्ववद्ग्राह्यम्' इत्युक्तेः ॥ ५ ॥ ततो यक्षादिस्थानात् । आदिना गृध्रादिग्रहः । पतत्रिप्रवराः पक्षिगणमुख्याः । उत्पतंति स्वगत्या गच्छंति । पार्थिवानां पृथिव्यामेव गतिर्नान्यत्रेत्यर्थः ॥ ६ ॥ अधस्तादधोऽधोऽवयवेष्वित्यर्थः । भूविवरा भुवो विवरभूतान्येवातलादीनीत्यर्थः । योजनायुतावधावित्यर्थः । 'अंतरमवकाशावधि' इत्यमरः । भूतलाद्योजनायुतावधावतलं तस्माद्योजनायुतावधौ वितलमित्येवमायामविस्तारेण । योजनायुतावधिनोपक्लृप्ताः दैर्घ्यविशालताभ्यां समा एवेत्यर्थः । उच्छ्रिता इति । अयुतयोजनोच्छ्रिताः । प्रत्येकमतलादय इत्यर्थः ॥ ७ ॥ एतेष्वतलादिषु । बिलरूपाः स्वर्गा बिलस्वर्गास्तेषु भवनं गृहम् । आक्रीडः क्रीडास्थानम् । विहारो भ्रमणस्थानं " विहारो भ्रमणे स्कंधे लीलायां सुगतालये "

येषु महाराज मयेन मायाविना विनिर्मिताः पुरो नानामणिप्रवरप्रवेकविरचितविचित्रभवनप्राकारगोपुरसभाचैत्यचत्वरायतनादिभिर्नागासुरमिथुनपारावतशुकसारिकाकीर्णकृत्रिमभूमिभिर्विवरेश्वरगृहोत्तमैः समलंकृताश्चकासति ॥ ९॥ उद्यानानि चातितरां मनइंद्रियानंदिभिः कुसुमफलस्तबकसुभगकिसलयावनतरुचिरविटपविटपिनां लतांगाऽलिंगितानां श्रीभिः समिथुनविविधविहंगमजलाशयानाममलजलपूर्णानां झषकुलोल्लंघनक्षुभितनीरनीरजकुमुदकुवलयकह्लारनीलोत्पललोहितशतपत्रादिवनेषु कृतनिकेतनानामेकविहाराकुलमधुराविविधस्वनादिभिरिंद्रियोत्सवैरमरलोकश्रियमतिशयितानि ॥ १० ॥

ऐश्वर्यानंदश्च विभूतिश्च संपत्तिस्तैः सुसमृद्धा भवनादयो येषु । कथंभूताः । नित्यप्रमुदिता अनुरक्ताः कलत्रादयो येषाम् । न प्रतिहतः कामो येषाम् । मायया विनोदो येषाम् ॥ ८ ॥ किं च । हे महाराज येषु मयेन निर्मिताः पुरश्चकासतीत्यन्वयः । कथंभूताः । नाना ये मणिप्रवरास्तेषां प्रवेका मुख्यास्तैर्विरचितैर्विचित्रैर्भवनादिभिस्तथा विवरेश्वराणां गृहोत्तमैश्च समलंकृताः । कीदृशैर्गृहोत्तमैः । नागाश्चासुराश्च मिथुनभूताः पारावतादयश्च तैराकीर्णाः कृत्रिमा भूमयो येषु तैः । पाठांतरे नानास्वनत्वं मिथुनविशेषणम् ॥ ९ ॥ उद्यानानि चातितराममरलोकश्रियमतिशयितानि येषु चकासतीत्यन्वयः । काभिः श्रीभिः । केषां कुसुमफलस्तबकाश्च सुभगकिसलयानि चं तैरवनता रुचिरा विटपा येषां तेषां विटपिनां लतानामंगैरालिंगितानां श्रीभिः तथा समिथुनाश्चक्रवाकादिमिथुनसहिता ये विविधा विहंगास्तद्युक्तानां जलाशयानां च श्रीभिः । कीदृशानाम्। अमलैर्जलैः पूर्णानाम्। पुनरपि कैः अतिशयितानि झषकुलोल्लंघनेन क्षुभितं यज्जलाशयानां नीरं तस्मिन्यानि नीरजादीनि तेषां वनेषु कृतं निकेतनं यैस्तेषामर्थात्पक्षिणामेकोऽखंडो यो विहारस्तेनाकुलाश्च ते मधुराश्च ते विविधाः स्वनादयस्तैर्ये इंद्रियोत्सवास्तैश्च यद्वा समिथुनेत्यादेरुत्तरेणैव संबंधः । मनइंद्रियानंदिभिरिति

इति मेदिनी ॥ ८ ॥ अन्यदाह—किञ्चेति । हे महाराजेति । तत्र त्वया न दृष्टिर्विधेया तथापि महाराजत्वात्सर्वं तादृशमेवेति भावः । ‘ प्रवेको मुख्यभिन्नयोः’ इति धरणिः । चैत्यं देवालयम् । आयतनं पाषाणबद्धवृक्षमूलस्थानम् । आदिना चत्वारादिग्रहः । कृत्रिमा भूमयः कुट्टिमभुवः । पाठांतरे ‘ नानास्वनमिथुन—’इति पाठे ॥ ९ ॥ मनइंद्रियानंदिभिरिति । पुंस्त्वमार्षम् । जलाशयेत्युक्ते पुनरमलजलपूर्णानामित्युक्त्या पुनरुक्तिमाशंक्याह—यद्वेति । अमलजलैः पूर्णानां सरसामित्यनेन संबंधः किंभूतानाममलजलपूर्णानां मिथुना द्वंद्वीभूता ये विविधा विहंगमास्तथा जलाशया मत्स्याद्यास्तैः सहितानामित्यर्थः । आर्षकल्पनाया अगतिगतिकत्वं चाशंक्याह—मनइंद्रियानंदिभिरिति । तत्र नीरजादिषु कुमुदकुवलयौ सितवर्णौ रात्रिविकाशौ । कह्लारं सौगंधिकम् । लोहितं रक्तवर्णं शतपत्रयुतं च । आदिना पुंडरीकादिग्रहः । स्वनादिभिरिहादिना गत्यादिग्रहः । इंद्रियोत्सवा

यत्र ह वाव न भयमहोरात्रादिभिः कालविभागैरुपलक्ष्यते ॥ ११ ॥ यत्र हि महाहिप्रवराशिरोमणयः सर्वं तमः प्रबाधंते ॥१२॥ न वा एतेषु वसतां दिव्यौषधिरसरसायनान्नपानस्नानादिभिराधयो व्याधयो वलीपलितजरादयश्च देहवैवर्ण्यदौर्गंध्यस्वेदक्लमग्लानिरिति वयोऽवस्थाश्च भवंति ॥१३॥ न हि तेषां कल्याणानां प्रभवति कुतश्चन मृत्युर्विना भगवत्तेजश्चक्रापदेशात् ॥ १४ ॥ यस्मिन्प्रविष्टेऽसुरवधूनां प्रायः पुंसवनानि भयादेव स्रवंति पतन्ति च ॥ १५ ॥ अथातले मयपुत्रोऽसुरो बलो निवसति येन ह वा इह सृष्टाः षण्णवतिर्मायाः काश्चनाद्यापि मायाविनो धारयंति यस्य च जृंभमाणस्य मुखतस्त्रयः स्त्रीगणा उदपद्यंत स्वैरिण्यः कामिन्यः पुंश्चल्य इति या वै बिलायनं प्रविष्टं पुरुषं रसेन हाटकाख्येन साधयित्वा स्वविलासावलोकनानुरागस्मितसंलापोपगूहनादिभिः स्वैरं किल रमयंति यस्मिन्नुपयुक्ते पुरुष ईश्वरोऽहं सिद्धोऽहमित्ययुतमहागजबलमात्मानमभिमन्यमानः कत्थते मदांध इव ॥१६॥ ततोऽधस्ताद्वितले हरो भगवान् हाटकेश्वरः स्वपार्षदभूतगणावृतः प्रजापतिसर्गोपबृंहणाय भवो भवान्या सह मिथुनीभूत आस्ते यतः प्रवृत्ता सरित्प्रवरा हाटकी नाम भवयोर्वीर्येण यत्र चित्रभानुर्मातरिश्वना समिध्यमान ओजसा पिबति ॥ तन्निष्ठ्यूतं हाटकाख्यं सुवर्णं भूषणेनासुरेंद्रावरोधेषु पुरुषाः सह पुरुषीभिर्धारयंति ॥ १७ ॥

स्वनादीनां विशेषणम् । तत्र नीरजं सामान्येन कमलम् । लोहितं शतपत्रं तद्विशेषः ॥ १० ॥ अहोरात्रादिभिर्यद्भयं तन्नोपलक्ष्यते सूर्याद्यभावात् ॥ ११ ॥ १२ ॥ क्लमः श्रमः ग्लानिरनुत्साहः ॥ १३ ॥ कल्याणानां मंगलरूपाणाम् ॥ १४ ॥ यस्मिन् भगवत्तेजसि प्रविष्टे । पुंसवनानि गर्भाः । "आ चतुर्थाद्भवेत्स्रावः पातः पंचमषष्ठयोः" इति स्रावपातौ ज्ञेयौ ॥१५॥ सवर्णे रताः स्वैरिण्यः कामिन्यस्त्वसवर्णेऽपि तत्राप्यतिचंचलाः पुंश्चल्यः । बिलायनं बिलायतनम् । साधयित्वा संभोगसमर्थं कृत्वा । स्वे ये असाधारणा विलासास्तत्पूर्वकोऽवलोकस्तेनानुरागयुक्तं स्मितं तेन संलाप उपगूहनं च तदादिभिः । यस्मिन्हाटकाख्ये रसे उपयुक्ते सेविते ॥ १६ ॥ भवयोर्भवस्य भवान्याश्च ।

इंद्रियकौतुकास्तैः ॥ १० ॥ यत्र अतलादिषु ॥ ११ ॥ यत्र येषु विवरेषु ॥ १२ ॥ एतेषु वसतां पुंसां दिव्यौषधिरसरसायनयोरशनादेव हेतोरन्नपानादिभिरप्याधिव्याधयो न भवंति तथा द्विविधा वयोवस्थाश्च न तत्र प्रथमा बलिप्रभृतयश्च रसाः द्वितीया देहवैवर्ण्यादयोऽचरमा इति । रसायनं तु " वार्धघ्नं देहपुष्ट्यादेः कारकं बलदायकम् । रसायनमिह प्रोक्तं मृगांकादिभिदा बहु " इति दिव्यौषधयो विशल्याद्याः । समस्तपाठे तु देहवैवर्ण्यादिसहिता ग्लानिरिति मध्यमपदलोपी समासः ॥ १३ ॥ तेषां दिव्यौषधिरसरसायनसेविनां चक्रापदेशाच्चक्रनाम्नः ॥ १४ ॥ प्रायो बाहुल्येन समकालं वा । " प्रायो मरणानशने मृत्यौ बाहुल्यतुल्ययोः " इति मेदिनी ॥ १५ ॥ सामान्येन विवरलक्षणमुक्त्वा विशेषेणाह–अथेति । अथ आरंभे । षड्भिरधिका नवतिः षण्णवतिः । यस्य बलस्य । अपिना सवर्णेपीति । तत्रापि स्वैरिण्याद्यास्त्वपि पुरुषमात्रेण रतिमाकांक्षमाणाः पुरुषदर्शनमात्रेण परिप्लुतेन्द्रिया वा पुंश्चल्यः । उपगूहनमालिंगनम् । आदिना चुंबनादिग्रहः । महागजो यूथमुख्यहस्ती । कत्थते श्लाघते ॥ १६ ॥ ततः अतलात् । ब्रह्मसृष्टिवृद्ध्यै यतो यत्र

ततोऽधस्तात्सुतल उदारश्रवाः पुण्यश्लोको विरोचनात्मजो बलिर्भगवता महेंद्रस्य प्रियं चिकीर्षमाणेनादितेर्लब्धकायो भूत्वा बटुवामनरूपेण पराक्षिप्तलोकत्रयो भगवदनुकंपयै व पुनः प्रवेशित इंद्रादिष्वविद्यमानया सुसमृद्धया श्रियाऽभिजुष्टः स्वधर्मेणाराधयंस्तमेव भगवंतमाराधनीयमपगतसाध्वस आस्तेऽधुनापि ॥१८॥ नो एवैतत्साक्षात्कारो भूमिदानस्य यत्तद्भगवत्यशेषजीवनिकायानां जीवभूतात्मभूते परमात्मनि वासुदेवे तीर्थतमे सर्वजीवनियन्तर्यात्मारामे पात्र उपपन्ने परया श्रद्धया परमादरसमाहितमनसा संप्रतिपादितस्य साक्षादपवर्गद्वारस्य यद् बिलनिलयैश्वर्यम् ॥ १९ ॥ यस्य ह वाव क्षुतपतनप्रस्खलनादिषु विवशः सकृन्नामाभिगृणन् पुरुषः कर्मबंधनमंजसा विधुनोति यस्य हैव प्रतिबाधनं मुमुक्षवोऽन्यथैवोपलभंते॥२०॥

चित्रभानुरग्निः । तेन निष्ठ्यूतं फूत्कृत्य त्यक्तम् । असुरेंद्राणामवरोधेष्वंतःपुरेषु । पुरुषीभिः स्त्रीभिः ॥ १७ ॥ सुतले बलिरधुनाप्यास्त इत्यन्वयः । कथंभूतः । महेंद्रस्य प्रियं कर्तुमिच्छता भगवता प्रथमं पराक्षिप्तमपहृतं लोकत्रयं यस्य सः । पुनर्भगवतोऽनुकंपयैव तत्र प्रवेशितः सन् । कीदृशेन । योऽदितेः सकाशाद्भूत्वा बटुवामनरूपेण लब्धकायस्तेन ॥ १८ ॥ केचित्तस्य सुतलराज्यं भूमिदानफलं मन्यंते तन्निराकरोति । नो एवैतदिति । यद्बिलनिलये विवरस्थाने ऐश्वर्यमेतद्भूमिदानस्य साक्षात्कारः फलं न भवत्येव । कुत इत्यपेक्षायामेवंभूतस्य दानस्य साक्षादपवर्गहेतुत्वादित्याह । यत्तत्प्रसिद्धं दानं तस्य । तदेवाह । भगवत्यशेषजीवनिकायानां जीवभूतश्चासावात्मभूतश्च सर्वजीवनियंता चासावत्मारामश्चेत्यर्थः । तस्मिन्संप्रतिपादितस्य ॥ १९ ॥ किं च । यस्य नाम क्षुतादिषु च विवशोऽपि सकृदपि गृणन्कर्मबंधं विधुनोति । कथंभूतम् । यस्य प्रतिबाधनं त्विह मुमुक्षवोऽन्यथैवोपलभंते । यन्निवृत्त्यर्थं योगसांख्यादिक्लेशाननुभवंतीत्यर्थः । तं कर्मबंधं त्यजति ॥ २० ॥

भवयोः भवानीभवयोः''पुमान् स्त्रिया''इत्यनुशासनात् । पिबति संशोष्य कठिनी करोति । तेनअग्निना निष्ठ्यूतं दाहोत्तीर्णीकृतम्।यद्वा–ताभ्यां भवभवानीभ्यां निष्ठ्यूतं भूषणेन रत्नालंकारेण सहात्यादरात् हरभवयोर्विशेषणविशेष्यभावेन पौनरुक्त्यभावो ज्ञेयः॥१७॥ततो वितलात् । श्रवो यशः । पुण्याश्चारवः श्लोका वर्णनार्थपद्यानि यस्य सः 'पुण्यं शोभने त्रिषु' इति मेदिनी । अपगतसाध्वसो निर्भयः । 'भीतिर्भीस्साध्वसं भयम्' इत्यमरः ॥१८॥अत्र भूमिपदेन त्रिभुवनमेवोपलक्षितम् । किञ्च–वेदविद्ब्राह्मणमात्रे एव भूप्रदेशदानादक्षयः प्रसिद्धस्वर्गभोगो लभ्यत इति शास्त्रे श्रवणाद्भगवति त्रिभुवनदानजन्यफलस्य सुतलैश्वर्यभोग एव पर्याप्तेरसंभावितत्वादपवर्गस्यैव फलत्वम्।किञ्च–अस्यानुषंगिकस्यापि सुतलैश्वर्यभोगस्य सर्वस्वर्गभोगेभ्योऽपि परमोत्कर्षो ध्वनितः । जीवभूतो जीवनरूपो य आत्मांतर्यामी तद्भूते परमात्मनि 'विष्टभ्याहमिदं कृत्स्नम्' इत्युक्तेरंतर्यामिणोप्यांशित्वात् । साक्षादपवर्गेति । यत्र पुष्पादिदानस्यापवर्ग फलत्वं तत्र त्रिभुवनदानस्य तथात्वेऽतिकैमुत्यमिति भावः ॥ १९ ॥ त्रैलोक्यदाने का वार्त्ता भक्त्या यत्र पुष्पार्पणमपि दूरे वर्ततां नामाभ्यासोऽपि सुकृतिभिर्दुर्वारं कर्मबंधनमप्यनायासेनैव ध्वंसयतीत्याह–यस्येति । न च कर्मबंधोऽपि सुगमप्रतीकार इत्याह–यस्य कर्मबंधस्य प्रतिबाधनं सर्वथा ध्वंसनं मुमुक्षव एव न तु भूमिदानादिसुकृतकोटिमंतोऽपि । इत्यर्थ इति । सर्वथा दुःशकोपायमप्यनायासेनैव कुर्वंतीति भावः ॥ २० ॥

---

१–सर्वजीवनियन्तर्यात्मारामे इयान्पाठोऽधिकमिवाऽऽभाति टीकायां जीवनिकायानां जीवभूतात्मभूते इत्यस्यैव तादृशार्थकथनाद्बहुषु पुस्तकेष्वनुपलम्भाच्च ।

तद्भक्तानामात्मवतां सर्वेषामात्मन्यात्मद आत्मतयैव ॥ २१ ॥ न वै भगवान् नूनममुष्यानुजग्राह यदुत पुनरात्मानुस्मृतिमोषणं मायामयभोगैश्वर्यमेवातनुतेति ॥ २२ ॥ यत्तद्भगवताऽनधिगतान्योपायेन याच्ञाच्छलेनापहृतस्वशरीरावशेषितलोकत्रयो वरुणपाशैश्च संप्रति मुक्तो गिरिदर्यां चापविद्ध इति होवाच ॥ २३ ॥ नूनं बतायं भगवानर्थेषु न निष्णातो योऽसाविंद्रो यस्य सचिवो मंत्राय वृत एकांततो बृहस्पतिस्तमतिहाय स्वयमुपेंद्रेणात्मानमयाचतात्मनश्चाशिषो नो एव तद्दास्यमतिगंभीरवयसः कालस्य मन्वंतरपरिवृत्तं कियल्लोकत्रयमिदम् ॥ २४ ॥ यस्यानुदास्यमेवास्मत्पितामहः किल वव्रे न तु स्वपित्र्यं यदुताकुतोभयं पदं दीयमानं भगवतः परमिति भगवतोपरते खलु स्वपितरि ॥ २५ ॥

तत्तस्मिन्भगवति भक्तानां ज्ञानिनां च यथायथमात्मन्यात्मदे ज्ञानदे चात्मतयैव समर्पितस्य भूमिदानस्य न तत्फलमिति पूर्वेणैव संबंधः ॥ २१ ॥ किं च । नेदं भगवदनुकंपाफलमपि किं त्वेकांतभक्तस्य तस्यांतरायमात्रमित्याह । नेति । भगवानमुष्य अमुं नैवानुगृहीतवान् । तत्र हेतुः । यदुतेति आत्मन ईश्वरस्यानुस्मृतिं मुष्णातीति तथा । तदुक्तम् । "वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यांतरायो मैत्रेय देवेंद्रत्वादिकं फलम्" इति ॥ २२ ॥ तस्यैकांतभक्तिं सप्रपंचामाह । यत्तदतिप्रसिद्धमिति वक्ष्यमाणमुवाच हेत्यन्वयः । कथंभूतः । अनधिगतोऽन्य उपायो येन तेन भगवता याच्ञाच्छलेनापहृतं स्वशरीरमात्रावशेषितं लोकत्रयं यस्य । सम्यक् प्रतिमुक्तो बद्धः अपविद्धः प्रक्षिप्तोऽपि सन् ॥ २३ ॥ बतेति खेदे । भगवान्विद्वानपि योऽसाविंद्रो यस्यैकांतेन बृहस्पतिः सचिवः सहायो यतो मंत्रार्थं वृतः सोऽपि पुरुषार्थेषु नूनं न निष्णातो न निपुणः यतः उपेंद्रेण द्वारभूतेन तमुपेंद्रं विहायात्मानं मां लोकत्रयमयाचत तं मंत्रपदं बृहस्पतिमतिहायेति वा । तस्मिन्प्रसन्ने स एव वरणीयो न लोकत्रयं यतस्तदतितुच्छमित्याह । अतिगंभीरमनंतं वयो यस्य तस्य कालस्य यन्मन्वंतरं तेन परिवृत्तं विपर्यस्तं लोकत्रयमिदं कियत् ॥ २४ ॥ प्रह्लादस्त्वेक एवार्थे निष्णात इत्याह । यस्या

तत्तस्मात्सर्वेषामात्मनि परमेश्वरे प्रतिपादितस्य भूमिदानस्य न तत्फलमिति पूर्वेणैवान्वयः । कथंभूते भगवतां नारदादीनां भक्तानामात्मदे वशीभूयात्मानमपि दत्तवति । आत्मवतां सनकादीनां ज्ञानिनामात्मतमे परमात्मानुभवरूपे इति क्रमेण प्रेमानंदब्रह्मानंददायिनस्तस्य तद्विषयानंदमात्रफलदायित्वं कथं घटेतातो बलिराजाय स्ववशीकारमेव प्रेमानंदं खलु भूमिदानस्य फलं ददौ यतः स्वभक्तस्य तस्य स्वयं द्वारपालो बभूवेति भावः ॥ २१ ॥ परमतमनूद्य खंडयति—न वा इति । यन्मायामयभोगैश्वर्यमतनुत तेनामुं बलिं प्रत्यनुजग्राहेति न किन्तुस्वसान्निध्यादिनैवेत्याह—किञ्चेति । वस्तुतस्तु—भोगैश्वर्यन्न भगवदनुकंपाफलमतो भोगैश्वर्यदानादेवेंद्रस्यैकांतिकभक्त्यभावोऽनुमीयते इत्याह—नेति । अमुष्य अमुमिंद्रम् । तथा च बलिमेवैकांतभक्तमनुजग्राहेति भावः । भोगैश्वर्यस्यांतरायत्वे पुराणांतरसंमतिमाह—तदुक्तमिति ॥ २२ ॥ बलेस्त्वैकांतिकी भक्तिर्भगवदनुग्रहप्राप्तिश्च तद्वचनेनैव व्यक्ती बभूवेत्याह—तस्यैकांतेत्यादि ॥ २३ ॥ सोऽपि बृहस्पतिरपि न निष्णातः । यस्मादिंद्रं प्रति युक्तं नोपदिदेशेति भावः । तमुपेंद्रं विहायेति । तमेव कथं नायाचत यद्ययाचिष्यत तदा किं स दातुं नापारयिष्यत् स्वप्रभुं तं याचकं कथमकरोदिति भावः । तत्राप्याशिषो विषयसुखानीति परममोहांध इव स इति भावः । स्वेष्टदेवस्य न्यूनकर्मणि प्रेरणं सर्वथानुचितमित्याह--येद्वेति । तं बृहस्पतिमतिहायेति । बृहस्पतिं प्रेष्य तेनैव मां कथं नायाचत यदि बृहस्पतिर्मामयाचिष्यत तदा तस्मै ब्राह्मणाय त्रिलोकीं किं नादास्यं कथं स्वेष्टदेवं तं याचकमकरोदिति भावः । तस्मिन् भगवति ॥ २४ ॥ 'अनुदास्यं नय मां निजभृत्यपा

तस्य महानुभावस्यानुपथममृजितकषायः को वास्मद्विधः परिहीणभगवदनुग्रह उपजिगमिषतीति ॥२६॥ अथ तस्यानुचरितमुपरिष्टाद्विस्तरिष्यते यस्य भगवान् स्वयमखिलजगद्गुरुर्नारायणो द्वारि गदापाणिरवतिष्ठते निजजनानुकंपितहृदयो येनांगुष्ठेन पदा दशकंधरो योजनायुतायुतं दिग्विजय उच्चाटितः॥२७॥ततोऽधस्तात् तलातले मयो नाम दानवेंद्रस्त्रिपुराधिपतिर्भगवता पुरारिणा त्रिलोकीशंचिकीर्षुणा निर्दग्धस्वपुरत्रयस्तत्प्रसादाल्लब्ध पदो मायाविनामाचार्यो महादेवेन परिरक्षितो विगतसुदर्शनभयो महीयते॥२८॥ ततोऽधस्तान्महातले काद्रवेयाणां सर्पाणां नैकशिरसां क्रोधवशो नाम गणः कुहकतक्षककालियसुषेणादिप्रधाना महाभोगवंतः पतत्रिराजाधिपतेः पुरुषवाहादनवरतमुद्विजमानाः स्वकलत्रापत्यसुहृत्कुटुंबसंगेन क्वचित् प्रमत्ता विहरंति ॥ २९ ॥ ततोऽधस्तात् रसातले दैतेया दानवाः पणयो नाम निवातकवचाः कालेया हिरण्यपुरवासिन इति विबुधप्रत्य नीका उत्पत्त्या महौजसो महासाहसिनो भगवतः सकललोकानुभावस्य हरेरेव तेजसा प्रतिहतबलावलेपा बिलेशया इव वसंति ॥ ये वै सरम येंद्रदूत्या वाग्भिर्मंत्रवर्णाभिरिंद्राद् बिभ्यति ॥ ३० ॥

नुदास्यमिति । स्वपितरि उपरते मृते सति स्वपित्र्ये पदं भगवता दीयमानमपि भगवतः खलु परमन्यदिति कृत्वा न तु जग्राहेत्यर्थः ॥ २५ ॥ ननु त्वमतिवीरः कुतस्तमेव बहु मन्यसे तत्राह । तस्यानुपथमनुवर्त्म । अमृजिता अक्षीणाः कषाया रागादयो यस्य । परिहीणो भगवदनुग्रहो यस्य । स को वा उपगंतुमिच्छतीति ॥ २६ ॥ अथ शुकोक्तिः । नन्वेवंभूतश्चेद्बलिस्तर्हि तस्यैव चरितं विस्तरेण कथ्यतां तत्राह । तस्य बलेरनुचरितमुपरिष्टादष्टमे विस्तारिष्यते । यस्य द्वार्यवतिष्ठते निजजनेष्वनुकंपितं कृतानुकंपं हृदयं यस्य । द्वारपालकर्म दर्शयति । येन श्रीनारायणेन बलेर्द्वारि विशन्दशकंधर उच्चाटितः । केन । पदा तत्राप्यंगुष्ठेनैव ॥ २७ ॥ यथा हरिणा स्वभक्तो बलिः सुतले निहितः सुखमास्ते एवं महादेवभक्तोऽपि मयस्तलातले सुखमास्त इत्याह–तत इति । लब्धं पदं स्थानं येन । महीयते पूज्यते ॥ २८ ॥ नैकशिरसामनेकफणानां गणोऽस्ति । एतत्प्रपंचयति । कुहकेति । महाभोगवंतो महाकायाः । पुरुषवाहाद्धरेर्वाहनात् ॥ २९ ॥ विबुधप्रत्यनीका देवशत्रवः । सकलेष्वपि लोकेष्वनुभावो

र्श्वम्'' इत्यनेन तद्दास्यदास्यम् । स्वपित्र्यं त्रैलोक्यराज्यं यदुत अकुतोभयं पदं मोक्षं तत्तन्न वव्रे कथं भगवतः परमन्यदिति कृत्वा तदंशाभासतदंशमात्रात्मकत्वात्तयोः । कदैवं व्यवहृतमित्याकांक्षायामाह–भगवतेति । इत्यर्थ इति । राज्याभिनिवेशाद्भगवदनुरागादि नश्येदिति भावः ॥ २५ ॥ अत्राक्षिपति–नन्विति । तस्य प्रह्लादस्य न कोपीति भावः ॥ २६ ॥ विशन् दिग्विजयावसरे । उच्चाटितः प्रक्षिप्तः । अयुतायुतं कोटिः । यत्तूत्तरकांडे वाल्मीकीये उक्तं 'नैनं हन्म्यधुना पापं चिंतयित्वेति रूपधृक् । अंतर्द्धानं गतो राम ब्रह्मगः प्रियकाम्यया ॥ न च तं पुरुषं तत्र पश्यते रजनीचरः । हर्षान्नादं विमुञ्चन्वै निष्क्रामद्वरुणालयात् ॥ येनैव स प्रविष्टः स पथा तेनैव निर्ययौ'' इति तत्कल्पांतराभिप्रायमिति ध्येयम् ॥ २७ ॥ ततः सुतलात् ॥ २८ ॥ ततः तलातलात् । पतत्रिराजा हंसादयस्तेषामधिपतेर्गरुडात् । अनवरतं सदा । उद्विजमाना भीताः । क्वचिन्महातलप्रदेशेषु ॥ २९ ॥ ततो महातलात् । पण्यादयो दैत्यगणभेदाः । निगूढां निह्नुताम् । गां धेनुम् । हे पणयो यूयमिंद्रेण युधि हताः शयध्वं शयनं कुरुध्वमिति श्रुतिपदार्थः । बिभ्यति सभया भवंतीति ॥ ३० ॥

ततोऽधस्तात् पाताले नागलोकपतयो वासुकिप्रमुखाः शंखकुलिकमहाशंखश्वेतधनंजयधृतराष्ट्रशंखचूडकंबलाश्वतरदेवदत्तादयो महाभोगिनो महामर्षा निवसंति येषामु ह वै पंचसप्तदशशतसहस्रशीर्षाणां फणासु विरचिता महामणयो रोचिष्णवः पातालविवरतिमिरनिकरं स्वरोचिषा विधमंति ॥ ३१ ॥ इति श्रीभा० म० पंचम० अतलादिबिलवर्णनं नाम चतुर्विंशतितमोऽध्यायः ॥ २४ ॥ श्रीशुक उवाच ॥ तस्य मूलदेशे त्रिंशद्यो जनसहस्रांतर आस्ते यां वै कला भगवतस्तामसी समाख्याताऽनंत इति सात्वतीया द्रष्टृदृश्ययोः संकर्षणमहमित्यभिमानलक्षणं यं संकर्षणमित्याचक्षते ॥ १ ॥ यस्येदं क्षितिमंडलं भगवतोऽनंतमूर्तेः सहस्रशिरस एकस्मिन्नेव शीर्षणि ध्रियमाणं सिद्धार्थ इव लक्ष्यते ॥ २ ॥ यस्य ह वा इदं काले नोपसंजिहीर्षतोऽमर्षविरचितरुचिरभ्रमद्भ्रुवोरंतरेण सांकर्षणो नाम रुद्र एकादशव्यूहस्त्र्यक्षस्त्रिशिखं शूलमुत्तंभयन्नुदतिष्ठत् ॥ ३ ॥

यस्य तस्यैव तेजसा सुदर्शनेन प्रतिहतो बलावलेपो वीर्यमदो येषाम् । बिलेशयाः सर्पा इव इंद्रदूत्या प्रत्युक्ताभिर्मंत्ररूपाभिर्वाग्भिः एवं हि वैदिकमाख्यानम् । पणिभिरसुरै र्निगूढां गामन्वेष्टुं सरमां देवशुनीमिंद्रेण प्रहितां संधिमिच्छंतः पणयः प्राहुः । किमिच्छंती सरमेत्यादि । सा च संधिमनिच्छंतींद्रस्तुतिपूर्वकं तान्प्रति परुषमाह । हता इंद्रेण पणयः शयध्वमित्यादि । ते च तच्छ्रुत्वा बिभ्यतीति ॥ ३० ॥ महाभोगिनो महाफणाः । महानमर्षः क्रोधो येषाम् । पंचादिसंख्यानि शीर्षाणि येषाम् । शीर्ष्णामिति वक्तव्ये शीर्षाणामित्यार्षः ॥ ३१ ॥ इति श्री० भा० पंचमे टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ छ ॥ ॥ पंचविंशे ततोऽधस्तादाह शेषस्य संस्थितिम् ॥ संजिहीर्षोरिदं काले यत्र रुद्रसमुद्भवः ॥ १ ॥ तस्य पातालस्य । कोऽसावनंतः । सात्त्वतीयाः सात्वततंत्रनिष्ठाश्चतुर्व्यूहोपासने यं संकर्षणमित्याचक्षते । तथाख्याने हेतुः । द्रष्टृदृश्ययोः सम्यक्कर्षणमेकीकरणं येन । तत्कुतः । अहमित्यभिमानो लक्षणं चिह्नमधिष्ठातुर्यस्य । अहंकाराधिष्ठानेन द्रष्टृदृश्यसंकर्षणात्संकर्षण इत्यर्थः ॥ १ ॥ अनंतत्वमाह । यस्येदमिति । यच्छब्दानां स एष भगवाननंत इत्युत्तरेणान्वयः ॥ २ ॥ तामसत्वमाह । यस्येदं विश्वमुपसंहर्तुमिच्छतः अमर्षेण विरचिते कुटिलीकृते रुचिरीकृते भ्रमंत्यौ भ्रुवौ तयोर्मध्ये उत्तंभयन्नुन्नमयन् ॥ ३ ॥

ततो रसातलात् । आर्षः “शीर्षंश्छंदसि” इति भगवान्पाणिनिः ॥ ३१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ ततः पातालात् । यत्र यतः ( १ ) तस्य पातालस्य । तामसी तमःकार्यसंहारप्रवर्त्तयित्री न तु तमोमयी ‘मूर्तिं नः कृपया बभार सत्त्वं संशुद्धम्’ इत्यादिविरोधात् । द्रष्टृदृश्ययोर्भोक्तृभोग्ययोः । तदेकीकरणं तच्च कर्षणमहमस्य भोक्ता इदं मे भोग्यमित्यभिमानलक्षणमेव । इत्यर्थ इति । अभिमंतुरहंताममतयोः शुद्ध्यर्थं यं ध्यायंतीति भावः ॥ १ ॥ २ ॥ उपसंजिहीर्षत इति । यदैवेदं जगदाधिक्येन संहर्तुमिच्छत्तदैव मायायास्तदधीनत्वात्तदयितमःकार्यरोषात्मको रुद्रो भ्रूमध्ये प्रादुरभूत् एकादशव्यूह एकादशधाविभक्तरूपविशेषः । अमर्षविरचित इति रुद्रविशेषणं सुलोपं आर्षं इति विश्वनाथः । यथा सिसृक्षतोऽद्वितीयपुरुषस्य नाभिमध्ये रजोगुणात्मकं पद्मं प्रादुर्भवति तद्वत् ॥ ३ ॥

यस्यांघ्रिकमलयुगलारुणविशदनखमणिषडमंडलेष्वहिपतयः सह सात्वतर्षभैरेकांतभक्तियोगेनावनमंतः स्ववदनानि परिस्फुरत्कुंडलप्रभामंडितगं डस्थलान्यतिमनोहराणि प्रमुदितमनसः खलु विलोकयंति ॥ ४ ॥ यस्यैव हि नागराजकुमार्य आशिष आशासानाश्चार्वंगवलयविलसितविशद विपुलधवलसुभगरुचिरभुजरजतस्तंभेष्वगरुचंदनकुंकुमपंकानुलेपेनावलिंपमानास्तदभिमर्शनोन्मथितहृदयमकरध्वजावेशरुचिरललितस्मितास्त दनुरागमदमुदितमदविघूर्णितारुणकरुणाऽवलोकनयनवदनारविंदं सव्रीडं किल विलोकयंति ॥ ५ ॥ स एव भगवाननंतोऽनंतगुणार्णव आदि देव उपसंहृतामर्षरोषवेगो लोकानां स्वस्तय आस्ते ॥ ६ ॥ ध्यायमानः सुरासुरोरगसिद्धगंधर्वविद्याधरमुनिगणैरनवरतमदमुदितविकृत विह्वललोचनः सुललितमुखरिकाऽमृतेनाप्यायमानः स्वपार्षदविबुधयूथपतीनपरिम्लानरागनवतुलसिकामोदमध्वासवेन माद्यन्मधुकरव्रातमधु रगीतश्रियं वैजयंतीं स्वां वनमालां नीलवासा एककुंडलो हलककुदि कृतसुभगसुंदरभुजो भगवान् माहेंद्रो वारणेंद्र इव कांचनीं कक्षा मुदारलीलो बिभर्ति ॥ ७ ॥

सुभगत्वमाह । यस्यांघ्रिकमलयुगलेऽरुणा विशदा नखा एव मणयस्तेषां षंडः समूहस्तस्य मंडलेषु । परिस्फुरतां कुंडलानां प्रभया मंडितानि गंडस्थलानि येषु तानि ॥ ४ ॥ चारुण्यंगवलये विलसिताश्च ते विशदाश्च विपुलाश्च धवलाश्च सुभगाश्च रुचिराश्च भुजा एव रजतस्तंभास्तेष्वगुरुचन्दनकुंकुमानां पंक एवानुलेपस्तेनावलिंपमानाः तेषामभिमर्शनेनो न्मथिते हृदये मकरध्वजस्यावेशेन रुचिरं च ललितं च स्मितं यासां ताः । तस्यानुरागेण मदेन च मुदितं च तन्मदेन विघूर्णिते प्रचलिते च आ ईषदरुणे करुणावलोकयुक्ते नयने यस्मिंस्तद्वदनारविंदं विलोकयंति ॥ ५ ॥ अमर्षोऽसहनं रोषः क्रोधः उपसंहृतस्तयोर्वेगो येन ॥ ६ ॥ उपासनार्थमाह । सुरादिभिर्ध्यायमानश्चिंत्यमानः । अनवरतं मदेन मुदितश्चासौ विकृतविह्वललोचनश्च । सुललितेन मुखरिकामृतेन वचनामृतेन स्वपार्षदान्विबुधयूथपानां पतींश्चाप्यायमानो हर्षयन् नीले वाससी यस्य । एकमेव कुंडलं यस्य । हलस्य ककुदि पृष्ठे कृतो न्यस्तः सुभगश्च सुंदरश्च भुजो येन । उदारा लीला यस्य सः । न परिम्लानो रागः कांतिर्यस्यास्तस्या नवतुलसिकाया आमो

सुभगत्वं मनोहरत्वम् । यस्य शेषस्य ॥४॥ अंगवलये अगमंडले । विशदाः शुद्धाः । विपुला विस्तृताः । धवलाः श्वेताः । सुभगा मनोहराः । रुचिरा दीप्ताः । उन्मथिते क्षुभिते । रुचिरं भावसूचकम् । ललितं शोभनम् । तस्य शेषस्य । अनुरागेण भक्तविषयकेण ; मदेन हर्षेण ॥ ५ ॥ उपसंहृतेति । संप्रति स्थितिकाले रोषस्यानौचित्यादिति भावः ॥ ६ ॥ कक्षाम् उदरबन्धम् । "कक्षा बृहतिकायां स्यात्कांच्यां मध्येभबंधने । हर्म्यादीनां

अथेदानीं प्रतिषिद्धलक्षणस्याधर्मस्य तथैव कर्तुः श्रद्धया वैसादृश्यात् कर्मफलं विसदृशं भवति ॥ या ह्यनाद्यविद्यया कृतकामानां तत्परिणामलक्षणाः सृतयः सहस्रशः प्रवृत्तास्तासां प्राचुर्येणानुवर्णयिष्यामः ॥३॥ राजोवाच॥ नरका नाम भगवन् किं देशविशेषा अथ वा बहिस्त्रिलोक्या आहोस्विदंतराल इति ॥ ४ ॥ ऋषिरुवाच ॥ अंतराल एव त्रिजगत्यास्तु दिशि दक्षिणस्यामधस्ताताद् भूमेरुपरिष्टाच्च जलाद्यस्यामग्निष्वात्तादयः पितृगणा दिशि स्वानां गोत्राणां परमेण समाधिना सत्या एवाशिष आशासाना निवसंति ॥ ५ ॥ यत्र ह वाव भगवान् पितृराजो वैवस्वतः स्वविषयं प्रापितेषु स्वपुरुषैर्जंतुषु संपरेतेषु यथाकर्मावद्यं दोषमेवानुल्लंघितभगवच्छासनः सगणो दमं धारयति ॥ ६ ॥

सुखित्वं दुःखित्वं च तामस्या दुःखित्वं मूढत्वं च । तत्रापि तासां श्रद्धानां तारतम्यात्सुखादितारतम्यं सर्वेषामित्यर्थः ॥ २ ॥ प्रतिषिद्धं प्रतिषेधः स एव लक्षणं प्रमाणं यस्याधर्मस्य कर्तुः श्रद्धावैसादृश्यं तमसस्तारतम्यात् तत्रापि कारणं दर्शयन्नाह । अनाद्यविद्याकृतानां कामानां याः सृतयो नरकास्तासां ताः अथेदानीं ताः प्राचुर्येणानुवर्णयिष्याम इत्यन्वयः ॥ ३ ॥ किं भूमावेव देशविशेषाः त्रिलोक्या ब्रह्मांडाद्बहिर्वा आवरणेषु मध्येंतराले वा भूमिव्यतिरिक्ते ॥ ४ ॥ ५ ॥ कर्मदोषमनतिक्रम्य दोषमेव दमं

त्सर्वदैव सात्त्विकश्रद्धावानेव तिष्ठति राजसतामसश्रद्धावानेव वा अतः कालभेदेन सर्वविधस्यैव जीवस्य सर्वविधा गतयः ॥ २ ॥ तत्र शास्त्रविहितस्य धर्मस्य फलभूतानि भौमदिव्यबिलस्वर्गसुखानि दर्शितान्यतएवाधर्मस्यापि फलभूतानि नरकदुःखान्यपि विवक्षितव्यानीत्यत आह–अथेति । प्रतिषिद्धं प्रतिषेधो ''ब्राह्मणं न हन्यात्'' इत्येवंरूपो लक्षणं प्रमाणं यस्य तस्य । ''प्रमाणे नाम्नि चिह्ने च स्वरूपे ना न लक्षणम्'' इति निरुक्तिः । तथैवेति । धर्मस्य कर्तुर्यथा तथैवाधर्मस्यापि कर्तुरित्यर्थः । श्रद्धाया वैसादृश्यादिति । श्रद्धावैसादृश्येपि तमस्तारतम्यमेव कारणं तथाहि–प्रमादेनाधर्मकरणात्तमसोऽल्पत्वं ज्ञानेन मध्यमत्वं तथापि नास्तिकत्वेन पूर्णत्वं ज्ञेयं तत्रापि तमस्त्रैविध्यस्यापि कारणं दर्शयन्नाह–या इति । अनाद्यविद्यया संबंधो जीवस्य कदा कथं वेति वक्तुमशक्यम् । अनादिर्या तमआदित्रैविध्यमय्यविद्या तया कृतानां जीवसंबंधित्वेनोपपादितानां कामानां वासनानां याः सृतयः कीदृश्यस्तेषां कामानां परिणामलक्षणास्तासां मध्ये प्राच्युर्य्येण प्राधान्येन ॥ ३ ॥ भगवन्निति । सर्वज्ञत्वाद्वक्तुमर्हसीति भावः ॥ ४ ॥ भारतखंडाद्दक्षिणसूत्रपाते भूमेः सप्तविवरवत्या अधः । जलाद्भूर्भेदसंज्ञात् । अपि च सप्तेति न्यायात् । अस्यार्थः–अपि च सप्तरौरवादयो नरकाः पापफलभूमित्वेन स्मर्य्यंते पौराणिकैस्तान्यपि नः प्राप्नुवंति न चंद्रलोकमिति सप्तेत्युपलक्षणमन्येषाम् ''वैवस्वतं संगमनं जनानाम्'' इत्यादि ''न संपरायः प्रतिभाति बालं प्रमाद्यंतं वित्तमोहेन मूढम् । अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे'' इत्यादि च काठकं वाक्यं यमलोकगतौ लिंगम् । आदिना सोमसदादिग्रहः । तदुक्तं मनुना–''विराट्सुताः सोमसदः साध्यानां पितरः स्मृताः । अग्निष्वात्तास्तु देवानां मारीच्या लोकविश्रुताः ॥ दैत्यदानवयक्षाणां गंधर्वोरगरक्षसाम् । सुपर्णकिन्नराणाञ्च स्मृता बर्हिषदोऽत्रिजाः ॥ सोमपा नाम विप्राणां क्षत्रियाणां हविर्भुजः । वैश्यानामाज्यपा नाम शूद्राणां तु सुकालिनः ॥ सोमपास्तु कवेः पुत्रा हविष्मंतोंगिरःसुताः । पुलस्त्यस्याज्यपाः पुत्रा वशिष्ठस्य सुकालिनः ॥'' इति । स्वानां गोत्राणामिति । तत्तयाभिमानादेव तत एव यत्किञ्चिच्छांतिर्भवतीति सत्या आशिष इत्युक्तम् । तेते तैस्तैरिहार्चिता अर्चकानामैहिकसुखानि भोजयित्वा यमलोकगतमपि धर्मराजप्रार्थनया सुखयंतीति भावः । तदुक्तं मार्कंडेये–''तृप्यंतु तस्मिन् पितरः समस्ता इच्छावतां ये प्रदिशंति कामान् । सुरत्वमिंद्रत्वमतोधिकं वा सुतान्पशून्स्वानि बलं गृहाणि ॥'' इत्यादिरुचिस्तुतिं श्रुत्वा पितृभि रप्युक्तं ''तस्य तुष्टा वयं भोगानात्मज्ञानं तथैव च । शरीरारोग्यमर्थं च पुत्रपौत्रादिकं तथा ॥'' दद्म इति शेष इति । वा परमेन समाधिना भगवन्निष्ठया परमश्वासाविनश्वेति परमेनस्तत्र ।समंतात्समाधिरैकाग्र्यंपरमेन समाधिस्तेनैकपदमिदम् ॥ ५ ॥ यत्र येषु नरकेषु स्वविषयं स्वदेशं ''विषयस्तूपवर्त्तनम्'' इत्यमरः । कर्मावद्यं

तत्र हैके नरकानेकविंशतिं गणयंति अथ तांस्ते राजन्नामरूपलक्षणतोऽनुक्रमिष्यामः ॥ तामिस्रोंधतामिस्रो रौरवो महारौरवः कुंभीपाकः कालसूत्रमसिपत्रवनं सूकरमुखमंधकूपः कृमिभोजनः संदंशस्तप्तसूर्मिर्वज्रकंटकशाल्मली वैतरणी पूयोदः प्राणरोधो विशसनं लालाभक्षः सारमेयादनमवीचिरयःपानमिति ॥ किं च क्षारकर्दमो रक्षोगणभोजनः शूलप्रोतो दंदशूकोऽवटनिरोधनः पर्यावर्तनः सूचीमुखमित्यष्टाविंशतिनरका विविधयातनाभूमयः ॥ ७ ॥ तत्र यस्तु परवित्तापत्यकलत्राण्यपहरति स हि कालपाशबद्धो यमपुरुषैरतिभयानकैस्तामिस्रे नरके बलान्निपात्यते ॥ अनशनानुदपानदंडताडनसंतर्जनादिभिर्यातनाभिर्यात्यमानो जंतुर्यत्र कश्मलमासादित एकदैव मूर्च्छामुपयाति तामिस्रप्राये ॥ ८ ॥ एवमेवांधतामिस्रे यस्तु वंचयित्वा पुरुषं दारादीनुपयुंक्ते यत्र शरीरी निपात्यमानो यातनास्थो वेदनया नष्टमतिर्नष्टदृष्टिश्च भवति यथा वनस्पतिर्वृश्च्यमानमूलस्तस्मादंधतामिस्रं तमुपदिशंति ॥ ९ ॥ यस्त्विह वा एतदहमिति ममेदमिति भूतद्रोहेण केवलं स्वकुटुंबमेवानुदिनं प्रपुष्णाति स तदिह विहाय स्वयमेव तदशुभेन रौरवे निपतति ॥ १० ॥ ये त्विह यथैवामुना विहिंसिता जंतवः परत्र यमयातनामुपगतं तत एव रुरवो भूत्वा तथा तमेव विहिंसंति तस्माद्रौरवमित्याहुः रुरुरिति सर्पादतिक्रूरसत्त्वस्यापदेशः ॥ ११ ॥ एवमेव महारौरवो यत्र निपतितं पुरुषं क्रव्यादा नाम रुरवस्तं क्रव्येण घातयंति यः केवलं देहंभरः ॥ १२ ॥

पापफलं दंडं करोति । उल्लंघितं भगवच्छासनं येन ॥ ६ ॥ मतांतरेणाष्टाविंशतिमाह । किं चेति ॥७॥ पापभेदेन च तत्तन्नरकयातनाभेदं प्रपंचयति तत्र यस्त्वित्यादिना । यात्यमानः पीड्यमानः । एकदैव तदैव ॥८॥ पुरुषं पतिं वंचयित्वा ॥ ९ ॥ एतच्छरीरमहमिति इदं धनादि ममेति मत्वा स्वं च कुटुंबमेव पुष्णाति । तेनाशुभेन॥ १०॥ रुरवो भूत्वेति कर्माण्येव तथा परिणामं प्राप्येत्यर्थः । अतिक्रूरस्य भारशृंगाख्यस्य सत्त्वस्यापदेशः संज्ञा ॥ ११ ॥ क्रव्येण निमित्तेन मांसार्थमित्यर्थः ॥ १२ ॥

कर्मदोषमनतिक्रम्य दोषमेव दोषरूपमेव । तादृशविभीषिकयापि जीवान्भगवदंतर्मुखीकर्तुमिति भावः । दोषमेव दमरूपेण परिणमयतीति संदर्भः । अनुलंघितेति । भगवानत्र ब्रह्मा । यद्वा—भगवान् वेद इति । "वेदो नारायणः साक्षात्" इति षष्ठे वक्ष्यमाणत्वात् ॥ ६ ॥ तत्र हेति सप्त प्रधानाः संतीति स्मृतिप्रसिद्धिं द्योतयति । यद्यपि प्रधानाः सप्तैव तथाप्येके पौराणिकाः । अथातस्तान्नरकांस्ते तुभ्यम् । राजन्निति । राज्ञस्त्वावश्यं धर्ममार्गे स्थातव्यं स्थाप्याश्च स्वप्रजा अतस्तुभ्यं श्रावयिष्यामीति भावः । केषांचिन्मतेऽन्येपि सप्तातीव भयदा नरकाः संतीत्याह—किंचेति । 'यातनास्तीव्रवेदनाः' इत्यभिधानात् ॥ ७ ॥ तत्र तेषु मध्ये । तामिस्रबहुले आदिना कुदृष्ट्यादिग्रहः ॥ ८ ॥ वंचयित्वा इयं मे धर्मभगिनीयं मे शिष्येत्यादिवंचनां रचयित्वा यो भुंक्ते स एवमेवांधतामिस्रे निपात्यत इति पूर्वेणान्वयः । यत्र नरके । यस्मान्नष्टदृष्टिर्भवति तस्मादंधतामिस्रमिति ॥ ९ ॥ तत् कुटुंबम् ॥ १० ॥ इत्यर्थ इति । तत्तद्धिंसाजातकर्माण्येव रुरुतां प्राप्नुवंतीति भावः । रुरुशब्दस्य स्वयं मुनिनैव टीकाविधानाल्लोकेष्वप्रसिद्धोऽयं जीवविशेषः ॥ ११ ॥ केवलं भूतद्रो

यस्त्विह वा उग्रः पशून् पक्षिणो वा प्राणत उपरंधयति तमपकरुणं पुरुषादैरपि विगर्हितममुत्र यमानुचराः कुंभीपाके तप्ततैले उपरंधयंति ॥१३॥ यस्त्विह पितृविप्रब्रह्मध्रुक् स कालसूत्रसंज्ञके नरकेऽयुतयोजनपरिमंडले ताम्रमये तप्तखले उपर्यधस्तादग्न्यर्काभ्यामतितप्यमानेऽभिनिवेशितः क्षुत्पिपासाभ्यां च दह्यमानांतर्बहिःशरीर आस्ते शेते चेष्टतेऽवतिष्ठति परिधावति च यावंति पशुरोमाणि तावद्वर्षसहस्राणि ॥ १४ ॥ यस्त्विह वै निजवेदपथादनापद्यपगतः पाखंडं चोपगतस्तमसिपत्रवनं प्रवेश्य कशया प्रहरंति तत्र हासादित इतस्ततो धावमान उभयतोधारैस्तालवनासिपत्रैश्छिद्यमानसर्वांगो हा हतोऽस्मीति परमया वेदनया मूर्छितः पदेपदे निपतति स्वधर्महा पाखंडानुगतं फलं भुंक्ते ॥ १५ ॥ यस्त्विह वै राजा राजपुरुषो वा अदंड्ये दंडं प्रणयति ब्राह्मणे वा शरीरदंडं स पापीयान् नरकेऽमुत्र सूकरमुखे निपतति तत्रातिबलैर्विनिष्पिष्यमाणावयवो यथैवेहेक्षुखंड आर्त्तस्वरेण स्वनयन् क्वचिन्मूर्छितः कश्मल उपगतो यथैवेहादृष्टदोषा उपरुद्धाः ॥ १६ ॥ यस्त्विह वै भूतानामीश्वरोपकल्पितवृत्तीनामविविक्तपरव्यथानां स्वयं पुरुषोपकल्पितवृत्तिर्विविक्तपरव्यथो व्यथामाचरति स परत्रांधकूपे तदभिद्रोहेण निपतति तत्र हासौ तैर्जंतुभिः पशुमृगपक्षिसरीसृपैर्मशकयूकामत्कुणमक्षिकादिभिर्ये केचाभिद्रुग्धास्तैः सर्वतोऽभिद्रुह्यमाणस्तमसि विहतनिद्रानिर्वृतिरलब्धावस्थानः परिक्रामति यथा कुशरीरे जीवः ॥ १७ ॥

प्राणतः सजीवान् । उपरंधयति पचति । अपकरुणं निष्कृपम् ॥ १३ ॥ खले समे देशे॥ १४ ॥ स्वधर्महा धर्मत्यागी॥१५॥स्वनयन् रुदन्कश्मलं मोहमुपगतो भवति । दृष्टदोषास्तेनोपरुद्धाः संतो यथा कश्मलमुपगतास्तद्वत् ॥ १६ ॥ ईश्वरेणोपकल्पिता मनुष्यरक्तपानादिलक्षणा वृत्तिर्येषां मत्कुणादीनाम् । न विविक्ता विज्ञाता परव्यथा

हेणेति शेषः ॥ १२ ॥ 'कुंभी तूखाकट्फलयोः' इत्यभिधानात् । कुंभीषु पच्यंते यत्र स कुंभीपाकः । उखा कटाहभेदः ॥ १३ ॥ ब्रह्म वेदः । "खलं भूस्थानकल्केषु खलो गर्त्तेऽधमेंबरे" इत्यभिधानात् । तप्तगर्त्ते इत्यप्यर्थः । अधस्तादग्निरुपर्यर्कः । यद्यप्यर्कस्तत्र नास्ति तथापि पापिनां पीडार्थमन्य एव तत्र कल्पितोऽस्तीति ज्ञेयम् । न केवलं पित्रादिध्रुगेव किन्तु पश्वादिहिंसकोऽप्येवमित्याह—यावंतीति ॥ १४ ॥ निजवेदपथात्स्वस्य विहितमार्गात् । अनापदीत्युक्तेरापदि किञ्चिदनुग्रहोऽस्तीति भावः । पाखंडं वेदविरुद्धं वेदाविहितमाधुनिकैर्निजेच्छया स्वपूजार्थं कल्पितशास्त्राभासबोधितमार्गमित्यर्थः । "कशाश्वस्य च ताडनी । प्रोक्ता कशा भूमिर्हिंसाशणतंत्वंशुषु" इति निरुक्तिः । तत्र ह असिपत्रवने । असौ पाखंडानुगः । उभयतोधारैरुभयतस्तीक्ष्णाग्रैः । "धारा तीक्ष्णाग्रपानीयवेगाश्वगतिपञ्चके" इति कोशात् । पाखंडानुगतं पाखंडानुकूलम् । क्वचित्प्रथमांतोऽपि पाठः ॥ १५ ॥ अदंड्ये दंडाऽनर्हे । शरीरदंडस्ताडनांगच्छेदादिः । तत्र नरके । अतिबलैः यमपुरुषैः । निष्पिष्यमाणाश्चूर्णीक्रियमाणा अवयवा अंगानि यस्य । यथेक्षुपीडनयंत्रे इक्षुखंड इक्षूणां खंडः समूहः पीडनकाष्ठमध्ये दत्त्वापरत्रातिबलैराकृष्यते सचूर्णितश्च भवति तथेति ॥ १६ ॥ आदिना दंशमशकादिग्रहः । पुरुषेण श्रीहरिणा । तेषां मत्कुणादीनामभिद्रोहेण हिंसया ।

यस्त्विह वा असंविभज्याश्नाति यत्किंचनोपनतमनिर्मितपंचयज्ञो वायससंस्तुतः स परत्र कृमिभोजने नरकाधमे निपतति तत्र शतसहस्रयोजने कृमिकुंडे कृमिभूतः स्वयं कृमिभिरेव भक्ष्यमाणः कृमिभोजनो यावत्तदप्रत्ताप्रहुतादोऽनिर्वेशमात्मानं यातयते ॥ १८ ॥ यस्त्विह वै स्तेयेन बलाद्वा हिरण्यरत्नादीनि ब्राह्मणस्य वापहरति अन्यस्य वाऽनापदि पुरुषस्तममुत्र राजन् यमपुरुषा अयस्मयैरग्निपिंडैः संदंशैस्त्वचि निष्कुषंति ॥ ॥ १९ ॥ यस्त्विह वा अगम्यां स्त्रियमगम्यं वा पुरुषं योषिदभिगच्छति तावमुत्र कशया ताडयन्तस्तिग्मया सूर्म्या लोहमय्या पुरुषमाऽलिंगयंति स्त्रियं च पुरुषरूपया सूर्म्या ॥ २० ॥ यस्त्विह वै सर्वाभिगमस्तममुत्रनिरये वर्तमानं वज्रकंटकशाल्मलीमारोप्य निष्कर्षंति ॥ २१ ॥ ये त्विह वै राजन्या राजपुरुषा वा अपाखंडा धर्मसेतून् भिंदंति ते संपरेत्य वैतरण्यां निपतंति भिन्नमर्यादास्तस्यां निरयपरिखाभूतायां नद्यां यादोगणैरितस्ततो भक्ष्यमाणा आत्मना न वियुज्यमानाश्चासुभिरुह्यमानाः स्वाघेन कर्मपाकमनुस्मरंत उपतप्यंतो विण्मूत्रपूयशोणितकेशनखास्थिमेदोमांसवसावाहिन्यामुपतप्यंते ॥ २२ ॥

यैरविवेकिभिस्तेषाम्। पुरुषेण ब्राह्मणादिभावेन विधिनिषेधपूर्वकमुपकल्पिता वृत्तिर्यस्य। विविक्ता परव्यथा येन विवेकिना। अभिद्रुग्धा हिंसिता विहिता निद्रारूपा निर्वृतिर्यस्य। न लब्धमवस्थानं येन स तमसि परिक्रामति ॥ १७ ॥ यत्किंचन भक्ष्यादिकमुपनतं प्राप्तं तदसंविभज्य। न निर्मिताः पंचयज्ञा येन अत एव वायसैः संस्तुतः समत्वेन वर्णितः। कृमिभोजनः कृमीनेव भुंजानः यावत्तत् यावंति योजनानि तत्कृमिकुंडं तावंति वर्षाणि यावद्वा तत्पातकमित्यर्थः। अप्रत्तमसंविभक्तमप्रहुतं चात्तीति तथा सः। अनिर्वेशमकृतप्रायश्चित्तम् ॥ १८ ॥ निष्कुषंति छिंदंति ॥ १९ ॥ तिग्मया तप्तया। सूर्म्या प्रतिमया ॥ २० ॥ सर्वाभिगमः पश्वाद्युपगंता ॥ २१ ॥ अपाखंडाः सत्कुलीनाः

असौ द्रोग्धा तैस्तैर्यूकादिभिः। कुशरीरे कुष्ठादिदूषितदेहे ॥ १७ ॥ अत एवानिर्मितपंचयज्ञत्वादेव। वायसतुल्यैराचारहीनैः। संस्तुतो वाऽसंविभज्य बालवृद्धादिभ्योऽदत्त्वैव। इत्यर्थ इति। प्रकर्षेणादायीति प्रत्तं न प्रत्तमप्रत्तमसंविभक्तं च अप्रहुतमाहुतिवर्जितं चात्तीति तथा। "निर्वेशस्तु पुमान्भोगे वेतने मूर्छनेऽपि च" इति मेदिनी। वेतनशब्देनेह प्रायश्चित्तं लक्ष्यते। यातयति पीडयति ॥ १८ ॥ अन्यस्य नापदीत्युक्तेर्ब्राह्मणस्यापद्यपीत्यायातम्। संदंशैर्यंत्रविशेषैः तप्तलोहादिग्रहणार्थं व्याघ्रमुखो द्विफालो लोहयंत्रः संदंशः। निष्कुषंति स्पर्शयंति ॥ १९ ॥ अगम्यामुद्वाहविधिग्रहणवर्जितां सर्वाम्। अगम्यं पाणिग्रहीतारं विना पुरुषमात्रमित्यर्थः। "अगम्यः पुरुषो नार्या हस्तग्राहं विनाऽखिलः। नार्यगम्या तथा सर्वा विना पाणिगृहीतिकाम् ॥" इति संहितोक्तेः। "तिग्मं तीक्ष्णे च तप्ते च सूर्मी पुत्तलिका स्मृता", इति चाभिधानचिंतामणिः ॥ २० ॥ सर्वाभिः स्त्रीभिरभिगमो मैथुनं यस्य स तथा गर्दभ्यादिष्वपि रमणशीलः। वज्रवत्कंटकानि यस्याः शाल्मल्यास्ताम्। निष्कर्षंति यथा कंटकैस्तद्देहोऽतिपीडितः स्यात्तथोपरिभागतोऽधोभाग आकर्षंति ॥ २१ ॥ द्वितीयांतपाठेऽपाखंडानिति पाठे। धर्मसेतून् देवब्राह्मणगोवृत्तिरूपान्। तदर्चनरूपान्वा भिंदंति छिंदंति। अपाखंडानित्युक्तेः पाखंडवृत्त्यादिच्छेदे दोषाभाव एवासूचीति। वितरणं

ये त्विह वै वृषलीपतयो नष्टशौचाचारनियमास्त्यक्तलज्जाः पशुचर्यां चरंति ते चापि प्रेत्य पूयविण्मूत्रश्लेष्ममलापूर्णार्णवे निपतंति तदेवा
तिबीभत्सितमश्नंति ॥ २३ ॥ ये त्विह वै श्वगर्दभपतयो ब्राह्मणादयो मृगयाविहारा अतीर्थे च मृगान् निघ्नंति तानपि संपरेताँल्लक्ष्यभूतान्
यमपुरुषा इषुभिर्विध्यंति ॥ २४ ॥ ये त्विह वै दांभिका दंभयज्ञेषु पशून् विशसंति तानमुष्मिँल्लोके वैशसे नरके पतितान् निरयपतयो
यातयित्वा विशसंति ॥ २५ ॥ यस्त्विह वै सवर्णां भार्यां द्विजो रेतः पाययति काममोहितस्तं पापकृतममुत्र रेतःकुल्यायां पातयित्वा
रेतः संपाययंति ॥ २६ ॥ ये त्विह वै दस्यवोऽग्निदा गरदा ग्रामान् सार्थान् वा विलुंपंति राजानो राजभटा वा तांश्चापि हि परेत्य यमदूता
वज्रदंष्ट्राः श्वानः सप्तशतानि विंशतिश्च सरभसं खादंति ॥ २७ ॥ यस्त्विह वा अनृतं वदति साक्ष्ये द्रव्यविनिमये दाने वा कथंचित्
स वै प्रेत्य नरकेऽवीचिमत्यधःशिरा निरवकाशे योजनशतोच्छ्रायाद्गिरिमूर्ध्नः संपात्यते यत्र जलमिव स्थलमश्मपृष्ठमवभासते तदवीचिम
त्तिलशो विशीर्यमाणशरीरो न म्रियमाणः पुनरारोपितो निपतति ॥ २८ ॥ यस्त्विह वै विप्रो राजन्यो वैश्यो वा सोमपीथस्तत्कलत्रं
वा सुरां व्रतस्थोऽपि वा पिबति प्रमादतस्तेषां निरयं नीतानामुरसि पदाक्रम्यास्ये वह्निना द्रवमाणं कार्ष्णायसं निषिंचंति ॥ २९ ॥

संतः । द्वितीयांतपाठे सेतुविशेषणम् । नदीं विशिनष्टि । विण्मूत्रेति ॥२२॥ पशुचर्यां स्वेच्छाचारम् ॥२३॥ अतीर्थे विहितादन्यत्र विध्यंतीति प्राणनिरोधो दर्शितः ॥ २४ ॥
निरयपतयो यमपुरुषाः ॥ २५ ॥ लालाभक्षमाह—यस्त्विति । रेतःपानं कारयंति ॥ २६ ॥ यमदूता ये श्वानः सरभसं ससंभ्रमम् ॥२७॥ द्रव्यविनिमये क्रयविक्रयादौ ।
निरवकाशे निरालंबे । अवीचिशब्दार्थमाह यत्रेति । वीचिस्तरंगस्तद्रहितत्वादवीचिः ॥ २८ ॥ यो विप्रस्तत्कलत्रं वा सुरां पिबत्यन्योऽपि वा व्रतस्थः सन् राजन्यो

दानं तेन तीर्यत इति वैतरणी तस्यां तदुक्तं गारुडे "दानं वितरणं प्रोक्तं तेन सा तीर्यते यतः। वैतरणीति ततः प्रोक्ता गोदानेन विशेषतः॥" इति । आत्मना यातनादेहेन । असुभिः प्राणैश्चोह्यमानाः अवियुज्यमानाः ।
पूयमपक्वरक्तम् । वसा मज्जा । मेदोऽपि शारीरिकधातुभेदः ॥ २२ ॥ "वेश्या सती च दासी च कुमारी स्याद्रजस्वला । संगृहीता च या भार्या वृषल्यः पञ्च कीर्त्तिताः ॥" इति स्मृतिसंग्रहे । हारीतस्तु—"पितुर्गेहे
तु या कन्या रजः पश्यत्यसंस्कृता । सा कन्या वृषली ज्ञेया तत्पतिर्वृषलीपतिः " इत्याह । नष्टशौचस्य 'एका लिंगे गुदे पञ्च' इत्यादिनोक्तस्याचारस्य धर्माचरणस्य यद्वा—"रागद्वेषविनिर्मुक्तैर्विद्वद्भिर्यदनुष्ठितम् ।
सदाचारः स विज्ञेयो धर्ममूलो मनीषिभिः ॥" इति स्कांदोक्तलक्षणस्य नियमोऽनुष्ठानं येषां ते तथा । शौचाचारपरित्याग एव पशुचर्या । तदेव पूयाद्येव । अतिबीभत्सितमतीव निंद्यं भुंजंति ॥ २३ ॥ अतीर्थे
श्राद्धादिरहितकाले । तान् श्वगर्दभपत्यादीन् ॥ २४ ॥ यातयित्वा पीडयित्वा । विशसंति घ्नंति ॥ २५ ॥ पाययति वशीकरणार्थं रेतःपानं कारयति । 'रेतः पातयति' इति पाठे काममोहितः सन्सवर्णां भार्यां
परित्यज्यान्यवर्गास्वेव स्त्रीषु रेतःपातं करोतीत्यर्थः ॥ २६ ॥ सारमेयादनमाह—सार्थान् पांथान् "सार्थः पांथे च संघाते समूहे वणिजां तथा" इति कोशात् । रभसो वेगस्तत्साहितम् ॥ २७ ॥ साक्ष्ये साक्षिवक्तव्ये ।
॥ २८ ॥ अयःपानमाह—क्षत्रियवैश्ययोः सोमनिषेधे फलचमसविधौ च प्रमाणमाह—तथा चेति । न्यग्रोधस्य स्तिभीर्वटिकाकारफलानि आहृत्यानीय ता वटिका दधनि दधिरूपपयोविकारे उपमृज्य मर्दयित्वा तं फल

अथ च यस्त्विह वा आत्मसंभावनेन स्वयमधमो जन्मतपोविद्याचारवर्णाश्रमवतो वरीयसो न बहु मन्येत स मृतक एव मृत्वा क्षारकर्दमे निरये ऽवाक्शिरा निपातितो दुरंता यातना ह्यश्नुते ॥ ३० ॥ ये त्विह वै पुरुषाः पुरुषमेधेन यजंते याश्च स्त्रियो नृपशून् खादंति तांश्च ते पशव इव निहता यमसदने यातयंतो रक्षोगणाः सौनिका इव स्वधितिनाऽवदायासृक् पिबंति नृत्यंति गायंति च हृष्यमाणा यथेह पुरुषादाः ॥ ३१ ॥ ये त्विह वा अनागसोऽरण्ये ग्रामे वा वैश्रंभिकैरुपसृतानुपविश्रंभय्य जिजीविषून् शूलसूत्रादिषूपप्रोतान् क्रीडनकतया यातयंति तेऽपि च प्रेत्य यमयातनासु शूलादिषु प्रोतात्मानः क्षुत्तृड्भ्यां चाऽभिहताः कंकवटादिभिश्चेतस्ततस्तिग्मतुंडैराहन्यमाना आत्मशमलं स्मरंति॥३२॥ ये त्विह वै भूतान्युद्वेजयंति नरा उल्बणस्वभावा यथा दंदशूकास्तेऽपि प्रेत्य नरके दंदशूकाख्ये निपतंति यत्र नृप दंदशूकाः पंचमुखाः सप्तमुखा उपसृत्य ग्रसंति यथा बिलेशयान्॥३३॥ ये त्विह वा अंधावटकुशूलगुहादिषु भूतानि निरुंधंति तथाऽमुत्र तेष्वेवोपवेश्य सगरेण वह्निना धूमेन निरुंधंति॥३४॥ यस्त्विह वा अतिथीनभ्यागतान् वा गृहपतिरसकृदुपगतमन्युर्दिधक्षुरिव पापेन चक्षुषा निरीक्षते तस्य चाऽपि निरये पापदृष्टेरक्षिणी वज्रतुंडा गृध्राः कंककाकवटादयः प्रसह्योरुबलादुत्पाटयंति ॥ ३५ ॥

वैश्यो वा सोमपीथः कृतसोमपान इत्यन्वयः । तयोः सोमस्थाने फलचमसविधानात्सोमपाननिषेधाच्च । तथा च श्रुतिः । "न्यग्रोधस्तिभीराहृत्य ताः संपिष्य दधन्युपमृज्य तमस्मै भक्षं संप्रयच्छेन्न सोमम्" इति ॥ २९ ॥ स पूर्वमपि मृतक एव सन्मृत्वा ॥ ३० ॥ पुरुषस्य मेधेन हिंसया भैरवादीन्यजंते । याश्च स्त्रियो नरमांसं भक्षयंति । कामरूपा रक्षोगणा भूत्वा । यथेह ते पुरुषादाः संतः पूर्वमनृत्यंत तद्वत् ॥ ३१ ॥ वैश्रंभकैर्विश्वासोपायैः । उपविश्रंभय्य विश्वास्य ॥ ३२ ॥ बिलेशयान्मूषकान् ॥ ३३ ॥ सगरेण सविषेण ॥ ३४ ॥ अतिथयोऽज्ञातपूर्वा अभ्यागता ज्ञातपूर्वास्तान् । पापेन वक्रीकृतेन ॥ ३५ ॥

चमससंज्ञमस्मै क्षत्रियाय वैश्याय वा भक्षं पेयं दद्यान्न सोममिति श्रुतिपदार्थः । "स्तिभिः स्त्रियां वटादीनां सूक्ष्मबीजयुते फले । वटिकाकारसंयुक्ते समुद्रे तु स्तिभिः पुमान् ॥" इति धरणिदेवः । सुरां गौड्यादिभेदेन त्रिविधाम् । तत्कलत्रं विप्रादित्रयकलत्रं वा । अन्यो द्विजेतरोऽपि व्रतस्थः कार्त्तिकादिव्रतधारी सन् । कार्ष्णायसं लोहम् । प्रमादतोऽज्ञानात् । तेषां सुरापायिनाम् ॥ २९ ॥ स्वयं वर्णाश्रमतो न्यूनोऽपि आत्मसंभावनं मत्तोन्यः कोधिक इति मननं तेन जन्मतपआदिभिः स्वस्माद्वरीयसः श्रेष्ठान् । बहु स्वतोऽधिकं न मन्येत स मृतक एव जीवन्नपि मृत एव शास्त्राज्ञोल्लंघित्वेन लोकनिंद्यत्वात् जीवन्मृतः कोऽपयशः स्वकीयं शृणोतीति शुकप्रश्नोत्तरोक्तेः । क्षारकर्दमे लवणात्मकपंके ॥ ३० ॥ स्वधितिना छेदनशस्त्रेण अवदाय अवखंड्य । रक्षोगणभोजनोऽयं नरकः ॥ ३१ ॥ विश्वासोपायैरन्नविकिरणादिभिः । आदिना भृगुपातनग्रहः । आदिना गृध्रादिग्रहः । शूलप्रोताख्योऽनरकः ॥ ३२ ॥ मूषिको हि बिलेशयोऽत्र ग्राह्यः । दंदशूकः सदा दंशनशीलोऽहिः ॥ ३३ ॥ अवटनिरोधनरकमाह–अंधे तमसि । अवटे भूगर्त्ते 'गर्त्तावटौ भुवः श्वभ्रे' इत्यमरः । कुशूलं सतृणमृन्निर्मितमन्नाधारकोष्टम् । गुहा कंदरा । आदिना हुडादिग्रहः ॥३४॥ "अनागतमनाहूतं देशकाले उपस्थितम् । अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः" इति स्मृतेः । "यतिश्च ब्रह्मचारी च विद्यार्थी

यस्त्विह वा आढ्याभिमतिरहंकृतिस्तिर्यक्प्रेक्षणः सर्वतोऽभिविशंकी अर्थव्ययनाशचिंतया परिशुष्यमाणहृदयवदनो निर्वृतिमनवगतो ग्रह इवार्थमभिरक्षति स चापि प्रेत्य तदुत्पादनोत्कर्षणसंरक्षणशमलग्रहः सूचीमुखे नरके निपतति यत्र ह वित्तग्रहं पापं पुरुषं धर्मराजपुरुषा वायका इव सर्वतोंगेषु सूत्रैः परिवयंति ॥ ३६ ॥ एवंविधा नरका यमालये संति शतशः सहस्रशस्तेषु सर्वेषु च सर्व एवाधर्मवर्तिनो ये केचिदिहोदिता अनुदिताश्चावनिपते पर्यायेण विशंति तथैव धर्मानुवर्तिन इतरत्र इह तु पुनर्भवे त उभयशेषाभ्यां निविशंति ॥ ३७ ॥ निवृत्तिलक्षणमार्ग आदावेव व्याख्यातः ॥ एतावानेवांडकोशो यश्चतुर्दशधा पुराणेषु विकल्पित उपगीयते यत्तद्भगवतो नारायणस्य साक्षान्महापुरुषस्य स्थविष्ठं रूपमात्ममायागुणमयमनुवर्णितमादृतः पठति शृणोति श्रावयति स उपगेयं भगवतः परमात्मनोऽग्राह्यमपि श्रद्धाभक्तिविशुद्धबुद्धिर्वेद ॥ ३८ ॥ श्रुत्वा स्थूलं तथा सूक्ष्मं रूपं भगवतो यतिः ॥ स्थूले निर्जितमात्मानं शनैः सूक्ष्मं धिया नयेदिति ॥ ३९ ॥

आढ्याभिमतिर्धनगार्वितः अहंकृतिः श्रेष्ठोऽहमिति मानी । तिर्यक्प्रेक्षणं यस्य । सर्वतो गुर्वादेरपि धनं चोरयिष्यंतीति विशंकमानः परिशुष्यमाणं हृदयं वदनं च यस्य । अनवगतोऽप्राप्तः । तस्यार्थस्योत्पादनादिभिः शमलं गृह्णातीति तथा। परिवयंति सूत्रप्रोतं कुर्वंति ॥ ३६॥ इतरत्र स्वर्गादौ इह मर्त्यलोके पुनर्भवे पुनर्जन्मनिमित्तम् । उभयोर्धर्माधर्मयोः शेषाभ्याम्॥ ३७॥ आदावेव द्वितीयस्कंधे वैश्वानरं यातीत्यादिना। उपगेयमौपनिषदं रूपम्।श्रद्धाभक्तिभ्यां विशुद्धा बुद्धिर्यस्य॥ ३८॥ यथा यथावच्छुत्वा॥ ३९॥

गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च षडेतेऽभ्यागताः स्मृताः ॥ '' इति स्मृतेश्चातिथ्यभ्यागतभेद ऊहनीयः । कंकादयो मृतपश्वादिमांसाशिनः पक्षिविशेषाः । तुंडं मुखाग्रम् । पर्यावर्त्तनाख्योऽयं नरकः ॥ ३९ ॥ ग्रह इव ब्रह्मराक्षसादिर्यथा निधिमन्येभ्यो रक्षंति तथाभिरक्षति । स चार्थाभिरक्षिता । उत्पादनमर्जनम् उत्कर्षणं वृद्धीकरणम् संरक्षणमन्यत्राप्रदानं तैर्यच्छमलं दुःखं पापं वा 'दुःखे पापे च शमलम्' इत्यभिधानात् । वायकाः पटच्चरैः कंथानिर्माणनिपुणा वित्तग्रहमर्थलुब्धपिशाचसमं सूत्रैः स्वर्णरजतादिसूत्रैः क्षुरधारानिशितैः संपादितधनसमतुलितैः परिवयंति ओतप्रोतक्रियया विध्यंतीत्यर्थः । यद्वा—ग्रहो यक्षः "ग्रहो यक्षे च सूर्यादावादाने प्युपरागके" इति धरणिः । वायको वस्त्रसेवकस्तंतुवायश्चेति ॥ ३६ ॥ अवनिपते इति । यथा त्वं पापिनां कर्मानुरोधेनावनौ दंडं ददासि तथा तत्रापीति भावः । पर्यायेण कर्मक्रमेण । पुनर्भव इति निमित्ते सप्तमीति स्वामिचरणाः। पुनरपि धर्माधर्मयोर्भव उत्पत्तिर्यतस्तस्मिन्नितीहपदविशेषणमिति विश्वनाथः ॥ ३७॥ चतुर्दशधा लोकप्रकारेण । पुराणेषु स्कान्दादिषु । उपनिषदामिति षष्ठी कृत्ययोगे कर्त्तरि । यद्रूपं तद्यः पठतीत्यादि संबंधः । अग्राह्यं ज्ञातुमशक्यम ॥ ३८ ॥ यथा स्थूलं श्रुत्वा तथा सूक्ष्मं श्रुत्वा स्थूले रूपे आत्मानं निर्जितं कृत्वा शनैः क्रमेण सूक्ष्मं प्रति धिया व्यवसायात्मिकया बुद्ध्या नयेदित्यन्वयः । सूक्ष्ममत्र भक्तिमात्रगम्यं

भूद्वीपवर्षसरिदद्रिनभःसमुद्रपातालदिङ्नरकभागणलोकसंस्था ॥ गीता मया तव नृपाद्भुतमीश्वरस्य स्थूलं वपुः सकलजीवनिकायधाम ॥ ४० ॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यामष्टादशसाहस्र्यां संहितायां पंचमस्कंधे नरकानुवर्णनं नाम षड्विंशतितमोध्यायः ॥ २६ ॥ समाप्तोऽयं पञ्चमस्कन्धः ॥ ५ ॥

कथंभूता संस्था । सकलानां जीवनिकायानां धाम आश्रयभूतं वपुः ॥ ४० ॥ पंचमस्कंधसंबंधिपदभावार्थदीपनैः ॥ प्रीयतां परमानंदनृहरिर्बालभाषितैः ॥ १ ॥ इति श्रीमद्भागवते महापुराणे श्रीधरस्वामिविरचितायां पंचमस्कंधटीकायां भावार्थदीपिकायां षड्विंशतितमोऽध्यायः ॥ २६ ॥ समाप्तोऽयं पंचमः स्कंधः ॥ ५ ॥

रूपम् "यावन्न जायेत परावरेऽस्मिन्विश्वेश्वरे द्रष्टरि भक्तियोगः" इत्याद्युक्तेः ॥३९॥ उपसंहरति–भूद्वीपेति । संस्था रचना । निकायः समूहः ॥४०॥ दीपनं प्रकाशनम् ( १ ) इति ॥ अथास्य श्रवणादिमहिमा "विष्णुरुवाच ॥ पञ्चमस्कंधसंभूतं फलं शृणु चतुर्मुख । तदेव हृदयं मह्यं बालहत्याविमोचकम् ॥ १ ॥ ब्रह्मोवाच ॥ बालहत्या कृता केन को मुक्तः श्रुतिमात्रतः । तन्मे वद सुरश्रेष्ठ लोकानां हितकारक ॥ २ ॥ हरिरुवाच ॥ पुरा कृतयुगे तात राजासीद्विमलो महान् । कान्यकुब्जाधिपः श्रीमान्भार्याशतयुतो विधे ॥ ३ ॥ आनपत्येन दुःखेन पीडितो गुरुमंदिरम् । जगाम रथमारुह्य संतानप्राप्तये नृपः ॥ ४ ॥ तत्र गत्वा गुरुं स्तुत्वा प्रार्थयामास संततिम् । गुरोराज्ञां समाप्राप्य पुत्रेष्टिं स चकार ह ॥ ५ ॥ ततः पुत्रशतं लेभ एकोनं नृपतिस्तदा । ज्येष्ठा भार्या पुत्रहीना दुःखिताभून्नृपस्य हि ॥ ६ ॥ सपत्नीनां पुत्रनाशं चिंतयामास सर्वदा । एकदा सहितः पत्न्या स्नानार्थं स समाययौ ॥ ७ ॥ अमाचंद्रमसोर्योगे तीर्थराजं सुखप्रदम् । मारितं बालकशतं भार्यया पुत्रहीनया ॥ ८ ॥ नृपतेर्विमलस्याथ श्रुत्वा राजातिदुःखितः । चतुरशीतिर्लक्षाणां नरकाणां तया पुनः ॥ ९ ॥ भुक्ता पापप्रभावेण चांडाली साभवन्मुहुः । दुर्भगत्वं समासाद्य विचरंत्या वनेवने ॥ १० ॥ कदाचिद्भाग्यतो वार्त्ता पञ्चमस्कंधसंभवा । हतपापा ततो जाता श्रवणस्य प्रभावतः ॥ वैकुंठलोकमगमदहो भागवतं महत् ॥११॥" इति पाद्मे । येनैतद्रचितं विश्वं निजमायाप्रभावतः । तं वंदे बल्लवीनाथं नंदगोपसुतं हरिम् ॥ १ ॥ यत्कृपावशतो लब्धो मया वंशीधरेण हि । प्रकाशः पञ्चमस्कंधे बहुटीकावलोकनात् । स कृष्णोभीप्सितं दद्यान्मम भक्तप्रियः सदा ॥ २ ॥ इति श्रीखरडपत्तनवास्तव्य पं०वंशीधरशर्म्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे पञ्चमस्कन्धे षड्विंशतितमोऽध्यायः ॥ २६ ॥ ॥ समाप्तश्चायं पञ्चमस्कन्धः ॥ ५ ॥

---

अयं श्रीभावार्थदीपिकाप्रकाशसमलंकृतभावार्थदीपिकासमेतश्रीमद्भागवतपञ्चमस्कन्धो मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर"मुद्रणालये मुद्रयित्वा प्राकाश्यमानीयत ।

इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाशः टीकया चोपेते श्रीमद्भागवते पंचमस्कन्धः समाप्तः ॥ ५ ॥

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते श्रीमद्भागवते षष्ठस्कन्धप्रारंभः ॥ ६ ॥

श्रीगणेशाय नमः ॥ राजोवाच ॥ निवृत्तिमार्गः कथित आदौ भगवता यथा ॥ क्रमयोगोपलब्धेन ब्रह्मणा यदसंसृतिः ॥ १ ॥
प्रवृत्तिलक्षणश्चैव त्रैगुण्यविषयो मुने ॥ योसावलीनप्रकृतेर्गुणसर्गः पुनःपुनः ॥ २ ॥

श्रीगणेशाय नमः ॥ पुण्यारण्ये नृसिंहैकनामासिंहो विराजते ॥ यन्नादतः पलायंते महाकल्मषकुंजराः ॥ १ ॥ विसर्गसंभवाञ्जीवान्स्वमर्यादासु संस्थितान् ॥ विष्णुः पात्यखिलै रूपैरित्येवं पंचमे स्थितम् ॥ २ ॥ अध्यायैकोनविंशत्या षष्ठे पोषणमुच्यते ॥ अतिलंघितमर्यादभक्तलक्षणलक्षणम् ॥ ३ ॥ अजामिलो मनुष्येषु महापापो यथाऽवितः॥ विश्वरूपादिघाती च यथा देवेषु वासवः॥ ४ ॥ अजामिलस्य भक्तत्वं विष्णुदूतैर्निरूपितम् ॥ संकेतभगवन्नाम पुत्रस्नेहानुषंगजम् ॥ ५ ॥ इंद्रोऽपि भगवद्भक्तः सख्येनोपेन्द्रसेवकः ॥ तदधीनसुरैश्वर्यशत्रुनिर्जयजीवितः ॥ ६ ॥ तत्रादौ त्रिभिरध्यायैरजामिलकथोच्यते ॥ विश्वरूपकथा षड्भिरिंद्रदोषोक्तये ततः ॥ ७ ॥ इंद्रस्यैव तु दोषोक्त्यै वृत्राख्यानं ततोऽष्टभिः ॥ द्वाभ्यां च मरुदाख्यानमेवं प्रकरणक्रमः॥८॥ तत्रादौ प्रथमे विष्णोर्दूतैः पातकिमोचने ॥ तत्पापख्यापनायोक्तं याम्यैर्धर्मादिलक्षणम् ॥ ९ ॥ अथ षष्ठस्कंधो व्याख्यायते पूर्वोक्तानुवादपूर्वकं निरंतरोक्तनरकपरिहारोपायं पृच्छति निवृत्तिमार्ग इति षड्भिः । आदौ द्वितीयस्कंधे 'वैश्वानरं याति' इत्यादिना भगवता त्वया यथा यथावत् । यद्येन मार्गेण । क्रमेण योगोऽर्चिरादिप्राप्तिस्तेनोपलब्धो यो ब्रह्मा तेन सहासंसृतिर्मोक्षो भवति । "ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ॥ परस्यांते कृतात्मानः प्रविशंति परं पदम् ॥ " इति वचनात् ॥ १ ॥ त्रैगुण्यं स्वर्गादिसुखं तदेव विषयः प्राप्यं यस्य न लीना प्रकृतिर्यस्य तस्य पुंसः पुनःपुनर्गुणसर्गो

ॐ स्वस्ति श्रीगणेशाय नमः ॥ योऽरक्षद्वासवं वृत्राद्यामिकेभ्यस्त्वजामिलम् ॥ स कृष्णो मां सदा पातु वृषभानुसुताप्रियः ॥ १ ॥ अधुना व्याकृतिं कुर्वे षष्ठस्कंधे गुरोः कृपाम् ॥ संप्राप्य निखिलांष्टीकाकृतो नत्वा यथामति ॥ २ ॥ पुण्यानां तीर्थयात्रादानजपादीनां वृक्षस्थानीयानामरण्ये वनवत्समूहे नृसिंहस्यैकं मुख्यं नामैव सिंहस्तत्सदृशः । यन्नादतो यदुच्चारणात् महाकल्मषा ब्रह्महत्यादय एव कुंजराः कुंजरस्थानीयाः ( १ ) ( २ ) अतिलंघिता मर्य्यादा स्वधर्मस्थितिर्येन स चासौ भक्तश्चेत्यतिलंघितमर्यादभक्तस्तस्य लक्षणेन रक्षणेन लक्षितं ज्ञापितं रलयोरैक्यात् । चक्रवर्त्तिनाऽपि " भक्तानां धर्ममर्यादालंघिनामपि पालनम् । यद्वै वेत्तद् विद्वद्भिः पोषणं परिकीर्त्तितम्॥" इत्थमेवोक्तम् ( ३ ) आदिना वृत्रादिग्रहः । अवितो रक्षितः ( ४ ) संकेते कल्पनया स्थापितं भगवन्नाम यस्मिन्स संकेतभगवन्नाम स चासौ पुत्रश्च तत्र यः स्नेहानुषंगः स्नेहाधिक्यं तस्माज्जयत इति तथा ( ५ ) सख्येन भ्रातृभावेन । उपेंद्रो वामनस्तस्य सेवकः । सुराणामैश्वर्यञ्च शत्रूणां निर्जयश्च सुरैश्वर्यशत्रुनिर्जयौ तस्योपेंद्रस्याधीनौ च तौ सुरैश्वर्यशत्रुनिर्जयौ चेति तथा ताभ्यां जीवितः पालितस्तथा ( ६ ) तत्रैकोनविंशतिमध्ये । ततोऽजामिलकथानंतरम् । इंद्रदोषो विश्वरूपहननादिः ( ७ ) ततो विश्वरूपकथानंतरम् ( ८ ) तत्र त्रिष्वपि तस्य पातकिनः पापकथनाय याम्यैर्यमदूतैः । आदिनाऽधर्मग्रहः ( ९ ) निवृत्तिमार्ग इति । तत्र पूर्वोक्तौ मार्गौ द्वौ वैदिकावैदिकभेदात् । आद्यस्तु प्रवृत्तिनिवृत्तिभेदेन द्विधा द्वितीयस्त्वेकधैवाधर्मलक्षणः । तत्र मार्गत्वं नाम क्रमयोगहेतुत्वमित्युक्तं—क्रमयोगोपलब्धेनेति । ज्ञानभक्ती तु सद्यः प्रापकत्वान्मार्गत्वेन न विवक्ष्येते तदेतदभिप्रेत्याह—प्रथमसार्द्धद्वयेन । तृतीयेऽपि ये स्वधर्मान्न दुह्यंतीत्यादिनोक्तः ॥१॥ मुने इति सर्वज्ञत्वमाह " सर्वशास्त्रावगंतारो मुनयः परिकीर्त्तिताः " इत्युक्तेः ॥ २ ॥

अधर्मलक्षणा नानानरकाश्चानुवर्णिताः ॥ मन्वंतरश्च व्याख्यात आद्यः स्वायंभुवो यतः ॥ ३ ॥ प्रियव्रतोत्तानपदोर्वंशस्तच्चरितानि च ॥ द्वीपवर्षसमुद्राद्रीन्नद्युद्यानवनस्पतीन् ॥४॥ धरामंडलसंस्थानं भागलक्षणमानतः ॥ ज्योतिषां विवराणां च यथेदमसृजद्विभुः ॥५॥ अधुनेह महाभाग यथैव नरकान्नरः ॥ नानोग्रयातनान्नेयात्तन्मे व्याख्यातुमर्हसि ॥६॥ श्रीशुक उवाच ॥ न चेदिहैवापचितिं यथांऽहसः कृतस्य कुर्यान्मनउक्तिपाणिभिः॥ ध्रुवं स वै प्रेत्य नरकानुपैति ये कीर्तिता मे भवतस्तिग्मयातनाः ॥ ७ ॥ तस्मात्पुरैवाश्विह पापनिष्कृतौ यतेत मृत्योरविपद्यतात्मना ॥ दोषस्य दृष्ट्वा गुरुलाघवं यथा भिषक् चिकित्सेत रुजां निदानवित् ॥ ८ ॥

भोगार्थं देहारंभरूपो यो मार्गः स च कथितस्तृतीये । "दक्षिणेन पथाऽर्यम्णः पितृलोकं व्रजंति ते" इत्यादिना ॥ २ ॥ अनुवर्णिता निरंतराध्यायव्याख्याताश्चतुर्थस्यादौ । यतो यस्मिन् ॥ ३ ॥ द्वीपादीन्भागतो लक्षणतो मानतश्च धरामंडलस्य संस्थानं ज्योतिषां विवराणां चेदं संस्थानं विभुर्यथासृजत्तथा व्याख्यातमित्यर्थः ॥ ४ ॥ ॥ ५ ॥ नाना उग्रा यातना येषु तान्नरकान्यथा येनोपायेन नेयान्न गच्छेत्तन्मेऽधुना व्याख्यातुमर्हसि ॥ ६ ॥ तत्र तावन्मन्वाद्युक्तं प्रायश्चित्तं विना नरका दुर्निवारा इत्याह—न चेदिति द्वाभ्याम् । मनउक्तिपाणिभिर्मनोवाक्कायैः कृतस्यांहसस्तैरेवेहैवापचितिं प्रायश्चित्तं न कुर्याच्चेत्तर्हि स पुरुषः प्रेत्य मृत्वा नरकान्ध्रुवमुपैति । मे मया ये भवतः कीर्तिताः । तिग्मा दारुणा यातना येषु तान् ॥ ७ ॥ यस्मादेवं तस्मात्पापस्य निष्कृतौ प्रायश्चित्ते यतेत । कदा । मृत्योः पुरैव । तत्राप्यविपद्यताऽक्षीयमाणेनात्मना देहेन । यद्वा अविपद्विपत्तिरहितो यावत्। यतात्मना संयतेन मनसा । तत्राप्याशु । अन्यथा "अतीव चिरकाले तु द्विगुणं व्रतमर्हति" इति द्वैगुण्यापत्तेः । तत्र च पापस्य

अधर्मं लक्षयंति ज्ञापयंतीत्यधर्मलक्षणाः । मन्वंतरादिकं तु प्रासंगिकतयैव वर्णितमित्याह—मन्वंतरश्चेति सार्द्धद्वयेन ॥ ३ ॥ तच्चरितानि प्रियव्रतोत्तानपदोश्चरितानि द्वीपादीन्यथाऽसृजत्तथा व्याख्यातमित्यन्वयः । भागतो लक्षणतो मानतश्च धरामंडलसंस्थानं रचनाम् । ज्योतिषां सूर्यादीनाम् । विवराणामित्युपलक्षणं नरकाणाम् । इदं संस्थानं यथाऽसृजत्तथा व्याख्यातमित्यर्थः ॥ ४ ॥ ५ ॥ नाना उग्रा यातनाः पीडा येषु तान् । लोकानामिष्टानिष्टसाधने द्वे यथा ज्ञाते तथानिष्टपरिहारसाधनमपि ज्ञातव्यमिति भावः । महाभागेति । महाभागस्य तव संगिनोऽपि महाभागा यथा स्युस्तथा कर्तुमर्हसीत्यभिप्रायः ॥ ६ ॥ स्वशिष्यस्य परीक्षितः स्वमते व्युत्पत्तिं परीक्षमाणः कर्मिणां मते नरकप्रतीकारमाह—तत्रेति । तैरेव मनोवाक्पाणिभिरेव । मानसस्यांहसो मानसं प्रायश्चित्तमीश्वरध्यानादि । वाचिकस्य वाचिकं नामोच्चारणादि । कायिकस्योपवासादि । पाणिपदेनेह देहो लक्ष्यत इति ॥ ७ ॥ प्रायश्चित्तं तु जीवतैव कर्तुं शक्यते न तु मृतेनातः कथमुक्तमम्रियमाणेनेति चेत्तत्राह—यद्वेति । विपत्तिरहित इति । यावज्जरारोगादिभिर्न्नताद्यसामर्थ्यं न स्यादित्यर्थः ।

राजोवाच ॥ दृष्टश्रुताभ्यां यत्पापं जानन्नप्यात्मनोऽहितम् ॥ करोति भूयो विवशः प्रायश्चित्तमथो कथम् ॥ ९ ॥ क्वचिन्निवर्ततेऽभद्रात्क्वचिच्चरति तत्पुनः ॥ प्रायश्चित्तमतोऽपार्थं मन्ये कुंजरशौचवत् ॥ १० ॥ श्रीशुक उवाच ॥ कर्मणा कर्मनिर्हारो न ह्यात्यंतिक इष्यते ॥ अविद्वदधिकारित्वात्प्रायश्चित्तं विमर्शनम् ॥ ११ ॥ नाऽश्नतः पथ्यमेवान्नं व्याधयोऽभिभवंति हि ॥ एवं नियमकृद्राजन्छनैः क्षेमाय कल्पते ॥ १२ ॥ तपसा ब्रह्मचर्येण शमेन च दमेन च ॥ त्यागेन सत्यशौचाभ्यां यमेन नियमेन च ॥ १३ ॥

महत्त्वमल्पत्वं चावेक्ष्य तदनुरूपे प्रायश्चित्ते यतेत रुजां रोगाणां निदानविद्यथा वैद्यस्तदनुरूपं चिकित्सेत तद्वत् ॥ ८ ॥ अत्र चोदयति द्वाभ्याम् । दृष्टं राजदंडादि श्रुतं नरकपातादि ताभ्यामात्मनः पापमहितं जानन्नपि भूयः प्रायश्चित्तानंतरं करोति । अथो अतः कारणाद्द्वादशाब्दादि कथं प्रायश्चित्तं तेन समूलस्य दोषस्यानिवृत्तेः निवृत्तौ वा पुनश्च पापप्ररोहायोगादिति भावः ॥ ९ ॥ किं च क्वचित्कदाचिदभद्रात्पापान्निवर्तते क्वचित्तदेव पुनराचरति यथा कुंजरः स्नातोऽपि रजोभिरात्मानं मलिनी करोति तथा पापस्य पुनर्दुर्निवार्रत्वेन नरकपातस्यावश्यंभावित्वात्प्रायश्चित्तं व्यर्थमिति मन्ये ॥ १० ॥ परिहरति । कर्मणा कृच्छ्रादिप्रायश्चित्तेन कर्मणः पापस्य निर्हारो नाश आत्यंतिकः समूलो न हीष्यते अविद्वानधिकारी यस्मिंस्तस्य भावस्तत्त्वं तस्मात् । अतो विद्याया नाशाभावान्नष्टेऽपि तस्मिन्पापे तत्संस्कारेण पापांतरस्य पुनःपुनः प्ररोहो भवत्येव । किं तर्हि मुख्यं प्रायश्चित्तं तदाह । प्रायश्चित्तं तु विमर्शनं ज्ञानम् ॥ ११ ॥ तत्तु नित्यमप्रमत्तः शनैर्लभते नान्य इति सदृष्टांतमाह । नेति । पथ्यमेवान्नमश्नतः पुरुषान् यथा व्याधयो न बाधंते तथा नियमादिकर्ता क्षेमाय तत्त्वज्ञानाय समर्थो भवति॥ १२ ॥ एतदेव विशदयति द्वाभ्याम् । तपसैकाग्र्येण“ मनसश्चेंद्रियाणां च ऐकाग्र्यं परमं तपः” इति स्मृतेः । ब्रह्मचर्येणाष्टांगेन । तदुक्तम् । “ स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥ संकल्पोऽध्यवसायश्च क्रियानिर्वृतिरेव च ॥ एतन्मैथुनमष्टांगं प्रवदंति

तत्रापि संयतमनस्त्वेपि शीघ्रमेव । अन्यथा प्रायश्चित्तस्याशैघ्र्ये । तत्र च शैघ्र्यकरणे च । अत्र व्यवस्थापको विद्वान् धर्मशास्त्रतात्पर्यविज्ञो मृग्य इति भावः ॥ ८ ॥ अत्र प्रायश्चित्तविषये । चोदयत्याक्षिपति । चौर्यादिकारिणो राजदंडदर्शनेन “ मृतो नरकमभ्येति ह्यगम्यागमनान्नरः ” इत्यादिस्मृतिश्रवणेन च । इति भाव इति । “ प्रायः पापं समाख्यातं चित्तं तस्य विसर्जनम् ” इति प्रायश्चित्तलक्षणस्य तत्रासंभवात्पुनः प्रवृत्तौ तु पापनिवृत्त्यभाव एवेत्याशयः ॥ ९ ॥ १० ॥ परीक्षयोत्तीर्णं परीक्षितं पुनरपि परीक्षिष्यमाणः सिद्धांतं ज्ञापयति । आदिना चांद्रायणादिग्रहः । अविद्वान् अविद्यावद्धो जीवोऽधिकारी । अतोऽविद्यायाः पापमूलस्य विद्यमानत्वात् । तत्संस्कारेणाविद्यया पापसंस्कारेण। ज्ञानस्यैवाविद्यानिवर्तकत्वादिति भावः ॥ ११ ॥ ननु तर्हि पापवत्त्वेंतःकरणशुद्ध्यभावस्तस्मिंश्च सति कुतो ज्ञानप्रसंग इति चेत् । सत्यम् । ज्ञानसाधनेनापि पापोपशम इत्यभिप्रेत्याह । तत्त्विति । ज्ञानं तु । अन्यः प्रमत्तः । क्षेमाय पापनाशद्वारा शनैश्शनैरेव समर्थो भवति ॥ १२ ॥ तपसा भोगत्यागेन वा । तदुक्तं तत्त्वानुऽसंधान इति । रागपूर्वकं स्त्र्यादिविषयकं ज्ञानं दर्शनम् १ । रागपूर्वकं क्रियाविशेषजन्यं ज्ञानं स्पर्शनम् २ । रागपूर्वकं परिहासादिव्यवहारः केलिः ३ । स्त्र्यादेरनुरागपूर्वकं सौंदार्यादिवर्णनं कीर्त्तनम् ४ । रागपूर्वकं रहसि संभाषणं गुह्यभाषणम् ५ ।

देहवाग्बुद्धिजं धीरा धर्मज्ञाः श्रद्धयान्विताः ॥ क्षिपंत्यघं महदपि वेणुगुल्ममिवानलः ॥ १४ ॥ केचित्केवलया भक्त्या वासुदेवपरायणाः ॥ अघं धुन्वंति कात्स्न्येंन नीहारमिव भास्करः ॥ १५ ॥ न तथा ह्यघवान्राजन्पूयेत तपआदिभिः ॥ यथा कृष्णार्पितप्राणस्तत्पूरुषनिषेवया ॥ १६ ॥ सध्रीचीनो ह्ययं लोके पंथाः क्षेमोऽकुतोभयः ॥ सुशीलाः साधवो यत्र नारायणपरायणाः ॥ १७ ॥ प्रायश्चित्तानि चीर्णानि नारायणपराङ्मुखम् ॥ न निष्पुनंति राजेंद्र सुराकुंभमिवापगाः ॥ १८ ॥

मनीषिणः ॥ विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम् ॥ " इति । शमो मनसो नियमनम् । दमो बाह्येंद्रियाणाम् । त्यागो दानम् । यमोऽहिंसादिः । नियमो जपादिः ॥ १३ ॥ ॥ १४ ॥ अस्यातिदुष्करत्वान्मुख्यमेवान्यत्प्रायश्चित्तमाह। केचिदिति । केचिदित्यनेन एवंभूता भक्तिप्रधाना विरला इति दर्शयति । केवलया तपआदिनिरपेक्षया। वासुदेवपरायणा इति नाधिकारिविशेषणमेतात्किं त्वन्येषामश्रद्धया तत्राप्रवृत्तेरर्थात्तेष्वेव पर्यवसानादनुवादमात्रम् ॥ १५ ॥ एतच्च ज्ञानमार्गादपि श्रेष्ठमित्याह । न तथा पूयेत शुद्ध्येत । यथा तत्पुरुषनिषेवया कृष्णेऽर्पिताः प्राणा येन ॥ १६ ॥ तत्र हेतुः । सध्रीचीनः समीचीनोऽयं पंथा भक्तिमार्गो यतः क्षेमः क्षेमत्वे हेतुः । न कुतश्चिद्विघ्नादेर्भयं यस्मिन् । तदेवाह सुशीलाः कृपालवः साधवो निष्कामाः यत्र यस्मिन्मार्गे धर्मनिष्ठाः । अतो न ज्ञानमार्ग इवासहायतानिमित्तं भयं नापि कर्ममार्गवन्मत्सरादियुक्तेभ्यो भयमिति भावः ॥ १७ ॥ भक्तेरन्यनिरपेक्षत्वमुक्तं कृच्छ्रादीनि तु भक्तिं विना न शोधयन्तीत्याह । प्रायश्चित्तानीति । महतामप्यशोधकत्वे दृष्टान्तमाह—सुराकुंभमापगा नद्य इवेति ॥ १८ ॥

स्त्र्यादिविषयको दृढेच्छाविशेष इदं मेऽस्त्विति संकल्पः ६ । अनया रम इति निश्चयोऽध्यवसायः ७ । रागपूर्वकं स्त्र्यादिविषयकानुभवविशेषः क्रियानिर्वृतिः ८ । इति विवेकः । आदिना सत्यादिग्रहः । द्वितीयादिना स्नानादिग्रहः ॥ १३ ॥ वेणुगुल्मं वंशसमूहम् । अस्य ब्रह्मचर्यादेः ॥ १४ ॥ वेणुगुल्मानलदृष्टान्तेन पुनरपि पापप्ररोहसूचनादप्रसन्नमनसं राजानं भक्तानां मतेनाह । स्वामिचरणानाम् । वासुदेवपरायणा एवात्राधिकारिण इति न किं त्वन्येषां वासुदेवभक्तिहीनानां तत्र केवलायां भक्तौ अर्थात्तेष्वेव वासुदेवपरायणेष्वेव पर्यवसानात्तेषामेव तत्र प्रवृत्तिदर्शनादेतत्कथनमिति भावः । अत्र संदर्भः स्वमतमाह—केचिदित्यादिना तृतीयाध्यायं यावत् । अत्र भक्तिर्द्विधा संतता कादाचित्की चेति । तत्राद्या द्विधा आसक्तिमात्रयुक्ता रागमयी च । द्वितीया त्रिधा रागाभासमयी तच्छून्यस्वरूपभूताऽऽभासभूता च । तत्राभासभूताया अपि सर्वोत्तमं प्रायश्चित्तं दर्शयितुं रागमय्याः कैमुत्यबोधकमासक्तिमय्या माहात्म्यमाह—केचिदिति । कार्त्स्न्येन वासनया सहेत्यर्थः । भास्करदृष्टांतेन स्वाभाविक्या भास्थानीयया भक्त्या नीहारस्थानीयस्यागंतुकस्य स्प्रष्टुमशक्तस्याघसंघस्य चानुषंगिकतया सद्यो निःशेषधूननमिति ज्ञापितम् ॥ १५ ॥ अत्रापि पापप्रशमने तुच्छे एव वस्तुनि भक्तिमहादेव्या विनियोगोऽनुचित इति भक्तिशास्त्रतात्पर्यविज्ञानां मतेन स्वाभिमतेनान्यमताक्षेपपूर्वकमाह—नेति । कृष्णार्पितप्राण इति । पापकर्माणं मां समुचितशिक्षादंडार्थं नरके पातयतु न पातयतु वा स एव मे गतिस्तस्यैवाहमित्यात्मन एव समर्पणेन नरकप्रतीकारमपाकुर्वन् शुद्धभक्तिमान् इत्यर्थः । कृष्णार्पितप्राणत्वं कथं स्यादित्यत आह—तत्पुरुषेति । तपआदीत्यत्रादिना ब्रह्मचर्यादिग्रहः ॥ १६ ॥ न च ज्ञानयोगव्रताद्यसमर्थानामेव भक्तियोग इति वाच्यमित्याह—सध्रीचीनः । हि निश्चितम् । अयमेव सर्वतः श्रेष्ठः न ज्ञानमार्ग इवासहायतानिमित्तं नापि कर्ममार्गवन्मत्सरतादिहेतुकं भयमिति भावः । स्वामिव्याख्याने तत्रेत्यस्य कृष्णार्पितप्राणस्य महत्त्वे इत्यर्थः ॥ १७ ॥ किं चान्वयव्यतिरेकाभ्यां भक्तिरेव पापप्रशमनी न ज्ञानभक्तियोगादिरित्यभिप्रेत्याह—भक्ते

सकृन्मनः कृष्णपदारविंदयोर्निवेशितं तद्गुणरागि यैरिह ॥ न ते यमं पाशभृतश्च तद्भटान्स्वप्नेऽपि पश्यंति हि चीर्णनिष्कृताः ॥ १९ ॥ अत्र चोदा हरंतीममितिहासं पुरातनम् ॥ दूतानां विष्णुयमयोः संवादस्तं निबोध मे ॥ २० ॥ कान्यकुब्जे द्विजः कश्चिद्दासीपतिरजामिलः ॥ नाम्ना नष्टसदाचारो दास्याः संसर्गदूषितः ॥ २१ ॥ बंद्यक्षकैतवैश्चौर्यैर्गर्हितां वृत्तिमास्थितः ॥ बिभ्रत्कुटुंबमशुचिर्यातयामास देहिनः ॥ २२ ॥

भक्तिः स्वल्पाऽपि पुनात्येवेत्याह। सकृदिति।तस्य गुणेषु रागमात्रमस्ति न तु ज्ञानं यस्य तन्मनः । तावतैव चीर्णं निष्कृतं प्रायश्चितं यैः॥१९॥ इममर्थमितिहासेनोपपादयति अत्र चेति। मे मत्तः ॥२०॥ कान्यकुब्जे पुरे । दास्याः पतिः। नाम्नाऽजामिल इति ॥२१॥ बंदीग्रहेणाक्षैश्च द्यूतेन कैतवैर्वंचनादिभिश्च वृत्तिं जीविकां बिभ्रत्पुष्णन्यातयामास

रन्यनिरपेक्षत्वमिति । नारायणपराङ्मुखं भक्तभक्त्युत्कर्षयोः श्रुतयोरपि तत्र श्रद्धाहीनं न पुनंति भक्तिस्तु ज्ञानकर्मादिहीनमपि पुनाति केवलया भक्त्येति पूर्वोक्तेः ॥१८॥ यैरिति । अपिशब्दः प्रत्येकं संबध्यते सकृदपि किं पुनरभ्यासेन । मनः संशयात्मकमप्यंतःकरणं किं पुनर्निश्चयात्मिका बुद्धिः । पदारविंदयोः किं पुनः सर्वमूर्त्तौ । निवेशितं बलादपि किं पुनः स्वतो निविष्टम्। तद्गुणेष्वपि रागि किं पुनस्तत्स्वरूपे । यैरिहेति सामान्यवा चिभ्यां सर्वनामभ्यां मनोनिवेशने जातिदेशाद्यनपेक्षत्वं गम्यते । अत्र संदर्भः—अथ रागाभासमय्यास्ततोऽप्युत्तमत्वेनाह—सकृदिति । रागोऽत्र रत्याभासः सकृच्छब्दप्रयोगात् । साक्षाद्रतौ सत्यामसकृदेव तन्निवेशः स्यात् “ दधाति सकृन्मनस्त्वयि य आत्मनि नित्यसुखे न पुनरुपासते पुरुषसारहरावसथात्” इति श्रुतिस्तुतेरत एव स्वामिचरणैस्तस्य गुणेषु रागमात्रमस्ति न तु ज्ञानमित्युक्तम् । रागमात्रं यत्किञ्चिद्रागः ज्ञानञ्च याथार्थ्येनानुभव इति । अत्रैषां पूर्वेभ्य उत्तमत्वं भक्तभक्त्याभासद्भावेन यमादीनां तद्दृष्टिपथेष्वपि गंतुमशक्यत्वान्महाप्रभावरूपं दर्शितमित्याह । विश्वनाथस्तु—नात्र भक्तिभूमाप्यपेक्षणीय इत्याह—सकृदिति । किं पुनरसकृत् । मनोपि किं पुनः श्रोत्रादि । तच्च मनो गुणरागि विषयासक्तं किं पुनर्गुणरागरहितम् । स्वप्नेपि किं पुनः साक्षात् । तावन्मात्रध्यानेनैव चीर्णा निष्कृतिः प्रायश्चित्तं यैस्ते । अत्र सकृदित्यादिपदैः कस्यचिच्छुद्धभक्तस्य दैवात्पापानां पौनःपुन्ये ऽप्युत्खातदंष्ट्रोरगवदकिञ्चित्करत्वात्कुंजरशौचवदाक्षेपाविषयीभावोऽनुचित एव । “ अपि चेत्सुदुराचारो भजते मामनन्यभाक् ” इत्याद्युक्तेः ॥ १९ ॥ नन्वेवं वैदिकानामस्तु अवैदिकानां स्त्रीशूद्रादीनां पापप्रायश्चित्तं कथं स्यादित्याशंक्य भक्त्या तेषां नामसंकीर्त्तनेन दुष्कृतनिष्कृतिः स्यादितीममर्थमितिहासेन दर्शयति—अत्रेति । भक्त्या भगवन्नामसंकीर्त्तनादपि दुष्कर्मनाशः स्यात्किमु वक्तव्यमेकमनस्कत्वेन श्रीहरिचरणस्मरणादिनेत्यतो वेम मर्थमाख्यायिकया दर्शयति । अत्र वैदिकानामवैदिकानामपि भक्त्याऽभक्त्या वा नामसंकीर्त्तनादघक्षये । एवकारेणायोगं व्यवच्छिनत्ति न त्वन्ययोगं तथात्वे पूर्वोक्तास्तप आदयो व्यर्थाः स्युरित्यर्थः । ननु “इतिहासः पुरावृत्तम् ” इत्यमरोक्तेः पुनः कथं पुरातनमिति चेत्तत्र शृणु—विशिष्टवाचकानां पदानां सति विशेषणसमवधाने विशेष्यमात्रपरतैवांगीकार्या । “ स कीचकैर्मारुतपूर्णरंध्रैः, परिणतगजप्रेक्षणीयम् ” इत्यादिवदवधेयं “ कीचका वेणवस्ते स्युर्ये स्वनंत्यनिलोद्धताः ” इति, “ तिर्य्यग्दंतप्रहारस्तु गजः परिणतो मतः ” इति । इमं वर्ण्यमानम् ॥ २० ॥ अजया प्रकृत्या ज्ञानस्य मीलो मीलनं तिरोभावो यस्य स तथा । यद्वा— अजाद्धरेः पूर्वपुण्यसंपन्नज्ञानस्यामील उन्मीलनं यस्य स तथेत्युभयथाजामिलत्वं युक्तं ह्रस्वत्वं छांदसम् । यद्वाऽजातुल्यया दास्या गोतुल्यां विप्रां त्यक्त्वा मिलति संगच्छते इत्यजामिलः ‘मिल—संगमे’ इत्यत इगुपधत्वात्कः । यद्वा “अनुमीमांसते पूर्वं मनसा भगवानजः ” इह यमराज्यप्यजशब्दप्रयोगादजं यमराजं न मिलतीत्यजामिलः नामोच्चारणमहात्म्यतो विष्णुदूतैर्यमदूतेभ्यस्तस्य रक्षितत्वात् । अजं श्रीहरिमा समंतान्मिलति नामोच्चरणभ क्त्येति वाजामिलः “ हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ” इत्यग्रे वक्ष्यमाणत्वात् ॥ २१ ॥ बंदीग्रहेण धनाशया धनिकान्बंदीकृत्य तेभ्यो धनग्रहणेन । यद्वा—चटकादिपक्षिणो गृहीत्वा मार्गे स्थित्वा गच्छदागच्छ

एवं निवसतस्तस्य लालयानस्य तत्सुतान् ॥ कालोऽत्यगान्महान्राजन्नष्टाशीत्यायुषः समाः ॥ २३ ॥ तस्य प्रवयसः पुत्रा दश तेषां तु योऽवमः ॥ बालो नारायणो नाम्ना पित्रोश्च दयितो भृशम् ॥ २४ ॥ स बद्धहृदयस्तस्मिन्नर्भके कलभाषिणि ॥ निरीक्षमाणस्तल्लीलां मुमुदे जरठो भृशम् ॥ ॥२५॥ भुंजानः प्रपिबन्खादन्बालकस्नेहयंत्रितः ॥ भोजयन्पाययन्मूढो न वेदागतमंतकम् ॥ २६ ॥ स एवं वर्तमानोऽज्ञो मृत्युकाल उपस्थिते ॥ मतिं चकार तनये बाले नारायणाह्वये ॥ २७ ॥ स पाशहस्तांस्त्रीन्दृष्ट्वा पुरुषान्भृशदारुणान् ॥ वक्रतुंडानूर्ध्वरोम्ण आत्मानं नेतुमागतान् ॥ ॥ २८ ॥ दूरे क्रीडनकासक्तं पुत्रं नारायणाह्वयम् ॥ प्लावितेन स्वरेणोच्चैराजुहावाकुलेंद्रियः ॥ २९ ॥ निशम्य म्रियमाणस्य ब्रुवतो हरिकीर्तनम् ॥ भर्तुर्नाम महाराज पार्षदाः सहसाऽपतन् ॥ ३० ॥ विकर्षतोंतर्हृदयाद्दासीपतिमजामिलम् ॥ यमप्रेष्यान्विष्णुदूता वारयामासुरोजसा ॥ ३१ ॥

पीडयामास ॥ २२ ॥ आयुषः संबधी महान्कालोऽत्यगात् । स क्रियानित्यपेक्षायामाह । अष्टाशीत्या संख्यया युक्ताः समाः संवत्सराः ॥२३॥ प्रवयसो वृद्धस्य ॥२४॥ बद्धं हृदयं येन । जठरो वृद्धः ॥२५॥ एतच्च तदुपलालनादिश्रीनारायणनामोच्चारमाहात्म्येन तद्भक्तिरेवाभूदिति सिद्धांतोपयोगित्वेनापि द्रष्टव्यम् ॥ २६ ॥ २७ ॥ वक्राणि विकटानि तुंडानि मुखानि येषां तान् । ऊर्ध्वानि रोमाणि येषां तान् ॥२८॥ प्लावितेन प्लुतत्वं नीतेन ॥२९॥ हरिकीर्तनं निशम्यापतन् । यतस्तद्भर्तुर्नाम ॥३०॥३१॥

ज्जनेभ्यः किञ्चिद् द्रव्यं स्वीकृत्य तेषां मोचनं बंदीग्रहस्तेन । चौर्य्यैः परस्वापहरणैः । गर्हितां निंद्याम् । " वृत्तिर्विवरणाजीवकौशिक्यादिप्रवर्त्तने " इति मेदिनी ॥ २२ ॥ अष्टाभिरधिकाशीत्या । राजन्निति तव राज्ये एतादृशा न संति सर्वेषां स्वधर्मनिष्ठत्वादिति भावः ॥ २३ ॥ प्रगतं वयो यस्य तस्य । अवमः कनिष्ठः " कनिष्ठाधमनिःश्रीकत्रमिहीनेषु चावमः " इति निरुक्तिः । पित्रोरित्युक्तेर्मातुरपि कृतार्थत्वं पितृवद्दर्शितम् ॥ २४ ॥ कलं मधुरास्फुटं भाषितुं शीलमस्येति तथा तस्मिन् । अर्भके बाले ॥ २५ अंतकं मृत्युम् । तद्भक्तिर्नारायणभक्तिः । तत्रापि हे नारायण दुग्धं पिब नारायणागच्छ त्वां स्नापयिष्यामीत्युपचारनाम्नोपलालना द्यपि पूजनवदेवेति ॥ २६ ॥ सोऽजामिलः ॥ २७ ॥ ' तुडं स्याल्लयनं मुखम् ' इति कोशात् ॥ २८ ॥ क्रीडनकेष्वासक्तम् । तीर्थस्तु—दूरे ब्रह्मांडाद्बहिः स्थितं जगत्सर्जनादिलीलाविलासोपेतं पुन्नाम्नो नरकात्त्रातारं नारायणनामानं पूर्वाचरितपुण्यप्रचयेनोत्पन्नया भक्त्याकुलेन्द्रिय इत्याह ॥ २९ ॥ पार्षदा विष्णुपार्षदाः । भर्तुर्हरेः ब्रुवतः सतः ॥ ३० ॥ अजामिलं तत्संबंधिपुर्य्यष्टकं विकर्षत आकर्षतो यमदूतान् । अजमिलस्ये दमजामिलमिह वृद्धभाव आर्षः । पुर्य्यष्टकं चोक्तं स्वाराज्यसिद्धौ " ज्ञानेंद्रियाणि खलु पंच तथापराणि कर्मेन्द्रियाणि मनआदिचतुष्टयञ्च । प्राणादिपञ्चकमथो वियदादिकञ्च कामश्च कर्म च तमः पुनरष्टधा पूः ॥ " इति । कामोऽभिलाषः कर्म च त्रिविधं तमोमूलाज्ञानम् । जीवस्य व्यापककोटिप्रविष्टतया कर्षणं न संभवतीति ध्येयम् । ननु " अंगुष्ठमात्रं पुरुषं विचकर्ष बलाद्यमः " इति गारुडोक्तेः " अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति " इति श्रुते " अंगुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः " इत्यादिश्रुतेश्च जीवस्यांगुष्ठमात्रप्रमाणत्वादाकर्षणं संभवत्येवेति चेत्तत्रैवमवधेयं जीवस्यांगुष्ठमात्रत्वे मध्यमपरिमाणत्वा दनित्यत्वं प्रसज्येत किञ्चाव्यापित्वे देहव्यापिचैतन्याभावात्तत्समनियतस्थानेतरस्थाने पिपीलिकादिस्पर्शज्ञानं न स्यात्तर्हि कथमुक्तं श्रुत्या तथेति चेत्तत्राभिव्यक्तिस्थानहृदयस्यांगुष्टपरिमाणत्वात्तस्यापि तत्परिमाणत्वमुपचर्यते

ऊचुर्निषेधितास्तांस्ते वैवस्वतपुरःसराः ॥ के यूयं प्रतिषेद्धारो धर्मराजस्य शासनम् ॥ ३२ ॥ कस्य वा कुत आयाताः कस्मादस्य निषेधथ ॥ किं देवा उपदेवा वा यूयं किं सिद्धसत्तमाः ॥ ३३ ॥ सर्वे पद्मपलाशाक्षाः पीतकौशेयवाससः ॥ किरीटिनः कुंडलिनो लसत्पुष्करमालिनः ॥३४॥ सर्वे च नूत्नवयसः सर्वे चारुचतुर्भुजाः ॥ धनुर्निषंगासिगदाशंखचक्रांबुजश्रियः ॥ ३५ ॥ दिशो वितिमिरालोकाः कुर्वंतः स्वेन रोचिषा ॥ किमर्थं धर्मपालस्य किंकरान्नो निषेधथ ॥ ३६ ॥ श्रीशुक उवाच ॥ इत्युक्ते यमदूतैस्तैर्वासुदेवोक्तकारिणः ॥ तान्प्रत्यूचुः प्रहस्येदं मेघनिर्ह्रादया गिरा ॥ ॥ ३७ ॥ विष्णुदूता ऊचुः ॥ यूयं वै धर्मराजस्य यदि निर्देशकारिणः ॥ ब्रूत धर्मस्य नस्तत्त्वं यच्च धर्मस्य लक्षणम् ॥ ३८ ॥ कथंस्विद् ध्रियते दंडः किं वाऽस्य स्थानमीप्सितम् ॥ दंडयाः किंकारिणः सर्वे अहोस्वित्कतिचिन्नृणाम् ॥ ३९ ॥ यमदूता ऊचुः ॥ वेदप्रणिहितो धर्मो ह्यधर्मस्तद्विपर्ययः ॥ वेदो नारायणः साक्षात्स्वयंभूरिति शुश्रुम ॥ ४० ॥

पुरःसरा भृत्याः ॥ ३२ ॥ अस्य नयनं निषेधथ ॥ ३३ ॥ वयं युष्मान्न जानीम इति न कोपः कार्यो यतोऽलौकिकाद्भुतरूपा यूयमित्याहुः सर्वे इति सार्धाभ्याम् । लसंत्यः पुष्करमालाः संति येषाम् ॥३४॥ नूनं नवं वयो येषां ते । निषंग इषुधिः । धनुर्निषंगादिभिः श्रीः शोभा येषां ते ॥ ३५ ॥ विगतं तिमिरमालोकश्चान्यस्य प्रकाशो यासु तथाभूता दिशः कुर्वंतः । भवतामेतदनुचितमित्याहुः । किमर्थमिति ॥ ३६ ॥ अहो दंडयादंडयादिज्ञानशून्या एते चोरा एवास्मद्धिया धर्मराजस्य किंकरा इत्यनृतं वदंतीति विस्मयेन प्रहस्य तान्प्रत्यूचुः । मेघस्येव निर्ह्रादो ध्वनिर्यस्यास्तया ॥ ३७ ॥ तत्त्वं स्वरूपम् । लक्षणं प्रमाणम् ॥ ३८ ॥ कथंस्वित्केन प्रकारेण । स्थानं विषयः । कारिणः कर्मिणः । नृणामिति । नरा एव न पश्वादयः । तेष्वपि कतिचिदेवेत्यर्थः ॥ ३९ ॥ वेदेन प्रणिहितो विहितो धर्मः । वेदप्रमाणक इत्यर्थः । अनेन यो वेदप्रमाणकः सः धर्मो यो धर्मः स वेदप्रमाणक इति स्वरूपं प्रमाणं चोक्तम् । यथाऽऽह जैमिनिः "चोदनालक्षणोऽर्थो धर्मः" इति । व्याख्यातं च भट्टैः । "द्वयमेकेन सूत्रेण श्रुत्यर्थाभ्यां निरूप्यते" इति ॥ अपृष्टस्याप्यधर्मस्य स्वरूपं लक्षणं च दंडस्थानकथनायाहुः । तद्विपर्ययो यो वेदनिषिद्धः

काष्ठानलवदित्यलं प्रसक्तानुप्रसक्त्या ॥ ३१ ॥ तान् वैष्णवान् ॥ ३२ ॥ अस्य नयनमिति शेषः । सिद्धेषु योगसिद्धेषु सत्तमः ॥ ३३ ॥ ३४ ॥ नवं षोडशाब्दमितम् ॥ ३५ ॥ यद्यधर्मपालस्य वयं किंकरा भवेम तर्ह्यस्मन्निषेधो युक्तः स्यादिति भावः ॥ ३६ ॥ तान् याम्यान् ॥ ३७ ॥ ३८ ॥ अस्य दंडस्य । इत्यर्थ इति । शास्त्रस्य मनुष्यविषयत्वमेव केवलं न संभवति वालिप्रभृतिवानरेषु स्नानसंध्योपासनादिशास्त्राचरणस्य संपातिनाम्ना गृध्रराजेन वानरेभ्यः स्वभ्रातुर्जटायुषो मृतिमाकर्ण्य तिलांजल्यादिदानरूपशास्त्रं स्वीकृतमतस्तिर्यग्योनिषु पक्षिष्वपि शास्त्राचरणस्य च दृष्टत्वादिति भावः ॥ ३९ ॥ प्रकर्षेण निहित स्थापितः । इत्यर्थ इति । वेदप्रमाणं यत्र स धर्म इति भावः । 'अनेन वेदप्रणिहितो धर्मः' इति वचनेन । यथा धर्मस्य लक्षणं तथा जैमिनिः पूर्वमीमांसाचार्य्य आह—चोदनेति । " चोदना चोपदेशश्च विधिश्चैकार्थवा

येन स्वधाम्न्यमी भावा रजःसत्त्वतमोमयाः ॥ गुणनामक्रियारूपैर्विभाव्यंते यथातथम् ॥ ४१ ॥
सूर्योऽग्निः खं मरुद्गावः सोमः संध्याहनी दिशः ॥ कं कुः कालो धर्म इति ह्येते दैह्यस्य साक्षिणः ॥ ४२ ॥

सोऽधर्मः । निषेधश्च तस्मिन्प्रमाणमित्यर्थः । वेदस्य प्रामाण्ये हेतुः । वेदो नारायणादुद्भूतोऽतः स एव साक्षादित्युपचारः स्वयंभूरिति च निःश्वासमात्रेण स्वयमेव भवतीति । तथा च श्रुतिः । " अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः—" इति ॥ ४० ॥ कोऽसौ नारायणस्तत्राहुः । येन स्वधाम्नि स्वस्वरूपेऽमी भावाः प्राणिनो गुणाः शांतत्वादयो नामानि ब्राह्मण इत्यादीनि क्रियाश्चाध्ययनाद्या रूपाणि वर्णाश्रमादयस्तैर्विभाव्यंते विविच्यंते यथातथं यथावत्स नारायणः ॥ ४१ ॥ तथाऽप्यधर्मोऽनेन कृत इति कुतो ज्ञायते तत्राहुः । सूर्य इति । अहनी अहश्च रात्रिश्च कमुदकं कुः पृथ्वी दैह्यस्य जीवस्य । यथाऽऽहुः । "आदित्यचंद्रावनिलो

चिनः " इति भाट्टाः । अर्थ्यते प्राप्यते पदादिभ्य इत्यर्थः । अर्थो धर्म इत्युक्ते धनादीनां तथात्वं स्यात्तद्वारणाय चोदनेति । चोदनया विधिना लक्ष्यते ज्ञायते इति तथा । भट्टैर्मीमांसकैः । द्वयं धर्मस्वरूपं धर्मप्रमाणं च एकेन चोदनालक्षण इत्यनेन । श्रुतयः "अहरहः संध्यामुपासीत" इत्याद्याः । अत्रोपासीतेति चोदनया संध्योपासनरूपो धर्मो लक्षितः । अर्थश्च चोदना तव्यलिङ्लोट्रूपैव लक्षणं प्रमाणं यत्र स तथेत्येवंरूपा व्याख्या ताभ्यां " यावज्जीवमग्निहोत्रं जुहुयात् " अत्र जुहुयादितिचोदनैव यावज्जीवाग्निहोत्रकरणे प्रमाणं नान्यदित्यर्थः । ननु " नापृष्टः कस्यचिद् ब्रूयात् " इत्युक्तेरधर्मस्तु तैर्नापृष्टः स कथमुक्त इति चेदाह—अपृष्टस्यापीति । वेदेन निषिद्धः । " ब्राह्मणं न हन्यात् " इत्येवंरूपया श्रुत्या यो वर्जितो ब्रह्महत्यादिरूपः सोऽधर्म इति । तस्मिन्नधर्मे । इत्यर्थ इति । निषेधशास्त्रप्रमाणको वेदनिषिद्धोऽधर्म इति भावः । वेदनिःश्वसितत्वे प्रमाणमाह—तथा चेति । महतो भूम्नः भूतस्य पुरुषस्यैतान्निःश्वसितमित्यन्वयः । एतत्किमित्याकांक्षायामाह—ऋग्वेद इति । सर्वा श्रुतिः—" अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वांगिरसः इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि " इति बृहदारण्यके पठितेति । तथा चेतिहासपुराणादीनामपि परमेश्वरनिश्श्वसितत्वात्तत्प्रणिहितधर्मस्यापि धर्मत्वमव्याहतमेव श्रीजैमिनिनापि वेदाविरोधेन पुराणेतिहासादीनां प्रामाण्यं साधितम् " विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् " इति जैमिनिसूत्रेणास्यार्थः । श्रुत्या सह विरोधे त्वनुमानं स्मृतिवाक्यमनपेक्ष्यमुपेक्ष्यं त्याज्यमिति यावत् । हि यतोऽसति श्रुतिविरोधे स्मृतिवाक्यं प्रमाणं नान्यथेति तदर्थः यद्वा-ननु कथं श्रुतिविरोधेन स्मृतिवाक्यस्याप्रामाण्यं यावता तन्मूलभूतापि काचिच्छ्रुतिरनुमास्यत इत्याशंक्याह-असतीति । प्रत्यक्षश्रुत्या सह विरोधेऽसत्येव स्मृतिमूलश्रुतेरनुमानं भवति नान्यथेत्यर्थः। शिष्टं पूर्ववत् शिष्टाकोपेऽविरुद्धमिति चेन्न " शास्त्रपरिमाणत्वात् " इति सूत्रांतरमप्यत्रैव चोद्योत्तरत्वेन व्याख्यातं भट्टपादैः । तथा हि—य त्तर्हि वेदविहितं न बाधते शिष्टान्वा न कोपयति विहारारामामंडलकरणवैराग्यध्यानाभ्यासाहिंसासत्यवचनदमदानदयादि तद् बुद्धाद्यभिभाषितमपि प्रमाणेनाविरुद्धमिति चेन्न शास्त्राणां परिमाणत्वात । परिमितान्येव हि चतुर्दशाष्टादश वा विद्यास्थानानि धर्मप्रमाणत्वेन शिष्टैः परिगृहीतानि वेदोपवेदांगोपांगाष्टादशधर्मसंहितापुराणशास्त्राशिक्षादंडनीतीतिसंज्ञकानि । न च तेषां मध्ये बौद्धार्हतवामपाशुपतादिग्रंथा गृहीतास्स्मृता वेति नास्ति तेषां धर्मे प्रामाण्यमिति श्वदृतिक्षिप्तगोक्षीरवत् वेदाविरोधी शिष्टकोपाजनकोऽप्यंशस्तेषामग्राह्य एव यदा शास्त्रांतरेणापि सोऽर्थः स्पष्टोऽवधार्यते तदा तेनैव सिद्धत्वादितरत्स्यादनर्थकमिति पूर्वमीमांसायाम् ॥ ४० ॥ यथा च तथा चानयोः समाहारो यथातथम् । असांकर्येणेत्यर्थः । यद्वा—यो यथा भवति स तथैव भवतीति यथातथमिति पृषोदरादित्वात्साधुः ॥ ४१ ॥ यद्यप्येवमस्ति तथापीत्यर्थः । अहश्च रात्रिश्चाहनी " नपुंसकमनपुंसकेन—" इति नपुंसकशेषः । द्योशब्देन द्यौः । बहुवचनात्तत्संचारिणो देवा

एतैरधर्मो विज्ञातः स्थानं दंडस्य युज्यते ॥ सर्वे क्रमानुरोधेन दंडमर्हंति कारिणः ॥ ४३ ॥ संभवंति हि भद्राणि विपरीतानि चानघाः ॥ कारिणां गुणसंगोऽस्ति देहवान्न ह्यकर्मकृत् ॥ ४४ ॥ येन यावान्यथा धर्मोऽधर्मो वेह समीहितः ॥ स एव तत्फलं भुंक्ते तथा तावदमुत्र वै ॥ ४५ ॥ यथेह देवप्रवरास्त्रैविध्यमुपलभ्यते ॥ भूतेषु गुणवैचित्र्यात्तथाऽन्यत्रानुमीयते ॥ ४६ ॥ वर्तमानोऽन्ययोः कालो गुणाभिज्ञापको यथा ॥ एवं जन्मान्ययोरेतद्धर्माधर्मनिदर्शनम् ॥ ४७ ॥

नलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रात्रिश्च उभे च संध्ये धर्मश्च जानाति नरस्य वृत्तम् ॥ " इति ॥ ४२ ॥ स्थानमाहुः । एतैर्निमित्तभूतैर्विज्ञातः । दंड्यानाहुः । सर्वे इति ॥ ४३ ॥ विपरीतान्यभद्राण्यपि कर्मिणां संभवंति यतस्तेषां गुणसंगोस्ति । यदि कश्चिदकर्ता स्यात्तर्हि तस्याभद्राणि न स्युर्न त्वेतदस्तीत्याहुः न हि देहवानकर्मक्रुदस्तीति। अतः सर्वे कर्मिणः।कर्मिणां च पापस्यावश्यंभावित्वात्ते सर्वे क्रमानुरोधेन दंडमर्हंतीत्यर्थः॥ ४४ ॥कथंस्विद्क्रियते दंड इत्यस्योत्तरं येनेति।धर्मो वेति दृष्टांतः। अधर्मानुसारेण दंडो धर्मानुसारेण सुखवदित्यर्थः ॥४५॥ न केवलं सूर्यादय एव धर्माधर्मज्ञापकाः किं त्वर्थापत्तिरपीत्याहुः । यथेति । हे देवप्रवराः इह जन्मनि शांतघोरमूढत्वेन वा सुखदुःखमिश्रत्वेन वा धार्मिकत्वादिना वा त्रैविध्यं भूतेषु यथोपलभ्यते तथाऽन्यत्र जन्मांतरेऽनुमीयते त्रैविध्यान्यथानुपपत्त्या कल्प्यते ॥ ४६ ॥ वर्तमानजन्मना पूर्वापरजन्मधर्माधर्मज्ञानं भवतीति सदृष्टांतमाहुः । वर्तमानो वसंतादिकालोऽन्ययोर्भूतभविष्ययोर्वसंतयोर्ये गुणाः पुष्पफलादयस्तेषामभिज्ञापको यथैवमेतज्जन्म अन्ययोर्भूतभावि

इत्यर्थः । अत्र प्रमाणमाह—यथाह्नुरिति । पौराणिकाः । कालः सामान्यकालाभिमानी । धर्मः कश्चिद्यमाद्भिन्नो धर्माभिमानी देवता विशेषो यमस्य पृथग्ग्रहणात् । यद्वा—' धर्मो धर्मविदुत्तमः ' इति सहस्रनामसु पठितत्वाद्विष्णुरिति । वृत्तं चलनम् । साक्षिणः साक्षाद्द्रष्टारस्तद्भद्राभद्रव्यंजकाः इत्यर्थः ॥ ४२ ॥ एतैः सूर्यादिभिः । कर्मानुरोधेन स्वस्वपापकर्मानतिक्रमेण कारिणः पापकारिण एव न तु पुण्यकारिणोऽपि तेषां दंडयत्वाश्रवणात् ॥ ४३ ॥ अतो देहिनः कर्मकर्तृत्वात् । इत्यर्थ इति । पुण्यकर्मिणामपि यथाकथंचिन्नृगादिवत्पापसंबंधो भवत्येवात उक्तं सर्वे इति भावः । अनघा इति । भवंत एव भगवत्पार्षदत्वात्पापसंबंधशून्या नान्ये इति भावः ॥ ४४ ॥ इत्यर्थ इति । वाशब्दोऽत्रोपमावाचको न तु पक्षांतरवाचक इति भावः । येन नरेण यावान्यत्प्रमाणकोऽधर्मः समीहितः कृतः तावत्प्रमाणकम् ॥ ४५ ॥ अर्थापत्तिरनुपपत्तिज्ञानं तथा हि देवदत्ते पीनत्वं दिवाभोजनाभावं च जानतो रात्रिभोजनज्ञानं जायते तन्न प्रत्यक्षात् सन्निकर्षाद्यभावेनानुपलंभात् नानुमानात् तस्याप्यसंभवात् अयं रात्रिभोजी पीनत्वादित्यस्य दिवामात्रभुंजानेऽपि व्यभिचारात् दिवाऽभुंजानत्वे सति पीनत्वादित्यत्र दृष्टांताभावेन व्याप्त्यग्रहादनुमित्ययोगात् तस्माद्दिवाऽभुंजानस्य पीनत्वान्यथानुपपत्त्या रात्रिभोजनज्ञानं जायते सेयमर्थापत्तिरिति प्राभाकराः । देवप्रवरा इति । देवा अपि सर्वज्ञत्वेनेदं वृत्तं जानंति किं पुनर्देवप्रवरा भवंत इति भावः ॥ ४६ ॥ वर्त्तमान इति । एतदभिप्रायकश्श्लोकः शिशुपालवधकाव्ये श्रीकृष्णेनापि श्रीनारदं प्रति " हरत्यघं संप्रति हेतुरेष्यतः शुभस्य पूर्वाचरितैः शुभैः कृतम् । शरीरभाजां भवदीयदर्शनं

मनसैव पुरे देवः पूर्वरूपं विपश्यति ॥ अनुमीमांसते पूर्वं मनसा भगवानजः ॥ ४८ ॥ यथाऽज्ञस्तमसा युक्त उपास्ते व्यक्तमेव हि ॥ न वेद पूर्वमपरं नष्टजन्मस्मृतिस्तथा ॥ ४९ ॥ पंचभिः कुरुते स्वार्थान्पंच वेदाथ पञ्चभिः ॥ एकस्तु षोडशेन त्रीन्स्वयं सप्तदशोऽश्नुते ॥ ५० ॥ तदेतत्षोडशकलं लिंगं शक्तित्रयं महत् ॥ धत्तेऽनु संसृतिं पुंसि हर्षशोकभयार्तिदाम् ॥ ५१ ॥

जन्मनोर्धर्माधर्मौ निदर्शयतीति तथा ॥ ४७ ॥ अयं च धर्माधर्मज्ञानप्रकारोऽन्येषां धमराजस्तु मनसैव सर्वं पश्यतीत्याहुः । पुरे संयमिन्यां स्थित एव देवो यमो देहे स्थितोंतर्यामी वा जीवस्य पूर्वरूपं धर्माधर्मादियुक्तं विशेषेण पश्यति । अन्वनंतरमपूर्वं रूपं मीमांसते । यद्यस्यानुरूपं तद्विचारयति यतोऽसौ भगवानजः ॥ ४८ ॥ जीवस्त्वीश्वरेणोपस्थापितं वर्तमानं देहं पश्यति न तु पूर्वमपरं चेत्याहुः । यथेति । अज्ञोऽविद्योपाधिर्जीवस्तु व्यक्तमेव प्राचीनकर्माभिव्यक्तं वर्तमानमेव देहाद्युपास्तेऽहमिति मन्यते पूर्वमपरं वा न वेद । अत्र हेतुः । नष्टा जन्मनां स्मृतिर्यस्य । अत्र दृष्टांतः । तमसा निद्रया युक्तो यथा स्वप्नेऽपि व्यक्तमेव देहाद्युपास्ते न तु जाग्रद्देहादि पूर्वस्वप्नादिगतं वा तद्वदित्यर्थः ॥४९॥ एवंभूतस्य जीवस्य संसारं प्रपंचयंति पंचभिः श्लोकैः । पंचभिः कर्मेंद्रियैः स्वार्थानुपादानादीन्कुरुते । तथा पंच शब्दादीन्वेद । पंचभिर्ज्ञानेंद्रियैः षोडशेन मनसा सह सप्तदशः षोडशोपाध्यंतर्गतोऽपि स्वयं त्वेक एव सर्वेन्द्रियविषयप्रतिसंधानात् । त्रीन् ज्ञानकर्मेंद्रियमनोविषयान्प्राप्नोति ॥ ५० ॥ तदेतल्लिंगशरीरं शक्तित्रयं

व्यनक्ति कालत्रितयेऽपि योग्यताम् ॥'' इति पठितः ॥ ४७ ॥ यमः सर्वं पश्यति चेत्तर्हि सूर्यादिसाक्षिग्रहणं व्यर्थमिति चेदत्राह–देहे स्थित इति । नवद्वारे पुरे इत्यत्र देहेऽपि पुरशब्दप्रयोगात् । यमपक्षे भगवान्सर्वज्ञः अजति पापिनः क्षिपति तिरस्करोतीत्यजः । यद्वा–अं वासुदेवं जपतीत्यजः कर्मण्युपपदे जपतेर्डः । 'प्रीतः स्वदूतान्प्रत्याह' 'स्मरन्पादांबुजं हरेः' इत्यग्रे वक्ष्यमाणत्वात् । अजः परमेष्ठी तु मनसाऽनुमीमांसते विचार्य पश्यतीत्यर्थः । इह च " अजो ह्येको जुषमाणोऽनुशेते " इति श्रुत्युक्तसर्वजीवसाधारणाजशब्दप्रयोगादन्ये देवा अपि यथायोग्यं जानंतीति तीर्थः । यद्वा–सुरतिर्यगादिपुरे देवः क्रीडन् भगवान्भाग्यगुणोपेतो जीवः पूर्वानुभवसंस्कारसंस्कृतेन मनसैव पूर्वरूपं धर्माधर्मसमवेतात्मरूपं विपश्यति जानाति । अपूर्वमनागतं मनसानुमीमांसते विचार्यानुमिनोति एतादृशकर्मकरणादेतादृशो भविष्यामीत्यनुमानं करोतीत्यर्थः ॥ ४८ ॥ अत्र पूर्वापराज्ञाने । अत्रोक्तार्थे । इत्यर्थ इति । तमोग्रस्तत्वेन ज्ञानाभावादिति भावः । पक्षांतरे पूर्वापरे रूपे जानाति चेत्तर्हि कथमन्यत्र मृतोऽन्यत्र जातोहमिति न जानातीत्याशंक्य श्रीहर्यनुग्रहं विना तादृशज्ञानं न सुलभं सर्वेषामित्यभिप्रेत्याहुः यथेति । अज्ञोऽविवेकी । अव्यक्तमेव प्रकृतिनिर्मितदेहमेवास्ते देहात्मनोरभेदं कल्पयति व्यक्तमेव पुरस्थितमेव जानाति न तु पूर्वापरे इति वा। तत्र हेतुः–तमसेति । विपरीतप्रत्ययापादकतमोगुणयुक्तत्वात्। अत एव पूर्वमपरञ्च न वेद यथा तथा नष्टजन्मस्मृतिः पुरुषः अन्यत्र जातोस्मीत्यादि न जानातीत्यर्थः ॥ ४९ ॥ एवंभूतस्याज्ञस्य स्वार्थान्स्वविषयान् । आदिना गत्यादिग्रहः । सर्वेंद्रियविषयाणां प्रतिसंधानात् । अहं पश्यामि शृणोमि जिघ्रामि स्पृशामि रसयामि गच्छामीत्यादिना सर्वेन्द्रियविषयानेक एव गृह्णातीत्यर्थः ॥ ५० ॥ तर्हि कस्मात्संसारोऽस्येति तत्राह–तदेतदिति । षोडशकलाः श्रोत्रादींद्रियाणि दशपंचभूतानि मनश्चेत्येवंलक्षणा यत्र, शक्तीनां प्रकाशक्रियावरणलक्षणानां त्रयं यस्मिंस्तत्तथा सत्त्वादिगुणशक्तियुक्तमित्यर्थः । अत एव पुरुषार्थाभिभवसमर्थं त्रिशक्तियुक्तत्वाद्धर्षादिप्रदं लिंगशरीरं पुंस्यानुकूल्येन संसृतिं धत्त इत्यन्वयः ।

देह्यज्ञोऽजितषड्वर्गो नेच्छन्कर्माणि कार्यते ॥ कोशकार इवात्मानं कर्मणाऽऽच्छाद्य मुह्यति ॥ ५२॥ न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥ कार्यते ह्यवशः कर्मगुणैः स्वाभाविकैर्बलात् ॥ ५३ ॥ लब्ध्वा निमित्तमव्यक्तं व्यक्ताव्यक्तं भवत्युत ॥ यथायोनि यथाबीजं स्वभावेन बलीयसा ॥ ॥५४॥ एष प्रकृतिसंगेन पुरुषस्य विपर्ययः ॥ आसीत्स एव न चिरादीशसंगाद्विलीयते ॥५५॥ अयं हि श्रुतसंपन्नः शीलवृत्तगुणालयः ॥ धृतव्रतो मृदुर्दांतः सत्यवान्मंत्रविच्छुचिः ॥ ५६ ॥ गुर्वग्न्यतिथिवृद्धानां शुश्रूषुर्निरहंकृतः ॥ सर्वभूतसुहृत्साधुर्मितवागनसूयकः ॥ ५७ ॥ एकदाऽसौ वनं यातः पितृसंदेशकृद्द्विजः ॥ आदाय तत आवृत्तः फलपुष्पसमित्कुशान् ॥ ५८ ॥ ददर्श कामिनं कंचिच्छूद्रं सह भुजिष्यया ॥ पीत्वा च मधु मैरेयं मदाघूर्णितनेत्रया ॥ ५९ ॥ मत्तया विश्लथन्नीव्या व्यपेतं निरपत्रपम् ॥ क्रीडंतमनुगायंतं हसंतमनयांतिके ॥ ६० ॥

गुणत्रयकार्यं महदनादि पुंसि जीवे अन्वनु संसृतिं धत्ते ॥ ५१ ॥ नेच्छन्ननिच्छन्नप्यनेनैव लिंगेन कर्माणि कार्यते । कोशकारः कीटविशेषः । मुह्यति निर्गमोपायं न जानाति ॥ ५२ ॥ कार्यत इत्यत्रानुभवं प्रमाणयंति । न हीति । गुणैर्गुणकार्यैरागादिभिः स्वाभाविकैः पूर्वकर्मसंस्कारोद्भूतैः ॥ ५३ ॥ कर्मवशेन च तदनुरूपो देहो भवतीत्याहुः । लब्ध्वेति । अव्यक्तमदृष्टं निमित्तं लब्ध्वा व्यक्ताव्यक्तं तदनुरूपं स्थूलं सूक्ष्मं च शरीरं भवति । यथायोनि मातृसदृशम् । यथा बीजं पितृसदृशम् । स्वभावो वासना । शुक्रशोणितयोः सर्वत्रैकत्वेऽपि कर्मवासनया मातापितृसदृशो देहो भवतीत्यर्थः ॥ ५४ ॥ संसारचक्रमुपसंहरंतो मुक्तिप्रकारमाहुः । एष इति । ईशसंगात्परमेश्वरभजनात् ॥ ५५ ॥ तदेवं सामान्यतो धर्मादिनिर्णयमुक्त्वा प्रस्तुतस्याजामिलस्याधर्मं प्रपंचयंतो दंड्यत्वमाहुः अयं हीति यावदध्यायसमाप्ति । तत्र द्वाभ्यां तत्पूर्ववृत्तांतानुवादोऽन्यायातिरेकप्रदर्शनार्थः । शीलं सुस्वभावो वृत्तं सदाचारो गुणाः क्षमादयस्तेषामालयोऽयम् ॥ ५६ ॥ निरहंकृतो निरहंकारः ॥ ५७ ॥ तत आवृत्तो वनात्परावृत्तः ॥ ५८ ॥ भुजिष्यया भोगस्त्रिया दास्या । मैरेयं मधु पैष्टीं सुरां पीत्वा मदेनाघूर्णिते भ्रांते नेत्रे यस्याः ॥ ५९ ॥ विशेषेण श्लथंती

अधिकरणत्वमात्रप्रदर्शनाय पुंसीति सप्तमी तस्मादभिमाननिमित्तमिदं सर्वमित्यर्थः॥५१॥ आत्मनः संसारप्रकारं दर्शयति। देहीति। अवशीकृतषडिंद्रियवर्गोऽनिच्छन्नपि गुणाधीनषडिंद्रियैरिति शेषः।'गुणाः सृजंति कर्माणि' इत्येकादशे वक्ष्यमाणत्वात् । कार्य्यते विष्टिगृहीतवद्बलात्कार्यमाणश्चेत्स्वसंपद्विपदी वेत्ति किन्नेत्याह—कोशकार इति । यथा कोशकारः कृमिः स्वकर्मणा निर्मितकोशेनात्मानमाच्छाद्य कोश एव वसन्मुह्यति कोशनाशानाशौ न जानाति तथा देह्यपीति भावः ॥ ५२ ॥ मोहोऽस्यास्तीति कुतो ज्ञायते इत्याशंक्य पुनःपुनः कर्मकरणादित्यभिसंधिमंतः स्वोक्तार्थे प्रमाणं दर्शयंति—न हीति ॥ ५३ ॥ जन्ममरणेऽपि देहस्यैवात्मनस्तु तदभिमानादुपचर्य्येत इत्याहुर्लब्ध्वेति । संसारनिमित्तमव्यक्तं प्रकृतिकार्यं शरीरं लब्ध्वा व्यक्ताव्यक्तमुत जन्ममरणमपि भवति जीवस्योपचारेणेति शेषः । " देहस्य सर्वथानाशादनाशाच्चेतनस्य च " इत्याद्युक्तेः । निमित्तं कारणमव्यक्तं प्रकृतिं लब्ध्वा प्राप्य व्यक्ताव्यक्तं जननमरणात्मकं शरीरं भवति । जीवस्येति शेष इति वा। यथायोनि पश्वादियोनिमनतिलंघ्य यथाबीजं कर्मराशिमनतिक्रम्य सत्त्वादिनिमित्तस्वभावेनेति तीर्थः।स्वामिभिस्तु—तदनुरूपम् अदृष्टेन सदृशम् । इत्यर्थ इति । अदृष्टेन निमित्तेन ये योनिबीजे प्राप्येते तत्स्वभावानुसारेण भवतीति भाव इत्थं व्याख्यातम् ॥ ५४ ॥ य एष जीवस्य विपर्ययः संसारः प्रकृतिसंगेन प्रकृत्यध्यासेनासीत्स एवेशभजनाद्विलीयते समूलतूलं विच्छिद्यते ॥ ५५ ॥ तत्र अध्यायसमाप्तेरर्वाचीनभागेऽपि । अतिरेक आधिक्यम् ॥ ५६ ॥ साधुः स्वधर्मनिष्ठः ॥ ५७ ॥ ५८ ॥ ५९ ॥ नीविर्वस्त्रग्रंथिः ॥ ६० ॥

दृष्ट्वा तां कामलिप्तेन बाहुना परिरंभिताम् ॥ जगाम हृच्छयवशं सहसैव विमोहितः ॥ ६१ ॥ स्तंभयन्नात्मनात्मानं यावत्सत्त्वं यथाश्रुतम् ॥ न शशाक समाधातुं मनो मदनवेपितम् ॥ ६२ ॥ तन्निमित्तस्मरव्याजग्रहग्रस्तो विचेतनः ॥ तामेव मनसा ध्यायन्स्वधर्माद्विरराम ह ॥ ६३ ॥ तामेव तोषयामास पित्र्येणार्थेन यावता ॥ ग्राम्यैर्मनोरमैः कामैः प्रसीदेत यथा तथा ॥ ६४ ॥ विप्रां स्वभार्यामप्रौढां कुले महति लंभिताम् ॥ विससर्जाचिरात्पापः स्वैरिण्यापांगविद्धधीः ॥६५॥ यतस्ततश्चोपनिन्ये न्यायतोऽन्यायतो धनम् ॥ बभारास्याः कुटुंबिन्याः कुटुंबं मंदधीरयम् ॥६६॥

नीवी यस्यास्तया सह । व्यपेतं स्वाचाराद्भ्रष्टम् ॥ ६० ॥ कामेन कामोद्दीपकेन तदंगरागेण हरिद्रादिना लिप्तेन ॥ ६१ ॥ सत्त्वं धैर्यं श्रुतं ज्ञानं तद्बलेन स्तंभयन्नपि मदनेन कंपितं मनः समाधातुं नियमितुं शक्तो नाभूत् ॥६२॥ तद्दर्शनमेव निमित्तं यस्य स्मरव्याजग्रहस्य तेन ग्रस्तः । विचेतनो गतस्मृतिः॥६३॥ यावता समग्रेण॥६४॥ लंभितां परिणीताम् ॥ ६५ ॥ ६६ ॥

सहसा झटित्येव॥६१॥ज्ञानं शास्त्रीयं "यस्यां योनौ पतेद्रेतः सा योनिस्तस्य जायते" इत्येवंलक्षणमतः कुयोनौ वीर्यं न पातयेदिति विचारयन्नपि मदनस्यातीव बलवत्तरत्वात्।तदुक्तम् "केचित्प्रचंडमृगराजवधेऽपि दक्षा मत्तेभकुंभदलने भुवि केऽपि शूराः।किन्तु ब्रवीमि बलिनां पुरतः प्रसह्य कंदर्पदर्पदलने विरला मनुष्याः॥" इति भर्तृहरिणा।अत्र व्यासजैमिन्याख्यायिकाप्यनुसंधेया तथाहि—कदाचिद्व्यासेनोक्तं जैमिनये कामोऽतिबलीयानतो दुर्जय इति तदाकर्ण्य जैमिनिराह को वराकःकामोऽहं निर्जितकामोऽस्मीति इति श्रुत्वा कदाचिद्व्यासदेवस्तत्परीक्षार्थं स्वस्य स्त्रीरूपं कृत्वा तामसीरात्रौ किञ्चिन्मेघे वर्षति जैमिन्याश्रमं गत्वोचे भो मुने सार्थच्युतातीवव्याकुला वनेऽतीवभीता त्वदाश्रमं प्राप्तास्मि रात्रिमुषित्वा प्रातः सूर्योदये स्वसार्थमन्विष्य तेन मेलिष्यामीत्याकर्ण्य स प्राह इतोऽन्यत्र गच्छ स्त्रियं नात्र वासयामीति सा चाहाहो एकाकिनी तमिस्रायां वने कुत्राहं गमिष्यामि शरणागतायाः परित्यागो हि शास्त्रनिषिद्धः सर्वज्ञस्त्वं जानास्येव ततो जैमिनिनोक्तं कुंचिकां गृहाण पार्श्वकोष्ठांतर्गत्वांतर्यंत्रितकपाटा शेष्वासूर्योदयाद्यद्यहमपि कपाटोद्घाटनार्थं वदिष्यामि तदा नोद्घाटनीयं सा चाहमित्थमेव करिष्ये इति तया तथैव कृतम् । पुनश्च मनोभवप्रेरितजैमिनिना विमृष्टमहो निर्जने रात्रावेकाकिनी सुरूपा युवतिर्दैवादेकाकिनः पार्श्वमुपागता किमर्थमनयाहं न रमे । किञ्चात्राक्रोशेपि क्रियमाणे कश्चिन्नायास्यतीति संचिंत्य पर्णशालातो बहिरागत्य तामाह सुभगे द्वारमुद्घाटयेति सा जाग्रत्येव किञ्चिन्नोचे तदा बहुशः प्रार्थितयापि यदा कपाटोद्घाटनं न कृतं तया तदा जैमिनिः कोष्ठोपरि गत्वा कोष्टभेदं विधाय यदा कोष्ठांतः प्रविष्टस्तदा श्रीव्यासदेवं तत्र स्थितं दृष्ट्वातीव सापत्रपो भूत्वा ननाम उवाच च श्रीगुरो सत्यं कामो दुर्जयो ममापराधं क्षमस्वेति । ततो व्यासदेवो निजाश्रमं जगामेति बृहत्कथादौ स्पष्टम् ॥ ६२ ॥ स्वधर्माद्विप्रजातिविहितात् । विरराम तं तत्याजेति भावः ॥ ६३ ॥ कामैर्विषयैः । ग्राम्यैः स्त्रीवशीकरणसाधनैः "ग्राम्यं स्त्रीकरणे क्लीबेऽश्लीलप्राकृतयोस्त्रिषु" इति मेदिनी । यथा सा प्रसीदेत् तथा पितृसंपादितधनेन तोषयामास तदधीनोऽकार्यमपि चकारेति भावः ॥ ६४ ॥ अप्रौढां स्वैरिणीवत्कामकेलिष्वनिपुणाम् "प्रौढः स्याद्यूनि निपुणे विपुले च त्रिषु स्फुटे" इति निरुक्तिः ॥ ६५ ॥ अस्याः शूद्रायाः ॥ ६६ ॥

यदसौ शास्त्रमुल्लंघ्य स्वैरचार्यातिगर्हितः ॥ अवर्तत चिरं कालमघायुरशुचिर्मलात् ॥ ६७ ॥ तत एनं दंडपाणेः सकाशं कृतकिल्बिषम् ॥ नेष्यामोऽकृतनिर्वेशं यत्र दंडेन शुध्यति ॥ ६८ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे अजामिलोपाख्याने प्रथमोऽध्यायः ॥ १ ॥ ॥ छ ॥ श्रीशुक उवाच ॥ एवं ते भगवद्दूता यमदूताभिभाषितम् ॥ उपधार्याऽथ तान्राजन्प्रत्याहुर्नयकोविदाः ॥ १ ॥ विष्णुदूता ऊचुः ॥ अहो कष्टं धर्मदृशामधर्मः स्पृशते सभाम् ॥ यत्राऽदंड्येष्वपापेषु दंडो यैर्ध्रियते वृथा ॥२॥ प्रजानां पितरो ये च शास्तारः साधवः समाः ॥ यदि स्यात्तेषु वैषम्यं कं यांति शरणं प्रजाः ॥ ३ ॥ यद्यदाचरति श्रेयानितरस्तत्तदीहते ॥ स यत्प्रमाणं कुरुते लोकस्तदनु वर्तते ॥ ४ ॥ यस्यांके शिर आधाय लोकः स्वपिति निर्वृतः ॥ स्वयं धर्ममधर्मं वा न हि वेद यथा पशुः ॥ ५ ॥ स कथं न्यर्पितात्मानं कृतमैत्रमचेतनम् ॥ विश्रंभणीयो भूतानां सघृणो द्रोग्धुमर्हति ॥ ६ ॥

अघरूपमायुर्यस्य मलमेव तदीयमन्नादिकमत्तीति मलात् ॥ ६७ ॥ अकृतनिर्वेशमकृतप्रायश्चित्तम् ॥ अस्यैव च हितार्थे नेष्याम इत्याहुः । यत्रेति ॥ ॥ ६८ ॥ इति श्रीमद्भा०म० षष्ठस्कंधे टीकायां प्रथमोऽध्यायः ॥ १ ॥ छ ॥ द्वितीये वैष्णवैर्याम्यान्नाममाहात्म्यमद्भुतम् ॥ श्रावयित्वा द्विजो विष्णोर्लोकं नीत इतीर्यते ॥ १ ॥ नयकोविदा न्यायनिपुणाः ॥ १ ॥ धर्मदृशां सभामधर्मः स्पृशति । तदाहुः । यत्र सभायाम् । यैर्धर्मदृग्भिस्तेषां तां सभाम् ॥ २ ॥ पितरः पितृवत्पालकाः । शास्तारोऽनुशिक्षकाः । वैषम्यमदंड्यदंडनम् ॥ ३ ॥ एतत्प्रवर्तितमधर्ममन्योऽपि करिष्यतीति महत्कष्टमभूदित्याहुः । यद्यदिति । श्रेयान् श्रेष्ठः ॥ ४ ॥ विश्वस्तघातादपीत्याहुः यस्येति द्वाभ्याम् । निर्वृतो निश्चिंतः ॥ ५ ॥ विश्वासेन नितरामर्पित आत्मा येन

अघायुरिंद्रियतर्पणरतत्वात् । "अघायुरिंद्रियारामो मोघं पार्थ स जीवति" इति श्रीगीतोक्तेः । अत एव मलात् स्नानादिकर्मत्यागादिति 'अस्नाताशी मलं भुंक्ते' इति स्मृतेः । स्नानमपि मृद्गोमयादिधारणपूर्वकमंत्रकृतमेव न तु श्वादिवन्निमज्जनमात्रमप्यन्यथा मत्स्यादीनां सर्वदा निमज्जनशीलत्वादतीवधर्मवत्त्वं स्यादिति भावः ॥ ६७ ॥ यद्यतोऽसावघायुस्ततो हेतोः । यत्र दंडपाणिपार्श्वे "विष्णौ राज्ञि धर्मराजे दंडपाणिर्यतौ तथा" इति निरुक्तिः ॥ ६८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ ॥ याम्यानिति द्वितीया सूत्रे ज्ञानसामान्यार्थानामेव ग्रहणमित्युक्तत्वादत्र श्रावयित्वेति णिजंतसंबंधेऽपि नोचिता तथापि 'अन्ययकृतो भावे' इत्युक्तत्वाच्छृणोतेरकर्मकतामभिप्रेत्य सा कृता अकर्मकादेव भावार्थप्रत्ययोत्पत्तेर्विहितत्वादिति । यद्वा—याम्यान्प्रति नाममाहात्म्यमित्यन्वयः ( १ ) राजन्निति । त्वं तु राजत्वादंड्यादंड्यव्यवहारनिपुणोऽसीति भावः । नयकोविदाः प्रायश्चित्तशास्त्रकोविदाः ॥ १ ॥ २ ॥ साधवः सदाचाराः ॥ ३ ॥ प्रजाऽनिष्टं शोचंत आहुरेतत्प्रवर्त्तितमित्यादि । श्रेयान् सर्वशास्त्रतत्त्वज्ञः ॥ ४ ॥ यस्य श्रेष्ठत्वेनाभिमतस्य पशुर्यथा सौनकेन पाल्यमानस्तस्मिन्विश्वस्तो धर्माधर्मं न वेत्ति तेन सहाघातस्थानमपि गच्छति ॥ ५ ॥ कृतमैत्रं कृतविश्वासम् । अचेतनम् अज्ञम् । सघृणः 'घृणा दयाऽनुकंपा स्यात्' इत्यमरोक्तेर्दयालुश्चेत्तर्हि कथं

अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि ॥ यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥ ७ ॥
एतेनैव ह्यघोनोस्य कृतं स्यादघनिष्कृतम् ॥ यदा नारायणायेति जगाद चतुरक्षरम् ॥ ८ ॥

तं विश्रंभणीयो विश्वसनीयः सघृणश्चेत् ॥ ६ ॥ नन्वस्य पापिनो दंडे किमर्थमाक्रोशः क्रियते तत्राहुः । अयं हीति । यद्यस्माद्विवशोऽपि हरेर्नाम व्याजहारोच्चारितवान् न केवलं प्रायश्चित्तमात्रं हरेर्नामापि तु स्वस्त्ययनं मोक्षसाधनमपि । "सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ " इति स्मृतेः ॥ ७ ॥ ननु कर्मसाद्गुण्यकरं हरेर्नामेति युक्तम् "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमच्युतम् ॥ " इत्यादिवचनात् । स्वातंत्र्येण त्वघनिवर्तकं हरेर्नाम कथं स्यात्तत्राहुः । एतेनैवेति । अघोनः अघवतो मघवच्छब्दवद्रूपम् । यत् आ इति च्छेदः । आ ईषदाभासमात्रं चतुरक्षरं यन्नाम जगाद । एतेनैव केवलेन चतुरक्षरमित्यनेनाधिक्यं च दर्शितम् । कथं जगाद । नारायण आय आगच्छेत्येवं विक्रोशरूपेण पुत्राह्वानेन । अयं भावः । कर्मांगत्वेऽपि हरिनाम्नः

द्रोग्धुं जिघांसितुमर्हति न कथमपीत्यर्थः ॥ ६ ॥ अत्राशंकंते—नन्विति । आक्रोशो वाग्वादः । परिकरो दृढत्वेन कटिबंधः ॥ ७ ॥ पुनराक्षिपति—नन्विति । सद्गुणस्य भावः साद्गुण्यं कर्मणः साद्गुण्यं कर्मसाद्गुण्यं तत्करोतीति तथा । यस्य हरेः । आदिना जपादिग्रहः । आकारेणेनाह्वानेन । अत्राशयमाह—अयं भाव इति । खादिरत्वादीति । अत्र जैमिनिसूत्रम् " एकस्य तूभयार्थत्वे संयोगपृथक्त्वम्" इति । अस्यार्थः—एकस्योभयार्थत्वे तु संयोगस्य विनियोजकप्रमाणस्य पृथक्त्वमुभयत्वं नियामकमिति शेषः । यथैकस्य खादिरत्वस्य क्रत्वर्थत्वं पुरुषार्थत्वं च "खादिरो यूपो भवति" "खादिरं वीर्यकामस्य यूपं कुर्वीत" इति वाक्याभ्यां बोधितत्वात् । तथैकस्य हरिनाम्नोऽपि मुक्तेः फलांतरस्य च तत्तद्बोधकवाक्याभ्यामुभयार्थतेत्यर्थः । तथा च हरिनाम्नोऽनेकफलसंबंधेऽपि प्रायश्चित्तार्थत्वं युक्तमेवेति सुष्ठूक्तं स्वामिचरणैः । अवशेन प्रमादेन । अत्राक्षेपांतरमाह—न चैत इति । अन्यशेषता निषेधशेषता । यथाऽप्राप्तार्थत्वेनात्यंताप्राप्तत्वेन 'विधिरत्यंतमप्राप्तौ " इत्युक्तेरपूर्वविधिः कल्प्यते "अग्नयेऽष्टाकपालं निर्वपेत्" इति तथात्रापि सर्वपापापनुत्तये हरिनाम जपेदिति विधिकल्पना भवत्येवातो निषेधशेषता न कल्प्येति । अथार्थवादलक्षणमाह—प्राशस्त्यनिन्दान्यतरलक्षणया विधिनिषेधभूतं वाक्यमर्थवादः स च त्रिविधो गुणवादानुवादभूतार्थवादभेदात् । प्रमाणांतरविरुद्धार्थबोधको गुणवादः यथा "आदित्यो यूपः" इति । प्रमाणांतरप्राप्तार्थबोधकोऽनुवादः यथा "अग्निर्हिमस्य भेषजम्" इति । प्रमाणांतरबाधतत्प्राप्तिरहितार्थबोधको भूतार्थः यथा "इंद्रो वृत्राय वज्रमुदयच्छत्" इति । तत्र त्रिविधानामप्यर्थवादानां विधिस्तुतिपरत्वसमानेऽपि भूतार्थवादानां स्वार्थेऽपि प्रामाण्यम् । अबाधिताज्ञातज्ञापकत्वं हि प्रमाणं तच्च बाधितविषयत्वात् ज्ञातज्ञापकत्वाच्च न गुणवादानुवादयोर्भूतार्थवादस्य तु स्वार्थतात्पर्यरहितस्याप्यौत्सर्गिकं प्रामाण्यं न विहन्यते देवताधिकरणन्यायात् । देवताधिकरणन्यायश्च—संवादविसंवादाभावे यत्र मंत्रादिना देवताविग्रहादिकं सिध्यति स भवति यथा "उपर्यपि बादरायणः संभवात्" इति । अस्यार्थः—देवानामनधिकारात्क्रममुक्तिसाधनेषूपासनेषु देवादिभोगद्वारा मोक्षकाममनुष्यप्रवृत्तिर्नास्तीति पूर्वपक्षे फलं सिद्धांते तादृशप्रवृत्तिरस्तीति फलं बृहदारण्यके श्रूयते "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभूत्तथर्षीणां तथा मनुष्याणाम्" इति । देवादीनां मध्ये यो यो ब्रह्मप्रत्यक्त्वेन साक्षात्करोति स एव ब्रह्मात्मनाऽतिष्ठदित्यर्थः । अत्र किं देवादीनां ब्रह्मविद्याधिकारोऽस्ति न वेति विषये शास्त्रस्य मनुष्याधिकारत्वान्नास्तीति प्राप्तेऽभिधीयते तदुपरीति । तेषां मनुष्याणामुपरिष्टाद्ये देवादयस्तेषामपि ब्रह्मविद्यायामधिकारोऽस्तीति बादरायण आचार्यो मन्यते स्म कुतः संभवादर्थित्वसामर्थ्याद्यधिकारकारणस्य संभवादित्यर्थः । देवादीनां भोगशालित्वेऽपि भोग्यवस्तुष्वनित्यत्वदोषदर्शनाद्वैराग्यादिकं निरतिशयानंदमोक्षार्थित्वं च संभवतीति भावः । इह देवताविग्रहादिकं तद्योय इति मंत्रेण साधितमस्तीति । विग्रहादिकं तु "विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता । फलप्रदानमित्येतत्पंचकं

स्तेनः सुरापो मित्रध्रुग्ब्रह्महा गुरुतल्पगः ॥ स्त्रीराजपितृगोहंता ये च पातकिनोऽपरे ॥ ९ ॥ सर्वेषामप्यघवतामिदमेव सुनिष्कृतम् ॥ नामव्याहरणं विष्णोर्यतस्तद्विषया मतिः ॥ १० ॥ न निष्कृतैरुदितैर्ब्रह्मवादिभिस्तथा विशुध्यत्यघवान्व्रतादिभिः ॥ यथा हरेर्नामपदैरुदाहृतैस्तदुत्तमश्लोकगुणोपलंभकम् ॥ ११ ॥

खादिरत्वादिवत्संयोगपृथक्त्वेन सर्वप्रायश्चित्तार्थत्वं युक्तमेव। तथा हि। "अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः। पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव॥" इत्यादिपुराणे। "तावत्सहस्रशो नाम्नः स्वातंत्र्यमवगम्यते।" न चैतेऽर्थवादा इति शंकनीयं विधिशेषत्वाभावात्। न च विध्यश्रवणादन्यशेषता कल्पनीया। "यदाग्नेयोऽष्टाकपालो भवति" इत्यादिवदप्राप्तार्थत्वे तु विध्यनुपपत्तिः। यथा रागतः प्राप्ते भोजनादौ प्राप्तार्थत्वेन विधिकल्पनोपपत्तेः। मंत्रेषु च। "मर्ता अमर्त्यस्य ते भूरि नाम मनामहे। विप्रासो जातवेदसः। आस्य जानंतो नाम चिद्विवक्तन" इत्यादिषु नाम्नस्तपोदानादिसर्वधर्माधिक्यमवगम्यते। उपपादितं च मंत्रार्थवादानामपि स्वार्थे प्रामाण्यं देवताधिकरणे। तस्माच्छ्रीनारायणनामाभासमात्रेणैव सर्वाघनिष्कृतं कृतं स्यादिति ॥ ८ ॥ ननु कामकृतानां बहूनां महापातकानां सहस्रश आवर्तितानां द्वादशाब्दादिकोटिभिरप्यनिवर्त्यानां कथमिदमेकमेव प्रायश्चित्तं स्यात्तत्राहुः स्तेन इति द्वाभ्याम् ॥ ९ ॥ सुनिष्कृतं श्रेष्ठं प्रायश्चित्तमिदमेव। तत्र हेतुः। यतो नामव्याहरणात्। तद्विषया नामोच्चारकपुरुषविषया मदीयोऽयं मया सर्वतो रक्षणीय इति विष्णोर्मतिर्भवति ॥ १० ॥ श्रेष्ठत्वमेवोपपादयंति नेति द्वाभ्याम्। ब्रह्मवादिभिर्मन्वादिभिरुक्तैर्व्रतादिभिर्निष्कृतैः प्रायश्चित्तैस्तथा न शुद्ध्यति। उदाहृतैरुच्चारितैर्यथा। नामपदैरित्यनेन नमामीत्यादिक्रियायोगोऽपि नापेक्षि

विग्रहादिकम्" इति। मंत्रेषु चेति। अथ मंत्रार्थः—मर्त्ता मर्त्या मरणधर्माणो विप्रासो विप्रा वयममर्त्यस्य जातवेदसः सर्वकर्मफलदातुस्ते नाम भूरि तपोदानादिसर्वधर्मेभ्योऽधिकं मनामहे मन्यामहे। अस्य विष्णोः आ सम्यक्प्रकारेण नाम यूयं विविक्तन कीर्त्तयत किं कुर्वंतः चित्कचिज्जानंतो नाममाहात्म्यमिति। आदिना "तमु स्तोतारः पूर्व्यं यथाविधि ऋतस्य गर्भं जनुषा पिपर्त्तन" इत्यादेर्ग्रहः। पूर्व्यं पुरातनं सर्वाधिष्ठातारं सर्वकर्तारं च ऋतस्योपनिषदस्तज्जन्यज्ञानस्य वा गर्भे जठरे वर्त्तमानं वेदांतसिद्धांतप्रत्यगभिन्नपरमात्मानं स्तोतारः स्तुध्वमिति विभक्तिविपरिणामः। न च वैदिकैरेव स्तोत्रैः स्तोतव्यमिति कश्चिदस्ति नियमः किं तु यथाविधि यथाज्ञानं यथा जानीत तथा स्तुध्वं श्रौतैरागमिकैः पौराणैः प्राकृतैर्वा स्तोत्रैः स्तुध्वमिति भावः। ततश्च जनुषा पिपर्त्तन पिपृतेति वक्तव्ये पिपर्त्तनेति छांदसं जन्म पूर्यतामिति कर्मकर्तरि प्रयोगे कर्त्तव्ये जनुषेति करणत्वनिर्देशोऽपि छांदसः। जन्मनः पूर्त्तिम्प्राप्नुत जन्मानि समापयतेति भावः। अथ वा तं देवं जनुषा स्वच्छंदरचितेन बहुविधजन्मनापि पर्तन पूरयत मत्स्याद्यवतारैरन्वितं वर्णयेतत्यर्थः। किञ्च—विधिशक्तिर्नमंत्रस्य नियोगेनानुमीयते "स्वतो विधास्यते ह्येष नियोगात्स्मारयिष्यति" इत्युक्तेरनुष्ठानार्थानामपि मंत्राणां विधायकत्वमनुरूपमेवेति मीमांसकाः। संदर्भस्तु—ननु तर्हि तन्नामकरणे प्रथमं तन्नाम्नैव जन्मकोट्यंहसां नाशोऽभूत्तदनंतरं मुहुः कृतपापस्य तत्समातिरनेनाभूदिति वक्तुं युज्यते इत्याशंक्य पूर्ववाक्याभिप्रायं स्वयमेवाह—एतेनैवेति। यदि पूर्वं नोच्चारितवाँस्तथाप्येतेनैवाघ निष्कृतं कृतं स्यादित्यन्यांगत्वं परिहृतम् ॥ ८ ॥ अत्राक्षिपति—नन्विति। स्तेनः स्वर्णस्तेयकरः। अपरे पैशुन्यदेवविप्रनिगमनिंदादिपापकर्तारः ॥ ९ ॥ तत्र अस्यैव मुख्यप्रायश्चित्तत्वे ॥ १० ॥ ब्रह्मात्र कर्मकांडमात्रं 'मुह्यंत्याम्नायवादिनः' इतिवत्। नामरूपैः पदैरेकस्य नाम्न

नैकांतिकं तद्धि कृतेऽपि निष्कृते मनः पुनर्धावति चेदसत्पथे ॥ तत्कर्मनिर्हारमभीप्सतां हरेर्गुणानुवादः खलु सत्त्वभावनः ॥ १२ ॥ अथैनं मापनयत कृताशेषाघनिष्कृतम् ॥ यदसौ भगवन्नाम म्रियमाणः समग्रहीत् ॥ १३ ॥ सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ॥ वैकुंठनामग्रहणमशेषाघहरं विदुः ॥१४॥ पतितः स्खलितो भग्नः संदष्टस्तप्त आहतः॥ हरिरित्यवशेनाह पुमान्नार्हति यातनाम् ॥ १५ ॥

त इति दर्शितम् । किं च । तन्नामपदोच्चारणमुत्तमश्लोकस्य तद्गुणानां चोपलंभकं ज्ञापक भवति । न तु कृच्छ्रचांद्रायणादिवत्पापनिवृत्तिमात्रोपक्षीणमित्यर्थः ॥ ११ ॥ नैकांतिकं नात्यंतशोधकं तन्निष्कृतं यस्मिन्कृतेऽप्यसत्पथे पापमार्गे मनो धावति चेत्, कर्मणां पापानां निर्हारमात्यंतिकं नाशमिच्छतां हरेर्गुणानुवाद एव प्रायश्चित्तम् । यतोऽसौ खलु सत्त्वभावनश्चित्तशोधकः ॥ १२ ॥ अथ तस्मादेनं माऽपमार्गेण नयत । कृतमशेषाणामघानां निष्कृतं येन । यद्यस्मात्समग्रहीत्संपूर्णमुच्चारितवान् । नामैकदेशेनाप्यलमिति भावः । म्रियमाण इत्यनेन पुनः पापांतरासंभव उक्तो न तु तत्कालत्वमेव विवक्षितम् । तदानीं कृच्छ्रादिविधिवन्नामोच्चारणविधेरप्यसंभवात् । न च विधिं विना काकतालीयनामोच्चारणं पापापहमिति प्रमाणमस्ति ॥ १३ ॥ नन्वयं पुत्रनामाग्रहीन्न तु भगवन्नाम तत्राहुः । सांकेत्यं पुत्रादौ संकेतितं पारिहास्यं परिहासेन कृतं स्तोभं गीतालापपूरणार्थं कृतं हेलनं किं विष्णुनेति सावज्ञमपि च वैकुंठनामोच्चारणम् ॥१४॥ ननु नायं संकल्पपूर्वकं वैकुंठनामाग्रहीत्किं तु पुत्रस्नेहपरवशः संस्तत्राहुः । पतित इति। अवशेनापि यो हरिरित्याह स यातनां नार्हति । पुमानित्यनेन नात्र वर्णाश्रमादिनियम इत्युक्तम् । अवशत्वमेवाह । पतितः प्रासादादिभ्यः । स्खलितो मार्गे । भग्नो भग्न

एव वावांतरपदैर्यथा गोवर्द्धनधारीत्यत्रावांतरपदं गोवर्द्धनेति ज्ञापकम् । यथा दीनदयालुरित्युक्ते गजनिर्मोचनादिरूपगुणानामनुभवो भवति । हे कंसारे इत्युक्ते च कंसविषयसर्वलीलानुभवो भवतीत्यर्थः । इत्यर्थ इति । चांद्रायणादिना पापक्षयस्तु भवत्येव न तु भगवल्लीलास्मरणादिकं तेन जायत इति भावः ॥ ११ ॥ न केवलं नामैव तादृक् किन्तु गुणा अपीत्याह—नैकांतिकमिति । तत् तस्मात् ॥ १२ ॥ इति भाव इति । नामपदैरित्युक्तेरयमाशयः । तत्कालत्वम् अंतकालत्वम् । अंतकाल एव नामोच्चारणं कर्त्तव्यमिति न विवक्षितम् । कुतः तदानीमंतकाले यथा कृच्छ्रादि कर्तुं न शक्यते तथा नामोच्चारणमपीति मनसोऽस्थैर्यात् । विधिं विना काकतालीयनामोच्चारणमकस्मान्नामोच्चारणं पापापहमिति प्रमाणं न चास्ति किं त्वस्त्येवात्रैव दृष्टत्वात् । काकतालीयं तु यदा काक आगतस्तदैव तालफलं पतितमित्याकस्मिको योग एव ॥ १३ ॥ पुनराक्षिपंति—नन्विति । परिहासेन कृतम् । अहो भवांस्तु साक्षान्नारायणो यतो नारे वसतीति कंचिन्नरसमूहस्थं प्रत्युपहासः । तीर्थस्तु—कोपजननाय नर्मवचनं स्तोभः यथा मधुमक्षिकासूदनासमर्थस्त्वं किं मधुं सूदितवानसौ हरिश्चेन्मधोर्वधान्मधुसूदनस्तदुपपन्नमेव ॥ १४ ॥ पुनराक्षिपति—नन्विति । अवशेन वैवश्येनापि यतस्तैरित्थमुक्तमतो हेतोः । तत्र मन्वादिग्रंथे । तथा पापानुरोधेन प्रायश्चित्तव्यवस्था यथा सुराबिंदुपानेनापि पुमान्महा

गुरूणां च लघूनां च गुरूणि च लघूनि च ॥ प्रायश्चित्तानि पापानां ज्ञात्वोक्तानि महर्षिभिः॥१६॥तैस्तान्यघानि पूयंते तपोदानजपादिभिः ॥
नाधर्मजं तद्धृदयं तदपीशांघ्रिसेवया ॥ १७ ॥ अज्ञानादथ वा ज्ञानादुत्तमश्लोकनाम यत् ॥ संकीर्तितमघं पुंसो दहेदेधो यथाऽनलः ॥ १८ ॥
यथागदं वीर्यतममुपयुक्तं यदृच्छया ॥ अजानतोऽप्यात्मगुणं कुर्यान्मंत्रोप्युदाहृतः ॥ १९ ॥

गात्रः । संदष्टः सर्पादिभिः । तप्तो ज्वरादिना । आहतो दंडादिना ॥ १५ ॥ ननु महतः पापस्य महदेव प्रायश्चित्तं युक्तं न त्वल्पं नामग्रहणमात्रं पापतारतम्येन कृच्छ्रादितारतम्यवत्तत्राहुर्द्वाभ्याम् । गुरूणां पापानां गुरूणि प्रायश्चित्तानि लघूनां च लघूनि तारतम्यं ज्ञात्वा मन्वादिभिरुक्तानि अतस्तत्र तथैव व्यवस्था।हरिनाम्नस्तु नेयं व्यवस्थोक्ता "विष्णोः स्मरणमात्रेण मुच्यते सर्वपातकैः" इति वचनात् । न च सुराबिंदुपाने महापातकत्वस्मरणवन्नाम्नस्तत्प्रायश्चित्तत्वस्मरणस्यायमतिभारः ॥ १६ ॥ किं च तैस्तपोदानादिभिस्तान्यघान्येव पूयंते नश्यंति । अधर्माज्जातं मलिनं तु तस्य पापकर्तुर्हृदयम् । यद्वा । तेषामघानां हृदयं सूक्ष्मं रूपं संस्काराख्यं न शुद्ध्यति । तदपीशांघ्रिसेवया कीर्तनादिना शुद्ध्यतीत्यर्थः । अयं भावः । महांत्यपि पापानि सकृदुच्चारितेनैव नाम्ना नश्यंति सकृत्प्रवर्तितेन दीपेनेव गाढध्वांतानि । तदावृत्त्या तु पापांतरस्यानुत्पत्तिः दीपधारण इव तमोंतरस्य । ततश्च वासनाक्षयाद्धृदयशुद्धिः । एतदर्थमेव तत्रतत्राऽऽवृत्तिविधानं "पापक्षयश्च भवति स्मरतां तमहर्निशम्" इत्यादिषु । तदेवात्राप्युक्तम् । "गुणानुवादः खलु सत्त्वभावनः" इति "तदपीशांघ्रिसेवया" इति च । अतोऽस्य हरिनाम्नैव सर्वपापक्षयो वासनाक्षयस्तु महापुरुषदर्शनादिभिरिति ॥ १७ ॥ तथापि पापप्रायश्चित्तमिदमिति ज्ञात्वा नोच्चारितमिति चेत्तत्राहुः । अज्ञानादिति । बालकेनाज्ञानादपि प्रक्षिप्तोऽग्निर्यथा काष्ठराशिं दहति तद्वत् ॥ १८ ॥ नन्विदमपि पर्षदनुपदिष्टं श्रद्धाहीनं च कथं प्रायश्चित्तं स्यात्तत्राहुः । यथेति । अगदमौषधम् । वीर्यवत्तममिति वक्तव्ये वीर्यतममित्युक्तम् । यदृच्छया श्रद्धादिहीनमुपयुक्तं भक्षितं पर्षन्मुखादजानतोऽपि स्वगुणमारोग्यं कुर्यात् । मंत्रोऽपि नामात्मकस्तथा स्वकार्यं कुर्यादेव । न हि वस्तुशक्तिः श्रद्धादिक

पातकी भवतीति स्मर्यते तथाह एकनाममात्रस्मरणमपि महापातकप्रायश्चित्तं भवतीति स्मर्यतां न नाम्नस्तद्धनने कश्चिद्धारोऽस्तीति भावः ॥ १५ ॥ १६ ॥ अन्यदपि नाम्न आधिक्यमाह–किंचेति । तच्छब्दस्य पूर्वपरामर्शित्वात्तच्छब्देन पापकर्तृग्रहणं नोपयुज्यते तस्य पूर्वं प्रक्रांतत्वाभावादत आह–यद्वेति । अत्राशयमाह–अयं भाव इति । यतो हरिनाम महत्प्रभाववदतो हेतोः ॥ १७ ॥ यद्यपि नामोच्चारणं सर्वपापप्रायश्चित्तमस्ति तथापीति ॥ १८ ॥ पुनराक्षिपति–नन्विति । पर्षत्स्वरूपं तु बृहत्पाराशर्य्याम् "वेदशास्त्रविदो विप्रा यं ब्रूयुः पञ्च सप्त वा । त्रयो वापि स धर्मः स्यादेको वाध्यात्मवित्तमः ॥ संयमं नियमं वापि उपवासादिकञ्च यत् । तद्गिरा परिपूर्णा स्यान्निष्कृतिर्व्यावहारिकी ॥ न लक्षेणापि मूर्खाणां न चैवाधर्मवेदिनाम् । लुब्धानां नाप्यविदुषां नापि वै पक्षपातिनाम् ॥ श्रुताध्ययनसंपन्नः सत्यवादी जितेंद्रियः । सदा धर्मरतः शांत एकः पर्षत्त्वमर्हति ॥" इति 'समज्या परिषद्गोष्ठी' इत्यमरः । परेरंत्यलोपे पर्षदपि साधितं "धर्मज्ञा यत्र तिष्ठंति विद्वांसो ब्राह्मणास्त्रियः । पञ्च वा सप्त वा चैकः सभा सा पर्षदुच्यते" इति धरणिदेवः । छंदोभंगभया

( पतिं वः पृच्छत भटा धर्मेऽस्मिन्यदि संशयः ॥ स वेद परमं गुह्यं धर्मस्य भगवान्यमः ॥१॥) श्रीशुक उवाच त एवं सुविनिर्णीय धर्मं भागवतं नृप ॥ तं याम्यपाशान्निर्मुच्य विप्रं मृत्योरमूमुचन् ॥ २० ॥ इति प्रत्युदिता याम्यदूता यात्वा यमांतिके ॥ यमराज्ञे यथासर्वमाचचक्षुररिंदम ॥ २१ ॥ द्विजः पाशाद्विनिर्मुक्तो गतभीः प्रकृतिं गतः ॥ ववंदे शिरसा विष्णोः किंकरान्दर्शनोत्सवः ॥ २२ ॥ तं विवक्षुरमभिप्रेत्य महापुरुषकिंकराः ॥ सहसा पश्यतस्तस्य तत्रांतर्दधिरेऽनघ ॥ २३ ॥ अजामिलोप्यथाकर्ण्य दूतानां यमकृष्णयोः ॥ धर्मं भागवतं शुद्धं त्रैविद्यं च गुणाश्रयम् ॥ २४ ॥ भक्तिमान्भगवत्याशु माहात्म्यश्रवणाद्धरेः ॥ अनुतापो महानासीत्स्मरतोऽशुभमात्मनः ॥ २५ ॥ अहो मे परमं कष्टमभूदविजितात्मनः ॥ येन विप्ला वितं ब्रह्म वृषल्यां जायतात्मना ॥ २६ ॥

मपेक्षत इत्यर्थः । तदुक्तं विष्णुधर्मेषु । "हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः ॥ अनिच्छयाऽपि संस्पृष्टो दहत्येव हि पावकः ॥ " इति ॥ १९ ॥ तं विप्रममूमुचन्मोचयामासुः ॥ २० ॥ प्रत्युदिता निराकृताः संतो यात्वा गत्वा यमराज्ञे यमराजाय यथावत्कथयामासुः ॥ २१ ॥ दर्शनेनोत्सवो यस्य ॥ २२ ॥ विवक्षुं वक्तुमिच्छंतं ज्ञात्वा ॥ २३ ॥ त्रैविद्यं वेदत्रयप्रतिपाद्यं गुणाश्रयं यमदूतानां धर्मं कृष्णदूतानां च भागवतं भगवत्प्रणीतं शुद्धं निर्गुणं धर्ममाकर्ण्येति योज्यम् । भक्तिमासीदित्युत्तरस्यानुषंगः ॥ २४ ॥ २५ ॥ अनुतापं प्रपंचयति अहो इति चतुर्भिः । येनात्मना मया वृषल्यां पुत्रतया जायमानेन ब्रह्म ब्राह्मणजातिर्विप्लावितं नाशितम् ॥२६॥

न्मतुब्लोपः । यद्वा—मत्वर्थीयाजंतात्तमब्बोध्यः । इत्यर्थ इति । न ह्ययमग्निर्मां दहत्विति श्रद्धावंतमेवाग्निर्दहति किं तु तद्धीनमपीति भावः । तत् श्रद्धाराहित्येपि स्वकार्यकरणम् । दुष्टचित्तैः श्रद्धाहीनैः ॥ १९ ॥ ते वैष्णवाः । भागवतं भगवद्भक्तिप्रधानम् । नृपेति । नृपत्वमपि भागवतधर्मायत्तं तदभावे 'यथा राजा तथा प्रजा' इति न्यायेन सर्वे नरा नरकाधिकारिण एव स्युरिति भावः ॥ २० ॥ यमराज्ञ इति समासांतविधेरनित्यत्वात् । अरिंदमेति । कामादिशत्रुदमनशीलस्त्वं मा भैरिति भावः ॥ २१ ॥ प्रकृतिं सात्त्विकावस्थाम् । 'सत्त्वप्रकृतयो विप्राः' इत्युक्तेः । अत एव ववंद इति ॥ २२ ॥ तेन सहासंभाषणमुत्कंठां वर्द्धयित्वा सम्यग्भक्त्वापादनार्थं तदर्थमेव त्याग इति संदर्भः । अत्र विश्वनाथः—नन्वेवं चेन्म्रियमाणोऽयं नामाग्रहीत्तर्हि कथं सद्य एव पार्षदैर्वैकुंठं न निन्ये । श्रूयते हि "यस्यावतारगुणकर्मविडंबनानि नामानि येऽसुविगमे विवशा गृणंति । तेऽनेकजन्मशमलं सहसैव हित्वा संयांत्यपावृतमृतं तमजं प्रपद्ये ॥" इति । अत्रोच्यते—नामग्रहणं द्विधा केवलत्वेन स्नेहसंयुक्तत्वेन च तत्र पूर्वेणापि प्रापयत्येव सद्यस्तल्लोकं तन्नाम परेण चेत्तत्सामीप्यमपि प्रापयति । "मयि भक्तिर्हि भूतानाममृतत्वाय कल्पते " किं च—" दिष्ट्या यदासीन्मत्स्नेहो भवतीनां मदायने " इति तद्वाक्यात् । किं तु । " नाहं तु सख्यो भजतोऽपि जंतून्भजाम्यमी षामनुवृत्तिवृत्तये" इति तद्वाक्यादेवेषद्विलंबेन प्रापयति स्नेहत्वममीषामनुवृत्तिर्मदनुसेवैव वृत्तिर्जीवनहेतुरिति तदर्थमयमभिप्रायो दर्शितः । तदेवं सत्यजामिलोप्यारोपिततन्नाम्नः पुत्रस्य संबंधेन तन्नाम्न्यपि स्निह्यति स्म तस्मिन्स्वनाम्नि भगवतोऽपि सांद्रोऽभिमानो दृश्यते यतस्तद्विषया मतिरित्यर्थः । यतः पार्षदानामपि तत्र महानेवादरो दृष्टः तस्मात्स्नेहसंवलनया गृहीतस्वनाम्नि तस्मिन्नुत्कंठापूर्वकसाक्षान्निजकीर्त्तनादिद्वारा साक्षान्निजस्नेहं प्रकृष्टं दत्त्वा नेतुमिच्छति प्रभुरिति ज्ञात्वा सहसा नात्मभिः सह नीतवंत इति सर्वं समंजसम् । अहो अहमपि राजसस्वभावत्वादघवानस्मीति शोचंतं नृपमाह—अनघेति । स त्वजामिलः पापकारित्वादघसंबंध्यपि तस्मिन्नपि भगवत एतादृश्यनुकंपा जाता किंपुनराजन्मतोऽघसंबंधशून्ये त्वयीति भावः ॥ २३ ॥ छंदोभंगभयात्प्रधानस्यापि कृष्णशब्दस्य परनिपात इत्याह—यमकृष्णयोरिति ॥ २४ ॥ अशुभं वृषलीसंगादिलक्षणम् । अनुतापः पश्चात्तापः ॥ २५ ॥ उत्कंठापूर्वकं

धिङ् मां विगर्हितं सद्भिर्दुष्कृतं कुलकज्जलम् ॥ हित्वा बालां सतीं योऽहं सुरापामसतीमगाम् ॥ २७॥ वृद्धावनाथौ पितरौ नान्यबंधू तपस्विनौ ॥ अहो मयाऽधुना त्यक्तावकृतज्ञेन नीचवत् ॥ २८ ॥ सोऽहं व्यक्तं पतिष्यामि नरके भृशदारुणे ॥ धर्मघ्नाः कामिनो यत्र विंदंति यमयातनाः ॥२९॥ किमिदं स्वप्न आहोस्वित्साक्षाद्दृष्टमिहाद्भुतम् ॥ क्व याता अद्य ते ये मां व्यकर्षन्पाशपाणयः ॥ ३० ॥ अथ ते क्व गताः सिद्धाश्चत्वारश्चारुदर्शनाः ॥ व्यमोचयन्नीयमानं बद्ध्वा पाशैरधो भुवः॥३१॥अथापि मे दुर्भगस्य विबुधोत्तमदर्शने ॥ भवितव्यं मंगलेन येनात्मा मे प्रसीदति ॥३२॥ अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः ॥ वैकुंठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥३३॥ क्व चाऽहं कितवः पापो ब्रह्मघ्नो निरपत्रपः ॥ क्व च नारायणेत्येतद्भगवन्नाम मंगलम् ॥३४॥ सोऽहं तथा यतिष्यामि यतचित्तेंद्रियानिलः ॥ यथा न भूय आत्मानमंधे तमसि मज्जये ॥३५॥ विमुच्य तमिमं बंधमविद्याकामकर्मजम् ॥ सर्वभूतसुहृच्छांतो मैत्रः करुण आत्मवान्॥३६॥मोचये ग्रस्तमात्मानं योषिन्मय्यात्ममायया ॥ विक्रीडितो ययैवाहं क्रीडामृग इवाधमः ॥३७॥ मयाऽहमिति देहादौ हित्वा मिथ्याऽर्थधीर्मतिम् ॥ धास्ये मनो भगवति शुद्धं तत्कीर्तनादिभिः ॥३८॥

दुष्कृतं दोषकर्तारम् । कुलस्य कज्जलं कलंकम् ॥ २७ ॥ नास्त्यन्यो बंधुः पुत्रादिर्ययोस्तौ । तपस्विनौ संतप्तौ । अधुना तत्क्षणमेव ॥ २८ ॥ २९ ॥ इदानीं तस्य विमर्शपूर्वकं मोक्षक्रममाह किमिदमित्यष्टभिः । साक्षात्प्रत्यक्षमिह जाग्रतैव दृष्टम् ॥ ३० ॥ ये मां व्यमोचयंस्ते च क्व गताः ॥ ३१ ॥ यद्यप्यहमस्मिञ्जन्मनि दुर्भगः पापी यानथापि जन्मांतरे नूनं पुण्यवानित्याह । विबुधोत्तमदर्शन इति निमित्तसप्तमी । तेषां दर्शनार्थं पूर्वेण मंगलेन महता पुण्येन भवितव्यम् । येन दर्शनेन ॥३२॥ अन्यथा पूर्वपुण्यं विना । कथंभूतं वैकुंठनाम । गृह्यते वशीक्रियते चित्तमनेनेति ग्रहणम् ॥३३॥ ब्रह्मघ्नो विप्रत्वनाशकः ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ अमिथ्याभूतेऽर्थे धीर्यस्य

साक्षात्तद्भजनमेवाह–अनुतापरूपत्वेन अहो इत्यादिना ॥ २६ ॥ अगां सुरतार्थं प्राप्तवानस्मि ॥ २७ ॥ २८ ॥ सोऽहमिति । स्वदोषदृष्ट्यैव नाममाहात्म्यदृष्ट्या तु वक्ष्यति–अन्यथा म्रियमाणस्येति ॥ २९ ॥ ॥ ३० ॥ भुवोऽधो नरकम् । अथाधुनार्थे । सिद्धाः कृतार्थतां प्राप्ता देवविशेषाः ॥ ३१ ॥ अथापील्यनेन प्राचीनास्य भक्तिरस्ति किं तु केनाप्यपराधेनावृताभूदिति गम्यते । आत्मा मनः ॥ ३२ ॥ म्रियमाणस्य तत्राप्यशुचेस्तत्रापि वृषलीपतेरिति सर्वथाऽयोग्यतां सूचितवान् । नामोच्चारणं हि वशीकरणसाधनं “ हरिरवशाभिहितोऽप्यघौघनाशः । प्रणयरशनया धृतांघ्रिपद्मो न सरति छिद्रवदक्षरः सतां हि ” इत्येकादशे जायंतेयोपाख्याने वक्ष्यमाणत्वात् ॥ ३३ ॥ ब्रह्मेति भावप्रधानो निर्देशोऽत उक्तं विप्रत्वनाशकः । कितवो वंचकः ‘ कितवस्तु पुमान्मत्ते वंचके कनकाह्वये ’ इति मेदिनी ॥ ३४ ॥ यः कितवत्वादिविशिष्टस्स इत्यर्थः । अंधे तमसि संसारे नरके वा ॥ ३५ ॥ बंधं देहाद्यभिमानलक्षणम् ॥ ३६ ॥ यया स्त्रिया ॥ ३७ ॥ अमिथ्याभूतेऽर्थे ब्रह्मणि । “ ब्रह्मैव सत्तदन्यत्सर्वं मिथ्या ” इत्युक्तेः । आदिना पुत्रादिग्रहः ।

श्रीशुक उवाच ॥ इति जातसुनिर्वेदः क्षणसंगेन साधुषु ॥ गंगाद्वारमुपेयाय मुक्तसर्वानुबंधनः ॥ ३९ ॥ स तस्मिन्देवसदन आसीनो योगमाश्रितः ॥ प्रत्याहृतेंद्रियग्रामो युयोज मन आत्मनि ॥ ४० ॥ ततो गुणेभ्य आत्मानं वियुज्यात्मसमाधिना ॥ युयुजे भगवद्धाम्नि ब्रह्मण्य नुभवात्मनि ॥ ४१ ॥ यर्ह्युपारतधीस्तस्मिन्नद्राक्षीत्पुरुषान्पुरः ॥ उपलभ्योपलब्धान्प्राग्ववंदे शिरसा द्विजः ॥ ४२ ॥ हित्वा कलेवरं तीर्थे गंगायां दर्शनादनु ॥ सद्यः स्वरूपं जगृहे भगवत्पार्श्ववर्तिनाम् ॥ ४३ ॥ साकं विहायसा विप्रो महापुरुषकिंकरैः ॥ हैमं विमानमारुह्य ययौ यत्र श्रियः पतिः ॥ ४४ ॥ एवं स विप्लावितसर्वधर्मा दास्याः पतिः पतितो गर्ह्यकर्मणा ॥ निपात्यमानो निरये हतव्रतः सद्यो विमुक्तो भगवन्नाम गृह्णन् ॥ ४५ ॥ नातः परं कर्मनिबंधकृंतनं मुमुक्षतां तीर्थपदानुकीर्तनात् ॥ न यत्पुनः कर्मसु सज्जते मनो रजस्तमोभ्यां कलिलं ततोऽन्यथा ॥ ४६ ॥ य एवं परमं गुह्यमितिहासमघापहम् ॥ शृणुयाच्छ्रद्धया युक्तो यश्च भक्त्याऽनुकीर्तयेत् ॥ ४७ ॥ न वै स नरकं याति नेक्षितो यमकिंकरैः ॥ यद्यप्यमंगलो मर्त्यो विष्णुलोके महीयते ॥ ४८ ॥

तथाभूतः सन् देहादौ ममाहमिति मतिं हित्वा मनो धास्ये ॥ ३८ ॥ मुक्तं सर्वमनुबंधनं पुत्रादिस्नेहो येन सः ॥ ३९ ॥ प्रत्याहृत इंद्रियग्रामो येन ॥ ४० ॥ ततो गुणेभ्यो देहेंद्रियादिभ्य आत्मानं वियुज्य विशोध्य । आत्मसमाधिना चित्तैकाग्र्येण । भगवतो धाम्नि स्वरूपे ॥ ४१ ॥ तस्मिन्भगवद्धाम्नि उपारता निश्चला धीर्यस्य सः । तस्मिन्कालेऽद्राक्षीदिति वा । पुरः पुरतः । ततश्च प्रागुपलब्धानेव तानुपलभ्य प्रत्यभिज्ञाय ववंदे ॥ ४२ ॥ ४३ ॥ ४४ ॥ उपसंहरति एवमिति द्वाभ्याम् । विप्लाविताः सर्वे धर्मा येन । हतं व्रतं स्वदारनियमादि यस्य ॥ ४५ ॥ कर्मनिबंधस्य पापमूलस्य कृंतनं छेदकमतः परं नास्ति । कस्मात्परम् । तीर्थपदस्यानुकीर्तनात् । तत्र हेतुः । यद्यतोऽनुकीर्तनात् । ततोऽनुकीर्तनात् । अन्यथा प्रायश्चित्तांतरे रजस्तमोभ्यां कलिलं मलिनमेव तिष्ठति यत्तन्मनः कर्मसु पुनर्न सज्जते ॥ ४६ ॥ ४७ ॥ न चेक्षितो भव

पुनरादिना स्मरणादिग्रहः ॥ ३८ ॥ नाम्नः फलमुक्त्वा साधुसंगफलमाह—इतीति । जातः सुष्ठु भगवद्भक्त्युत्पादनपूर्वत्वेन निर्वेदो यस्य सः । गंगाद्वारं कनखलसमीपवर्त्तितीर्थविशेषम् ॥ ३९ ॥ धास्ये मन इत्यादिना यद्विचारितं तत्र कृतैस्तत्कीर्तनादिभिः । शुद्धेन मनसा पुनर्विचारितमीदृशस्यापि मनसो भगवत्पर्यन्ता मतिर्न स्यात् । 'ब्रह्मणो हि प्रतिष्ठाहम्' इति न्यायेन परात्परा हि स विशेषादवस्थितिः । तस्मान्निर्विशेषस्व प्रकाशलक्षणब्रह्मानुभवार्थमेव यतिष्ये तदेवं विचार्य तेन यत्कृतं तदाह—स तस्मिन्निति । प्रत्याहृतो वशीकृतः । आत्मनि हरौ । युयोज योक्तुमुद्यतो बभूव ॥ ४० ॥ तत इंद्रियग्रामवशीकरणोत्तरम् । युयुजे योजयामास । अनुभवात्मनि ज्ञानात्मनि ॥ ४१ ॥ तच्छब्देन भगवद्धामोपादाने तर्हीति शेषीकरणे च गौरवं मत्वाह—तस्मिन्काले इति वेति । यर्ह्युपारत इत्यनेन ब्रह्मानुभवानंतरमपि वैकुंठाविर्भाव इति । समर्थ्यते ॥ ४२ ॥ स्वरूपं निर्दोषत्वादिलक्षणमिति तीर्थः । गंगायां तीर्थे इत्यजहल्लिंगत्वात्क्लीत्वम् ॥ ४३ ॥ यत्र वैकुंठे ॥ ४४ ॥ नामकीर्त्तने श्रद्धातिशयं जनयन्नुपसंहरति—एवमिति । दास्याः पतिरित्याक्रोशे षष्ठी । अजामिलनाम मुक्त्वा दास्याः पतिरित्याह्वयति लोक इत्यर्थः । गर्ह्यकर्मणा दासीगमनादिलक्षणेन । पतितो विप्रत्वजातेरधो गतः ॥ ४५ ॥ तत्र तीर्थपदानुकीर्त्तनस्य कर्मबंधमोचकश्रेष्ठत्वे । परं श्रेष्ठम् । "परः श्रेष्ठारिदूरान्योत्तरे क्लीबं तु केवले" इति मेदिनी । इह तु क्लीबत्वं विशेष्यनिघ्नत्वात् ॥ ४६ ॥ नामापराधयुक्तापेक्षयाह—य इति । नामापराधास्तु द्वितीयस्कंधे प्रथमाध्याये प्रथमपद्यव्याख्याशतके च वर्णिता इति ॥ ४७ ॥ अमंगलो नामापराध्यपि ॥ ४८ ॥

म्रियमाणो हरेर्नाम गृणन्पुत्रोपचारितम् ॥ अजामिलोऽप्यगाद्धाम किं पुनः श्रद्धया गृणन् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधेऽजामिलोपाख्याने भगवन्नाममाहात्म्यवर्णनं नाम द्वितीयोऽध्यायः ॥ २ ॥ छ ॥ राजोवाच ॥ निशम्य देवः स्वभटोपवर्णितं प्रत्याह किं तान्प्रति धर्मराजः ॥ एवं हताज्ञो विहतान्मुरारेर्नैदेशिकैर्यस्य वशे जनोऽयम् ॥ १ ॥ यमस्य देवस्य न दंडभंगः कुतश्चनर्षे श्रुतपूर्व आसीत् ॥ एतन्मुने वृश्चति लोकसंशयं न हि त्वदन्ये इति मे विनिश्चितम् ॥२॥ श्रीशुक उवाच ॥ भगवत्पुरुषै राजन्याम्याः प्रतिहतोद्यमाः ॥ पतिं विज्ञापयामासुर्यमं संयमनीपतिम् ॥ ३ ॥ यमदूता ऊचुः ॥ कति संतीह शास्तारो जीवलोकस्य वै प्रभो ॥ त्रैविध्यं कुर्वतः कर्म फलाभिव्यक्तिहेतवः ॥ ४ ॥

ति ॥ ४८ ॥ म्रियमाणोऽवशत्वेन श्रद्धाविहीनोऽपि ॥ ४९ ॥ इति श्रीमद्भागवते म० षष्ठस्कंधे टीकायां द्वितीयोऽध्यायः ॥ २ ॥ तृतीये तु यमेनापि वैष्णवोत्कर्षवर्णनैः । सांत्वयित्वा स्वदूतांस्ते वैष्णवे किंकरीकृताः ॥ १ ॥ विष्णुदूतैर्निर्णीतं शास्त्रार्थं यममुखेन द्रढयितुं तृतीयाध्यायारंभः । तत्र यदुक्तं यमराज्ञे यथासर्वमाचचक्षुरिति ततः किं तत्र वृत्तमिति पृच्छति । निशम्येति । मुरारेर्नैदेशिकैः किंकरैरेवं विहतान् । अत एव हता आज्ञा यस्य । यस्य वशवर्त्ययं जनः सोऽपि तान्प्रति किमाह ॥ १ ॥ अत्याश्चर्यमेतदित्याह । यमस्येति । हे ऋषे यमस्य दंडभंगः कुतश्चन कस्माच्चिदपि श्रुतपूर्वो नासीत् । एतदेतस्मिन्नर्थे । यद्वा न श्रुतपूर्वः । एतद्यमदूतनिराकरणं चासीत् । अतः सर्वस्यापि लोकस्य संशयो वर्तते तं त्वत्तोऽन्यो न छिनत्तीति मे निश्चितमतः कथयेति शेषः ॥ २ ॥ भगवतः पुरुषैः प्रतिहत उद्यमो येषां ते याम्याः पुरुषाः ॥ ३ ॥ कति संतीत्याक्षेपोक्तिः । त्रैविध्यं त्रिविधम् । स्वार्थे ष्यञ् । यद्वा त्रैविध्यं यथा भवति तथा कर्म कुर्वतः । तथा कर्मफलस्याभिव्यक्तिहेतवः कति संतीति ॥ ४ ॥

पुत्रे संकेतेनोपचारितं स्थापितम् । गृणन् उच्चरन् ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ सांत्वयित्वा सामवाक्यैर्बोधयित्वा । वैष्णवे विष्णुभक्ते । किंकरीकृतास्तदनुचरतां प्रापिताः । भवद्भिर्विष्णुभक्तानां कैंकर्यं कार्यं ते च मद्गुरुभ्रातर इति बोधिता इति भावः (१) तत्र पूर्वाध्याये । ततो दूतवर्णिताजामिलवृत्तांतश्रवणोत्तरम् । निदेशं कुर्वंतीति नैदेशिकाः । "निदेशः शासनेऽपि स्यात्कथनोपांतयोरपि" इति मेदिनी । एवमुक्तरीत्या । विहतान्निरस्तान् । अत एव मुरारिकिंकरताडितस्वतद्दूत्वादेव ॥ १ ॥ दंडभंगः सैन्यभंग आज्ञाभंग इति यावत् । "दंडः सैन्ये प्रकांडे च व्यूहे लगुडमानयोः । ताडनेऽपि च" इति निरुक्तिः । एतस्मिन् लोके इत्यर्थः । विभक्त्यंतराश्रयणे गौरवं मत्वाह—यद्वेति । अतोऽश्रुतपूर्वत्वात् । ऋषे इति त्रिकालज्ञत्वं मुने इति सर्वशास्त्रज्ञत्वं च द्योतयन्नाह । यतः सर्वज्ञत्वात्त्वमेव वक्तुं समर्थोऽस्यतो हेतोः । लोकसंशय इत्युक्त्या स्वस्य न संशय इत्युक्तम् ॥ २ ॥ राजन्निति । यथा त्वत्पुरुषास्त्वां विज्ञापयंतीति भावः ॥ ३ ॥ प्रभो इति साभिप्राया

यदि स्युर्बहवो लोके शास्तारो दंडधारिणः ॥ कस्य स्यातां न वा कस्यमृत्युश्चामृतमेव वा ॥ ५ ॥ किं तु शास्तृबहुत्वे स्याद्बहूनामिह कर्मिणाम् ॥ शास्तृत्वमुपचारो हि यथा मंडलवर्तिनाम् ॥ ६ ॥ अतस्त्वमेको भूतानां सेश्वराणामधीश्वरः ॥ शास्ता दंडधरो नृणां शुभाशुभ विवेचनः ॥ ७ ॥ तस्य ते विहितो दंडो न लोके वर्ततेऽधुना ॥ चतुर्भिरद्भुतैः सिद्धैराज्ञा ते विप्रलंभिता ॥ ८ ॥ नीयमानं तवादेशादस्मा भिर्यातनागृहान् ॥ व्यमोचयन्पातकिनं छित्त्वा पाशान्प्रसह्य ते ॥ ९ ॥ तांस्ते वेदितुमिच्छामो यदि नो मन्यसे क्षमम् ॥ नारायणेत्यभिहिते मा भैरित्याययुर्द्रुतम् ॥ १० ॥ श्रीशुक उवाच ॥ इति देवः स आपृष्टः प्रजासंयमनो यमः ॥ प्रीतः स्वदूतान्प्रत्याह स्मरन्पादांबुजं हरेः ॥११॥ यम उवाच ॥ परो मदन्यो जगतस्तस्थुषश्चओतं प्रोतं पटवद्यत्र विश्वम् ॥ यदंशतोऽस्य स्थितिजन्मनाशा नस्योतवद्यस्य वशे च लोकः ॥१२॥

सन्तु वहवः को बाधस्तत्राहुः । यदीति । मृत्युर्दुःखममृतं सुखं तेषां विप्रतिपत्तौ ते उभे कस्य स्यातां न कस्यापि परस्परविरोधेनोभयोरपि प्रतिबंधात् । ऐकमत्ये तु कस्य वा न स्याताम् । एकः सुखं कर्तुमिच्छति दुः खं चान्यः । ऐकमत्ये च तयोः परस्परकार्यानुमोदनेनोभयोरपि प्राप्ते कस्य वा ते उभे अपि न स्यातामित्यर्थः ॥५॥ ननु बहूनां कर्मिणां व्यवस्थया बहवः शास्तारो भवंतु तथा सति नायं दोषः स्यात्तत्राहुः । बहूनां कर्मिणां व्यवस्थया शास्तृबहुत्वे शास्तृत्वं स्यात् घटेत । किं तु तदा यत्सर्वशास्तारि मुख्यं शास्तृत्वं तदेकदेश उपचारमात्रमेव स्यात् यथा चक्रवर्तिन एव मुख्यं शास्तृत्वं मंडलवार्तिनामुपचारमात्रं निरंकुशत्वाभावात् ॥६॥ यस्मादेवं शास्तृबहुत्वं न घटतेऽत स्त्वमेक एव शास्ता । शुभाशुभे विविनक्तीति तथा ॥७॥ विप्रलंभिता वंचिता लंघितेत्यर्थः ॥८॥ तदेवाहुः । नीयमानामिति ॥९॥ ते त्वत्तः यदि नोऽस्माकं क्षमं हितं म न्यसे । अन्यथाऽज्ञानतस्तदवज्ञाने तवाप्यनर्थः स्यात् । अतर्क्यो हि तेषां प्रभावो यतो नारायणेति केवलमभिहिते मा भयं कुर्विति वदंतः शीघ्रमागताः ॥ १० ॥ प्रजाः संयमयतीति तथा ॥ ११ ॥ मत्तोऽन्यो जगतस्तस्थुषश्च परोऽधीश्वरोऽस्ति । अहं तु जंगमानामेव तत्रापि नृणामेव तत्रापि पापिनामेव तत्किंकरः सन्नीश्वरः स तु सर्वेश्वरः कोऽसौ । यत्र यस्मिन्विश्वमोतं प्रोतं चोर्ध्वतिर्यक्तंतुषु पटवत् । यस्य त्वंशेभ्यो विष्णुब्रह्मरुद्रेभ्योऽस्य स्थित्यादयो भवंति यस्य च वशे लोको वर्तते नसि नासिकायाम् ॥ १२ ॥

संबुद्धिः । त्रैविध्यमित्युक्ते न केवलं स्वार्थप्रतीतिरर्थांतरस्यापि प्रतीतेरित्यत आह—यद्वेति । सात्त्विककर्मकर्तॄणां फलदाता भिन्नो राजसादीनां च भिन्न इत्यर्थः ॥ ४ ॥ विप्रतिपत्तौ विवादे एकेनोक्तमहमस्मै सुखं दास्यामि परेणोक्तं दुःखं दास्यामीत्येवंरूपे सति उभे सुखदुःखे विप्रतिपत्त्यैकमत्ये विवृणोति—एक इत्यादिना । इत्यर्थ इति । शास्तृबहुत्वे सर्वलोकविप्लवः स्यादिति भावः ॥ ५ ॥ पुनराक्षिपंति—नन्विति । स्पष्टमग्रे । मंडल वर्त्तिनां सामंतानाम् ॥ ६ ॥ सेश्वराणामिंद्रादिसहितानाम् । भूतानां चराचराणां जीवानाम् ॥ ७ ॥ यः सर्वभूतानामीश्वरस्तस्येत्यर्थः । इत्यर्थ इति यावत् ॥ ८ ॥ तदेव आज्ञोल्लंघनमेव ॥ ९ ॥ अथ तेषां ज्ञानाय किंचिच्चेष्टादिकमुच्यतां तत्राहुः—अतर्क्यो हीति ॥ १० ॥ प्रीतः श्रीनारायणपुरुषत्वनिर्णयात् पूर्वं त्वन्यदीयज्ञानाद्दुःखमासीदिति भावः ॥ ११ ॥ अयमर्थः—पटवत् यथा कंथापटः सूत्रे तंतौ दीर्घतया ओतस्तिर श्चीनतया प्रोतस्तंत्वाधारत्वेन स्थितः तथेदं विश्वं यत्र परमात्मनि ओतप्रोतधर्मेण तदाधारत्वेन स्थितं यस्मिन्निदं सर्वं "परमे व्योमन्सर्वभूतानि" इति श्रुतेरेतल्लक्षणमव्याप्त्यतिव्याप्त्यादिदोषरहितं यद्यस्य धारको न स्यात्तर्हि

यो नामभिर्वाचि जनान्निजायां बध्नाति तंत्यामिव दामभिर्गाः ॥ यस्मै बलिं त इमे नामकर्मनिबंधबद्धाश्चकिता वहंति ॥ १३ ॥ अहं महेंद्रो निर्ऋतिः प्रचेताः सोमोऽग्निरीशः पवनोऽर्को विरिंचः ॥ आदित्यविश्वे वसवोऽथ साध्या मरुद्गणा रुद्रगणाः ससिद्धाः ॥ १४ ॥ अन्ये च ये विश्वसृजोऽमरेशा भृग्वादयोऽस्पृष्टरजस्तमस्काः ॥ यस्येहितं न विदुः स्पृष्टमायाः सत्त्वप्रधाना अपि किं ततोऽन्ये ॥ १५ ॥ यं वै न गोभिर्मनसाऽसुभिर्वा हृदा गिरा वाऽसुभृतो विचक्षते ॥ आत्मानमंतर्हृदि संतमात्मनां चक्षुर्यथैवाकृतयस्ततः परम् ॥ १६ ॥ तस्यात्मतंत्रस्य हरेरधीशितुः परस्य मायाधिपतेर्महात्मनः ॥ प्रायेण दूता इह वै मनोहराश्चरंति तद्रूपगुणस्वभावाः ॥ १७ ॥

प्रोतबलीवर्दवत् ॥ १२॥ एतत्प्रपंचयति । ब्राह्मणादिनामभिर्वाचि निजायां तंत्यां दामन्यां जनान्यो बध्नाति दामभिर्गा बलीवर्दानिव त इमे जीवा नामकर्मभिर्निबंधैर्दृढबंधसाधनैर्बद्धा यस्मै बलिं वहंति यदधीना कर्म कुर्वंतीत्यर्थः ॥ १३ ॥ यस्य च लीला दुर्विभाव्येत्याह अहमिति द्वाभ्याम् ॥ १४ ॥ न स्पृष्टं रजस्तमश्च यैस्ते । ईहितमभिप्रेतं चेष्टितं वा न विदुः । तत्र हेतुः । स्पृष्टमाया मायया स्पृष्टाः । ततस्तेभ्योऽन्ये न विदुरिति किं पुनर्वक्तव्यम् ॥ १५ ॥ तन्मायया विमोहितत्वान्न जानंतीत्युक्तमविषयत्वाच्च तस्येत्याह । यमिति । गोभिरिंद्रियैर्हृदा चित्तेन न विचक्षते न पश्यंति । "यद्वाचानभ्युदितम् । यन्मनो न मनुते" इत्यादिश्रुतेः । आत्मनां जीवानामात्मानं द्रष्टारम् आकृतयो रूपाणि चक्षुर्यथा कर्मभूतं न जानंति ततः परमाकृतीनां प्रकाशकम् । न हि प्रमाता प्रमाणस्य विषय इति भावः । एवंभूतः परमेश्वरो मदन्योऽस्तीति पूर्वेणैव संबंधः ॥ १६ ॥ भवत्वेवंभूतोऽन्यः परमेश्वरो ये पुनरस्मान्निर्भर्त्स्य पापिनं रक्षितवंतस्ते के तानाह द्वाभ्याम् । तस्येति । तस्यैव रूपं गुणाः प्रभावादयः स्वभावो भक्तवा

पतिष्यति वेगाख्यसंस्काररहितशरवदित्यादितर्क्यं लक्षणांतरमाह—यदंशत इति । "यतो वा इमानि" इति श्रुतेः । 'यदायदा हि धर्मस्य' इति स्मृतेर्व्याप्तरूपमंतरेण रूपांतरेणापि धारकत्वमस्यैवेति निश्चयाय वशशब्देन पुनर्ग्रहणम् । एवमपि जातपक्षपक्षिवत्पुनरस्याधीनं न स्यादिति चेत्तत्राह—नसीति ॥ १२ ॥ एतत् तद्वशवर्त्तित्वम् निजायां स्वस्मादभिव्यक्तायां नित्यायां वा 'निजमात्मीयनित्ययोः' इत्यभिधानात् । चंकिता भीताः । इत्यर्थ इति । स एव सर्वेश्वर इति भावः ॥ १३ ॥ अहं यमराजः ॥ १४ ॥ तेभ्यः पूर्वोक्तेभ्योऽन्ये मनुष्यादयः ॥ १५ ॥ तत्प्रसादमंतरेणादृष्टलक्ष्यत्वेधत्वचक्षुरादींद्रियाविषयत्वेन तद्विषयं ज्ञानं दुर्लभमित्याह—यमिति । इंद्रियाविषयत्वे प्रमाणमाह—यद्वाचेति । अनभ्युदितमुच्चारितं न भवति । मनुते विषयी करोति । अविषयत्वात् "यतो वाचो निवर्त्तंते" इत्यादिश्रुतेः । इति भाव इति । प्रमाता अन्तःकरणावच्छिन्नं चैतन्यं प्रमाणमंतःकरणवृत्त्यवच्छिन्नं चैतन्यम् । अत्र न हि प्रमाणं प्रमेयस्य विषय इति पाठः सम्यक्प्रतिभाति प्रमेयं विषयावच्छिन्नं चैतन्यमिति ॥ १६ ॥ माया लक्ष्म्या वाऽधिपतेः संधिस्त्वार्षः 'इंदिरा लोकमाता मा' इत्यमरः । अधीशितुः सर्वेश्वरस्य । मायाधिपत्वादिसत्त्वेपि परस्य तदासक्तिशून्यस्य तत्र हेतुरात्मतंत्रस्यानन्याधीनस्य तत्रापि हेतुर्महात्मनो भूम्न इत्यर्थः । रूपं श्यामचतुर्भुजत्वादि । गुणा

भूतानि विष्णोः सुरपूजितानि दुर्दर्शलिंगानि महाद्भुतानि ॥ रक्षंति तद्भक्तिमतः परेभ्यो मत्तश्च मर्त्यानथ सर्वतश्च ॥१८॥ धर्मं तु साक्षाद्भगवत्प्रणीतं न वै विदुर्ऋषयो नापि देवाः ॥ न सिद्धमुख्या असुरा मनुष्याः कुतश्च विद्याधरचारणादयः ॥ १९ ॥ स्वयंभूर्नारदः शंभुः कुमारः कपिलो मनुः ॥ प्रह्लादो जनको भीष्मो बलिर्वैयासकिर्वयम् ॥ २० ॥ द्वादशैते विजानीमो धर्मं भागवतं भटाः ॥ गुह्यं विशुद्धं दुर्बोधं यं ज्ञात्वाऽमृतमश्नुते ॥२१ ॥ एतावानेव लोकेऽस्मिन्पुंसां धर्मः परः स्मृतः ॥ भक्तियोगो भगवति तन्नामग्रहणादिभिः ॥ २२ ॥ नामोच्चारणमाहात्म्यं हरेः पश्यत पुत्रकाः ॥ अजामिलोपि येनैव मृत्युपाशादमुच्यत ॥ २३ ॥ एतावताऽलमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् ॥ विक्रुश्य पुत्रमघवान्यदजामिलोपि नारायणेति म्रियमाण इयाय मुक्तिम् ॥ २४ ॥

त्सल्यादिर्येषां ते ॥ १७ ॥ विष्णोर्भूतानि भृत्याः । दुर्दर्शानि द्रष्टुमप्यशक्यानि लिंगानि रूपाणि येषां तानि । तद्भक्तिमतो विष्णुभक्तान् । परेभ्यः शत्रुभ्यो मत्तो मत्सकाशात् सर्वतोऽग्न्यादिभ्यश्च रक्षंति ॥ १८ ॥ ननु विष्णुभक्ताश्चेत्कथमधर्मपक्षपातं कृतवंतस्तत्राह । धर्ममिति । ऋषयो भृग्वादयः ॥ १९ ॥ ननु केऽपि चेन्न जानंति तस्य सत्त्वे किं प्रमाणं तत्राह । स्वयंभूरिति । कुमारः सनत्कुमारः । वयमित्यात्मानमेव भागवतत्वलाभात् बहु मन्यमानो निर्दिशति ॥ २० ॥ हे भटाः ॥ २१ ॥ तमेव धर्ममाह । एतावानिति ॥ २२ ॥ न चात्र प्रमाणं वक्तव्यं दृष्टत्वादित्याह । नामोच्चारणेति । येनैव केवलेन सकृदुच्चारितेन ॥ २३ ॥ ननु नामाभासेन कथं सर्वपापक्षयः स्यात् । श्रद्धाभक्त्यावृत्त्यादेरपि विधानात् । तथाहि । " सायं प्रातर्गृणन् भक्त्या दुःखग्रामाद्विमुच्यते । " इति ॥ " अनुदिनमिदमादरेण शृण्वन् " इति

आदिना ब्रह्मण्यत्वादयो ग्राह्याः । पुनरादिना नित्यनिर्दोषत्वादिग्रहः । प्रायेणेत्युक्तेः कचित्तद्रूपगुणादिकं विनापि चरंति यथा हनुमदादयः ॥ १७ ॥ 'भूतं भृत्यकुमारयोः ' इत्यभिधानचिन्तामणिः । मत्तः मम सकाशादपि मदीयेभ्यो युष्मत्तोपीत्यर्थः ॥ १८ ॥ अत्राशंकते । तुशब्देन युष्माकं सूक्ष्मज्ञानं नास्तीति सूचितम् । साक्षाद्भगवत्प्रणीतं भागवतमित्यर्थः ॥ १९ ॥ पुनराक्षिपति—नन्विति । तस्य धर्मस्य ॥ २० ॥ विजानीम एव न तु निजस्मृत्यादौ स्पष्टं कथयाम इति भावः । गुह्यं लोकमर्यादारक्षणाय गोप्यम् । किञ्च—साधारणजनदुर्बोधं च तत्र हेतुः—विशुद्धं न ह्यशुद्धाः शुद्धं ज्ञातुमर्हंति गुह्यत्वे हेतुविशेषोऽयमिति।हेभटा इति।यूयं तु सुतरां न जानीथ भटानां भृत्यानां स्वामिकार्यव्यग्रत्वेन तत्प्राप्त्यसंभवादिति भावः ॥ २१ ॥ तमेव भागवतमेव । तस्य हरेर्नामग्रहणादिभिर्भगवति यो भक्तियोग एतावानेव परो धर्मः स्मृतः " एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुंडरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ " इति स्मृतेः । आदिनाऽर्चनादिग्रहः । एवकारोऽत्र दृढीकरणार्थः ॥ २२ ॥ अत्र भागवतधर्मस्य परत्वे । हे पुत्रका इति । यूयं मे पुत्रतुल्या अतो युष्मभ्यं मयैतदुक्तमिति भावः ॥ २३ ॥ पुनराक्षिपति—नन्विति । आवृत्त्यादेरिहादिना चिंतनादिग्रहः । नाम्नो गुणानां चासकृदुच्चारणमावृत्तिः । तत्र तत्र प्रस्तावे । तं भगवंतम् । अत्रैवाजामिलोपाख्यान एव अत्राक्षिपति—किं चेति । तथा सति नामसंकीर्त्तनस्यैव सर्वपापनाशकत्वे सति द्वादशाब्दादीनीति । ब्रह्महत्याकर्त्ता द्वादशाब्दव्रतं कुर्यात्क्षत्रियहंता ततो न्यूनमित्यादि । कुता हेतोः । स्मरेयुः कथय

प्रायेण वेद तदिदं न महाजनोऽयं देव्या विमोहितमतिर्बत माययाऽलम् ॥
त्रय्यां जडीकृतमतिर्मधुपुष्पितायां वैतानिके महति कर्मणि युज्यमानः ॥ २५ ॥

"श्रवणं कीर्तनं ध्यानं हरेरद्भुतकर्मणः ॥ जन्मकर्मगुणानां च तदर्थेऽखिलचेष्टितम् ॥" इत्याद्यस्मिन्नेव पुराणे तत्रतत्र पठ्यते । पुराणांतरे च । "पापक्षयश्च भवति स्मरतां तमहर्निशम् ॥ " इति ॥ अत्रैव च । "तस्मात्संकीर्तनं विष्णोर्जगन्मंगलमंहसाम् ॥ महतामपि कौरव्य विद्ध्येकांतिकनिष्कृतम् ॥ " इत्यादिना सम्यक्कीर्तनादेव मुच्यते । किं च तथा सति किमिति मन्वादयो द्वादशाब्दादीनि स्मरेयुः तस्मादिदमनुपपन्नमिव तत्राह । एतावतेति । भगवतो गुणानां कर्मणां च नाम्नां च सम्यक्कीर्तनमिति यदेतावता पुंसामघनिर्हरणाय पापक्षयमात्रायालमुपयोगो नास्ति । अलंशब्दोऽत्र वारणे । यथाहामरसिंहः । " अलं भूषणपर्याप्तिशक्तिवारणवाचकम् । " इति ॥ उपयोगाभावमेवाह । अजामिलो महापातक्यपि नारायणेति विक्रुश्य न तु सम्यक्कीर्तयित्वा तच्च पुत्रं विमृश्य न तु हरिम् । अघवानशुचिरपि म्रियमाणोऽस्वस्थचित्तोऽपि मुक्तिमवाप न त्वघनिर्हरणमात्रमतो नामाभासेनापि सर्वपापक्षय इत्येव तत्त्वम् । आवृत्तिश्रद्धादिविधयस्तु पापवासनाक्षयार्था इत्युक्तमेव 'हरेर्गुणानुवादः खलु सत्त्वभावनः' इत्यत्र ॥ २४ ॥ यत्तूक्तं व्यर्थं तर्हि द्वादशाब्दादिस्मरणमिति तत्राह । प्रायेणेति । महाजनो मन्वादिः । अयं भावः । यथा मृतसंजीवनौषधिमजानंतो वैद्या रोगनिर्हरणाय त्रिकटुकनिंबादीनि स्मरंति तथा स्वयंभूशंभुप्रमुखद्वादशव्यतिरेकेणायं महाजनोऽतिगुह्यमिदमज्ञात्वा द्वादशाब्दादिकं स्मरतीति । किं च मायया देव्या अलं विमोहितमतिरयं जनो मधु मधुरं यथा भवत्येवं पुष्पितायां पुष्पस्थानीयैरर्थवादैर्मनोहरायां त्रय्यां जडीकृताऽभिनिविष्टा मतिर्यस्य अतो महत्येव कर्मणि श्रद्धया युज्यमानो नाल्पे प्रवर्तते । दृश्यते हि । प्राकृतस्य लोकस्य महति मंत्रादौ श्रद्धाल्पे चाश्रद्धा तस्मादस्य ग्राहको नास्तीति तैर्नोक्तम् । यद्वा स्वाधीनः सिंहोऽस्त्येता

मासुः । तस्मान्मन्वादिस्मृतिविरुद्धत्वादिदं नामसंकीर्तनमेव सर्वपापहरमिति कथनमनुपपन्नमिवायुक्तवत्प्रतिभातीति । गुणानां भक्तवात्सल्यादीनां कर्मणां गोवर्द्धनोद्धरणादीनाम् नाम्नां हरिविष्णिवत्यादीनाम् । यद्वा–गुणनाम्नां कृपासिंध्वित्यादीनां कर्मनाम्नां मधुसूदनेत्यादीनां सम्यक् कीर्त्तनं पापमात्रनाशायालं नात्र साधनांतरापेक्षेत्याह तीर्थः । सम्यक् कीर्त्तनेनैव पापक्षय इत्युपयोगो नास्ति किन्तु यथाकथंचिन्नाम्न उच्चारणमात्रादेवेति भावः । अतोऽजामिलोद्धारदर्शनाद्धेतोः । पापवासनाक्षयार्था इति । महदपराधाद्यालंबनेन या तिष्ठति पापवासना तस्याः क्षयार्था इत्थमेव द्वितीये ' एतावान्सांख्ययोगाभ्याम् ' इत्यत्र व्याख्यातम् । अंते तु परमो लाभ इति तदुक्तम् " कृष्णःकृष्णःकृष्ण इत्यंतकाले जल्पञ्जन्तुर्जीवितं यो जहाति । आद्यः शब्दः कल्पते तस्य मुक्त्यै व्रीडानम्रौ तिष्ठतोऽन्यावृणस्थौ " इति नाममाहात्म्ये ॥ २४ ॥ द्वादशोत्तरो मन्वादिः । अत्राशयमाह–अयं भाव इति । इदं भगवन्नामस्मरणम् । ननु सर्वज्ञास्ते कथं न जानंतीति चेत्तत्राह–किञ्चेति । देव्या बहुविधनाशोपेतया । अतो मायामोहितबुद्धित्वात् ननु तदुक्तौ स्वल्पसाधनायामपि लोकः कथं न प्रवर्त्तेतान्यथातिप्रसंगात्तत्राह–यद्वेति । हरिनामापेक्षया पापस्यातितुच्छत्वं दावाग्नेरग्रे तृणवदिति । ननु पापस्य तुच्छत्वेऽपि पापवासनामुक्त्यर्थं तु तेषां तत्सामर्थ्यमेवेति चेदत्राह–यद्वेति । सर्वमुक्तौ हि श्रीहरि

एवं विमृश्य सुधियो भगवत्यनंते सर्वात्मना विदधते खलु भावयोगम् ॥ ते मे न दंडमर्हंत्यथ यद्यमीषां स्यात्पातकं तदपि हंत्युरुगायवादः ॥२६॥
ते देवसिद्धपरिगीतपवित्रगाथा ये साधवः समदृशो भगवत्प्रपन्नाः ॥ तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्नैषां वयं न च वयः प्रभवाम दंडे ॥ २७ ॥
तानानयध्वमसतो विमुखान्मुकुंदपादारविंदमकरंदरसादजस्रम् ॥ निष्किंचनैः परमहंसकुलै रसज्ञैर्जुष्टाद्गृहे निरयवर्त्मनि बद्धतृष्णान् ॥२८॥ जिह्वा
न वक्ति भगवद्गुणनामधेयं चेतश्च न स्मरति तच्चरणारविंदम् ॥ कृष्णाय नो नमति यच्छिर एकदापि तानानयध्वमसतोऽकृतविष्णुकृत्यान् ॥ २९ ॥
तत्क्षम्यतां स भगवान्पुरुषः पुराणो नारायणः स्वपुरुषैर्यदसत्कृतं नः ॥ स्वानामहो न विदुषां रचितांजलीनां क्षांतिर्गरीयसि नमः पुरुषाय भूम्ने॥३०॥

वता श्वसृगालादिनिवारणाय तं यथा न प्रयुंजते तथाऽतितुच्छत्वात्पापस्य न तन्निरसनाय परममंगलं हरेर्नाम स्मरंति । यद्वा नाममाहात्म्यज्ञाने सर्वमुक्तिप्रसंगादित्येषा दिक् ग्रंथविस्तरभयात्तु नातिप्रपंच्यते ॥ २५ ॥ भावयोगं भक्तियोगम् । अमीषां पातकं न स्यादेव । यदि स्यात् । उरुगायस्य भगवतो वादः कीर्तनम् ॥ २६ ॥ तदेवं धर्मतत्त्वं निर्णीय भृत्याननुशास्ति । त इति । ये भगवंतं प्रपन्नास्ते देवैः सिद्धैश्च परिगीतपवित्रगाथा वर्णितपवित्रकथा अतस्तान्नोपसीदत तत्समीपमपि न गच्छत । वयः कालोऽपि न प्रभवति ॥ २७ ॥ के तर्हि दंडार्थमानेया इत्यत्राह तानिति द्वाभ्याम् । असतो दुष्टान् । तानेवाह । मुकुंदपादारविंदयोर्यो मकरंदरूपो रसस्तस्माद्विमुखान् । कथंभूतात् । निष्किंचनै रसज्ञैरजस्रं जुष्टात् । तेषां ज्ञापकमाह । निरयवर्त्मनि स्वधर्मशून्ये गृहे बद्धा तृष्णा यैस्तान् ॥ २८ ॥ किं च जिह्वेत्यादि । यद्येषां जिह्वेत्याद्यन्वयः । न कृतं विष्णुकृत्यं भगवद्व्रतं यैः ॥ २९ ॥ भगवंतं क्षमापयति तदिति । अयं भाव । नः स्वपुरुषैरस्मदीयत्वेन स्थितैः स्वी

लीलासाधनसृष्ट्यभावः स्यात्तच्चानुचितमेवेति भावः । " लीलार्थं कुरुते सृष्टिं ब्रह्मद्वारा जनार्दनः " इति पुराणांतरोक्तेः । प्रपंच्यते विस्तार्यते ॥ २५ ॥ एवं पूर्वोक्तभगवद्भक्तिमहिमप्रकारं विमृश्य विचार्य सर्वात्मना नित्यनैमित्तिकापेक्षया ॥ २६ ॥ अतो वर्णितपवित्रकथत्वात् । तान्नोपसीदत तन्निकटे पातक्यपि चेद्भवेत्तदापीति भावः ॥ २७ ॥ स्वधर्मशून्ये इत्युक्ते स्वधर्ममाश्रित्य ये गृहे तिष्ठंति ते नानेया मोक्षाधिकारित्वा त्तेषाम् " स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः " इति श्रीमुखोक्तेः । निष्किञ्चनैः अपरिग्रहैः । परमहंसकुलैः ज्ञानिसमूहैः रसज्ञैः सारासारविवेकनिपुणैः ॥ २८ ॥ अन्यदाह–किञ्चेति । यस्य जिह्वा श्रीशस्य गुणं नामधेयं चैकदा जन्ममध्येऽपि न वदति चेतश्च तच्चरणारविंदं न स्मरति शिरश्च कृष्णाय कृष्णं लक्षीकृत्य नो नमति तानानयध्वं तदुक्तम् "शाठ्येनापि नमस्कारं कुर्वतः शार्ङ्गधन्वने। शतजन्मार्जितं पापं तत्क्षणादेव नश्यति॥" स्कांदे तु " स कर्त्ता सर्वधर्माणां भक्तो यस्तव केशव । स कर्त्ता सर्वपापानां यो न भक्तस्तवाच्युत ॥ पापं भवति धर्मोऽपि तवाभक्तैः कृतो हरे । निःशेषधर्मकर्त्ता वाप्यभक्तो नरके हरे ॥ सदा तिष्ठति भक्तस्ते ब्रह्महापि विमुच्यते॥" नृसिंहपुराणे यमवाक्यम् "अहममरगणार्चितेन धात्रा यम इति लोकहिताहिते नियुक्तः । हरिगुरुविमुखान्प्रशास्मि मर्त्यान्हरिचरणप्रणतान्नमस्करोमि॥" इति । भक्तिरसामृतसिंधुबिंदावप्युक्तम् "यदि मधुमथन त्वदंघ्रिसेवां हृदि विदधाति जहाति वा विवेकी । तदखिलमपि दुष्कृतं त्रिलोके कृतमकृतं न कृतं कृतं च सर्वम्॥ " इति ॥ २९ ॥ अत्राभिप्रायमाह–अयं भाव इति । एतदीया अपि वस्तुतो मदीया एवेति ध्यात्वा क्षम्य ताभिति भौवादिकस्य दैवादिकस्य वा रूपमाद्ये विकरणव्यत्यय आर्षः । द्वितीये त्वात्मनेपदं दीर्घाभावश्चार्षः । स्त्रीयानां भक्तानां नो अस्माकम् । इत्यर्थ । इति। "अपराधः सकृद्भर्त्रा सोढव्यः स्वप्रजाकृतः" इत्युक्तन्यायेनेति

तस्मात्संकीर्तनं विष्णोर्जगन्मंगलमंहसाम् ॥ महतामपि कौरव्य विद्ध्येकांतिकनिष्कृतिम् ॥ ३१ ॥ शृण्वतां गृणतां वीर्याण्युद्दामानि हरेर्मुहुः ॥ यथा सुजातया भक्त्या शुद्ध्येन्नात्मा व्रतादिभिः ॥ ३२ ॥ कृष्णांघ्रिपद्ममधुलिड् न पुनर्विसृष्टमायागुणेषु रमते वृजिनावहेषु ॥ अन्यस्तु कामहत आत्मरजः प्रमार्ष्टुमीहेत कर्म यत एव रजः पुनः स्यात् ॥ ३३ ॥ इत्थं स्वभर्तृगदितं भगवन्महित्वं संस्मृत्य विस्मितधियो यमकिंकरास्ते ॥ नैवाच्युताश्रयजनं प्रतिशंकमाना द्रष्टुं च बिभ्यति ततःप्रभृति स्म राजन् ॥ ३४ ॥ इतिहासमिमं गुह्यं भगवान्कुंभसंभवः ॥ कथयामास मलय आसीनो हरिमर्चयन् ॥ ३५ ॥ इति श्रीभा०म० षष्ठस्कन्धे अजामिलोपाख्यानसमाप्तिवर्णनपूर्वकं यमेन स्वभटान्प्रति भगवद्भक्तिनाममाहात्म्यवर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

यैरेवपुरुषैर्यद्यस्मादसदन्याय्यं कृतं तत्तस्मात्स्वयमेव क्षम्यतां सहताम् । स्वानां स्वीयानां भक्तानां नोऽस्माकं न विदुषामज्ञानाम् । अहो गरीयसि तास्मिन्क्षांतिर्युक्तैव । मह इति पाठे स्वीयानां माहात्म्यमविदुषां नः क्षमां करोत्वित्यर्थः ॥ ३० ॥ तस्मादित्यादिः शुकोक्तिः । जगतोऽपि मंगलरूपम् ॥ ३१ ॥ एकांतिकत्वमेवाह । शृण्वतामिति । व्रतादिभिस्तथा न शुद्ध्येत् ॥ ३२ ॥ एतदुपपादयति । कृष्णांघ्रिपद्मयोर्मधु लेढि आस्वादयतीति तथा । मधु लिहताऽतितुच्छत्वेन विसृष्टा ये मायागुणा विषयास्तेषु पुनर्न रमते । अन्यस्तु तन्मध्वास्वादरहितोऽत एव कामाभिभूतः सन्नात्मनो रजः पापं प्रमार्ष्टुमपि कर्मैव प्रायश्चित्तरूपमीहेत यतः कर्मणः पुनरपि रजः पापं स्यादेव कुंजरशौचवत सत्त्वशोधकत्वाभावात् ॥ ३३ ॥ नैव विस्मितधियो बभूवुः । किं तु सत्यमुक्तमित्येव मेनिरे । ततःप्रभृति प्रतिशंकमाना अस्मानेवैष हन्यादिति शंकां वहंतस्तं द्रष्टुमपि बिभ्यति स्म । पाठांतरे तु विस्मितधियो जाताः । ते च ततःप्रभृति बिभ्यति स्मेत्यर्थः ॥ ३४ ॥ कुंभसंभवोऽगस्त्यो मलये पर्वत आसीनोऽव्यग्रो हरिमर्चयन् । पुनःपुनर्विश्वासार्थं हरेः पादौ स्पृशन्नित्यर्थः ॥ ३५ ॥ इति श्रीमद्भागवते म०षष्ठस्कंधे टीकायां तृतीयोऽध्यायः ॥ ३ ॥ छ ॥ चतुर्थादित्रिभिर्विश्वरूपजन्मविवक्षया ॥ प्रचेतःसुतदक्षस्य वंशस्तावत्प्रतन्यते ॥ १ ॥ चतुर्थे तु प्रजासृष्ट्यै दक्षेणाराधनं हरेः ॥ तपसा हंसगुह्याख्यस्तोत्रेण च निरूप्यते ॥ २ ॥ प्रसक्तानुप्रसक्तेन स्वायंभुवसुतान्वये ॥

भावः ॥ ३० ॥ यतो विष्णुर्महांस्तस्माद्धेतोः । कौरव्येति । शुद्धकुलोद्भूतत्वात्तुभ्यं मयैतद्गुह्यमप्युपदिष्टमिति भावः ॥ ३१ ॥ उद्दामान्युत्कटानि गोवर्द्धनोद्धरणादीनि । आदिना तीर्थयात्रादिग्रहः सुष्ठु जातया भक्त्या रतिरूपया तु मुक्तिपर्यंतस्य यथा किमुत पापमात्रस्य वासनाक्षयप्रकारेणात्मा मनः शुद्ध्येत्तथा व्रतादिभिर्नेत्यर्थः ॥ ३२ ॥ एतद्भक्तिमाहात्म्यम् । तन्मध्वास्वादरहितो भगवच्चरणारविंदरसास्वादविधुरो भक्तिमात्रहीनः । अत एव तदंघ्रिपंकजमकरंदास्वादहीनत्वादेव ॥ ३३ ॥ पाठांतरे 'ते चाच्युताश्रयजनम्' इति पाठे । इत्यर्थ इति । अहो अस्माकं स्वाम्यप्येभ्यो विष्णुभक्तेभ्यो बिभेति ततोऽस्माभिः सुतरां भेतव्यमिति विचार्य सभयाः संतीति भावः ॥ ३४ ॥ कुंभसंभव इति । संहिताध्ययने द्वैपायनादश्रुतत्वादिति भगवानतीव समर्थः । 'अगस्त्यः कुंभसंभवः' इत्यमरः । एतेनायोनिजत्वमलयागासीनत्वहर्यर्चनत्वकथनेन सर्वथा सत्यता द्योत्यतेऽस्योपाख्यानस्येति ॥ ३५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थादित्रिभिः चतुर्थपञ्चमषष्ठैः ( १ ) ( २ ) स्वायंभुव

राजोवाच ॥ देवासुरनृणां सर्गो नागानां मृगपक्षिणाम् ॥ सामासिकस्त्वया प्रोक्तो यस्तु स्वायंभुवेंतरे ॥ १ ॥ तस्यैव व्यासमिच्छामि ज्ञातुं ते भगवन्यथा ॥ अनुसर्गं यथा शक्त्या ससर्ज भगवान्परः ॥ २ ॥ सूत उवाच ॥ इति संप्रश्नमाकर्ण्य राजर्षेर्बादरायणिः ॥ प्रतिनंद्य महायोगी जगाद मुनिसत्तमः ॥ ३ ॥ श्रीशुक उवाच ॥ यदा प्रचेतसः पुत्रा दश प्राचीनबर्हिषः ॥ अंतःसमुद्रादुन्मग्ना ददृशुर्गां द्रुमैर्वृताम् ॥ ४ ॥ द्रुमेभ्यः क्रुध्यमानास्ते तपोदीपितमन्यवः ॥ मुखतो वायुमग्निं च ससृजुस्तद्दिधक्षया ॥ ५ ॥ ताभ्यां निर्दह्यमानांस्तानुपलभ्य कुरूद्वह ॥ राजो वाच महान्सोमो मन्युं प्रशमयन्निव ॥ ६ ॥ मा द्रुमेभ्यो महाभागा दीनेभ्यो द्रोग्धुमर्हथ ॥ विवर्धयिषवो यूयं प्रजानां पतयः स्मृताः ॥ ७ ॥

नामप्रभावमाकर्ण्य वंशव्यासं बुभुत्सते ॥ ३ ॥ देवासुरेति द्वाभ्याम् । सामासिकः संक्षिप्तो यः प्रोक्तस्तृतीयस्कंधे ॥ १ ॥ व्यासं विस्तारं ते त्वत्तो यया शक्त्या यथा ससर्ज तां शक्तिं तत्प्रकारं च ज्ञातुमिच्छामि । अनुसर्गमनुवृत्तं सर्गम् ॥ २ ॥ ३ ॥ दक्षादिरूपेण ससर्जेति वक्तुं दक्षजन्मप्रकारमाह । यदेति । प्राचीनबर्हिषः पुत्रा यदा समुद्रमध्यादुन्मग्ना निर्गतास्तदा गां पृथ्वीं द्रुमैर्वृतां ददृशुः । नारदोपदेशतः प्राचीनबर्हिषो निवृत्त्याऽराजके सति कृष्याद्यभावात् ॥ ४ ॥ तपसा दीपितो मन्युर्येषां ते । तेषां द्रुमाणां दग्धुमिच्छया ॥ ५ ॥ ताभ्यां वाय्वग्निभ्यां दह्यमानांस्तान्द्रुमान् । वनस्पतीनां राजा सोम उवाच मा द्रुमेभ्य इति नवभिः ॥ ६ ॥ हे महाभागाः । विवर्धयिषवो विशेषेण

सुतः प्रियव्रतस्तस्यान्वये कथ्यमाने प्रसंगसंगत्या प्रसक्तं भूगोलखगोलनरकादिवर्णनं तत्रानुप्रसक्तं तन्निवृत्त्युपायत्वेन नाममाहात्म्यवर्णनं तेन हेतुना नामप्रभावं श्रुत्वा ( ३ ) 'मुह्यंति यत्सूरयः' इत्यत्र यदुक्तं ब्रह्माद्यज्ञेयं माहात्म्यं हरेस्तत् 'जन्माद्यस्य यतः' इत्यत्र च यः सर्गविशेषः प्रतिज्ञातः सोऽपि भगवदेकनिष्ठ इति प्रतिपाद्यतेऽस्मिन्नध्याये तत्र तृतीयादौ कथितः सर्गो भागवदेकनिष्ठ उतान्यनिष्ठ आहोस्विदन्यनिष्ठोऽपि भगवत्प्रसादायत्त इत्याभिप्रेत्य राजोक्तार्थमनूद्य तद्विस्तरं ब्रूहीत्याह—देवेति ॥ १ ॥ व्यासं तन्मन्वंतरजातदक्षानंतरशाखोपशाखारूपम् । अनुवृत्तं सर्गं पूर्वसर्गस्य केनचिद्धेतुना नष्टत्वात्पुनर्जातं सर्गम् ॥ २ ॥ शुकेन राजप्रश्नमादृत्य परिहार उक्त उतानादृत्यार्थांतरमवादीति श्रुत्वा स्मित्वा तूष्णीं स्थितं किमिति शौनकादीनां हार्दं प्रश्नं परिहरति सूत इत्याह—सूत इति । अनेन सूतशौनकादिसंवादो न समाप्तः किन्तु शौनकादिप्रश्नोप्ययमेव परिहारोप्ययमेवेति ध्वनितम् । मुनिसत्तमा इति । मननशीलश्रेष्ठा यूयमिति मयाप्यज्ञायीति भावः ॥ ३ ॥ भगवत्प्रसादायत्तत्वान्मंददृष्ट्यान्यनिष्ठवत्प्रतीयमानोऽपि तदेकनिष्ठ इति लक्षणस्य नातिव्याप्तिरिति दर्शयितुं प्रकृतार्थानुवादपूर्वकमुपक्रमते इत्याह—दक्षादीत्यादि ॥ ४ ॥ ५ ॥ चंद्रेण तत्कोपशांतिप्रकारमाह—ताभ्यामिति ॥ ६ ॥ द्रुमेभ्य इति । "क्रुधद्रुह—" इत्यादिना चतुर्थी । तत्र हेतुः । विवर्द्धयिषव

अहो प्रजापतिपतिर्भगवान्हरिरव्ययः ॥ वनस्पतीनोषधीश्च ससर्जोर्जमिषं विभुः ॥ ८ ॥ अन्नं चराणामचरा ह्यपदः पादचारिणाम् ॥
अहस्ता हस्तयुक्तानां द्विपदां च चतुष्पदः ॥ ९ ॥ यूयं च पित्राऽन्वादिष्टा देवदेवेन चानघाः ॥ प्रजासर्गाय हि कथं वृक्षान्निर्दग्धुमर्हथ ॥ १० ॥
आतिष्ठत सतां मार्गं कोपं यच्छत दीपितम् ॥ पित्रा पितामहेनापि जुष्टं वः प्रपितामहैः ॥ ११ ॥ तोकानां पितरौ बंधुर्दृशः पक्ष्म स्त्रियाः पतिः ॥
पतिः प्रजानां भिक्षूणां गृह्यऽज्ञानां बुधः सुहृत् ॥१२॥ अंतर्देहेषु भूतानामात्मास्ते हरिरीश्वरः ॥ सर्वं तद्धिष्ण्यमीक्षध्वमेवं वस्तोषितो ह्यसौ ॥१३॥
यः समुत्पतितं देह आकाशान्मन्युमुल्बणम् ॥ आत्मजिज्ञासया यच्छेत्स गुणानतिवर्तते ॥१४॥ अलं दग्धैर्द्रुमैर्दीनैः खिलानां शिवमस्तु वः ॥
वार्क्षी ह्येषा वरा कन्या पत्नीत्वे प्रतिगृह्यताम् ॥१५॥ इत्यामंत्र्य वरारोहां कन्यामाप्सरसीं नृप ॥ सोमो राजा ययौ दत्त्वा ते धर्मेणोपयेमिरे ॥१६॥

वर्धयितुमिच्छवः ॥ ७ ॥ प्रजापतीनां तद्भक्ष्यभोज्यदाहोऽनुचित इत्याह अहो इति त्रिभिः । ऊर्जं भक्ष्यम् । इषमन्नम् ॥ ८ ॥ ९ ॥ १० ॥ अत आतिष्ठताश्रयत सतां मार्गमुपशमं पित्रादिभिर्जुष्टम् ॥ ११ ॥ प्रजानां प्रजापतिरेव बंधुरतस्तर्ज्जीविकानाशो न कर्तव्य इति दृष्टांतपंचकेनाह । तोकानां बालानां मातापितरौ । अज्ञानां ज्ञानदो बुध एव सुहृत् ॥ १२ ॥ ईश्वराधिष्ठानत्वाच्च भूतद्रोहो न युक्त इत्याह । अंतर्देहेष्विति । वो युष्माभिः ॥ १३ ॥ आकाशाद्देहे समुत्पतितमाकस्मिकमित्यर्थः । आत्मविचारेण यो नियच्छेत् ॥ १४ ॥ खिलानां शेषाणां वो युष्माकं च शिवमस्तु । वृक्षरक्षणार्थं तदीयां कन्यां ददाति । वार्क्षी वृक्षैः पालिता ॥ १५ ॥ आमंत्र्य सांत्वयि

इति । पतयः पातारः स्मृता यतोऽतो द्रोग्धुं मार्हथेत्यन्वयः । हे महाभागा इति । न ह्येतन्महाभागलक्षणं यन्निरपराधद्रुमदहनमिति भावः ॥ ७ ॥ ऊर्जेति बली भवति चेष्टते वाऽनेनेत्यूर्जम् । अन्नातिरिक्तं फलादि भक्ष्यं वनस्पतिहेतुकम् 'ऊर्ज्–बलप्राणनयोः' अतः " अकर्त्तरि च कारके संज्ञायाम् " इति घञ् । इष्यते क्षुन्निवृत्तये इतीषमन्नं गोधूमाद्यौषधिहेतुकम् । 'इषु–इच्छायाम्' अतः 'घञर्थे कविधानम्' इति कः ॥ ८ ॥ चराणां पक्षाभ्यां चरतां भ्रमरादीनाम् । अचराः पुष्पाद्याः । पादचारिणां पद्भिश्चरतां गवादीनामपदस्तृणाद्याः । तेष्वेव हस्तयुक्तानां सिंहादीनामहस्ता गवाद्याः । द्विपदां पद्भ्यां चरतां मनुष्याणां चतुष्पदो मेषाद्याः ॥९॥ पित्रा प्राचीनबर्हिषा । " पित्रादिष्टाः प्रजासर्गे तेपुस्ते परमं तपः " इति चतुर्थस्कंधोक्तेः । देवदेवेन महादेवेन । तदर्थमेव योगादेशाख्यस्तोत्रोपदेशादित्यपि तत्रैवोक्तम् । अनघा इति । तपसा गतपापा भूत्वां कथमेतादृशकर्मणि प्रवृत्ता इति भावः । एतद्भवद्भिर्न कर्त्तव्यम् ' वृद्धिमिच्छतो मूलमपि नष्टम् ' इति न्यायापातप्रसंगात् ॥१०॥ सतां मार्गम् उपशमम् ॥११॥ यूयं हि प्रजापालका द्रुमादयश्च प्रजाः प्रजोपजीव्याश्चात एतान्पालयत न हि पालकानां नाशकत्वं दृष्टमित्यत्र दृष्टांतपञ्चकमाह । किञ्चानन्यशरणानां वृक्षाणां दाहे शरणागतवधदोषोऽपि युष्माकं स्यादित्याह–तोकानामिति । तोकानां बालानां बंधू रक्षकः । बुधो ज्ञानी संसाराद्रक्षकत्वाद्बंधुः । दृश इति सामान्याभिप्रायमेकत्वम् । पक्ष्म नेत्राच्छादकरोमपंक्तिः । पतिर्भर्त्ता । प्रजानां लोकानां पतिर्नृपः । अतः प्रजारक्षकत्वहेतोः । "पतिर्धवे ना त्रिष्वीशे पालके पतिते नृपे" इति कोशात् । भिक्षूणां ब्रह्मचार्यादीनाम् । गृही गृहस्थः ॥ १२ ॥ वो युष्माभिरेवं सर्वभूतदययैवासावीश्वरस्तोषितः पूर्वमिति किन्न स्मरथेति भावः । आर्षत्वात्तृतीयाबहुवचनेऽपि युष्मदो वसादेशः ॥ १३ ॥ ननु कोपकाले कुत एतावान्विचारस्तत्राह–य इति । आकाशादिव देहे । इत्यर्थ इति । यथाकाशादवितर्कितं वस्त्वापतेत्तद्वदिति भावः । यद्वा–आत्मनः परमात्मनो जिज्ञासया विचारेण "यच्च किञ्चिज्जगत्यस्मिञ्श्रूयते दृश्यतेऽपि वा । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इति श्रुत्यर्थपर्यालोचनया भूतद्रोहेण श्रीनारायणद्रोह एव स्यादिति चिंतयेत्यर्थः । यच्छेदुपशमयेत् । सगुणानिति । अन्यथा यूयं गुणैरेव ग्रस्ता भविष्यथेति सामोक्त्या भेदश्च ध्वनितः ॥१४॥ भेदेनाप्युपशमाभावमालक्ष्य दानमाह–अलमिति ॥ १५ ॥ वरः श्रेष्ठ आरोहो नितंबप्रदेशो यस्यास्ताम् ' श्रोण्यामारोहस्स्याद्वरास्त्रियाः ' इत्यमरः । कंडोर्मुनेः । नृपेति । नृपालने सपत्नीकस्यैवाधिकार इति भावः । ते प्रचे

तेभ्यस्तस्यां समभवद्दक्षः प्राचेतसः किल ॥ यस्य प्रजाविसर्गेण लोका आपूरितास्त्रयः ॥ १७ ॥ यथा ससर्ज भूतानि दक्षो दुहितृवत्सलः ॥ रेतसा मनसा चैव तन्ममावहितः शृणु ॥ १८ ॥ मनसैवासृजत्पूर्वं प्रजापतिरिमाः प्रजाः ॥ देवासुरमनुष्यादीन्नभःस्थलजलौकसः ॥ १९ ॥ तमबृंहितमालोक्य प्रजासर्गं प्रजापतिः ॥ विंध्यपादानुपव्रज्य सोऽचरद्दुष्करं तपः ॥ २० ॥ तत्राघमर्षणं नाम तीर्थं पापहरं परम् ॥ उपस्पृश्यानुसवनं तपसाऽतोषयद्धरिम्॥२१॥अस्तौषीद्धंसगुह्येन भगवंतमधोक्षजम् ॥ तुभ्यं तदभिधास्यामि कस्यातुष्यद्यतो हरिः ॥२२॥ प्रजापतिरुवाच ॥ नमः परायावितथानुभूतये गुणत्रयाभासनिमित्तबंधवे ॥ अदृष्टधाम्ने गुणतत्त्वबुद्धिभिर्निवृत्तमानाय दधे स्वयंभुवे ॥ २३ ॥ न यस्य सख्यं पुरुषोऽवैति सख्युः सखा वसन्संवसतः पुरेऽस्मिन् ॥ गुणो यथा गुणिनो व्यक्तदृष्टेस्तस्मै महेशाय नमः करोमि ॥ २४ ॥

त्वा । आप्सरसीमप्सरसः प्रम्लोचायाः सुताम् ॥ १६ ॥ १७ ॥ दुहितृवत्सल इति तस्य कन्यावंश एवेत्युक्तम् । मम मत्तः ॥ १८ ॥ प्रजापतिर्दक्षः ॥ १९ ॥ अबृंहितमसंवृद्धम् । विंध्यस्य पादान्सन्निहितपर्वतान् ॥ २० ॥ २१ ॥ हंसगुह्याख्येन स्तोत्रेण कस्य दक्षस्य ॥ २२ ॥ पराय सर्वोत्तमाय नमो दधे नमनं करोमि । परत्वे हेतुः । अवितथाऽनुभूतिश्चिच्छक्तिर्यस्य । अतो गुणत्रयाभासो जीवो निमित्तं माया च तयोर्बंधवे नियंत्रे । एवमपि गुणेषु तत्त्वबुद्धिर्येषां तैर्जीवैरदृष्टं धाम स्वरूपं यस्य । तत्र हेतुः । निवृत्तं मानं यस्मात् पाठांतरे निवृत्तं निरस्तं मानमवधिश्च यस्मात् । कथं तर्हि तस्य सिद्धिरत आह । स्वयंभुवे स्वप्रकाशाय ॥ २३ ॥ अदृष्टधामत्वं दर्शयन्नाह । नेति । पुरुषः सखा जीवोऽस्मिन्पुरे देहे वसन्नप्यत्रैव संवसतः सख्युर्यस्य सख्यं करणप्रवर्तकत्वादिकं नावैति न जानाति तस्मै । कुतः । व्यक्तदृष्टेः प्रपंचद्रष्टुः । न हि द्रष्टा

तसः ॥ १६ ॥ समभवदिति । दक्षस्य स्वायंभुवमनुवंश्यत्वात्स्वायंभुवे मन्वंतरे जन्म यस्य । प्रजाविसर्गेणेति । प्रजाविसर्गस्तस्य चाक्षुष एव “ चाक्षुषे त्वंतरे प्राप्ते प्राक्सर्गे कालविप्लुते । यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥” इति चतुर्थोक्तेः । तस्मान्मध्ये मन्वतरपंचकमभिव्याप्यास्य तप एव पौर्वकालिकैश्वर्यप्राप्त्यर्थमवगम्यते ॥ १७ ॥ कन्यावंश एवेत्युक्ते पुत्रवंशाभाव एव सूचितः ॥१८॥१९॥ ‘पादाः प्रत्यंतपर्वताः’ इत्यमरः ॥२०॥ तत्र विंध्यपादेषु । अनुसवनं त्रिकालम् । उपस्पृश्य स्नात्वेत्यर्थः । “ उपस्पर्शः स्पर्शमात्रे स्नानाचमनयोरपि ” इति मेदिनी ॥ २१ ॥ तद्धंसगुह्यं पूर्वसिद्धमेव न तु दक्षनिर्मितमिति ज्ञेयम् ॥ २२ ॥ परापरकामेन निष्कामेन वा परमेश्वर एव भजनीयो नान्यस्तस्य मायाजीववशीकारिशक्तित्वादन्यस्य तन्मायाधीनतुच्छशक्तित्वादिति स्ववांछासिद्धिकैमुत्यं दर्शयंस्तदर्थं स्तुतिविशेषेणोपतिष्ठते—नम इति । परायेति सर्वनामसंज्ञाऽभावप्रदर्शनेन लोकवैलक्षण्यमुक्तं पूर्वादिश्च व्यवस्थायामित्युक्तेस्सा न जातेत्यवधेयम् । तदेवाह—सर्वोत्तमायेति । अवितथाऽव्यभिचरिता चिच्छक्तिर्ज्ञानेच्छाशक्तिः । एवमपि प्रकृतिपुरुषनियंतृत्वेपि अदृष्टं तर्कयितुमशक्यम् । तत्रादृष्टस्वरूपत्वे मानं प्रत्यक्षादि । पाठांतरे ‘ निवृत्तमानावधये ’ इति पाठे निवृत्तो मानावधिः परिमाणसीमा यस्य तस्मै । न ह्येतावद्गुणरूपैश्वर्यकः परमेश्वर इति कोऽपि वक्तुं शक्नोतीति भावः । तदुक्तं ब्रह्मणा “ गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य ” इति । आशंकते—कथं तर्हीति । स्वप्रकाशाय स्वत एव प्रकाशत इत्यर्थः ॥२३॥ वसन्नपि तत्सख्यमनुभवन्नपि । सख्युः आत्मारामत्वेऽपि सख्यभावात्क

देहोऽसवोऽक्षा मनवो भूतमात्रा नात्मानमन्यं च विदुः परं यत् ॥ सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनंतमीडे ॥ २५ ॥
यदोपरामो मनसो नामरूपरूपस्य दृष्टस्मृतिसंप्रमोषात् ॥ य ईयते केवलया स्वसंस्थया हंसाय तस्मै शुचिसद्मने नमः ॥ २६ ॥
मनीषिणोंतर्हृदि संनिवेशितं स्वशक्तिभिर्नवभिश्च त्रिवृद्भिः ॥ वह्निं यथा दारुणि पांचदश्यं मनीषया निष्कर्षंति गूढम् ॥ २७ ॥

दृश्यो भवतीति । प्रथमांतपाठे व्यक्ते प्रपंच एव दृष्टिर्यस्य सः । गुणो विषयो गुणिनो विषयिण इंद्रियादेः सख्यं प्रकाशकत्वं यथा न वेत्ति तद्वत् ॥ २४ ॥ ननु गुणो जड त्वान्न जानातीति जीवस्तु चेतनः किमिति न जानात्यत आह । देह इति । देहश्चासवश्च प्राणा अक्षाणींद्रियाणि मनवश्चांतःकरणानि भूतानि च मात्राश्च तन्मात्राण्यात्मा नं स्वरूपं दृश्यमन्यमिंद्रियवर्गं तयोः परं देवतावर्गं च न विदुः । पुमान् जीवस्तु सर्वमेतत्त्रयं वेद गुणांश्च तन्मूलभूतान्वेद तज्ज्ञोऽपि सन्यं सर्वज्ञं न वेद तमनंतमीडे स्तौमि॥ २५॥ अदृष्टधामत्वमुक्त्वा स्वप्रकाशत्वमाह । यदा मनस उपरामः समाधिर्न तु सुषुप्ताविव लयो न च जाग्रत्स्वप्नयोरिव विक्षेपः । तदाह । नामरूपे रूप्येते येन तत्तथा तस्य । उप रामे हेतुः।दृष्टं दर्शनं स्मृतिश्च तयोः संप्रमोषान्नाशात् । तदा यः केवलेन स्वरूपज्ञानेन प्रतीयते तस्मै हंसाय शुद्धाय शुचि शुद्धं मनः सद्म प्रतीतिस्थानं यस्य तस्मै नमः॥ २६॥ एवंभूतः केषां प्रतीयत इत्यपेक्षायामाह । मनीषिण इति द्वाभ्याम् । विवेकिनो यं निष्कर्षंति विविच्य ध्यायंति स निर्वाणसुखानुभूतिर्मम प्रसीदतामिति द्वयोरन्व यः । एवं निष्कर्षतां प्रतीयत इति भावः । किमिति निकर्षंति स्वशक्तिभिर्गूढमप्रकाशमानं कतिभिर्नवभिः पुनश्च त्रिवृद्भिस्त्रिगुणाभिः सप्तविंशत्युपाधिभिर्गूढमष्टाविंशं निष्कर्ष तीत्यर्थः । यद्वा नवभिः प्रकृतिपुरुषमहदहंकारपंचतन्मात्ररूपाभिः । त्रिवृद्भिस्त्रिगुणात्मिकाभिः । चकरात्षोडशविकाररूपाभिश्च । कथंभूतं निष्कर्षंति । मनीषयांतर्हृदि संनि

मितान्विषयान्भोजयितुः । अत्रैव देहे कुतो नावैति । व्यक्तदृष्टिरिति पाठे विषयो घटादिः । इंद्रियादेरिहादिनेंद्रियाधिष्ठातृदेवग्रहः ॥ २४ ॥ अत्राशंकते—नन्विति । जीवः सर्वत्र चेतनोऽपि परमेश्वरे त्वचेतन एवेत्याह भूतानि पृथिव्यादीनि । तं जीवन्मुक्तदशायां जानातीति तज्ज्ञः तदपि । ननु तज्ज्ञ इति ब्रूषे तदपि न वेदेति कुतस्तत्राह—अनन्तमिति । अप्राकृतगुणानामनंतत्वात्तदप्यज्ञानमेव तदुक्तं 'द्युपतय एव ते न ययुरंतमनंततया' इति ॥ २५ ॥ ननु तज्ज्ञोऽपि न वेदेति यदुक्तं तत्र तदेव वेद्यं वस्तु द्विविधं सुज्ञेयं दुर्ज्ञेयञ्च तत्र सुज्ञेयं निर्विशेषस्वरूप, इति । नामरूपे प्रपंचनिष्ठे रूप्येते निरूप्येते एतत्स्वरूपस्य सुज्ञेयत्वमुक्तं ब्रह्मणा यथा "तथापि भूमन्महिमाऽगुणस्य ते विबोद्धुमर्हत्यमलांतरात्मभिः" इति॥ २६॥ दुर्विज्ञेयं सविशेषस्वरूपमाह—मनीषिणः शुद्धभक्ताः । गूढम् अन्तर्हृदि संनिवेशितं "प्रविष्टः कर्णरंध्रेण स्वानां भावसरोरुहम्" इत्युक्तरीत्या श्रवण भक्त्यांतर्हृदि प्रवेशितं पुनर्मनीषया प्रेमभक्त्युत्थया निष्कर्षंति अंतर्हृदयान्निष्कृष्य चक्षुरादिभिरिंद्रियैः सौंदर्य्यादिमाधुर्य्यमास्वादयंतीत्यर्थः । कीदृशं संतं निष्कर्षंति स्वशक्तिभिश्चिच्छक्तिभिः सहितं कतिभिर्नवभिर्विमलाद्याभि स्तत्रापि त्रिवृद्भिश्चिच्छक्तेरेव तिसृभिर्वृत्तिभिर्ह्लादिनीसंधिनीसंविद्भिश्च सहितं तदुक्तं विष्णुपुराणे " ह्लादिनी संधिनी संवित् त्वय्येका सर्वसंश्रये । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते॥" इति । यथा दारुणि काष्ठे पाञ्च दश्यमिति स्वामिव्याख्यातवत् । अस्य सविशेषरूपस्य । प्राकृतानंतगुणस्य दुर्विज्ञेयत्वं भक्तिहीनैरनुभवितुमशक्यत्वात् । भक्तैरनुभूयमानत्वेऽपि माधुर्य्यैश्वर्ययोः पाराज्ञानत्वात् । यदुक्तं ब्रह्मणैव "गुणात्मनस्तेऽपि गुणान्विमातुं हितावतीर्णस्य क ईशिरेऽस्य" इत्याद्युक्तेः । स्वामिचरणानाम् इति भाव इति । विचारं विना तस्य प्रतीतिर्न भवतीत्याशयः । सप्तविंशतिसंख्या च षोडशविकाराः सप्तप्रकृतयस्त्रयो गुणाः पुरुषश्चेति । अष्टाविंशं परमात्मानं

**स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः ॥ स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥ २८ ॥ यद्यन्निरुक्तं वचसा निरूपितं धियाक्षभिर्वा मनसा वोत यस्य ॥ मा भूत्स्वरूपं गुणरूपं हि तत्तस वै गुणापायविसर्गलक्षणः ॥ २९ ॥**

वेशितं निश्चलीकृतं पांचदश्यं पंचदशसामिधेनीमंत्रैः प्रकाश्यमलौकिकं वह्निमिवाहंकारास्पदादात्मनोऽन्यं परमात्मानं निष्कर्षतीत्यर्थः ॥ २७ ॥ अशेषा विशेषा यस्याः तस्या मायाया निषेधेन निर्वाणसुखे समाधिसुखेऽनुभूतिर्यस्य । अप्रसक्तनिषेधासंभवात्प्रसक्तिमाह । स एव सर्वनामा स एव च विश्वरूप इति । तद्रूपत्वेऽपि वास्तवत्वाभावान्निषेधः संभवतीत्याह । अनिरुक्ताऽऽत्मनि शक्तिर्माया यस्य सः ॥ २८ ॥ ननु यदि केवलया स्वसंस्थया प्रतीयते तर्हि सर्वनामत्वं विश्वरूपत्वं चानुपपन्नं वागाद्यगोचरत्वादित्याशंक्य सर्वैर्नामभिर्वाच्यं प्रत्यक्षादि दृश्यं च तस्य स्वरूपं वस्तुतो मा भूत्तथापि मायया घटत इति श्लोकत्रयेणोपपाद यन्नमस्करोति । यद्यदिति । यद्यद्वचसा निरुक्तमभिहितं धिया निरूपितं व्यवसितमक्षभिर्वैद्रियैर्निरूपितं गृहीतमुतापि मनसाऽपि निरूपितं संकल्पितं यस्य स्वप्रकाशत्वं तस्य तत्स्वरूपं मा भूत् । स्वरूपत्वाभावे हेतुः । हि यस्मात्तद्गुणानामेव रूपम् । पाठांतरे गुणैर्वर्धितम् । स तु गुणव्यतिरिक्तः । यतो गुणानामपायविसर्गाभ्यां प्रलयोत्पत्तिभ्यां लक्ष्यत इति तथा । चेतनाधिष्ठानं विना तयोरसंभवात् । यद्वा यस्य स्वरूपं मा भून्न भवति तस्मै नम इति तृती

त्वामित्यर्थः। एतन्मतस्यासार्वत्रिकत्वादाह—यद्वेति। इत्यर्थ इति। अहंकारास्पदस्यौपाधिकत्वान्निरुपाधिकं विचारयंतीति भावः॥२७॥अशेषाः समग्राः। विशेषा भेदाः।निर्वाणसुखे मोक्षसुखे जीवन्मुक्त्यवस्थायामिति यावत्।तद्रूपत्वेपि सर्वरूपत्वेपि। अनिरुक्ताऽनिर्वचनीया। चक्रवर्ती तु—यत्तु तस्य मायिकं सविशेषरूपं तद्व्यतिरिक्तमेव ममोपास्यमित्याह—'स मम प्रसीदताम्' बाणा हृद्विदारका आध्यात्मिकादिदुःखशराः केऽपि न विद्यंते यत्र तस्मिन्निर्वाण सुखेऽनुभूतिर्यस्य सः। "ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते" इति वैष्णवोक्तेः। स एव सर्वनामेति ब्रह्मादितृणांतानां यानि नामरूपाणि तानि तस्यैवेत्यर्थः। मायायास्तच्छक्तित्वेन मायिकविश्वस्यापि तद्रूपत्वात्तस्य स्वरूपभूता शक्तिस्तु मायाशक्तेर्मायिकाद्विश्वस्माच्चान्यो वेत्याह। अनिरुक्ता . मायिकवाङ्मनसाभ्यामनिरुक्तिविषयीभूताऽऽत्मभूता शक्तिर्यस्य सः ॥ २८ ॥ अत्राक्षिपति-नन्विति । पाठांतरे "मा भूत्स्वरूपं गुणबृंहितं हि तत्" इति पाठे तयोः प्रलयोत्पत्त्योः। पूर्वव्याख्याने स्वप्रकाशत्वमित्यध्याहारे गौरवं मत्वाह-यद्वेति। अत्र विश्वनाथः-वाग्बुद्ध्यादिकं तु सर्वं मायिकमेव तेन निरूपितमपि सर्वं मायिकमेव भवेत्तत्तु न तत्स्वरूप मित्याह यद्यदिति। सर्वं स्वामिवत्। यः सृष्टिप्रलयौ करोति स ईश्वर इत्यतः सृष्टेः प्राक्प्रलयात्परत्र च तस्य सत्त्वसिद्धेः । अत्र "दृश्यते त्वग्र्यया बुद्ध्या" इति 'मनसैवानुद्रष्टव्य' इति 'तमेव विदित्वाऽतिमृत्युमेति' इति "आत्मा वा अरे मंतव्यः" इत्यादि । "तस्मात्सर्वात्मना राजन्भगवान्हरिरीश्वरः। श्रोतव्यः कीर्त्तितव्यश्च" इति परं सहस्रश्रुतिस्मृतिवाक्यविरोधादीश्वराननुगृहीतैरेव वचआदिभिरिति व्याख्येयमत एव श्रुतावग्र्ययेति विशेषणम्। "अतः श्रीकृष्णनामादि न भवेद् ग्राह्यमिंद्रियैः। सेवोन्मुखे हि जिह्वादौ स्वयमेव स्फुरत्यदः॥" इत्यभियुक्तवचनं च। केचित्तु कार्त्स्न्येन निरूपणाभावान्न निरूपितमित्याहुः। "यतोऽप्राप्य निवर्त्तंते वाचश्च मनसा सह" इत्यत्रापादाननिर्देशाद्वाङ्मनसगम्यत्वम्। निवर्त्तत इति। अंतालाभाद्वाङ्मनसागम्यत्वं चेतिवत्। संदर्भस्तु-ननु मम यन्निर्वाणसुखैकरूपं ब्रह्माख्यं स्वरूपं तस्यानुभूतिकमेव भवदतीतत्रिवृन्नवशक्तिकं भवतु यत्तु गुणरूपबृंहितं स्वरूपं तत्तु तन्मयमेव भवेज्जगत्सादृश्यात्तत्राह—यद्यदिति। त्रिकेण गुणै रूपैश्च बृंहितम् असमोर्द्ध्वबृहत्तमं यत्स्वरूपं तदपि वचआदिगोचरो यद्यद्वस्तु तन्न भवति। तत्र हेतुः स वा इति । सगुणरूपबृंहित

यस्मिन्यतो येन च यस्य यस्मै यद्यो यथा कुरुते कार्यते च ॥ परावरेषां परमं प्राक्प्रसिद्धं तद्ब्रह्म तद्धेतुरनन्यदेकम् ॥ ३० ॥
यच्छक्तयो वदतां वादिनां वै विवादसंवादभुवो भवंति ॥ कुर्वंति चैषां मुहुरात्ममोहं तस्मै नमोऽनंतगुणाय भूम्ने ॥ ३१ ॥

येनान्वयः ॥ २९ ॥ तदेवं वस्तुतो गुणस्वरूपत्वाभावमंगीकृत्यानिरुक्तात्मशक्तिरित्यनेन द्योतितं मायया सर्ववाच्यत्वेन विश्वरूपत्वमाह । यस्मिन्नधिकरणे । यतोऽपादानात् । येन करणेन । यस्य संबंधि । यस्मै संप्रदानाय । यदीप्सिततमम् । यः कर्ता । कुरुते स्वतंत्रः । कार्यते चान्येन प्रयोज्यकर्त्रा । तद्ब्रह्मेति प्रत्येकं संबंधः । अत्र च सप्तभिर्यच्छब्दैः सप्तविभक्त्यर्था दर्शिताः । यथेति च क्रियाकारकसंबंधप्रकारवाचिनामव्ययानामर्थाः । कुरुते कार्यते चेति स्वार्थपरार्थक्रियान्वयश्च सर्वेषां दर्शितः । च शब्देन भावकर्मादिविहितप्रत्ययार्थाः संगृहीताः । तद्ब्रह्मैवेति कुतस्तत्राह । तद्धेतुस्तेषां कारणम् । तत्कुतः । सर्वेभ्यः प्राक्प्रसिद्धम् । ननु ब्रह्मादयस्तद्धेतवः श्रूयंतेऽवरे च दृश्यंते तत्कथं ब्रह्मैव तद्धेतुस्तत्राह । परेषामवरेषां च हेतूनां परमं कारणम् । ननु सर्वकारणत्वे तस्य किं नाम सहकारि भवेत्तदानीमन्यस्याभावात् । सत्यम् । निरपेक्षमेव तत्कारणमित्याह । अनन्यद्विजातीयशून्यम् एकं सजातीयशून्यं च । तस्मै नम इत्युत्तरेणान्वयः ॥ ३० ॥ नन्वेवं ब्रह्म चेद्विश्वस्य हेतुस्तर्हि 'न कदाचिदनीदृशं जगत्' इति वदंतो मीमांसकाः कुतोऽत्र विवदंते तैश्चान्ये स्वभाववादिनः संवदंते ते च ते च तत्त्वविद्भिर्बोधिता अपि कुतः पुनःपुनर्मुह्यंति तत्राह । यस्य मायाविद्यायाः शक्तयो

स्वरूपः गुणप्रलयसृष्टिभ्यां लक्ष्यते तर्क्यत एव न त्वनुभूयत इति । यद्वा—गुणानामपायोऽपगमो यस्मात्तस्मिन्विगतसर्गे नित्यसिद्धे वैकुंठे लक्ष्यते तदधिष्ठातृत्वेन दृश्यत इत्याह ॥ २९ ॥ ननु गुणमयं रूपं यदि तत्स्वरूपं न भवति तर्हि तस्यापूर्णत्वं प्रसज्येतेत्यभिप्रायेणाह—तदेवमित्यादि । विश्वनाथः-ननु चिच्छक्तीनां विमलाद्यानां नवविधानां चिच्छक्तिवृत्तीनां ह्लादिन्यादीनां त्रिविधानां तद्विलासानां वैकुंठतत्पार्षदादीनां वासुदेवसंकर्षणादीनां च नित्यसिद्धत्वश्रवणात् कालमायाजीवादृष्टानां तु जगत्कारणत्वस्य च श्रवणात्कथमेकमित्युच्यते इत्यत आह-अनन्यदिति । न विद्यतेऽन्यद्यतस्तत् । चिच्छक्तीनां तद्विलासानां च तत्स्वरूपभूतत्वाद्वासुदेवादीनां तदंशत्वात् कालमायादीनामस्वरूपभूतत्वेऽपि तच्छक्तित्वात्तदनन्यत्वमित्यर्थः । विजातीयभेदो वृक्षस्य पाषाणादेर्यथा सजातीयभेदोऽश्वत्थस्य वटादेरिति ॥ ३० ॥ नन्वत्र मते सजातीयविजातीयस्वगतभेदासहिष्णवोऽन्ये द्वैतवादिनो विवदंते । तैश्चान्ये नैयायिकाः षोडशपदार्थवादित्वाद्द्वैतवादिनो विवदंते । तैश्चान्ये वैशेषिकाः संवदंते । तैः सर्वैश्चान्ये न कदाचिदनीदृशं जगदिति वदंतो मीमांसका विवदंते।तैश्चान्ये स्वभाववादिनः संवदंते।ते च तत्त्वविद्भिर्बोधिता अपि कुतः पुनर्मुह्यंतीति तत्राह । यच्छक्तयः यस्य मायाशक्तिवृत्तयो वदतां समादधतां वादिनां तत्राक्षेपकृतां विवादस्य क्वचित्संवादस्य च भुव उत्पत्तिहेतवो भवंति । प्रयोजनमाह-आत्ममोहमिति । आत्मानं जिज्ञासमानानामपीत्यर्थः । मुहुरिति तत्राविच्छेदः सूचितः । अनंतगुणायेत्यनंतशब्दस्यानेकार्थत्वेनानाशत्वाचित्यात् । गुणानामनश्वरत्वं निःसीमत्वं चोक्तम् "इमे चान्ये च भगवन्नित्या यत्र महागुणाः" इति पृथिव्युक्तौ नित्या इति पदेन "नांतं गुणानामगुणस्य जग्मुर्योगेश्वरा ये भवपाद्ममुख्याः" इति सूतोक्तौ च अगुणस्येति योगेश्वरा इति पदाभ्यां "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः । भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥"

अस्तीति नास्तीति च वस्तुनिष्ठयोरेकस्थयोर्भिन्नविरुद्धधर्मयोः ॥ वे अक्षितं किंचन योगसांख्ययोः समं परं ह्यनुकूलं बृहतत् ॥ ३२ ॥

विवादस्य क्वचित्संवादस्य भुवः स्थानानि भवंति तस्मै नमः ॥ ३१ ॥ ननु किं तद्ब्रह्म यस्य शक्तयो विवादादिभुवो भवंति तत्राह । अस्तीति । योग उपासनाशास्त्रं तत्र हि विराड्रूपेणोपासनायां पातालपादादिकमस्तीत्युपास्यत्वेन विधियिते । नास्तीति सांख्यं ज्ञानशास्त्रं तत्र ह्यपाणिपादः अचक्षुरश्रोत्रमिति च पादादि नास्तीति निषिद्ध्यते । तयोर्योगसांख्ययोर्यत्किंचित्सममनुवर्तमानमवेक्षितं प्रतीतं तद् बृहद्ब्रह्म । विवादास्पदं ब्रह्मेत्यर्थः । विवादं स्फुटयति । भिन्नावस्तिनास्तीत्येवंभूतौ विरुद्धौ धर्मौ ययोस्तयोर्भिन्नविषयत्वेऽपि विरोधो न स्यादित्येकस्थयोरित्युक्तमेकविषययोः । कुतो वस्तुनिष्ठयोः पादादिविधिप्रतिषेधयोरेकवस्तुनिष्ठत्वात् । समत्वे हेतुः । परम् । हि यतो विधिप्रतिषेधयोरविषयस्तयोः पादादिविषयत्वात् । तथा तदविषयस्य सद्भावे किं प्रमाणं तदाह । अनुकूलमधिष्ठानं विना पादादिकल्पनायोगात् । अवधिं विना तन्निषेधा

इति पराशरोक्तौ च विना हेयैरित्युपन्यासेन च तदीयगुणानामप्राकृतत्वांवगमेऽप्यत्रास्तवत्वमाचक्षाणास्तेऽपराधिनः कथमविद्यया न मोह्यंतामिति भावः ॥ ३१ ॥ ननु ते शास्त्रज्ञाः किमिति निन्द्यंते शास्त्राणामेवैकमत्याभावेन परस्परविरोधादिति चेन्मैवं वादीरित्याह-अस्तीति । योगसांख्ययोः योगो भक्तियोगशास्त्रं सांख्यं ज्ञानशास्त्रं तयोस्तत्प्रसिद्धं परं सर्वोत्कृष्टं बृहद्ब्रह्मसममनुकूलञ्च यथा स्यात्तथाऽवेक्षितं परस्परविरुद्धयोस्तयोर्द्वयोरेव शास्त्रयोरवेक्षणे किमपि वैषम्यं प्रातिकूल्यं च नास्तीत्यर्थः । तयोः कथंभूतयोः योगशास्त्रे हि "कृष्णं पिशंगांबरमंबुजेक्षणं चतुर्भुजं शंखगदाद्युदायुधम्" इत्यादिना नामरूपगुणपाणिपादाद्यंगोपांगपार्षदधामादि अस्तीत्युपास्यत्वेन विधीयते । सांख्यशास्त्रे ह्यनामरूपगुणमपाणिपादमचक्षुरश्रोत्रमेकमद्वितीयमपि नामरूपादिकं नास्तीति निषिध्यते इत्येवंभूतौ भिन्नौ परस्परविरुद्धौ च धर्मौ ययोस्तयोर्भिन्नविषयत्वे विरोधो न स्यादित्येकस्थयोरित्येकस्मिन्ब्रह्मण्येव तिष्ठत इत्येकं ब्रह्मैव विषयी कुर्वतोरित्यर्थः । ननु तर्हि कथमवैषम्यमप्रातिकूल्यं वा तत्राह—वस्तुनिष्ठयोः । वस्तुनि वास्तववस्तुन्येव निष्ठा प्रतिपादकत्वलक्षणा ययोस्तेन भक्तिशास्त्रं विधिना वास्तवं वस्त्वेव प्रतिपादयति न त्ववास्तवं तथा ज्ञानशास्त्रं च निषेधेन तदेव प्रतिपादयति न त्ववास्तवं तेन भक्तिशास्त्रेण परमेश्वरस्य रामकृष्णादिमूर्तेर्नामरूपादिकवस्तुप्रतिपादने सिद्धे ज्ञानशास्त्रमपि स्वस्य वस्तुनिष्ठत्वादेव तस्य नामरूपादिकं नैव निषिध्यति किं तु तस्य मायिकमूर्तेर्विराज एवात एव पुनर्भक्तिशास्त्रमपि ज्ञानशास्त्रनिषिद्धं विराड्रूपमुपास्यत्वेन नोपादत्ते तदुक्तम् "अमुनी भगवद्रूपे मया ते ह्यनुवर्णिते । उभे अपि न गृह्णंति मायासृष्टे विपश्चितः" इति विराड्रूपस्यापि धारणायामुपादानं तु कस्यचिदेव प्रथमदशायामेव चित्तशुद्ध्यर्थमेव न तु सर्वदोपासनार्थमिति भक्तिज्ञानशास्त्रयोर्वस्तुतस्त्वविरोध एवेति शास्त्राविरोधेऽपि विवदमानाः शास्त्रतात्पर्यमविद्वांसो दार्शनिका एव विगीता इति भावः । संदर्भस्तु-तत्र विवादावसरे तादृशगुणरूपबृंहितस्वरूपमपि सिद्धयतीत्याह-अस्तीति । योगः स्थूलोपासनाशास्त्रं तत्र हि भगवतो नामरूपित्वं श्रूयते तत्र दृष्टकल्पनालाघवात् । घटपटादिलक्षणाखिलनामधेयत्वं पातालपादादिकत्वं चेति विधीयते नास्तीति । सांख्यं ज्ञानशास्त्रं तत्र हि निषेधश्रुतिभिस्तस्य नामरूपित्वं यन्निषिध्यते तत्प्रापंचिकनामरूपित्वस्य कल्पितत्वात्सर्वथैव नास्तीति निश्चीयते तदुक्तम् "उभयमतमस्यैव प्राक्ससर्वनाम" इत्यादिना 'यद्यन्निरुक्तम्' इत्यादिना च अस्तीति नास्तीति वस्तुनिष्ठा ययोस्तमेव विवादं स्फुटयति भिन्नौ अस्तीति नास्तीत्येवंभूतौ विरुद्धौ धर्मौ ययोस्तयोः । नन्वास्तामनयोर्भिन्नविषयत्वं नेत्याह—एकस्थयोः समानविषययोः । तदेवं विवादे सति तयोर्यत्किञ्चन समं समंजसत्वेनैवावेक्षितं प्रतीतं वस्तु तद्द्वयोरपि बृहदनुकूलं भवति किं तत्समंजसं यत्परं नामरूपादत्यंतं तदभावाच्च विलक्षणं यत्र युगपन्नामरूपित्वमनामरूपित्वमपि वक्तुं शक्यते तद्विलक्षणं वस्त्वित्यर्थः । एतदुक्तं भवति—एकस्मिन्नेव वस्तुनि नामरूपित्वविधिनिषेधाभ्यां परस्परं श्रुतयः पराहताः स्युः अत्र तु परत्वेनोभयत्रापि प्राक्तनयुक्त्या समंजसमप्राकृतप्राकृतनामरूपित्वमेव विधिनिषेधश्रुतितात्पर्येणोपस्थाप्यते इति तन्मतं विवादमात्रम् । इत्थमेव श्रीध्रुवेण निर्विवादत्वमुक्तम् "तिर्यङ्नगद्विजसरीसृपदेवदैत्यमर्त्यादिभिः परिचितं सदसद्विशेषम् । रूपं स्थविष्ठमज ते महदाद्यनेकं नात

योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननंतः ॥ नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदतु ॥ ३३ ॥
यः प्राकृतैर्ज्ञानपथैर्जनानां यथाशयं देहगतो विभाति ॥ यथानिलः पार्थिवमाश्रितो गुणं स ईश्वरो मे कुरुतान्मनोरथम् ॥ ३४ ॥

योगाच्च । तयोरुपपादकत्वेन सिद्धमित्यर्थः तस्मै नम इति पूर्वस्यानुषंगः ॥ ३२ ॥ ननूदासीनस्य समस्य नमस्कारे को लाभस्तत्राह य इति । पादमूलं भजतामनुग्रहार्थं प्राकृतनामरूपरहितोऽपि जन्मभिरवतारैर्विशुद्धोर्जितसत्त्वानि रूपाणि कर्मभिर्नामानि च यो भेजे । तत्कुतः । भगवानचिंत्यैश्वर्यः स मह्यं प्रसीदतु ॥ ३३ ॥ ननु त्वादृशाः

ऽ परं परम वेद्मि न यत्र वादः'' इति स्वामिचरणैरपि निर्विवादत्वमेव व्याख्यातमित्यर्थ इत्यंतेनाधिष्ठानं विनेत्यादिनेति । 'सति कुड्ये चित्रम्' इति न्यायेनाधिष्ठानं विनेत्युक्तं यथा शतपुरुषपंक्तिमध्ये ज्ञातुमिष्टस्य पञ्चाशत्तमस्य विष्णुमित्रशर्मणो ज्ञानार्थं तद्विज्ञं पृच्छति प्रथमत आरभ्यायं विष्णुमित्रशर्माऽयं विष्णुमित्रशर्मेति वदंतं तज्ज्ञाता वदति नायंनायमिति पंचाशत्तमस्यैवमवधित्वात्तदपेक्षयान्येषां निषेधो नान्यथा 'तद्वदचक्षुरश्रोत्रम्' इत्यादिश्रुता वपीति भावः ॥ ३२ ॥ पुनराक्षिपति-नन्विति । तत् नामरूपरहितस्यापि नामरूपभजनं कुत इति । विश्वनाथस्तु-अतो नामरूपादिविधिनिषेधाभ्यां शास्त्रद्वयाविरोधं व्यंजयन्भक्तवत्सलस्य भगवतः स्वस्मिन्ननुग्रहं प्रार्थयते य इति । स्वामिवत् । संदर्भस्तु-यो नामरूपरहित एव नामानि रूपाणि प्रकटितवान् जन्मकर्मभिः सह तानि भेजे व्यतिरेके दोषमाह-अनंत इति । यदि तस्मिन्नामरूपत्वादिकं नास्ति तर्हि तच्छक्तिमत्त्वं प्रति सांतत्वं प्रसज्येतेति तदुक्तं प्रचेतोभिः ''न ह्यंतो यद्विभूतीनां सोऽनंत इति गीयते'' इति तत्प्रकाशने हेतुः । भगवान् भगात्मशक्तिमान् । तस्याः शक्तेर्मायात्वं निषेधति परमः पराख्यशक्तिरूपा मा लक्ष्मीर्यस्मिन् अन्यथा परम स्वव्याघातः स्यादिति भावः । तस्मान्न मायया सर्वैसर्वैमैश्वर्यसंभवम् । ''अमायो हीश्वरो यस्मात्तस्मात्तं परमं विदुः ॥ '' ननु सर्वनामविश्वरूपत्वे तद्राहित्ये च संत्येव तत्तदुपासकाः प्रमाणम् अत्र तु के स्युरित्याशंक्याह पादमूलं भजतामनुग्रहार्थमिति योगसांख्ययोस्तत्तत्त्वं न सम्यक्प्रकाशते किन्तु भक्त्यैव 'भक्तिरेवैनं दर्शयति' इति श्रुतेः । तस्माद्युक्तं तयोर्विवादमात्रत्वमिति भावः । अत एव वक्ष्यतेऽनंतरमेव इतील्यादौ प्रादुरासीदित्यनेन तान्प्रति रूपप्राकट्यात्पूर्वमपि रूपमस्त्येवेति व्यंजितम् । 'चरणं पवित्रं विततं पुराणम्' इत्यादिश्रुतेः भेज इत्यतीतनिर्देशः प्रामाण्यदार्ढ्यायानादित्वं दर्शयति अनंतस्य नामानि रूपाणि चानंतान्येवेति भावः ॥ ३३ ॥ पुनराक्षिपति नन्विति–विभूतिकामस्य तव तत्तद्विभूतिसंवलितगणपत्याद्युपाधित्वेनैव यमोपासना युक्ता कथं सर्वात्मना निरुपाधित्वेन स्तौषि तत्राह तत्रतत्रानिलवत्स्वकार्यकरत्वं भगवत एव न तूपाधेरिति स्थिते किमुपा धिभावनयेति भाव इति संदर्भः । विश्वनाथस्तु तदेवम् 'न यस्य सख्यम्' इत्यनेन 'सर्वं पुमान्वेद' इत्यनेन च जीवेश्वरयोरल्पज्ञत्वसर्वज्ञत्वाभ्यां वास्तवमेव पार्थक्यमवधारितमेव ततश्च यदापराम इत्यनेन मनीषिणोंतर्हृदीत्यनेन च तस्यैवेश्वरस्यैकस्याप्यलौकिक निर्विशेषसविशेषज्ञानगम्यत्वेन ।निर्विशेषं सविशेषस्वरूपं च यथामति व्यंजितं पुनश्च स वै ममाशेषेति त्रयेण मायिकवस्तूनां तद्रूपत्वेपि तत्स्वरूपभूतत्वाभाव उक्तः पुनरस्तीति नास्तीति द्वयेन भक्तिशास्त्रज्ञानशास्त्रयोरविरोधो गूढोऽपि स्पष्टी कृतः । इदानीं ये जीवेश्वरयोः पार्थक्यमुपाधिकृतमेव न वास्तवमित्याचक्षते तेषां ज्ञानिमानिनामसमंजसपथगामित्वं व्यंजयन्स्वमनोरथसिद्धिं प्रार्थ यते–य इति । यथाशयं दुष्टं शिष्टं वांतःकरणमनतिक्रम्य तद्धर्माक्रांत एव विभाति जीवरूपेण भासते यथा वायुः पार्थिवं दुष्टं शिष्टं वा गंधमाश्रित्य नानागंधवान्भाति न वस्तुत इति चक्रवर्ती । इत्यर्थ इति । तस्यैव सर्वदेवतारूपत्वात् '' शैवाः सौराश्च गाणेशा वैष्णवाः शक्तिपूजकाः । मामेव प्राप्नुवंतीह वर्षापः सागरं यथा ॥ '' इति स्मृतेरयं भावः । एतच्च श्रीदशमेऽक्रूरस्तुतौ विस्तरेण वर्णयिष्याम इति । 'योय' इति गीतावाक्यं

श्रीशुक उवाच ॥ इति स्तुतः संस्तुवतः स तस्मिन्नघमर्षणे॥आविरासीत्कुरुश्रेष्ठ भगवान्भक्तवत्सलः॥३५॥कृतपादः सुपर्णांसे प्रलंबाष्टमहाभुजः॥ चक्रशंखासिचर्मेषुधनुष्पाशगदाधरः ॥ ३६ ॥ पीतवासा घनश्यामः प्रसन्नवदनेक्षणः ॥ वनमालानिवीतांगो लसच्छ्रीवत्सकौस्तुभः ॥ ३७ ॥ महाकिरीटकटकः स्फुरन्मकरकुंडलः ॥ कांच्यंगुलीयवलयनूपुरांगदभूषितः ॥ ३८ ॥ त्रैलोक्यमोहनं रूपं बिभ्रत्त्रिभुवनेश्वरः ॥ वृतो नारदनंदाद्यैः पार्षदैः सुरयूथपैः ॥ स्तूयमानोऽनुगायद्भिः सिद्धगंधर्वचारणैः ॥ ३९॥ रूपं तन्महदाश्चर्यं विचक्ष्याऽऽगतसाध्वसः ॥ ननाम दंडवद्भूमौ प्रहृष्टात्मा प्रजापतिः ॥ ४० ॥ न किंचनोदीरयितुमशकत्तीव्रया मुदा ॥ आपूरितमनोद्वारैर्ह्रदिन्य इव निर्झरैः ॥ ४१ ॥

सकामा गणेशादीन्प्रार्थयंते त्वं तु तान्विहाय किमिति भगवंतमेव प्रार्थयसे तत्राह । प्राकृतैरर्वाचीनैर्ज्ञानपथैरुपासनामार्गैर्यथाशयं तत्तद्वासनानुसारेण यो देहगतोंतर्यामी । तत्तद्देवतारूपेण विविधो भाति यथा वायुः पार्थिवं गुणं चंपकादिगंधभेदमाश्रित्य नानागंधवान्विभाति रेणोर्गुणं धूसरत्वादिकमाश्रित्य नानारूपवान् प्रतीयते तद्वत्तस्यैव तत्तद्देवतारूपेण फलदातृत्वात्स ईश्वर एव मे मनोरथं सत्यं करोतु । किमंतर्गडुभिर्देवतांतरैरित्यर्थः । तदुक्तं गीतासु । "योयो यांयां तनुं भक्तः श्रद्धयार्चितुमिच्छति । तस्यतस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ स तया श्रद्धया युक्तस्तस्याराधनमीहते । लभते च ततः कामान्मयैव विहितान्हितान् ॥ " इति । "ये यथा मां प्रपद्यंते तांस्तथैव भजाम्यहम् । "इति चेति ॥ ३४ ॥ संस्तुवतो दक्षस्य स भगवान् प्रत्यक्षोऽभवत् ॥ ३५ ॥ तं वर्णयति सार्धैश्चतुर्भिः । सुपर्णस्यांसे स्कंधे कृतौ पादौ येन । प्रलंबा अष्टौ महांतो भुजा यस्य । चक्राद्यष्टायुधधरः ॥ ३६ ॥ प्रसन्नं वदनमीक्षणे च यस्य । वनमालया निवीतं कंठादिपादांतव्याप्तमंगं यस्य । लसंतौ श्रीवत्सकौस्तुभौ यस्य ॥ ३७ ॥ महांति किरीटकटकानि यस्य । स्फुरती मकरकुंडले यस्य । कांच्यादिभिर्विभूषितः । वलयमत्र पादभूषणं द्रष्टव्यं कटकस्योक्तत्वात् ॥ ३८ ॥ त्रैलोक्यमोहनं श्रीपुरुषोत्तमाख्यम् । सुरयूथपैर्लोकपालैः ॥ ३९ ॥ ४० ॥ आपूरितानि मनोद्वाराणींद्रियाणि तैः । यथा ह्रदिन्यो नद्यो निर्झरैरापूर्यंते तथा महानंदा

स्पष्टार्थत्वान्न व्याख्यातम् ॥ ३४ ॥ इतीत्थं हंसगुह्यस्तोत्रेणेत्यर्थः ॥ ३५ ॥ सुपर्णांसे गरुडस्कंधे ॥ ३६ ॥ ३७ ॥ कटकं पादकटकमिति केचित् ॥ ३८ ॥ ३९ ॥ आ सर्वतो गतं साध्वसं भयं यस्य स तथा ॥ ४० ॥ तीव्रया गाढया मुदा स्वात्मस्थिततत्प्रेमरूपयाऽऽपूरितैः सर्वेणाप्यंशेन पूरितैः सद्भिर्मनोद्वारैर्ज्ञानेंद्रियैरिति तत्तदावेशात्स्वात्मनः सर्वांशेन पूरितैर्निर्झरैर्जलनिर्गमैर्यथा ह्रदिन्य आपूर्यंते तथा । इत्यर्थ इति । आनंदपूरि

तं तथाऽवनतं भक्तं प्रजाकामं प्रजापतिम् ॥ चित्तज्ञः सर्वभूतानामिदमाह जनार्दनः ॥ ४२ ॥ श्रीभगवानुवाच ॥ प्राचेतस महाभाग संसिद्धस्त पसा भवान् ॥ यच्छ्रद्धया मत्परया मयि भावं परं गतः ॥४३॥ प्रीतोऽहं ते प्रजानाथ यत्तेऽस्योद्बृंहणं तपः ॥ ममैष कामो भूतानां यद्भूयासुर्वि भूतयः ॥४४॥ब्रह्मा भवो भवंतश्च मनवो विबुधेश्वराः॥ विभूतयो मम ह्येता भूतानां भूतिहेतवः॥४५॥तपो मे हृदयं ब्रह्मंस्तनुर्विद्या क्रियाऽऽकृतिः॥ अंगानि क्रतवो जाता धर्म आत्माऽसवः सुराः ॥४६॥ अहमेवासमेवाग्रे नान्यत्किंचांतरं बहिः ॥ संज्ञानमात्रमव्यक्तं प्रसुप्तमिव विश्वतः ॥४७॥

पूर्णत्वेनावृत्तिकत्वाद्वागादीनां न किंचिदपि वक्तुं शक्तोऽभूदित्यर्थः ॥ ४१ ॥ यद्यप्यसौ नावोचत्तथाऽपि चित्तज्ञ इदं वक्ष्यमाणमाह ॥ ४२ ॥ भावं भक्तिं गतः प्राप्तः ॥ ४३ ॥ यद्यतस्ते तपोऽस्य विश्वस्योद्बृंहणं वृद्धिकरमतस्तेऽहं प्रीतः । मत्तपसो लोकसमृद्ध्यर्थत्वे त्वत्प्रीतेः किं कारणं तत्राह । ममेति । भूतानां विभूतयः समृद्ध यो भूयासुरिति यदेष एव मम कामः । अतो मत्कामपूरणादेवाहं प्रीतोऽस्मीत्यर्थः ॥ ४४ ॥ भूतिविस्तारप्रयत्नश्च तवोचित एवेत्याह । ब्रह्मेति । भवंतः प्रजापतयः भूतेरुद्भवस्य हेतवः ॥ ४५ ॥ विश्ववृद्ध्यर्थेन त्वत्तपसाऽहं प्रीत इत्युक्तं तदेव तपः स्तुवन्प्रसंगादन्यान्यपि लोकवृद्धिकराणि विद्यादीनि स्तौति । तपो यमनियमा दिसहितं ध्यानं मे हृदयम् । विद्या सांगोपांगमंत्रजपः सा ध्यानं तनोतीति तनुर्देहः । क्रिया ध्यानादिविषयः पुंव्यापारो भावनाशब्दवाच्यस्तेन हि ध्यानादिक माक्रियत इत्याकृतिः । जाताः सुनिष्पन्नाः क्रतवोंगानि "शिरो वा एतद्यज्ञस्य यत्प्रवर्ग्यो ग्रीवा उपसदश्चक्षुषी आज्यभागौ" इत्यादिश्रुतेः । धर्मः क्रत्वाद्यपूर्व मात्मा मनः । हृदयाश्रयत्वात् । सुरा यज्ञभुजस्त एवासवः प्राणाः । संतर्पणीयत्वात् ॥ ४६ ॥ तपसः संतानवृद्धिहेतुत्वं दर्शयितुं द्वितीयतृतीयोक्तमितिहास माह चतुर्भिः । अहमेवेति वस्त्वंतरव्यावृत्तिः । आसमेवेति क्रियांतरव्यावृत्तिः आंतरं ग्राहकम् । बहिर्ग्राह्यम् । संज्ञानमात्रं चैतन्यमात्रम् । अव्यक्तमिंद्रियवृत्तिभिरनभिव्य

तैर्हेतुभिः किंचिदपि वक्तुं द्रष्टुं श्रोतुं स्प्रष्टुं घ्रातुं वा न समर्थोऽभूदिति भावः ॥४१॥४२॥ प्राचेतसेति । मम भक्तानां प्रचेतसां त्वमात्मजोऽस्यत एव महाभागोऽप्यसीति तत एव तुभ्यं मया दर्शनं दत्तमितिभावः॥४३॥ प्रजानाथेति । भाविप्रजानाथत्वसूचनेन तन्मनोरथसिद्धिरप्यसूचीति भावः । इत्यर्थ इति । मदिच्छयैवते तपसः सिद्धिर्जातेति भावः ॥ ४४ ॥ नन्वकामस्य तव कथंभूतविभूतिकामनेति चेद्भक्त संबंधात्तद्वात्सल्येनैवेत्याह– ब्रह्मेति । ब्रह्मादयो भक्ता हि मम विभूतयो विशेषेण सन्निधानस्थानविशेषा एव न तु निकृष्टास्ते चान्येषां भूतिहेतव उत्पादका इति ॥ ४५ ॥ कर्मयोगे समुचितं मे रूपं शृण्वित्याह–तप इति । आदिनासनादिग्रहः । मंत्रांगानि विनियोगांगन्यासादीनि तैः सहितो जपः सा विद्या तनुः भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः । भवितुर्यागादेर्भवनानुकूल उत्पत्तिजनको भावयितुः प्रयोजकस्य अस्याविशेषानिरूपणं तु मत्कृताद्यपद्यव्याख्याशतकेऽस्तीति । तच्च तत एव निश्चेयम् । प्रवर्ग्यादय इष्टिभेदाः । धर्मः क्रत्वादेर्जातमपूर्वमदृष्टमित्यर्थः।अदृष्टद्वारैव यज्ञादेः फलजनकत्वस्योपपादितत्वात्।धर्मस्य हृदयाश्रयत्वं प्रसिद्धमेव॥४६॥द्वितीयस्कंधे

मय्यनंतगुणेऽनंते गुणतो गुणविग्रहः ॥ यदासीत्तत एवाद्यः स्वयंभूः समभूदजः ॥ ४८ ॥ स वै यदा महादेवो मम वीर्योपबृंहितः ॥ मेने खिल मिवात्मानमुद्यतः सर्गकर्मणि ॥ ४९ ॥ अथ मेऽभिहितो देवस्तपोऽतप्यत दारुणम् ॥ नव विश्वसृजो युष्मान्येनादावसृजद्विभुः ॥ ५० ॥ एषा पंचजनस्यांऽग दुहिता वै प्रजापतेः ॥ असिक्नी नाम पत्नीत्वे प्रजेश प्रतिगृह्यताम् ॥ ५१ ॥ मिथुनव्यवायधर्मस्त्वं प्रजासर्गमिमं पुनः ॥ मिथुन व्यवायधर्मिण्यां भूरिशो भावयिष्यसि ॥ ५२ ॥

क्तम् । अत एव प्रसुप्तमिव । विश्वतः सर्वत्र ॥ ४७ ॥ गुणतो मायातः गुणमयो विग्रहो ब्रह्मांडम् । ततस्तदैव । अजोऽयोनिजः ॥ ४८ ॥ खिलमसमर्थ मिव ॥ ४९ ॥ मे मया तपतपेत्यभिहितः सन् । येन तपसा ॥५०॥ संततिवृद्ध्युपायमाह । एषेति । अंग हे दक्ष । पंचजनाख्यस्य प्रजापतेः ॥ ५१ ॥ मिथुनस्य यो

तुं नवमाध्याये " स आदिदेवो जगतां परो गुरुः " इत्यांदिना तृतीयस्कंधे त्वष्टमाध्यायमारभ्योक्तम् । अत्र विश्वनाथः—भक्तियोगे । समुचितं मे स्वरूपं शृण्वित्याह—अह मेव त्वया दश्यैतत्स्वरूपवस्त्रालं कारास्त्रवाहनपार्षदादिविशिष्ट एवाग्रे सृष्टेः पूर्वमासमेव तथैवाग्रे महाप्रलयानंतरमपि भविष्याम्येवेत्यग्रे इत्यस्य पूर्वोत्तरकालवाचित्वाल्लभ्यते सांप्रतं त्वस्म्येवेत्यस्य स्वत एव प्राप्तिरिति स्वस्य त्रैका लिकी सत्ता दर्शिता । किञ्च—ममांतरं बहिश्चान्यत्किमपि नास्तीति परिच्छिन्नस्यापि मत्स्वरूपस्य व्यापकत्वादित्त्यचिंत्यशक्तिमत्त्वं च दर्शितं यद्वक्ष्यते । " न चांतर्न बहिर्यस्य न पूर्वं नापि चापरम् । पूर्वापरं बहिश्चांतर्जगतो यो जगच्च यः ॥ तं मत्वात्मजमव्यक्तं मर्त्यलिंगमधोक्षजम् । गोपिकोलूखले दाम्ना बबंध प्राकृतं यथा ॥ " इति । ज्ञानयोगे समुचितं स्वरूपं शृण्वित्याह—संज्ञानमात्रमिति ॥ ४७ ॥ स्वस्वरूपसत्त्वमुप दिश्य सृष्टौ प्रवर्त्तयितुमितिहासमाह—मयीति । ततो ब्रह्मांडमध्य एव युष्माकमाद्यः ॥ ४८ ॥ महादेवः सर्वेभ्योग्रजातत्वान्महान्देवः ॥ ४९ ॥ युष्मानित्युक्त्या ब्रह्मपुत्र एव महादेवापराधादिदानीं प्रचेतोभ्यः पुनर्जात इति सूचितम् ॥ ५० ॥ अंगेति । स्तुत्या प्रीतिर्द्योतितेति भावः । प्रजेशेति । पूर्वजन्मापेक्षयोक्तं भाविप्रजेशत्वाभिप्रायं वा ॥ ५१ ॥ तथाभूतायां व्यवायधर्मिण्याम् । तादृशहं सगुह्यस्तवेन स्तुतोपि दत्तनिजश्रीमूर्त्तिदर्शनप्रसादोप्युपदिष्टनिजतत्त्वोऽपि दक्षो भगवता यत्कर्मगम्ये विषयभोगे निःसीमके निक्षिप्तो न तु स्वप्रेमामृतसिंधौ तत्खलु स्वमहाभक्तश्रीरुद्रापराधशेषस्याभंगुरत्वेन हेतुता गम्यते । अत एवानंतराध्याये श्रीमुनींद्रेणापिविष्णुमायोपबृंहित इत्याख्यास्यमानो दक्षो नारदमप्याक्षेप्स्यतीति पुनरप्यस्य महदपराधः फलिष्यति न च कर्दमोऽपि भगवता विषयभोग एव निक्षिप्त इति वाच्यं तस्येषत्सकामत्वमालक्ष्यैव भगवता सावधिक एव विषयभोगवरो दत्तो न तु निरवधिक एव तदुक्तं तत्रैव " त्वञ्च सम्यगनुष्ठाय निदेशं म उशत्तम । मयि तीर्थीकृताशेषक्रियार्थो मां प्रपत्स्यसे ॥ " इति स च कर्दमोपि अनुग्रहायास्त्वयीत्यादिना भक्तिमेवांते प्रार्थयामास एवं सकामा अपि सर्वे एव भक्ता ध्रुवादयो भक्तिमेवाचकांक्षुरेव दक्षस्त्वजभक्तिं नाकांक्षति स्म भगवानपि तां न

त्वत्तोधस्तात्प्रजाः सर्वा मिथुनीभूय मायया ॥ मदीयया भविष्यंति हरिष्यन्ति च मे बलिम् ॥५३॥ श्रीशुक उवाच ॥ इत्युक्त्वा मिषतस्तस्य भगवा
न्विश्वभावनः ॥ स्वप्नोपलब्धार्थ इव तत्रैवांतर्दधे हरिः ॥ ५४ ॥ इति श्रीभागवते म० षष्ठ० प्रचेतसां दक्षोत्पत्तिवर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥
श्रीशुक उवाच ॥ तस्यां स पांचजन्यां वै विष्णुमायोपबृंहितः ॥ हर्यश्वसंज्ञानयुतं पुत्रानजनयद्विभुः ॥ १ ॥ अपृथग्धर्मशीलास्ते सर्वे दाक्षायणा
नृप ॥ पित्रा प्रोक्ताः प्रजासर्गे प्रतीचीं प्रययुर्दिशम् ॥ २ ॥ तत्र नारायणसरस्तीर्थं सिंधुसमुद्रयोः ॥ संगमो यत्र सुमहान्मुनिसिद्धनिषेवितः ॥ ३ ॥
तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ धर्मे पारमहंस्ये च प्रोत्पन्नमतयोऽप्युत ॥४॥ तेपिरे तप एवोग्रं पित्रादेशेन यंत्रिताः ॥ प्रजाविवृद्धये यत्तान्दे
वर्षिस्तान्ददर्श ह ॥५॥ उवाच चाथ हर्यश्वाः कथं स्रक्ष्यथ वै प्रजाः ॥ अदृष्ट्वांतं भुवो यूयं बालिशा बत पालकाः ॥ ६ ॥ तथैकपुरुषं राष्ट्रं बिलं
चादृष्टनिर्गमम् ॥ बहुरूपां स्त्रियं चापि पुमांसं पुंश्चलीपतिम् ॥७॥ नदीमुभयतोवाहां पंचपंचाद्भुतं गृहम् ॥ क्वचिद्धंसं चित्रकथं क्षौरपव्यं स्वयं भ्रमिम् ॥८॥

व्यवायो रतिः स एव धर्मो यस्य स त्वम् । तथाभूतायां तस्याम् ॥ ५२ ॥ मायया निमित्तभूतया । स्त्रिया सह मिथुनीभूय भविष्यंति पुत्रादिरूपेणोत्पत्स्यंते ॥
॥ ५३ ॥ ५४ ॥ इति श्री०भा०म०षष्ठे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ छ ॥ पंचमे नारदेनाथ वाचःकूटैस्तु नाशितान् ॥ सुतानाकर्ण्य दक्षोऽमुं शशापेति
निरूप्यते ॥ १ ॥ १ ॥ अपृथग्धर्मशीला एकाचारस्वभावाः ॥ २॥ तत्र प्रतीच्यां दिशि सिंधोर्नद्याः समुद्रस्य च यत्र संगमस्तत्रस्थं नारायणसरो नाम तीर्थं प्रययुरित्यन्व
यः । सुमहदतिविस्तीर्णम् ॥ ३ ॥ विनिर्धूतो मलो रागादिर्यस्मात्स आशयो येषाम् ॥ ४ ॥ तान् शुद्धसत्त्वानपि पित्रादेशजाड्येन प्रजाविवृद्धये यत्तानुद्युक्तान्ददर्श ॥५॥
अहो कष्टं मोक्षमार्गाधिकारिणः संत एते प्रवृत्तिनिष्ठैः कर्मभिर्नश्येरन्निति कृपया तान्निगूढार्थैर्वाक्यैरुपदिशति स्म तदाह उवाचेति चतुर्भिः । पालकाः संतोऽपि बालिशा
अज्ञा यूयं प्रजाः स्रक्ष्यथ बतेति खेदे । बालका इति पाठे बालिशत्वे हेतुः ॥ ६ ॥ एक एव पुरुषो यस्मिंस्तद्राष्ट्रमदृष्ट्वेत्यनुषंगः । बिलं चेत्यादिद्वितीयांतानामविज्ञाय कथं
सर्गं करिष्यथेति तृतीयेनान्वयः ॥ ७ ॥ पंचपंचानां पंचविंशतरेद्भुतं गृहं क्षौरपव्यं क्षुरैः पविभिर्वज्रैश्च निर्मितमिवातितीक्ष्णं दृढं चेत्यर्थः । स्वयं स्वतंत्रम् । भ्रमिं भ्रमणस्वभा

ददावित्येतदेवापराधशेषस्यास्तित्वे लक्षणमिति ॥ ५२ ॥ ५३ ॥ तत्रैव यत्र दृष्ट इत्यर्थः ॥ ५४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ वाचःकूटैः प
परोक्षवादेनार्थांतरमिव प्रतीयमानैर्वचनैः । नाशितान् गृहस्थमार्गतश्चालितान् । अमुं नारदम् ( १ ) स दक्षः । पांचजन्यां पंचजननाम्नः प्रजापतेः पुत्र्याम् ॥ १ ॥ प्रतीचीं पश्चिमाम् ॥ २ ॥ ३ ॥ तस्य तीर्थजल
स्योपस्पर्शनात्स्नानाचमनादितः उतात्यर्थमुग्रं तप इत्यग्रिमेणान्वयः । "उतात्यर्थविकल्पयोः । समुच्चये वितर्के च प्रश्ने च पादपूरणे" इति मेदिन्युक्तेः । पादपूरणार्थं वा उतेति । केचित्तु प्रोत्पन्नमतयोऽभवन्निति पेठुः ॥
॥ ४ ॥ ५ ॥ हे हर्यश्वा इति । हारिमविद्यातत्कार्यहर्तारमश्नुवते प्राप्नुवंतीति हर्यश्वा इत्यन्वर्थनामवंतो भवंतो भवंतु मा सूर्यभानुदेवदत्तवद्व्यर्थनामानः संत्विति भावः ॥ ६ ॥ ७ ॥ गृहं विष्णुं परमसाद्गुण्यप्रदत्वाद्भक्तानां

कथं स्वपितुरादेशमविद्वांसो विपश्चितः ॥ अनुरूपमविज्ञाय अहो सर्गं करिष्यथ॥९॥श्रीशुक उवाच ॥ तन्निशम्याथ हर्यश्वा औत्पत्तिकमनीषया॥ वाचः कूटं तु देवर्षेः स्वयं विममृशुर्धिया॥१०॥ भूः क्षेत्रं जीवसंज्ञं यदनादि निजबंधनम् ॥ अदृष्ट्वा तस्य निर्वाणं किमसत्कर्मभिर्भवेत्॥११॥एक एवेश्वरस्तुर्यो भगवान्स्वाश्रयः परः ॥ तमदृष्ट्वाऽभवं पुंसः किमसत्कर्मभिर्भवेत् ॥१२॥ पुमान्नैवैति यद्गत्वा बिलस्वर्गं गतो यथा ॥ प्रत्यग्धामाऽविद इह किमसत्कर्मभिर्भवेत् ॥ १३ ॥ नानारूपात्मनो बुद्धिः स्वैरिणीव गुणान्विता ॥ तन्निष्ठामगतस्येह किमसत्कर्मभिर्भवेत् ॥ १४ ॥ तत्संगभ्रंशितैश्वर्यं संसरंतं कुभार्यवत् ॥ तद्गतीरबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १५ ॥

वम् ॥ ८ ॥ विपश्चितः सर्वज्ञस्य स्वपितुरादेशमात्मनोऽनुरूपमविद्वांसोऽजानंतः पूर्वोक्तं चैकपुरुषं राष्ट्रमित्याद्यविज्ञायाहो कथं सर्गं करिष्यथेत्यन्वयः ॥ ९ ॥ वाचःकूटं परोक्षवादेनार्थांतरमिव प्रतीयमानं वचनम् । औत्पत्तिकी सहजा मनीषा विचारशक्तिर्येस्यास्तया धिया स्वयमेव विममृशुर्विचारितवंतः ॥ १० ॥ नारदोक्तदशवाक्यानां तैर्विमृश्य निर्णीतानर्थानाह दशभिः । अदृष्ट्वांतं भुव इत्यत्र भूशब्दार्थमाह । भूरिति । क्षेत्रं तच्चात्र जीवसंज्ञं लिंगशरीरं यन्निजबंधनमात्मनो बंधकारणम् । अंतशब्दार्थमाह निर्वाणं नाशम् । असद्भिर्मोक्षानुपयोगिभिः कर्मभिः किं भवेन्न किमपि ॥ ११ ॥ एकपुरुषमित्यस्यार्थमाह । एक एवेति । तुर्यः सर्वसाक्षी । स्वाश्रयः स्वाधारः अभवं नित्यमुक्तम् असद्भिरीश्वरासमर्पितैः कर्मभिः ॥१२॥ बिलं चादृष्टनिर्गममित्यस्यार्थमाह । पुमान् यद्गत्वा प्राप्य बिलस्वर्गं पातालं गत इव नैवेति नावर्तते तत्प्रत्यग्धाम ज्योतीरूपं ब्रह्माविदोऽविदुषोऽसद्भिर्नश्वरस्वर्गादिसाधनैः कर्मभिः ॥ १३ ॥ बहुरूपां स्त्रियमित्यस्यार्थमाह । नानारूपेति । स्वैरिणीव पुंश्चलीव विमोहकैः रजआदिगुणैरन्विता । तन्निष्ठां तस्या अवसानं विवेकमगतस्याप्राप्तस्य । असद्भिरशांतैः ॥ १४ ॥ पुमांसं पुंश्चलीपतिमित्यस्यार्थमाह । तस्याः संगेन भ्रंशितमैश्वर्यं स्वातंत्र्यं यस्य । कुत्सिता भार्या

तानि तत्रैव स्थातुमर्हंतीति भावः । इत्यर्थ इति । क्षुरस्यातितीक्ष्णत्वाद्वज्रस्यातिदृढत्वादिति भावः ॥ ८ ॥ अनुरूपमनुकूलम् ॥ ९ ॥ वाचः कूटं वचनसमूहं वा गुह्यभाषात्मकत्वेन कैतवमिव प्रतीयमानं वाऽल्पमतिभिर्दुर्बोधं वा स्वयं परोपदेशं विना विचार्य निश्चितवंत इत्यर्थः । "कूटं तु कैतवं ज्ञेयं समूहो मेलनं तथा" इति तीर्थः ॥ १० ॥ बंधस्य जन्मादेः कारणं तस्य लिंगशरीरस्य नाशमदृष्ट्वाऽनेनोपायेनास्य नाशो भविष्यतीत्यज्ञात्वा ज्ञानेन तस्य नाशं वाऽज्ञात्वा मोक्षानुपयोगिभिरसत्कर्मभिरात्मविवेकाजनकैः कर्मभिः सर्जनादिभिरवास्तवैः कर्ममार्गैः किं तेन कर्मनिर्वाणार्थमेव यतध्वमिति भावः ॥ ११ ॥ पूर्ववाक्यस्थराष्ट्रपदेन जगद्विवक्षितं तथा सति तत्र जगतीश्वरो नियंतृत्वेन स्थित इत्यर्थः । कर्मभिर्यागादिभिः । किं नित्यं फलं स्यान्नेत्यर्थः । तुर्यः विश्वतैजसप्राज्ञेभ्यो भिन्नः । यद्वा न भवो भक्तानां येन स तम् । अदृष्ट्वा भजनैरप्रत्यक्षीकृत्य तेन तमेव भजतेति भावः ॥ १२ ॥ यद्वा—प्रतीचो भगवतो धाम वैकुंठं गत्वा प्राप्य न पुनरेति । पातालं गतो यथा तत्रैवासज्य तिष्ठतीत्यर्थः । तेन वैकुंठप्राप्तये यतध्वमिति भावः ॥ १३ ॥ स्वैरिणीव कुविषयोन्मुखी न तु कृष्णविषयोन्मुखी गुणाः सौन्दर्यवैदग्ध्यादयः पांडित्यादयश्च तैरन्विता तन्निष्ठां भद्राभद्रप्रवृत्तिमगतस्याजानतोऽविचारयत इत्यर्थः । अतो विवेकेन बुद्धिं कृष्णोन्मुखीं कुरुतेति भावः ॥ १४ ॥ भ्रंशितैश्वर्यमित्यनेन

सृष्ट्यप्ययकरीं मायां वेलाकूलांतवेगिताम् ॥ मत्तस्य तामविज्ञस्य किमसत्कर्मभिर्भवेत् ॥ १६ ॥ पंचविंशतितत्त्वानां पुरुषोऽद्भुतदर्शनः ॥
अध्यात्ममबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १७ ॥ ऐश्वरं शास्त्रमुत्सृज्य बंधमोक्षानुदर्शनम् ॥ विविक्तपदमज्ञाय किमसत्कर्मभिर्भवेत् ॥ १८ ॥

यस्य तद्वत् । तस्या गतीः सुखदुःखलक्षणाः संसरंतं गच्छंतं जीवमबुधस्याजानतः । असद्भिर्बुद्ध्यविवेकप्राप्तैः ॥ १५ ॥ नदीमुभयतोवाहामित्यस्यार्थमाह । सृष्ट्यप्ययौ करोतीत्युभयतः प्रवाहो दर्शितः । वेलाकूलं प्रवाहपतितानां निर्गमस्थानं तपोविद्यादि तस्यांते समीपे वेगितां निर्गमप्रतिबंधाय क्रोधाहंकारादिभिः कृतवेगां मत्तस्य तद्वेगेन विवशस्यात एव तां तथाभूतामविज्ञस्याविचारयतः । असद्भिर्मायिकैः । यद्वा वेलाकूलं समुद्रस्य व्यवहारस्थानं तस्य समीपे समुद्रवृद्धिह्रासाभ्यां यथोभयतोंतर्बहिःकृतवेगा नदी भवत्येवं समुद्रतुल्यस्यात्मनो व्यवहारस्थाने देहे जन्ममरणादिभिः कृतवेगामित्यर्थः । वेगिनीमिति पाठे वेगवतीम् ॥ १६ ॥ पंचपंचेत्यस्यार्थमाह । पंचविंशतितत्त्वानां पुरुषोंतर्यामी । अद्भुतदर्शन आश्चर्यरूप आश्रयः अध्यात्मं कार्यकारणसंघाताधिष्ठातारं तमबुधस्य । असद्भिर्मिथ्यास्वातंत्र्यकृतैः ॥ १७ ॥ क्वचिद्धंसमित्यस्यार्थमाह । ऐश्वरमीश्वरप्रतिपादकं विविक्तं पदं चिज्जडरूपं वस्तु येनेति हंसपदव्याख्यानम् । बंधमोक्षावनुदर्शयतीति तथा । अनेन चित्राः कथा यस्येति व्याख्यातम् । तदुत्सृज्यानभ्यस्य

जीवस्य स्वज्ञानादिस्वसामर्थ्यं दार्शितमिति संदर्भः । ऐश्वर्यं भगवज्ज्ञानादिलक्षणं शमदमादिलक्षणं वाऽत एव संसरंतं सुखदुःखे भुंजानं तद्गतीः स्वर्गनरकादिलक्षणाः । बुद्ध्यविवेकेन प्राप्तैस्तीर्थस्नानादिलक्षणैर्भगवदुद्देशे नाप्रसक्तैः किं दुःखनिवृत्तिः स्यान्नेत्यर्थः । तेनात्मानमात्मनैवोद्धरतेति भावः ॥ १९ ॥ सृष्टिकाले पूर्वपूर्वतस्तत्त्वानि निःसरंति अप्ययकाले उत्तरोत्तरतः पूर्वंपूर्वं प्रविशंतीत्युभयतः प्रवाहो दर्शितः वेलाकूलस्यांतः समीपं 'वेला स्यात्तीरनीरयोः' इत्यभिधानात् । अत एव विवशत्वादेव । वेलाशब्दस्यार्थांतरं गृहीत्वाह-यद्वेति । ''वेला काले च सीमायामब्धेः कूलविकारयोः'' इति मेदिनी । इत्यर्थ इति व्याख्या तेन लौकिकप्रतिष्ठादिकमपि परित्यज्य पारं व्रजयेति भावः ॥ १६ ॥ पुरुषो विष्णुः । अद्भुतदर्शन इति । भक्ता हि स्वचित्तादीनि पञ्चविंशतितत्त्वानि विष्णावेवार्पयंति तानि च विष्णुगतानि भूत्वा निर्मलान्यप्रकृतानि नित्यानि प्रतिविश्वतां परित्यज्य विष्णुरूपदर्शनधर्माण्येव भवंतीति विष्णुरूपदर्शनस्याद्भुतत्वम् अन्यदर्शनगतं सुखादिकं तु यथास्थितरूपं यत्तत्प्रतिविश्वमेव भवेन्न तु दर्शनगतनैर्मल्यग्राहीत्यर्थः । तं पुरुषं विष्णुमध्यात्मे आत्मन्येव वर्त्तमानमबुधस्य सेव्यत्वेनाजानतः तस्माद्देहात्मानौ हरये समर्पयतेति भावः ॥ १७ ॥ ऐश्वरं श्रीमन्महाभारतादिशास्त्रं श्रीवेदचतुष्कञ्च ''सर्वे वेदा यत्पदमामनंति'' इति श्रुतेः ''वेदैश्च सर्वैरहमेव वेद्यः'' इति स्मृतेश्च विविक्तं सर्वतः सारभूतं परमात्मवस्तु पद्यते प्राप्नोत्यनेनेति विविक्तपदं विविक्तानि विचारयुक्तानि पदानि सुप्तिङंतानि यत्रेति वाऽनेन मनुष्यवाङ्निर्मितसुप्तिङंतपदवार्जितस्य भगवत्प्रतिपादकस्यापि ग्रंथस्य शास्त्रत्वं नास्ति तत्रास्था न कार्येति द्योतितम् । यत्तु ''स्तवैरुच्चावचैः स्तोत्रैः पौराणैः प्राकृतैरपि । स्तुत्वा'' इति वक्ष्यत्येकादशे भगवांस्तत्स्तुतिविषयमेव न तु विचारश्रवणादिविषयम् । यद्वा-प्राकृतैः स्वाभाविकैः पुरुषसूक्तादिभिरित्यर्थः । तदुक्तं संहितायाम् ''पुमान्न प्राकृतं शास्त्रमापद्यपि कदाचन । शृणुयाच्छृणुयाच्चार्षं विप्रादेव न चान्यतः ॥ प्राकृतश्रवणं व्यर्थं न पुण्यं तेन जायते । प्रत्यवायावहं किं तु केवलं स्याद्द्विजन्मनाम् ॥'' इति वारतांतविना । आर्षश्रवणफलं तु हरिवंशांते वैशंपायनेनाप्युक्तम् ''नरमेधाश्वमेधाभ्यां यत्फलं प्राप्यते नरैः । तत्फलं लभते नूनं पुराणश्रवणाद्धरेः ॥ ''ब्रह्महा भ्रूणहा गोघ्नः सुरापो गुरुतल्पगः । सकृत्पुराणश्रवणात्पूतो भवति नान्यथा ॥'' इत्यलं प्रसक्तानुप्रसक्त्येति प्रकृतमनुसरामः— एतादृशं शास्त्रमज्ञायाज्ञात्वाऽसत्कर्मभिर्बौद्धादिशास्त्रश्रवणाध्ययनादिभिर्बहिर्मुखैर्वेदविरुद्धैः किं ज्ञानलक्षणं फलं स्यान्नेत्यर्थः । तथा च वेदाविरुद्धार्षशास्त्रोक्तरीत्यैश्वरं भजतेति भावः । वेदाविरुद्धेत्युक्त्या ''बृहस्पतिर्हि शुक्रो भूत्वेन्द्रस्याभयायासुरेभ्यः क्षयायेमामविद्यामसृजत्'' इत्यादिमैत्रायणीयश्रुतेर्बृहस्पतिप्रणीतपाखंडशास्त्रस्यार्षत्वेऽपि वेदविरुद्धत्वादनादेयतोक्तेति । यद्वाऽसत्कर्मभिरविद्यमानसूत्रकार्यैः शास्त्राभासैः ''अपदं न प्रयुंजीत'' इति

कालचक्रं भ्रमिस्तीक्ष्णं सर्वं निष्कर्षयज्जगत् ॥ स्वतंत्रमबुधस्येह किमसत्कर्मभिर्भवेत् ॥ १९ ॥ शास्त्रस्य पितुरादेशं यो न वेद निवर्तकम् ॥ कथं तदनुरूपाय गुणविश्रंभ्युपक्रमेत् ॥२०॥ इति व्यवसिता राजन्हर्यश्वा एकचेतसः ॥ प्रययुस्तं परिक्रम्य पंथानमनिवर्तनम् ॥२१॥ स्वरब्रह्मणि निर्भातहृषीकेशपदांबुजे ॥ अखंडं चित्तमावेश्य लोकाननुचरन्मुनिः ॥२२॥ नाशं निशम्य पुत्राणां नारदाच्छीलशालिनाम् ॥ अन्वतप्यत कः शोचन् सुप्रजास्त्वं शुचा। पदम् ॥ २३ ॥

अज्ञायाविदुषः । असद्भिर्बहिर्मुखैः ॥ १८ ॥ क्षौरपव्यमित्यस्यार्थमाह । कालचक्रमिति । भ्रमिर्भ्रमणात्मकम् । तीक्ष्णमिति निष्कर्षयदिति च क्षौरपव्यपदं व्याख्यातम् । तदबुधस्यात एव फलस्य नित्यबुद्ध्या काम्यकर्मानुष्ठाने वैगुण्यबाहुल्यादसद्भिः ॥ १९ ॥ स्वपितुरादेशमित्यस्यार्थमाह शास्त्रस्य स्वपितुर्द्वितीयजन्महेतोः । तदनुरूपाय निवृत्त्यनुरूपाय निवृत्तकर्मादेशं यो न वेद स कथं गुणावश्रंभी गुणमयप्रवृत्तिमार्गविश्वासवान्सन्नुपक्रमेत्सृष्ट्यादौ प्रवर्तेत । "मोक्षेशब्रह्मबुद्धीनां जीवमायांतरात्मनाम् ॥ शास्त्रकालोपदेशानामज्ञाने किमु कर्मभिः ॥" इति । वाचःकूटसंग्रहश्लोकः ॥ २० ॥ इति व्यवसिता एवं निश्चितवंतः । एकचेतस ऐकमत्ययुक्तः । तं नारदं प्रदक्षिणीकृत्यापुनरावृत्तिमार्गं प्रययुः ॥ २१ ॥ निर्भातः साक्षात्कृतो यो हृषीकेशस्तस्य पदांबुजे । अनुचरदन्वचरदित्यर्थः ॥ २२ ॥ नाशमदर्शनं स्वधर्मभ्रंशं वा शीलेन शालंते शोभंते इति तथा तेषाम् । को दक्षः । सुप्रजास्त्वं सत्पुत्रवत्त्वं शुचां शोकानां स्थानम् ॥ २३ ॥

श्रुतेः पदरहितैर्न किमपि शुभं भवतीत्यर्थः ॥ १८ ॥ क्षुरपविम्यामित्र निर्वृत्तमिति क्षौरपव्यं भयप्रदत्वात्क्षौरपव्यं तीव्रत्वात्तीक्ष्णमिति तेन श्वः परश्वो वा मरिष्यथ किमिति हरिं न भजथेति भावः ॥ १९ ॥ न ह्याधानकर्त्तैव पिता किं तु शास्त्रमेव तस्य पितुरादेशो हि निवर्त्तको न तु प्रवर्त्तकोऽतो यद्यादेशं निवर्तकं न वेद तदा तदनुरूपायादेशानुरूपं कर्तुं कथमुपक्रमेत यतोऽयं गुणे प्रवृत्तिमार्गे एव विश्रंभी अयमेवादेश इति विश्वासवान् । अतः शास्त्रस्य शास्त्रानुयायिनः पितुश्च निवृत्तिधर्मे याऽऽज्ञा सैव वास्तवी तामेव पालयतेति ध्वनिः । अतः शास्त्रतात्पर्यप्रतिकूलमादेष्टुर्दक्षस्य पितृत्वाभावात्तदाज्ञाया अपालने वो नास्ति दोष इत्यनुध्वनिः । तस्मान्मत्त एव विष्णोर्मंत्रं गृहीत्वा क्वचिदेकांते उपविश्य तं विष्णुमेव भजतेति सर्वानुध्वनिः । तीर्थस्तु-'मातेव रक्षति पितेव हितं नियुंक्ते' इत्यादिवचनात्पितृवद्धितोपदेष्टृत्वात्पितृशब्देन शास्त्रमेव लक्ष्यते 'प्रातरुत्थायाथ संध्यामुपासीत' 'कलंजं न भक्षयेत्' इत्यादिश्रुतेरित्याह । मोक्षादयो दशार्थाः क्रमेण कूटसंग्रहे उक्ताः ॥ २० ॥ इत्येवं विशेषेणावसितं निश्चितं यैस्ते । प्रदक्षिणीकृत्येत्युपलक्षणं गुरुकरणे चरणामृतग्रहणदंडवत्प्रणत्यादेः अनिवर्त्तनं संन्यासानंतरमाश्रमांतराभावादनिवर्त्तकं संन्यासमित्यर्थः । मोक्षं वा "न स पुनरावर्त्तते" इति श्रुतेः ॥ २१ ॥ हंतहंतैतावंतो जीवा नरकादुद्धृतास्तत्प्रभोर्यश उपवीणयामीति नारदस्य समुद्रे निमज्जनमाह स्वराः षड्जादय एव ब्रह्म तत्र निर्भातस्य लीलागानेन साक्षात्कृतस्य हृषीकेशस्य सर्वेन्द्रियाकर्षकस्य कृष्णस्य चरणकमले । संदर्भस्तु-नारदस्य च चेष्टेयं सर्वतदुन्मुखीकरणेच्छामयेन श्रीभगवदनुरागेणैवेत्याह-स्वरब्रह्मणीति । उत्तमस्वरजातिस्वभावोयं यः सामान्यतः स्वस्वोत्कर्षविषयं स्मारयति विशेषतो भक्तानां भगवत्तत्त्वमित्यनुभवसिद्धम् । इत्यर्थ इति । अनुचरन्निहाडागमाभावस्त्वार्ष इति भावः ॥ २२ ॥ अदर्शनं पुनर्गृहागमनाभावात् । स्वस्यादर्शनेऽप्यन्येषां तद्दर्शनस्य सत्त्वादाह—स्वधर्म्माद् गृहस्थधर्म्माद्भ्रंशं पतनं वेति । गृहस्थानां मते विरक्ततैव नाश इति केचित् । अन्वतप्यत हंतहंत तादृशा मे पुत्रा नारदेन भ्रंशिता इति विषसाद । सुप्रजास्त्वमंगिरसे

स भूयः पांचजन्यायामजेन परिसांत्वितः ॥ पुत्रानजनयद्दक्षः शबलाश्वान्सहस्रशः ॥२४॥ तेऽपि पित्रा समादिष्टाः प्रजासर्गे धृतव्रताः ॥ नारा यणसरो जग्मुर्यत्र सिद्धाः स्वपूर्वजाः ॥२५॥ तदुपस्पर्शनादेव विनिर्धूतमलाशयाः ॥ जपंतो ब्रह्म परमं तेपुस्तत्र महत्तपः ॥२६॥ अब्भक्षाः कति चिन्मासान्कतिचिद्वायुभोजनाः ॥ आराधयन्मंत्रमिममभ्यस्यंत इडस्पतिम् ॥२७॥ ॐ नमो नारायणाय पुरुषाय महात्मने ॥ विशुद्धसत्त्वधिष्ण्या य महाहंसाय धीमहि ॥ २८ ॥ इति तानपि राजेंद्र प्रतिसर्गधियो मुनिः ॥ उपेत्य नारदः प्राह वाचः कूटानि पूर्ववत् ॥ २९ ॥ दाक्षायणाः संशृणुत गदतो निगमं मम ॥ अन्विच्छतानुपदवीं भ्रातॄणां भ्रातृवत्सलाः ॥ ३० ॥ भ्रातॄणां प्रायणं भ्राता योऽनुतिष्ठति धर्मवित् ॥ स पुण्यबंधुः पुरुषो मरुद्भिः सह मोदते ॥ ३१ ॥ एतावदुक्त्वा प्रययौ नारदोऽमोघदर्शनः ॥ तेऽपि चान्वगमन्मार्गं भ्रातॄणामेव मारिष ॥ ३२ ॥

अजेन ब्रह्मणा । सहस्रशः सहस्रसंख्यान् ॥ २४ ॥ २५ ॥ परमं ब्रह्म प्रणवं वक्ष्यमाणमंत्रं वा ॥ २६ ॥ इडस्पतिं वाचां मंत्राणां पतिं विष्णुमाराधयामासुः ॥ ॥ २७ ॥ विशुद्धसत्त्वाश्रयाय परमहंसाय नमो धीमहि॥२८॥ प्रतिसर्गे धीर्येषां तान् । वाचः कूटान्यदृष्ट्वांतं भुव इत्यादीनि पूर्वोक्तानि प्राह ॥२९ ॥ हे दाक्षायणाः संशृणुतेत्यादि पुनरन्यदपि प्राह । निगममुपदेशम् अन्विच्छतावलोकयत ॥३०॥ प्रायणं प्रकृष्टं गमनम् । पुण्यमेव बंधुर्यस्य मरुद्भिर्भ्रातृवत्सलैर्देवैः॥३१॥अमोघं दर्शनं

यो अस्त्विति वैदिकप्रयोगानुकारि प्रयोग इति । शुचां पदं वियोगे दुःखप्रदत्वादिति भावः ॥ २३ ॥ सहस्रिणः सहस्रं संख्या येषां ते तथा पंचजनस्यापत्यं स्त्री पांचजन्या अपत्ये ण्यप्रत्ययः । शेन कल्याणेन बलते आच्छादयति भक्तजनानिति शबलो विष्णुस्तमश्नुवत इति शबलाश्वास्तान् । नारदोपदेशेन तन्नाम्नोप्यन्वर्थतैव भविष्यतीति ज्ञेयम् ॥ २४ ॥ तेऽपि । शबलाश्वा अपि । स्वपूर्वजाः स्वज्येष्ठभ्रातरः ॥ २५॥ 'ओमित्ये काक्षरं ब्रह्म' इति प्रणवे केवलब्रह्मत्वस्यैव भगवता प्रोक्तत्वादाह । वक्ष्यमाणम् 'ओं नमो भगवते' इत्यादिकं मंत्रं चेति ॥ २६ ॥ इडानां वाचामर्थान्मंत्राणां पतिं स्वामिनम् । इलाभिर्मंत्ररूपाभिर्वाग्भिः पाति जपतो भक्तानिति वेडस्पतिस्तम् । इडाया इडसादेशः पृषोदरादित्वात् । डलयोरैक्यादिडैलाशब्दौ पर्यायौ 'इडा भूधेनुवाक्षु च' इति कोशात् ॥ २७ ॥ पुरुषाय संसाररोगनाशकाय । 'पुरु रोगे च प्रचुरे' इति कोशात् । पुरुं स्यति नाशयतीति तथा । महात्मने ईश्वराय ॥ २८ ॥ प्रतिसर्गे प्रजासृष्टौ 'दक्षाद्यैः रचितः सर्गः प्रतिसर्ग उदीरितः' इति कालिकापुराणात् ॥ २९ ॥ हे दाक्षायणा इति यथा पूर्वे दक्षपुत्रा आसंस्तथैव भवद्भिर्भवितव्यमित्याशयः । भ्रातृवत्सला इति । तथाकरण एव भ्रातृवत्सलत्वं स्यादिति भावः ॥ ३० ॥ मरुद्भिरित्ययं दृष्टांत एवोक्तः यूयं तु वैकुंठगामिभिरग्रजैः सह मोदिष्यध्वे इति भावः ॥ ३१ ॥ मारिषेति । तेषां तद्वार्तां श्रुत्वाहो धन्यास्तेऽहं तु द्विजकोपेरितसर्पदंशमृतेर्नरकादिकमेव यास्यामीति शोचंतं श्रीशुक आह—मारिषेति । मां लक्ष्मीमियर्ति प्राप्नोतीति मारिर्विष्णुस्तं सनति भजते इति मारिषस्तत्संबुद्धौ तथा

सध्रीचीनं प्रतीचीनं परस्यानुपथं गताः ॥ नाद्यापि ते निवर्तंते पश्चिमा यामिनीरिव ॥ ३३ ॥ एतस्मिन्काल उत्पातान्बहून्पश्यन्प्रजापतिः ॥ पूर्ववन्नारदकृतं पुत्रनाशमुपाशृणोत् ॥ ३४ ॥ चुक्रोध नारदायाऽसौ पुत्रशोकविमूर्च्छितः ॥ देवर्षिमुपलभ्याऽह रोषाद्विस्फुरिताधरः ॥ ३५ ॥ दक्ष उवाच ॥ अहो असाधो साधूनां साधुलिंगेन नस्त्वया ॥ असाध्वकार्यर्भकाणां भिक्षोर्मार्गः प्रदर्शितः ॥ ३६ ॥ ऋणैस्त्रिभिरमुक्तानाममीमांसितकर्मणाम् ॥ विघातः श्रेयसः पाप लोकयोरुभयोः कृतः ॥ ३७ ॥

स्य । हे मारिष आर्य ॥ ३२ ॥ सध्रीचीनं समीचीनम् । प्रतीचीनं प्रत्यग्वृत्तिलभ्यम् । परस्य ब्रह्मणः । अनुपथमनुगुणं पंथानम् । पश्चिमा यामिनीर्गता रात्रय इव ॥ ३३ ॥ ३४ ॥ पुत्राणा पारमहंस्यनिष्ठामुपश्रुत्य दक्षोऽपि प्रायशो विरक्तः स्यादिति तदनुग्रहार्थं देवर्षिस्तत्पार्श्वे गतस्तदा तमुलभ्य दक्ष आह ॥ ३५ ॥ साधोरिव लिंगं वेषो यस्य तेन त्वया नोऽस्मदीयानामर्भकाणामसाध्वकारि कृतम् । तदेवाह । साधूनां स्वधर्मे प्रवृत्तानां भिक्षोर्यो मार्गः स प्रदर्शितः ॥ ३६ ॥ ननु संन्यासिनो मार्गः साधुरेव मोक्षहेतुत्वात् । सत्यम् । ऋणत्रयापाकरणं विना तु महाननर्थ एवेत्याह । ऋणैरिति । "जायमानो वै ब्राह्मणस्त्रिभिर्वा ऋणवान् जायते । ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्यः । एष वा अनृणो यः पुत्री यज्वा ब्रह्मचारी वासी" ति श्रुतेः । ऋणैरमुक्तानां न मीमांसितानि विचारितानि कर्माणि यैः तेषां तावदृणविमोको नास्ति । तदुत्तरकालभावित्वाच्च पुत्रोत्पादनयज्ञानुष्ठानयोरभावेन पितृदेवर्षिऋणाद्विमुक्तिश्च नास्ति । अतो हे पाप विषयभोगत्यागादिह लोके श्रेयसो विघातः कृतः । मोक्षानधिकारित्वाच्च परलोकेऽपि श्रेयसो विघातः कृत इत्यर्थः । तथा च मनुः—"ऋणानि त्रीण्य

त्वमप्यार्योसीति भावः । 'मारिषः शाकभिद्यार्ये' इति मेदिनी ॥ ३२ ॥ परस्य परमेश्वरस्य ॥ ३३ ॥ प्रजापतिर्दक्षः ॥ ३४ ॥ देवर्षिमुपलभ्येति । स्वायंभुवस्य मनोर्वंश्याः प्रियव्रतोत्तानपादध्रुवादयः सर्वे मद्वारैव भगवतात्मसात्कृताः महाकर्मजडः प्राचीनबर्हिरप्युद्धृतस्तस्य पुत्रा दश प्रचेतसः पौत्रा दशसहस्राणि हर्यश्वाः संहस्रं शबलाश्वोऽश्वोत्तीर्णाः कथमेकस्तन्मध्यवर्त्ती दक्ष एव गृहस्थकूपे खेलतीति तमप्युद्दिधीर्षामीति विमृश्य सांप्रतं च पुत्राणां पारमहंस्यनिष्ठां श्रुत्वा स्वयमेव शोचन्दक्षः प्रायो गृहे निर्विण्ण एव वर्तते तत्तमनुगृहीतुमयमेव समयः साधुः।यद्यपि सांप्रतमपि स मां नान्विष्यति तदप्यहमेव तस्य गृहं यामीति विचार्य्य तत्रागतवंतं तं नारदमुपलभ्याह ॥ ३५ ॥ साधोरिव लिंगं जपयज्ञोपवीतशमदमादिर्यस्य तेन साधुलिंगेन महादांभिकेनेत्यर्थः । साधूनामस्माकमिति गौरवेण बहुवचनं मम साधोस्तव वैरं स्वप्नेप्यकुर्वतस्त्वयाऽसाधु अभद्रमकारी त्येतावता कालेन तव महदपराधो जात इति भावः । ननु किमसाध्वकारीति तत्राह—अर्भकाणां मम बालकानां गार्हर्थ्यभोगमसहमानेन मत्सरेण च या भिक्षोर्भिक्षुकलोकस्य । अर्भकाणामित्यर्भकत्वादेव ते सरलास्तव कपटिनोऽप्युपदेशं जगृहुरिति भावः । अत्र न विद्यते साधुर्यतः हे तथाभूत साधूनि लिंगानि चिह्नानि यस्य तेन न विद्यते साधुर्यतस्तथाभूतं यथा स्यात्तथा दर्शित इति । सरस्वत्याभिप्रेतोप्यर्थो ज्ञेयः । एवमग्रिमेषु श्लोकेष्वपि ग्रंथविस्तरभयान्न विवृतम् । दक्षाभिप्रायेणासाधो इति । अवैरिणि मयि वैरकारित्वेन त्वमसाधुरिति भावः ॥ ३६ ॥ अत्राक्षिपति—नन्विति । त्रिभिर्ऋणैर्देवर्षिपितृसंबंधिभिः । ऋषिभ्य इति त्रयः पंचमीबहुवचनांताः । कर्मविचारो हि शास्त्राध्ययनेन भवति तेन चर्षिऋणनिवृत्तिः स्यात् । तदुत्तरकाले शास्त्राध्ययनोत्तरकाले । भावि

एवं त्वं निरनुक्रोशो बालानां मतिभिद्धरेः ॥ पार्षदमध्ये चरसि यशोहा निरपत्रपः ॥ ३८ ॥
ननु भागवता नित्यं भूतानुग्रहकातराः ॥ ऋते त्वां सौहृदघ्नं वै वैरंकरमवैरिणाम् ॥ ३९ ॥

पाकृत्य मनो मोक्षे निवेशयेद् ॥ अनपाकृत्य मोक्षं तु सेवमानो व्रजत्यधः ॥ ” इति ॥ ३७ ॥ बालानां मतिं पुत्रादिविषयां भिनत्तीति तथा । एवं निरनुक्रोशो निर्घृणो हरेर्यशोनाशकः संस्तत्पार्षदानां मध्ये कथं चरसि ॥ ३८ ॥ निर्लज्जत्वमेवाह । नन्विति । ननु त्वामृते भागवताः सर्वे भूतानुग्रहपरवशास्त्वं तु

त्वाच्च । अतः ऋणत्रययुक्तानां भ्रंशात् हे पाप विश्वासघातित्वेन मित्रद्रोहित्वादिति भावः । मित्रद्रोहस्य महापातकत्वे भोजराजकथानुसंधेया सा चेत्थम्—कदाचिद्भोजनृपतये तदाज्ञया भानुमत्यास्तद्भार्याया मूर्त्तिं लिखित्वा कालिदासो दर्शयामास स च तां जघनदेशे तिलकांकितां दृष्ट्वा ‘ अनेन मद्भार्या रमिता ’ इति शंकितो भूत्वा तं देशान्निःसारयामास । तदनु कदाचिन्मृगयां गतो नृपो विषमवने भयार्त्तः सैन्यपरिच्युतः कंचिदारूढवानरवृक्षमारुरोह । वानरोऽपि तेन मैत्रीं कृतवान्स च विश्वस्य तत्रैव निशि शिश्ये । तदा च कश्चित्कपिविरोधी सिंहस्तत्रागत्य ‘ इमं मे देहि वैरनिर्यातनार्थम् ’ इत्यूचे । स च शरणापन्नत्यागे दोषं दृष्ट्वा न ददौ । ततश्च कपिरपि सिंहाय ‘अहं त्वया न प्रक्षेप्यः’ इत्युक्त्वा शिश्ये । स एव राजानमुपेत्याह ‘ देहि मे इमं कपिं नो चेत्त्वां भक्षयिष्याम्यवतीर्णम् ’ इति श्रुत्वा राजा कपिं प्रक्षिप्तवान् स च पतन्कांचिद् वृक्षशाखामालंब्य तत्रैवागत्य राजानम् ‘ कुष्ठी भव ’ इति शशाप । पुना राज्ञा प्रसादितः ‘ वि, से, मे, रा ’ इति वर्णचतुष्टयार्थश्रवणेन नीरोगो भविष्यसीत्युवाच । ततो नृपः सेनया गृहमागत्य वृत्तं मंत्रिभ्य उक्त्वा विद्वत्समाजमक्षरचतुष्टयार्थश्रवणार्थं चकार । तत्र च निष्कासितः कालिदासः स्त्रीवेषेण कस्यचिद्विदुषो गृहे धारायामुवास ततस्तद्वृत्तमाकर्ण्य स च पितृभूतं पंडितमित्थमुवाच ‘मत्पुत्री भवदभिलाषितवर्णचतुष्टयार्थं जानाति तामाहूय पृच्छ’ इति नृपाय कथय स च तथा कृत्वा स्त्रीवेषिणं तं नृपसदसि निनाय स च स्त्रीवेषी कालिदासः पृथगर्थं प्रत्येकवर्णस्योक्तवान् । तथाहि—“विश्वासप्रतिपन्नेषु ये च विश्वासघातिनः । ते यांति नरकं घोरं ताड्यमाना यमानुगैः ॥ ( १ ) । सेतुबंधे समुद्रे च गंगासागरसंगमे । स्नात्वा पापविमुक्तः स्यान्मित्रद्रोहकरं विना ॥ ( २ ) । मेरुतुल्यान्महापापात्कृत्वा संगं सतां नरः । मुच्यते न हि संदेहो मित्रद्रोही न मुच्यते ॥ ( ३ ) । राजन्भोः शृणु मद्वाक्यं यदि कल्याणमिच्छसि । देहि दानं सुविप्रेभ्यस्ततः श्रेयो भविष्यति ॥ ( ४ ) ” इत्याकर्ण्य भोजराजः स्वस्थो भूत्वा स्त्रीवेषं कालिदासमुवाच “ गृहे वससि भो देवि वनं नैव तु गच्छसि । पञ्चास्यकपिमद्वृत्तं कथं जानासि सुंदरि ॥ ” ( ५ ) । स चो वाच “ देवद्विजप्रसादेन श्रीमत्कालीप्रसादतः । सर्वं जानामि भो राजन्भानुमत्यास्तिलं यथा ” ( ६ ) ॥ ततो नृपस्तं कालिदासं ज्ञात्वा प्रसाद्यानयामासेति बृहद्भोजप्रबंधे । प्रकृतमनुसरामः—इत्यर्थ इति । ऐहिकपारलौकिकौ चार्थौ तेषां नाशिताविति भावः । अत्र प्रमाणमाह—तथा चेति । अपाकृत्य संशोध्य । मोक्षे प्रव्रज्यायाम् । ऋणानि अनपाकृत्याऽसंशोध्य प्रव्रज्यां कुर्वाणो नरके विशतीत्यर्थः ॥३७॥ त्वां दुष्टं किं ब्रवीमि त्वया सेवकेन भगवतोऽपि दुर्यशोऽजनिष्टेत्याह—एवमिति । निरनुक्रोशो निर्दयः । मतिं शास्त्रविहितकर्मनिष्ठां बुद्धिं भिनत्तीति तथा। हरेर्यशोहा त्वमभूस्तेन हरावपि तवापराधः। पार्षदमध्ये इति । वैष्णवेष्वपीत्येवं मद्विधेषु महत्सु भगवति भागवतेषु च तवापराधो जातो दुर्वार एव विश्वस्तघातित्वादीनां दुष्कृतानाञ्च वार्त्ता दूरे एवेति भावः। वेदरूपभगवदाज्ञाविघातकारित्वात्तद्यशोहा चाहो कथं पार्षदमध्ये चरसीति निर्लज्जोऽयमिति भावः ॥३८॥ किञ्च—मत्संमुखमायातस्त्वं कीदृशं मुखं दर्शयितुमतो धिक् त्वां निर्लज्जमित्याह—नन्विति । आश्चर्ये संबोधने च नन्विति। ऋते त्वामिति।त्वं तु भूतमात्रद्रोहीति भावः । सौहृदघ्नमिति। सौहृदकारिणामप्यस्माकमिति भावः । इति भाव इंति । वैरंकरमित्यस्माकं प्रकटमेव वैरं कृत्वाऽपि पुनः केन मुखेन प्रत्यक्षी भवसीति सत्यं निरपत्रप एवासि कति

नेत्थं पुंसां विरागः स्यात्त्वया केवलिना मृषा ॥ मन्यसे यद्युपशमं स्नेहपाशनिकृंतनम् ॥ ४० ॥ नानुभूय न जानाति पुमान्विषयतीक्ष्णताम् ॥ निर्विद्येत स्वयं तस्मान्न तथा भिन्नधीः परैः ॥ ४१ ॥ यन्नस्त्वं कर्मसंधानां साधूनां गृहमेधिनाम् ॥ कृतवानसि दुर्मर्षं विप्रियं तव मर्षितम् ॥४२॥ तंतुकृंतन यन्नस्त्वमभद्रमचरः पुनः ॥ तस्माल्लोकेषु ते मूढ न भवेद्भ्रमतः पदम् ॥ ४३ ॥ श्रीशुक उवाच ॥ प्रतिजग्राह तद्बाढं नारदः साधुसंमतः ॥ एतावान्साधुवादो हि तितिक्षेतेश्वरः स्वयम् ॥ ४४ ॥ इति श्रीभागवते महापुराणे षष्ठस्कंधे दक्षचरिते नारदशापो नाम पंचमोऽध्यायः ॥ ५ ॥ छ ॥

भूतविप्रियं कुर्वन्कथं न लज्जस इति भावः ॥ ३९ ॥ ननु वैराग्यादुपशमं उपशमाच्च भूतस्नेहपाशच्छेदनं भवति । न च विरक्तस्य ऋणत्रयापाकरणमावश्यकम् । "यदहरेव विरजेत्तदहरेव प्रव्रजेत् । यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्" इत्यादिश्रुतेः । अतो वैराग्योपदेशेन तेषां मयानुग्रह एव कृत इति चेत्तत्राह । नेति । यद्यपि त्वमेवं मन्यसे तथाऽपि मृषा केवलिना ज्ञानं विनाऽवधूतवेषेण त्वयेत्थं मतिचालने कृतेऽपि पुंसां विरागो नैव स्यात् । न च विरागं विनोपशमो न च तेन विना स्नेहपाशनिकृंतनमित्यर्थः ॥ ४० ॥ इत्थं विरागो न स्यादित्यत्र हेतुमाह । नानुभूयाननुभूय विषयाणां तीक्ष्णतां दुःखहेतुत्वं न जानाति । तस्माद्विषयानुभवेन तीक्ष्णत्वज्ञानात् कारणात्स्वयं यथा निर्विद्येत तथा भवादृशैः परैर्भिन्नधीर्न निर्विद्येत ॥ ४१ ॥ अतस्त्वयाऽस्माकमप्रियमेव कृतं तथापि वयं न कुर्म इत्याह । यदिति । कर्मसंधानां कर्ममर्यादानाम् । कर्तुमंधानामिति पाठे विप्रियं कर्तुमजानतामित्यर्थः । दुर्मर्षं दुःसहं यत्त्वं कृतवानसि तन्मर्षितं सोढम् ॥ ४२ ॥ तथापि तवाभद्रं भविष्यत्येवेत्याह तंतुकृंतन संतानच्छेदक । यद्यस्मादभद्रं पुत्राणां स्थानभ्रंशमचरस्तत्तस्मात्तव लोकेषु भ्रमतः पदं स्थानं न भवेदिति मृदुच्छलेन शापः ॥४३॥ बाढं तथेति स्वीकृतवान् । ईश्वरोऽपि प्रतिशप्तुं समर्थोऽपि तितिक्षेत सहेतेति यदेतावानेव ॥ ४४ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे टीकायां पंचमोऽध्यायः ॥ ५ ॥

पुनरहं त्वां लज्जयामीत्याशयः ॥३९॥ अत्राक्षिपति—नन्विति । मत्प्रवर्त्तिताद्वैराग्यात् । तच्च स्नेहपाशनिकृंतनं तेषां वृत्तमेव । अद्यापि तव पितुरपि पार्श्वेनागमनादेवानुमितं तत्कथं तेषां मोक्षेऽनधिकारः । विरक्तस्यर्णत्रयापाकरणमावश्यकं न चास्ति । इह श्रुतिं प्रमाणयति—यदहरिति । यदहो यस्मिन्दिने विरजेद्विरक्तो भवेत्तस्मिन्नेव दिने प्रव्रजेदित्यर्थः। यदि वेतरथा वैराग्यसद्भावे इत्यर्थः। अतो विरक्तस्यर्णापाकरणस्यानावश्यकत्वादेव । मयानुग्रह एव कृत इति चेन्न सत्यं महापुरुषाणां कृपया विरागः स्यादेव त्वया मृषा केवलिना ज्ञानशून्यावधूतेनानन्यवैष्णवंमन्येन वा इत्थं मतिचालने कृतेऽपि सप्ताष्टवासरान् विरागो भवन्नपि नीतितो वास्तवो विरागः स्याद्यद्यपि त्वमुपशमं मन्यसे तदपि नैव स्यात्तव महापुरुषत्वाभावादिति भावः । इत्यर्थ इति । स्वतस्त्यक्तस्यैव स्नेहपाशनिकर्त्तकत्वादिति भावः ॥ ४० ॥ तदेवाह—नानुभूयाननुभूय अत्र नलोपनुडभावौ त्वार्षौ । नञर्थो नशब्दो वा । विश्वनाथः—तस्मात्त्वमनभिज्ञो राजमार्गं शृण्वित्याह—नेति । परैस्त्वादृशैर्भिन्नधीर्विदीर्णमतिः ॥ ४१ ॥ एवं त्वया यथा निर्हेतुकं वैरं कृतं तस्य प्रतिफलमहमपि तच्चतुर्गुणितं दातुं शक्नोम्येव तथापि न ददामीति पश्य गृहस्थानामप्यस्माकं तितिक्षामित्याह—यदिति।कर्मणि संधा मर्यादा येषां तेषाम् । चक्रवर्त्तिना तु—कर्त्तें कर्ममार्गे संधा येषां ते कर्त्तसंधास्तेषामिति व्याख्यातम् । साधून। सदाचारिणाम्।तव ज्ञानभक्तिमर्यादाभ्रष्टस्य परं विप्रियं कर्त्तुं चक्षुष्मतोऽसाधोः परमहंसाश्रमिणः क्षांतम् ॥ ४२ ॥ यद्यपि क्षांतं तथापीत्यर्थः । तंतुं संततिं कृंतति छिनत्तीति तंतुकृंतनस्तत्संबुद्धौ तथा अत्र मुमागमस्त्वार्षः । 'तंतुकृत्तनयानां त्वम्' इति तीर्थसंमतः पाठः 'तंतुः संतानसूत्रयोः' इति कोशात् । तंतुकृंतनो यथा तंतुसंशोधनार्थमितस्ततो भ्रमति तथा त्वमपि भ्रमणं कुरु नैकत्र ते स्थितिर्भूयादिति भावः ॥ ४३ ॥ प्रतिजग्राह बाढं तथेति स्वीचकार । साधूतां संमत इति ।

श्रीशुक उवाच ॥ ततः प्राचेतसोऽसिक्न्यामनुनीतः स्वयंभुवा ॥ षष्टिं संजनयामास दुहितॄः पितृवत्सलाः ॥ १ ॥ दश धर्माय कायेंदोर्द्विषट् त्रिणव दत्तवान् ॥ भूतांगिरःकृशाश्वेभ्यो द्वे द्वे ताक्ष्यार्य चापराः ॥ २ ॥ नामधेयान्यमूषां त्वं सापत्यानां च मे शृणु ॥ यासां प्रसूतिप्रसवैर्लोका आपूरितास्त्रयः ॥ ३ ॥ भानुर्लंबा ककुज्जामिर्विश्वा साध्या मरुत्वती ॥ वसुर्मुहूर्ता संकल्पा धर्मपत्न्यः सुतान्छृणु ॥ ४ ॥ भानोस्तु देवऋषभ इंद्रसेनस्ततो नृप ॥ विद्योत आसील्लंबायास्ततश्च स्तनयित्नवः ॥५॥ ककुभः संकटस्तस्य कीकटस्तनयो यतः ॥ भुवो दुर्गाणि जामेयः स्वर्गो नंदिस्ततोऽभवत् ॥ ६ ॥ विश्वेदेवास्तु विश्वाया अप्रजांस्तान्प्रचक्षते ॥ साध्यो गणस्तु साध्याया अर्थसिद्धिस्तु तत्सुतः ॥ ७ ॥ मरुत्वांश्च जयंतश्च मरुत्वत्यां बभूवतुः ॥ जयंतो वासुदेवांश उपेंद्र इति यं विदुः ॥ ८ ॥

षष्ठे दक्षेण सृष्टायां कन्याषष्ट्यां प्रकीर्तिताः ॥ पृथग्वंशा यतो जातो विश्वरूपो दितेः सुतात् ॥ १ ॥ नारदात्पुत्राणां नाशमाशंकमानो दुहितॄर्जनयामास ॥ १ ॥ काय कश्यपाय द्विषट् द्विगुणाः षट् द्वादश यासु ताः । त्रयोदशेत्यर्थः । इंदोः सोमाय त्रिणव सप्तविंशतिं ताक्ष्यार्य नामांतरं प्राप्ताय कश्यपायैव अपरा अवशिष्टाश्चतस्रः ॥ २ ॥ सापत्यानामपत्यसहितानाम् । मे मत्तः शृणु । प्रसूतिप्रसवैः पुत्रपौत्रादिभिः ॥ ३ ॥ ४ ॥ ततो देवऋषभात् इंद्रसेनोऽभवत् ॥ ५ ॥ यतः कीकटाद्भुवो दुर्गाणि दुर्गाभिमानिनो देवाः । जामेयो जाम्याः पुत्रः स्वर्गस्ततः स्वर्गान्नंदिः पुत्रोऽभवत् ॥ ६ ॥ तत्सुतः साध्यानां सुतः ॥ ७ ॥ ८ ॥

साधव एवमेव सहंत इत्यर्थः । प्रसिद्धस्य साधुवादशब्दस्याप्येषैव निरुक्तिरित्याह—एतावानिति। ईश्वरः प्रतिशप्तुं समर्थोपि । ननु दक्षमनुगृहीतुमागतो दक्षेण बहुशस्तिरस्कृतस्तत्र तांस्तिरस्काराञ्छ्रुत्वा नारदेन तत्समीपात्कथं नापसृतम् । उच्यते । नारदस्यायमभिप्रायः—क्रोधवशोऽयं बहुशस्तिरस्कारानपि करोतु शापं च ददातु ततश्च 'क्रोधस्यैतत्फलोदयात्' इत्युक्तेर्यदा क्रोधः शाम्येत् माञ्च प्रति तिरस्कारादिकमकुर्वाणः सर्वमेव सहमानमालोक्य हंतहंत भगवद्भक्तोयं तिरस्कृतः शप्तश्चेति वैकुंठगतानां सनकादीनामिवानुतापश्च यदा भविष्यति तदा भक्तिबीजवपनयोग्यक्षेत्रीभूतेऽस्मिन् शुद्धभक्तिबीजमुप्त्वा यामीति बुद्ध्या तावत्क्षणपर्य्यंतमपि स्थितं दक्षस्य तु तत्तद्दृष्ट्वा अहो चंद्रार्द्धमौलेरपराधविशेषप्राबल्यमिति स्मृत्वा ततोऽपसृत इति ॥ ४४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ ॥ कन्यानां षष्टिर्दशगुणिता षट् संख्या तस्यां यतः कन्यावंशे दितेः सुतात्त्वष्टुः ( १ ) ततो नारदशापानंतरं पुत्रशोकेन निर्विण्णः पुनर्ब्रह्मवचनाद्गार्हस्थ्यं कुर्वन्नारदो मयि वैरं न त्यक्ष्यतीति मत्वा तस्मात्पुत्राणां नाशमाशंकमान इति पुत्रीरुत्पादयामास । नैष्ठिकोऽयं स्त्रीसंगाद्बिभेतीति भावः । प्राचेतसो दक्षः ॥ १ ॥ इत्यर्थ इति । द्वाभ्यां गुंण्यंते वर्ध्यंते इति द्विगुणास्ते षट् यासु त्रयोदशसंख्यासु ता द्विषट् । इह वैयधिकरण्ये मध्यपदलोपः । त्रयोदशसु द्वादशसंख्यायाः संभवादिति भावः । नन्वियं कल्पना कुतः कृता द्वादशैव ताः संत्विति चेन्न । "ददौ स दश धर्माय कश्यपाय त्रयोदश । कालस्य नयनैर्युक्ताः सप्तविंशतिमिन्दवे ॥" इति पुराणांतरोक्तेः । भूताय द्वे अंगिरसे द्वे कृशाश्वाय द्वे इति ज्ञेयम् । धर्मादयश्चैते ब्रह्मपुत्रदक्षजामातृभ्योऽन्ये ज्ञेया इति संदर्भः ॥ २ ॥ अमूषां षष्टिसंख्याकानाम् ॥ ३ ॥ सुतान् आसां पुत्रान् ॥ ४ ॥ नृपेति । नृपाणामवश्यं धर्मवंशः श्राव्य इति भावः । ततो विद्योतात् । स्तनयित्नवो मेघाभिमानिनो देवाः ॥ ५ ॥ तस्य संकटस्य । ततः स्वर्गाभिमानिनो देवात् ॥ ६ ॥ तान् विश्वान्देवान् । अप्रजान् संततिरहितान् ॥ ७ ॥ अस्योपेंद्रत्वं कल्पभेदाभिप्रायेण । चक्रवर्ती तु अदित्याः पुत्र उपेन्द्र इव जयंतो

मौहूर्तिका देवगणा मुहूर्तायाश्च जज्ञिरे ॥ ये वै फलं प्रयच्छंति भूतानां स्वस्वकालजम् ॥ ९ ॥ संकल्पायाश्च संकल्पः कामः संकल्पजः स्मृतः ॥ वसवोऽष्टौ वसोः पुत्रास्तेषां नामानि मे शृणु ॥१०॥ द्रोणः प्राणो ध्रुवोऽर्कोऽग्निर्दोषो वसुर्विभावसुः ॥ द्रोणस्याभिमतेः पत्न्या हर्षशोकभयादयः ॥ ॥ ११ ॥ प्राणस्योर्जस्वती भार्या सह आयुः पुरोजवः ॥ ध्रुवस्य भाया धरणिरसूत विविधाः पुरः ॥ १२ ॥ अर्कस्य वासना भार्या पुत्रास्तर्षादयः स्मृताः ॥ अग्नेर्भार्या वसोर्धारा पुत्रा द्रविणकादयः ॥ १३ ॥ स्कंदश्च कृत्तिकापुत्रो ये विशाखादयस्ततः ॥ दोषस्य शर्वरीपुत्रः शिशुमारो हरेः कला ॥ १४ ॥ वसोरांगिरसी पुत्रो विश्वकर्माऽऽकृतीपतिः ॥ ततो मनुश्चाक्षुषोऽभूद् विश्वे साध्या मनोः सुताः ॥ १५ ॥ विभावसोरसूतोषा व्युष्टं रोचिषमातपम् ॥ पंचयामोऽथ भूतानि येन जाग्रति कर्मसु ॥ १६ ॥ सरूपाऽसूत भूतस्य भार्या रुद्रांश्च कोटिशः ॥ रैवतोऽजो भवो भीमो वाम उग्रो वृषाकपिः ॥ १७ ॥ अजैकपादहिर्बुध्न्यो बहुरूपो महानिति ॥ रुद्रस्य पार्षदाश्चान्ये घोरा भूतविनायकाः ॥ १८ ॥

॥ ९ ॥ वसोर्वंशस्य भूयस्त्वादंते निर्देशः । मे मत्तः ॥ १० ॥ अभिमतिर्नाम पत्नी तस्या हर्षादयः पुत्राः ॥ ११ ॥ सहश्चायुश्च पुरोजवश्च पुत्राः । पुरः पुराणि ॥ १२ ॥ १३ ॥ स्कंदश्च कृत्तिकासुतोऽग्नेः पुत्रः षाण्मातुर इत्यग्निभूरिति च प्रसिद्धेः । ततः स्कंदात् विशाखादयोऽभवन् ॥ १४ ॥ आकृतीपतिः शिल्पाचार्यः । ततो विश्वकर्मणश्चाक्षुषो मनुरासीत् ॥ १५ ॥ विभावसोरुषा नाम भार्या । अथ आतपात्पंचयामो दिवसो जातः । अत एव रात्रि स्त्रियामा प्रदोषप्रत्यूषयोर्दिवसस्यावयवत्वात् । येन दिवसेन॥ १६ ॥भूतस्य द्वे भार्ये तयोर्वंशमाह । सरूपेति ॥ १७॥ महानित्येवमेकादशरूपस्य रुद्रस्य पार्षदाः प्रेतादयोऽन्ये

ऽप्युपेन्द्रसंज्ञ इति व्याचख्यौ ॥ ८ ॥ मौहूर्त्तिका मुहूर्त्ताभिमानिनः ॥ ९ ॥ वसोर्वसुसंज्ञकन्यायाः ॥ १० ॥ हर्षाद्यभिमानिन एव हर्षादिपदैरुच्यंते । आदिना मोहादिग्रहः ॥ ११ ॥ ऊर्जस्वतीति सप्तम्यर्थे प्रथमा । ऊर्जस्वत्यां भार्यायां सहादयः पुत्राः पुराणि तदभिमानिदेवाः ॥ १२ ॥ इहोभयत्रादिपदगृहीतपुत्राः पुराणांतरादवसेयाः । अग्नेर्वसोर्धारानाम भार्या । तीर्थस्तु--वसोः पुत्रस्याग्नेर्धारा नाम स्वाहापरपर्याया भार्येति व्याचख्यौ ॥ १३ ॥ आदिपदगृहीता भारतादिभ्योऽवसेयाः । कृत्तिकानां धात्रीत्वेन तत्पुत्रत्वव्यवहारः । मुख्यतस्तु--सदाशिवपुत्र एव स इति विशेषतो वर्णितं महाभारते शार्वरीसंज्ञभार्यायां जातः पुत्रः शिशुमारसंज्ञोऽभूत् । हरे र्विष्णोः कला उपासनास्थानं च तद्विश्वनाभिमतिवर्त्त्यं विष्णोरित्युक्तेर्य एतदुहैव भगवतो मायामयं रूपमित्युक्तेश्च ॥ १४॥ आंगिरस्यां जातः पुत्रः अयं ध्रुववंशे जातोपि दक्षवशिष्ठादिवत्पुनरत्र जात इति गम्यते । एवं विश्वे साध्या अपि धर्मपुत्राः पुनस्तत्प्रपौत्रभावञ्च प्राप्ता इति ज्ञेयम् ॥ १५ ॥ अत एव दिवसस्य पञ्चयामत्वादेव । प्रत्येकं द्विद्विमुहूर्त्तात्मकयोः प्रत्यूषप्रदोषयोर्दिवसस्यैवाद्यंतावयवत्वम् । यत्तु 'प्रदोषो रजनीमुखम्' इति रात्र्यवयवत्वमुक्तं तन्नावयवाभिप्रायं किन्त्वाद्याभिप्रायमिति । अथ कात्स्न्येन येन पञ्चयामेन भूतानि जीवाः ॥ १६ ॥ द्वे सरूपासूतेत्यर्थः । कोटिषु मध्ये एकादश रैवतादयः प्रधानाः ॥ १७ ॥ अन्यस्यां भूतायां

प्रजापतेरंगिरसः स्वधा पत्नी पितॄनथ ॥ अथर्वांगिरसं वेदं पुत्रत्वे चाकरोत्सती ॥ १९ ॥ कृशाश्वोऽर्चिषि भार्यायां धूम्रकेशमजीजनत् ॥
धिषणायां वेदशिरो देवलं वयुनं मनुम् ॥ २० ॥ तार्क्ष्यस्य विनता कद्रूः पतंगी यामिनी इति ॥ पतंग्यसूत पतगान्यामिनी शलभानथ ॥ २१ ॥
सुपर्णाऽसूत गरुडं साक्षाद्यज्ञेशवाहनम् ॥ सूर्यसूतमनूरुं च कद्रूर्नागाननेकशः ॥ २२ ॥ कृत्तिकादीनि नक्षत्राणींदोः पत्न्यस्तु भारत ॥ दक्षशा
पात्सोऽनपत्यस्तासु यक्ष्मग्रहार्दितः ॥ २३ ॥ पुनः प्रसाद्य तं सोमः कला लेभे क्षये दिताः ॥ शृणु नामानि लोकानां मातॄणां शंकराणि च ॥
॥ २४ ॥ अथ कश्यपपत्नीनां यत्प्रसूतमिदं जगत् ॥ अदितिर्दितिर्दनुः काष्ठा अरिष्टा सुरसा इला ॥ २५ ॥ मुनिः क्रोधवशा ताम्रा सुरभिः
सरमा तिमिः ॥ तिमेर्यादोगणा आसञ्छ्वापदाः सरमासुताः ॥ २६ ॥ सुरभेर्महिषा गावो ये चान्ये द्विशफा नृप ॥ ताम्रायाः श्येनगृध्राद्या
मुनेरप्सरसां गणाः ॥ २७ ॥ दंदशूकादयः सर्पा राजन्क्रोधवशात्मजाः ॥ इलाया भूरुहाः सर्वे यातुधानाश्च सौरसाः ॥ २८ ॥ अरिष्टायाश्च
गंधर्वाः काष्ठाया द्विशफेतराः ॥ सुता दनोरेकषष्टिस्तेषां प्राधानिकाञ्छृणु ॥ २९ ॥

ऽन्यस्यां जाताः ॥१८॥ अंगिरसः स्वधा सती चेति द्वे भार्ये तयोर्वंशमाह । प्रजापतेरिति । स्वधा नाम पत्नी पितॄन्पुत्रत्वेऽकरोत् । अथ सती चाथर्वांगिरसं नाम वेदम् ॥ १९ ॥
कृशाश्वस्यार्चिर्धिषणेति द्वे भार्ये तयोर्वंशमाह । कृशाश्व इति ॥ २० ॥ २१ ॥ सुपर्णा विनता । अनूरुमरुणम् ॥ २२ ॥ रोहिण्यामेव प्रेमातिशयेनान्यासामुपेक्षणा
त्कुपितस्य दक्षस्य शापाद्यक्ष्मग्रहार्दितः क्षयरोगपीडितः संस्तास्वनपत्योऽभूत् ॥ २३ ॥ तं दक्षं प्रसाद्य केवलं कला एव लेभे न त्वपत्यानि । कथंभूताः । क्षये कृष्णपक्षे
दिताः खंडिताः सतीः । दो अवखंडने धातुः । पाठांतरे क्षये सति पुनरेधितास्तेनैव वर्धिताः सतीः । अथ लोकानां मातॄणां कश्यपपत्नीनां कल्याणकराणि नामानि शृणु ॥
॥ २४ ॥ २५ ॥ अल्पत्वेन सुगमत्वाद्यथायथं व्युत्क्रमेण तासां वंशानाह । तिमेरित्यादिना ॥२६॥२७॥ सौरसाः सुरसायाः पुत्राः ॥ २८ ॥ प्राधानिकान्मुख्यानष्टा

द्वितीयायां भार्यायाम् ॥१८॥१९॥ वेदशिरसा सहितो देवलो वेदशिरोदेवलस्तं वेदशिरसं देवलञ्चेत्यर्थः । तीर्थस्तु–वेदशिरा इति कृशाश्वस्य नामांतरमाह ॥ २० ॥ ननु कश्यपमुनेर्वंशे कथं पशुपक्षिदक्षादीनामुत्पत्तिस्तत्रे
दमवधेयम्–"शुक्तौ मुक्ता यथोत्पन्ना गजमुक्ता गजश्रवे । मृगनाभ्यां च कस्तूरी गोकर्णे धेनुरोचनम् ॥ वंशवृक्षे तुकाक्षीरी गोमयाद् वृश्चिकोद्भवः । ऋषिभार्यासु पक्ष्यादिजन्म ज्ञेयन्तथा बुधैः ॥" वस्तुतः सत्य संकल्पत्वा
दृषीणां तत्र किंचिन्न चाद्भुतमिति ज्ञेयम् । पतंगान् दीपज्वालायां ज्वलनशीलान्सूक्ष्मपक्षिणः । शलभान् कृषिभक्षणशीलान्रक्तपीतान्सूक्ष्मपक्षिणः॥२१॥गरुडानूरू भ्रातरौ विनतापुत्रौ॥२२॥ भारतेति ।भरतो यथा स्वभार्या
स्वनपत्यस्तथाऽयमपीति संदेहं मा कुर्विति कथं स्त्रीषु विद्यमानास्वपुत्रोऽयमिति भावः ॥२३॥ पाठांतरे क्षयैधिता इति पाठे ॥२४॥२५॥ तासामदित्यादीनां व्युत्क्रमेण क्रमपरित्यागेन सूचीकटाहन्यायमाश्रित्याह–तिमेरिति ।
यादोगणा जलचरजीवगणाः । 'यादांसि जलजंतवः' इत्यमरः । श्वापदा हिंसाशीलचतुष्पदाः ॥२६॥ ये चान्ये द्विखुरा मृगादयः । 'शफं क्लीबे खुरः पुमान् ' इत्यमरः । आदिना चिह्लादिग्रहः ॥२७॥ राजान्निति । श्रवणे
देदीप्यमानांतःकरणात्वादुक्तम् । आदिना सर्पजात्यंतरग्रहः ॥ २८ ॥ द्विशफेतरा एकखुरा अश्वादिपशवः ॥ २९ ॥

द्विमूर्धा शंबरोऽरिष्टो हयग्रीवो विभावसुः ॥ अयोमुखः शंकुशिराः स्वर्भानुः कपिलोऽरुणः ॥ ३० ॥ पुलोमा वृषपर्वा च एकचक्रोऽनुतापनः ॥ धूमकेशो विरूपाक्षो विप्रचित्तिश्च दुर्जयः ॥ ३१ ॥ स्वर्भानोः सुप्रभां कन्यामुवाह नमुचिः किल ॥ वृषपर्वणस्तु शर्मिष्ठां ययातिर्नाहुषो बली ॥ ३२ ॥ वैश्वानरसुतायाश्च चतस्रश्चारुदर्शनाः ॥ उपदानवी हयशिरा पुलोमा कालका तथा ॥ ३३ ॥ उपदानवीं हिरण्याक्षः क्रतुर्हयशिरां नृप ॥ पुलोमां कालकां च द्वे वैश्वानरसुते तु कः ॥ ३४ ॥ उपयेमेऽथ भगवान्कश्यपो ब्रह्मचोदितः ॥ पौलोमाः कालकेयाश्च दानवा युद्धशालिनः ॥ ३५ ॥ तयोः षष्टिसहस्राणि यज्ञघ्नांस्ते पितुः पिता ॥ जघान स्वर्गतो राजन्नेक इंद्रप्रियंकरः ॥३६॥ विप्रचित्तिः सिंहिकायां शतं चैकमजीजनत् ॥ राहुज्येष्ठं केतुशतं ग्रहत्वं य उपागतः ॥ ३७ ॥ अथातः श्रूयतां वंशो योऽदितेरनुपूर्वशः ॥ यत्र नारायणो देवः स्वांशेनावातरद्विभुः ॥३८ ॥ विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ॥ धाता विधाता वरुणो मित्रः शक्र उपक्रमः ॥ ३९ ॥

दश शृणु ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ वैश्वानरो दनोः पुत्रस्तस्य सुताः ॥ ३३ ॥ कः प्रजापतिः कश्यप उपयेमे इत्यन्वयः ॥ ३४ ॥ दानवीपरिणयने हेतु ब्रह्मणा चोदित इति ॥ ३५॥ तयोः षष्टिसहस्राणि निवातकवचा नाम पुत्रा जातास्तांश्च स्वर्गतः संस्ते पितामहोऽर्जुनो जघान॥ ३६॥ राहुर्ज्येष्ठो यस्य ॥ ३७॥ ३८॥ ३९॥

॥३० ॥ ३१ ॥ नमुचिर्दैत्यः । नाहुषो नहुषपुत्रः ॥ ३२ ॥ ३३ ॥ क्रतुर्दैत्यः ॥ ३४ ॥ ननु दानवीं पौत्रीं कथं कश्यप उपयेमे इति चेत्तत्राह—"उत्पत्तिश्च निरोधश्च नित्यौ भूतेषु पार्थिव । ऋषयोऽत्र न मुह्यंति विद्वांसश्चैव ये जनाः ॥ " इति हरिवंशादिपर्वद्वितीयाध्यायात् । अस्यार्थः—भूतेषु पश्वादिषु उत्पत्तिर्नित्या स्वाभाविकी सापिंडयनियमं विना प्रजोत्पादनं स्वाभाविकं तथा मनुष्येषु निरोधो नित्यः । 'असपिंडामुद्वहेत्' इत्यादिनियमः स्वाभाविकः यद्यप्येवं तथाप्यत्र ऋषयः "प्रजापतिस्स्वां दुहितरमभ्ययात्" इत्यादिश्रुतिदार्शिनो विद्वांसश्च सापिंडयशास्त्रस्यानित्यांगमिवाचरणार्थत्वं जानाना न मुह्यंति विश्वसृजां कार्यगौरवाच्छुत्यपेक्षयाधुनिकस्य सापिंडयशास्त्रस्योल्लंघने न दोष इति भावः । इत्यभिप्रेत्यैव स्वामिचरणैरपि व्याख्यातमुपदानवीपरिणयने हेतुः ब्रह्मणा 'प्रजापतिः स्वां दुहितरम्' इत्यादिवेदेन हिरण्यगर्भेण वा ॥ ३५ ॥ तयोः पुलोमाकालिकयोः । शतसहस्रायुतलक्षादीनां नियतक्लीबत्वमाश्रित्याह—षष्टिसहस्राणि यज्ञघ्नानिति । यज्ञादिकर्मनाशकान् । ते पितुरभिमन्योः पिताऽर्जुनः विद्याभ्यासार्थमिन्द्रलोकं गतो गुरुदक्षिणानिमित्तं जघानेति महाभारते वनपर्वणि वर्णितं विस्तरेण ॥ ३६ ॥ सिंहिकायां हिरण्यकशिपुभगिन्याम् । "दितेः सुतो हिरण्याक्षो हिरण्यकशिपुस्तथा । कन्या च सिंहिका नाम बभूव कुरुसत्तम ॥ " इति पुराणांतरोक्तेः । केतूनां शतं यस्मिंस्तत् । एकाधिकं शतमस्य विवरणं राहुज्येष्ठमिति । केतूनां शतत्वं ज्योतिश्शास्त्रे वर्णितम् " वरुणस्य दश सुताश्चतुर्विंशा रवेः सुताः । अग्नेः पुत्राश्चतुर्विंशा यमस्य नव कीर्त्तिताः ॥ अष्टादश कुबेरस्य वायोर्विंशतिरेव च । एवं संख्या च केतूनां शतं पञ्चोत्तरं भवेत् ॥ " इति ज्योतिर्निबंधे । चकारेणानुक्ता अपि पंच ग्राह्याः ॥ ३७ ॥ अथ मंगले । " अथातो ब्रह्मजिज्ञासा " इतिवदस्य वेदरूपता सूचिता । अतो दन्वादिवंशकथनोत्तरम् । यत्रादितेर्वंशे । स्वांशेन वामनरूपेण ॥ ३८ ॥ द्वादशादित्याननुक्रामति विवस्वानिति ॥ ३९ ॥

विवस्वतः श्राद्धदेवं संज्ञाऽसूयत वै मनुम् ॥ मिथुनं च महाभागा यमं देवं यमीं तथा ॥ सैव भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि ॥ ४० ॥
छाया शनैश्चरं लेभे सावर्णिं च मनुं ततः ॥ कन्यां च तपतीं या वै वव्रे संवरणं पतिम् ॥ ४१ ॥ अर्यम्णो मातृका पत्नी तयोश्चर्षणयः सुताः ॥
यत्र वै मानुषी जातिर्ब्रह्मणा चोपकल्पिता ॥ ४२ ॥ पूषाऽनपत्यः पिष्टादो भग्नदंतोऽभवत्पुरा ॥ योऽसौ दक्षाय कुपितं जहास विवृतद्विजः ॥ ४३॥
त्वष्टुर्दैत्यानुजा भार्या रचना नाम कन्यका ॥ सन्निवेशस्तयोर्जज्ञे विश्वरूपश्च वीर्यवान् ॥ ४४ ॥ तं वव्रिरे सुरगणा दौहित्रं द्विषतामपि ॥ विमतेन
परित्यक्ता गुरुणांगिरसेन यत् ॥ ४५ ॥ इति श्रीभा० महा०षष्ठस्कन्धे दक्षकन्यावंशवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ राजोवाच ॥ कस्य हेतोः
परित्यक्ता आचार्येणात्मनः सुराः ॥ एतदाचक्ष्व भगवञ्छिष्याणामक्रमं गुरौ ॥ १ ॥

असूयताजनयत् । भुवि वर्तमाना ॥ ४० ॥ ततो विवस्वतः ॥ ४१ ॥ चर्षणयः कृताकृतज्ञानवंतः । पश्यति कर्मत्वेन निघंटावुक्तेः । यत्र येषु आत्मानुसं
धानविशेषेण मानुषी जातिश्चोपकल्पिता । तथा च श्रुतिः । "पुरुषत्वे चाविस्तरामात्मा" इति ॥ ४२ ॥ कुपितं हरमिति शेषः । विवृतद्विजः प्रकटितदंतः सन्
॥४३॥४४॥ यद्यदा विमतेनावज्ञातेन बृहस्पतिना परित्यक्तास्तदा द्विषतां शत्रूणां भागिनेयमपि विश्वरूपं पौरोहित्ये वृतवंतः॥४५॥इति षष्ठे टीकायां षष्ठोऽध्यायः॥६॥
सप्तमे विश्वरूपोऽसौ पौरोहित्ये वृतः सुरैः ॥ गुरुणा संपरित्यक्तैः पौरोहित्यमथाकरोत् ॥ १ ॥ कस्य हेतोः कस्माद्धेतोरात्मनः शिष्याः सुराः परित्यक्ताः

संज्ञा विश्वकर्मपुत्री । यमीं यमुनाम् । सैव संज्ञैवाथ तत्तेजोऽसहमाना तपश्चरंती वडवा तुरंगी भूत्वा । नासत्यावश्विनीकुमारौ ॥ ४० ॥ या तपती । संवरणं राजानम् ॥ ४१ ॥ तयोरर्यममातृकयोः ।
चर्षणिशब्दस्य कृताकृतज्ञानवत्त्ववाचकत्वे वैदिको निघंटुः प्रमाणमित्याह—पश्यतीति । पश्यतिः कर्म यस्य स पश्यतिकर्मा तस्य भावस्तत्त्वं तेन पश्यतिपदेन तदर्थो दर्शनं ग्राह्यं दर्शनकर्त्तारश्चर्षणयः । यत्र चर्षणिषु
उपकल्पिता तेषां मानुषत्वं पुरुषत्वं स्थापितमिमे पुरुषा इति लोकेषु ख्यापितमिति भावः । कृतं कर्म । अकृतं मोक्षः । नास्त्यकृतः कृतेनेति श्रुताविरत्थं व्याख्यातत्वात् । पुरुषस्यात्मदर्शित्वे प्रमाणमाह—तथा चेति ।
पुरुषत्वे मानुषत्वे । आत्माऽतिशयेन साधनसंपत्त्या प्रत्यक्षी भवतीति श्रुतिपदार्थः ॥ ४२ ॥ अनपत्येऽपि रुद्रकोपादेव रुद्राराधनस्यैवागमशास्त्रे संततिसाधनत्वेन विधानात् " भक्त्या श्रीशिवमाराध्य पुत्रोत्पत्तिं प्रसा
धयेत् " इत्युक्तेः । यः पूषा ॥ ४३ ॥ रचना नाम कन्यका या दैत्यानुजा सा त्वष्टुर्भार्यासीत् । तयोस्ताभ्यां त्वष्टृरचनाभ्यां सन्निवेशविश्वरूपनामानौ द्वौ पुत्रावभूतामित्यर्थः ॥ ४४ ॥ तं बुद्धिस्थं विश्वरूपं शत्रूणां
दैत्यानाम् ॥ ४५ ॥ इति श्रीमद्भागवत भा०दी०प्र० षष्ठस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥ पौरोहित्ये पुरोहितकर्मणि तत्कर्तुमित्यर्थः । अथ वरणानंतरम् ( १ ) ' गुरुद्वारा प्रसादो मे ' इति पुराणांतरीयभगवद्वचनाद्गुरु
प्रसाद एव बलीयान्भक्तिज्ञानादिसमुद्रेकसिद्धये । तदभावः सद्योऽनर्थपरंपराहेतुरतो ज्ञानाद्यर्थिना पुरुषेण स्वप्नेऽपि गुरुर्नावमंतव्यः किन्तु निरंतरं सबहुमानं प्रसादसिद्धये निषेवणीय इत्येतदस्मिन्नध्याये निरूपयन्नाह—

श्रीशुक उवाच ॥ इंद्र स्त्रिभुवनैश्वर्य मदोल्लंघितसत्पथः ॥ मरुद्भिर्वसुभी रुद्रैरादित्यैर्ऋभुभिर्नृप ॥ २ ॥ विश्वेदेवैश्च साध्यैश्च नासत्याभ्यां परिश्रितः ॥ सिद्धचारणगंधर्वैर्मुनिभिर्ब्रह्मवादिभिः ॥ ३ ॥ विद्याधराप्सरोभिश्च किन्नरैः पतगोरगैः ॥ निषेव्यमाणो मघवान्स्तूयमानश्च भारत ॥४॥ उपगीयमानो ललितमास्थानाध्यासनास्थितः ॥ पांडुरेणातपत्रेण चंद्रमंडलचारुणा ॥ ५ ॥ युक्तश्चान्यैः पारमेष्ठ्यैश्चामरव्यजनादिभिः ॥ विराजमानः पौलोम्या सहार्धासनया भृशम् ॥ ६ ॥ स यदा परमाचार्यं देवानामात्मनश्च ह ॥ नाभ्यनंदत संप्राप्तं प्रत्युत्थानासनादिभिः ॥ ७ ॥ वाचस्पतिं मुनिवरं सुरासुरनमस्कृतम् ॥ नोच्चचालासनादिंद्रः पश्यन्नपि सभागतम् ॥ ८ ॥ ततो निर्गत्य सहसा कविरांगिरसः प्रभुः ॥ आययौ स्वगृहं तूष्णीं विद्वाञ्छ्रीमदविक्रियाम् ॥ ९ ॥ तर्ह्येव प्रतिबुध्येंद्रो गुरुहेलनमात्मनः ॥ गर्हयामास सदसि स्वयमात्मानमात्मना ॥ १० ॥ अहो बत ममाऽसाधु कृतं वै दभ्रबुद्धिना ॥ यन्मयैश्वर्यमत्तेन गुरुः सदसि कात्कृतः ॥ ११॥ को गृध्येत्पंडितो लक्ष्मीं त्रिविष्टपपतेरपि ॥ ययाहमासुरं भावं नीतोऽद्य विबुधेश्वरः ॥ १२ ॥ ये पारमेष्ठ्यं धिषणमधितिष्ठन्न कंचन ॥ प्रत्युत्तिष्ठेदिति ब्रूयुर्धर्मं ते न परं विदुः ॥ १३॥

अक्रममपराधम् ॥ १ ॥ स इंद्रो यदा संप्राप्तं वाचस्पतिं नाभ्यनंदत नादृतवांस्तदा स आंगिरसस्ततो निर्गत्य तूर्ष्णीं स्वगृहमाययावित्यष्टानामन्वयः । अनादरे हेतुं मदं दर्शयितुं तं विशिनष्टि । त्रिभुवनैश्वर्यमदेनोल्लंघितः सतां पंथा येन सः ॥ २ ॥ परिश्रितः परिवृतः ॥ ३ ॥ ४ ॥ आस्थानं सभा तस्मिन्नध्यासनं सिंहासनं तदास्थितः ॥ ५ ॥ पारमेष्ठ्यैर्महाराजचिह्नैः । आसनस्यार्धे स्थितया पौलोम्या शच्या सह विराजमानः सन् ॥ ६ ॥ प्रत्युत्थानादिना नाभ्यनंदत नादृतवान् ॥ ७ ॥ न चोच्चचाल आसन एव स्थितोऽपि किंचिन्न चलितवान् ॥ ८ ॥ श्रीमदेन या विक्रिया तां विद्वान् जानन् ॥ ९ ॥ प्रतिबुध्यानुस्मृत्य ॥ १० ॥ मम कृतं कर्म अहो असाधु यद्यस्माद्दभ्रबुद्धिनाऽल्पमतिना मया कात्कृतस्तिरस्कृतः ॥ ११ ॥ विबुधानां सात्त्विकानां देवानामीश्वरोऽप्यहम् ॥ १२ ॥ ननु सिंहासनस्थो राजाऽभ्युत्थानं न कुर्या

यस्येति । भगवन्निति । वक्तुं सामर्थ्यं द्योतयति ॥ १ ॥ हे नृपेति । राज्ञां मदो भवत्येवेति स्मारयतीति ॥ २ ॥ ३ ॥ भारतेति । यथा भरतखंडस्थैस्त्वमिति भावः ॥ ४ ॥ पांडुरेण श्वेतेन ॥ ५ ॥ पौलोम्या शच्या । अर्द्धमासनमेवासनं यस्यास्तया । मृगलोचनेतिवदासनपदस्य वृत्तावंतर्भावः ॥ ६ ॥ स इन्द्रः । परमत्युत्कृष्टम् । आचार्यं बृहस्पतिम् । न केवलं देवानामपि त्वात्मनोऽपीत्यर्थः । नाभ्यनंदत नापूजयत् ॥ ७ ॥ पूज्यत्वाधिक्यबोधनाय विशेषणबा[illegible]ल्यम् । आसन एवारुह्य स्थितोऽपीति ल्यब्लोपे पञ्चमी ॥८॥ ततः सभातः । कविरेवं भविष्यतीति भाविकार्यविज्ञः । प्रभुः शासितुं समर्थः । विद्वान् गुर्ववमानहेतुत्वेन जानन् ॥ ९ ॥ यर्हि गुरुः सभातो निवृत्तस्तर्ह्येव तदानीमेव स्वयं परप्रेरणमंतरैव प्रतिबुध्य ॥ १० ॥ सदसीत्यपराधोद्रेकतामाहा । कुत्सितः कृतः कत्कृतस्स एव कात्कृतः पृषोदरादिः ॥ ११ ॥ स्वसंपत्तिमेव तिरस्कारहेतुत्वेन ज्ञात्वा निंदति—क इति । गृध्येद्वाञ्छेत् । यया त्रिविष्टपेशसंपत्या ॥ १२ ॥ अत्राक्षिप्य समाधत्ते—नन्विति । वृद्धा इति । कुशलाः । सत्यं ते भ्रांता एवेत्याह—य इति । परं कल्याणहेतुम् ॥ १३ ॥

तेषां कुपथदेष्टॄणां पततां तमसि ह्यधः ॥ ये श्रद्दध्युर्वचस्ते वै मज्जंत्यश्मप्लवा इव ॥ १४ ॥ अथाहममराचार्यमगाधधिषणं द्विजम् ॥ प्रसाद
यिष्ये निशठः शीर्ष्णा तच्चरणं स्पृशन् ॥१५॥ एवं चिंतयतस्तस्य मघोनो भगवान् गृहात् ॥ बृहस्पतिर्गतोऽदृष्टां गतिमध्यात्ममायया ॥ १६ ॥
गुरोर्नाधिगतः संज्ञां परीक्षन्भगवान्स्वराट् ॥ ध्यायन् धिया सुरैर्युक्तः शर्म नालभतात्मनः ॥१७॥ तच्छ्रुत्वैवासुराः सर्वे आश्रित्यौशनसं मतम्॥
देवान्प्रत्युद्यमं चक्रुर्दुर्मदा आततायिनः ॥१८॥ तैर्विसृष्टेषुभिस्तीक्ष्णैर्निर्भिन्नांगोरुबाहवः ॥ ब्रह्माणं शरणं जग्मुः सहेंद्रा नतकंधराः ॥ १९ ॥
तांस्तथाऽभ्यर्दितान्वीक्ष्य भगवानात्मभूरजः ॥ कृपया परया देव उवाच परिसांत्वयन् ॥ २० ॥ ब्रह्मोवाच ॥ अहो बत सुरश्रेष्ठा ह्यभद्रं वः
कृतं महत् ॥ ब्रह्मिष्ठं ब्राह्मणं दांतमैश्वर्यान्नाभ्यनंदत ॥ २१ ॥ तस्यायमनयस्यासीत्परेभ्यो वः पराभवः ॥ प्रक्षीणेभ्यः स्ववैरिभ्यः समृद्धानां च
यत्सुराः॥२२॥मघवन्द्विषतः पश्य प्रक्षीणान्गुर्वतिक्रमात् ॥ संप्रत्युपचितान्भूयः काव्यमाराध्य भक्तितः॥आददीरन्निलयनं ममापि भृगुदेवताः॥२३॥

दिति वृद्धा वदंति तत्राह । य इति द्वाभ्याम् । धिषणमासनम् ॥ १३ ॥ कुपथं दिशंत्युपदिशंतीति कुपथदेष्टारस्तेषां वचः । अश्ममयः प्लवो येषां ते यथा मज्जंतं प्लवमनु
मज्जंति तद्वत् ॥ १४ ॥ अगाधा गंभीरा धिषणा यस्य तम् । निशठः शाठ्यहीनः सन् ॥ १५ ॥ अधिकया आत्ममायया ॥ १६ ॥ गुरोः संज्ञा ज्ञानोपायं परीक्ष
माणोऽपि नाधिगतोऽप्राप्तः सन् ॥१७॥ आततायिन उद्यतास्त्राः ॥१८॥ निर्भिन्नान्यंगान्युत्तमांगानि शिरांसि ऊरवो बाहवश्च येषाम् ॥ १९ ॥ २० ॥ वो युष्माकं कृतं
करणं महदभद्रम् । तदाह । ब्रह्मिष्ठमिति । नाभ्यनंदत नाभिनंदितवंतः ॥२१॥ परेभ्यः शत्रुभ्यो वः पराभव इति यदयं तस्यानयस्यान्यायस्य संबंधी फलरूप आसीत् ।
उक्तं च । "ब्राह्मणं कुलसंपन्नं भक्तं विष्णोर्महात्मनः॥आयांतं वीक्ष्य नोत्तिष्ठेत्स दुःखैः परिभूयते" इति । स्वयमेव वैरिणो हंतारो येषां तेभ्यः॥२२॥ गुरुतिरस्कारसत्कारा

अधस्तमसि नरके। पततां पतिष्यमाणानाम् । प्लवस्तरणसाधनम् ॥ १४ ॥ अस्यां विपत्तौ कः खलूपाय इति क्षणं विमृश्य स्वयमेवाह—अथाहमिति । यत एवमनर्थोऽथ तस्मात् शाठ्याहीनो निष्कपटः ॥ १५ ॥
अदृष्टामिति पाठे न विद्यते दृष्टं दर्शनं यस्यामित्यर्थः । आत्ममायया योगसामर्थ्येन ॥ १६ ॥ स्वराडिंद्रः ॥ १७ ॥ तद् बृहस्पतिकर्तृकदेवत्यजनम् । औशनसं भार्गवम् ॥ १८ ॥ तैः असुरैः ॥ १९ ॥
तान्देवान् । तथाभ्यर्दितान् दैत्यशस्त्रच्छिन्नांगान् आत्मनः परमात्मनो भवतीत्यात्मभूर्ब्रह्मा ॥ २० ॥ अहो बतेत्यव्ययद्वयं महदनर्थद्योतनार्थम् । सुरश्रेष्ठा इति साकूता संबुद्धिः । नायं सुराणां धर्मः कुतः सुरश्रेष्ठानामिति
महाननर्थः कृत इति भावः । तदभद्रम् । प्रथमं तु ब्राह्मण एव मान्यः किं पुनर्ब्रह्मिष्ठो वेदार्थनिष्ठः कुतस्तरां दांतः कृतेंद्रियनिग्रह इति भावः ॥ २१ ॥ ब्राह्मणावज्ञानमनर्थहेतुरित्यत्र पुराणांतरवाक्यं प्रमाणयति—तदु
क्तमिति । यो नोत्तिष्ठेत्स इत्यर्थः । हे सुरा अपि यूयं गुर्ववज्ञानादीदृशा जाताः का पुनरन्येषां गतिरिति भावः ॥ २२ ॥ मघवन्निति । मह्यते पूज्यत इति मघवेति निरुक्त्या त्वं तु स्वयं पूज्यत्वेन पूज्यपूजाव्यवहारं
जानन्नपि किमर्थं तथा कृतवानिति भावः " मान्या एव हि मान्यानां मानं कुर्वंति नेतरे । रुद्रो बिभर्त्ति मूर्ध्नेन्दुं स्वर्भानुस्तं जिघृक्षति ॥ " इति न्यायेनेत्यर्थः । अथैषामेतादृशं बलं दृश्यते

त्रिविष्टपं किं गणयंत्यभेद्यमंत्रा भृगूणामनुशिक्षितार्थाः ॥ न विप्रगोविंदगवीश्वराणां भवंत्यभद्राणि नरेश्वराणाम् ॥ २४ ॥ तद्विश्वरूपं भजताशु विप्रं तपस्विनं त्वाष्ट्रमथात्मवंतम् ॥ सभाजितोऽर्थान्स विधास्यते वो यदि क्षमिष्यध्वमुतास्य कर्म ॥ २५ ॥ श्रीशुक उवाच ॥ त एवमुदिता राजन्ब्रह्मणा विगतज्वराः ॥ ऋषिं त्वाष्ट्रमुपव्रज्य परिष्वज्येदमब्रुवन् ॥ २६ ॥ देवा ऊचुः ॥ वयं तेऽतिथयः प्राप्ता आश्रमं भद्रमस्तु ते ॥ कामः संपाद्यतां तात पितॄणां समयोचितः ॥ २७ ॥ पुत्राणां हि परो धर्मः पितृशुश्रूषणं सताम् ॥ अपि पुत्रवतां ब्रह्मन्किमुत ब्रह्मचारिणाम् ॥२८॥ आचार्यो ब्रह्मणो मूर्तिः पिता मूर्तिः प्रजापतेः ॥ भ्राता मरुत्पतेर्मूर्तिर्माता साक्षात्क्षितेस्तनुः ॥ २९ ॥ दयाया भगिनी मूर्तिर्धर्मस्यात्माऽतिथिः स्वयम् ॥ अग्नेरभ्यागतो मूर्तिः सर्वभूतानि चात्मनः ॥ ३० ॥

वेवापचयोपचयकारणमित्यसुरदृष्टांतेनाह । मघवन्निति । द्विषतः शत्रून् । काव्यं भार्गवं गुरुमेवाऽऽसेव्योपचितान् । उपचितत्वमेवाह आददीरन्गृह्णीयुः ॥ २३ ॥ अभेद्यो मंत्रो येषाम् । अनुशिक्षितार्थाः शिष्याः । यतो विप्रा गोविंदो गावश्चेश्वरा अनुग्राहका येषां तेषामेवाभद्राणि न भवंत्यन्येषां तु भवंति ॥ २४ ॥ तत्तस्मात् । अथानंतरमेव भजत । अस्य कर्मासुरपक्षपातम् ॥ २५ ॥ उदिता उक्ताः विगतज्वरा निश्चिंताः ॥ २६ ॥ २७ ॥ २८ ॥ अतिथीनां पितॄणां च प्रशंसार्थमाहुः । आचार्य उपनीय वेदाध्यापकः । ब्रह्मणो वेदस्य मूर्तिः ॥ २९ ॥ धर्मस्यात्मा मूर्तिरतिथिः । स्वयं साक्षात् । आत्मनः श्रीविष्णोः । यद्वा आत्मनः स्वस्य । सर्वभूतेष्वात्मदृष्टिः

यथा स्मापि निलयनं सत्यलोकमाददीरन् । तत्र हेतुः—भृगुदेवता गुरुभक्ताः ॥ २३ ॥ अत्र सामदानदंडा उपाया न संभवंतो दृश्यंते भेदोप्यशक्य इत्याह—मंत्रो मंत्रणा भृगूणां शुक्राचार्याणामनुशिक्षितमेवार्थः पुरुषार्थत्वेनोपादेयो येषां ते । ननु तर्हि किं वयं मरिष्याम एवेति तत्र साश्वासमाह—न विप्रेति ॥ २४ ॥ ब्राह्मणशक्तिरचिंत्यविभवेत्याह—तदिति । यत इत्थं तत्तस्माद्धेतोः । त्वाष्ट्रं त्वष्टुरादित्यस्य त्वष्टा हि कश्यपविप्रस्यात्मजत्वाद्विप्र एव वस्तुतोऽतस्तत्पुत्रस्य सुतरां तपश्चर्यावेदाभ्यासनिष्ठत्वाद्विप्रत्वमस्तीत्याह विप्रमिति । विशेषेण प्राति पूरयति स्वसेविमनोरथानिति विप्रः "समीहितार्थार्पणकामधेनवः" इत्युक्तेः । 'प्रा—पूरणे' अतः "आतश्चोपसर्गे" इति कः । यद्वा—उप्यते बीजी क्रियते धर्ममत्रेति विप्रः औणादिकरप्रत्यये धातोरस्येत्वे रूपम् "क्षेत्रत्वाद्धर्मबीजानां सेवकाभीष्टपूरणात् ॥ ब्राह्मणः कथ्यते विप्रः शब्दार्थनिपुणैर्बुधैः ॥" इति संहितोक्तेः । आत्मवंतं ज्ञानिवरम् । स विश्वरूपः । सभाजितः श्रद्धाभक्तिभ्यामर्चितः । वो युष्माकं मनोरथान्करिष्यते । अस्य विश्वरूपस्य ॥ २५ ॥ ते देवाः । इदं वक्ष्यमाणम् ॥ २६ ॥ तातेति प्रियत्वद्योतनायोक्तम् ॥ २७ ॥ हे ब्रह्मन्निति । त्वं त्वदर्थिजनमनोरथकरणजन्यधर्म्मफलं जानास्येवेति भावः । ममात्मजो मम पितृसेवनं करिष्यत्येवाहं धर्मांतरं करिष्यामीति पुरुषेण न मंतव्यं किन्तु पुत्रे सत्यपि स्वयं पितृसेवनं कर्त्तव्यं तस्यैव परमधर्मत्वात् । 'पितृसेवा परो धर्मः' इति पुराणांतरोक्तेः ॥ २८ ॥ पित्रादिसेवनेन रुद्रादिदेवतासेवनमपि कृतं स्यात्तेषु तेषां विशेषतः सन्निधानादित्याह—आचार्य इति "उपनीय तु यः शिष्यान्वेदमध्यापयेद्द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥" इति स्मृतेः । यद्वा—"स्वयमाचरति शिष्यानाचारे स्थापयत्यपि । आचिनोति हि शास्त्रार्थमाचार्य्यस्तेन कथ्यते" इति कुलार्णवे । प्रजापतेः स्रष्टुर्महादेवस्य वा "प्रजापतिः शिवः स्थाणुरुमेशो वृषवाहनः" इत्यभिधानात् । मरुत्पतेरिन्द्रस्य । क्षितेस्तनुर्मूर्त्तिः साक्षान्माता मूर्त्तिः संनिधानस्थानमित्यर्थः ॥ २९ ॥ विश्वनाथस्तु—अतिथिर्धर्मस्यात्मैव किं पुनर्मूर्त्तिरिति भाव इत्याह । अतिथिर्वैश्वदेवांते आगतो यः कश्चिदित्यर्थः । "शूद्रो वा यदि चांडालश्शत्रुर्वा ब्रह्मघातकः । आगतो वैश्वदेवांते सोऽतिथिः स्वर्गदायकः ॥" इति स्मृतेः । अभ्यागतो याज्ञवल्क्योक्तः षड्विधभि

तस्मात्पितॄणामार्तानामार्तिं परपराभवम् ॥ तपसाऽपनयंस्तात संदेशं कर्तुमर्हसि ॥ ३१ ॥ वृणीमहे त्वोपाध्यायं ब्रह्मिष्ठं ब्राह्मणं गुरुम् ॥ यथां ऽजसा विजेष्यामः सपत्नांस्तव तेजसा ॥ ३२ ॥ न गर्हयंति ह्यर्थेषु यविष्ठांघ्र्यभिवादनम ॥ छंदोभ्योऽन्यत्र न ब्रह्मन्वयो ज्यैष्ठ्यस्य कारणम्॥ ॥ ३३ ॥ ऋषिरुवाच ॥ अभ्यर्थितः सुरगणैः पौरोहित्ये महातपाः ॥ स विश्वरूपस्तानाह प्रसन्नः श्लक्ष्णया गिरा ॥ ३४ ॥ विश्वरूप उवाच ॥ विगर्हितं धर्मशीलैर्ब्रह्मवर्चउपव्ययम् ॥ कथं नु मद्विधो नाथा लोकेशैरभियाचितम् ॥ प्रत्याख्यास्यति तच्छिष्यः स एव स्वार्थ उच्यते ॥३५॥

कर्तव्येत्यर्थः ॥ ३० ॥ परेभ्यः पराभव एवार्तिस्ताम् ॥ ३१ ॥ संदेशमाहुः । वृणीमह इति ॥ ३२ ॥ ननूपाध्यायत्वे कनिष्ठस्य ममाभिवंदनं करिष्यथ तच्च गर्हितं तत्राहुः । नेति । अर्थेषु प्रयोजननिमित्तं यविष्ठानामभिवादनं न निंदंति । किं च छंदोभ्यो मंत्रेभ्योऽन्यत्र वयो ज्यैष्ठ्यस्य कारणं न तु मंत्रेषु । अतोऽस्मभ्यं मंत्रदातृत्वेन त्वमेव ज्येष्ठो भविष्यसि । यद्वा छंदोभ्योऽन्यत्र वेदान्विहाय वय एव ज्यैष्ठ्यस्य कारणं न भवति किं तु वेदा एव मुख्यं कारणं तत्साम्ये तु वयः। वेदज्ञत्वाच्च त्वमेव ज्येष्ठ इत्यर्थः ॥ ३३ ॥ ३४ ॥ निंदितमपीदं युष्मद्याच्ञाभंगभयेन करिष्यामीत्याह सार्धेन । विगर्हितं पौरोहित्यमिति शेषः । धर्मशीलैः अधर्महेतुत्वात् । किं च ब्रह्मवर्चउपव्ययं पूर्वसिद्धस्य ब्रह्मवर्चसो व्यय करम् । प्रत्याख्यातुं च मादृशो नार्हतीत्याह । कथं न्विति । तेषां लोकेशानां शिष्यः शिक्षणार्हः । स एव प्रत्याख्यानाभाव एव हि शिष्यस्य स्वार्थ उच्यते ॥ ३५ ॥

क्षुको ग्राह्यः " यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः॥" इति । निरुपपदात्मशब्दस्य निजवाचकत्वमभिप्रेत्याह–यद्वेति । इत्यर्थ इति । " एक एव हि भूतात्मा भूते भूते व्यवस्थितः " इत्यादिश्रुतेरिति भावः ॥ ३० ॥ नन्वलं धर्मोपदेशस्तुतिभ्यां विवक्षितं ब्रूतेत्यत आह–तस्मादिति । यत इत्युक्तरीत्या वयं पितरस्तस्माद्धेतोः ॥ ३१ ॥ उपाध्यायं पुरोहितं पुरोहितोपाध्यायशब्दौ पर्यायावेव "वृतः पुरोहितस्त्वाष्ट्रो महेंद्रायानुपृच्छतः" इत्युपसंहारादुपाध्याय एव पुरोहितो भवत्यन्यथा"उपक्रमोपसंहारावेकरूपाविति स्थितिः"इति न्यायभंगप्रसंगः स्यादिति भावः।किञ्च–पुरोहितोपाध्यायाचार्यगुरुयाजक र्त्विक्छब्दानामेक एवार्थो न भिन्नस्तथादर्शनात् । ' नैतज्जानंत्युपाध्यायाः ' इति चतुर्थे " पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः । शंडामर्कौ सुतौ तस्य " इत्यत्र पुरोहितशब्दं प्रयुज्य तदग्रे " गृहमानीतमाहूय प्रह्लादं दैत्ययाजकाः " इह तत्पुत्रेषु याजकपदप्रयोगो दृश्यते तेन याजका एव पुरोहिता न त्वयाजका इति ज्ञायते सप्तमवाक्येन । किञ्च– " निमिरिक्ष्वाकुतनयो वशिष्ठमवृतर्त्विजम् " इति नवमे । श्रीदशमेऽपि 'गर्गः पुरोहितो राजन् ' इत्यत्र पुरोहितपदं प्रयुज्य तत्रैव ' यदूनामहमाचार्यः ' तत्रैवाचार्यपदं श्रीशुकः प्रायुंक्त । " पुरोहितोऽथर्वविद्वै जुहाव ग्रहशांतये " इत्यादिदशमे पुनरप्युक्तम् । किं बहुना कर्मकारयितैव मुख्य पुरोहितपदवाच्यो यश्चाधुनिकैर्महामूर्खे कंकणादिबंधके गोत्रोच्चारयितारि पुरोहितपदं प्रयुज्यते तत्पुरोहितार्थाज्ञानत एवेति ध्येयम् । ये च ग्राममात्रस्य याजकत्वेन वृतास्ते ग्रामयाजका ग्रामपुरोहिता एवोपाध्यायशब्देनोच्यंते । अत्र बहु वक्तव्यमस्ति तदस्मत्संगृहीतदाननिर्णयतोऽवसेयं विशेषश्रवणेच्छायामित्युपरम्यते । प्रकृतमनुसरामः–यथा सपत्नाञ्शत्रूंस्तव तपस्तेजसा विजेष्यामस्तथा त्वां वृणीमह इति योज्यम् ॥ ३२ ॥ अत्राक्षिपति–नन्विति । अन्यत्रान्येषु व्यावहारिककृत्येषु । यविष्ठांघ्र्यभिवादनं कनिष्ठनमनं न गर्हयंति न अपि तु गर्हयंत्येव यतो वय एव ज्यैष्ठ्यस्य कनिष्ठत्वस्य च कारणमिति अधिकवयस्त्वे ज्यैष्ठ्यमल्पवयस्त्वे कनिष्ठत्वं चेति अस्त्विदम् । वैदिककृत्येषु न तु तत्र छंदोज्ञत्वमेव ज्यैष्ठ्यस्य कारणमित्यर्थः । किञ्च–वेदविदे विप्रस्य सर्वदेवाधिष्ठानत्वेनापि पूज्यत्वं तथा च श्रुतिः–" सर्वा देवता वेदविदि ब्राह्मणे निवसंति " इति वेदाभिज्ञानमेव ज्यैष्ठ्यस्य कारणं न वय इति । इत्यर्थ इति । तस्मात्त्वां वेदाधिक्यज्ञानवत्त्वेन पौरोहित्यं कुर्वन्नोऽस्माकं मंत्रप्रदो गुरुर्भवेति भावः ॥ ३३ ॥ सर्वज्ञत्वेन ज्ञाततदैन्यत्वाद्दषिरित्युक्तम् । ऋषिः शुकः ॥ ३४ ॥ अधर्महेतुत्त्वात्प्रतिग्रहग्रहणा

अकिंचनानां हि धनं शिलोंछनं तेनेह निर्वर्तितसाधुसत्क्रियः ॥ कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं हृष्यति येन दुर्मतिः ॥ ॥ ३६ ॥ तथाऽपि न प्रतिब्रूयां गुरुभिः प्रार्थितं कियत् ॥ भवतां प्रार्थितं सर्वं प्राणैरर्थैश्च साधये ॥ ३७ ॥ श्रीशुक उवाच ॥ तेभ्य एवं प्रतिश्रुत्य विश्वरूपो महातपाः ॥ पौरोहित्यं वृतश्चक्रे परमेण समाधिना ॥ ३८ ॥ सुरद्विषां श्रियं गुप्तामौशनस्यापि विद्यया ॥ आच्छिद्यादान्महेंद्राय वैष्णव्या विद्यया विभुः ॥ ३९ ॥ यया गुप्तः सहस्राक्षो जिग्येऽसुरचमूर्विभुः ॥ तां प्राह स महेंद्राय विश्वरूप उदारधीः ॥ ४० ॥ इति श्रीभागवते महापुराणे षष्ठस्कंधे इंद्रादिदेवैर्विश्वरूपस्य पौरोहित्याय वरणं नाम सप्तमोऽध्यायः ॥ ७ ॥ छ ॥ राजोवाच ॥ यया गुप्तः सहस्राक्षः सवाहान्रिपुसैनिकान् ॥ क्रीडन्निव विनिर्जित्य त्रिलोक्या बुभुजे श्रियम् ॥ १ ॥

ननु पौरोहित्येन धनलाभाद्धर्मः सिद्ध्येत् अन्यथा निर्धनस्य कुतो धर्मः । अत एव तेन लोको हृष्यति तत्राह । अकिंचनानां शिलोंछनं हि धनम् । क्षेत्रे स्वाम्युपेक्षितकणिशोपादानं शिलम् । हट्टादौ पतितव्रीह्यादेरुपादानमुंछनम् । इह गृहाश्रमे । तेनैव निर्वर्तिता संपादिता साधूनां सत्क्रिया येन ॥ ३६॥ कियदेतत्प्रार्थितमल्पमेव । अभ्यधिकमपि करिष्यामीत्याह । भवतामिति ॥ ३७॥ परमेण समाधिना परमोद्यमेन ॥ ३८॥ वैष्णव्या श्रीनारायणकवचात्मिकया॥ ३९ ॥ असुरचमूर्दैत्यसेनाः जिग्ये तां विद्यां तु तस्मै विश्वरूप उक्तवान्॥ ४०॥ इति षष्ठस्कंधे टीकायां सप्तमोऽध्यायः॥ ७॥ अष्टमे विश्वरूपस्तु वर्म नारायणात्मकम् । इंद्राय प्राह येनेंद्रो गुप्तो दैत्यानथाजयत्॥ १॥ त्रिलोक्याः

दिना धर्मनाशकत्वात् । न केवलं धर्मस्यैव नाशोपि तु ब्रह्मतेजसोऽपीत्याह किञ्चेति । तर्हि तन्न शक्यमित्युच्यतां तत्राह–प्रत्याख्यातुमिति । नाथा इति । हे उपतप्ता इत्यर्थः । न ह्युपतप्तोपेक्षा योग्या धर्मनाशकत्वात् । "ब्राह्मणः समदृक् शांतो दीनानां समुपेक्षकः । स्रवते ब्रह्म तस्यापि भिन्नभांडात्पयो यथा ॥" इति चतुर्थस्कंधोक्तेः । यद्यपि विगर्हितं तथापि लोकेशत्वात्सर्वगुरूणां युष्माकं लोकांतर्गतत्वादहमपि शिष्य एवातो गुर्वाज्ञालंघनदोषभयान्निन्दितमपि पौरोहित्यं करिष्याम्येवेति भावः । स एव प्रत्याख्यानाभाव एव । शिष्यस्य स्वार्थः स्वार्थसिद्धिद इत्यर्थः ॥३५॥ अत्राक्षिपति–नन्विति । लूनसस्ये केदारे स्वामिना च परित्यक्ते एकैकावशिष्टमंजरीग्रहणं शिलं तादृशे क्षेत्रे एकैकव्रीहिग्रहणमुञ्छनम् । "उञ्छः कणश आदानं शिलं तद्युतवल्लरेः" इति यादवः । तेन शिलोंछनेनैव न तु प्रतिग्रहादिना निर्वर्त्तिताः साधिताः । साधूनां वेदानुयायिनां सत्यः क्रिया अग्निहोत्रादिलक्षणा येन एवंविधो विशेषेण गर्हितं पौरोधसं पौरोहित्यं कथं करोमि विगर्हितत्वं त्वस्य विगर्हितवस्तूनामाद्यक्षरनिर्मितनामत्वात् । तदुक्तं शार्ङ्गधरेण "पुरीषस्य च रोषस्य हिंसायास्तस्करस्य च । आद्याक्षराणि संगृह्य वेधाश्चक्रे पुरोहितम्॥" इति । किंच–पुरोहित इत्युक्ते पुरीषादिस्मरणस्य नाममात्रैकदेशन्यायेन संभवात् । 'न निषिद्धं विचिन्तयेत्' इति निषेधविषयत्वात्तच्चिंतनस्यापि प्रत्यवायजनकत्वं किमुत तत्स्वीकारस्येति भावः । अत एव श्रीरामायणे । "श्रीराम त्वद्गुरुत्वार्थं पौरोहित्यं विगर्हितम् । स्वीकृतं हि मया नाथ तपस्तेजोयशोनुदम्" इति श्रीवशिष्ठेनाप्युक्तम् । येन पौरोहित्येन दुर्मतिर्विषयाभिलाषी पुमानेव हृष्यति न तु सुमतिरित्यर्थः । यद्वा–दुष्टा मतिरेव हृष्यति न तु शोभना शास्त्रतात्पर्यग्राहिणीति भावः ॥ ३६ ॥ यद्यपि सर्वथानिंद्यमेतत्तथापि न प्रतिब्रूयां प्रत्याख्यास्ये । एतेन प्राणधनादिव्ययेनापि गुर्वर्थः साधनीय इत्यसूचि ॥ ३७ ॥ तेभ्यो देवेभ्यः ॥ ३८ ॥ औशनस्या उशनसि विद्यमानया। गुप्तामपि आच्छिद्य स्वीकृत्य । वैष्णव्या हयग्रीवब्रह्मविद्याख्यया । विभुस्तपोबलवान् विश्वरूपः ॥३९॥ यया वैष्णव्या विद्यया । तां विद्याम् ॥ ४०॥इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥ येन नारायणवर्मणा ( १ ) "अकामः सर्वकामो वा मोक्षकामो यजेद्धरिम्" इत्युक्तं प्रपञ्चयति । पूर्वाध्याये सूचितां विद्यां लोकहिताय परीक्षित्पृच्छति–राजेति ।

भगवंस्तन्ममाख्याहि वर्म नारायणात्मकम् ॥ यथाततायिनः शत्रून्येन गुप्तोऽजयन्मृधे ॥ २ ॥ श्रीशुक उवाच ॥ वृतः पुरोहितस्त्वाष्ट्रो महेंद्रायानुपृच्छते ॥ नारायणाख्यं वर्माह तदिहैकमनाः शृणु ॥ ३ ॥ विश्वरूप उवाच ॥ धौतांघ्रिपाणिराचम्य सपवित्र उदङ्मुखः ॥ कृतस्वांगकरन्यासो मंत्राभ्यां वाग्यतः शुचिः ॥ ४ ॥ नारायणमयं वर्म सन्नह्येद्भय आगते ॥ पादयोर्जानुनोरूर्वोरुदरे हृद्यथोरसि ॥ ५ ॥ मुखे शिरस्यानुपूर्व्यादोंकारादीनि विन्यसेत् ॥ ॐ नमो नारायणायेति विपर्ययमथापि वा ॥ ६ ॥ करन्यासं ततः कुर्याद्द्वादशाक्षरविद्यया ॥ प्रणवादियकारांतमंगुल्यंगुष्ठपर्वसु ॥ ७ ॥ न्यसेद्धृदय ओंकारं विकारमनुमूर्धनि ॥ षकारं तु भ्रुवोर्मध्ये णकारं शिखया दिशेत् ॥ ८ ॥

संबंधिनीं श्रियम् ॥ १ ॥ २ ॥ ३ ॥ मंत्राभ्यामष्टाक्षरद्वादशाक्षराभ्यां कृतः स्वांगेषु करयोश्च न्यासो येन ॥ ४ ॥ नारायणमयं वर्म संनह्येद्धीयात् । तत्राष्टाक्षरेण पादाद्यष्टांगेषु न्यासमाह । पादयोरिति सार्धेन ॥ ५ ॥ प्रणवसंपुटितमोंकाराद्येकैकमक्षरं विन्यसेत् । विपर्ययं यथा भवत्येवं शिरआदि पादांतं वा विन्यसेत् । उत्पत्तिन्यासं संहारन्यासं वा कुर्यादित्यर्थः ॥ ६ ॥ द्वादशाक्षरस्योद्धारः प्रणवादियकारांतमिति । प्रणवसंपुटितमेकैकमक्षरं दक्षिणतर्जनीमारभ्य वामतर्जनीपर्यंतमंगुलीषु परिशिष्टमक्षरचतुष्टयमंगुष्ठयोराद्यंतपर्वसु न्यसेत् ॥ ७ ॥ मंत्रांतरन्यासमाह । न्यसेदिति । षकारणकारयोर्विश्लेषेण षडक्षराणि हृदयादिषु न्यसेत् ॥ ८ ॥

वाहा अश्वाः प्रेरका वा तत्सहितान् ॥ १ ॥ भगवन्निति । साक्षाद्विष्णुरूपोऽसीति भावः । वर्म कवचम् 'वर्म स्याद्बाहुजे दंशे' इति कोशात् । दंशः कवचम् । मृधे युद्धे ॥ २ ॥ त्वाष्ट्रो विश्वरूपः ॥ ३ ॥ धौतौ प्रक्षालितावंघ्री पाणी च येन स तथा । सपवित्रः पवित्राभ्यां सहितः पवित्रस्वरूपमाह—"पवित्रं ब्राह्मणस्यैव चतुर्भिर्दर्भपिंजुलैः । एकैकहीनमुद्दिष्टं वर्णेवर्णे यथाक्रमम् ॥ सर्वेषां वा भवेद्द्वाभ्यां पवित्रं ग्रथितं नवम् । अनामिकयोर्मध्यपर्व पवित्रस्थानमुच्यते ॥" इति हारीतः । हेमाद्रौ तु—"अन्यान्यपि पवित्राणि कुशदूर्वात्मकानि च । हेमात्मकपवित्रस्य कलां नार्हंति षोडशीम्" इत्युक्तम् ॥ ४ ॥ ५ ॥ प्रणवसंपुटितमुभयत्र प्रणवं दत्त्वेत्यर्थः । तथा हि—ॐ ॐ ॐ पादयोः । ॐ न ॐ जानुनोः । ॐ मो ॐ ऊर्वोः । ॐ ना ॐ उदरे । ॐ रा ॐ हृदि । ॐ य ॐ उरसि । ॐ णा ॐ मुखे । ॐ य ॐ शिरसि । इत्युत्पत्तिन्यासः । ॐ य ॐ शिरसि । ॐ णा ॐ मुखे । ॐ य ॐ उरसि । ॐ रा ॐ हृदि । ॐ ना ॐ उदरे । ॐ मा ॐ ऊर्वोः । ॐ न ॐ जानुनोः । ॐ ॐ ॐ पादयोरिति । इत्यर्थ इति । "क्रमेणोत्पत्तिराख्याता संहारो व्युत्क्रमेण हि" इत्युक्तेर्थः क्रमेण न्यासः स उत्पत्तिन्यासो यश्च व्युत्क्रमेण वैपरीत्येन न्यासः स संहारन्यास इति भावः । न्यसेंगुलिनियमोपि तंत्रसारे "ललाटे नासिकामध्ये विन्यसेन्मुखवृत्तके । तर्जनीमध्यमानामाऽवद्धनामां च नेत्रयोः ॥ अंगुष्ठं कर्णयोश्चैव कनिष्ठांगुष्ठके नसोः । मध्यास्तिस्रो गंडयोश्च मध्यमामोष्ठयोर्न्यसेत् ॥ अनामां दंतयोश्चैव मध्यमामुत्तमांगके । मुखेऽनामां मध्यमां च हस्ते पादेऽथ पार्श्वयोः ॥ कनिष्ठानामिकामध्यास्ताश्चेत्पृष्ठेऽथ विन्यसेत् । ताः सांगुष्ठा नाभिदेशे सर्वाः कुक्षौ च विन्यसेत् ॥ हृदये च तलं सर्वमंसयोश्च ककुत्स्थले । अज्ञात्वा विन्यसेद्यस्तु न्यासः स्यात्तस्य निष्फलः ॥ पादवज्जानुनोरूर्वोर्हृद्वदुरसि नाभिवत् । गुह्येंसवद्बाह्वोः शिरोवच्छिखायां यथायथं न्यसेत्" इति ॥ ६ ॥ ततोऽष्टाक्षरन्यासानंतरम् । द्वादशाक्षरविद्यया 'ॐ नमो भगवते वासुदेवाय' इति मंत्रेण । न्यासप्रकारमाह—प्रणवादीति । ॐ ॐ ॐ दक्षिणतर्जन्याम् । ॐ न ॐ दक्षिणमध्यमायाम् । ॐ मो ॐ दक्षिणानामिकायाम् । ॐ भ ॐ दक्षिणकनिष्ठायाम् । ॐ ग ॐ वामकनिष्ठायाम् । ॐ व ॐ वामानामिकायाम् । ॐ ते ॐ वाममध्यमायाम् । ॐ वा ॐ वामतर्जन्याम् । ॐ सु ॐ दक्षिणांगुष्ठोर्ध्वपर्वणि । ॐ दे ॐ दक्षिणांगुष्ठाधःपर्वणि । ॐ वा ॐ वामांगुष्ठोर्ध्वपर्वणि । ॐ य ॐ वामांगुष्ठाधःपर्वणीति विवेकः ॥ ७ ॥ अथ षड्वर्णमंत्रेण हृदयादिन्यासमप्याह—न्यसे

वेकारं नेत्रयोर्युंज्यान्नकारं सर्वसंधिषु॥मकारमस्त्रमुद्दिश्य मंत्रमूर्तिर्भवेद् बुधः॥९॥सविसर्गफडंतं तत्सर्वदिक्षु विनिर्दिशेत्॥ॐ विष्णवे नम इति॥१०॥ आत्मानं परमं ध्यायेद्ध्येयं षट्शक्तिभिर्युतम्॥विद्यातेजस्तपोमूर्तिमिमं मंत्रमुदाहरेत्॥११॥ॐ हरिर्विदध्यान्मम सर्वरक्षां न्यस्तांघ्रिपद्मः पतगेंद्रपृष्ठे॥ दरारिचर्मासिगदेषुचापपाशान्दधानोऽष्टगुणोऽष्टबाहुः॥१२॥ जलेषु मां रक्षतु मत्स्यमूर्तिर्यादोगणेभ्यो वरुणस्य पाशात् ॥ स्थलेषु मायाबटुवामनो ऽव्यात्त्रिविक्रमः खेऽवतु विश्वरूपः ॥१३॥ दुर्गेष्वटव्याजिमुखादिषु प्रभुः पायान्नृसिंहोसुरयूथपारिः ॥ विमुंचतो यस्य महा ट्टहासं दिशो विनेदुर्न्य पतंश्च गर्भाः॥१४॥ रक्षत्वसौ माऽध्वनि यज्ञकल्पः स्वदंष्ट्रयोन्नीतधरो वराहः ॥ रामोऽद्रिकूटेष्वथ विप्रवासे सलक्ष्मणोव्याद्भरताग्रजोस्मान् १५॥

मकारमस्त्रमुद्दिश्य ध्यात्वा ॥ ९ ॥ तन्मकारास्त्रं मः अस्त्राय फडित्येवं दिग्बंधे विनिर्दिशेत् ॥ १० ॥ ध्येयमीश्वररूपमात्मानं ध्यायेत् । षट्शक्तिभिरैश्वर्यादिभिर्भगशब्दवाच्याभिः । विद्या च तेजश्च तपश्च मूर्तिर्यस्य तम् । इमं वक्ष्यमाणं श्रीमन्नारायणकवचाख्यम् ॥ ११ ॥ अष्टगुणोऽणिमाद्यष्टैश्वर्ययुक्तः ॥ १२ ॥ यादसां गणा एव वरुणस्य पाशास्तस्मात् ॥ १३ ॥ अटवी आजिमुखं संग्रामोपक्रमश्च आदिर्येषां तेषु संकटस्थानेषु ॥ १४ ॥ असौ प्रसिद्धो वराहो मामध्वनि रक्षतु । यज्ञैरवयवरूपैः कल्प्यते

दिति । ॐ हृदये । वि मूर्द्धनि । अनु ॐकारन्यासानंतरम् । ष भ्रुवोः । ण शिखायाम् । शिखयेति तृतीया सतम्यर्थे ॥ ८ ॥ वे नेत्रयोः । न सर्वांगुलिसंधिषु । सर्वांगसंधिषु न्यासाविधानात् । मकारमस्त्रमसुरनिरासं ध्यात्वा मंत्रमूर्त्तिर्मंत्रदेवतासांनिधानयुक्तदेहो भवेद् बुधो मंत्राधिष्ठातृदेवताविग्रहज्ञानवान् ॥ ९ ॥ सर्वपदोपादानाद्विदिक्ष्वपि मः अस्त्राय फडित्युक्त्वा प्राच्यादिदिक्षु शिरस उपरि क्षोटिकां कुर्वन्हस्तं भ्रामयेदित्यर्थः । तेन दिग्विदिक्स्थितासुरादिप्रतिबंधो भवति । वस्तुतस्तु षडक्षरेऽपि प्रणवसंपुटितमेव न्यसेत् । तथाहि—ॐ ॐ ॐ हृदये । ॐ वि ॐ मूर्द्धनि । ॐ ष ॐ भ्रुवोः । ॐ ण ॐ शिखायाम् । ॐ वे ॐ नेत्रयोः । ॐ न ॐ सर्वांगुलिसंधिषु । ॐ म ॐ सर्वदेहं भगवत्संनिधानयुक्तं ध्यायेत् । ततो मः अस्त्राय फडिति दिग्बंधं कुर्यादित्यर्थः ॥ १० ॥ आत्मन ईश्वररूपत्वेन ध्यानमन्यैरधृष्यत्वकामनयाऽहंग्रहोपासनै विद्यादिमूर्त्तित्वकथनेन तत्फलदायकत्वं सूचितमस्य कवचस्य ॥ ११ ॥ ॐमिति मंगलार्थे । "ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा । कंठं भित्त्वा विनिर्यातौ तस्मान्मांगलिकावुभौ ॥" इत्युक्तेः । ननु भेदनात्कुतो मांगलिकत्वमिति चेन्महतां दूषणमपि भूषणं नीलकंठत्वादिति गृहाण समुद्रेण सह नदीनदादिवद्द्वयेयरूपेण सहैक्यं प्राप्तोऽपि पृथग्भूयापि तिष्ठन्स्वरक्षाप्रार्थनमंत्रमुदाहरेदित्याह—हरिरिति । पतगेंद्रो गरुडः । दरः शंखः अरि चक्रम् ॥ १२ ॥ सामान्येन सर्वतो रक्षां प्रार्थ्य देशविशेषेषु तत्तदधिष्ठातृस्वरूपेण भगवतो रक्षामंत्रानाह—जलेष्विति त्रिभिः । मथ्नाति हिनस्तीति मत् हयग्रीवाख्योऽसुरस्तं स्यति नाशयतीति मत्स्यः । 'मथि—हिंसायाम्' 'शिरो ममंथ तरसा' इति प्रयोगात् । केचित्तु मथित्वा विलोड्य सरतीति मत्स्यः । 'मंथ—विलोडने' 'सृ—गतौ' अतो ड्यप्रत्ययः वृत्तौ मथित्वेत्यस्य मयादेशः । यद्वा—माद्यति सत्यव्रतेन सह सप्तर्षिगणो ज्ञानावाप्त्याऽनेनेति मत्स्यः । "अश्रौषीदृषिभिः सार्द्धमात्मतत्त्वमसंशयम्" इत्यष्टमे वक्ष्यमाणत्वात् । 'मदी—हर्षे' अतः स्यप्रत्यय औणादिकः । मायया देवकृपया बटुर्ब्रह्मचारी चासौ वामनो वामनरूपः । मायाबटुना रूपेण वामयति त्याजयति त्रैलोक्यश्रियं बलेरिति वा । मायया छद्मेन वटति वेष्टते बलिमिति मायावटुः 'वट—वेष्टने' स चासौ वामनश्चेति तथा ॥ १३ ॥ आदिना पर्वतादिग्रहः । नॄन् सिनोति बध्नातीति नृसिर्हिरण्यकशिपुर्विषयसमूहोऽविद्या वा तं हंति नाशयतीति नृसिंहः । खप्रत्ययो डित्वश्चार्षे । यद्वा—त्रियंते विक्षिप्यंते लोका यैस्ते नरः सिंहसर्पव्याघ्ररोगादयः 'नॄ—विक्षेपे' तान् हिनस्तीति नृसिंहः । "सिंहे वर्णविपर्ययः" इति व्याकरणांतरोक्तेः ॥ १४ ॥ यज्ञाः कल्पाः समर्था यतः स यज्ञकल्पः । यज्ञैर्यज्ञावयवैः कल्प्यते समर्थ्यत इति यज्ञकल्पः । "स्रुक् तुड आसीत्स्रुव ईशानासयोरिडोदरे चमसाः कर्णरंध्रे" इत्याद्युक्तेः । वरमहो दिवसो

मामुग्रधर्मादखिलात्प्रमादान्नारायणः पातु नरश्च हासात् ॥ दत्तस्त्वयोगादथ योगनाथः पायाद्गुणेशः कपिलः कर्मबंधात् ॥ १६ ॥ सनत्कुमारोऽवतु कामदेवाद्धयशीर्षा मां पथि देवहेलनात् ॥ देवर्षिवर्यः पुरुषार्चनांतरात्कूर्मो हरिर्मां निरयादशेषात् ॥ १७ ॥ धन्वंतरिर्भगवान्पात्वपथ्याद्द्वंद्वाद्भयादृषभो निर्जितात्मा ॥ यज्ञश्च लोकादवताज्जनांताद्बलो गणात्क्रोधवशादहींद्रः ॥ १८ ॥ द्वैपायनो भगवानप्रबोधाद् बुद्धस्तु पाखंडगणात्प्रमादात् ॥ कल्किः कलेः कालमलात्प्रपातु धर्मावनायोरुकृतावतारः ॥ १९ ॥

निरूप्यत इति तथा । उन्नीतोद्धृता धरा येन सः । अद्रिकूटेषु गिरिशिखरेषु रामो जामदग्न्यः विप्रवासे दूरप्रवासे॥ १५॥ उग्रधर्मादभिचारादिलक्षणात् । हासाद्दर्वान्नरोऽवतु । दत्तो दत्तात्रेयः । अयोगाद्योगभ्रंशात् ॥ १६॥ पथि यद्देवानां हेलनं नमस्कारमकृत्वा गमनं तस्मात् । पुरुषार्चनस्यांतराद्देवपूजाछिद्राद् द्वात्रिंशदपराधरूपा न्नारदः॥ १७॥ लोकाज्जनापवादाद्यज्ञः।जननिमित्तो योंत उपघातस्तस्माद्बलभद्रोऽवतात् । कृतांतादिति पाठे कृतांतात्कालाद्रक्षतु । क्रोधवशात्सर्पाणां गणात् अहींद्रः शेषः॥ १८॥ कालम

यत्स्मरणादिनेति वराहः । अहः पदं कालोपलक्षकम् । "तस्यर्त्ते यत्क्षणो नीत उत्तमश्लोकवार्त्तया" इत्युक्तेः समासान्तष्टजार्षः । रमते दुष्टक्षत्रहनने क्रीडते इति रामः परशुरामः । भरताग्रजो दाशरथी रामः विविधप्रवासे देशांतरगमने ॥ १९ ॥ स्वपरोद्भवेभ्य उपद्रवेयः । रक्षामंत्रानाह चतुर्भिः–नारायणोऽखिलांतर्यामित्वादभिचारादिवारणसमर्थः । नारं नरसमूहमयते प्रेरयतीति व्युत्पत्तेः नरो नीतिकुशलः 'नृ–नये 'हासो हास्ये च गर्वे च' इत्यभिधानात् । दत्तः सर्वमनोरथदातादायि सर्वमनेनेति दत्तः । योगभ्रंशाद्भक्तिविघातकोपद्रवात् । योगानां भक्तियोगादीनां नाथः । कं सुखं पाति रक्षतीति कपि ज्ञानं तल्लाति ददातीति कपिलः । कर्मबंधात्संसारात् । गुणेशो गुणनियंतृत्वात्तद्द्वारणेन तत्कृतकर्मबंधमपि वारयितुं समर्थः ॥ १६ ॥ सनत्कुमारस्य नैष्ठिकत्वात्तद्ध्यातॄणामपि कामपीडा न भवतीति भावः । कामेनेच्छया दीव्यति द्योतत इति कामदेवस्तस्मात् हयग्रीवः । द्वात्रिंशदपराधास्तु पञ्चरात्रे–"यानैर्वा पादुकैर्वापि गमनं भगवद्गृहे । देवोत्सवाद्यसेवा च ह्यप्रणामस्तदग्रतः ॥ ( १ ) । उच्छिष्टे वाऽप्यशौचे वा भगवद्वंदनादिकम् । एकहस्तप्रणामश्च तत्पुरस्तात्प्रदक्षिणाम्॥ (२) । पादप्रसारणं चाग्रे तथा पर्यंकबंधनम् । शयनं भक्षणं चापि मिथ्याभाषणमेव च ॥ (३) । उच्चैर्भाषा मिथो जल्पो रोदनादि च विग्रहः । निग्रहानुग्रहौ चैव नृषु च क्रूरभाषणम् ॥ (४) । कंबलावरणं चैव परनिन्दा परस्तुतिः । अश्लीलभाषणं चैव ह्यधोवायुविमोक्षणम् ॥ (५) । शक्तौ गौणोपचारश्च ह्यनिवेदितभक्षणम् । तत्तत्कालोद्भवानां च फलादीनामनर्पणम् ॥ ( ६ ) । विनियुक्तावशिष्टस्य प्रदानं व्यंजनादिके । पृष्ठी कृत्वासनञ्चैव परेषामभिवादनम् ॥ (७) । गुरौ मौनं निजस्तोत्रं देवतानिंदनं तथा । अपराधा इमे विष्णोर्द्वात्रिंशत्परिकीर्त्तिताः ॥ ( ८ ) " इति । कौ भूमावप्यूर्मिर्वेगो यस्य सः कूर्मः । जलचरेषु कूर्मो भूमावपि शीघ्रं चलतीति प्रसिद्धम्।यद्वा–कुत्सितेषूर्मिर्यस्य स कूर्म इति निरुक्तेर्नारकाणां कुत्सितत्वात्तत्र तद्भयमुचितमेव निरयाद्दुःखाद्वा ॥ १७ ॥ अपथ्याद्रोगकारिद्रव्यात् । धं धनं धैर्यं वा नाशयंतीति धनवो रोगास्तेषामन्तं राति ददातीति धन्वंतरिः । द्वंद्वात्सुखदुःखस्तुतिनिंदादिरूपद्वंद्वसमूहात् । ऋष्यते ज्ञायते सर्वमनेनेति ऋषं ज्ञानम् इगुपधत्वात्कः तेन भाति शोभत इति ऋषभः । निर्जितात्मा वशीकृतेंद्रियग्रामः । 'आत्मा जीवेंद्रियग्रामधृतिबुद्धिमनस्सु च' इति कोशात् । लोक्यते भाष्यत इति लोकोऽपवादोऽकीर्त्तिरिति यावत् । यज्ञ इति । यजनकर्तुरपवादः स्वयमेव नश्यतीति भावः । इह बलभद्रस्य शेषादवताराभिप्रायेणान्यत्वं कृतांतादित्यधिकशक्तित्वं च दर्शितम् ॥ १८ ॥ अप्रबोधात्प्रबोधाभावादज्ञानात् । बुद्धस्य पाखंडप्रवर्त्तकत्वात्स एव स्वप्रवर्त्तितपाखंडसमूहाद्रक्षत्विति भावः । प्रमां यथार्थज्ञानमत्ति नाशयतीति प्रमादस्तस्मात् । 'तद्वति तत्प्रकारकानुभवो यथार्थः सैव

मां केशवो गदया प्रातरव्याद्गोविंद आसंगवमात्तवेणुः॥ नारायणः प्राह्ण उदारशक्तिर्मध्यंदिने विष्णुररींद्रपाणिः ॥२०॥देवोऽपराह्णे मधुहोग्रधन्वा सायं त्रिधामाऽवतु माधवो माम् ॥ दोषे हृषीकेश उतार्धरात्रे निशीथ एकोऽवतु पद्मनाभः ॥ २१ ॥ श्रीवत्सधामापररात्र ईशः प्रत्यूष ईशो सिधरो जनार्दनः ॥ दामोदरोऽव्यादनुसंध्यं प्रभाते विश्वेश्वरो भगवान्कालमूर्तिः ॥ २२ ॥ चक्रं युगांतानलतिग्मनेमिभ्रमत्समंताद्भगवत्प्रयुक्तम् ॥ दंदग्धिदंदग्ध्यरिसैन्यमाशु कक्षं यथा वातसखो हुताशः ॥ २३ ॥

लभूतात्कलेः कल्किः । धर्मावनाय धर्मरक्षणायोरुर्महान्कृतोऽवतारो येन ॥ १९ ॥ दिनस्य षट्सु भागेषु क्रमेण प्रातरादिसंज्ञेषु रात्रेश्च प्रदोषादिसंज्ञेषु रक्षाप्रार्थनम् । मां केशव इति त्रिभिः । आसंगवं संगवमभिव्याप्य ॥ २० ॥ त्रिधामा ब्रह्मादित्रिमूर्तिः श्रीमाधवः । दोषे प्रदोषे हृषीकेशोऽवतु आर्धरात्रे अर्धरात्रिपर्यंते काले निशीथे चैक एव पद्मनाभोऽवतु ॥ २१ ॥ अपररात्रे ईशः श्रीवत्सधामाऽवतु । प्रत्यूष ईशः श्रीजनार्दनः अव्यात् । श्रीदामोदरः प्रभाते । श्रीविश्वेश्वरोऽनुसंध्यम् ॥ २२ ॥ युगांतानलवत्तिग्मा तीक्ष्णा नेमिर्यस्य तच्चक्रं भगवता प्रयुक्तं सदरिसैन्यं दंदग्धिदंदग्ध्यतिशयेन दहति तस्यायं स्वभाव एव न तु तस्मात्प्रार्थनी

प्रमेत्युच्यते' इत्युक्तेः । पाखंडस्य वेदविरुद्धार्थप्रतिपादकत्वात्प्रमादत्वम् । कलिं कृणोति नाशयतीति कल्किः 'कृ—हिंसायाम्' अत औणादिको डिप्रत्ययः कलेरिकारलोपश्च ॥ १९ ॥ कालविशेषेषु तत्तदधिष्ठातृस्वरूपेण भगवतो रक्षामंत्रानाह—मामिति त्रिभिः । केशवो मथुराधिपतिः प्रातर्दिनस्य पंचमघटिकापर्यंतम् । गोविंदो वृंदावनाधिपतिः आसंगवं षष्ठघटिकामारभ्य दशमघटिकापर्यंतम् । एकादशघटिकामारभ्य पञ्चदशघटिकापर्यंतं प्राह्णस्तत्र षोडशघटिकामारभ्य विंशतिघटिकापर्यंतं मध्यंदिनं तत्रारींद्रपाणिश्चक्रधरः ॥२०॥ एकविंशतिघटिकामारभ्य पंचविंशतिघटिकापर्यंतमपराह्णस्तत्र मधुहा मधुसूदनः । षड्विंशतिघटिकामारभ्य त्रिंशद्घटिकापर्यंतं सायं तत्र त्रयः सच्चिदानंदा धामानि स्वरूपाणि यस्य सः । संदर्भस्तु—प्रातरादयः काला एवं युज्यंते प्राह्णास्तावद्दिनस्य त्रिधा विभक्तस्य प्रथमो भागः । प्रातस्संगवौ तस्यांशावेव। मध्याह्नो मध्यभागः तृतीयभागस्तु पराह्णः। सायं संध्याभ्यामवांतरभेदाभिन्नः।रात्रौ च प्रदोषः प्रथभागः । मध्यमभागो निशीथः । अर्द्धरात्रं तु तत्रापि मध्यमघटिकाद्वयम् । अपररात्रस्तु तृतीयो भागस्तस्यैवांतिमांशद्वयं प्रत्यूषप्रभातसंज्ञम् । यथा संध्याश्च तदवांतरभेदा अपि पृथग्गण्यंते इति । क्रमगणनया तु मध्याह्नाद्यतिक्रमापत्तेः प्राह्णस्तु स्मृतौ न भिन्नत्वेन गण्यते । तथाहि—" मुहूर्त्तत्रितयं प्रातस्तावानेव तु संगवः । मध्याह्नस्त्रिमुहूर्त्तोथापरात्रोऽपि तादृशः । सायाह्नस्त्रिमुहूर्त्तः स्यात्सर्वकर्मसु गर्हितः ॥ " इति ॥ २१ ॥ षोढा विभक्तां दिवसरक्षामुक्त्वा पंचधा विभक्तरात्रिरक्षामाह दोषे रात्रेश्चतुर्थघटिकापर्यंतं प्रदोषस्तत्र पंचघटिकामारभ्य चतुर्दशघटिकापर्यंतमर्द्धरात्रमंतभागस्यार्द्धरात्रत्वात्तत्र पंचदशषोडशघटिके निशीथस्तत्र श्रीवत्सो धामनि शरीरे यस्य । निशीथादूर्ध्वमरुणोदयात्प्राक् अपररात्रः । प्रत्यूषे रात्रिशेषे घटिकाचतुष्टये । अनुसंध्यं दिनरात्रिसंध्ययोः । प्रभाते प्रकृष्टप्रकाशे ॥ २२ ॥ इत्यर्थ इति । न ह्यग्निर्दहनार्थं प्रार्थ्यते तस्य दहनस्वभावत्त्वादिति भावः । संभवत्वादाह—यद्वेति । संबोध्य हे समंतात् भ्रमत् भ्रमणशीलेति संबोधनं कृत्वा दंदग्धीति वीप्साप्रार्थनायां शैघ्र्ये च ॥ २३ ॥

गदेऽशनिस्पर्शनविस्फुलिंगे निर्ष्पाढिनिर्ष्पिढचजितप्रियासि ॥ कूष्मांडवैनायकयक्षरक्षोभूतग्रहांश्चूर्णयचूर्णयारीन् ॥ २४ ॥त्वं यातुधानप्रमथप्रेतमातृपिशाचविप्रग्रहघोरदृष्टीन् ॥ दरेंद्र विद्रावय कृष्णपूरितो भीमस्वनोऽरेर्हृदयानि कंपयन् ॥ २५ ॥ त्वं तिग्मधाराऽसिवरारिसैन्यमीशप्रयुक्तो मम छिंधिछिंधि ॥ चक्षूंषि चर्मञ्छतचंद्र छादय द्विषामघोनां हर पापचक्षुषाम् ॥२६॥ यन्नो भयं ग्रहेभ्योऽभूत्केतुभ्यो नृभ्य एव च ॥ सरीसृपेभ्यो दंष्ट्रिभ्यो भूतेभ्योंऽहोभ्य एव वा ॥ २७ ॥ सर्वाण्येतानि भगवन्नामरूपास्त्रकीर्तनात् ॥ प्रयांतु संक्षयं सद्यो ये नः श्रेयःप्रतीपकाः ॥ २८ ॥ गरुडो भगवान्स्तोत्रस्तोभश्छंदोमयः प्रभुः ॥ रक्षत्वशेषकृच्छ्रेभ्यो विष्वक्सेनः स्वनामभिः ॥ २९ ॥

यमित्यर्थः । यद्वा दंदग्धीति लोण्मध्यमपुरुषः । अत्र त्वमेवंभूतं चक्रमिति स्वरूपमुक्त्वा संबोध्य प्रार्थ्यतेऽतिशयेन दहेति । कक्षं शुष्कतृणम् ॥ २३ ॥ अशनिवत्स्पर्शो येषां ते विस्फुलिंगा यस्याः तस्याः संबोधनं हे गदे त्वमाजितस्य प्रियाऽसि अहमच्यतस्य दासः अतः कूष्मांडादीन्निष्पिंढिनिष्पिंढि संचूर्णय संचूर्णय । अरींश्च चूर्णयचूर्णय । सर्वत्र वीप्सातिशीघ्रत्वाय ॥२४॥ हे दरेंद्र पांचजन्य त्वं यातुधानादीन्विद्रावय । विप्रग्रहा ब्रह्मराक्षसा येऽन्ये च घोरदृष्टयस्तान् ॥२५॥ तिग्मा धारा यस्य हे तिग्मधार असिवर खड्गश्रेष्ठ । त्वं ममारिसैन्यं छिंधिछिंधि । शतं चंद्राकाराणि मंडलानि यस्मिन्हे शतचन्द्र चर्मन् अघोनामघवतां द्विषां चक्षंषि छादय पापचक्षुषां चोग्रदृष्टीनां चक्षूंषि हर ॥ २६ ॥ यत् येभ्यो भयम् । अंहोभ्यः पापेभ्यः ॥ २७ ॥ श्रेयःप्रतीपका इष्टव्याघातकाः ॥ २८ ॥ स्तोत्राणि बृहद्रथंतरादिसामानि तैः स्तोभ्यते संस्तूयत इति

अशनिर्वज्रम्। विस्फुलिंगा अग्निकणाः । यश्च केनापि न जीयते सोजस्तस्य त्वं प्रियासि । अतोऽजप्रियत्वादेव । तस्य वासस्य मे कूष्मांडादीन्रुद्रगणभेदान् । कुं भूमिमूष्मणाऽमति तापयतीति कूष्मांडः । अनुनासिकांतत्वादौणादिको डः । ' अम–रोगे ' । विघ्नानां नायको विनायकः स एव वैनायकः प्रबलतरविघ्नः । यक्षा यजंते संगच्छते कुबेरेणेति निरुक्तेरुपदेवगणाः । एवं रक्ष्यते यज्ञादिर्यतस्तानि रक्षांसि । अभूवन्रुद्रसेवार्थमिति भूतानि गृह्णन्ति बालवृद्धादीनि ग्रहाः पूतनादयो यक्ष्मादयश्च ॥ २४ ॥ यातूनि रक्षांसि दधति पुष्णंतीति यातुधाना रक्षसां स्वजातिपोषकत्वाद्राक्षसा एव । प्रकर्षेण मथ्नंति शुद्धिमिति प्रमथा रुद्रपार्षदाः । प्रेता दुष्कर्मणा दुर्गतिं प्राप्ता जीवाः। पिशाचस्तेषामवांतरभेदः। मातरो हि ब्राह्म्यादिभिन्ना रुद्रगणान्तर्गताः स्त्रियो विकृतरूपास्ताश्च महाभारते स्कंदाविर्भावोपाख्याने वर्णिता विस्तारभियेह नोक्ताः।दृणाति स्वशब्देन विदारयति दुष्टमनांसीति दरः शंखः स चासाविन्द्रः श्रेष्ठश्चेति दरेन्द्रः । कृष्णेन पूरितो वादितः धातूनामनेकार्थत्वात्पूरी वादनेऽपीति । भीमो भयजनकः स्वनो यस्य'सः ॥ २५ ॥ ईशेन प्रयुक्तश्चालितः । शतं चंद्राश्चंद्राकारा यत्र तत्संबुद्धौ॥२६॥केतुभ्य इति बहुत्वोक्तेः सहस्रं केतवो ज्ञेयास्तेच ज्योतिःकल्पतरावुक्ताः–पञ्चविंशतिः प्रागपरदृश्या रविजाः२५ । चंद्रजा उत्तरदृश्याः त्रयः ३ । भौमपुत्रा उत्तरदृश्याः षष्टिः६० । बुधपुत्राः सर्वदिग्दृश्या एकपंचाशत् ५१ । एवम् १३९ । गुरुपुत्राः पंचषष्टिः६५ याम्यदृश्याः । शुक्रपुत्राश्चतुरशीतिः ८४ पुरोदृश्याः । एवं १४९ । पूर्वेण सह २८८ । शनिपुत्राः षष्टिः ६० पश्चिमदृश्याः । राहुपुत्राः रविचंद्रमंडलदृश्या त्रयस्त्रिंशत् ३३ । अग्निपुत्राः पञ्चविंशतिरग्निदिग्दृश्याः २५ । एवं ११८ । पूर्वेण सह४०६ । मृत्युपुत्राः पञ्चविंशतिर्याम्यदिग्दृश्याः२५ । भूमिपुत्रा द्वाविंशतिरीशदिग्दृश्याः २२ । एको ब्रह्मपुत्रः १ । सर्वदिग्दृश्यः। पुनरग्निपुत्रा विंशत्यधिकशतम् १२० अग्निदिग्दृश्याः । वायुपुत्राः सप्तसप्ततिर्वायुदिग्दृश्याः ७७ । प्रजापतिपुत्रा अष्ट ८ तारामंडलगाः । पुनर्ब्रह्मपुत्राश्चतुरधिकशतम् १०४ । वरुणपुत्रा द्वात्रिंशत् ३२ । स्वदिग्दृश्याः। षण्णवतिः कालपुत्रा ९६ याम्यदृश्याः । नव विदिक्पुत्रा ९ विदिग्दृश्या भवंति । एवं सहस्रं केतवः सपुच्छास्ताराविशेषा एव प्रायो लोकदुःखावहास्ते इति ॥ २७ ॥ २८ ॥ २९ ॥

सर्वापद्भ्यो हरेर्नामरूपयानायुधानि नः ॥ बुद्धींद्रियमनःप्राणान्पांतु पार्षदभूषणाः ॥ ३० ॥ यथा हि भगवानेव वस्तुतः सदसच्च यत् ॥ सत्येनानेन नः सर्वे यांतु नाशमुपद्रवाः ॥ ३१ ॥ यथैकात्म्यानुभावानां विकल्परहितः स्वयम् ॥ भूषणायुधलिंगाख्या धत्ते शक्तीः स्वमायया ॥ ॥ ३२ ॥ तेनैव सत्यमानेन सर्वज्ञो भगवान्हरिः ॥ पातु सर्वैः स्वरूपैर्नः सदा सर्वत्र सर्वगः ॥ ३३ ॥ विदिक्षु दिक्षूर्ध्वमधः समंतादंतर्बहिर्भगवान्नारसिंहः ॥ प्रहापयँल्लोकभयं स्वनेन स्वतेजसा ग्रस्तसमस्ततेजाः ॥ ३४ ॥

स्तोत्रस्तोभः । छंदोमयो वेदमूर्तिः । "सुपर्णोऽसि गरुत्मान्" इत्यादिश्रुतेः । ऐकपद्यपाठे स्तोभा गीतिपूरकाक्षराणि । स्तोत्रस्तोमेति पाठे सामाधारभूतऋक्स्तोमः ॥२९॥ नामानि च रूपाणि च यानानि च वाहनानि आयुधानि च नो बुद्ध्यादीन् पांतु । पार्षदभूषणाः पार्षदमुख्याश्च पांतु॥ ३०॥ सच्च असच्च मूर्तामूर्तं यत्तत्सर्वं जगत् ॥ ३१॥ ऐकात्म्यस्यानुभावोऽनुध्यानं येषां तेषाम् । विकल्पो भेदस्तद्रहितोऽपि ॥ ३२॥ सत्यमानेन सत्यभूतेन प्रमाणेन ॥ ३३॥ पुनरपि श्रीनृसिंह एव प्रार्थ्यते । विदिक्ष्वितिपात्वित्यनुषंगः।यद्वा नारसिंहः प्रह्लादः स्वनेन श्रीनृसिंहनामगर्जनेन स्वतेजसा स्वप्रभावेण ग्रस्तानि समस्तानि दिग्गजविषशस्त्रजलवाय्वग्न्यादीनां तेजांसि प्रभावा येन सः ॥ ३४॥

॥३०॥यत्सदस द्रूपं जगत्तद्वस्तुतो भगवानेव तस्यैव बहिरंगमायाकार्यत्वात् । सत्येनानेन शपथेनेति । यद्येवंभूतो भगवान्सत्यः स्यात्तर्हि अस्माकमुपद्रवा नश्यंतु यदि 'वेदाः प्रमाणम्' इतिवदुक्तिरियम् ॥३१॥ ऐकात्म्यं चिन्मयत्वादेकस्वरूपत्वमेवानुभावो लक्षणं यासां तासां भूषणादीनां शक्तीनां विकल्परहितः । स्वस्य तासां च चिद्रूपत्वात् । ताभ्यो भेदरहितोऽपि भूषणाद्याख्यास्ताः शक्तीः यथा धत्ते तथा तेनैव सत्यमानेन स पात्वित्यन्वयः । तत्र भूषणानि कौस्तुभादीनि । आयुधानि चक्रादीनि । लिंगानि चतुर्भुजत्वादीनि । आख्या नामानि यासां ताः शक्तीः स्वरूपशक्तिवृत्तीर्धत्ते स्वमायया स्वरूपशक्त्या स्वरूपभूतया निजशक्त्या मायाख्यया युक्तः "अतो मायामयं विष्णुं प्रवदंति मनीषिणः" इति माध्वभाष्यप्रमाणितश्रुतेः ॥ ३२ ॥ तेनैव सत्यमानेन सत्यरूपप्रमाणेन भूषणादीनि चतुर्भुजत्वादीनि च स्वरूपशक्तिमयत्वात्स्वेनाभिन्नान्येव भगवान् धत्ते इति यदि सत्यः स्यात्तर्हि सर्वैर्हरिर्विदध्यादित्यादिमंत्रोक्तैः स्वरूपैः । सर्वत्र देशे काले च सर्वगः सन्पातु सर्वज्ञ इत्यस्मन्मनोगतमास्तिक्यं भगवानेव जानातीति शपथो दर्शितः । अत्र संदर्भः—यथेति युग्मकम् । ऐकात्म्यानुभावानां केवलपरमस्वरूपदृष्टिपराणाम् । विकल्परहितः परमानंदैकरूपपरमस्वरूपतया स्फुरन्नपि यथा येन प्रकारेण स्वेषु स्वस्वामितया भजत्सु मायया कृपया हेतुना स्वयं विचित्रशक्तिमयेन स्वस्वरूपेणैव कारणभूतेन भूषणाद्याख्याः शक्तीः शक्तिमयाविर्भावान्धत्ते गोचरयति तेनैव विद्वदनुभवलक्षणेन सत्यप्रमाणेन तद्यदि सत्यं स्यात्तदेत्यर्थः । तैरेव भूषणादिलक्षणैः सर्वैः स्वरूपैर्विचित्रस्वरूपाविर्भावैर्नः पातु । अत एव विष्णुधर्मे बलिकृतचक्रस्तुतौ "यस्य रूपमनिर्देश्यमपि योगिभिरुत्तमैः" इत्याद्यनंतरं च "भ्रमतस्तस्य चक्रस्य नाभिमध्ये महीपते । त्रैलोक्यमखिलं दैत्यो दृष्टवान्भूर्भुवादिकम् ॥" इति । एवं नवमेंबरीषेणापि स्तुतं लिंगानि गरुडाकारध्वजादीनि । अनेन यत्किञ्चिदाकस्मिकत्वमिव श्रूयते तदपि भगवदाविर्भाववज्ज्ञेयं तृतीयोक्तमपि 'चैतस्य तत्त्वममलं मणिमस्य कंठे' इति वाक्यमप्यसहायम् । अतो द्वादशेऽपि "कौस्तुभव्यपदेशेन स्वात्मज्योतिर्बिभर्त्यजः" इत्यादिविराड्गतत्वेनोपासनार्थमभेददृष्ट्या दर्शितमेव यथासंभवं साक्षाच्छ्रीविग्रहगतत्वेनाप्यनुसंधेयम् । तथाहि विष्णुपुराणे "आत्मानमस्य जगतो निर्लेपमगुणामलम् । बिभर्त्ति कौस्तुभमणिस्वरूपं भगवान्हरिः" इति ॥ ३३ ॥ एवं नानास्वरूपैः स्वरक्षां समाप्यापि पुनरपि सर्वेषां प्रतिकूलानां भीषणेनैकेनैव नृसिंहस्वरूपेण स्वरक्षामंत्रमेकमाह विदिक्ष्वित्यादि । 'पायान्नृसिंहो सुरयूथपारिः' इत्यत्रोक्त एव

मघवान्निदमाख्यातं वर्म नारायणात्मकम् ॥ विजेष्यस्यंजसा येन दंशितोऽसुरयूथपान् ॥ ३५ ॥ एतद्धारयमाणस्तु यंयं पश्यति चक्षुषा ॥ पदा वा संस्पृशेत्सद्यः साध्वसात्स विमुच्यते ॥ ३६ ॥ न कुतश्चिद्भयं तस्य विद्यां धारयतो भवेत् ॥ राजदस्युग्रहादिभ्यो व्याघ्रादिभ्यश्च कर्हिचित् ॥ ३७ ॥ इमां विद्यां पुरा कश्चित्कौशिको धारयन्द्विजः ॥ योगधारणया स्वांगं जहौ स मरुधन्वनि ॥ ३८ ॥ तस्योपरि विमानेन गंधर्वपतिरेकदा ॥ ययौ चित्ररथः स्त्रीभिर्वृतो यत्र द्विजक्षयः ॥ ३९ ॥ गगनान्न्यपतत्सद्यः सविमानो ह्यवाक्छिराः ॥ सवालखिल्यवचनादस्थीन्यादाय विस्मितः ॥ प्रास्य प्राचीसरस्वत्यां स्नात्वा धाम स्वमन्वगात ॥४०॥ श्रीशुक उवाच ॥ य इदं शृणुयात्काले यो धारयति चादृतः॥ तं नमस्यंति भूतानि मुच्यते सर्वतो भयात् ॥ ४१ ॥ एतां विद्यामधिगतो विश्वरूपाच्छतक्रतुः ॥ त्रैलोक्यलक्ष्मीं बुभुजे विनिर्जित्य मृधेऽसुरान् ॥ ४२ ॥ इति श्रीभागवते महा० षष्ठ० नारायणवर्मवर्णनं नामाष्टमोऽध्यायः ॥ ८ ॥

दंशितः कवचितः॥ ३५॥ सोऽपि साध्वसाद्भयाद्विमुच्यते॥ ३६॥ तस्य तु भयं न भवेदेव ॥ ३७॥ एतद्विद्याप्रभावमितिहासेनाह इमामिति सार्धैस्त्रिभिः। मरुधन्वनि निरुदके देशे। अनेन विद्यायाः क्षेत्रतीर्थानपेक्षत्वं दर्शितम्॥ ३८॥ यत्र द्विजस्य क्षयो देहत्यागस्तस्योपरि॥ ३९॥ सद्यस्तत्क्षणादेव गगनान्न्यपतत्। पाठांतरे अंगनाभिः सह। वालखिल्योपदेशात्तस्यास्थीनि प्रास्य प्रक्षिप्य विस्मितः सन् स्वं धाम गंधर्वलोकं जगाम॥ ४०॥ ४१॥ अधिगतः प्राप्तः सन्॥ ४२॥ इति श्रीभा० षष्ठे टीकायामष्टमोऽध्यायः॥ ८॥

नृसिंहमंत्रः पुनरुक्त्या कथनं त्वधिकमेवेति चेदत्राह–यद्वेति । प्रहापयन्निति स्वार्थे णिच् । परिहरन्नित्यर्थः अस्य क्ष्रौमिति बीजसंपुटितस्य जपान्महामारी नश्यतीति ॥ ३४ ॥ उपसंहरति–मघवन्निति । देवपूज्यत्वादिदमति रहस्यमपि तुभ्यमुक्तमिति भावः ॥ ३५ ॥ सोऽपि साध्वसाद्भयात्किमुतैतद्धारयमाणः । पदा पादेन ॥ ३६ ॥ ३७ ॥ कौशिकः कौशिकगोत्रे विद्यमानः । योगराधारणया योगाभ्यासेन । मरुधन्वनि निर्जलप्रदेशे॥ ३८॥ तस्येति यत्रेति पदेनान्वेति ॥ ३९ ॥ सांगन इति पाठे । अवाक्शिरा अधःशिराः । विमानपतितेन गंधर्वेण प्रार्थितैर्वालखिल्यैरुक्तमत्र कौशिकद्विजास्थीनि संति तानि पृथूदकक्षेत्रे प्राचीसरस्वत्यां प्रक्षिप तत्र स्नाहि च ततः स्वां गतिमवाप्स्यसीति तच्छ्रुत्वा स तथा कृतवान् ॥ ४० ॥ आदृतो धारयति सर्वदा जपेन धारयति तं श्रोतारमध्येतारञ्च ॥ ४१ ॥ ननु यत्फलम् 'एतद्धारयमाण' इत्यादिनोक्तं तत्कुतो नास्तीति चेदत्रेदमत्र धेयम्–गुरुशिष्ययोर्मिथो योग्यतावैकल्याद्योग्यत्वेऽपि "नासंवत्सरवासिने ब्रूयात्" इति श्रुतेर्गुरुकुलवासापूर्त्या गुरुप्रसादाभावेन वा लोकापकारादिना वा गुरोः प्राप्ता शिष्यस्य यथोक्तफलदा न स्यात् । तदुक्तं तीर्थेन "गुरुशिष्ययोरयोग्यत्वाद्गुरुवृत्तेरपूर्त्तितः । अप्रसादाद् गुरोर्विद्या न यथोक्तफलप्रदा " इति तर्हि गुरूपदेशमंतरेण यथा लिखितपाठादिना प्राप्ता फलदा स्यादिति चेन्न 'गुरोः प्राप्ता फलप्रदा' इत्युक्तेस्तत्रापि प्रसन्नाद् गुरोः प्राप्तैव फलदेति तत्त्वम् "सुप्रसन्नगुरोर्दत्ता या विद्याभीष्टदा हि सा" इति स्मृतेः । "अन्येनैव प्रोक्ता सुज्ञानाय प्रेष्ठा" इति काठकश्रुतेः। "यदृच्छया श्रुतं वापि च्छन्नेनाथ च्छलेन वा । पत्रे स्थितं वा गाथायां वर्जयेत्तदनर्थवत्" इति ब्रह्मवैवर्त्तोक्तेश्च। तथा च विधिवैकल्यादेव फलवैकल्यमिति यथोक्तश्रद्धादिसत्त्वे फलस्यावश्यंभावित्वनियमादित्यलम् ॥ ४२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥

श्रीशुक उवाच ॥ तस्यासन्विश्वरूपस्य शिरांसि त्रीणि भारत ॥ सोमपीथं सुरापीथमन्नादमिति शुश्रुम ॥ १ ॥ स वै बर्हिषि देवेभ्यो भागं प्रत्यक्षमुच्चकैः ॥ अवदद्यस्य पितरो देवाः सप्रश्रयं नृप ॥ २ ॥ स एव हि ददौ भागं परोक्षमसुरान्प्रति ॥ यजमानोऽवहद्भागं मातृस्नेहवशानुगः ॥ ॥ ३ ॥ तद्देवहेलनं तस्य धर्मालीकं सुरेश्वरः ॥ आलक्ष्य तरसा भीतस्तच्छीर्षाण्यच्छिनद्रुषा ॥४॥ सोमपीथं तु यत्तस्य शिर आसीत्कपिंजलः ॥ कलविंकः सुरापीथमन्नादं यत्स तित्तिरिः ॥ ५ ॥ ब्रह्महत्यामंजलिना जग्राह यदपीश्वरः ॥ संवत्सरांते तदघं भूतानां स विशुद्धये ॥ भूम्यंबुद्रुमयोषिद्भ्यश्चतुर्धा व्यभजद्धरिः ॥ ६ ॥

नवमे विश्वरूपे तु हते शक्रेण कोपतः ॥ त्वष्ट्रा चोत्पादिते वृत्रे भीतैर्देवैर्हरेः स्तुतिः ॥ १ ॥ सोमस्य पीथं पानं यस्मिन् एवं सुरापीथम् । अन्नमत्ती त्यन्नादम् । "अत्र विश्वरूपो वै त्वाष्ट्रः पुरोहितो देवानामासीत्" इत्यादिश्रुतिरनुसंधेया ॥ १ ॥ तस्यासुरपक्षपातमाह । स वा इति द्वाभ्याम् । प्रत्यक्षं प्रकटं यथा भवति तथा सविनयं देवेभ्यो हविर्भागमिंद्रायेदमग्नय इदमित्युच्चैरवदत् । अत्र हेतुः । यस्य पितरो देवाः सः ॥ २ ॥ असुरेभ्यस्तु परोक्षं गुप्तभागं ददौ । तदेवाह । देवान्यजमानोऽसावसुरान्प्रति भागमवहत् केनाप्युपायेन प्रापयामास । यतो मातृस्नेहवशेनासुराननुगच्छति ॥ ३ ॥ ४ ॥ ५ ॥ तां वारयितुं समर्थस्तथापि

त्वष्ट्रा कोपतः कोपेन ( १ ) त्वाष्ट्रः त्वष्टुः पुत्र इति श्रुतिपदार्थः । अनुसंधेया योज्या भारतेति । शुद्धवंशोद्भूतत्वादपृष्टमपि त्वां विश्वरूपचरितं श्रावयिष्यामीति भावः॥१॥ बर्हिषि यज्ञे "बर्हिर्यज्ञे नृपे देवे हस्तमात्रकुशेऽपि च" इति धरणिः । स विश्वरूपः । अत्रोच्चैः कथने । नृपेति । शृणु राज्ञां स्वभावं सौजन्यपरित्यागलक्षणमिति भावः ॥ २ ॥ दत्वा च केनाप्युपायेन प्रापयामासेति भावः । तत्र हेतुः—मातृस्नेहेति ॥ ३ ॥ देवानां हेलनमवमवज्ञानलक्षणम् । धर्मेऽलीकं कपटमसुरभागदानरूपम् । भीतः मंत्रदत्तभागेन बलवृद्धिं विचार्य त्रस्त इत्यर्थः ॥ ४ ॥ कपिंजलः पारावतः । कलविंकश्चटकः । "कलविंकः पुमान् ग्रामचटके च कलिंगके" इति । तित्तिरिः प्रसिद्धः ॥ ५ ॥ आकस्मिकाभ्यां क्रोधभयाभ्यां तं हत्वैवाहो हंत महापापं बुद्धिपूर्वकमेवाकरवं महानीचो न जाने कुत्र वा नरके पतिष्याभि तदेतत्समुचितं फलं शीघ्रमेव लभेयेत्यनुतापपुंजे निमग्नेत्याह—ब्रह्मेति । स्वतेजसा मां ज्वालयेति भावः । यद्यतः । अपि अधिकृतभक्त ईश्वरविभूतिरूपस्तस्मात्कथमेवं विकर्मणोनुतापं न कुर्यादिति भावः । अधीश्वर इति पाठेऽयमर्थः । संदर्भस्तु—तादृशपापस्य तादृशेनाप्यपहरणीयत्वमाह । एवमनुतापेन क्षीणपापवेगः संवत्सरपर्यंतं तथैव विगीत एव स्थित्वा तदन्ते भूतानां स्वदेहस्थपृथिव्यप्तेजोवायूनां ब्रह्महात्यैवापवित्रीकृतानां विशुद्धये तदघं चतुर्द्धा व्यभजत् । आकाशस्यापावित्र्यासंभवात् चतुर्णामेव भूतानां शुद्धये चतुर्द्धेति न्यायः । तेनांतःकरणगतमघं तु सूक्ष्मरूपेण तस्थावेव । यदेव बीजं पुनरपि वृत्रवधेन ब्रह्महत्यां जनयिष्य

भूमिस्तुरीयं जग्राह खातपूरवरेण वै ॥ ईरणं ब्रह्महत्याया रूपं भूमौ प्रदृश्यते॥७॥तुर्यं छेदविरोहेण वरेण जगृहद्रुमाः ॥ तेष। निर्यासरूपेण ब्रह्महत्या प्रदृश्यते ॥ ८ ॥ शश्वत्कामवरेणांहस्तुरीयं जगृहुः स्त्रियः ॥ रजोरूपेण तास्वंहो मासिमासि प्रदृश्यते ॥ ९ ॥ द्रव्यभूयोवरेणापस्तुरीयं जगृहुर्मलम् ॥ तासु बुद्बुदफेनाभ्यां दृष्टं तद्धरति क्षिपन् ॥१०॥ हतपुत्रस्ततस्त्वष्टा जुहावेंद्राय शत्रवे॥इन्द्रशत्रो विवर्धस्व मा चिरं जहि विद्विषम् ॥११॥

जग्राह । संवत्सरं तथैव स्थित्वा संवत्सरांते भूताक्रोशभीतः सन् भूतानां मध्ये विशुद्धये । लोकापवादपरिहाराय स हारिरिंद्रो भम्यादिभ्यस्तदघं व्यभजद्विभज्य ददावित्यन्वयः ॥ ६ ॥ तुरीयं चतुर्थं भागम् । खातस्य गर्तस्य पूरः पूरणं तेन वरेण यदि खातपूरणं स्वत एव भविष्यति तर्हि ग्रहीष्यामीत्येवं भाषाबंधेन जग्राहेत्यर्थः । ईरणमूषरम् । अत एवोषरेऽध्ययनादि निषिद्ध्यते ॥ ७ ॥ छेदे सति पुनर्विरोहः प्ररोहो भवत्विति वरेण । निर्यासरूपेण ब्रह्महत्याया दृष्टत्वान्निर्यासो न भक्ष्यः ॥ ८ ॥ शश्वत्कामवरेण कामः संभोगः यावत्प्रसवं गर्भानुपघातेनैव संभोगवरेण । रज इति । अत एव रजोदर्शने तत्संगादि न कार्यम् ॥ ९ ॥ द्रव्यभूयोवरेण यस्मिन्द्रव्ये क्षीरादावापो मिश्रा भवेयुस्तस्य भूयस्त्वमाधिक्यं तन्मयत्वेन स्यादिति वरेण।यद्वा स्वस्यैव उद्धरणेपि निर्झरोद्गमादिना भूयस्त्ववरेण । द्रवभूय इति पाठेऽप्ययमेवार्थः । यद्वा द्रवभूयस्त्वं सांसिद्धिकद्रवत्वं तेन वरेण।अस्य विभागस्य "विश्वरूपो वै त्वाष्ट्रः"इत्यस्यां श्रुतावुक्तेः । तद्विभागफलमाह । तत्पापं हरति निराकरोति । कः क्षिपन् । बुद्बुदादि जलाद्बहिः प्रक्षिपन्नित्यर्थः । यद्वा क्षिपन् जलं पापं हरत्याहरति गृह्णातीत्यर्थः । अयं च " तस्मादापो न परिचक्ष्याः" इत्यादिश्रुत्यर्थ उक्तः । पाठांतरे हरिकिल्बिषमिंद्रपापम् ॥ १० ॥ इंद्रायेंद्रं हंतुम् । शत्रवे शत्रूत्पत्त्यै । तदाह । इंद्रशत्रो विवर्धस्वेति । अत्र चेंद्रशत्रुपदस्याद्युदात्तत्वात् " बहुव्रीहौ प्रकृत्या पूर्वपदम् " इति स्मृतेबर्हुव्रीहिलक्षणापत्त्या इंद्र एव तस्य

तीति भावः ॥ ६ ॥ इत्यर्थ इति । यद्यपि वृष्ट्यादिनां मृत्तिकापातेन स्वयमेव पूरणं भविष्यति तथापि वरेण स्वतो वृद्ध्यापीति भावः ॥ ७ ॥ ऊषरं क्षारमृत्तिकावत्स्थलम् । अत एवोषरस्य ब्रह्महत्याधिष्ठानत्वादेव ॥ ८ ॥ निर्यासो वृक्षच्युतोतीवचिक्कणद्रवविशेषः । 'निर्य्यासान्वर्ज्जयेत्सर्वान्' इति स्मृतेरभक्ष्य इत्यर्थः । शश्वत्कामा बहुसंभोगेऽप्यलंबुद्ध्यभावः । गर्भवत्या अपि गर्भानुपकारकसंभोगश्च । अत एव रजसि ब्रह्महत्यायाः स्थितत्वादेव स्त्रीसंगो न कार्यः ॥ ९ ॥ न केवलं जलमिश्रण एव भूयस्त्वमन्येषां दध्यादीनां मिश्रणेऽपि भूयस्त्वस्य संभवादिति चेदत्राह–यद्वेति । निर्झरोद्गमादिना प्रस्रवणादिना द्रवभूयस्त्वशब्दस्य प्रसिद्धार्थमादायाह–यद्वेति । अस्य चतुर्द्धाब्रह्महत्याविभागस्य । श्रुतिश्चेयं संहितायां द्रष्टव्या । संदर्भस्तु–द्रव्यशब्देनात्र द्रव एवोच्यते भावे कृत्प्रयोगात्। स्वार्थे तद्धितान्तो वा । मिश्रा इति। इतः पूर्वं मिश्रा एव नो भवेयुरीति गम्यते। निर्झरोद्गमेति।इतः पूर्वं निर्झरोद्गमादिकमपि नेति गम्यते। सांसिद्धिकद्रवत्वमिति। इतः पूर्वं किञ्चिद्घनमासीदिति गम्यते। इत्यर्थ इति। जलार्थी बुद्बुदादिकमपाकृत्यैव जलं स्वीकरोति न तु बुद्बुदादिसहितमिति । यदि च तद्युक्ता अपः कश्चिद्गृह्णाति तदा स पापमेव हरतीति भावः । ' क्षेपणं निन्दनम्' इति कोशादाह–यद्वेति । क्षिपन् जलनिंदां कुर्वन् । इत्यर्थ इति । जलनिन्दको जलब्रह्महत्यां गृह्णातीति भावः । अयञ्च श्रुत्यर्थ उक्त इति । यतोऽपां निंदकस्य पापावाप्तिस्तस्मादापो जलानि न परिचक्ष्या निंद्या इति श्रुतिपदार्थः । पाठांतरे ' दृष्टं तद्धरिकिल्बिषम्' इति पाठे ॥ १० ॥ अत्र च मंत्रे विश्वरूपस्य पिता त्वष्टा इंद्रवधकामनया वृत्रासुरोत्पादनाय " इन्द्रशत्रुर्वर्द्धस्व " इत्यनेन मंत्रेणाहुतिं दत्तवांस्तत्रेंद्रशत्रुरित्युत्तरपदप्रधानस्वरपाठेन तत्पुरुषसमासे कर्त्तव्ये

अथान्वाहार्यपचनादुत्थितो घोरदर्शनः ॥ कृतांत इव लोकानां युगांतसमये यथा ॥ १२ ॥ विष्वग्विवर्धमानं तमिषुमात्रं दिनेदिने ॥ दग्धशैलप्रतीकाशं संध्याऽभ्रानीकवर्चसम् ॥ १३ ॥

शत्रुरभूत् । तदुक्तं श्रुत्या "यदब्रवीत्स्वाहेंद्रशत्रुर्वर्धस्वेति तस्मादस्येंद्रः शत्रुरभवत्" इति। तथा च शिक्षायाम् "मंत्रो हीनः स्वरतो वर्णतो वा मिथ्याप्रयुक्तो न तमर्थमाह। स वाग्वज्रो यजमानं हिनस्ति यथेंद्रशत्रुः स्वरतोऽपराधात् " इति ॥ ११ ॥ अन्वाहार्यपचनाद्दक्षिणाग्नेः ॥ १२ ॥ तं वीक्ष्य वित्रस्ता लोका दश दिशो विदुद्रुवुरिति

इंद्रः शत्रुः शातयिता नाशयिता यस्येति पूर्वपदस्वरपाठाद्बहुव्रीहिसिद्धेः स्वरविपर्ययाद्यजमानघातकत्वं मंत्रस्य सिद्धम्। अत्र प्रमाणमाह–तथा चेति।शिक्षायां पाणिनिशिक्षायाम् ।स्वरादिहीनो मंत्रो मिथ्या*प्रयुक्तो भवति यदर्थमुच्चार्य्यते तत्कार्यकरो न भवति किन्तु स वाग्वज्रो वाणीरूपो वज्राख्यशस्त्रं भूत्वा यजमानं हिनस्ति अत्र दृष्टांतः–यथेति । इंद्रशत्रुर्वृत्रः स्वरस्य विपर्ययोच्चारणादित्यर्थः । अत्र संदर्भः–अत्र तत्पुरुषे वृत्रस्य हंतृत्वं बहुव्रीहौ सतींद्रस्य । तत्र च तत्पुरुषत्वम् " समासस्य च " इत्यनेन समासांतस्वरस्यांतोदात्तविधिना व्यज्यते । बहुव्रीहित्वं तु तद्बाधकेन " बहुव्रीहौ प्रकृत्या पूर्वपदम् " इत्यनेन पूर्वपदे स्वभावसिद्धाद्युदात्तस्थापकेन व्यज्यते इंद्रशब्दो ह्याद्युदात्तः ' इदि–परमैश्वर्ये ' इति धातोरुदात्तगणे पठितत्वात् । तदेवं दैवादाद्युदात्तपाठेन फलवैपरीत्यं जातम् । इंद्र एव तस्य शत्रुरभूदिति । अत्र विश्वनाथः–' संवत्सरान्ते तदघम्' इति पूर्वोक्तेराश्विनमासारंभे इन्द्रो यदैव ब्रह्महत्यातो विमुक्तो बभूव तदैव तपोवनादागत्य स्वीयमाश्विनमासं संपालयितुं प्रवृत्तस्त्वष्टा स्वपुत्रवधं श्रुत्वा क्रोधशोकाभ्यामिंद्रवधोपायं चकारेत्याह–हतपुत्र इति । इंद्राय शत्रवे इंद्ररूपं शत्रुं हंतुम्। तत्र मंत्रमाह–"इंद्रशत्रो विवर्द्धस्व " इति इंद्रस्य शत्रुः सन्विवर्द्धस्वेति तत्पुरुषस्य समासस्य विवक्षितेत्वपि इंद्र एव शत्रुर्यस्येति बहुव्रीह्यर्थ एव दैवादापतितः स्वरव्यतिक्रमात् । तथाहि–'इदि–परमैश्वर्ये ' इत्यस्योदात्तगणपठितत्वादिन्द्रशब्दो ह्याद्युदात्तस्तत्र ' समासस्य च ' इति सूत्रेण समासमात्र एवांतोदात्तत्वविधानात्तत्पुरुषे शेषमनुदात्तमित्यनेनेन्द्रशत्रो इत्यस्याद्युदात्तत्त्वम् "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इति तद्बाधकसूत्रेण पूर्वपदस्य स्वभावसिद्धस्वरस्थापनाद्बहुव्रीहाविंद्रशत्रो इत्यस्याद्युदात्तत्वम् । त्वष्टुस्तु–दैवादाद्युदात्तस्वरतयैव पाठादिंद्र एव तस्य शत्रुर्हन्ताऽभूदिति शेषं स्वामिवत्। अयमर्थः–श्रीभगवद्गीतोपनिषत्सप्तदशाध्याये वाङ्मयतपस्त्ववर्णने प्रियहितमधुरादिविशेषणचतुष्टयवत एव वाङ्मयतपस्त्वमुक्तं श्रीशङ्करानन्दसरस्वतीभिरपि तत्र दृष्टांतत्वेनोक्तमुदात्तादिस्वरचतुष्कयुक्तोच्चारितवेदस्य यथा वेदत्वं नान्यथेति। परन्तु शिक्षायां तु पञ्चधोक्ताः स्वरास्तथाहि उदात्तोऽनुदात्तस्वरितप्रचयजात्यादिभेदात् । " अनुदात्तो हृदि ज्ञेयो मूर्ध्न्युदात्त उदाहृतः । स्वरितः कर्णमूलीयः सर्वास्ये प्रचयः स्मृतः॥ उदात्तं भ्रुवि पातव्यं प्रचयं नासाग्रमेव च । हृत्प्रदेशेऽनुदात्तं तु तिर्य्यग्जात्यादिरीरितः ॥ " अधोरक्तोऽनुदात्तोऽताम्र उदात्तः उपरिरक्तस्तिर्यग्रक्तो वा स्वरितः । स्वरितपरा अताम्राः प्रचयाः एकपदे नीचपूर्वो पूर्वो वायवान्यतरयुक्तो जात्यः । जात्ये तु पितृदानवद्रस्तमिति प्रसंगात्स्वरापराधस्योक्तम् ॥ ११ ॥ अथ तदनंतरमेव स्वीयपाठव्यतिक्रमेऽवगते सति अन्वाहार्यवचनात् । स्वभावप्राप्ताद्युदात्तव्यंजितबहुव्रीहिपठनानंतरमाहार्यताप्राप्ताद्यनुदात्तव्यंजिततत्पुरुषपाठाद्धेतोः । स घोरदर्शन उत्थितः स्वाभाविकपाठादिंद्रोऽस्य हंता भविष्यति पश्चादाहार्यपाठादिंद्रोप्यनेन हतो भविष्यति सन्नाहनस्यापि तस्यानेन निगिलिष्यमाणत्वादिति भावः । अन्वाहार्यशब्दस्य मासिकश्राद्धवाचित्वाद्व्याख्यान्तरं न घटते ॥ १२ ॥ इषुमात्रमिति । 'ईषीकाऽत्र बुधैर्ज्ञेया इषुशब्देन

---

* स्वरतः स्वरेण आद्यादित्वात्तसिः । मिथ्याप्रयुक्तो यदर्थप्रतिपादनाय प्रयुक्तस्ततोर्थांतरं स्वरवर्णदोषात्प्रतिपादयन्नभिमतमर्थं नाहेत्यर्थः। वागेव वज्रो हिंसकत्वात् यथेंद्रशत्रुशब्दः स्वरदोषाद्यजमानं हिंसितवानित्यर्थः । इंद्रस्याभिचारो वृत्रेणारब्धस्तत्रेन्द्रशत्रुर्वर्द्धस्वेति मंत्रसहितः। तत्रेंद्रस्य शमयिता शातयिता भवति क्रियाशब्दोऽत्र शत्रुशब्द आश्रितो न तु रूढिशब्दः शत्रुर्भवेत्यत्रार्थे प्रतिपाद्येऽन्तोदात्ते प्रयोक्तव्ये आद्युदात्त ऋत्विजा प्रयुक्त इत्यर्थांतराभिधानादिंद्र एव वृत्रस्य शातयिता संपन्नः इंद्रशत्रुत्वस्य च विधेयत्वात्संबोधनविभक्तेरनुवाद्यविषयत्वादिहाभावः । यथा राजा भव युध्यस्वेति ऊह्यमानस्य चामंत्रत्वाद्यज्ञकर्मणीति जपादिपर्युदासेन मंत्राणामेकश्रुतिर्विधीयमानेह न भवति वृत्रेणेति । अत्र विवरणकारेण फले हेतौ तृतीयेति व्याख्यातं तस्यायं भावः–तैत्तिरीये " विश्वरूपवधात्कुपितेन त्वष्ट्रा आरब्धेवीन्द्रे सोमेऽनुपहूतेनेन्द्रेण पीतस्य सोमस्यावशेषं कुद्धस्त्वष्टाऽऽहवनीयमुपावर्त्तयत्स्वाहेन्द्रशत्रुर्वर्द्धस्वेति ततो वृत्रोऽउदभूत् " इति । श्रूयते ततश्चाभिचारकर्तृत्वं त्वष्टुरेव न वृत्रस्येति पातञ्जलमहाभाष्यविवरणे ।

तप्ततामशिखाश्मश्रुं मध्याह्नार्कोग्रलोचनम् ॥ १४ ॥ देदीप्यमाने त्रिशिखे शूल आरोप्य रोदसी ॥ नृत्यंतमुन्नदंतं च चालयंतं पदा महीम् ॥ १५ ॥ दरीगंभीरवक्त्रेण पिबता च नभस्तलम् ॥ लिहता जिह्वयर्क्षाणि ग्रसता भुवनत्रयम् ॥ १६ ॥ महता रौद्रदंष्ट्रेण जृंभमाणं मुहुर्मुहुः ॥ वित्रस्ता दुद्रुवुर्लोका वीक्ष्य सर्वे दिशो दश ॥ १७ ॥ येनावृता इमे लोकास्तमसा त्वाष्ट्रमूर्तिना ॥ स वै वृत्र इति प्रोक्तः पापः परमदारुणः ॥ १८ ॥ तं निजघ्नुरभिद्रुत्य सगणा विबुधर्षभाः ॥ स्वैःस्वैर्दिव्यास्त्रशस्त्रौघैः सोऽग्रसत्तानि कृत्स्नशः ॥ १९ ॥ ततस्ते विस्मिताः सर्वे विषण्णा ग्रस्ततेजसः ॥ प्रत्यंचमादिपुरुषमुपतस्थुः समाहिताः ॥ २० ॥ देवा ऊचुः ॥ वाय्वंबराग्न्यप्क्षितयस्त्रिलोका ब्रह्मादयो ये वयमुद्विजंतः ॥ हराम यस्मै बलिमंतकोऽसौ बिभेति यस्मादरणं ततोऽस्तु नः ॥ २१ ॥ अविस्मितं तं परिपूर्णकामं स्वेनैव लाभेन समं प्रशांतम् ॥ विनोपसर्पत्यपरं हि बालिशः श्वलांगुलेनातितितर्ति सिंधुम् ॥ २२ ॥

पंचमेनान्वयः । कथंभूतम् । विष्वक्समंतत इषुविक्षेपमात्रं प्रतिदिनं वर्धमानम् ॥ १३ ॥ दग्धशैलप्रतीकाशं कृष्णवर्णम् । संध्याभ्रानीकवद्वर्चो दीप्तिर्यस्य तम् तप्तताम्रवच्छिखाः श्मश्रूणि च यस्य । मध्याह्नार्कवदुग्रे लोचने यस्य ॥ १४ ॥ रोदसी आरोप्येवेत्यर्थः ॥ १५ ॥ दरीवद्गंभीरेण वक्त्रेण मुहुर्मुहुर्जृंभमाणमित्यन्वयः । कथंभूतेन । नभस्तलं पिबता । ऋक्षाणि जिह्वया लिहता । भुवनत्रयं ग्रसता ॥ १६ ॥ महता विस्तीर्णेन । रौद्रा दंष्ट्रा यस्मिन् ॥ १७ ॥ वृत्रनाम निर्वक्ति । येनावृता इति । त्वाष्ट्री मूर्तिर्यस्य तमसस्तेन त्वाष्ट्ररूपेणेत्यर्थः । तथा च श्रुतिः । " स इमाँल्लोकानावृणोत्तद् वृत्रस्य वृत्रत्वम् " इति ॥ १८ ॥ अग्रसद्भक्षितवान् ॥ १९ ॥ ग्रस्तं तेजो येषाम् । प्रत्यञ्चमंतर्यामिणं त्रिभुवनस्य तेन व्याप्तत्वात्क्वापि गमनासंभवात्तत्रैव स्थित्वा तुष्टुवुरित्यर्थः । " महाभये परित्राणमन्यतो न भवेदिति ॥ हरिमेव प्रपद्यंते सुराः शरणमातुराः ॥" ॥ २० ॥ वाय्वादीनि पंचमहाभूतानि तैर्निर्मितास्त्रयो लोकास्तेषामधिपतयो ब्रह्मादयश्च ततोऽर्वाचीना वयं च सर्वे यस्मै अंतकाय कालायोद्विजंतः संतो बलिं हरामासावपि यस्माद्बिभेति ततः परमेश्वरादेव नोऽस्माकमरणं शरणं रक्षणमस्तु ॥ २१ ॥ तत एवेत्यवधारणे हेतुमाहुः । अविस्मितं निरहंकारं कुतूहलशून्यं वा कुतः । प्रशांतं रागादिशून्यम् । तच्च कुतः । स्वेनैव लाभेन परिपूर्णकामम् । तच्च कुतः । सममुपाधिपरिच्छेदशून्यम् । एवंभूतं परमेश्वरं विना परं यः शरणार्थमुपसर्पति

नो शरः ।' मात्रं स्थूलमिह प्रोक्तं तन्मात्रं वर्द्धते दिने ॥ " इति ज्ञेयमन्यथा जगन्नाशप्रसंगात् । समंतात्स्वस्योर्द्ध्वाधो दशदिक्ष्वित्यर्थः ॥ १३ ॥ १४ ॥ आरोप्यारोप्येवेत्यर्थः ॥ १५ ॥ पिबतेव ॥ १६ ॥ १७ ॥ पातीति पः पालः परमात्मा धर्मो वा तस्मादपगतः पापः । नन्वग्रे तस्य " नारायणे भगवति कथमासीद्दृढा मतिः " इति राज्ञः प्रश्नेन परमभक्तत्ववर्णनात् कथमित्थमुक्तमत आह–पं परमात्मानमाप्नोतीति पापः । एवं परं केवलमदारुण इत्यपि ज्ञेयम् । श्रुतिस्तु स्पष्टार्थत्वान्न व्याख्याता ॥ १८ ॥ तं वृत्रम् ॥ १९ ॥ ततः शस्त्रग्रासानंतरम् । ते देवाः । तेन वृत्रेण तत्रैव यत्र स्थिता इत्यर्थः । शरणं रक्षकम् ॥ २० ॥ असावपि । अंतकोपि ॥ २१ ॥ सुधियान्यो नाश्रयणीय इत्याह–अविस्मितमिति । तं विनाऽपरं देवतांतरं कर्मयोगं ज्ञानयोगमपरयोगं वा शरणार्थं बालिशो महामूर्ख एवापसर्पति न तु विज्ञः । यथा शुनः पुच्छेन सिन्धुमतितर्तुमिच्छति स

यस्योरुशृंगे जगतीं स्वनावं मनुर्यथाऽऽबध्य ततार दुर्गम् ॥ स एव नस्त्वाष्ट्रभयाद्दुरंतात्त्राताश्रितान्वारिचरोऽपि नूनम् ॥ २३ ॥ पुरा स्वयंभूरपि संयमांभस्युदीर्णवातोर्मिरवैः कराले ॥ एकोऽरविंदात्पतितस्ततार तस्माद्भयाद्येन स नोऽस्तु पारः ॥ २४ ॥ य एक ईशो निजमायया नः ससर्ज येनानुसृजाम विश्वम् ॥ वयं न यस्यापि पुरः समीहतः पश्याम लिंगं पृथगीशमानिनः ॥ २५ ॥

स बालिशोऽज्ञः । यतोऽसौ शुनो लांगूलेन पुच्छेन समुद्रमतितितर्ति अतितर्तुमिच्छतीत्यर्थः । यथा तेन समुद्रतरणं न भवति तथा निरीश्वराश्रयणेन व्यसनार्णवतरणं न भवतीति भावः ॥ २२ ॥ महाभये स एव रक्षक इति दृष्टमित्याहुः यस्येति द्वाभ्याम् । यस्य महाशृंगे जगतीं पृथ्वीमेव स्वनावं बद्ध्वा मनुः सत्यव्रतो यथावद्दुर्गं संकटं ततार स एव वारिचरो मत्स्यमूर्तिर्नोऽस्मानप्याश्रितान्सतो नूनं त्राता रक्षिष्यति ॥ २३ ॥ संयमांभसि प्रलयोदके उदीर्णैरुद्भतैर्वातैर्ये ऊर्मयस्तेषां रवैः कराले भयंकरे । अरविंदान्नाभिकमलात्पतितप्राय एकोऽसहाय एव तस्माद्भयाद्येन नारायणेन ततार स एव नः पारस्तारकोऽस्तु ॥ २४ ॥ किं च । वयं भगवतैव सृष्टाः पालिताश्च बहुशोऽतस्तमेव शरणं व्रजामेत्याहुः य एक इति त्रिभिः । येनानुगृहीताः संतो विश्वं सृजाम । ननु यूयमेव स्रष्टारो नान्यो युष्माकमनुग्राहकोऽस्ति तस्यादर्शनात्तत्राहुः । अस्मत्तः

श्वैव सिंधुं तर्तुं न शक्नोति किमुत तत्पुच्छग्राही प्रत्युत स्वपुच्छग्राहिणं दृष्ट्वा प्रथमं समुद्रे क्षिपति पश्चात्स्वयमपि निमज्जतीति भावः । भगवदाश्रयी तु संसारसिन्धुं यत्तरति तत्किमपि नाद्भुतमित्याह—अविस्मितमिति । न विद्यते विस्मितं किमप्यद्भुतं यत्र तं विना दुर्लंघ्यस्यापि संसारसिंधोस्तारणेऽन्यत्रातिविस्मयोऽपि तत्र न कोऽपि विस्मयः सदैव तस्य गोष्पदीकरणसामर्थ्यादिति भावः । स्वेनैव स्वस्वरूपेणैव । यो लाभः सौन्दर्यादिमाधुर्यसप्तकस्य यो लाभस्तेन सह परिपूर्णः कामः स्वीयह्लादिनीशक्तिदत्तो भोगो यस्य तम् । प्रशांतमनुग्रं सेवापराधे जातेऽपि भक्तवात्सल्यात्क्षंतारम् । संदर्भस्तु—अविस्मितं ततोन्यस्यापूर्वस्य वस्तुनोऽसंभवाद्विस्मयरहितम् । अतः स्वेनैव स्वीयेनैव स्वस्यैव कर्मभूतस्य क्रियाभूतेन लाभेन परिपूर्ण[illegible]मं नान्यस्येत्यर्थः । अतः सर्वत्र समम् । अतः प्रशांतं चित्तदोषरहितं तथोक्तम् "रजस्तमःप्रकृतयः समशीला भजंति वा" इत्यादि । सत्यव्रतेनाप्युक्तम् "न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् । कर्तुं समेताः प्रभवंति पुंसस्तमीश्वरं वै शरणं प्रपद्ये ॥" इति । श्रीमहाभारतेऽपि "यस्तु विष्णुं परित्यज्य मोहादन्यमुपासते । स हेमराशिमुत्सृज्य पांशुराशिं जिघृक्षति ॥" इति । तदिदं भक्तिसंदर्भे विशेषेण विवृतमस्तीत्युपरम्यते । स्वामिचरणैरप्येतत्सुष्ठ्वेव विवृतम् ॥ २२ ॥ वयं त्विति । निकृष्टाः सकामा अप्यस्मिन्महाभय एव शरणं यांतोऽपि तेनैव रक्षणीया यथा पूर्वं इत्यभिप्रेत्याह—महाभय इति । यस्य मत्स्यमूर्तेः । यथा ततार तथा वयमपि तरेमेति भावः । वारिचरोऽपि वारिण्येव चरन्नपि तत्रैव स्थित्वा जगतस्थानस्मानीश्वरत्वाद्रक्षतु ॥ २३ ॥ नाभिकमले स्थितस्यैव मोहोद्भवात्पातिततुल्यत्वात्पातितप्राय इत्युक्तं स्वामिचरणैः । एकाकित्वाद्द्वितीयवस्तुनोऽनुत्पन्नत्वात् । सोऽबिभेत् । "स द्वितीयमैच्छत्" इति श्रुतेः ॥ २४ ॥ स खलु सर्वत्रात्र च वर्तमानोप्यस्माकं बहिर्मुखेंद्रियाणामदृश्योऽपि कृपयैव दृश्यो भूत्वा रक्षत्वित्याहुः—किंचेति । अतो भगवत्सृष्टत्वात् । अत्राक्षिपति—नन्विति । तत्र अदर्शने । विश्वनाथस्तु—पुरतोऽस्माकमग्र एव संमीहमानस्य रामकृष्णादिरूपेण

यो नः सपत्नैर्भृशमर्द्यमानान्देवर्षितियङ्नृषु नित्य एव ॥ कृतावतारस्तनुभिः स्वमायया कृत्वात्मसात्पाति युगेयुगे च॥२६॥ तमेव देवं वयमात्म दैवतं परं प्रधानं पुरुषं विश्वमन्यत् ॥ व्रजाम सर्वे शरणं शरण्यं स्वानां स नो धास्यति शं महात्मा ॥ २७ ॥ श्रीशुक उवाच ॥ इति तेषां महा राज सुराणामुपतिष्ठताम् ॥ प्रतीच्यां दिश्यभूदाविः शंखचक्रगदाधरः॥२८॥आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ ॥ पर्युपासितमुन्निद्रशरदं बुरुहेक्षणम्॥२९॥दृष्ट्वा तमवनौ सर्व ईक्षणाह्लादविक्लवाः ॥ दंडवत्पतिता राजञ्छनैरुत्थाय तुष्टुवुः ॥३०॥ देवा ऊचुः ॥ नमस्ते यज्ञवीर्याय वयसे उत ते नमः ॥ नमस्ते ह्यस्तचक्राय नमः सुपुरुहूतये ॥३१॥ यत्ते गतीनां तिसृणामीशितुः परमं पदम्॥नार्वाचीनो विसर्गस्य धातर्वेदितुमर्हति ३२॥

पुरः पूर्वमेवांतर्यामितया समीहमानस्यापि यस्य लिंगं रूपं न पश्यामः । तत्र हेतुः । पृथक्पृथगीशा इत्यभिमानिनः ॥ २५ ॥ देवादिषूपेंद्रपरशुराममत्स्यरामादितनुभिः कृतावतारः सन्नस्मानात्मसात्कृत्वा पाति च ॥ २६ ॥ आत्मभूतं दैवतं कुतो विश्वं विश्वात्मकम् । तथापि विकारं वारयंति । अन्यम् । विश्वात्मत्वे हेतुः । परं कारणम् । ननु प्रधानं पुरुषश्च विश्वस्य कारणं तत्राहुः । प्रधानं पुरुषं च । तदात्मकोऽपि स एवेत्यर्थः । स एव स्वानां नः शं विधास्यति ॥ २७ ॥ प्रतीच्यां दिशि हृदि प्रथम माविरभूत् ॥ २८ ॥ पुनश्च तं पुरो दृष्ट्वेक्षणाह्लादेन विवशा अवनौ दंडवत्पतिताः संतः शनैरुत्थाय तुष्टुवुरित्यन्वयः । कथं भूतम् । श्रीवत्सकौस्तुभौ विना स्वतुल्यैः श्री वत्सकौस्तुभमात्रव्यतिरिक्तैः शंखचक्रादिभिः कृत्वा स्वसमानैः षोडशभिः सुनंदादिभिः परितः सेवितम् । उन्निद्रशरदंबुरुहवदीक्षणे यस्य तम् ॥ २९ ॥ ३० ॥ यज्ञो वीर्यं स्वर्गादिफलजननाय सामर्थ्यं यस्य तस्मै नमः वयसे उत तत्फलपरिच्छेदककालात्मनेऽपि । तद्विघातकेषु दैत्येष्वस्तं प्रक्षिप्तं चक्रं येन । एवंभूतैः प्रभावैः सुपुरुहू तये शोभनबहुनाम्ने ॥ ३१ ॥ ननु मम गुणातीतं रूपं विहाय गुणोपाधिकं यज्ञवीर्यत्वादि किमिति वर्ण्यते तत्राहुः । यत्त इति । यत्तव गुणत्रयस्येशितुर्नियंतुस्त्रिगुणा

लीलां कुर्वतोऽपीत्याह ॥ २५ ॥ मायया कृपया चिच्छक्त्या वा । नोऽस्मानात्मसात्कृत्वा पातीत्यत एव सांप्रतं स्वरक्षणार्थं निवेदनेऽपि न संकुचाम इति भावः ॥ २६ ॥ मायाशक्त्या विश्वं विश्वरूपं स्वरूपशक्त्याऽन्यं विश्वस्माद्भिन्नम् ॥२७॥ प्रतीच्यां दिशि पश्चिमसमुद्रकूले । देशांतरस्योत्तमस्य दैत्याक्रांतत्वात्तत्र देवैः स्थातुमशक्यत्वात्तत्रैव विविक्ते उपविश्य स्तुतत्वात् । अन्यत्र गमनासंभवेन तत्रैव स्थित्वांतर्यामिणः स्तुतत्वान्मुख्यायाः प्रतीच्या दिशोऽसंभवाल्लक्षणया हृदीति बोध्यं वा ॥ २८ ॥ श्रीवत्सकौस्तुभौ विना द्वे चिह्ने विहाय चतुर्भुजत्वादिनात्मतुल्यैः षोडशभिः ते च नंदसुनंदप्रबलोद्बलजयविजयविष्वक्सेनगरुडश्रुतदेवजयंतकुमुदकुमुदाक्षानि शठसात्वतपुष्पदंतदारुकाख्याः षोडशेति विवेकः ॥ २९ ॥ ३० ॥ वयसेऽभक्तानां संसारबंधदायिने 'वय-बंधने' अतोऽसुच्प्रत्ययः । श्रुतावपि वयशब्दो बंधनवाचको दृष्टः । "मा तंतुः छेदि वयतो धियं मे मात्रा मा शार्यपसः पुर ऋतोः" इति श्रुतेः । अर्थस्तु-दैवे धियं वयतो बध्नतो मे तंतुः संततिर्मा छेदि उत्सन्नो मा भूत् ऋतोः पुरः ज्ञानोत्पत्तेः पूर्वमपसः कर्मणो मात्रा मानं परिमाणं मा शारि । 'शॄ-हिंसायाम्' । फलदाने नष्टं मा भूत् "कर्मणा ज्ञानमातनोति" इति श्रुतेः । ज्ञानमनुत्पाद्य न नश्यत्वित्यर्थः । स्वकृतं बंधनं स्वयमेव हंतुं शक्तो नान्य इति ज्ञापनाय संधिकार्याभावः । नमस्ते स्वस्तचक्रायेहाप्यनन्यसाध्यकरगशक्त्या । नित्यप्रका शनाय संध्यभावः । सुष्ठु पुरवो बहवो हूतयो नामानि यस्य तस्मै । "नामानि सर्वाणि यमाविशंति" इति श्रुतेः। यद्वा-सुपुरुभिर्बहुभिः "इंद्रायाहि" "चित्रभानो" इत्यादिवैदैर्हूतिराहूतिर्यस्य तस्मै । यद्वा-पुरुहुः शुद्धा ऊतिर्लीला यस्य तस्मै । "ऊतिर्लीला समाख्याता पुरुहुः शुद्धिरुच्यते" इत्यभिधानात् ॥ ३१ ॥ अत्राक्षिपति-नन्विति । नश्वरतुच्छस्वर्गपदप्राप्त्यर्थमेव स्तुध्वे न त्वनश्वरनित्यसुखमयवैकुंठार्थमत्र को हेतुस्तत्राहुः-यत्त

ॐ नमस्तेऽस्तु भगवन्नारायण वासुदेवादिपुरुष महापुरुष महानुभाव परममंगल परमकल्याण परमकारुणिक केवलजगदाधार लोकैकनाथ सर्वेश्वर लक्ष्मीनाथ परमहंसपरिव्राजकैः परमेणात्मयोगसमाधिना परिभावितपरिस्फुटपारमहंस्यधर्मेणोद्घाटिततमःकपाटद्वारे चित्तेऽपावृत आत्मलोके स्वयमुपलब्धनिजसुखानुभवो भवान् ॥ ३३ ॥ दुरवबोध इव तवायं विहारयोगो यदशरणोऽशरीर इदमनवेक्षितास्मत्समवाय आत्मनैवाविक्रियमाणेन सगुणमगुणः सृजसि पासि हरसि ॥ ३४ ॥

त्मिकानां तिसृणां गतीनां परमं पदं निर्गुणस्वरूपं तद्विसर्गस्यार्वाचीन इदानींतनो हे धातर्वेदितुं नार्हति । अतः केवलं तस्मै ते नमोऽस्तु ॥ ३२ ॥ मिताक्षराणि पद्यानि न मीयंते हरेर्गुणाः ॥ इति पद्यैरतुष्यंतः सद्यो गद्येन तुष्टुवुः ॥ १ ॥ भक्त्युद्रेकेण बहुधा संबोधयंतो दुर्ज्ञेयत्वं प्रपंचयंति भगवन्नित्यादिना । परमं मंगलं शुद्धो धर्मो यस्मिन् । आत्मयोगेनाष्टांगेन यः समाधिश्चित्तैकाग्र्यं तेन परिभावितः सुशीलितः परिस्फुटो यः पारमहंस्यधर्मो भगवद्भजनं तेनोद्घाटितं तमोरूपं कपाटं यस्मिंस्तस्मिन् द्वारभूते चित्ते अपावृते प्रकटे आत्मलोके प्रत्यग्रूपे स्वयमेवोपलब्धमभिव्यक्तं यन्निजसुखं तदनुभवरूपो भवान् ॥ ३३ ॥ ननु केवलानुभवरूपत्वे मम सृष्ट्यादिकर्तृत्वं कथं

इति । तिसृणां देवमनुष्यतिर्यग्गतीनामीशितुः प्रापकस्य तव यत्परमं पदं वैकुंठं धाम तद्विसर्गस्य सृष्टस्यार्वाचीनोऽस्मादृशो जनो वेदितुमनुभवितुं नार्हति । न हि घासतुषादिकं विना पशुरन्यत् क्षीरादिकं वाञ्छति लभते वा कुतश्चिदिति भाव इति चक्रवर्ती ॥ ३२ ॥ "अपादः पदसंतानो गद्यं तच्च त्रिधा मतम् । चूर्णिकोत्कलिकाप्रायवृत्तगंधिप्रभेदतः ॥" इति त्रिविधभेदभिन्नेन गद्येन ( १ ) पुरुहूतय इत्युक्तमतो बहुभिर्नामभिः संबोध्य स्तुवते नम इति । हे भगवन् षडैश्वर्यपरिपूर्ण परिपूर्णत्वमेवाहुः–हे नारायण त्वमेव स्वांशाधिक्यक्रमेण व्यष्टिसमष्टिप्रकृत्यंतर्यामित्वेन क्षीरोदगर्भोदकारणार्णवशायी भवसीत्यर्थः । ततोऽपि पूर्णत्वात् हे वासुदेव व्यूहानामादिभूतः । ततोपि परिपूर्णत्वात् हे आदिपुरुष परव्योमनाथ । ननु कथमेवमवगम्यते तत्राहुः–महापुरुषेषु तत्तद्भक्तेषु महांतोऽनुभावा अनुरूपमहाप्रभावा एव यस्य सः।ननु महाप्रलये मद्भक्तमद्धाममदाकाराणां का वा वार्त्ता तत्राहुः–मंगलानि प्राकृतानि परममंगलान्यप्राकृतमंगलवस्तूनि त्वद्भक्तधामादीनि तेषां परमकल्याणं कुशलित्वं यतस्तेषां कालनियम्यत्वाभावादिति भावः । 'न मे भक्तः प्रणश्यति' इति न्यायेनेति ज्ञेयम् । किञ्च–अपरैश्वर्यमाधुर्यसिंधोस्तव करुणामेव बहिर्दर्शिनो वयं कालग्रस्यमाना आश्रयाम इत्याहुः । हे परमकारुणिक अंतर्दर्शीभिस्तु तवानुपलब्धनिजसुखानुभव एव भवति कदा आत्मयोगैर्यमनियमादिभिर्यः समाधिश्चित्तैकाग्र्यं तेन परि सर्वतोभावेन भावितः कृतः परिस्फुटः पारमहंस्यधर्मो भक्तियोगस्तेनोद्घाटितं तमः कपाटं द्वारं यस्य तथाभूते चित्ते चित्तमंदिरेऽपावृतोऽपगतावरणः आत्मलोके वैकुंठधामनि वर्तमानः चित्तस्यैतादृशत्वे सति तन्मध्य एव सहवैकुंठलोको भवान्स्फुरतीति भावः ॥ ३३ ॥ अत्राक्षिपति–नन्विति । इवशब्दस्याव्ययत्वेनावधारणार्थमंगीकृत्य दुर्बोध एवेति व्याख्येयं विहारयोगः क्रीडायुक्तिः । अत्र प्राञ्चः वे किं च स्वीयवैकुंठलोके सदा विहरन्नात्मारामो गुणातीतोपि प्रपंचलोकेऽस्मदादिदुर्ज्ञेयप्रकारैः सृष्ट्यादिभिर्विहरसीत्याहुः–दुरिति । विहारयोगः क्रीडायुक्तत्वं दुरवबोध इवेति त्वद्भक्तविज्ञैः सुबोधोप्यन्यैर्दुर्बोध इत्यर्थः । कुतः । यदश

**अथ तत्रभवान्किं देवदत्तवदिह गुणविसर्गपतितः पारतंत्र्येण स्वकृतकुशलाकुशलं फलमुपाददाति आहोस्विदात्माराम उपशमशीलः समंजसदर्शन उदास्त इति ह वाव न विदामः ॥ ३९ ॥ न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरे अनवगाह्यमाहात्म्ये अर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलांतःकरणाश्रयदुरवग्रहवादिनां विवादानवसरे उपरतसमस्तमायामये केवल एवात्ममायामंतर्धाय को न्वर्थों दुर्घट इव भवति स्वरूपद्वयाभावात् ॥ ३६ ॥**

तत्राहुः दुरवेति । दुरवबोध इव तवायं सृष्ट्यादिलक्षणः विहारयोगः क्रीडायोगः यद्यस्मादशरणो निराश्रयः । इदं विश्वम् । अनवेक्षितोऽस्माकं समवायो मेलनं साहाय्यं येन सः ॥ ३४ ॥ दुर्ज्ञेयांतरमाहुः अथ तत्रेति । यथेह देवदत्तो गृहादि निर्माय तत्र स्वकृतशुभाशुभयोः फलमुपादत्ते एवं भवान् ब्रह्मस्वरूपो जीवरूपेण गुणविसर्गे पतितः सन्नुपाददाति । यद्वा समंजसमप्रच्युतं दर्शनं चिच्छक्तिर्यस्य स भवानुदास्ते उदासीनः साक्षितया वर्तत इति न विदामः ॥ ३५ ॥ तदेवं विरोधेन दुर्ज्ञेयत्वमुक्त्वा तत्परिहारेण ज्ञानप्रकारमाहुः । न हीति । विरुध्यत इति विरोधः । उभयं न विरुद्धमित्यर्थः । न ह्यन्यदृष्टान्तेन त्वयि विकल्पो युज्यतेऽतर्क्यैश्वर्यत्वादित्याहुः । भगवतीति । अपरिमिता गुणगणा यस्य तस्मिन्नीश्वरे स्वतंत्रेऽनवगाह्यमतर्क्यं माहात्म्यं यस्य तस्मिन् । विकल्प एवं वा एवं वेति वितर्कः किमत्र युक्तमिति विचार इत्थमेवेति निश्चयः । तत्र प्रमाणाभासास्तदनुग्राहकाः कुतर्काश्चार्वाचीना वस्तुस्वरूपासंस्पर्शिनो ये विकल्पादयस्ते येषु शास्त्रेषु तैः कलिलं व्याकुलमंतःकरणमाश्रयो यस्य दुरवग्रहस्य दुराग्रहस्य तेन

रणोऽशरीरः शारीरचेष्टारहित एवेति । सृष्टिकर्त्ता हि साकार एव "सहस्रशीर्षा" इत्यादिश्रुतेः । नावेक्षितोऽनपेक्षितोऽस्माकमिंद्रादीनां हस्ताद्यधिष्ठातॄणां समवायः सहकारिता येन सः "संबंधे सहकारित्वे समवायः शोभनागमः" इति निरुक्तिः । आत्मनैव स्वेनैव आत्मन उपादानत्वेऽप्यविक्रियमाणेनैव । विवर्त्तवादांगीकारे त्वविक्रियमाणत्वं न चित्रं चित्रं खलु तदनंगीकारे एव अत एव वक्ष्यति गजेंद्रोपि "नमोनमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय" इति । कारणस्याद्भुतत्वं त्विदमेव यदुपादानत्वेऽपि निर्विकारत्वमेवेति । अगुणः सन्सगुणं विश्वं सृजसि कुलालादिर्हि किंचित्स्थानमवलंब्य स्वशरीरं च प्रवर्त्य ससहायो मृदादिवस्त्वंतरेण सगुण एव सगुणं घटादिकं सृजतीति दृष्टमितीदमेकं दुर्ज्ञेयत्वं सृष्टौ ॥ ३४ ॥ शिष्टानां पालनं हि दुष्टानां संहारं विना न भवतीत्यंतर्भूतसंहारस्य पालनस्यापि दुर्ज्ञेयत्वमाहुः—अथेति । देवदत्तः प्राकृतजीवो यथा गृहादिकं तत्र मित्रशत्रूदासीनादिगहने संसारे प्रविश्य स्वकृतधर्माधर्मफलं सुखदुःखं भुंक्ते तथैव तत्र भवानित्यादरे । त्वमपि गुणेभ्यः सत्त्वरजस्तमोभ्यो विविधः सर्गो येषां तेषु गुणविसर्गेषु देवासुरराक्षसेषु परस्परविघातिषु मध्ये पतितः उपेंद्रकृष्णरामाद्यवतारेषु शिष्टपालनदुष्टनिग्रहयोः प्रवृत्तः भोगैश्वर्यसुखं संग्रामादिश्रमदुःखं च यत्प्राप्नोषि तत्किं पारतंत्र्येण कर्माधीनत्वेन स्वकृतयोः पुण्यपापयोः कुशलाकुशलं सुखदुःखमुपाददाति स्वीकरोति आहोस्वित्किं वासमंजसदर्शनोऽप्रच्युतचिच्छक्तिः उदास्ते साक्षित्वान्न सुखदुःखं स्वीकरोतीति न विदामस्तत्त्वं न विद्मः । स्वामिव्याख्याने आहोस्विदित्यस्य यद्वेत्यर्थः ॥ ३९ ॥ वादागोचरत्वमाक्षिपति—नन्विति । एतद्विवादानवसरत्वं भवतां श्रद्धामात्रं तथात्वे युक्तिरुच्यतामिति स्वरूपद्वयाभावादिति । एकस्यैव भगवतस्तत्र निर्विशेषज्ञानगम्यत्वमेव ब्रह्मत्वम् । अलौकिकविशेषज्ञानगम्यत्वमेव भगवत्त्वमिति दूरवर्त्तिभिर्ज्ञानिभिरलौकिकविशेषग्रहणासमर्थैस्त्वमेव ब्रह्मसमीपवर्त्तिभिर्भक्तैरलौकिकविशेषग्रहणसमर्थैर्भगवानिति त्वमेवोच्यसे इत्यर्थः । तत्र कृपायाः परमाणुत्वपरममहत्त्वे एव दूरत्वसमीपत्वयोर्हेतू ज्ञेये इति विश्वनाथः ।

समविषममतीनां मतमनुसरसि यथा रज्जुखंडः सर्पादिधियाम्॥३७॥स एव हि पुनः सर्ववस्तुनि वस्तुस्वरूपः सर्वेश्वरः सकलजगत्कारणकारणभूतः सर्वप्रत्यगात्मत्वात्सर्वगुणाभासोपलक्षित एक एव पर्यवशेषितः ॥३८॥ अथ ह वाव तव महिमामृतरससमुद्रविप्रुषा सकृदवलीढया स्वमनसि निष्यंदमानानवरतसुखेन विस्मारितदृष्टश्रुतविषयसुखलेशाभासाः परमभागवता एकांतिनो भगवति सर्वभूतप्रियसुहृदि सर्वात्मनि नितरां निरंतरं निर्वृतमनसः कथमु ह वा एते मधुमथन पुनः स्वार्थकुशला ह्यात्मप्रियसुहृदः साधवस्त्वच्चरणांबुजानुसेवां विसृजंति न यत्र पुनरयं संसारपर्यावर्तः॥३९॥

वादिनां विवादस्यानवसरेऽगोचरे ननु श्रद्धामात्रमेतत् । युक्तिरुच्यतां तत्राहुः । उपरतो मायामयः संसारो यस्मिंस्तस्मिन्केवलेऽप्यात्ममायां मध्ये निधाय को न्वर्थः कर्तृत्वादिर्न संभवति यदि वस्तुतः कर्तृत्वादि भवेत्तर्हि विरोधः स्यान्न तु तदस्तीत्याहुः । स्वरूपद्वयाभावादिति। वस्तुतो द्वैताभावान्न विरोध इत्यर्थः ॥ ३६ ॥ अनुग्रहनिग्रहादिकं तु तत्तन्मतिभेदेन त्वन्मायया त्वयि स्फुरतीत्याहुः । समा विषमा च मतिर्येषां तेषां मतमभिप्रायम् । सर्पादिविषया धीर्येषां तेषां यथा रज्जुखंडस्तथातथा भाति । यद्वा तमेवाविरोधं पुरुषमतिभेदेन दर्शयति । समविषमेति ॥ ३७ ॥ तदेवं विरोधं परिहृत्य निश्चितं परमार्थमाहुः । स एव हि नानारूपेण प्रतीतः । वस्तुस्वरूपः सद्रूपः । सर्वेषां गुणानां विषयाणामाभासैः प्रकाशैरुपलक्षितः । ननु तैर्जीव एवोपलक्ष्यते । न । सर्वप्रत्यगात्मत्वात्सर्वजीवांतर्यामित्वात् । जडतादात्म्याध्यासेन जीवस्यापि जडप्रायत्वान्न तेन विना प्रकाश इति भावः पर्यवशेषितो "नेतिनेति" इत्यादिश्रुतिभिः ॥ ३८ ॥ अतस्त्वद्भक्तिरेव परमपुरुषार्थ इत्याहुः अथ हेत्यादिपर्यावर्त इत्यंतेन । यस्मादेवंभूतस्त्वं परमेश्वरः । अथ ह वाव अत एव हि । हे मधुमथन परमभागवता एते त्वत्पादांभोजानुसेवां कथं मुहुर्मुहुर्विसृजंतीत्यन्वयः । हि यस्मात्स्वार्थे पुरुषार्थे कुशला निपुणाः अत एव आत्मा त्वमेव प्रियः सुहृच्च येषां ते साधवो रागादिशून्याः । तत्र हेतुः । तव महिमैवामृतरससमुद्रस्तस्य विप्रुषा बिंदुमात्रेण सकृदवलीढया आस्वादितया स्वमनसि निष्यं

संदर्भस्तु—स्वरूपद्वयाभावात् संसारिजीववद्बद्धत्वमुक्तत्वावस्थाविशेषाभावात् । बद्धत्वे हि मुक्तत्वं तथा दिव्यातिदिव्यतत्तदवतारादिलक्षणकोऽप्यर्थो न दुर्घटो भवति यतः आत्ममायां निजेच्छाशक्तिमंतर्द्धाय मध्ये निधाय तत्र तत्र सहायत्वेन संपाद्य तिष्ठति सतीत्यर्थः । उभयत्र हेतवो भगवतीत्यादय इत्याह ॥ ३६ ॥ ननु स्वरूपद्वयाभावेन साम्यं चेत्तर्हि भक्तानुग्रहाभक्तनिग्रहौ कथं घटेतां तत्राह—अनुग्रहेति । पुरुषमतिभेदेनैव समेपि त्वयि तथातथा प्रतीयते न वस्तुत इत्यत्र दृष्टांतमाह—यथेति । यथैकस्मिन्नेव रज्जुखंडे कस्यचिन्मंदांधकारे सर्पोऽयमपरस्य जलरेखेयं तदन्यस्य स्फुटितपृथ्वीयमित्यादिस्फुरणं भवति तद्वत्त्वय्यपि तत्तन्मत्यनुरोधेन तथा तथा स्फुरणमिति भावः । ननु विरोधाभावप्रतिपादनप्रकरणेऽनुग्रहनिग्रहादिप्रतिपादनं प्रकृतानुपयुक्तमिति चेत्तत्राह—यद्वेति ॥ ३७ ॥ स परमात्मैव हि उपलक्षितोऽनुमितः तदुक्तम् "गुणप्रकाशैरनुमीयते भवान्" इति । अत्राक्षिपति—नन्विति । जडे शरीरेंद्रियादौ तादात्म्यस्य स्वरूपस्याध्यासादारोपात् । तेन परमात्मना । इति भाव इति । "अजोऽनुबद्धः सगुणैरजाया गुणात्परं वेद न ते स्वरूपम्" इति न्यायेन जीवस्यापि जडत्वं निश्चीयत इति तात्पर्यम् । मायामायिकवस्तुमात्रनिषेधेन पर्यवशेषितः । अत्र भागवतामृतदृष्टाः "विना शारीरचेष्टत्वं विना भूम्यादिसंश्रयम् । विना सहायांस्ते कर्मा विक्रियस्य सुदुर्गमम्॥" इत्याद्याः कारिका अनुसंधेयाः ॥३८॥ यतो ज्ञानादपि भक्तिः श्रेष्ठाऽतो हेतोः । अथ ह वावेत्यस्यार्थोऽत एव सर्वेश्वरस्वादेरेवेत्यर्थः । हे मधुमथनेति । प्रलये ब्रह्माणं भक्षितुमुद्यतस्य मधोर्मथनात्सर्वस्रष्टारं ब्रह्माणमपि त्वमेव रक्षितवानतस्तद्‌द्भूता वयमपि रक्ष्या एवेति

त्रिभुवनात्मभवन त्रिविक्रम त्रिनयन त्रिलोकमनोहरानुभाव तवैव विभूतयो दितिजदनुजादयश्चापि तेषामनुपक्रमसमयोऽयमिति स्वात्ममायया सुरनरमृगमिश्रितजलचराकृतिभिर्यथापराधं दंडं दंडधर दधर्थ एवमेनमपि भगवञ्जहि त्वाष्ट्रमुत यदि मन्यसे ॥ ४० ॥ अस्माकं तावकानां तव नतानां ततततामह तव चरणनलिनयुगलध्यानानुबद्धहृदयनिगडानां स्वलिंगविवरणेनात्मसात्कृतानामनुकंपाऽनुरंजितविशदरुचिरशिशिरस्मितावलोकेन विगलितमधुरमुखरसामृतकलया चांतस्तापमनघार्हसि शमयितुम् ॥ ४१ ॥

दमानमतिशयेन स्ववद्यन्निरंतरं सुखं तेन विस्मारिता दृष्टश्रुतविषयाः सुखलेशाभासा येषां ते । अत एव भगवति त्वयि नितरां निरंतरं निर्वृतं च मनो येषां ते । यत्र यस्यामनुसेवायां सत्याम्॥ ३९ ॥प्रस्तुतं विज्ञापयंति त्रिभुवनेत्यादिना यावत्समाप्ति। त्रिभुवनमात्मा स्वरूपं भवनं च यस्य त्रिभुवनस्यात्मा भवनं चेति वा।त्रयो विक्रमा यस्य।त्रींल्लोकान्नयतीति तथा। त्रयाणां लोकानां मनोहरोऽनुभावो यस्य।एवं चतुर्धा संबोध्याहुः। तेषामनुपक्रमसमय उद्यमकालो न भवतीति मत्वा। हे दंडधर पूर्वं यथा दंडं दधर्थ धृतवानस्येवमेनं त्वाष्ट्रमपि जहि यदि मन्यसे हंतुं यदीच्छसि ॥ ४० ॥ प्रथमं तावत्त्वदीयानामस्माकमंतस्तापं शमयितुमर्हसि । तावकानामित्यत्र हेतुः । तत ततामह हे पितः हे पितामह तव चरणनलिनयुगलध्यानेनैवानुबद्धो हृदये निगडः शृंखला येषाम् । स्वलिंगविवरणेन निजमूर्तिप्रकटनेन स्वीकृतानाम् । केन । अनुकंपयाऽनुरंजितं सानुरागं च तद्विशदं

भावः । ये त्वत्पदांबुजं न स्मरंति ते स्वार्थघातिन एवेति भावः । अतः स्वार्थकुशलत्वात् । अत्र रागादिशून्यत्वे । अत एव विस्मारितदृष्टश्रुतविषयत्वादेव । संसारे पर्यावर्त्तः परिभ्रमणम् ॥ ३९ ॥ त्वद्भक्तेषु वयं सकामत्वादतिनिकृष्टा इति द्योतयितुं प्रस्तुतं प्रकृतम् । त्रिभुवनमात्मभवनं स्वगृहं यस्य त्वद्भक्तादेव मनुष्यादयो यत्र स्थित्वा त्वां सेवंते तदिदमसुराक्रांतमभूदिति भावः । स्वामिव्याख्याने आत्मेति पृथक्पदं तत्र च त्वत्स्वरूपमपि दैत्येनाक्रांतं त्वं कथं न बुध्यसे इति भावः । तत्रापि त्रिभुवनस्य जडत्वेन मामपि तत्स्वरूपत्वाज्जडं ब्रूतेति चेदाहुः—त्रिभुवनस्यात्मेति । अत्र च त्रिभुवनस्यात्मत्वात्त्वं तद्दुःखादिकं जानास्येव तथाप्यतिपीडिता वयं जानानमपि स्मारयाम इति भावः । त्रयो विक्रमा इति । भाविकर्मस्मारणेनाधुनापि त्वयाऽस्मदर्थे पुरुषार्थो विधेय इति भावः । त्रिविक्रमत्वे हेतुं कथयंस्तत्संबोधयंति—त्रिनयनेति । नयत्यस्मभ्यं प्रापयतीत्यर्थः । विश्वनाथस्तु—त्रिभिर्विक्रमैस्त्रींल्लोकान् नयसीति यदेव त्रिभुवनं वामनावतारे त्रिभिरेव पादैः प्रतिगृह्य बलेः सकाशादानीयास्मभ्यं दास्यसीति भावः । त्रिलोकमनोहरानुभावेति । संप्रत्यपि त्रिलोकस्था जनास्तवानुभावं पश्यंतु दैत्यं संहरेति भावः । ननु परहिंसां समुद्दिश्य मां स्तुबीध्वे तत्राहुः—यद्यपि तवैव विभूतयस्तथापि तेषां दैत्यानामनुद्यमसमयोऽयमिति ज्ञात्वा निवेदयाम इति भावः । हे दंडधरेति । त्वमेव दुष्टदंडधर्त्ता नास्मदादय इति भावः । हेभगवन्निति । सर्वसामर्थ्यं द्योतयंत आहुरिति ॥ ४० ॥ हे तत पितः ततामह हे पितामहेति ब्रह्मैवाह देवेषु मुख्यत्वात्त्वमस्माकं पितैव वस्तुतः कंजमंतरीकृत्य पितामहोऽपि यद्वेंद्रादीनामिदं वाक्यं ब्रह्मरूपेण त्वं पितापि जलशायिरूपेण पितामहोऽपि त्वमेवास्माकं कश्यपादीनामिति भावः । एतेन ब्रह्मादयः सर्वे तव पाल्या एव तवैव सर्वज्येष्ठत्वादित्युक्तं ततामहेति । तद्धितोत्रार्ष एव पितृशब्दादेव डामहचो विधानात् । चक्रवर्त्ति

अथ ह भगवंस्तवास्माभिरखिलजगदुत्पत्तिस्थितिलयनिमित्तायमानदिव्यमायाविनोदस्य सकलजीवनिकायानामंतर्हृदयेषु बहिरपि च ब्रह्मप्रत्यगात्मस्वरूपेण प्रधानरूपेण च यथादेशकालदेहावस्थानविशेषं तदुपादानोपलंभकतयाऽनुभवतः सर्वप्रत्ययसाक्षिण आकाशशरीरस्य साक्षात्परब्रह्मणः परमात्मनः कियानिह वा अर्थविशेषो विज्ञापनीयः स्याद्विस्फुलिंगादिभिरिव हिरण्यरेतसः ॥ ४२ ॥ अत एव स्वयं तदुपकल्पयास्माकं भगवतः परमगुरोस्तव चरणशतपलाशच्छायां विविधवृजिनसंसारपरिश्रमोपशमनीमुपसृतानां वयं यत्कामेनोपसादिताः ॥ ॥ ४३ ॥ अथो ईश जहि त्वाष्ट्रं ग्रसंतं भुवनत्रयम् ॥ ग्रस्तानि येन नः कृष्ण तेजांस्यस्त्रायुधानि च ॥ ४४ ॥ हंसाय दह्रनिलयाय निरीक्षकाय कृष्णाय मृष्टयशसे निरुपक्रमाय ॥ सत्संग्रहाय भवपांथनिजाश्रमाप्तावंते परीष्टगतये हरये नमस्ते ॥ ४५ ॥

रुचिरं शिशिरं च स्मितं तत्सहितेनावलोकेन तथाऽनुकंपयैव विगलितो मधुरो मुखरसः प्रियवाक् सैवामृतकला तया च ॥४१॥ किं च । अस्मदभिप्रायस्त्वया ज्ञायत एव किमत्रास्माभिर्विज्ञापनीयमित्याहुः । अथ ह हे भगवंस्तवास्माभिरिह कियान्वार्थविशेषो विज्ञापनीयः स्यादित्यन्वयः । यथा हिरण्यरेतसोऽग्नेस्तदंशभूतैर्विस्फुलिंगादिभिः प्रकाशो न क्रियते तथा तवास्माभिः कार्यार्थप्रकाशनं न कार्यमित्यर्थः । अत्र हेतुगर्भाणि विशेषणानि । अखिलजगतामुत्पत्त्यादिषु निमित्तायमानया दिव्यमायया विनोदो यस्य । अत एव सर्वजीवनिकायानामंतर्हृदयेषु ब्रह्मस्वरूपेण प्रत्यगात्मांतर्यामी तद्रूपेण च बहिरपि प्रधानरूपेण देशकालदेहावस्थानविशेषाननुल्लंघ्यानुभवतः । कथम् । तेषामुपादानतया निमित्तरूपतयोपलंभकतया च उपादानस्योपलंभकतयेति वा । अत एव सर्वेषां प्रत्ययानां बुद्ध्यादीनामपि साक्षिणः । साक्षित्वे हेतुः । आकाशवदलिप्तं शरीरं स्वरूपं यस्य । अलिप्तत्वे हेतुद्वयम् । साक्षात्परब्रह्मणो निरुपाधेः परमात्मनः शुद्धसत्त्वमूर्तेश्च ॥ ४२ ॥ अत एव सर्वज्ञत्वादेव वयं यत्कामेन यस्य कार्यस्य कामेनोपसादिताः प्रापितास्तदस्माकं कार्यं स्वयमेवोपकल्पय संपादयेति । चरणमेव शतपलाशं कमलं तस्य छायां विविधैर्वृजिनैर्यः संसारपरिश्रमस्तस्योपशमकरीमुपसृतानां प्राप्तानाम् ॥ ॥ ४३ ॥ पूर्वं भक्तेरुत्कर्षोक्तेस्तत्कामशंका मा भूदिति स्वकामं कथयंति । अथो अनंतरमेव ॥ ४४ ॥ शीघ्रं तद्वधाय पुनः प्रणमंति । हंसाय शुद्धाय हरये आर्तिहराय

ना तु—ततततेत्यैकैव संबुद्धिः स्वीकृता व्याख्याता च पितामहेति । विशदं स्फुटम् । शिशिरं शीतलम् ॥ ४१ ॥ अन्यदाहुः—किञ्चेति । तव त्वयि । इत्यर्थ इति । अंतर्यामित्वेन प्रथममेव जानासीति भावः । अत एव दिव्यमायाविनोदित्वादेव । देशश्च कालश्च देहावस्थानविशेषा बाल्यादयश्च तानतिक्रम्य यत्र काले देशेऽवस्थायां यद्भवति तत्सर्वं तत्रतत्रानुभवतस्साक्षात्कृतवतः तेषां देवादिजीवनिकायानामुपादानतया कारणत्वेनोपलंभकतया प्रकाशकत्वेन च द्वद्वतं विज्ञापनीयं जानत इत्यर्थः । उपादानोपलंभेत्यत्र हेतुद्वयांगीकारे गौरवं मत्वाह—उपादानस्य प्रकृतेरुपलंभकतया प्रकाशकतयेत्यर्थः । “ मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ” इति श्रीमुखोक्तेः । अत एव सर्वप्रकाशकत्वादेव । निरुपाधेरुपाधिसंगशून्यस्य । यथाकाशे वर्त्तमानानामपि पार्थिवरजोमेघवाय्वादीनामसंगत्वात्संगो भवति तद्वत्तवापीत्यर्थः ॥ ४२ ॥ गुरोरपि चरणच्छाया संसारदुःखहारिणी किं पुनः परमगुरोस्तवेति भावः ॥ ४३ ॥ ईशेति शंभुप्रसक्तिवारणाय । कृष्णेति । भक्तजनक्लेशकर्षणसमर्थोऽसीति भावः । चक्रवर्त्ती—सर्वत्रैव स्तुतिषु शुद्धभक्तेरुत्कर्षोक्तेः कदाचिद्भक्तिमेव ददाति भगवांस्तथा सति प्रेमाश्रुकंपादिमंतो वयं स्वर्गीयसुखेषु वैमुख्योदयात्पृथिव्यामेव पर्यटिष्यामोस्मद्वैरिण एवामरावतीमध्यास्य विराजिष्यंत इत्याशंकया गांभीर्याभावेन च स्पष्टं स्वकाममाहुः अथो इत्यवतरणिकामाह ॥ ४४ ॥ तत्र चरणयोः

श्रीशुक उवाच ॥ अथैवमीडितो राजन्सादरं त्रिदशैर्हरिः ॥ स्वमुपस्थानमाकर्ण्य प्राह तानभिनंदितः ॥ ४६ ॥ श्रीभगवानुवाच ॥ प्रीतोऽहं वः सुरश्रेष्ठा मदुपस्थानविद्यया ॥ आत्मैश्वर्यस्मृतिः पुंसां भक्तिश्चैव यया मयि ॥ ४७ ॥ किं दुरापं मयि प्रीते तथाऽपि विबुधर्षभाः ॥ मय्येकांतमतिर्नान्यन्मत्तो वांछति तत्त्ववित् ॥ ४८ ॥ न वेद कृपणः श्रेय आत्मनो गुणवस्तुदृक् ॥ तस्य तानिच्छतो यच्छेद्यदि सोऽपि तथाविधः ॥ ४९ ॥ स्वयं निःश्रेयसं विद्वान्न वक्त्यज्ञाय कर्म हि ॥ न राति रोगिणोऽपथ्यं वांछतो हि भिषक्तमः ॥ ५० ॥ मघवन्यात भद्रं वो दध्यंचमृषिसत्तमम् ॥ विद्याव्रततपःसारं गात्रं याचत मा चिरम् ॥ ५१ ॥

ते नमः । शुद्धत्वे हेतवः । दहूनिलयाय हृदयाकाशनिकेताय । निरीक्षकाय बुद्ध्यादिसाक्षिणे । कृष्णाय सदानंदरूपाय । "कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ॥ तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥" इति निरुक्तेः । आर्तिहरत्वे हेतवः । मृष्टं रुचिकरं यशो यस्य । निरुपक्रमायादिशून्यायासद्भिः संगृह्यत इति तथा तस्मै । भवपांथो भवरूपे पथि वर्तमानस्तस्य जनस्य स्वशरणप्राप्तौ निजाश्रमाप्तौ सत्यां संसारस्यांते परीष्टा सर्वतः पूजिता उत्तमा गतिः फलं यस्तस्मै ॥ ४५ ॥ अभिनंदितः संतोषितः ॥ ४६ ॥ मदीयमुपस्थानं स्तोत्रं तत्सहितया विद्यया ज्ञानेन । आत्मन ऐश्वर्यमसंसारित्वं तस्य स्मृतिर्यया । न हि विरोध उभयमित्यादिना कर्तृत्वभोक्तृत्वादेर्मायिकत्वोक्तेः भक्तिश्च यया भवति ॥ ४७ ॥ अथ ह भगवन्नित्यादिना भक्तेः सर्वोत्कर्षोक्तेर्भक्तमभिनंदति । किमिति ॥ ४८ ॥ यदुक्तं देवैः स्वयं तदुपकल्पयास्माकमित्यादि तत्संपादनं कृपालोर्ममानुचितमित्याशयेनाह । न वेदेति द्वाभ्याम् । गुणेषु विषयेषु तत्त्वदर्शी स आत्मनः श्रेयो न वेद तस्य तान्विषयान् । सोपि तथाविधोऽज्ञ एव ॥ ४९ ॥ कर्म न वक्ति प्रवृत्तिमार्गं न वक्ति हि । अपथ्यं यथा न राति न ददाति भिषक्तमः सद्वैद्यः ॥ ५० ॥ एवं तत्त्वकथनेनानौचित्यं परिहृत्य तदभिप्रायमनुसरन्नाह । मघवन्निति । विद्यया व्रतै

पतामः शीघ्रं जहीति वैकल्येन श्रीकृष्णरूपिणं तं सर्वमेव स्वाभिलषितमभिव्यंजयंतः प्रणमंति–हंसाय सारासारौ विमृश्य सारग्राहिणे। मृष्टयशसेऽस्मत्त्राणेन जातं यशस्ते लोका गायंत्विति भावः । निरुपक्रमाय अस्मन्निवेदितकृत्येषूपक्रमं विनैव तत्संपादनसमर्थाय । किं च–सतां भक्तानामेव प्रयासेनापि संग्रहो न चान्यवस्तूनां यस्य तस्मै 'नमोकिंचनवित्ताय' इत्युक्तेः । भववर्त्मनि वर्त्तमाना ये पान्थास्तेषामस्मदादिदुर्जीवानां शुद्धभक्तिरहितानामपि निजाश्रमस्य प्राप्तावविद्यां तीर्त्वा स्वानंदाधिगमे सतीत्यर्थः । संसारस्यांते परि सर्वतोभावेनेष्टा व्यंजिता गतिस्सायुज्यं सालोक्यं दास्यादिप्रेमा वा येन तस्मै ॥ ४५ ॥ हे राजन् भक्त्या देदीप्यमान । उपस्थानं स्तुतिम् ॥ ४६ ॥ सुरश्रेष्ठा इति । न ह्यधमानां मदुपस्थानादौ प्रीतिर्भवतीति भावः । मदुपस्थानमेव विद्येति वा ॥ ४७ ॥ अहो दौर्भाग्यं मूर्खता च युष्माकमनया विद्यया मां स्तुत्वापि भक्तिर्नार्थितेत्याह–किमिति । तत्त्वविद्वस्तुयाथार्थ्यज्ञः । अन्यन्न वाञ्छति किन्तु भक्तिमेव वाञ्छतीति भावः ॥ ४८ ॥ यद्यपि यूयं मूर्खा विषयानभिलषंतः स्वभद्राभद्रं न जानीथ तदप्यहं विज्ञो युष्मभ्यं तान्कथं ददामि न हि माता स्वपुत्रेभ्यः स्वहस्तेन विषं ददातीत्याह–नेति । तस्य तस्मै । कृपणोऽज्ञः ॥ ४९ ॥ अपथ्यं यथा ज्वरार्त्तस्य शीतजलादि । निःश्रेयसं कल्याणकरमात्मविद्यालक्षणम् ॥ ५० ॥ यदि हींद्रियारामत्वाद्विषयान्विना म्रियध्वे तर्हि तत्रोपायं शृणुतेत्याह–मघवन्निति । महति श्लाघते विषयसंभोगं, महति शताश्वमेधेनार्चति सर्वेश्वरं विषयाभिलाषेणेति वा मघवा तत्संबुद्धौ तथा । विषया

स वा अधिगतो दध्यङ्ङश्विभ्यां ब्रह्म निष्कलम् ॥ यद्वा अश्वशिरो नाम तयोरमरतां व्यधात् ॥ ५२ ॥
दध्यङ्ङाथर्वणस्त्वष्टे वर्माभेद्यं मदात्मकम् ॥ विश्वरूपाय यत्प्रादात्त्वष्टा यत्त्वमधास्ततः ॥ ५३ ॥

स्तपसा च सारं दृढं गात्रं शरीरं याचत याचध्वम् ॥ ५१ ॥ तत्र तदीयं विद्यातिशयमाह । स वा इति द्वाभ्याम् । एवं ह्यत्र प्रसिद्धा कथा । "निशम्याथर्वणं दक्षं प्रवर्ग्यब्रह्मविद्ययोः । दध्यंचं समुपागम्य तमूचतुरथाश्विनौ ॥ भगवन्देहि नौ विद्यामिति श्रुत्वा स चाब्रवीत् ॥ कर्मण्यवस्थितोऽद्याहं पश्चाद्वक्ष्यामि गच्छतम् ॥ तयोर्निर्गतयोरेव शक्र आगत्य तं मुनिम् ॥ उवाच भिषजोर्विद्यां मा वदीराश्विनोर्मुने ॥ यदि मद्वाक्यमुल्लंघ्य ब्रवीषि सहसैव ते ॥ शिरश्छिंद्यां न संदेह इत्युक्त्वा स ययौ हरिः ॥ इंद्रे गते तथाऽभ्येत्य नासत्यावूचतुर्द्विजम् ॥ तन्मुखादिंद्रगदितं श्रुत्वा तावूचतुः पुनः ॥ आवां तव शिरश्छित्त्वा पूर्वमश्वस्य मस्तकम् ॥ संधास्यावस्ततो ब्रूहि तेन विद्यां च नौ द्विज ॥ तस्मिन्निंद्रेण संछिन्ने पुनः संधाय मस्तकम् ॥ निजं ते दक्षिणां दत्त्वा गमिष्यावो यथातथम् ॥ एतच्छ्रुत्वा तथोवाच दध्यङ्ङाथर्वणस्तयोः ॥ प्रवर्ग्यं ब्रह्मविद्यां च सत्कृतोऽसत्यशंकितः ॥" इति । ततश्चायमर्थः दध्यङ् निष्कलं शुद्धं ब्रह्माधिगतो ज्ञातवान् । पाठांतरे तु निष्कृतं नितरां कृतं भवति धनं येन तं प्रवर्ग्यं चाधिगतो ज्ञातवान् । ततोऽश्विभ्यां प्रादादित्युत्तरस्यानुषंगः । उपदिदेशेत्यर्थः । कथंभूतं ब्रह्म । यद्वा अश्वशिरसा प्रोक्तत्वादश्वाशिरो नाम प्रसिद्धम् ॥ तयोरमरतां जीवन्मुक्तत्वं व्यधात् । तथा च श्रुतिः । "अश्वस्य शीर्ष्णा प्रयदीमुवाच" इति ॥ ५२ ॥ मदात्मकं वर्म श्रीनारायणकवचं चाधिगत इति पूर्वस्यानुषंगः । तत्र हेतुः । यत् यस्मात्त्वष्ट्रे प्रादात् । किं तत् । यत्त्वष्टा विश्वरूपाय पुत्राय प्रादात् । कीदृशम् । यत्त्वं ततो विश्वरूपादधाः धृतवानसि । तदेवं विद्यया सारं गात्रं याचध्वमित्यर्थः ॥ ५३ ॥

भिलाषिशिरोमणिरसीति भावः । तत्र गतान्नः शापाग्निना स धक्ष्यतीत्याशंकमानं प्रत्याह–भद्रं व इति । ऋषिसत्तमं क्रोधादिरहितम् । गाय ज्ञानाय त्रायते रक्ष्यत इति गात्रम् ॥ ५१ ॥ तत्र याचने । तदीयं दाध्यञ्चम् । पाठांतरे 'ब्रह्मनिष्कृतम्' इति पाठे । कृतादनित्यपदार्थान्निष्क्रान्तमित्यर्थः । ततः स्वयं ज्ञात्वा तदनु अश्विभ्यां ब्रह्मादादिति व्याख्येयमिति विद्यादानमुपदेश इति भावः । प्रकृष्टानि पदानि यस्यां तां विद्यामिति श्रुतिपदार्थः । श्रुत्यंतरमाह–"आथर्वणायाश्विना दधीचेऽश्व्यं शिरः प्रत्यैरयतं स वां मधु प्रवोचदृतायंस्त्वाष्ट्रं यद्दस्रावपि कक्ष्यं वाम्" इति श्रुतिं चात्रोदाहरंति हेऽश्विनावाथर्वणाय दधीचेऽश्वसंबंधि शिरः प्रत्यैरयतं प्रतिसंहतमकुरुतं स दध्यङ् वां मधु ब्रह्मविद्यालक्षणं प्रवोचदसिंचत् हे दस्रौ त्वष्ट्रा विश्वरूपाय प्रोक्तं त्वाष्ट्रं कक्ष्यं रक्षणाय हितं नारायणकवचं च वामुवाच कीदृशः ऋतायन् यथातथं विद्यां जानन् विद्यां वक्ष्यामीति वचनं संपादयन्निति वा वैदिके निघंटौ कक्ष्यपदं कवचपरमुक्तमेतेन श्रीमद्भागवतलक्षणे–"हयग्रीवब्रह्मविद्या यत्र वृत्रवधस्तथा" इत्युक्तत्वात्तस्यानादित्वं स्फुटितमिति च ध्येयम् ॥ ५२ ॥ दधाति सर्वमिति दधि ब्रह्म तदंचति प्राप्नोति जानाति वेति दध्यङ् । अथर्ववित्त्वादाथर्वणः । तत्र वर्मज्ञाने । ज्ञानं विना कथं त्वष्ट्रे प्रादादिति भावः । त्वमिंद्रः । इत्यर्थ इति । विद्याया धारणेन तद्धात्रमतीवाभेद्यं स्वेतराभेद्यभेदकं चास्ति तदेव प्रार्थयतेति

युष्मभ्यं याचितोऽश्विभ्यां धर्मज्ञोंगानि दास्यति ॥ ततस्तैरायुधश्रेष्ठो विश्वकर्मविनिर्मितः ॥ ५४ ॥ येन वृत्रशिरो हर्ता मत्तेज उपबृंहितः ॥ तस्मि न्विनिहते यूयं तेजोस्त्रायुधसंपदः ॥ भूयः प्राप्स्यथ भद्रं वो न हिंसंति च मत्परान् ॥ ५५ ॥ इति श्रीभाग० म० षष्ठ० इन्द्रादिकृतगद्यपद्यात्मकस्तो त्रवर्णनं नाम नवमोऽध्यायः ॥ ९ ॥ श्रीशुक उवाच ॥ इंद्रमेवं समादिश्य भगवान्विश्वभावनः ॥ पश्यतामनिमेषाणां तत्रैवांतर्दधे हरिः ॥ १ ॥ तथाऽभियाचितो देवैर्ऋषिराथर्वणो महान् ॥ मोदमान उवाचेदं प्रहसन्निव भारत ॥ २ ॥ अपि वृंदारका यूयं न जानीथ शरीरिणाम् ॥ संस्थायां यस्त्वभिद्रोहो दुःसहश्चेतनापहः ॥ ३ ॥ जिजीविषूणां जीवानामात्मा प्रेष्ठ इहेप्सितः ॥ क उत्सहेत तं दातुं भिक्षमाणाय विष्णवे ॥ ४ ॥ देवा ऊचुः ॥ किं नु तद्दुस्त्यजं ब्रह्मन्पुंसां भूतानुकंपिनाम् ॥ भवद्विधानां महतां पुण्यश्लोकेड्यकर्मणाम् ॥ ५ ॥ नूनं स्वार्थपरो लोको न वेद परसं कटम् ॥ यदि वेद न याचेत नेति नाह यदीश्वरः ॥ ६ ॥

ननु प्रेष्टं देहं कथं दास्यति तत्राह।युष्मभ्यमंगान्यस्थीनि याचितः सन् दास्यति यतो धर्मज्ञः विशेषतोऽश्विभ्यां शिष्यप्रीत्या दास्यति।अस्थीनीत्यनेन हेयत्वं दर्शितम् । तैर स्थिभिर्विश्वकर्मणा विनिर्मित आयुधश्रेष्ठो वज्रो भविष्यतीति शेषः॥५४॥येन भवान्वृत्रशिरो हर्ता हरिष्यति मम तेजसा उपबृंहितः सन्।तेजश्चास्त्राणि चायुधानिच संपदश्च भूयः प्राप्स्यथ।महाकायस्त्रिभुवनग्रासी स एवास्मान् हन्यादिति शंकाकुलचित्तान्प्रत्याह।मत्परांश्च केऽपि न हिंसंत्यतो युष्माकं भद्रमेवेति॥५५॥इति षष्ठस्कंधे टीकायां नवमो ऽध्यायः॥९॥दशमे केशवादिष्टदध्यङ्ङस्थिजवज्रधृक्॥इंद्रोऽयुध्यत वृत्रेण सासुरेण सनिर्जरः॥१॥१॥मोदमान एव तन्मुखाद्धर्मं श्रोतुकामः प्रत्याचक्षाण इवोवाच अपीति द्वाभ्याम्॥२॥हे वृंदारका अपि किं संस्थायां मृत्यौ योऽभिद्रोहो दुःखं तं न जानीथ॥३॥ आत्मा देहः वयं जानीम एव किं तु श्रीविष्णुरस्मन्मुखेन याचत इति चेत्तत्राह याचते विष्णवेऽपि दातुं क उत्सहेत॥४॥पुण्यश्लोकैरीड्यानि कर्माणि येषाम् ॥५॥ याचको यदि वेद तर्हि न याचेत यदीश्वरो दानसमर्थश्चेत्तर्हि सोऽपि नेति नाह । अतो

भावः ॥ ५३ ॥ अत्राक्षिपति—नन्विति ॥ ५४ ॥ येनायुधेन । तस्मिन्वृत्रे । न हिंसंतीति । वृत्रस्तदनुगासुराश्च मत्परान्युष्मान्न घ्नंति वृत्रस्य परमभक्तत्वेन मदर्थं स्वदेहमपि जिहासोर्वस्तुतो युष्मासु द्वेषो नास्त्येव यथा युष्माकं तस्मिन्निति भावः ॥ ५५ ॥ इति श्रीमद्भावतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे नवमोऽध्यायः ॥ ९ ॥ ॥ दधीचोऽस्थीनि दध्यगस्थीनि तेभ्यो जायत इति दध्यगस्थिजं तच्च तद्वज्रं चेति दध्यगस्थि जवज्रं तद्बजन्ति धारयतीति तथा 'धृज्—धारणे' तौदादिकश्चवर्गमध्यवर्णांतः । केशवेनादिष्ट आज्ञप्तश्चासौ दध्यगस्थिजवज्रधृक् चेति केशवादिष्टदध्यगस्थिजवज्रधृक् । सासुरेणासुरसहितेन । निर्ज्जरैर्देवैः सहितः सनिर्ज्जरः ( १ ) यत्र प्रार्थितस्तत्रैव 'सुरमत्स्यावनिमिषौ' इत्यमरः । अनिमिषाणां सुराणाम् ॥ १ ॥ यथा विष्णुनोक्तं तथाऽस्थिनिमित्तं प्रार्थितः प्रहसन्निव याच्ञाप्रत्याख्यानेन तांस्तिरस्कुर्वन्निव । भारतेति । भरतो यथा भवद्वंशप्रवर्त्तकोऽर्थिनामप्रत्याख्याता 'भरतस्य महत्कर्म' इत्याद्युक्तन्यायेन तथायमपीति भवद्वंश्या अप्येतादृशा अभवन्निति भावः ॥ २ ॥ हे वृंदारका इति । दर्शने एव प्रशस्तवृंदा यूयमन्तस्तु कठिना एव यतो ब्रह्महत्या तोपि न बिभिथ । यद्वा—वृन्दं सर्वजनसमूहमिर्यति तत्तदिंद्रियाद्यधिष्ठातृत्वेन जानंत्यप्यहो कथं न जानीथाधुना मद्देहपातदुःखमिति भावः । चेतनापह बुद्धिविभ्रंशकरः ॥ ३ ॥ प्रेष्ठोऽतीवप्रियः ॥ ४ ॥ ब्रह्मन्निति । वेदवित्त्वात्परोपकारफलं जानास्येवेति भावः । भवद्विधानां त्वादृशानाम् ॥ ५ ॥ अत उभयोर्वैलक्षण्यात् । इति भाव इति । परसंकटाज्ञाने उभये सदृशा एवेत्याशयः । विश्वनाथस्तु—ऋषिराह—नूनमित्यादि न याचे

दधीचिरुवाच ॥ धर्मं वः श्रोतुकामेन यूयं मे प्रत्युदाहृताः ॥ एष वः प्रियमात्मानं त्यजंतं संत्यजाम्यहम् ॥ ७ ॥ योऽध्रुवेणात्मना नाथा न धर्मं न यशः पुमान् ॥ ईहेत भूतदयया स शोच्यः स्थावरैरपि ॥ ८ ॥ एतावानव्ययो धर्मः पुण्यश्लोकैरुपासितः ॥ यो भूतशोकहर्षाभ्यामात्मा शोचति हृष्यति ॥ ९ ॥ अहो दैन्यमहो कष्टं पारक्यैः क्षणभंगुरैः ॥ यन्नोपकुर्यादस्वार्थैर्मर्त्यः स्वज्ञातिविग्रहैः ॥ १० ॥ श्रीशुक उवाच ॥ एवं कृतव्यवसितो दध्यङ्ङाथर्वणस्तनुम् ॥ परे भगवति ब्रह्मण्यात्मानं सन्नयञ्जहौ ॥ ११ ॥ यताक्षासुमनोबुद्धिस्तत्त्वदृग्ध्वस्तबंधनः ॥ आस्थितः परमं योगं न देहं बुबुधे गतम् ॥ १२ ॥ अथेंद्रो वज्रमुद्यम्य निर्मितं विश्वकर्मणा ॥ मुनेः शुक्तिभिरुत्सिक्तो भगवत्तेजसाऽन्वितः ॥ ॥ १३ ॥ वृतो देवगणैः सर्वैर्गजेंद्रोपर्यशोभत ॥ स्तूयमानो मुनिगणैस्त्रैलोक्यं हर्षयन्निव ॥ १४ ॥

यथा तव संकटं स्वार्थपरा वयं न जानीम एवं प्रत्याचक्षाणस्त्वमस्मत्संकटं न जानासीति भावः ॥ ६ ॥ मे मया प्रत्युदाहृताः प्रत्युक्ताः एषः अहं मां त्यजंतं त्यक्त्वा यांतमात्मानं देहम् ॥ ७ ॥ अध्रुवेणात्मना देहेन हे नाथाः देवाः ॥ ८ ॥ य आत्मा स्वयं भूतानां शोकेन शोचति हर्षेण हृष्यति तस्य यो धर्म एतावानेवाव्यय इत्यर्थः ॥ ९ ॥ पारक्यैः श्वसृगालादिभक्ष्यैः अस्वार्थैरात्मोपयोगशून्यैः स्वं वित्तम् । ज्ञातयः पुत्रादयः । विग्रहो देहः । तैर्नोपकुर्यादिति यत् ॥ १० ॥ कृतं व्यवसितं निश्चयो येन । आत्मानं क्षेत्रज्ञं सन्नयन्नेकीकुर्वंस्तनुं जहौ ॥ ११ ॥ यता अक्षादयो येन । तत्त्वं पश्यतीति तथा ध्वस्तानि गतानि बंधनानि यस्य ॥ १२ ॥ अथेंद्रोऽशोभतेत्युत्तरेणान्वयः । मुनेः शुक्तिभिरस्थि

तेत्यंतं देवाः प्रत्याहुः नूनमित्यादि पद्यमेव न याचेतेति । चतुरक्षरविनाभूतं ततश्चार्थांतरन्यासस्यात्र विशेषतोऽयमर्थः याचको लोको नूनं स्वार्थपरः स्वर्गादैश्वर्यभोगपरः परस्य दातुः संकटं स्वदेहास्थिप्रदाने पीडां न वेद यदि देवत्वेन विवेकवत्त्वाद्वेद तर्हि न याचेतेति । तेन युष्माकं विवेकाभावान्न देवत्वं किं तु व्याघ्रादिपशुतुल्यत्वमिति ऋषिणोक्तं श्रुत्वा देवैः प्रत्युक्तं दाता लोकोऽपि नूनं स्वार्थपरः देहेंद्रियादिषु ममत्वे चिरजीवित्व सुखपरः परेषां याचकानां संकटं घोरशत्रूपद्रवादिदुःखं न वेद यद्यृषित्वेन विवेकविज्ञानदयादिमत्त्वाद्वेद तर्हि नेति नाहं दास्यामीति न ब्रूयात् । यद्यस्मादीश्वरस्तद्दानसमर्थः तेन तवापि विज्ञानाद्यभावान्नर्षित्वं प्रत्युत शोकमोहादिसद्भावाद्गवादिपशुतुल्यत्वमिति भावः ॥ ६ ॥ धर्म्मं वः श्रोतुकामेनेति । स धर्मो युष्मत्प्रत्युत्तरेणैव श्रुतः । यद्वा–ध्वनिरयं वक्रोक्त्यैव धर्मो न श्रुतः । किं–तु वाक्चातुर्यं श्रुतं भवतु तावत्स्वाभिप्रायं ज्ञापय इत्याह–एष इति । आत्मानं देहं त्यजंतमचिरादेव त्यक्ष्यंतं संत्यजामीति स देहो यावन्मां न त्यजति तावद्देहमेव तं त्यजामि युष्मभ्यं ददामीत्येतावत्तु भाग्यं मम भवत्विति भावः ॥ ७ ॥ हे नाथा इति । हे याचका उपतप्ता वा न हि याचकैरुपतप्तैर्वा परदुःखं ज्ञायते इति भावः । स्थावरैः स्तब्धैर्विवेकशून्यैरपीत्यर्थः ॥ ८ ॥ इत्यर्थ इति । परदुःखसुखाभ्यां शोकहर्षौ कृतवतः पुंसः कीर्त्तिश्चिरं रंतिदेवादिवत्तिष्ठतीति भावः ॥ ९ ॥ अदातारमुद्दिश्याह–अहो इति । मर्त्यं इत्यनेन परोपकारे चिरं न कार्यं मरणनिश्चयात् । उपकारसाधनानामपि क्षणिकत्वमालक्ष्य तूर्णमेव परोपकृतौ यतेतान्यथा मक्षिकापादघर्षणन्यायेन हस्तघर्षणमेवावशिष्यत इति भावः ॥ न स्वार्थो यैरित्यस्वार्थास्तैः स्वार्थमनुद्दिश्यैव धनादिभिः परोपकारं कुर्यान्न त्वैहिकं किञ्चित्कार्यमुद्दिश्य तथा सत्युपकारत्वासंभवादिति भावः ॥ १० ॥ एवमुक्तरीत्या ॥ ११ ॥ परमं योगं भगवद्ध्यानलक्षणम् ॥ १२ ॥ अथ मुनेर्देहत्यागानंतरम् "शुक्तिः शंखे शंखनखे मुक्तास्फोटेऽस्थिमानयोः" इति धरणिः ॥ १३ ॥ इवेति । यावत्तन्मरणं न भवेत्तावद्धर्षाभावादित्यर्थः ॥ १४ ॥

वृत्रमभ्यद्रवच्छेत्तुमसुरानीकयूथपैः ॥ पर्यस्तमोजसा राजन्क्रुद्धो रुद्र इवांतकम् ॥ १५ ॥ ततः सुराणामसुरै रणः परमदारुणः ॥ त्रेतामुखे नर्मदायामभवत्प्रथमे युगे ॥ १६ ॥ रुद्रैर्वसुभिरादित्यैरश्विभ्यां पितृवह्निभिः ॥ मरुद्भिर्ऋभुभिः साध्यैर्विश्वेदेवैर्मरुत्पतिम् ॥ १७ ॥ दृष्ट्वा वज्रधरं शक्रं रोचमानं स्वमायया ॥ नामृष्यन्नसुरा राजन्मृधे वृत्रपुरःसराः ॥ १८ ॥ नमुचिः शंबरोऽनर्वा द्विमूर्धा ऋषभोंबरः ॥ हयग्रीवः शंकुशिरा विप्रचित्तिरयोमुखः ॥ १९ ॥ पुलोमा वृषपर्वा च प्रहेतिर्हेतिरुत्कलः ॥ दैतेया दानवा यक्षा रक्षांसि च सहस्रशः ॥ २० ॥ सुमालिमालिप्रमुखाः कार्तस्वरपरिच्छदाः ॥ प्रतिषिध्येंद्रसेनाग्र्यं मृत्योरपि दुरासदम् ॥ २१ ॥ अभ्यर्दयन्नसंभ्रांताः सिंहनादेन दुर्मदाः ॥ गदाभिः परिघैर्बाणैः प्रासमुद्गरतोमरैः ॥ २२ ॥ शूलैः परश्वधैः खड्गैः शतघ्नीभिर्भुशुंडिभिः ॥ सर्वतोऽवाकिरञ्छस्त्रैरस्त्रैश्च विबुधर्षभान् ॥ २३ ॥ न तेऽदृश्यंत संछन्नाः शरजालैः समंततः ॥ पुंखानुपुंखपतितैर्ज्योतींषीव नभोघनैः ॥२४॥ न ते शस्त्रास्त्रवर्षौघा ह्यासेदुः सुरसैनिकान् ॥ छिन्नाः सिद्धपथे देवैर्लघुहस्तैः सहस्रधा ॥ २५ ॥ अथ क्षीणास्त्रशस्त्रौघा गिरिशृंगद्रुमोपलैः ॥ अभ्यवर्षन्सुरबलं चिच्छिदुस्तांश्च पूर्ववत् ॥ २६ ॥

भिर्निर्मितम् । उत्सिक्त ऊर्जितः । मुनेरस्थिभिरिति वा पाठः ॥१३॥१४॥ असुरानीकानां यूथपैः पर्यस्तं परिवृतम् ॥१५॥ रणः संग्रामः ॥ प्रथमे चतुर्युगे त्रेतायुगस्य मुखे आरंभे ॥१६॥१७॥ नामृष्यन्नासहंतेत्युत्तरेणान्वयः ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ " शतघ्नी च चतुर्हस्ता लोहकंटकसंचिता ॥ भुशुंडी सर्वतोलोहकंटकानुक्रमोन्नता ॥" इत्यभिधानम् ॥ २३ ॥ पुंखो मूलदेशः एकस्य मूलदेशमनु तत्संलग्नोऽपरस्य पुंखो यथा भवति तथा नभःस्थैर्धनैर्ज्योतींषीवेत्यनेन तेषां तदप्राप्तिः सूचिता ॥२४॥ तामेवाह । न त इति । शस्त्राणामस्त्राणां च यानि वर्षाणि तेषामोघाः नाऽऽसेदुर्न प्रापुः । सिद्धपथे आकाशे ॥२५॥ क्षीणा अस्त्राणां शस्त्राणां च ओघा

रुद्रो हि यममपि संहर्त्तुं शक्नोती त्यभिप्रायेण दृष्टांतः॥१५॥ततः वज्रप्राप्त्याद्यनंतरम्।ननु कस्मिन्काले कस्मिन्देशे च वृत्रवासवयोर्युद्धमभूदिति तत्राह—त्रेतामुखे इति।प्रथमे युगे वैवस्वतमन्वंतरस्य प्रथमे चतुर्युगे तत्रांपि त्रेतामुखे त्रेतायुगस्यादौ । नर्मदायामिति । गंगायां घोष इति वल्लक्षणया नर्मदातीरे । प्रथमरणस्तु तत्रैव रणांतरं मृतिकालेऽब्धितीरेपीति विशेषो ग्रंथांतरादवसेयः ॥ १६ ॥ गणदेवानाह—"रुद्रा एकादश प्रोक्ता वसवोऽष्टौ प्रकीर्त्तिताः । आदित्या द्वादश ज्ञेया अश्विनौ द्वौ प्रकीर्त्तितौ॥पितरश्चतुर्द्धा वाता वह्नयश्चांकवेदकाः ४९ । साध्या द्वादश विख्याता विश्वेदेवा दश स्मृताः॥ऋभवो बहुसंख्याता ज्ञेयास्तु तुषितास्तथा । महाराजिकनामान आभास्वरगणोपि ते ॥ षड्विंशतिस्तु तुषिता द्वे शते विंशतिस्तथा । महाराजिकनामानश्चतुःषष्टिरभासुराः ॥ इत्येवं गणदेवा हि प्रोक्ता विज्ञैः सदातनैः ॥" इति संहितायाम् ॥१७॥ राजन्निति । युद्धरीतिं जानास्येवेति भावः ॥१८॥ कांश्चिन्नसुरान्नामतो निर्दिशति—नमुचिरिति ॥ १९ ॥ २० ॥ कार्त्तस्वरपरिच्छदाः स्वर्णालंकाराः । इंद्रसेनाया अग्र्यं भागं यद्वाऽग्रे तिष्ठतीत्यग्र्यः सेनानीस्तम् । दुरासदं दुष्प्रापम् ॥ २१ ॥ असंभ्रांता निर्भयाः ॥ २२ ॥ ॥ २३ ॥ इत्यनेन दृष्टांतेन । तेषां बाणानाम् । तदप्राप्तिर्देवांगाप्राप्तिः ॥ २४ ॥ तामेवाप्राप्तिमेव । ओघाः समूहाः 'ओघो वेगेंबुनः पुंजे' इत्यभिधानात् । लघुहस्तैः क्षिप्रचलत्करैः ॥ २५ ॥ अथ शस्त्रच्छेदानंतरम् ।

तानक्षतान्स्वस्तिमतो निशाम्य शस्त्रास्त्रपूगैरथ वृत्रनाथाः ॥ द्रुमैर्दृषद्भिर्विविधाद्रिशृंगैरविक्षतांस्तत्रसुरिंद्रसैनिकान् ॥ २७ ॥ सर्वे प्रयासा अभवन्विमोघाः कृताःकृता देवगणेषु दैत्यैः ॥ कृष्णानुकूलेषु यथा महत्सु क्षुद्रैः प्रयुक्ता रुशती रूक्षवाचः ॥ २८ ॥ ते स्वप्रयासं वितथं निरीक्ष्य हरावभक्ता हतयुद्धदर्पाः ॥ पलायनायाजिमुखे विसृज्य पतिं मनस्ते दधुरात्तसाराः ॥ २९ ॥ वृत्रोऽसुरांस्ताननुगान्मनस्वी प्रधावतः प्रेक्ष्य बभाष एतत् ॥ पलायितं प्रेक्ष्य बलं च भग्नं भयेन तीव्रेण विहस्य वीरः ॥ ३० ॥ कालोपपन्नां रुचिरां मनस्विनामुवाच वाचं पुरुषप्रवीरः ॥ हे विप्रचित्ते नमुचे पुलोमन्मयानर्वञ्छंबर मे शृणुध्वम् ॥ ३१ ॥ जातस्य मृत्युर्ध्रुव एष सर्वतः प्रतिक्रिया यस्य न चेह क्लृप्ता ॥ लोको यशश्चाथ ततो यदि ह्यमुं मृत्युं वरं को न वृणीत युक्तम् ॥ ३२ ॥

येषाम् । गिरिशृंगैर्द्रुमैरुपलैश्च॥ २६ ॥तानिंद्रसैनिकान् शस्त्राणामस्त्राणां च पूगैः समूहैरक्षतान् क्षतशून्यान्स्वस्तिमतः सुखिनो द्रुमादिभिश्चाविक्षतान्निशाम्य दृष्ट्वा । वृत्रो नाथो येषां ते तत्रसुर्भीताः ॥२७॥ कृताःकृताः पुनःपुनः कृताः । कृष्णोऽनुकूलो येषां तेषु देवगणेषु । रुशतीः रुशत्यः।अकल्याण्यो रूक्षाः परुषा वाचो यथा महत्सु क्षोभकर्त्र्यो न भवंति तद्वत ॥ २८ ॥ हतो युद्धे दर्पो येषां ते आत्तः परैर्गृहीतः सारो धैर्यं येषां ते अतिप्रसिद्धा अपि ते दैत्याः एवं ते इत्यस्यापौनरुक्त्यम् । आजिमुखे युद्धारंभे पतिं विसृज्य पलायनाय मनो दधुः । यतो हरावभक्ताः ॥ २९ ॥ प्रधावतः पलायमानान्प्रेक्ष्य आदावेव तीव्रेण भयेन पलायितं भग्नं च तद्बलं सैन्यं तच्च प्रेक्ष्य एतद्वक्ष्यमाणं बभाषे ॥ ३० ॥ तदेव विशिनष्टि । कालोपपन्नामवसरोचितां मनस्विनां रुचिरां हे मय हे अनर्वन् मे वाचं शृणुत ॥ ३१ ॥ प्रतिक्रिया निवर्तनोपायः ततो मृत्योरिह

उपलैः पाषाणैः "उपलः प्रस्तरे रत्ने शर्करायां तु योषिति" इति मेदिनी । तान् गिरिशृंगादीन् । पूर्वं यथा मार्गमध्य एव च्छिन्नास्तद्वत् ॥ २६ ॥ निशाम्य दृष्ट्वा ॥ २७ ॥ प्रयासाः प्रहारलक्षणाः प्रयत्नाः । अनुकूलोऽनुग्रहाभिमुखः 'रुश्—हिंसायाम्' रुशतीः 'यूयं शीघ्रं म्रियध्वम्' इत्येवंलक्षणाः । अकल्याण्योऽमंगलाः । परुषा 'रेरे अधमाः' इत्येवंरूपाः । महत्सु दुर्वासःप्रभृतिषु । क्षुद्रैर्हंसडिंभकादिजनकल्पैः ॥ २८ ॥ पतिं वृत्रम् ॥ २९ ॥ मनस्वी धीरः ॥ ३० ॥ विप्राणामित्र धैर्यहीना चित्तिश्चित्तं यस्य हे तादृश । न मुञ्चति कातर्यमिति हे तादृश । पुरो युद्धात्प्रागेव मन्यते स्वशौर्यं न युद्धे भो एतादृश रलयोरैक्यम् । मयति सैन्यदर्शनेन कातर्यमिति हे तादृश । न अर्वापि पलायते यत्सदृशो हे एतादृश ॥ ३१ ॥ प्रतिक्रिया निवृत्त्युपायः यस्य मृत्योर्न रचिता । समीचीनमृत्युं पुनः साधयिष्याम इति चेत्तत्राह—उपस्थितपरित्यागोऽनर्ह इत्यभिप्रायेणाह—

द्वौ संमताविह मृत्यू दुरापौ यद्ब्रह्मसंधारणया जितासुः ॥ कलेवरं योगरतो विजह्याद्यदग्रणीर्वीरशयेऽनिवृत्तः ॥ ३३ ॥ ॥ इति श्रीभागवते महापुराणे षष्ठ०दशमोऽध्यायः ॥ १० ॥ ७ ॥ श्रीशुक उवाच ॥ त एवं शंसतो धर्म्यं वचः पत्युरचेतसः ॥ नैवागृह्णन्भयत्रस्ताः पलायनपरा नृप ॥ १ ॥ विशीर्यमाणां पृतनामासुरीमसुरर्षभः ॥ कालानुकूलैस्त्रिदशैः काल्यमानामनाथवत् ॥ २ ॥ दृष्ट्वाऽतप्यत संक्रुद्ध इंद्रशत्रुरमर्षितः ॥ तान्निवार्यौजसा राजन्निर्भर्त्स्येदमुवाच ह ॥ ३ ॥ वृत्र उवाच ॥ किं व उच्चरितैर्मातुर्धावद्भिः पृष्ठतो हतैः ॥ न हि भीतवधः श्लाघ्यो न स्वर्ग्यः शूरमानिनाम् ॥ ४ ॥ यदि वः प्रधने श्रद्धा सारं वा क्षुल्लका हृदि ॥ अग्रे तिष्ठत मात्रं मे न चेद्ग्राम्यसुखे स्पृहा ॥ ५ ॥

यशो लोकः-स्वर्गादिश्च यदि स्यात् । अथ तर्हि अमुं मृत्युं युक्तं समीचीनं प्राप्तं वा ॥ ३२ ॥ ब्रह्मसंधारणया कलेवरं जह्यादिति यत्स एको मृत्युः वीरशये रणभूमाव निवृत्तोऽपराङ्मुखः सन् जह्यादिति यत्स च एकः । तौ द्वाविह शास्त्रे संमतौ मृत्यू । तथा च स्मृतिः । "द्वाविमौ पुरुषौ लोके सूर्यमंडलभेदिनौ ॥ परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥" इति ॥ ३३ ॥ इति श्रीभा०म०षष्ठस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ एकादशे तु वृत्रस्य युद्ध्यमानस्य वज्रिणा ॥ भक्तिज्ञानबलोदर्का श्चित्रा वाचोऽनुवर्णिताः ॥ १ ॥ शंसतः कथयतः पत्युर्वचः ॥ १ ॥ कालानुकूलैः कालानुवर्तिभिः । काल्यमानां विद्राव्यमाणाम् ॥ २ ॥ अमर्षितोऽसहमानस्तांस्त्रिदशा न्निवार्य निर्भर्त्स्य चेदं वक्ष्यमाणमुवाच ॥ ३ ॥ तदेवाह द्वाभ्याम् । मातुरुच्चरितैः पुरीषप्रायैः । प्रथमांतपाठे देवानां संबोधनम् । पृष्ठतो हतैर्दैत्यैः वो युष्माकं किं स्यात् न किंचित् । न यशो नापि धर्मः । तदेवाह । न हीति ॥ ४ ॥ प्रधने संग्रामे । सारं धैर्यं हृदि चेत्तर्हि हे क्षुल्लकाः क्षुद्राः मात्रं क्षणमात्रमग्रे तिष्ठत । न चेदिह लोकभोगे

प्राप्तं स्वत एवागतम् ॥ ३२ ॥ मृत्युद्वयस्य संमतत्वे प्रमाणमाह—तथा चेति । सूर्यमंडलभेदिनाविति । अर्चिरादिमार्गेण ब्रह्म प्राप्नुत इत्यर्थः । योगयुक्तो ब्रह्मधारणावान् इति स्मृतिपदार्थः ॥ ३३ ॥ कुत्रचित् "जातस्य पुंसः प्रलयो ध्रुवश्च पलायमानस्य च युध्यतो वा । तस्माद्बुधैर्द्भिर्न पलायितव्यं योद्धव्यमेवात्र हरेः समीपे ॥" इत्यधिकोऽपि पाठोऽस्ति स च प्राचीनानंगीकृतत्वान्न व्याख्यातः । इति श्रीमद्भागवतभावार्थ दीपिकाप्रकाशे षष्ठस्कन्धे दशमोऽध्यायः ॥ १० ॥ भक्तिज्ञानबलेनोदर्का उत्कृष्टाः ( १ ) धर्म्यं धर्मादनपेतम् । अचेतसो निर्विचाराः । तत्र हेतुः—भयत्रस्ता इति । नृपेति । युद्धधर्मकोविदोऽसीति भावः ॥ १ ॥ विशीर्यते हिंस्यत इति विशीर्यमाणा ताम् ॥२॥ ओजसा बलेन राजन् दीप्यन् । निर्भर्त्स्य वाचा तिरस्कृत्य च ॥ ३ ॥ पुरीषवन्मातुर्देहान्निष्क्रांतैः पुरीषं यथा स्वद्रष्टृमुखं वक्रयति स्वस्पर्शिनमशुचिं करोति तद्वदिमे कातराः स्वसमीपगं शूरमपि निजपलायनेन पलायनपरं कुर्वाणाः स्वताडनपरमप्यपवित्रयंति पलायमानताडनपरस्यातीवापवित्रनरकवासश्रवणात्तद्दुक्तमपि "क्षत्रियस्योरसि क्षात्रं पृष्ठे ब्रह्म व्यवस्थितम् । तेन पृष्ठं न दातव्यं पृष्ठदो ब्रह्महा भवेत् ॥" इत्यादिपुराणांतरे । तथा च पृष्ठदातॄणां ब्रह्मघ्नतुल्यत्वात्तत्स्पर्शो ह्यतीवापावित्र्यहेतुस्तत एव तद्धंतॄणां स्वर्गो न भवतीत्याह—न स्वर्ग्यः स्वर्गाय हित इत्यर्थः ॥ ४ ॥ हे क्षुल्लका इति । पलायमानताडनं

एवं सुरगणान्क्रुद्धो भीषयन्वपुषा रिपून् ॥ व्यनदत्सुमहाप्राणो येन लोका विचेतसः ॥ ६ ॥ तेन देवगणाः सर्वे वृत्रविस्फोटनेन वै ॥ निपेतुर्मूर्छिता भूमौ यथैवाशनिना हताः ॥ ७ ॥ ममर्द पद्भ्यां सुरसैन्यमातुरं निमीलिताक्षं रणरंगदुर्मदः ॥ गां कंपयन्नुद्यतशूल ओजसा नालं वनं यूथपतिर्यथोन्मदः ॥ ८ ॥ विलोक्य तं वज्रधरोऽत्यमर्षितः स्वशत्रवेऽभिद्रवते महागदाम् ॥ चिक्षेप तामापततीं सुदुःसहां जग्राह वामेन करेण लीलया ॥ ९ ॥ स इंद्रशत्रुः कुपितो भृशं तया महेंद्रवाहं गदयोग्रविक्रमः ॥ जघान कुंभस्थल उन्नदन्मृधे तत्कर्म सर्वे समपूजयन्नृप ॥ १० ॥ ऐरावतो वृत्रगदाभिमृष्टो विघूर्णितोऽद्रिः कुलिशाहतो यथा ॥ अपासरद्भिन्नमुखः सहेंद्रो मुंचन्नसृक्सप्तधनुर्भृशार्तः ॥ ११ ॥ न सन्नवाहाय विषण्णचेतसे प्रायुंक्त भूयः स गदां महात्मा ॥ इंद्रोऽमृतस्यंदिकराभिमर्शवीतव्यथः क्षतवाहोऽवतस्थे ॥ १२ ॥ स तं नृपेंद्राहवकाम्यया रिपुं वज्रायुधं भ्रातृहणं विलोक्य ॥ स्मरंश्च तत्कर्म नृशंसमंहः शोकेन मोहेन हसञ्जगाद ॥ १३ ॥ वृत्र उवाच ॥ दिष्ट्या भवान्मे समवस्थितो रिपुर्यो ब्रह्महा गुरुहा भ्रातृहा च ॥ दिष्ट्याऽनृणोऽद्याहमसत्तम त्वया मच्छूलनिर्भिन्नदृषद्धृदाऽचिरात् ॥ १४ ॥

स्पृहाऽस्ति ॥ ५ ॥ सुरगणान् रिपून् । सुमहान्प्राणो बलं यस्य । येन विचेतसो बभूवुः ॥ ६ ॥ वृत्रस्य विस्फोटनेन नादेन ॥ ७ ॥ उद्यतं शूलं येन गां भूमिम् । नालं वनं नलानां वनम् । उद्गतो मदो यस्य स यूथपतिर्गजो यथा मर्दयति ॥ ८ ॥ ९ ॥ १० ॥ सप्तधनुःप्रमाणं देशम् ॥ ११ ॥ सन्नोऽवसन्नो वाहो यस्य तस्मै न प्रायुंक्त अमृतस्यंदी-अमृतस्रावी यः स्वकरस्तेनाभिमर्शः स्पर्शस्तेन वीतव्यथो गतदुःखः क्षतो वाहो यस्येंद्रस्य स तथाभूतो योद्धुमवतस्थे ॥ १२ ॥ स वृत्रः । हे नृपेंद्र । आहवकाम्यया युद्धेच्छयाऽवस्थितम् । भ्रातृहणं भ्राता विश्वरूपस्तस्य हंतारम् । नृशंसं क्रूरं तदेवांहः पापं तस्य कर्म स्मरन् ॥ १३ ॥ यो ब्रह्महा ब्राह्मणं हतवान्विशेषतः स्वगुरुं मम च भ्रातरं स भवानग्रतः समवस्थितः एतद्दिष्ट्या भद्रं जातम् । दिष्ट्येत्यव्ययमानंदार्थे । हे असत्तम मम शूलेन निर्भिन्नं दृषत्तुल्यं हृत् हृदयं यस्य तेन

हि क्षुद्रधर्म इति भावः। 'क्षुल्लस्तुच्छे बुभुक्षिते' इत्यभिधानात् । स्वार्थे कः ॥ ५ ॥ विचेतसो मूर्च्छिता अभवन्निति शेषः ॥ ६ ॥ 'विस्फोटनं प्रकांडस्य ताडने निनदेऽपि च' इति तीर्थः ॥ ७ ॥ नलानां कमलानां पोटगलानां वेदं नालम् "नलः पोटगले राज्ञि पितृदेवे कपीश्वरे । कमलेपि" इति मेदिनी । यूथोत्र गजसमुदायस्तस्य पतिः उन्मदः प्रमत्तः ॥ ८ ॥ तां गदाम् ॥९॥ नृपेति । नृपालनं हि युद्धे दुष्टवधेनैव भवत्यतस्तुभ्यं युद्धकथां वदामीति भावः ॥ १० ॥ अभिमृष्टस्ताडितः । कुलिशाहतो वज्राभिहतः । अपासरत्तिर्यक् पृष्ठतो वा गतः । सप्तधनुरष्टाविंशतिहस्तप्रमाणम् ॥ ११ ॥ महात्मा धर्मयुद्धकर्त्ता ॥ १२ ॥ नृपेंद्रेति । यथा त्वं नृपेंद्रः संमुखागतं शत्रुं न सहसे तथा सोप्यसुरेंद्रः कथं तादृशारिं सहेतेति भावः । शोकेन शोकरूपेण मोहेनाज्ञानेन । यद्वा—शोकानामिनः स्वामी यो मोहोऽज्ञानं तेन ॥ १३ ॥ असत्तमेति । ब्रह्महत्यादि

यो नोऽग्रजस्यात्मविदो द्विजातेर्गुरोरपापस्य च दीक्षितस्य॥विश्रभ्य खड्गेन शिरांस्यवृश्चत्पशोरिवाऽकरुणः स्वर्गकामः॥१५॥ह्रीश्रीदयाकीर्तिभिरुज्झितं त्वां स्वकर्मणा पुरुषादैश्च गर्ह्यम्॥ कृच्छ्रेण मच्छूलविभिन्नदेहमस्पृष्टवह्निं समदंति गृध्राः॥१६॥अन्येऽनु ये त्वेह नृशंसमज्ञा ये ह्युद्यतास्त्राः प्रहरंति मह्यम् ॥ तैर्भूतनाथान् सगणान् निशातत्रिशूलनिर्भिन्नगलैर्यजामि॥१७॥अथो हरे मे कुलिशेन वीर हर्ता प्रमथ्यैव शिरो यदीह॥तत्रानृणो भूतबलिं विधाय मनस्विनां पादरजः प्रपत्स्ये ॥ १८ ॥ सुरेश कस्मान्न हिनोषि वज्रं पुरःस्थिते वैरिणि मय्यमोघम् ॥ मा संशयिष्ठा न गदेव वज्रं स्यान्निष्फलं कृपणार्थेव याच्ञा ॥ १९ ॥ नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधीचेस्तपसा च तेजितः ॥ तेनैव शत्रुं जहि विष्णुयंत्रितो यतो हरिर्विजयः श्रीर्गुणास्ततः ॥ २० ॥

त्वया निमित्तभूतेनाद्याचिरादेव भ्रातुरनृणोऽहं स्यामेतच्च दिष्ट्या ॥ १४ ॥ स्वर्गकामो यो भवानवृश्चत् । स्वर्गकामो याज्ञिकः पशोरिवेति वा ॥ १५ ॥ तं त्वामस्पृष्टवह्निमदग्धदेहं समदंति । वर्तमानसामीप्ये वर्तमानवन्निर्देशः ॥ १६ ॥ अन्येऽपि ये अज्ञा इह त्वा त्वां नृशंसमनु मह्यमुद्यतास्त्राः संतो यदि प्रहरंति तैर्भूतनाथान्भैरवादीन्यक्ष्यामि । कथंभूतैः । निशातं तीक्ष्णीकृतं यन्मम त्रिशूलं तेन निर्भिन्नो गलो येषां तैः ॥ १७ ॥ अथो अथ वा । हरे भो इंद्र । यदि भवानेव मम शिरो हर्ता हरिष्यति तत्र तथा सत्यनृणो विमुक्तकर्मबंधः सन्भूतेभ्यो बलिं देहेन विधाय मनस्विनां पादरजः प्रपत्स्ये धीराणां पदं प्राप्स्यामि ॥ १८ ॥ जीवितादपि मृत्युरेव ममाभिमत इत्याशयेनाह । सुरेशेति । न हिनोषि नहि क्षिपसि । गदेव विफलो यास्यतीति संशयं मा कार्षीः । कृपणादर्थः प्रयोजनं यस्याः सा याच्ञा यथा निष्फला तथा न स्यात् ॥ १९ ॥ अमोघत्वे हेतुं वदंस्तं प्रोत्साहयति नन्विति । तेजितस्तीक्ष्णीकृतः । शत्रुं मां जहि । विष्णुना यंत्रितः प्रेरितः ॥ २० ॥

दोषैरतीव दुष्टोऽस्यतस्तव राज्ञोऽपि बधे मे न दोषो भविष्यतीति भावः। दृषत्तुल्यं कठिनमनार्द्रमित्यर्थः । अनृणः तत्प्रतिक्रियाकरणेनापवादरहितो भविष्यामीत्यर्थः ॥ १४ ॥ प्रथमं तु ब्रह्मवध एव महापापस्तत्राप्यात्मविदस्तत्रापि निजगुरोस्तत्राप्यपापस्य तत्रापि दीक्षितस्य कृतयज्ञदीक्षस्याहो त्वादृशपापिष्ठतमो लोके नान्योस्तीति । शिरांसीति बहुत्वेनानेकब्रह्महत्यासूचि । न हि स्वर्गकामेन ब्रह्महत्या क्रियतेऽहो अत्यनुचितं ते कर्मेत्यर्थः । ''स्वर्गकामो यजेत'' इति श्रुतिप्रसिद्धो यजमानो वात्र दृष्टांत इत्याह—याज्ञिक इति ॥ १५ ॥ अस्पृष्टवह्निमित्यशेषनाशोऽसूचि निःशेषं ते शरीरं चूर्णयिष्यामीति भावः ॥ १६ ॥ नृशंसं क्रूरम् 'नृशंसो घातुकः क्रूरः' इत्यमरः । आदिना रुद्रादिग्रहः ॥ १७ ॥ हे हरे इति । दिव्यहरितेजोस्त्रवत्त्वात्त्वमेव मां हरिष्यसीति भावः । धीराणां शूरवीराणां लोकं प्राप्स्याम्येवेति भावः । त्वं तु मृतोऽपि ब्रह्मघ्नत्वाद् दुर्गतिमेव यास्यसीति भावः ॥ १८ ॥ सुरेशेति । मामहत्वा तव सुरेशता न स्थास्यतीति भावः । प्रार्थितो हि कृपणो गालीप्रदानं विना प्रार्थितं न ददाति किं तु गालीरेव तत्र यथा याच्ञा वृथा भवति तथा वज्रं न वृथा भविष्यतीत्यर्थः । तत्र हेतुः अमोघमिति । भगवत्तेजोयुक्तास्थिनिर्मितत्वात्सफलमित्यर्थः ॥ १९ ॥ ननु निश्चये । हे शक्रेति । विष्णुसहायेन मां हन्तुं शक्तोसीति भावः । य एष तव वज्रस्तेन यतो यत्र यत्पार्श्वे

अहं समाधाय मनो यथाऽऽह संकर्षणस्तच्चरणारविंदे ॥ त्वद्वज्ररंहोलुलितग्राम्यपाशो गतिं मुनेर्याम्यपविद्धलोकः ॥ २१ ॥ पुंसां किलै कांताधियां स्वकानां याः संपदो दिवि भूमौ रसायाम् ॥ न राति यद् द्वेष उद्वेग आधिर्मदः कलिर्व्यसनं संप्रयासः ॥ २२ ॥ त्रैवर्गिकायासविघातमस्मत्पतिर्विधत्ते पुरुषस्य शक्र ॥ ततोऽनुमेयो भगवत्प्रसादो यो दुर्लभोऽकिंचनगोचरोन्यैः ॥ २३ ॥ अहं हरे तव पादैकमूलदासानुदासो भवितास्मि भूयः ॥ मनः स्मरेतासुपतेर्गुणांस्ते गृणीत वाक्कर्म करोतु कायः॥२४॥न नाकपृष्ठं न च पारमेष्ठ्यं न सार्वभौमं न रसाधिपत्यम् ॥ न योगसिद्धीरपुनर्भवं वा समंजस त्वा विरहय्य कांक्षे ॥ २५ ॥

हननेन मम पीडा स्यादित्यपि मा संशयिष्ठा इत्याह । अहमिति । संकर्षणो मत्पतिर्यथा समाधियोगमाह तथा तदीयचरणारविंदे मनः समाधाय मुनेर्योगिनो गतिमहं यास्यामि । तव वज्रस्य रंहसा लुलितश्छिन्नो ग्राम्यपाशो विषयभोगलक्षणो यस्य । अपविद्धलोकस्त्यक्तदेहः ॥ २१ ॥ तर्हि भगवान्संकर्षणः स्वभृत्याय मह्यमेव स्वर्गादिसंपदो दास्यतीत्यपि मा संशयिष्ठा इत्याह । पुंसामिति । स्वर्गे भूमौ रसातले च याः संपदस्ताः किल निश्चितं न राति न ददाति। तत्र हेतुः । यद्याभ्यो द्वेषादयो भवंति ॥ २२ ॥ तर्हि स्वभक्तस्य किं विधत्ते तत्राह । त्रैवर्गिको धर्मार्थकामविषयो य आयासस्तस्य विघातं विधत्ते तत आयासोपरमादनुमेयो न त्वैश्वर्यादिना । अतः सम्यग्भगवत्प्रसादाभावात्तव संपदो भविष्यंतीति भावः ॥ २३ ॥ एवमिंद्राय स्वाभिप्रायं निवेद्य भगवंतं प्रार्थयते अहमिति । तव पादावेव एकं मूलमाश्रयो येषां तेषां दासानामनुदासो भूयो भविताऽस्मि भविष्यामि भवेयम् । असुपतेः प्राणनाथस्य तव गुणान्मम मनः स्मरतु । वागपि तानेव कीर्तयतु । कायस्तवैव कर्म करोतु ॥२४॥ ननु किं दास्येन तुभ्यं महाफलानि दास्यामि तत्राह । नाकपृष्ठं ध्रुवपदं ब्रह्मलोकादिकं च हे समंजस निखिलसौभाग्य

इत्यर्थः । एवं तत इति ॥ २० ॥ यथा संकर्षणो मां पूर्वजन्मनि आह—'अहं वै सर्वभूतात्मा भूतभावनभावनः' इत्यादिना तथेत्यर्थः ॥ २१ ॥ अहो अयमनंतदासोऽस्मा एव स इंद्रैश्वर्यं कदाचिन्न दद्यादिति शोचमानं प्रत्याह—तर्हीति । याभ्यः संपद्भ्यः उद्वेगस्त्रासः ससंपदं तद्धीना द्विषंति ससंपदस्सदा तन्नाशादिदृष्ट्या त्रासो मनसि पीडा त्वद्वृद्ध्याद्यर्थं मदोऽभिमानोऽहमेवोत्कृष्ट इति कलिः कलहोऽपि याचकादिना व्यसनं स्त्रीमद्यादिसेवनलक्षणम् । संप्रयासोऽतीव प्रयत्नस्तद्रक्षणाद्यर्थम् ॥ २२ ॥ यतस्तवैश्वर्येच्छा वर्त्ततेऽतो हेतोः । इति भाव इति । "यस्याहमनुगृह्णामि हरिष्ये तद्धनं शनैः" इति श्रीमुखोक्तेरयमाशयः । शक्रेति । विपरी तलक्षणया त्वं विषयानुरागित्वाद्भगवत्प्रसादनेऽसमर्थोसीति भावः ॥ २३ ॥ हे हरे इति । हे भक्तक्लेशनाशिन् । यद्वा—स्वाभीष्टप्रापक । यद्वा—नामोच्चारकस्वीकर्त्तरिति । " हे श्रीकृष्णेति वचनं वदंतं नंदनंदनः । स्वी करोति ममैवायं ततो हरिरिति स्मृतः ॥ " इत्यादिपुराणोक्तेः । भूयः पुनःपुनः भवितास्मीति स्वस्तनार्थशंकानिवृत्तये भविष्यामीत्युक्तं न स्वस्तन एव किन्तु यदाकदाचिद्भविष्यामीत्यत्राप्यतोषात्प्रार्थनार्थे लिङर्थे ल्लुडयमिति बोधनायाह—भवेयमिति । गुणानामिति । "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी । मे इति शेषः॥२४॥अत्राक्षिपति—। नन्विति । सार्वभौमादिव्यत्ययेन योज्यं सार्वभौमं प्रियव्रतादीनामिव । रसाधिपत्यं पातालादिस्वाम्यम्।अपुनर्भवं मोक्षमपि।अत्र नाकादिचतुष्टयस्यानुक्रमत्वं न्यूनत्वविवक्षया ततश्चोत्तरकैमुत्यमपि ध्रुवपदस्य श्रैष्ठ्यं विष्णुपदसन्निहितत्वात् योगसिद्ध्यादिद्वयं तु सार्वत्रिकमपि पश्चाद्विन्यस्तमनयोस्तूत्तरश्रैष्ठ्यम्॥२५॥

अजातपक्षा इव मातरं खगाः स्तन्यं यथा वत्सतराः क्षुधार्ताः ॥ प्रियं प्रियेव व्युषितं विषण्णा मनोऽरविंदाक्ष दिदृक्षते त्वाम् ॥२६॥ ममोत्तमश्लोकजनेषु सख्यं संसारचक्रे भ्रमतः स्वकर्मभिः ॥ त्वन्माययात्मात्मजदारगेहेष्वासक्तचित्तस्य न नाथ भूयात् ॥ २७ ॥ इति श्रीभा० षष्ठ०वृत्रासुरेण भगवत्स्तोत्रवर्णनं नाम एकादशोऽध्यायः ॥ ११ ॥ ऋषिरुवाच ॥ एवं जिहासुर्नृप देहमाजौ मृत्युं वरं विजयान्मन्यमानः ॥ शूलं प्रगृह्याभ्यपतत्सुरेंद्रं यथा महापुरुषं कैटभोऽप्सु ॥ १ ॥

निधे त्वा त्वां विरहय्य पृथक्कृत्य न कांक्षे नेच्छामि ॥ २५ ॥ तर्हि किमिच्छसि तदाह । अजातपक्षाः खगा घूकादिभिः पीडिता यथा मातरं यथा च दाम्ना बद्धा बालवत्साः स्तन्यं पयः यथा च व्युषितं दूरदेशगतं प्रियं कामेन विषण्णा प्रिया तथा मे मनस्तापत्रयपीडितं कर्मभिर्बद्धं च कामादिभिर्विषण्णं च त्वां दिदृक्षते द्रष्टुमिच्छतीत्यर्थः ॥ २६ ॥ उत्तमश्लोकस्य तव जनेषु भक्तेष्वेव मम सख्यं भूयात् । त्वन्मायया देहादिष्वासक्तचित्तस्य भूयोऽपि तेष्वासक्तिर्न भूयात् ॥ २७ ॥ इति षष्ठस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशेऽतिविषण्णेन स्वयमुत्साहितेन तु ॥ महेंद्रेण महायुद्धे वृत्रस्य वध ईर्यते ॥१॥ महापुरुषं श्रीविष्णुम् । अप्सु प्रलयोदके ॥ १ ॥

घूक उलूकः । आदिना श्येनादिग्रहः । इत्यर्थ इति । कामाद्यार्त्तस्याप्यार्त्तिस्तव कृपयैव भवतीति भावः । अत्र संदर्भः—अत्राजातपक्षा इत्यनेनानन्याश्रयत्वं तदनुगमनासमर्थत्वं च तथा तत्सहितेन मातरमित्यनेनांनन्यस्वाभाविकदयालुत्वं तदीयदयाधिक्यं च व्यंजितं तेन च मातरि तेषामपि प्रीत्यतिशयो दर्शितः । ततस्तत्साम्येऽपि तद्वदात्मनोऽपि भगवति प्रीत्याधिक्यहेतुका दिदृक्षा व्यंजिता । तथापि तन्मात्रा यद्वस्त्वंतरमुपह्रियते तदेव तेषामुपजीव्यमास्वाद्यं चेति । केवलतन्निष्कृत्यभावादपरितोषेण दृष्टांतांतरमाह—स्तन्यमिति । अत्र दिदृक्षायां योजनार्थं मातरमित्येवानुवर्त्तयितव्ये स्तन्यमित्युक्तिस्तस्यास्तैस्तदंशप्राचुर्यभावनया वस्तुतस्तस्य तदीयशरीरांशतया च तदभेदविवक्षार्था ततस्तन्यं स्तन्यरूपं तदंशमयीं मातरमित्येव लब्धे तादृशी मातैव तैरुपजीव्यते आस्वाद्यते चेति पूर्वतः श्रैष्ठ्यं दर्शितं, तथा वत्सतरा अत्यंतबालवत्सास्तत एव स्वामिबद्धतया तदनुगताव समर्था इति साधारण्येऽपि बहु समायाति क्रमात् क्षुधार्त्ता इत्यनेन पूर्वतो वैशिष्ट्यं तथा गोजातेः स्नेहातिशयस्वाभाव्येन च तदनुसंधेयम्।अथ तथाप्युत्तरदृष्टांते स्तन्यगवोः कार्यकारणभावेन भेदं वितर्क्य दृष्टांतद्वयेऽप्यजातपक्षत्वादिविशेषणैरायत्यां तादृशप्रीतेरस्थिरतां चालोक्य दृष्टांतांतरमाह—प्रियमिति । सत्स्वपि वाचकांतरेषूभयोः प्रियशब्देनैव निर्देशात्स्वाभाविकाव्यभिचारिप्रीतिमन्तावेव गृहीतौ यत्र वार्द्धके बाल्येपि सह मरणादिकं दृश्यते ततस्तादृशी कापि प्रिया तादृशं प्रियं यथा व्युषितं दूरप्रोषितं संतमन्योपजीवित्वेन विषण्णा सती दिदृक्षते लोचनद्वारा तदास्वादाय भृशमुत्कंठते तथा मम मनोपि त्वामित्यर्थः । अत्र दार्ष्टांतिकेऽपि स्वकर्तृकत्वमनुक्त्वा मनःकर्तृकत्वोल्लेखेन बुद्धिपूर्वकप्रवृत्तिप्राप्तौ प्रीतेः स्वाभाविकत्वेनाव्यभिचारित्वं व्यक्तं तथारविंदाक्षेति । मनसो भ्रमरतुल्यतासूचनेन भगवतः परममधुरिमोल्लेखेन च तस्यैवोपजीव्यत्वमास्वाद्यत्वं च दर्शितमिति ॥ २६ ॥ स्वस्य भगवद्दर्शनासंभवं मन्वानः सबाष्पमिदमाह—ममेति । हे नाथेति । स्वामिना भृत्यप्रार्थितं देयमेवेति भावः ॥ २७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ अतिविषण्णेनात्याकुलेन ( १ ) नृपेति । नृपाणां युद्धे देहत्यागो यथेप्सितस्तथा तस्यापि नृपत्वात्तथात्वमीप्सितं तस्य नृपत्वं वाल्मीकीयोत्तरकांडांते वर्णितम् । संग्राममरणस्य महाफलत्वाद्वरं श्रेष्ठं मृत्युम् । अभ्यपतत्

ततो युगांताग्निकठोरजिह्वमाविध्य शूलं तरसाऽसुरेंद्रः ॥ क्षिप्त्वा महेंद्राय विनद्य वीरोहतोऽसि पापेति रुषा जगाद ॥ २ ॥ ख आपतत्तद्विचलद्ग्रहो ल्कवन्निरीक्ष्य दुष्प्रेक्ष्यमजातविक्लवः ॥ वज्रेण वज्री शतपर्वणाऽच्छिनद्भुजं च तस्योरगराजभोगम् ॥ ३ ॥ छिन्नैकबाहुः परिघेण वृत्रः संरब्ध आसाद्य गृहीतवज्रम् ॥ हनौ तताडेंद्रमथाऽमरेभं वज्रं च हस्तान्न्यपतन्मघोनः ॥ ४ ॥ वृत्रस्य कर्मातिमहाद्भुतं तत्सुरासुराश्चारणसिद्धसंघाः ॥ अपूजयंस्तत्पुरुहूतसंकटं निरीक्ष्य हाहेति विचुक्रुशुर्भृशम् ॥ ५ ॥ इंद्रो न वज्रं जगृहे विलज्जितश्च्युतं स्वहस्तादरिसन्निधौ पुनः ॥ तमाह वृत्रो हर आत्तवज्रो जहि स्वशत्रुं न विषादकालः ॥ ६ ॥ युयुत्सतां कुत्रचिदाततायिनां जयः सदैकत्र न वै परात्मनाम् ॥ विनैकमुत्पत्तिलयस्थितीश्वरं सर्वज्ञमाद्यं पुरुषं सनातनम् ॥ ७ ॥ लोकाः सपाला यस्येमे श्वसंति विवशा वशे ॥ द्विजा इव शिचा बद्धाः स काल इह कारणम् ॥ ८ ॥ ओजः सहो बलं प्राणममृतं मृत्युमेव च ॥ तमज्ञाय जनो हेतुमात्मानं मन्यते जडम् ॥ ९ ॥

युगांताग्निवत्कठोरा जिह्वा शिखा यस्य तत् । आविध्य भ्रामयित्वा ॥ २ ॥ तत्खे आपतदागच्छत् । विचलत्परिभ्रमत् । ग्रहश्चोल्का च ग्रहोल्कं तद्वद् दुष्प्रेक्ष्यम् । शतं पर्वाणि यस्य तेन । उरगराजो वासुकिस्तस्य भोगो देहस्तदाकारम् ॥ ३ ॥ हनौ कपोलप्रांते । अमरेभमैरावतं च ॥ ४ ॥ पुरुहूतस्य इंद्रस्य संकटम् ॥ ५ ॥ पुनश्च तमाह वृत्रः । हे हरे इंद्र ॥ ६ ॥ सदा जयो नैव किं तु कुत्रचिज्जय एकत्र कुत्रचित्कदाचिन्नैव । यद्वा कुत्रचिदपि युयुत्सतां सदा जयो नैव किं त्वेकत्रैव । कदाचिदेवेत्यर्थः । परो देह आत्मा येषां पराधीनात्मनामिति वा । आद्यमनादिम् । सनातनं नित्यम् ॥ ७ ॥ पराधीनतामेवाह । लोका इति सप्तभिः । यस्य वशे स्थिताः स्वयं विवशाः संतः श्वसंति चेष्टंते । द्विजाः पक्षिणः ॥ शिचा जालेन । कालः कलयतीति भगवान् इह जयादौ कारणम् ॥ ८ ॥ ओजआदिरूपं कालं तं हेतुमज्ञायाविज्ञाय जडं संतमात्मानं

संमुखमागच्छत् ॥ १ ॥ ततोऽभ्यागमनोत्तरम् । कठोरा दीप्ता । 'कठोरो दीप्तिपूर्णयोः' इत्यभिधानात् । पापेति । तव पापमेव त्वद्धननं करिष्यत्यहं तु निमित्तमात्रमिति भावः ॥ २ ॥ शतं पर्वाणि ग्रंथयः 'पर्व ग्रंथौ महे' इत्यभिधानात् । तदाकारं तद्वत्पुष्टम् । "भोगो विषयसेवायामहिवर्ष्मणि पालने । वर्त्तुले स्थूलतायां च जन्मन्यास्वादनेऽपि च ॥" इति वररुचिः ॥ ३ ॥ परिघेणेंद्रं हनौ चिबुकप्रांते । अथ इन्द्रताडनोत्तरम् ॥ ४ ॥ तद्वज्रपातनरूपम् । अपूजयन् प्राशंसन् । तत् स्वकरतः शस्त्रपतनरूपम् ॥ ५ ॥ हे हरे इति । मत्प्राणहरणोद्यतेति भाव्यभिप्रायेणाह । विषादश्चेतसो भंगस्तस्य कालोऽवसरः ॥ ६ ॥ एकत्रेति पदस्य कुत्रचिदित्यर्थासंभवादाह—यद्वेति । इत्यर्थ इति । एकस्मिन्काले एकत्रेति व्युत्पादनात्स्वत एव कदाचिदर्थतैकत्र पदस्य भवतीति भावः । देहस्य जडत्वेनात्मता न संभवतीति स्वयं विमृश्याह—पराधीनात्मनामिति । परस्यायत आत्मा येषामिति मध्यमपदलोपी समासः । उत्पत्त्यनंतरं लयोपादानं प्रतिक्षणं लीयमानत्वाभिप्रायम् ॥ ७ ॥ कलयति तत्तत्समयं विचारयतीति कालः ॥ ८ ॥ "स वै बलं बलिनां चापरेषाम्" इत्युक्तन्यायेन तस्यैवौज आदिरूपत्वं नान्यस्येत्यर्थः । जनः पामरः अज्ञपुरुष इत्यर्थः "जनो लोके महर्लोकात्परलोके च पामरे'

यथा दारुमयी नारी यथा यंत्रमयो मृगः ॥ एवं भूतानि मघवन्नीशतंत्राणि विद्धि भोः ॥ १० ॥ पुरुषः प्रकृतिर्व्यक्तमात्मा भूतेंद्रियाशयाः ॥ शक्नुवंत्यस्य सर्गादौ न विना यदनुग्रहात्॥११॥अविद्वानेवमात्मानं मन्यतेऽनीशमीश्वरम् ॥ भूतैः सृजति भूतानि ग्रसते तानि तैः स्वयम्॥१२॥ आयुः श्रीः कीर्तिरैश्वर्यमाशिषः पुरुषस्य याः ॥ भवंत्येव हि तत्काले यथाऽनिच्छोर्विपर्ययाः ॥ १३ ॥ तस्मादकीर्तियशसोर्जयापजययोरपि ॥ समः स्यात्सुखदुःखाभ्यां मृत्युजीवितयोस्तथा ॥ १४ ॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ तत्र साक्षिणमात्मानं यो वेद न स बध्यते ॥ १५ ॥ पश्य मां निर्जितं शक्र वृक्णायुधभुजं मृधे ॥ घटमानं यथाशक्ति तव प्राणजिहीर्षया ॥ १६ ॥ प्राणग्लहोयं समर इष्वक्षो वाहनासनः ॥ अत्र न ज्ञायतेऽमुष्य जयोऽमुष्य पराजयः ॥ १७ ॥ श्रीशुक उवाच ॥ इंद्रो वृत्रवचः श्रुत्वा गतालीकमपूजयत् ॥ गृहीतवज्रः प्रहसंस्तमाह गतविस्मयः ॥ १८ ॥

देहं हेतुं मन्यते ॥ ९ ॥ १० ॥ ननु स्वारंभकप्रधानपुरुषादितंत्राणीति युक्तं तत्राह । पुरुष इति । व्यक्तं महत्तत्त्वम् । आत्माऽहंकारः ॥ ११ ॥ ननु स्वकर्मद्वारा जीव एव सृष्ट्यादिहेतुरिति मीमांसका मन्यंते तत्राह । एवमविद्वाननीशमेवात्मानमीश्वरं स्वतंत्रं मन्यते । ननु पित्रादयः स्रष्टारो दृश्यंते व्याघ्रादयस्तु हंतारस्तत्राह । भूतैरिति । स्वयमीश्वरः ॥ १२ ॥ ननु त्वया पराजितस्य मम जयादिशंकैव नास्ति किमिति मां बलायुद्धे प्रवर्तयसि तत्राह । आयुरिति । तत्काले जयादिकाले । विपर्यया अकीर्त्यादयः ॥ १३ ॥ यस्मादेवं सर्वमीश्वराधीनं तस्मात्समः स्याद्धर्षविषादहीनो भवेत् ॥ १४ ॥ समदृष्टावुपायमाह । सत्त्वमिति । हर्षादिभिर्न बद्ध्यते.॥ १५ ॥ हर्षविषादनिवृत्त्यै तवाहमेव गुरुरित्याह । पश्येति । वृक्णमायुधं भुजश्च यस्य ॥ १६ ॥ अनियतत्वं द्यूतरूपकेणोपसंहरति । प्राण एव ग्लहः पणो यस्मिन् । इषव एवाक्षाः पाशका यस्मिन् । वाहनान्येवेतस्ततश्चाल्यमानान्यासनानि फलका यस्मिन् ॥ १७ ॥ गतालीकं निष्कपटमिति मेदिनी ॥ ९ ॥ पराधीनत्वं स्फोटयति—पुत्तलिका यथा तंत्री परावर्त्तनकर्तुर्वशे । यंत्रमयो दारुनिर्मितः । मघवन्निति । ' मघा द्वीपांतरे ज्ञाने ' इत्यभिधानात् । त्वं ज्ञानी भूत्वाऽपि न जानासीति तस्य मौढ्यं व्यनक्ति भो इत्यनेन तुच्छतां चाह--ईशतंत्राणि परमेश्वराधीनानि ॥ १० ॥ अत्राक्षिपति—नन्विति । यस्येशस्यानुग्रहात् । " कालः कर्म च प्रकृतिः स्वभावो जीव एव च । यदनुग्रहतः संति न संति यदुपेक्षया ॥" इत्युक्तेः ॥ ११ ॥ पुनराक्षिपति—नन्विति । एवमविद्वान् ईशस्वातंत्र्यं जीवपारतंत्र्यं चाविद्वान् । पुनः प्रतिवंद्याक्षिपति—नन्विति । आदिना पितामहादयः । द्वितीयादिना सर्पादिग्रहः । भूतैरिति । पित्रादिभिर्व्याघ्रादिभिश्च । " जनं जनेन जनयन्मारयन्मृत्युनांतकम् " अपीति श्रीकपिलोक्तेः ॥ १२ ॥ पुनराक्षिपति—नन्विति । आयुः तद्वृद्धिः । श्रीः कांतिर्धनादि वा । या अन्या आशिषः स्त्रीपुत्रादिविषया मनोरथाः । अनिच्छोः पराजयादिकमनिच्छतोऽपि ॥ १३ ॥ सुखदुःखाभ्यामिति सप्तम्यर्थे तृतीया ॥ १४ ॥ तत्र प्रकृतिगुणे सत्त्वादौ तत्कार्ये सुखादौ च सुखादयः प्रकृतिगुणसत्त्वादिधर्मा न ममेति विचारवतो बंधनं न भवतीति भावः ॥ १५ ॥ शक्रेति । श्रीविष्णुसहायवत्वात्समर्थेति भावः । घटमानं यतमानम् ॥ १६ ॥ ' ग्लहो ग्राह्यपणे स्मृतः ' इति । अत्र द्यूतलक्षणे समरे ॥ १७ ॥ तं वृत्रम् ॥ १८ ॥

इंद्र उवाच ॥ अहो दानव सिद्धोऽसि यस्य ते मतिरीदृशी ॥ भक्तः सर्वात्मनात्मानं सुहृदं जगदीश्वरम् ॥ १९ ॥ भवानतार्षीन्मायां वै वैष्णवीं जनमोहिनीम् ॥ यद्विहायासुरं भावं महापुरुषतां गतः ॥ २० ॥ खल्विदं महदाश्चर्यं यद्रजःप्रकृतेस्तव ॥ वासुदेवे भगवति सत्त्वात्मनि दृढा मतिः ॥ २१ ॥ यस्य भक्तिर्भगवति हरौ निःश्रेयसेश्वरे ॥ विक्रीडतोऽमृतांभोधौ किं क्षुद्रैः खातकोदकैः ॥ २२ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणावन्योन्यं धर्मजिज्ञासया नृप ॥ युयुधाते महावीर्याविंद्रवृत्रौ युधां पती ॥ २३॥ आविध्य परिघं वृत्रः कार्ष्णायसमरिंदमः ॥ इंद्राय प्राहिणोद्घोरं वामहस्तेन मारिष ॥ २४ ॥ स तु वृत्रस्य परिघं करं च करभोपमम् ॥ चिच्छेद युगपद्देवो वज्रेण शतपर्वणा ॥ २५ ॥ दोर्भ्यामुत्कृत्तमूलाभ्यां बभौ रक्तस्रवोऽसुरः ॥ छिन्नपक्षो यथा गोत्रः खाद्भ्रष्टो वज्रिणा हतः ॥ २६ ॥ कृत्वाऽधरां हनुं भूमौ दैत्यो दिव्युत्तरां हनुम् ॥ नभोगंभीरवक्त्रेण लेलिहोल्बणजिह्वया ॥ २७ ॥ दंष्ट्राभिः कालकल्पाभिर्ग्रसन्निव जगत्त्रयम् ॥ अतिमात्रमहाकाय आक्षिपंस्तरसा गिरीन् ॥ २८ ॥ गिरिराट् पादचारीव पद्भ्यां निर्जरयन्महीम् ॥ जग्रास स समासाद्य वज्रिणं सहवाहनम् ॥ २९ ॥ महाप्राणो महावीर्यो महासर्प इव द्विपम् ॥ वृत्रग्रस्तं तमालक्ष्य सप्रजापतयः सुराः ॥ ३० ॥ हा कष्टमिति निर्विण्णाश्चुक्रुशुः समहर्षयः ॥ निगीर्णोऽप्यसुरेंद्रेण न ममारोदरं गतः ॥ महापुरुषसन्नद्धो योगमायाबलेन च ॥ ३१ ॥

टम् ॥ १८ ॥ भक्तः सर्वात्मना जगदीश्वरं सेवितवानसि ॥ १९ ॥ २० ॥ २१ ॥ तस्य तव खातकोदकैर्गर्तादिजलोपमैः स्वर्गादिभिः किम् ॥ २२ ॥ युधां संग्रामाणां ती मुख्यौ ॥ २३ ॥ हे मारिष श्रेष्ठ राजन् ॥ २४ ॥ २५ ॥ उत्कृत्तं मूलं ययोस्ताभ्यां रक्तं स्रवतीति तथा गोत्रः पर्वतः ॥ २६ ॥ कृत्वाधरामित्यादेर्जग्रासेति तृतीयेनान्वयः । नभोवद्गंभीरेण वक्त्रेण । लेलिहः सर्पस्तद्वदुल्बणया जिह्वया ॥ २७ ॥ कालकल्पाभिः कालतुल्याभिर्दंष्ट्राभिर्ग्रसन्निव । आक्षिपन् चालयन् ॥ २८ ॥ निर्जरयन् चूर्णयन् ॥ २९ ॥ महाप्राणो महाबलः । महावीर्यो महाप्रभावः महासर्पोऽजगरो द्विपं गजम् ॥ ३० ॥ महापुरुषेण कवचरूपेण श्रीनारायणेन सन्नद्धो दंशितः ।

दानवेति । सुकुलोद्भूतदनुपुत्रत्वात्त्वयि नैतदाश्चर्यम् । यद्वाऽहो दानवोऽपि भूत्वा विष्णुभक्तोऽसीत्यद्भुतमिति भावः ॥ १९ ॥ आसुरं भावं देवद्विजश्रुतिविरोधलक्षणमहंकारादिलक्षणं वा । महापुरुषतां भक्तिज्ञानादिगुणसंपन्नत्वेन महत्त्वम् ॥ २० ॥ २१ ॥ आदिना पारमेष्ठ्यादिग्रहः । अखनिषतेति खाताः कूपादयस्त एव खातकाः ॥ २२ ॥ योद्धृयुद्धौ युधौ तेषां तेषां च पती । धर्मजिज्ञासया धर्मविचारेण । नृपेति । राज्ञां धर्मविचार एव सर्वदा कार्य इति भावः ॥ २३ ॥ हे मारिषेति । अयमेव पूज्यपुरुषाणां धर्मो यदंतेऽपि दैन्याभावप्रकटनं यथा तव ब्रह्मशापे सत्यपि “ द्विजोपसृष्टः कुहकस्तक्षको वा दशत्वलं, गायत विष्णुगाथाः ” इत्याद्युक्तेरिति भावः ॥ २४ ॥ “ कनिष्ठिकाधः करभः करिपोते च तत्करे ” इत्यभिधानात् । करभोपमं गजशुंडोपमम् ॥ २५ ॥ खादाकाशात् ॥ २६ ॥ दिवि मेघाधिष्ठितमार्गे । लेलिहः ‘ सर्पव्याघ्रौ तु लेलिहौ ’ इति निरुक्तिः ॥ २७ ॥ अतिमात्रमहाकायोऽतीवोच्चस्थूलशरीरः । तरसा बलेन ॥ २८ ॥ जग्रास निजगाल ॥ २९ ॥ ३० ॥ नारायणकवचरूपेण मंत्रमूर्त्तिनेत्यर्थः । ‘ मंत्रमूर्त्तिममूर्त्तिकम् ’ इत्युक्तेः । योग एव

भित्त्वा वज्रेण तत्कुक्षिं निष्क्रम्य बलभिद्विभुः ॥ उच्चकर्त शिरः शत्रोर्गिरिशृंगमिवौजसा॥३२॥वज्रस्तु तत्कंधरमाशुवेगः कृंतन्समंतात्परिवर्तमानः॥ न्यपातयत्तावदहर्गणेन यो ज्योतिषामयने वार्त्रहत्ये ॥ ३३ ॥ तदा च खे दुंदुभयो विनेदुर्गंधर्वसिद्धाः समहर्षिसंघाः ॥ वार्त्रघ्नलिंगैस्तमभिष्टुवाना मंत्रैर्मुदा कुसुमैरभ्यवर्षन् ॥३४॥ वृत्रस्य देहान्निष्क्रांतमात्मज्योतिररिंदम ॥ पश्यतां सर्वलोकानामलोकं समपद्यत ॥ ३५ ॥ इति श्रीभाग० महा० षष्ठ० वृत्रवधो नाम द्वादशोऽध्यायः॥१२॥श्रीशुक उवाच॥वृत्रे हते त्रयो लोका विना शक्रेण भूरिद॥सपाला ह्यभवन्सद्यो विज्वरा निर्वृतेंद्रियाः॥१॥

योगबलेन मायाबलेन च ॥ ३१ ॥ बलभिदिंद्रः । उच्चकर्त चिच्छेद ॥ ३२ ॥ तदेवाह । तस्य कंधरं कंधराम् । आशुवेगोऽतिवेगवान । ज्योतिषां सूर्यादीनाम् अयने दक्षिणोत्तरगतिरूपे संवत्सरे योऽहर्गणः षष्ट्युत्तरशतत्रयात्मकस्तावताऽहर्गणेन वार्त्रहत्ये वृत्रहत्यायोग्ये काले न्यपातयत् । यद्वा स्वार्थे तद्धितः । वृत्रहत्यायां वृत्रहननार्थं परिवर्तमान इत्यर्थः ॥ ३३॥ "वार्त्रघ्नलिंगैर्वृत्रहंतुर्वीर्यप्रकाशकैः॥वार्त्रहत्याय शवसे पृतनाषाह्याय च"इत्याद्यैस्तमिंद्रमभिष्टुवाना अभिष्टुवंतः॥ ३४॥अलोकं लोकातीतं भगवंतम् ॥ ३५ ॥ इति षष्ठस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२ ॥ छ ॥ त्रयोदशे तु वृत्रस्य ब्रह्महत्यामहाभयात् ॥ चिरं नष्टोऽवितः शक्रो विष्णुनेति निरूप्यते ॥१॥१॥

माया तस्या बलेनैश्वर्य्येण ॥ ३१ ॥ ३२ ॥ वृत्रहत्यायोग्ये काल इत्यर्थांगीकारे काल एध तद्धननं करिष्यति किं वज्रप्रहारेण । यद्वेति । वृत्रहत्यैव वार्त्रहत्यं तस्मिंस्तथा । इत्यर्थ इति । नैमित्तिकाधारसप्तमीयमिति भावः । अयने अहर्गण इत्यत्र भवतीति क्रिया बोध्या न तु भवत इति तदुक्तमपि " प्रकृतेर्विकृतेर्वापि ह्येकदा प्रतिपादने । प्रकृतेर्वाचकः संख्यां गृह्णाति विकृतेर्न तु ॥ " इति । यथा सुवर्णं खदिरांगारसदृशे कुंडले भवतीत्यादि । इहापि ज्योतिरयनयोर्विकृतित्वमहर्गणस्य प्रकृतित्वमहर्गणस्यैव ज्योतिरयनत्वसंभवादिति । यद्वा—ज्योतिषामयने नेत्रदृष्टीनामाश्रये भगवत्पदौ तौ यावत्ते न वीक्ष्येते तावत्तस्य शिरोऽच्छिनत् । हे अहर्गणेन अहानि गण्यंते येषां तेऽहर्गणा नरास्तेषां स्वामिन् । अत्र य इति वज्रेणान्वेति । तेन वीक्ष्येते इति शेषः । यावत्तावतोर्नित्यसंबंधादेव यावदिति ॥ ३३ ॥ " वार्त्रहत्याय शवसे पृतनाषाह्याय च " इत्याद्यैरिति । अस्यार्थः—'इंद्र त्वा वर्त्तयामति' इति मंत्रशेषः । वार्त्रहत्याय वृत्रो येन शवसा बलेन हन्यते तद्वार्त्रहत्यं शवस्तस्मै वार्त्रहत्याय शवसे । पृतनाषाह्याय च पृतनाः संग्रामस्थाः सेना येन शवसाऽभिभूयंते तत्पृतनाषाह्यं बलं तस्मै पृतनाषाह्याय सहतिरभिभवार्थः । हे इंद्र त्वामावर्त्तयामः सदेत्यर्थः । वार्त्रघ्नलिंगैरिति बहुवचनात् । " अहन्नहिं पर्वते शिश्रियाणां त्वष्टास्मै वज्रं स्वर्यं ततक्ष वाश्रा इव धेनवः स्पंदमाना अंजः समुद्रमवजग्मुराप इति । वृत्रो ह वा इदं सर्वं वृत्त्वा शिष्ये यदिदमंतरेण द्यावापृथिवी स यदिद१७ सर्वं वृत्त्वा शिश्ये तस्माद्वृत्रो नामेति । तमिंद्रो जघान स हतः पूतिः सर्वत एवापोभिसुस्राव सर्वत इव ह्यय१७ समुद्रस्तस्मादहैका आपो बीभत्सांचक्रिरे । ता उपर्युपर्य्यतिपुपुविरे त इमे दर्भास्ताहैता अनापूयिता आपोस्ति वा इतरासु स१७ सृष्टमिव यदेनावृत्रः पूतिरभिप्रास्रवत्तदेवासामेताभ्यां पवित्राभ्यामपहंत्यथ रेवाद्भिः प्रोक्षति तस्माद्वा एताभ्यामुत्पुनाति " इति शतपथश्रुतयो ग्राह्याः । स्पष्टार्था एव । तदा वृत्रशिरःपतनावसरे ॥ ३४ ॥ अरिंदमेति । त्वमप्यविद्याशत्रुदमनसमर्थो भूत्वा तादृशीं गतिं प्राप्स्यसीति भावः । लोकातीतं प्रपंचातीतम् ॥ ३५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ चिरं नष्टो बहुकालमदृष्टः । ( १ ) अहो इंद्रस्य महत्त्वं यो लोकस्य वर्षणेनासुरहननेन च बहुसुखप्रदोऽस्तीति विमृशंतं राजानं श्रीमहामुनिराह—त्वमपि भूरिदोऽसीति भावः । भूरिभ्यो बहुभ्यः प्रजारक्षणेन सुखं ददाति । यद्वा—प्रार्थितादप्यधिकं ददाति सुवर्णं वा ददाति । भूरीन्दुष्टजनान् द्यति खंडयति वा भूरिदस्तत्संबुद्धौ तथा । यद्वा—त्वमिंद्रादप्यधिकोऽसि यतः स्वयमेव श्रीकृष्णेन गर्भे रक्षितोऽसि दयते पालयतीति दः 'देङ्—पालने' अतो डः । भूरिः श्रीकृष्णो दः पालको यस्य स भूरिदस्तत्संबुद्धौ तथा 'जुगोप कुक्षिं गत आत्तचक्रः' इत्यादिवक्ष्य

देवर्षिपितृभूतानि दैत्या देवानुगाः स्वयम् ॥ प्रतिजग्मुः स्वधिष्ण्यानि ब्रह्मेशेंद्रादयस्ततः ॥ २ ॥ राजोवाच ॥ इंद्रस्यानिर्वृतेर्हेतुं श्रोतुमिच्छामि भो मुने ॥ येनासन्सुखिनो देवा हरेर्दुःखं कुतोऽभवत् ॥ ३ ॥ श्रीशुक उवाच ॥ वृत्रविक्रमसंविग्नाः सर्वे देवाः सहर्षिभिः ॥ तद्वधाया र्थयन्निंद्रं नैच्छद्भीतो बृहद्वधात् ॥ ४ ॥ इंद्र उवाच ॥ स्त्रीभूजलद्रुमैरेनो विश्वरूपवधोद्भवम् ॥ विभक्तमनुगृह्णद्भिर्वृत्रहत्यां क माज्म्र्यहम् ॥ ५ ॥ श्रीशुक उवाच ॥ ऋषयस्तदुपाकर्ण्य महेंद्रमिदमब्रुवन् ॥ याजयिष्याम भद्रं ते हयमेधेन मा स्म भैः ॥ ६ ॥ हयमेधेन पुरुषं परमात्मानमीश्वरम् ॥ इष्ट्वा नारायणं देवं मोक्ष्यसेऽपि जगद्वधात् ॥ ७ ॥ ब्रह्महा पितृहा गोघ्नो मातृहाऽऽचार्यहाऽघवान् ॥ श्वादः पुल्कसको वाऽपि शुध्येरन्यस्य कीर्तनात् ॥ ८ ॥ तमश्वमेधेन महामखेन श्रद्धाऽन्वितोऽस्माभिरनुष्ठितेन ॥ हत्वापि सब्रह्मचराचरं त्वं न लिप्यसे किं खलनिग्रहेण ॥ ९ ॥ श्रीशुक उवाच ॥ एवं संचोदितो विप्रैर्मरुत्वानहनद्रिपुम् ॥ ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम् ॥ १० ॥ तयेंद्रः स्मासहत्तापं निर्वृतिर्नाऽमुमाविशत् ॥ ह्रीमंतं वाच्यतां प्राप्तं सुखयंत्यपि नो गुणाः ॥ ११ ॥

अनिर्वृतं शक्रमपृष्ट्वा स्वयमेव प्रतिजग्मुः ॥ २ ॥ हरेरिंद्रस्य ॥ ३ ॥ तस्य दुःखहेतुं वक्तुं प्रस्तावकथामाह । वृत्रविक्रमेत्यादिना । आर्थयन्प्रार्थयंत । बृहद्वधाद्ब्राह्मणवधाद्भीतः सन् ॥ ४ ॥ एनः पापं विभक्तं विभज्य गृहीतम् । मार्ज्मि शोधयामि ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ वृषाकपिमिंद्रम् ॥ १० ॥ तया देवादिभिः कारितया। माणत्वात्।"भूरिर्ना वासुदेवे च हरे च परमेष्ठिनि।नपुंसकं सुवर्णे च प्राज्ये स्याद्वाच्यलिंगकः॥"इति मेदिनी। निर्वृतमिंद्रियं मनो निर्वृतानि सुस्थितानि वेंद्रियाणि चक्षुरादीनि येषां ते तथा"निर्वृतिः सुस्थितावस्तंगमने च सुखे स्त्रियाम्" इति मेदिनी ॥ १ ॥ देवर्षयो नारदाद्याः । देवानुगा गंधर्वाद्याः । ततो युद्धस्थलात् ॥ २ ॥ भो मुन इति । सर्वज्ञत्वात्तव सर्वं विदितमिति भावः । येन वृत्रवधेन । हरेरिन्द्रस्य । "अर्कमर्कटमंडूकविष्णुवासववायवः । तुरंगसिंहशीतांशुयमाश्च हरयो दश॥" इत्यभिधानात् ॥ ३ ॥ आर्थयन्निति । अर्थप्रातिपदिकात्क्वदंतात् "तत्करोति" इति णिचि कृते रूपं साधु । वृत्रस्य ब्राह्मणत्वमग्निसंभवत्वादपि "अग्निर्वै ब्राह्मणः" इति श्रुतेः । आदित्यानामपि वस्तुतो ब्राह्मणत्वेन त्वष्टुरात्मजत्वादपि तथात्वमेवेति ॥ ४ ॥ यथा बृहस्पत्यवज्ञात्मकं पापं विश्वरूपवधात्मकपापांतरस्य जनकं जातं तथा तच्च लोकदृष्ट्या विभक्तमपि वृत्रवधात्मकपापांतरस्य जनकत्वेनावशिष्टं दृष्टमित्थमिन्द्रः स्वयमेव तदशेषमनुभूयांतर्भीत एव हि तान्प्रत्याचक्षाण उवाचेत्यभिप्रायेणाह–इंद्र उवाचेति । विभक्तं विभज्य स्वीकृतं तत्र हेतुः—अनुगृह्णद्भिरिति ॥ ५ ॥ ऋषयस्तु जगत्स्वास्थ्याय तस्याप्यासुरभावनाशाय श्रीभगवदाज्ञाबलेन प्रयोजितवन्त इत्यभिप्रेत्याह—ऋषय इति ॥ ६ ॥ तत्र वीर्यातिशयाधानज्ञापनार्थमाहुर्नारायणमिष्ट्वेति ॥ ७ ॥ कैमुत्यार्थमाह—ब्रह्महेति । कीर्त्तनमात्रात्किं पुनरसकृन्नामोच्चारणमयतद्यजनादित्यर्थः । ब्राह्मणाच्छूद्रायां जातः सुतो निषादः शूद्रायां निषादाज्जातः पुल्कसः क्षत्रियाच्छूद्रकन्यायां जाता कन्योग्री शूद्रात् क्षत्रियायां जातः क्षत्ता क्षत्तुरुग्र्यां जातः श्वाद इति मन्वादयः । अपिनाऽन्येप्यंत्यजादयः ॥ ८ ॥ महामखेन सर्वयागमुख्येन । तत्र स्वभावं दर्शयंति अस्माभिरिति । तत्र भगवत इव स्वाभिप्रायमपि व्यंजयंति—खलेति । जगतस्तस्य च भद्रीभावान्नात्र दोष इति भावः । अत्रेष्ट्वेति शेषः । ब्रह्महननस्याधिक्यसूचनाय चराद्ब्रह्मेति पृथगुक्तम् ॥ ९ ॥ एवं तस्य पापस्यात्मनि नात्युपपत्तावपि साभिमाना तदधिष्ठात्री तु तमभिभवितुमुद्यतेत्याह—ब्रह्महत्येति । "वृषाकपिर्हरे शक्रे कृष्णे च जातवेदसि" इत्यभिधानात् ॥ १० ॥ निर्वृतिः सुखम् । अत्राक्षिपति—नन्विति । यद्यपि शत्रुवधसूचकशौर्यादिगुणाः सुखहेतवस्तथापि ते ब्रह्महत्यया तप्तस्य नो सुखयंति लज्जाकरत्वान्निंदाकरत्वाच्च ॥ ११ ॥

तां ददर्शानुधावंतीं चांडालीमिव रूपिणीम् ॥ जरया वेपमानांगीं यक्ष्मग्रस्तामसृक्पटाम् ॥ १२॥ विकीर्य पलितान्केशांस्तिष्ठतिष्ठेति भाषिणीम्॥ मीनगंध्यसुगंधेन कुर्वतीं मार्गदूषणम् ॥ १३ ॥ नभोगतो दिशः सर्वाः सहस्राक्षो विशांपते ॥ प्रागुदीचीं दिशं तूर्णं प्रविष्टो नृप मानसम् ॥ ॥ १४ ॥ स आवसत्पुष्करनालतंतूनलब्धभोगो यदिहाग्निदूतः ॥ वर्षाणि साहस्रमलक्षितोंतः स चिंतयन्ब्रह्मवधाद्विमोक्षम् ॥ १५ ॥ ताव त्रिणाकं नहुषः शशास विद्यातपोयोगबलानुभावः ॥ स संपदैश्वर्यमदां धबुद्धिर्नीतस्तिरश्चांगातिमिंद्रपत्न्या ॥ १६ ॥

स्मेत्यवधारणे । इंद्र एव तापमसहत नान्यः । अमुमिंद्रं निर्वृतिर्नाविशत् । ननु धैर्यादिगुणयुक्तस्य कुतोऽनिर्वृतिस्तत्राह । ह्रीमंतं लज्जावंतम् । वाच्यतां निंद्यताम् ॥ ११॥ यक्ष्मग्रस्तां क्षयरोगव्याप्ताम् ॥ १२ ॥ मीनस्येव गंधो यस्य स मीनगंधिः स चासावसुश्च श्वासवायुस्तस्य गंधेन ॥ १३ ॥ प्रागुदीचीं दिशं गतः संस्तूर्णं मानसं सरः ॥ ॥ १४ ॥ स इंद्रः सहस्रं वर्षाणि पुष्करनालस्य तंतून् प्रति आवसत । कथंभूतः । न लब्धो भोगो येन सः । कुतः । यद्यस्मादिह जले वसन्नग्निदूतश्च स्वयम् । अग्नेश्च स्वदूतस्य हविर्भागान्नेतुर्जले प्रवेशासंभवादलब्धभोग इत्यर्थः । पाठांतरे न लब्धो यज्ञभागो येन सः ॥ १५ ॥ त्रिणाकं न अकं दुःखं यस्मिन्निति नाकः पुण्यलोकः । तृतीयं नाकं स्वर्गम् । ननु मनुष्यस्य कुतः स्वर्गराज्यं तत्राह । विद्यादिभिरनुभावः स्वर्गपालनसामर्थ्यं यस्य सः । तर्हि तस्मिन्सति कथमिंद्रस्य पुनः स्वर्गप्राप्तिस्तत्राह । स नहुषः संपदैश्वर्याभ्यां यो मदस्तेनांधा बुद्धिर्यस्य स इंद्रपत्न्या शच्या तिरश्चां गतिं सर्पयोनिं नीत उपायेन प्रापितः । एवं ह्याख्यायते । नहुषः किल कदाचिदिंद्राणीमुवाच इंद्रस्तावदहमतस्त्वं मां भजेति तया चावेदितवृत्तांतो बृहस्पतिस्तामुवाच ब्राह्मणवाह्यशिबिकायामारुह्यागतं त्वां भजिष्यामीति ब्रूहि ततोऽसौ ब्रह्मशापात्पतिष्यतीति तया च तथोक्तो नहुषोऽगस्त्यादीन् शिबिकां वाहयामास । तदा शीघ्रं सर्पसर्पेत्यगस्त्यं पदा पस्पर्श तेन कुपितेन सर्पो भवेति शप्तो महासर्पोऽजगरोऽभूदिति ॥ १६ ॥

असृक्पट रजस्वलामिव रक्तरंजितवस्त्राम्॥१२॥"पलितं जरसा शौक्ल्यम्" इत्यमरः ॥१३॥ नभः सर्वा दिशश्च गतः सहस्राक्षः प्रागुदीचीं प्राच्या उदीच्याश्च मध्ये या दिक् तामीशानीमित्यर्थः । गत इत्यावृत्यायोज्यम् । नृपेति विशांपते इति चेंद्रस्य त्रिलोकीपतेर्यदीयमवस्था ब्रह्महत्यया जाता तर्हि केवलनृपतेरितरसामान्यप्रजापालकानां कथं न सा स्यादतो ब्रह्महत्याया भेतव्यमिति भावः ॥ १४ ॥ पुष्करनालस्य कमलनालस्य तंतूनिति सप्तम्यर्थे द्वितीया "उपान्वध्याङ्वसः" इत्युक्तेः । इत्यर्थ इति । भोगानवाप्त्याऽतीव कृशोऽभूदिति भावः । पाठांतरेऽलब्धभाग इति पाठे । विगतो मोक्षो यतोऽन्यत्रेति विमोक्षो विष्णुस्तम् "वरं वृणीष्व राजर्षे ऋते कैवल्यमद्य नः॥ एक एवेश्वरस्तस्य भगवान्विष्णुरव्ययः ॥ " इति मुचुकुंदं प्रति देवगणोक्तेः । ब्रह्मवधाद्धेतोर्विष्णुं चिंतयन्नित्यर्थः । ऋतंभरध्यानेत्यादिवक्ष्यमाणत्वात् ॥ १५ ॥ मनुष्ये स्वर्गराज्यासंभवमाशंकते—न न्विति । नहुषः शशासेति वृत्रवधवृत्तं सप्तममन्वंतरगतं लक्ष्यते । तथापि षष्ठमन्वंतरहतानां नमुच्यादीनां कीर्त्तनं तत्प्रतिनिधिरूपत्वेन तन्नाम्नां केषांचिदपेक्षयेति ज्ञेयम् । आख्यायिकार्थस्य स्पष्टत्वमेव ॥ १६ ॥

ततो गतो ब्रह्मगिरोपहूत ऋतंभरध्याननिवारिताघः ॥ पापस्तु दिग्देवतया हतौजास्तं नाभ्यभूदवितं विष्णुपत्न्या ॥ १७ ॥ तं च ब्रह्मर्षयोऽभ्येत्य हयमेधेन भारत ॥ यथावद्दीक्षयांचक्रुः पुरुषाराधनेन ह ॥१८॥ अथेज्यमाने पुरुषे सर्वदेवमयात्मनि ॥ अश्वमेधे महेंद्रेण वितते ब्रह्मवादिभिः॥१९॥ स वै त्वाष्ट्रवधो भूयानपि पापचयो नृप ॥ नीतस्तेनैव शून्याय नीहार इव भानुना ॥२०॥ स वाजिमेधेन यथोदितेन वितायमानेन मरीचिमिश्रैः ॥ इष्ट्वाधियज्ञं पुरुषं पुराणमिंद्रो महानास विधूतपापः ॥२१॥ इदं महाख्यानमशेषपाप्मनां प्रक्षालनं तीर्थपदानुकीर्तनम्॥भक्त्युच्छ्रयं भक्तजनानुवर्णनं महेंद्रमोक्षं विजयं मरुत्वतः॥२२॥पठेयुराख्यानमिदं सदा बुधाःशृण्वंत्यथो पर्वणि पर्वणींद्रियम्॥धन्यं यशस्यं निखिलाघमोचनं रिपुंजयं स्वस्त्ययनं तथायुषम् ॥२३॥ इति श्रीभा०महा०षष्ठ० इंद्राश्वमेधवर्णनं नाम त्रयोदशोऽध्यायः॥१३॥परीक्षिदुवाच॥रजस्तमःस्वभावस्य ब्रह्मन्वृत्रस्य पाप्मनः॥ नारायणे भगवति कथमासीद् दृढा मतिः ॥ १ ॥ देवानां शुद्धसत्त्वानामृषीणां चामलात्मनाम् ॥ भक्तिर्मुकुंदचरणे न प्रायेणोपजायते ॥ २ ॥

स्वर्गं गतः प्राप्तः । कथंभूतः । ब्रह्मगिरा ब्राह्मणवाक्येनोपहूतः सन् । ऋतंभरः सत्यपालको हरिस्तस्य ध्यानेन निवारितमघं येन । प्रागपि तु पापो ब्रह्मवधस्तमिंद्रं नाभ्यभूत्तस्याभिभवं नाकरोत् । कुतः । दिग्देवतया प्रागुदीच्यां दिशि स्थितया श्रीरुद्रेण अवितं रक्षितं संतम् ॥ १७ ॥ पुरुषस्य हरेराराधनं यस्मिंस्तेन ॥ १८ ॥ सर्वदेवमय आत्मा मूर्तिर्यस्य तस्मिन् । सर्ववेदमयात्मनीति वा पाठः । ब्रह्मवादिभिर्विततेऽनुष्ठितेऽश्वमेधे महेंद्रेणेज्यमाने पुरुषे सति ॥ १९ ॥ तेनैव पुरुषेणैव शून्याय नीतः निःशेषनाशित इत्यर्थः ॥ २० ॥ अधिकृता यज्ञा येन तम् ॥ २१ ॥ पाठादिविधातुमाख्यानं स्तौति । इदमिति । प्रक्षाल्यतेऽनेनेति प्रक्षालनम् । तीर्थपदस्यानुकीर्तनं यस्मिन् भक्तेरुच्छ्रयो यस्मिन् । भक्तजनानामनुवर्णनं यस्मिन् महेंद्रस्य मोक्षो यस्मिन् । मरुत्वतो विशेषण जयो यस्मिन् ॥ २२ ॥ इंद्रियं तत्पाटवकरमिंद्रसंबंधीति वा आयुषमायुष्यम् ॥ २३ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ छ ॥ वृत्रस्य ज्ञानभक्त्यादि श्रुत्वा पृष्टः परीक्षिता ॥ हेतुमाह चतुर्भिस्त्याग्जन्मचरितोक्तिभिः ॥ १ ॥ चतुर्दशे तु सहसा कृच्छ्रलब्धे सुते मृते ॥ चित्रकेतोरतिस्नेहादतिशोको निरूप्यते ॥ २ ॥ रजश्च तमश्च स्वभावो यस्य ॥ १ ॥ २ ॥

ततो नहुषपातोत्तरम् । ब्राह्मणवाक्येन बृहस्पतिवाक्येनाग्निवाक्येन ब्रह्मवाक्येन वा । यद्यपि 'पापं किल्बिषकल्मषम्' इत्यमरोक्तेः पापशब्दस्य नियतक्लीबत्वमस्ति तथाप्यत्र पुंस्त्वं तदभिमानिजीवापेक्षयास्तीति ज्ञेयं व्याख्यातं तथा विजयध्वजेन । पापो ब्रह्महत्यालक्षणो जीवः विष्णुपत्न्या मानससरस्थितकमलवासिन्या लक्ष्म्याऽवितमिंद्रं रुद्रेण हतौजाः पापो न तिरश्चकारेत्यर्थः ॥ १७ ॥ लोकापवादरूपो यः शेषः पापप्रचारः सोऽपि ब्रह्मर्षिभिर्नाशित इति तं चेति । त्रिभिराह—तमिंद्रम् । पुरुषो विष्णुः "सहस्रशीर्षा पुरुषः" इत्यादिश्रुतेः । भारतेति "दौष्यंतिरिव यज्वनाम्" इत्युक्तेस्त्वं त्वतीव यज्ञकर्तृप्रधानभरतकुलजातत्वादिंद्रयागो महानिति विस्मयं मा कुर्विति भावः ॥ १८ ॥ अथ यज्ञदीक्षानंतरम् ॥ १९ ॥ नृपेति । नृपालनेन यथा त्वं शुद्धोऽसि तथा स्वःपालनार्थमिंद्रोऽपि यागेन शुद्धो बभूवेति भावः । इत्यर्थ इति । नाशस्यापि शून्यपदार्थत्वादिति भावः । "शून्यं स्यान्निर्जने नाशेंकासने रहितेऽपि च" इति धरणिः ॥ २० ॥ विधूतपापः सन्महानास पूज्यो बभूवेत्यर्थः ॥ २१ ॥ २२ ॥ इंद्रियपदेन तत्पाटवार्थः क्लिष्टकल्पनया लभ्योऽत आह—इंद्रसंबंधीति वृद्ध्यभाव आर्षः ॥ २३ ॥ इति श्रीमद्भागवतभावार्थदीपिका प्रकाशे षष्ठस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ आदिना वैराग्यग्रहः ( १ ) सहसा झटिति मृते सति ( २ ) ॥ १ ॥ देवानामपि श्रीकांतांघ्रिभक्तिर्दुर्लभ,

रजोभिः समसंख्याताः पार्थिवैरिह जंतवः ॥ तेषां ये केचनेहंते श्रेयो व मनुजादयः ॥ ३॥ प्रायो मुमुक्षवस्तेषां केचनैव द्विजोत्तमाः ॥ मुमुक्षूणां सहस्रेषु कश्चिन्मुच्येत सिध्यति ॥ ४ ॥ मुक्तानामपि सिद्धानां नारायणपरायणः ॥ सुदुर्लभः प्रशांतात्मा कोटिष्वपि महामुने ॥ ५॥ वृत्रस्तु स कथं पापः सर्वलोकोपतापनः ॥ इत्थं दृढमतिः कृष्ण आसीत्संग्राम उल्बणे ॥ ६ ॥ अत्र नः संशयो भूयाञ्छ्रोतुं कौतूहलं प्रभो ॥ यः पौरुषेण समरे सहस्राक्षमतोषयत् ॥७॥ सूत उवाच ॥ परीक्षितोऽथ संप्रश्नं भगवान्बादरायणिः ॥ निशम्य श्रद्दधानस्य प्रतिनंद्य वचोऽब्रवीत्॥८॥ श्रीशुक उवाच ॥ शृणुष्वावहितो राजन्नितिहासमिमं यथा ॥ श्रुतं द्वैपायनमुखान्नारदाद्देवलादपि ॥ ९ ॥ आसीद्राजा सार्वभौमः शूरसेनेषु वै नृप ॥ चित्रकेतुरिति ख्यातो यस्यासीत्कामधुङ् मही ॥ १० ॥ तस्य भार्यासहस्राणां सहस्राणि दशाभवन् ॥ सांतानिकश्चापि नृपो न लेभे तासु संततिम् ॥ ११ ॥

भक्तेर्दुर्लभत्वं प्रपंचयति रजोभिरिति त्रिभिः । पार्थिवै रजोभिः परमाणुभिः समाः संख्याता अनंता इत्यर्थः । जंतवो जीवास्तेषां मध्ये ये केचन कतिपये श्रेयो धर्ममीहंते कुर्वंति ॥ ॥ ३ ॥ मुच्येत गृहादिसंगाद्विमुच्यते । सिद्ध्यति तत्त्वं जानाति ॥ ४ ॥ ५ ॥ ६ ॥ न चेंद्रभिया कृष्णं शरणं गत इत्याह । यः पौरुषेणेति ॥ ७ ॥ ८ ॥ यथा यथावत् शृणु ॥ ९ ॥ १० ॥ भार्यासहस्राणां दशसहस्राणि कोटिरित्यर्थः । सांतानिकः स्वयं संतानार्होऽपि पुत्रोत्पादनसमर्थोऽपि तासु संततिं न लेभे । सर्वास्ता वंध्या

किमुतासुरप्रकृतेरित्यभिप्रेत्याह—देवानामिति ॥२॥ इत्यर्थ इति । "परमाणुप्रदेशेऽपि ह्यनंताः प्राणिराशयः" इति श्रवणादिति भावः । आदिना दैत्यादिग्रहः ॥३॥ तेषां धर्ममीहमानानां मध्ये मुमुक्षवो मोक्षेच्छावंतः । द्विजोत्तमेति । ब्राह्मणस्यैव त्वादृशस्य मुमुक्षुत्वमुचितम् "परीत्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात्" इति श्रुतेः । अत्र ब्राह्मणपदस्य ब्राह्मणत्वजातिविशिष्ट एवार्थोऽत्रान्यार्थकल्पना त्वशोभनैवाधुनिकत्वात् । "प्रसिद्धार्थपरित्यागो ह्यतीवागतिके क्वचित् । सर्वथा तत्परित्यागः शास्त्रविप्लवताकरः" इत्यभियुक्तोक्तेः ॥ ४ ॥ हे महामुन इति । त्वमेव जीवन्मुक्तत्वेऽपि नारायणपरायणत्वान्महामुनिरसि "प्रायेण मुनयो राजन्निवृत्ता विधिषेधतः । नैर्गुण्यस्था रमंते स्म गुणानुकथने हरेः ॥" इति मां प्रत्येव त्वदुक्तेरिति भावः । "मननान्मुनिरित्युक्तस्तत्र भक्त्या महामुनिः" इति संहितोक्तेः ॥ ५ ॥ पापत्वे हेतुः—सर्वलोकोपतापन इति ॥ ६ ॥ अत्र रजस्तमःस्वभावत्वेऽपि पुनः कृष्णभक्तत्वे । हे प्रभो इति । त्वं सर्वथा वक्तुं समर्थोऽसीति भावः ॥ ७ ॥ अथ कार्त्स्न्येन संप्रश्नम् ॥ ८ ॥ राजन्निति । राज्ञामावहित्यासंभवत्वमाह—द्वैपायनादित्रयकीर्त्तने नास्याख्यानस्यानादित्वं विज्ञप्रसिद्धत्वं च सूचितम् ॥ ९ ॥ नृपेति । त्वत्सदृशनृपालनतत्पर इति भावः ॥ १० ॥ इत्यर्थ इति । दशसहस्रगुणितं सहस्रकोटिमितं स्यादिति भावः । संततिं पुत्रं पुत्रीं वा संतन्यते विस्तार्यते कुलमनयेति संततिरिति व्युत्पत्तेः पुत्र्या अपि दौहित्रादिरूपेण वंशविस्तृतिहेतुत्वात्सन्ततित्वम् । इति भाव इति । दैवयोगेन प्राक्तनकर्मणेत्याशयः । वर्षर्तुकालिकानरक्तवर्णबहुपादचित्रितोर्द्ध्वदेहाः पुंजीभूय चलनवन्तः कीटविशेषा केनचिद्गजेन स्वपादेनैकदैव मर्दितास्ते च कीटाश्चित्रकेतुवनिताभावं प्राप्ताः स गजस्तत्पुत्रतां प्रापेति । ताः स्वपूर्वजन्मवैरेण तं मारयामासुरित्यैतिह्यमप्यत्र केचिद्वदंति । तासां वंध्या

रूपौदार्यवयोजन्मविद्यैश्वर्यश्रियादिभिः ॥ संपन्नस्य गुणैः सर्वैश्चिता वंध्यापतेरभूत् ॥ १२ ॥ न तस्य संपदः सर्वा महिष्यो वामलोचनाः ॥ सार्वभौमस्य भूश्चेयमभवन्प्रीतिहेतवः ॥ १३ ॥ तस्यैकदा तु भवनमंगिरा भगवानृषिः ॥ लोकाननुचरन्नेतानुपागच्छद्यदृच्छया ॥ १४ ॥ तं पूजयित्वा विधिवत्प्रत्युत्थानार्हणादिभिः ॥ कृतातिथ्यमुपासीदत्सुखासीनं समाहितः ॥ १५ ॥ महर्षिस्तमुपासीनं प्रश्रयावनतं क्षितौ ॥ प्रतिपूज्य महाराज समाभाष्येदमब्रवीत् ॥ १६ ॥ अंगिरा उवाच ॥ अपि तेऽनामयं स्वस्ति प्रकृतीनां तथात्मनः ॥ यथा प्रकृतिभिर्गुप्तः पुमान्राजापि सप्तभिः ॥ १७ ॥ आत्मानं प्रकृतिष्वद्धा निधाय श्रेय आप्नुयात् ॥ राज्ञा तथा प्रकृतयो नरदेवाऽऽहिताधयः ॥ १८ ॥ अपि दाराः प्रजामात्या भृत्याः श्रेण्योऽथ मंत्रिणः ॥ पौरा जानपदा भूपा आत्मजा वशवर्तिनः ॥ १९ ॥

एव दैवयोगेन मिलिता इति भावः ॥ ११ ॥ तदेवाह । वंध्यापतेरिति ॥ १२ ॥ १३ ॥ १४ ॥ उपासीदत्तस्य समीपमुपविवेश । समाहितः संयतः ॥ १५ ॥ १६ ॥ अपि किम् । अनामयमारोग्यम् । तथात्मनः तव प्रकृतीनां स्वस्ति शुभं किम् । प्रकृत्यधीनमेव हि राज्यमिति सदृष्टांतमाह । यथा महदाद्याभिः सप्तभिः प्रकृतिभिः पुमान् जीवो नित्यं गुप्तो भवति न तु तद्व्यतिरेकेण क्षणमपि तिष्ठति तथा राजाऽपि सप्तप्रकृतिभिः "स्वाम्यमात्यौ जनपदा दुर्गद्रविणसंचयाः । दंडो मित्रं च तस्यैताः सप्त प्रकृतयो मताः ॥" इत्युक्तलक्षणाभिर्नित्यं गुप्तः सन् श्रेय आप्नुयात् इत्युत्तरेणान्वयः । तत्र स्वामी गुरुः स्वयं वा ॥ १७ ॥ आत्मानं प्रकृतिष्वद्धा साक्षान्निधाय तदनुवर्तिनं कृत्वा श्रेयो राज्यसुखं प्राप्नुयादित्यर्थः । प्रकृतीनां च सुखं राजाधीनमेवेत्याह । हे नरदेव तथा प्रकृतयोऽपि राज्ञा आहिताधयो निहितनिक्षेपा धनैः समृद्धा भवंति । पाठांतरे आ समंततो हताधयो निरस्तमनोदुःखा भवंतीत्यर्थः ॥ १८ ॥ प्रजाश्च अमात्याश्च श्रेण्यश्च समयविशेषेण संघशो वर्तमाना वणिक्प्रभृतयः । पौराः पुरवासिनः ।

त्वकारकं कर्म तु पुराणांतरान्निश्चेयम् ॥ ११ ॥ आदिना शीलादिग्रहः । सर्वथा प्रसूतिरहिता स्त्री वंध्या । चिंता पुत्राप्राप्तिजनिता ॥ १२ ॥ १३ ॥ भगवान्सर्वथा समर्थः ॥ १४ ॥ तमंगिरसम् ॥ १५ ॥ तं चित्रकेतुम् । अहो चित्रकेतुर्महान्राजासीद्यद्गृहे साक्षाद्ब्रह्मपुत्रोंऽगिरामुनिरागत इत्याभृशंतं परीक्षितं महामुनिरामंत्रयति हे महाराजेति । त्वं तु ततोऽप्यधिको महाराजोऽसि यतोऽहं त्यक्तसर्वपरिग्रहोऽपि त्वद्गृहतये समागतो विनैवाह्वानं मत्तोऽप्यधिकाः श्रीनारदबादरायणादयश्च समागताः इति ॥ १६ ॥ शुभं मंगलम् । सप्तभिर्महदहंकारपञ्चतन्मात्राभिः । तद्व्यतिरेकेण सप्त प्रकृतीर्विहायेत्यर्थः । गुरोः स्वस्योपास्यत्वात्प्रकृतिषु गणना नोचिताऽत आह–स्वयं वा राजैवेत्यर्थः । वस्तुतो राज्ञोऽन्यो न रक्षकस्तस्य स्वयमेव स्वरक्षासमर्थत्वात् "न चान्यतस्तस्य शरीररक्षा स्ववीर्यगुप्ता हि मनोः प्रसूतिः" इति रघुवंशोक्तन्यायेन ॥ १७ ॥ इत्यर्थ इति । प्रकृत्याननुकूल्ये राज्ञो महद्दुःखं भवतीति भावः । हे नरदेवेति । विना प्रकृत्यानुकूल्यं सर्वत्र स्वयं व्यग्रत्वान्नरदेवत्वमेव न सिध्यतीति भावः । पाठांतरे आहताधय इति पाठे । इत्यर्थ इति व्याख्या ॥ १८ ॥ १९ ॥

यस्यात्मानुवशश्चेत्स्यात्सर्वे तद्वशगा इमे ॥ लोकाः सपाला यच्छंति सर्वे बलिमतंद्रिताः ॥ २० ॥ आत्मना प्रीयते नात्मा परतः स्वत एव वा॥ लक्षयेऽलब्धकामं त्वां चिंतया शबलं मुखम् ॥ २१ ॥ एवं विकल्पितो राजन्विदुषा मुनिनाऽपि सः ॥ प्रश्रयावनतोऽभ्याह प्रजाकामस्ततो मुनिम् ॥२२॥ चित्रकेतुरुवाच ॥ भगवन्किं न विदितं तपोज्ञानसमाधिभिः ॥ योगिनां ध्वस्तपापानां बहिरंतःशरीरिषु ॥२३॥ तथापि पृच्छतो ब्रूयां ब्रह्मन्नात्मनि चिंतितम् ॥ भवतो विदुषश्चापि चोदितस्त्वदनुज्ञया ॥ २४ ॥ लोकपालैरपि प्राथ्याः साम्राज्यैश्वर्यसंपदः ॥ न नंदयंत्यप्रजं मां क्षुत्तृट्कामामिवापरे ॥ २५ ॥

जानपदास्तत्तद्देशाधिकारिणः मंत्रसहायो मंत्री कर्मसहायोऽमात्य इति भेदः ॥ १९ ॥ तव मनः स्ववशे वा न वेत्यर्थात्पृच्छति । यस्यात्मा मनोऽनुवशोऽनुवर्ती अधीनः स्यात्तस्य वशगा दारादय इमे सर्वे भवंति । किं च लोकाश्च तस्य बलिं यच्छंति ॥ २० ॥ आत्मा भवान् आत्मना न प्रीयते न तुष्यति तत्किम्। परतो वा स्वतो वाऽलब्ध कामं त्वां लक्षये ॥ २१ ॥ विदुषा सर्वज्ञेनापि ॥ २२ ॥ अलब्धकामत्वं कथयन्पुत्रं याचते भगवन्निति चतुर्भिः ॥ २३ ॥ २४ ॥ अप्रजमपुत्रम् । क्षुत्तृड्भ्या

पालैरिंद्रादिभिः सहिता लोकाः 'मनोवशेऽन्ये ह्यभवन्स्म देवाः' इत्यारभ्य 'युंज्याद्वशे तं स हि देवदेवः' इत्यंतेन श्रीकृष्णो वक्ष्यति मनोजेतुस्सर्वदेवोत्तमत्वमेकादशे । किं च । स्वमनसो वशवार्त्तित्वे भृत्यादयोऽपि स्ववशगा भवंति अन्यथा कोपलोभाद्यधीनस्य तव क्रोधादिना विमनस्कीकृता भृत्यादय उक्तकारिणो न भवंतीति भावः ॥ २० ॥ आत्मना मनसा चिंतया मुखं शबलं पीतं च लक्षये ॥ २१ ॥ विकल्पितः पूर्वोक्तविकल्पपूर्वकं पृष्टः ॥ २२ ॥ हे भगवन्निति । योगैश्वर्यसंपन्नत्वाद्भवान्सर्वं वेत्तीति भावः । तपोज्ञानसमाधिभिस्स्वधर्मस्थितिशास्त्रविचाराचित्तैकाग्र्यैर्ध्वस्तपापानां योगिनां युष्मादृशां शरीरिष्वस्मादृशेषु यद्बहिरंतश्चिंतितं तत्किन्न विदितमपि तु सर्वं विदितमेवेत्यर्थः ॥ २३ ॥ यद्यपि त्वं सर्वं जानास्येव तथापि पृच्छतो भवतः ब्रह्मन्नित्यनेन मदिष्टसंपादनसमर्थोसीति सूचितम् ॥ २४ ॥ साम्राज्यैश्वर्यस्य संपदो लोकपालैरन्यैर्नरेन्द्रैः । शूरसेनदेशेषु व्रजस्याप्यंतर्गतत्वात्तत्र वासार्थं लोकपालैर्ब्रह्मादिभिरपि प्रार्थ्या एवेति भावः । भूः केवलैव साम्राज्यं विनापि देवैर्वासार्थं महाफलदात्रीत्वेनार्थ्यते किं पुनस्तत्साम्राज्यमिति भावः । अहो देवप्रार्थ्या मां स्वतः प्राप्ता अपि न नंदयंति तत्र हेतुः—अप्रजमिति । कदाचित्कस्यचिन्नृपस्य कन्योद्वाहे कौतुकाविष्टच्छात्रैरार्थित एकोऽविद्वांस्तैस्समं तमीक्षितुं गच्छन्मार्गे सुवृक्षस्थं सुपर्णमपराह्णे वीक्ष्य छात्रेभ्यो भोः छात्रा एतत्समये वृक्षस्थं गरुडं यः प्रदक्षिणी कुर्यात्तस्य सद्य्दिनादर्वागेव सुकन्याप्तिरर्थाप्तिश्च स्यात्सत्यमहं वसन्तराजशाकुनादिशकुनशास्त्रतो ब्रवीमीति श्रुत्वैकश्छात्रो यदा प्रदक्षिणी कर्तुमुद्यतस्तदा स गरुडस्तत उड्डीय वृक्षांतरमितः छात्रोऽपि तमनुजगाम ततः सोन्यत्र गत इत्थं गरुडमनुधावतश्छात्रस्य रविरस्ताचलं गतः प्रदोषो जातस्तदा रात्र्यंधवशात्तस्तार्क्ष्य एकस्मिन्वृक्षे निलीय तस्थे "वयांसि प्रबलाद्दोषाद्दोषान्धाः कौशिकादृते:।" इति पुराणात् । स च तं प्रदक्षिणीकृत्य यावत्पुरं निकषा प्राप तावत्पुरं पिहितकपाटमभूत् । तत्र प्रवेशमलभमानः पुरस्य नातिदूरे नरान्तरशून्यमंबिकामन्दिरमेत्य क्षुत्तृडार्दितः श्रान्तः सुष्वाप । मंदिरपुरोगजगन्मोहनसुते तस्मिन्नंबिकामेलनार्थमागतैर्लोकपैः कोऽयं सुप्त इत्य नुयुक्ता भगवती ब्राह्मणात्मजोऽयमतिक्षुधितः श्रांतश्च तदेनमद्योद्वाहितराजकन्याशयने निवाय तत्रत्यं तद्वरं राजकुमारमेतत्स्थाने निधाय गंतव्यम् । पुनरागच्छाद्भिरयमत्र नृपात्मजश्च तत्र पूर्ववत्क्रियताम्।प्रमाणमित्युक्त्वा छात्रं राजकन्यापार्श्वे निधाय राजकुमारं देवीमंदिरमानाय्य देव्याज्ञया लोकलीलावलोकनाय ययुः।ततो राजकन्यया स विलासार्थमुद्बोधितः।स च तदोचे"शय्या वस्त्रं चंदनं चारु हास्यं वीणावाणी दर्शनीया च नारी । न भ्राजन्ते क्षुत्पिपासातुराणां सर्वारम्भास्तण्डुलप्रस्थमूलाः॥" इत्याकर्ण्य तया क्षुधितो विज्ञाय बहुविधान्नैरतीव रम्यैः सोऽभोजि।ततः स पुनर्निद्रामाप। पुनरागत्य देवैर्देव्याज्ञया

ततः पाहि महाभाग पूर्वैः सह गतं तमः ॥ यथा तरेम दुस्तारं प्रजया तद्विधेहि नः ॥ २६ ॥ श्रीशुक उवाच ॥ इत्यर्थितः स भगवान्कृपालुर्ब्रह्मणः सुतः ॥ श्रपयित्वा चरुं त्वाष्ट्रं त्वष्टारमयजद्द्विजः॥२७॥ज्येष्ठा श्रेष्ठा च या राज्ञो महिषीणां च भारत॥ नाम्ना कृतद्युतिस्तस्यै यज्ञोच्छिष्टमदाद् द्विजः ॥ २८ ॥ अथाह नृपतिं राजन्भवितैकस्तवात्मजः ॥ हर्षशोकप्रदस्तुभ्यमिति ब्रह्मसुतो ययौ ॥२९॥ साऽपि तत्प्राशनादेव चित्रकेतोरधारयत् ॥ गर्भं कृतद्युतिर्देवी कृत्तिकाग्नेरिवात्मजम् ॥३०॥ तस्या अनुदिनं गर्भः शुक्लपक्ष इवोडुपः ॥ ववृधे शूरसेनेशतेजसा शनकैर्नृप ॥३१॥ अथ काल उपावृत्ते कुमारः समजायत ॥ जनयञ्छूरसेनानां शृण्वतां परमां मुदम् ॥ ३२ ॥ हृष्टो राजा कुमारस्य स्नातः शुचिरलंकृतः ॥ वाचयित्वाऽऽशिषो विप्रैः कारयामास जातकम्॥३३॥तेभ्यो हिरण्यं रजतं वासांस्याभरणानि च॥ग्रामान्हयान्गजान्प्रादाद्धेनूनामर्बुदानि षट्॥३४॥

मन्नपानकाममपरे स्रक्चंदनादयो यथा न सुखयंति ॥ २५ ॥ पूर्वैः पित्रादिभिः सह गतं प्राप्तं तमो नरकं प्रजया यथा तरेम तत्तथा विधेहि ॥ २६ ॥ २७ ॥ यज्ञोच्छिष्टं यज्ञशेषम् ॥ २८ ॥ जन्मना हर्षं मरणेन च शोकं प्रददातीति तथा । इत्येवमुक्त्वा ययौ ॥ २९ ॥ ३० ॥ शूरसेनानामीशस्य तेजसा वीर्येण यो गर्भः स ववृधे ॥ ॥ ३१ ॥ ३२ ॥ जातकं जातकर्म ॥ ३३ ॥ अर्बुदं दश कोटयः । वेदे तु कोटिरेवार्बुदम् । नियुतं च प्रयुतं चार्बुदं चेति प्रयुतानंतरं निर्देशात् ॥ ३४ ॥

छात्रो देव्यालये राजकुमारश्च नृपकन्याशयने न्यधायि । मुहूर्त्तं सुप्त्वा जागरितोऽभूत्कन्यापि नृपस्य जागरित्वा पूर्वोक्तश्लोकस्य पूर्वार्द्धं पापठ तदुत्तरार्द्धज्ञानार्थं सा तमूचेस्वामिन्नस्योत्तरार्द्धं पठ । तदाकर्ण्य स नृपकुसारस्तामाह मया नेदं वृत्तमपाठि न जानाम्यहमेतद्वृत्तमेतदाकर्ण्य नृपसुता शयनादुत्थाय तं निजपतीतरं ज्ञात्वा स्वमात्रेऽवदन्मातर्मम शयने कश्चिन्मंत्रादिबलेन नृपात्मजवेषं कृत्वा मत्पतिमन्यत्र प्रापितवान्सत्यमहं ब्रवाणि नैनमहं स्वी करिष्ये किन्त्वाहं तं समागतं समाजमध्यतो ग्रहीष्यामि यदि सर्वेषु पटांतरितपीठगो मत्प्रश्नोत्तरं दास्यति स मे पतिर्ज्ञेयः इति।तया च राज्ञे कन्यावृत्तं कन्योक्तं समश्रावि।राज्ञापि तथैव कृतम्।तथाहि—तदग्रिमदिने पटान्तारितं पीठं निधाय समाजे उद्घोषितं केनचिच्छद्मना मंत्रादिबलेन वा राजकन्यावरवेषं विधाय वरोऽन्यत्र प्रापितः स च यदि समाजगो भवेत्तदा तं सा स्वयमेव ज्ञास्यति प्रश्नोत्तरलाभादिति श्रुत्वा क्रमतः सर्वे पटांतारितपीठं प्राप्य तत्प्रश्नं श्रुत्वा यदोत्तरं न ददुस्तदा स छात्रोऽपि पीठं प्राप । सा च "शय्या वस्त्रं चंदनं चारु हास्यं वीणावाणी दर्शनीया च नारी" इति पठित्वास्योत्तरं पठ्यतामित्याह यदा तदा स छात्रस्तां प्राह अस्योत्तरार्द्धं शृणु— "न भ्राजन्ते क्षुत्पिपासातुराणां सर्वारम्भास्तण्डुलप्रस्थमूलाः" इति श्रुत्वा पटमपसार्य तत्पादावग्रहीदाह च ममायं पतिस्तदा राज्ञा सा तस्मै छात्राय दत्ता राज्यखण्डञ्च दत्तम् । स च स्वाध्यापकाय ग्राममेकं दत्त्वा स्वपार्श्वमेव रक्षितवान्प्रार्थनयेति बृहदितिहाससागरतोऽत्रसेयमिदम् ॥ २५ ॥ यतोऽहमित्थं शोकसागरे मग्नस्ततो हेतोः । हे महाभागेति । यथा त्वं महं भगवदाराधनलक्षणमुत्सवमा समंताद्भजसे तथा मामपि महं पुत्रजन्मोत्सवमा शीघ्रं भजामि तथा कुरुष्वेति भावः ॥ २६ ॥ पुत्रदानमिषेण वैराग्योत्पादनद्वारा भगवदभिमुखीकरणेच्छुत्वात्कृपालुरिति । तथा च वक्ष्यति 'तदैव ते परं ज्ञानम्' इत्यादि त्वाष्ट्रं त्वष्टृदैवतम् ॥ २७ ॥ भारतेति । भरतवंशोद्भूतत्वात्त्वं जानास्येव ज्येष्ठैव मान्या तत्रापि श्रेष्ठा चेदिति यथा दुष्यंतेन राज्ञा सत्यामप्यन्यस्यां ज्येष्ठायां राज्ञ्यां श्रेष्ठत्वाद्भरतमातैव शकुंतला भरताय राज्यप्रदानेन मानितैवमत्रापीति भावः । द्विजोऽङ्गिराः ॥ २८ ॥ अथ हुतशेषदानानंतरम् । राजन्निति । राजत्वात्त्वत्प्रार्थना न प्रत्याख्यातेति भावः । "गुरुपितृनृपाणां हि प्रत्याख्येयं न वै वचः" इत्युक्तेः ॥ २९ ॥ ३० ॥ नृपेति । यथा तव पालनतेजसा नरो वर्द्धंते तथा शूरशेनेशतेजसा गर्भ इति भावः ॥ ३१ ॥ अथ गर्भपूर्त्त्यनंतरम् ॥ ३२ ॥ ३३ ॥ अत्र केरलमतेन अर्बुदानि षडित्यत्र ६५८३० पंचषष्टिसहस्राणि त्रिंशदधिकाष्टशतानीति संख्या समायाति तदानयन

ववर्ष काममन्येषां पर्जन्य इव देहिनाम् ॥ धन्यं यशस्यमायुष्यं कुमारस्य महामनाः ॥ ३५ ॥ कृच्छ्रलब्धेऽथ राजर्षेस्तनये नुदिनंपितुः ॥ यथा निःस्वस्य कृच्छ्राप्ते धने स्नेहोऽन्ववर्द्धत ॥ ३६ ॥ मातुस्त्वतितरां पुत्रे स्नेहो मोहसमुद्भवः ॥ कृतद्युतेः सपत्नीनां प्रजाकामज्वरोऽभवत् ॥ ३७ ॥ चित्रकेतोरतिप्रीतिर्यथा दारे प्रजावति ॥ न तथान्येषु संजज्ञे बालं लालयतोऽन्वहम् ॥ ३८ ॥ ताः पर्यतप्यन्नात्मानं गर्हयंत्योऽभ्यसूयया ॥ आनपत्येन दुःखेन राज्ञोऽनादरणेन च ॥३९॥ धिगप्रजां स्त्रियं पापां पत्युश्चागृहसंमताम् ॥ सुप्रजाभिः सपत्नीभिर्दासीमिव तिरस्कृताम् ॥ ४० ॥ दासीनां को नु संतापः स्वामिनः परिचर्यया ॥ अभीक्ष्णं लब्धमानानां दास्या दासीव दुर्भगाः ॥४१॥ एवं संदह्यमानानां सपत्न्याः पुत्रसंपदा॥ राज्ञोऽसंमतवृत्तीनां विद्वेषो बलवानभूत् ॥ ४२ ॥ विद्वेषनष्टमतयः स्त्रियो दारुणचेतसः ॥ गरं ददुः कुमाराय दुर्मर्षा नृपतिं प्रति ॥ ४३ ॥ कृतद्युतिरजानंती सपत्नीनामघं महत् ॥ सुप्त एवेति संचिंत्य निरीक्ष्य व्यचरद्गृहे ॥४४॥ शयानं सुचिरं बालमुपधार्य मनीषिणी ॥ पुत्रमानय मे भद्रे इति धात्रीमचोदयत् ॥४५॥ सा शयानमुपव्रज्य दृष्ट्वा चोत्तारलोचनम् ॥ प्राणेंद्रियात्मभिस्त्यक्तं हताऽस्मीत्यपतद्भुवि ॥ ४६ ॥ तस्यास्तदाकर्ण्य भृशातुरं स्वरं घ्नंत्याः कराभ्यामुर उच्चकैरपि ॥ प्रविश्य राज्ञी त्वरयात्मजांतिकं ददर्श बालं सहसा मृतं सुतम् ॥ ४७ ॥

धन्यं धनकरम् । आयुष्यमायुष्करम् । महामना अत्युदारः॥ ३५॥ ३६॥मोहस्य समुद्भवो यस्मिन् । प्रजाकामरूपो ज्वरस्तापः ॥३७॥ दार इत्येकवचनमार्षम् ॥३८॥ आनपत्येनापुत्रत्वनिमित्तेन ॥ ३९ ॥ न गृहे संमतां न बहुमताम् । यद्वा । गृहा दाराः " दारेष्वपि गृहाः " इत्यमरः । गृहिण्येव गृहं न भार्येति संमता मित्यर्थः ॥ ४० ॥ दास्या दासी यथा तथा वयं दुर्भगाः ॥४१ ॥ न संमता वृत्तिर्जीवनं यासाम् ॥ ४२ ॥ विद्वेषेण नष्टा मतिर्विवेको यासां ताः । गरं विषम् । दुर्मर्षा असहमानाः ॥ ४३ ॥ ४४ ॥ धात्रीं स्तनदायिनीम् ॥ ४५ ॥ उद्गते तारके कनीनिके ययोस्ते लोचने यस्य तम् ॥ ४६ ॥ ४७ ॥

प्रकारो हि लीलाकल्पद्रुमाख्यायश्लोकव्याख्यायां नवमस्कंधार्थनिरूपणे रंतिदेवोपाख्याने वर्णितोऽस्माभिरिति "संख्याया विंशको ह्यंशो ग्रहीतव्यः सदा बुधैः । इतिहासपुराणादावित्येवं नीलकंठवाक्" इति भारतदीपि कायाम् । तथा च कोटित्रयं धेनूनां लभ्यते धेनुशब्देन द्रव्यधेनुग्रहणे तु न काप्यनुपपत्तिः एवमन्यत्रापि यत्रासंभवत्वं संख्यायां प्रतीयेत तत्र समाधेयमिति । यद्वा–वसुदेववत्तदा संकल्प्य पुनः शनैःशनैर्ददाविति ज्ञेयं समस्तानां तात्कालिकसमर्पणासंभवादिति॥ ३४॥अन्येषां ब्राह्मणेतरेषामपि नटनर्तकादीनाम् । कामान्वांच्छितान् । कुमारस्य धन्यमित्यादित्रयं क्रियाविशेषणम्॥ ३५॥कृच्छ्रलब्धे यत्नेन प्राप्ते । निःस्वस्य निर्धनस्य॥ ३६॥ ३७॥ अन्येषु दारेषु॥ ३८॥अभ्यसूयया स्वीयसौन्दर्यादावपि कुरूपाद्यारोपणेन॥ ३९॥इत्यर्थ इति।'गृहिण्येव गृहम्'इत्युक्तेस्तत्र भार्यादृष्टिर्न भवतीत्यर्थः॥ ४०॥दुर्भगाः संततिनिस्सरणरहितस्मरमंदिराः॥ ४१॥नृपतिं प्रति दुर्मर्षाः राज्ञो वृत्तमसहमानाः ॥ ४३ ॥ ४४ ॥ हे भद्रे इति । निजपुत्रभद्रकारिणीत्वेन । यद्वा–भद्रेतिनाम्नी साऽतस्तन्नाम्नैव तामनोदयदिति भावः ॥ ४५ ॥ हतास्मीत्युक्त्वापतत् ॥ ४६ ॥ तस्या धात्र्याः । भृशमत्यर्थम् । आतुरं

पपात भूमौ परिवृद्धया शुचा मुमोह विभ्रष्टशिरोरुहांबरा ॥ ४८ ॥ ततो नृपांतःपुरवर्तिनो जना नराश्च नार्यश्च निशम्य रोदनम् ॥ आगत्य तुल्यव्यसनाश्च दुःखितास्ताश्च व्यलीकं रुरुदुः कृतागसः ॥४९॥ श्रुत्वा मृतं पुत्रमलक्षितांतकं विनष्टदृष्टिः प्रपतन्स्खलन्पथि ॥ स्नेहानुबंधैधितया शुचा भृशं विमूर्छितोनुप्रकृतिर्द्विजैर्वृतः ॥ ५० ॥ पपात बालस्य स पादमूले मृतस्य विस्रस्तशिरोरुहांबरः ॥ दीर्घं श्वसन्बाष्पकलोपरोधतो निरुद्धकंठो न शशाक भाषितुम् ॥ ५१ ॥ पतिं निरीक्ष्योरुशुचार्पितं तदा मृतं च बालं सुतमेकसंततिम् ॥ जनस्य राज्ञी प्रकृतेश्च हृद्रुजं सती दधाना विललाप चित्रधा ॥ ५२ ॥ स्तनद्वयं कुंकुमगंधमंडितं निषिंचती सांजनबाष्पबिंदुभिः ॥ विकीर्य केशान्विगलत्स्रजः सुतं शुशोच चित्रं कुररीव सुस्वरम् ॥ ५३ ॥ अहो विधातस्त्वमतीव बालिशो यस्त्वात्मसृष्टयप्रतिरूपमीहसे ॥ परेऽनुजीवत्यपरस्य या मृतिर्विपर्ययश्चेत्त्वमसि ध्रुवः परः ॥ ५४ ॥ न हि क्रमश्चेदिह मृत्युजन्मनोः शरीरिणामस्तु तदात्मकर्मभिः ॥ यः स्नेहपाशो निजसर्गवृद्धये स्वयं कृतस्ते तमिमं विवृश्चसि ॥ ५५ ॥

विभ्रष्टाः शिरोरुहा अंबरं च यस्याः सा ॥ ४८ ॥ ताश्च सपत्न्योऽपि ॥ ४९ ॥ अलक्षितोंऽतको मृत्युहेतुर्यस्य तम् । अनुगताः प्रकृतयोऽमात्यादयो यस्य सोऽनुप्रकृतिः ॥ ५० ॥ बाष्पकलाभिरश्रुबिन्दुभिरुपरोधतः संवृतत्वेन निरुद्धः कंठो यस्य ॥५१॥ उरुशुचार्पितं बहुशोकेन व्याप्तम् । एकमेव संततिरूपम् ॥५२॥ विगलंत्यः स्रजो येभ्यस्तान् केशान् ॥५३॥ आत्मसृष्टेरप्रतिरूपमननुरूपं चेष्टसे । तदेवाह । नु अहो परे वृद्धे जीवत्यपरस्य बालस्य या मृतिस्तत् । तदा हि वृद्धस्य सृष्टिसामर्थ्याभावे बाले च मृते सति तव सृष्टिर्नष्टा स्यादित्यर्थः । ननु सांप्रतं स्वसृष्टेर्विपरीतोऽस्मीति चेत्तत्राह । विपर्ययो विपरीतोऽसि चेत्तर्हि त्वं प्राणिनामतिदुःखकारित्वात् ध्रुवो नित्यः परः शत्रुरसि । न तु कृपालुरित्यर्थः ॥५४॥ ननु जीवकर्मानुसारेण जन्मादि कुर्वतो मम कोऽपराधस्तत्राह । न हीति । पुत्रे जीवत्येव पिता म्रियते पितरि जीवत्येव पुत्रो जायत

दुःखजनकम् । स्वरं रोदनशब्दम् । सहसाऽवितार्कितं रोगाद्यभावात् मृतम् ॥ ४७ ॥ विभ्रष्टा इतस्ततस्स्खलिताः केशा ऊर्द्धाधोवस्त्रे च ॥४८॥ ततो राज्ञीरोदनस्वरादिश्रवणोत्तरम् । तुल्यव्यसनाः सुदुःखिता इत्यंतःपुरवर्त्तिसपत्नीतरनरनारीविशेषणम् । याभिर्मारितस्ताश्च विशेषेणालीकं मृषैव रुरुदुः ॥४९॥ मृत्युहेतुर्ज्वरादिरित्यर्थः ॥ ५० ॥ ५१ ॥ यद्वा–पतिम् एका सैव संततिर्यस्य तम् । हृद्रुजं हृदि क्लेशम् । चित्रधाऽनेकधा तत्क्रीडाविनोदस्मरणपूर्वकम् ॥ ५२ ॥ कुंकुमपंकेत्यपि पाठः । कुररीवोत्क्रौंचीव " उत्क्रौंचकुररौ समौ " इत्यमरः । सुस्वरं स्फुटस्वरम् ॥ ५३ ॥ अननुरूपमननुकूलम् । तदेवाननुरूपत्वमेव । इत्यर्थ इति । बाला एव युवानो भूत्वा सृष्टिसंपादनसमर्था भवंति न तु वृद्धा इति भावः । अत्राक्षिपति–नन्विति । पूर्वं त्वहमनुकूल एवासं सांप्रतमधुनैव । इत्यर्थ इति । न ह्येतत्कर्मकरणशीलाः केनापि कृपालवः कथ्यंते इति भावः ॥ ५४ ॥ पुनराक्षिपति–नन्विति । त्वया किं कृत्यं अजागलस्तनवद्व्यर्थत्वात् । तत्र पुनराक्षिपति–नन्विति । 'तुष्यतु दुर्जनः' इति न्यायमाश्रित्याह भवतु नाम त्वमेवोत्पादको भव नात्रास्माकं किञ्चिद्धानिस्तथापि तत्रापि । इति

त्वं तात नार्हसि च मां कृपणामनाथां त्यक्तुं विचक्ष्व पितरं तव शोकतप्तम्॥अंजस्तरेम भवताऽप्रजदुस्तरं यद्ध्वांतं न याह्यकरुणेन यमेन दूरम्॥५६॥
उत्तिष्ठ तात त इमे शिशवो वयस्यास्त्वामाह्वयंति नृपनंदन संविहर्तुम् ॥ सुप्तश्चिरं ह्यशनया च भवान्परीतो भुंक्ष्व स्तनं पिब शुचो हर नः स्वका
नाम्॥५७॥ नाहं तनूज ददृशे हतमंगला ते मुग्धस्मितं मुदितवीक्षणमाननाब्जम् ॥ किं वा गतोऽस्यपुनरन्वयमन्यलोकं नीतोऽघृणेन न शृणोमि
कला गिरस्ते ॥ ५८ ॥ श्रीशुक उवाच ॥ विलपंत्या मृतं पुत्रमिति चित्रविलापनैः ॥ चित्रकेतुर्भृशं तप्तो मुक्तकंठो रुरोद ह ॥५९॥ तयोर्विलपतोः
सर्वे दंपत्योस्तदनुव्रताः ॥ रुरुदुः स्म नरा नार्यः सर्वमासीदचेतनम् ॥ ६० ॥ एवं कश्मलमापन्नं नष्टसंज्ञमनायकम् ॥ ज्ञात्वांऽगिरा नाम मुनि
राजगाम सनारदः ॥ ६१ ॥ इति श्रीभा॰ म॰ षष्ठ॰चतुर्दशोऽध्यायः ॥ १४ ॥

इति च क्रमो नास्ति, कर्माधीनत्वादिति चेत्तर्ह्यात्मकर्मभिरेव तज्जन्मादिकमस्तु । किं त्वया कृत्यम् । ननु मयेश्वरेण विना जडैः कर्मभिरिदं कथं सिध्येत् । भवतु नाम तथाऽपि निजसर्गवृद्धये ते त्वया यः स्नेहपाशः कृतस्तमिमं स्वयमेव विवृश्चसि छिनत्सीत्यादि क्रोशति । न ह्येवंविधं दुःखं दृष्ट्वा कश्चिदपि पुत्रादिषु स्नेहं करिष्यतीति भावः ॥५५॥ अप्रजदुस्तरमप्रजानां दुस्तरम् । ध्वांतं तमिस्रम् अंजः अनायासेन तरेम । अकरुणेन सह ॥५६॥ अशनया क्षुधा॥५७॥तनूज हे पुत्र नाहं प्रथमं त्वत्पार्श्वमागता सती तव मुग्धस्मितं वक्त्रं ददृशे दृष्टवत्यास्मि । इदानीमपि गिरो न शृणोमि । तर्हि किमु पुनरन्वयं पुनरागमनं यथा न भविष्यति तथा परलोकं अघृणेन यमेन नीतः किं वा गतोऽसि ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ इति श्रीमद्भागवते षष्ठस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥

भाव इति । पुत्रादिषु स्नेहाभावे सृष्टिवर्द्धनमेव न भविष्यतीत्याशयः ॥ ५५ ॥ तातेति । प्रियत्वात्त्वमेव न याहि वयं ते प्रियास्त्वमस्माकं प्रियोऽतस्त्वकरुणेनं निर्दयेन साकं मा याहीत्यर्थः । अप्रजसां प्रजाहीनानां ध्वांतं नारकं तमः " पुत्रेणैव जय्योऽयं लोकः " इति श्रुतेः । अत्र सलोपस्त्वार्षः । समासांतविधेरनित्यत्वाद्वाऽसिजभावः ॥ ५६ ॥ नृपनंदनेति । त्वां विना नृपो न नंदतीति भावः ॥ ५७ ॥ तनूजेति । शरीरसंभवत्वात्तव वियोगो दुःसह इति भावः । ननु तनूजो रोगोऽप्यस्ति तद्वियोगे यथा सुखं तत्तुल्योऽहमप्यतो व्याख्यांतरमाह—तनूं जयत्युत्कर्षं प्रापयति । यद्वाऽदृश्यत्वात्तनुरधर्मफलं नरकस्तमु निश्चयेन जयत्यनेनेति तनूजस्तत्संबुद्धौ तथा । कला मधुरा स्फुटाः ॥ ५८ ॥ विलपंत्या सह मुक्तकंठोऽत्युच्चैः ॥ ५९ ॥ अचेतनमश्मवत्प्रवृत्तिशून्यम् ॥ ६० ॥ अनायकं शोकनिवर्त्तकशून्यं राजानमिति शेषः ॥ ६१ ॥ इति श्रीमद्भागवतभावार्थदीपिकप्रकाशे षष्ठस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥

श्रीशुक उवाच ॥ ऊचतुर्मृतकोपांते पतितं मृतकोपमम् ॥ शोकाभिभूतं राजानं बोधयंतौ सदुक्तिभिः ॥१॥ कोयं स्यात्तव राजेंद्र भवान्यमनुशोचति ॥त्वं चास्य कतमः सृष्टौ पुरेदानीमतः परम् ॥२॥ यथा प्रयांति संयांति स्रोतोवेगेन वालुकाः॥संयुज्यंते वियुज्यंते तथा कालेन देहिनः ॥३॥ यथा धानासु वै धाना भवंति न भवंति च ॥ एवं भूतेषु भूतानि चोदितानीशमायया ॥ ४ ॥ वयं च त्वं च ये चेमे तुल्यकालाश्चराचराः ॥ जन्ममृत्वोर्यथा पश्चात्प्राङ्नैवमधुनापि भोः ॥५ ॥ भूतैर्भूतानि भूतेशः सृजत्यवति हंत्यजः ॥ आत्मसृष्टैरस्वतंत्रैरनपेक्षोऽपि बालवत् ॥ ६ ॥

ततः पंचदशे चित्रकेतोः शोकापनोदनम् ॥ कृतं तत्त्वोपदेशेन नारदेनांगिरोयुजा ॥ १ ॥ कश्मलं शोकं प्राप्तं सर्वमनाथं ज्ञात्वा सनारदः नारदेन सह मृतकोपांते शवसमीपे ॥ १ ॥त्वं चास्य बंधूनां मध्ये कतमः सृष्टौ प्रजारूपायाम्।अयं पुत्रोऽहं चास्य पितेति चेत्तत्राहतुः।पुरेति।ये पूर्वजन्मनि पित्रादिरूपेण संयुक्ताःआसंस्त एव मरणेन वियुक्ताःसंतो वर्तमानजन्मनि कदाचित्तस्यैवान्यस्य वा पुत्रादयो भवंति ते जन्मांतरे तस्यैवान्यस्य वा कलत्रादयः शत्रुमित्रादयो वा भवंत्यतो नायं नियम इति भावः॥ २॥तमेवाभिप्रायं प्रकटयति।यथेति।स्रोतसः प्रवाहस्य वेगेन यथा प्रयांति वियुज्यंते संयांति संयुज्यंते तथा कालवेगेन देहिनो जीवा अपि॥ ३॥ तथाऽप्येतावंतं कालं मम पुत्रो नाभूद्वार्धके जातो मृत इति दुःखमिति चेत्तत्राहतुः।यथा धानासु बीजेषु धाना बीजांतराणि भवंति कासुचित्कदाचिन्न भवंति नोत्पद्यंते नश्यंति च न तु भवंत्येव तिष्ठंत्येवेति वा नियमः।एवमेव भूतानि पुत्रादिरूपाणि भूतेषु पित्रादिषु।अतो धानानां जन्यजनकत्वेऽपि यथा पितृपुत्रादिभावो नास्त्येवमत्रापीति न शोकः कार्य इति भावः । ईशमायाप्रेरितानामेव भवनमभवनं न वस्तुतः ॥ ४ ॥ तस्य च सर्वसाधारणत्वान्न पुत्र एव शोचनीय इत्याहतुः । वयं चेति । तुल्यकाला वर्तमानकालीनाः । जन्मनः प्राक् मृत्योः पश्चाच्च यथा न संत्येवमधुनापि न संति । भो राजन् । आद्यंतयोरसत्त्वात्स्वप्नवदित्यर्थः ॥ ५ ॥ असत्त्वे कथं प्रतीतिः कथं वाऽहमस्य जनक इत्याद्यभिमानस्तत्राहतुः । भूतैरिति । ईश्वरेण

ततो बालमरणोत्तरम् । अंगिरसा युनक्तीत्यंगिरोयुक् तेन तथा ( १ ) अत्र संसारो नित्यस्तदुच्छेदो ज्ञानेनैव तदपि निरंतरोपासितश्रीनारायणानुग्रहादुत्पद्यते तदेतत्सर्वमस्मिन्नध्याये निरूप्यते । मृतकोपमं मृततुल्यम् ॥ १ ॥ इति भाव इति । यमनुशोचसि तवायं कः कीदृशो बंधुः स्यादिदानीं पुरेति भ्रांतिश्चेत्तर्हि विरिंचसृष्टौ पुरातीतकाले त्वमस्य बालस्य बंधूनां मध्ये कतमो बंधुः पिता मातुलो वा सहोदरोवाऽतः परमेष्यति काले च कतमो बंधुः । अथ यदि पूर्वोत्तरकाले युवयोर्न कोपि संबंधस्तथेदानीमपि भ्रांतिमंतरेण न कोपि संबंधोऽतः शोको न कार्य इत्याशयः ॥ २ ॥ ३ ॥ यद्यपि संयोगवियोगौ कालाधीनौ तथापीति । यतो नियमाभावोऽतो हेतोः । इति भाव इति । जन्यजनकत्वेन शोकहेतुत्वे यूकादावतिप्रसंगो दुर्वारः स्यादित्याशयः ॥४॥ तस्य च भवनाभवस्य च जन्मना सहितो मृत्युर्जन्ममृत्युस्तस्य । यद्वा जन्म च मृत्युश्चानयोः समाहारो जन्ममृत्युस्तस्य तथा समाहारे नपुंसकमित्यस्यानित्यत्वात् । योग्यत्वाद्व्युत्क्रमेणोभयोः संबंधः । भो इत्यनेन राजन्नित्याक्षिप्यते । इत्यर्थ इति । एतत्कालीनजीवा भवनाभवनवंत आद्यंतयोरसत्त्वात्स्वप्नवदित्यनुमानादिति भावः॥५॥अत्राक्षिपति—नन्विति । इति भाव इति । न वस्तुतः पित्रादीनां जनकत्वम् 'जनं जनेन जनयन्' इत्याद्युक्तेरीश्वरस्यैव जनकत्वमित्याशयः।पुनरत्राक्षिपति—नन्विति । बालस्य यथा क्रीड

देहेन देहिनो राजन्देहाद्देहोभिजायते ॥ बीजादेव यथा बीजं देह्यर्थ इव शाश्वतः ॥ ७ ॥ देहदेहिविभागोऽयमविवेककृतः पुरा ॥ जातिव्यक्तिविभागोऽयं यथा वस्तुनि कल्पितः ॥ ८ ॥ श्रीशुक उवाच ॥ एवमाश्वासितो राजा चित्रकेतुर्द्विजोक्तिभिः ॥ प्रमृज्य पाणिना वक्त्रमाधिम्लानमभाषत ॥ ९ ॥ राजोवाच ॥ कौ युवां ज्ञानसंपन्नौ महिष्ठौ च महीयसाम् ॥ अवधूतेन वेषेण गूढाविह समागतौ ॥ १० ॥ चरंति ह्यवनौ कामं ब्राह्मणा भगवत्प्रियाः ॥ मादृशां ग्राम्यबुद्धीनां बोधायोन्मत्तलिंगिनः ॥११॥ कुमारो नारद ऋभुरंगिरा देवलोसितः ॥ अपांतरतमो व्यासो मार्कंडेयोऽथ गौतमः ॥ १२ ॥ वशिष्ठो भगवान्रामः कपिलो बादरायणिः ॥ दुर्वासा याज्ञवल्क्यश्च जातूकर्ण्यस्तथाऽरुणिः ॥ १३ ॥ रोमशश्च्यवनो दत्त आसुरिः सपतंजलिः ॥ ऋषिर्वेदशिरा बोध्यो मुनिः पंचशिरास्तथा ॥ १४ ॥ हिरण्यनाभः कौशल्यः श्रुतदेव ऋतध्वजः ॥ एते परे च सिद्धेशाश्चरंति ज्ञानहेतवः ॥ १५ ॥ तस्माद्युवां ग्राम्यपशोर्मम मूढधियः प्रभू ॥ अंधे तमसि मग्नस्य ज्ञानदीप उदीर्यताम् ॥ १६ ॥

मायया सृष्टत्वात्प्रतीतिर्निमित्तमात्रत्वेनैव च भूतानामयमभिमान इति भावः । नन्वीश्वरस्य सृष्ट्यादिभिः साध्यमस्ति चेत्तर्ह्यपूर्णकामता प्राप्ता नास्ति चेत्कुतः प्रवृत्तिस्तत्राहतुः अनपेक्षोऽपि बालवल्लीलया करोतीति ॥६॥ अयं च जन्मादिव्यवहारो देहानामेव न त्वामन इत्याहतुः । देहिनः पितुर्देहेन देहिनः पुत्रस्य देहो मातुर्देहिनो देहादभिजायते यथा बीजादेव बीजं जायते देही तु शाश्वत एव । अर्थो भूम्यादिर्यथा तद्वत् ॥ ७ ॥ ननु नश्वरदेहप्रतियोगित्वाद्देह्यपि न शाश्वतः स्यात्तत्राहतुः । देहदेहिनोरयं परस्परप्रतियोगिविभागः । पुराऽनादिरविवेककृतोऽज्ञानकल्पितः । जातिः सामान्यं व्यक्तिर्विशेषस्तयोर्विभागो यथा वस्तुनि सन्मात्रे कल्पितः । परस्परापेक्षासिद्धत्वेनानिरूप्यत्वात्तद्वत् ॥८॥ आधिना शोकेन म्लानं वक्त्रम्॥९॥१०॥उन्मत्तस्येव लिंगं येषां ते ॥११॥१२॥१३॥१४॥१५॥ मम प्रभू रक्षकौ बोधे समर्थाविति वा । अतो

नंकैः क्रीडने न किंचित्साध्यमस्ति तथापि क्रीडत्येव तथेशोपीति भावः । "लोकवत्तु लीलाकैवल्यम्" इति परमर्षिसूत्रात् ॥ ६ ॥ शाश्वतो नित्य एव "देही नित्यमवध्योऽयं देहे सर्वस्य भारत" इति श्रीमुखोक्तेः । अर्थो भूम्यादिरिहादिना हिरण्यादिग्रहः । यथा पृथिव्या अनेके घटशरावादयः संति तथाऽपि सा तादृश्येव सत्या पृथक्प्रतीयते 'मृत्तिकेत्येव सत्यम्' इति श्रुतेः ॥ ७ ॥ पुनरत्राक्षिपति—नन्विति । नश्वरदेहः प्रतियोगी निरूपको यस्य तस्य भावस्तत्त्वं तस्मात् । देहनिरूपितमेव देहित्वमिति सार्वजनीनं देहोऽस्यास्तीति देहीति निरुक्तेः परस्परयोः प्रतियोगिविभागः प्रतियोग्यनुयोगिविभाग इत्यर्थः । एकसंबंधिज्ञानस्यापरसंबंधिस्मारकत्वनियमात् सन्मात्रे पृथिव्यादौ कणादादिभिः कल्पित एव न तु सत्यः परस्परापेक्षा सिद्धत्वेन व्यक्तिसत्त्वे जातिसत्त्वं जातिसत्त्वे व्यक्तिसत्त्वमेकतराभावे द्वयोरसिद्धेः स्फुटत्वात् ॥ ८ ॥ आश्वासितः किञ्चित्स्वस्थतां प्रापितः ॥ ९ ॥ महीयसां पूज्यानां महिष्ठौ पूज्यतमौ ॥ १० ॥ ग्राम्यबुद्धीनां विषयाविष्टचेतसाम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ ज्ञानहेतवो ज्ञानकर्त्तारो लोकानामिति ॥ १५ ॥ ग्राम्यपशोः ग्राम्यपशवस्तु भीष्म

अंगिरा उवाच ॥ अहं ते पुत्रकामस्य पुत्रदोऽस्म्यंगिरा नृप ॥ एष ब्रह्मसुतः साक्षान्नारदो भगवानृषिः ॥ १७ ॥ इत्थं त्वां पुत्रशोकेन मग्नं तमसि दुस्तरे ॥ अतदर्हमनुस्मृत्य महापुरुषगोचरम् ॥१८॥ अनुग्रहाय भवतः प्राप्तावावामिह प्रभो ॥ ब्रह्मण्यो भगवद्भक्तो नावसीदितुमर्हति ॥ १९ ॥ तदेव ते परं ज्ञानं ददामि गृहमागतः ॥ ज्ञात्वान्याऽभिनिवेशं ते पुत्रमेव ददावहम् ॥ २० ॥ अधुना पुत्रिणां तापो भवतैवानुभूयते ॥ एवं दारा गृहा रायो विविधैश्वर्यसंपदः ॥ २१ ॥ शब्दादयश्च विषयाश्चलाराज्यविभूतयः ॥ मही राज्यं बलं कोशो भृत्यामात्याः सुहृज्जनाः ॥ २२ ॥ सर्वेपि शूरसेनेमे शोकमोहभयार्तिदाः ॥ गंधर्वनगरप्रख्याः स्वप्नमायामनोरथाः ॥ २३ ॥ दृश्यमाना विनार्थेन न दृश्यंते मनोभवाः ॥ कर्मभिर्ध्यायतो नानाकर्माणि मनसोऽभवन् ॥ २४ ॥

युवाभ्यां ज्ञानदीपः प्रवर्त्यताम् ॥१६॥१७॥ महापुरुषगोचरं हरिभक्तं त्वाम् ॥ १८ ॥ १९ ॥ तदेव यदा पूर्वमार्गतोऽस्मि ॥ २० ॥ रायः अर्थाः ॥ २१ ॥ चला अनित्याः । किं च महीति ॥ २२ ॥ हे शूरसेन । इमे सर्वेऽपि शोकादिप्रदाः । किं च । आगमापायित्वेन गंधर्वनगरतुल्याः गन्धर्वनगरं ह्यकस्मादेव क्वचिदायात्यपयाति चेति प्रसिद्धम् । तदेवमनित्यत्वं चागमापायित्वं शोकादिहेतुत्वं चोक्तम् । मिथ्यात्वमप्याह । स्वप्नश्च माया च मनोरथश्च यथा तद्वत् ॥ २३ ॥ मनोभवा मनोमात्रविजृंभिताः । अत्र हेतुः । अर्थेन तात्त्विकस्वरूपेण विनैव दृश्यमानाः । तत्कुतः।यस्मात्क्षणांतरे न दृश्यंते तात्त्विकत्वे हि क्षणांतरे बाधो न स्यात् । अतो मनोमात्रविजृंभितत्वेन स्वप्नादिवन्मिथ्याभूता इत्यर्थः। नन्वेते पुण्यापुण्यकृता इति मीमांसकाः प्राहुस्तत्कुतो मनोभवत्वं तत्राह । कर्मभिः कर्मवासनाभिरर्थान्ध्यायतः पुंसो मनस एव निमित्तात्कर्मा

पर्वणि वर्णिताः "गौरजाविमनुष्याश्च अश्वाश्वतरगर्दभाः।एते ग्राम्याः समाख्याताः पशवः सप्त साधुभिः॥" इति यतो यूयं ज्ञानेहेतवस्तस्माद्धेतोः । युवां युवाभ्याम् । उदीर्य्यतां प्रकाश्यताम्॥ १६ ॥नृपेति । नृपाणां हठस्वभावत्वादेव पुत्रमदामिति भावः । साक्षाद्ब्रह्मसुतः ॥ १७ ॥ अतदर्हं तमोमज्जनानर्हम् । तत्र महापुरुषो हरिर्गोचरो विषयो ध्येयत्वेन यस्य तम् ॥ १८ ॥ प्रभो इति ज्ञानाधिकारितामाह ॥ १९ ॥ ददामि अदामित्यर्थः । लुङर्थे लट् अन्याभिनिवेशं ज्ञानापेक्षयाऽन्यः पुत्रस्तदभिनिवेशं पुत्राविष्टचेतस्त्वम् ॥२०॥ एवं पुत्रवत्॥२१॥ राज्यविभूतीराह–राज्यमित्यादि ॥२२॥ न केवलमेते एव चला अपि तु सर्वे एवेत्याह–सर्वेपीति । शूरसेनेति । केवलं से नयैव शूरो न तु विचारेणेति भावः । सेनया शूरः शूरसेनः। राजदन्तादिवत्समासः।क्वचित्स्वाम्येनापि स्वामित्वं लक्षिते, इति न्यायेन । हे शूरसेनेशेति।शूराणां सर्वं जेतुं समर्थानामिंद्रियाणां याः सेना वृत्तयस्ता अपि नियंतुं समर्थत्वात्त्वमीशोऽसीति भावः । अनित्यत्वादेषामित्याह–किंचेति । क्वचिदाकाशे ॥२३॥ अत्र मनोमात्रविजृंभितत्वे । तत्तात्त्विकस्वरूपेण विना दर्शनं कुतोऽवगतमिति चेत्त्राह–यस्मादिति । इत्यर्थ इति । स्वाप्निकादि पदार्था यथा मनोमात्रविनिर्मितास्तथैतेपीति भावः । अत्राक्षिपति–नन्विति । एते दारादयो रोगाद्यश्च "यन्मनसा मनुते तत्कुरुते" इति श्रुतेः । पाठांतरे 'कर्माभिध्यायत' इति पाठे । इत्यर्थ इति । कर्तुरीप्सिततमस्यैव

अयं हि देहिनो देहो द्रव्यज्ञानक्रियात्मकः ॥ देहिनो विविधक्लेशसंतापकृदुदाहृतः ॥ २५ ॥ तस्मात्स्वस्थेन मनसा विमृश्य गतिमात्मनः ॥ द्वैते ध्रुवार्थविश्रंभं त्यजोपशममाविश ॥ २६ ॥ नारद उवाच ॥ एतां मंत्रोपनिषदं प्रतीच्छ प्रयतो मम ॥ यां धारयन्सप्तरात्राद्द्रष्टा संकर्षणं प्रभुम् ॥ ॥ २७ ॥ यत्पादमूलमुपसृत्य नरेंद्र पूर्वे शर्वादयो भ्रममिमं द्वितयं विसृज्य ॥ सद्यस्तदीयमतुलानधिकं महित्वं प्रापुर्भवानपि परं न चिरादुपैति ॥ २८ ॥ इति श्रीभा० म० ष० पुत्रशोकातुरचित्रकेतोरंगिरोज्ञानदानवर्णनं नाम पंचदशोऽध्यायः ॥ १५ ॥ श्रीशुक उवाच ॥ अथ देवऋषी राजन्संपरेतं नृपात्मजम् ॥ दर्शयित्वेति होवाच ज्ञातीनामनुशोचताम् ॥१॥ नारद उवाच ॥ जीवात्मन्पश्य भद्रं ते मातरं पितरं च ते ॥ सुहृदो बांधवांस्तप्ताञ्छुचा त्वत्कृतया भृशम् ॥ २ ॥ कलेवरं स्वमाविश्य शेषमायुः सुहृद्वृतः ॥ भुंक्ष्व भोगान्पितृप्रत्तानधितिष्ठ नृपासनम् ॥ ३ ॥

ण्यभवन् । पाठांतरे कर्म ईप्सिततममभिध्यायत इत्यर्थः । कर्मणोऽपि मनोभवत्वात्तत्साध्या अर्था अपि मनोभवा एवेति भावः ॥ २४ ॥ तदेवं ममतास्पदानां दुःखादिहेतुत्वमुक्तं तत्र देहसंबंधो मूलमित्याह । अयं हीति । हीत्यवधारणे । अयं द्रव्यज्ञानक्रियात्मकोऽधिभूताधिदैवाध्यात्मरूपो देह एव देहिनो देहोऽहमिति मन्यमानस्य देहिनो जीवस्य विविधान्क्लेशान् सन्तापांश्च करोतीति तथा ॥ २५ ॥ स्वस्थेनाव्यग्रेण । गतिं तत्त्वम् । ध्रुवोऽयमर्थ इति विश्रंभं विश्वासं प्रणयं वा त्यज ततश्चोपशममाविशाश्रय ॥ २६ ॥ अंगिरसोपदिष्टं तत्त्वं परमेश्वरप्रसादं विना न प्राप्यत इति तत्प्रसादाय मंत्रविद्यां नारद उपदिशति । एतामिति । उपनिषण्णं परं श्रेयोऽस्यामित्युपनिषन्मंत्र एवोपनिषत्तां प्रतीच्छ गृहाण । द्रष्टा द्रक्ष्यति भवान् ॥ २७ ॥ अतुलं च तदनधिकं च समानाधिकशून्यं परं महिमानं प्रापुः । उपैत्युपैष्यति ॥ २८ ॥ इति श्रीमद्भा० षष्ठे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ छ ॥ षोडशे तत्सुतोक्त्यैव विशोकीकृत्य तं नृपम् ॥ आदिदेश महाविद्यां नारदः शेषतोषणीम् ॥ १ ॥ आदौ तावत् तत्पुत्रमुखेनैव पितृपुत्रादिसंबंधो मिथ्येति दर्शयितुं योगबलेन तमेव ज्ञातीनां दर्शयित्वा जीवात्मन्नित्याद्युवाच ॥ १ ॥ २ ॥ शेषमवशिष्टमायुरस्ति । अपमृत्युना

कर्मत्वादिति भावः । इति भाव इति । पृथिव्या विनाशित्वे तत्साध्या घटादयः सुतरां विनाशिन इति तात्पर्य्यम् ॥ २४ ॥ तत्र दुःखादिहेतुत्वे ममतास्पदत्वे च ॥ २५ ॥ यतो देहादिप्रपंचः क्लेशहेतुस्तस्माद्धेतोः । द्वैते देहादौ नैतावता पूर्यते किन्तूपशममुपरामम् । ततो द्वैतध्रुवत्वत्यागोत्तरमाश्रय ॥ २६ ॥ एतां पूर्वैरुक्ताम् अग्रे वक्ष्यमाणामित्यर्थः । सप्तरात्रात्सप्तरात्रमतिक्रम्य दिनकतिपयानंतरमित्यर्थः ॥ २७ ॥ तथोपदेशे वैशिष्ट्यमाह—यत्पादेति । नरेन्द्रेति । शर्वादयोऽतिसमर्थास्तदापुः कथमहं दीन इति मा भैस्त्वमपि नराणां शर्वादीनामिवेंद्रः समर्थोऽसि "चतुर्वर्गेषु तन्नास्ति मनुष्यो यन्न साधयेत् । गुरूक्तमार्गे उद्युक्तः" इत्यादि संहितोक्तेरिति भावः ॥ २८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ तस्य चित्रकेतोः सुतस्योक्त्या वाक्येन ( १ ) योंगिरःप्रसादाज्जातस्तमेव । अथांगिरोबोधनानंतरम् । देवऋषिरिह ह्रस्वविधानसामर्थ्यात्संध्यभावः । राजन्निति । संपरेतोपीशप्रसादाज्जीवेदेव यथा त्वमीशेनाजीवितः । पुनरित्युक्तेरिति भावः । श्रीनारदोऽपि भगवदवतारत्वादीश एवेति ॥ १ ॥ ईशस्य सर्वव्यापित्वेन मृतशरीरेपि स्थितिरस्त्येव ज्ञानं विना तत्साक्षात्काराभावादत आह—हे जीवात्मन्निति ॥ २ ॥ अपमृत्युना हि सत्त्वेप्यायुःशेषे मृतो भवति तच्च जन्मांतरे भुज्यते यथा तैलवर्त्तियुते प्रबलवायुनिर्वापिते

जीव उवाच ॥ कस्मिञ्जन्मन्यमी मह्यं पितरो मातरोऽभवन् ॥ कर्मभिर्भ्राम्यमाणस्य देवतिर्यङ्नृयोनिषु ॥ ४ ॥ बंधुज्ञात्यरिमध्यस्थमित्रोदासीनविद्विषः ॥ सर्व एव हि सर्वेषां भवंति क्रमशो मिथः ॥ ५ ॥ यथा वस्तूनि पण्यानि हेमादीनि ततस्ततः ॥ पर्यटंति नरेष्वेवं जीवो योनिषु कर्तृषु ॥ ६ ॥ नित्यस्यार्थस्य संबंधो ह्यनित्यो दृश्यते नृषु ॥ यावद्यस्य हि संबंधो ममत्वं तावदेव हि ॥ ७॥ एवं योनिगतो जीवः स नित्यो निरहंकृतः ॥ यावद्यत्रोपलभ्येत तावत्स्वत्वं हि तस्य तत् ॥ ८ ॥ एष नित्योऽव्ययः सूक्ष्म एष सर्वाश्रयः स्वदृक् ॥ आत्ममायागुणैर्विश्वमात्मानं सृजते प्रभुः ॥ ९ ॥

मृतत्वादित्यर्थः ॥ ३ ॥ तदेव कलेवरं प्रविश्योत्थितो जीव उवाच । यद्वा । अंतराले प्रेतशरीरे स्थित्वेति ज्ञेयम् ॥ ४ ॥ मयि मृते पुत्रदृष्ट्या शोकश्चेच्छत्रुदृष्ट्या हर्षः किं न क्रियत इत्याशयेन संबधस्यानियतत्वमाह । बंधवो विवाहादिभिः संबंधिनः । ज्ञातयः सपिंडाः । अरयो घातकाः । मित्राणि रक्षकाः । मध्यस्था उभयव्यतिरिक्ताः साधारणाः । विद्विषो द्रव्यादिनिमित्तेन द्वेषिणः । उदासीनास्तद्व्यतिरिक्ता इति भेदः ॥ ५ ॥ कर्मभिर्भ्राम्यमाणत्वे दृष्टांतः । यथा पण्यानि क्रयविक्रयार्हाणि कर्तृषु व्यवहर्तृषु परिभ्रमंति एवं जीवोऽपि योनिषु जनकेषु ॥ ६ ॥ एकस्मिन्नपि जन्मनि संबंधस्यानियतत्वं सदृष्टांतमाह द्वाभ्याम् । नित्यस्य जीवतोऽपि अर्थस्य पश्वादेः अनित्यः अनियतः । विक्रयादिना संबंधनिवृत्तेः दृष्टत्वात् ॥ ७ ॥ एवं योनिगतः पित्रादिसंबंधं प्राप्तोऽपि स जीवो नित्यः । देहजन्मादिना तस्य जन्माद्यभावात् । अत एव वस्तुतो निरहंकृतोऽहमस्य पुत्र इत्यभिमानशून्यः । यत्र पित्रादौ संबंधिनि यावदुपलभ्येत कर्मवशेन वर्तेत तावदेव तस्य पित्रादेस्तत्तस्मिन् स्वत्वं न तु विक्रयादुत्तरकालमपि । अथ वैवं संबंधः । यदुक्तं 'कलेवरं स्वमाविश्य' इति तत्र यास्मिन् कलेवरे ममेदानीं स्वत्वं निवृत्तमिति सदृष्टांतमाह । नित्यस्य चिरकालावस्थायिनः सुवर्णादेः । योनिगतो देहं प्रविष्टः यत्र देहे तस्य जीवस्य तत्तस्मिन् देहे स्वत्वम् । न तु मरणोत्तरकालमपीत्यर्थः । शेषं समानम् ॥ ८ ॥ जीवस्य नित्यत्वं साधयति । एष

दीपेऽवशिष्टतैलादि पुनरन्येद्युः प्रवर्त्तितदीपेन भुज्यते तद्वदिति ज्ञेयम् । अकालमृत्योरस्वीकारे 'अकालमृत्युहृणम्' इति मंत्रस्यानाप्तता स्यादिति । "नाकालमृत्युस्तत्रास्ति यत्र राजा युधिष्ठिरः" इति महाभारते विराट्पर्वणि भीष्मोक्तिश्च व्याकुप्येतेति भावेनैव स्वामिचरणैर्व्याख्यातं शेषमवशिष्टमायुरस्त्यपमृत्युना मृतत्वादिति । पित्रा प्रत्तान्दत्तान् स्वरांतोपसर्गाद्ददातेस्तकारादेशे रूपम् ॥ ३ ॥ ४ ॥ तस्मिंस्तदरी वा मिलिता वा मध्यस्थाः उदासीनास्तयोरपि न मिलंत इति ॥ ५ ॥ जनेषु पित्रादिषु । यथा स्वपार्श्वतश्चिरं स्थित्वा गतं दीनारादि पुनः कालांतरेणायाति तत्र यथा न ज्ञायते तदेवेदं दीनारादीति ॥ ६ ॥ ननु तर्हि हाटकादिवदनित्यत्वमापतितं जीवस्येत्याशंक्य संबंधस्यैवानित्यत्वं न तु जीवात्मन इत्याह–नित्यस्येति । यथा संबंधस्यानित्यत्वं तथा मम पुत्रोऽयमित्यादि ममत्वमप्यनित्यमित्याह–यावदस्येति । हिशब्दाभ्यां प्रत्यक्षसिद्धत्वं दर्शयति । एवकारेणायोगव्यवच्छेदं करोति ॥ ७ ॥ अत एव जीवस्य जन्माद्यभावादेव । स्वत्वं स्वकीयत्वं प्रकारांतरेण योजयति–अथेति । इत्यर्थ इति । स्वत्वस्य संबंधहेतुकत्वादिति भावः ॥ ८ ॥ एष प्रत्यक्ष

न ह्यस्यातिप्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ॥ एकः सर्वधियां द्रष्टा कर्तृणां गुणदोषयोः ॥ १० ॥ नादत्त आत्मा हि गुणं न दोषं न क्रियाफलम् ॥ उदासीनवदासीनः परावरदृगीश्वरः ॥ ११ ॥ श्रीशुक उवाच ॥ इत्युदीर्य गतो जीवो ज्ञातयस्तस्य ते तदा ॥ विस्मिता मुमुचुः शोकं छित्त्वात्मस्नेहशृंखलाम् ॥ १२ ॥ निर्हृत्य ज्ञातयो ज्ञातेर्देहं कृत्वोचिताः क्रियाः ॥ तत्यजर्दुस्त्यजं स्नेहं शोकमोहभयार्तिदम् ॥ १३ ॥ बालघ्न्यो व्रीडितास्तत्र बालहत्याहतप्रभाः ॥ बालहत्याव्रतं चेरुर्ब्राह्मणैर्यन्निरूपितम् ॥ यमुनायां महाराज स्मरंत्यो द्विजभाषितम् ॥ १४ ॥ स इत्थं प्रतिबुद्धात्मा चित्रकेतुर्द्विजोक्तिभिः ॥ गृहांधकूपान्निष्क्रांतः सरःपंकादिव द्विपः ॥ १५ ॥

नित्यः । तत्र हेतुः अव्ययोऽपक्षयशून्यः । तत्कुतः । सूक्ष्मः जन्मादिशून्यः । तच्च कुतः सर्वाश्रयः जन्मादिमतो देहादेराश्रयः न तु देहादिरूपः । स्वदृक् यतः स्वप्रकाशः सर्वाश्रयत्वमुपपादयति आत्मनो मायाया गुणैरात्मानमेव विश्वं विश्वात्मकं सृजति "तदात्मान ँ स्वयमकुरुत" इति श्रुतेः।उपादानकारणत्वात्सर्वाश्रय इत्यर्थः । जीवस्य वस्तुतो ब्रह्मत्वाद्ब्रह्मण एव चिच्छक्तिविशिष्टस्येश्वरत्वेन स्रष्टृत्वाज्जीवः सृजतीति वाचोयुक्तिः । यद्वा स्वकर्मद्वारा सृष्टिनिमित्तत्वेन स्रष्टृत्वं भोग्यस्य च सर्वस्य भोक्त्राश्रयत्वात्सर्वाश्रयत्वं चोक्तमिति द्रष्टव्यम् ॥९॥ यदुक्तं 'सुहृद्वृतः'इति 'सुहृदो बांधवांस्तप्तान्' इति च तत्राप्याह । न ह्यस्येति । तत्र हेतुः । एकः सुहृदादिसंगरहितः । तत्कुतः गुणदोषयोर्हिताहितयोः कर्तृणां मित्त्रादीनां याः सर्वा धियो विचित्रा बुद्धयस्तासां द्रष्टा साक्षी ॥ १० ॥ यच्चोक्तं 'भुंक्ष्व भोगान्' इत्यादि तत्राप्याह नादत्त इति गुणं सुखं दोषं दुःखं क्रियाफलं च राज्यादिकम् । उदासीनत्वे हेतुः । परावरदृक् कारणस्य कार्यस्य च साक्षी न तु भोक्ता यतः ईश्वरः देहादिपारतंत्र्यशून्यः । अत एवंभूतस्य मम च युष्माकं च संबंधाभावाच्छोकं मा कुरुतेति वाक्यार्थः॥ ११ ॥ १२ ॥ १३ ॥ द्विजभाषितमंगिरसा प्रोक्तं पुत्रादीनां दुःखहेतुत्वं स्मरंत्यः । पुत्रकामनाशून्या निर्मत्सराः सत्य इति भावः॥ १४ ॥ निबिडपंकतुल्यं गृहं विहाय निष्क्रमणमतिधीरस्य तस्यैव योग्यं नान्यस्येति सदृष्टांतमाह । स इत्थमिति । सरसः पंकात् द्विपो गज इव ॥ १५ ॥

श्रुतियुक्तिसिद्धः । पुनरुक्तिर्निर्द्धारणार्था । तत्र नित्यत्वे तदपक्षयशून्यत्वम् । कुतो यतः सूक्ष्मः । तच्च जन्मादि शून्यत्वं च । आत्मानं स्वयं तज्जगद्रूपमकुरुतेति श्रुतिपदार्थः । इत्यर्थ इति । "यतो वा इमानि भूतानि जायंते" इत्यादिश्रुतेरुपादानत्वं ब्रह्मण एव 'तत्त्वमसि' इत्यादिश्रुतेर्वस्तुतो जीवस्यापि ब्रह्मत्वात् । वाचोयुक्तिरिति कथनप्रकारः । ननु ब्रह्मणो "निरीहं निष्कलं शांतम्" इत्यादिश्रुतेर्निरीहत्वात्स्रष्टृत्वादिकं न संगच्छते इति चेत्तत्राह—यद्वेति ॥ ९ ॥ अस्यात्मनः । तत्रातिप्रियत्वाद्यभावे "एको देवः सर्वभूतेषु गूढः । एक एव हि भूतात्मा भूतेभूते व्यवस्थितः" इत्यादिश्रुतेर्द्वितीयाभावादेव सुहृदादयो न संपनीपद्यंत इत्यर्थः । तत् सुहृदादिसंगशून्यत्वं न हि साक्षी साक्ष्यो भवतीति भावः ॥ १० ॥ एवंभूतस्य नित्यादिरूपस्य ॥ ११ ॥ ज्ञातयस्तस्मिन् जन्मनि सपिंडाः । आत्मनां स्वेषाम् । तस्मिन्पुत्रे स्नेहरूपां शृंखलाम् । विस्मिता अहो अनेन सत्यमुक्तमित्येवं विस्मयं प्राप्ताः ॥ १२ ॥ ज्ञातयो ज्ञातेः सपिंडस्य तस्य बालस्य । निर्हृत्य दग्ध्वा । उचिताः क्रियाः श्राद्धादिलक्षणाः ॥ १३ ॥ तत्र तदा । इति भाव इति । अहो अस्माभि

कालिंद्यां विधिवत्स्नात्वा कृतपुण्यजलक्रियः ॥ मौनेन संयतप्राणो ब्रह्मपुत्राववंदत ॥ १६ ॥ अथ तस्मै प्रपन्नाय भक्ताय प्रयतात्मने ॥ भगवान्नारदः प्रीतो विद्यामेतामुवाच ह ॥ १७ ॥ नारद उवाच ॥ ॐ नमस्तुभ्यं भगवते वासुदेवाय धीमहि ॥ प्रद्युम्नाया निरुद्धाय नमः संकर्षणाय च ॥ १८ ॥ नमो विज्ञानमात्राय परमानंदमूर्तये ॥ आत्मारामाय शांताय निवृत्तद्वैतदृष्टये ॥ १९ ॥ आत्मानं दानुभूत्यैव न्यस्तशक्त्यूर्मये नमः ॥ हृषीकेशाय महते नमस्ते विश्वमूर्तये ॥ २० ॥ वचस्युपरतेऽप्राप्य य एको मनसा सह ॥ अनामरूपश्चिन्मात्रः सोऽव्यान्नः सदसत्परः ॥ २१ ॥ यस्मिन्निदं यतश्चेदं तिष्ठत्यप्येति जायते ॥ मृन्मयेष्विव मृज्जातिस्तस्मै ते ब्रह्मणे नमः ॥ २२ ॥ यन्न स्पृशंति न विदुर्मनोबुद्धींद्रियासवः ॥ अंतर्बहिश्च विततं व्योमवत्तं नतोऽस्म्यहम् ॥ २३ ॥ देहेंद्रियप्राणमनोधियोऽमी यदंशविद्धाः प्रचरंति कर्मसु ॥ नैवान्यदा लोहमिवाप्रतप्तं स्थानेषु तद्द्रष्ट्रपदेशमेति ॥ २४ ॥

कृताः पुण्यजलक्रियाः पितृतर्पणाद्या येन । संयतप्राणो नियतेंद्रियः ॥ १६ ॥ १७ ॥ नमो धीमहि ध्यायेम मनसा नमस्याम इत्यर्थः ॥ १८ ॥ निवृत्ता द्वैतदृष्टिर्य स्मात् ॥ १९ ॥ न्यस्ता निरस्ताः शक्त्यूर्मयो मायानिमित्ता रागद्वेषादयो येन ॥ २० ॥ मनसा सह वचस्यप्राप्योपरते सति य एक एव प्रकाशते । वचसीति सर्वेंद्रियो पलक्षणम् । सोऽस्मानव्यात्सदसत्परः कार्यकारणयोः कारणम् ॥ २१ ॥ तदेवाह । यस्मिन्निति । यस्मिन्निदं कार्यकारणं तिष्ठति अप्येति प्रलीयते च यतश्च जायते मृन्मयेषु घटादिषु मृज्जातिर्मृन्मात्रमिव सर्वानुस्यूतं यत्तस्मै ॥ २२ ॥ ननु सर्वानुस्यूतं चेन्मृज्जातिवत्प्रतीयेत कथं मनोवचसोरप्राप्तिस्तत्राह । यद्ब्रह्म व्योमवद्विततमपि असवः प्राणाः क्रियाशक्त्या न स्पृशंति मनआदीनि च ज्ञानशक्त्या न विदुः तद्ब्रह्म नतोऽस्मि ॥ २३ ॥ तेषां तदज्ञाने हेतुमाह देहेंद्रियादयोऽमी विकाराः यदंशविद्धा यच्चैतन्यांशेनाविष्टाः संतः कर्मसु स्वस्वविषयेषु प्रचरंति जाग्रत्स्वप्नयोरन्यदा सुषुप्तिमूर्च्छादौ नैव प्रचरंति यथा अप्रतप्तं लोहं न दहति । अतो यथा लोहमग्निशक्त्यैव

महत्पापं कृतं मात्सर्येण मात्सर्यमपि निरयहेतुरतः पुनर्नैतादृशं कर्म कार्यमित्थं विचार्य प्रायश्चित्तं चक्रुरित्याशयः ॥ १४ ॥ १५ ॥ ब्रह्मपुत्रौ नारदांगिरसौ ॥ १६ ॥ एतां वक्ष्यमाणाम् ॥ १७ ॥ इत्यर्थ इति । मनसा नतिरेव ध्यानमिति भावः । संकर्षणस्यांते पाठस्तूपास्यत्वेन तत्रैव विश्रांतेः ॥ १८ ॥ विज्ञानमेव विज्ञानमात्रं तस्मै विज्ञानरूपाय यस्मिन्दृष्टे नान्यत्र दृष्टिः संभवतीति भावः । द्वैते दृष्टिर्येषां ते द्वैतदृष्टयो निवृत्ता द्वैतदृष्टयो यस्मात्तस्मै । अद्वैतनिष्ठैः प्राप्यायेति वा । यद्वा—निवृत्तद्वैतानां दृष्टिर्यस्मिंस्तस्मै निवृत्तद्वैतेषु दृष्टिर्यस्य तस्मै वा "यदा पुमांस्त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे" इत्येकादशे श्रीमुखोक्तेः । निवृत्तद्वैता दृष्टिर्यस्य तस्मादिति वा 'समोहं सर्वभूतेषु' इति श्रीगीतोक्तेः ॥ १९ ॥ यद्वा—न्यस्ता शक्तिर्माया ऊर्मयोऽशनादयो वा "योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति" इति श्रुतेः ॥ २० ॥ "यतो वाचो निवर्त्तंते अप्राप्य मनसा सह" इति श्रुतिमर्थतः पठति वचसीति ॥ २१ ॥ तदेव सर्वकारणत्वनेत्र । तीर्थस्तु—"जातिः सामान्यजन्मनोः" इत्यभिधानात् मृदो जातिर्जन्म यस्य वृक्षादेस्स तथा यथा वृक्षादिराशिर्मृण्मयेषु मृद्विकारेषु पृथिवीपर्वतादिषु तिष्ठत्यप्येति तेभ्यो जायते तथेत्याह ॥ २२ ॥ अत्राक्षिपति—नन्विति ॥ २३ ॥ तेषां मन आदीनाम् । तदज्ञाने ब्रह्माज्ञाने । आविष्टा लब्धसामर्थ्याः । दृष्टांतमाह—यथेति । इति स्व—

ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सकलसात्वतपरिवृढनिकरकरकमलकुड्मलोपलालितचरणारविंदयुगल परम परमेष्ठिन्नमस्ते ॥ २५ ॥ श्रीशुक उवाच ॥ भक्तायैतां प्रपन्नाय विद्यामादिश्य नारदः ॥ ययावंगिरसा साकं धाम स्वायंभुवं प्रभो ॥ २६ ॥ चित्रकेतुस्तु विद्यां तां यथा नारदभाषिताम् ॥ धारयामास सप्ताहमब्भक्षः सुसमाहितः ॥ २७ ॥ ततश्च सप्तरात्रांते विद्यया धार्यमाणया ॥ विद्याधराधिपत्यं स लेभेऽप्रतिहतं नृप ॥ २८ ॥ ततः कतिपयाहोभिर्विद्ययेद्धमनोगतिः ॥ जगाम देवदेवस्य शेषस्य चरणांतिकम् ॥ २९ ॥ मृणालगौरं शितिवाससं स्फुरत्किरीटकेयूरकटित्रकंकणम् ॥ प्रसन्नवक्त्रारुणलोचनं तं ददर्श सिद्धेश्वरमण्डलैः प्रभुम् ॥ ३० ॥

दाहकं सदग्निं विना न दहति एवं ब्रह्मगतज्ञानक्रियाशक्तिभ्यां प्रवर्तमाना देहादयस्तन्न स्पृशंति न विदुश्चेति भावः । जीवस्तर्हि द्रष्टृत्वात् जानातु नेत्याह । स्थानेषु जाग्रदादिषु द्रष्टृपदेशं द्रष्टृसंज्ञां तदेवैति प्राप्नोति । नान्यो जीवो नामास्ति । "नान्योऽतोऽस्ति द्रष्टा" इत्यादिश्रुतेः । यद्वा द्रष्टृपदेशं द्रष्टृसंज्ञं जीवमपि तदेवैति जानाति । न तु जीवस्तज्जानातीत्यर्थः । तदुक्तं हंसगुह्यस्तोत्रे । "देहोऽसवोऽक्षा" इत्यादि ॥२४॥ सकला ये सात्वतपरिवृढास्तेषां निकरः समूहस्तस्य करकमलानां कुड्मलैर्मुकुलैरुपलालितं चरणारविंदयुगलं यस्य तस्य संबोधनम् । परम उत्कृष्ट परमेष्ठिन् सर्वेश्वर ॥ २५ ॥ पूर्वं सनारदोंगिरा आजगामेत्यंगिराः प्राधान्येनोक्तः । चित्रकेतोः पुत्रप्रदत्वेन तस्य पृथगुक्तत्वात् । इह तु नारदोंगिरसा साकं ययाविति नारदस्य प्राधान्यनिर्देशः । तदुपदेशेन तस्य वैराग्योत्पत्तेः प्रभो हे समर्थ ॥ २६ ॥ यथा यथावद्धारयामास ॥ २७ ॥ विद्याधराधिपत्यं चावांतरफलं लेभे अप्रतिहतमस्खलितम् ॥ २८ ॥ कतिपयैरहोभिः विद्ययेद्धेन दीप्तेन मनसा गतिर्यस्य ॥ २९ ॥ मृणालवद्गौरं शिति

इति भाव इति । स्वस्थज्ञानेन परो ज्ञायते न परस्थज्ञानेन परो ज्ञायते यथा ब्रह्मगतमेव ज्ञानं स्वावेशादिंद्रियादीन्प्रकाशयति न तु जडा इंद्रियादयस्तत्प्रकाशका इत्याशयः । अत्राशंकते—जीवस्तर्हीति । तदेव ब्रह्मैव । अत्र जीवस्य ब्रह्मभिन्नस्यासत्त्वे प्रमाणमाह—नान्य इति । अतो ब्रह्मणोऽन्यो भिन्नो जीवो द्रष्टा नास्तीति श्रुत्यर्थः । जीवस्य जडपक्षपातित्वात्तज्ज्ञानं न संभवतीत्याह—यद्वेति । इत्यर्थ इति । जीवस्याविद्याकार्यबुद्धिप्रतिबिंबत्वेन जडत्वतज्ज्ञानासंभव इति भावः । अत्र प्रमाणमाह—तदुक्तमिति ॥ २४ ॥ सात्वतपरिवृढा भक्ताधिपाः सनकादयः । मुकुलैरिति । सर्वावयवोपेतैर्दृढहस्तैरित्यर्थः । एतेन जीवन्मुक्तोपास्यत्वं ध्वनितम् । तत्र हेतुगर्भितमामंत्रणमाह—परमेति । परमत्वं ब्रह्मादेरप्यस्तीति चेत्तत्राह—परमेष्ठिन्निति । परमे सर्वोत्कृष्टे वैकुंठे तिष्ठति । यद्वा—परमे स्वस्वरूपे तिष्ठतीति परमेष्ठी तत्संबुद्धौ । "स वै पतिः स्यादकुतोभयः स्वयं समंततः पाति भयातुरं जनम् । स एक एवेतरथा मिथो भयं नैवात्मलाभादधिमन्यते परम् ॥" इत्युक्तेः सर्वेश्वरत्वं श्रीविष्णोरेव । अन्येषां तु 'ब्रह्मणोऽपि भयं मत्तः' इत्याद्युक्तन्यायेन निर्भयत्वाभावान्न परमेष्ठित्वं ब्रह्मणि परमेष्ठिपदप्रयोगो हि सृज्यप्रपञ्चान्तर्गतसर्वोत्कृष्टसत्यलोकवासित्वादेव भाक्त एवेति ध्येयम् ॥ २५ ॥ अहो चित्रकेतोः सामर्थ्यं येन नारदोक्ता विद्या गृहीतेति विमृशंतं नृपमाह—प्रभो इति । त्वमपि मदुक्तग्रहणे समर्थोसि त्यक्तसर्वपरिग्रहत्वादिति भावः । एतां नमस्तुभ्यमित्यारभ्य परमेष्ठिन्नमस्त इत्यंताम् ॥ २६ ॥ सप्ताहं यथा स्यात्तथा ॥ २७ ॥ ततो विद्याग्रहणोत्तरम् । स चित्रकेतुः । धार्यमाणया दृढविश्वासेन जप्तया । हे नृपेति । त्वमपि तादृश एव नृप इति भावः ॥ २८ ॥ ततो विद्याधराधिपत्यलाभोत्तरम् ॥ २९ ॥ "शितिः स्यात्तीक्ष्णनीलयोः" इति धरणिः ॥ ३० ॥

तद्दर्शनध्वस्तसमस्तकिल्बिषः स्वच्छामलांतःकरणोऽभ्ययान्मुनिः ॥ प्रवृद्धभक्त्या प्रणयाश्रुलोचनः प्रहृष्टरोमाऽनमदादिपूरुषम् ॥ ३१ ॥ स उत्तमश्लोकपदाब्जविष्टरं प्रेमाश्रुलेशैरुपमेहयन्मुहुः ॥ प्रेमोपरुद्धाखिलवर्णनिर्गमो नैवाशकत्तं प्रसमीडितुं चिरम् ॥ ३२ ॥ ततः समाधाय मनो मनीषया बभाष एतत्प्रतिलब्धवागसौ ॥ नियम्य सर्वेंद्रियबाह्यवर्तनं जगद्गुरुं सात्वतशास्त्रविग्रहम् ॥ ३३ ॥ चित्रकेतुरुवाच ॥ अजित जितः सममतिभिः साधुभिर्भवाञ्जितात्मभिर्भवता ॥ विजितास्तेपि च भजतामकामात्मनां य आत्मदोऽतिकरुणः ॥ ३४ ॥ तव विभवः खलु भगवञ्जगदुदयस्थितिलयादीनि ॥ विश्वसृजस्तेंशांशास्तत्र मृषा स्पर्धंते पृथगभिमत्या ॥ ३५ ॥ परमाणुपरममहतोस्त्वमाद्यंतांतरवर्ती त्रयविधुरः ॥ आदावंतेऽपि च सत्त्वानां यद्ध्रुवं तदेवांतरालेऽपि ॥ ३६ ॥

वाससं नीलांबरम् । स्फुरंति किरीटादीनि यस्य । कटित्रं कटिसूत्रम् । प्रसन्नानि वक्त्राणि यस्य अरुणानि लोचनानि यस्य तं च तं च ॥ ३० ॥ दृष्ट्वा च तमादिपूरुषमभ्ययाच्छरणं गतः । अनमन्ननाम । कथंभूतः । तस्य दर्शनेन ध्वस्तं समस्तं किल्बिषं यस्य स्वच्छममलं चांतःकरणं यस्य प्रणयेनाश्रुयुक्ते लोचने यस्य प्रहृष्टानि रोमाणि यस्य सः ॥ ३१ ॥ तं प्रसमीडितुं स्तोतुं चिरं नैवाशकन्न शशाक । तत्र हेतुः । उत्तमश्लोकस्य पादाब्जयोर्विष्टरमासनमुपमेहयन् अभिषिंचन् प्रेम्णा उपरुद्धः अखिलानां वर्णानां निर्गम उच्चारणं यस्य सः ॥ ३२ ॥ मनीषया बुद्ध्या मनः समाधायैतद्वक्ष्यमाणं बभाषे । प्रतिलब्धा वाग्येन सात्वतशास्त्रोक्तो विग्रहो यस्य तम् ॥ ३३ ॥ अन्योऽन्यप्रेमजानंदविभूतान्स्वामिसेवकान् ॥ अभिनंदन्मुदा स्तौति दशभिः पंचभिर्विभुम् ॥ १ ॥ हे अजित अन्यैरजितोऽपि भवान्साधुभिर्भक्तैर्जितः स्वाधीन एव कृतः । यतो भवानतिकरुणः । तेऽपि च निष्कामा अपि भवता विजिताः । यो भवानकामात्मनामात्मानमेव ददाति ॥ ३४ ॥ ननु भक्तैरेव जित इति कथं स्पर्धमानैरपि सृष्ट्यादिकर्तृभिरन्यैरीश्वरैर्जयसंभवात्तत्राह । तवेति । जगत उदयादीनि तवैव विभवो विभवनं महिमा लीलेति यावत् । आदिशब्देन प्रवेशनियमनादीनि । विश्वसृजस्तु ब्रह्मादयो नेश्वराः किं तु ते तवांशो यः पुरुषस्तस्यांशाः । तत्र एवं स्थितेऽपि पृथक्पृथगीश्वरा वयमित्यभिमानेन वृथैव स्पर्धंते ॥ ३५ ॥ त्वमेव सृष्ट्यादिकर्ते

मुनिर्गृहीतमौनः॥३१॥तत्र स्तवनासामर्थ्ये॥३२॥ततः प्रेमवैवश्यनिवृत्त्युत्तरम्।असौ चित्रकेतुः।सात्वतशास्त्रे पंचरात्रे उक्तो विग्रहः स्वरूपं यस्य तम् । मध्यपदलोपी समासः । सात्वतशास्त्रं श्रीमद्भागवतमेव विग्रहो देहो यस्य तम्।"लोकस्याजानतो विद्वांश्चक्रे सात्वतसंहिताम्" इत्युक्तेः । "तेनेयं वाङ्मयी मूर्त्तिः कृष्णस्य परमात्मनः" इति पाद्माच।शेषस्य साक्षान्नारायणत्वमेव तदवतारेषु"रामकृष्णाविति भुवो भगवानहरद्भरम्"इति प्रथमस्कंधे एकस्यैव द्विरूपतोक्तिर्नासत्यवन्न विरुद्धेति वा ध्येयम्॥३३॥विभुता निश्चलात्(१)सकामानां कामनामात्रं प्रायो ददाति निष्कामानां त्वात्मानमेव ददातीत्यर्थः॥३४॥अत्राक्षिपति–नन्विति।भगवन्निति। त्वमेव भगवान्नान्य इति भावः।"सेशं पुनात्यन्यतमो मुकुन्दात्को नाम लोके भगवत्पदार्थः" इत्युक्तेः । तत्र भगवत्त्वे एवं स्थितेपि ॥३५॥ अंतिमं कार्यं सर्वं विश्वम्। अत एवादिमध्यांतवर्तित्वादेव।"अहमेवासमेवाग्रे नान्यद्यत्सदसत्परम् ।पश्चादहं

क्षित्यादिभिरेष किलावृतः सप्तभिर्दशगुणोत्तरैरांडकोशः ॥ यत्र पतत्यणुकल्पः सहांड कोटिकोटिभिस्तदनंतः ॥ ३७ ॥ विषयतृषो नरपशवो य उपासते विभूतीर्न परं त्वाम् ॥ तेषामाशिष ईश तदनु विनश्यंति यथा राजकुलम् ॥ ३८ ॥ कामधियस्त्वयि रचिता न परम रोहंति यथा करंभबीजानि ॥ ज्ञानात्मन्यगुणमये गुणगणतोऽस्य द्वंद्वजालानि ॥ ३९ ॥ जितमजित तदा भवता यदाह भागवतं धर्ममनवद्यम् ॥ निष्किंचना ये मुनय आत्मारामा यमुपासतेऽपवर्गाय ॥ ४० ॥

त्येतदुपपादयति । परमाणुः सूक्ष्ममूलकारणं परममहदंतिमं कार्यं तयोस्त्वमेवाद्यंतांतरवर्ती । आदावंते चांतरे मध्ये च वर्तितुं शीलं यस्य सः । अत एव त्रयविधुर आद्यं तमध्यशून्यो ध्रुवः । ते च त्वया सृज्यंते न तु ध्रुवाः । कुत इत्यत आह । सत्त्वानां सत्त्वेन प्रतीतानां कार्याणामादावंतेऽपि यद्ध्रुवमनपाय्यंतरालेऽपि च तदेव ध्रुवं सुवर्णादिवत् ॥ ३६ ॥ एवं ध्रुवत्वेन कालतः परिच्छेदो नास्तीत्युक्तम् । देशतोऽप्यपरिच्छेदमाह । क्षित्यादिभिरिति । पूर्वस्मात्पूर्वस्माद्दशगुणमुत्तरोत्तरैरधिकैरावृतो यत्र त्वय्यणुकल्पोऽणुतुल्यः पतति परिभ्रमति तत्तस्मादनंतस्त्वम् ॥ ३७ ॥ यस्मादेवं परमेश्वरस्त्वमेवान्ये देवास्तव विभूतयोऽतस्त्वां विहाय विषयकामनयाऽन्योपासका अतिमंदा इत्याह । विषयेषु तृट् तृष्णा येषां ते नराकाराः पशवः । कुतः । ये विभूतीरिंद्राद्या उपासते न तु परं त्वाम् । ततः किं तत्राह । तेषामिति । तदनु उपास्यनाशानंतरम् । यथा राजकुलमनु राजकुलनाशानंतरम् । तत्सेवकानामाशिषो नश्यंति तद्वत् । अयं च परमोऽवधिर्मध्येऽपि नश्यंत्येव ॥ ३८ ॥ विषयकामेनापि कृता त्वत्सेवा मोक्षफलैवेत्याह । कामधियो विषयकामना अपि हे परम त्वयि रचिताः कृताश्चेन्न रोहंति देहांतरोत्पत्तये न भवंति करंभबीजानि भर्जितबीजानि यथा यतोऽस्य जीवस्य गुणगणादेव द्वंद्वसमूहा भवंति अतः कामेनापि निर्गुणस्य तव भजनाच्छनैर्नैर्गुण्यं भवतीत्यर्थः ॥ ३९ ॥ फलकामनयापि त्वदाराधनं यदा मोक्ष हेतुस्तदा किं वक्तव्यं भगवद्धर्ममाहात्म्यमिति वक्तुं तत्संप्रदायप्रवर्तकत्वेन च भगवंतं स्तौति । जितमिति । यदा भवान्भागवतं धर्ममाह तदा हे भगवंस्त्वया

यदेतच्च योऽवशिष्येत सोऽस्म्यहम्'' इति ब्रह्माणं प्रति चतुःश्लोक्युपदेशावसरे श्रीमुखोक्तेर्ध्रुवत्वमिति ॥ ३६ ॥ ३७ ॥ अतः परमेश्वरत्वात् । पशुत्वे हेतुमाशंकते–कुत इति । ततो विभूत्युपासनातः । किं कोनर्थः । तेषामिंद्राद्युपासकानाम् । अयञ्च तदंततदन्ताशीस्थितिलक्षणोऽवधिः मध्येऽपि कदाचित्तत्कोपादिना नाशसंभवादिति भावः ''तद्यास्यां ततः क्षीयत एव'' इति श्रुतेः ॥ ३८ ॥ हे परमेति । परान् रागद्वेषादीन्निजसेवकानां मिनाति हिनस्तीति परमः रागद्वेषस्यैव मोक्षपरिपंथित्वेन तद्विनाशात्करकलित एव मोक्षो भवतीति भावः । ''इंद्रियस्येंद्रियस्यार्थे रागद्वेषौ व्यवस्थितौ । तयोर्न वशमागच्छेत्तौ ह्यस्य परिपंथिनौ॥'' इति श्रीगीतोक्तेः। यतो हेतोः । इत्यर्थ इति । ''हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात्'' इत्युक्तेरिति भावः ॥ ३९ ॥ हे अजितेति । भक्त्या विना न केनापि जीयते इत्यजित इति भागवतधर्मस्यैव परमोत्कर्षोऽस्ति धर्मांतरेभ्य इति भावः । ''वशी कुर्वंति मां भक्त्या सत्स्त्रियः सत्पतिं यथा'' इति । 'भक्त्याहमेकया लभ्यः' इत्याद्युक्तेश्च । तत्र सर्वोत्कर्षस्थितौ मां तु सकामा अपि भजंत्येव न केवलं त एवेति चेत्तत्राह–यं धर्ममिति । वेति ॥ ४० ॥

विषममतिर्न यत्र नृणां त्वमहमिति मम तवेति च यदन्यत्र ॥ विषमधिया रचितो यः स ह्यविशुद्धः क्षयिष्णुरधर्मबहुलः ॥ ४१ ॥ कः क्षेमो निजपरयोः कियानर्थः स्वपरद्रुहा धर्मेण ॥ स्वद्रोहात्तव कोपः परसंपीडया च तथाऽधर्मः ॥ ४२ ॥ न व्यभिचरति तवेक्षा यया ह्यभिहितो भागवतो धर्मः ॥ स्थिरचरसत्त्वकदंबेष्वपृथग्धियो यमुपासते त्वार्याः ॥ ४३ ॥ न हि भगवन्नघटितमिदं त्वद्दर्शनान्नृणामखिलपापक्षयः ॥ यन्नाम सकृच्छ्रवणात्पुष्कसकोऽपि विमुच्यते संसारात् ॥ ४४ ॥ अथ भगवन्वयमधुना त्वदवलोकपरिमृष्टाशयमलाः ॥ सुरऋषिणा यदुदितं तावकेन कथमन्यथा भवति ॥ ४५ ॥ विदितमनंत समस्तं तव जगदात्मनो जनैरिहाचरितम् ॥ विज्ञाप्यं परमगुरोः कियदिव सवितुरिव खद्योतैः ॥ ४६ ॥

जितं सर्वोत्कर्षेण स्थितम् । तत्र हेतुः । ये निष्किंचनाः सनत्कुमारादयो मुनयस्ते यं भवंतमपवर्गाय सेवंते तेन भवता जितम् । यं धर्ममिति वा ॥ ४० ॥ अनवद्यतामेवाह । विषमा मतिर्यत्र यस्मिन्भागवते धर्मे नास्ति यदन्यत्र यथाऽन्यस्मिन्काम्ये धर्मे । ननु सोऽपि वेदोक्तत्वादनवद्य एव तत्राह । विषमधिया शत्रुमरणादिकामनया रचितो विहितो यः स ह्यविशुद्धः रागद्वेषादिमत्त्वात् । क्षयिष्णुश्च नश्वरफलत्वात् । अधर्मबहुलश्च हिंसादिबाहुल्यात् । तदुक्तं शबरस्वामिभिः "उभयमिह चोदनायां लक्ष्यतेऽर्थोऽनर्थश्च" इत्यादि ॥ ४१ ॥ एतत्प्रपंचयति । कः क्षेमः किं कुशलं न किंचित् । निजपरयोः स्वस्य परस्य च । स्वपरद्रुहा स्वस्मै परस्मै च द्रुह्यतीति स्वपरध्रुक् तेन यतः स्वद्रोहादत्यंतकायक्लेशात्तव कोपः पीडा संभवति । तदुक्तं गीतासु । " कर्षयंतः शरीरस्थं भूतग्राममचेतसः ॥ मां चैवांतः शरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ " इति । तथा परसंपीडयाऽधर्मः । चशब्दात्तव कोपश्च । अतस्त्वया रागांधमपि कथंचिद्वेदमार्गे प्रवर्तयितुं काम्यधर्मोऽभिहितो न तत्त्वदृष्ट्या ॥ ४२ ॥ भागवतधर्मेण तु न द्रोह इत्याह । नेति । न व्यभिचरति न परमार्थं जहाति । तवेक्षा दृष्टिः । अव्यभिचारे हेतुः । स्थिरेति । स्थावरजंगमप्राणिसमूहेषु समबुद्धयो भागवता यं धर्मं सेवंते ॥ ४३ ॥ एवंभूतस्य भागवतधर्मप्रवर्तकस्य तव दर्शनात्सर्वपापक्षयो भवतीति किं चित्रमित्याह । न हीति ॥ ४४ ॥ अतोऽहं कृतार्थोऽस्मीत्याह । अथेति । अथ अतो हेतोः । तवावलोकनेन परिमृष्टा निरस्ता आशये चित्ते मला येषां ते । त्वद्दर्शनं च मम नारदोपदेशेन जातमित्याह । सुरऋषिणेति ॥ ४५ ॥ यथा चाहं पूर्वमतिमूढ आसं यथा च नारदेनानुगृहीतोऽस्मि तत्सर्वांतर्यामिणस्तव मया किं प्रकाशनीयमित्याह । विदितमिति । विशेषेण ज्ञाप्यं प्रकाश

अत्राक्षिपति--नन्विति । "श्येनेनाभिचरन्यजेत " "स्वर्गकामो यजेत" इत्याद्युक्ते रागद्वेषौ प्रतीयेते । क्षयिष्णुश्च "एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः । आदिना श्रमादिग्रहः । अधर्मबहुलत्वं तु श्येनयाजिनः प्रायश्चित्तविधानात् । एतदग्रे विचारयिष्यामः । वेदविहितो धर्माधर्मौ द्वावेव स्त इत्यत्र प्रमाणमाह--तदुक्तमिति । इह वेदविहिते विधावित्यर्थः । अर्थः स्वर्गादिफलको धर्मोऽनर्थो नरकादिफलकोऽधर्मश्चेत्युभयमेवेत्यर्थः ॥ ४१ ॥ एतत् अर्थानर्थद्वयम् । तत् कामक्लेशेनं पीडनम् । भूतग्रामं पञ्चभूतसमुदायम् । कर्षयंतः पीडयंतः मां च कर्षयंत इति यत इत्यनेनात इति योज्यम् । रागांधं विषयानुरागिणम् । सत्त्वदृष्ट्या परमार्थदृष्ट्या ॥ ४२ ॥ ४३ ॥ एवंभूतस्य सर्वेश्वरस्य । भगवन्निति सर्वथा समर्थत्वमाह--अघटितमनुपपन्नम् । "जातो निषादाच्छूद्रायां जात्या भवति पुष्कसः" इति ब्राह्मणाच्छूद्रकन्यायां जातो निषाद इति ॥ ४४ ॥ तावकेन त्वद्भक्तशिरोमणिना यदुदितम् । "यां धारयन्सप्तरात्राद्द्रष्टा संकर्षणं प्रभुम्" इत्येवं यत्प्रोक्तम् ॥४५॥ इत्यर्थ इति । अनंतत्वात्सर्वदेशकालवस्तुपरिच्छेदरहितत्वात्तव सर्वं ज्ञातमेवेति भावः ॥ ४६ ॥

नमस्तुभ्यं भगवते सकलजगत्स्थितिलयोदयेशाय ॥ दुरवसितात्मगतये कुयोगिनां भिदा परमहंसाय ॥४७॥ यं वै श्वसंतमनु विश्वसृजः श्वसंति यं चेकितानमनुचित्तय उच्चकंति ॥ भूमंडलं सर्षपायति यस्य मूर्ध्नि तस्मै नमो भगवतेऽस्तु सहस्रमूर्ध्ने ॥ ४८॥ श्रीशुक उवाच ॥ संस्तुतो भगवानेवमनंतस्तमभाषत ॥ विद्याधरपतिं प्रीतश्चित्रकेतुं कुरूद्वह ॥ ४९ ॥ श्रीभगवानुवाच ॥ यन्नारदांगिरोभ्यां ते व्याहृतं मेऽनुशासनम् ॥ संसिद्धोऽसि तया राजन्विद्यया दर्शनाच्च मे ॥ ५० ॥ अहं वै सर्वभूतानि भूतात्मा भूतभावनः ॥ शब्दब्रह्मपरं ब्रह्म ममोभे शाश्वती तनू ॥ ५१ ॥ लोके विततमात्मानं लोकं चात्मनि संततम् ॥ उभयं च मया व्याप्तं मयि चैवोभयं कृतम् ॥ ५२ ॥ यथा सुषुप्तः पुरुषे विश्वं पश्यति चात्मनि ॥ आत्मानमेकदेशस्थं मन्यते स्वप्न उत्थितः ॥ ५३ ॥

नीयं कियदिव न किमपीत्यर्थः । सवितुर्यथा खद्योतैः प्रकाशनीयं नास्ति तद्वत् ॥ ४६ ॥ उक्तलक्षणं भगवंतं प्रणमति नम इति द्वाभ्याम् । सकलस्य जगतः स्थित्यादीनामीशाय समर्थाय । दुरवसिताऽविज्ञाताऽऽत्मगतिर्निजतत्त्वं यस्य तस्मै । केषां कुयोगिनाम् । केन भिदा भेददृष्ट्या ॥ ४७ ॥ श्वसंति चेष्टंते । चेकितानं पश्यंतमनु चित्तयो ज्ञानेंद्रियाण्युच्चकंति स्वारूढं पश्यंति तस्मै नमोऽस्तु ॥ ४८ ॥ ४९ ॥ मे ममानुशासनं मद्विषय उपदेशः तेन तया च विद्ययाऽस्माच्च दर्शनात्संसिद्धोऽसि ॥ ५० ॥ तद्बोधदार्ढ्याय स्वयमप्युपदिशति अहमित्यादिना । सर्वभूतान्यहमेव । भूतानामात्मा भोक्ताऽप्यहमेव । भोक्तृभोगात्मकं विश्वं मद्व्यतिरिक्तं नास्तीत्यर्थः । यतोऽहं भूतभावनः भूतानां प्रकाशकः कारणं च । ननु शब्दब्रह्मप्रकाशक परं ब्रह्म कारणं च प्रकाशकं च संत्य ते उभे ममैव रूपे इत्याह । शब्दब्रह्मेति । शाश्वती शाश्वत्यौ ॥ ५१ ॥ अतस्त्वमेवं पश्येत्याह । लोके भोग्यप्रपंचे भोक्तृत्वेन विततमनुगतमात्मानं लोकं चात्मनि भोग्यत्वेन संततं व्याप्तं तदुभयं च मया कारणात्मना व्याप्तम् । मयि चैवोभयं कृतं प्रकल्पितं स्मरेदिति तृतीयेनान्वयः । पश्येदित्यध्याहारो वा ॥ ५२ ॥ ननु जाग्रदाद्यवस्थाभेदेन भोक्तृभोग्यात्मकं विश्वं स्फुटं प्रतीयमानं कथं कल्पितं स्यादित्याशंक्य स्वप्नगतजाग्रदादिदृष्टांतेन संभावयन्नाह यथेति द्वाभ्याम् । यथा स्वप्ने सुप्तो विश्वं गिरिवनादिरूपं देशांतरस्थमात्मन्येव पश्यति । स्वप्नमध्ये सुषुप्तिं स्वप्नं च

परमहंसाय परेषां महं तेजः सनोति ददातीति परमहंसस्तस्मै खश् टिलोपश्चार्षौ। “यत्तेजसेद्धः सूर्यस्तपति” इत्यादिश्रुतेः । सर्वप्रकाशकाय केवलं नमस्करोम्येवेति भावः॥ ४७॥कित धातुर्दर्शनेपि यङन्ताच्छानाचि रूपम्। उदुपसर्ग वशाच्चकतृप्ताविल्यस्यार्थांतरम् । ‘धात्वर्थं बाधते कश्चित्’ इत्युक्तेः । सर्षपायति सर्षपवद्वर्त्तते ॥ ४८ ॥ कुरूद्वहेति । शुद्धवंशोद्भूतत्वात्तुभ्यमिदं प्रोक्तमिति “ विशुद्धोभयवंशाय देया विद्यामनीषिणा ” इत्युक्तेः ॥ ४९ ॥ राजन्निति । राज्ञां संसिद्धिरतिदुर्लभापि मत्कृपया जातेति भावः ॥ ५० ॥ इत्यर्थ इति । “ सर्वं खल्विदं ब्रह्म ” इति श्रुतेरिति भावः । अत्राशंकते–नन्विति । वेदराशिः शब्दब्रह्म सच्चिदानंदं परब्रह्मेति भेदः । “ यावद्ब्रह्मविष्ठितं तावती वाक् ” इति श्रुतेः ॥ ५१ ॥ यतोऽहमेव सर्वमतो हेतोः । एवं वक्ष्यमाणप्रकारेण । व्यवहितान्वये श्रमं मत्वाह–पश्येदित्यध्याहारो वा ॥५२॥ अत्राक्षिपति–नन्विति । सुषुप्तः

एवं जागरणादीनि जीवस्थानानि चात्मनः ॥ मायामात्राणि विज्ञाय तद्द्रष्टारं परं स्मरेत् ॥ ५४ ॥ येन प्रसुप्तः पुरुषः स्वापं वेदात्मनस्तदा ॥ सुखं च निर्गुणं ब्रह्म तमात्मानमवेहि माम् ॥ ५५ ॥ उभयं स्मरतः पुंसः प्रस्वापप्रतिबोधयोः ॥ अन्वेति व्यतिरिच्येत यज्ज्ञानं ब्रह्म तत्परम् ॥ ५६ ॥ यदेतद्विस्मृतं पुंसो मद्भावं भिन्नमात्मनः ॥ ततः संसार एतस्य देहाद्देहो मृतेर्मृतिः ॥ ५७ ॥ लब्ध्वेह मानुषीं योनिं ज्ञानविज्ञानसंभवाम् ॥ आत्मानं यो न बुध्येत न क्वचिच्छममाप्नुयात् ॥ ५८ ॥

पश्यतीत्यर्थः । तथा स्वप्न एवोत्थितः सन्नात्मानमेकदेशस्थं शयनदेशे स्थितं मन्यते जाग्रदवस्थामनुभवति ॥ ५३ ॥ एवं प्रसिद्धान्यपि जागरादीनि जीवस्थानानि जीवोपाधेर्बुद्धेरवस्थानुभूतान्यात्मनो मायामात्राणीत्येवं विज्ञाय तेषां द्रष्टारमत एव परं तदवस्थारहितमात्मानं स्मरेत् ॥ ५४ ॥ ननु तेषां द्रष्टारमिति कथमुच्यते स्वापे दृश्याभावेन द्रष्टृत्वाभावात्तत्राह । येनेति । प्रसुप्तः पुरुषो जीवो येन रूपेण तदा स्वापकाले आत्मनः स्वापं निर्गुणमतींद्रियं सुखं च वेद तमात्मानं ब्रह्म मामवेहि । तदा स्वापसुखयोरसंवेदने "सुखमहमस्वाप्सम्" इति स्मृतेरसंभवात् ॥ ५५ ॥ ननु स्वापसाक्षिणा दृष्टं कथं जाग्रदवस्थः स्मरेन्न ह्यन्येन दृष्टमन्यः स्मरति तत्राह । उभयं प्रस्वापं प्रतिबोधं च स्मरतोऽनुसंदधतः :। तयोः प्रस्वापप्रतिबोधयोः प्रकाशकत्वेन यदन्वेति ताभ्यां व्यतिरिच्येत च । एकैकापायेऽप्यनपायात् । तज्ज्ञानं परं ब्रह्म तदेव न तु भिन्नमित्यर्थः । अतो बाल्ये दृष्टस्य यौवने स्मृतिवदवस्थांतरत्वेऽपि स्वापानंदयोः स्मरणं घटत इति भावः । तदेवंभूतं ब्रह्मात्मानमवेहीत्यनुषंगः ॥ ॥ ५६ ॥ विपक्षे दोषमाह । यद्यदि एतन्मद्भावं मत्स्वरूपं ब्रह्म विस्मृतं तदात्मनः सकाशाद्भिन्नं भवति तत एतस्य पुंसः संसारो भवति । संसारस्वरूपमाह । देहाद्देहो जन्मानंतरं पुनर्जन्म मृतेरनन्तरं मृतिश्चेति ॥ ५७ ॥ योन्यंतरेपि भोगादिसंपादनं शक्यं ज्ञानार्थं त्वत्रैव यतितव्यमित्याह । लब्ध्वेति । ज्ञानं शास्त्रोक्तं

प्रसुप्तः । इत्यर्थ इति । अत्र चकारात्सुषुप्तिं केवलां गाढनिद्रां च पश्यतीति भावः । स्वप्न इति । सप्तम्येकवचनम् ॥५३॥ जीवस्य जीवोपाधेर्बुद्धेः स्थानान्यवस्था इत्यर्थः । "जाग्रत्स्वप्नौ सुषुप्तिश्च गुणतो बुद्धिवृत्तयः" इत्युक्तेः । अत एव द्रष्टृत्वादेव ॥ ५४ ॥ पुनराक्षिपति—नन्विति । स्वापकाले सुषुप्तिकाले । असंवेदनेऽननुभवे । स्मृतेरिति स्मृतेरनुभवजन्यत्वनियमात् ॥ ५५ ॥ विश्वतैजसप्राज्ञभेदेन जाग्रदादित्रयसाक्षिणः पृथक्पृथक्संभवादन्यानुभूतेऽन्यस्मृतिरपि न संभवतीत्याक्षिपति—नन्विति । ताभ्यां प्रस्वापप्रतिबोधाभ्याम् । व्यतिरिच्येत पार्थक्येन स्थितो भवेत् । एकैकयोः प्रस्वापप्रतिबोधयोरेकतरस्याभावेऽपि तस्यात्मनोऽनपायात्सत्त्वात् । इत्यर्थ इति । ज्ञानं ज्ञानरूपम् "सत्यं ज्ञानमनंतं ब्रह्म" इति श्रुतेः । परं मुक्तप्राप्यम् "ब्रह्मविदाप्नोति परम्" इति श्रुतेश्च। परं ज्ञानरूपमेव ब्रह्म न तु तदन्यदश्रवणादिति भावः । अतः साक्षिण ऐक्यात् । इति भाव इति । विश्वादिसंज्ञैव भिन्ना न तु संज्ञी संज्ञानामौपाधिकत्वादिति तात्पर्यम् ॥ ५६ ॥ विपक्षे तदज्ञाने । विस्मृतम् अनाद्यज्ञानेनाननुसंहितम् । ततो भिन्नभवनात् ॥५७॥ इह भारते खंडे । ज्ञानविज्ञानसंभवमित्यनेन ब्राह्मणजन्म लक्ष्यते तत्रैव ज्ञानविज्ञानयोः प्राधान्येन संभवात्तदुक्तं गारुडे "जातीशतेन लभते किल मानुषत्वं तत्रापि दुर्लभतरं खलु भो द्विजत्वम् । यस्तन्न पालयति लालयतींद्रियाणि तस्यामृतं क्षरति हस्तगतं प्रमादात् ॥" इति । किञ्च—"अन्यभूमौ कृतं पापं तीर्थभूमौ विशुद्ध्यति । तीर्थभूमौ कृतं पापं वज्रलेपायते द्विज ॥" इत्यादिपुराणांतरगतो न्यायोऽप्यत्रानुसंधेयः । अन्यभूमौ श्वशूकरादिजन्मनि तीर्थवच्छोधनोपायीभूतायां भूमौ मनुष्यदेहे

स्मृत्वेहायां परिक्लेशं ततः फलविपर्ययम् ॥ अभयं चाप्यनीहायां संकल्पाद्विरमेत्कविः ॥ ५९ ॥ सुखाय दुःखमोक्षाय कुर्वाते दंपती क्रियाः ॥
ततो निवृत्तिरप्राप्तिर्दुःखस्य च सुखस्य च ॥ ६० ॥ एवं विपर्ययं बुद्ध्वा नृणा विज्ञाभिमानिनाम् ॥ आत्मनश्च गतिं सूक्ष्मां स्थानत्रयविलक्षणाम् ॥
॥६१॥ दृष्टश्रुताभिर्मात्राभिर्निर्मुक्तः स्वेन तेजसा ॥ ज्ञानविज्ञानसंतुष्टो मद्भक्तः पुरुषो भवेत् ॥६२॥ एतावानेव मनुजैर्योगनैपुण्यबुद्धिभिः ॥ स्वार्थः
सर्वात्मना ज्ञेयो यत्परात्मैकदर्शनम् ॥ ६३ ॥ त्वमेतच्छ्रद्धया राजन्नप्रमत्तो वचो मम ॥ ज्ञानविज्ञानसंपन्नो धारयन्नाशु सिध्यसि ॥ ६४ ॥
श्रीशुक उवाच ॥ आश्वास्य भगवानित्थं चित्रकेतुं जगद्गुरुः ॥ पश्यतस्तस्य विश्वात्मा ततश्चांतर्दधे हरिः ॥ ६५ ॥ इति श्रीभागवते महापुराणे
षष्ठस्कंधे षोडशोऽध्यायः ॥१६॥छ॥ श्रीशुक उवाच ॥ यतश्चांतर्हितोनन्तस्तस्यै कृत्वा दिशे नमः ॥ विद्याधरश्चित्रकेतुश्चचार गगनेचरः ॥१॥ स
लक्षं वर्षलक्षाणामव्याहतबलेंद्रियः ॥ स्तूयमानो महायोगी मुनिभिः सिद्धचारणैः ॥ २ ॥

विज्ञानमपरोक्षं तयोः संभवो यस्यां ताम् ॥ ५८ ॥ वैराग्यार्थमाह । ईहायां प्रवृत्तिमार्गे । तत ईहातः अनीहायां निवृत्तिमार्गे त्वभयं मोक्षो भवतीति च स्मृत्वा फलसं
कल्पाद्विरमेत् । पाठांतरे नोभयं परिक्लेशः फलविपर्ययश्च नास्तीत्येवं स्मृत्वा ॥ ५९ ॥ एतद्विवृणोति सुखायेति त्रिभिः । दुःखस्यानिवृत्तिः सुखस्याप्राप्तिः ॥ ६० ॥
विज्ञा उद्यमे प्रवीणा वयमित्यभिमानवताम् । स्थानत्रयविलक्षणां तुरीयां बुद्ध्वा ॥ ६१ ॥ दृष्टश्रुताभिर्मात्राभिरैहिकामुष्मिकैर्विषयैः स्वेन तेजसा विवे
कबलेन ॥ ६२ ॥ न चातः परः पुरुषार्थोऽस्तीत्याह । एतावानिति । योगे नैपुणं यस्यां सा बुद्धिर्येषां परस्यात्मनः एकं दर्शनमिति यदेतावानेव ॥ ६३ ॥
॥ ६४ ॥ ६५ ॥ इति श्रीभागवते षष्ठे टीकायां षोडशोध्यायः ॥ १६ ॥ ततः सप्तदशेऽमोघमहर्द्धिं प्राप्य खे चरन् ॥ विहस्य गिरिशं शापादुमाया वृत्रतां
गतः ॥ १ ॥ यतो यस्यां तस्यै दिशे नमः नमनं कृत्वा ॥ १ ॥ स चित्रकेतुर्विद्याधरस्त्रीभिर्हरिं गापयन् रेम इति द्वयोरन्वयः । अव्याहतं बलमिंद्रियपाटवं च यस्य ॥ २ ॥

वज्रस्य हीरकस्य केनचिदौषधेन द्रवीभूतस्य कृतो हेमादिधात्वलंकारे लेपः पुनरुपायसहस्रेणापाकर्त्तुं न शक्यते तद्वत्तत्पापं स्यादित्यर्थः । यद्वान्यभूमौ विप्रेतरमनुष्यजन्मनि तदितरजन्मनि वा कृतं तीर्थभूमौ साक्षा
त्तीर्थे ब्राह्मणदेहे विशुध्यति श्रीतजपार्चनादिना नश्यति तत्र कृतं न कुत्रापि जन्मनीति भावः ॥ ५८ ॥ पाठांतरे नोभयमिति पाठे । संकल्पादीहातः ॥ ५९ ॥ एतत् ईहानीहाफलम् । ततः क्रियातः ॥६०॥ सूक्ष्मबु
द्धिज्ञेयत्वात्सूक्ष्माम् ॥ ६१ ॥ मद्भक्तो ज्ञानविज्ञानतृप्तो भवेत् भक्तिं विना ज्ञानविज्ञानाभ्यामपि तृप्तिर्न भवतीति भावः । "भक्तिं लब्धवतः साधोर्न किंचिदवशिष्यते" इत्युद्धवं प्रति श्रीकृष्णोक्तेः ॥ ६२ ॥ यद्वा–
परस्यात्मनश्च द्वयोरेकत्वेनाभेदेन ज्ञानम् 'सकलमिदमहं च वासुदेवः' इत्येवंलक्षणमेतावानेव स्वार्थस्तदन्यत्सर्वज्ञानं न पुरुषार्थ इति भावः ॥ ६३ ॥ हे राजन्निति । नारददत्तविद्यया देदीप्यमानत्वात्त्वद्योग्यमेतदिति भावः
॥ ६४ ॥ हरिरिति । संकर्षणवासुदेवयोर्वास्तवाभेदमाह । ततो यत्र दृष्टस्तत्रैवांतर्दधे ॥ ६५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ ततोनंतोपदेशावाप्त्यनंतरम् । अमस्य क्लेश
स्यौघो वेगो यस्यां तामिति भाव्यभिप्रायेण व्याख्या ( १ ) ॥ १ ॥ २ ॥

कुलाचलेंद्रद्रोणीषु नानासंकल्पसिद्धिषु ॥ रेमे विद्याधरस्त्रीभिर्गापयन्हरिमीश्वरम् ॥ ३ ॥ एकदा स विमानेन विष्णुदत्तेन भास्वता ॥ गिरिशं ददृशे गच्छन्परीतं सिद्धचारणैः ॥ ४ ॥ आलिंग्यांकीकृतां देवीं बाहुना मुनिसंसदि ॥ उवाच देव्याः शृण्वंत्या जहासोच्चैस्तदंतिके ॥ ५ ॥ चित्रकेतुरुवाच ॥ एष लोकगुरुः साक्षाद्धर्मं वक्ता शरीरिणाम्॥ आस्ते मुख्यः सभायां वै मिथुनीभूय भार्यया ॥ ६ ॥ जटाधरस्तीव्रतपा ब्रह्मवादी सभापतिः॥ अंकीकृत्य स्त्रियं चास्ते गतह्रीः प्राकृतो यथा ॥ ७ ॥ प्रायशः प्राकृताश्चापि स्त्रियं रहसि बिभ्रति ॥ अयं महाव्रतधरो बिभर्ति सदसि स्त्रियम् ॥ ८ ॥ श्रीशुक उवाच ॥ भगवानपि तच्छ्रुत्वा प्रहस्यागाधधीर्नृप॥ तूष्णीं बभूव सदसि सभ्याश्च तदनुव्रताः ॥ ९ ॥ इत्यतद्वीर्यविदुषि ब्रुवाणे बह्वशोभनम् ॥ रुषाऽऽह देवी धृष्टाय निर्जितात्माभिमानिने ॥ १० ॥

नानाविधाः संकल्पेनैव सिद्धयो यासु तासु ॥३॥ अकस्मादद्भुतैश्वर्यगर्वात्प्राचीनकर्मतः ॥ आसुरीं योनिमापन्नो भवानीशापतः स तु ॥ १ ॥ तदाह एकदेत्यादिना ॥ ४ ॥ अंकीकृतामुत्संगेनैकीकृत्य स्थापितां देवीं बाहुनाऽऽलिंग्य स्थितम् । उवाच जहास च । तस्यांतिके स्थितः सन् ॥ ५ ॥ धर्मं वक्ता वदति शरीरिणां मध्ये मुख्यश्च भार्यया मिथुनीभूय चास्ते ॥ ६ ॥ ७ ॥ ८ ॥ अगाधा गंभीरा धीर्यस्य सः ॥ ९ ॥ न तस्य वीर्यं प्रभावं विद्वानतद्वीर्यविद्वांस्तस्मिन् । निर्जितात्माभिमानिने । जितेंद्रियोऽ

कुलाचलेंद्रो मेरुः "कुलगिरिराजो मेरुर्द्वीपायामसमुन्नाहः" इत्युक्तेः ॥ ३ ॥ तत्र प्राचीनकर्मणा महदपराधात्तस्य दुष्फलमाह–एकदेति ॥ ४ ॥ अंकीकृतां स्वोत्संगस्थापिताम् । तदंतिके तयोस्सतीश्वरयो रंतिके समीपे ॥ ५ ॥ एष शिवः लोकानां सर्वेषां गुरुर्ब्राह्मणदेवतात्वेनोपदेष्टा 'ब्राह्मणो भगवान्रुद्रः' इति पराशरपुराणोक्तेः । मंत्रशास्त्रेऽपि मनुष्ये श्रद्धाराहित्ये दक्षिणा मूर्त्तितो दीक्षाग्रहणविधानात् व्युत्पादितं चैतत्तृतीयस्कंधे चतुर्दशेऽध्याये । अत एव शरीरिणां धर्मं वक्तेति ॥ ६ ॥ प्राकृतोऽतीव मूढः ॥ ७ ॥ " अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । एते जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम् " इति योगसूत्रे । एतयोरर्थस्तु–तत्र प्राणवियोगप्रयोजनव्यापारो हिंसा सा च सर्वानर्थहेतुस्तदभावोऽहिंसा हिंसायाः सर्वकालमेव परिहार्य्यत्वात्प्रथमं तदभावरूपाया अहिंसाया निर्देशः । सत्यं वाङ्मनसयोर्यथार्थत्वम् । स्तेयं परस्वापहरणं तदभावोऽस्तेयम् । ब्रह्मचर्यमुपस्थसंयमः । अपरिग्रहो भोगसाधनानामस्वीकारः । एतेऽहिंसादयो यमशब्दवाच्या भवंति योगांगत्वेन निर्दिष्टाः । एषां विशेषमाह–एत इति । जातिर्ब्राह्मणत्वादिः । देशस्तीर्थादिः । कालश्चतुर्दश्यादिः । समयो ब्राह्मणप्रयोजनादिः एतैश्चतुर्भिरनवच्छिन्नाः पूर्वोक्ता अहिंसादयो यमाः । सर्वासु विक्षिप्तादिषु चित्तभूमिषु भवा महाव्रतमित्युच्यते । तद्यथा–ब्राह्मणं न हनिष्यामि, तीर्थे कंचन न हनिष्यामि, चतुर्दश्यां न हनिष्यामि, देवब्राह्मणप्रयोजनव्यतिरेकेण कमपि न हनिष्यामीत्येवं चतुर्विधावच्छेदव्यतिरेकेण किंचित्कुत्रचित्कदाचित्कस्मिंश्चिदर्थे न हनिष्यामीत्यनवच्छिन्नाः एवं सत्यादिषु यथायथं योज्यम् । इत्थमनियमकृता सामान्येनैव प्रवृत्ता महाव्रतमित्युच्यते ॥८॥ गंभीरा इयत्ताशून्या । तदभिप्रायानुसारेणैव तूष्णीं बभूवुस्तदनुव्रता इति भावः ॥ ९ ॥ वीर्यमत्र

पार्वत्युवाच ॥ अयं किमधुना लोके शास्ता दंडधरः प्रभुः ॥ अस्मद्विधानां दुष्टानां निर्लज्जानां च विप्रकृत् ॥ ११ ॥ न वेद धर्मं किल पद्मयोनिर्न ब्रह्मपुत्रा भृगुनारदाद्याः ॥ न वै कुमारः कपिलो मनुश्च ये नो निषेधंत्यतिवर्तिनं हरम् ॥ १२ ॥ एषामनुध्येयपदाब्जयुग्मं जगद्गुरुं मंगलमंगलं स्वयम् ॥ यः क्षत्रबंधुः परिभूय सूरीन्प्रशास्ति धृष्टस्तदयं हि दंड्यः ॥ १३ ॥ नायमर्हति वैकुंठपादमूलोपसर्पणम् ॥ संभावित मतिः स्तब्धः साधुभिः पर्युपासितम् ॥ १४ ॥ अतः पापीयसीं योनिमासुरीं याहि दुर्मते ॥ यथेह भूयो महतां न कर्ता पुत्र किल्बिषम् ॥ १५ ॥ श्रीशुक उवाच ॥ एवं शप्तश्चित्रकेतुर्विमानादवरुह्य सः ॥ प्रसादयामास सतीं मूर्ध्ना नम्रेण भारत ॥ १६ ॥ चित्रकेतुरुवाच ॥ प्रतिगृह्णामि ते शापमात्मनोंजलिनाऽम्बिके ॥ देवैर्मर्त्याय यत्प्रोक्तं पूर्वदिष्टं हि तस्य तत् ॥ १७ ॥ संसारचक्र एतस्मिञ्जंतुरज्ञानमोहितः ॥ भ्राम्यन्सुखं च दुःखं च भुंक्ते सर्वत्र सर्वदा ॥ १८ ॥ नैवात्मा न परश्चापि कर्ता स्यात्सुखदुःखयोः ॥ कर्तारं मन्यते प्राज्ञ आत्मानं परमेव च ॥ १९ ॥

हमित्यभिमानवते । इति रुषा क्रोधेनाह ॥ १० ॥ विरुद्धं प्रकर्षेण करोतीति विप्रकृत् ॥ ११ ॥ अतिवर्तिनं शास्त्रमतिक्रम्य वर्तनशीलं ये नो निषेधंति न निवारयंति ॥ ॥ १२ ॥ एषां ब्रह्मादीनामनुध्येयं पदाब्जयुग्मं यस्य तम् । मंगलमंगलं परमधर्ममूर्तिम् । सूरीन्परिभूयाज्ञात्कृत्वा जगद्गुरुं यः प्रशास्ति तत्तस्मात् ॥ १३ ॥ ननु हरिभक्तोऽयं न दंडार्ह इति चेत्तत्राह । नायं साधुभिः परिषेवितं वैकुंठस्य पादमूलोपसर्पणमर्हति । यतः संभाविता अहमधिक इति कृता मतिर्येन । अत एव स्तब्धोऽनम्रः ॥ १४ ॥ तदेवं स्वयं दंड्यत्वं निश्चित्य तं प्राह । अत इति । हे पुत्र यथा भूयो महतां किल्बिषमपराधं न कर्ता न करिष्यसि तथा याहीत्यर्थः ॥ १५ ॥ १६ ॥ पूर्वदिष्टं प्राचीनकर्मप्राप्तमेव ॥ १७ ॥ अयं च संसारचक्रस्वभाव एव न चित्रमित्याह । संसारचक्र इति ॥ १८ ॥ अत एवात्र मम च तव न कोऽपि दोष इत्याह । नैवेति ॥ १९ ॥

तादृशलोकचारित्रेणाच्छादितं यन्महाभागवतत्वं तदज्ञातारि । धृष्टायेति "क्रुधद्रुह–" इत्यादिना चतुर्थी । इति वक्ष्यमाणम् ॥ १० ॥ किंच स्त्रीनिमित्तासत्कारपरिहारः स्त्रियैव कार्य इति परमेश्वराभिप्रायं जानती सत्याह–अयमिति ॥ ११ ॥ १२ ॥ मंगलानां कल्याणहेतूनां धर्माणां मंगलं रक्षकम् "कल्याणे मंगलं प्रोक्तं सर्वतो रक्षकेऽपि च" इति हलधरात् । सूरीन्सर्वज्ञान्ब्रह्मादीन् । विद्वदपमानकर्तृत्वात्सर्वथा दंडार्होऽयमिति भावः ॥ १३ ॥ अत्राक्षिपति–नन्विति । पादमूले उपसर्पणं प्राप्तिम् । अत एव संभावितमतित्वादेव ॥ १४ ॥ इत्यर्थ इति । तद्धितकरणात्पुत्रेति संबोधनं यथा माता बहिर्गच्छंतं बालं पुत्र बहिर्व्याघ्रोऽटति तत्र न गंतव्यमिति तं निवार्य तद्धितं करोति रुदंतं कंचित्कुमारं श्रुत्वा पीडितोऽयं व्याघ्रेणातोऽत्रैव क्रीडेति वदति च । इत्थं शापरूपभयप्रदर्शनेन पुनर्महदवहेलनं करिष्यस्ययमित्यतस्तजन्यदुःखनिवारणकर्त्रीत्वेन हितकर्त्रीत्वात्तया युक्तमुक्तं पुत्रेति । यद्वा–जगन्मातृत्वान्मम भवतश्च जगदंतर्गतत्वान्मत्पुत्रोऽसि त्वमतस्तवैतत्कथनं सर्वथाऽनुचितं न हि पुत्रो दुश्चरिताया अपि मातुर्दुश्चरणं प्रकाशयतीति भावः । अत्र संदर्भस्तु–तं भीतं मत्वा सकृपमाह–यथेति । एतदपराधबीजेन पुनस्तु पूर्ववन्महदपराधं न जनयिष्यतीति पुत्रेति ॥ १५ ॥ भारतेति । शुद्धकुलजानामयं स्वाभाविको धर्मो यथा भरतेन शकुंतलया विनीत्र श्रीकण्वानुज्ञासंकेतः कृतस्ततः सोऽपि प्रसादित इति भावः ॥ १६ ॥ अंबिके इति । मातृदत्तवस्तुनोञ्जलिनैव ग्रहणमुचितमिति भावः । नात्र मम दोषोऽस्ति पूर्वदिष्टेनैव ममैषा बुद्धिर्जातेति भावः । यद्वा–तवाप्यत्र दोषो नास्ति पुरुषस्य यत्प्राक्तनं कर्म तद्वशेनैव देवा वदंति शुभाशुभमिति भावः ॥ १७ ॥ अयं च सुखदुःखादिलक्षणः । सर्वत्र जन्मसु ॥ १८ ॥ अत एव सुखदुःखयोः संसारचक्रस्वभावत्वादेव । प्रकर्षेणाज्ञः प्राज्ञः । यद्वा–प्रकृष्टः

गुणप्रवाह एतस्मिन्कः शापः को न्वनुग्रहः ॥ कः स्वर्गो नरकः को वा किं सुखं दुःखमेव वा ॥२०॥ एकः सृजति भूतानि भगवानात्ममायया ॥ एषां बंधं च मोक्षं च सुखं दुःखं च निष्कलः ॥ २१ ॥ न तस्य कश्चिद्दयितः प्रतीपो न ज्ञातिबंधुर्न परो न च स्वः ॥ समस्य सर्वत्र निरंजनस्य सुखेन रागः कुत एव रोषः ॥ २२ ॥ तथाऽपि तच्छक्तिविसर्ग एषां सुखाय दुःखाय हिताहिताय ॥ बंधाय मोक्षाय च मृत्युजन्मनोः शरीरिणां संसृतयेऽवकल्पते ॥ २३ ॥ अथ प्रसादये न त्वां शापमोक्षाय भामिनि ॥ यन्मन्यसे असाधूक्तं मम तत्क्षम्यतां सति ॥ २४ ॥

एवं तावत्सुखदुःखादिकमंगीकृत्योक्तमिदानीं तदपि वस्तुतो नास्तीत्याह।गुणानां मायामयानां प्रवाहे संसारे ॥ २० ॥ ननु मायागुणानां चेदयं प्रवाहस्तर्हि तेषां जडत्वाद्बंधमोक्षाद्यनुभवो न स्यात्तत्राह । एकः परमेश्वरो मायया निमित्तभूतया भूतानि प्राणिनः सृजति । एषां बंधादिकं च सृजति।निष्कलः स्वयं बंधादिशून्यः ॥२१॥ नन्वेवंभूतविषमसृष्टौ तस्य किं कारणं प्रियादिवैषम्याभावादित्याशंक्य यद्यपि प्रियादयो न संति तथापि तत्तत्कर्मवशात्सर्वं घटत इत्याह न तस्येति द्वाभ्याम् ॥ प्रतीपोऽप्रियः।न ज्ञातिर्बंधुश्चेत्यर्थः । तत्र हेतुः । सर्वत्र समस्य । तत्कुतः । निरंजनस्य निःसंगस्य । अत एव तन्निमित्ते सुखे रागो नास्ति रागानुबंधी रोषः कुतः स्यात् ॥२२॥ यद्यप्येवं तथाऽपि तस्य शक्त्या मायया यो विसर्गः पुण्यपापादिलक्षणं कर्म एषां शरीरिणां सुखाद्यर्थमवकल्पते समर्थो भवति । यथोक्तं गीतासु । "भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥" इति ॥ २३ ॥ अथ तस्माद्भामिनि हे कोपने त्वां केवलं प्रसादयामि न तु शापमोक्षाय । तर्हि किं प्रसादनेनात आह । ममोक्तमुक्तिं साध्वप्यसाधुवन्मन्यसे

अः वासुदेवः तं जानातीति प्राज्ञः श्रीहरितत्त्वज्ञः । परमात्मानं श्रीहरिमेव कारणं मन्यते "अप्रतर्क्यादनिर्देश्यादिति केष्वपि निश्चयः" इति परीक्षितं प्रति धर्मोक्तेः ॥ १९ ॥ तदपि सुखाद्यपि । विचारे क्रियमाणे वस्तुतोऽसंगस्यात्मनो न शापादिस्पर्शोऽस्ति तेषां मायिकत्वादिति भावः ॥ २० ॥ अत्राक्षिपति–नन्विति ॥ २१ ॥ पुनराक्षिपति–नन्विति । एवंभूतविषमसृष्टौ सुखदुःखादियुक्तविषमसृष्टिकरणे । तस्य हरेः । इत्यर्थ इति । ज्ञात्या सहितो बंधुरिति समासोऽत्र कार्य इति भावः । तत्र दयितत्वाद्यभावे । तत्सर्वत्र समत्वम् । अत एव निःसंगत्वादेव । तन्निमित्ते प्रियत्वादिहेतुके । रागानुबंधी यत्र रागोऽस्ति तत्रैव कदाचित्किंचिद्द्वेष्याद्दोषस्यावश्यंभावित्वमेव 'कामात्क्रोधोऽभिजायते' इत्याद्युक्तेः ॥ २२ ॥ यद्यप्येवं विशेषतो रागादि नास्ति कर्म्मैव सुखादिहेतुरत्र प्रमाणमाह–तदुक्तमिति । भूतानां भवनधर्मकाणां सर्वेषां स्थावरजंगमानां भावमुत्पत्तिमुद्भवं वृद्धिं च करोति यो विसर्गस्त्यागस्तत्तच्छास्त्रविहितो यागहोमात्मकः स इह कर्मसंज्ञितः कर्मशब्देनोक्त इति यावत् । तत्र देवतोद्देशेन द्रव्यत्यागो याग उत्तिष्ठद्धोमो वषट्कारप्रयोगांतः स एव उपविष्टहोमः स्वाहाकारप्रयोगांतः आसेचनपर्यंतो होमः परस्वत्वापत्तिपर्यंतः स्वस्वत्वत्यागो दानं सर्वत्र च त्यागांशोऽनुगतः तस्य च भूतभावोद्भवकरत्वम् "अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥" इति स्मृतेः । "ते वा एते आहुती हुते उत्क्रामतः" इत्यादिश्रुतेश्च । उत्क्रामत आदित्यं प्राप्नुत इत्यर्थः ॥ २३ ॥ भामिनीति । सत्यवचने क्रोधो न युक्त इति भावः । अत्रार्षं "एङः पदांतादति"

श्रीशुक उवाच ॥ इति प्रसाद्य गिरिशौ चित्रकेतुररिंदम ॥ जगाम स्वविमानेन पश्यतोः स्मयतोस्तयोः ॥ २५ ॥ ततस्तु भगवान्रुद्रो रुद्राणीमिदमब्रवीत् ॥ देवर्षिदैत्यसिद्धानां पार्षदानां च शृण्वताम् ॥ २६ ॥ श्रीरुद्र उवाच ॥ दृष्टवत्यसि सुश्रोणि हरेरद्भुतकर्मणः ॥ महात्म्यं भृत्यभृत्यानां निःस्पृहाणां महात्मनाम् ॥ २७ ॥ नारायणपराः सर्वे न कुतश्चन बिभ्यति ॥ स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः ॥ २८ ॥ देहिनां देहसंयोगाद्द्वंद्वानीश्वरलीलया ॥ सुखं दुःखं स्मृतिर्जन्म शापोऽनुग्रह एव च ॥२९॥ अविवेककृतः पुंसो ह्यर्थभेद इवात्मनि ॥ गुणदोषविकल्पश्च भिदेव स्रजिवत्कृतः ॥ ३० ॥ वासुदेवे भगवति भक्तिमुद्वहतां नृणाम् ॥ ज्ञानवैराग्यवीर्याणां नेह कश्चिद्व्यपाश्रयः ॥ ३१ ॥ नाहं विरिंचो न कुमारनारदौ न ब्रह्मपुत्रा मुनयः सुरेशाः ॥ विदाम यस्येहितमंशकांशका न तत्स्वरूपं पृथगीशमानिनः ॥ ३२ ॥

तत्त्वया क्षम्यताम् ॥ २४ ॥ गिरिशौ भवानीशंकरौ प्रसाद्य स्मयतोर्विस्मयं कुर्वतोः सतोः ॥ २५ ॥ २६ ॥ २७ ॥ स्वर्गादावेव तुल्योऽर्थः प्रयोजनमिति द्रष्टुं शीलं येषां ते तथा ॥ २८ ॥ तत्र तदुक्तमेव हेतुमाह द्वाभ्याम् ॥ देहिनां सुखं दुःखमित्यादिद्वंद्वानीश्वरस्य लीलया मायया भवंति । तेषु च गुणदोषविकल्पश्चे त्यन्वयः ॥ २९ ॥ इष्टानिष्टभेद इव यः स्फुरति स आत्मन्यर्थभेदः सुखादिभेदः पुंसः स्वप्ने यथा अविवेककृतो भवति स्रजिवत्सर्पमालादिभिर्यथा तथैव कृत इत्यर्थः । स्रग्वदिति वक्तव्ये स्रजिवदित्यार्षम् । पाठांतरे तु सुगमम् ॥ ३० ॥ अतो भागवतानां निःस्पृहत्वमुचितमेवेत्याह । वासुदेव इति । ज्ञानवैराग्ययोर्वीर्यं बलं येषां तेषां व्यपाश्रयो विशिष्टबुद्ध्या आश्रयणीयोऽर्थो नास्तीति ॥३१॥ अस्य च हरिदासत्वेन तत्स्वभावत्वान्नैतच्चित्रमिति वक्तुं हरेर्माहात्म्यमाह नाहमिति द्वाभ्याम् । ईहितमभिप्रायं

इत्यस्य बाधः । हे सतीति । क्रोधिनो दक्षस्य पुत्र्या उचितमेवैतदिति भावः । यद्वा—न हि साध्वीनामेतदुचितमिति भावः । 'सती साध्वी पतिव्रता' इत्यमरः ॥२४॥ हे अरिंदमेति । त्वयापि क्रोधः सर्वथा दमनीय एव मददमनफलस्य दृष्टसांप्रतिकप्रभावत्वादिति भावः ॥ २५ ॥ ततस्तद्गमनानंतरम् ॥ २६ ॥ दृष्टवत्यसि भवच्छापेऽपि भयाभावेन तर्कितवत्यसि किम् । हे सुश्रोणीति । तद्वैमनस्यापाकरणार्थं हास्याभिप्रायैव संबुद्धिः । माहात्म्यं देहवियोगलक्षणावस्थाप्राप्तावप्यत्रासलक्षणम् ॥ २७ ॥ न केवलमस्यैवैतादृशं माहात्म्यमपि त्वन्येषामपीत्याह—नारायणपरा इति । तुल्यमेकमेवार्थं नारायणरूपं पुरुषार्थं द्रष्टुमनुभवितुं शीलं येषां ते स्वामिव्याख्याने प्रयोजनं भगवद्भक्तिरेव सर्वत्र श्रेयसीत्येवं विमर्शलक्षणं ज्ञेयम् "यत्र कुत्र सतश्चेतो भूयान्मे त्वत्पदास्पदम्" इत्युक्तन्यायेन "कामं भवः स्ववृजिनैर्निरयेषु नः स्ताच्चेतोलिवद्यदि नु ते पदयो रमेत" इति सनकाद्युक्तेश्च ॥२८॥ तत्र तुल्यार्थदर्शने । तदुक्तं तेन चित्रकेतुना "गुणप्रवाह एतस्मिन्कः शापः को न्वनुग्रहः" इत्यादिनोक्तमेव तदेव तेषां सर्वत्रेश्वरस्फूर्त्या भयाभावो दर्शितः । विचारेण तु नास्त्येव भयमिति तद्वाक्येनैव दर्शयति—देहिनामिति । ईश्वरलीलया तदीक्षणादिलीलालब्धबलया मायया भवंतीत्यर्थः ॥ २९ ॥ तेषु द्वंद्वेषु गुणदोषविकल्पश्चेत्यन्वयः । इत्यर्थ इति । यथा वस्तुतः स्रजि रज्जौ सर्पादि नास्ति तथात्मनि सुखाद्यपि नेति भावः । आत्मनोऽज्ञानकृतत्वात्तत्स्फूर्तेः । स्रजीति सप्तमी । भिदेति टाबंतम् । पाठांतरे स्रजि सर्पवदिति पाठे । स्रजि तत्कृत इत्येवंरूपे वा । अत्र तत्कृतोऽविवेककृत इत्यर्थः । दर्शितश्चैतत्पाठांतरश्चक्रवर्त्तिबालबोधिनीकाराभ्याम् । मम त्वित्थं प्रतिभाति पुंस आत्मन्यधिष्ठाने भिदा भेदो नानाबुद्धिरर्थभेद इव मृदि घटशरावादिभेद इव च पुनः गुणदोषविकल्प इवायं घटः शोभनोऽयमशोभन इतीवाविवेककृतोऽधिष्ठानाज्ञानविजृंभित एव । "किं भद्रं किमभद्रं वा द्वैतस्यावस्तुतः कियत्" इति श्रीकृष्णोक्तेः । किंवत्कृतः स्रजिवत्कृतः । अत्र तद्धिते सप्तम्या अलुक् । यथा मालायां सर्परेखारज्जुखंडाद्यर्थभेदस्तद्गुणदोषविकल्पश्च मालाऽज्ञानविजृंभित एव न तात्त्विकस्तद्वदात्मन्याकाशादिनानाधीः शोभनेयं भूरशोभनेयं भूरिति गुणदोषादिविकल्पो न तात्त्विक इति भावः ॥ ३० ॥ यतः सर्वमतात्त्विकमेवातो हेतोः ॥ ३१ ॥ अस्य चित्रकेतोश्च । तत्स्वभावत्वान्निः

नह्यस्यास्ति प्रियः कश्चिन्नाप्रियः स्वः परोऽपि वा ॥ आत्मत्वात्सर्वभूतानां सर्वभूतप्रियो हरिः ॥ ३३ ॥ तस्य चायं महाभागश्चित्रकेतुः प्रियो ऽनुगः ॥ सर्वत्र समदृक् शांतो ह्यहं चैवाच्युतप्रियः ॥३४॥ तस्मान्न विस्मयः कार्यः पुरुषेषु महात्मसु ॥ महापुरुषभक्तेषु शांतेषु समदर्शिषु ॥३५॥ श्रीशुक उवाच ॥ इतिश्रुत्वा भगवतः शिवस्योमाभिभाषितम् ॥ बभूव शांतधी राजन्देवी विगतविस्मया ॥ ३६ ॥ इति भागवतो देव्याः प्रति शप्तुमलंतमः ॥ मूर्ध्ना संजगृहे शापमेतावत्साधुलक्षणम् ॥ ३७॥ जज्ञे त्वष्टुर्दक्षिणाग्नौ दानवीं योनिमाश्रितः ॥ वृत्र इत्यभिविख्यातो ज्ञानविज्ञानसंयुतः ॥ ३८ ॥ एतत्तेसर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ वृत्रस्यासुरजातेश्च कारणं भगवन्मतेः ॥ ३९ ॥ इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः ॥ माहात्म्यं विष्णुभक्तानां श्रुत्वा बंधाद्विमुच्यते ॥ ४० ॥ य एतत्प्रातरुत्थाय श्रद्धया वाग्यतः पठेत् ॥ इतिहासं हरिं स्मृत्वा स याति परमां गतिम् ॥ ४१ ॥ इति श्रीभागवते म० षष्ठस्कंधे चित्रकेतुशापनिरूपणं नाम सप्तदशोऽध्यायः ॥ १७ ॥

लीलां वा यदा वयं न विद्मस्तदा तस्य स्वरूपमंशकांशका अपि संतः पृथगीशमानिनो न विदुरेव ॥ ३२ ॥ अत एव हरिरपि सर्वेषां भूतानां प्रियः ॥ ३३ ॥ अयं चैवाच्युतस्य प्रियः तस्मान्ममास्मिन् क्रोधो नाभूदिति भावः ॥ ३४ ॥ ३५ ॥ ३६ ॥ प्रतिशप्तुं प्रतिशापं दातुमलंतमः समर्थतमोऽपि ॥ ३७ ॥ ३८ ॥ असुरजातेरसुरभावेनोत्पत्तेर्भगवति मतेश्च ॥ ३९ ॥ ४० ॥ एतदेतम् ॥ ४१ ॥ इति श्रीभा० षष्ठस्कंधे टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ छ ॥

स्पृहस्त्वभावत्वात्स्वाभाविकविवेकवत्त्वाद्वा।एतच्छापादिग्रहणम् । वयं तत्स्वरूपा अपि यदि न जानीमस्तदांशस्य प्रकृत्यधिष्ठातुः पुरुषस्यांशका अन्ये इंद्रवरुणादयः कथं विदुर्न कथमपीति भावः।भक्ताश्च तर्हि सर्वे विदुरेवेत्यर्थः। "स वेद धातुः पदवीं परस्य दुरंतवीर्यस्य रथांगपाणेः । यो मायया संततयाऽनुवृत्त्या भजेत तत्पादसरोजगंधम् ॥" इत्युक्तेः । "येषां स एव भगवान्दययेदनंतः सर्वात्मनाश्रितपदो यदि निर्व्यलीकम् । ते वै विदंत्यतितरंति च देवमायाम् " इत्युक्तेश्च ॥ ३२ ॥ अत एव सर्वभूतानामात्मत्वादेव ॥ ३३ ॥ इति भाव इति । चित्रकेतुर्हि मम स ब्रह्मचार्यस्ति स च ममातीव प्रियस्ततस्तत्र क्रोधोदयः कथं भवेदित्याशयः । तस्य हरेः ॥ ३४ ॥ यतो हरिभक्ताः समदर्शिनस्तस्माद्धेतोः । तत्र चाहमपि समदृक् शांतश्च सन्नच्युतप्रियः अतो ममान्यत्रासक्तत्वाल्लौकिकलज्जायनादराच्च सभायां भवत्यालिंगनमपि न संकोचहेतुरिति भावः ॥ ३५ ॥ हे राजन्निति । हरिभक्त्या त्वमतिराजस एव न स्त्रसिंमस्तद्भक्तिश्रवणेनानादतो भवेति भावः ॥ ३६ ॥ पूर्वं धृष्टायेत्यादिना निंदितं संप्रति त्वेतावत्साधुलक्षणमिति स्तुतं तच्च तस्य व्यवहृताव साधुत्वसाधुत्वमवलंब्योक्तत्वान्न विरुद्धम् । अत एवाग्रे वक्ष्यते "इतिहासमिमं पुण्यं चित्रकेतोर्महात्मनः" इति । असुरजातेः कारणं महदपराधो भगवन्मतेः कारणं महदनुग्रह इति ॥ ३७ ॥ "अग्निर्वै ब्राह्मणः" इति श्रुतेरग्नेरुत्पन्नत्वात्तस्यापि ब्राह्मणत्वमत एवोक्तम् । "ब्रह्महत्या हते तस्मिन्नाससाद वृषाकपिम्" इति "स चिंतयन्ब्रह्मवधाद्विमोक्षम्" इति च ॥ ३८ ॥ ३९ ॥ ४० ॥ एतदेतमितिहासं हरिं स्मृत्वा पठेत् ॥ ४१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

श्रीशुक उवाच ॥ पृश्निस्तु पत्नी सवितुः सावित्रीं व्याहृतिं त्रयीम् ॥ अग्निहोत्रं पशुं सोमं चातुर्मास्यं महामखान् ॥ १ ॥ सिद्धिर्भगस्य भार्याङ्ग महिमानं विभुं प्रभुम् ॥ आशिषं च वरारोहां कन्यां प्रासूत सुव्रताम् ॥ २ ॥ धातुः कुहूः सिनीवाली राका चानुमतिस्तथा ॥ सायं दर्शमथ प्रातः पूर्णमासमनुक्रमात् ॥ ३ ॥ अग्नीन्पुरीष्यानाधत्त क्रियायां समनंतरः ॥ चर्षणी वरुणस्यासीद्यस्यां जातो भृगुः पुनः ॥ ४ ॥ वाल्मीकिश्च महायोगी वल्मीकादभवत्किल ॥ अगस्त्यश्च वशिष्ठश्च मित्रावरुणयोर्ऋषी ॥ ५ ॥ रेतः सिषिचतुः कुंभे उर्वश्याः सन्निधौ द्रुतम् ॥ रेवत्यां मित्र उत्सर्गमरिष्टं पिप्पलं व्यधात् ॥ ६ ॥

आदित्यानां चतुर्थस्य त्वष्टुर्वंशप्रसंगतः ॥ प्रोक्तमिंद्रकृतं विश्वरूपवृत्रवधादिकम् ॥ १ ॥ अदितेः पंचमादीनां पुत्राणामन्वयोक्तिभिः ॥ अष्टादशे दितेर्गर्भे शक्रेण मरुता भिदा ॥२॥ त्वष्टुर्वंशमनुक्रम्य सप्रसंगं यथाक्रमम् ॥ आदित्यानामथान्येषां वंशानाह मुनीश्वरः ॥३॥ दक्षकन्यान्वयानुकथने अदित्या द्वादश पुत्राः प्रोक्ताः । 'विवस्वानर्यमा पूषा त्वष्टाऽथ सविता भगः ॥ धाता विधाता वरुणो मित्रः शक्र उरुक्रमः ॥' इति । तत्र षष्ठाध्यायांतमारभ्य विश्वरूपवृत्रचित्रकेतूपाख्यानैस्त्वष्टुर्वंशमनुवर्ण्येदानीं सवितुर्वंशमाह । पृश्निस्त्विति । सावित्रीमित्यादिषु प्रासूतेत्युत्तरस्यानुषंगः । पशुं पशुयागम् । महामखान्पंचयज्ञान् ॥ १ ॥ २ ॥ धातुर्भार्या कुहूः सायं पुत्रं प्रासूत । एवं सिनीवाली दर्शमित्याद्यनुक्रमात् ॥ ३ ॥ समनंतरो विधाता क्रियायां भार्यायां पुरीष्यानग्नीन्पंचचित्तीन् ॥ "पुरीष्यासो अग्नय इति पंच वा एतेऽग्नयो यच्चित्तयः" इति श्रुतेः । चर्षणी वरुणस्य भार्याऽऽसीत् । पूर्वं ब्रह्मणः पुत्रो भृगुर्यस्यां पुनर्जातः ॥४॥ वाल्मीकिर्वरुणस्यैव पुत्रोऽभवत् । एतौ वरुणस्यासाधारणौ पुत्रौ । तथोत्सर्गादयोऽपि मित्रस्यासाधारणाः । तयोरेव साधारणौ द्वौ पुत्रावाह । अगस्त्यश्च वशिष्ठश्च ऋषी मित्रावरुणयोरभवताम् ॥ ५ ॥ यत उभावपि कुंभे रेतः सिषिचतुः "सत्रे ह जाता

आदित्यानामदितिपुत्राणां मध्ये ( १ ) पञ्चमादीनां सवित्रादीनाम् ( २ ) मुनीश्वरः श्रीशुकः ( ३ ) सावित्रीं गायत्र्यभिमानिनीं देवताम् । व्याहृतिं तदभिमानिनीम् । एवं त्रयीं वेदत्रयाभिमानिनीं च । एवमग्रेपि ज्ञेयम् । चातुर्मास्यो यागविशेषः । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इति श्रुतेरग्निहोत्रपशुसोमा अपि यागभेदा एव । पंचयज्ञास्तु–"पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः । एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः" ॥ ब्रह्मयज्ञो देवयज्ञो नृयज्ञः पितृयज्ञो भूतयज्ञश्च । "अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥" इति स्मृतेः ॥१॥ अंगेति । प्रियत्वाद्व्यवहितमपि वदिष्यामीति भावः । महिमादयस्त्रयः पुत्राः आशीराख्यैका कन्या च ॥२॥३॥ पुरीष्यसंज्ञकाः पञ्च । अत्र श्रुतिं प्रमाणयति–स्पष्टार्था श्रुतिः ॥४॥ एतौ भृगुवाल्मीकी उत्सर्गादयो वक्ष्यमाणा रेवत्यामित्यादिना तयोर्मित्रावरुणयोः ॥ ६ ॥ उभौ मित्रावरुणौ । अत्र श्रुतिं प्रमाणयति–सत्रे हेति । श्रुत्यर्थस्तु पाठांतरसंदेहान्न कृतः 'सत्रेह जाताविषिनामनो मे' इति पाठः प्राचीनपुस्तके

पौलोम्यामिंद्र आधत्त त्रीन्पुत्रानिति नः श्रुतम् ॥ जयंतमृषभं तात तृतीयं मीढुषं प्रभुः ॥ ७ ॥ उरुक्रमस्य देवस्य मायावामनरूपिणः ॥ कीर्तौ पत्न्यां बृहच्छ्लोकस्तस्यासन्सौभगादयः ॥ ८ ॥ तत्कर्मगुणवीर्याणि काश्यपस्य महात्मनः ॥ पश्चाद्वक्ष्यामहेऽदित्यां यथैवावततार ह ॥ ९ ॥ अथ कश्यपदायादान्दैतेयान्कीर्तयामि ते ॥ यत्र भागवतः श्रीमान्प्रह्लादो बलिरेव च ॥ १० ॥ दितेर्द्वावेव दायादौ दैत्यदानववंदितौ ॥ हिरण्यकशिपुर्नाम हिरण्याक्षश्च कीर्तितौ ॥ ११ ॥ हिरण्यकशिपोर्भार्या कयाधुर्नाम दानवी ॥ जंभस्य तनया दत्ता सुषुवे चतुरः सुतान् ॥ १२ ॥ संह्लादं प्रागनुह्लादं ह्लादं प्रह्लादमेव च ॥ तत्स्वसा सिंहिका नाम राहुं विप्र चितोऽग्रहीत् ॥ १३ ॥ शिरोऽहरद्यस्य हरिश्चक्रेण पिबतोऽमृतम् ॥ संह्लादस्य कृतिर्भार्याऽसूत पंचजनं ततः ॥ १४ ॥ ह्लादस्य धमनिर्भार्याऽसूत वातापिमिल्वलम् ॥ योऽगस्त्याय त्वतिथये पेचे वातापिमिल्वलम् ॥ १५ ॥ अनुह्लादस्य सूर्म्यायां बाष्कलो महिषस्तथा ॥ विरोचनस्तु प्राह्लादिर्देव्यास्तस्याभवद्बलिः ॥ १६ ॥ बाणज्येष्ठं पुत्रशतमशनायां ततोऽभवत् ॥ तस्यानुभावः सुश्लोक्यः पश्चादेवाभिधास्यते ॥ १७ ॥

विशिता नमोभिः कुंभे रेतः सिषिचतुः समानम्” इति श्रुतेः । द्रुतं स्कन्नम् ॥६॥७॥८॥ पश्चादष्टमस्कंधे॥९॥ अथेति। कश्यपस्यादितेः पुत्राणां द्वादशादित्यानां संततिमुक्त्वा दितेः पुत्रान्कथयामीत्यर्थः ॥ १० ॥ हिरण्यकशिपुर्हिरण्याक्षश्चेति प्रथमं द्वावेव तौ च कीर्तितौ तृतीयस्कंधे ॥११॥१२॥ विप्रचितो दानवाद्भर्तुः सकाशाद्राहुं पुत्रमग्रहीत् ॥ १३ ॥ ततः संह्लादादसूत ॥ १४ ॥ यो मेषरूपं वातापिमगस्त्यार्थं पेचे तमिल्वलम् । यं पेचे तं वातापिं चासूतेत्यन्वयः ॥ १५ ॥ १६ ॥ ततो बलेः सकाशादभवत् । तस्य बलेरनुभावः सुश्लोक्यः पुण्यकीर्त्यर्हः । यद्वा पाठान्तरेनुभाव्यते सद्भिः स्तूयत इत्यनुभावम् । सुश्लोक्यं यश इति शेषः । पश्चादष्टमस्कंधे ॥१७॥

ष्वस्ति । 'विषितानमोभिः' इति पाठोंकितपुस्तकेस्ति ॥ ६ ॥ तातेति । श्रोतृश्रद्धाधिक्यदर्शनात्संबुद्धिः ॥ ७ ॥ तस्य बृहच्छ्लोकस्य । आदिपदोक्ताः पुराणांतरगम्याः ॥ ८ ॥ काश्यपस्य तत्तस्य वामनस्य । यद्वा--कश्यप एव काश्यपस्तस्य पत्न्यां यथोरुक्रमोऽवततार तस्य कर्मादीनिति ॥ ९ ॥ अथादितिसंततिवर्णनोत्तरम् । ननु दैत्यवंशस्य कल्याणानुपयुक्तत्वात्तद्वर्णनमयुक्तमत्रेति चेदाह—यत्रेति । यत्र दितिसंततौ । प्रह्लादबलिचरितश्रवणस्य श्रेयस्साधनत्वात्तद्वर्णनं युक्तमेव “दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वानुभावमकुतोभयमेति लोकम्” इति सप्तमस्कंधोक्तेः “उरुक्रमस्य चरितं श्रोतॄणामघनाशनम्” इत्यष्टमस्कंधे बलिचरितांतोक्तेश्च ॥ ॥ १० ॥ “दायादौ पुत्रबांधवौ” इत्यभिधानात् दायादौ पुत्रौ ॥ ११ ॥ जम्भेन दत्ता ॥ १२ ॥ तत्स्वसा हिरण्यकशिपोर्भगिनी “दितेः सुतो हिरण्याक्षो हिरण्यकशिपुस्तथा । कन्या च सिंहिका नाम बभूव कुरुसत्तम ॥” इति पुराणांतरोक्तेः ॥ १३ ॥ यस्य राहोः ॥ १४ ॥ वातापेर्ब्रह्मवरोस्ति मेषरूपिणं त्वां भक्षितं यदि कश्चिदाह्वयेत्तदा त्वं भक्षितुर्देहं विदार्य स्वरूपेण बहिरायास्यसीति महाभारते वर्णितमगस्त्योपाख्याने तौ चेल्वलवातापी ब्राह्मणकुलहनने प्रवृत्तौ महामुनिनाऽगस्त्येन तयोर्वातापिर्भक्षित्वा जीर्णतां नीतः इल्वलश्च स्वहनने प्रवृत्तो हुंकारेण भस्मसात्कृत इति श्रीवाल्मीकीयेऽपि वर्णितमित्यभिप्रेत्येवाह—योऽगस्त्यायेति ॥ १५ ॥ तस्य विरोचनस्य दर्वीनाम्न्या भार्यायाः सकाशात् ॥ १६ ॥ यद्वेत्यस्य स्थाने पाठांतरे इत्यपेक्षितमिति भाति । तच्च 'तस्यानुभावं सुश्लोक्यम्' इत्येवं रूपम् । अभिधास्यते कथ्यते व्यासेन द्वितीयांतपक्षे व्यास इति कर्तृप

बाण आराध्य गिरिशं लेभे तद्गणमुख्यताम् ॥ यत्पार्श्वे भगवानास्ते ह्यद्यापि पुरपालकः॥१८॥ मरुतश्च दितेः पुत्राश्चत्वारिंशन्नवाधिकाः ॥ त आसन्नप्रजाः सर्वे नीता इंद्रेण सात्मताम् ॥ १९ ॥ राजोवाच ॥ कथं त आसुरं भावमपोह्यौत्पत्तिकं गुरो ॥ इंद्रेण प्रापिताः सात्म्यं किं तत्साधुकृतं हि तैः ॥ २० ॥ इमे श्रद्दधते ब्रह्मन्नृषयो हि मया सह ॥ परिज्ञानाय भगवंस्तन्नो व्याख्यातुमर्हसि ॥ २१ ॥ सूत उवाच ॥ तद्विष्णुरातस्य स बादरायणिर्वचो निशम्यादृतमल्पमर्थवत् ॥ सभाजयन्संनिभृतेन चेतसा जगाद सत्रायण सर्वदर्शनः ॥ २२ ॥ श्रीशुक उवाच ॥ हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ॥ मन्युना शोकदीप्तेन ज्वलंती पर्यचिंतयत् ॥ २३ ॥ कदा नु भ्रातृहंतारमिंद्रियाराममुल्बणम् ॥ अक्लिन्नहृदयं पापं घातयित्वा शये सुखम् ॥ २४ ॥ कृमिविड्भस्मसंज्ञासीद्यस्येशाभिहितस्य च ॥ भूतध्रुक्तत्कृते स्वार्थं किं वेद निरयो यतः ॥ २५ ॥

तस्य गणेषु मुख्यतां प्राधान्यम् ॥ १८ ॥ सात्मतां समानरूपताम् ॥ १९ ॥ सात्म्यं देवत्वं प्रापिताः ॥ २० ॥ २१ ॥ आदृतं सादरम् । अल्पं मिताक्षरम् । अर्थवद्बह्वर्थयुक्तम् । सत्रमयनमाश्रयो यस्य हे सत्रायण शौनक ॥ २२ ॥ शक्रस्य पार्ष्णिग्राहेण पृष्ठतः सहायेन ॥ २३ ॥ भ्रातृहंतारमिंद्रं मारयित्वा सुखं शये स्वपिमि सुखिनी कदा स्यामिति चिंतयामास दितिः । उल्बणं क्रूरम् । अक्लिन्नहृदयं कठिनचित्तम् ॥ २४ ॥ ननु राजा स्वदेहरक्षार्थमन्येषां घातं करोत्येव किमत्र चित्रं तत्राह

दमध्याहार्यम् ॥ १७ ॥ तस्य गिरिशस्य । भगवान् गिरिश एव ॥ १८ ॥ अप्रजाः संततिहीनाः ॥ १९ ॥ अपोह्य त्याजयित्वा । हे गुरो इति । संदिग्धोर्थो हि गुरुत एव पृच्छयते इति भावः । पुराणवक्तुर्हि बृहन्नारदीयेऽष्टादशगुरुषु मुख्यत्वमुक्तम् "उपाध्यायः पिता माता ज्येष्ठभ्राता महीपतिः । मातुलश्वशुरौ चाथ मातामहपितामहौ ॥ वर्णज्येष्ठः पितृव्यश्चोपनेता ह्यन्नदस्तथा । भयत्राता हितकरो गुरुभ्रातृसुतौ तथा ॥ पुराणश्राविता चैते पुंसोऽत्र गुरवो मताः । पुराणश्राविता चैषु मुख्यो गुरुरुदाहृतः ॥ धर्माधर्मोपदेशेन जनानुद्धरते यतः । निवर्त्तयति योऽधर्माद्धर्मे चाथ प्रवर्त्तयेत् ॥ पुरावृत्तश्रावणेन स चाष्टादशसु स्फुटम् । सदा मान्यो व्यासरूपो गुरुधर्मपरायणैः ॥" इति । उत्पत्त्या जातमौत्पत्तिकम् । तत्तस्येंद्रस्य । तैर्मरुद्भिः । साधु सम्यक्त्वम् । कृतं संपादितम् ॥ २० ॥ ननु भवान्कथमिमां बहिरंगां कथां शुश्रूषते तत्राह—इम इति । मया सहेति । स्वस्य गौणत्वं बोधयंस्तथैव व्यंजितवान् । हे भगवन्निति सर्वज्ञत्वमाह ॥ २१ ॥ आदृतमृषीणामादरेण सहितम् । बह्वर्थयुक्तम् । ऋष्यभिप्रेतश्रीशुकाभिप्रेतसिद्धियुक्तम् अथ वाऽर्थवत् एतच्च भगवदाराधनविशेषसंबंधेनैव भवेदिति स्वाभीष्टयुक्तं संनिभृतेन श्रीभगवत्सुखसंपूर्णेनातस्तदपि भगवत्संबंधे योजयिष्यतीति भावः । सर्वदर्शनः सर्वज्ञः । हे सत्रायणेति । यज्ञशालागतेन शास्त्रवृत्तांतेनैव कालो नेयस्तत्त्वं शृण्विति भावः ॥ २२ ॥ पृष्ठतः सहायेन परोक्षसाहाय्यकर्त्रेत्यर्थः ॥ २३ ॥ सुखं शये सुखेन निद्रामीत्यर्थः ॥ २४ ॥ अत्राक्षिपति—नन्विति । पुत्रादिभिर्दग्धस्य पूर्वपूर्वनृपाणामपि तथा दृष्टत्वादिति भूतनिर्देशः । तत्र स्वार्थाज्ञाने । तस्मादिंद्र एव विवेकशून्य इति व्यंजयति । अथ च स्वयमेव विवेकशून्याय त इंद्रं जिघांसुः स्वयमपींद्रमेव भूतद्रुहं स्वयमक्लिन्नहृदयापींद्रमेवाक्लिन्नहृदयं स्वयं स्वार्थानभिज्ञापींद्रमेव स्वार्थानभिज्ञं मन्यते इत्यतो

१–विप्रः ।

आशासानस्य तस्येदं ध्रुवमुन्नद्धचेतसः ॥ मदशोषक इंद्रस्य भूयाद्येन सुतो हि मे ॥ २६ ॥ इतिभावेन सा भर्तुराचचारासकृत्प्रियम् ॥ शुश्रूषयानुरागेण प्रश्रयेण दमेन च ॥ २७ ॥ भक्त्या परमया राजन्मनोज्ञैर्वल्गुभाषितैः ॥ मनो जग्राह भावज्ञा सुस्मितापांगवीक्षणैः ॥ ॥ २८ ॥ एवं स्त्रिया जडीभूतो विद्वानपि विदग्धया ॥ बाढमित्याह विवशो न तच्चित्रं हि योषिति ॥ २९ ॥ विलोक्यैकांतभूतानि भूतान्यादौ प्रजापतिः ॥ स्त्रियं चक्रे स्वदेहार्धं यया पुंसां मतिर्हृता ॥ ३० ॥ एवं शुश्रूषितस्तात भगवान्कश्यपः स्त्रिया ॥ प्रहस्य परमप्रीतो दितिमाहाभिनंद्य च ॥ ३१ ॥ कश्यप उवाच ॥ वरं वरय वामोरु प्रीतस्तेऽहमनिंदिते ॥ स्त्रिया भर्तरि सुप्रीते कः काम इह चागमः ॥ ३२ ॥ पतिरेव हि नारीणां दैवतं परमं स्मृतम् ॥ मानसः सर्वभूतानां वासुदेवः श्रियः पतिः ॥ ३३ ॥

कृमीति । ईशः प्रभुरित्यभिहितस्यापि यस्य पूर्वेषां राज्ञां देहस्य मरणानंतरं द्वित्रिदिनावस्थितस्य कृमय इति श्वादिभिर्भक्षितस्य तु विष्ठेति दग्धस्य तु भस्मेति संज्ञा आसीत्तत्कृते तस्य देहस्यार्थे यो भूतेभ्यो द्रुह्यति स किं स्वार्थं वेद न वेदैव । तत्र हेतुः । यतो भूतद्रोहान्निरयो भवति॥ २५॥ इदं देहादिकं ध्रुवं नित्यमाशासानस्य मन्यमानस्यात उन्नद्धमुच्छृंखलं चेतो यस्य तस्येन्द्रस्य यो मदस्तस्य शोषकः पुत्रो मे येन हेतुना भूयाद्भवेत् ॥२६॥ तत्र भर्तुः प्रियाचरणमेव हेतुरिति भावेन सा भर्तुः प्रियमसकृदान्वचार ॥ २७ ॥ २८ ॥ विवशः स्त्रीपरतंत्रः सन्बाढं तव मनोरथं पूरयिष्यामीति यदाह तन्न चित्रम् ॥ २९ ॥ तत्र हेतुमाह । विलोक्येति । एकांतभूतानि निःसंगानि मैथुनेन सृष्टिवृद्ध्यर्थं स्वदेहार्धमेव स्त्रियं चक्रे ॥ ३० ॥ एवं स्त्रिया शुश्रूषितः सन् ॥ ३१ ॥ इह चकारात्परत्र च अगमोऽप्राप्यः ॥ ३२ ॥ ननु परमेश्वरे सुप्रीते सर्वकामप्राप्तिरिति प्रसिद्धं तत्राह । पतिरेवेति । ननु मनसि स्थितः श्रीवासुदेव एव लक्ष्मीपतिः परं दैवतमिति प्रसिद्धम् । सत्यम् । स एव स्वाधिकारेण रूपभेदैः पूज्यत इत्याह

विवेकोप्यविवेकिनामविवेकमेव द्रढयतीति दर्शितम् ॥ २५ ॥ येनैव तेन दुश्चेष्टितेन हेतुनैव तस्य मदशोषकः सुतो मे भूयादिति प्रार्थनेति चक्रवर्ती ॥ २६ ॥ भर्त्तरि तुष्यति स्त्रीणां मनोरथः सिध्यति तस्मादहं पतिमेव परितोषयामीति भावेनाभिप्रायेणेति विश्वनाथः । भर्तुः प्रियाचरणमेव स च हेतुरिति स्वाम्यभिप्रायः ॥ २७ ॥ राजन्निति । यथा राजानो नीत्या स्वकार्यं तथा सापीति भावः ॥ २८ ॥ विदग्धया पुरुषमोहनकुशलया अपिना किमविद्वानिति ध्वनितम् ॥ २९ ॥ मतिर्हृतेत्यनेन स्त्रीपदार्थोऽप्युक्तः स्तृणाति पुरुषविवेकमाच्छादयतीति स्त्रीति निरुक्तेः । स्तृणातेरपि ड्रट् प्रत्ययो बाहुलकाद्भवतीति ज्ञेयम् ॥ ३० ॥ तातेति । श्रवणोत्कंठावृद्धये संबुद्धिः ॥ ३१ ॥ वामोरु इति । त्वदूरुदर्शनस्पर्शनादिनैवाहं मोहितो वरदो जात इति भावः । अनिन्दित इति । निंदाजनको वरो न वरणीय इति भावः । कोऽगमो न कोपीति ॥ ३२ ॥ अत्राक्षिपति–

स एव देवतालिंगैर्नामरूपविकल्पितैः ॥ इज्यते भगवान्पुंभिः स्त्रीभिश्च पतिरूपधृक् ॥ ३४ ॥ तस्मात्पतिव्रता नार्यः श्रेयस्कामाः सुमध्यमे ॥ यजंतेऽनन्यभावेन पतिमात्मानमीश्वरम् ॥ ३५ ॥ सोऽहं त्वयाऽर्चितो भद्रे ईदृग्भावेन भक्तितः ॥ तत्ते संपादये काममसतीनां सुदुर्लभम् ॥ ३६ ॥ दितिरुवाच ॥ वरदो यदि मे ब्रह्मन्पुत्रमिंद्रहणं वृणे ॥ अमृत्युं मृतपुत्राऽहं येन मे घातितौ सुतौ ॥ ३७ ॥ निशम्य तद्वचो विप्रो विमनाः पर्यतप्यत॥अहो अधर्मः सुमहानद्य मे समुपस्थितः॥३८॥अहो अर्थेंद्रियारामो योषिन्मय्येह मायया॥गृहीतचेताः कृपणः पतिष्ये नरके ध्रुवम्॥३९॥ कोऽतिक्रमोऽनुवर्तंत्याः स्वभावमिह योषितः ॥ धिङ् मां बताबुधं स्वार्थे यदहं त्वजितेंद्रियः ॥ ४० ॥ शरत्पद्मोत्सवं वक्त्रं वचश्च श्रवणामृतम् ॥ हृदयं क्षुरधाराभं स्त्रीणां को वेद चेष्टितम् ॥ ४१ ॥ न हि कश्चित्प्रियः स्त्रीणामंजसा स्वाशिषात्मनाम् ॥ पतिं पुत्रं भ्रातरं वा घ्नंत्यर्थे घातयंति च ॥ ४२ ॥ प्रतिश्रुतं ददामीति वचस्तन्न मृषा भवेत् ॥ वधं नार्हति चेंद्रोऽपि तत्रेदमुपकल्पते ॥ ४३ ॥

मानस इति सार्धेन ॥ ३३ ॥ देवतालिंगैर्मूर्तिभिरुपलक्षितः । तान्येवाह । नाम इंद्रादि रूपं वज्रहस्तत्वादि ताभ्यां विविधं कल्पितैः ॥ ३४ ॥ ३५ ॥ ३६ ॥ इंद्रहणं इंद्रहंतारम् । अमृत्युं मृत्युशून्यम् । येनेंद्रेण विष्णुना सहायेन घातितौ ॥ ३७ ॥ ३८ ॥ ३९ ॥ स्वभावमनुवर्तमानाया योषितः कोऽतिक्रमोऽपराधः ॥ ॥ ४० ॥ स्वभावमेवाह द्वाभ्याम् । शरत्पद्मस्येवोत्सवो विकासो यस्मिन् । श्रवणे श्रुती तयोरमृतम् । क्षुरधारोपमं चित्तम् ॥ ४१ ॥ स्वाशिषात्मनां स्वार्थकामनयात्मवत्प्रेष्ठत्वेन प्रतीयमानानाम् ॥ ४२ ॥ तत्रेदमुपकल्पते योग्यं भवति । अयं भावः । वैष्णवं व्रतं तावदुपदेक्ष्यामि तेनैवास्याः शुद्धचित्ताया इंद्रं प्रति क्रोधो निवर्तिष्यते

नन्विति ॥ ३३ ॥ पुनरत्राक्षिपति—नन्विति । तानि लिंगानि इंद्राय स्वाहाऽग्नये स्वाहेत्यादिभिर्नामरूपभेदेन पुंभिः कर्मिलोकैर्भगवानेवेज्यते यथा तथा स्त्रीभिः पतिरूपेणेत्यर्थः ॥ ३४ ॥ सुमध्यम इत्यपि संबुद्धिः पूर्ववद्बोध्या ॥ ३५ ॥ भद्रे इति । भद्ररूपो वरः प्रार्थनीय इति भावः । लक्ष्मीं पश्यतीतीदृग्विष्णुस्तद्भावस्ताद्रूप्यं तेन विष्णुबुद्ध्येत्यर्थः । तत्ततः ॥ ३६ ॥ ब्रह्मन्निति । ब्रह्मा यथा प्रार्थितस्तथा वरान्ददाति त्वमपि तादृश एवातो यथा प्रार्थितं वरं देहीति भावः । हंतेर्गत्यर्थत्वात्पक्षे इंद्रानुगम् । अमृत्युं सर्वैरवध्यं पक्षे देवत्वादमरम् । ऊनपंचाशद्भिरेक एव देवो मारुत इत्येकवचनम् ॥ ३७ ॥ विमना इति । दितेरीक्षितोऽर्थो हींद्रमृतिं विना न संभवेदित्याकलय्य दुर्मना अभूदिति भावः ॥ ३८ ॥ ३९ ॥ स्वभावं क्रौर्यम् ॥ ४० ॥ को वेद न कोपीत्यर्थः । "स्त्रियाश्चारित्रं पुरुषस्य भाग्यं देवा न जानंति कुतो मनुष्याः" इत्यभियुक्तोक्तेः ॥ ४१ ॥ स्वस्याशिषा कामनयैवात्मा यत्नो यासां न तु पत्यादिसुखापेक्षयेति भावः । अलुक्समासः आशिषा शब्दष्टाबंतो वा । अर्थे स्वप्रयोजननिमित्तम् ॥ ४२ ॥ अत्राशयमाह—अयं भाव इति । इंद्रे क्रोधनिवृत्तेस्तद्वधमनाकांक्षंत्याऽनया विहितस्य वैष्णवव्रतस्य कामितदुष्फलदातानर्हत्वान्नेंद्रघाती भविष्यति । किं तु वरप्रार्थनप्रदानवाक्ययोर्हंतिधातुप्रयोगाद्धंतेश्च गत्यर्थत्वादिन्द्रानुगोऽमरः पुत्रो भविष्यति व्रतस्य दीर्घकालत्वे सत्यवश्यं वैगुण्यं च किंचिद्भविष्यतीति तेनैवास्या अविज्ञाया मनःसमाधानश्च भविष्यतीति । वस्तुतस्तु । वैष्णवव्रतस्य वैगुण्येऽपि फलसिद्धिरवश्यं भाविनीत्यस्याः श्रमश्च सफल एव भविष्यतीति

इति संचिंत्य भगवान्मारीचः कुरुनंदन ॥ उवाच किंचित्कुपित आत्मानं च विगर्हयन् ॥ ४४ ॥ कश्यप उवाच ॥ पुत्रस्ते भविता भद्रे इंद्रहा देवबांधवः ॥ संवत्सरं व्रतमिदं यद्यंजो धारयिष्यासि ॥ ४५ ॥ दितिरुवाच ॥ धारयिष्ये व्रतं ब्रह्मन्ब्रूहि कार्याणि यानि मे ॥ यानि चेह निषिद्धानि न व्रतं घ्नंति यानि तु ॥४६॥ कश्यप उवाच ॥ न हिंस्याद्भूतजातानि न शपेन्नानृतं वदेत् ॥ न छिंद्यान्नखरोमाणि न स्पृशेद्यदमंगलम्॥४७॥ नाप्सु स्नायान्न कुप्येत न संभाषेत दुर्जनैः ॥ न वसीताधौतवासः स्रजं च विधृतां क्वचित् ॥ ४८॥ नोच्छिष्टं चंडिकान्नं च सामिषं वृषलाहृतम् ॥ भुंजीतोदक्यया दृष्टं पिबेदंजलिना त्वपः ॥४९॥ नोच्छिष्टाऽस्पृष्टसलिला संध्यायां मुक्तमूर्धजा ॥ अनर्चितासंयतवाङ्नासंवीता बहिश्चरेत् ॥५०॥

पुत्रस्त्वमर्त्यो भविष्यति दीर्घकालत्वे च व्रतस्य कथंचिद्वैगुण्ये सतींद्रस्य वधोऽपि न भविष्यतीति ॥ ४३ ॥ ४४ ॥ हे भद्रे अंजः यथावद्यदि धारयिष्यसि तर्हींद्रहा भविष्यति । वैगुण्ये तु देवबांधवो भविष्यति वैष्णवत्वाद्व्रतस्य कथंचिद्वैगुण्येऽपि सति सर्वथा वैकल्याभावात् ॥ ४५ ॥ कार्याण्यावश्यकानि । व्रतं यानि न घ्नंति नावश्यकानि न च निषिद्धानि किं त्वभ्यनुज्ञातानि तानि सर्वाण्यपि ब्रूहि ॥४६॥ तत्रैकत्रिंशन्निषेधानाह न हिंस्यादिति पंचभिः । न शपेन्नाक्रोशेत् । यदमंगलं कपालास्थ्यादिकं तन्न स्पृशेत् ॥ ४७ ॥ नाप्सु प्रविश्य स्नायात् । पूर्वं विधृतां स्रजं पुनर्न धारयेत् ॥ ४८ ॥ भोजने पंच निषेधानाह । नोच्छिष्टमिति । चंडिकान्नं भद्रकाल्यै निवेदितं पिपीलिकादिदूषितं वा । अंजलिना त्वपो न पिबेत् ॥४९॥ गृहाद्बहिर्निर्गमे सप्त निषेधानाह । नोच्छिष्टेति । अनर्चिता मंडनहीना । असंवीताऽप्रावृता॥५०॥

"नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात्" इति श्रीमुखोक्तेः ॥ ४३ ॥ हे कुरुनंदनेति । यथा त्वं ब्राह्मणांसे मृतोरगनिवेशनानंतरं शुद्धवंश्यत्वादात्मानमहो मया नीचमनार्यवत्कृतम् 'निरागसि ब्रह्मणि गूढतेजसि' इत्युक्तेर्गर्हितवांस्तथा कश्यपोऽपीति भावः ॥ ४४ ॥ इंद्रहा इंद्रघाती । अदेवानामसुराणाम् । बांधव इति । दितिं बोधयितुमिष्टोर्थः इंद्रहा इंद्रानुगो देवानां बांधव इति स्वाभीष्टोर्थः । भद्रे इति । दित्यभीष्टाऽकारप्रश्लेषे च स्वाभीष्टा संबुद्धिरपि ज्ञेया ॥ ४५ ॥ ब्रह्मन्निति । यथार्थवक्तृत्वमाह ॥ ४६ ॥ न हिंस्यादिति प्रथमत एवेंद्रवधाशंका निरस्ता । कपालं भिन्नघटाद्यंगम् । इहादिनांगारादिग्रहः । ॥ ४७ ॥ न कुप्येत् जातेप्यपराधे दुर्जनैर्देवद्विजवेदनिंदकैर्मद्यमांसादिप्रसक्तैर्वा "श्रुतिस्मृतिपुराणादिदेवब्राह्मणनिंदकाः । मद्यमांसादिसक्ताश्च पिशुना दुर्जनाः स्मृताः ॥" इति संहितोक्तेः । अधौतवासः कटिस्पृष्टं कार्पासं वासो यदि न धौतं तन्न परिदध्यात् । "कार्पासं कटिनिर्मुक्तं कौशेयं भोजने धृतम् । क्षालनाच्छुद्धिमाप्नोति वातेनौर्णं हि शुध्यति ॥" इति स्मृतेः । अन्येन विधृतां स्वयं विधृतां वा स्रजं पुष्पमालाम् ॥ ४८ ॥ भद्रकाली दुर्गा ननु 'न त्यजेद्देवनैवेद्यम्' इत्युक्तेः कथमुक्तं भद्रकाल्यै निवेदितं नाद्यादिति तत्राह—पिपीलिकादीति 'चंडिका स्यात्पिपीलिका' इत्यभिधानात् । आदिना मक्षिकादिग्रहः । आमिषम् 'आमिषं शूद्रशेषान्नं कन्यावित्तं तथामिषम् । आमिषं चर्मगं वारि प्रेतान्नं चामिषं स्मृतम्' इति "गोच्छागीमहिषीदुग्धादन्यदुग्धमिहामिषम्" इत्यादिना सप्तमस्कंधे विस्तरेण वक्ष्यामः । वृषलेन शूद्रेण स्वधर्मविमुखेन वा नीतं वृषं धर्मं लुनातीति वृषल इति व्युत्पत्तेः । 'उदक्या तु रजस्वला' इत्यभिधानात् ॥ ४९ ॥ अस्पृष्टसलिलाऽनाचांता । असंयतवाक्—त्यक्तमौना । अपावृता वस्त्रवर्जिता ॥ ५० ॥

नाधौतपादाऽप्रयता नार्द्रपान्नो उदक्छिराः ॥ शयीत नापराङ्नान्यैर्नं नग्ना न च संध्ययोः ॥ ५१ ॥ धौतवासाः शुचिर्नित्यं सर्वमंगलसंयुता ॥ पूजयेत्प्रातराशात्प्राग्गोविप्राञ्छ्रियमच्युतम् ॥ ५२ ॥ स्त्रियो वीरवतीश्चार्चेत्स्रग्गंधबलिमंडनैः ॥ पतिं चार्च्योपतिष्ठेत ध्यायेत्कोष्ठगतं च तम् ॥ ॥ ५३ ॥ सांवत्सरं पुंसवनं व्रतमेतदविप्लुतम् ॥ धारयिष्यसि चेत्तुभ्यं शक्रहा भविता सुतः ॥ ५४ ॥ बाढमित्यभिप्रेत्याथ दिती राजन्महामनाः ॥ काश्यपं गर्भमाधत्त व्रतं चांजो दधार सा ॥ ५५ ॥ मातृष्वसुरभिप्रायमिंद्र आज्ञाय मानद ॥ शुश्रूषणेनाश्रमस्थां दितिं पर्यचरत्कविः॥ ॥ ५६ ॥ नित्यं वनात्सुमनसः फलमूलसमित्कुशान् ॥ पत्रांकुरमृदोपश्च कालेकाल उपाहरत ॥ ५७॥ एवं तस्या व्रतस्थाया व्रतच्छिद्रं हरिर्नृप॥ प्रेप्सुः पर्यचरज्जिह्मो मृगहेव मृगाकृतिः ॥५८॥ नाध्यगच्छद्व्रतच्छिद्रं तत्परोऽथ महीपते ॥ चिंतां तीव्रां गतः शक्रः केन मे स्याच्छिवं त्विह॥५९॥

शयनेऽष्टौ निषेधानाह । नाधौतपादेति नापराक्पश्चिमशिराः ॥ ५१ ॥ कार्याण्याह धौतवासा इति द्वाभ्याम् प्रातराशात्प्रथमभोजनात् ॥ ५२ ॥ वीरवतीर्जीवद्भर्तृकाः । आर्च्य संपूज्य । कोष्ठगतं कुक्ष्यंतरगतम् ॥ ५३ ॥ पुंसवनं पुत्रोत्पत्तिकरम् । तुभ्यं तव ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ हरिरिंद्रो व्रतस्य छिद्रं प्रेप्सुः प्राप्तुमिच्छुः । जिह्मः कुटिलः साधुवेषः । मृगहा लुब्धको यथा मृगवंचनाय मृगवेषो भवति तद्वत् ॥ ५८ ॥ केन मे शिवं स्यादिति चिंतां प्राप्तः छिद्रान्वेषणे तत्परः ॥ ५९ ॥

अधौतपादा पादशौचहीना।अप्रयताऽपवित्रा 'पवित्रः प्रयतः पूतः'इत्यमरः।आर्द्रपात् प्रक्षालनोत्तरं वस्त्रेणामार्जितपादा।उदक्छिराःउत्तराशाकृतशिराः।"प्राच्यां दिशि शिरः शस्तं याम्यायामथ वा नृप।सदैव स्वपतःपुंसो विपरीतं न शोभनम्॥" इति पुराणांत रात्। पुंस इत्युपलक्षणम्।अपरां पश्चिमदिशमंचति शिरसा प्राप्नोति अपराक् तादृशं यथा स्यात्तथेति क्रियाविशेषणत्वेऽपि तद्विशेषणत्वे एव तात्पर्यात्।पश्चिमशिरा इत्येवार्थः।यद्वाऽपराची प्रतीची ततो ल्यब्लोपे पंचम्यंतात् "दिक्शब्देभ्यः" इत्यादिना स्वार्थ एवास्तातिप्रत्ययः।तस्य च "अंचतेर्लुक्"इति लुकि"लुक् तद्धितलुकि"इति स्त्रीप्रत्ययस्य च लुकि अपरागिति। ते प्रतीचीमारभ्य तां पूर्वाङ्गसात्कृत्येति तथैवार्थ इति संदर्भः ॥ ५१ ॥ ५२ ॥ "युक्ता या पतिपुत्राभ्यां ज्ञेया वीरवती हि सा" इत्यपि केचित् ॥ ५३ ॥ पुमान्सूयतेऽनेनेति पुंसवनम् । संवत्सरसाध्यं सांवत्सर अविप्लुतं सांगोपांगम् ॥ ५४ ॥ राजन्निति । राजानो यथा निजाभिलषिताप्तये परानिष्टमनसो भवंति तद्वत्साऽपीति भावः । काश्यपं कश्यपेनाहितं काश्यपं क्वचित्कश्यपादित्यपि पाठः । अंजः शीघ्रम् ॥ ५५ ॥ मातृष्वसुर्दितेः कविः स्वकार्यसंपादननिपुणः । हे मानदेति । यथा राजानो रिपोरपि पूर्वं मानं कृत्वा पश्चात्तदनिष्टं कुर्वंति तथायमपि पूर्वं मानं दत्त्वा पश्चात्तत्खंडिष्यतीति भावः । मानदेत्यत्र डुदाञ्दापोर्द्वयोरर्थावलंबनेनोभयार्थसिद्धिः ॥ ५६ ॥ पत्राणि चांकुराणि च मृच्चैषां समाहारः पत्रांकुरमृत् तेन सह अपश्च जलानि ॥ ५७ ॥ व्रतस्य छिद्रं प्रेक्षोरिंद्रस्याप्यविज्ञत्वमेव यतो विष्णोः स्मरणेन कीर्त्तनेन वा सच्छिद्रमपि निश्छिद्रं स्यात् । तस्य विष्णोरिदं व्रतं छिद्रेप्यच्छिद्रमेव भवेत् । तदुक्तं "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति सद्यो वंदे तमीश्वरम्" इति "मंत्रतस्तंत्रतश्छिद्रं देशकालार्हवस्तुतः । सर्वं करोति निश्छिद्रं नामसंकीर्त्तनं तव ॥ " इति वामनं प्रति भार्गवोक्तेश्च । किञ्चोपरिष्टादिंद्रेणापि व्रतस्य निश्छिद्रतामनुभविष्यता वक्ष्यते च "महापुरुषपूजायाः सिद्धिः काप्यनुषंगिणी" इति । तद्वत्परिचारकलोकाकृतिः । हे नृपेति । नृपो यथा मिलित्वा रिपुं तच्छिद्रान्वेषणपरो भवति तद्वदिंद्रोपीति भावः ॥ ५८ ॥ यतः छिद्रं न प्राप्तमथातः । महीपते इति । यथा प्रबलरिपुच्छिद्राप्राप्तौ महीपतेरपि चिंतापतति किमुत त्रैलोक्याधिपतेर्यदि सा भवेदिति भावः ॥ ५९ ॥

एकदा सा तु संध्यायामुच्छिष्टा व्रतकर्शिता ॥ अस्पृष्टवार्यधौतांघ्रिः सुष्वाप विधिमोहिता ॥ ६० ॥ लब्ध्वा तदंतरं शक्रो निद्राऽपहृत चेतसः ॥ दितेः प्रविष्ट उदरं योगेशो योगमायया॥६१॥चकर्त सप्तधा गर्भं वज्रेण कनकप्रभम् ॥ रुदंतं सप्तधैकैकं मा रोदीरिति तान्पुनः॥६२॥ ते तमूचुः पाट्यमानाः सर्वे प्रांजलयो नृप ॥ नो जिघांससि किं इंद्र भ्रातरो मरुतस्तव ॥ ६३ ॥ मा भैष्ट भ्रातरो मह्यं यूयमित्याह कौशिकः ॥ अनन्यभावान्पार्षदानात्मनो मरुतां गणान् ॥ ६४ ॥ न ममार दितेर्गर्भः श्रीनिवासानुकंपया ॥ बहुधा कुलिशक्षुण्णो द्रौण्यस्त्रेण यथा भवान् ॥ ६५ ॥ सकृदिष्ट्वादिपुरुषं पुरुषो याति साम्यताम् ॥ संवत्सरं किंचिदूनं दित्या यद्धरिरर्चितः ॥ ६६ ॥ सजूरिंद्रेण पंचाशद्देवास्ते मरुतोऽभवन् ॥ व्यपोह्य मातृदोषं ते हरिणा सोमपाः कृताः ॥६७॥ दितिरुत्थाय ददृशे कुमाराननलप्रभान्॥ इंद्रेण सहितान्देवी पर्यतुष्यदनिंदिता ॥६८॥ अथेंद्रमाह ताताहमादित्यानां भयावहम् ॥ अपत्यमिच्छंत्यचरं व्रतमेतत्सुदुष्करम् ॥६९॥ एकः संकल्पितः पुत्रः सप्तसप्ताभवन्कथम्॥ यदि ते विदितं पुत्र सत्यं कथय मा मृषा॥७०॥इंद्र उवाच॥अंब तेऽहं व्यवसितमुपधार्यागतोंतिकम्॥लब्धांतरोच्छिदं गर्भमर्थबुद्धिर्न धर्मवित् ॥७१॥

अस्पृष्टवारिश्चासावधौतांघ्रिश्च ॥ ६० ॥ निद्रयाऽपहृतं चेतो यस्याः ॥ ६१ ॥ मा रोदीरित्युपलालयन्निव तान्छकलीकृतान् पुनः एकैकं सप्तधा चकर्त चिच्छेद ॥ ६२ ॥ पाट्यमानाः छिद्यमानाः ॥ ६३ ॥ कौशिक इंद्रः । गणान्सप्त । "सप्तगणा वै मरुतः"इति श्रुतेः ॥ ६४ ॥ ६५ ॥ ६६॥ सजूः सह मातृदोषं सपत्नभावम् ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ दित्या निष्कपटमुक्ते सतींद्रोऽपि निष्कपटमेवाह । अंबेति । लब्धमंतरं येन । अर्थे एव बुद्धिर्यस्य ॥ ७१ ॥

एकदेंद्रादृष्टवशात्।विधिना विधात्रा मोहिता॥६०॥योगस्य परकायप्रवेशाख्यस्य सिद्ध्यर्था या माया तया तत्र हेतुः योगेशोऽभ्यस्तसमस्तयोगशास्त्रः॥६१॥अत्राल्पकाल एव बहुपुण्यपापभोगिनो जीवस्य योगिनो वा कायव्यूह इवैकस्य जीवस्योनपंचाशत्काय व्यापकत्वमिति केचित् । भाविदृष्ट्या प्रथममेवैकस्मिन्देहे प्रविष्टानामेकोनपंचाशज्जीवानामिंद्रकृतदेहविभागेनैकैकदेहप्राप्तिरित्यपरे । इंद्रकृतखंडेष्वन्येषामप्यष्टचत्वारिंशज्जीवानां तत्क्षण एव प्रवेशो यथा लतागुल्मानां केषांचित्खंडखंडीकृत्यैव भूमावारोपितानां पृथक्पृथक्प्ररोहोद्गमदर्शनात् पृथक्पृथग्जीवस्य प्रवेशोऽनुमीयते इत्यन्ये च प्राहुः । अयमेव न्यायो दुर्योधनादिजन्मन्यपि वर्णितो महाभारत आदिपर्वणि । "स्वोदरं घातयामास गांधारी दुःखमूर्च्छिता । ततो जज्ञे मांसपेशी लोहाष्ठीलेव संहता॥" इत्यारभ्य "सा सिच्यमाना त्वष्ठीला बभूव शतधा तदा । अंगुष्टपर्वमात्राणां गर्भाणां पृथगेव तु ॥ " इत्यंतेन ॥ ६२ ॥ नृपेति । यथा त्वं पीडितैर्नृभिः प्रार्थ्यसे तथा तैरिंद्रोऽपीति भावः ॥ ६३ ॥ मरुतां गणत्वे श्रुतिमाह—सप्तेति । स्पष्टार्थेयम् ॥ ६४ ॥ अहो अमोघवज्रहतो दितेर्गर्भः कथं न ममार तत्राह—श्रीनिवासेति । अत्र त्वमेव दृष्टांतः ' द्रौण्यस्त्र—' इति ॥ ६५ ॥ साम्यताम् । समशब्दाच्चतुर्वर्णादित्वात्स्वार्थे ष्यञ् तदंतात्तल् समानरूपतामित्यर्थः । चक्रवर्तिसंमतस्तु सात्मतामिति पाठः ॥ ६६ ॥ मातृदोषमासुरत्वम् । सजूस्सह । ' अश्विभ्यामुषसा सजूः ' इत्यादौ सजूश्शब्दः सहार्थे दृश्यते इति । हरिणेंद्रेण विष्णुना वा ॥ ६७ ॥ अनिंदिता वैष्णवव्रतप्रभावाज्जातशांतस्वभावाऽत एव पर्यतुष्यत् ॥ ६८ ॥ अथ बहुकुमारदर्शनानंतरम् । तातेति । अनिन्दितत्वादेवोक्तवती ॥ ६९ ॥ मत्पुत्रा अप्यनेन पाविता अतोऽयं पुनातीति पुत्र इत्यन्वर्थनामैवेत्यभिप्रेत्याह—हे पुत्रेति ॥ ७० ॥ अहो अनयैवाहमवधानत्यागेन रक्षितोऽस्मी

कृत्तो मे सप्तधा गर्भ आसन्सप्त कुमारकाः ॥ तेऽपि चैकैकशो वृक्णाः सप्तधा नापि मम्रिरे ॥ ७२ ॥ ततस्तत्परमाश्चर्यं वीक्ष्याध्यवसितं मया ॥ महापुरुषपूजायाः सिद्धिः काप्यानुषंगिणी ॥ ७३ ॥ आराधनं भगवत ईहमाना निराशिषः ॥ ये तु नेच्छंत्यपि परं ते स्वार्थकुशलाः स्मृताः ॥ ७४ ॥ आराध्यात्मप्रदं देवं स्वात्मानं जगदीश्वरम् ॥ को वृणीते गुणस्पर्शं बुधः स्यान्नरकेऽपि यत् ॥ ७५ ॥ तदिदं मम दौर्जन्यं बालिशस्य महीयसि ॥ क्षंतुमर्हसि मातस्त्वं दिष्ट्या गर्भो मृतोत्थितः ॥ ७६ ॥ श्रीशुक उवाच ॥ इंद्रस्तयाऽभ्यनुज्ञातः शुद्धभावेन तुष्टया ॥ मरुद्भिः सह तां नत्वा जगाम त्रिदिवं प्रभुः ॥ ७७ ॥ एवं ते सर्वमाख्यातं यन्मां त्वं परिपृच्छसि ॥ मंगलं मरुतां जन्म किं भूयः कथयामि ते ॥७८॥ इति श्रीमद्भा० म० ष० मरुद्गणजन्मकथनं नाम अष्टादशोऽध्यायः ॥ १८ ॥ राजोवाच ॥ व्रतं पुंसवनं ब्रह्मन्भवता यदुदीरितम् ॥ तस्य वेदितुमिच्छामि येन विष्णुः प्रसीदति ॥ १ ॥ श्रीशुक उवाच ॥ शुक्ले मार्गशिरे पक्षे योषिद्भर्तुरनुज्ञया ॥ आरभेत व्रतमिदं सार्वकामिकमादितः ॥ निशम्य मरुतां जन्म ब्राह्मणाननुमंत्र्य च ॥ २ ॥ स्नात्वा शुक्लदती शुक्ले वसीताऽलंकृताऽम्बरे ॥ पूजयेत्प्रातराशात्प्राग्भगवंतं श्रिया सह ॥३॥ अलं ते निरपेक्षाय पूर्णकाम नमोऽस्तु ते ॥ महाविभूतिपतये नमः सकलसिद्धये ॥ ४ ॥

॥ ७२ ॥ ७३ ॥ अपि परं मोक्षमपि ॥ ७४ ॥ गुणस्पर्शं विषयभोगं बुधः को वृणीते यद्यस्मान्नरकेऽपि विषयभोगः स्यात् ॥ ७५ ॥ महीयसि हे महत्तमे । मृतः सन्नुत्थितः ॥ ७६ ॥ ७७ ॥ ७८ ॥ इति श्रीमद्भागवते षष्ठस्कंधे टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ऊनविंशे तु यत्प्रोक्तं कश्यपेन दिते र्व्रतम् ॥ तदेव विवृतं लोकहिताय हरितोषणम् ॥ १ ॥ तस्य प्रकारमिति शेषः ॥ १ ॥ मार्गशिरे मासे शुक्लपक्षे । आदितः प्रतिपदि ॥ २ ॥ अनुमंत्र्य पृष्ट्वा । शुक्ला दंता यस्याः सा शुक्लदती धौतदंता अलंकृता सती पूजयेत ॥ ३ ॥ आदौ तावन्नमस्कारमंत्रानाह अलमिति त्रिभिः । ते तुभ्यमलं त्यत इयमप्यंबति रक्षतीत्यंबेत्यन्वर्थनाम्न्येवेति विमृश्याह—अंबेति । 'अबि—रक्षणे' धातुः । अहो त्वया मद्गर्भच्छेदेन महानधर्मः कृतस्तत्राह—अर्थबुद्धिरिति । यथा त्वयार्थबुद्ध्या मन्नाशकव्रते धर्मो न विचारितस्तथा मयापीति भावः ॥ ७१ ॥ ७२ ॥ ततो वज्रेण बहुधा भेदेपि मरणाभावात् । काप्यनिर्वचनीया आनुषंगिणी अनुषंगप्राप्ता न तु मुख्या तेन मोक्षोप्यानुषंगिक एव न तु मुख्यं फलं भक्तेरिति ध्वनितम् ॥ ७३ ॥ तदेवाह--आराधनमिति । स्वार्थकुशला इति । " सत्यं दिशत्यर्थितमर्थितो नृणाम् " इत्याद्युक्तेः ॥ ७४ ॥ देवं कालिन्दीतटक्रीडापरम् । स्वात्मानं सुन्दरतरविग्रहं श्रीकृष्णमित्यर्थः । जगतामीश्वरम् 'तावंत्येव जगंत्यमूः' इत्युक्तेः । आत्मप्रदं नंदादिभ्य आत्मानमपि दत्त्वा तद्गोपालनपरम् । नरके नरकवन्मलिने श्वशूकरादिदेहे । " तस्यैव हेतोः प्रयतेत कोविदो न लभ्यते यद्भ्रमतामुपर्यधः । न लभ्यते दुःखवदन्यतः सुखं कालेन सर्वत्र गभीररंहसा " इति श्रीनारदोक्तेः ॥ ७५ ॥ महीयसीति । महत्स्वेव क्षांतिरस्त्यन्यथा महत्त्वमेव न स्यादिति भावः । 'क्षमासारा हि साधवः' इत्याद्युक्तेः । मातरिति । माता तु पुत्राणामपराधसहस्रमपि न गणयतीति भावः ॥ ७६ ॥ तया दित्या ॥ ७७ ॥ मंगलं श्रवणादिना मंगलकरम् ॥ ७८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ विवृतं व्याख्यानेन स्फुटितम् ( १ ) हे ब्रह्मन्निति । सर्वज्ञोऽसीति भावः ॥ १ ॥ २ ॥ वसीत परिदध्यात् ॥ ३ ॥ अलमतिशयेन तुभ्यं नम एवास्तु देवांतरं यथा निजैश्वर्यसिद्ध्यर्थं सेवकानपेक्षते तथा न त्वमित्याह—निरपेक्षाय स्वाभाविकमहैश्वर्य

यथा त्वं कृपया भूत्या तेजसा महिनौजसा ॥ जुष्ट ईशगुणैः सर्वैस्ततोसि भगवान्प्रभुः ॥ ५ ॥ विष्णुपत्नि महामाये महापुरुषलक्षणे ॥ प्रीयेथा मे महाभागे लोकमातर्नमोऽस्तु ते ॥ ६ ॥ ॐ नमो भगवते महापुरुषाय महानुभावाय महाविभूतिपतये सह महाविभूतिभिर्बलिमुप हराणीति ॥ अनेनाहरहर्मंत्रेण विष्णोरावाहनार्घ्यपाद्योपस्पर्शनस्नानवास उपवीतविभूषणगंधपुष्पधूपदीपोपहाराद्युपचारांश्च समाहित उपाहरेत् ॥ ७ ॥ हविःशेषं तु जुहुयादनले द्वादशाहुतीः ॥ ॐ नमो भगवते महापुरुषाय महाविभूतिपतये स्वाहेति ॥ ८ ॥ श्रियं विष्णुं च वरदावाशिषां प्रभवावुभौ ॥ भक्त्या संपूजयेन्नित्यं यदीच्छेत्सर्वसंपदः ॥ ९ ॥ प्रणमेद्दंडवद्भूमौ भक्तिप्रह्वेण चेतसा ॥ दशवारं जपेन्मंत्रं ततः स्तोत्रमुदीरयेत् ॥ ॥ १० ॥ युवां तु विश्वस्य विभू जगतः कारणं परम् ॥ इयं हि प्रकृतिः सूक्ष्मा माया शक्तिर्दुरत्यया ॥ ११ ॥ तस्या अधीश्वरः साक्षात्त्वमेव पुरुषः परः ॥ त्वं सर्वयज्ञ इज्येयं क्रियेयं फलभुग्भवान् ॥ १२ ॥ गुणव्यक्तिरियं देवी व्यंजको गुणभुग्भवान् ॥ त्वं हि सर्वशरीर्यात्मा श्रीः शरीरेन्द्रियाशया ॥ नामरूपे भगवती प्रत्ययस्त्वमपाश्रयः ॥ १३ ॥

पर्याप्तमेव सर्वं न किंचिदन्यैः कृत्यमस्त्यतः केवलं ते तुभ्यं नमोऽस्तु । पर्याप्तौ हेतवः ॥ निरपेक्षाय हे पूर्णकाम महाविभूतिपतये लक्ष्मीपतये सकलाः सिद्धयोऽणिमाद्या यस्मिंस्तस्मै ॥ ४ ॥ भो ईश यथा यथावत् त्वं कृपादिभिर्जुष्टः महिना महत्त्वेन अन्यैश्च सत्यसंकल्पत्वादिभिः सर्वैर्गुणैः ततस्तस्मात् ॥ ५ ॥ महापुरुषस्य परमेश्वरस्येव लक्षणानि निरपेक्षत्वादीनि यस्यास्तस्याः संबोधनम् ॥ ६ ॥ पूजामंत्रमाह । ओं नम इति ॥ ७ ॥ हविःशेषमुपहारावशिष्टम् । होममंत्रं दर्शयति । ओमिति ॥ ८ ॥ प्रकर्षेण भवंत्याभ्यामिति प्रभवौ ॥ ९ ॥ १० ॥ ११ ॥ इज्या यज्ञाभिनिवर्तकः पुरुषव्यापारो भावनाख्यः । क्रिया लौकिकी ॥ १२ ॥ प्रत्ययो नामरूपयोः

वस्त्वादित्यर्थः । एवं पूर्णकामाय ते केन नैवेद्यादिना प्रीणयामि महाविभूतिपतये तुभ्यं कैर्गृहोद्यानरथगजदासीनृत्यगीतदुंदुभिघोषाद्यैः एवं सकलसिद्धये स्वर्गापवर्गप्रेमादिसिद्धिदात्रे तुभ्यं कर्मज्ञानयोगभक्त्यादिसाधनार्पणैः कथं प्रीणयामीति भावः ॥ ४ ॥ तदपि त्वत्कृपया सर्वं घटेतेत्याह—यथा त्वं कृपया जुष्टस्तथैव भूत्यादिभिश्च ततो हेतोस्त्वमेव भगवानसीत्यन्वयः । अयमर्थः—कृपया शक्त्या जुष्टः सेवितः सन्भक्तदत्ततुलसीपत्रमात्र मप्यपेक्ष्यमाणः । अहमद्य क्षुधार्त्तोस्मि किंचिद्देहीति भक्ताय याचमानोऽपूर्णकामोऽपि भवसि मम गृहोद्यानादिकं संप्रति जीर्णं क्व विलसामीत्यादिस्वप्नांतरे ब्रुवन्विभूतिशून्योऽपि भवसि अणिमादिसिद्धियुक्तोऽपि भक्तप्रेम रसनया बद्धः क्वापि गंतुमपि न शक्नोषि तथैव भूत्या महालक्ष्म्या शक्त्या तेजसा सर्वानधीनतया शक्त्या महिना विभूत्या शक्त्या च ओजसा बलेन सर्वैरन्यैश्च सत्यसंकल्पादिभिश्च सर्वत्र जगति निरपेक्षत्वपूर्णकाम त्वादिमांश्च भवसीति त्वमेव भगवांस्त्वमेव प्रभुर्भजनीय इति भावः ॥ ५ ॥ इत्थं भगवंतं प्रणम्य लक्ष्मीं प्रणमेदित्याह—विष्णुपत्नीति । विष्णुः पतिः पालको यस्यास्तत्संबुद्धौ तथा निर्भये इत्यर्थः । महामाये मायाश ब्दस्य शक्तिवाचित्वात्पराख्यशक्तिरूपे । अत एव महापुरुषेति ॥ ६ ॥ उपहाराणि समर्पयामि उपस्पर्शनमाचमनम् । उपहारो नैवेद्यम् ॥ ७ ॥ स्वाहा सुहुतं भवतु इति शब्दो मंत्रसमाप्तिद्योतक एव न तु मंत्रावयवः ॥ ८ ॥ ९ ॥ दशवारं दशावृत्त्या तदूर्द्ध्वं यथाशक्त्या तावती सर्वथापेक्षितेति । ततो जपानंतरम् । स्तोत्रं युवां त्वित्यादि वक्ष्यमाणसार्द्धचतुःश्लोकात्मकम् ॥ १० ॥ परात्परयोरपि तयोर्जगत्कारणत्वे हेतुमाह— इयमिति । इयं लक्ष्मीः सूक्ष्मा दुर्ज्ञेया दुरत्यया त्वया सह सर्वदा संगिनी " देवत्वे देवता चेयं मानुषत्वे च मानुषी " इत्युक्तेरनपायिनीत्यर्थः । मायापक्षे तव कृपां विना तरीतुमशक्या " मामेव ये प्रपद्यंते मायामेतां तरंति ते " इति श्रीमुखोक्तेः ॥ ११ ॥ तस्या मायायाः ॥ १२ ॥ गुणानां सत्त्वादीनां व्यक्तिर्यतः सा तथा । व्यंजकश्चिच्छक्त्यावेशेन मंत्राणां प्राकट्यकर्त्ता सर्वाणि शरीराणि यस्य स तथा तत्र हेतुरात्मेति । शरीरेन्द्रिया

यथा युवां त्रिलोकस्य वरदौ परमेष्ठिनौ ॥ तथा म उत्तमश्लोक संतु सत्या महाशिषः ॥ १४ ॥ इत्यभिष्टूय वरदं श्रीनिवासं श्रिया सह ॥ तन्निःसार्योपहरणं दत्त्वाऽऽचमनमर्चयेत् ॥ १५ ॥ ततः स्तुवीत स्तोत्रेण भक्तिप्रह्वेण चेतसा ॥ यज्ञोच्छिष्टमवघ्राय पुनरभ्यर्चयेद्धरिम् ॥ १६ ॥ पतिं च परया भक्त्या महापुरुषचेतसा ॥ प्रियैस्तैस्तैरुपनमेत्प्रेमशीलः स्वयं पतिः ॥ बिभृयात्सर्वकर्माणि पत्न्या उच्चावचानि च ॥ १७ ॥ कृतमेकतरेणापि दंपत्योरुभयोरपि ॥ पत्न्यां कुर्यादनर्हायां पतिरेतत्समाहितः ॥ १८ ॥ विष्णोर्व्रतमिदं बिभ्रन्न विहन्यात्कथंचन ॥ विप्रान्स्त्रियो वीरवतीः स्रग्गंधबलिमंडनैः ॥ अर्चेदहरहर्भक्त्या देवं नियममास्थितः ॥ १९ ॥ उद्वास्य देवं स्वे धाम्नि तन्निवेदितमग्रतः ॥ अद्यादात्मविशुद्ध्यर्थं सर्वकामर्द्धये तथा ॥ २० ॥ एतेन पूजाविधिना मासान्द्वादश हायनम् ॥ नीत्वाऽथोपरमेत्साध्वी कार्तिके चरमेऽहनि ॥ २१ ॥ श्वोभूतेऽप उपस्पृश्य कृष्णमभ्यर्च्य पूर्ववत् ॥ पयःशृतेन जुहुयाच्चरुणा सह सर्पिषा ॥ पाकयज्ञविधानेन द्वादशैवाहुतीः पतिः ॥ २२ ॥

प्रकाशकः अपाश्रयस्तयोराधारः ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ महापुरुषचेतसा ईश्वरबुद्ध्योपनमेद्भजेत् । पतिश्च स्वयं प्रेमशीलः सन् पत्न्याः सर्वकर्माणि बिभृयात् । सदनुकूलो भवेदित्यर्थः ॥ १७ ॥ यतो दंपत्योर्मध्ये एकतरेण कृतमुभयोरपि भवति ॥ १८ ॥ न विहन्यान्न विच्छियात् ॥ १९ ॥ २० ॥ द्वादशमासा नित्युक्ते कदाचित्तन्मध्ये मलमासे सति तेन सह द्वादशसंख्यायां सत्यां शुद्धस्यैकस्य त्यागः स्यात् । हायनमित्युक्ते तन्मध्यपतितस्य तस्यापि प्रसंगः स्यात् । तदुभयं वारयितुमुभयमुक्तम् । उपचरेदुपवसेत् ॥ २१ ॥ श्वोभूते प्रभाते सति । पयसि शृतेन पक्वेन । पाकयज्ञविधानेन पार्वणस्थालीपाकविधानेन ॥ २२ ॥

ण्याशेरते यस्यां सा तथा । अत्रेंद्रियपदमंतरिंद्रियं मनोबुद्ध्याद्यप्युपलक्षयति नामरूपास्तिभातिप्रियाख्यपंचांशवद्वस्तुषु नामरूपे भगवती श्रीः प्रकृतिरेवात एव तयोस्त्याज्यत्वमभिहितमाचार्यैः अस्त्याद्यंशत्रयस्य प्रकाशरूपत्वात्त्वद्रूपत्वमत एव स्वामिचरणैर्व्याख्यातं प्रत्ययो नामरूपयोः प्रकाश इत्यादि ॥१३॥ परमेष्ठिनौ वस्तुतो द्वयोरेकरूपत्वात् । "तस्माज्ज्योतिरभूद्द्वेधा राधामाधवरूपकम्" इति संमोहनतंत्रोक्तन्यायेन। "द्विधा समभवद्बृहत् ॥ तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते॥" इत्येकादशे उद्धवं प्रति श्रीकृष्णोक्तेश्च । हे उत्तमश्लोकेति । मम श्रद्धाभक्त्यादिकं यादृशं तादृशमेव त्वयैव स्वस्योत्तमश्लोकतामपेक्ष्य मनोरथाः पूरणीयाः "अपि च कृपणपक्षे त्युत्तमश्लोकशब्दः" इति साक्षाच्छ्रुत्यवतारगोपीजनोक्तेरिति भावः ॥ १४ ॥ तदुपहरणं नैवेद्यं निस्सार्य उत्थाप्येत्यर्थः । चक्रवर्ती तु—तन्निःसार्य निर्माल्यापाकरणं कृत्वेत्याह पुनरर्चयेत् ॥ १५ ॥ ततः पूर्ववत्स्तोत्रेण स्तुवीत यज्ञोच्छिष्टं पूजानिर्माल्यपुष्पादि पुनरभ्यर्चयेत्त्रिकालमर्चयेदिति निर्गलितोऽर्थः पुनः पुनरर्चनविधानात् ॥ १६ ॥ तैस्तैर्यैर्वस्त्रान्नादिभिः पतिः प्रीयेत । उपनमेत्सेवेतेत्यर्थः । पतिरपि पत्न्यनुसारो भवेत् । इत्यर्थ इति । पतिर्हि स्त्रियां व्रतं कुर्वाणायां स्वयं तदुपयोगिवस्त्वानयनादि कुर्यात्स्त्री च पत्यौ व्रतं कुर्वाणे तथा कुर्यादिति भावः ॥ १७ ॥ अनर्हायां रजआदिना दूषितायाम् । पतिपत्न्योर्विवाहमंत्रैरेकरूपताया विधानादिति भावः ॥ १८ ॥ १९ ॥ अग्रत इति ल्यब्लोपे पंचमी । अग्रभागं यथोचितं विभज्येत्यर्थः ॥ २० ॥ उभयमुक्तमित्यस्य यस्मिन्वर्षेऽधिको मासो न स्यात्तस्मिन्वर्षे व्रतं कुर्यादित्यर्थः । चरमेऽहनि मार्गकृष्णामायां मासाश्शुक्लादयोऽत्र ग्राह्याः 'शुक्ले मार्गशिरे पक्षे' इत्युक्तेः । शुक्ले प्रारब्धस्य कृष्णे पक्षे एव वत्सरसमाप्तिर्भवति 'हायनोऽस्त्री शरत्समाः' इत्यमरः ॥ २१ ॥ पर्वसूक्तस्वेषु

( ब्राह्मणान्भोजयेद्भक्त्या त्वन्नाद्यैर्द्रौदशात्मवित् ॥ तेभ्यो दद्यात्तिलान्राजन्सोदपात्रानिडान्वितान् ॥ १ ॥ ) आशिषः शिरसाऽऽदाय द्विजैः प्रीतैः समीरिताः ॥ प्रणम्य शिरसा भक्त्या भुंजीत तदनुज्ञया ॥२३॥ आचार्यमग्रतः कृत्वा वाग्यतः सह बंधुभिः ॥ दद्यात्पत्न्यै चरोः शेषं सुप्रजास्त्वं सुसौभगम् ॥२४॥ एतच्चरित्वा विधिवद्व्रतं विभोरभीप्सितार्थं लभते पुमानिह ॥ स्त्रीत्वे तदास्थाय लभेत सौभगं श्रियं प्रजां जीवपतिं यशोगृहम् ॥२५॥ कन्या च विंदेत समग्रलक्षणं वरं त्ववीरा हतकिल्बिषा गतिम् ॥ मृतप्रजा जीवसुता धनेश्वरी सुदुर्भगा सुभगा रूपमग्र्यम् ॥ २६ ॥ विंदेद्विरूपा विरुजा विमुच्यते य आमयावींद्रियकल्पदेहम् ॥ एतत्पठन्नभ्युदये च कर्मण्यनंततृप्तिः पितृदेवतानाम् ॥ २७ ॥ तुष्टाः प्रयच्छंति समस्तकामान्होमावसाने हुतभुक्छ्रीहरिश्च ॥ राजन्महन्मरुतां जन्म पुण्यं दितेर्व्रतं चाभिहितं महत्ते ॥ २८ ॥ इति श्रीभागवते महापुराणेऽष्टादशसहस्र्यां संहितायां षष्ठस्कंधे पुंसवनव्रतकथनं नामैकोनविंशोऽध्यायः ॥ १९ ॥ संपूर्णोऽयं षष्ठः स्कंधः ॥ ६ ॥

॥ २३ ॥ सुप्रजास्त्वं सत्पुत्रत्वकरमित्यर्थः । वाग्यतः सन् तद्यतस्तं शेषम् ॥ २४ ॥ २५ ॥ अवीरा विधवा । धनेश्वरी सत्यपि या सुदुर्भगा सा सुभगा भवति ॥ २६ ॥ य आमयावी रोगी स विरुजा विशिष्टया रुजा विमुच्यते । इंद्रियैः संहितं कल्पं देहं च विंदेदिति शेषः । पठन्यो वर्तेत तस्य पितॄणां देवतानां चानंता तृप्तिर्भवतीत्यर्थः ॥ ॥ २७ ॥ उपसंहरति । राजन्निति । महत्पुण्यं जन्म महद्व्रतं च ॥ २८ ॥ षष्ठस्कंधनिगूढार्थपदभावार्थदीपिका ॥ सद्भिरासेव्यतामेषा यतिश्रीधरनिर्मिता ॥ ॥ १ ॥ इति श्रीमद्भागवते महापुराणे षष्ठस्कंधे श्रीधरस्वामिविरचितायां टीकायां भावार्थदीपिकायामेकोनविंशोऽध्यायः ॥ १९ ॥ समाप्तोऽयं षष्ठस्कंधः ॥ ६ ॥

विवाहादिषु यत्स्थालीपाकविधानं स्मार्तसूत्रोक्तविधानं यथा “ अथातो गृह्यस्थालीपाकानां कर्म ” इत्यादिकात्यायनसूत्रोक्तं यत्कर्मविधानं तेन । सूत्रार्थस्तु–अथ श्रौतकर्मविधानानंतरम् । यतः श्रौतानि कर्माण्यभिहितानि स्मार्त्तान्यभिधेयानि अतो हेतो गृह्ये “ आवसथ्याग्नौ ये स्थालीपाकास्तेषां कर्मक्रियानुष्ठानमिति व्याख्यास्यते ” इति सूत्रशेषः । तच्च विधानं भूसंस्काराग्निसंस्काराघाराज्यभागव्याहृतिप्रायश्चित्तस्विष्टकृद्धोमादिरूपं सर्वकर्मसाधारणमेव “ एष एव विधिर्यत्र क्वचिद्धोमे ” इति सूत्रात् । अस्यार्थः–एष परिसमूहनादिपर्युक्षणपर्यंतो विधिरेव न मंत्राः यत्र क्वचन लौकिके स्मार्त्ते वाग्नौ होमस्तत्र वेदितव्यम् । “अन्वारब्धाघाराज्यभागौ महाव्याहृतयः सर्वप्रायश्चित्तं प्राजापत्यꣳ स्विष्टकृच्चैतन्नित्यꣳ सर्वत्र” इति सूत्रांतराच्चेत्यलम् । प्रकृतमनुसरामः–आहुतिमंत्रः प्रागुक्त एव “पर्व क्लीबं महे ग्रंथौ प्रस्तावे लक्षणांतरे । दर्शप्रतिपदोः संधौ विषुवत्प्रभृतिष्वपि ॥” इति मेदिनी ॥ २२ ॥ तदनुज्ञया ब्राह्मणानुज्ञया ॥ २३ ॥ इत्यर्थ इति । प्रजाशब्दस्य नृपपालनीयसमस्तस्थावरजंगमत्वाचित्वमप्यस्ति तद्वारणाय सत्पुत्रत्वमित्युक्तमिति भावः । सुष्ठु सौभगं सौभाग्यं यत इति शेषविशेषणम् ॥ २४ ॥ जीवतीति जीवः स चासौ पतिश्चेति तं, यशसा युक्तान् गृहान् ॥ २५ ॥ समग्रलक्षणं बलवेषविद्यावयोवंशवृत्त्यादियुक्तं, या मृतसुता सा जीवसुता धनेश्वरी च भवति । रूपमित्यग्रिमेणान्वेति । विरूपा रूपहीना रूपं विंदेत् ‘ रूपं स्वभावे सौंदर्ये ’ इति विश्वः । दुष्टस्वभावा सुस्वभावा भवति ॥ २६ ॥ एतन्महदुपाख्यानम् । अभ्युदये आभ्युदयिकश्राद्धादौ ॥ २७ ॥ राजन्निति । राज्ञा त्ववश्यं श्रोतव्यमभ्युदयहेतुत्वादिति भावः ॥ २८ ॥ नितरां गूढोऽर्थो येषां तेषां पदानां भावार्थदीपिका ( १ )। अथास्य श्रवणमाहात्म्यम्–“ हरिरुवाच ॥ ब्राह्मणीगमने पापं षष्ठस्य श्रवणेन हि । द्विबाहुकंठरूपस्य मम नश्यति यद्भवेत् ॥ १ ॥

श्रृणु ब्रह्मन्नितीहासं कल्याणस्य प्रदायकम् । कदाचिद्देवराजो हि धृत्वा रूपमथौतुकम् ॥ २ ॥ अहल्यां गौतममुनेर्भार्यां प्राप विमोहितः । विलोक्य तं मुनिवरो महेंद्रं शप्तवांस्तदा ॥ ३ ॥ येन त्वं जाररूपेण ह्यागतो मम मंदिरम् । अतः शक्र शरीरे ते भगानां च सहस्रकम् ॥ ४ ॥ सदनं प्राप्य शक्रः स्वं मुमोह च रुरोद च । ततो जगाम तपसे वनं वर्षसहस्रकम् ॥ ५ ॥ ततो वृत्रसमाक्रांता देवा मां शरणं ययुः । मया प्रोक्ता हि ते देवा यत्रेंद्रस्तत्र गच्छत ॥ ६ ॥ मया सह महाभागाः स च वृत्रं वधिष्यति । तत्र गत्वाहमवचं वरं ब्रूहि पुरंदर ॥ ७ ॥ पुरंदर उवाच ॥ ब्राह्मणीकृतसंगाच्च प्रपन्नोऽहं जनार्दन । तत्पापं मे यथा यातु तथा त्वं कुरु माधव ॥ तथा भगसहस्रं मे शरीरस्थं विनाशय ॥ ८ ॥ विष्णुरुवाच ॥ नेत्रतां भगसाहस्रं यातु मत्कृपया हरे । यदा त्वं विश्वरूपाद्वै कवचं षष्ठसंभवम् ॥ ९ ॥ पठिष्यसि तदा पापं सर्वं ब्राह्मणिसंगजम् । विनंक्ष्यति न संदेह इतिहासमतः श्रृणु ॥ १० ॥ सिंधुदेशेऽभवद्विप्रोऽध्येतुं स गुरुमंदिरम् । जगाम तत्र विद्यायामभ्यासं प्रचकार सः ॥ ११ ॥ ब्राह्मण्या गमनं तत्र स चकार धृतव्रतः । निःसारितः स गुरुणा कुष्ठाक्रांतस्तदाऽभवत् ॥ १२ ॥ गर्हयन्नात्मनः कर्म मुमोहाथ धृतव्रतः । देशेदेशे भ्रमन्विप्रो बनमध्ये सरोवरम् ॥ १३ ॥ ददर्श तत्तटे तस्थौ जलपानार्थमुद्यतः । तत्र : भागवतीयं हि पुस्तकं षष्ठसंभवम् ॥ १४ ॥ दृष्ट्वा तद्वाचयामास स विप्रो दूरसंस्थितः । अर्द्धश्लोकोच्चारणाच्च कीटास्तद्देहतो गताः ॥ दिव्यदेहमनुप्राप्य ययौ वैकुंठमंदिरम् ॥ १५ ॥ " इत्थं पाद्मे स्थितं वृत्तं मया संक्षिप्य वर्णितम् ॥ इति षष्ठस्कंधमहिमा ॥ भावार्थदीपिका टीका श्रीधरस्वामिनिर्मिता ॥ तस्याः प्रकाशो रचितः षष्ठस्कंधे मयाऽधुना ॥ १ ॥ अनुग्रहान्नंदसूनोः श्रीवंशीधरशर्मणा । यदत्र स्खलितं विज्ञास्तत्पूर्त्तिं कुर्वतां हि ते ॥ मयि शिष्यत्वमारोप्य गुरुत्वं स्वेषु यत्नतः ॥ २ ॥ इति श्रीखरडपत्तनवास्तव्यपण्डितवंशीधरशर्मनिर्मितश्रीमद्भागवतभावार्थदीपिकाप्रकाशे षष्ठस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥ समाप्तश्चायं षष्ठस्कन्धः ॥ ६ ॥

---

अयं श्रीभावार्थदीपिकाप्रकाशसमलंकृतभावार्थदीपिकासमेतश्रीमद्भागवतषष्ठस्कन्धो मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये "श्रीवेङ्कटेश्वर" ( स्टीम् ) मुद्रणालये मुद्रयित्वा प्राकाश्यमानीयत ।

इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते श्रीमद्भागवते षष्ठस्कन्धः समाप्तः ॥ ६ ॥

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते श्रीमद्भागवते सप्तमस्कन्धप्रारंभः ॥ ७ ॥

श्रीगणेशाय नमः ॥ राजोवाच ॥ समः प्रियः सुहृद्ब्रह्मन् भूतानां भगवान् स्वयम् ॥ इंद्रस्यार्थे कथं दैत्यानवधीद्विषमो यथा ॥ १ ॥ न ह्यस्यार्थः सुरगणैः साक्षान्निःश्रेयसात्मनः ॥ नैवासुरेभ्यो विद्वेषो नोद्वेगश्चागुणस्य हि ॥ २ ॥ इति नः सुमहाभाग नारायणगुणान् प्रति ॥ संशयः सुमहाञ्जातस्तद्भवाञ्छेत्तुमर्हति ॥ ३ ॥

श्रीगणेशाय नमः ॥ स्वभक्तपक्षपातेन तद्विपक्षविदारणम् ॥ नृसिंहमद्भुतं वंदे परमानंदविग्रहम् ॥ १ ॥ ऊतिः पंचदशाध्यायैः सप्तमे वर्ण्यतेऽधुना ॥ ऊतिश्च वासना प्रोक्ता तत्तत्कर्मानुसारिणी ॥ २ ॥ अशुभा च शुभा चेति द्विधा सा हेतुभेदतः ॥ अशुभा महतां कोपाच्छुभा महदनुग्रहात् ॥ ३ ॥ हरेर्द्वारपयोर्द्वद्वैकुंठे वसतोरपि ॥ चतुःसनरुषा विष्णुद्वेषाद्यशुभवासना ॥ ४ ॥ यथा च दैत्यगर्भेऽपि प्रह्लादस्य सतः स्थिरा ॥ नारदानुग्रहादास विष्णौ सद्भक्तिवासना ॥ ५ ॥ स्वभक्तं च सदा विष्णुर्द्विषंतमपि रक्षति ॥ तृतीयेऽथ भवे द्वास्थावकरोदात्मसात्पुनः ॥ ६ ॥ अतो मनीषिणा यत्नः कार्यो महदनुग्रहे ॥ इत्येतदर्थमूतीनामत्र लक्षणमुच्यते ॥ ७ ॥ तत्रादौ दशभिर्दैत्यतत्पुत्रमतिभेदतः ॥ महत्कोपानुकंपोत्थवासनाभेद उच्यते ॥ ८ ॥ सद्वासना च युज्येत कर्मभिः शुद्धचेतसः ॥ परैस्तु पंचभिस्तस्मात्क्रियते धर्मनिर्णयः ॥ ९ ॥ तत्र तु प्रथमेऽध्याये हिरण्यकशिपोः सुते ॥ विष्णुभक्ते विरोधस्तु विप्रशापज ईर्यते ॥ १० ॥ यदुक्तं पूर्वस्कंधांते "हतपुत्रा दितिः शक्रपार्ष्णिग्राहेण विष्णुना ॥ मन्युना शोकदीप्तेन ज्वलंती पर्यचिंतयत्" तच्छ्रुत्वा विस्मितः परीक्षित्पृच्छति । सम इति त्रिभिः । न हि समस्य सुहृदश्च वैषम्यं नामास्ति न च प्रियस्य प्रीतिकर्तृषु वैषम्यं युक्तमित्यर्थः ॥ १ ॥ किं च । यस्य यैः प्रयोजनं सिद्ध्यति स तत्पक्षपाती भवति । येभ्यो बिभेति तान्द्वेषेण हंति न तु तदत्रास्तीत्याह न हीति। निःश्रेयसं परमानंद एव आत्मा स्वरूपं यस्य । असुरेभ्यश्चोद्वेगो भयं नास्ति अतो विद्वेषोऽपि नास्त्येव । तत्र हेतुः । अगुणस्येति । गुणाधीनौ प्रीतिद्वेषावित्यर्थः॥ २॥ श्रीनारायणस्य णानुग्रहनिग्रहादीन्प्रति । तत्त्वं संशयम् ॥ ३ ॥

ॐ श्रीगणपतये नमः ॥ वंदेऽहं सर्वगोपालं बल्लवीवल्लभं हरिम् । यो भक्तं सर्वतः पाति सर्वगोऽद्भुतरूपधृत् ॥ १ ॥ यस्य ध्यानवशेनाऽज्ञो विज्ञतां झटिति व्रजेत् । तं ध्यात्वा सप्तमस्कंधविवृतिं नंदनंदनम् ॥ २ ॥ करोमि गुरुपादाब्जधृतचित्तोऽधुना स्फुटाम् । विप्रो गौडकुलोद्भूतो नाम्ना वंशीधरः कृती ॥ ३ ॥ तस्य भक्तस्य यो विपक्षो विरोधी तं विशेषेण दारयतीति तथा । अद्भुतमकस्मादाविर्भूतम् । अत् आश्चर्येऽव्ययम् । "अदि भुवो डुतच्" उ० ५ । १ । तत्र हेतुः परमानंदेति ( १ ) तत्तत्कर्मानुसारिणी शुभाशुभकर्मानुगा ( २ ) हेतुभेदमाह—अशुभा महतामिति ( ३ ) अशुभवासनामाह—द्वारपयोर्जयविजययोः । चतुःसनाः सनकाद्यास्तेषां रुषा क्रोधेन । आदिना तद्भक्तद्वेषादिग्रहः ( ४ ) शुभवासनामाह—यथा चेति । ( ५ ) अथातः । भवे जन्मनि । आत्मसादात्माधीनम् ( ६ ) यतो महदनुग्रहादेव शुभवासना भवत्यतो हेतोः । महदनुग्रहे इति निमित्ते सप्तमी । अत्र स्कंधे । इत्येतदर्थं महत्कोपवर्जनपूर्वकं महदनुग्रहावाप्त्यर्थम् ( ७ ) तत्र पंचदशाध्यायेषु मध्ये । दैत्यो हिरण्यकशिपुस्तत्पुत्रः प्रह्लादस्तयोर्मतिभेदतः ( ८ ) युज्येत कर्मकर्त्तरि प्रयोगः । तस्मादध्यायदशकात्परैः ( ९ ) तत्र दशसु मध्ये । विप्रशापजः सनकादिभिशापजातासुरभावजः ( १० ) । इत्यर्थ इति । समस्य कथं वैषम्यं प्रियस्य कथमसुरेषु प्रीत्यभावः सुहृदश्च कथं तेपु सौहार्दम् ॥ १ ॥ न हि परमानंदस्वरूपस्य कश्चिदन्यः सुखं साधयेदिति भावः । अतो भयाभावात् । तत्र विद्वेषाभावे । इत्यर्थ इति । निर्गुणस्य गुणाभावात्तद्धेतुकरागद्वेषौ कथं संभवत इति भावः ॥ २ ॥ हे सुमहाभागेति । सुष्ठु

श्रीशुक उवाच ॥ साधु पृष्टं महाराज हरेश्चरितमद्भुतम् ॥ यत्र भागवतमाहात्म्यं भगवद्भक्तिवर्धनम् ॥ ४ ॥ गीयते परमं पुण्यमृषिभिर्नारदा दिभिः ॥ नत्वा कृष्णाय मुनये कथयिष्ये हरेः कथाम् ॥५॥ निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान् प्रकृतेः परः ॥ स्वमायागुणमाविश्य बाध्यबाध कतां गतः ॥ ६ ॥ सत्त्वं रजस्तम इति प्रकृतेर्नात्मनो गुणाः ॥ न तेषां युगपद्राजन् ह्रास उल्लास एव वा ॥ ७ ॥

भागवतस्य प्रह्लादस्य माहात्म्यं गीयत इति संबंधः ॥ ४ ॥ कृष्णाय व्यासाय । कृष्णं मुनिं नत्वेत्यर्थः ॥ ५ ॥ यस्मात्प्रकृतेः परः अतो निर्गुणोऽत एवाजोऽत एवाव्यक्तो रागद्वेषादिनिमित्तभूतदेहेंद्रियादिरहितः सोऽपि स्वमायागुणं सत्त्वादिकमाविश्याधिष्ठाय बाध्यान्प्रति यद्वा । देवासुराणां परस्परं या बाध्यबाधकता तां गतः प्राप्तः । तत्र हेतुर्जात इत्यर्थः ॥ ६ ॥ तत्र गुणानां स्वीयत्वे सति प्राकृतपुरुषवद्विषमः स्यात्तत्तु नास्तीत्याह । सत्त्वमिति । ननु स्वेच्छया गुणाधिष्ठानेनापि पक्षपातवैषम्यं स्यादेव । न

महतेऽर्च्यते इति सुमहो विष्णुस्तस्या समंताद्भागो भजनं यस्य स तथा "वैयासकिश्च भगवान्वासुदेवपरायणः" इत्युक्तेस्तथा च नारायणपरायण एव तल्लीलां वेत्ति नान्य इति भावः । 'स एव धातुः पदवीं परस्य' इत्यारभ्य 'भजेत तत्पादसरोजगंधम्' इत्यंतसूतोक्तेः ॥ ३ ॥ स्वस्य महापदोपपदसंबुद्धिमाकर्ण्य श्रीशुकदेवोऽपि राजानं महापदोपपदसंबुद्ध्यैवामंत्रयति—हे महाराजेति । त्वमपि महे भगवद्गुणाकर्णनोत्सवे आराजसे इति महाराजाऽसीति भावः । "तमो विशीर्यते मह्यं हरेः कथयतः कथाम्" इति त्वदुक्तेरेव । यत्र चरिते । अत्र संदर्भः—साधु पृष्टमिति सार्द्धमेवान्वितम् । हे महाराज इदं यत्पृष्टं तत्साधु सुविचारितमेव किं तु हरेश्चरि तमद्भुतमपूर्वम् अवैषम्येऽपि विषमतया प्रतीयमानत्वेन विचारातीतत्वात् । यत्र यद्धरिचरितं भगवद्भक्तिवर्द्धनं भागवतमाहात्म्यं भागवतानां श्रीप्रह्लादोपलक्षितभक्तवृंदानां माहात्म्यम् । अनेन भागवतार्थमेव सर्वं करोति भगवान् न त्वन्यार्थमित्यस्यैवार्थस्य पर्यवसानं भविष्यतीति व्यंजितम् । अत एव स्वामिचरणैरप्युक्तं स्वभक्तपक्षपातेनेति ॥ ४ ॥ अतः गीयत इति परमं पुण्यं यथा स्यात्तथा या गीयते तां कथामिति यत्तदोरध्याहारे णान्वयः । अत्र च तैर्गीयमानत्वेन भक्तैकसुखप्रयोजनत्वमेव व्यंजितम् ॥ ५ ॥ अत एव निर्गुणत्वादेव । अत एवाजत्वादेव । बाध्यबाधकत्वं परस्परमेव दृश्यते न तु हरेस्तत्कथमुक्तं बाध्यान्प्रतीति चेदाह—यद्वेति । इत्यर्थ इति । न हि सच्चिदानंदस्य बाध्यबाधकता स्वतः संगच्छते किं तु मायामंतरीकृत्य तथात्वमपि संगच्छत एव आत्ममायामंतर्द्धाय को न्वर्थो दुर्घट इव भवतीत्युक्तेरिति भावः । अत्र संदर्भः—तत्र तावद्वांछितार्थानु रूपमेव प्रश्नोत्तरमाह—निर्गुणोऽपीति । निर्गुणः प्राकृतगुणरहितः । अत एवाजो नित्यसिद्धः अत एवाव्यक्तः प्राकृतदेहेंद्रियरहितत्वान्नान्येन व्यज्यत इति । स्वयं प्रकाशदेहादिरित्यर्थः । ततश्च प्रकृतिगुणेषु रागद्वेषादि रहितश्चेति भावः । एवमेवं भूतोऽपि स्वेषु भक्तेषु या माया कृपा तत्रोचितो यो गुणो लीलाकौतुकमयविशुद्धोर्जितसत्त्वाख्यस्तमाविश्यालंब्य भगवान् नित्यमेव प्रकाशितषड्गुणैश्वर्यैः सन् एतदप्युपलक्षणं कदाचिददित्यादौ जातः सन् लोकेंद्रियेषु व्यक्तोऽपि सन् बाध्यबाधकतां गतः कदाचिदसुरैर्बाध्यतां पराजयं कदाचित्तु तेषां बाधकतां जयं प्रात इत्यर्थः । अत्र सत्यप्यर्थांतरे भागवतानुग्रहप्रयोजनत्वेनैवोपक्रांतत्वादुपसंहरिष्यमाणत्वाद्वृति सामान्याच्छलमयमायया तत्कर्तृत्वेऽप्यधिकदोषपाताच्च तन्नापेक्ष्यते । तस्माद्भक्तविनोदैकप्रयोजनकस्वैरलीलाकैवल्येनान्यत्र रागद्वेषाभावान्नात्र वैषम्यमिति भावः । अत एव बाध्यतामपि यातीति बाधकतया सहैवोक्तम् । तथा नित्यस्वरूपभक्तिविलासलक्षणलीलाविष्कारेण । सर्वेषामेव हितं पर्यवस्यतीति सुहृत्त्वादिकं च नापयातीति ध्वनितम् ॥ ६ ॥ तत्र तवाक्षेपे । अत्राशंकते—नन्विति । इत्यर्थ इति । गुणानां वृद्धिरेव तथा तथा करोति न तु भगवानिति भावः । अत्र संदर्भः—अथ तस्य बाध्यबाधकताव्यवस्थां स्थापयति द्वाभ्यां तत्र ये तु सत्त्वादयो गुणास्तेषु न तदीयत्वं न तदावेशो न च सदैकावस्थत्वं यतः पूर्वत्र पद्ये तस्य गुणस्यान्यतमत्व दर्शनाय स्वेति । आविश्येति च । विशिष्यस्वमायागुणमाविश्येत्युक्तं न तु मायागुणमुपधायेत्याह—सत्त्वमित्यर्द्धकेन । सत्त्वादयो गुणाः प्रकृतेरेव नात्मनः परमेश्वरस्य तु ये सर्वेपि नित्यमेवोल्लासिनो गुणास्ते तु ते न भवंती

जयकाले तु सत्त्वस्य देवर्षीन्रजसोऽसुरान् ॥ तमसो यक्षरक्षांसि तत्कालानुगुणोऽभजत् ॥ ८ ॥ ज्योतिरादिरिवाभाति संघातान्न विविच्यते ॥ विदंत्यात्मानमात्मस्थं मथित्वा कवयोंततः ॥ ९ ॥

तस्य कालकृतत्वादित्याह । न तेषामिति सार्धेन । उल्लासो वृद्धिः ॥ ७ ॥ सत्त्वस्य जयकाले देवादीनृषींश्चाभजत् । तत्तद्देहं प्रविश्य वर्धयतीत्यर्थः । रजसो जयकाले सुरान् । तमसो जयकाले यक्षरक्षांसि तस्य कालस्यानुगुणः सन् ॥ ८ ॥ समस्यापि निमित्तभेदेन वैषम्ये दृष्टांतः । ज्योतिरादिरिव ज्योतिरग्निर्यथा काष्ठादिषु जलं यथा पात्रेषु आकाशो यथा घटादिषु तथा भगवान्नानारूप आभाति ननु तर्हि तद्वदेव विवेकेन किं न प्रतीयते तत्राह । संघातात्सुरादिदेहान्न विविच्यते न पृथक्प्रतीयते तर्हि तान्भजतीति कुतो ज्ञायते तत्राह । विदंतीति आत्मस्थं परमात्मानं कवयो निपुणाः मथित्वा कार्यदर्शनलिंगेन विचार्य जानंति । अंततः स्वभावकालकर्मादिवाद निषेधेन । विंदंतीति पाठे लाभोऽपि ज्ञानमेव । अत्रापि ज्योतिरादिरेवेति द्रष्टव्यं यथा सूर्यकांतादौ दाहदर्शनाज्ज्योतिर्ज्ञायते यथा च गंधदर्शनाद्वायुरित्यादि ॥ ९ ॥

त्यर्थः । तदुक्तम् "सत्त्वादयो न संतीशे यत्र च प्राकृता गुणाः । स शुद्धः सर्वशुद्धेभ्यः पुमानाद्यः प्रसीदतु ॥" इति "ह्लादिनी संधिनी संवित्त्वय्येका सर्वसंस्थितौ । ह्लादतापकरी मिश्रा त्वयि नो गुणवर्जिते ॥" इत्यादिवचनानि भगवत्संदर्भे दर्शितानि । न तेषामिति सार्द्धकम् । यस्मान्नात्मनस्ते तस्मादेव युगपद्ध्रास एव वोल्लास एव वा नास्ति किं तु विकारित्वेन परस्परमुपमर्द्युपमर्द्यत्वात्कस्यचित्कदाचिद्ध्रासः कस्यचित्कदाचि दुल्लासो भवतीत्यर्थः ॥ ७ ॥ ततश्च देवादीनां तत्साहायेऽसुरादीनां तद्युद्धे योग्यतां दर्शयति तथा सत्त्वाद्युल्लासकाले तल्लीलायास्तदधीनत्वमेव यत्प्रतीयते न तदनुवदन् परिहरति सत्त्वस्य जयकाले देवादीन् ऋषींश्चा भजत् भजति भगवांस्तत्तद्देहेषु सत्त्वोपाधिकं निजं तेजः संचारयति येन च तान्सहायमानान्करोतीत्यर्थः । एवं रजसो जयकालेऽसुरेषु रजउपाधिकं तमसो जयकाले यक्षरक्षस्सु तमउपाधिकमिति योजनीयम् । ततश्च येन तान् यक्षादीन् प्रतियोद्धॄन् भगवान्कुर्वन् देवादीन् पराजितान् करोति स्वमपि तथा दर्शयतीत्यर्थः । तदेवं भक्तिरसपोषकलीलावैचित्र्यार्थबाध्यबाधकतां यातीति दर्शितम् । यच्च क्षीरोदमथने श्रूयते "तथा सुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् । उद्दीपन्देवगणांश्च विष्णुर्दैवेन नागेंद्रमबोधरूपः" इति । अत्रापि तद्वैचित्र्यार्थमेव तथा तत्तदावेशस्तस्येति लभ्येत । नन्वायाता तस्य तत्तद्गुणोद्बोधकका लपारवश्येनं स्वैरलीलाहानिः ततश्च गुणसंबंधातिशये वैषम्यादिकं च स्पष्टमेवेत्याशंक्याह—तत्कालानुगुण इति । तेषां सत्त्वादीनां काल एवानुगुणो यस्य सः । भगवच्छरण इतिवत्समासः । स्वैरमेव क्रीडति तस्मिन्नित्यमेव तदनुगतिकया मायया यया तदनुसारेणैवानादिसिद्धप्रवाहं तंतं जगत्कर्मसमुदायं प्रेर्य स्ववृत्तिविशेषरूपत्वेन प्रवर्त्यमानः सत्त्वादिगुणानां काल एव तदधीनो भवतीत्यर्थः । कालस्य मायावृत्तित्वमुदाहृतम् 'कालो दैवम्' इत्यादौ त्वन्मायैषेति । यद्वा—तेषां कालोऽपि सदानुगतो भक्तानुग्रहमात्रार्थं स्वैरचेष्टात्मकप्रभावलक्षणो गुणो यस्य स इत्यर्थः । ततोऽपि तच्चेष्टानुसारेणैव मायया तत्तत्प्रवर्तनमिति भावः । तदुक्तम् "योऽयं कालस्तस्य तेऽव्यक्तबंधोश्चेष्टामाहुश्चेष्टते येन विश्वम्" इति तथा चोभयथाऽपि न पारवश्यमित्यायातम् । इत्थमेव श्रीकपिलदेवेनाप्युक्तम् 'यः कालः पञ्चविंशकः' इति "प्रभावं पौरुषं प्राहुः कालमेके यतो भयम्" इति च । तत्र मायाव्यंग्यत्वपुरुषगुणत्वलक्षणमत्तद्वयमुपन्यस्तवान् । अत्र चास्य चेष्टाप्रभावस्य भक्तिविनोदायैव मुख्या वृत्तिः । गुणोद्बोधादिकार्यं तु तत्र स्वत एव भवतीति तत्र प्रकृत्याभास एव ततश्च पूर्वांशः स्वयमेवेति स्वरूपशक्तेरेव विलासः परश्च तदाभासरूप एवेत्याभासशक्तेर्मायाया एवांतर्गतत्वं 'योऽयं कालः' इत्यादौ निमेषादिरित्युक्तिश्च द्वयोरभेदविवक्षयैवेति ज्ञेयम् । अत एवं व्याख्येयं यथा भृत्यस्यानुगतो भृत्योनुभृत्यः तथा तत्र तत्प्रभावलक्षणस्य गुणस्यानुगत आभासरूपो गुणोऽनुगुणः तथा च कालोऽपि अनुगुणो न तु साक्षाद्गुणोऽपि यस्येति ॥ ८ ॥ अत्राक्षिपति—नन्विति । तद्वदेव ज्योतिरादिवदेव यथा काष्ठादिभ्योऽग्न्यादि पृथक् प्रतीयते

**यदा सिसृक्षुः पुर आत्मनः परो रजः सृजत्येष पृथक् स्वमायया ॥ सत्त्वं विचित्रासु रिरंसुरीश्वरः शयिष्यमाणस्तम ईरयत्यसौ ॥ १० ॥**

**तदेवं मायागुणवशेनैतद्वैषम्यं न स्वाभाविकमित्युक्तम् । तर्हि गुणपारतंत्र्यादनीश्वरत्वमाशंक्याह । यदा आत्मनो जीवस्य भोगाय पुरः शरीराणि परः परमेश्वरः सिसृक्षुर्भवति तदा साम्येन स्थितं रजः पृथक्सृजति । विचित्रासु तासु पूर्षु रिरंसुः क्रीडितुमिच्छुर्यदा तदा सत्त्वं पृथक्सृजति । शयिष्यमाणः संहरिष्यन्यदा तदा तमः पृथगीरयति तद्वदित्यर्थः ।**

अत्र विश्वनाथः—सत्त्वादीनामाधिक्यन्यूनताभ्यामेव तदधिष्ठानस्याप्याधिक्यन्यूनते इत्यत्र दृष्टांतमाह—ज्योतिर्यथा काष्ठेषु जलं यथा पात्रेषु आकाशं यथा घटेषु अधिकेष्वधिकरूपं न्यूनेषु न्यूनरूपं तिष्ठदपि न विषममुच्यते तथैव देवनिष्ठे सत्त्वेऽधिके सति सोऽपि देवेष्वधिकरूपः । तथैवासुरनिष्ठे रजसि न्यूने तत्र न्यूनरूप इत्यसुराणां देवबाध्यत्वे देवानामसुरबाधकत्वे सति सोऽपि देवपक्षपाती सुरबाधक इत्युच्यते । एवमसुरनिष्ठे रजस्यधिके सोप्यसुरपक्षपाती देवबाधकश्चेति लोकप्रतीत्या विषमोऽप्यविषम एवेत्यर्थः । जयकाले तु सत्त्वस्य देवर्षीनभजदित्यधिकभजनमेव तत्र विवक्षितं तदेव देवपक्षपातित्वव्यंजकं न त्वजयकाले केवलमभजनमेवेति ज्ञेयम् । ननु काष्ठादिषु ज्योतिरादिर्यथाऽस्मिन्काष्ठेऽयं वह्निरित्येवं विवेकेन प्रतीयते तथा देवादिदेहेऽपि भगवान्किन्न प्रतीयते तत्राह—संघाताद्देवादिदेहान्न विविच्यते स त्वन्य इव पृथङ् न प्रत्यक्षी भवतीत्यर्थः । तर्हि स तान्भजतीति कुतो ज्ञायते तत्राह—विदंतीति । आत्मस्थं परमात्मानं कवयो निपुणा मथित्वा कार्यदर्शनलिंगेनानुमानाज्जानंति । अंततः स्वभावकर्मादिवादनिषेधेन विंदंतीति पाठे लभंते जानंतीत्येवार्थः । नन्विन्द्रादिपक्षपाती भगवान्कदाचित्सर्वैः प्रत्यक्षीभूत एवासुरान्हंति तथैव रजस्तमसोरपि वृद्धौ सत्यां कदाचिदसुरादीनामपि पक्षपाती भवन्देवादीन् हिनस्तु तदैवोक्तयुक्त्या तस्य साम्यं सिध्येदित्यत आह—ज्योतिरादिरिवेति । तमेव श्लोकं तंत्रेणार्थांतराभिधायकं ज्योतिरादिरिवेति ज्योतिरादिगतं रूपरसगंधस्पर्शं यथा संघाते तद्वति वस्तुनि आभाति स्पष्टतया भासते । किंचित्तथा किंचित्संघातात्तस्मान्न विविच्यते न पृथक्स्पष्टमाभाति च किन्तु तदंतर्गततयैव भाति एवमेव जगत्यस्मिन्देवासुरादिषु मध्ये भगवान् कचित्स्पष्टं भासते कचित्तदंतर्गतश्च तिष्ठतीत्यर्थः । तत्र ज्योतिषः सत्त्वप्राधान्यादनावरकत्वात् तद्गतं रूपं यथा किंचिद्दूरेऽपि शुक्लमिदं क्षीरमिति सुदूरे लक्षद्वययोजनेऽपि चंद्रोऽयं शुक्ल इति तत्रतत्र नयनेंद्रियेण गृहीतं स्पष्टमाभाति तथैव देवादेः सत्त्वप्राधान्यात्सत्त्वेनानावरणात्तद्गतो भगवांस्तत्पक्षपाती स्पष्टमेवोपेंद्रादिरूप आभाति । यथा च जलादेस्तमोरजःप्राधान्यात्तेनावरणात्तद्गतं शब्दरसगंधस्पर्शं न स्पष्टमाभाति किन्तु तद्वतः पदार्थस्य योग एवेंद्रियगोलकेषु तमोरजसोरपि किंचित्सत्त्वमत्त्वात्सर्वथावरणाभावादेव । तथा हि रसनाया रसवतो योग एव रसः । श्रोत्रे शब्दवदाकाशस्य योगे सत्येव शब्दः । त्वचि शैत्यादिमद्वस्तुयोग एव स्पर्शः । नासायां गंधवतो वायोर्योग एव गंध इति । तथैवासुरराक्षसादेरजस्तमःप्राधान्यात्तेनावरणात्तद्गतो भगवांस्तत्पक्षपाती न स्पष्टमाभाति । अत्र मेघातपाभ्यामावरणानावरणे सूर्यस्य यथा तथैव तमःसत्त्वाभ्यां भगवतो ज्ञेये । ननु तर्हि स्पष्टभानाभावेऽसुरादिपक्षगतित्वं तस्य कथं प्रतीमस्तत्राह—विदंतीति । देवपराभवादिकार्यदर्शनालिंगेन जानंतीत्यर्थः । संदर्भस्तु—नेदं मणेस्तेजः पूर्वमदर्शनात्किन्तु तदा तमःसंयोगेन सौरं तेज एवात्र प्रविष्टमिति सूर्यकांतादौ तृणादिदाहेन तदनुभविषु तदाभाति तथा वायोरयं गंधः पार्थिव एव प्रविष्ट इति तथात्रापीति । तीर्थस्तु—संघाताद्देहेंद्रियादिसंघातात् । न विविच्यते पृथग्भूतो न दृश्यते । तत्र दृष्टांतः ज्योतिरादिर्घृतादिद्रव्यं दध्यादिभ्यो मथनात्पूर्वं न विविच्यते पृथग्भूतं न ज्ञायते तथात्मापीति भावः । "तेजोऽसितं त्रेधा विधीयते" इति श्रुतेर्घृतस्य ज्योतिःशब्दाभिधेयत्वमित्याह ॥ ९ ॥ न चैवं गुणतारतम्येन तस्याधिष्ठातृत्वतारतम्यलक्षणयंत्रणेन गुणाधीनत्वमाशंक्यम् । किन्तु गुणानामपि स्रष्टुस्तस्य तत्तत्सर्वं स्वैरलीलामयमेवेत्याह—यदेति । अत्र संदर्भः—तदेवं युद्धादिनिजलीलाभिर्भक्तविनोदनमेव प्रयोजनं विश्वपालनं तु स्वत एव ततः सिध्यतीत्युक्त्वा सृष्टिप्रलययोः प्रकृतीक्षणादावपि सर्वाशंकानिरासार्थमिति दिशन् त्रिष्वप्यविशेषमाह—यदेति । यत्र स्वचेष्टालक्षणे काले । एषः परमेश्वरः स्वमायया भक्तकृपयाऽऽत्मनः पुरः प्राचीनसृष्टिगतसाधकभक्तरूपाणि स्वस्याधिष्ठानानि सिसृक्षुर्भवति प्रकृत्या सह तेषु लीनेष्वाविर्भावनार्थमीक्षां करोति तदा पृथक्स्वरूपशक्तेरितराऽसौ जीवमायाख्या शक्तिः पूर्ववत्तच्चेष्टात्मकप्रभावाभासोद्दीप्ता रजः सृजति स्वांशभूताद्गुणत्रयसाम्यादव्यक्तात्तद्विक्षिपति उद्बोधयतीति

**कालं चरंतं सृजतीश आश्रयं प्रधानपुंभ्यां नरदेव सत्यकृत् ॥ य एष राजन्नपि काल ईशिता सत्त्वं सुरानीकमिवैधयत्यतः ॥ तत्प्रत्यनीकानसुरान् सुरप्रियो रजस्तमस्कान् प्रमिणोत्युरुश्रवाः ॥ ११ ॥**

प्रेरयति । आधिक्यं नयतीत्यर्थः ॥ १० ॥ यदा सिसृक्षुरित्यादिनिर्देशात्प्रतीतं कालपारतंत्र्यं वारयन्प्रधानपुरुषपारतंत्र्यमपि वारयति । कालमिति । हे नरदेव प्रधान पुंभ्यां निमित्तभूताभ्यां सत्यकृदमोघकर्ता ईशस्तयोः सहकारित्वेनाश्रयभूतं चरंतं वर्तमानं कालं स्वयमेव सृजति । स्वचेष्टारूपत्वात्कालस्य न तत्पारतंत्र्यमित्यर्थः । तथाऽपि प्रस्तुते किमायातं तत्राह । य एष कालः सत्त्वमेधयति वर्धयत्यतो हेतोरीशिताऽपीश्वरोऽपि सत्त्वप्रधानं सुरानीकं देवसमूहमेधयतीव तत्प्रत्यनीकानसुरान्सुरप्रतिपक्षान्प्रमिणो

वा यथा वा पृथङ्मायानुगत एव काल एव सृजति तथा सौपदेन च काल एवोच्यते । अथ विचित्रासु नानागुणवैचित्र्यवतीषु तल्लक्षणासु पूर्षु रंतुमिच्छुर्भवति तदा सत्त्वं सृजति यदा पुनस्ताभिरेव मिलित्वा शयिष्यमाणः शयितुमिच्छुर्भवतीत्यर्थः । तदासौ तमः सृजतीति ततो भक्तनिमित्तमेव सर्वा एव सृष्ट्यादिक्रियाः प्रवर्तंत इति भावः । यथांगीकृतमेकादशस्य तृतीये टीकाकृद्भिरपि, किमर्थं ससर्ज स्वमात्रात्मप्रसिद्धये स्वं मिमीते प्रमिमीते य उपास्ते स स्वमाता तस्यात्मनो जीवस्य प्रकृष्टायै सिद्धये इति । शयनमत्र पुरुषावतारस्य कदाचित्प्रलयोदधौ योगनिद्रा कदाचिद्भगवत्प्रवेशो वा यद्यपि सर्वेष्वपि जीवेष्वंतर्यामितया परमेश्वरस्तिष्ठति तथापि तत्रासंसक्तत्वादस्थित एव भवति स्वभक्तेषु तु समासक्तत्वान्न तथेति । न च तत्संगादौ तस्येच्छेति यथोक्तव्याख्यानमेव बलवत्। तथा च श्रीगीतासु—"मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥ " इति । " ये भजंति तु मां भक्त्या मयि ते तेषु चाप्यहम् " इति च । उक्तं हरिभक्तिसुधोदये " भक्तानां हृद्यं शांतं सश्रियो मे प्रियं गृहम् । वसामि तत्र शोभैव वैकुंठाख्यादिवर्णना ॥" इति ॥१०॥ अत्राभिप्रायमाह—जगत्सृष्ट्यादिकं हि तस्य लीलयैव सा च स्वेच्छाधीनैव तत्र यदा सिसृक्षा भवति तदा रजोवृद्धिसृष्टिकालो जायते यदा पिपालयिषा तदा सत्त्ववृद्धिपालनकालः यदा संजिहीर्षा तदा तमोवृद्धिनाशकाल इति कालविशेषस्तेनैव सृज्यते तत्र यदा सृष्ट्यादिकालस्तदैव सृष्ट्यादिकं स्यादिति यद्यशब्दवाच्यः कालविशेष एव स तु सृज्य एवेति।जयकाले तु सत्त्वस्येत्यादिनापि प्रतीतं कालपारतंत्र्यं वा रितामिति प्रधानेन मायाशक्त्या पुरुषेण स्वांशेन च सह वर्त्तमानः एवं सर्वकारणत्वात्तस्यैव स्वातंत्र्यं तत्कार्यत्वाज्जगतस्तदधीनत्वम् । ननु तत्कार्यं जगदवस्त्वेव अवस्तुनः किमधीनत्वानधीनत्वविचारेणेति केचिदाहुस्तत्राह—सत्यकृत् भगवच्छक्तिकार्यस्य विश्वस्य मिथ्यात्वानर्हत्वात् कार्यमात्रस्यैव मिथ्यात्वे तदनुमेये भगवत्यपि प्रमाणाभावः प्रसज्येदिति भावः । "सत्यं ह्येवेदं विश्वमसृजत्" इति माध्वभाष्यप्रमाणिता श्रुतिश्च । हे नरदेवेति । एतादृशज्ञानमेव नरदेवत्वापादकं न केवलं राज्यमिति भावः। राजन्निति । यथा राजा स्वभृत्यैरेव सर्वं कार्यं साधयति स्वयं न किंचित्करोति तथेशोऽपि कालादिनिजशक्त्या सर्वं कुर्वन्स्वयं न किंचित्करोति राज्ञि यथा भृत्यजयपराजयावारोप्येते तथेशे सृष्ट्यादिकमिति भावः।नरदेवेत्यस्याप्ययमेव मुख्योऽभिप्रायः। इत्यर्थ इति। न कदाचिद्भृत्याधीनो राजा भवतीति भावः । इत्यर्थ इति। इवपदेनोभयत्र मुख्यं वर्द्धनादिकर्म कालस्यैवेति सूचितमिति भावः । अत्र संदर्भः—ननु यदि चेशितुः प्रयोजनं न भवति तर्हि कथं कदाप्यसुरानपि स्वपक्षान् विधाय देवैर्न युज्येतेति तत्राह—सुरप्रिय इति । सुरेषु वर्त्तमानाः प्रिया भक्ता यस्य सः सत्त्वप्रधानेषु सुरेषु प्रायशस्तेषां सर्वेषामनुगमने नैवानुगमनं कदाचिद् बृहस्पत्यादिषु महत्स्वपराधे तेषामाभित्येन सुरत्वाच्छादनात्तेषां तस्य तेष्वनुगमनं न स्यादिति । जयकाले तु सत्त्वस्येत्याद्युक्तमिति भावः। ननु कथं तेऽपि तान्नानुगच्छंति तत्राह—रजस्तमस्कानिति । अत्यंतभगवद्बहिर्मुखताकरयोस्तयोर्गुणयोररोचकत्वादेवेति भावः । तर्ह्यसौ सदैवासुराणां निग्रहमेव करोतीत्यथाप्यसामंजस्यमेवेत्याशंक्याह—उरुश्रवा इति । 'वैरेण यं नृपतयः' इत्यादि । 'अहो बकीयम्' इत्यादिभिरुरु सर्वतो

अत्रैवोदाहृतः पूर्वमितिहासः सुरर्षिणा ॥ प्रीत्या महाक्रतौ राजन् पृच्छतेऽजातशत्रवे ॥ १२ ॥ दृष्ट्वा महाद्भुतं राजा राजसूये महाक्रतौ ॥ वासुदेवे भगवति सायुज्यं चेदिभूभुजः ॥ १३ ॥ तत्रासीनं सुरऋषिं राजा पांडुसुतः क्रतौ ॥ पप्रच्छ विस्मितमना मुनीनां शृण्वतामिदम् ॥ १४ ॥ युधिष्ठिर उवाच ॥ अहो अत्यद्भुतं ह्येतद्दुर्लभैकांतिनामपि ॥ वासुदेवे परे तत्त्वे प्राप्तिश्चैद्यस्य विद्विषः ॥ १५ ॥ एतद्वेदितुमिच्छामः सर्वं एव वयं मुने ॥ भगवन्निंदया वेनो द्विजैस्तमसि पातितः ॥ १६ ॥ दमघोषसुतः पाप आरभ्य कलभाषणात् ॥ संप्रत्यमर्षी गोविंदे दंतवक्रश्च दुर्मतिः ॥ १७ ॥ शपतोरसकृद्विष्णुं यद्ब्रह्म परमव्ययम् ॥ श्वित्रो न जातो जिह्वायां नांधं विविशतुस्तमः ॥ १८ ॥ कथं तस्मिन् भगवति दुरवग्राहधामनि ॥ पश्यतां सर्वलोकानां लयमीयतुरंजसा ॥ १९ ॥ एतद्भ्राम्यति मे बुद्धिर्दीपार्चिरिव वायुना ॥ ब्रूह्येतदद्भुततमं भगवांस्तत्र कारणम् ॥ २० ॥ श्रीशुक उवाच ॥ राज्ञस्तद्वच आकर्ण्य नारदो भगवानृषिः ॥ तुष्टः प्राह तमाभाष्य शृण्वत्यास्तत्सदः कथाः ॥ २१ ॥

ति हिनस्ति चेत्यन्वयः। उरु प्रभूतं श्रवः कीर्तिर्यस्य सः । कालशक्तिक्षुभितगुणगतवैषम्यमिह सन्निधिमात्रेण तदधिष्ठातारि स्फुरतीति प्रकरणार्थः ।। ११ ।। तदानीं तयोर्न सुरपक्षपातेन वधः किं तु ब्रह्मशापेनासुरीं योनिं प्राप्तयोरनुग्रहाय एवेति वक्तुमितिहासमुपक्षिपति । अत्रैवेति । अत्र द्वेषादिरहितस्यापि दैत्यवधे नारदेनेतिहासः प्रस्तावितः ।। १२ ।। चेदिभूभुजः शिशुपालस्य ।। १३ ॥ १४ ॥ एकांतभक्तानामपि दुर्लभा प्राप्तिर्विद्विषो जातेत्येतदत्यद्भुतं हि ॥ १५ ॥ तस्य तु वेनवन्नरकपात एवोचित इत्याह । भगवन्निंदयेति । तमसि नरके ।। १६ ।। दमघोषस्य सुतः शिशुपालः कलभाषणाद्बाल्ये कोमलभाषणमारभ्य संप्रत्यधुनाऽप्यमर्षी क्रोधी मत्सरी वा ।। १७ ।। श्वित्रः श्वेतकुष्ठम् ।। १८ ।। दुरवग्राहं दुष्प्रापं धाम स्वरूपं यस्य तस्मिँल्लयं सायुज्यमीयतुर्जग्मतुः । अभूतस्यापि दंतवक्त्रलयस्य तज्जातकप्रामाण्येन सिद्धवन्निर्देशः ।।१९।। एतदद्भुततममत एतत्प्रति मे धीर्भ्राम्यति । भगवान्सर्वज्ञस्त्वं ब्रूहि ।। २० ।। आभाष्य संबोध्य सीदंति निषीदंत्यस्यामिति सद् सभा तस्याः सदः सदसः शृण्वत्याः सत्याः

विस्तृतं महत्तमं वा श्रवः कीर्त्तिर्यस्य स तेषामप्यनुग्रहं करोतीति भावः ॥ ११ ॥ तदेवं सिद्धांतं प्रदर्श्य तत्र स्वभक्तानुग्रहमात्रप्रयोजनस्तत्तत्करोति परेश इति । प्रतिज्ञातार्थोदाहरणाय प्रह्लादजयविजयादिकृपासूचकेतिहासमाह—अत्रैवेति । अत्र विद्वेषराहित्येन भक्तानंदनार्थं स्वैरलीलामात्रत्वेऽसुराणामपि परमहितपर्यवसायकस्वभावत्वे च । यद्वा—साम्यसौहार्दप्रियत्वेष्वर्थेषु एवकारेण सिद्धांतांतरं व्यावर्त्यते । राजन्निति । राज्ञां प्राचीनवृत्तप्रियत्वादिति भावः ॥ १२ ॥ सायुज्यमैक्यम् ॥ १३ ॥ तत्र क्रतौ ॥ १४ ॥ एक एवांतः समयो निर्णय इति यावत् । तेषां ते एकांतिनः भक्तिरेव पुरुषार्थसाधनं नान्यत्कर्मादिकमिति निर्णयवंतस्तेषामिति वा ॥ १५ ॥ तस्य चैद्यस्य । मुने इति । योगिनां सर्वं ज्ञानमस्तीति भावः ॥ १६ ॥ पाप इति । भगवन्निंदकत्वादुक्तं वस्तुतस्तु पातीति पो विष्णुस्तमाप्नोतीति पाप इति ॥ १७ ॥ यत्परं ब्रह्म तद्विष्णुं कृष्णम् ॥ ॥ १८ ॥ दंतवक्रस्यापि भूतत्वेन निर्देशो मुनिगणवचनेन निश्चितत्वात् । लयं तात्कालिकलोकप्रतीत्या सायुज्यं किञ्चित्कालमेव सहयोगं सह युज्यत इति सयुक् तस्य भावः सायुज्यं ततः परं सामीप्यमीयतुः भाविनमपि दंतवक्रलयं नारदमुखादेव श्रुत्वा तस्य जातप्रायत्वमननात् । यद्वा—तस्य जातकं जन्मपत्रादिप्रामाण्येन तन्निश्चितमेव ॥ १९ ॥ एतत्सायुज्यम् । तत्र सायुज्ये ॥ २० ॥ अत्र बादरायणस्य सर्वज्ञत्वात्तदात्मजोपि तादृश

नारद उवाच ॥ निंदनस्तवसत्कारान्यक्कारार्थं कलेवरम् ॥ प्रधानपरयो राजन्नविवेकेन कल्पितम् ॥२२॥ हिंसा तदभिमानेन दंडपारुष्ययोर्यथा ॥
वैषम्यमिह भूतानां ममाहमिति पार्थिव ॥ २३ ॥ यन्निबद्धोऽभिमानोऽयं तद्वधात् प्राणिनां वधः ॥ तथा न यस्य कैवल्यादभिमानोऽखिलात्मनः ॥
परस्य दमकर्तुर्हि हिंसा केनास्य कल्प्यते ॥२४॥ तस्माद् वैरानुबंधेन निर्वैरेण भयेन वा ॥ स्नेहात् कामेन वा युंज्यात् कथंचिन्नेक्षते पृथक्॥२५॥

कथाः प्राहेत्यन्वयः ॥ २१ ॥ अहो भगवन्निंदकस्य नरकपातेन भाव्यमिति वदतस्तव कोऽभिप्रायः भगवत्पीडाकरत्वेन वा तदभावेऽपि सुरापानादिवन्निषिद्धनिंद्याचरणाद्वा तत्र तावद्देहाभिमानकृतनिंदादिनिमित्तत्वात्पीडादीनां भगवतश्च तदभावान्न पीडाशंकास्तीत्याह । निंदनेति सार्द्धैस्त्रिभिः । निंदनं दोषकीर्तनम् । न्यक्कारस्तिरस्कारः । निंदास्तुत्यादिज्ञानार्थं प्रधानपुरुषयोरविवेकेन कलेवरं कल्पितं रचितम् ॥ २२ ॥ तदभिमानेन भूतानां यथा ममाहमिति वैषम्यं तत्कृतं हिंसादिकं च भवति तथा न यस्ये त्युत्तरेणान्वयः । दंडस्ताडनं पारुष्यं निंदा तयोर्हेतुभूतयोर्हिंसा पीडा च भवति ॥ २३ ॥ यस्मिन्निबद्धोऽयमभिमानस्तस्य देहस्य वधाद्वधश्च यथा तथा यस्याभिमानो नास्ति अतोऽस्य परमेश्वरस्य हिंसा केन हेतुना कल्प्यते न केनापीति । अभिमानाभावे हेतुः । कैवल्यादद्वितीयत्वेनाभिमंतव्याभावात् । वैषम्याभावे हेतुः । अखिलात्मनः शर्वात्मन इति । तर्हि किमिति हंति दैत्यांस्तत्राह । परस्य दमकर्तुः हितार्थं दंडं करोतीत्यर्थः ॥ २४ ॥ यस्माद्भगवतो निंदादिकृतं वैषम्यं नास्ति तस्माद्येन केनाप्युपा

एवेत्यभिप्रेत्याह—बादरायणिरिति । आभाष्य राजन्निति संबोध्य ॥ २१ ॥ अत्राक्षिपति—अहो इत्यादिना । तदभावेऽपि पीडाकरत्वाभावेऽपि । तत्र पक्षद्वयेपि ॥ २२ ॥ तदभिमानेन देहाभिमानेन । मामयं निंदति स्तौती त्यादिभिर्यथा दुःखसुखे भवतस्तथैव मामयं हिनस्तीति हिंसापि भवति कस्मिन्सति दंडताडनं पारुष्यं त्वामहं घातयिष्यामीति भर्त्सनं तयोः सतोः एवं च भूतानामिह संसारे वैषम्यं सिद्धं ममैते शत्रवो ममैते बंधवश्च अहमेतान् हन्मि एतान्पालयामि चेत्यादिप्रकारकम् । पार्थिवेति । यथा पृथिव्यां राज्ञः "ममैवयं मही कृत्स्ना न ते मूढेति वादिनः" इत्युक्तेरभिमानस्तथाऽज्ञजीवस्यापीति भावः ॥ २३ ॥ यथाऽज्ञानिनां वधो देहाभिमाना त्तथा यस्य कृष्णस्याभिमानः प्राकृतो नास्ति । अत्राशयमाह—यथा सर्वजीवानामनात्मा देह आत्मा जीवश्चेत्युभयं भवति तथा यदि कृष्णस्यापि स्यात्तदा कृष्णस्य जीवानामिवाविद्यकोऽभिमानोऽभविष्यदेव कृष्णस्य तु देहस्तदभिन्नः परमात्मैव तस्मिन्स्वरूपभूते कृष्णोऽहमित्यभिमानोऽपि तन्मय एव । अखिलात्मन इति । तदंशस्यांतर्यामिणोऽप्यस्वरूपभूते जीवे जीवदेहे चाभिमानो नास्तीति भावः । अत एव परस्य मायिकवस्तुजी वेभ्यो भिन्नस्यातस्तेष्वस्वरूपभूतेष्वाभिमानाभावात् । कस्तस्य द्वेष्यः को वा द्वेष्टा परमात्मभूते देहे यस्तस्याभिमानः परमात्मैवाहमित्यात्मकस्तेन स कं वा द्वेष्टु परमात्मानं जानन् तं वा को द्वेष्टु तर्हि किमिति स्वद्वेषिणः शिशुपा लादीन्हिनस्ति तत्राह—दमकर्तुः । इत्यर्थ इति । तस्य पूर्वसुहृत्त्वात्तद्धितायैव तद्दण्ड इति भावः ॥ २४ ॥ इत्यर्थ इति । 'न विषममतिर्यत्र नृणाम्' इति चित्रकेतूपाख्यानोक्तेरिति भावः । ननु मास्तु निंदादेर्भगवत्पीडा करत्वं निंदकस्य दुरदृष्टजनकत्वं तु स्यादेव तदुक्तं कैमुत्येनापि "निंदां भगवतः शृण्वंस्तत्परस्य जनस्य वा । ततो नापैति यः सोऽपि यात्यधः सुकृताच्च्युतः॥" इति । सत्यनिंदा हि द्विविधा आनुकूल्यमयी प्रातिकूल्य मयी च । तत्र प्रथमा प्रेमविलासरूपैव "मृगयुरिव कपींद्रं विव्यधे लुब्धधर्मा स्त्रियमकृत विरूपां स्त्रीजितः कामयानाम् । बलिमपि बलिमत्त्वावेष्टयद्ध्वांक्षवद्यस्तदलमसितसख्यैर्दुस्त्यजस्तत्कथार्थः" इति या सा तु पुरुषार्थचूडामणिमरीचिमंजरीव व्रजदेवी तां विना न कैरपि लभ्या । द्वितीया द्विविधा भगवदभिनिवेशाख्या भगवदनभिनिवेशाख्या च । तत्र प्रथमया शिशुपालादिकृतानिंदया

यथा वैरानुबंधेन मर्त्यस्तन्मयतामियात् ॥ न तथा भक्तियोगेन इति मे निश्चिता मतिः ॥ २६ ॥

येन ध्यायतस्तेनैव ध्यानेन निंदादिकृतपापस्यापि नाशात्सायुज्यं युक्तमित्याशयेनाह । तस्मादिति सप्तभिः । निर्वैरेण नास्ति वैरं केनापि यस्मिंस्तेन भक्तियोगेनेत्यर्थः । युंज्यान्मन इति शेषः यस्मादेतैरुपायैः पृथङ् नेक्षते ॥ २५ ॥ तेष्वपि वैरानुबंधः श्रेष्ठ इत्याह । यथेति । न तथा भक्तियोगेनापि ॥ २६ ॥

जन्यमानमेव दुरदृष्टं तत्कारणेनैव भगवत्यभिनिवेशेन सद्य एव विनष्टीकृत्य भक्तियोगेनापि समकक्षतां प्राप्य त्रिधियोग्यत्वमपि प्राप्यत इत्याह–तस्मादिति सप्तभिः । यस्मान्निंदाया भगवत्पीडाकरत्वं नास्ति निंदकस्य च पापक्षयः संभवेत्तस्मात् अभिनिवेशात् वैरानुबंधादिना युंज्यात् । भगवति मन इति शेषः । निर्वैरेणेति व्याख्यातं स्वामिचरणैः । यद्वा–वैरं प्रतिपक्षत्वं निर्वैरं तत्प्रतियोगि स्वपक्षत्वं पुत्रादिभावो यः खल्वग्रिमश्लोके संबंधशब्दवाच्यत्वेन स्पष्टी भविष्यति तेन स्नेहाद्यः कामस्तेन प्रीतिजन्येन कामेनेत्येव व्याख्येयं न तु स्नेहस्य पृथक्साधनत्वं तृतीयांतत्वप्रक्रमभंगापत्तेः फलमाह कथं चिदपि तं भगवंतं पृथङ् नेक्षते किं तु स्वीयभावानुरूपमेव तं साक्षात्पश्यतीत्यर्थः । भयवैरभाववन्तावधिकारिणौ प्रति तु पृथङ् नेक्षते किं तु सायुज्यप्राप्त्या तं स्वाभिन्नमेवेक्षते इत्येवार्थः । एकस्यापि वाक्यस्य पात्रभेदादर्थभेदः श्वेतो धावतीतिवदिति न्यायात् । अत्र युंज्यादिति लिङा वैरानुबंधादिना भगवति मनोभिनिवेशं कुर्यादिति विधिरवगम्यते स च शिशुपालादिषु न संभवति तेषां रागप्राप्तत्वात् । शिशुपालादिदृष्टयान्येष्वेवैष विधिरित्यपि न शक्यते व्याख्यातुं भगवत्प्रातिकूल्यस्य विधानानर्हत्वात् । यदुक्तम् "आनुकूल्यस्य ग्रहणं प्रातिकूल्यस्य वर्जनम्" इति । न च शिशुपालादिभ्योऽन्येषु जनेषु विहितोऽपि वैरानुबंधो भगवदभिनिवेशं जनयति "तानहं द्विषतः क्रूरान्संसारेषु नराधमान् । क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥" इत्यादिपरसहस्रवचनविरोधात् । न च रागप्राप्त एव वैरानुबंधो नरकं जनयेन्न तु विहित इति वाच्यम् । शिशुपालादिषु व्यभिचारात् । न च शिशुपालादिविभिन्नेष्वेवेयं व्यवस्थेति वाच्यं विधिदृष्टया वैरानुबंधस्य शिष्टानुष्ठानादर्शनात् । तस्यैव वैरानुबंधो भगवदभिनिवेशं जनयति यस्य हंतृत्वेनाभिज्ञातः श्रुतो दृष्टो वा भगवान्संभावितो भवति । यथा लोके स्वहंतृत्वेन निर्द्धारितेष्वेव वैरिव्याघ्रसर्पादिषु भीतस्य चित्ताभिनिवेशो नान्येष्विति तस्मादेतत्पद्यमेवं व्याचक्षते । यस्मात्स वैरभाववतामपि हितं करोति तस्मात्तत्र वैरस्यानौचित्याद्वैरभावव्यतिरिक्तेनैव भावेन मनोभिनिवेशयेदित्याह–तस्मादिति । निःशब्दस्य नञर्थत्वान्निर्वैरेण वैरभावविभिन्नेन बंधुपुत्रमित्रादिभावेन मनो युंज्यात् कीदृशेन वैरानुबंधेन वैर इवानुबंधश्चित्ताभिनिवेशो यत्र तेन यो यस्मिन्ननुबद्धः स तस्मिन्नभिनिविष्ट एवेति ताटस्थ्यभावो वारितः । तथा स्नेहात्कामेन स्नेहैकहेतुको यः कामस्तेन कीदृशेन भयेन स्वजनार्यपथत्यागोत्थभयवता व्रजयुवतिकानुगामिना कामेनेत्यर्थः । भयेन वेति । वा शब्दान्निर्भयेन कामेन च रुक्मिण्यादिकामानुगामिना कामेनेत्यर्थः । औपपत्यदाम्पत्ययोर्द्वयोरप्यऽस्ति प्रमाणं तथा हि "जारभावेन सस्नेहं सुदृढं सर्वतोऽधिकम्" इति बृहद्वामनम् । "अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्त्तारं च जगद्योनिं वासुदेवमजं विभुम् ॥" इति कूर्मपुराणञ्च ॥ २५ ॥ परमनिंद्यस्यापि वैरभावस्य चित्ताभिनिवेशांशकत्वेन महिमाऽपार एवेत्याह–यथेति । वैरे वैरभावे योऽनुबंधः सातत्यं तेन मर्त्यः पूर्वोक्तयुक्तेः स्वस्य भगवद्वध्यत्वज्ञानविशिष्ट एव नान्यः तन्मयतां स्त्रीमयं कामुक इतिवत्तदेकाभिनिवेशवत्त्वं न तथेति सद्य इति शेषः । निश्चिता मतिरिति । ममायं निश्चय एव कृत इत्यतोत्र प्रमाणं न प्रष्टव्यं यदि भक्तियोगादपि वैरभावो मनोभिनिवेशकत्वांशेनाधिकस्तदा किमुत वक्तव्यं तादृशाभिनिवेशवान्स भक्तियोग इति भावः । तेन "श्वित्रो न जातो जिह्वायां नांधं विविशतुस्तमः" इति त्वया शिशुपालादीनामनिष्टसाधनत्वबुद्ध्या वैरानुबंधो निंद्यते मया त्विष्टसाधनशिरोमणेर्भक्तियोगादपि स्तूयते इति कुतः शिशुपालादीनां दुर्गतिसंभावनापीति ध्वनिः । तेन भावमार्गेष्वतिनिंद्योऽपि वैरभावो भगवदभिनिवेशशीघ्रसंपादकत्वांशेनैव भक्तियोगाच्छुद्धाद्यदि स्तूयते तदा भावमार्गेष्वतिवंद्यो वसुदेवादीनां वात्सल्यसख्यादिः किमुततरां नंदादीनामात्यंतिकतदभिनिवेशं प्रतिक्षणादिभूमसंपादकः सस इत्यनुध्वनिः । तेनार्वाचीनानामपि श्रीनंदादिभावानुसारेण वात्सल्यादिभावेप्सूनां रागानुगा भक्तिर्वैधभक्तेः सकाशादुत्कर्षवतीति पर्यनुध्वनिः ॥ २६ ॥

कीटः पेशस्कृता रुद्धः कुडयायां तमनुस्मरन् ॥ संरंभभययोगेन विंदते तत्सरूपताम् ॥ २७ ॥ एवं कृष्णे भगवति मायामनुज ईश्वरे ॥ वैरेण पूतपाप्मानस्तमीयुरनुचिंतया ॥ २८ ॥ कामाद्द्वेषाद्भयात्स्नेहाद्यथा भक्त्येश्वरे मनः ॥ आवेश्य तदघं हित्वा बहवस्तद्गतिं गताः ॥ २९ ॥

अत्र दृष्टांतः । कीटः पेशस्कृता भ्रमरेण संरंभो द्वेषो भयं च स एव योगस्तेन॥ २७॥ वैरेण याऽनुचिंता चिंतनं तयैव पूतः पाप्मा येषां ते तं प्रापुः॥ २८॥ तदघं कामादिनि

आस्तां तादृशवस्तुशक्तियुक्तस्य तेषु प्रकाशमानस्य भगवद्विग्रहाभासस्य वार्त्ता प्राकृतेऽपि तद्भावमात्रस्य भावावेशफलं महद् दृश्यते इति सदृष्टांतमाह–कीट इति । संरंभो द्वेषो भयं च ताभ्यां योगस्तदा वेशस्तेन तत्स्वरूपतां तस्य स्वमात्मीयं रूपमाकृतिर्यत्र तां तत्सारूप्यमित्यर्थः । कीटोऽत्र श्यामाख्यः कीटः पेशो मुखानीतमृन्निर्मितवासस्थानं तत्करोतीति पेशस्कृत्तेन "अंगे वासे विलासे च पेशो हि पेशसा सह" इति द्विरूपकोशात् । 'कुंडयं भित्तौ विलेपने' इति मेदिनी । कुडयायामिति स्त्रीत्वमार्षम् । भित्तौ विलेपने मृदंगाकारमृन्निर्मिते गृहे वा रुद्ध इत्यर्थः ॥ २७ ॥ एवमिति । नराकृतिपरब्रह्मत्वान्माययैव प्राकृतमनुजतया प्रतीयमाने । ननु कीटस्य पेशस्कृद्द्वेषे पापं न भवति अत्र तु तत्स्यादिति चेदाह–वैरेण याऽनुचिंता तदावेशस्तयैव पूतपाप्मानस्तद्ध्यानावेशस्य तादृक्छक्तित्वादिति भावः । विश्वनाथः–माया कृपा सद्गतिप्रापणी मनुजेषु स्वद्वेष्टृष्वपि यस्य तस्मिन् । यद्वा–मायया स्वरूपेणैव मनुजे स्वरूपभूतया नित्यशक्त्या मायाख्यया युत इति श्रुतेः । वैरजनितध्यानावेशेन पूतो नष्टपाप्मा तन्निदनतिरस्कारादिर्येषां ते इत्याह ॥ २८ ॥ न च शास्त्रविहितेनैव भगवद्धर्मेण सिद्धिः स्यान्न तदविहितेन कामादिनेति वाच्यं यतः कामाद्द्वेषादिति यथा विहितया भक्त्या ईश्वरे मन आवेश्य तद्गतिं गच्छंति तथैवाविहितेनापि कामादिना बहवो गता इत्यर्थः । तदघं तेषु कामादिषु मध्ये यद्द्वेषभययोरघं भवति तद्द्वित्वैव भयस्यापि द्वेषसंमिलितत्वादघोत्पादकत्वं ज्ञेयम् । अत्र केचित् कामेऽप्यघं मन्यंते । तत्रेदं विचार्यते–भगवति काम एव केवलं पापावहः किं वा पतिभावयुक्तः । अथत्रोपपतिभावयुक्त इति । स एव केवल इति चेत् स किं द्वेषादिगणपातित्वात् तद्वत्स्वरूपेणैव वा परमशुद्धे भगवति यदधरपानादिकं यच्च कामुकत्वाद्यारोपणं तेनातिक्रमेण वा । नाद्येन "उक्तं पुरस्तादेतत्ते चैद्यः सिद्धिं यथा गतः । द्विषन्नपि हृषीकेश किमुताधोक्षजप्रियाः ॥" इत्यादौ द्वेषादेर्न्यक्कृतत्वात् तस्य तु स्तुतत्वात् । अतस्तत्र प्रिया इति स्नेहवत्कामस्यापि प्रीत्यात्मकत्वेन तद्वदेव न दोषः तादृशीनां कामो हि प्रेमैकरूपः "यत्ते सुजात चरणांबुरुहं स्तनेषु भीताः शनैः प्रिय दधीमहि कर्कशेषु । तेनाटवीमटसि तद्व्यथते न किं स्वित्कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः ॥" इत्यादावतिक्रम्यापि स्वसुखं तदानुकूल्य एव तात्पर्यात् सैरंध्र्यास्तु भावो रिरंसाप्रायत्वेन श्रीगोपीनामिव च केवलं तत्तात्पर्याभावात्तदपेक्षयैव निंद्यते न तु स्वरूपतः 'सानंगतप्तकुचयोः' इत्यादौ 'अनंतचरणेन रुजो मृजंती' इति 'परिरभ्य कांतमानदमूर्त्तिम्' इति कार्यद्वारा तत्स्तुतेः । तत्रापि "सहोष्यतामिह प्रेष्ठ दिनानि कतिचिन्मया" इत्यत्र प्रीत्यभिव्यक्तेश्च तदेवं तस्य कामस्य द्वेषादिगणांतःपतितत्वं परिहृत्य तेन पापावहत्वं परिहृतम् । अथ कामुकत्वारोपणाधरपानादिरूपस्तत्र व्यवहारोऽपि नातिक्रमहेतुः यतः 'लोकवत्तु लीलाकैवल्यम्' इति न्यायेन लीला तत्र स्वभावत एव सिद्धा तत्र च श्रीमूलीलादिभिस्तस्य तादृशलीलायाः श्रीवैकुंठादिषु नित्यशुद्धत्वेन स्वतंत्रलीलाविनोदस्य तस्याभिरुचितत्वावगमात् । तादृशलीलारसमोहस्वाभाविकं भगवत्ताद्यनुसंधानमपि तत्कामुकत्वादिमननमपि च तदभिरुचितत्वेनैवावगम्यते तथा तत्प्रेयसीजनानामपि तत्स्वरूपशक्तिविग्रहत्वेन परमशुद्धरूपत्वात् ततो न्यूनत्वाभावाच्च तदधरपानादिकमपि नाननुरूपं पूर्वयुक्त्या तदभिरुचितमेव तासां तत्सरूपशक्तिविग्रहत्वं श्रीकृष्णसंदर्भे दर्शितमस्ति दर्शयिष्यते श्रीदशमे । न च प्राकृतरामाजने दोषः प्रशंसनीयः तद्योग्यं तादृशं भावं स्वरूपशक्तिविग्रहं च प्राप्यैव तदिच्छयैव तत्प्राप्तेः । अथ शापश्रवणेन च न पापावहोऽसौ कामः तदश्रवणादेव अतिपतिभावयुक्ते च तत्र सुतरां न दोषः । प्रत्युत स्तुतिः श्रूयते "याः संपर्यचरन्प्रेम्णा पादसंवाहनादिभिः । जगद्गुरुं भर्तृबुद्ध्या तासां किं वर्ण्यते तपः ॥" इति । महानुभावमुनीनामपि तद्भावः श्रूयते यथा श्रीमध्वाचार्यधृतं महाकौर्मवचनम् "अग्निपुत्रा महात्मानस्तपसा स्त्रीत्वमापिरे । भर्त्तारं च जगद्योनिं वासुदेवमजं विभुम् ॥" इति । अत एव वंदितम् "पतिपुत्रसुहृद्भ्रातृपितृवन्मातृवद्धरिम् । ये ध्यायंति सदोद्युक्तास्तेभ्योऽपीह नमोनमः॥" इत्यनेन अथोपपतिभावेन च न पापावहोऽसौ 'यत्पत्यपत्यसुहृदामनुवृत्ति–' इत्यादिना ताभिरेवोत्तरितत्वात् ।

गोप्यः कामाद्भयात्कंसो द्वेषाच्चैद्यादयो नृपाः ॥ संबंधाद्वृष्णयः स्नेहाद्यूयं भक्त्या वयं विभोः ॥ ३० ॥
कतमोऽपि न वेनः स्वात् पंचानां पुरुषं प्रति ॥ तस्मात् केनाप्युपायेन मनः कृष्णे निवेशयेत् ॥ ३१ ॥

मित्तं पापं हित्वा ॥ २९ ॥ तानाह । गोप्य इति ॥ ३०॥ तर्हि वेनः किमिति नरके प तितः तीव्रध्यानाभावात्पापमेव तस्य फलितामित्याह । कतमोऽपीति । पुरुषं 'गोपीनां तत्पतीनां च'इत्यादिना श्रीशुकदेवेन'न पारयेऽहं निरवद्यसंयुजाम्'इत्यनेन स्वयं श्रीभगवता तादृशानामन्येषामपि तद्भावो दृश्यते यथोदाहरिष्यते श्रीदशमे'पुरा महर्षयः सर्वे दंडकारण्यवासिनः'इति ।अतः पुरुषे ष्वपि स्त्रीभावेनोद्भवात् भगवद्विषयत्वात् न प्राकृतकामदेवतोद्भावितः प्राकृतकामोऽसौ किं तु 'साक्षान्मन्मथमन्मथः'इति श्रवणात् । आगमादौ तस्य कामत्वेनोपासनाच्च भगवदेकोद्भावितोऽप्राकृत एवासौ काम इति ज्ञेयम् । अत एव मुमुक्षुमुक्तनित्यपार्षदानामपि वांछनीयोऽसाविति दर्शितं श्रीदशमे'एताःपरं तनुभृतः'इत्यादिना।यतः श्रुतयोऽपि नित्यासिद्धगोपिकाभावाभिलाषिण्यः सत्यस्तद्रूपेणैव तद्गणांतःपातिन्यो बभूवुरिति।'निभृतमरुन्मनोक्ष' इत्यादिश्रुतिस्तवे दर्शयिष्यते तदेवं साधु व्याख्यातं कामादित्यादौ द्वेषभययोर्यदघमित्या'दि॥२९॥ अथ बहवस्तद्गतिं गता इत्यत्र निदर्शनमाह–गोप्य इति सार्द्धेन । साधकचरीणां गोपीविशेषाणां पूर्वावस्थामवलंब्योच्य ते–गोप्य इति । वयमिति । यथा श्रीनारदस्य "प्रयुज्यमाने मयि तां शुद्धां भागवतीं तनुम्" इत्याद्युक्तरीत्या पार्षददेहत्वे सिद्धे तेन स्वयं वयमिति निजपूर्वावस्थामवलंब्योच्यते तत्रैव वैधी भक्तिः । अधुना लब्धरागस्य तस्य न मध्येकांतभक्तानां गुणदोषोद्भवाः "गुणदोषदर्शिर्दोषो गुणस्तूभयवर्जितः" इति न्यायेन विध्यनधीना रागात्मिकैव विराजते इति । अत एव तद्गतिं गता इति तेषां फलप्राप्तेःप्यतीतत्वनिर्देशः । एवमेव वक्ष्यते स्वयं भगवता 'केवलेन हि भावेन गोप्यः' इत्यादि । 'मत्कामा रमणम्' इत्यादौ 'संगाच्छतसहस्रशः' इति च । अत्र ता गोप्य इवाधुनिकाश्च तद्गुणादिश्रवणेनैव तद्भावा भवेयुः यथोक्तम् "श्रुतमात्रोऽपि यः स्त्रीणां प्रसह्याकर्षते मनः । उरुगायोरुगीतो वा पश्यंतीनां पुनः कुतः ॥" इति । अथ पार्षदचरस्यापि चैद्यस्यागंतुकोपद्रवाभासदर्शनेनैव साधकत्वनिर्देशः । संबंधाद्यः स्नेहो रागस्तस्माद्वृष्णयो यूयं चेत्येकम् ।तस्माद्वैरानु बंधेनेत्यादौ कामादित्यादौ चोक्तस्यैवार्थस्योदाहरणवाक्येऽस्मिंस्तदेकार्थावश्यकत्वात् पंचानामित्यनुरोधात् । उभयत्रापि संबंधस्नेहयोर्द्वयोरपि विद्यमानत्वाच्च।संबंधग्रहणं रागस्यैव विशेषज्ञापनार्थं गोपीवदत्रापि संबंधे स्नेहे च वृष्णिविशेषाः पांडवसंबंधिविशेषाश्च पूर्वावस्थामवलंब्य साधकत्वेन निर्दिष्टाः। अतः संबंधे स्नेहोऽपि तदभिरुचिमात्रं ज्ञेयम् । भक्त्या विहितया अस्या एव प्रतिलब्धत्वेन भावमार्गं निर्देष्टुमुपक्रांतत्वात् । अत्र विश्वनाथः– कामात्स्नेहोत्थादेव न तु सामान्यतः तादृशाभिप्रायत्वे कुब्जाद्या इति प्रयुज्येत भयात्स्वस्य कृष्णवध्यत्वज्ञानत उद्भूतात् । वृष्णयो यादवाः यूयं पांडवाश्च संबंधात्पुत्रभ्रात्रादिभावात् मातुलेयभ्रातृस्वस्रीयादिभावाच्च ।कीदृश त्स्नेहात्स्नेहमयादिति । सत्राजित्प्रसेनशतधन्वकर्णदुर्योधनादयो व्यावृत्ताः । न चात्र स्नेहस्य पृथक्कृतत्वप्राप्तिसाधनत्वं व्याख्येयमुत्तरवाक्ये पंचसंख्यात्वेनैव भावानां निरूपणात् । वयं नारदादयो भक्त्या तद्गतिं गता इति पूर्वस्यैवानुषंगः । तत्र गोप्यः प्रेमवत्प्रेयसीभावम् । कंसः सायुज्यम् । चैद्यदंतवक्रपौंड्रकाः सायुज्यम् । अन्ये चारयो यथायोग्यं सायुज्यसालोक्यादिकम् । वृष्णयः पांडवाश्च सख्यादिभाववत्पार्षदत्वम् । नारदादय ऐश्वर्यज्ञान वत्पार्षदत्वमित्येवं यथासाधनं तत्तत्प्राकरणिकवाक्यदृष्ट्या निर्द्धारितां तदीयां गतिं गताः । अत्र "यादवानां हितार्थाय धृतो गिरिवरो मया" इति हरिवंशवाक्यान्नंदादिगोपानामपि वृष्णिवंशत्वादैश्वर्यज्ञानशून्यत्वेन स्नेह वत्त्वाधिक्यात्पुत्रादिसंबंधस्यातिदार्ढ्यमेषामेव प्राधान्यद्योतकं ज्ञेयम् ॥ ३० ॥ अत्राक्षिपति–तर्हीति । तत्र वेने । अत्र चक्रवर्त्ती–ननु तर्हि शिशुपालवद्भगवन्निंदान्यकारादिकर्त्ता वेनः किमिति नरके पतितस्तत्राह–पुरुषं भगवंतं प्रति पञ्चानां पूर्वश्लोकोक्तानां भावानां मध्ये कस्याप्यनास्पदत्वात्कतमो न भवति न तावद्गोपीव स्नेहवत्कामवान् इह हेतुः स्वामिचरणैरुक्तः पुरुषे पुरुषस्य कामासंभवादिति।न च कंसवद्भीतः । न च मां हनिष्यतीति बुद्ध्या भगवदत्यंतावेशमय्या शिशुपालवद्द्वेष्टा नापि वृष्ट्यादिष्विव कमपि संबंधं दधानो नापि नारदादिरिव भक्त इत्यर्थः । तेन शिशुपालादिभिन्नः प्रतिकूलभावं दिधीषुर्वेन इव नरकं यातीति सूचितम् । संदर्भस्तु–वेनस्य भगवंतं प्रति प्रासंगिकनिंदामात्रात्मकं वैरं न तु वैरानुबंधः । ततस्तीव्रध्यानाभावात्पापमेव तत्र फलितमिति स्वामी । अतोऽसुरतुल्यस्वभावैरपि तस्मिन्स्वमोक्षार्थं वैरानुष्ठानसाहसं न कर्त्तव्यमिति भावः । अत एव " येवै

मातृष्वसेयो वश्चैद्यो दंतवक्रश्च पांडव ॥ पार्षदप्रवरौ विष्णोर्विप्रशापात्पदाच्च्युतौ ॥३२॥युधिष्ठिर उवाच ॥ कीदृशः कस्य वा शापो हरिदासाभिमर्शनः ॥ अश्रद्धेय इवाभाति हरेरेकांतिनां भवः ॥ ३३ ॥ देहेंद्रियासुहीनानां वैकुण्ठपुरवासिनाम् ॥ देहसंबंधसंबद्धमेतदाख्यातुमर्हसि ॥३४॥ नारद उवाच ॥ एकदा ब्रह्मणः पुत्रा विष्णोर्लोकं यदृच्छया ॥ सनंदनादयो जग्मुश्चरंतो भुवनत्रयम् ॥३५॥ पंचषड्ढायनार्भाभाः पूर्वेषामपि पूर्वजाः ॥ दिग्वाससः शिशून् मत्वा द्वास्थौ तान् प्रत्यषेधताम् ॥३६॥ अशपन् कुपिता एवं युवां वासं न चार्हथः ॥ रजस्तमोभ्यां रहिते पादमूले मधुद्विषः ॥ पापिष्ठामासुरीं योनिं बालिशो यातमाश्वतः ॥३७॥ एवं शप्तौ स्वभवनात् पतंतौ तैः कृपालुभिः ॥ प्रोक्तौ पुनर्जन्मभिर्वां त्रिभिर्लोकाय कल्पताम् ॥३८॥ जज्ञाते तौ दितेः पुत्रौ दैत्यदानववंदितौ ॥ हिरण्यकशिपुर्ज्येष्ठो हिरण्याक्षोऽनुजस्ततः ॥३९॥

श्रीहरिं प्रति पुरुषे पुरुषस्य कामासंभवाद्भयादिभिश्चितयतां पञ्चानां मध्ये वेनो न कतमोऽपीत्युक्तम् ॥ ३१ ॥ तदेवमितिहासप्रस्तावकथामुक्त्वा श्रीकृष्णे शिशुपालस्य वैरानुबंधे को हेतुरित्यपेक्षायां तमेवेतिहासं वक्तुमाह । मातृष्वसेय इति । पदाद्वैकुण्ठाच्च्युतौ ॥ ३२ ॥ हरिदासावभिमृशत्यभिभवतीति तथा। तस्य शापः कीदृशो वा। अश्रद्धेयोऽनादरणीय इव । असंभवात्। भवो जन्म ॥ ३३ ॥ असंभवमेवाह। जन्महेतुभूतैः प्राकृतैर्देहेंद्रियासुभिर्हीनानाम् । शुद्धसत्त्वमयदेहानामित्यर्थः । प्राकृतदेहसंबंधेन संबद्धमेतदाख्यानमाख्यातुमर्हसि ॥ ३४ ॥ ३५ ॥ कथंभूताः। पंच वा षड्वा हायनानि वर्षाणि येषां ते अर्भा बालास्तद्वदाभा येषां ते पूर्वेषां मरीच्यादीनामपि पूर्वजास्तेभ्यः प्रथमं जाताः। दिग्वाससो दिगंबराः। अतः शिशून्मत्वा ॥ ३६ ॥ वासमपि नार्हथः कुतः पुनस्तत्सेवामिति चकारार्थः । हे बालिशौ। अतो हेतोराशु यातम् ॥ ३७ ॥ वां युवयोस्त्रिभिर्जन्मभिः लोकाय स्वस्थान

भगवता प्रोक्ता उपाया ह्यात्मलब्धये'' इत्यादेरपि तेष्वतिव्याप्तिर्व्याहन्यतेऽनभिप्रेतत्वेनाप्रोक्तत्वात् । यस्मादेवं तस्मादेवंभूते । अत्रापि पूर्ववन्निवेशयेदिति सम्मतिमात्रं न विधिः केनापि तेष्वपायेषु युक्ततमेनैकेनेत्यर्थः । अहो यस्तादृशबहुप्रयत्नसाध्यभक्तिमार्गेण साध्यतेऽसोऽचिराद्भावविशेषमात्रेण तत्र च द्वेषादिनापि विधिना सहैकार्थं ज्ञेयम् । तस्मादेवंभूते परमसद्गुणसद्भावे तस्मिन् दूरेस्तु पामरजनभाव्यस्य वैरस्य वार्त्ता को बाधम औदास्यमवलम्ब्य प्रीतिमपि न कुर्यादिति रागानुरागाभ्यामेव तच्च युक्ततमत्वमंगीकृतं भवति ॥ ३१ ॥ चैद्यदंतवक्रौ तु नासुरौ किं तु हरेः स्वभक्तिप्रवर्त्तकविप्रकुलदाक्षिण्यमयस्वैरलीलेच्छया तदनुकारिणाविवेत्यभिप्रायं प्रश्नोत्तराभ्यां दर्शयितुमाह—मातृष्वसेय इति । पांडवेति । यथा साक्षाद्धर्मपुत्रे त्वयि पांडवत्वं तथा दंतवक्रशिशुपालयोरप्यनुकरणत्वमेव वस्तुतस्तौ पार्षदप्रवरावेवेति भावः ॥ ३२ ॥ तत्र तयोरन्यथाभावः सर्वथा न संभवतीति प्रश्नस्यार्थः । ''न स पुनरावर्तते'' इति श्रुतेः । ''अनावृत्तिः शब्दात्'' इति न्यायात् । ''मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते'' इति गीतागम्यश्च 'न मत्परा नंक्ष्यंति शांतरूप' इति श्रीकपिलोक्तश्च स न्यायश्चासौ सिद्धांतस्तु तत्रेतिहासमात्रं तच्च पूर्वयुक्त्यैव संभवतीति तदभिप्रायः । वक्ष्यते च स्वयं 'विष्णुचक्रहतांहसौ' इति । व्याख्यास्यते च तैः तयोः पापमेव हतं न तु ताविति ॥ ३३ ॥ इत्यर्थ इति । शुद्धसत्त्वमयदेहवतां त्वाविर्भावतिरोभावावेव भवतो न तु जन्ममृती इति भावः ॥ ३४ ॥ ३५ ॥ पंच वा षट् वेति किंवदंतीन्यायेन । अतो नग्नत्वात् ॥ ३६ ॥ रजस्तमोभ्यां रहिते प्राकृतसत्त्वादिराहित्येऽपि तन्मात्रराहित्यस्य विवक्षितत्वात् । प्राकृतसात्त्विकत्वेनैतादृशो दोषः संभवतीति । हे बालिशाविति। अहो एतद्वैकुंठं न प्राकृतः समायाति किन्तु परमभक्त एवेति विचारमूढा बत एतादृशोरत्र वासो नोचित इति भावः। अतो बालिशत्वादेव ॥ ३७ ॥ इत्यर्थ इति । जन्मत्रयानंतरं पुनरत्रैवागमनमेतयोर्भवत्विति भवद्भिः संपाद्यतामिति भावः ॥ ३८ ॥ तौ जयविजयौ । ततो हिरण्यकशिपोरनुजः ॥ ३९ ॥

हतो हिरण्यकशिपुर्हरिणा सिंहरूपिणा ॥ हिरण्याक्षो धरोद्धारे बिभ्रता सौकरं वपुः॥४०॥हिरण्यकशिपुः पुत्रं प्रह्लादं केशवप्रियम्॥ जिघांसुरकरो न्नाना यातना मृत्युहेतवे ॥४१॥ सर्वभूतात्मभूतं तं प्रशांतं समदर्शनम् ॥ भगवत्तेजसा स्पृष्टं नाशक्नोद्धंतुमुद्यमैः ॥४२॥ ततस्तौ राक्षसौ जातौ केशिन्यां विश्रवस्सुतौ ॥ रावणः कुम्भकर्णश्च सर्वलोकोपतापनौ ॥ ४३ ॥ तत्रापि राघवो भूत्वा न्यहनच्छापमुक्तये ॥ रामवीर्यं श्रोष्यसि त्वं मार्कंडेयमुखात् प्रभो ॥ ४४॥ तावेव क्षत्रियौ जातौ मातृष्वस्रात्मजौ तव ॥ अधुना शापनिर्मुक्तौ कृष्णचक्रहतांहसौ ॥ ४५ ॥ वैरानुबंधतीव्रेण ध्यानेनाच्युतसात्मताम् ॥ नीतौ पुनर्हरेः पार्श्वं जग्मतुर्विष्णुपार्षदौ ॥ ४६ ॥

प्राप्तये कल्पतां तावताऽयं शापः समाप्यतामिति पुनः प्रोक्तावित्यर्थः॥ ३८ ॥ ३९ ॥धरोद्धारे निमित्ते तत्प्रतिघाती हतः॥४०॥हिरण्यकशिपोर्वधे कारणं सूचयति। हिरण्यकशिपुः पुत्रमिति॥ ४१ ॥सर्वभूतानामात्मभूतम् । कुतः । समं ब्रह्मैव पश्यतीति तथा तम् । अतः प्रशांतं द्वेषादिरहितम् । अत एव भगवत्तेजसा स्पृष्टं व्याप्तम् । उद्यमैः शस्त्रास्त्रप्रहारादिभिः ॥४२॥ विश्रवसः सुतौ ॥ ४३ ॥ न्यहनत् हतवानित्यर्थः । तर्हि तदेव कथनीयमित्युत्सुकं प्रत्याह । रामवीर्यमिति ॥ ४४ ॥ कृष्णचक्रेण हत

सिंहरूपिणा नृसिंहरूपिणा । एकदेशन्यायेन सिंहपदेनापि नृसिंहग्रहः ॥४०॥ यातनास्तीव्रवेदनाः ॥४१॥सर्वभूतात्मभूतत्वे हेतुं पृच्छति—कुत इति । यद्वा—सर्वेषां भूतानामात्मभूतमात्मवत्प्रेष्ठम् । अतो ब्रह्मदर्शित्वात् । प्रशांतं स्वद्वेष्टर्यपि पितरि द्वेषभावात् । यद्वा—स्वपरदुःखादीनां तुल्यदर्शनात्समदर्शनम् । तत एव प्रशांतत्वादेव । भगवत्तेजसा नित्यतदाविष्टभगवतः प्रभावेण ॥ ४२ ॥ ततो हिरण्यकशिपुहिरण्याक्षाख्यदेहत्यागोत्तरम् ॥ ४३॥ तत्रापि राक्षसत्वेऽपि।इत्यर्थ इति। शब्लुगभावोऽत्रार्ष इति भावः । राघवो भूत्वा रघुवंशे जन्म प्राप्य । प्रभो इति । प्रकर्षेण हरिचरितश्रवणे भासीत्यतः पुनरपि तवैतादृशसंगो न दुर्घट इति॥४४॥ इत्यर्थ इति।विष्णुचक्रेण तयोरपराध एव बहिः शिशुपालदंतवक्त्राकारतया परिणतो हतो न तु ताविति । यथा वह्निना कनकस्य मालिन्यमेव हन्यते न तु कनकं तथैव जयविजययोर्बाह्यमालिन्यावरणयोर्नष्टयोः सतोर्जयविजयावेव तेजःपुंजाकारौ श्रीकृष्णं प्रविष्टौ जनदृष्टयेति भावः ॥ ४५ ॥ अच्युतेन सह स्थितावात्मानावाकारौ ययोस्तयोर्भावस्तत्ता तां ध्यानेनैव नीतौ पुनर्मौशललीलांते हरेर्नारायणस्य पार्श्वं जग्मतुरिति मौशललीलातः पूर्वं श्रीकृष्णशरीर एव नारायणस्यापि प्रविष्टत्वात्तत्पार्षदौ जयविजयावपि तत्रैव प्रविश्य स्थिताविति तत्त्वम् । शिशुपालदंतवक्त्रौ कृष्णसायुज्यं प्रापतुरिति लोकप्रतीतिः श्रीकृष्णेन नारायणरूपं स्वस्मिन्नेवाक्रूराय यमुनाह्रदे दर्शितमिति स तत्रैव स्थितोऽन्यथा तद्दर्शनासंभवादति ध्येयम् । किञ्चात्रान्यदपि विचार्यं चाक्षुषमन्वंतरजातदक्षकन्यादितिपुत्रौ हिरण्यकशिपुहिरण्याक्षौ वराहनृसिंहरूपाभ्यां हरिणा हतौ तौ च मुक्तिं नेयतुः "मदंगस्पर्शनेनांग लोकान्यास्यति सुप्रजाः" इति प्रह्लादं प्रति श्रीनृसिंहोक्तेः स्वर्गादिलोकानेव गतौ भक्तपुलाकन्यायेन हिरण्याक्षेऽप्ययं न्यायो ध्येयः । तथा च यावद्रामावतारं स्वर्गादौ स्थित्वा पुनस्तौ केशिन्यां विश्रवसो रावणकुंभकर्णावभूतां पुनश्श्रीरामावतारे वैवस्वतमन्वंतरचतुर्विंशतितमयुगे श्रीरामेण हतावपि मोक्षं नापतुः 'त्रिभिर्लोकाय कल्पताम्' इत्युक्तेः । "स तस्य वाक्यैः करुणैर्महात्मा संबोधितः साधुविभीषणेन । आज्ञापयामास नरेंद्रसूनुः स्वर्गीयमाधानमदीनसत्त्वः ॥" इति श्रीवाल्मीकीययुद्धकांडोक्तेश्च । स्वर्गीयं स्वर्गार्हम् आधानं प्रेतकृत्यविधानमिति व्याख्यातं रामीयतिलके । तथा च रावणकुंभकर्णावपि देहान्ते यावत्कृष्णावतारं स्वर्गे स्थित्वा पुनः शिशुपालदंतवक्त्रौ बभूवतुः तौ च श्रीकृष्णनिहतौ स्वाधिकारं वैकुंठीयं जग्मतुरिति ज्ञेयम्।कृष्णावतारो हि वैवस्वतमन्वंतरीयाष्टाविंशतितमयुगीयकलिद्वापरसंधौ जातः "कलिद्वापरयोः संधौ श्रीकृष्णोऽवातरिष्यति"

युधिष्ठिर उवाच ॥ विद्वेषो दयिते पुत्रे कथमासीन्महात्मनि ॥ ब्रूहि मे भगवन् येन प्रह्लादस्याच्युतात्मता ॥ ४७ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे जयविजयत्रिजन्मवर्णनं नाम प्रथमोऽध्यायः॥ १ ॥नारद उवाच॥ भ्रातर्येवं विनिहते हरिणा क्रोडमूर्तिना ॥ हिरण्यकशिपू राजन् पर्यतप्यद्रुषा शुचा॥ १ ॥आह चेदं रुषा घूर्णः संदष्टदशनच्छदः ॥ कोपोज्ज्वलद्भ्यां चक्षुर्भ्यां निरीक्षन्धूम्रमंबरम् ॥ २॥ करालदंष्ट्रोग्रदृष्ट्या दुष्प्रेक्ष्यभ्रुकुटीमुखः ॥ शूलमुद्यम्य सदसि दानवानिदमब्रवीत् ॥ ३॥ भोभो दानवदैतेया द्विमूर्धंस्त्र्यक्ष शंबर ॥ शतबाहो हयग्रीव नमुचे पाक इल्वल॥ ४ ॥ विप्रचित्ते मम वचः पुलोमन्च्छकुनादयः ॥ शृणुतानंतरं सर्वे क्रियतामाशु मा चिरम् ॥ ५ ॥

मंहो ययोस्तौ । तयोः पापमेव हतं न तु तावित्यर्थः ॥ ४५॥ ४६ ॥ येन कारणेन प्रह्लादस्याच्युतात्मताच्युतैकचित्तत्वं तदपि ब्रूहीति शेषः ॥ ४७ ॥ इति सप्तमे टीकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये विष्णुरोषेण लोकं विप्लाव्य दानवैः ॥ तद्धतभ्रातृपुत्रादीनितिहासैरसांत्वयत् ॥ १ ॥भगवद्द्वेष एव तद्द्वेषेऽपि कारणमित्याशये येनाह । भ्रातरित्यादिना । एवं देवपक्षपातेन॥ १ ॥ कोपेन उत् अतिशयेन ज्वलद्भ्यां कोपाग्निधूमेनैव धूम्रमंबरं निरीक्षमाणः॥ २ ॥करालदंष्ट्राभिर्युक्तयोग्रया दृष्ट्या

इति परमब्रह्मवैवर्त्तीयप्रथमांशोक्तेः । वस्तुतस्तु–'विष्णुचक्रहतांहसौ' इत्युक्तेश्चक्रधरहतस्यैव विष्णुलोको भवतीति"येये हताश्चक्रधरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन । तेते गता विष्णुपुरीं नरेंद्राः क्रोधोऽपि देवस्य वरेण तुल्यः॥"इत्युत्तरकांडे वाल्मीकीयोक्तेः।वराहावतारे श्रीरामावतारे चक्रधारणाभावादपि तौ मोक्षं नेयतुः यद्यपि दंतवक्रो गदानिर्भिन्नहृदयः कृत्वा हतः "कृष्णोऽपि तमहन् गुर्व्या कौमोदक्या स्तनांतरे"इत्याद्युक्ते स्तथापि चक्रधरत्वं कृष्णस्य तत्राप्यासीदेवेति कचिद्गदाया अपि चक्रत्वं निर्दिश्यते यथा गर्भस्थपरीक्षिद्रक्षणं गदयैव कृतम् 'भ्रामयंतं गदां मुहुः' इत्युक्तेः । पुनः परीक्षितैवोक्तं श्रीदशमारंभे–'जुगोप कुक्षिं गत आत्तचक्रः' इति । विष्णुपुराणे हि प्रतिपादितं "हिरण्यकशिपोर्विष्णुरयमित्येवं मनस्यभूत् दशाननत्वेऽप्यनंगपराधीनतया जानकीसमासक्तचेतसो दाशरथिरूपदर्शनमेवासीन्नायमच्युत इत्यासक्तिर्विपद्यतोंतःकरणस्य मानुषबुद्धिरेव केवलमभूत्" इति । अत एव रावणकुंभकर्णयोः शिशुपालरूपेण जन्म श्रूयते न हि भगवत्सालोक्यं प्राप्तयोरपि जन्म भवति किन्तु ब्रह्मणा सह मुक्तिरेवेति कृतं बहुविचारेण ॥ ४६ ॥ भगवन्निति । भगवदवतारत्वेन सर्वज्ञोऽसीति भावः ॥ ४७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ विष्णो रोषेण विप्लाव्योपद्रुतं कृत्वा तेन विष्णुना हतो यो भ्राता हिरण्याक्षस्तस्य पुत्रादीन् । आदिना भार्यादिग्रहः ( १ ) एवं पर्यतप्यतेति संबंधः ॥ १ ॥ अंबरं निरीक्षन्निति । हरेर्निवासं वैकुंठं हरिं च स्वहस्तेनैव ध्वंसयामीति भावः ॥ चक्षुरग्न्योधूमव्याप्तत्वादिति भावः ॥ २॥ कराला भयंकरा या दंष्ट्रा स्ताभिः ॥ ३ ॥ दानवादिपदानामर्थांतरत्वे सत्त्वेऽप्याह । दानं वांति हिंसंतीति दानवाः । दानपदेन दातारोऽपि गृह्यंते "सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः" इति वक्ष्यमाणत्वात् । दितिश्छेदनं तेन सह वर्त्तंत इति दैतेयाः–'संदीपयत वृश्चत' इति वक्ष्यमाणत्वात्'।द्वौ मूर्द्धानौ यस्येति।त्रीण्यक्षीणि यस्येति भयार्थं लोकस्य विकृताकार एव न्याय्यः।शंबं मुशलाग्रलोहं तं राति तेन ताडयतीत्यर्थः । "शंबः स्यान्मुशल ग्रंथलोहमंडलके पवौ । शुभान्विते त्रिषु" इति मेदिनी । शंबो वज्रमस्यास्तीति शंब इंद्रो मत्वर्थीयोऽच् । तमपि राति गृह्णाति युद्ध इति शंबरः । यद्वा–शुभान्वितं राति गृह्णातीति'यत्रयत्र द्विजा गावः'इत्यादिवक्ष्य माणत्वात् । शतबाहो हयग्रीवेति भयजननार्थमेव ।न मुंचति स्वहस्तगतमिति नमुचिः । "पाकोज्ञावत्रडिम्बयोः' इत्यभिधानात् यदाग्निर्दहति सर्वं तथा त्वया भवितव्यमिति पाकपदाभिप्रायः । इलां भूमिमपि वलते आच्छादयतीति इल्वलो बाहुल्यकाद्वावभावः ॥ ४ ॥ विशेषेण प्रगता चित्तिर्ज्ञानं येन विप्राणां चित्तिर्भयं यस्मात्स तथा वा 'चित्तिर्ज्ञाने भयेऽपि च' इति निरुक्तिः । पुरोऽग्रे एव मन्यते इति पुलोमा रल्यो

सपत्नैर्घातितः क्षुद्रैर्भ्राता मे दयितः सुहृत् ॥ पार्ष्णिग्राहेण हरिणा समेनाप्युपधावनैः ॥ ६ ॥ तस्य त्यक्तस्वभावस्य घृणेर्मायावनौकसः ॥ भजंतं भजमानस्य बालस्येवास्थिरात्मनः ॥ ७ ॥ मच्छूलभिन्नग्रीवस्य भूरिणा रुधिरेण वै ॥ रुधिरप्रियं तर्पयिष्ये भ्रातरं मे गतव्यथः ॥ ८ ॥ तस्मिन् कूटेऽहिते नष्टे कृत्तमूले वनस्पतौ ॥ विटपा इव शुष्यंति विष्णुप्राणा दिवौकसः ॥ ९ ॥ तावद्यात भुवं यूयं विप्रक्षत्रसमेधिताम् ॥ सूदयध्वं तपोयज्ञस्वाध्यायव्रतदानिनः ॥ १० ॥

दुष्प्रेक्ष्यं भ्रुकुटीयुक्तं मुखं यस्य सः ॥ ३ ॥ ४ ॥ ५ ॥ समेनाप्युपधावनैर्भजनैर्निमित्तभूतैः पार्ष्णिग्राहेण सता ॥ ६ ॥ एवं त्यक्तः स्वभावः समत्वं येन तस्य घृणेः शुद्धतेजोमयस्यापि मायया वनौकसो वराहरूपस्य सतः । अस्थिरात्मनोऽव्यवस्थितचित्तस्य । कुतः योयो भजति तंतं भजमानस्यानुसरतः ॥ ७ ॥ तस्य रुधिरेण यावत्तर्पयिष्यामि तावद्यूयं भुवं यातेति तृतीयेनान्वयः ॥ ८ ॥ ननु देवैस्तद्वधः कारितोऽतस्ते किं न हन्यंते तत्राह । तस्मिन्हरौ कूटे कपटे अहिते प्रतिपक्षे कूटमीहितं यस्येति वा नष्टेऽदृष्टे सति देवाः शुष्यंति स्वयमेव नाशं यास्यंति । कुतः । विष्णुरेव प्राणो येषां ते । यथा कृत्तमूले वृक्षे शाखाः स्वयं शुष्यंति तद्वत् ॥ ९ ॥ तपोयज्ञादियुक्तारैक्यात् । आगमनात्पूर्वमेवांधकाराद्युत्पादनेन ज्ञायते भव।नित्यभिप्रायः । शक्नोत्यनार्यकर्मणीति शकुनः । आदिना वृकादिग्रहः ॥ ९ ॥ समेनापीति । "देवानां दानवानां च सामान्यमधिदैवतम्" इत्युक्तेः । 'समोहं सर्वभूतेषु' इति तदुक्तेश्च । उपधावनैरिति लोभवशादेवपक्षपाती जात इत्यर्थः ॥ ६ ॥ वास्तवोऽर्थस्त्वयम्–त्यक्तो भक्तेभ्यो दत्तः स्वभावः सायुज्यादिकं येन तस्य 'घृणी–ग्रहणे' इत्यस्मात् घृणेः कृपया स्त्रीकर्तुः माया कृपा मायेति छांदसस्तृतीयालुक् ततः सर्वत्रान्वयः । कृपयैव वनौकसः तल्लीलाविस्तारयितुः कृपयैव बालस्यैवास्थिरात्मनः भक्तभावानुरूपनानाभावविस्तारयितुः ॥ ७ ॥ मच्छूलाद्भिन्ना तदगोचरभूता ग्रीवा तदुपलक्षितो विग्रहो यस्य तस्य मे रुधिरेण श्रीनृसिंहतयाविर्भावे तस्माद्भूतमदीयरुधिरेण रुधिरप्रियं भ्रातरं तर्पयिष्ये । 'यथा तरोर्मूलनिषेचनेन' इत्यादेः ॥ ८ ॥ ननु तस्य तद्ध्वस्तमरणादिना गतिर्ज्ञातैव किं तत्तर्पणेन तत्राह–तस्मिन्कूटे कूटस्थे एकरूपतया सर्वकालव्यापिनिहिते भक्तसुहृदि नष्टेऽदर्शनं गते सति सर्वेऽपि प्राकृताप्राकृतदिवौकसस्तदेकप्राणत्वाच्छुष्यंति सुखदनानासंपद्यपि शोषं प्राप्नुवंति तस्मात्तदाराधनमेव कार्यमिति भावः । अत्र विश्वनाथः–वयमप्युपधावाम इति चेन्मैवं कुरुध्वं यूयं तावन्मन्नियुक्ते कर्मणि तिष्ठत अहमेक एव तं हनिष्यामीत्याह–तस्येति द्वाभ्याम् । ननु हरिर्हि परमात्मोच्यते । शास्त्रैरतस्तं कथं हनिष्यसि तत्राह त्यक्तस्वभावस्य सर्वत्रौदासीन्यरूपः स्वभावो हि परमात्मनः प्रसिद्धः स यदि तेन त्यक्तस्तदा कूटस्थस्य संप्रति न परमात्मत्वमिति भावः । प्रत्युत परमात्मत्वं त्यक्त्वा पशुरभूदित्याह । घृणेः पूर्वं शुद्धतेजोमयस्यापि संप्रति मायापारवश्याद्वनौकसः मत्स्यकच्छपादिरूपस्य च । किं च भजंतं जनमात्रमेव भजमानस्य बालस्येव एकेनैव खंडलड्डुकेन वशीकृतस्येत्यर्थः । वस्तुतस्तु–भक्तवात्सल्यादेव त्यक्तेत्यादिविशेषणपंचकं भवति तच्च तस्य भूषणमेव न तु दूषणमिति भावः। घृणेः शुद्धतेजोमयस्यापि मायया कृपयेत्यादि योज्यं किं च–मच्छूलाद्भिन्ना पृथग्भूता ग्रीवा यस्येति प्राकृतस्य मच्छूलस्य तत्र प्रवेशोऽपि न संभवेदिति भावः । 'कुंकुमं रुधिरं प्रोक्तम्' इत्यभिधानात् । रुधिरेण तदंगकुंकुमेन रुधिरप्रियं तन्निर्माल्यकुंकुमप्रियं मद्भ्रातुर्भक्तत्वादिति भावः । कूटे हिते कपटचेष्टिते अंतर्दुष्टे दृश्यमानरमणीयं कूटमिति तीर्थः । वस्तुतस्तु–कूटेषु कपटिष्वपि मद्विधेषु ईहितं युद्धचेष्टा यस्य तस्मिन्नित्यहो मम भाग्यमिति भावः। देवानां तु सौभाग्यं कियद्वर्ण्णनीयं ते तु तदेकप्राणा एवेत्याह–तस्मिन्नष्टे। दैवात्कदाचिददृष्टे सति नशेरदर्शनार्थत्वात् छिन्नमूले वनस्पतौ यथा विटपाः शुष्यंति तथा शुष्यंति ते विष्णुरेव प्राणो येषां ते किं वा विष्णोरपि प्राणतुल्यास्ते परमधन्या एवेति भावः ॥ ९ ॥ विप्रक्षत्राभ्यां तपोबलप्रतापाभ्यां सम्यगेधितां वर्द्धितां भुवं यातः किमर्थं सूदयध्वम् ॥ १० ॥

विष्णुर्द्विजक्रियामूलो यज्ञो धर्ममयः पुमान्॥ देवर्षिपितृभूतानां धर्मस्य च परायणम्॥ ११॥ यत्र यत्र द्विजा गावो वेदा वर्णाश्रमाः क्रियाः ॥ तंतं जनपदं यात संदीपयत वृश्चत॥ १२॥ इति ते भर्तृनिर्देशमादाय शिरसाहताः॥ तथा प्रजानां कदनं विदधुः कदनप्रियाः॥ १३॥ पुरग्रामव्रजोद्यानक्षेत्रारामाश्रमाकरान् ॥ खेटखर्वटघोषांश्च ददहुः पत्तनानि च॥ १४॥ केचित् खनित्रैर्बिभिदुः सेतुप्राकारगोपुरान् ॥ आजीव्यांश्चिच्छिदुर्वृक्षान्केचित्परशुपाणयः॥ प्रादहञ्छरणान्यन्ये प्रजानां ज्वलितोल्मुकैः ॥ १५ ॥ (त एव मनुजा भूत्वा निंदंति वैदिकान्सदा॥) एवं विप्रकृते लोके दैत्येंद्रानुचरैर्मुहुः ॥ दिवं देवाः परित्यज्य भुवि चेरुरलक्षिताः ॥ १६ ॥ हिरण्यकशिपुर्भ्रातुः संपरेतस्य दुःखितः ॥ कृत्वा कटोदकादीनि भ्रातृपुत्रानसांत्वयत् ॥ १७ ॥ शकुनिं शंबरं धृष्टं भूतसंतापनं वृकम् ॥ कालनाभं महानाभं हरिश्मश्रुमथोत्कचम्॥ १८ ॥ तन्मातरं रुषाभानुं दितिं च जननीं गिरा ॥ श्लक्ष्णया देशकालज्ञ इदमाह जनेश्वरः ॥ १९ ॥ हिरण्यकशिपुरुवाच ॥ अंबांब हे वधूः पुत्रा वीरं माऽर्हथ शोचितुम् ॥ रिपोरभिमुखे श्लाघ्यः शूराणां वध ईप्सितः ॥ २० ॥

न्सूदयध्वं घातयत ॥ १० ॥ ननु तैः किमपराद्धं तत्राह । विष्णुरिति । द्विजानां क्रियाऽनुष्ठानं मलं यस्य सः । यतोऽसौ यज्ञो धर्ममयश्च । देवादीनां परायणं परम आश्रयः। अतो यज्ञरूपस्य विष्णोर्मूलत्वान्मामनादृत्य तदाश्रयणाच्च ते वध्या इति भावः ॥ ११॥ तस्मात्परमं मन्त्रं शृणुतेत्याह । यत्रयत्रेति । संदीपयत दहत।वृश्चत आजीव्यानां वृक्षाणां छेदं कुरुत ॥ १२ ॥ १३ ॥ पुरं हट्टादिमत् । ग्रामस्तद्रहितः । व्रजो गवां वासः । उद्यानं कृत्रिमं वनम् । क्षेत्रं व्रीह्यादेः । आरामोऽकृत्रिमं वनम्। आश्रमः ऋषीणां स्थानम् । आकरो रत्नादीनाम् । खेटाः कृषीवलानां वासः खर्वटो गिरिद्रोण्याश्रयो ग्रामः । घोष आभीराणां वासः । पत्तनं राजधानी ॥ १४ ॥ खनित्रैः खननसाधनैः । आजीव्यानुपजीव्यान् जंब्वाम्रकपित्थादीन् शरणानि गृहान् ॥ १५ ॥ विप्रकृते उपद्रुते यज्ञभागानामभावा द्दिवं परित्यज्यालक्षिताः संतो भुवि चेरुः ॥ १६ ॥ तदेवं प्रजानां कदनं दानवेषु कुर्वत्सु स्वयं स्वर्गराज्यादि साधयितुं तपस्तप्तुकामः प्रथमं यत्कृतवांस्तदाह हिरण्यकशिपुरित्यादिना । कटोदकं प्रेताय प्रदेयमुदकम् । आदिशब्दात्प्रेतश्राद्धादिकम् ॥ १७ ॥ १८ ॥ १९ ॥ हे वधूरिति भ्रातुर्भार्यां संबोधयति ॥ २० ॥

अत्राक्षिपति—नन्विति । तेषां नाशे स्वयमेव विष्णुर्नश्यतीत्यर्थः । द्विजानां नाशे तत्क्रियालोपाद्विष्णोर्मूलोन्मूलनम्। यज्ञस्य धर्मस्य च नाशात्तत्स्वरूपस्य नाशो भावी ।किञ्च—देवर्ष्यादीनां तच्छोकादपि मरिष्यतीति भावः । स्वामिव्याख्याने इति भाव इति । अहो मयि सर्वेश्वरे सत्यपि मां यतो नार्चयंति तेऽतस्तेषां वधो न्याय्य एवेति तात्पर्यम्॥ ११॥ यत्रयत्र जनपदे देशे 'नीवृज्जनपदो देशः' इत्यमरः॥ १२॥ कदनं कष्टम्॥ १३॥ पुरादयो व्याख्याता अपि प्रथमस्कंधे सौगम्यार्थं पुनर्व्याख्याताः । ददहुरत्रैत्वपूर्वलोपाभावस्त्वार्षः ॥ १४॥ खननसाधनैः कुद्दालादिभिः । (उपजीव्यान् आम्रजम्ब्वादीन्) 'शरणं गृहरक्षित्रोः' इत्यमरः॥ १५॥ १६॥ "कटः श्रोणौ द्वयोः पुंसि किलिंजेतिशये शवे । समये गजगंडेऽपि पिप्पली तुकटी मता" इति कोशात्॥ १७॥ भातृपुत्रान्नामतो निर्दिशति · शकुनिमिति॥ १८॥ तेषां शकुन्यादीनां मातरं रुषाभानुसंज्ञाम्। जनेश्वरेति सर्वाश्वासनमेव राजधर्म इति भावः । सविसर्गपाठे तु दैत्यविशेषणम् । पामरेश्वर इत्यर्थः । "जनो लोके महर्लोकात्परे लोके च पामरे" इति मेदिनी । भगवति द्वेषादेव पामरत्वमिति ज्ञेयम् ॥ १९ ॥ अंबांबेति वीप्सा दुःखे। हे वधूरिति ।

भूतानामिह संवासः प्रपायामिव सुव्रते ॥ दैवेनैकत्र नीतानामुन्नीतानां स्वकर्मभिः ॥ २१ ॥ नित्य आत्माऽव्ययः शुद्धः सर्वगः सर्ववित् परः ॥ धत्तेऽसावात्मनो लिंगं मायया विसृजन्गुणान् ॥२२॥ यथांभसा प्रचलता तरवोपि चला इव॥ चक्षुषा भ्राम्यमाणेन दृश्यते चलतीव भूः॥२३॥ एवं गुणैर्भ्राम्यमाणे मनस्यविकलः पुमान् ॥ याति तत्साम्यतां भद्रे ह्यलिंगो लिंगवानिव ॥२४॥ एष आत्मविपर्यासो ह्यलिंगे लिंगभावना॥ एष प्रियाप्रियैर्योगो वियोगः कर्मसंसृतिः॥२५॥ संभवश्च विनाशश्च शोकश्च विविधः स्मृतः ॥ अविवेकश्च चिंता च विवेकास्मृतिरेव च॥२६॥ अत्राप्युदाहरंतीममितिहासं पुरातनम ॥ यमस्य प्रेतबंधूनां संवादं तं निबोधत ॥ २७ ॥

भवतु नाम तस्य श्लाघ्यो वधस्तथाऽप्यस्माकं तावद्बंधुर्गत एवेति चेत्तत्राह । भूतानामिति । दैवेन प्राचीनकर्मणा एकत्र नीतानां संयोजितानां पुनश्च स्वैः स्वैः कर्मभिरुन्नीतानां वियोजितानाम् ॥ २१ ॥ एवं लौकिकदृष्ट्या शोकं निवार्य तत्त्वदृष्ट्या वारयति । नित्य इति । आत्मा नित्यो मृत्युशून्यः अव्ययोऽपक्षयशून्यः शुद्धो निर्मलः सर्वगतः सर्ववित्सर्वज्ञश्च । सर्वत्र हेतुः परो देहादिव्यतिरिक्तः अतो मृत इति कृश इति मलिन इति वियुक्त इत्यज्ञ इति च मत्वा शोको न कार्य इत्यर्थः । कथं तर्हि तस्य संसारस्तत्राह । धत्त इति । आत्मनो मायया स्वाविद्यया लिंगं मूर्तीर्धत्ते गुणानुच्चावचान्देहान्सुखदुःखादीन्वा विशेषेण सृजन्स्वीकुर्वन् । लिंगशरीरोपाधि संसार इत्यर्थः ॥ २२ ॥ एतत्सदृष्टांतं प्रपंचयति यथेति चतुर्भिः । तरवः प्रतिबिंबिताः उपाधिधर्मा उपहिते भवंतीति दृष्टांतमुक्त्वा ग्राहकधर्मा ग्राह्ये भवंतीति दृष्टांतमाह चक्षुषेति ॥ २३ ॥ अविकलः परिपूर्ण एव तत्साम्यतां मनःसमतामित्यर्थः ॥ २४ ॥ लिंगभावना देहाभिमानः एष आत्मनो विपर्यासोऽन्यथाभावः । तमेवाह। प्रियै वियोगोऽप्रियैर्योगश्च कर्म च संसृतिश्च नानागर्भेषु प्रवेशः ॥ २५ ॥ ततश्च संभव उत्पत्तिः । विवेकस्यास्मृतिरननुसंधानम् ॥ २६ ॥ अत्रापि शोकहेतुं विना वृथैवायं

दीर्घत्वमार्षम् । रिपोरप्यभिमुखे किमुत श्रीविष्णोरिति । ईप्सितो वांछितश्च॥२०॥आक्षिपति–भवत्विति । "प्रपा पानीयशालिका" इत्यमरः। सुव्रते इति । अधुना सुष्ठु व्रतादिधर्मेणैव कालो नेतव्य इति भावः॥२१॥ तत्त्वदृष्ट्या तु हिरण्याक्षः खल्वात्मैव न तु देहः । तस्यात्मनश्च स्वरूपं शृण्वित्याह–जीवेऽपीश्वरधर्मोक्तिरासुरस्वभावत्वात् । वस्तुतस्तु–सर्वं लोकं गच्छतीति सर्वगः । सर्वं सुखदुःखादिकं विन्दतीति सर्ववित् । परो देहादि व्यतिरिक्तः । असावात्मा आत्मनः स्वस्य लिंगं देहं मायया स्वाविद्यया धत्ते किमर्थं गुणान् उच्चावचान्स्थू देहान् विशेषेण सृजन्स्वीकुर्वन् तथा तत्पदावृत्त्या विसृजन्स्थूलदेहान्स्वीकर्तुं त्यक्तुं चेत्यर्थः । इत्यर्थ इति । 'नष्टे लिंगेन संसारे' इति स्मृतेरिति भावः ॥ २२ ॥ न तु चला अंभोभ्यस्तेषां भिन्नत्वात् । एवमेव लिंगधर्माः शोकमोहादयस्तदुपहित आत्मनि प्रतीयंते न त्वात्मा शोकादिमान् तस्य शोकमोहादिभ्यो भिन्नत्वादि त्यर्थः ' भ्राम्यमाणेन भ्रमिदोषाक्रम्यमाणेन यथा भूताविष्टः पुरुषो भूतग्राह्य उच्यते एवं देहाविष्ट आत्मा देहग्राह्यो देहधर्माक्रांतश्चोच्यते इत्यर्थः ॥ २३ ॥ इत्यर्थ इति । मनोधर्मग्राहित्वं यातीति भावः । हे भद्रे इति । एवं विचार एव भद्रहेतुरिति भावः ॥ २४ ॥ अलिंगे देहातिरिक्ते ॥ २५ ॥ २६ ॥ प्रेतस्य कस्यचिन्मृतस्य ॥ २७ ॥

उशीनरेष्वभूद्राजा सुयज्ञ इति विश्रुतः॥सपत्नैर्निहतो युद्धे ज्ञातयस्तमुपासत ॥ २८ ॥ विशीर्णरत्नकवचं विभ्रष्टाभरणस्रजम् ॥ शरनिर्भिन्नहृदयं शयानमसृगाविलम् ॥२९॥ प्रकीर्णकेशं ध्वस्ताक्षं रभसा दष्टदच्छदम्॥रजः कुंठमुखांभोजं छिन्नायुधभुजं मृधे ॥ ३० ॥ उशीनरेंद्रं विधिना तथा कृतं पतिं महिष्यः प्रसमीक्ष्य दुःखिताः ॥ हताः स्म नाथेति करैरुरो भृशं घ्नंत्यो मुहुस्तत्पदयोरुपापतन् ॥ ३१ ॥ रुदत्य उच्चैर्दयितांघ्रिपंकजं सिंचंत्य अस्रैः कुचकुंकुमारुणैः ॥ विस्रस्तकेशाभरणाः शुचं नृणां सृजंत्य आक्रंदनया विलेपिरे ॥ ३२ ॥ अहो विधात्राऽकरुणेन नः प्रभो भवान् प्रणीतो दृगगोचरां दशाम् ॥ उशीनराणामसि वृत्तिदः पुरा कृतोऽधुना येन शुचां विवर्धनः ॥ ३३ ॥ त्वया कृतज्ञेन वयं महीपते कथं विना स्याम सुहृत्तमेन ते ॥ तत्रानुयानं तव वीरपादयोः शुश्रूषतीनां दिश यत्र यास्यसि ॥ ३४ ॥ एवं विलपतीनां वै परिगृह्य मृतं पतिम् ॥ अनिच्छतीनां निर्हारमर्कोऽस्तं संन्यवर्तत ॥३५॥तत्र ह प्रेतबंधूनामाश्रुत्य परिदेवितम् ॥ आह तान् बालको भूत्वा यमः स्वयमुपागतः॥३६॥

शोक इत्यस्मिन्नर्थे । प्रेतस्य मृतस्य कस्यचिद्ये बंधवस्तेषां च संवादं शृणुत ॥२७॥ उपासत तत्समीपे आवृत्य स्थिताः ॥ २८ ॥ विशीर्णं रत्नमयं कवचं यस्य । विभ्रष्टान्याभरणानि स्रजश्च यस्य । शरेण निर्भिन्नं हृदयं यस्य ॥ असृजा रक्तेनाविलं लिप्तम् ॥ २९॥ प्रकीर्णाः केशा यस्य । ध्वस्ते अक्षिणी यस्य । रभसा संरंभेण दष्टो दच्छद ओष्ठो येन रजसा कुंठमावृतं मुखांभोजं यस्य छिन्नमायुधं भुजश्च यस्य ॥३०॥ तस्य पदयोरुप समीपे आ समंतादपतन् ॥ ३१ ॥ ३२ ॥ विलापमेवाह अहो इति द्वाभ्याम् । अकरुणत्वमेवाहुः येन विधात्रा दृशामगोचरां दशां भवान्प्रणीतो गमितस्तेन विधात्रा त्वमधुना शुचां विवर्धनः कृतोऽसीत्यन्वयः ॥ ३३ ॥ हे महीपते त्वया सुहृत्तमेन विना वयं कथं स्याम भवेम जीवेमेत्यर्थः ।अतो हे वीर यत्र त्वं यास्यसि तत्र तेऽनुयानमनुगमनं तव पादयोः शुश्रूषां कुर्वतीनामस्माकं दिश देहि ॥ ३४ ॥ निर्हारं दाहार्थं नयनमनिच्छंतीनाम् । अस्तमस्ताचलं प्रति॥ ३५॥परिदेवितं रोदनं स्वपुर्यामेव स्थित आश्रुत्य श्रुत्वा तत्र स्वयमेवोपागतो यमो बाल

ज्ञातयः सपिंडाः॥ २८॥ २९॥ ध्वस्ते अधोगते अक्षिणीयस्य तम्॥ ३०॥हेनाथेति।त्वां विना वयमनाथा जाता इति भावः॥ ३१॥सिंचंत्य अस्रैरिहोत्वाद्यभाव आर्षः।आ क्रंदन उच्चैः सेदनेन नृणां शृण्वतां शुचं शोकमश्रु वा सृजंत्यः कु र्वत्यः॥ ३२॥हेप्रभो इति।त्वं त्वस्मानपि स्वेन सार्द्धं नेतुं समर्थो भूत्वा किमधुना त्यक्ष्यसीति भावः॥ ३३॥मह्या आलिंगनेनास्मांस्त्यक्त्वा त्वमधुनास्या एव पतिस्त्वं किमन्वर्थं वसीतिभावः। ३४। संन्यवर्त्तत प्राप्तोऽभूत् ३५॥ स्वयमुपागत इति। पुण्यवज्जीवानां निर्हारांत एव यमपुरग मनं प्रायः संभवतीति केचित् । तासां मध्ये काश्चिद्वैष्णवस्त्रियस्तत्सामीप्याद्यमदूतैर्नेतुं शक्यत्वाभावात् । तत्सामीप्यदूरीकरणार्थं स्वयं यम एवागतइत्यन्ये।बाल

यम उवाच ॥ अहो अमीषां वयसाधिकानां विपश्यतां लोकविधिं विमोहः ॥ यत्रागतस्तत्र गतं मनुष्यं स्वयं सधर्मा अपि शोचं त्यपार्थम् ॥ ३७ ॥ अहो वयं धन्यतमा यदत्र त्यक्ताः पितृभ्यां न विचिंतयामः ॥ अभक्ष्यमाणा अबला वृकादिभिः स रक्षिता रक्षति यो हि गर्भे ॥ ३८ ॥ य इच्छयेशः सृजतीदमव्ययो य एव रक्षत्यवलुंपते च यः ॥ तस्याबलाः क्रीडनमाहुरीशितुश्चराचरं निग्रहसंग्रहे प्रभुः ॥ ३९ ॥

को भूत्वा तानाह । अहो इत्यादिना॥ ३६ ॥ अहो आश्चर्यम् । अस्मत्तो वयसाऽधिकानामपि लोकस्य विधिं जन्ममरणादिप्रकारं विपश्यतामपि विमोहः । मोहमेवाह । यत्र यस्मादव्यक्तादागतस्तत्रैव गतमपार्थं शोचंति । तदुक्तं गीतासु । "अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत । अव्यक्तनिधनान्येव तत्र का परिदेवना "इति । किं च स्वयमपि सधर्माः मृतेन सह समानो मृत्युलक्षणो धर्मो येषां तथाभूता अपि ॥३७॥ अबला दुर्बला वृकादिभिरभक्ष्यमाणा वयं न विचिंतयामः । तत्र हेतुः।यो गर्भे रक्षति स एव सर्वत्र रक्षिता ॥३८॥ ननु तस्य रक्षणे किं प्रयोजनं न किंचिदपि किं तु क्रीडैव केवलमित्याह । य इति । य ईश इदं विश्वं सृजति रक्षत्यवलुंपते

भूत्वेति । अन्येषां तत्र प्रवेशासामर्थ्याद्बालभाषितस्य मधुरत्वात्तत्कर्तृकथनस्यापि विस्मयावहत्वात्तत्त्वजिघृक्षोत्पादनसमर्थत्वाच्च ॥ ३६ ॥ तत्र मृतकसंबंधिपार्श्वे । अस्माकमत्यल्पवयसामपि यो विवेकः सोप्येषां नास्तीति साश्चर्यमाह–अव्यक्तमव्याकृतमविद्योपहितचैतन्यमादिप्रागवस्था येषां तानि तथा व्यक्तं नामरूपाभ्यामेवाविद्यकाभ्यां प्रकटीभूतं न तु स्वेन परमार्थसदात्मना मध्यं स्थित्यवस्था येषां तानि तादृशानि भूतान्याकाशादीनि । अव्यक्ते स्वकारणे मृदीव घटादीनां निधनं प्रलयो येषां तेषु भूतेषु का परिदेवना को वा दुःखप्रलापः न कोऽप्युचित इत्यर्थः । तथा च श्रुतिः–"तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते" इत्यादि अव्यक्तोपादानतां सर्वस्य दर्शयति । लयस्थानं तु तस्यार्थसिद्धं कारणे एव कार्यलयस्य दर्शनात् । तथाचाज्ञानकल्पितत्वेन तुच्छान्याकाशादिभूतान्युद्दिश्य शोको नोचितश्चेत्तत्कार्याणि शरीराण्युद्दिश्य नोचित इति किमु वक्तव्यमिति भावः । अथ वा सर्वदा तेषामव्यक्तरूपेणाविद्यमानत्वाद्विच्छेदाभावेन तन्निमित्तः प्रलापो नोचित इति भावः । यद्वादौ जन्मनः प्रागव्यक्तान्यनुपलब्धानि भूतानि पृथिव्यादिभूतमयानि शरीराणि मध्ये जन्मानंतरं मरणात्प्राग्व्यक्तानि उपलब्धानि संति निधने पुनरव्यक्तान्येव संति यथा स्वप्नेंद्रजालादौ प्रतिभासमात्रजीवनानि शुक्तिरूप्यादिवन्न तु ज्ञानात्प्रागूर्ध्वं वा स्थितानि दृष्टिसृष्ट्यभ्युपगमात् तथा च'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इति न्यायेन मध्येऽपि न संत्येवैतानि एवं सति तत्र तेषु मिथ्याभूतेष्वत्यंततुच्छेषु भूतेषु का परिदेवनेति।पूर्ववत्।न हि स्वप्ने बहुविधान्बंधूनुपलभ्य प्रतिबुद्धस्तद्विच्छेदेन शोचति पृथग्जनोऽपि एतदेवोक्तं पुराणे–"अदर्शनादापतितः पुनश्चादर्शनं गतः । भूतसंघः" इति । तथा च शरीराण्यप्युद्दिश्य शोको नोचित इति भावः । न केवलमयमेव मृतो यूयमप्येतादृशा एव सर्वे इत्याह–किं चेति । सधर्मा इति । असिजभावस्तु समासांतविधेरनित्यत्वादेव ॥ ३७ ॥ युष्मत्तो वयं धन्यतमाः श्रेष्ठाः यद्यतः तत्र चिंतायां अभावे यो विष्णुः सर्वत्र वनगिरिविपत्त्यादौ ॥ ३८ ॥ अत्राक्षिपति नन्विति । भो अबला इति । न विद्यते विचारास्यं बलं यासां ता इत्यर्थः।अतो विश्वस्य क्रीडासाधनत्वात्।अत्र विश्वनाथः–ननु त्वां गर्भे वासे ररक्ष इममस्मत्पतिं संग्रामे न ररक्षेत्यत्र को हेतुस्तत्राह–य इति। इच्छया स्वेच्छयैव न तु कस्याप्यनुरोधेनैवेति भावः। नन्वीदृशीच्छैव किंहेतुका तत्राह–ईश इति । अनन्याधीनपरमैश्वर्यवान् तत्कारणकल्पने तदैश्वर्यस्यैव तादृशत्वं न सिध्येदिति भावः । नन्वेवं सृष्ट्यादिकं किमर्थं करोति तत्राह–चराचरं तस्य क्रीडनं क्रीडनकमेवा इ;

पथि च्युतं तिष्ठति दिष्टरक्षितं गृहे स्थितं तद्विहतं विनश्यति ॥ जीवत्यनाथोऽपि तदीक्षितो वने गृहेऽपि गुप्तोऽस्य हतो न जीवति ॥
॥ ४० ॥ भूतानि तैस्तैर्निजयोनिकर्मभिर्भवंति काले न भवंति सर्वशः ॥ न तत्र हात्मा प्रकृतावपि स्थितस्तस्या गुणैरन्यतमो निबध्यते ॥ ४१ ॥
इदं शरीरं पुरुषस्य मोहजं यथा पृथग्भौतिकमीयते गृहम् ॥ यथोदकैः पार्थिवतैजसैर्जनः कालेन जातो विकृतो विनश्यति ॥ ४२ ॥ यथाऽनलो
दारुषु भिन्न ईयते यथाऽनिलो देहगतः पृथक् स्थितः ॥ यथा नभः सर्वगतं न सज्जते तथा पुमान् सर्वगुणाश्रयः परः ॥ ४३ ॥ सुयज्ञो नन्वयं शेते
मूढा यमनुशोचथ ॥ यः श्रोता योऽनुवक्तेह स न दृश्येत कर्हिचित् ॥ ४४ ॥

संहरति च भो अबलास्तस्येशितुश्चराचरं क्रीडासाधनमाहुः अतः स एव निग्रहे संहारे संग्रहे पालने च प्रभुः ॥ ३९ ॥ प्रभुत्वमेवान्वयव्यतिरेकाभ्यां दर्शयति । पथीति,
दिष्टेन दैवेनेश्वरेण रक्षितम् । तेनेश्वरेण विहतमुपेक्षितम् । अस्य हतस्तेनोपेक्षितः ॥ ४० ॥ तदेवमात्मनो जन्ममरणादिकमंगीकृत्येश्वराधीनत्वान्न शोकः कार्य इत्युक्त
मिदानीं तु देहानामेव जन्मादि न त्वात्मन इत्याह । भूतानीति त्रिभिः । भूतानि देहाः निजयोनिः स्वकारणभूतं लिंगशरीरं तन्निमित्तैः कर्मभिर्भवंति जायंते न भवंति
नश्यंति च सर्वशो देवादिदेहा अपि तत्र ह तदा प्रकृतौ दहे स्थितोऽप्यात्मा तस्याः प्रकृतेर्गुणैर्देहधर्मैर्जन्मादिभिर्न निबध्यते न युज्यते यतोऽन्यतमो देहादत्यंतविलक्षणः
॥ ४१ ॥ नन्वहं कृशः स्थूल इत्यादौ वैलक्षण्यं न प्रतीयते तत्राह ॥ इदमिति । इदं शरीरं मोहजमविवेकादात्मत्वेन जातं वस्तुतस्तु पृथगेव यत ईयते दृश्यते भौतिकं
च यथा गृहमित्यन्वयः । अत्रैवं प्रयोगः द्रष्टुरभौतिकाच्च पुरुषाच्छरीरं भिन्नम् । दृश्यत्वाद्भौतिकत्वाच्च यथाऽत्यंताविवेकिनः आत्मत्वेनाभिमतमपि गृहं ततः पृथक् तद्वत्
इति । भौतिकत्वानुमानं विवृण्वन्नात्मनो जन्माद्यभावमुपसंहरति । यथा औदकैः परमाणुभिर्जातो बुद्बुदादिर्यथाच पार्थिवैर्जातो घटादिर्यथाच तैजसैर्जातः कुंडलादिर्विनश्यति
तथा तैरेव त्रिविधैः परमाणुभिर्जातो जनो देह एव विकृतः परिणतः सन्विनश्यति न त्वात्मेत्यर्थः ॥ ४२ ॥ पृथगवस्थानाभावेऽपि भिन्नत्वे दृष्टांतद्वयमाह । यथेति ।
यथाऽनलो दारुष्वेव स्थितोऽपि दाहकत्वेन प्रकाशकत्वेन भिन्न एव प्रतीयते तथा च देहगतोऽप्यनिलो मुखनासिकादिषु पृथक्स्थित एव प्रतीयते । देहस्थत्वेऽ
प्यात्मनस्तद्धर्मयोगाभावे दृष्टांतमाह । यथा नभो न सज्जते क्वापि संगं न प्राप्नोति तथा पुमानपि सर्वेषां गुणानां देहेंद्रियादीनामाश्रयस्तेष्वाश्रितो वा परः पृथगेवेत्यर्थः
॥ ४२ ॥ किं च हे मूढा यमनुशोचथ सोऽयं युष्मद्भर्ता सुयज्ञः शेते किमिति शोचथ । नन्वेतावंतं कालमसौ शृणोत्यनंतरं प्रतिवक्ति च । इदानीं तस्यादर्शनान्मृत इति

अकारवाच्यो हरिरेव बलं येषां तेऽबला विज्ञा इत्यर्थः ॥ ३९ ॥ ईश्वररक्षितमेवान्येन रक्ष्यते तद्धतमेवान्येन हन्यते इति भावः ॥ ४० ॥ ननु तर्हि तस्मिन्नीश्वरे वैषम्यं प्रसक्तं कस्याप्यपेक्षणात्कस्याप्युपेक्षणादिति तत्राह—भूतानि
मनुष्यपश्वादिदेहाः निजनिजयोनिकारणीभूतैः कर्मभिस्तैस्तैरनेन कर्मणा गौर्भवत्यनेन कर्मणा पुरुषो भवत्येवं शास्त्रप्रसिद्धैर्भवंति उत्पद्यंते न भवंति काले नश्यंति च सर्वशः सर्वाण्येव । आत्मा परमात्माऽन्यतमः पृथग्भूत
एवातस्तस्या गुणैर्न निबध्यते केवलं तत्तत्कृतशुभाशुभफलं स्वसन्निधानमात्रेण जीवयतीत्येतदेव तस्यापेक्षणमुपेक्षणं चेति भावः ॥ ४१ ॥ अत्राशंकते नन्विति । अत्र भिन्नत्वे प्रयोगोऽनुमानम् । इत्यर्थ इति ।
आत्मनो द्रष्टृत्वादिना भिन्नत्वान्न जन्ममरणादीति भावः ॥ ४२ ॥ इत्यर्थ इति । अतः परमेश्वरेणोपेक्षितमिमं पतिं स्वकर्मवशान्मृतं कथं नो रक्षध्वे इति भावः ॥ ४३ ॥ नन्वयं राजा संग्रामलब्धपराजयः संप्रति

न श्रोता नानुवक्ताऽयं मुख्योऽप्यत्र महानसुः ॥ यस्त्विहेंद्रियवानात्मा स चान्यः प्राणदेहयोः ॥४५॥ भूतेंद्रियमनोलिंगान् देहानुच्चावचान्विभुः ॥ भजत्युत्सृजति ह्यन्यस्तच्चापि स्वेन तेजसा ॥४६॥ यावल्लिंगान्वितो ह्यात्मा तावत्कर्मनिबंधनम् ॥ ततो विपर्ययः क्लेशो मायायोगोऽनुवर्तते ॥ ॥ ४७ ॥ वितथाभिनिवेशोऽयं यद्गुणेष्वर्थदृग् वचः ॥ यथा मनोरथः स्वप्नः सर्वमैंद्रियकं मृषा ॥ ४८ ॥ अथ नित्यमनित्यं वा नेह शोचंति तद्विदः ॥ नान्यथा शक्यते कर्तुं स्वभावः शोचतामिति ॥ ४९ ॥

शोचामेति चेत्स तु शोच्यो न भवति प्रागपि तस्यादर्शनादित्याह।यः श्रोतेति॥ ४४ ॥ ननु मुखनासिकासंचारी प्राणः श्रोता वक्ता च दृष्ट एवेति चेन्नासौ श्रोता वक्ता वाऽचेतनत्वादित्याह । न श्रोतेति । महान्सर्वेन्द्रियचेष्टाहेतुः । अत एव मुख्यः " प्राणो वै मुख्यः "इति श्रुतेः । कस्तर्हि श्रोता वक्ता च तत्राह । यस्त्विह देहेंद्रियैस्तत्तदर्थद्रष्टा आत्मा स तु प्राणदेहाभ्यामचेतनाभ्यामन्य एव सचेतनः ॥४५॥ ननु चेतनत्वेऽन्यत्वे च तस्याहं कृशः स्थूलः काणो बधिर इत्यादिदेहधर्मोपलब्धिः कुतस्तत्राह । भूतेंद्रियमनोभिर्लिंग्यंते लक्ष्यंत इति तथा तान्देहांस्तेभ्योऽन्य एव भजत्यहमिति मन्यते । तर्हि कथं मोक्षस्तत्राह । तच्च भजनं स्वेन तेजसा विवेकबलेनोत्सृजत्यपीत्यनुभवं प्रमाणयति ॥४६॥ ननु विवेकानंतरमप्याहारादिकर्मसु प्रवृत्तेर्बंधः स्यादेवेत्यत आह । यावदिति । यावल्लिंगशरीरेणान्वितस्तदभिमानवानात्मा भवति तावदेव तस्य तत्कर्मनिबंधनं बंधहेतुर्भवति ततो विपर्ययो देहधर्मभाक्त्वं ततः क्लेशश्चानुवर्तते न तु लिंगाभिमाने निवृत्तेऽपि यतोऽयं मायायोगो विपर्ययादिः । मायया युज्यत इति तथा । न परमार्थ इत्यर्थः॥४७॥ननु सुखदुःखादीनां तत्साधनानां च सत्यत्वप्रतीतेः कुतो मायामयत्वम् । तथा च बहवो वादिनः सत्यत्वमेव वदंति तत्राह । वितथेति । वितथो मिथ्याभूतोऽयमभिनिवेशः कोऽसौ गुणेषु तत्कार्येषु सुखदुःखादिष्वर्थः । परमार्थ इति दृग्वचश्चेति यत् स कुत इत्यत आह यथेति ॥४८॥ उपसंहरति । अथेति । अथ तस्मात् नित्यमात्मानमनित्यं देहं वा तद्विदो नित्यमनित्यं च जानंतो न शोचंति । नन्वेवमुपदेष्टारोऽपि शोचंतो दृश्यंते तत्राह । नान्यथेति ।

शेते कथमिममुपेक्ष्य निःस्नेहा भवितुं शक्नुमस्तत्राह—सुयज्ञ इति । कर्हिचित् प्रागपि स दृश्यो नासीदेवेत्यर्थः । यस्तु दृश्यः स इदानीमपि दृश्यते देह इति भावः । हे मूढा इति । मौढ्यादेव भवतीनां शोक इति भावः॥ ४४ ॥ पुनराक्षिपंति— नन्विति । यावत्प्राणः स्थितस्तावदेव श्रोतृत्ववक्तृत्वे दृष्टे प्राणे गते सति तु न ते दृष्टे अतः प्राण एव श्रोता वक्तेति चेदाह । आसौ प्राणोऽचेतनत्वाच्छ्रोता वक्ता वा नेत्यर्थः ॥ ४५ ॥ अत्राक्षिपंति—नन्विति । देहान्स्थूलसूक्ष्मान् । अत्र विश्वनाथस्तु—स तर्हि कुत्र गत्वा किं करोतीति तत्राह भूतं प्राप्तमिन्द्रियमनोरूपं लिंगं सूक्ष्मदेहो येषु तान्स्थूलदेहान् भजति प्राप्नोति त्यजति च प्रथमं देहं प्राप्तोदृत्सृजदिति भावः । किंच स्वेन भाग्यलब्धज्ञानबलेन । तच्चापि लिंगदेहमपि कदाचिदुत्सृजतीत्याह ॥ ४६ ॥ पुनराक्षिपंति—नन्विति । ततः कर्मबंधात् । ततो देहधर्मभाक्तत्वात् । इत्यर्थ इति । मायिकस्यापरमार्थत्वादिति भावः ॥ ४७ ॥ पुनराक्षिपंति—नन्विति। वादिनो मीमांसकादयः तस्माद्यूयमपि कर्मबन्धमोक्षायैव यतध्वं न तु कर्मफलाय स्वर्गाय वैषयिकसुखादेरस्थिरत्वेन स्वप्नतुल्यत्वादित्याह वितथो व्यर्थ एवाभिनिवेशोऽयं कोऽसौ यद्गुणेषु गुणकार्येषु सुखादिषु अर्थो वास्तव इति।श्रूयते च"अपाम सोमममृता अभूम अप्सरोभिर्विहरिष्यामः"इत्यादिकम्। यथेति।मनोरथोपनीतस्य धनपुत्रादिलाभानंदस्य स्वप्ने स्त्रीसंभोगादिसुखस्य च तुल्यत्वादित्यर्थः । ऐंद्रियिकमिंद्रियग्राह्यं जगदिदं सर्वं मृषा मिथ्यैव सर्वं वाक्यं सावधारणमिति न्यायादेवकारसंबंधः॥ ४८॥नित्यं मीमांसकानां मतेऽनित्यं वेदांतिनां मतेऽत्राक्षिपंति—नन्विति।इत्यर्थ इति । अदृढज्ञानिनामेव शोको न तु तद्दार्ढ्यवतामिति भावः ४९

लुब्धको विपिने कश्चित् पक्षिणां निर्मितोंतकः ॥ वितत्य जालं विदधे तत्रतत्र प्रलोभयन् ॥ ५० ॥ कुलिंगमिथुनं तत्र विचरत् समदृश्यत ॥ तयोः कुलिंगी सहसा लुब्धकेन प्रलोभिता ॥ ५१ ॥ सासज्जत शिचस्तंत्यां महिष्यः कालयंत्रिता ॥ कुलिंगस्तां तथापन्नां निरीक्ष्य भृशदुःखितः ॥ स्नेहादकल्पः कृपणः कृपणां पर्यदेवयत् ॥ ५२ ॥ अहो अकरुणो देवः स्त्रियाकरुणया विभुः ॥ कृपणं माऽनुशोचंत्या दीनया किं करिष्यति ॥ ५३ ॥ कामं नयतु मां देवः किमर्धेनात्मनो हि मे ॥ दीनेन जीवता दुःखमनेन विधुरायुषा ॥ ५४ ॥ कथं त्वजातपक्षांस्तान् मातृहीनान् बिभर्म्यहम् ॥ मंदभाग्याः प्रतीक्षंते नीडे मे मातरं प्रजाः ॥ ५५ ॥ एवं कुलिंगं विलपंतमारात् प्रियावियोगातुरमश्रुकंठम् ॥ स एव तं शाकुनिकः शरेण विव्याध कालप्रहितो विलीनः ॥५६॥ एवं यूयमपश्यंत्य आत्मापायमबुद्धयः ॥ नैनं प्राप्स्यथ शोचंत्यः पतिं वर्षशतैरपि ॥ ५७ ॥

ज्ञानदार्ढ्याभावात्स्वभावो न निवर्तत इत्यर्थः ॥ ४९ ॥ स्वयं सधर्मा अपीति यदुक्तं तत्रेतिहासमाह लुब्धक इत्यादिना । पक्षिणामंतक ईश्वरेण निर्मितः सन्यत्रयत्र ते तत्रतत्र तान्कणादिभिः प्रलोभयन् जालं विस्तार्य विशेषेण धृतवान् । पाठांतरे तेषामामिषादिभिः प्रलोभनं कृतवानित्यर्थः ॥ ५० ॥ कुलिंगः कंदभक्षी पक्षिविशेषः । कुलिंगयोर्मिथुनम् ॥ ५१ ॥ शिचस्तंत्यां जालस्य सूत्रेऽसज्जत बंधं प्राप तामापन्नामापदं प्राप्तां दृष्ट्वा कुलिंगः पक्षी तां मोचयितुमकल्पः सन्पर्यदेवयद्वृक्षशाखामाश्रित्य विलापं चकार ॥ ५२ ॥ आकरुणया सर्वतोऽनुकंप्यया स्त्रिया किं करिष्यति ॥ ५३ ॥ आत्मनो देहस्यार्धेन । अनेन विधुरायुषा भार्याशून्यजीवितेन दुःखं यथा भवत्येवं जीवता किं मे प्रयोजनम् । अतो मामपि कामं नयत्वित्यन्वयः ॥ ५४ ॥ न जाताः पक्षा येषां तान्बालकान्कथं बिभर्मि पुष्यामि । मंदभाग्या मे प्रजा मातरं प्रतीक्षंते ॥ ५५ ॥ शाकुनिकः पक्षिहंता विलीनः सन् ॥ ५६ ॥ आत्मापायं स्वमृत्युम् ॥ ५७ ॥

विपिने वने पाठांतरे 'तत्रतत्र प्रलोभनम्' इति पाठे । इत्यर्थ इति । 'विपूर्वो धा करोत्यर्थे' इत्युक्तेरिति भावः । तत्रतत्र वनदेशेषु ॥५०॥ तत्र विपिने । तयोः कुलिंगीकुलिंगयोर्मध्येऽन्नविकरणादिना ॥ ५१ ॥ हे महिष्य इति । महिषीवदज्ञा यूयमहो राजभार्या भूत्वापीति भावः। महिषी कुलिंगभार्येति तीर्थः । 'कृताभिषेका महिषी' इति कोशाद्राजभार्यास्वेव महिषीपदप्रयोगो युक्तः । किञ्च–कुलिंगस्य पक्षिणामधीशत्वेपि पक्षिराजत्वं गरुडस्यैव प्रसिद्धं युक्तं च 'वैनतेयः खगेश्वरः ' इति कोशात् । अन्यथा गर्दभ्यादीनामपि तथात्वं स्यादिति । पर्यदेवयत् अशोचत् ॥ ५२ ॥ देवो विधाता । "ओत्" इति प्रकृतिभावः । " अहो आहो उताहो च हंहो नो हो अथो इमे । भोस्सहितास्तथौदंता निपाता अष्टधा मताः ॥" इति वैयाकरणवृद्धाः । वा-करुणया मयि कृपावत्या दीनया क्षीणया मद्वियोगेनेति शेषः । दीङ्–क्षये॥५३॥ "भार्याहीनेऽपि विधुरो राही च विकलेऽनृजौ" इति निरुक्तिः । अतो जीवनप्रयोजनाभावात् ॥ ५४ ॥ नीडे स्वस्थाने ' नीडं स्थानकुलाययोः ' इति मेदिनी ॥ ५५ ॥ कुलिंगं दीर्घतुंडम् " दार्वाघाटो दारुकुट्टः कुलिंगो दीर्घतुंडकः " इत्यभिधानात् । निलीनो वृक्षमूले

हिरण्यकशिपुरुवाच ॥ बाल एवं प्रवदति सर्वे विस्मितचेतसः ॥ ज्ञातयो मेनिरे सर्वमनित्यमयथोत्थितम् ॥ ५८ ॥ यम एतदुपाख्याय तत्रैवांतरधी यत ॥ ज्ञातयोऽपि सुयज्ञस्य चक्रुर्यत् सांपरायिकम् ॥ ५९ ॥ ततः शोचत मा यूयं परं चात्मानमेव च ॥ क आत्मा कः परो वाऽत्र स्वीयः पारक्य एव वा ॥ स्वपराभिनिवेशेन विना ज्ञानेन देहिनाम् ॥ ६० ॥ नारद उवाच ॥ इति दैत्यपतेर्वाक्यं दितिराकर्ण्य सस्नुषा ॥ पुत्रशोकं क्षणात् त्यक्त्वा तत्त्वे चित्तमधारयत् ॥ ६१ ॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे कुलिंगकथनेन दितिशोकापनयनं नाम द्वितीयोऽध्यायः ॥ २ ॥ नारद उवाच ॥ हिरण्यकशिपू राजन्नजेयमजरामरम् ॥ आत्मानमप्रतिद्वंद्वमेकराजं व्यधित्सत ॥ १ ॥ स तेपे मंदरद्रोण्यां तपः परमदारुणम् ॥ ऊर्ध्वबाहुर्नभोदृष्टिः पादांगुष्ठाश्रितावनिः ॥२॥ जटादीधितिभी रेजे संवर्तार्क इवांशुभिः ॥ तस्मिंस्तपस्तप्यमाने देवाः स्थानानि भेजिरे ॥ ३ ॥ तस्य मूर्ध्नः समुद्भूतः सधूमोऽग्निस्तपोमयः ॥ तिर्यगूर्ध्वमधो लोकानतपद् विष्वगीरितः ॥४॥ चुक्षुभुर्नद्युदन्वंतः सद्वीपाद्रिश्चचाल भूः ॥ निपेतुः सग्रहास्तारा जज्वलुश्च दिशो दश ॥५॥ तेन तप्ता दिवं त्यक्त्वा ब्रह्मलोकं ययुः सुराः ॥ धात्रे विज्ञापयामासुर्देवदेव जगत्पते॥६॥ दैत्येंद्रतपसा तप्ता दिवि स्थातुं न शक्नुमः ॥ तस्य चोपशमं भूमन् विधेहि यदि मन्यसे ॥ लोका न यावन्नंक्ष्यंति बलिहारास्तवाभिभूः ॥७॥

अयथोत्थितं मिथ्यैवाविर्भूतम् ॥ ५८ ॥ सांपरायिकं परलोककृत्यम् ॥ ५९ ॥ अशोचतेति पाठेऽडागम आर्षः । स्वः पर इत्यभिनिवेश एवाज्ञानं तेन विना ॥ ६० ॥ सस्नुषा स्नुषासहिता ॥ ६१ ॥ इति सप्तमे टीकायां द्वितीयोऽध्यायः ॥ २ ॥ तृतीये तस्य तपसा तप्तं वीक्ष्य जगद्विधिः ॥ आगत्य विस्मितस्तेन संस्तुतश्च वरानदात् ॥ १ ॥ तदेवं साधूनां कदने दानवानादिश्य बंधूनां शोकं तत्त्वनिरूपणेनापनीय यत्कृतवांस्तदाह । हिरण्यकशिपुरित्यादिना। अप्रतिद्वंद्वं प्रतिपक्षहीनमेकराजमेकमेव राजानं व्यधित्सत कर्तुमैच्छत् ॥ १ ॥ ऊर्ध्वौ बाहू यस्य। नभसि दृष्टिर्यस्य। पादांगुष्ठेनाश्रिताऽवनिर्येन ॥ २ ॥ जटानां दीधितिभिः कांतिभिः अंशुभी रश्मिभिः प्रलयकर्ताऽर्क इव रेजे। पूर्वं येऽलक्षिताः संतो भुवि चेरुस्ते देवाः पुनः स्वानि स्थानानि भेजिरे ॥ ३ ॥ विष्वगीरितः सर्वतः प्रसृतः सन् ॥ ४ ॥ द्वीपैरद्रिभिश्च सहिता भूश्चलिता ॥ ५ ॥ ६ ॥ तव बलिहाराः करप्रदाः पूजाकारिण

छन्नः ॥ ५६ ॥ ५७ ॥ अयथोत्थितं येन प्रकारेणोत्थितं तथा न तिष्ठतीत्यर्थो वा ॥ ५८ ॥ यत्राविर्भूतस्तत्रैवेत्यर्थः ॥ ५९ ॥ यतः सर्वं दृश्यमनित्यमात्मा नित्यश्च ततो हेतोः । अशोचतेति । ततोऽशोचतेति पाठे यद्वा—अ इति संबोधनेऽव्ययं हे मात्रादय इत्यर्थः ॥ ६० ॥ इतीत्थम् । स्नुषया रुषाभान्वा ॥ ६१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ तस्य हिरण्यकशिपोः ( १ ) हे राजन्निति । राज्ञामेष स्वभाव एव यदहमेव सर्वेश्वरो भवामीति भावः । आत्मानं स्व एक एव राजत इत्येकराजस्तं वक्ष्यमाणाभिप्रायेण ब्रह्मलोकपर्यंतं स्वस्यैवैकाधिपत्यं कामयमानोऽभूदित्यर्थः ॥ १ ॥ अत एव स तेप इति ॥ २ ॥ स्थानानि स्वस्वगृहान् । शत्रोस्तस्य शात्रवमनालक्ष्येत्यर्थः ॥ ३ ॥ ४ ॥ ५ ॥ तेन दैत्यतपसा देवदेवत्वाज्जगत्पतित्वाच्च त्वमेव प्रार्थनीय इति भावः ॥ ६ ॥ तस्य तपस

तस्यायं किल संकल्पश्चरतो दुश्चरं तपः ॥ श्रूयतां कि न विदितस्तवाथापि निवेदितः॥८॥ सृष्ट्वा चरा चरमिदं तपोयोगसमाधिना ॥ अध्यास्ते सर्वधिष्ण्येभ्यः परमेष्ठी निजासनम् ॥ ९ ॥ तदहं वर्धमानेन तपोयोगसमाधिना ॥ कालात्मनोश्च नित्यत्वात्साधयिष्ये तथात्मनः ॥ १० ॥ अन्यथेदं विधास्येऽहमयथापूर्वमोजसा ॥ किमन्यैः कालनिर्धूतैः कल्पांते वैष्णवादिभिः ॥ ११ ॥ इति शुश्रुम निर्बंधं तपः परममास्थितः ॥ विधत्स्वानंतरं युक्तं स्वयं त्रिभुवनेश्वर ॥ १२ ॥ तवासनं द्विजगवां पारमेष्ठ्यं जगत्पते ॥ भवाय श्रेयसे भूत्यै क्षेमाय विजयाय च ॥ १३ ॥

इति वा । अभितो भवतीत्यभिभूः हे अभिभूर्हे सर्वाधिपते । पाठांतरे भो इति संबोधनम् । अभितो यावन्न नंक्ष्यंतीति संबंधः ॥ ७ ॥ ब्रह्मणस्तस्मिन्द्वेषमुत्पादयितुं तत्सं कल्पमाहुस्तस्येति चतुर्भिः । तस्य संकल्पस्तव किं न विदितोऽथाप्यस्माभिर्निवेदितस्त्वया श्रूयताम् ॥ ८ ॥ तपोयोगयोः समाधिना निष्ठया सर्वधिष्ण्येभ्यः श्रेष्ठं निजासनं सत्यलोकं यथाऽध्यास्तेऽधितिष्ठति ॥ ९ ॥ तत्तथैवात्मनः साधयिष्यामि । ननु ब्रह्मणाऽतिदीर्घायुषा तपस्तप्त्वा तत्साधितमन्यः कुतस्तत्साधयेत्तत्राहुः । कालात्मनोरिति । यद्यप्यायुषोऽल्पत्वेन देहो वारं वारं म्रियेत तथाऽपि कालस्यात्मनश्च नित्यत्वाद्बहुभिर्जन्मभिस्तपस्तप्त्वा तत्पदं साधयिष्याम्येवेति ॥ १० ॥ वर्धमानेनेति यदुक्तं तदभिप्रायमाह अन्यथेति । अन्यथा सुरासुरादिव्यत्ययेन अयथापूर्वं पुण्यपापादिव्यत्ययेन इदं जगद्विधास्यामि । अन्यैर्वैष्णवादिभिर्ध्रुवादिपदैः किं प्रयोजनमतस्तदेव साधयिष्यामि ॥ ११ ॥ इति त्वत्पदापहरणे तस्य निर्बंधं शुश्रुम। अत एवासौ तपः परममास्थितो वर्तते यदत्र युक्तं तदनंतरमेव विधत्स्व॥ १२ ॥ अन्यथा तव स्थानभ्रंशे सति साधूनामनिष्टं स्यादिति

उपशमं परिहारमित्यर्थः । हे भूमन्निति । यद्यस्मत्संप्रार्थितं न करोषि तर्हि स एव भूमा भविष्यतीति भावः । ' बलिः पूजोपहारयोः ' इति कोशादर्थांतरमाह—पूजेत्यादि । अभितो भवतीत्यभिभूः । ( क्विबंतत्वेन धातुत्वान पायात् संबुद्धौ ह्रस्वाभावो घेर्लोपाभावश्च ) हे अभिभूः । पाठांतरे ' तवाभिभोः ' इत्येवं पाठे ॥ ७ ॥ यद्यपि तव विदितमथापि तथापीत्यर्थः । निवेदितं यथा स्यात्तथा । यद्वा—निवेदितं वाक्यम् । तीर्थस्तु—निवेद्यत इति पपाठ ॥ ८ ॥ परमेष्ठी ब्रह्मा ॥ ९ ॥ वर्द्धमानेनेति । सांप्रतिकात्परमेष्ठितो मम प्रभावोऽधिको भविष्यतीति भावः । अत्राक्षिपति—नन्विति । तत्पदं पारमेष्ठ्यासनम् ॥ १० ॥ सुरासुरादिव्यत्ययं सुराणां यज्ञादिभागानसुरेभ्यो दास्यामि असुराणां मद्यादिपानं सुरेभ्यश्चेति विपर्ययेण पुण्यपापादिव्यत्ययं पुण्यकर्मिणां नरकादिदुःखं तद्विपरीतानां स्वर्गादिसुखं च दास्यामीत्यर्थः । अत्र विश्वनाथः—ब्रह्मचर्यतपोव्रतादिभिर्ये इह लोके दुःखिनस्ते परलोकेऽपि नरकभाजो दुःखिन एव कर्त्तव्याः।ये इह लोके वैषयिकसुखभोगमात्रनिरतास्त एव परलोके स्वर्गिणः वैषयिकसुखभोगोन्मुख्यमेव पुण्यमिष्टामिष्टसाधनं च । तत्संकोच एव पापमनिष्टसाधनामित्यादिकं प्रवर्त्तनीयम् । नन्वेवं पूर्वपूर्वमहाकल्पेषु न प्रवृत्तं तत्राह—अयथापूर्वमप्योजसा स्वतेजसा विधास्ये । ननु स्वेन सिषाधयिषितं परमेष्ठ्यासनमेव किं सर्वधिष्ण्येभ्यः श्रेष्ठं मन्यसे तत्राह—किमन्यैरिति । वैष्णवादिभिर्ध्रुवादिपदैः किं प्रयोजनं कालनिर्धूतैरिति ध्रुवपदस्यानित्यत्वमननमसुरस्वभावत्वादेवेति भावः ॥ ११ ॥ अत एव त्वत्पदाहरणसंकल्पादेव । "निर्बंधो बंधनिर्मुक्तौ हठे ज्ञानिनि केशवे" इति निरुक्तिः । त्रिभुवनेश्वरेत्युपलक्षणम् । यद्वा—त्रयाणां ब्रह्मविष्णुरुद्राणां भुवनानि यत्र तत्त्रिभुवनं ब्रह्मलोकस्यैव शिवलोकवैकुंठलोकौ प्रदेशविशेषाविति पुराणांतरादवसेयम् । अधुना स्वयं त्रिभुवनेश्वरोऽप्यस्योपेक्षणेऽयमेव स स्यादिति भावः ॥ १२ ॥ अन्यथाऽस्य प्रति क्रियायां अभावे । भवाय कीदृशाय श्रेयसे उत्तमसृष्ट्यर्थमित्यर्थः । सचेदिदं प्राप्स्यति तदा विरुद्धं स्रक्ष्यतीति भावः । भूत्यै सृष्टानां लोकानां धर्मादिसंपत्त्यै तदधिकारे त्वधर्म्मैर्विपत्तिर्भाविनीति भावः । क्षेमाय कल्या

इति विज्ञापितो देवैर्भगवानात्मभूर्नृप ॥ परीतो भृगुदक्षाद्यैर्ययौ दैत्येश्वराश्रमम् ॥ १४॥ न ददर्श प्रतिच्छन्नं वल्मीकतृणकीचकैः ॥ पिपीलिकाभिराचीर्णं मेदस्त्वङ्मांसशोणितम् ॥१५॥ तपंतं तपसा लोकान् यथाऽभ्रापिहितं रविम् ॥ विलक्ष्य विस्मितः प्राह प्रहसन् हंसवाहनः ॥१६॥ ब्रह्मोवाच ॥ उत्तिष्ठोत्तिष्ठ भद्रं ते तपःसिद्धोऽसि काश्यप ॥ वरदोऽहमनुप्राप्तो व्रियतामीप्सितो वरः ॥ १७ ॥ अद्राक्षमहमेतत्ते हृत्सारं महदद्भुतम् ॥ दंशभक्षितदेहस्य प्राणा ह्यस्थिषु शेरते ॥ १८ ॥ नैतत् पूर्वर्षयश्चक्रुर्न करिष्यंति चापरे ॥ निरंबुर्धारयेत्प्राणान् को वै दिव्यसमाः शतम् ॥ ॥ १९ ॥ व्यवसायेन तेऽनेन दुष्करेण मनस्विनाम् ॥ तपोनिष्ठेन भवता जितोऽहं दितिनंदन ॥ २० ॥ ततस्त आशिषः सर्वा ददाम्यसुरपुंगव ॥ मर्त्यस्य ते ह्यमर्त्यस्य दर्शनं नाफलं मम ॥ २१ ॥ नारद उवाच ॥ इत्युक्त्वाऽऽदिभवो देवो भक्षितांगं पिपीलिकैः ॥ कमंडलुजलेनौक्षद्दिव्येनामोघराधसा ॥ २२ ॥ स तत्कीचकवल्मीकात् सहओजोबलान्वितः ॥ सर्वावयवसंपन्नो वज्रसंहननो युवा ॥ २३ ॥ उत्थितस्तप्तहेमाभो विभावसुरिवैधसः ॥ स निरीक्ष्यांबरे देवं हंसवाहमवस्थितम् ॥ २४ ॥

शोचंत आहुः।तव पारमेष्ठ्यमिदमासनम्। द्विजानां गवां च । भवायोद्भवाय।श्रेयसे सुखाय।भूत्यै ऐश्वर्याय । क्षेमाय लब्धपालनाय । विजयायोत्कर्षाय ॥ १३ ॥ १४ ॥ वल्मीकादिभिः प्रतिच्छन्नं प्रथमं न ददर्श।पश्चात्कथंचिद्विलक्ष्य तं प्राहेति द्वयोरन्वयः।पिपीलिकाभिराचीर्णं समंताद्भक्षितं मेदश्च त्वक्च मांसं च शोणितं च यस्य ॥१५॥ अभ्रैरपि तं छन्नं रविमिव विलक्ष्य विस्मितः प्राह ॥ १६ ॥ १७ ॥ हृत्सारं धैर्यम् । दंशैर्मक्षिकादिविशेषैर्भक्षितो देहो यस्य ॥१८॥ निरंबुर्निषिद्धमंबु येन सः । त्यक्तोदक इत्यर्थः ॥१९॥ ते त्वयाऽनेन व्यवसायेनैव तावज्जितोऽहम् । तपोनिष्ठेन भवता तु सुतरां जितः ॥२०॥ मर्त्यस्य तवामर्त्यस्य मम दर्शनमफलं निष्फलं न भवति ॥ २१ ॥ आदौ भवतीत्यादिभवो ब्रह्मा । औक्षत्प्रोक्षितवान् ॥ २२ ॥ वज्रवत्संहननमंगदार्ढ्यं यस्य । तप्तस्य हेम्न इवाभा देहकांतिर्यस्य ॥ २३ ॥ तस्य दर्शनेन महा

णाय । विजयायोत्कर्षाय । तदधिकारे त्वकल्याणपराजयावेव भाविनाविति भावः । जगत्पते इति । तवैव जगत्पतित्वं शोभनं प्रतिभाति न तु तस्येति भावः ॥१३॥ हे नृपेति । नृपो यथा स्वपदवैकल्यकर्तृवारणे प्रयतते तथा सोऽपीति भावः । आदिना मरीच्यादिग्रहः । ययाविति । तर्ह्यधुनैव वरदानेन तं तपसो निवर्त्तयामीत्याशयेन ॥ १४ ॥ पिपीलिकाभिः पिपीलिकादंशादिभिः । मेदश्चर्मांतर्गतः सारः । पिपीलिकाः सूक्ष्मकीटाः ॥ १५ ॥ ॥ अयोग्यहठात्प्रहसन् ॥ १६ ॥ हे काश्यपेति । स्वप्रपौत्रत्वात्तेऽभीप्सितं दातुमागतोऽस्मीति भावः ॥ १७ ॥ १८ ॥ इत्यर्थ इति । अहो अद्भुतं ते तप इति भावः ॥ १९ ॥ हे दितिनंदनेति । रजस्तमःप्रकृतित्वेन वरानर्हस्यापि ''वरः क्रूरनिसर्गाणामहीनाममृतं यथा'' इति भगवता वक्ष्यमाणत्वेन तव वरं दास्यामेवेति भावः । अत्र हेतुः—व्यवसायेनेत्यादि ॥ २० ॥ यतस्तपसाऽहं जितस्ततो हेतोः । हे असुरपुंगवेति । असून् इंद्रियाणि रांति गृह्णंति स्वाधीनानि कुर्वंतीत्यसुरास्तपस्विनस्तेषु श्रेष्ठोऽस्यत एव सर्वा आशिषो ददामीति भावः । 'इंद्रियाण्यसवः प्राणाः' इत्यमरः । ''पुंगवः स्याद्बलीवर्दे प्रभेदे्प्यौषधस्य च । उत्तरस्थः स्मृतः श्रेष्ठे'' इति मेदिनी । असुरत्वेऽपि मरणधर्मवत्त्वान्मर्त्यस्येत्यर्थः ॥ २१ ॥ पिपीलिकैरिति । दंशभक्षितत्वं पूर्वं पिपीलिकाभक्षितत्वं पश्चादिति ज्ञेयम् । अमोघमव्यर्थं राधः सिद्धिर्यतस्तेन यद्वादेः श्रीहरेः सकाशाद्भवो जन्म यस्य स तथा । दिव्येनालौकिकेन ''दिव्यं लवंगे धात्र्यां स्त्री वल्गी दितिभवे त्रिषु । अलौकिकेऽपि'' इति कोशात् ॥ २२ ॥ स दैत्यः राधसः काष्ठात् ॥ २३ ॥ २४ ॥

ननाम शिरसा भूमौ तद्दर्शनमहोत्सवः ॥ उत्थाय प्रांजलिः प्रह्व ईक्षमाणो दृशा विभुम् ॥ हर्षाश्रुपुलकोद्भेदो गिरा गद्गदयाऽगृणात् ॥ २५ ॥
हिरण्यकशिपुरुवाच ॥ कल्पांते कालसृष्टेन योंऽधेन तमसा वृतम् ॥ अभिव्यनग् जगदिदं स्वयंज्योतिः स्वरोचिषा ॥ २६ ॥ आत्मना त्रिवृता
चेदं सृजत्यवति लुंपति ॥ रजःसत्त्वतमोधाम्ने पराय महते नमः ॥ २७ ॥ नम आद्याय बीजाय ज्ञानविज्ञानमूर्तये ॥ प्राणेंद्रियमनोबुद्धिविकारै
र्व्यक्तिमीयुषे ॥ २८ ॥ त्वमीशिषे जगतस्तस्थुषश्च प्राणेन मुख्येन पतिः प्रजानाम् ॥ चित्तस्य चित्तेर्मनइंद्रियाणां पतिर्महान्भूतगुणाशयेशः ॥
॥ २९ ॥ त्वं सप्ततंतून्वितनोषि तन्वा त्रय्या चातुर्होत्रकविद्यया च ॥ त्वमेक आत्मात्मवतामनादिरनंतपारः कविरंतरात्मा ॥ ३० ॥

नुत्सवो यस्य ॥ २४ ॥ हर्षेणाश्रूणि पुलकोद्भेदश्च यस्य सः ॥ २५ ॥ अंधेन निबिडेन । तत्र हेतुः कालसृष्टेन प्रकृतिगुणरूपेण न तु ध्वांतेन । तमसाऽऽवृतमिदं जगद्योऽभिव्यनगभिव्य
क्तमकरोद्यश्च त्रिगुणेनात्मनेदं जगत्सृजत्यवति पालयति लुंपति संहरति च तस्मै रजःसत्त्वतमसां धाम्ने आश्रयाय महते पराय परमेश्वराय नम इति द्वयोरन्वयः ॥ २६ ॥ २७ ॥
अत्र च स्वप्रकाशत्वं जगत्प्रकाशकत्वं तत्कारणत्वं तत्सृष्ट्यादिकर्तृत्वं महत्त्वं परमेश्वरत्वं चेति षड्विधत्वमुक्तं तदेव प्रपंचयन्नमस्करोति । नम इति चतुर्भिः । बीजाय कार
णाय । तत्र हेतुराद्याय । ज्ञानं ज्ञप्तिर्विज्ञानं विषयाकारं ज्ञानं मूर्तिर्यस्य तस्मै । अनेन स्वप्रकाशत्वं जगत्प्रकाशकत्वं च दर्शितम् । बीजायेति निमित्तत्वमुक्तम् । उपादा
नत्वमाह । प्राणादयो ये विकारास्तै रूपैर्व्यक्तिं कार्याकारमीयुषे प्राप्तवते ॥ २८ ॥ एवमात्मना त्रिवृता चेत्यनेनोक्तं कारणत्वं द्वेधा दर्शितम् । महत्त्वमीश्वरत्वं चाह ।
त्वमिति । त्वमेव जगतो जंगमस्य तस्थुषः स्थावरस्य च ईशिषे नियंता भवसि । केन मुख्येन प्राणेन सूत्रात्मरूपेण । अतस्त्वं प्रजानां पतिः तासां चित्तस्य चित्तेश्च
तत्परिणामभूतायाश्चेतनाया मनसश्च तन्नियम्यानामिंद्रियाणां च पतिः । अतस्त्वमेव महान् । भूतानामाकाशादीनां तद्गुणानां शब्दादिविषयाणामाशयानां तद्वासनानामीशश्च
एतेनैव स्रष्टृत्वं दर्शितम् ॥ २९ ॥ इदानीं यज्ञप्रवर्तकत्वेनांतर्यामित्वेन जगत्पालकत्वमाह । त्वमेव सप्ततंतूनग्निष्टोमादियज्ञान्विस्तारयसि । कथम् । त्रय्या तन्वा वेदत्रय
रूपेण । कथंभूतया । चत्वारो होतारो यत्र तच्चातुर्होत्रकं कर्म तद्विषयया विद्यया । आत्मवतां प्राणिनामात्मभूतस्त्वमेवांतरात्मा चांतर्यामी । कुतः । यतः कविः सर्वज्ञः ।

प्रह्वः प्रणतः। पुलकोद्भेदः रोमांचत्वम् "पुलकः कृमिप्रभेदे प्रस्तरभेदे च मणिदोषे । रोमांचे हरिताले गजान्नपिंडे च गंधर्वे" इति मेदिनी । अगृणादस्तौत् ॥ २५ ॥ "अंधः स्यान्निबिडे ध्वान्ते चक्षुर्हीनेऽविवेकिनि" इति
धरणिः ॥ २६ ॥ त्रीन् गुणान्वृणोति स्वीकरोतीति त्रिवृत् तेनात्मना ॥ २७ ॥ अत्र पूर्वोक्तपद्यद्वये । तदेव षड्विधत्वमेव । तत्र कारणत्वे । ज्ञप्तिः सामान्यं ज्ञानम् । अनेनाद्यायेत्यादिविशेषणत्रयेण ॥ २८ ॥ "वायुर्वै
गौतमसूत्रम्" इति श्रुतेर्वाय्वात्मनेत्यर्थः । अतः सूत्रात्मत्वादेव । तासां प्रजानाम् । अतश्चित्तादिपतित्वात् । एतेनैवेशत्वकथनेनैव ॥ २९ ॥ आदिनाऽत्यग्निष्टोमोक्थषोडशिवाजपेयाप्तोर्यामातिरात्राणां ग्रहः । चत्वारो

त्वमेव कालोऽनिमिषो जनानामायुर्लवाद्यावयवैः क्षिणोषि ॥ कूटस्थ आत्मा परमेष्ठ्यजो महांस्त्वं जीवलोकस्य च जीव आत्मा ॥ ३१ ॥ त्वत्तः परं नापरमप्यनेजदेजच्च किंचिद्व्यतिरिक्तमस्ति ॥ विद्याः कलास्ते तनवश्च सर्वा हिरण्यगर्भोऽसि बृहत्त्रिपृष्ठः ॥ ३२ ॥ व्यक्तं विभो स्थूलमिदं शरीरं येनेंद्रियप्राणमनोगुणांस्त्वम् ॥ भुंक्षे स्थितो धामनि पारमेष्ठ्य अव्यक्त आत्मा पुरुषः पुराणः ॥ ३३ ॥ अनंताव्यक्तरूपेण येनेदमखिलं ततम् ॥ चिदचिच्छक्तियुक्ताय तस्मै भगवते नमः ॥ ३४ ॥

तत्कुतः । एकोऽखंडः । तत्र हेतुरनादिरनंतपारश्चेति । नास्त्यंतः कालतः पारश्च देशतो यस्य सः ॥ ३० ॥ कालरूपेण संहर्तृत्वमाह । त्वमेवेति । लवाद्यैः कालावयवैः क्षिणोषि क्षपयसि । तदेव सृष्ट्यादिकर्तृत्वेऽपि निर्विकारत्वमेवाह । कूटस्थ इति । तत्र हेतवः । आत्मा ज्ञानरूपः परमेष्ठी परमेश्वरोऽजो जन्मशून्यो महानपरिच्छिन्नः । किं च जीवलोक एव कर्मपाशाज्जन्मादिभिर्विक्रियते त्वं तु तस्य जीवो जीवनहेतुर्यतस्तस्यात्मा नियंता ॥ ३१ ॥ तत्कुतस्तत्राह । त्वत्त इति । त्वत्तो व्यतिरिक्तं यदि किंचिद्भवेत्तर्हि तस्मात्तव जन्मादिविकारो नियम्यत्वादिकं वा भवेत्तत्तु नास्तीत्याह । परं कारणमपरं कार्यम् । तत्र चैजज्जंगममनेजत्स्थावरं च त्वद्व्यतिरिक्तं नास्ति । ननु मद्बोधकशास्त्रं व्यतिरिक्तमस्तीति चेन्न । यतो विद्या वेदोपवेदादिविद्यास्थानानि कलाश्च तदंगानि तवैव तनवो न तु त्वद्व्यतिरिक्ताः । तत्कुतः । यतस्त्वं बृहद्ब्रह्मैवासि । तदपि कुतस्तत्राह । हिरण्यरूपं ब्रह्मांडं गर्भे यस्य सः त्रिपृष्ठस्त्रिगुणात्मकस्य प्रधानस्य पृष्ठे परतः स्थितः । "अक्षरात्परतः परः" इत्यादिश्रुतेः ॥ ३२ ॥ ननु ब्रह्मांडशरीरस्य जीवस्य मम कुतो ब्रह्मत्वं कुतो वा ब्रह्मांडगर्भत्वादि तत्राह । व्यक्तं कार्यमिदं तव शरीरं व्यक्तं सत्यमिति वा येन शरीरेण त्वमिंद्रियप्राणमनसां गुणान्विषयान् भुंक्षे किं च पारमेष्ठ्ये पारमैश्वर्ये धामनि स्वरूपे स्थित एव भुंक्षे न त्वस्मदादिवत्स्वरूपतिरोधानेन । अतस्त्वमव्यक्त आत्मा निरुपाधिर्ब्रह्मैव पुराणः पुरुषश्चेत्यर्थः ॥ ३३ ॥ ननु ब्रह्मत्वं पुराणपुरुषत्वं कथमेकस्य तत्राह । अनंतेति । हे अनंत येन त्वयाऽव्यक्तेन मनोवचनागोचरेण रूपेणेदं विश्वं ततं व्याप्तं तस्मै तुभ्यं भगवतेऽचिंत्यैश्वर्याय नमः ।

होतृद्गात्रध्वर्युब्रह्माणः । तत्सर्वज्ञत्वम् तत्राखंडत्वे ॥३०॥ अद्यपदेन क्षणघटीपलयामादिग्रहः । कूटस्थो निर्विकारत्वेन कालव्यापी । तत्र कूटस्थत्वे । अन्यदाह—किंचेति ॥३१॥ तत्सर्वात्मत्वं त्वद्व्यतिरिक्तं नास्ति "सर्वं खल्विदं ब्रह्म" इति श्रुतेः । विद्याश्च कलाश्चेति विद्याकलाः । तत् मदव्यतिरिक्तत्वम् । अथ कस्मादुच्यते ब्रह्मेति । "बृंहंतो ह्यस्मिन्गुणाः" इति श्रुतेः । तदपि ब्रह्मत्वमपि । परतः सर्वेभ्यः परस्मादक्षरादव्यक्तात्परः "अव्यक्तात्पुरुषः परः" इति श्रुतेरिति श्रुतिपदार्थः ॥ ३२ ॥ अत्राक्षिपति—अतः स्वरूपतिरोधानाभावात् । इत्यर्थ इति । स्वरूपतिरोधानेन भोगो हि जीवानामेवेति भावः ॥ ३३ ॥ पुनराक्षिपति—नन्विति ।

यदि दास्यस्यभिमतान् वरान् मे वरदोत्तम ॥ भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो ॥ ३५ ॥ नांतर्बहिर्दिवानक्तमन्यस्मादपि चायुधैः ॥ न भूमौ नांबरे मृत्युर्न नरैर्न मृगैरपि ॥ ३६ ॥ व्यसुभिर्वाऽसुमद्भिर्वा सुरासुरमहोरगैः ॥ अप्रतिद्वंद्वतां युद्ध ऐकपत्यं च देहिनाम् ॥ ३७ ॥ सर्वेषां लोकपालानां महिमानं यथात्मनः ॥ तपोयोगप्रभावाणां यन्न रिष्यति कर्हिचित् ॥ ३८ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे हिरण्यकशिपोर्वरयाचनं नाम तृतीयोऽध्यायः ॥ ३ ॥ नारद उवाच ॥ एवं वृतः शतधृतिर्हिरण्यकशिपोरथ ॥ प्रादात् तत्तपसा प्रीतो वरांस्तस्य सुदुर्लभान् ॥ १ ॥ ब्रह्मोवाच ॥ तातेमे दुर्लभाः पुंसां यान् वृणीषे वरान् मम ॥ तथापि वितराम्यंग वरान् यदपि दुर्लभान् ॥ २ ॥

भगवत्त्वे हेतुः चिदचिच्छक्तियुक्ताय चिच्छक्तिर्विद्याऽचिच्छक्तिर्माया ताभ्यां युक्तायेति ॥ ३४ ॥ ३५ ॥ अन्यस्मात्त्वत्सृष्टव्यतिरिक्तादपि आयुधैर्मृत्युर्मा भूत् ॥ ३६ ॥ व्यसुभिरप्राणैः असुमद्भिः सप्राणैः । यथा आत्मनस्तवास्ति महिमा तथाऽप्रतिद्वंद्वतादिकं देहीति शेषः ॥ ३७ ॥ तपसा योगेन च प्रभावो येषां तेषां यदणिमाद्यैश्वर्यं न रिष्यति न नश्यति तच्च देहीत्यर्थः ॥ ३८ ॥ इति सप्तमस्कन्धे टीकायां तृतीयोऽध्यायः ॥ ३ ॥ ॥ चतुर्थे तु वराँल्लब्ध्वा विजित्याखिललोकपान् ॥ विष्णुद्वेषेण तान्सर्वान् दैत्येंद्रः समपीडयत् ॥ १ ॥ शतधृतिर्ब्रह्मा ॥ १ ॥ मम मत्तः । यदपि यद्यपीमे दुर्लभाः ॥ २ ॥

हे अनंतेति । अनंतरूपस्य सर्वं संगच्छत इति भावः ॥ ३४ ॥ नन्वलमेतावत्या स्तुत्या वरांस्तावद् गृहाण—तत्राह यदीति । हिरण्यकशिपोरत्रायमाशयः—यद्यहममृत्युर्भूयासमिति वरं याचिष्ये तदा वरोऽयमसंभव एव यतः कल्पांते वयं ब्रह्मादयोऽपि मरिष्याम एवेति प्रत्याख्यास्यत एवात एवं युक्त्या वरं वृणोमि यतः फलतोऽमरत्वमेव प्राप्तं भविष्यतीति । त्वद्विसृष्टेभ्य इति । सर्वेषां भूतानां ब्रह्मसृष्टत्वादपरः कोऽवशिष्ट इति भावः । संदर्भस्तु—साक्षात्त्वत्सृष्टेभ्य इत्याह ॥ ३९ ॥ मृत्युस्ततोऽपि संभवेदत आह—नांतर्बहिर्दिवा नक्तमिति । सर्वदेशकालनिषेधेन स्वाभाविको मृत्युर्वारितः साकारो वराहादिर्विष्णुर्ब्रह्मसृष्ट एव स तु निराकारः सन् यदि चक्राद्यस्त्रं चालयेत्तर्ह्यनर्थ इत्याशंक्याह—अन्यस्मादपि आयुधैर्न मृत्युः । अंतर्बहिःशब्दाभ्यां सर्वदेशस्य प्राप्तत्वेऽपि तयोः संबंधिशब्दत्वेन प्रतियोगिविशेषोपस्थापकत्वेऽनर्थ इत्याशंक्य पुनर्देशं निषिध्यति—न भूमावित्यनेन सप्तपातालानां, नांबरे इत्यनेन सप्तस्वर्गाणां च निषेधः । पुनर्दक्षादिसृष्टभूतेभ्योऽप्याशंक्याह—न नरैरिति । संदर्भस्तु—अन्यस्माद्रुद्रप्रजापत्यादिसृष्टादित्यर्थः । ब्रह्मत उपर्यन्यामननात् पुनः कर्तृगुणं निषेधति—न नरैरिति । पादत्रयेण भगवतोऽप्राकृतप्राणत्वाद्व्यसुभिर्वासुमद्भिर्वेति तत्रैव संगस्यते कर्तृकरणात् । न चैतत्करणं निषेधपरम् । अप्राणिभिः प्राणिभिर्वेत्युक्ते तस्यैव प्राप्तत्वात् । हंतुर्जीवदेहस्यापि सप्राणभागान्निष्क्रांतस्य कर्त्तनीयनखाग्रभागस्य त्यक्तप्राणत्वाच्च श्रीभगवति तन्निषेधितं श्रीरुक्मिणीदेव्या "त्वक्श्मश्रुरोमनखकेशपिनद्धमंतः" इत्यादिना प्राकृतानां निंदयाऽप्राकृतानां तेषामानंदरूपत्वं साधितम् । अत उक्तं वाराहे "न तस्य प्राकृता मूर्त्तिर्मेदोमज्जास्थिसंभवा" इत्यादि । चक्रवर्ती तु—सर्वजीवजातीनामुल्लेखनासंभवादाह—व्यसुभिः प्राणहीनैः पाषाणाद्यैः । असुमद्भिः प्राणसहितैः ग्राहाद्यैः । एवं वस्तुतोऽहममर एवाभूवमिति वरांतरं वृणोति—अप्रतीति ॥ ३६ ॥ ३७ ॥ यथा आत्मनस्तवास्ति तथा तपोयोगाभ्यां प्रभावो येषां तेषामिति व्याख्यातं स्वामिभिः । इत्यर्थ इति । मदभिलषितं सर्वं देहीति भावः ॥ ३८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ ताँल्लोकपान् ( १ ) अथ वरप्रार्थनोत्तरम् । हिरण्यकशिपोर्हिरण्यकशिपुना । तस्य तस्मै ॥ १ ॥ अंगेति संबोधनेऽव्ययम् । तच्च तातपदेन संबध्यते । हे तातेति-

ततो जगाम भगवानमोघाऽनुग्रहो विभुः॥पूजितोऽसुरवर्येण स्तूयमानः प्रजेश्वरैः ॥ ३ ॥ एवं लब्धवरो दैत्यो बिभ्रद्धेममयं वपुः ॥ भगवत्यकरोद्द्वेषं भ्रातुर्वधमनुस्मरन् ॥ ४ ॥ स विजित्य दिशः सर्वा लोकांश्च त्रीन् महासुरः ॥ देवासुरमनुष्येंद्रान्गंधर्वगरुडोरगान् ॥ ५ ॥ सिद्धचारणविद्याध्रानृषीन्पितृपतीन्मनून् ॥ यक्षरक्षःपिशाचेशान्प्रेतभूतपतीनथ ॥ ६ ॥ सर्वसत्त्वपतीञ्जित्वा वशमानीयविश्वजित् ॥ जहार लोकपालानां स्थानानि सह तेजसा ॥ ७ ॥ देवोद्यानश्रिया जुष्टमध्यास्ते स्म त्रिविष्टपम् ॥ महेंद्रभवनं साक्षान्निर्मितं विश्वकर्मणा ॥ त्रैलोक्यलक्ष्म्यायतनमध्युवासाखिलर्द्धिमत् ॥ ८ ॥ यत्र विद्रुमसोपाना महामारकता भुवः ॥ यत्र स्फाटिककुड्यानि वैडूर्यस्तंभपंक्तयः ॥ ९ ॥ यत्र चित्रवितानानि पद्मरागासनानि च ॥ पयःफेननिभाः शय्या मुक्तादामपरिच्छदाः ॥१०॥ कूजद्भिर्नूपुरैर्देव्यः शब्दयंत्य इतस्ततः ॥ रत्नस्थलीषु पश्यन्ति सुदतीः सुंदरं मुखम् ॥ ॥ ११ ॥ तस्मिन्महेंद्रभवने महाबलो महामना निर्जितलोक एकराट् ॥ रेमेऽभिवंद्यांघ्रियुगः सुरादिभिः प्रतापितैरूर्जितचंडशासनः ॥ १२ ॥ तमंग मत्तं मधुनोरुगंधिना विवृत्तताम्राक्षिमशेषधिष्ण्यपाः ॥ उपासतोपायनपाणिभिर्विना त्रिभिस्तपोयोगबलौजसां पदम् ॥ १३ ॥ जगुर्महेंद्रासनमोजसा स्थितं विश्वावसुस्तुंबुरुनारदादयः ॥ गंधर्वसिद्धा ऋषयोऽस्तुवन्मुहुर्विद्याधरा अप्सरसश्च पांडव ॥ १४ ॥

अमोघोऽनुग्रहो यस्य प्रजेश्वरैर्मरीच्यादिभिः ॥ ३ ॥ यदर्थं तपस्तप्तं तदाह एवमित्यादिना ॥४॥५॥६॥ सर्वेषां सत्त्वानां प्राणिजातानां येये पतयस्तान् ॥७॥ त्रिविष्टपं स्वर्गमध्यास्ते स्माधिष्ठितवान् । तत्र स्वर्गेऽपि महेंद्रभवनमध्युवासाधिवसति स्म ॥ ८ ॥ अखिलसमृद्धियुक्तत्वमेवाह । यत्रेति त्रिभिः ॥ ९ ॥ मुक्तादामानि परिच्छदाः परिकरा यासाम् ॥ १० ॥ सुदतीः सुदत्यः ॥ ११ ॥ ऊर्जितमधिकं चंडं तीव्रं शासनं यस्य ॥ १२ ॥ अंग हे राजन् उरुगंधिनोग्रगंधेन मधुना सुरया मत्तम् । अत एव विवृत्ते विघूर्णिते ताम्रे अक्षिणी यस्य तम्।अशेषधिष्ण्यपाः सर्वलोकपाला उपायनयुक्तैः पाणिभिरुपासत सेवंते।त्रिभिर्ब्रह्मविष्णुरुद्रैर्विना पदमाश्रयभूतम् ॥१३॥ उपासनप्रका

बालत्वाभिप्रायिका संबुद्धिः । बालत्वादयोग्यान्दुर्लभांश्च वरान्वृणीत इति भावः ॥ २ ॥ ततो वरदानानंतरम् । भगवान्ब्रह्मा ॥ ३ ॥ हेममयं तेजोमयम् ॥ ४ ॥ ५ ॥ ६ ॥ सर्वेषां सत्त्वानां पश्वादीनामपि ये पतयः सिंहाद्यास्तान् । सत्त्वपतयो बलाधिका वा ॥ ७ ॥ तत्र त्रिविष्टपेपि । त्रैलोक्ये या लक्ष्मीः शोभा तस्या आयतनं मुख्यस्थानम् ॥ ८ ॥ सोपानमारोहणावरोहणभूमिः भुव इत्यस्य विशेषणं विद्रुमसोपाना इति ॥ ९ ॥ वितानमुल्लोचम् ॥ १० ॥ देव्यो देवांगनाः ॥ ११ ॥ प्रतापितैः स्वतेजसा संतापितैः । आदिना गंधर्वयक्षादिग्रहः ॥ १२ ॥ अत एव मधुमत्तत्वादेव ॥ १३ ॥ नारदनामा कश्चिद्गंधर्वोऽप्यस्ति तच्चार्जुनजन्मकालागतगंधर्वेषु महाभारते गणितोऽस्तीति ततो निश्चेयम् । अस्मदादय इति पाठस्तु प्रांक्तनो न भाति श्रीनारदस्य विरक्तशिरोमणित्वेन दैत्याग्रे गानासंभवात् । पांडवेति । यथा पांडुं तव पितरं सर्वे देवादयोऽतीवधर्मशीलत्वा

स एव वर्णाश्रमिभिः क्रतुभिर्भूरिदक्षिणैः ॥ इज्यमानो हविर्भागानग्रहीत्स्वेन तेजसा ॥ १५ ॥ अकृष्टपच्या तस्यासीत्सप्तद्वीपवती मही ॥
तथा कामदुघा द्यौस्तु नानाश्चर्यपदं नभः ॥ १६ ॥ रत्नाकराश्च रत्नौघांस्तत्पत्न्यश्चोहुरूर्मिभिः ॥ क्षारसीधुघृतक्षौद्रदधिक्षीरामृतोदकाः ॥१७॥
शैला द्रोणीभिराक्रीडं सर्वर्तुषु गुणान्द्रुमाः ॥ दधार लोकपालानामेक एव पृथग्गुणान् ॥ १८ ॥ स इत्थं निर्जितककुबेकराड्विषयान्प्रियान् ॥
यथोपजोषं भुंजानो नातृप्यदजितेंद्रियः ॥ १९ ॥ एवमैश्वर्यमत्तस्य दृप्तस्योच्छास्त्रवर्तिनः ॥ कालो महान्व्यतीयाय ब्रह्मशापमुपेयुषः ॥ २० ॥
तस्योग्रदंडसंविग्नाः सर्वे लोकाः सपालकाः ॥ अन्यत्रालब्धशरणाः शरणं ययुरच्युतम् ॥ २१ ॥ तस्यै नमोऽस्तु काष्ठायै यत्रात्मा हरिरीश्वरः ॥
यद्गत्वा न निवर्तंते शांताः संन्यासिनोऽमलाः ॥ २२ ॥ इति ते संयतात्मानः समाहितधियोऽमलाः ॥ उपतस्थुर्हृषीकेशं विनिद्रा वायुभोजनाः ॥
॥ २३ ॥ तेषामाविरभूद्वाणी अरूपा मेघनिःस्वना ॥ सन्नादयंती ककुभः साधूनामभयंकरी ॥२४॥ मा भैष्ट विबुधश्रेष्ठाः सर्वेषां भद्रमस्तु वः ॥
मद्दर्शनं हि भूतानां सर्वश्रेयोपपत्तये ॥ २५ ॥

रमाह । जगुरिति ॥ १४ ॥ १५ ॥ १६ ॥ तत्पत्न्यो नद्यः ऊहुर्वहंति स्म । रत्नाकरानेवाह । क्षारेति ॥ १७ ॥ आक्रीडं क्रीडास्थानम् । द्रुमाः सर्वेषु ऋतुषु गुणान्पुष्पफलादीन् । स च लोकपालानां पृथग्विधान्गुणान्वर्षणदहनशोषणादीनेक एव दधार ॥ १८ ॥ निर्जिताः ककुभो येन । यथोपजोषं यथाप्रीति ॥ १९ ॥ महान्कालः एकसप्ततियुगानि किंचिदधिकानि ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ अरूपा वक्तृरहिता ॥ २४ ॥ मम दर्शनं श्रवणं सर्वेषां

त्वप्रशशंसुस्तथैनं क्रूरत्वाद्भिया तुष्टुवुर्न तु प्रीत्येति भावः ॥ १४ ॥ वर्णाश्रमिभिर्ब्राह्मणादिभिर्ब्रह्मचार्यादिभिश्च । हविर्भागानिंद्रादिदेययज्ञभागान् ॥ १५ ॥ अकृष्टपच्येति । तस्य वेनस्याधर्मिष्ठत्वेऽपि तस्य राज्ये महीप्रभृतयोऽकृष्टपच्यादिगुणयुक्ता यद्बभूवुस्तदतिभयादेवान्यथा मह्यादीनां तत्कर्तृको वधः सद्य एव संभवेत् । वेनस्तु न तादृक्प्रभावोऽभूद्यं भृग्वादय एव भस्मी चक्रुरयं तु भृग्वादीनां तेजः प्रथममेव जहारेति विवेचनीयम् । अकृष्टपच्या सीराद्युल्लेखनं विनैव सस्यपरिपाकोपेता । द्यौः स्वर्लोकः यथेच्छभोगदोभूत् । नभोंतरिक्षं बह्वद्भुतप्रदमासीद्गंधर्वनगरादिगमनागमनादिना ॥ १६ ॥ रत्नाकराः समुद्राः 'रत्नाकरो जलनिधिः' इत्यमरः । रत्नौघान् मुक्ताहीरकादिरत्नसमूहान् । तत्पत्न्यस्तेषां रत्नाकरादीनां पत्न्यो नद्यः कावेर्याद्या अपि स्वतरंगैः समुद्रांतर्गतरत्नौघानूहुः प्रापयामासुः । समुद्रान्नामतो निर्दिशति—क्षारो लवणम् ॥ १७ ॥ "द्रोणी पर्वतकंदरे तथा काष्ठांबुवाहिन्यां गवादिन्यां च नीवृति" इति धरणिः । वाक्यद्वयेऽपि वचनव्यत्ययेन दध्रुरिति संबध्यते ॥ १८ ॥ १९ ॥ महान्कालः एकसप्ततियुगानि किंचिदधिकानि तदुक्तम् । "हिरण्यकशिपोर्भीत्या प्रपलाय्य शचीपतिः । स्वर्गराज्यात्परिभ्रष्टो युगानामेकसप्ततिम्" इति वैष्णवादिषु हिरण्यकशिपुभयेन पलायितस्येंद्रस्यैकसप्ततियुगपर्यंतं राज्यभ्रंशोक्तेश्चाक्षुषारंभप्रवृत्तराज्यस्य वैवस्वतारंभे हननात्किंचिदधिकानीत्युक्तम् ॥२०॥ उग्रदंडेन संविग्ना भीताः । अन्यत्र हरेरन्यो न लब्धं शरणं रक्षिता यैस्ते तथा । अत्र प्रथमार्थे त्रल् । शरणं रक्षितारम् 'शरणं गृहरक्षित्रोः' इत्यमरः ॥२१ ॥ यद्यं हरिं गत्वा प्राप्य । 'दिशस्तु ककुभः काष्ठाः' इत्यमरः । अत्र विश्वनाथः—यत्र दिशि हरिरस्तीति सर्वदेशस्यासुरतेजोग्रस्तत्वाद्वयं क्वचित्पुण्यतीर्थे गत्वा तं स्तुमहे इति भावः । यद्वा—तस्मै उत्कर्षाय नमः । यस्मिन्नुत्कर्षे हरिरिति अन्ये सर्वोत्कर्षा अनेनासुरेण जिता इति भावः । 'सर्वसत्त्वपतीञ्जित्वा' इत्युक्तेः । 'काष्ठोत्कर्षे स्थितौ दिशि' इत्यमरः ॥ २२ ॥ २३ ॥ अरूपा अशरीरिंगी ॥ २४ ॥ विबुधश्रेष्ठा इति । बुधानामपि स्वबुद्धिबलेन भयनिवर्तनसमर्थत्वाद्वयं न भवति

भा. स.
श्री. टी.
॥ १६ ॥

ज्ञातमेतस्य दौरात्म्यं दैतेयापसदस्य च ॥ तस्य शांतिं करिष्यामि कालं तावत्प्रतीक्षत ॥ २६ ॥ यदा देवेषु वेदेषु गोषु विप्रेषु साधुषु ॥ धर्मे मयि च विद्वेषः स वा आशु विनश्यति ॥ २७ ॥ निर्वैराय प्रशांताय स्वसुताय महात्मने ॥ प्रह्लादाय यदा द्रुह्येद्धनिष्येऽपि वरोर्जितम् ॥ २८ ॥ नारद उवाच ॥ इत्युक्ता लोकगुरुणा तं प्रणम्य दिवौकसः ॥ न्यवर्तंत गतोद्वेगा मेनिरे चासुरं हतम् ॥ २९ ॥ तस्य दैत्यपतेः पुत्राश्चत्वारः परमाद्भुताः ॥ प्रह्लादोऽभून्महांस्तेषां गुणैर्महदुपासकः ॥ ३० ॥ ब्रह्मण्यः शीलसंपन्नः सत्यसंधो जितेंद्रियः ॥ आत्मवत्सर्वभूतानामेकः प्रियसुहृत्तमः॥ ॥ ३१ ॥ दासवत्संनतार्यांघ्रिः पितृवद्दीनवत्सलः ॥ भ्रातृवत्सदृशे स्निग्धो गुरुष्वीश्वरभावनः ॥ विद्यार्थरूपजन्माढ्यो मानस्तंभविवर्जितः॥३२॥ नोद्विग्नचित्तो व्यसनेषु निःस्पृहः श्रुतेषु दृष्टेषु गुणेष्ववस्तुदृक् ॥ दांतेंद्रियप्राणशरीरधीः सदा प्रशांतकामो रहितासुरोऽसुरः ॥ ३३ ॥

श्रेयसामुपपत्तये भवति ॥ २५ ॥ ॥ २६ ॥ २७ ॥ ननु देवादिविद्वेषेऽप्यस्य विनाशो नास्ति ब्रह्मवरेणोर्जितत्वात्तत्राह । निर्वैरायेति । सर्वमहं सहे न मद्भक्तद्रोहमिति भावः ॥ २८ ॥ असुरं च हतं मेनिरे । तदानीं तद्द्वेषे प्रवृत्तत्वादिति भावः ॥ २९ ॥ तमेव द्वेषं वक्तुमादौ सुतस्य महत्त्वमाह । तस्येति । गुणैर्महानभूत् । गुणानेवाह महदुपासक इत्यादिना ॥ ३० ॥ सत्या संधा प्रतिज्ञा यस्य । एक एव प्रियश्च सुहृत्तमश्च ॥ ३१ ॥ दासवत्सम्यङ् नता आर्याणामंघ्रयो येन । गुरुषु ईश्वर इति भावना यस्य ॥ ३२ ॥ व्यसनेषु प्राप्तेष्वपि नोद्विग्नचित्तः । दृष्टेषु श्रुतेषु गुणेषु विषयेषु निस्पृहः । यतस्तेष्ववस्तुदृक् दांता इंद्रि

किं विशिष्टबुधानां किंतरां तेष्वपि श्रेष्ठानामिति भावः । मद्दर्शनं श्रवणद्वाराऽपि मदनुभवः अरूपवाण्या दर्शनासंभवाद्दर्शनपदार्थोऽत्र श्रवणमेव । श्रेयोपपत्तयेऽत्र संधिरार्षः । "सर्वे सांता अदंताः स्युस्ते पुंसि शंढके क्वचित्" इति द्विरूपकोशाद्वा युक्तः संधिः । यद्वा—मद्दर्शनं मद्विषयं ज्ञानम् 'हरिस्मृतिः सर्वविपद्विमोक्षणम्' इति न्यायात् । "दर्शनं नयनस्वप्नबुद्धिधर्मोपलब्धिषु । शास्त्रदर्पणयोः" इति मेदिनी । विश्वनाथस्तु—स्तंभान्मद्दर्शनं यावदेव न भवति तावदेव युष्माकं भयमिति भाव इत्याह ॥२५॥ दौरात्म्यं दौर्जन्यम् । दैतेयापसदस्य दैत्याधमस्य । "नीचे साम्याधमे प्रोक्तोपसदो निर्गते सदः" इत्यभिधानात् । "शांतिः स्त्री मंगले चांते शमे कल्याणबंधने" इति धरणिः ॥ २६ ॥ यद्वा यस्य देवादिषु द्वेषः स्यात्तदा स वै प्रसिद्धम् । आशु झटिति नश्यतीत्यर्थः ॥ २७ ॥ अत्राक्षिपति—नन्विति । इति भाव इति । भक्तान्तःकरणस्य मदावासत्वेन तद्दुःखेऽहमेव दुःखी स्यामतो भक्तद्रोहस्य मद्रोहत्वात्स्वद्रोहिणं सर्व एव नाशयंतीत्याशयः अमृतत्वादाश्चर्यप्रभावमपि संप्रति वरोर्जितमपि स्वयमेव हनिष्यामि किन्त्वहमपि तत्प्रभावलोपकच्छिद्रविशेषं प्रतीक्ष्यमाणोस्मीत्याह—निर्वैरायेति संदर्भः ॥ २८ ॥ इति भाव इति । इतः पूर्वं दैत्ये भगवत्कर्तृको द्वेषः सामान्यत आसीद्देवप्रार्थनया तु विशेषेण प्रवृत्तोभूत्ततश्च तन्मरणनिश्चयोऽभूदित्याशयः ॥ २९ ॥ ३० ॥ 'संधा स्थितिप्रतिज्ञयोः' इति मेदिनी ॥ ३१ ॥ गुरुष्विति बहुत्वं गौरवेणैव । गुरौ श्रीभगवन्मंत्रोपदेष्टरीत्यर्थः । विद्याश्चतुर्दशैवार्थो धनमात्रं प्रशस्ते रूपजन्मनी तैराढ्यः ॥ ३२ ॥ व्यसनेषु विपत्तिषु नोद्विग्नचित्तोऽनाकुलः

भा. टी. प्र.
टीका.
अ० ४

॥ १६ ॥

यस्मिन्महद्गुणा राजन् गृह्यंते कविभिर्मुहुः ॥ न तेऽधुनापि धीयंते यथा भगवतीश्वरे ॥३४॥ यं साधुगाथासदसि रिपवोऽपि सुरा नृप ॥ प्रतिमानं प्रकुर्वंति किमुतान्ये भवादृशाः ॥ ३५ ॥ गुणैरलमसंख्येयैर्माहात्म्यं तस्य सूच्यते ॥ वासुदेवे भगवति यस्य नैसर्गिकी रतिः ॥ ३६ ॥ न्यस्तक्रीडनको बालो जडवत्तन्मनस्तया ॥ कृष्णग्रहगृहीतात्मा न वेद जगदीदृशम् ॥ ३७ ॥ आसीनः पर्यटन्नश्नञ्छयानः प्रपिबन्ब्रुवन् ॥ नानुसंधत्त एतानि गोविंदपरिरंभितः ॥ ३८ ॥

यांदयो यस्य । रहित आसुरो भावो मत्सरादिर्यस्य सः । असुरोऽपि सन् प्रशांतकामः॥ ३३॥ अधुनाऽपि ते गुणा नापिधीयंते तिरोहिता न भवंति॥ ३४॥ साधुगाथासदसि साधुकथाप्रसंगवत्यां सभायां यं प्रह्लादम् । प्रतिमानं दृष्टांतम् । रिपवोऽपि सुराः कुर्वंति किं वक्तव्यं भवादृशा विष्णुभक्ताः ॥ ३५॥ सूच्यते मया केवलं द्योत्यते सुष्ठु कथ्यत इति वा॥ ३६॥नैसर्गिकरतेर्लिंगान्याह । न्यस्तक्रीडनक इति षड्भिः । तन्मनस्तया सदेकचित्तत्वेन॥ ३७॥एतान्यासनादीनि । गोविंदेन परिरंभित आत्मना एकीकृतः ॥ ३८॥

दृष्टश्रुतेष्वैहिकामुष्मिकेषु ॥ ३३ ॥ महतो भगवतो गुणा गांभीर्यादयोऽप्राकृताः स्वभावेनैव स्थिताः कविभिर्विवेकिभिर्गृह्यंते एते गुणा जीवनिष्ठा न भवंति किं तु भागवता एवैते शुद्धैर्मनआदींद्रियैर्विषयी क्रियंत इत्यर्थः । गुणानां नित्यत्वमाह—ते गुणा अधुनाप्येतत्कालपर्यंतमपि नापिधीयंते कालकर्मादिभिर्नाच्छाद्यन्ते एतावत्तु कालेषु गतेष्वपि प्रह्लादस्तादृग्गुणविशिष्ट एव भूतले तथा वैकुंठे महावैकुंठे च विराजत एवेति भावः ॥ ३४ ॥ नृपेति । व्रियंते विक्षिप्यंते पुरुषा एभिरिति नरश्चौरादयः सिंहादयश्च तेभ्यः पाति जनानिति नृपः । यद्वा—नरः कामादयस्तेभ्यः पात्यात्मानमिति नृपोऽतस्त्वमपि तादृशो हरिभक्त एव मात्मानं शोच इति भावः । दृष्टांतं प्रह्लादतुल्योऽयं भक्त इत्येवं वदंतीत्यर्थः । साधुगाथा सदसि देवासुरमनुष्याणां मध्ये कः साधुरिति प्रसंगवत्यां सभायाम् ॥ ३५ ॥ असंख्येयैः संख्यातुमशक्यैरेव गुणैस्तस्यालं कः खलूत्कर्ष इत्यर्थः । अन्ये पुरुषा गुणैरुत्कर्ष्यंतां नाम न तु प्रह्लादस्तस्य तूत्कर्षहेतुरन्यद्वस्त्वन्तरं वर्तत इति भावः । तदेव किं तत्राह—माहात्म्यं सूच्यते सुष्ठूच्यते किन्तत् वासुदेवे इत्यादि । यद्वा—तस्य माहात्म्यं सूच्यते तदभिधातुमशक्यत्वाद्व्यज्यते मात्रं ' कृष्णग्रहगृहीतात्मा ' इत्याद्युत्तरग्रंथे ग्रहादिशब्देनेति भावः । तस्य कीदृशस्येत्यपेक्षायामाह—वासुदेव इति । नृसिंहाकार इति केचित् । प्रह्लादस्तुत्यनंतरम् " आविर्बभूव भगवान्पीतांबरधरो हरिः " इति वैष्णवोक्तेः । ' कृष्णग्रहगृहीतात्मा ' । इति ' गोविंदपरिरंभितः ' इत्यग्रिमोक्तेश्च वासुदेवे वसुदेवनंदनाकारे इत्यन्ये । प्रह्लादस्य पूर्वोत्तरदशयोः क्रमेण वासुदेवनृसिंहनिष्ठत्वमित्यपरे । नैसर्गिकी न त्वन्येषामिव पूर्वजन्मकृतैः साधनैः सिद्धेत्यर्थः । स्वामिचरणैः द्योत्यते इति ' सूच—पैशुन्ये ' इत्यस्य प्रयोगाभिप्रायेणोक्तं तत्र सूचनेन कथनासामर्थ्यप्रतीतेराह—सुष्ठ्विति । संदर्भस्तु—असंख्येयैरेवालमत्यर्थं तस्य माहात्म्यं संसूच्यते वक्तुं शक्यत इत्यर्थमाह ॥ ३६ ॥ बालोऽपि त्यक्तबाल्यलीलः । तन्मनस्तया कृष्णैकाग्रमनस्कत्वेन जड इवान्यैर्लक्ष्यमाणो न चान्यभक्तैरिव तेन स्वमनः कृष्णविषयकं कृतं किन्तु कश्चिद् ग्रहो लोभ्यं द्रव्यमिव कृष्ण एव यन्मनो गृहीतवानित्याह—कृष्णेति । अत एव जगदीदृशं व्यवहारमयं न वेद किन्तु कृष्णमयमेवेत्यर्थः । अत्र संदर्भः—तन्मनस्तया कृष्णमनस्तया न्यस्तक्रीडनकः तदनंतरं तयैव जडवत्तत्तुल्यः ततः पश्चात्कृष्णग्रहगृहीतात्मा ग्रहेणेव कृष्णेनाविष्टः सन् जगदीदृशं न वेद न ददर्श । यथा लोकाः पश्यंति किन्तु तत्स्फूर्तिकरत्वेनैव ददर्शेत्यर्थः ॥ ३७ ॥ एतानि आसनवर्त्मभक्ष्यशयनीयपेयवक्तव्यानि नानुसंधत्ते न जानाति कुतः गोविंदेन परिरंभितः अतिवत्सलेन पित्रा मात्रा वा एकाब्दिको बालो यथा प्रतिक्षणमेव परिरभ्य क्रोडस्थी क्रियते तथैव प्रह्लादो भोजनशयनादिसमयेऽपि भगवताऽऽलिंग्यत इति प्रह्लाद एव पश्यति नान्य इति भावः॥ ३८॥

क्वचिद्रुदति वैकुंठचिंताशबलचेतनः ॥ क्वचिद्धसति तच्चिंताह्लाद उद्गायति क्वचित् ॥ ३९ ॥ नदति क्वचिदुत्कंठो विलज्जो नृत्यति क्वचित ॥ क्वचित्तद्भावनायुक्तस्तन्मयोऽनुचकार ह ॥ ४० ॥ क्वचिदुत्पुलकस्तूष्णीमास्ते संस्पर्शनिर्वृतः ॥ अस्पंदप्रणयानंदसलिलामीलितेक्षणः ॥ ४१ ॥ स उत्तमश्लोकपदारविंदयोर्निषेवयाऽकिंचनसंगलब्धया॥तन्वन्परां निर्वृतिमात्मनो मुहुर्दुःसंगदीनान्यमनः शमं व्यधात्॥४२॥तस्मिन्महाभागवते महामाये महात्मनि ॥ हिरण्यकशिपू राजन्नकरोदघमात्मजे॥४३॥ युधिष्ठिर उवाच ॥ देवर्ष एतदिच्छामो वेदितुं तव सुव्रत ॥ यदात्मजाय शुद्धाय पिताऽदात्साधवे ह्यघम् ॥ ४४ ॥ पुत्रान्विप्रतिकूलान्स्वान्पितरः पुत्रवत्सलाः ॥ उपालभंते शिक्षार्थं नैवाघमपरो यथा ॥ ४५ ॥

रुदति रोदिति रौति । वैकुंठस्य चिंतया शबला व्यामिश्रा क्षुभिता चेतना यस्य तस्य चिंतयाऽऽह्लादो यस्य ॥ ३९ ॥ क्वचिदुत्कण्ठो मुक्तकण्ठः सन् । अनुचकार तच्चेष्टादिकं स्वयं कृतवान् ॥ ४० ॥ संस्पर्शस्तद्भावापत्तिस्तेन निर्वृतः । अस्पंदः स्थिरो यः प्रणयस्तेन य आनंदस्तेन यत्सलिलं तेन युक्ते आमीलिते ईषन्निमीलिते ईक्षणे यस्य सः ॥ ४१ ॥ आत्मनः परां निर्वृतिं तन्वन्दुःसंगेन दीनस्यान्यस्यापि मनः शमं शांतं व्यधात् ॥४२॥ अघं द्रोहमकरोत ॥४३ ॥ प्रथमाध्यायांते पृष्टमेवार्थमिति विस्मयेन पुनः पृच्छति । देवर्ष इति । तव त्वत्तस्तव वाक्यमिति वा साधवेऽघमदात साधोर्द्रोहं कृतवानिति यदेतद्वेदितुं ज्ञातुमिच्छामः ॥ ४४ ॥ उपालभंते आक्षिपंति ।

ततश्च क्वचिदिति । स्वबालकं स्वक्रोडस्थलाद्भूमौ निधाय गृहकृत्यार्थमन्यत्र गतायां मातरि स बालो यथा रोदिति तथैव मामधुनैव परित्यज्य मत्प्रभुः क्व गत इति तच्चिंतया शबला व्यामिश्रा विह्वला चेतना बुद्धिर्यस्य सः रुदति रोदिति । क्वचिच्च हसतीति तदेव पुनः स्फूर्त्तिप्राप्तेन भगवता भोः प्रह्लाद वत्स क्षणमात्रं मामनालोक्य कथमेवं रोदिषीत्युक्ते सति हसति । चिरात्प्राप्तामालिंगंतीं मातरमवलोक्य मुग्धबाल इवेत्यर्थः । तच्चिन्तेति । मत्प्रभुर्मामेव कृपया स्वदर्शनदानेन सुखयतीति चिंतयाऽऽह्लादो यस्य स तथा ॥ ३९ ॥ नदतीति । स्फूर्तिप्राप्तं हरिमतिदूरे दृष्ट्वोत्कंठमुच्चैःकृतकंठं भो प्रह्लाद वत्स त्वामनालोक्याहं नैव निर्वृणोमि यतस्त्वमेव ममाति प्रिय इत्युक्तः सन् । आनन्दातिशयेन विक्षिप्त एव विलज्जो नृत्यति तदैव स्फूर्तिभंगे सति तद्विरहखेदाधिक्येन तद्भावनातिशययुक्त उन्मादसंचारिप्राबल्येनाहमेव हरिरिति तन्मयः सन् तल्लीलां रामकृष्णाद्यवतारगतामप्यनुच कार रावणकंसादिवधादिरूपामनुकृतवानित्यर्थः ॥ ४० ॥ क्वचिदुत्पुलक इति । क्व यामि कुत्र प्रभुं प्राप्स्यामीति तद्विच्छेददुःखेन मुद्रितनेत्रोऽकस्मात्स्वहृदये एव तमालोक्य तत्पाणिस्पर्शेन निर्वृत उत्पुलकः न विद्यते स्पंदनो यस्य सः ॥ ४१ ॥ ननु तस्य हिरण्यकशिपुप्रभृतिदुःसंगवत्त्वे कथं स्थिरा भक्तिस्तत्र प्रह्लादस्य तस्य संगेनान्येऽपि दुःसंगिनस्तत्सहचरबालाः कृतार्था बभूवुः कथं तस्यैव दुःसंगशंकेत्याह—स इति । दुःसंग दीनस्यान्यस्यापि मनः शमम् ' शमो मन्निष्ठताबुद्धेः ' इति भगवद्वचनाद्भगवन्निष्ठमकरोत् ॥ ४२ ॥ महाभागवतत्वं तु दर्शितमेव महान्भागो भाग्यं नारदकृपारूपं यस्य तस्मिन् । महान्पूज्य आत्मा धैर्यगांभीर्यादियुक्तः स्वभावो यस्य तस्मिन् । राजन्निति । ' राजानः प्रायशो भुवि ' इति न्यायेन राजस्वभावं त्वं जानास्येवेति भावः ॥ ४३ ॥ देवर्षे इति । देवा अपि सर्वज्ञा भवंति तेष्वपि भवान्नृषिरतः सर्वथा सर्वज्ञोऽस्यत एव मां प्रति ब्रूहीति भावः । सुव्रतेति । कामक्रोधादिपरित्यागेन केवलं परोपकाररूपं व्रतं दधासीति भावः ॥ ४४ ॥ विप्रतिकूलान् विशेषेण प्रतिकूलाननुगतान् ॥ ४५ ॥

किमुतानुवशान्साधूंस्तादृशान्गुरुदेवतान् ॥ एतत्कौतूहलं ब्रह्मन्नस्माकं विधम प्रभो ॥ पितुः पुत्राय यद्द्वेषो मरणाय प्रयोजितः ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे हिरण्यकशिपुदिग्विजयप्रह्लादसाधुभाववर्णनं नाम चतुर्थोऽध्यायः ॥ ४ ॥ नारद उवाच ॥ पौरोहित्याय भगवान्वृतः काव्यः किलासुरैः ॥ शंडामर्कौ सुतौ तस्य दैत्यराजगृहांतिके ॥ १ ॥ तौ राज्ञा प्रापितं बालं प्रह्लादं नयकोविदम् ॥ पाठयामासतुः पाठ्यानन्यांश्चासुरबालकान् ॥ २ ॥ यत्तत्र गुरुणा प्रोक्तं शुश्रुवेऽनुपपाठ च ॥ न साधु मनसा मेने स्वपरासद्ग्रहाश्रयम् ॥ ३ ॥ एकदाऽसुरराट् पुत्रमंकमारोप्य पांडव ॥ पप्रच्छ कथ्यतां वत्स मन्यते साधु यद्भवान् ॥ ४ ॥ प्रह्लाद उवाच ॥ तत्साधु मन्येऽसुरवर्य देहिनां सदा समुद्विग्नधियामसद्ग्रहात् ॥ हित्वात्मपातं गृहमंधकूपं वनं गतो यद्धरिमाश्रयेत ॥ ५ ॥

अघं तु नैव कुर्वंति । अपरः शत्रुरिव ॥ ४५ ॥ अनुवशाननुकूलान् साधूनरागरोषान् । गुरुः पितैव देवता येषां तानुद्दिश्याघं न कुर्वंतीति किमु वक्तव्यमित्यर्थः । पुत्राय पुत्रमुद्दिश्य पितुर्द्वेषः पित्रा कृतो द्वेषः पुत्रस्य मरणार्थं प्रयोजितः प्रवर्तित इति यदेतत्कौतूहलं विधमापाकुरु । यद्वा यद्यस्मात्पुत्राय यो द्वेषः स पितुर्मरणाय प्रयोजितोऽत एतत्कौतूहलं विधमेत्यर्थः ॥ ४६ ॥ इति सप्तमस्कं० टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ पंचमे गुरुतोऽधीतं त्यक्त्वा विष्णुस्तुतौ रतम् । घातयन्द्विपसर्पाद्यैः सुतं दैत्यो न चाशकत् ॥ १ ॥ भगवद्भक्तिरेव विद्वेषे कारणमिति वक्तुमाह । पौरोहित्यायेत्यादिना । काव्यः शुक्रः । अतस्तस्य सुतौ दैत्यराजगृहांतिके न्यवसतामिति शेषः ॥ १ ॥ पाठ्यान्दंडनीत्यादीन् । पाठ्यानसुरबालकानिति वाऽन्वयः ॥ २ ॥ अनु श्रवणानंतरं तथैव पपाठ च किं तु तत्साधु न मेने । तत्र हेतुः । स्वः पर इत्यसद्ग्रहो मिथ्याभिनिवेश एवाश्रयो यस्य तत् ॥ ३ ॥ ४ ॥ हे असुरवर्य असद्ग्रहादहंममेति मिथ्याऽभिनिवेशाद्धेतोः सम्यगुद्विग्ना विषण्णा धीर्येषां ते । वनं गतः सन्हरिमाश्रयेतेति यत्त

इत्यर्थ इति । अनुकूलात्मजा हि सर्वथैवाद्रोह्या इति भावः । पुत्रस्य मरणाभावदृष्टेराह—यद्वेति । इत्यर्थ इति । न हि पितापुत्रयोर्मरणाभिप्रायको द्वेष उचित इति भावः ॥ ४६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे चतुर्थोऽध्यायः ॥४॥ न चाशकत् घातितुमिति शेषः(१)अतः पौरोहित्यहेतोः । शंडश्च मर्कश्च शंडामर्कावत्र दीर्घश्छांदसः । शंडो मर्क इति वेदे श्रवणात् । तस्य शुक्रस्य॥१॥ नयकोविदं विधातुमिति शेषः । भगवन्मार्गे कोविदं,नयत्युत्कर्षमिति नयो भक्तिमार्ग एव 'उत्कर्षं नयनान्नयः' इत्युक्तेः । संभवत्वात्पाठ्यानित्युभयार्थमाह ॥ २ ॥ यद्दण्डनीत्यादिकम् । तत्र पाठनावसरे । तत्रासाधुमनने ॥ ३ ॥ हे पांडवेति । पांडुर्यथा भवंतमंकमारोप्यापृच्छदिति भावः । कठिनपदार्थानां प्रश्ने बालस्यास्य स्तोभो भविष्यतीति मत्वा प्राह—यद्भवान् पठितानां मध्ये साधु अभ्यस्तीकृतं मन्यसे जानासि मदग्रे यद्वक्तुं शक्नोति तदेव वदत्विति हिरण्यकशिपोरभिप्रायः ॥ ४ ॥ प्रह्लादस्तु तदभिप्रायं ज्ञात्वापि जगत्यस्मिञ्शिक्षास्यानां मध्ये भवान् किं वस्तु साधु मन्यते इति बुद्ध्या, विचार्य स्वसंमतीकरोतीमं पृच्छसि चेदस्य समुचितमुत्तरं शृण्वित्याह—तदिति । अत्र यद्धरिमाश्रयेत तदेव हरिचरणाश्रयणं साधु मन्ये । गृहे स्थितोऽपि स एव गृहमंधकूपं हित्वा वनं गतः अन्यथा वनं गतोऽपि गृहमंधकूपमेव श्रित इति च व्याचक्षते । हे असुरवर्येति । इत्थं कृते भवानप्यसुरवर्यो भविष्यत्यन्यथाऽसुरैरपि

नारद उवाच ॥ श्रुत्वा पुत्रगिरो दैत्यः परपक्षसमाहिताः ॥ जहास बुद्धिर्बालानां भिद्यते परबुद्धिभिः॥६॥ सम्यग्विधार्यतां बालो गुरुगेहे द्विजातिभिः ॥ विष्णुपक्षैः प्रतिच्छन्नैर्न भिद्येतास्य धीर्यथा ॥७॥ गृहमानीतमाहूय प्रह्रादं दैत्ययाजकाः ॥ प्रशस्य श्लक्ष्णया वाचा समपृच्छंत सामभिः ॥ ॥ ८ ॥ वत्स प्रह्राद भद्रं ते सत्यं कथय मा मृषा ॥ बालानति कुतस्तुभ्यमेष बुद्धिविपर्ययः ॥ ९ ॥ बुद्धिभेदः परकृत उताहो ते स्वतोऽभवत् ॥ भण्यतां श्रोतुकामानां गुरूणां कुलनंदन ॥ १० ॥ प्रह्राद उवाच ॥ स्वः परश्चेत्यसद्ग्राहः पुंसां यन्मायया कृतः ॥ विमोहितधियां दृष्टस्तस्मै भगवते नमः ॥ ११ ॥ स यदानुव्रतः पुंसां पशुबुद्धिर्विभिद्यते ॥ अन्य एष तथाऽन्योऽहमितिभेदगताऽसती ॥ १२ ॥

देवाहं साधु मन्ये । कथंभूतं गृहम् । आत्मपातमात्मनोऽधःपातनिमित्तम् । कुतः । अंधकूपवन्मोहावहम् ॥ ५ ॥ परपक्षे विष्णौ समाहिताः परिनिष्ठिताः । हासे हेतुः । बुद्धिरिति ॥ ६ ॥ विष्णुपक्षैर्भागवतैर्हेतुभूतैः । ननु त्वद्गृहे कुतस्तेषां प्रवेशः । सत्यम् । तथापि प्रतिच्छन्नैर्वेषांतरेण छन्नैः ॥ ७ ॥ दैत्यैर्गृहमानीतम् ॥ ८ ॥ बालान्सर्वानति अतिक्रम्य । तुभ्यं तव ॥ ९ ॥ १० ॥ अहो मायामोहिता भवंतो मामाक्षिपंतीत्याशयेन तावदाह । स्वः परश्चेति । मिथ्याभिनिवेशो यदीयया माययैव कृतो न तु वास्तवः अत एव तदीयया मायया विमोहितबुद्धीनां भवतामेव दृष्टो न तु मम । तस्मै अचिंत्यमायेश्वराय नमः ॥ ११ ॥ अहो किमेतत्प्रलपसि तव बुद्धिभेदो यतो जातस्तं कथयेत्याक्षिप्तः संस्तत्प्रसादादेवेत्युत्तरमाह । स इति त्रिभिः । स भगवान्यदाऽनुव्रतोऽनुकूलो भवति तदा पशूनामविवेकिनामिव बुद्धिर्भेदगताऽसती

निंद्यो भविष्यतीति भावः ॥ ५ ॥ परपक्षे शत्रुपक्षे । बालोऽयं यो यद्धारयति तदेव धत्तेऽस्य को दोषस्तद्यारभ्य नारदाद्या वैष्णवा नात्र प्रवेशनीया इत्यादिदेशेति भावः ॥ ६ ॥ अत्राक्षिपति—नन्विति । विधार्यतां रक्ष्यताम् ॥ ७ ॥ प्रशस्य श्लक्ष्णयेति । अन्यथा बालोऽयं भीत्या स्वोपदेशकं वैष्णवं न वक्ष्यतीति भावः ॥ ८ ॥ भद्रं त इति । त्वदिष्टं मोदकादिकं दास्याम इति भावः । हे वत्सेति । प्रियत्वाभिप्रायेणोक्तम् ॥ ९ ॥ भण्यतामिति । यद्ययं कस्यचिद्वैष्णवस्य नाम गृह्णाति तदा तं वैष्णवं ज्ञात्वा राज्ञः सभां नीत्वा घातयाम इति भावः । कुलनंदनेति । "कुलं पवित्रं जननी कृतार्था येषां कुले वैष्णवसंततिः स्यात्" इत्युक्तेः । 'हतं कुलमवैष्णवम्' इति पाद्मोक्तेश्च । स्वयं भगवान्नृसिंहदेवोऽपि वक्ष्यति "यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः" इति वास्तवोभिप्रायः ॥ १० ॥ अहो अमी मूढा इत्थं संसारे पापच्यमाना मां मूढबालकं जानंतीति मनसि विभाव्याह—परः परपक्षः स्वः स्वपक्ष इति असद्ग्राहः असदाग्रहः श्लेषेण पुंसां संसारसिंधुपतितानां ग्राहो हिंस्रजलजंतुविशेषः कृतः । मायया सृष्टः दृष्टः पूर्वमनुमित एवासीत्संप्रति तु प्रत्यक्षीकृत इत्यर्थः । अहो प्रतिक्षणं यूयं चर्वथैवेति भावः ॥ ११ ॥ बुद्धिभेदोऽयं तव कुत इत्यस्योत्तरमाह—विभिद्यते विशेषेण भिद्यते विदीर्य्यते । पशुबुद्धिरेव का तत्राह—अन्य एषोऽस्मद्विपक्षस्तथान्योऽहमेतस्य घातयितेति भेदं गताऽसती असाध्वी । "न हि गोप्यं हि साधूनाममित्रोदास्तविद्विषाम्" इति भगवदुक्तेः । वस्तुतस्त्वात्मदृष्ट्या सर्वजीवानामैकरूप्याद्देहदृष्ट्यापि सर्वदेहानां पञ्चभूतात्मकत्वाद्भेदो नास्त्येवेति भावः । संदर्भस्तु—यदेति । कथंचिन्महतः प्रसंगेन तत्सांमुख्ये सति यदा स हरिरनुकूलः स्यात्तदा पूर्वोक्ता पशुबुद्धिर्विभिद्यते नश्यति तां विवृत्य दर्शयति—अन्य इति । अन्योसावन्योहमस्मीति "न स वेद यथा पशुः" इति श्रुतेः । अर्थकामशास्त्रानुसारिणां भक्ता

स एष आत्मा स्वपरेत्यबुद्धिभिर्दुरत्ययानुक्रमणो निरूप्यते ॥ मुह्यंति यद्वर्त्मनि वेदवादिनो ब्रह्मादयो ह्येष भिनत्ति मे मतिम् ॥ १३ ॥ यथा भ्राम्यत्ययो ब्रह्मन्स्वयमाकर्षसन्निधौ ॥ तथा मे भिद्यते चेतश्चक्रपाणेर्यदृच्छया ॥१४॥ नारद उवाच ॥ एतावद्ब्राह्मणायोक्त्वा विरराम महामतिः ॥ तं निर्भर्त्स्याथ कुपितः स दीनो राजसेवकः ॥ १५ ॥ आनीयतामरे वेत्रमस्माकमयशस्करः ॥ कुलाङ्गारस्य दुर्बुद्धेश्चतुर्थोऽस्योदितो दमः ॥ १६ ॥ दैतेयचंदनवने जातोऽयं कंटकद्रुमः ॥ यन्मूलोन्मूलपरशोर्विष्णोर्नालायितोऽर्भकः ॥ १७ ॥ इति तं विविधोपायैर्भीषयंस्तर्जनादिभिः ॥ प्रह्रादं ग्राहयामास त्रिवर्गस्योपपादनम् ॥ १८ ॥

मिथ्यासंसारविषया विभिद्यतेऽभिन्नात्मनिष्ठा भवति ॥ १२ ॥ भेदस्यासत्त्वं दर्शयन्नाह । स एष परमात्मैव स्वः पर इति चाविवेकिभिर्निरूप्यते । युक्तं चैतत् । यतो यस्य वर्त्मनि जिज्ञासायां ब्रह्मादयोऽपि मुह्यंति । तत्र हेतुः । दुरत्ययं दुर्घटमनुक्रमणमनुचरितमनुवर्णनं वा यस्य ॥ १३ ॥ ननु निर्विकारस्य कथं मतिभेदकत्वं तत्राह । यथेति । यथाऽयो लोहमाकर्षस्यायस्कांतस्य समीपे स्वयमेव भ्रमति तथा मे चेतश्चक्रपाणेः सन्निधौ । तव कुतो जातस्तत्सन्निधिस्तत्राह । यदृच्छयेति । कस्य तपोदानादेः फलमेतदिति न ज्ञायत इत्यर्थः ॥ १४ ॥ राजसेवक उवाचेति शेषः ॥ १५ ॥ अरे वेत्रं कशाऽऽनीयताम् । सामदानभेददंडानां मध्ये चतुर्थो दमो दंडोऽस्य दुर्बुद्धेरुदित उक्तः शास्त्रेषु । दुर्बुद्धित्वे हेतुः । कुलांगारस्य कुलस्यांगारवन्नाशहेतोः ॥ १६ ॥ तत्कुतस्तत्राह । दैतेया एव चंदनद्रुमास्तेषां वनेऽयं कंटकद्रुमतुल्यो जातस्तदेवाह । यस्य दैतेयचंदनवनस्य मूलोन्मूलने परशुस्थानीयस्य विष्णोरयमर्भक एव नालायितो नालमिवाचरत् । यथा परशोश्छेदकत्वे बब्बूलादिद्रुमनिर्मितो दंडः सहकारी तं विना छेदनासंभवात्तथाऽयं विष्णोर्दैत्यमूलोच्छेदे हेतुर्जात इत्यर्थः ॥ १७ ॥ इति तं प्रह्रादं भीषयन्धर्मार्थकामवर्गस्य प्रतिपादकं शास्त्रमध्यापयामास ॥ १८ ॥

ननुगतानां नश्वरे संघाते एवात्मतामननादिति भावः ॥१२॥ तत्र मोहे । विश्वनाथः—उक्तलक्षणपशुबुद्धिमतां सुदुर्ज्ञेय इत्याह—स इति । एष परमात्मा स्वः स्वपक्षः परो विपक्ष इति कुत्सिता बुद्धिर्येषां तैर्दुरन्वयं दुर्गमम् । अनुक्रमणमनुसरणं यस्य सः । न च सुबुद्धिभिः शास्त्रज्ञैः सुगममेव तदनुसरणमिति वाच्यमित्याह—यद्वर्त्मनि यत्प्राप्तिमार्गेऽनुसरणरूपे भक्तियोगे वेदवादिनोऽपि वेदार्थतात्पर्यविवेचका अपि मुह्यंति यूयं ज्ञानलवदुर्विदग्धाः किमुतेति भावः । एष भगवान्मे मतिं भिनत्ति युष्मन्मतिभ्यः सकाशान्मम मतिं भिन्नां करोति ॥ १३ ॥ इत्यर्थ इति । अहो मे भाग्यमिति भावः । किञ्च स एव मतेर्भेदः किमाकार इति चेत्तत्राह—यथाय इति । अयस्कांतश्चुंबकमणिः । भिद्यते युष्मच्चेतोभ्यः सकाशाद्भिन्नं भवति । यदृच्छयेति । नात्र सत्कर्मतपोदानादेर्हेतुत्वं संभवतीत्यर्थः । अयमर्थः—अयस्कांतेन स्वशक्त्यैव लोहमाकृष्य संयुक्ती क्रियते तत्र किमपि कारणं प्रयोजनं नास्तीत्ययस्कांतस्य स स्वभाव एव यथा तथैव चक्रपाणेरपि स्वभाव एवायं यत्कृपापरवशतया स्वभक्तस्य चेतसः स्वस्मिन्नाकर्षणमिति तत्र किं मम स्वातंत्र्यमस्तीति भावः । 'यदृच्छा स्वैरिता' इत्यमरः ॥ १४ ॥ १५ ॥ १६ ॥ तत् नाशहेतुत्वम् । कुत इति । ''नालो दंडे पद्मदंडे कमले नलसंहतौ'' इत्यभिधानात् । इत्यर्थ इति । न हि गृहभेदं विना कश्चित्पराजीयत इति भावः ॥ १७ ॥ आदिना ताडनादि

तत एनं गुरुर्ज्ञात्वा ज्ञातज्ञेयचतुष्टयम् ॥ दैत्येंद्रं दर्शयामास मातृमृष्टमलंकृतम् ॥ १९ ॥ पादयोः पतितं बालं प्रतिनंद्याशिषासुरः ॥ परिष्वज्य चिरं दोर्भ्यां परमामाप निर्वृतिम् ॥ २० ॥ आरोप्यांकमवघ्राय मूर्धन्यश्रुकलांबुभिः ॥ आसिंचन् विकसद्वक्रमिदमाह युधिष्ठिर ॥ २१ ॥ हिरण्यकशिपुरुवाच ॥ प्रह्लादानूच्यतां तात स्वधीतं किंचिदुत्तमम् ॥ कालेनैतावतायुष्मन् यदशिक्षद् गुरोर्भवान् ॥ २२ ॥ प्रह्लाद उवाच ॥ श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम् ॥ २३ ॥ इति पुंसार्पिता विष्णौ भक्तिश्चेन्नवलक्षणा ॥ क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥ २४ ॥ निशम्यैतत् सुतवचो हिरण्यकशिपुस्तदा ॥ गुरुपुत्रमुवाचेदं रुषा प्रस्फुरिताधरः ॥ २५ ॥

ज्ञातं ज्ञेयमुपायानां चतुष्टयं सामदानादि येन तं दैत्येंद्रं प्रति मात्रा मृष्टमुद्वर्त्य स्नापितमलंकृतं भूषणातिलकादिभिः ॥१९॥२०॥२१॥२२॥ पादसेवनं परिचर्या । अर्चनं पूजा । दास्यं कर्मार्पणम् । सख्यं तद्विश्वासादि । आत्मनिवेदनं स्वशरीरसमर्पणम् । यथा विक्रीतस्य गवाश्वादेर्भरणपालनादिचिंता न क्रियते तथा देहं तस्मै समर्प्य तच्चिंतावर्जनमित्यर्थः ॥ २३ ॥ इति नवलक्षणानि यस्याः साऽधीतेन चेद्भगवति विष्णौ भक्तिः क्रियते सा चार्पितैव सती यदि क्रियेत न तु कृता सती पश्चादर्प्येत तदुत्तममधीतं

ग्रहः ॥ १८ ॥ ततस्त्रिवर्गाध्यापनानंतरम् ॥ १९ ॥ निर्वृतिं सुखम् ॥ २० ॥ युधिष्ठिरेति । यथा शत्रुजयार्थं युधि स्थिरोभूस्तथा हरिभक्तयशःश्रवणेऽपि स्थिरो भवेति भावः ॥२१॥ प्रकर्षेण ह्लादयति सुखयती त्यन्वर्थ नामतां दर्शयेति भावः । स्वसुतबुद्धिवैभवदर्शनादिना सुखं भवत्येवेति प्रसिद्धेः । तातेत्यायुष्मन्निति चातिप्रियत्वाद्बहुधा संबोधयन्नाह—स्वधीतमिति ॥ २२ ॥ इत्यर्थ इति । स्वदेहस्य तदनुकूलीकरणमिति भावः ॥२३॥ अत्र संदर्भः—श्रवणमिति युग्मकम् । तत्र श्रवणं नाम रूपगुणपरिकरलीलामयशब्दानां श्रोत्रस्पर्शः । एवं कीर्त्तनश्रवणयोरपि क्रमो ज्ञेयः । स्मरणं यत्किञ्चिन्मनसाऽनुसंधानम् । पादसेवनं देशकालाद्युचितपरिचर्या । अर्चनं विष्णुपूजा । वंदनं नमस्कारः । दास्यं तद्दासोऽस्मीत्यभिमानः । सख्यं बंधुभावेन तदीयहिताशंसनम् । आत्मनिवेदनं देहादिशुद्धात्मपर्यंतस्य सर्वतोभावेन तस्मिन्नेवार्पणमिति नव लक्षणानि यस्याः सा भगवति तद्विषयिका अद्धा साक्षाद्रूपा न तु कर्माद्यर्पणरूपपरंपराभक्तिरियं तत्रापि श्रीविष्णावेवार्पिता तदर्थमेवेदमिति भाविता न तु धर्मार्थादिष्वर्पिता एवमेवंभूता चेत्क्रियते तदा तेन कर्त्रा यदधीतं तदुत्तमं मन्य इत्यर्थः । तथा च श्रीगोपालतापिनी श्रुतिः—“भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनःकल्पनमेतदेव नैष्कर्म्यम्” इति । अत्र नवलक्षणसमुच्चयोऽनावश्यकः एकेनैवांगेन साध्याव्यभिचारश्रवणात् । तथा हि—“विष्णोःस्तु श्रवणे परीक्षिदभवद्वैयासिकिः कीर्त्तने प्रह्लादः स्मरणे तदंघ्रिभजने लक्ष्मीः पृथुः पूजने । अक्रूरस्त्वभिवंदनेऽथ हनुमान्दास्येऽथ सख्येऽर्जुनः सर्वस्वात्मनिवेदने बलिरभूत्कैवल्यमेषां पदम् ॥ ” इति प्रबोधचंद्रोदयटीकायाम् । क्वचिदन्यांगमिश्रणं तु तथापि भिन्नश्रद्धारुचित्वात् । ततो नवलक्षणशब्देन सामान्योक्त्या तन्मात्रानुष्ठानं विधीयत इति ज्ञेयम् । नवलक्षणत्वं चास्या अन्येषामप्यंगानां तदंतर्भावादुक्तम् । किञ्चिच्चात्र विशिष्य लिख्यते—तदेवं नामादिश्रवणभक्त्यंगक्रमः । तत्र यद्यप्येकतरेणापि व्युत्क्रमेणापि सिद्धिर्भवत्येव तथापि प्रथमं नाम्नः श्रवणमंतःकरणशुद्ध्यर्थमपेक्ष्यं शुद्धे चांतःकरणे रूपश्रवणेन तदुदययोग्यता भवति सम्यगुदिते च रूपे गुणानां स्फुरणं संपद्येत संपन्ने च गुणानां स्फुरणे परिकरवैशिष्ट्येन तद्वैशिष्ट्यं संपद्यते ततस्तेषु नामरूपगुणपरिकरेषु सम्यक्स्फुरितेषु लीलानां स्फुरणं सुष्ठु भवतीत्यभिप्रेत्य साधनक्रमो लिखितः । एवं कीर्त्तनस्मरणयोश्च ज्ञेयम् । इदं च श्रवणं श्रीमहन्मुखरितं मन्माहात्म्यं ज्ञातरुचीनां परमसुखदं तच्च द्विविधं महदाविर्भावितं महत्कीर्त्यमानं च । तत्रापि श्रवणे श्रीभागवतश्रवणं परमश्रेष्ठं तस्य तादृशप्रभावमयशब्दात्मकत्वात्परमरसमयत्वाच्च तत्र ‘मूर्त्याभिमतयात्मनः’ इतिवन्निजाभीष्टनामादिश्रवणं तु मुहुरावर्णयितव्यम् । तत्रापि सवासनमहानुभावमुखात्सर्वस्य श्रीकृष्णनामादिश्रवणं तु परमभाग्यादेव संपद्यते तस्य पूर्णभगवत्त्वादिति । एवं संकीर्त्तनादिष्वप्यनुसंधेयम् । तत्र

यत्स्वयं संप्रति कीर्त्यते तदपि श्रीशुकदेवादिमहत्कीर्त्तितचरत्वेनानुसंधाय कीर्त्तनीयमिति तदेवं श्रवणं दर्शितं तस्य कीर्त्तनादितः पूर्वत्वं तद्विना तत्तदज्ञानात् । विशेषतश्च यदि साक्षादेव महत्कृतस्य कीर्त्तनस्य श्रवणभाग्यं संपद्यते तदैव स्वयं पृथक्कीर्त्तनीयमिति तत्प्राधान्यात् । एवमेवोक्तम् ' तद्वाग्विसर्गः ' इत्यादौ टीकाकृद्भिः । यत् यानि नामानि वक्तरि सति शृण्वंति श्रोतरि सति गृणंति अन्यदा तु स्वयमेव गायंतीति । अथातः कीर्त्तनं पूर्ववत् पूर्ववन्नामादिक्रमो ज्ञेयः । नामकीर्त्तनं चेदमुच्चैरेव प्रशस्तम् । ' नामान्यनंतस्य हतत्रपः पठन् ' इत्यादौ । अत्र यथोपदिष्टं कलियुगपावनावतारेण श्रीभगवता " तृणादपि सुनीचेन तरोरपि तितिक्षुणा । अमानिना मानदेन कीर्त्तनीयः सदा हरिः " इति । " इयं च कीर्त्तनाख्या भक्तिर्भगवतोद्रव्यजातिगुणक्रिया दीनजनैकविषयाऽपारकरुणामया " इति श्रुतिपुराणादिविश्रुतिः । कलौ तदीनत्वं यथा ब्रह्मवैवर्त्ते—" अतः कलौ तपोयोगविद्यायज्ञादिकाः क्रियाः । सांगा भवंति न कृताः कुशलैरपि देहिभिः ॥ " इति । अत एव कलौ स्वभावत एवातिदीनेषु लोकेष्वाविर्भूयताननायासेनैव तत्तद्युगगतमहासाधनानां सर्वमेव फलं ददाना सा कृतार्थयति । यत एव कलौ भगवतो विशेषतश्च संतोषो भवति । अत्र कलिप्रसंगेन कीर्त्तनस्य गुणोत्कर्ष इति वक्तव्यं भक्तिमात्रे कालदेशादिनियमस्य निषिद्धत्वात् । तस्मात्सर्वत्रैव युगे श्रीमत्कीर्त्तनस्य समानमेव सामर्थ्यं कलौ तु भगवता कृपया तद्ग्राह्यमित्यपेक्षयैव तत्तत्प्रशंसेति स्थितम् । अत एव यद्यन्या भक्तिः कलौ कर्त्तव्या तदा तत्संयोगेनैवेत्युक्तम् । " यज्ञैः संकीर्त्तनप्रायैर्यजंति हि सुमेधसः " इति । अत्र च स्वतंत्रमेव नामकीर्त्तनमत्यंतप्रशस्तम् । " हरेर्नामहरेर्नामहरेर्नामैव केवलम् । कलौनास्त्येवनास्त्येवनास्त्येव गतिरन्यथा ॥ " इत्यादौ । अत्र पाद्मोक्ता दशापराधास्त्याज्याः यथा सनत्कुमारवाक्ये " सर्वापराधकृदपि मुच्यते हरिसंश्रयः । हरेरप्यपराधान्यः कुर्याद्द्विपदपांसनः ॥ नामाश्रयः कदाचित्स्यात्तरत्येव स नामतः । नाम्नोऽपि सर्वसुहृदो ह्यपराधात्पतत्यधः ॥ " अपराधाश्च संक्षिप्य लिख्यंते । यथा सतां निन्दा १ । श्रीविष्णोः सकाशाच्छिवनामादेः स्वातंत्र्यमननम् २ । गुर्ववज्ञा ३ । श्रुतितदनुगतशास्त्रनिंदनम् ४ । हरिनाममहिम्नि अर्थवादमात्रमिति मननम् ५ । तत्र प्रकारांतरेणार्थकल्पनम् ६ । नामबलेन पापे प्रवृत्तिः ७ । अन्यशुभक्रियाभिर्नामसाम्यमननम् ८ । अश्रद्दधाने विमुखेऽप्यशृण्वति नामोपदेशः ९ । नाममाहात्म्ये श्रुतेऽप्यप्रीतिरिति १० । एतेषामपराधानामनन्यप्रायश्चित्तं चोक्तं तत्रैव " नामापराधयुक्तानां नामान्येव हरंत्यघम् । अविश्रांतप्रयुक्तानि तान्येवार्थकराणि च " इति । सत्स्वपराधे तु तत्संतोषणार्थमेव संततनामकीर्त्तनादिकं समुचितम् । अंबरीषचरितादौ तदेकक्षम्यत्वे नामापराधानां दर्शनात् । उक्तं च नामकौमुद्याम् " महदपराधस्य भोग एव निवर्त्तकस्तदनुग्रहो वा " इति । अत एवोक्तं श्रीशिवं प्रति दक्षेण " योऽसौ मया विदिततत्त्वदृशा सभायाम् " इत्यादि । अस्मिन्कीर्त्तने निजदैन्यनिजाभीष्टविज्ञप्तिस्तवपाठावप्यंतर्भाव्यौ । तथात्र श्रीभागवतरीत्थतनामादिकीर्त्तनं तु पूर्ववदन्यदीयनामादिकीर्त्तनादाधिकं ज्ञेयम् । अथ कीर्त्तनादिभिः शुद्धांतःकरणश्चेत् 'एतन्निर्विद्यमानानाम्' इत्याद्युक्तत्वान्नामकीर्त्तनापरित्यागेन स्मरणं कुर्यात् । तदेव नामादिसंबंधित्वेन बहुविधं भवति । तच्च पंचविधं यत्किञ्चिदनुसंधानं स्मरणं सर्वतश्चित्तमाकृष्य सामान्याकारे मनोधारणं धारणाविशेषतो रूपादिचिंतनं ध्यानम् । अमृतधारावदवच्छिन्नं तत् ध्रुवानुस्मृतिः ध्येयमात्रस्फुरणं समाधिरिति क्वचिल्लीलादियुक्ते तस्मिन्नन्या स्फूर्त्तिः समाधिः स्यात् एतद्रूपोदासादिभक्तानां पूर्वं तु प्रायः शांतभक्तानाम् । अथ रुचिः शक्तिश्च चेत्तदपरित्यागेन पादसेवा च कर्त्तव्या सेवा स्मरणसिद्ध्यर्थं सा कैश्चित्क्रियते पादसेवायां पादशब्दो भक्त्यैव निर्दिष्टः ततः सेवायां सादरत्वं विधीयते । अस्य श्रीमूर्त्तिदर्शनस्पर्शनपरिक्रमानुव्रजनभगवन्मंदिरगंगापुरुषोत्तमद्वारकामथुरादितदीयतीर्थस्थानगमनादयोप्यंतर्भाव्याः । तत्परिकरप्रायत्वाद्गंगादीनां परमभागवतत्वपक्षे तु तत्सेवादिकं महत्सेवादावेव पर्यवस्यति । तुलसीसेवा च तस्याश्चैवांतरभाव्या ततो महतामिव गंगादीनां भक्तिनिदानत्वम् । अथार्चनम् । तन्मार्गे श्रद्धा चेदाश्रितमंत्रगुरुस्तं विशेषतः पृच्छेत् यद्यपि श्रीभागवतमते पञ्चरात्रादिवदर्चनं नावश्यकं तद्विनापि श्रवणादीनामेकतरेणापि पुरुषार्थसिद्धेरभिहितत्वात् । अत्र पूर्वोक्तप्रबोधचंद्रोदयटीकापद्यमनुसंधेयम् । तथापि श्रीनारदादिवर्त्मानुसरद्भिः श्रीभगवता सह संबंधविशेषं दीक्षाविधानेन श्रीगुरुचरणसंपादितं चिकीर्षद्भिः कृतायां दीक्षायामर्चनमवश्यं क्रियेतैव । ये तु संपत्तिमंतो गृहस्थास्तेषां त्वर्चनमार्ग एव मुख्यः तदकृत्वा हि निष्किञ्चनवत्केवलं स्मरणादिनिष्ठत्वे वित्तशाठ्यप्रतिपत्तिः स्यात् । परद्वारा संपादनं व्यवहारनिष्ठत्वस्यालसत्वस्य वा प्रतिपादकं ततोऽश्रद्धामयत्वाद्धीनमेव तत् । किञ्च गृहस्थानां परिचर्यामार्गे द्रव्यसाध्यतया तदर्चनमार्गादविशेषेण प्राप्तेऽप्यर्चनमार्गस्य प्राधान्यम् अत्यंतविधिसापेक्षत्वात्तेषाम् । तथा गार्हस्थ्यधर्मस्य देवतायागरूपस्य शाखापल्लवादिसेकस्थानीयस्य मूलसेकरूपं तदर्चनमित्यपि । तदकरणे महान्दोषः दीक्षितानां च सर्वेषां तदकरणे नरकपातः श्रूयते । अशक्तमयोग्यं प्रति चाग्नेये "पूजितं पूजमानं वा यः

पश्येद्भक्तितो हरिम् । श्रद्धया मोदयेद्यस्तु सोऽपि योगफलं लभेत् ॥'' इति योगोऽत्र पांचरात्राद्युक्तः क्रियायोगः । किञ्चास्मिन्नर्चनमार्गेऽवश्यं विधिरपेक्षणीयः । तत्र वैष्णवसंप्रदाय एव प्रमाणम् । ननु भगवन्नामात्मका एव मंत्रास्तत्र विशेषेण नमःशब्दाद्यलंकृताः श्रीभगवता श्रीमहर्षिभिश्चाहितशक्तिविशेषाः श्रीभगवता सममात्मसंबंधविशेषप्रतिपादकाश्च तत्र केवलानि भगवन्नामानि निरपेक्षेणैव परमपुरुषार्थपर्यंतफलदानसमर्थानि । ततो मंत्रेषु नामतोऽप्यधिकसामर्थ्ये लब्धे कथं दीक्षाद्यपेक्षोच्यते, यद्यपि स्वरूपतो नास्ति तथापि प्रायः स्वभावतो देहादिसंबंधेन कदर्यशीलानां विक्षिप्तचित्तानां जनानां तत्संकोचीकरणाय श्रीमहर्षिप्रभृतिभिरत्रार्चनमार्गे क्वचित् काचिन्मर्यादा स्थापितास्ति । ततस्तदुल्लंघने शास्त्रं प्रायश्चित्तत्वमुद्भावयति तत उभयमपि समंजसमिति । तदेतदर्चनं द्विविधम् । केवलं कर्ममिश्रञ्च । तयोः पूर्वं निरपेक्षाणां श्रद्धावतामुत्तरम् । व्यवहार चेष्टातिशयवत्ता यादृच्छिकभक्तानुष्ठानवत्तादिलक्षणलक्षितश्रद्धानां तथा तद्वैपरीत्यलक्षितश्रद्धानामपि प्रतिष्ठितानां भक्तिवार्त्तानभिज्ञबुद्धिषु साधरणवैदिककर्मानुष्ठानलोपोऽपि मा भूदिति लोकसंग्रहपराणां गृहस्थानां दार्शितम् । अस्यांगानि चागमादौ ज्ञेयानि । तथा श्रीकृष्णजन्माष्टमीकार्त्तिकादिव्रतैकादशीव्रतादिकमत्रैवांतर्भाव्यम् । अथास्मिन्पादसेवनार्चनमार्गेऽपराधास्त्याज्यास्ते च षष्ठस्कंधे नारायणवर्मव्याख्याने वर्णिता द्वात्रिंशत्संख्याः । वाराहे च येऽन्येऽपराधास्ते संक्षिप्य लिख्यंते–''राजान्नभक्षणं, ध्वांतागारे हरेः स्पर्शः, विधिं विना हर्य्युपसर्पणं, वाद्यं विना तद्वारोद्घाटनं, कुक्कुरदृष्टभक्ष्यसंग्रहः, अर्चने मौनभंगः, पूजाकाले विडुत्सर्गाय गमनं, गंधमाल्यादिकमदत्त्वा धूपनं, अनर्हपुष्पेण पूजनम्'' तथा ''अकृत्वा दंतकाष्ठं च कृत्वा निधुवनं तथा । स्पृष्ट्वा रजस्वलादीपं तथा मृतकमेव च ॥ रक्तं नीलमधौतं च पारक्यं मलिनं पटम् । परिधाय मृतं दृष्ट्वा विमुच्यापानमारुतम् ॥ क्रोधं कृत्वा श्मशानं च गत्वा भुक्त्वाप्यजीर्णभुक् । भुक्त्वा कुसुंभं पिण्याकं तैलाभ्यंगं विधाय च ॥ हरेः स्पर्शो हरेः कर्मकरणं पातकावहम् ॥'' तथा तत्रैवान्यत्र च भगवच्छास्त्रानादरेण तत्प्रतिपात्तिः, अन्यशास्त्रप्रवर्त्तनं, तदग्रे तांबूलचर्वणम् , ऐरंडपत्रस्थपुष्पैरर्चनम्, आसुरकाले पूजापीठे भूमौ चोपविश्य पूजनं, स्नपनकाले वामहस्तेन तत्स्पर्शः, पर्युषितैर्वा याचितैः पुष्पैरर्चनम्, पूजायां ष्ठीवनं, तस्यां स्वगर्वप्रतिपादनं, तिर्यक्पुंड्रधृतिः, अधौतपदत्वेऽपि तन्मंदिरप्रवेशः, अवैष्णवपक्वनिवेदनम् , अवैष्णवदृष्टौ पूजनं, विघ्नेशमपूजयित्वा कपालिनं दृष्ट्वा वा पूजनं, नखांभसा स्नपनं, घर्मांबुलिप्तत्वेऽपि पूजनमित्यादयः । अन्यत्र निर्माल्यलंघनभगवच्छपथादयोऽन्येपि बहवः । अथ तथापि प्रामादिके भगवदपराधे पुनर्भगवत्प्रसादनानि कर्त्तव्यानि । यथा स्कांदेऽवंतीखंडे श्रीव्यासवाक्यम्–''अहन्यहनि यो मर्त्यो गीताध्यायं पठेत्तु वै । द्वात्रिंशदपराधांस्तु क्षमते तस्य केशवः ॥'' इति । तत्रैव द्वारकामाहात्म्ये ''सहस्रनाममाहात्म्यं यः पठेच्छृणुयादपि । अपराधसहस्रैर्हि न स लिप्येत्कदाचन ॥'' इति । तत्रैव रेवाखंडे–''द्वादश्यां जागरे विष्णोर्यः पठेत्तुलसीस्तवम् । द्वात्रिंशदपराधान्हि क्षमते तस्य केशवः॥'' इति । तत्रैवान्यत्र–''तुलस्यारोपणं कार्यं श्रवणेन विशेषतः । अपराधसहस्राणि क्षमते पुरुषोत्तमः ॥'' इति । तत्रैवान्यत्र कार्त्तिकमाहात्म्ये–''तुलस्या कुरुते यस्तु शालग्रामशिलार्चनम् । द्वात्रिंशदपराधांस्तु क्षमते तस्य केशवः ॥'' इति । ब्रह्मपुराणे–''यः करोति हरेः पूजां कृष्णचक्रांकितो नरः । अपराधसहस्राणि नित्यं हरति केशवः ॥'' इति । अत्र द्विजपदानुपादानाच्चक्रांकितश्चतुर्थवर्ण एव ग्राह्यः । ''शंखचक्राद्यंकनं च गीतनृत्यादिकं तथा । एकजातेरयं धर्मो न जातु स्याद्द्विजन्मनः ॥ '' इति बृहन्नारदीये भगीरथं प्रति यमराजोक्तेः । आदिवाराहे ''संवत्सरस्य मध्ये तु तीर्थे शौकरके मम । कृतोपवासः स्नानेन गंगायां शुद्धिमाप्नुयात् ॥ मथुरायां तथाप्येवं सापराधः शुचिर्भवेत् । अनयोस्तीर्थयोरेकं यः सेवेत्सुकृती नरः ॥ सहस्रजन्मजनितानपराधाञ्जहाति सः ॥'' इति । कौशिकसंहितीयभागवतमाहात्म्ये च–''पूजानिच्छिद्रतावाप्त्यै विष्णोर्भागवतं मुने । पुराणं श्रीशुकेनोक्तं गंगायां यत्परीक्षिते ॥ तन्नित्यं वाचयेत्किञ्चित्तेन प्रीतो जनार्दनः । द्वात्रिंशदपराधांश्च क्षमते नात्र संशयः ॥ श्रीकृष्णपूजासंपूर्त्तिर्विना भागवतं न हि । विनापि श्रीहरेः पूजां श्रीभागवतपाठतः ॥ सांगपूजाफलं नित्यं जायते नात्र संशयः । कृष्णस्य वाङ्मयी मूर्त्तिः श्रीमद्भागवतं मुने ॥ पाठोस्य पूजनं सांगं देवदेवस्य शार्ङ्गिणः ॥ '' इति । किञ्चार्चनमार्गे क्वचिन्मानसपूजा विहितास्ति यथा पाद्मे उत्तरखंडे–''साधारणं हि सर्वेषां मानसेज्या नृणां प्रिया ॥ '' इति गौतमीये–''संन्यासिनां मुमुक्षूणां मानसोपहृतिः परम् '' इति । तन्महिमा यथा नारदपंचरात्रे श्रीनारायणवाक्ये–''अयं यो मानसो यागो जराव्याधिभयापहः'' इत्यादौ । ''यश्चैतत्परया भक्त्या सकृत्कुर्यान्महामते । क्रमोदितेन विधिना तस्य तुष्याम्यहं मुने ॥'' इति । एषा क्वचित्स्वतंत्रापि भवति । मनोमय्या मूर्त्तेरिष्टतमायाः स्वातंत्र्येण विधानात् । ''अर्चादौ हृदये वापि यथा लब्धोपचारकैः'' इत्याविर्होत्रवचने वाशब्दात् । अत्र ब्रह्मवैवर्त्तकथा च यथा–''प्रतिष्ठानपुरे कश्चिद्विप्र आसीत् । स च दरिद्रोऽपि कर्माधीनमात्मानं मन्यमानः शांत एवासीत् । स तु

सरलबुद्धिः कदाचिद्विप्रेंद्राणां सदसि वैष्णवान्धर्माच्छुश्राव । ते च धर्मा मनसापि सिद्ध्यंतीति श्रुत्वा दरिद्रः स्वयं तथैवाचरितुमारब्धवान् । ततश्च गोदावरीस्नानपूर्वकं नित्यं कर्म समाप्य शांतमतिर्भूत्वा विविक्तासन
प्राणायामादिपूर्वकं स्थिरीभूय मनसैवाभिमतां हरिमूर्त्तिं स्थापयित्वा स्वयं दुकूलादिकं परिधाय दृढं परिकरं बद्ध्वा तत्सदनं संमार्ज्य तां प्रणम्य च राजतगौरवर्णघटैः सर्वेषां गंगादितीर्थानां जलमाहृत्य तथा नानापरिचर्याद्र
व्याण्युपनीय तदीयस्नपनादिकमारार्तिकांतं महाराजोपचारं समाप्य दिनंदिनं सुखातिशयमाप्नुवन्नासीत् । तदेवं बहुषु कालेषु गतेषु कदाचिन्मनसैव घृतसहितं परमान्नं निर्माय सौवर्णपात्रे तद्भोजनार्थमुपस्थाप्य स्थितः ।
तप्ततया स्फुरिते तस्मिन्प्रविष्टमंगुष्ठयुग्मं दग्धं प्रतियन् हंत तदिदं दुष्टं जातमिति दुःखेन समाधिभंगेऽपि जाते दग्धांगुष्ठतया बहिरपि पीडितो बभूव । तदवधाय वैकुंठे समुपविष्टेन श्रीवैकुंठनाथेन हसता श्रीप्रभृति
भिस्तत्कारणं पृष्टेन च सता स्वनिकटं विमानेनानयामासे । तथाविधतया दर्शयामासे स्वनिकटं योग्यतया स्थापयामासे च । अथ वंदनम् । तच्च यद्यप्यर्चांगत्वेनापि वर्त्तते तथापि कीर्त्तनस्मरणवत्स्वातंत्र्येणापीत्यभिप्रेत्य पृथ
ग्विधीयते । एवमन्यत्रापि । वंदनस्य पृथग्विधानञ्चानंतगुणैश्वर्यश्रवणात् । तद्गुणानुसंधानपादसेवादौ विधृतदैन्यानां नमस्कारमात्रे कृताध्यवसायानामर्थे स एव नमस्कारस्तस्यार्चनत्वेनाप्यतिदिष्टः । नमस्कारेणापराधाश्चैते
परिहर्त्तव्या विष्णुस्मृत्यादिदृष्टया । किञ्च "एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामी न पुनर्भवाय ॥" इति स्मृतेः । ये खल्वेकहस्तकृतत्ववस्त्रावृतदेहत्वभगवत्त
दग्रपृष्ठवामभागांशतन्निकटगर्भमंदिरगतत्वादिमया अपराधास्ते नत्यैव नश्यंतीति । किञ्च "एकहस्तप्रणामश्च एका चैव प्रदक्षिणा । अकालदर्शनं विष्णोर्हंति पुण्यं पुराकृतम् ॥" । नारदीये "सकृद्वा न नमेद्यस्तु
विष्णवे शर्मकारिणे । शवोपमं विजानीयात्कदाचित्तेन नालपेत् ॥ " "भारः परं पट्टकिरीटजुष्टमप्युत्तमांगं न नमेन्मुकुंदम्" इत्युक्तेश्च । "वस्त्रप्रावृतदेहस्तु यो नरः प्रणमेत माम् । श्वित्री स जायते मूर्खः
सप्तजन्मनि भामिनि ॥" इति वाराहोक्तेः । "अग्रे पृष्ठे वामभागे समीपे गर्भमंदिरे । जपहोमनमस्कारान्न कुर्यात्केशवालये ॥ अग्रे मृत्युमवाप्नोति पृष्ठे त्वपचयः स्मृतः । वामभागे भवेन्नाशो
दक्षिणे सर्वकामदः ॥" इत्यपि तत्रैव । नमस्कारस्तु साष्टांग एव कार्य इति वक्ष्याम्येकादशव्याख्याने । " नमस्कारेण नश्यंति ह्यपराधा अनेकशः । जनार्दनस्य विधिना किं पुनः कीर्त्तनाद्धरेः ॥ "
इति पुराणांतरात् । अथ दास्यम्—"जन्मांतरसहस्रेषु यस्य स्यान्मतिरीदृशी । दासोहं वासुदेवस्य सर्वाँल्लोकान्स उद्धरेत् ॥ " इतीतिहाससमुच्चयोक्तलक्षणम् । अस्तु तावत्तत्तद्भजनप्रयासः
केवलतादृशत्वाभिमानेनापि सिद्धिर्भवतीत्यभिप्रेत्यैवोत्तरत्र निर्देशश्च । तस्यैतस्य कार्यभूतं परिचर्यादिकं केवलपरिचर्यारूपत्वे भेदो न स्यात् । अत एव सुदाम्नाप्युक्तम्—"दास्यं पुनर्जन्मनिजन्मनि स्यात् ॥ "
इति ' हरेर्दास्यं सुदुर्लभम् ' इति पुराणांतराच्च । अथ सख्यम् । यथाऽगस्त्यसंहितायाम्—" परिचर्यापराः केचित्प्रासादेषु च शेरते । मनुष्यमिव तं द्रष्टुं व्यवहर्त्तुं च बंधुवत् ॥ " इति । अत
एव ' यन्मित्रं परमानंदम् ' इत्यत्र मित्रपदविन्यासः कृतः । अस्य चोत्तरत्र पाठः प्रेमविस्रंभभावनामयत्वेन :दास्यादप्युत्तमत्वापेक्षयैव । किञ्च--परमेश्वरेऽपि यत्सख्यं विधीयते तन्नाश्चर्यम् ' नादेवो देवमर्चयेत् ' इति तद्भाव
स्यापि विधानश्रवणात् । किन्तु तद्भावस्तत्सेवाविरुद्ध इति भक्तैरुपेक्ष्यते सख्यं तु परमसेवानुकूलमित्युपादीयते इति । तदेतत्साक्षाद्भजनात्मकं दास्यं सख्यं च स्वामिचरणैरपि दर्शितमस्ति । " तस्यैव मे सौहृदसख्यमैत्री
दास्यं पुनर्जन्मनिजन्मनि स्यात् " इति श्रीदामविप्रवाक्ये । यथा श्रीकृष्णस्य भक्तवात्सल्यं दृष्ट्वा भक्तिं प्रार्थयते तस्येति सौहृदं प्रेम च सख्यं हिताशंसनं च मैत्री उपकारकत्वं दास्यं सेवकत्वं च तत्समाहारे एकवचनं तस्य
तत्संबंधि मे मम स्यान्न तु विभूतिरित्येतत् । अत्र दास्यसख्याभ्यां कर्मार्पणविश्वासौ न स्यातां साक्षाद्भक्तित्वाभावात् । कर्मार्पणस्य फलं भक्तिः विश्वासश्च भक्त्यभिनिवेशहेतुः'श्रवणं' कीर्त्तनम्' इत्यादौ विष्णोः श्रवणं विष्णोः
कीर्त्तनमिति । अथात्मनिवेदनम् । तत्कार्यं चात्मार्थं चेष्टाशून्यत्वं तन्नास्त्यात्मसाधनसाध्यत्वं तदर्थैकचेष्टामयत्वं च इदं स्वात्मार्पणं गोविक्रयवत् विक्रीतस्य गोर्वर्त्तनार्थं विक्रीतवता चेष्टा न क्रियते तस्य च श्रेयःसाधकस्तं
क्रीतवानेव स्यात् स च गौस्तस्यैव कर्म कुर्यान्न पुनर्विक्रीतवतोऽपीति । अत्र केचिद्देहार्पणमेवार्पणमिति मन्यंते यथा भक्तिविवेके"चिंतां कुर्यान्न रक्षायै विक्रीतस्य यथा पशोः । तथार्पयन्हरौ देहं विरमेदस्य रक्षणात् ॥" इति ।
केचिच्छुद्धक्षेत्रज्ञार्पणमेव यथा मयाहमेवार्पित इति । दत्तो मयाहमिति । ' यद्भगवान्स दत्त ' इतिवत् । केवलात्मनिवेदनं दानसमये बलिराजे दृश्यते । भावेषु मिश्रेषु दास्येनात्मनिवेदनं श्रीमदंबरीषे । प्रेयसीभावेन श्रीरु

ब्रह्मबंधो किमेतत्ते विपक्षं श्रयताऽसता ॥ असारं ग्राहितो बालो मामनादृत्य दुर्मते ॥ २६ ॥ संति ह्यसाधवो लोके दुर्मैत्राश्छद्मवेषिणः ॥ तेषामुदेत्यघं काले रोगः पातकिनामिव ॥ २७ ॥ गुरुपुत्र उवाच ॥ न मत्प्रणीतं न परप्रणीतं सुतो वदत्येष तवेंद्रशत्रो ॥ नैसर्गिकीयं मतिरस्य राजन्नियच्छ मन्युं कददाः स्म मा नः॥२८॥नारद उवाच ॥ गुरुणैवं प्रतिप्रोक्तो भूय आहासुरः सुतम्॥न चेद्गुरुमुखीयं ते कुतोऽभद्राऽसती मतिः॥२९॥ प्रह्लाद उवाच ॥ मतिर्न कृष्णे परतः स्वतो वा मिथोभिपद्येत गृहव्रतानाम् ॥ अदांतगोभिर्विशतां तमिस्रं पुनःपुनश्चर्वितचर्वणानाम् ॥ ३० ॥ न ते विदुः स्वार्थगतिं हि विष्णुं दुराशया ये बहिरर्थमानिनः ॥ अंधा यथांधैरुपनीयमाना वाचीशतंत्यामुरुदाम्नि बद्धाः ॥ ३१ ॥

मन्ये । न त्वस्माद्गुरोरधीतं शिक्षितं वा तथाविधं किंचिदस्तीति भावः ॥ २४ ॥ २५ ॥ न विद्यते सारं यत्र तदसारम् । न विद्यते सारं यस्मादिति वास्तवोऽर्थः ॥२६॥ मित्रत्वेन प्रवर्तमानस्यापि तव विरोधाचरणं नासंभावितमित्याह । संति हीति । दुष्टं मैत्रं मित्रत्वं येषां ते दुर्मैत्राः। रोग इति । "ब्रह्महा क्षयरोगी स्यात्सुरापः श्यावदन्तकः॥ स्वर्णहारी तु कुनखी दुश्चर्मा गुरुतल्पगः" इत्यादिस्मृत्युक्तपातकिनां काले नरकभोगानंतरं रोगो यथोदेति तथा तेषां दुर्जनानां सुजनत्वेन वर्तमानानामप्यघं विद्वेषादिकमुदेतीत्यर्थः ॥ २७ ॥ मत्प्रणीतं मया पाठितम् । नोऽस्मभ्यं कत्कुत्सितं दोषं मास्मादाः । अडागम आर्षः । मयि दोषारोपं मा कृथा इत्यर्थः । इंद्रशत्रो इति । न हि ब्राह्मणेषु तव कोप उचित इति भावः ॥ २८ ॥ गुरुमुखी गुरुवाक्यजनिता । हे अभद्र ॥ २९ ॥ आस्तामियं वार्ता भवादृशानां विषयासक्तानामत्रानधिकारादित्याशयेनाह । मतिरिति । परतो गुरोः स्वतो वा मिथो वाऽन्योन्यतो नाभिपद्येत न संपद्येत । केषाम् । गृहव्रतानां गृह एव व्रतं संकल्प इतिकृत्यचिंता येषाम् । अत एवादांतैरनुपरतैर्गोभिरिंद्रियैर्हेतुभूतैस्तमिस्रं संसारं विशताम् । तत्र चर्वितस्यैव चर्वणं येषाम् ॥ ३० ॥ ननु श्रीकृष्णस्य परमानंदस्वरूपत्वात्तेऽपि तन्निष्ठा एव किं न स्युरिति चेत्तदज्ञा

क्मिणीदेव्या । एवं सख्यादिनापि ज्ञेयम् ॥ २४ ॥ २५ ॥ हे ब्रह्मबंधो ब्राह्मणाभास हे दुर्मते इति संबुद्ध्योर्वास्तवोभिप्रायस्तु ब्रह्मैव श्रीकृष्ण एव बंधुः स्नेहविषयो यस्य तादृशस्त्वमसि न तु मयि स्नेहवानिति । दुष्टेषु दैत्येष्वपि मतिस्सुमतिर्यस्येति न तु केवलं सुवृत्तेष्वेवेति भावः ॥ २६ ॥ यद्वैरिपक्षवर्ती त्वमेतावद्दिनांते भद्रेणैव व्यक्तोभूस्तदद्यैव ते समुचितां दक्षिणां दास्यामीत्यर्थांतरन्यासेनाह—संतीति । इत्यर्थ इति । उप्तं बीजं कदाचित्सलिलसंयोगादिना प्ररोहत्येवेति भावः ॥ २७ ॥ इत्यर्थ इति । अस्य नैसर्गिकभक्तत्वादिति भावः । इति भाव इति । मयि दीने ब्राह्मणे ते कोपोऽयुक्त एवेत्याशयः ॥ २८ ॥ गुरुमुखादागता गुरुमुखी अण्णंतत्वेऽपि वृद्ध्यभाव आर्षः । हे अभद्रेति । अकारपदवाच्येन भद्रं यस्येति । यद्वा भद्रा सती सर्वोत्तमेति वास्तवोर्थः । न भाति पुमान् यैस्तानि अभानि पापानि द्रावयति निजसंगिनामपीत्यभद्रः ' दुःसंगदीनान्यमनःशमं व्यधात् ' इति न्यायेनेति भावः ॥ २९ ॥ विश्वनाथः—सत्यमियं मतिर्भवन्मतेऽसत्येव किंचैषा मतिर्भवादृशानां कुतोऽपि कदाचिदपि नोत्पत्स्यते इति वक्रोक्त्योपहसन्नाह—मतिरिति । परत ईदृशाद्गुरोः । अत एव गृहव्रतत्वादेव । ननु गृहव्रताः कदाचित्स्वर्गिणोऽपि भवंति तत्राह । स्वपराभ्यां चर्वितस्यैव पुनश्चर्वणं येषां तेषां वेश्यालयः स्वर्गो वा तुल्य एवेति भावः । या स्त्री चाद्यभुक्ता सैव ह्यो भुक्तापि श्वश्च तामेव भोक्तेति चर्वितचर्वणत्वेन पशुतुल्यानां कथं भगवन्मतिर्भवेदिति भावः ॥ ३० ॥ अत्राक्षिपति—नन्विति । तदज्ञानाच्छ्रीकृष्णस्वरूपाज्ञानात् । तत्र विष्ण्वज्ञाने । पुनराक्षिपति—नन्विति । इत्यर्थ इति । न ह्यंधपृष्ठग

नैषां मतिस्तावदुरुक्रमांघ्रिं स्पृशत्यनर्थापगमो यदर्थः ॥ महीयसां पादरजोभिषेकं निष्किंचनानां न वृणीत यावत् ॥ ३२ ॥ इत्युक्त्वोपरतं पुत्रं हिरण्यकशिपू रुषा ॥ अंधीकृतात्मा स्वोत्संगान्निरस्यत महीतले ॥ ३३ ॥ आहामर्षरुषाविष्टः कषायीभूतलोचनः ॥ वध्यतामाश्वऽयं वध्यो निःसारयत नैर्ऋताः ॥ ३४ ॥

नादित्याह । नेति । ये दुराशया विषयवासितांतःकरणास्ते हि विष्णुं न विदुः । तत्र हेतुः । स्वस्मिन्नेवार्थः पुरुषार्थो येषां तेषां गतिं गम्यम् । ननु तेऽपि गुरूपदेशाद्विष्णुं ज्ञास्यंति तत्राह । बहिर्विषयेष्वर्थो येषां ते बहिरर्थास्तानेव गुरुत्वेन मंतुं शीलं येषां तेतैर्धैरुपनयिमाना अंधा यथा पंथानं न विदुः किं तु गर्ते पतंति तथा तेऽपीशस्य तंत्र्यां दीर्घरज्ज्वां वेदलक्षणायामुरूणि दामानि ब्राह्मणादिनामानि यस्यां तस्यां काम्यैः कर्मभिर्बद्धा एव भवंतीत्यर्थः । तदुक्तम् । "विषयाविष्टचित्तानां विष्ण्वावेशः सुदूरतः ॥ वारुणीदिग्गतं वस्तु व्रजन्नैंद्रीं किमाप्नुयात्" इति ॥ ३१ ननु च "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतांतरात्मा" इत्यादिश्रुतिप्रतिपादितं विष्णुं कथं न विदुः कुतो वा तेषां तमिस्रप्रवेशस्तत्राह नैषामिति । निष्किंचनानां निरस्तविषयाभिमानानां महत्तमानां पादरजसाऽभिषेकं यावन्न वृणीत तावच्छ्रुतिवाक्यतो जाताऽप्येषां मतिरुरुक्रमस्यांघ्रिं न स्पृशति न प्राप्नोति । असंभावनादिभिर्विहन्यत इत्यर्थः । अनर्थस्य संसारस्यापगमो यदर्थो यस्या अंघ्रिस्पर्शिन्या मतेरर्थः प्रयोजनम् । महदनुग्रहाभावान्न तत्त्वनिश्चयो नापि मोक्षस्तेषामित्यर्थः ॥ ३२ ॥ निरस्यत चिक्षेप ॥ ३३ ॥ अमर्षोऽसहनं तेन सहितया रुषाऽऽविष्टो व्याप्तः कषायीभूते आताम्रे लोचने

तांधानां कदाचिदपि सुपंथा लभ्यते किन्तु पतनमेवेति भावः । अत्र प्रमाणमाह—तदुक्तमिति । वारुणीदिग्गतं पश्चिमायां स्थितं द्वारकापुरं किमैन्द्रीं व्रजन्पूर्वां गच्छन्प्राप्नोति नेत्यर्थः । अत्र विश्वनाथः—ननु रे मूढ मामिंद्रादिवंदितपदांबुपीठं पितरमपि वक्रोक्तिविषयी कुरुषे । शृणु रे मूढ शृणु शुक्राचार्यस्य शिष्या महाविद्वांसस्त्वद्गुरवः किं सर्वशास्त्रतात्पर्य्यं न जानंति यतस्तेभ्योऽधीतमर्थं त्वन्न साधु मन्यस इत्यत आह—नेति । ते स्वस्यार्थरूपां गतिं न विदुः किंत्वनर्थरूपां गतिं स्वर्गादिकामेव जानंतीति भावः । यतो दुराशया दुष्टांतःकरणा बहिर्विषयसुखमनर्थमेवार्थं मंतुं शीलं येषां ते । अतस्त एव यदि विष्णुं न जानंति कथं तच्छिष्या ज्ञास्यंतीति सदृष्टांतमाह—अंधैरिति । अंधोपदिष्टमार्गोऽन्धो यथा गर्ते पतति तथैव वाचि बद्धा एव भवंतीत्यर्थः ॥ ३१ ॥ अत्राक्षिपति—नन्विति । तमिस्रप्रवेशो नरकप्रवेशः । इत्यर्थ इति । असंभावनाविपरीतसंभावनादिकं हि सद्गुरूपदेशं विना न निवर्त्तते तथा सत्युपदिष्टमप्यर्थं गृहीतं न शक्नोतीति भावः । इत्यर्थ इति । "भवापवर्गो भ्रमतो यदा भवेज्जनस्य तर्ह्यच्युतसत्समागमः । सत्संगमो यर्हि तदैव सद्गतौ परावरेशे त्वयि जायते रतिः॥" इति श्रीदशमेऽक्रूरेण वक्ष्यमाणत्वादिति भावः । अत्र विश्वनाथः—ननु च यदि विष्णुरेव स्वार्थरूपा गतिस्तदा त्वद्गुरूणां सर्वशास्त्रज्ञानां मतिर्विष्णुनिष्ठैवोत्पद्येतेत्यतस्तेषां विष्णुनिष्ठत्वगतित्वाभावादेव विष्णुभक्तिरशास्त्रीयेत्यनुमीयते इत्यत आह—नैषामिति । निष्किंचनानां 'मत्कृते त्यक्तकर्माणस्त्यक्तस्वजनबांधवाः' इति भगवद्वाक्यविश्वासात् त्यक्तव्यावहारिकवित्तपुत्रकलत्राभिलाषकर्मज्ञानादीनां भक्तिमात्रैकव्यसनत्वेन महीयसां पादरजसा स्वस्य वैष्णवत्वेनाभिषेकं यावन्न वृणीत तावन्मतिरुरुक्रमांघ्रिं न स्पृशति "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशंते महात्मनः ॥" इति । "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इत्यादिश्रुतिभ्यः । अनर्थस्य संसारस्यापगमो यदर्थो यस्यांघ्रिस्पर्शिन्या मतेरर्थः प्रयोजनमानुषंगिकं फलं मुख्यं फलं तूरुक्रमांघ्रिस्पर्शः स एव ॥ ३२ ॥ ३३ ॥ नैर्ऋता इति । निर्गता ऋता कृपा

अयं मे भ्रातृहा सोयं हित्वा स्वान् सुहृदोऽधमः ॥ पितृव्यहंतुर्यः पादौ विष्णोर्दासवदर्चति ॥ ३५ ॥ विष्णोर्वा साध्वसौ किं नु करिष्यत्यसमंजसः ॥ सौहृदं दुस्त्यजं पित्रोरहाद्यः पंचहायनः ॥ ३६ ॥ परोप्यपत्यं हितकृद्यथौषधं स्वदेहजो प्यामयवत् सुतोऽहितः ॥ छिंद्यात् तदंगं यदुतात्मनोऽहितं शेषं सुखं जीवति यद्विवर्जनात् ॥ ३७ ॥ सर्वैरुपायैर्हंतव्यः संभोजशयनासनैः ॥ सुहृल्लिंगधरः शत्रुर्मुनेर्दुष्टमिवेंद्रियम् ॥ ३८ ॥ नैर्ऋतास्ते समादिष्टा भर्त्रा वै शूलपाणयः ॥ तिग्मदंष्ट्रकरालास्यास्ताम्रश्मश्रुशिरोरुहाः ॥ ३९ ॥ नदंतो भैरवान् नादाञ्छिंधि भिंधीति वादिनः ॥ आसीनं चाहनञ्छूलैः प्रह्लादं सर्वमर्मसु ॥ ४० ॥ परे ब्रह्मण्यनिर्देश्ये भगवत्यखिलात्मनि ॥ युक्तात्मन्यफला आसन्नपुण्यस्येव सत्क्रियाः ॥ ४१ ॥ प्रयासेऽपहते तस्मिन्दैत्येंद्रः परिशंकितः ॥ चकार तद्वधोपायान् निर्बंधेन युधिष्ठिर ॥ ४२ ॥

यस्य । हे नैर्ऋता राक्षसाः ॥ ३४ ॥ वध्यत्वे हेतुर्यतोऽयं मे भ्रातृहा । कुतः । यो विष्णोः पादौ दासवदर्चति तत्पक्षपातीत्यर्थः । अतः स एवायमित्यन्वयः ॥ ३५ ॥ अहो विष्णुरप्यविश्वसनीयं किमिति स्वीकृतवानित्याह । विष्णोर्वेति । अहाज्जहौ ॥ ३६ ॥ ननु तवायमपत्यं कथं वध्यस्तत्राह । परोप्यौषधमिव हितकृच्चेत्तर्ह्यपत्यमेव ज्ञेयः । सुतः स्वदेहजोऽप्यहितश्चेदामय इव ज्ञेयः । आस्तां ममतास्पदस्य कथा अंगमपि च यत्करचरणादि तदप्यात्मनोऽहितं चेच्छिंद्यादेवेत्यर्थः ॥ ३७ ॥ अतः सर्वैरुपायैर्हंतव्यः । संभोजो भोजनम् । भोजनादिषु विषादिप्रयोगैरित्यर्थः । यथा दुष्टमिंद्रियं मुनेः शत्रुः ॥ ३८ ॥ तिग्मास्तीक्ष्णा दंष्ट्रा येषां करालान्यास्यानि भयंकराणि मुखानि येषां ते च ते च । ताम्राणि श्मश्रूणि शिरोरुहाश्च येषाम् ॥ ३९ ॥ ४० ॥ परे ईश्वरे युक्तः समाहित आत्मा मनो यस्य तस्मिन्प्रह्लादे तेषां नैर्ऋतादीनां प्रहारा निष्फला आसन् जाताः । तत्र हेतवः । ब्रह्मणि निर्विकारेऽनिर्देश्येऽविषये भगवति निरतिशयैश्वर्येऽखिलात्मनि शस्त्रादीनामपि नियंतर्येवंभूते परेऽपुण्यस्य निर्दैवस्य सत्क्रिया

येभ्यस्तादृशा यूयमतो बालोयं राज्ञ इति मत्वाप्यस्योपरि कृपा न कार्येति भावः ॥ ३४ ॥ ननु विष्णुस्ते भ्रातृहा कथमयं तत्राह—सोयमिति । स विष्णुरयमेवेत्यर्थः । कुतः हित्वेत्यादि । दासवदिति । राजनंदनोऽपि भूत्वेत्यर्थः । विष्णुना स्वदासेषु स्वसारूप्यसमर्पणाद्विष्णुरेवायं वध्यतामिति भावः । 'न भक्तेभ्योंतरं मम' इति विष्णुनैवोक्तत्वात् ॥ ३५ ॥ ३६ ॥ यथौषधं तिक्तत्वेन त्याज्यमपि हितकृत्त्वाद् गृह्यते "हरीतकी मनुष्याणां मातेव हितकारिणी" इति वचनात् । इत्यर्थ इति । हितकृदेवापत्यादि बंधुर्ज्ञेयोऽहितकृत्तु शत्रुरेवातः स त्याज्य एवेति भावः ॥ ३७ ॥ यतोऽयं शत्रुरतो हेतोः । इत्यर्थ इति । इह समुपसर्गः कुत्सार्थकोऽस्ति तेन कुभोजनैरित्यायातं कुभोजनं हि विषादिसंबंधेनैव जायते नान्यथेति भावः । आदिना कुपथ्यादिग्रहः ॥ ३८ ॥ तिग्मदंष्ट्रास्तीक्ष्णदंष्ट्राः ॥ ३९ ॥ भैरवं भयजनकम् । सर्वमर्मसु सर्वांगगतमर्मस्थानेषु । यच्छेदेन जीवनं दुर्लभं तन्मर्ममिति कथ्यते ॥ ४० ॥ तत्र प्रहारनिष्फलत्वे "अग्निश्च शीततां यातो जलं च स्थलतां गतम् । शस्त्राणि पुष्पभावं च हरेर्नामानुकीर्त्तनात्" इति शैवोक्तिरत्रानुसंधेया ॥ ४१ ॥ निर्बंधो हठः । युधिष्ठिरेति ।

दिग्गजैर्दंदशूकैश्च अभिचारावपातनैः ॥ मायाभिः सन्निरोधैश्च गरदानैरभोजनैः ॥ ४३ ॥ हिमवाय्वग्निसलिलैः पर्वताक्रमणैरपि ॥ न शशाक यदा हंतुमपापमसुरः सुतम् ॥ चिंतां दीर्घतमां प्राप्तस्तत्कर्तुं नाभ्यपद्यत ॥ ४४ ॥ एष मे बह्वसाधूक्तो वधोपायाश्च निर्मिताः ॥ तैस्तैर्द्रोहैरसद्धर्मैर्मुक्तः स्वेनैव तेजसा ॥ ४५ ॥ वर्तमानोऽविदूरे वै बालोप्यजडधीरयम् ॥ न विस्मरति मेऽनार्यं शुनःशेप इव प्रभुः ॥ ४६ ॥ अप्रमेयाऽनुभावोऽयमकुतश्चिद्भयोऽमरः ॥ नूनमेतद्विरोधेन मृत्युर्मे भविता न वा ॥४७॥ इति तं चिंतया किंचिन्म्लानश्रियमधोमुखम् ॥ शंडामर्कावौशनसौ विविक्त इति होचतुः ॥ ४८ ॥ जितं त्वयैकेन जगत्त्रयं भ्रुवोर्विजृंभणत्रस्तसमस्तधिष्ण्यपम् ॥ न तस्य चिंत्यं तव नाथ चक्ष्महे न वै शिशूनां गुणदोषयोः पदम् ॥ ४९ ॥ इमं तु पाशैर्वरुणस्य बद्ध्वा निधेहि भीतो न पलायते यथा ॥ बुद्धिश्च पुंसो वयसार्यसेवया यावद्गुरुर्भार्गव आगमिष्यति ॥ ५० ॥

महोद्यमा इव ॥ ४१ ॥ ४२ ॥ दंदशूकैः सर्पैः । अभिचाराः कृत्यादयः । अवपातनानि गिरिशृंगादधःपातनानि तैः । मायाभिः शंबरनिर्मिताभिः अवटादिषु संनिरोधैश्च ॥ ४३ ॥ पर्वताक्रमणैः पर्वतानां तदुपरि क्षेपैः । बहुवचनैरभिचाराद्यावृत्तिं दर्शयति ॥ तद्धननं कर्तुं नाभ्यपद्यत न प्राप नाशक्नोदित्यर्थः ॥ ४४ ॥ चिंतामेवाह । एष इति त्रिभिः । मे मयाऽसाधु परुषं यथा भवति तथोक्तः । असद्धर्मैरपकारैरभिचारैर्वा ॥ ४५ ॥ अविदूरे समीपे वर्तमानोऽपि बालोऽप्ययमजडधीर्निर्भयचित्तो मेऽनार्यं मन्याय्यं शत्रुत्वं वा न विस्मरति । अजीगर्तस्य मध्यमपुत्रः शुनःशेपो नाम पितृभ्यां हरिश्चंद्राय विक्रीतः सन्यथा तयोरपकारमविस्मरंस्तद्विपक्षं विश्वामित्रमाश्रित्य गोत्रांतरमापन्नस्तद्वत् । यद्वा स्वभावापरित्यागे दृष्टांतः । शुनः शेपः पुच्छमिवेति ॥ ४६ ॥ अप्रमेयोऽपरिमेयोऽनुभावो यस्य । न कुतश्चिद्भयं यस्य । अमरो मृत्युशून्यश्च । न वा भविता अन्यथा मृत्युर्नैव भविष्यतीत्यर्थः ॥ ४७ ॥ औशनसावुशनसः पुत्रौ नीतिज्ञौ । विविक्त एकांते ॥ ४८ ॥ भ्रुवोर्विजृंभणेनैव त्रस्ता समस्ता धिष्ण्यपा लोकपाला यस्मिंस्तस्य तव चिंत्यं न चक्ष्महे न पश्यामः पदमालंबनं नैवास्ति यद्वा शिशूनां वृत्तं गुणदोषयोः पदं विषयो न भवतीत्यर्थः ॥ ४९ ॥ तथापि तु बंधनमस्योचितमि

यथा त्वदर्थं दुर्योधनादिकृते युद्धेऽपि त्वं स्थिरतामेव प्राप्तो न तु मृतिं तथायमपीति भावः ॥ ४२ ॥ बहुवचनैरभिचारादीनामावृत्तिः सूचिता । आदिना भूतावेशनादिग्रहः । 'गर्त्तावटौ भुवः श्वभ्रे' इत्यमरः । सन्निरोधैर निर्गमनैः ॥ ४३ ॥ हिमवाय्वग्निसलिलैः हिममध्यनिक्षेपैर्बहुततपवनमध्यस्थापनैर्वह्निमध्यस्थापनैर्मृतीकृत्य जले निक्षेपैश्चेति विवेकः ॥ ४४ ॥ इत्यर्थ इति । उपसर्गवशादर्थांतरमत्रेति भावः । अपकारैर्भर्त्सनादिभिः । तत्रापकारकत्वाभावं विमृश्याह—अभिचारैर्वेति ॥ ४५ ॥ यद्वा मेऽनार्य्यशत्रुं विष्णुं न विस्मरतीत्यर्थः ॥ ४६ ॥ अन्यथैतद्विरोधाभावे । इत्यर्थ इति । अयमेव मे मृत्युहेतुरिति प्रतीयत इति भावः ॥ ४७ ॥ इति हेति वक्ष्यमाणम् ॥ ४८ ॥ यद्वा पदं व्यवसायं न हि शिशूनां किञ्चिदपि वस्तु व्यवसितं भवतीति भावः । तेषां सारासारविचाराभावादिति भावेनैव स्वामिभिर्यद्वेत्युक्तम् । "पदं व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु" इत्यमरः ॥ ४९ ॥ यद्यपि गुणदोषपदं बालवृत्तं न संभवति तथापीति । तुरवधारणे बंधनमेवास्य प्रह्लादस्य । ततो बंधनात् । वयसा बाल्यात्परेण । आर्याणां शास्त्रवृद्धानां सेवया । भार्गवः शुक्राचार्यः । "यत्त्वेकः

तथेति गुरुपुत्रोक्तमनुज्ञायेदमब्रवीत् ॥ धर्मो ह्यस्योपदेष्टव्या राज्ञां ये गृहमेधिनाम् ॥ ५१ ॥ धर्ममर्थं च कामं च नितरां चानुपूर्वशः ॥ प्रह्लादायो चतू राजन् प्रश्रयावनताय च ॥ ५२ ॥ यथा त्रिवर्गं गुरुभिरात्मने उपशिक्षितम् ॥ न साधु मेने तच्छिक्षां द्वंद्वारामोपवर्णिताम् ॥ ५३ ॥ यदाचार्यः परावृत्तो गृहमेधीयकर्मसु ॥ वयस्यैर्बालकैस्तत्र सोपहूतः कृतक्षणैः ॥ ५४ ॥ अथ तान्श्लक्ष्णया वाचा प्रत्याहूय महाबुधः ॥ उवाच विद्वांस्त न्निष्ठां कृपया प्रहसन्निव ॥ ५५ ॥ ते तु तद्गौरवात सर्वे त्यक्तक्रीडापरिच्छदाः ॥ बाला नदूषितधियो द्वंद्वारामेरितेहितैः ॥ ५६ ॥ पर्युपासत राजेंद्र तन्न्यस्तहृदयेक्षणाः ॥ तानाह करुणो मैत्रो महाभागवतोऽसुरः ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे प्रह्लादस्य नवधाभक्तिवर्णनं नाम पंचमोऽध्यायः ॥ ५ ॥ प्रह्लाद उवाच ॥ कौमार आचरेत् प्राज्ञो धर्मान् भागवतानिह ॥ दुर्लभं मानुषं जन्म तदप्यध्रुवमर्थदम् ॥ १ ॥

त्याहतुः इमं त्विति । यावद्गुरुर्भार्गव आगमिष्यति तावद्बद्ध्वा निधेहि । ततः किमत ऊचतुः । यतः पुंसो बुद्धिश्च वयसा तथा आर्यसेवया समीचीना भवति ॥ ५० ॥ अनुज्ञाय तथेत्यंगीकृत्य ॥ ५१ ॥ ततश्च तौ प्रह्लादाय धर्मादिकमूचतुः प्रश्रितश्चासाववनतश्च तस्मै ॥ ५२ ॥ यथा यथावत्त्रिवर्गमुपशिक्षितमपि न साधु मेने तत्तां शिक्षां च । कुतः । द्वंद्वैः रागद्वेषादिभिर्विषयेष्वारमणं येषां तैरुपवर्णिताम् ॥ ५३ ॥ परावृत्तोऽन्यत्र गतः स उपहूतः । संधिः पादपूरणार्थम् । क्रीडार्थं कृतक्षणैः कृतोत्सवैर्लब्धाव सरैरिति वा ॥ ५४ ॥ तन्निष्ठां तेषां निष्ठां जन्ममरणादिलक्षणां विद्वान् ॥ ५५ ॥ द्वंद्वारामाणामीरितैरीहितैश्च न दूषिता धीर्येषाम् । यतो बालाः ॥ ५६ ॥ तस्मिन्नेव न्यस्तं हृदयमीक्षणं च यैः ॥५७॥ इति सप्तमे टीकायां पंचमोऽध्यायः ॥५॥ षष्ठे गुरौ गृहव्यग्रे प्रह्लादो दैत्यबालकान् ॥ अनुकंप्य परं तत्त्वं नारदोक्तमुपादिशत् ॥ १॥ निरर्थकक्रियालापैरायुर्व्ययमजानताम् ॥ प्रह्लादः सदयं प्राह धर्मं भागवतं कृती ॥ २ ॥ कौमार इत्यादिना । इहैव मानुषजन्मनि धर्मानाचरेत् । यतोऽर्थदमेतत् । तत्र

स्थविरो वेत्ति न तत्तरुणकोटयः । वृद्धवाक्यमतः कुर्य्याच्छ्रुतिरेषा सनातनी'' इत्यादिपुराणात् । ५० ॥ गृहमेधिनां तत्रापि राज्ञाम् ॥ ५१ ॥ ततो हिरण्यकशिपोरनुज्ञानंतरम् । तौ गुरुपुत्रौ ॥५२॥ तत् ताम् ॥ ५३ ॥ अन्यत्राध्यापनस्थानात् । परावृत्तः । गृहमेधीयकर्मस्वग्निहोत्रादिषु व्यापृतः।तत्र तदा। स प्रह्लादः । संधिरत्र "सोऽचिलोपे चेत्पादपूरणम्" इति सूत्रात् । क्रीडार्थमवकाशस्त्वध्ययनानंतरमपि प्राप्यत एवात आह—लब्धावसरै रिति । भक्तिशिक्षणार्थं प्राप्तावकाशैरित्यर्थः । "क्षणः पर्वोत्सवव्यापारेषु मानेप्यनेहसः" इति मेदिनी ॥ ५४ ॥ अथागतः सन् तेषां बालानां स्वस्मिन् गुरुत्वनिष्ठां जानन् प्रहसन्निव अहो इमेऽपि भगवदनुकंपाजाले पतिता इति स्मयमानः ॥ ५५ ॥ तस्य प्रह्लादस्य गौरवादाधिक्यात् राजकुमारोऽयं यथाऽस्मभ्यं ब्रवीति तथा कार्यमेवेति तत्र गौरवमुद्दिश्येत्यर्थः । ल्यब्लोपे पंचमी । न दूषितधियोऽत्र नञर्थो न शब्दः । ईरितैर्व्या ख्यातार्थैरीहितैस्तद्व्यापारैः ॥ ५६ ॥ तस्मिन्प्रह्लादे । राजेंद्रेति । न हि भगवत्प्रिययशश्श्रवणं विना राजेंद्रत्वं लभ्यत इति भावः । मैत्रः सर्वत्र द्वेषत्यागी स एषोऽसुः "स एव प्राणः" इति श्रुतेः । असौ मुख्यप्राणे रमत इत्यसुरः । अत एव महाभागवतः ॥ ५७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे पञ्चमोऽध्यायः ॥ ५ ॥ गृहव्यग्रे गृहकृत्यासक्ते सति 'व्यग्र आसक्त आकुलः' इति मेदिनी ( १ ) कृती निपुणः (२) तानाह—करुणो मैत्र इति । पूर्वमुक्तं तत्किमाहेत्यत आह—कौमारे धर्मानाचरेत् । ननु कौमारे वर्णाश्रमधर्माणामनधिकारस्तत्राह—भागवतान् श्रवणकीर्त्तनादीन् । इह भारतभूमौ । ननु तान्यौवनादावपि कृत्वा

यथा हि पुरुषस्येह विष्णोः पादोपसर्पणम् ॥ यदेष सर्वभूतानां प्रिय आत्मेश्वरः सुहृत् ॥ २ ॥ सुखमैंद्रियकं दैत्या देहयोगेन देहिनाम् ॥ सर्वत्र लभ्यते दैवाद्यथा दुःखमयत्नतः ॥ ३ ॥ तत्प्रयासो न कर्तव्यो यत आयुर्व्ययः परम् ॥ न तथा विंदते क्षेमं मुकुंदचरणांबुजम् ॥ ४ ॥ ततो यतेत कुशलः क्षेमाय भयमाश्रितः ॥ शरीरं पौरुषं यावन्न विपद्येत पुष्कलम् ॥ ५ ॥ पुंसो वर्षशतं ह्यायुस्तदर्धं चाजितात्मनः ॥ निष्फलं यदसौ रात्र्यां शेतेंधं प्रापितस्तमः ॥६॥ मुग्धस्य बाल्ये कौमारे क्रीडतो याति विंशतिः ॥ जरया ग्रस्तदेहस्य यात्यकल्पस्य विंशतिः ॥७॥ दुरापूरेण कामेन मोहेन च बलीयसा ॥ शेषं गृहेषु सक्तस्य प्रमत्तस्यापयाति हि ॥ ८ ॥ को गृहेषु पुमान् सक्तमात्मानमजितेंद्रियः ॥ स्नेहपाशैर्दृढैर्बद्ध मुत्सहेत विमोचितुम् ॥ ९ ॥ को न्वर्थतृष्णां विसृजेत् प्राणेभ्योपि य ईप्सितः ॥ यं क्रीणात्यसुभिः प्रेष्ठैस्तस्करः सेवको वणिक् ॥ १० ॥

च कौमार एव यतस्तदप्यध्रुवम् । न चैवंभूतं जन्मांतरम् । यतो दुर्लभम् । तत्र धर्मानेवाचरेन्न सुखार्थे प्रयासान् । तत्र भागवतानेव न काम्यान् ॥ १ ॥ इह भागवतानेव धर्मानाचरेदित्येतदुपपादयति । यथाहीति चतुर्भिः । इह पुरुषस्य विष्णोः पादोपसर्पणमेव यथाऽनुरूपं योग्यमित्यर्थः । यद्यस्मादेष प्रिय इत्यादि॥ २॥ ननु भोगोद्यमः कथं त्याज्य इति चेत्तत्राह । सुखमिति । सर्वत्र पश्वादावपि । दैवात्पूर्वादृष्टादेव ॥ ३ ॥ अतस्तदर्थं प्रयासो न कर्तव्यः । यतः प्रयासात्परं केवलमायुषो व्यय एव यतस्तथा तेन प्रकारेण क्षेमं न प्राप्नोति ॥ ४ ॥ भयमाश्रितः संसारं प्राप्तः पुरुषरूपं शरीरं यावत्पुष्कलमस्ति न विपद्येताक्षमं न भवेन्न नश्येदिति वा तावच्छीघ्रं क्षेमाय यतेत ॥५॥ आयुर्व्ययक्रममाह पुंस इति त्रिभिः । यद्यस्माच्छेते ॥ ६ ॥ विंशतिर्वर्षाण्यायुर्याति ॥ ७ ॥ दुरापूरेण दुःखैः समंतादापूर्यमाणेन ॥ ८ ॥ ननु यौवने गृहासक्तोऽपि पश्वाद्विरक्तः सन् क्षेमं यास्यतीत्याशंक्य तदसंभवं दर्शयन्कौमार एवाचरेदित्येतदुपपादयति । को गृहेष्विति सप्तभिः ॥ ९ ॥ यमर्थमसुभिः क्रीणाति प्राणहानिमंगीकृत्यापि

कृतार्थी भवति तत्राह—प्राज्ञ इति । यदि कौमारांत एव मृत्युः स्यात्तर्हि किं भवेदिति प्रकृष्टज्ञानवान् । ननु तत्र का चिन्ता जन्मांतरं तु भावि तत्रैव भक्तिः कार्येति तत्राह—दुर्लभं मानुषं जन्म। तदपि भाग्याल्लब्धमप्यध्रुवमद्य वर्तमानत्वेऽपि तस्य श्वः स्थितौ निश्चयाभावात्। ननु तर्हि तावन्मात्रकालेन कुतो भक्तिसिद्धिस्तत्राह—अर्थदम् ।मुहूर्तमात्रव्यापि भक्तिमतामपिखट्वांगादीनां सिद्धिदर्शनात्॥ १॥भागवतधर्मान्केन प्रकारेणाचरेदित्यपेक्षायामाह—यथा येन प्रकारेण विष्णोः पादयोरुपसर्पणं प्राप्तिर्भवेत्तथाचरेदित्यनुषंगः । तमेव प्रकारं चतुर्विधं व्यंजयन्विष्णुं विशिनष्टि—यद्यस्मादेष प्रिय इत्यादि। तेन " येषामहं प्रिय आत्मा सुतश्च सखा गुरुः सुहृदो दैवमिष्टम्" इति भगवदुक्तिप्रामाण्येन कांतभावशांतिरतिदास्यभावसख्यभावानां मध्ये येन भावेनोपसर्पितुमिच्छेत्तेनैवोपसर्पन्भागवतान् धर्मानेवाचरेदिति रागभक्तावपि विधिर्व्यंजितः । आत्मतुल्यत्वादात्मा सुत इति तंत्रेणोक्त्या पंचैव भावाः प्रह्लादेनोपदिष्टा इति वा॥ २॥ ३॥यतः सर्वत्र लभ्यतेऽतो हेतोः॥ ४॥तत इति।यतो मुकुंदचरणत्यागे क्षेमाभावस्ततस्तस्मादित्यर्थः॥ ५॥वर्षशतमिति श्रुतिप्रसिद्ध्योक्तं क्षणमात्रजीवनस्याप्यनिश्चितत्वाच्छीघ्रमेव क्षेमाय यतितव्यमिति भावः । अंधं तमः सर्वज्ञानशून्यां सुषुप्तिं प्रापितः अंधं तमो यथार्थज्ञानशून्यं स्वप्नं वा प्रापितः केनचित्कर्मविशेषेणेति शेषः ॥ ६ ॥ मुग्धस्य मूढस्य । अकल्पस्यासमर्थस्य ॥ ७ ॥ दुर्गत आपूरः पूरणं यस्य तेन मोहेन पुत्राद्यासक्तिविशेषेण ॥ ८ ॥ "लोहदारुमयैः पाशैः पुमान् बद्धो विमुच्यते । पुत्रदारमयैः पाशैः पुमान्बद्धो न मुच्यते" इति गारुडात् ॥ ९ ॥ इत्यर्थ इति । तस्करा रात्रौ परगृहं, सेवको राजकीयो युद्धाभिमुखं,

कथं प्रियाया अनुकंपितायाः संगं रहस्यं रुचिरांश्च मंत्रान् ॥ सुहृत्सु च स्नेहसितः शिशूनां कलाक्षराणामनुरक्तचित्तः ॥ ११ ॥ पुत्रान्स्मरंस्ता दुहितॄर्हृदय्या भ्रातॄन्स्वसॄर्वा पितरौ च दीनौ ॥ गृहान्मनोज्ञोरुपरिच्छदांश्च वृत्तीस्तु कुल्याः पशुभृत्यवर्गान् ॥ १२ ॥ त्यजेत कोशस्कृदिवेहमानः कर्माणि लोभादवितृप्तकामः ॥ औपस्थ्यजैह्व्यं बहु मन्यमानः कथं विरज्येत दुरंतमोहः ॥ १३ ॥ कुटुंबपोषाय वियन्निजायुर्न बुध्यतेऽर्थं विहतं प्रमत्तः ॥ सर्वत्र तापत्रयदुःखितात्मा निर्विद्यते न स्वकुटुंबरामः ॥ १४ ॥ वित्तेषु नित्याभिनिविष्टचेता विद्वांश्च दोषं परवित्तहर्तुः ॥ प्रेत्येह चाथाप्यजितेंद्रियस्तदशांतकामो हरते कुटुंबी ॥ १५ ॥ विद्वानपीत्थं दनुजाः कुटुंबं पुष्णन् स्वलोकाय न कल्पते वै ॥ यः स्वीयपारक्यविभिन्नभावस्तमः प्रपद्येत यथा विमूढः ॥ १६ ॥

साधयति तस्करादिः । तस्मिन्नर्थे तृष्णां को नु विसृजेत् ॥ १० ॥ किं च । कथमित्यादि प्रियायाः संगादिकं स्मरन्कथं त्यजेतेति तृतीयेनान्वयः । मंत्रान्हितशिक्षालापान् । सुहृत्सु च संगम् । तेषां स्नेहेन सितो बद्धः कलानि मधुराण्यक्षराणि येषां तेषां च संगम् । तेष्वनुरक्तं चित्तं यस्य ॥ ११ ॥ ताः श्वशुरगृहे स्थिताः हृदय्या हृदयंगमाः मनोज्ञा उरवः परिच्छदा येषु तान्गृहान् वृत्तीर्जीविकाः कुल्याः कुलपरंपरागताः ॥ १२ ॥ कोशस्कृत् कोशस्कारी कीटः स यथा आत्मनो हितं गृहं कुर्वाणो निर्गमाय द्वारमपि नावशेषयति तथा कर्माणीहमानः । नन्ववितृप्तकामोऽपि दोषदर्शनेन विरक्तः संस्त्यजेत्तत्राह । औपस्थ्यं शैश्न्यं जैह्व्यं च सुखं बहु मन्यमानस्तदेवाधिकं मन्यमानः अतो दुरंतो मोहो यस्य स कथं विरज्येत विरक्तः स्यात् ॥ १३ ॥ दुरंतमोहत्वं दर्शयन्नाह । कुटुंबपोषणाय वियत्क्षीयमाणं निजमायुः पुरुषार्थं च विहतं न बुध्यते अत एव तापत्रयेण दुःखितचित्तोऽपि न निर्विंद्यते तत्र दुःखबुद्धिं न करोति यतः स्वकुटुंबे रामो रतिर्यस्य ॥ १४ ॥ प्रत्युत चौर्यं करोतीत्याह । वित्तेष्विति । नित्यमभिनिविष्टं चेतो यस्य स परवित्तहर्तुः प्रेत्य नरकलक्षणमिह च दंडादिरूपं दोषं यद्यपि विद्वान् जानन्नथाप्यशांताभिलाषस्तत्परवित्तं हरत्येव ॥ १५ ॥ तदेवं को गृहेषु पुमानित्यादिसप्तभिः श्लोकैरुपपादितं गृहादिषु प्रसक्तस्य वैराग्यायसंभवमुपसंहरति । विद्वानिति । स्वलोकायात्मपरामर्शाय न कल्पते किं तु विमूढो यथा तथा विद्वा

वणिक् पोतवणिक् समुद्रं प्राणहानिमंगीकृत्यैव तदर्थं प्रविशतीति भावः ॥ १० ॥ स्त्रीपुत्राद्यासक्तेः प्राबल्यं दर्शयति—कथमिति । अनुकंपा कृपा जाता यस्यां सा अनुकंपिता तस्यास्तथा कृपापात्रीभूताया इत्यर्थः ॥ ११ ॥ दीनौ वृद्धौ । पशवो गवाश्वादयः ॥ १२ ॥ अत्राशंकते—नन्विति । अतो जैह्व्यौपस्थ्यस्य बहुमननात् ॥ १३ ॥ अत एव पुरुषार्थज्ञानाभावात् ॥ १४ ॥ १५ ॥ हे दनुजा इति । 'कयाधुर्नाम दानवी' इत्युक्तेरहं दनोर्दौहित्रो यूयं च तद्वंश्यत्वान्मम बंधवः स्थेत्यतो युष्मभ्यं हितमुपदिशामीत्यभिप्रायः । विद्वान् शास्त्रज्ञोऽपि आत्मपरामर्शाय कोऽहं कुत आयातः किमधुना करोमीति स्वमवलोकितुमित्यर्थः । यथाविमु

यतो न कश्चित् क्व च कुत्रचिद्वा दीनः स्वमात्मानमलं समर्थः ॥ विमोचितुं कामदृशां विहारक्रीडामृगो यन्निगडो विसर्गः ॥ १७ ॥ ततो विदूरा त्परिहृत्य दैत्या दैत्येषु संगं विषयात्मकेषु ॥ उपेत नारायणमादिदेवं विमुक्तसंगैरिषितोऽपवर्गः ॥ १८ ॥ न ह्यच्युतं प्रीणयतो बह्वायासोऽसुरा त्मजाः ॥ आत्मत्वात् सर्वभूतानां सिद्धत्वादिह सर्वतः ॥ १९ ॥ परावरेषु भूतेषु ब्रह्मांतस्थावरादिषु ॥ भौतिकेषु विकारेषु भूतेष्वथ महत्सु च ॥ २० ॥ गुणेषु गुणसाम्ये च गुणव्यतिकरे तथा ॥ एक एव परो ह्यात्मा भगवानीश्वरोऽव्ययः ॥ २१ ॥

नपि तमोऽभिनिवेशमेव प्रपद्यते । तत्र हेतुः य इति । स्वीयमिदं पारक्यमिदमिति विभिन्नो भावो भावना यस्य सः ॥ १६ ॥ तस्मात्कौमार एव भागवतान्धर्मानाचरेदिति सहेतुकमुपसंहरति । यत इति । यतः कश्चिदपि स्वमात्मानं मोचितुं न समर्थस्ततो नारायणमुपेत शरणं यातेत्युत्तरेणान्वयः । असामर्थ्ये हेतुः अलं दीनो लंपटः । अतः कामो दृशि यासां तासां विहारे क्रीडायां निमित्ते क्रीडामृगः । विहारमिति पृथक्पाठे तासां विहारसाधनमात्मानं यतस्तासां क्रीडामृगः स इत्यन्वयः । किं च यद्यासु निगडः श्रृंखलातुल्यो विसर्गः पुत्रपौत्रादिरूपो भवति ॥ १७ ॥ विदूराद्दूरतः संगं परिहृत्य । यद्वा अविदूराच्छीघ्रं नारायणमुपेतेत्यन्वयः । यस्मात्स एवापवर्ग इषित इष्टः ॥ १८ ॥ ननु बालानामस्माकं तद्भजनमशक्यमिति चेत्तत्राह । न हीति । बह्वायासोऽतिप्रयासः ॥ १९ ॥ आत्मत्वात्सर्वत्र सिद्धत्वादिति च हेतुद्वयमुपपादयति परावरेष्विति चतुर्भिः । ब्रह्मा अंतो येषां स्थावर आदिर्येषां तेषु भूतेषु जीवेषु भौतिकेष्वजीवेषु घटादिषु महत्सु च भूतेष्वाकाशादिषु ॥ २० ॥ गुणसाम्ये प्रधाने गुणव्यतिकरे महत्त

एडकासु स्वभावत एकरूपासु मूढ इयं कस्येयं कस्येति ज्ञातुमसमर्थः केवलं तमो ज्ञानाभावमेव प्रपद्येत तद्वत्केवलकुटुंबपोष्यपि तमो नरकहेतुमभिनिवेशमेव । तत्राभिनिवेशे ॥ १६ ॥ अतो लंपटत्वात् । न केवलं तासां क्रीडामृग एव भवत्यपि तु बद्धोऽपि स्यादित्याह—किञ्चेति । यद्वा याः कामदृश एव निगडो यत्र तथाविधो विशेषेण सर्गो जन्म भवेदित्यर्थः ॥ १७ ॥ दूरतस्तु स्वयमेव संगस्त्यक्त एव त्यक्तस्य त्यागासंभवमाशंक्याह—यद्वेति । अपवर्गः संसारबंधविमोचकः । यतो धर्मार्थकामैर्ब्रह्मार्पणबुद्धिचिकित्सारहितैः संसारमोक्षो न सेत्स्यति ततो हेतोरित्यर्थः । दैत्येषु दितिशब्दोपलक्षिताहिंसाविहारेषु यूयमपि तज्जातीयैरस्माभिस्तादृशैरेव भाव्यमित्याकलनां मा कुरुते त्यभिप्रायेणाह—हे दैत्या इति ॥ १८ ॥ प्रीणयतः परिचर्यया प्रीणयितुं न बहुप्रयत्नः यथा कुटुंबं प्रीणयत इति भावः । न च तस्यान्वेषणे श्रम आत्मत्वात् हृद्येव वर्तमानत्वात् । न च तत्प्रीणनेऽपि श्रमः सर्वतः सर्वै रपि प्रकारैर्मानसैरप्युपचारैस्तत्प्रीणनस्य सिद्धत्वात् । तथाऽच्युतं प्रीणयानीति संकल्पमात्रेणापि प्रीतेः सिद्धत्वात् । श्रवणकीर्त्तनाद्यन्यतमेनापि वा सिद्धत्वात् ॥ १९ ॥ न केवलं स स्वहृदय एव वर्त्तमानः परिचरणी योऽपि तु सर्वत्रैव वर्त्तमानः सर्वसंमानेनैव संतोषणीय इत्युपदेष्टुं तस्य सार्वत्रिकीं सार्वकालिकीं च सत्तामाह द्वाभ्याम् । परावरेषूत्कृष्टनिकृष्टेषु भूतेषु जीवेषु ब्रह्मान्तस्थावरादिष्वजीवेषु घटादिषु च परः भूतादिभ्यः प्राकृ तेभ्यः प्रकृतेश्च सकाशादन्य एकः परब्रह्मेति । आत्मा परमात्मा इति भगवानिति शब्दत्रयवाच्य ईश्वर ईयत इत्युत्तरेणान्वयः । कीदृशोऽव्ययः सर्वेष्वपि कालेष्वपक्षयशून्यः ॥ २० ॥ २१ ॥

प्रत्यगात्मस्वरूपेण दृश्यरूपेण च स्वयम् ॥ व्याप्यव्यापकनिर्देश्यो ह्यनिर्देश्योऽविकल्पितः ॥ २२ ॥ केवलानुभवानंदस्वरूपः परमेश्वरः ॥
माययांतर्हितैश्वर्य ईयते गुणसर्गया ॥ २३ ॥ तस्मात्सर्वेषु भूतेषु दयां कुरुत सौहृदम् ॥ आसुरं भावमुन्मुच्य यया तुष्यत्यधोक्षजः ॥ २४ ॥ तुष्टे
च तत्र किमलभ्यमनंत आद्ये किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः ॥ धर्मादयः किमगुणेन च कांक्षितेन सारंजुषां चरणयोरुपगायतां नः ॥२५॥
धर्मार्थकाम इति योऽभिहितस्त्रिवर्ग ईक्षा त्रयी नयदमौ विविधा च वार्ता॥मन्ये तदेतदखिलं निगमस्य सत्यं स्वात्मार्पणं स्वसुहृदः परमस्य पुंसः॥२६॥

त्वादौ च परो ब्रह्मस्वरूपः ॥ २१ ॥ कथं तर्हि द्रष्टृदृश्यभोक्तृभोग्यादिभेदो माययेत्याह । प्रत्यगात्मा द्रष्टा भोक्ता तत्स्वरूपेण व्यापकतया निर्देश्यः दृश्यं भोग्यं देहादि तद्रूपेण च व्याप्यतया निर्देश्यो मायया ईयत इत्युत्तरेणान्वयः । वस्तुतस्तु स्वयमविकल्पितोऽनिर्देश्योऽपि सन् । यद्वा अनिर्देश्योऽप्येवं निर्देश्यः सन् विकल्पित ईयत इत्यन्वयः ॥ २२ ॥ यतः केवलोनुभवात्मक आनंद एव स्वरूपं यस्य । ननु स एव चेत्सर्वत्र तर्हि सर्वत्र सर्वज्ञत्वाद्युपलभ्येत तत्राह । गुणात्मकः सर्गो यस्याः सा गुणसर्गा तया माययांतर्हितमैश्वर्यं येन सः ॥ २३ ॥ यस्मादेवं तस्मात्सर्वेषु भूतेषु यथोचितं दयां सौहृदं च कुरुत । यया दयया । उन्मुच्य संत्यज्य ॥ २४ ॥ ततः किमत आह । तुष्टे च तत्र तस्मिन्किमलभ्यम् । तथापि गुणपरिणामाद्दैवादेव स्वसिद्धा अयत्नतः सिद्धा ये धर्मादयस्तैः किम् । अगुणेन च मोक्षेण कांक्षितेन किम् । तमुपगायतां नोऽस्माकमकांक्षितस्यापि तस्य सिद्धेः यद्वा मा भून्मोक्षस्तस्य चरणयोः सारंजुषां सुधां सेवमानानां तेनापि किमित्यर्थः ॥ २५ ॥ ननु च धर्मादेरपुरुषार्थत्वे किमित्याचा

स ज्ञायते चेदिदमित्थं कारेण निर्दिश्यतामित्यत आह—प्रत्यगात्मेति । प्रतीचां सर्वजीवानामात्मा परमात्मा तत्स्वरूपेण व्यापकः । दृश्यं जगत्तद्रूपेण व्याप्य इत्येव व्याप्यव्यापकनिर्देश्यः।वस्तुतः स्वयं ह्यनिर्देश्यः अनिर्देश्योऽपि विकल्पितः ॥ २२ ॥ उपासकभेदे ब्रह्म परमात्मा भगवानित्येवंविकल्पविषयीकृतोऽपि केवल एकोऽनुभवात्मक आनन्द एवं स्वरूपं यस्य सः एवं सर्वत्र स्वस्वरूपभूतैश्वर्येण प्रकटमेव विराजमानोऽपि मायया स्वाविद्यया हेतुना जीवैर्द्रष्टुमशक्यत्वादंतर्हितैश्वर्य ईयते कीदृश्या गुणानामिंद्रियैरनुभूयमानानां शब्दादीनां सर्गः सृष्टिर्यतस्तयेति तया स्ववृत्त्याऽविद्यया जीवदृष्टेरावरणात्तेन " दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यंते मायामेतां तरंति ते ॥" इति भगवदुक्तेर्भगवद्भक्त्यैव मायातरणे सति स यथायोगं भक्तितारतम्येन निर्देश्यो भवतीति भावः ॥ २३ ॥ यतो भक्तिगम्य एव भगवान्सा च भक्तिः सर्वभूतेषु दयासौहृदाभ्यां सुस्थिरा निर्विघ्ना भवतीत्यतस्ते एव विधत्ते—तस्मादिति । सौहृदं च स्नेहं सर्वाणीमानि भूतानि भगवच्छक्तिमयत्वाद्भगवद्रूपाण्येव स्वरूपेणापि सर्वत्रैवैतेषु स मत्प्रभुर्विराजत एव श्रीमद्गुरुकृपया यदि मां भक्तिदेवी स्वीकरिष्यतीति तदा सोऽपि द्रष्टव्य इति बुद्ध्येति भावः । यया दयया सौहृदेन च । संदर्भस्तु—श्लोकचतुष्टयमिदमित्थं व्याचख्यौ तेषुतेष्विव एव पर आत्मा सर्वेषां मूलस्वरूपो भगवान्स्वरूपभूताचिंत्यशक्तिः । अत एवेश्वरो दुर्घटघटनासमर्थः । अत एवाव्ययः । स्वेनैव तत्तद्भावेऽप्यविकारी सन्स्वयमेव प्रत्यगात्मस्वरूपेण जीवरूपेण केषांचित्तन्मात्रज्ञानानामीयते केषांचित्तु ततोऽप्यधमज्ञानानां दृश्यरूपेण प्रधानरूपेण चेयते तत्र जीवरूपेण व्यापकत्वेन निर्देश्यो भवति प्रधानादिरूपेण तु व्याप्यरूपतयेत्यर्थः । केषांचित्त्वद्वैतज्ञानिनां स एव परमेश्वरोऽनिर्देश्यः सन्नविकल्पितो भेदमात्रशून्यश्च सन् केवलानुभवानंदस्वरूप एवेयते न तु स्वरूपशक्तिमयैश्वर्ययुक्तः कथं तत्राह—माययेति । तत्कृपया मायाया अंतर्द्धाने सम्यक् सत्यैवेयते न तत्प्रकाशते इति भावः । तस्यास्तच्छादकधर्मत्वमेव दर्शयति—गुणसर्गयेति । सत्त्वादिगुणविक्षेपिकयेत्यर्थः । ब्रह्मज्ञानिनामप्यस्ति सत्त्वगुण एवावरक इति भावः । तस्मात्सर्वेष्वेव भूतेषु न त्वात्ममात्रसंबंधिषु दयां कुरुत भगवत एवाधिष्ठानत्वात्सर्वेषां सौहृदमात्मीयबुद्धिं च कुरुतेति ॥ २४ ॥ ततोऽधोक्षजतोषात् । मोक्षस्यागुणत्वं तु गुणकार्यत्वाभावादेव । नन्वकांक्षितसिद्धवस्तुप्राप्तिरकिञ्चित्करैवेति चेत्तत्राह—यद्वेति । इत्यर्थ इति । 'या निर्वृतिस्तनुभृताम्' इत्यादिध्रुवोक्तन्यायेन भगवद्भक्तैर्मोक्षो नाद्रियत इति भावः ॥ २५ ॥ अत्राक्षिपति—नन्विति । आचार्याभ्यां शंडामर्काभ्याम् ।

ज्ञानं तदेतदमलं दुरवापमाह नारायणो नरसखः किल नारदाय ॥ एकांतिनां भगवतस्तदकिंचनानांपादारविंदरज साप्लुतदेहिनां स्यात् ॥ २७ ॥ श्रुतमेतन्मया पूर्वं ज्ञानं विज्ञानसंयुतम् ॥ धर्मं भागवतं शुद्धं नारदादेवदर्शनात् ॥ २८ ॥ दैत्यपुत्रा ऊचुः ॥ प्रह्लाद त्वं वयं चापि नर्तेऽन्यं विद्महे गुरुम् ॥ एताभ्यां गुरुपुत्राभ्यां बालानामपि हीश्वरौ ॥ २९ ॥ बालस्यांतःपुरस्थस्य महत्संगो दुरन्वयः ॥ छिंधि नः संशयं सौम्य स्याचेद्विश्रंभकारणम् ॥ ३० ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे प्रह्लादेन बालानां ब्रह्मज्ञानवर्णनं नाम षष्ठोऽध्यायः ॥ ६ ॥ नारद उवाच ॥ एवं दैत्यसुतैः पृष्टो महाभागवतोऽसुरः ॥ उवाच स्मयमानस्तान् स्मरन् मदनुशासनम् ॥ १ ॥

र्याभ्यां वेदोक्तवत्त्वेन सत्य एवाभिहितस्तत्राह धर्मोऽर्थः कामश्चेति यस्त्रिवर्गस्तदर्थं च य ईक्षाद्या अभिहिताः । ईक्षा आत्मविद्या । त्रयी कर्मविद्या । नयदमौ तर्को दंडनीतिश्च । विविधा च वार्ता जीविका । तदेतत्सर्वं निगमस्यार्थजातं स्वसुहृदः स्वांतर्यामिणः परमस्य पुंसः स्वात्मार्पणसाधनं चेत्तर्हि सर्वं सत्यं मन्ये सत्यपरत्वात् । अन्यथा तदसत्यमेव यद्वा तदेतदखिलं निगमस्य त्रैगुण्यविषयस्य प्रतिपाद्यं मन्ये । सत्यं पुनर्निस्त्रैगुण्यलक्षणं परमस्य पुंसः स्वात्मार्पणमेवेत्यर्थः । तदुक्तं भगवता । " त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन " इति ॥२६॥ तेषां पुनर्विश्वासार्थं गुरुसंप्रदायमाह । ज्ञानमिति । यत्र नारदः श्रोता तत्र कुतो मादृशानामधिकार इति मा शंकीत्याह । भगवत एकांतभक्तानां यत्पादरजस्तेनाप्लुतानां स्नातानां देहिनां सर्वेषामपि तज्ज्ञानं स्यान्न तूत्तमानामेवेति नियमः ॥२७॥ अत एव मयाऽपि पूर्वं नारदाच्छ्रुतम् । विज्ञानसहितमनुभवपर्यंतं ज्ञानं धर्मं च श्रुतम् ॥२८॥ तत्रातिविस्मिताः पृच्छंति प्रह्लादेति । हे प्रह्लाद त्वं वयमेताभ्यां शंडामर्काभ्यामृतेऽन्यं गुरुं न विद्मः । एतदागमनात्पूर्वमेवाहं नारदपार्श्वे गत इति चेत्तत्राहुः । बालानामप्यतिशिशूनामस्माकमेतावीश्वरौ नियंतारावतस्तवान्यत्र गमनं न संभवति ॥ २९ ॥ स एवात्रागत इत्यपि न संभवतीत्याहुः । बालस्येति । दुरन्वयो दुर्घटः । विश्रंभकारणं विश्वासहेतुः ॥ ३० ॥ इति श्रीमद्भागवते सप्तमे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ ॥ सप्तमे मातृगर्भस्थे स्वस्मिन्नारदभाषितम् । प्रह्लादो वर्णयामास शिष्यप्रत्ययसिद्धये ॥ १ ॥ अश्रावि नारदादेतन्मया गर्भ इतीरितुम् ॥ तत्प्रस्तावकथामाह पद्यैः षोडशभिः सुधीः ॥ २ ॥ १ ॥

अन्यथा स्वात्मार्पणसाधनत्वाभावे । ननु वेदप्रतिपादितमर्थं कथमसत्यं मन्यसे तत्राह—यद्वेति । इत्यर्थ इति । निगमस्य संबंधि वेदोक्तमेव मन्ये न तु दूषयामि तादृशाधिकारिसंमतत्वात्सत्यं सतां हितं तु परमस्य पुंसः परमे पुंसि स्वात्मार्पणं स्वस्यात्मनस्तदीयत्वेनार्पणमिति ॥ २६ ॥ अमलं संसारमलनिवर्त्तकम् ॥ २७ ॥ अत एव नियमाभावादेव । ज्ञानं तत्प्रतिपादकं वाक्यं ज्ञानस्य बुद्धिविषयत्वेन श्रावणत्वाभावात् । यदेव खल्वनुभवपर्यंतफलं तत्सहायत्वेन भागवतधर्मं च श्रुतं तच्च शुद्धमेव न तु ज्ञानकर्मादिमिश्रम् ॥ २८ ॥ तत्र प्रह्लादवाक्ये । एतदागमनादेतत्पार्श्वागमनात् । अत एव बालत्वादेव । हे प्रह्लादेति । प्रकृष्टाह्लादजनकोऽसि श्रीहरितत्त्वोपदेष्टृत्वादिति भावः ॥ २९ ॥ स एव नारद एव । अत्रास्मन्मंदिरे । न हि कस्यापि सामर्थ्यं भवदीयमंदिरप्रवेशस्य हिरण्यकशिपोर्भयादिति भावः । हे सौम्येति । राजकुमारत्वाद्बहुधाप्रश्नेऽपि त्वयाऽस्मदुपरि कोपोऽपि नो कार्य इति भावः ॥३०॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे षष्ठोऽध्यायः ॥६॥ प्रत्ययो विश्वासः ( १ ) तत्प्रस्तावकथां स्वश्रवणप्रसंगकथाम् । पद्यैः श्लोकैः (२) स्मयमानः अहो एतेऽपि

प्रह्राद उवाच ॥ पितरि प्रस्थितेऽस्माकं तपसे मंदराचलम् ॥ युद्धोद्यमं परं चक्रुर्विबुधा दानवान् प्रति ॥ २ ॥ पिपीलिकैरहिरिव दिष्ट्या लोकोपतापनः ॥ पापेन पापोऽभक्षीति वादिनो वासवादयः ॥ ३ ॥ तेषामतिबलोद्योगं निशम्यासुरयूथपाः ॥ वध्यमानाः सुरैर्भीता दुद्रुवुः सर्वतो दिशम् ॥ ४ ॥ कलत्रपुत्रमित्राप्तान् गृहान् पशुपरिच्छदान् ॥ नावेक्षमाणास्त्वरिताः सर्वे प्राणपरीप्सवः ॥ ५ ॥ व्यलुंपन्राजशिबिरममरा जयकांक्षिणः ॥ इंद्रस्तु राजमहिषीं मातरं मम चाग्रहीत् ॥ ६॥ नीयमानां भयोद्विग्नां रुदतीं कुररीमिव ॥ यदृच्छयाऽऽगतस्तत्र देवर्षिर्ददृशे पथि ॥ ७ ॥ प्राह मैनां सुरपते नेतुमर्हस्यनागसम् ॥ मुंचमुंच महाभाग सतीं परपरिग्रहम् ॥ ८ ॥ इंद्र उवाच ॥ आस्तेऽस्या जठरे वीर्यमविषह्यं सुरद्विषः ॥ आस्यतां यावत्प्रसवं मोक्ष्येऽर्थपदवीं गतः ॥ ९ ॥ नारद उवाच ॥ अयं निष्किल्बिषः साक्षान्महाभागवतो महान् ॥ त्वया न प्राप्स्यते संस्थामनंतानुचरो बली ॥ १० ॥ इत्युक्तस्तां विहायेंद्रो देवर्षेर्मानयन् वचः ॥ अनंतप्रियभक्त्यैनां परिक्रम्य दिवं ययौ ॥ ११ ॥ ततो नो मातरमृषिः समानीय निजाश्रमम् ॥ आश्वास्येहोष्यतां वत्से यावत्ते भर्तुरागमः ॥ १२ ॥

अस्माकं पितरि हिरण्यकशिपौ । स्वकृतेनैव पापेन पापोऽसावभक्षि भक्षित इति हर्षेण वदंतो युद्धोद्यमं चक्रुः ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ राज्ञः शिबिरमावासं व्यलुंपन्सर्वस्वापहारेण नाशितवंतः ॥ ६ ॥ ७ ॥ अनागसं निरपराधामेनां नेतुं माऽर्हसीति प्राह ॥ ८ ॥ अविषह्यं दुःसहम् । अतोऽनया प्रसवपर्यंतमत्रास्यताम् । ततश्चार्थस्य पदवीं मार्गं गतः प्राप्तः सन् । जातं पुत्रं हत्वा मोक्ष्यामीत्यर्थः ॥ ९ ॥ साक्षात्स्वगुणैरेव महान्न तु पित्रादिसंबंधात् । त्वया हेतुभूतेन संस्थां मृत्युं न यास्यति । तत्र हेतवो निष्किल्बिष इत्यादयः ॥ १० ॥ अनंतस्य प्रियो योऽहं स वा प्रियो यस्य तस्य मम भक्त्यैनां प्रदक्षिणीकृत्य ॥ ११ ॥ इहोष्यतामित्याहेति शेषः ॥ १२ ॥

भगवन्मार्गे प्रवृत्ता इति मंदहास्येन तानभिनंदन् । मम नारदस्य । अनुशासनमुपदेशम् ॥ १ ॥ अस्माकमिति । बहुत्वं भ्रात्रपेक्षया ॥ २ ॥ ‘ दिष्ट्या शमुपजोषं च ’ इत्यमरः ॥ ३ ॥ वध्यमानाः ‘ वध—हिंसायम् ’ ॥ ४ ॥ ५ ॥ मम मातरं कयाधुनाम्नीम् ॥ ६ ॥ ७ ॥ हे सुरपते हे महाभागेति परदारहरणं त्वसुराणां कर्म न तु सुराणां किमुत सुरपतेस्तवेति भावः । महाभागस्य तवैतदन्या अपि बह्व्यः स्त्रियः संतीत्यतः किमनयाऽन्यपूर्वयेति भावः । अत्र परपरिग्रहमिति पुंस्त्वं स्त्रीलिंगविशेषणे यद्यपि नोचितं तथाप्या विष्टलिंगत्वात्तत्साधु । किंच परिग्रहपदार्थोक्तौ वररुचिनादावेव स्त्रीं गणित्वा ततो वृत्तांते ‘एते सर्वे परिग्रहः’ इत्युक्तं तथाहि “महिषी च सुतो भ्राता मातुलः श्यालकस्तथा । मंत्री दूताश्च सेना च सर्वे एते परिग्रहः ॥” इति । किंच विकृतेर्वाचकसंख्याकथनात् “प्रकृतेर्विकृतेर्वापि ह्येकदा प्रतिपादने । प्रकृतेर्वाचकः संख्यां गृह्णाति विकृतेर्न तु ॥” इति भाष्योक्तन्यायस्यासार्वत्रिकताप्यत्राभिहिता । बहुवचनांतपाठोऽपि साधुरेव तदनुक्त्येदमेवावसीयत इति ॥ ८ ॥ अतोऽसह्यवीर्यधारिणीत्वात् । अत्र मत्कारागारे । इत्यर्थ इति । भगवन्निर्यं गर्भस्थकुमारहननार्थं मया धृता न तु संभोगेच्छयेति भावः ॥ ९ ॥ १० ॥ एतद्गर्भस्थहरिभक्ताय नम इति प्रणम्य च ॥ ११ ॥ यद्यपि दक्षशापान्नारदस्याश्रमो नास्ति तथापि तत्कृपया तदैवाश्रमं कल्पयित्वा तां तत्र

तथेत्यवात्सीद्देवर्षेरंति साऽप्यकुतोऽभया ॥ यावद्दैत्यपतिर्घोरात्तपसो न न्यवर्तत ॥ १३ ॥ ऋषिं पर्यचरत्तत्र भक्त्या परमया सती ॥ अंतर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये ॥ १४ ॥ ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः ॥ धर्मस्य तत्त्वं ज्ञानं च मामप्युद्दिश्य निर्मलम् ॥ १५ ॥ तत्तु कालस्य दीर्घत्वात् स्त्रीत्वान्मातुस्तिरोदधे ॥ ऋषिणाऽनुगृहीतं मां नाधुनाप्यजहात् स्मृतिः ॥ १६ ॥ भवतामपि भूयान्मे यदि श्रद्दधते वचः ॥ वैशारदी धीः श्रद्धातः स्त्रीबालानां च मे यथा ॥ १७ ॥ जन्माद्याः षडिमे भावा दृष्टा देहस्य नात्मनः ॥ फलानामिव वृक्षस्य कालेनेश्वरमूर्तिना ॥ १८ ॥ आत्मा नित्योऽव्ययः शुद्ध एकः क्षेत्रज्ञ आश्रयः ॥ अविक्रियः स्वदृग्घेतुर्व्यापकोऽसंग्यनावृतः ॥ १९ ॥

अंति समीपे ॥ १३ ॥ अंतर्वत्नी गर्भिणी। इच्छया भर्तुरागमनानंतरं प्रसूतये। एवमपि स्वगर्भस्य क्षेमाय ॥ १४ ॥ तस्याः शोकशांत्यै धर्मस्य तत्त्वं भक्तिलक्षणं ज्ञानमात्मानात्मविवेकस्तदुभयं प्रादात् । ईश्वरः समर्थः ॥ १५ ॥ १६ ॥ भूयाद्भवेत् । वैशारदी स्वार्थे तद्धितः । देहाद्यहंकारच्छेदनिपुणेत्यर्थः ॥ १७ ॥ काऽसौ वैशारदी धीरित्यपेक्षायां नारदोक्तमेव देहात्मविवेकप्रकारमाह । जन्मेति दशभिः । जन्माद्याः जायते अस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यतीत्येवंभूता इमे षड् भावा विकारा वृक्षे सत्येव यथा फलानां दृश्यंते तद्वदात्मनि तथैव स्थिते देहस्य दृष्टा इत्यर्थः । ईश्वरी विकारसमर्था मूर्तिर्यस्य तेन ॥ १८ ॥ तदेवं देहधर्मैस्तद्वैलक्षण्येनात्मनो देहाद्भेदो दर्शित इदानीमात्मधर्मैरेव भेदं स्फुटयंस्तदहंकारादिकं त्याजयति । आत्मेति । आत्मा नित्यः "अविनाशी वारेऽयमात्मा" इति श्रुतेः । अव्ययोऽपक्षयशून्यः । "ऋचो अक्षरे परमे व्योमन्" इति श्रुतेः । शुद्धः "निरवद्यं निरंजनम्" इति श्रुतेः । एकः "एकमेवाद्वितीयम्" इति श्रुतेः । क्षेत्रज्ञः "विज्ञातारमरे केन विजानीयात्" इति श्रुतेः ।

नीतवान् । यद्वा—निजानां स्वीयानामृषीणामाश्रमो निजाश्रमस्तं निजस्य स्वस्यात्मभूतस्य हरेराश्रमो गंधमादनादिर्निजाश्रमस्तमिति वा । यद्वा—निजस्य स्वस्यैवाश्रमस्तम् "श्रुत्वैतन्नारदो वाक्यं नरनारायणोदितम् । हिमवंतं जगमाशु यत्रास्य स्वक आश्रमः" इति शांतिपर्वणि नारायणीयोपाख्यानोक्तेः । यद्वा—'उदारचरितानां तु वसुधैव कुटुंबिनी' इति न्यायात् 'अविभक्तधनाः संतः' इति न्यायाद्वा यस्य कस्याप्याश्रमो निजाश्रम एव । यद्वा—निजायास्तस्या एवाश्रमो निजाश्रमस्तामिन्द्रान्मोचयित्वा तद्गृहमेवानीय तस्यै ज्ञानमदादिति । हे वत्से इति । मातृरहितवत्सवत्पालनविषयत्वादिति तदाश्वासनार्थमुक्तमिति भावः ॥ १२ ॥ १३ ॥ एवमपि इच्छाप्रसूतावपि ॥ १४ ॥ उभयं गर्भक्षेममिच्छाप्रसवं च वा । निर्मलमिति विशेषणात् "नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरंजनम्" इत्युक्तमनुसंधेयम् ॥ १५ ॥ तर्हि त्वन्मातुश्च भक्तिः कथं न दृश्यते तत्राह—तात्त्विति । तवापि बालत्वात्कालदैर्घ्याच्च कथं न तिरोदधे तत्राह—ऋषिणेति । तेन मन्मातुस्तदनुग्रहाभावात्स्त्रीत्वकालदैर्घ्ये तत्र प्राभूतामिति भावः ॥ १६ ॥ भूयादित्याशीर्वादेन स्वस्मिन्वर्त्तमानं श्रीनारदानुग्रहं तेष्वपि भक्तिकारणत्वेनाशास्ते यदि भवन्तः श्रद्दधते तदा विशारदो भगवांस्तद्विषया । श्रद्धात इति 'श्रद्धावाँल्लभते ज्ञानम्' इति श्रीमुखोक्तेः। महदनुग्रहात् श्रद्धा श्रद्धातो भक्तिर्भक्तेः प्रेमेत्यग्रिमग्रंथादवगंतव्यम् ।स्वामिभिस्तु—विशरणं विशारोऽहंकारस्तं द्यति खंडयतीति विशारदा सैव वैशारदी स्वार्थिकाण्णंतान् ङीपि रूपमिति व्याकृतिमभिप्रेत्यैवेत्यर्थ । इत्यंतं व्याकृतम् ॥ १७ ॥ ईश्वरस्य मूर्त्तिः समष्टिव्यष्ट्यात्मकं शरीरं यतो भवति तेनेति विश्वनाथः ॥ १८ ॥ तदहंकारादिकं देहेऽहंभावादिकम् । जीवात्मनि षड्विकाराभावभावना त्वंपदार्थशुद्धिः सा च तत्पदार्थस्य परमात्मनश्चितनरूपभक्त्यैव स्यादित्यतः परमात्मस्वरूपमाह—आत्मेति द्वाभ्याम् । आत्मा

एतैर्द्वादशभिर्विद्वानात्मनो लक्षणैः परैः ॥ अहं ममेत्यसद्भावं देहादौ मोहजं त्यजेत् ॥ २० ॥ स्वर्णं यथा ग्रावसु हेमकारः क्षेत्रेषु योगैस्तदभिज्ञ आप्नुयात् ॥ क्षेत्रेषु देहेषु तथात्मयोगैरध्यात्मविद्ब्रह्मगतिं लभेत ॥ २१ ॥ अष्टौ प्रकृतयः प्रोक्तास्त्रय एव हि तद्गुणाः ॥ विकाराः षोडशाचार्यैः पुमानेकः समन्वयात् ॥ २२ ॥

आश्रयः " यस्मिन्द्यौः पृथिवी चांतरिक्षम् " इति श्रुतेः । अविक्रियः " निष्कलं निष्क्रियं शांतम् " इति श्रुतेः । स्वदृक् आत्मज्योतिः " सम्राडिति होवाच " इति श्रुतेः । हेतुः "स इमाँल्लोकानसृजत" इति श्रतेः । व्यापकः "सत्यं ज्ञानमनंतम्" इति श्रुतेः।असंगी "असंगो ह्ययं पुरुषः" इति श्रतेः।अनावृतः"पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते" इति श्रुतेः ॥ १९ ॥ एतैर्द्वादशभिरात्मनो लक्षणैः परैः श्रेष्ठैर्विवेकसमर्थैर्देहाद्भेदम् । विद्वानसद्भावं मिथ्याबुद्धिं त्यजेत् ॥२०॥ नन्वेवं विविक्तात्मज्ञानिनोऽप्यपरोक्षानुभवनेन ब्रह्मताप्राप्तिः कथं स्यायतोऽहंकारादिकं त्यजेदित्यपेक्षायां तत्प्राप्तिप्रकारं सदृष्टांतमाह । स्वर्णाकरक्षेत्रेषु स्फुरत्स्वर्णकणेषु ग्रावसु योगैर्धमनाद्युपायैस्तदभिज्ञ उपायाभिज्ञो हेमकारो यथा स्वर्णं प्राप्नुयात् । आत्मयोगैरात्मप्राप्त्युपायैः । ब्रह्मगतिं ब्रह्मताम् । अध्यात्मविदात्माधिकृतकार्यकारणसंघातज्ञाता ॥२१॥ अध्यात्मविवेकमात्मप्राप्त्युपायमाह । अष्टाविति त्रिभिः । मूलप्रकृतिर्महदहंकारौ पंचतन्मात्राणि चेत्यष्टौ त्रयः सत्त्वादयस्ते च प्रकृतिगुणा एव न तु भिन्नाः । एकादशेंद्रियाणि पंच

परमात्मा नित्यः अत्र प्रमाणमाह—अविनाशीति । अरे मैत्रेयि परमे व्योमन्यरमात्मनि । अक्षरेऽपक्षयशून्ये । ऋचः प्रतिपादिकाः संतीति । निर्गतमवद्यं मालिन्यं प्रकृतिसंगजं यत्रेति । न द्वितीयो यस्मादित्यद्वितीयम् । अरे मैत्रेयि, विज्ञातारं सर्वज्ञातारं तद्भिन्नस्य ज्ञातुरभावात्तं केन विजानीयात्स एव सर्वज्ञाता न तस्यान्यो ज्ञातास्तीत्यर्थः । यस्मिन्ब्रह्मणि द्यौः स्वर्गादिकम् । आत्मानं द्योतयतीत्यात्मज्योतिः 'तद्ब्रह्मावेदहं ब्रह्मास्मि' इति श्रुतेर्वा । श्रुतयः स्पष्टार्था एव । पूर्णत्वमादायेति बाह्याभ्यंतरत्वहीनत्वं व्यापकत्वम् । अत्र संदर्भः—एको न तु देहादिसंघातरूपः । क्षेत्रज्ञो ज्ञातृत्वादिधर्मकः इंद्रियादीनामाश्रयः स्वाभाविकज्ञातृत्वादेवाविक्रियः । स्वदृक् स्वस्मै स्वयंप्रकाशः । हेतुः सर्गादेर्निमित्तं 'हेतुर्जीवोस्य सर्गादेरविद्याकर्मकारके' इति व्यापको व्याप्तशीलः । असंगी अनावृतश्च स्वतःप्रकाशरूपत्वात् ॥ १९ ॥ आत्मनः परमात्मनः परैर्जीवात्मलक्षणेभ्योऽप्युत्कृष्टैर्नित्यचिंतितैरिति शेषः । देहे दैहिकेषु चासदवास्तवभावं परमात्मचिंतनं विना सत्यपि विवेके दिग्भ्रम इव मोहो न निवर्त्तत इति भाव इति विश्वनाथः । जीवगोस्वामिनस्तु—'मोहजं त्यजेत्' इति । देहाद्यधिकरणकमोहजस्यैव त्यागो न तु स्वरूपभूतस्याहमर्थस्येति व्यज्यते । तदेवं जीवस्तदंशत्वात्सूक्ष्मज्योतीरूप इत्येके । तथैव हि कौस्तुभांशत्वेन व्यंजितं तथा च स्कांदे प्रभासखंडे जीवनिरूपणे "न तस्य रूपं वर्णो वा प्रमाणं दृश्यते क्वचित् । न शक्यं कथितुं वापि सूक्ष्मश्चानंतविग्रहः ॥ बालाग्रशतभागस्य शतधा कल्पितस्य च । तस्मात्सूक्ष्मतरो देवः स चानंत्याय कल्पते ॥ आदित्यवर्णं सूक्ष्माभमब्बिन्दुरिव पुष्करे । नक्षत्रमिव पश्यंति योगिनो ज्ञानचक्षुषा ॥" इति ॥ २० ॥ अत्राक्षिपति—नन्विति । चक्रवर्त्ती त्वात्मशब्देनेह परमात्मानमेव गृह्णातीति ध्येयम् । आत्मप्राप्त्युपायैश्चिंतनाद्यैरित्यर्थ ॥ २१ ॥ तदुक्तं सप्तत्यां कृष्णमिश्रेण मूलप्रकृतिः सर्वजनिका प्रकृतिराविकृतिरजन्या तथा चाजन्यत्वे सति जनकत्वं प्रकृतित्वम् । अजन्यत्वं प्रकृतित्वमित्युक्ते पुरुषेऽतिव्याप्तिस्तत्राप्यजन्यत्वस्य सत्त्वात् । अतो जनकत्वमिति । जनकत्वं प्रकृतित्वमित्युक्ते महत्तत्त्वादावतिव्याप्तिस्तस्याप्यहंकारज

देहस्तु सर्वसंघातो जगत्तस्थुरिति द्विधा ॥ अत्रैव मृग्यः पुरुषो नेतिनेतीत्यतत्त्यजन् ॥ २३ ॥ अन्वयव्यतिरेकेण विवेकेनोशतात्मना ॥ सर्ग स्थानसमाम्नायैर्विमृशद्भिरसत्वरैः ॥ २४ ॥ बुद्धेर्जागरणं स्वप्नः सुषुप्तिरिति वृत्तयः ॥ ता येनैवानुभूयंते सोऽध्यक्षः पुरुषः परः ॥ २५ ॥

महाभूतानि चेति षोडश । पुमानात्मैकः प्रोक्तः कपिलादिभिराचार्यैः । एकत्वे हेतुः । एषु साक्षित्वेनान्वयात् । तदुक्तम् । " मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः " इति ॥ २२ ॥ जगज्जंगमम् । तस्थुः स्थावरम् । अत्रैव सर्वसंघातात्मके देह एव पुरुषो मृग्योऽन्वेष्टव्यः । सुशकं चैतदित्याह । नेतिनेतीत्यन्यापोहे क्रियमाणे स्वयमेवातत्त्यजन् । अनात्मवर्गात्पृथगुपलभ्यमान इत्यर्थः ॥ २३ ॥ मणिषु सूत्रमिव सर्वत्रानुस्यूतत्वेनान्वयः । अत एव मणिभ्यः सूत्रस्यैवैकैकव्यतिरेकश्च तयोर्द्वंद्वैक्यम् । तेन यो विवेकः पूर्वोक्तो वा तेन उशता शुद्धेनात्मना मनसा सर्गस्थानसमाम्नायैः सृष्टिस्थितिसंहारैः । "यतो वा इमानि भूतानि जायंते " इत्यादिश्रुत्युक्तसर्गाद्यनुसंधानेनेत्यर्थः । विमृशद्भिर्विचारयद्भिः असत्वरैरव्यग्रैर्मृग्य इति पूर्वेणान्वयः ॥ २४ ॥ विमर्शप्रकारमाह । बुद्धेरिति

नकत्वादतोऽजन्यत्वे सतीत्युक्तम् । महदाद्या महत्तत्वाहंकारपञ्चतन्मात्राणि । प्रकृतिविकृतयः तत्त्वविभाजकोपाध्यवच्छिन्नजनकत्वे सति जन्या इत्यर्थः । तत्त्वविभाजकोपाधिरहंकारत्वं तदवच्छिन्नोऽहंकारस्तज्जनकत्वं महत्तत्वेऽस्ति तस्य च प्रकृतिजन्यत्वमपीति लक्षणसमन्वयः । एवं तत्त्वविभाजकोपाधिः शब्दत्वादिस्तदवच्छिन्नश्च शब्दादिस्तज्जनकत्वमहंकारे तस्य महत्तत्त्वजन्यत्वमप्यस्तीति तथा तत्त्वविभाजकोपाधयः पृथ्वीत्वजलत्वतेजस्त्ववायुत्वाकाशस्वरूपास्तदवच्छिन्नाः पृथिव्यादयस्तज्जनकत्वं गंधतन्मात्रादेस्तस्य चाहंकारजन्यत्वमप्यस्तीति ध्येयम् । तत्त्वविभाजकोपाध्यवच्छिन्नजनकत्वं प्रकृतिविकृतित्वमित्युक्ते प्रकृतावतिव्याप्तिस्तथाहि तत्त्वविभाजकोपाधिर्महत्तत्त्वत्वं तदवछिन्नं महत्तत्त्वं तज्जनकत्वं प्रकृतेरिति अतो जन्या इत्युक्तम् । जन्यत्वं तथात्वमित्युक्ते चाकाशादावतिव्याप्तिरतस्तत्त्वविभाजकोपाध्यवच्छिन्नजनकत्वे सतीत्युक्तम्।आकाशादीनां तत्त्वविभाजकोपाध्यवच्छिन्नजनकत्वाभावादिति । षोडशक इति । एकादशेंद्रियाणि पञ्चाकाशादीनि महाभूतानि च विकार इति । तत्त्वविभाजकोपाध्यवच्छिन्नाजनकत्वे सति जन्य इत्यर्थः । पुरुषस्तत्सर्वभोक्ता न प्रकृतिर्न विकृतिः । अजनकत्वे सत्यजन्य इत्यर्थः । आद्यविशेषणेन प्रकृतेर्निरासः । द्वितीयेनातींद्रियसामान्यादिनिरासः । अतींद्रियं महतत्त्वादि तन्निष्ठस्य जन्यत्वमेव महत्तत्त्वस्य यथा जन्यत्वं तथा तस्यापि सांख्यमते जन्यत्वम् । नैयायिकमते यथा जातिर्नित्या तथा सांख्यमते न किन्तु द्विविधाः पदार्थाः सामान्या विशेषाश्च यथा मृत्तिका सामान्या घटश्च विशेष इति । तदेवं पंचविंशतितत्त्वान्युक्तानि । सेश्वरसांख्यनये तु पुरुषपदेनैवेश्वरस्यापि ग्रहणं मायापदेनेश्वरसंकल्प एवोच्यते जीवादृष्टं वाऽविद्याशब्देन च जीवस्य भ्रम एवोच्यते नान्यत् अतो न तदकथनकृता न्यूनतेति संक्षेप इति सांख्यकारिकार्थः । समन्वयात् सम्यगन्वयं संबंधं प्राप्य वर्त्तमान आत्मा एक एवेत्यर्थः । यद्वा—समन्वयं संबंधमतति सातत्येन प्राप्नोतीति समन्वयात् । 'अत—सातत्यगमने' क्विबंतः ॥ २२ ॥ इत्यर्थ इति । नेतिनेतीत्यादिश्रुतिभिरन्यस्येंद्रियादेस्त्यागे कृतेऽनात्मत्वेन निश्चिते स्वयमेवात्मोपलब्धिः स्यादिति भावः । विश्वनाथस्तु—तृतीयार्थे प्रथमामतत्यजद्भिरिति व्याचख्यौ ॥ २३ ॥ अत एव सर्वत्रानुस्यूतत्वादेव । तयोरन्वयव्यतिरेकशब्दयोः पूर्वोक्तो वात्मानात्मधर्मैर्यो विवेकप्रकारस्तेन च । इत्यर्थ इति । न हि विना कारणं कार्यमुत्पद्यतेऽतो जगत उत्पत्त्यादिरूपकार्येणापीश्वरोऽनुमीयते इति भावः । विश्वनाथः—ननु तर्हि देहोऽतन्मय एव तथा चातत्त्यागे शून्यमेवावशिष्यते इत्यत आह—अन्वयेति । देहे परमात्मनोऽन्वयः परमात्मनि देहव्यतिरेको यः प्रसिद्धस्तेन जडानामपि बुद्ध्यादीनां यदन्वयेनैव प्रवृत्तिः बुद्ध्यादिव्यतिरिक्तश्च यः स परमात्मा देहस्थ इति यो विवेकस्तेन तथा उशता शुद्धेन मनसेति पूर्ववत् ॥ २४ ॥ यदन्विता बुद्धिः प्रवर्त्तते

एभिस्त्रिवर्णैः पर्यस्तैर्बुद्धिभेदैः क्रियोद्भवैः ॥ स्वरूपमात्मनो बुध्येद्गंधैर्वायुमिवान्वयात् ॥ २६ ॥ एतद्द्वारो हि संसारो गुणकर्मनिबंधनः ॥ अज्ञानमूलोऽपार्थोऽपि पुंसः स्वप्न इवेष्यते ॥ २७ ॥ तस्माद्भवद्भिः कर्तव्यं कर्मणां त्रिगुणात्मनाम् ॥ बीजनिर्हरणं योगः प्रवाहोपरमो धियः ॥ २८ ॥ तत्रोपायसहस्राणामयं भगवतोदितः ॥ यदीश्वरे भगवति यथा यैरंजसा रतिः ॥ २९ ॥ गुरुशुश्रूषया भक्त्या सर्वलब्धार्पणेन च ॥ संगेन साधुभक्तानामीश्वराराधनेन च ॥ ३० ॥

द्वाभ्याम् । अध्यक्षः साक्षी ॥२५॥ अत एभिर्बुद्धिभेदैः परिणामैः पर्यस्तैः पारितः क्षिप्तैरनात्मधर्मत्वे निरस्तैः । बुद्धिधर्मत्वे हेतुः त्रिवर्णैस्त्रिगुणात्मकैः क्रियोद्भवैः कर्मजन्यैः बुद्धेरेव त्रिगुणात्मकत्वात्कर्मकर्तृत्वाच्च तस्या एवैता अवस्थाः । आत्मा तु बुद्ध्यन्वयात्तदवस्थावानिवाभाति न तत्त्वत इत्यात्मनः स्वरूपं बुद्ध्येज्जानीयादित्यर्थः । अत्र दृष्टांतः । कुसुमधर्मैर्गंधैस्तदाश्रयं वायुमिव ॥ २६ ॥ ननु तर्हि यथा कुसुमोपाधिकोऽपि वायोर्गंधो विवेकज्ञानेन निवर्तते एवमात्मनः संसारो न निवर्तत इत्याशंक्याह । एतद्द्वारो बुद्धिद्वारकस्तदवस्थाद्वारको वा संसारो न स्वतः।हि यस्माद् बुद्धेर्ये गुणाः कर्माणि च तैर्निबध्यत इति तथा स चाज्ञानमूलोऽतोऽपार्थो मिथ्याभूतोऽपि स्वप्न इवेष्यते। वायोस्तु गंधद्रव्यसंबंधस्य वास्तवत्वाद्विषमो दृष्टांतः॥२७॥यस्मादेवं निवृत्तिर्घटते तस्माद्बीजमज्ञानं तस्य निर्हरणं दहनम् । किं तत् योगः।कथंभूतः। धियः प्रवाहं जाग्रदादिरूपमुपरमयतीति तथा ॥ २८ ॥ तदेवं ज्ञानप्रकारमुक्त्वा तत्साधनं धर्मस्य तत्त्वं नारदोक्तमेवाह । तत्रेति पंचभिः । यैर्धर्मैर्यथा यथावदनुष्ठितैर्वा भगवति श्रीनारायणे रतिरिति यदयमुपायो भगवतोक्तः । तथा च गीतासूक्तम् । "यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥ यत्तपस्यसि कौंतेय तत्कुरुष्व मदर्पणम्" इति " भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः" इत्यादि च ॥ २९ ॥ तत्रैवांतरंगान्धर्मानाह । गुरोः शुश्रूषया प्रेम्णा सर्वेषां लब्धानामर्पणेन च ॥ ३० ॥

स परमात्मा यो बुद्धावन्वितः स जीवात्मेति भेदः ॥ २९ ॥ इत्यर्थ इति । बुद्ध्यध्यासकृत एवात्मनोऽवस्थावत्त्वमिति भावः । अत्रान्यधर्मेणान्यज्ञाने ॥ २६ ॥ अत्राक्षिपति—नन्विति अतोऽज्ञानमूलत्वात् ॥ २७ ॥ तस्मान्निवृत्तये यतितव्यमित्याह—तस्मादिति उं । रुद्रं पातीत्युपो विष्णुः । 'उपोधिके च' इति सूत्राच्च सर्वाधिके हरौ रमो रमणं सर्वदा चिंतनं यत्स एव योग इति वार्थः ॥ २८ ॥ तत्र बीजनिर्हणविषये । उपायसहस्राणां मध्येऽयं भगवता श्रीनारायणेनोदितः । अन्ये तु मुनिभिरुदितत्वादतो निकृष्टा एवेति भावः । अयमेव कस्तत्राह—यदिति । यैर्गुरुशुश्रूषणाद्यंगैरुत्पन्नाद्यद्यस्माद्भक्तियोगाद्रतिर्भवति । अयं भक्तियोग एवोपाय इत्यन्वयः । अत्र पंचम्यंतयत्पदादंजसा शब्दाच्च रतिरेव भक्तियोगस्य मुख्यं फलं बीजनिर्हरणं त्वानुषंगिकमयत्नत एव शुद्धभक्तानां भवेत् । तदुक्तं "जरयत्याशु या कोशं निगीर्णमनलो यथा" इति । संदर्भस्तु—अथ स्वप्रतिपत्तिं प्रतिपादयति—तत्रेत्यादिभिः । तत्र पूर्वोक्ते त्रिगुणात्मकर्मणां बीजनिर्हरणेप्युपायसहस्रैः सिद्धानां मध्येऽयमेवोपायो भगवता श्रीनारदेन मां प्रत्युपदिष्टः । यैरुपायसहस्रैः सिद्धाद्यद्यस्मादुपायाद्यथा यथावदीश्वरे भगवत्यंजसा व्यवधानांतरं विनैव रतिः प्रीतिर्भवति । अतो बीजनिर्हरणमपि तस्यानुषंगिकमेव फलमिति भावः ॥ २९ ॥ तत्रैव भगवद्रतावेव । स्नपनसंवाहनादिरूपया गुरुसेवया साधवः सदाचारा ये भक्तास्तेषां संगेन

श्रद्धया तत्कथायां च कीर्तनैर्गुणकर्मणाम् ॥ तत्पादांबुरुहध्यानात्तल्लिंगेक्षाऽर्हणादिभिः ॥ ३१ ॥ हरिः सर्वेषु भूतेषु भगवानास्त ईश्वरः ॥ इति भूतानि मनसा कामैस्तैः साधु मानयेत् ॥ ३२ ॥ एवं निर्जितषड्वर्गैः क्रियते भक्तिरीश्वरे ॥ वासुदेवे भगवति यया संलभते रतिम् ॥३३॥ निशम्य कर्माणि गुणानतुल्यान् वीर्याणि लीलातनुभिः कृतानि ॥ यदातिहर्षोत्पुलकाश्रुगद्गदं प्रोत्कंठ उद्गायति रौति नृत्यति ॥ ३४ ॥ यदा ग्रहग्रस्त इव क्वचिद्धसत्याक्रंदते ध्यायति वंदते जनम् ॥ मुहुः श्वसन् वक्ति हरे जगत्पते नारायणेत्यात्ममतिर्गतत्रपः ॥ ३५ ॥ तदा पुमान् मुक्तसमस्तबंधनस्तद्भावभावानुकृताशयाकृतिः ॥ निर्दग्धबीजानुशयो महीयसा भक्तिप्रयोगेण समेत्यधोक्षजम् ॥ ३६ ॥ अधोक्षजालंभमिहाशुभात्मनः शरीरिणः संसृतिचक्रशातनम् ॥ तद्ब्रह्मनिर्वाणसुखं विदुर्बुधास्ततो भजध्वं हृदये हृदीश्वरम् ॥ ३७ ॥

तस्य लिंगानां मूर्तीनामीक्षणमर्हणमादिर्येषां वंदनादीनां तैश्च॥ ३१ ॥ ३२॥ निर्जितः षण्णां कामक्रोधलोभमोहमदमत्सराणामिंद्रियाणां वा वर्गो यैः॥ ३३॥ भगवद्रतेर्लिंगान्याह। निशम्येति त्रिभिः । गुणान्भक्तवात्सल्यादीन् । अतिहर्षेणोद्गताः पुलका अश्रूणि च तैर्गद्गदं यथा भवत्येवं प्रोत्कंठो मुक्तकंठ उद्गायति॥ ३४॥ ३५॥ तस्य भावश्चेष्टादिस्तस्य भावो भावना तेनानुकृते आशयाकृती मनःशरीरे यस्य निर्दग्धं बीजमज्ञानमनुशयो वासना च यस्य सः सम्यगेति प्राप्नोति ॥ ३६ ॥ ततः किमत आह । अधोक्षजस्याऽऽलंभं मनसा स्पर्शम् । पाठान्तरे तस्याश्रयणम् । अशुभात्मनोऽशुभो रागादियुक्त आत्मा मनो यस्य । संसृतिचक्रशातनं तन्निवर्तकं बुधा विदुस्तदेव ब्रह्मणि निर्वाणं

एतेनाचाररहितानां भक्तानामपि संगो न कार्यः कल्याणेप्सुनेति द्योतितम् । भक्तिरप्याचारहीना न शोभते कृत्तनासिकस्त्रलंकृतस्त्रीव " नैवाचारं विना भक्तिः कृत्तनासा यथाबला" इति वाक्यात् ॥ ३० ॥ ३१ ॥ तैस्तदीक्षितैः कामैर्भोगैः । इतीत्थं विमृश्य ॥ ३२ ॥ ३३ ॥ कर्माणि नवनीतचौर्यादीनि । वीर्याणि गोवर्द्धनोद्धरणादीनि । प्रोत्कंठ उच्चस्वरः ॥ ३४ ॥ ग्रहग्रस्त इव भूताविष्ट इव ॥ ३५ ॥ तस्मिन्भावा दास्यसख्यादयस्तेषां भावना दासोऽहं सखाहमित्याद्यात्मना मननं तेनानुकृते अनुरूपीकृते आशयाकृती मनःशरीरे यस्य स तथा ॥ ३६ ॥ ततोऽधोक्षजालंभात् । पाठांतरे अधोक्षजालंबमिति पाठे । अत्र विश्वनाथः—ननु ब्रह्मनिर्वाणसुखमेव पुरुषार्थसार इति प्रसिद्धिः सत्यं तदप्यधोक्षजसंयोग एवांतर्भवतीत्याह—अधोक्षजस्यालंभं मनसेषत्स्पर्शं साक्षात्प्राप्तिं वा संसृतिचक्रस्य शातनं निवर्तकं विदुर्जानंति तदेव ब्रह्मनिर्वाणसुखं च विदुः । अधोक्षजस्यैव ब्रह्मत्वात् तच्चरणमाधुर्यानुभवस्यैव परमानंदरूपत्वेन निर्वाणसुखरूपत्वात् । तत्र दास्यादिभावत्वेन ममताविशेषोत्थं तु सुखमविक्रमप्यपारमेव यथा सर्वजनसुभगे परमाह्लादके चंद्रे दृष्टे यः स्वभाविक आनंदस्तस्मात्कोटिगुणित आनंदः स्वपुत्रे षंढान्धबधिरेपि सर्वजनदुर्भगेपि ममतोत्थः स्यादित्यतो भगवति दास्यादिभाववत्त्वे परब्रह्मणि स्वरूपोत्थ एव परमानंदावधिस्तत्रैव यदि ममतोत्थोऽपि स्यात्तदा किं वक्तव्यमानंदपारावारपरंसहस्रसंमर्दमध्यपातित्वसौभगोत्कर्षः महामहत्त्वमत एवोक्तम् ' या निर्वृतिस्तनुभृताम् ' इति । अन्यत्र च " ब्रह्मानंदो भवेदेष चेत्परार्द्धगुणीकृतः । नैति भक्तिसुखांभोधेः परमाणुतुलामपि " इति ।

कोऽतिप्रयासोऽसुरबालका हरेरुपासने स्वे हृदि छिद्रवत्सतः ॥ स्वस्यात्मनः सख्युरशेषदेहिनां सामान्यतः किं विषयोपपादनैः ॥ ३८ ॥ रायः कलत्रं पशवः सुतादयो गृहा महीकुंजरकोशभूतयः ॥ सर्वेर्थकामाः क्षणभंगुरायुषः कुर्वंति मर्त्यस्य कियत्प्रियं चलाः ॥ ३९ ॥ एवं हि लोकाः क्रतुभिः कृता अमी क्षयिष्णवः सातिशया न निर्मलाः ॥ तस्माददृष्टश्रुतदूषणं परं भक्त्यैकयेशं भजतात्मलब्धये ॥ ४० ॥ यदध्यर्थ्येह कर्माणि विद्वन्मान्यसकृन्नरः ॥ करोत्यतो विपर्यासममोघं विंदते फलम् ॥ ४१ ॥

लयो मोक्षस्तदात्मकं सुखं विदुः । हृदीश्वरमंतर्यामिणम् ॥ ३७ ॥ भक्तिरशक्येति च न मंतव्यमित्याह । क इति । छिद्रवदाकाशवद्धृदि तिष्ठतो विषयाणामुपपादनैर्जनैः किम् । तत्र हेतुः । सर्वदेहिनां सामान्यतः विषयनिष्ठत्वे सूकरादिसाधारण्यापत्तेरित्यर्थः । न चैवमादौ पौनरुक्त्यदोषः नारदोक्तानुवादरूपत्वादस्य प्रकरणस्य ॥ ३८॥ अनर्थकं विषयार्जनमित्याह । रायोर्थाः क्षणभंगुरमायुर्यस्य तस्यैते कियत्प्रियं कुर्वंति । तदुक्तमितिहासेषु । "धनं हि पुरुषो लोके पुरुषं धनमेव वा ॥ अवश्यमेकं त्यजति तस्मात्किं धनतृष्णया" इति ॥ ३९ ॥ "यन्न दुःखेन संभिन्नं न च ग्रस्तमनंतरम् ॥ अभिलाषोपनीतं च तत्सुखं स्वपदास्पदम्" इत्येवंभूताः स्वर्गादिभोगा अपि न सेवार्हा इत्याह । एवं हीति । क्षयिष्णुत्वे हेतुः क्रतुभिः कृता इति । तद्यथेह "कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतेः । अत एव पुण्यतारतम्येन सातिशयाः । न च निर्मलाः स्पर्धादिमत्त्वात् । न विद्यते दृष्टं श्रुतं च दूषणं यस्मिन् ॥ ४० ॥ किं च यदध्यर्थ्य यत्संकल्प्य । अतः संकल्पिताद्विपर्यासं

पाठांतरे । अधोक्षजस्यालंबो विषयालंबनं यत्र तम् । अर्थाद्दास्यसख्यादिरसं हृदीश्वरं हृदयनाथमिति दास्यादिभावविशिष्टा भक्तिर्व्यंजिता ॥ ३७ ॥ तत्र विषयोपार्जने सर्वदेहिनां पशुपक्ष्यादीनां सामान्यतस्तुल्यत्वं स्यादित्यर्थ इति । हरिभजनं विना केवलविषयसेविनस्तु द्विपदपशव एवेति भावः । "ये मानुष्यं सर्वयत्नैरलभ्यं संप्राप्यापि श्रीहरिन्नो भजंते । ते विज्ञेया मानवाः श्रृंगपुच्छैर्हीना लोके सैरिभा ऐंद्रियाक्ताः ॥" इत्यभियुक्तोक्तेः । अत्र कौमारे । आचरेदित्यादिना 'न ह्यच्युतं प्रीणयतो बह्वायासः' इत्यादिपूर्वग्रंथेन चोक्तोप्ययमर्थः पुनस्तस्य कथने पुनरुक्तिदोषो नाशंक्य इत्याह । न चैवमादाविति । कथितकथनस्यैवानुवादपदार्थत्वात् । अत्र विश्वनाथः—सर्वश्रेष्ठाया अपि भक्तेः सुखसाध्यत्वमाह—कोतीति । आत्मनो जीवस्य सख्युः " सयुजा सखाया " इति श्रुतेः । न हि सख्युरुपासने किंचित्कष्टमिति भावः । उपास्यस्य स्वतो विद्यमानत्वात्प्रियत्वाच्च उपासनस्य च श्रवणादिरूपत्वात्तत्साधनानां श्रोत्रादीनां च स्वत एव विद्यमानत्वान्नहि कुतश्चन काचन तत्सामग्र्या नेतव्येति भावः । परं नरके साधनेऽपि श्रमोऽस्तीति व्यंजयन्वैषयिकसुखप्रवृत्तिं निंदति विषयाणां स्रक्चन्दनवनितादीनामुपपादनैर्द्रव्यादिनोपार्जनैः किं न किमप्याधिक्यमित्यर्थः । तत्र हेतु—सर्वदेहिनामिति । स्वामिचरणोक्त एव । यद्वा—सर्वदेहिनां सामान्यतोऽसाधारणत्वेन हृदि स्थितत्वात्सख्युरिति योज्यम् ॥३८॥ आदिना पौत्रादिग्रहः । भूतिरैश्वर्यम् । धनादितृष्णात्यागे प्रमाणमाह—तदुक्तमित्यादिना ॥ ३९ ॥ संभिन्नं मिलितं ग्रस्तं विनाशि । अनंतरमव्यवहितम् । अभिलाषे सत्येवोपपन्नं तत्क्षणमेव प्राप्तं यत्सुखं तत्स्वर्गपदस्य स्वर्गशब्दस्यास्पदं वाच्यमित्यर्थः।स्वर्गपदं स्वर्गस्थानमास्पदं निवासभूर्यस्य तदिति वा इत्येवंभूता ईदृशलक्षणलक्षिता श्रुतिस्तु व्याख्यातचरा । अत एव कृतकत्वादेव । न दृष्टं श्रुतं च शास्त्रतात्पर्यज्ञैर्दूषणं यत्र तम् । आत्मलब्धये आत्मकर्तृकहरिप्राप्तये परमात्मप्राप्तये वा । यद्वात्मरूपरतस्य प्राप्तये अन्यथा तत्स्वर्गनरकादिकर्दमे क्षिप्तं नष्टमेव जानीतेति भावः । संदर्भस्तु—आत्मनो लब्धये भजतान्यथा नाशयिष्यथेति भावः ॥४०॥ हरिभजनेतरकर्मणां

सुखाय दुःखमोक्षाय संकल्प इह कर्मिणः ॥ सदाप्नोतीहया दुःखमनीहायाः सुखावृतः ॥ ४२ ॥ कामान् कामयते काम्यैर्यदर्थमिह पूरुषः ॥ स वै देहस्तु पारक्यो भंगुरो यात्युपैति च ॥ ४३ ॥ किमु व्यवहितापत्यदारागारधनादयः ॥ राज्यं कोशगजामात्यभृत्याप्ता ममतास्पदाः ॥ ४४ ॥ किमेतैरात्मनस्तुच्छैः सह देहेन नश्वरैः ॥ अनर्थैरर्थसंकाशैर्नित्यानंदमहोदधेः ॥ ४५ ॥ निरूप्यतामिह स्वार्थः कियान् देहभृतोऽसुराः ॥ निषेकादिष्ववस्थासु क्लिश्यमानस्य कर्मभिः ॥ ४६ ॥ कर्माण्यारभते देही देहेनात्मानुवर्तिना ॥ कर्मभिस्तनुते देहमुभयं त्वविवेकतः ॥ ४७ ॥ तस्मादर्थाश्च कामाश्च धर्माश्च यदपाश्रयाः ॥ भजतानीहयात्मानमनीहं हरिमीश्वरम् ॥ ४८ ॥ सर्वेषामपि भूतानां हरिरात्मेश्वरः प्रियः ॥ भूतैर्महद्भिः स्वकृतैः कृतानां जीवसंज्ञितः ॥ ४९ ॥

विपरीतं फलममोघमवश्यं प्राप्नोति ॥ ४१ ॥ तदेव दर्शयति । सुखायेति । ईहया इच्छया क्रियया वा यः पूर्वमनहिाया हेतोः सुखेनावृतो व्याप्त आसीत्स ईहया दुःखमाप्नोत्येव ॥ ४२ ॥ किं च कामान्भोगान्काम्यैर्विषयैः कर्मभिर्वा पारक्यः श्वादिभोग्यो न त्वात्मीयो भंगुरश्च ॥ ४३ ॥ किमु देहाद्व्यवहिता अपत्यादयो ममताविषयाः पारक्या इति वक्तव्यम् ॥ ४४ ॥ किं च स्वयं पुरुषार्थरूपस्य किमेतैरतितुच्छैरित्याह । किमेतैरिति ॥ ४५ ॥ भोगावसराभावाच्चैतैः क्व उपयोग इत्याह । निरूप्यतामिति । प्राचीनैः कर्मभिः क्लिश्यमानस्य कर्मभिः कियान्स्वार्थ इति वाऽन्वयः ॥ ४६ ॥ ननु कर्मसु समाप्तेषु भोगावसरः स्यात्तत्राह । कर्माणीति । न चेदं कर्म तस्य फलं देहादिकं च परमार्थ इत्याह । उभयं कर्म च देहं च । अविवेकतोऽज्ञानेनैव तनुते ॥ ४७ ॥ अर्थादयो यदपाश्रया यदधीनाः ॥ ४८ ॥ भूतानां प्राणिनाम् । जीवसं

फलमपि व्यभिचार्येवेत्याह—किञ्चेति । यथा सुखार्थमपि कृतस्त्रीसंगादिः पुत्राद्यनुत्पत्त्यादिनाऽनर्थहेतुरेव स्यादिति भावः ॥ ४१ ॥ तदेव फलवैपरीत्यमेव ॥ ४२ ॥ भंगुरो विनाशी । याति नश्यति । उपैति पुनर्दुःखदानायोत्पद्यायाति ॥ ४३ ॥ आदिना मित्रादिग्रहः ॥ ४४ ॥ नित्यानित्ययोः संबंधोऽपि नानुरूप इत्याह—किञ्चेति । नित्यश्चासावानंदमह आनंदोत्सवस्तस्योदधेर्नित्यसुखसमुद्रस्यात्मन एतैः किं क उपयोगः । यद्वा नित्यो भजनरूपानंदरसोदधिर्यस्य भक्तजनस्यात्मनो जीवस्येत्यर्थः ॥ ४५ ॥ हे असुरा इति । इंद्रियपोषणपराणां कदापि सुखं नोत्पद्यत इति भावः । निषेकादिष्विहादिना गर्भाद्यवस्थानवकग्रहः । " निषेकगर्भजन्मानि बाल्यकौमारयौवनम् । वयोमध्यं जरा मृत्युरित्यवस्थास्तनोर्नव ॥ " इत्येकादशस्कंधोक्तेः । प्रथमव्याख्याने कियान् स्वार्थ इह करणापेक्षानिवृत्त्यभावादाह—कर्मभिः कियान्स्वार्थ इति ॥ ४६ ॥ अत्राक्षिपति—नन्विति । स्वप्ने स्वप्नवदुभयमविवेककार्यमेवेत्यर्थः । यद्वा—देहेन मानुषदेहेन कर्मसाधकेन देहं स्वर्गिशरीरम् उभयं देहद्वयमविवेकतः तदुभयस्याहं कर्म कुर्वे इति अहंकर्मफलं स्वर्गमुपभुंज इत्यभिमानमूलत्वादभिमानस्याविवेकमूलत्वात् । आत्मानश्च देहद्वयातिरिक्तत्वादिति ॥ ४७ ॥ यस्माद्धरिभक्तिं विना सर्वमसदेव तस्माद्धेतोः । अनीहया निरुपाधिकया । अनीहं तथैव निरुपाधिकृपाकरम् । " अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः " इति वक्ष्यमाणत्वात् । यदपाश्रया यदधीनाः । अनडुहां वृषाणां कर्तृत्वभोक्तृत्वादयः स्वाम्यधीना इवेत्यर्थः ॥ ४८ ॥ यस्मात्सर्वेषां देहश्च जीवश्च परमात्मा च प्रियश्च वस्तुतो हरिरेव तस्मात्तं भजतेत्याह—सर्वेषां देवतिर्यगादीनामप्यात्मा परमात्मा स एवेश्वरः । स्वेनैव कृतैः कृतानामिति । देहोऽपि तत्कारणत्वात्स एव जीवसंज्ञा जाता यस्य सः । जीवस्य तदीयतटस्थशक्तिरूपत्वात् । यद्वा—सर्वेषां प्रियत्वादपि तमेव भजतेत्याह सर्वेषां

देवोऽसुरो मनुष्यो वा यक्षो गंधर्व एव च ॥ भजन्मुकुंदचरणं स्वस्तिमान् स्याद्यथा वयम् ॥ ५० ॥ नालं द्विजत्वं देवत्वमृषित्वं वासुरात्मजाः ॥ प्रीणनाय मुकुंदस्य न वृत्तं न बहुज्ञता ॥ ५१ ॥ न दानं न तपो नेज्या न शौचं न व्रतानि च ॥ प्रीयतेऽमलया भक्त्या हरिरन्यद्विडंबनम् ॥ ५२ ॥ ततो हरौ भगवति भक्तिं कुरुत दानवाः ॥ आत्मौपम्येन सर्वत्र सर्वभूतात्मनीश्वरे ॥ ५३ ॥ दैतेया यक्षरक्षांसि स्त्रियः शूद्रा व्रजौकसः ॥ खगा मृगाः पापजीवाः संति ह्यच्युततां गताः ॥ ५४ ॥ एतावानेव लोकेऽस्मिन् पुंसः स्वार्थः परः स्मृतः ॥ एकांतभक्तिर्गोविंदे यत्सर्वत्र तदीक्षणम् ॥ ५५ ॥ इति श्रीभागवते महापुराणे सप्तमस्कंधे प्रह्लादेन दैत्यपुत्राणामनुशासने ब्रह्मस्वरूपवर्णनं नाम सप्तमोऽध्यायः ॥ ७ ॥

ज्ञितोंतर्यामी ॥ ४९ ॥ असुराणामस्माकमत्राऽनधिकार इत्यपि न वाच्यमित्याह । देव इति पंचभिः ॥ ५० ॥ ५१ ॥ अमलया निष्कामया । अन्यद्विडंबनं नटनमात्रम् ॥ ५२ ॥ ॥ ५३ ॥ अच्युततामसृतत्वम् ॥ ५४ ॥ अध्यायद्वयोक्तमुपसंहरति । एतावानिति । तदीक्षणं गोविंददृष्ट्या संमाननम् ॥ ५५ ॥ इति श्रीसप्तमे टीकायां सप्तमोऽध्यायः ॥ ७ ॥

भूतान। यो जीवसंज्ञो जीवनामा ततोऽपि प्रियः ॥ ४९ ॥ यस्मादेवं तस्मात्सर्व एव भक्तिं कुर्यादित्याह–देव इति । स्वस्तिमान् ऐहिकामुष्मिककल्याणभाक् यथा वयमिति । बहुत्वं तु “ एकत्वं न प्रयुंजीत गुर्वात्मनि कदाचन ” इति स्मृतेरहमित्यर्थः । अनेकधोपायैर्विषाग्निप्रवेशादिभिर्मार्यमाणोऽपि केवलहरिभजनप्रभावेणैव न मृत इत्यैहिकमत्र कल्याणं भवद्भिः प्रत्यक्षीकृतमेतेनैव पारलौकिकं तन्निश्चिनुतातो यूयमपि तमेव भजतेति भावः ॥ ५० ॥ द्विजत्वं त्रिवर्णत्वम् । ऋषित्वं ब्राह्मणत्वम् । वृत्तं सद्वृत्तम् । ‘ वृत्तं स्वरूपे चरिते ’ इति यादवः । बहुज्ञता पांडित्यम् । नालं न समर्थमित्यर्थः । हे असुरात्मजा इति । वयमसुरकुलोद्भूता न भक्त्यधिकारिण इति मा शंकध्वमिति भावः ॥ ५१ ॥ तपः स्वधर्मनिष्ठत्वमिंद्रियसंयमो वा । इज्या यागः । शौचं कर्मानासक्तिः ‘ कर्मस्वसंगमः शौचम् ’ इति श्रीमुखोक्तेः । व्रतानि कृच्छ्रादीनि । मलं कामस्तद्रहितया “ मलं पापे च विष्ठादौ वासनायां च धारणे । कपटे मलिने सृष्टौ ” इति धरणिः । नटनमात्रमनुकरणमात्रमित्यर्थः ॥ ५२ ॥ यतो भक्तिं विनान्यद्विडंबनमेव ततो हेतोः । सर्वत्र सर्वस्मिन्देशे काले च आत्मौपम्येन आत्मनि यथानुऽऽकूल्येन कायमनोवचनवृत्तिरूपं भजनं कुरुत तद्वदपि कुरुत । विश्वनाथस्तु–आत्मौपम्येनेत्यत्र सुखदुःखादिदृष्ट्येति शेष इत्याह–दानवा इत्यत्र दानं भक्त्युपदेशस्तद्योग्या इति भावः ॥ ५३ ॥ व्रजौकसः खगा मृगाश्च पापजीवा नीचजातयोऽपि व्रजवासिनः श्रीकृष्णभक्त्याऽच्युततां च्युतिराहित्यमिता इत्यन्वयः । संदर्भस्तु–व्रजौकसोऽत्र नीचसहपाठात् । ‘ किरातहूणांध्रपुलिंदपुष्कसा आभीरकंका यवना खसादयः ’ इत्यादाविव गवोपजीवना नीचजातिविशेषा एवाभीरा ज्ञेयाः । न तु “ कृषिवाणिज्यगोरक्षं कुसीदं तुर्य्यमुच्यते । वार्त्ता चतुर्विधा तत्र वयं गोवृत्तयोऽनिशम् ” इतिवद्वैश्यभेदा इति विशेषः प्रतिपत्तव्य इत्याह । विश्वनाथस्तु–न च भक्तिः सज्जात्यादिकमपेक्षत इत्याह–दैतेया इति । अच्युततां चिन्मयशरीरत्वेनाच्युततुल्यत्वम् । यद्वाऽच्युततामच्युतिं गताः कर्मिण इव न च्युता भवंति ब्रह्मादिलोकत इत्यर्थः । तदुक्तं काशीखंडे–“ न च्यवंते च यद्भक्ता महत्यां प्रलयापदि । अतोच्युतोऽखिले लोके विद्वद्भिः परिकीर्त्तितः ॥ ” इति ॥ ५४ ॥ एकांत भक्तिरनन्याभक्तिर्यत् यस्यां भक्तौ सत्यां सर्वत्रैव स्थावरजंगमवस्तुषु तदीक्षणं भगवतो भावनापरिपाकेन भगवदीक्षणं यदुक्तम् “नारायणमयं धीराः पश्यंति परमार्थिनः । जगद्धनमयं लुब्धः कामुकः कामिनीमयम् ॥ ” इति । यथा प्रह्लादोऽयं स्तंभेऽपि भगवंतमपश्यत् ॥ ५५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥

नारद उवाच ॥ अथ दैत्यसुताः सर्वे श्रुत्वा तदनुवर्णितम् ॥ जगृहुर्निरवद्यत्वान्नैव गुर्वनुशिक्षितम् ॥ १ ॥ अथाचार्यसुतस्तेषां बुद्धिमेकांतसंस्थिताम् ॥ आलक्ष्य भीतस्त्वरितो राज्ञ आवेदयद्यथा ॥ २ ॥ श्रुत्वा तदप्रियं दैत्यो दुःसहं तनयानयम् ॥ कोपावेशचलद्गात्रः पुत्रं हंतुं मनो दधे ॥ ३ ॥ क्षिप्त्वा परुषया वाचा प्रह्लादमतदर्हणम् ॥ आहेक्षमाणः पापेन तिरश्चीनेन चक्षुषा ॥ ४ ॥ प्रश्रयावनतं दांतं बद्धांजलिमवस्थितम् ॥ सर्पः पदा हत इव श्वसन्प्रकृतिदारुणः ॥ ५ ॥ हे दुर्विनीत मंदात्मन् कुलभेदकराधम ॥ स्तब्धं मच्छासनोद्वृतं नेष्ये त्वाऽद्य यमक्षयम् ॥ ६ ॥ क्रुद्धस्य यस्य कंपंते त्रयो लोकाः सहेश्वराः ॥ तस्य मेऽभीतवन्मूढ शासनं किंबलोऽत्यगाः ॥ ७ ॥

अष्टमेऽतिरुषा सूनुं निघ्नन्दैत्यो हतः स्वयम् ॥ आविर्भूय नृसिंहेन स च ब्रह्मादिभिः स्तुतः ॥ १ ॥ अंतः कृपासुधापूर्णो बहिःक्रोधो नृकेसरी ॥ दैत्येंद्रमरिभावेन भजंतं समभावयत् ॥ २ ॥ १ ॥ एकांतसंस्थितां प्रत्यङ्निष्ठाम् । यथा यथावत् ॥ २ ॥ स च पुत्रं हंतुं मनो दधे । कथंभूतः कोपस्यावेशेनोद्रेकेण चलद्गात्रं वपुर्यस्य सः ॥ ३ ॥ क्षिप्त्वा तिरस्कृत्य पापेन सरोषेण तिरश्चीनेन वक्रेण ॥ ४ ॥ ५ ॥ हे मंदात्मन्नल्पबुद्धे मदाज्ञाऽतिलंघिनं त्वामद्य यमालयं नेष्यामि ॥ ६ ॥ अभीतवत्

स च नृसिंहः ( १ ) स्वमात्मानमरिभावेन भजंतम् । अभावयदमारयत् । अभावं करोतीत्यभावयति लङि चाभावयत् । यद्वा—स्वं स्वीयं पार्षदं कर्तुमनाशयत् । त्रिजन्मस्वेकं जन्म समापयदित्यर्थः । अरिभावेन भजंतमपि स्वं स्वीयमेवाचिंतयत् । 'भू—मिश्रीकरणचिंतनयोः ' इत्यस्य वा रूपम् । स्वं स्वीयमभावयदकरोत् स्वर्गस्थदेवेषु तमस्थापयदित्यर्थः । " मदंगस्पर्शनेनांग लोकान्यास्यति सुप्रजाः " इति वक्ष्यमाणत्वात् । देवा हि भगवदेकपरत्वाद्भगवता एव तेषु भगवतोऽपि स्वीयाभिमानो ' सर्वे देवा हि मामकाः ' इति पुराणांतरे भगवदुक्तेः ( २ ) अथ प्रह्लादोपदेशादनंतरम् । तेन प्रह्लादेनानुवर्णितं विष्णुं तद्भक्तियोगं वा निरवद्यत्वाद्रागद्वेषमलराहित्येन शुद्धत्वात् स्वीचक्रुः । गुरुभ्यामुपशिक्षितं तु सावद्यत्वाद्रागद्वेषोत्पादकत्वेनाशुद्धत्वान्न स्वीचक्रुरित्यर्थः ॥ १ ॥ अथ सर्वबालकर्तृकहरिभक्तिदर्शनानंतरम् । एके मुख्यश्चासावंतोऽवधिरेकांतो विष्णुर्यद्वैकस्मिन्हरावन्तो निष्ठा यस्य स एकांतो भक्तियोगस्तत्र संस्थितां प्राप्ताम् । राज्ञे हिरण्यकशिपवे यथावदावेदयदवर्णयत् ॥ २ ॥ तद्धरूक्तं शत्रूत्कर्षस्य दुस्सहत्वमप्रियत्वं च प्रसिद्धमेव ॥ ३ ॥ परुषया निष्ठुरया ॥ ४ ॥ ५ ॥ वास्तवोऽर्थस्तु—दुष्टेष्वपि विशिष्टं नीतं कृपालक्षणं यस्य परदुःखासहिष्णुत्वात् । यद्वा—दुर्गता विनीतिर्विरुद्धनीतिर्यस्मात्स तथा नीतिकोविद इत्यर्थः । मंदानां मूढानामप्यात्मा मनो यत्र सर्वचित्ताकर्षकत्वात् । कुलभेदकराः कुलविशेषस्रष्टारः प्रजापतयोऽप्यधमा यस्मान्महाविभूतिमत्त्वात् । यद्वा—कुलानां सैन्यसमूहानां भेदकरा दैत्या अधमा यस्मात्स दैत्यकुलोत्तम इत्यर्थः । स्तब्धमसुरेषु पूज्यबुद्धित्वाभावात् यद्वा—स्तभ्नाति रुणद्धि सर्वं स्वस्मिन्निति स्तब्धो विष्णुः स्वोदरीकृतविश्वत्वात्तम् । यमानामष्टांगयोगांगानां क्षयं निवासभूतं त्वां नेष्ये स्वत्रायकत्वेनांगीकरिष्यामीत्यर्थः । वस्तुतो यं लोका अक्षयं क्षयरहितं विष्णुं वदंति तं प्रति नेष्ये दर्शयिष्यामीति भावः । मां शास्तीति मच्छासनो ब्रह्मा सोप्युद्धतः कंपितो वत्सपालावगूहने यस्मात्तम् । ' अनुजानीहि मां नाथ ' इत्यादितदुक्तेः ॥ ६ ॥ अभीतवन्निर्भयवत् ।

प्रह्लाद उवाच ॥ न केवलं मे भवतश्च राजन्स वै बलं बलिनां चापरेषाम् ॥ परेऽवरेऽमी स्थिरजंगमा ये ब्रह्मादयो येन वशं प्रणीताः ॥ ८ ॥ स ईश्वरः काल उरुक्रमोऽसावोजः सहः सत्त्वबलेंद्रियात्मा ॥ स एव विश्वं परमः स्वशक्तिभिः सृजत्यवत्यत्ति गुणत्रयेशः ॥ ९॥ जह्यासुरं भावमिमं त्वमात्मनः समं मनो धत्स्व न संति विद्विषः ॥ ऋतेऽजितादात्मन उत्पथस्थितात्तद्धि ह्यनंतस्य महत्समर्हणम् ॥ १० ॥ दस्यून्पुरा षण्न विजित्य लुंपतो मन्यंत एके स्वजिता दिशो दश ॥ जितात्मनोऽज्ञस्य समस्य देहिनां साधोः स्वमोहप्रभवाः कुतः परे ॥ ११ ॥ हिरण्यकशिपुरुवाच ॥ व्यक्तं त्वं मर्तुकामोऽसि योऽतिमात्रं विकत्थसे ॥ मुमूर्षूणां हि मंदात्मन्ननु स्युर्विप्लवा गिरः ॥ १२ ॥ यस्त्वया मंदभाग्योक्तो मदन्यो जगदीश्वरः ॥ क्वासौ यदि स सर्वत्र कस्मात्स्तम्भे न दृश्यते ॥ १३ ॥

किं बलं यस्य स किंबलः ॥ ७ ॥ ८ ॥ वशं प्रणीता इत्यत्र हेतुः स ईश्वर इति । उरवः क्रमाः पादविक्षेपा यस्य बहुपराक्रम इति वा । ओज आदिरूपः । सत्त्वं धैर्यं बुद्धिर्वा ॥ ९ ॥ ननु मच्छत्रुरसौ कथं ममापि स एव बलं स्यादत आह । जहीति । आत्मनः स्वस्य भावं स्वभावं त्यज । यतोऽजितादात्मनो मनस ऋते विनाऽन्ये विद्विषो न संति । किं च तद्धि तदेव हि साम्येन मनसो धारणमेव समर्हणमाराधनम् ॥ १० ॥ ननु मया दिग्विजये सर्वे रिपवो जिता अतः सांप्रतं विद्विषो न संतीति चेत्सत्यं तत्राह । दस्यूनिति । एके भवादृशाः मंदाः पुराऽऽदौ लुंपतः सर्वस्वं हरतः । षडिंद्रियलक्षणान् शत्रून्न विजित्याजित्वा दश दिशः स्वयं जिता मन्यंते । साधोस्तु जितचित्तस्य देहिनां समस्य ज्ञस्य विदुषः स्वाज्ञानकल्पिताः परे शत्रवः कुतः स्युः ॥ ११ ॥ व्यक्तं निश्चितम् । विप्लवा अनन्विता इत्यर्थः ॥ १२ ॥ हे मन्दभाग्य मदन्यो जगदीश्वरो यद्यस्ति तर्ह्यसौ क्वास्ति । प्रह्लाद आह । स सर्वत्रास्ति । हिरण्यकशिपुराह तर्हि कस्मात्स्तंभे नास्ति

केन बलेन मदाज्ञामतिक्रांतवानसीति भावः । मूढेति । स्वस्य मूढत्वात्तथाह ' आत्मवन्मन्यते सर्वम् ' इति न्यायात् ॥ ७ ॥ राजन्निति । रजोगुणपिहितदृष्टेस्तव तथा न दृश्यत इति भावः । ' बलं बलवतां चाहम् ' इति श्रीगीतोक्तेः " तस्य ह वा अक्षरस्य प्रशासने सूर्याचंद्रमसौ विधृतौ " इत्यादिश्रुतेः । " यः सर्वस्य वशी सर्वस्येशानः " इत्यादिश्रुतेश्च ॥ ८ ॥ संभवत्वादाह–पराक्रमा वेति । एवं बुद्धिर्वेति ॥ ९ ॥ अन्यदाधिक्यमाह–किञ्चेति । अजितादवशीकृतात् । सर्वत्र स्वतुल्यादर्शनलक्षणसाम्यमेव मनसो वशीभावस्तस्मिन्सति शात्रवाभावान्न केऽपि शत्रव इति भावः । महत् सर्वाराधनोपक्षयोत्कृष्टमित्यर्थः ॥ १० ॥ अत्राक्षिपति–नन्विति । यद्वा–एके मादृशाः पुरा षट् दस्यूनविजित्य दश दिशश्च सुष्ठु अजिता मन्यंते आंतरशत्रुजयं विना बाह्यशत्रुजयमानी केवलमुपहासपदमाप्नोतीति भावः । कुतः स्युर्नकुतोऽपीति भावः ॥ ११ ॥ अतिमात्रमत्यंतं विकत्थसे हरिभक्तत्वादहमेव जितषडमित्रो न तु ममायं जनक इत्यात्मश्लाघां करोषीत्यर्थः । इत्यर्थ इति । विगतः प्लवोऽर्थो याम्यस्ता अनर्था इति भावः । ' प्लुङ्–गतौ ' अस्य रूपं प्लव इति ॥ १२ ॥ हे मंदभाग्येति ।

सोऽहं विकत्थमानस्य शिरः कायाद्धरामि ते ॥ गोपायेत हरिस्त्वाद्य यस्ते शरणमीप्सितम् ॥ १४ ॥ एवं दुरुक्तैर्मुहुरर्दयन्रुषा सुतं महाभागवतं महासुरः ॥ खड्गं प्रगृह्योत्पतितोवरासनात् स्तंभं तताडातिबलः स्वमुष्टिना ॥ १५ ॥ तदैव तस्मिन्निनदोऽतिभीषणो बभूव येनांडकटाहमस्फुटत ॥ यं वै स्वधिष्ण्योपगतं त्वजादयः श्रुत्वा स्वधामाप्ययमंग मेनिरे ॥ १६ ॥ स विक्रमन् पुत्रवधेप्सुरोजसा निशम्य निर्ह्रादमपूर्वमद्भुतम् ॥ अंतःसभायां न ददर्श तत्पदं वितत्रसुर्येन सुरारियूथपाः ॥ १७ ॥ सत्यं विधातुं निजभृत्यभाषितं व्याप्तिं च भूतेष्वखिलेषु चात्मनः ॥ अदृश्यतात्यद्भुतरूपमुद्वहन् स्तंभे सभायां न मृगं न मानुषम् ॥ १८ ॥

प्रह्लादस्तु तं स्तंभं निरीक्षमाणः नमस्यन्नाह । दृश्यत इति ॥ १३ ॥ हिरण्यकशिपुस्तु तत्र तमपश्यन्नाह । सोऽहमिति । विकत्थमानस्य विपरीतं ब्रुवाणस्य ते शिरः कायाद्धरामि पृथक्करोमि ॥ १४ ॥ प्रह्लादेन मूर्ध्नि बद्धांजलिना निरीक्ष्यमाणं स्तंभं मुष्टिना ताडितवान् ॥ १५ ॥ १६ ॥ तत्पदं तस्य ध्वनेराश्रयम् । येन नादेन ॥ १७ ॥ भगवांस्तदा स्तंभे विदार्यादृश्यत दृश्यो बभूव । किमर्थम् । निजभृत्येन प्रह्लादेन यद्भाषितं दृश्यत इति तत्सत्यं विधातुं कर्तुं तथाऽखिलेषु भूतेष्वात्मनो व्याप्तिं च सत्यां कर्तुं स्तंभेऽदृश्यत । तत्किमर्थम् । "भौतिकेषु च भावेषु भूतेष्वथ महत्सु च ॥ भगवानास्ते" इति तेनैव भृत्येन यद्भाषितं तत्सत्यं कर्तुम् । तथाऽत्यद्भुतं दैत्यघातकमतिघोरं रूपमुद्वहन् दधत् । तत्किमर्थम् । निजभृत्यैः सनकादिभिः शापानंतरमनुतप्तैर्भाषितं यत् त्रिभिर्जन्मभिः शापमोक्षो भवत्विति तत्सत्यं कर्तुम् । तथाऽत्यद्भुतं रूपं ब्रह्मसृष्टावदृष्टमश्रुतं च रूपमुद्वहन् । तच्च न मृगाकारं न च मनुष्याकारमुद्वहन् सभायां मध्येऽदृश्यत । तत्किमर्थम् । निजभृत्येन हिरण्यकशिपुना ब्रह्माणं प्रति यद्भाषितं "भूतेभ्यस्त्वद्विसृष्टेभ्यो मृत्युर्मा भून्मम प्रभो" इति तथा । "नांतर्न बहिः" इति "न नरैर्न मृगैरपि" इति च ब्रह्मणा च निजभृत्येन तथास्त्विति यद्भाषितं तदुभयोर्वाक्यं सत्यं कर्तुम् । न हि तद्ब्रह्मसृष्टं भूतं न च नरो वा मृगो वा न च सभागृहस्यांतः न च प्रांगणवद्बहिः । एवं ताभ्यां यद्भाषितं तत्सत्यं कर्तुम् । यच्च हिरण्यकशिपुना भाषितं "नूनमेतद्विरोधेन मृत्युर्मे भविता" इति "अकुतश्चिद्भयोऽमरः" इति च । यच्च नारदेन निजभृत्येन भाषितमिंद्रं प्रति अयं महांस्त्वया संस्थां न प्राप्स्यति अनंतानुचरः इत्यनेन स्वभक्तपक्षपातित्वं च यद्भाषितं तच्च सत्यं कर्तुं तथाऽदृश्यत । चकारान्निजभाषितं च । किं तत् "कौंतेय प्रतिजानीहि न मे भक्तः प्रणश्यति" इति । तथा

यथा जगदैश्वर्यं मम तथैव मत्पुत्रत्वात्तवापि तन्न्यायप्राप्तमिति त्वया त्यज्यत इति भावः । वस्तुतस्त्वकारप्रश्लेषेणामंदभाग्येति । महाभाग्येत्यर्थः ॥ १३ ॥ गोपायेत रक्षेत् ॥ १४ ॥ १५ ॥ तदैव दैत्यमुष्टिकृतस्तंभताडनावसर एव । येन निनदेन । अंडमेव कटाहं स्वांतर्गतप्राणिकर्मानुरोधेन फलपाकाधिकरणत्वादस्फुटदिवेति लुप्तोपमा । यं निनदम् । आदिनेंद्रादिग्रहः । स्वधाम्नामप्ययं नाशं मेनिरे । अहो अकांडसंवर्त्तः । किमागता इति शशंकिरे ॥ १६ ॥ येन निर्ह्रादेन । दैत्ययूथपा वित्रेसुः ॥ १७ ॥ तेनैव प्रह्लादेनैव । अत्र स्वामिचरणैर्बहु प्रपञ्चितमत उपरम्यते । निजेन स्वेन भ्रियते पाल्यते इति निजभृत्यो वेदः । 'श्रुतेः पालयिता ब्रह्मन्नहमेव न चेतरः' इत्यादिपुराणी

स सत्त्वमेनं परितो विपश्यन्स्तंभस्य मध्यादनु निर्जिहानम् ॥ नायं मृगो नापि नरो विचित्रमहो किमेतन्नृमृगेंद्ररूपम् ॥ १९ ॥ मीमांसमानस्य समुत्थितोऽग्रतो नृसिंहरूपस्तदलं भयानकम् ॥ प्रतप्तचामीकरचंडलोचनं स्फुरत्सटाकेसरजृंभिताननम् ॥ २० ॥ करालदंष्ट्रं करवालचंचलक्षुरांतजिह्वं भ्रुकुटीमुखोल्बणम् ॥ स्तब्धोर्ध्वकर्णं गिरिकंदराद्भुतव्यात्तास्यनासं हनुभेदभीषणम् ॥ २१ ॥ दिविस्पृशत्कायमदीर्घपीवरग्रीवोरुवक्षःस्थलमल्पमध्यम् ॥ चंद्रांशुगौरैश्छुरितं तनूरुहैर्विष्वग्भुजानीकशतं नखायुधम् ॥ २२ ॥ दुरासदं सर्वनिजेतरायुधप्रवेकविद्रावितदैत्यदानवम् ॥ प्रायेण मेऽयं हरिणोरुमायिना वधः स्मृतोऽनेन समुद्यतेन किम् ॥ २३ ॥

"तेषामहं समुद्धर्ता मृत्युसंसारसागरात्" इत्यादि तच्च सत्यं कर्तुमदृश्यतेति द्रष्टव्यम् । अलमतिविस्तरेण ॥ १८ ॥ स दैत्य एवमद्भुतं ध्वनिं श्रुत्वा तदाश्रयं सत्त्वं प्राणिविशेषं सर्वतो विलोकयन्स्तंभमध्यान्निर्गच्छत् नृमृगेंद्रयोर्मिश्रं रूपमहो किमेतादिति मीमांसितवानिति शेषः ॥ १९ ॥ तस्यैवमलं भयानकं तन्नृसिंहरूपं मीमांसमानस्याग्रतो नृसिंहरूपो हरिः समुत्थितः । भयानकत्वमेव दर्शयंस्तद्रूपमनुवर्णयति प्रतप्तेत्यादिना विद्रावितदैत्यदानवमित्यंतेन । प्रतप्तं चामीकरं सुवर्णं तद्वत्पिंगानि लोचनानि यस्मिन् । सटा जटाः केसराः कंठरोमाणि स्फुरद्भिः सटाकेसरैर्जृंभितं साटोपमाननं यस्मिन् ॥ २० ॥ करालास्तुंगा दंष्ट्रा यस्मिन् । करवालः खड्गस्तद्वच्चंचला क्षुरांतवत्तीक्ष्णा च जिह्वा यस्मिन् । भ्रुकुटीयुक्तेन मुखेनोल्बणम् । स्तब्धावुन्नतौ शंकुवदूर्ध्वौ कर्णौ यस्मिन् । गिरिकंदरवदद्भुतं व्यात्तं प्रसृतमास्यं नासे च यस्मिन् । हनू कपोलप्रांतौ तयोर्भेदेन विदारणेन भीषणम् । कर्णांतमुखविस्तारमित्यर्थः ॥ २१ ॥ दिविस्पृशन्कायो यस्मिन् । अलुक्समासः । अदीर्घा ह्रस्वा पीवरा च स्थूला ग्रीवा यस्मिन् उरु विशालं वक्षःस्थलं यस्मिंस्तच्च तच्च अल्पं मध्यममुदरं यस्मिन् । चंद्रांशुवद्गौरैस्तनूरुहैर्लोमभिश्छुरितं व्याप्तम् । विष्वंचः सर्वतः प्रसृता भुजास्तेषामनीकानि स्तोमास्तेषां शतानि यस्मिन् । नखान्येवाऽयुधानि यस्मिन् ॥ २२ ॥ दुरासदं प्राप्तुमशक्यम् । सर्वाणि च निजानि चक्रादीनीतराणि वज्रादीनि त एवायुधप्रवेकाः शस्त्रोत्तमास्तैर्विद्राविता दैत्यदानवा येन तद्रूपं मीमांसमानस्याग्रतः समुत्थित इति पूर्वेणैवान्वयः । तदाविर्भावप्रयोजनविमर्शपूर्वकं तेन सह दैत्यस्य युद्धमाह । सप्तभिः । प्रायेण महा

यच्छ्रीमुखोक्तेस्तस्य भावितम् "यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अंतर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः ॥" इत्येवंलक्षणं सत्यं कर्तुं वेत्यर्थः "यदायदा वेदपथः पुराणो बाध्येत पाखंडपथैरसद्भिः । तदा भवान्सत्त्वगुणं बिभर्ति" इति श्रीदशमेक्रूरोक्तेश्च ॥ १८ ॥ १९ ॥ चंडानि भयंकराणि ॥ २० ॥ "करालो दंतुरे तुंगे भीषणे चाभिधेयवत्" इति मेदिनी । विशसनोऽसिश्चंद्रहासः 'करवालश्च खंडनः' इत्यभिधानात् क्षुरः केशमुंडनशस्त्रं तदंतस्तद्धारा तद्वत् उल्बणं क्रूरम् । इत्यर्थ इति । सिंहस्य पञ्चास्यत्वादिति भावः ॥ २१ ॥ २२ ॥ निजानि नखानि तदपेक्षयेतराणि चक्रादीनीति विजयध्वजः । सप्तभिः 'प्रायेण ( २३ )' इत्यार

एवं ब्रुवंस्त्वभ्यपतद्गदायुधो नदन्नृसिंहं प्रति दैत्यकुंजरः ॥ अलक्षितोऽग्नौ पतितः पतंगमो यथा नृसिंहौजसि सोऽसुरस्तदा ॥ २४ ॥ न तद्विचित्रं खलु सत्त्वधामनि स्वतेजसा योऽनु पुराऽपिबत्तमः ॥ ततोऽभिपद्याभ्यहनन्महासुरो रुषा नृसिंहं गदयोरुवेगया ॥ २५ ॥ तं विक्रमंतं सगदं गदाधरो महोरगं ताक्ष्यर्सुतोऽयथाऽग्रहीत् ॥ स तस्य हस्तोत्कलितस्तदाऽसुरो विक्रीडतो यद्वदहिर्गरुत्मतः ॥ २६ ॥ असाध्वमन्यंत हतौकसोऽमरा घनच्छदा भारतसर्वधिष्ण्यपाः ॥ तं मन्यमानो निजवीर्यशंकितं यद्धस्तमुक्तो नृहरिं महासुरः ॥ पुनस्तमासज्जत खड्गचर्मणी प्रगृह्य वेगेन जितश्रमो मृधे ॥ २७ ॥ तं श्येनवेगं शतचंद्रवर्त्मभिश्चरंतमच्छिद्रमुपर्यधो हरिः ॥ कृत्वाऽट्टहासं खरमुत्स्वनोल्बणं निमीलिताक्षं जगृहे महाजवः ॥ २८ ॥ विष्वक्स्फुरंतं ग्रहणातुरं हरिर्व्यालो यथाखुं कुलिशाक्षतत्वचम् ॥ द्वार्यूरुआपात्य ददार लीलया नखैर्यथाऽहिं गरुडो महाविषम् ॥ २९ ॥

मायिना हरिणा मेऽप्यमेवंभूतो वधो मृत्युहेतुः स्मृतश्चिंतितस्तथाऽप्यनेन समुद्यतेन किं न किंचित्स्यादित्येवं ब्रुवन्नभ्यपतदित्यन्वयः ॥ २३ ॥ तदा सोऽसुरो नृसिंहस्यौजसि दीप्तौ पतितः सन्नलक्षितोऽदृष्टोऽभूत् ॥ २४ ॥ सत्त्वधामनि सत्त्वप्रकाशे हरौ पतितस्य तमोमयस्यादर्शनं तद्विचित्रं न भवति । तत्र हेतुर्यो हरिः पुरा सृष्ट्यादौ प्रलयकालीनं तमो नु अहो अपिबत्तस्मिन् ॥ २५ ॥ विक्रमंतं ततस्ततः प्रहरंतम् । हस्तादुत्कलितो निःसृतः ॥ २६ ॥ तदा अमरा देवाः सर्वे धिष्ण्यपा असाध्वमन्यंत । हतान्योकांसि स्थानानि तेषां ते तद्भिया घनच्छदा मेघांतरिताः संतः यस्य हस्तात्स्वयं मुक्तस्तं नृहरिं स्ववीर्याच्छंकितं मन्यमानः खड्गचर्मणी प्रगृह्य पुनस्तमासज्जताभ्यपद्यतेत्यन्वयः ॥ २७ ॥ श्येनस्येव वेगो यस्य तम् । शतचंद्रवर्त्मभिः खड्गचर्ममार्गैरच्छिद्रं यथा भवत्येवमुपर्यधश्चरंतम् । अट्टहासमेवाऽऽह खरं तीव्रमुत्स्वनेन महाशब्देनोल्बणं भयंकरम् । तद्भयेन हरेस्तेजसा च निमीलिते अक्षिणी यस्य ॥ २८ ॥ ग्रहणे दृष्टांतः । व्यालो यथा आखुं मूषकम् । विदारणे दृष्टांतः अहिं गरुड इवेति । विष्वक् सर्वतः स्फुरंतं निःसरंतम् । ग्रहणेनातुरं विवशम् । इंद्रेण सह युद्धे तत्प्रयुक्तेन कुलिशेन न क्षता त्वगपि यस्य । द्वारि सभायां नांतर्नबहिः । ऊरे ऊरौ निपात्य

भ्य 'गरुडो महाविषम् ( २९ )' इत्यंतैः ॥ २३ ॥ अभ्यपतत्संमुखगच्छत् । तदा निपतनकाले ॥ २४ ॥ तत्रादर्शने ॥ २५ ॥ २६ ॥ भारतेति । शुद्रवंश्यत्वात्तुभ्यमेतद्रहस्यं वदामीत्यभिप्रायः मद्वधमेते दिदृक्षंत इति तत्कोपभीता मेघांतरिताः हतौकसोऽसाध्वमन्यंतेति ओकांसि तु हतवानेव यदि संप्रत्ययं जीविष्यति तदावशिष्टानस्माकं प्राणानपि हरिष्यतीति भावः ॥ २७ ॥ अच्छिद्रमव्यवधानम् । शतचंद्रशब्दो हि खड्गे चर्मणि चोभयस्मिन्नर्थेऽस्ति ॥ २८ ॥ पा० ऊरुमिति सप्तम्यर्थे द्वितीया ॥ २९ ॥

संरंभदुष्प्रेक्ष्यकराललोचनो व्यात्ताननांतं विलिहन् स्वजिह्वया ॥ असृग्लवाक्तारुणकेसराननो यथांत्रमाली द्विपहत्यया हरिः ॥ ३० ॥ नखां करोत्पाटितहृत्सरोरुहं विसृज्य तस्यानुचरानुदायुधान् ॥ अहन् समंतान्नखशस्त्रपार्ष्णिभिर्दोर्दण्डयूथोऽनुपथान् सहस्रशः ॥ ३१ ॥ सटावधूता जलदाः परापतन्ग्रहाश्च तद्दृष्टिविमुष्टरोचिषः ॥ अंभोधयः श्वासहता विचुक्षुभुर्निर्ह्रादभीता दिगिभा विचुक्रुशुः ॥ ३२ ॥ द्यौस्तत्सटोत्क्षिप्तविमानसंकुला प्रोत्सर्पत क्ष्मा च पदातिपीडिता ॥ शैलाः समुत्पेतुरमुष्य रंहसा तत्तेजसा खं ककुभो न रेजिरे ॥ ३३ ॥ ततः सभायामुपविष्टमुत्तमे नृपासने संभृततेजसं विभुम् ॥ अलक्षितद्वैरथमत्यमर्षणं प्रचंडवक्त्रं न बभाज कश्चन ॥ ३४ ॥

न भूमौ न चांबरे । नखैर्न व्यसुभिरसुमद्भिर्वा । एवं दिवानक्तपरिहाराय संध्यायामिति द्रष्टव्यम् ॥ २९ ॥ दैत्यवधमुक्त्वा तद्भृत्यवधमाह । द्वाभ्याम् । संरंभेण दुष्प्रेक्ष्याणि करालानि लोचनानि यस्य । असृजो रक्तस्य लवैर्बिंदुभी रक्ताः सिक्ता अत एवारुणाः केसरा आननं च यस्य सः क इव द्विपहत्यया गजवधेन हरिः सिंहो यथा एवंभूतस्तस्यानुचरानहान्नित्युत्तरेणान्वयः । अंत्राणां माला कंठे विद्यते यस्य ॥ ३० ॥ नखांकुरैरुत्पाटितं हृत्सरोरुहं यस्य तम् । दोर्दंडानां यूथानि समूहा यस्य सः । तं दैत्येंद्रमनु पंथा येषां तान् । अन्यानपि तत्पक्षपातिन इत्यर्थः ॥ ३१ ॥ दैत्यवधव्यग्रस्य नृहरेराटोपमाह । द्वाभ्याम् । सटाभिरवधूताः प्रकंपिता जलदा मेघाः परापतन् व्यशीर्यंत । अनेन ये मेघांतरिता देवास्ते स्पष्टं पश्यंत्वित्याज्ञां दत्तवानित्यर्थः । यस्य दृष्ट्या विमुष्टं रोचिर्येषां ग्रहाणां ते तिरस्कृतप्रभा अभवन्निति शेषः । दिगिभा दिग्गजाः ॥ ३२ ॥ तस्य सटाभिरुत्क्षिप्तानि विमानानि तैः संकुला व्याप्ता सती प्रोत्सर्पत स्वस्थानात्प्रकर्षेणोदसर्पच्चलिता ॥ ३३ ॥ स्वभृत्यैश्वर्यमाश्चर्यमिव मत्वा

आंत्रमुदरस्थमन्नादिरसाधारमङ्गम् ॥ ३० ॥ इत्यर्थ इति । तत्संबंधिनो दैत्यानिति भावः । नखांकुरेति । यत्राहमेव प्रतिक्षणं सुखमवसं तत्र संप्रत्ययं मंदभाग्यः क्रोधादिकं तामसं कथं वासयति स्मेति द्रष्टुमिवत्युत्प्रेक्षा सरोरुहरूपकेण व्यज्यतेऽत एवांकुररूपकं सरोरुहभंगाभावायैव बुध्यते ॥ ३१ ॥ आटोपः कोपावेशः ॥ ३२ ॥ ३३ ॥ ततो दैत्यहननोत्तरम् । नृपासने उपविष्टमिति येन यः पराभूयते तेन तदधिकारः स्वीक्रियते इति राजनीतिं दर्शयन्निव । यद्वा—शापग्रस्ते स्वभृत्ये स्वाभिमानत्यागाभावो व्यंजितः । यः किल्बिषिभिरपि समर्पितानन्यानुपहतान्मंत्रपूतानप्यासनादीनुपहारान्साक्षान्नांगीकरोति स एव भगवान्स्वभक्तेनासुरभावग्रस्तेन शापभ्रष्टेनाप्यदत्तमपि तदुपभुक्तमपि सिंहासनं यत्स्वयमेवास्त तद्भक्तसौभाग्यमेव सर्वान्दर्शयामासेति तत्त्वम् । यद्वा—अयं प्रह्लादो मद्दत्तं स्वपित्र्यं सिंहासनमिति नै ग्रहीष्यत्ययं मत्पिता भगवन्निंदकत्वान्महापातक्यस्त्येतदाक्रांतं सिंहासनमतविशुच्यस्ति तत्रोपवेशनेन स्वयमेवाहं शोधयामि ततश्च मत्प्रसादभूतं ग्रहीष्यत्येव । ननु प्रह्लादस्य स्वभ्रातृसह्लादादिभ्यस्त्रिभ्यः कनिष्ठत्वाद्राज्यं कथं दास्यतीश्वरो हरिस्तस्मै तत्रेदमयमेवाधेयं तद्भ्रातरोऽपि श्रीनृसिंहदेवेन हता एव 'दोर्दंडयूथोनुपथान्सहस्रशः' इत्युक्तेः । प्रह्लादमृते ते तु तदनुपथा एवेति ज्ञेयमन्यथां सर्वधर्मप्रवर्त्तको भगवान्कथं तं वदेत्

निशम्य लोकत्रयमस्तकज्वरं तमादिदैत्यं हरिणा हतं मृधे ॥ प्रहर्षवेगोत्कलिताननना मुहुः प्रसूनवर्षैर्ववृषुः सुरस्त्रियः ॥ ३५ ॥ तदा विमानावलि भिर्नभस्तलं दिदृक्षतां संकुलमास नाकिनाम् ॥ सुरानका दुंदुभयोऽथ जघ्निरे गंधर्वमुख्या ननृतुर्जगुः स्त्रियः ॥ ३६ ॥ तत्रोपव्रज्य विबुधा ब्रह्मेंद्र गिरिशादयः ॥ ऋषयः पितरः सिद्धा विद्याधरमहोरगाः ॥ ३७ ॥ मनवः प्रजानां पतयो गंधर्वाप्सरचारणाः ॥ यक्षाः किंपुरुषास्तात वैतालाः सिद्धकिन्नराः ॥ ३८ ॥ ते विष्णुपार्षदाः सर्वे सुनंदकुमुदादयः ॥ मूर्ध्नि बद्धांजलिपुटा आसीनं तीव्रतेजसम् ॥ ईडिरे नरशार्दूलं नातिदूरचराः पृथक् ॥ ३९ ॥ ब्रह्मोवाच ॥ नतोऽस्म्यनंताय दुरंतशक्तये विचित्रवीर्याय पवित्रकर्मणे ॥ विश्वस्य सर्गस्थितिसंयमान्गुणैः स्वलीलया संदधतेऽव्ययात्मने ॥ ४० ॥ श्रीरुद्र उवाच ॥ कोपकालो युगांतस्ते हतोऽयमसुरोऽल्पकः ॥ तत्सुतं पाह्युपसृतं भक्तं ते भक्तवत्सल ॥ ४१ ॥

कौतूहलेन तस्यासने उपविष्टं भयात्कोऽपि न बभाज नासेवत । न लक्षितो द्वैरथः प्रतियोद्धा येन ॥ ३४ ॥ लोकत्रयस्य मस्तकज्वरं शिरोव्यथेव दुःसहम् । प्रहर्षस्य वेगेनोत्कलितानि विकसितान्याननानि यासां ताः सुरस्त्रियः पुष्पवर्षैर्नृहरिं ववृषुः ॥ ३५ ॥ नाकिनां देवानां विमानावलिभिर्नभस्तलं संकीर्णमास । सुराणामानकाः पटहास्तैर्जघ्निरे वादिताः । स्त्रियो अप्सरसो ननृतुर्गंधर्वा जगुः ॥ ३६ ॥ ३७ ॥ गंधर्वाप्सरसश्चारणाश्चेत्यर्थः ॥ ३८ ॥ नरशार्दूलं पुरुषोत्तमम् ॥ ३९ ॥ ब्रह्मादयो नृसिंहस्य शंकयाकुलचेतसः ॥ आरादेवास्तुवन् सप्तदशश्लोकैः पृथक्पृथक् ॥ अनंतायानंतं त्वां प्रसादयितुं नतोऽस्मि । अनंतत्वे हेतुः । दुरंता अनंताः शक्तयो यस्य । तत्कुतः विचित्राणि वीर्याणि प्रभावा यस्य । तत्किमर्थं पवित्राणि श्रवणमात्रेण शोधकानि कर्माणि यस्य । विचित्रवीर्यत्वमेवाह । विश्वस्येति । संदधते सम्यक्कुर्वते । एवमप्यव्ययात्मनेऽप्रच्युतस्वरूपाय ॥ ४० ॥ रुद्रस्तु तत्कोपकालाभिज्ञो नायं कोपावसर इति तं प्रार्थयते । कोपेति । सहस्रयुगांतस्तव कोपस्य कालः कोपायोग्यश्चायमित्याह । अल्पकोऽत्यल्पः अतः कोपानिवृत्त्या प्रह्लादं मा हिंसीरित्याह।तत्सुतमिति । यद्वाऽकालेऽप्ययं कोपोऽस्य भक्तस्य रक्षणार्थमिति चेत्तर्हीदानीं कोपं त्यक्त्वेमं पाहीत्यर्थः ॥ ४१ ॥

" पित्र्यं स्वं स्थानमास्थाय " इति वक्ष्यमाणरीत्या ॥ ३४ ॥ ३५ ॥ तदा सिंहासनस्थे हरौ ॥ ३६ ॥ तत्र दैत्यहननदेशे ॥ ३७ ॥ अप्सरचारणा इहाप्सरशब्देऽदंतत्वमार्षम् ॥ ३८ ॥ ते प्रसिद्धाः ॥ ३९ ॥ आरादेव दूरादेव । 'आराद्दूरसमीपयोः' इत्यमरः । सनकादीन्कोपयसि, स्वभक्तौ भ्रंशयसि, मया वरान्दापयसि, दैत्यगृहे भक्तराजमाविर्भावयसि, दैत्येन भक्तं जिघांसयसि, भक्तरक्षार्थं स्वयमेवाविर्भवसीति तव विधित्सितं न कोऽपि वेत्तीत्याह—नतोस्मीति । न ज्ञातुं शक्योंतो यस्य तस्मै । तत्—दुरन्तशक्तित्वं, तत्—विचित्र प्रभावत्वम् "वदन्ति वशस्थमिदं यतौ जरौ" इति लक्षणाद्वंशस्थच्छन्दः ॥ ४० ॥ तव घोरस्वरूपं दृष्ट्वा प्रलयशंकया बिभ्यति न त्वहमित्यभिप्रेत्याह स्वामी। रुद्रस्त्विति । तत्र संहारे कर्मणि त्वदंशोहमेव वर्त्तेयेति भावः । अल्पकस्त्वदपेक्षया । यतः कोपं न त्यजसि अतो हेतोः। ननु सर्वज्ञस्त्वं कथमेवं वदसीत्याह—यद्वेति । इत्यर्थ इति । क्रोधात्यागो हि

इंद्र उवाच ॥ प्रत्यानीताः परम भवता त्रायता नः स्वभागा दैत्याक्रांतं हृदयकमलं त्वद्गृहं प्रत्यबोधि ॥ कालग्रस्तं कियदिदमहो नाथ शुश्रूषतां ते मुक्तिस्तेषां न हि बहुमता नारसिंहापरैः किम् ॥४२॥ ऋषय ऊचुः ॥ त्वं नस्तपः परममात्थ यदात्मतेजो येनेदमादिपुरुषात्मगतं ससर्ज ॥ तद्विप्रलुप्तममुनाऽद्य शरण्यपाल रक्षागृहीतवपुषा पुनरन्वमंस्थाः ॥ ४३ ॥ पितर ऊचुः ॥ श्राद्धानि नोऽधिबुभुजे प्रसभं तनूजैर्दत्तानि तीर्थसमयेऽप्यपिबात्तिलांबु ॥ तस्योदरान्नखविदीर्णवपाद्य आर्च्छत्तस्मै नमो नृहरयेऽखिलधर्मगोप्त्रे ॥ ४४ ॥

इंद्रस्तु नास्माकं हविर्भागादिलाभः पुरुषार्थः किं तु त्वत्परिचर्यैव । भवता पुनरनेन संरंभेण स्वकार्यमेव साधितं तस्य च सिद्धत्वादुपसंहरैनं क्रोधमित्याशयेनाह । हे परम नोऽस्मांस्त्रायता रक्षता भवता स्वीया एव भागा दैत्यात्प्रत्याहृताः । अंतर्यामिणस्तवैव यज्ञेषु भोक्तृत्वात् । अस्मदीयं हृदयकमलं त्वद्गृहमेवैतावत्पर्यंतं भयहेतुत्वेनास्मत्स्मृतिपथे नित्यं स्थितेन दैत्येनाक्रांतं व्याप्तं सत्प्रत्यबोधि भयापाकरणेन विकासं नीतम् । ननु तव त्रैलोक्यैश्वर्यसाधनार्थमयमुद्यम इति चेत्तत्राह । कालग्रस्तमिति । ते त्वाम् । हे नारसिंह नरस्य सिंहस्य चाकाराभ्यामाविर्भूत । अपरैः स्वर्गादिभिः किम् ॥ ४२ ॥ ऋषयस्तु तपःप्रवर्तनेनास्माकं महाननुग्रहः कृत इत्याहुः । त्वं नो यदात्थ परमं ध्यानलक्षणं तपः । परमत्वे हेतुः आत्मनस्तव तेजः प्रभावरूपं तदेवाहुः । येन तपसात्मनि लीनमिदं विश्वं ससर्ज सृष्टवानसि तदमुना दैत्येन विप्रलुप्तं कुंठितं सत् हे शरण्यपाल अद्य रक्षार्थं गृहीतेनानेन वपुषा पुनरपि तपः कुरुतेत्यनुज्ञातवानसि तस्मै ते नम इत्युत्तरश्लोकचतुर्थपादस्यानुषंगः ॥ ४३ ॥ पितरस्तु श्राद्धोद्धरणेन परमोपकारिणं श्रीनृसिंहं प्रणमंति । श्राद्धानि श्रद्धायुक्तानि पिंडादीनि नोऽस्मभ्यं पुत्रैर्दत्तानि प्रसभं बलाद्यः स्वयमधिकृत्य बुभुजे । किं च तीर्थस्नानसमये दत्तं

शंकोत्पादक इति भावः । उपसृतं शरणमागतम् । हे भक्तवत्सलेति।भक्तवत्सलेन त्वयाऽयं भक्तः प्रह्लादः पालनीय एवातः क्रोधमुपसंहरेति भावः॥ ४१॥एतावद्दिनपर्यंतं त्वच्चरणस्मरणविमुख एवाहं वर्त्त इत्याह—हे परमेति । परो मा यस्मात्स परमः "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति श्रुतेः सर्वोत्कृष्टेति भावः।यद्वा—त्वद्दासानामस्माकमिंद्रादीनां वस्तुषु वस्तुतः प्रभोस्तवैव स्वत्वौचित्यात् त्वद्गृहं शश्वद्ध्यानेन तव तत्र वासात् तच्च कमलं निःश्रीकं रात्रौ तमसाऽऽक्रांतं निद्रितं भवेत्।तथैव दैत्यजन्मारभ्याद्यपर्यंतं भयादित्यस्यैव ध्यातत्वाद्दैत्याक्रांतं संप्रति तव नृसिंहसूर्यस्योदये सति प्रत्यबोधि त्वच्चरणाक्रांतं सद्यकसदित्यर्थः।यद्वा—त्वद्गृहं वैकुंठं प्रति अबोधि त्वच्चरणसेवार्थं बुद्धिं प्रापेत्यर्थः । अत्राक्षिपति—नन्विति । हं भक्ताभिमानिन्निंद्रपदं गृहाणेति तत्र सत्यमहं सकामो भक्तिशून्यो ग्रहीष्यामीत्याह—त्वन्निष्कामभक्तानां तु कालग्रस्तमिति इदमिंद्रपदम्। अपरैः योगैश्वर्यादिभिः । नारसिंहेति । नरश्च सिंहश्च नरसिंहौ ताभ्यामुभयावयवाभ्यामाविर्भूतो नारसिंहः आविर्भावेर्थेऽण्।भक्तरक्षार्थमलौकिकमपि कर्म स्वीकरोषि किमुत लौकिकमिति भावः । मंदाक्रांता छंदः "मंदाक्रांताम्बुधिरसनगैर्मो भनौ तौ गयुग्मम्" इति लक्षणात् ॥ ४२ ॥ एतावद्दिनपर्यंतमस्माभिर्न तपस्तप्तमित्याहुर्ऋषयः । नोस्माकम् आत्थ यूयं मद्ध्यानलक्षणं तपः कुरुतेति जगदिथ सृष्टवानासि 'सृजामि तपसैवेदम्' इति ब्रह्माणं प्रति त्वदुक्तेः । विप्रलुप्तं सौरं तेजो राहुणेव अनेन तिरोधानमेवोक्तं न तु स्वरूपतो नाशः । वसंततिलका छंदः " उक्ता वसंततिलका तभजा जगौ गः " इति लक्षणात् ॥४३॥ वयमेतावद्दिनपर्यंतमुपवासपरा एवाभूमेत्याहुः पितरः । न

सिद्धा ऊचुः ॥ यो नो गतिं योगसिद्धामसाधुरहारषीद्योगतपोबलेन ॥ नानादर्पं तन्नखैर्निर्ददार तस्मै तुभ्यं प्रणताः स्मो नृसिंह ॥ ४५ ॥ विद्याधरा ऊचुः ॥ विद्यां पृथग्धारणयाऽनुराद्धां न्यषेधदज्ञो बलवीर्यदृप्तः ॥ स येन संख्ये पशुवद्धतस्तं मायानृसिंहं प्रणताः स्म नित्यम् ॥ ४६ ॥ नागा ऊचुः ॥ येन पापेन रत्नानि स्त्रीरत्नानि हृतानि नः ॥ तद्वक्षःपाटनेनासां दत्तानंद नमोस्तु ते ॥ ४७ ॥ मनव ऊचुः ॥ मनवो वयं तव निदेशकारिणो दितिजेन देव परिभूतसेतवः ॥ भवता खलः स उपसंहृतः प्रभो करवाम ते किमनुशाधि किंकरान् ॥ ४८ ॥ प्रजापतय ऊचुः ॥ प्रजेशा वयं ते परेशाभिसृष्टा नयेन प्रजा वै सृजामो निषिद्धाः ॥ स एष त्वया भिन्नवक्षानुशेते जगन्मंगलं सत्त्वमूर्तेवतारः ॥ ४९ ॥ गंधर्वा ऊचुः ॥ वयं विभो ते नटनाट्यगायका येनात्मसाद्वीर्यबलौजसा कृताः ॥ स एष नीतो भवता दशामिमां किमुत्पथस्थः कुशलाय कल्पते ॥ ५० ॥

तिलोदकमप्यपिबत् । तानि च तस्योदराय आच्छिद्याहृतवान् । कथंभूतात् नखैर्विदीर्णा वपा यस्य तस्मात् । वपाविदारणस्य तद्गतपिंडोद्धरणमेव फलमिति भावः ॥ ॥ ४४ ॥ योगसिद्धां गतिमणिमादिसिद्धिम् । नानाऽनेके दर्पा यस्य तम् । तस्मै तुभ्यं तं त्वामुद्दिश्य ॥ ४५ ॥ विद्यामंतर्धानादिलक्षणाम् । अनुराद्धां संप्राप्तां संख्ये युद्धे ॥ ४६ ॥ रत्नानि फणासु स्थितानि तथा स्त्रीरत्नानि चोत्तमाः स्त्रियः आसां स्त्रीणां दत्त आनंदो येन तत्संबोधनं पाठांतरेऽस्माकं दत्त आनंदो येनेति ॥ ४७ ॥ नृसिंहेनावलोकिताः संतो मूर्ध्नि बद्धांजलयो मनवः प्रोचुः । मनवो वयं धर्मपालकाः परिभूताः सेतवो वर्णाश्रमधर्ममर्यादा येषां ते । अनुशाध्यनुशिक्षय ॥ ४८ ॥ प्रजापतयोऽपि तदवलोकिताः प्रोचुः । हे परेश ते त्वया अभिसृष्टा वयं प्रजेशा येन निषिद्धाः संतः प्रजा न सृजामः । स एष भिन्नं वक्षो यस्य नु निश्चितं शेते मृतः । अतः परं प्रजाः सृजाम इति हृष्यंतः प्राहुः । हे सत्त्वमूर्ते तवायमवतारो जगतो मंगलम् ॥ ४९ ॥ गंधर्वा अपि तदवलोकिताः प्रोचुः । हे विभो वयं ते त्वदीया

केवलं पिंडादीन्येव बुभुजे किन्तु तर्पणोदकमपीत्याह–किञ्चेति । 'समयेप्यपिबत्तिलाम्बु' इति पाठः स्वामिसंमतः प्रतिभाति । इति भाव इति । वपां विदार्य पिंडतिलोदकादीनेवास्मान्दर्शयामासेति तात्पर्यम् । 'वपा सुषिरमेदसोः' इति मेदिनी । छंदः प्राग्वत् ॥ ४४ ॥ योगैश्वर्यसंपत्तिहीना रंका एव वयमेतं कालं प्रतीक्षामहे इत्याहुः सिद्धाः । हे नृसिंहेति । एतद्रूपं विनाऽस्य मृत्योरसंभवं मत्वा स्वीकृतालौकिकविग्रहोऽसीति भावः । छंदः प्राग्वत् ॥ ४५ ॥ वयमप्येतावद्दिनपर्यंतं विद्यारहिता एवास्मेत्याहुर्विद्याधराः । मायानृसिंहं कृपाप्रधानं नृसिंहम् । इंद्रवज्रा छंदः " स्यादिंद्रवज्रा यदि तौ जगौ गः " इति लक्षणात् ॥ ४६ ॥ हृतधना हृतस्त्रीका वयमेतावद्दिनपर्यंतं संतप्ता एवास्मेत्याहुर्नागाः । हे दत्तानन्देति । सर्वानन्ददस्त्वमेवेति भावः । पाठांतरे अस्मद्दत्तानंदेति पाठे ॥ ४७ ॥ मनवोऽत्र वर्तमानमनुसहितास्तपःस्थिता अतीता इत्यर्थः । ते च भाविनोऽप्यात्मानमेनं मत्वा निवेदयंति स्मेति ज्ञेयम् । मंजुभाषिणी छंदः " सजसा जगौ च यदि मंजुभाषिणी " इति लक्षणात् ॥ ४८ ॥ हे परेशेति । ब्रह्मादिष्वीशत्वं भाक्तमेव मुख्यं तत्त्वय्येवेति भावः । अभिसृष्टाः प्रजासर्जनोद्देशेन रचिताः। निषिद्धा यूयं मा प्रजाः सृजतेत्याज्ञप्ताः । हे सत्त्वमूर्ते इति । इयमपि श्रीमदीया मूर्तिः सात्त्विक्येव प्रजापालनकर्त्रीत्वान्न दैत्यहननार्थात्तक्रोधस्यापि जगत्सुखहेतुत्वेन सात्त्विकत्वपर्यवसानादिति भावः । अजहल्लिंगत्वाज्जगन्मंगलमिति । भुजंगप्रयातं छदः । " चतुर्भिर्यकारैर्भुजंगप्रयातम् " इति तल्लक्षणात् ॥ ४९ ॥ हे विभो इति । विशेषेण सर्वदा भानं तवैव न त्वन्येषामेतादृशानामिति भावः । वंशस्थं

चारणा ऊचुः ॥ हरे तवांघ्रिपंकजं भवापवर्गमाश्रिताः॥ यदेष साधुहृच्छयस्त्वयाऽसुरः समापितः॥५१॥यक्षा ऊचुः ॥ वयमनुचरमुख्याः कर्मभिस्ते मनोज्ञैस्त इह दितिसुतेन प्रापिता वाहकत्वम् ॥ स तु जनपरितापं तत्कृतं जानता ते नरहर उपनीतः पंचतां पंचविंश ॥ ५२ ॥ किंपुरुषा ऊचुः ॥ वयं किंपुरुषास्त्वं तु महापुरुष ईश्वरः ॥ अयं कुपुरुषो नष्टो धिकृतः साधुभिर्यदा ॥ ५३ ॥ वैतालिका ऊचुः ॥ सभासु सत्रेषु तवामलं यशो गीत्वा सपर्यां महतीं लभामहे ॥ यस्तां व्यनैषीद् भृशमेष दुर्जनो दिष्ट्या हतस्ते भगवन्यथाऽमयः ॥ ५४ ॥ किन्नरा ऊचुः ॥ वयमीश किन्नरगणा स्तवानुगा दितिजेन विष्टिममुनाऽनुकारिताः ॥ भवता हरे सवृजिनोऽवसादितो नरसिंह नाथ विभवाय नो भव ॥ ५५ ॥

नटा नर्तका नाट्ये नृत्ये गायकाश्च येन स्वाधीनाः कृताः कथंभूतेन । वीर्यं शौर्यं बलं शक्तिस्ताभ्यामोजः प्रभावो यस्य तेन । स एष भवता इमां दशां मृतिं नीतः। उचितं चैतदित्याहुः । किमिति ॥ ५० ॥ भवापवर्गं संसारनिवर्तकम् । आश्रयणे हेतुः । यद्यस्मात्साधूनां हृदि भयजनकत्वेन शेते तिष्ठतीति तथा स एषोऽसुरस्त्वया समापितोंतं नीतः॥५१॥ मनोज्ञैः कर्मभिस्तवानुचरेषु मुख्यास्ते वयं दितिसुतेन शिबिकावाहकत्वं प्रापिताः । पंचतां मृत्युम् । हे पंचविंश चतुर्विंशतितत्त्वानियामक ॥५२॥ किंपुरुषास्तु त्वां स्तोतुं के वयं वराका इत्याहुः । वयमिति । वयं किंपुरुषास्तुच्छप्राणिनस्त्वं तु महानद्भुतप्रभावः पुरुषः । नन्वयं महान्दैत्यो हत इति किं न वर्ण्यत इत्याशंक्य कियदेतदित्याहुः । अयमिति । यदा साधुभिर्भगवद्भक्तैस्तिरस्कृतस्तदैव नष्टः ॥५३॥ सत्रेषु यज्ञेषु । ते त्वया हतः एतद्दिष्ट्या भद्रं कृतम् ॥५४॥ अमुना दितिजेन विष्टिं

छंदः । " जतौ तु वंशस्थमुदीरितं जरौ " इति लक्षणात् ॥ ५० ॥ हरे इति । अविद्यादिसर्वक्लेशहारित्वात्तवांघ्रिपंकजमेव वयमाश्रिता इति भावः । साधूनां हृदि हृच्छय्यायामपि शेते इति स्तः । अत एव तदसहिष्णु नेव त्वयान्तं नीतः अद्यारभ्य त्वमेव तेषां शेष्वेति भावः । प्रमाणिका छंदः । " प्रमाणिका जरौ लगौ ॥ " इति लक्षणात् ॥ ५१ ॥ यद्वाऽनुचराः शिवकुबेरादयस्ते मुख्याः स्वामिनो येषां तेऽनुचरास्त्वद्भक्ता एव मुख्या येषां ते इति वा । वाहकत्वं शिबिकादिषु योजनम् । हे नरहरेति । त्वमेव विक्षेपकनाशकोऽसीति भावः । ' नरो विक्षेपके पुंसि ' इत्यभिधानात् । पञ्चविंशेति । जडतत्त्वेषु चैतन्यदानेन सृष्टिकर्तुस्तव सृष्टिमय कृन्नाशनमुचितमेवेति भावः । पञ्चतामित्युक्तेरेकतां नापेति ज्ञायते तेन च मोक्षाभावो लक्षितः । अत एव वक्ष्यति श्रीनृसिंहः 'लोकान्यास्यति सुप्रजाः' इति । मालिनी छंदः " ननमयययुतेयं मालिनी भोगिलोकैः " इति लक्षणात् ॥५२॥ किंपुरुषाः पुरुषाभासाः । अत्राक्षिपति—नन्विति । एतद्धननेन तवापि पापं न भविष्यतीत्याह—अयमित्यादि । यदा साधुभिर्धिक्कृतस्तदैवायं नष्टोऽभूदतो मृतमारणे न पापं भवतीत्यर्थः ॥५३॥ वेतालं बहुविधकांस्यतालवादनपूर्वकं गायनं तद्विदंतीति वैतालिकाः । तां सपर्याम् । व्यनैषीन्न्यवारयत् । हे भगवन्निति । सर्वथा समर्थस्य तवैतद्धननं न चित्रमिति भावः । आमंयनिवृत्तौ यथा सुखं भवति तथाऽधुनास्माकमभू दित्यर्थः । विधारिता छंदः । "यदा जगणत्रयरौ विधारिता" इति लक्षणात् ॥५४॥ ईश हरे नरसिंह नाथेति संबुद्धिचतुष्टयमत्याह्लादेनोक्तं सर्वसमर्थसर्वदुःखहर्तृभक्तप्रतिज्ञापालकसर्वेश्वरस्य तवास्मद्विधदीनदुःखहरणमुचितमे

विष्णुपार्षदा ऊचुः ॥ अद्यैतद्धरिनररूपमद्भुतं ते दृष्टं नः शरणद सर्वलोकशर्म ॥ सोऽयं ते विधिकर ईश विप्रशप्तस्तस्येदं निधनमनुग्रहाय विद्मः ॥ ५६ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे प्रह्लादानुचरिते हिरण्यकशिपुदैत्यवधे नृसिंहस्तवो नामाष्टमोऽध्यायः ॥ ८ ॥ नारद उवाच ॥ एवं सुरादयः सर्वे ब्रह्मरुद्रपुरःसराः ॥ नोपैतुमशकन् मन्युसंरंभं सुदुरासदम् ॥ १ ॥ साक्षाच्छ्रीः प्रेषिता देवैर्दृष्ट्वा तन्महदद्भुतम् ॥ अदृष्टाश्रुतपूर्वत्वात् सा नोपेयाय शंकिता ॥ २ ॥ प्रह्लादं प्रेषयामास ब्रह्मावस्थितमंतिके ॥ तात प्रशमयोपेहि स्वपित्रे कुपितं प्रभुम् ॥ ३ ॥ तथेति शनकै राजन् महाभागवतोऽर्भकः ॥ उपेत्य भुवि कायेन ननाम विधृतांजलिः ॥४॥ स्वपादमूले पतितं तमर्भकं विलोक्य देवः कृपया परिप्लुतः ॥ उत्थाप्य तच्छीर्ष्ण्यदधात् करांबुजं कालाहिवित्रस्तधियां कृताभयम् ॥ ५ ॥

निर्मूल्यं कर्मानु निरंतरं कारिताः । अतः परं नो विभवाय समृद्धये भव ॥ ५५ ॥ नोऽस्माकं भक्तानां हे शरणद आश्रयप्रद सर्वेषां लोकानां शर्म मंगलमेतदद्भुतं रूपमद्यैव दृष्टं न तु पूर्वम् । विधिकरः किंकरः ॥ ५६ ॥ इति सप्तमे टीकायामष्टमोऽध्यायः ॥ ८ ॥ नवमे ब्रह्मणा भीत्या चोदितोऽसुरबालकः ॥ कोपं प्रशमयन्नस्तौन्नृसिंहमतिभीषणम् ॥ १ ॥ “उग्रोऽप्यनुग्र एवायं स्वभक्तानां नृकेसरी ॥ केसरीव स्वपोतानामन्येषामुग्रविग्रहः” इत्याद्यागमोक्तां भक्तानुकंपितामाह । एवमिति सप्तभिः । एवं दूरत एव स्थित्वा स्तुवंतः मन्युना संरंभ आवेशो यस्य तं उप समीपे गंतुं नाशक्नुवन् ॥ १ ॥ श्रीर्लक्ष्मीर्देवैः प्रेषिताऽपि महदद्भुतं तद्रूपं दृष्ट्वा शंकिता सती तं नोपजगाम । अद्भुतत्वे हेतुः । अदृष्टेति ॥ २ ॥ उपेह्युपगच्छ ॥ ३ ॥ ४ ॥ काल एवाहिस्तस्माद्वित्रस्ता धीर्येषां तेषां कृतमभयं येन तत्करांबुजम् ॥ ५ ॥

वेति तद्भावः । वृजिनं पापं तद्वान्वृजिनः अर्शआद्यच् । मंजुभाषिणी छंदः ॥ ९९ ॥ विष्णुपार्षदास्तु—श्रीविकुंठानंदनसंबंधिनो ज्ञेयाः । श्रीनृसिंहेनैकीभूय वैकुंठस्य भगवतोप्यवतरणादिति संदर्भः । हरिनरयोः सिंह नरयोरवयवमिश्रितं रूपम् । हे शरणद हे ईशेति शरणागतरक्षणार्थमीशेन सर्वथा यतितव्यमिति भावः । विप्रैः सनकादिभिः शप्तः तस्यानुग्रहाय त्रिजन्मस्वेकजन्मनः समाप्तेर्यथा योजनगंतुरेकक्रोशगमनेनापि गम्यमार्गस्य न्यूनत्वे सति किञ्चित्सुखं भवति तद्वदिति भावः । प्रहर्षिणीछंदः । “ त्र्याशाभिर्मनजरगाः प्रहर्षिणी ” इति लक्षणात् ॥ ५६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥ असुरबालकः प्रह्लादः ( १ ) स्वपोतानां स्वबालकानाम् । केसरी सिंह उग्रो न प्रतीयतेऽन्येषां मृगादीनां युवावस्थापन्नानामप्युग्रः प्रतीयते तथा भक्तानामतिभयंकरवपुरपि श्रीनृसिंहोऽनुग्रः प्रतीयत इति भावः । इत्याद्यागमोक्ताम् । अयं श्लोको ह्यागमशास्त्रे पठितोऽस्ति । अथ वा गम्यते ज्ञायतेऽपूर्वार्थोऽनेनेत्यागमो दृष्टांतस्तेनोक्तामित्यर्थः । एवमुक्तरीत्या । ‘मन्युर्दैन्ये क्रतौ क्रुधि’ इत्यभिधानान्मन्युना क्रुधावेशस्संगो यस्य स तथा। यद्वा—मन्यौ हिरण्यकशिपौ—तन्निमित्तं संरंभः कोपावेशो यस्य सः ॥ १ ॥ यद्यपि नृसिंहरूपस्य पूर्वकल्पश्रुतत्वे वैकुंठे सदैव दृष्टत्वञ्च तथापि तदानीमदृष्टाश्रुतपूर्वत्वप्रतीतिर्लीलाशक्त्यैव कारिताऽद्भुतरसास्वादप्रापणार्थमिति ध्येयम् ॥ २ ॥ तातेति । सर्वहितकारित्वेन प्रियत्वादुक्तिः । त्वदर्थमाविर्भूतोऽयं त्वत्प्रार्थनयाऽवश्यं शांतो भविष्यतीत्यर्थः ॥ ३ ॥ हे राजन्निति । हरियशश्श्रवणेन देदीप्यमानोऽसीति भावः ॥ ४ ॥ ५ ॥

स तत्करस्पर्शधुताखिलाशुभः सपद्यऽभिव्यक्तपरात्मदर्शनः ॥ तत्पादपद्मं हृदि निर्वृतो दधौ हृष्यत्तनुः क्लिन्नहृदश्रुलोचनः ॥ ६ ॥ अस्तौषीद्धरिमेकाग्रमनसा सुसमाहितः ॥ प्रेमगद्गदया वाचा तन्न्यस्तहृदयेक्षणः ॥ ७ ॥ प्रह्राद उवाच ॥ ब्रह्मादयः सुरगणा मुनयोऽथ सिद्धाः सत्त्वैकतानमतयो वचसां प्रवाहैः ॥ नाराधितुं पुरुगुणैरधुनापि पिप्रुः किं तोष्टुमर्हति स मे हरिरुग्रजातेः ॥ ८ ॥ मन्ये धनाभिजनरूपतपः श्रुतौजस्तेजःप्रभावबलपौरुषबुद्धियोगाः ॥ नाराधनाय हि भवंति परस्य पुंसो भक्त्या तुतोष भगवान् गजयूथपाय ॥ ९ ॥

तस्य श्रीनृसिंहस्य करस्पर्शेन धुतं निरस्तमखिलमशुभं यस्य । सपदि तत्क्षणमेवाभिव्यक्तमपरोक्षीभूतं परात्मदर्शनं ब्रह्मदर्शनं यस्य । निर्वृतः सन् हृदि दधौ । हृष्यंती रोमांचिता तनुर्यस्य । क्लिन्नं प्रेमार्द्रं हृयस्य अश्रूणि लोचनयोर्यस्य । परमपुरुषार्थतया दधौ न साधनत्वेनेत्यर्थः ॥ ६ ॥ सुसमाधिमेवाह । तस्मिन्नेव न्यस्तं हृदयमीक्षणं च येनेति ॥ ७ ॥ "स्वस्मिन्निव समस्तेषु तत्कृपामृतदृष्टये ॥ प्रह्लादः स्तौति सत्पद्यैर्द्विचत्वारिंशता हरिम् ॥ १ ॥" तत्र तावदात्मनो भगवत्स्तुतावनधिकारमिवाशंक्याधिकारं संभावयन्नाह । ब्रह्मादय इति पंचभिः । मुनयो मननशीलाः सिद्धा ज्ञानिनोऽपि । कथंभूताः । सत्त्व एवैकस्मिंस्तानो विस्तारो यस्याः सा मतिर्येषां तथाविधा अपि वचसां प्रवाहैरपि तथा बहुभिर्वक्ष्यमाणैर्गुणैरपि यमाराधयितुं न पिप्रुर्न पूर्णा न शक्ता इत्यर्थः । स हरिर्मे मम कथं तोषं प्राप्तुमर्हति । तत्र हेतुः । उग्रजातेः उग्रा घोरा आसुरी जातिर्यस्य ॥ ८ ॥ एवं हरितोषणे स्वस्यायोग्यतामाशंक्य योग्यतां संभावयति । मन्य इति द्वाभ्याम् । अभिजनः सत्कुले जन्म रूपं सौंदर्यं श्रुतं पांडित्यमोज इंद्रियनैपुणं तेजः कांतिः प्रभावः प्रतापः पौरुषमुद्यमो बुद्धिः प्रज्ञा योगोऽष्टांगः । एते धनादयो द्वादशापि गुणाः परस्य पुंस आराधनाय न भवंति । हि यतः केवलया

यद्वाऽसुरजातित्वात्तदीयस्पर्शादिप्राप्तसंभावनालक्षणमशुभं यत्पूर्वमासीतद्धुतं निरस्तं यस्य सः । अभिव्यक्तं पूर्वसिद्धमेव तदानीं सर्वतोव्यक्तीभूतम् । इत्यर्थ इति । भगवत्पादपद्मध्यानेनैव भगवत्प्राप्तिर्भवतीति साधनत्वेनापि तदिष्यते । इह तु तस्य प्राप्तप्राप्तव्यत्वात्साधनापेक्षा नास्तीत्यतोऽयमेव परमपुरुषार्थो नातः परमिति विमृश्य दधाविति भावः ॥६॥७॥ द्विचत्वारिंशतेति । अष्टादशपुराणषट्शास्त्रषडेदांगवेदचतुष्टयोपवेदचतुष्टयेतिहासागमधर्मशास्त्रार्थशास्त्राणि मिलित्वा द्विचत्वारिंशद्भवंतीत्येतत्सर्वशास्त्रसिद्धांततात्पर्यरूपेण तावद्भिरेव पद्यैस्तं स्तौतीति तत्त्वम् । तस्य हरेः कृपैवामृतदृष्टिस्तस्यै तदर्थमित्यर्थः ( १ ) तत्र तावदित्यव्ययं वाक्यालंकारे । स्तुतौ निजायोग्यतायां कैमुत्यं व्यंजयन् भो दुरवगमाश्चर्य प्रभो मयि कं गुणमालंब्य कृपयसीत्याह—ब्रह्मादय इति। सात्त्विकत्वमपि न ते कृपायां कारणं किं पुनस्तामसत्वमित्याह—सत्त्वे धर्मज्ञानतपोरूपे एकतानाऽनन्यवर्त्तिनी मतिर्येषां ते किं पुनरधर्माज्ञानविषयभोगैकतानमतयो वयमिति भावः । 'एकतानोऽनन्यवृत्तिः' इत्यमरः । न च केवलं स्तुतिवादानामेव त्वत्प्रसादकत्वमित्याह वचसां प्रवाहैः पुरुगुणैर्ध्वनिगुणालंकारयुक्तैः । प्रवाहपक्षे—स्वच्छत्वशैत्यमाधुर्य्यपावित्र्याद्यैराराधितुमाराधयितुं स्वेषु संतोषयितुमित्यर्थः । इत्यर्थ इति । धातूनामनेकार्थत्वात् पालनाद्यर्थे वर्त्तमानोपि शक्त्यर्थेऽस्तीति भावः । अडागमाभावोऽत्रार्षः । अपिपुरिति लङः प्रथमपुरुषबहुवचनान्तम् । तत्र तोषाभावे ॥ ८ ॥ न च बहुधनपरिवारादिभिस्त्वं तुष्यसीत्याह—मन्य इति । नाराधनाय न संतोषणाय । तर्हि केन तुष्यसीत्यत आह—भक्त्येति । केवलया धनादिद्वादशगुणवर्जितया तुतोषेति । भूतनिर्देशात्तात्र काप्यन्या युक्तिरन्वेष्टव्या किन्तु भवतः स्वभाव एवायं भक्तेर्वा काप्यद्भुता शक्तिरिति द्योतते तेन च त्वत्संतोषोऽप्यन्यथानुपपत्त्या मय्यपि श्रीनारदकृपोद्भूतो भक्तिगंधो वर्त्तत इति व्यंजितः ।

विप्राद्द्विषड्गुणयुतादरविंदनाभपादारविंदविमुखाच्छ्वपचं वरिष्ठम् ॥ मन्ये तदर्पितमनोवचनेहितार्थप्राणं पुनाति सकुलं न तु भूरिमानः ॥ १० ॥

भक्त्यैव गजेंद्राय तुष्टोऽभवत् ॥ ९ ॥ एवं भक्त्यैव केवलया हरेस्तोषः संभवतीत्युक्तमिदानीं भक्तिं विना नान्यत्किंचित्तत्तोषहेतुरित्याह । विप्रादिति । पूर्वोक्ता धनादयो द्विषट् द्वादश गुणास्तैर्युक्ताद्विप्रादपि श्वपचं वरिष्ठं मन्ये । यद्वा सनत्सुजातोक्ता द्वादश धर्मादयो गुणा द्रष्टव्याः । तदुक्तम् । "धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ॥ यज्ञश्च दानं च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्य" इति । यद्वा "शमो दमस्तपः शौचं क्षांत्यार्जवविरक्तताः ॥ ज्ञानविज्ञानसंतोषाः सत्यास्तिक्ये द्विषड्गुणाः" इति कथंभूताद्विप्रात् अरविंदनाभस्य पादारविंदाद्विमुखात् । कथंभूतं श्वपचम् । तस्मिन्नरविंदनाभेऽर्पिता मनआदयो येन तम् । ईहितं कर्म । वरिष्ठत्वे हेतुः । स एवंभूतः श्वपचः सर्वं कुलं पुनाति । भूरिर्मानो गर्वो यस्य स तु विप्र आत्मानमपि न पुनाति । कुतः कलं यतो भक्तिहीनस्यैते गुणा गर्वायैव भवंति

तदुक्तं शिष्टैः–" व्याधस्याचरणं ध्रुवस्य च वयो विद्या गजेंद्रस्य का का जातिर्विदुरस्य यादवपतेरुग्रस्य किं पौरुषम् । कुब्जायाः किमु तत्र रूपमधिकं किं तत्सुदाम्नो धनं भक्त्या तुष्यति केवलं परमया भक्तिप्रियो माधवः॥" इति । भक्तिं विना सुशरीरादेरपि वैयर्थ्यमेवाभियुक्तैरुक्तम्–"शरीरं सुरूपं तथा वा कलत्रं धनं मेरुतुल्यं वचः काकुचित्रम् । हरेरंघ्रियुग्मे मनश्चेन्न दत्तं ततः किं ततः किं ततः किं ततः किम्" इति ॥ ९ ॥ किमन्यद्वक्तव्यं भक्त्यभावसद्भावाभ्यामेवं विविच्यत इत्याह–भक्तिहीनाद्विप्रात् । नन्वेते गुणास्तु सर्वसाधारणा एव न केवलं ब्राह्मणस्यैवेति चेदाह–यद्वेति । सनत्सुजातोपाख्यानमुद्योगपर्वणि भारते प्रसिद्धं तत्रोक्ताः धर्मश्चेत्यादि पाठ एव व्याख्यातृचतुर्द्धरनीलकंठसंमतः । ज्ञानं चेत्यादिपाठस्तु टीकांतरसंमत एव । तदर्थस्तु–धर्मो वर्णाश्रमनियतः संध्योपासनादि १ । सत्यं हिंसावर्जं यथार्थभाषणम् २ । दमो जिह्वोपस्थादिनिग्रहः ३ । तपः कृच्छ्रचांद्रायणादि ४ । अमात्सर्यं परगुणासहिष्णुत्वाभावः ५ । ह्रीरकार्यविषये लज्जा ६ । तितिक्षा सत्यपि क्रोधनिमित्ते तदनुत्पादः ७ । अनसूया परगुणेषु दोषानाविष्करणम् ८ । यज्ञो ज्योतिष्टोमादिः ९ । दानं बहिर्वेदिसंविभागः १० । धृतिरत्यंतापद्यपि व्रतादेरत्यागः ११ । श्रुतमर्थग्रहणसहितं वेदाध्ययनमिति विवेकः । एते ब्राह्मणस्य ब्राह्मणत्वजातिविशिष्टस्य महाव्रताः स्वाभाविका एव नत्वन्येषामिव काम्या इत्यर्थः । यद्वा–"शमो दमस्तपः शौचं क्षांत्यार्जवविरक्तताः । ज्ञानविज्ञानसंतोषाः सत्यास्तिक्ये द्विषड्गुणाः ॥" इति पुराणांतरोक्ता वा द्वादश ग्राह्याः । अरविंदेति । तेन ज्ञानयोगादिसत्त्वे विप्रो भगवद्विमुखो नोच्यते इति मतं परास्तम् । भूरिरधिको मानो लोकेष्वादरो यस्य यद्वा–भूरिर्मानोऽहं ब्राह्मणः सर्ववर्णाश्रमेभ्य उत्कृष्ट एते सर्वेऽधमा इत्येवंलक्षणोऽभिमानो यस्य स विप्रस्त्वेकमात्मानमपि न पुनाति कुलस्य तु का वार्त्तेति भावः । इति भाव इति । एतेन भक्तिमता विनयिनैव विप्रेण भाव्यं न त्वन्यथेति विहितमित्याशयः । किंचेह विप्राच्छ्वपचाधिक्यवर्णनं विप्राणां हरिभक्तिप्रवृत्त्यर्थमेव न तु परमार्थतः । तथात्वे तु "ब्राह्मणो जन्मना श्रेयान्सर्वेषां प्राणिनामिह । तपसा विद्यया तुष्ट्या किमु मत्कलया पुनः ॥" इति मैथिलं श्रुतदेवं प्रति श्रीदशमे श्रीमुखोक्तेः पूर्वापरविरोधः "मज्जंश्च सर्वतीर्थेषु पूजयन्सर्वदेवताः । विप्रेतरो विप्रसमः कदाचिन्नैव जायते ॥" इति संहितोक्तेः ॥" अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः । अद्यापि श्रूयते राजन् द्वारकायामहर्निशम् ॥ " इति बहुलाश्वं प्रति नारदोक्तश्च । किंच "उत्पत्तिरेव विप्रस्य मूर्तिर्धर्मस्य शाश्वती । स हि धर्मार्थमुत्पन्नो ब्रह्मभूयाय कल्पते ॥ ब्राह्मणो जायमानो हि पृथिव्यामधिजायते । ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥ अविद्वांश्चैव विद्वांश्च ब्राह्मणो दैवतं महत् । प्रणीतश्चाप्रणीतश्च यथाग्निर्दैवतं महत् ॥ एवं यद्यप्यनिष्टेषु वर्त्तंते सर्वकर्मसु । सर्वथा ब्राह्मणाः पूज्याः परमं दैवतं महत् ॥" इति श्रीमनूक्तेश्च शास्त्रांतरविरोधश्च स्यादिति । यद्वा–हरिभक्तिः श्वपचादीनामपि शोधिनी किं पुनर्विप्रादीनामिति बोधनार्थं वा नान्यथेति भावः । अविज्ञा

नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते ॥ यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः ॥ ॥ ११ ॥ तस्मादहं विगतविक्लव ईश्वरस्य सर्वात्मना महि गृणामि यथामनीषम् ॥ नीचोऽजया गुणविसर्गमनुप्रविष्टः पूयेत येन हि पुमाननुवर्णितेन ॥ १२ ॥ सर्वे ह्यमी विधिकरास्तव सत्त्वधाम्नो ब्रह्मादयो वयमिवेश न चोद्विजंतः ॥ क्षेमाय भूतय उतात्मसुखाय चास्य विक्रीडितं भगवतो रुचिरावतारैः ॥ १३ ॥

न तु शुद्ध्येऽतो हीन इति भावः ॥ १० ॥ तर्हिं किं धनाद्यर्पणेन संमानं प्राकृत इव भगवानपेक्षते नेत्याह । नैवेति । अयं प्रभुरीश्वरोऽविदुषोऽल्पकाज्जनान्मानं पूजामात्मनोऽर्थे न वृणीते नेच्छति यतो निजलाभेनैव पूर्णः । तर्हिं पूजां नेच्छत्येव तत्राह । करुणः कृपालुरतो वृणीते च । तत्र हेतुः । यद्यदिति । यंयं मानं यद्वा यद्यस्माद्येन धनादिना भगवते मानं विदधीत तदेवात्मने भवति नान्यत् । यथा मुखे कृतैव तिलकादिश्रीः शोभा प्रतिबिंबस्य भवति न तु साक्षात्तस्यैव कर्तुं शक्यते तद्वत् ॥ ॥ ११ ॥ यस्मादेवं भगवान्भक्त्यैव तुष्यति तस्मादहं नीचोऽपि विगतविक्लवो गतशंकः सन्नीश्वरस्य महि महिमानं सर्वप्रयत्नेन स्वमनीषानुसारेणानुवर्णयामि । अजानतोऽपि स्तुतिकरणे हेतुमाह । येनैव महिम्नाऽनुवर्णितेनाविद्यया संसारमनुप्रविष्टः पुमान्पूयेत शुध्येत तन्महि । अन्यस्य तथा शोधकत्वाभावादित्यर्थः ॥ १२ ॥ तदेवमात्मनः स्तुतावनधिकारं परिहृत्येदानीं तं स्तुवन्कोपोपसंहारं प्रार्थयते । सर्वे हीति द्वाभ्याम् । भो ईश अमी उद्विजंतो बिभ्यतः सर्वे ब्रह्मादयः सत्त्वमूर्तेस्तव विधिकरास्त्वन्नियोग

यतेऽधिको जायते प्रणीतोऽप्रणीतश्च मंत्रविधिनाहितोऽनाहितश्च । अनिष्टेषु निंद्येषु इति स्मृतिपदानामर्थः ॥ १० ॥ पुनराक्षिपति—तर्हीति । अतः कृपालुत्वे तस्यैव दर्पणाद्यंतर्गतप्रतिबिंबस्यैव तिलकादि कर्तुं शक्यते । संदर्भः—भक्ताश्च श्रीभगवतोपि स्वत एव परमाभीष्टरूपा भक्तिरेव च भक्तानां सुखरूपेति भक्त्या तुतोषेत्येवोत्कर्षयन्स्वकर्त्तव्यत्वेन तामेव निगमयितुमाह—नैवेति । अयं प्रभुरात्मनो मानं पूजां जनान्निजभक्तान्न वृणीते नेच्छति । तत्र हेतुः—निजस्य भक्तस्य लाभेनैव पूर्णः परमसंतुष्टः । हेत्वंतरं—करुणः पूजार्थतत्प्रयासाद्यसहिष्णुः । कथंभूताज्जनात् अविदुषः पितुरग्रे बालकवत्तस्याग्रे न किंचिदपि जानतः । एषा स्वस्य जनैकवर्गत्वेन दैन्योक्तिः । यद्वा—तदावेशेनान्यत्किंचिदपि न जानत इत्यर्थः । उभयत्र पक्षेऽपि तस्यतस्य कारुण्यं हेतुरिति भावः । तर्हिं किं जनस्तस्य मानं न कुरुत एवेत्याशंक्याह—यद्यदिति । स च जनो यद्यत् यंयं मानं विदधीत संपादयति स सर्वोप्यात्मार्थमेव तत्संमानमात्रेणैव स्वसंमानाभिमननात् । सुखं मन्यमानस्तन्मानं करोत्येवेत्यर्थः । तत्संमानमात्रेण स्वसंमानश्च तदेकजीवनस्य जनस्य युक्त एवेति दृष्टांतमाह—यथा मुखे या शोभा क्रियते तन्मात्रमेव प्रतिमुखस्य शोभायै भवति नान्यदिति ॥ ११ ॥ यस्माद्भक्त्यैव तुष्यति न तु सज्जात्यादिभिर्यस्माच्च त्वत्संमाननं खल्वात्मन एव प्रतिफलति तस्माद्धेतोः । इत्यर्थ इति । 'यमादिभिर्योगपथैः' इत्यारभ्य 'मुकुंदसेवया यद्वत्तथाद्धात्मा न शाम्यति' इत्युक्तेरयं भावः ॥ १२ ॥ नन्वेवं ब्रह्माद्या भक्ता न भवंति भवानेव तु भक्त इत्याशंक्यासुरकुलजन्मत्वादित्येनात्मानमपि तत्स्वभावत्वेन निर्दिशन्ब्रह्मादीन् प्रसादविषयीकारयितुं व्यतिरेकदृष्टांतेन तेषां भक्तत्वमेव द्रढयति—सर्वे इति । न च न तुं वयमिवासुरा इवोद्विजंतः त्वदसमोर्द्ध्ववैभवदर्शनेनोद्वेगमीर्ष्यादिभावं प्राप्नुवंतो भवंति । भवांस्तु—सर्वमंगलचरित एवेत्याह—क्षेमायेति।हे ईशेति । क्षेमकरणमेवेशधर्म इति

तद्यच्छ मन्युमसुरश्च हतस्त्वयाद्य मोदेत साधुरपि वृश्चिकसर्पहत्या ॥ लोकाश्च निर्वृतिमिताः प्रतियंति सर्वे रूपं नृसिंह विभयाय जनाः स्मरंति ॥१४॥
नाहं बिभेम्यजित तेऽतिभयानकास्यजिह्वार्कनेत्रभ्रुकुटीरभसोग्रदंष्ट्रात् ॥ अंत्रस्रजः क्षतजकेसरशंकुकर्णान्निर्ह्रादभीतदिगिभादरिभिन्नखाग्रात् ॥१५॥
त्रस्तोऽस्म्यहं कृपणवत्सल दुःसहोग्रसंसारचक्रकदनाद्ग्रसतां प्रणीतः ॥ बद्धः स्वकर्मभिरुशत्तम तेंघ्रिमूलं प्रीतोऽपवर्गशरणं ह्वयसे कदा नु ॥ १६ ॥

कर्तारो भक्ता एव नान्ये । न च वयमसुरा इव वैरभावेनैते भक्ताः किं तु श्रद्धयैव तव रुचिरैरवतारैर्विविधं क्रीडनमस्य विश्वस्य क्षेमादिप्रयोजनाय न तु भयोत्पादनाय ॥ ॥ १३ ॥ तत्तस्मादेषां भयपरिहाराय मन्युं यच्छोपसंहर । यदर्थमयं मन्युः स चासुरः साधूनां संतोषार्थमद्य हतः । अतः परं क्रोधेन कार्याभावात्तं नियच्छ । नन्वन्येषां बधेन साधुः किं मोदेत तत्राह । वृश्चिकादेः परोपद्रवकारिणोऽन्यतो जातया हत्या वधेन तस्यैव तद्भद्रं जातमिति साधुरपि मोदेतैव । तर्हि बहूनां सुखावहत्वादमुं क्रोधं न त्यजामीति चेत्तत्राह।लोकाश्च निर्वृतिमिताः प्राप्ताः संतः प्रतियंति क्रोधोपसंहारं प्रतीक्षंते । तर्हि जनानां पुनर्भयाभावाय मन्युं धारयामीति चेत्तत्राह रूपमिति । विभयाय भयनिवृत्त्यै एतद्रूपस्मरणादेव भयनिवृत्तेर्न मन्युधारणेन कृत्यमस्तीत्यर्थः ॥ १४ ॥ त्वं चेद्बिभेषि तर्हि त्यजामीति चेत्तत्राह । नाहमिति । भो अजित तेऽस्माद्रूपादहं न बिभेमि । कथंभूतात् । आस्यं च जिह्वा चार्कसदृशनेत्राणि च भ्रुकुटीनां रभस आटोपश्च उग्रा दंष्ट्राश्चैतान्यतिभयानकानि यस्मिंस्तस्मात् । अंत्रमय्यः स्रजो यस्मिंस्तदांत्रस्रक् तस्मात् । क्षतजाक्ताः केसरा यस्मिन् । शंकुवदुन्नतौ स्तब्धौ कर्णौ यस्मिन् तच्च तच्च तस्मात् । निर्ह्रादेन भीता दिगिभा यस्मात् । अरीन् भिंदंतीत्यरिभिंदि तानि नखाग्राणि यस्मिन् । एवंभूतादपि ते रूपादहं न बिभेमि ॥ १५ ॥ महद्भयं त्वन्यदस्तीत्याह । त्रस्तोस्मीति । दुःसहं यदुग्रं संसारचक्रे कदनं दुःखं तस्मादहं

भावः ॥ १३ ॥ यस्माद्विश्वस्य क्षेमायाभूत्तस्मादेषां ब्रह्मादीनाम् । अतो दैत्यहननेन साधुसंतोषात्परमन्यत् । अत्राक्षिपति नन्विति । अन्यतः स्वेतराज्जनात् । तस्यैव वृश्चिकादेरेव । तद्धननं भद्रं जातं लोकदुःखदानात्पापोत्पत्तिर्हि वृश्चिकादिदेहसंबंधेनैव तदभावे पापोत्पत्तेरभावात्तस्य नरकादिदुःखं न भविष्यतीति भावः । ननु तिर्यग्योनीनां न पापादिफलं विधिनिषेधशास्त्रस्य मनुष्यपरत्वादिति नात्र शंक्यं वानरजातीयवालिनः संध्योपासनादेः श्रीवाल्मीकीये श्रवणात् श्रीरामचंद्रेणापि जटायुषो दाहकरणात्प्राणिमात्रपरत्वं शास्त्रस्य बोध्यते एतद्वृत्तस्यापि तत्रैवोल्लेखाच्च । अत्र भगवानाक्षिपति–तर्हीति । इत्यर्थ इति । 'पलालमिव धान्यार्थी' इति न्यायेन क्रोधत्याग एवोचित इति । किं च तवैतद्रूपस्मरणेनैव भीता असुरा नंक्ष्यंतीति भावः । हे नृसिंहेति नामत एव सर्वेषां दुष्टानां त्रासो भवतीति भावः । अत्र संदर्भः–ननु परमसाधोस्तव हिंसकोयमिति महापापिनोप्यस्य मया हननं साधवोऽप्येतत्तत्वानभिज्ञा एते ब्रह्ममरीच्यादयो न सहेरन्नत एतेष्वपि प्रसादो न युक्त इत्याशंक्याह–मोदेतेति । अहं को वराकः किन्तु वृश्चिकादेरिव सर्वहिंसकस्यास्य हननं साधुजनोप्यनुमोदेत किमुतैते इत्यर्थः । किं वक्तव्यं त एव मोदं लब्धा इति यतो लोकाश्चेति अतो विश्वसुखदत्वात्साध्वेवानुष्ठितमिति प्रसादस्यावसरोऽयं न तु मन्योरिति भावः ॥ १४ ॥ असुरजातित्वेप्यन्येषामसुराणामिव त्वत्तो न मे भयमित्याह–नाहमिति । 'आटोपश्चोर्द्ध्वचलनम्' इत्यभिधानात् । अजितेति । यश्च केनापि न जीयते तस्मात्सर्वे बिभ्यतीति प्रसिद्धिर्यद्यप्यस्ति तथापि मे त्वत्कृपयैव न भयमिति भावः ॥ १५ ॥ किं तु त्वद्बैमुख्यप्रदा

१ शास्त्रज्ञः ।

**यस्मात् प्रियाप्रियवियोगसयोगजन्मशोकाग्निना सकलयोनिषु दह्यमानः ॥ दुःखौषधं तदपि दुःखमतद्धियाहं भूमन् भ्रमामि वद मे तव दास्ययोगम् ॥ १७ ॥ सोऽहं प्रियस्य सुहृदः परदेवताया लीलाकथास्तव नृसिंह विरिंचगीताः ॥ अंजस्तितर्म्यनुगृणन् गुणविप्रमुक्तो दुर्गाणि ते पदयुगालयहंससंगः ॥ १८ ॥**

त्रस्तोऽस्मि तत्र च ग्रसतां हिंस्राणां मध्ये स्वकर्मभिर्बद्धः सन्प्रणीतो निक्षिप्तोऽस्मि हे कृपणवत्सल हे उशत्तम कदा नु त्वं प्रीतः सन्नपवर्गभूतं शरणं तवांघ्रिकमलं प्रति ह्वयसे मामाह्वयसि ॥ १६ ॥ दास्ये सति मत्प्रीतिरिति चेत्तार्हि नानायोनिषु क्लिश्यमानस्य मम दास्यज्ञानाभावात्त्वमेव तदुपदिशेति प्रार्थयते । यस्मात्प्रियैरप्रियैश्च यथासंख्यं वियोगसंयोगाभ्यां जन्म यस्य तेन शोकाग्निना सकलयोनिषु दह्यमानोऽस्मि । दुःखस्य प्रतीकारः कार्य इति चेत्तत्राह । दुःखस्यौषधं प्रतीकारस्तदपि दुःखमेव । एवमप्यतद्धिया देहाद्यभिमानेन मुह्यामि । अतो हे भूमन्विभो मे तव दास्यरूपं योगं निस्तारोपायं वद ॥ १७ ॥ ननु दास्ययोगेन प्रवृत्तस्यापि तदंतरायभूतानां पूर्वोक्तनानादुःखानां कुतः परिहारस्तत्राह । सोऽहं त्वद्दासः सन् भो नृसिंह तव लीलाकथा अनुगृणन्दुर्गाणि महादुःखान्यंजसा तितर्मि तरामि न गणयिष्यामीत्यर्थः । तत्र हेतुः गुणै रागादिभिर्विशेषेण प्रमुक्तः सन् । तत्कुतस्ते पदयुगमेवालयो येषां भक्तानां त एव हंसा ज्ञानिनस्तैः संगो यस्य मम सोऽहम् । कथंभूतस्य कथास्तत्राह प्रियस्येत्यादि । कुतो ज्ञाताः विरिंचेन गीतास्तत्संप्रदायप्रवृत्ताः । तथा चाथर्वणी श्रुतिः । "देवा ह वै प्रजापतिमब्रुवन्" इत्यादि । दास्ये प्रवृत्तस्य भवदनुग्रहेण सत्संगस्ततो वीतरागतया

यकदुःसंगादिभ्य एव भीतोस्मीत्याह—त्रस्तोऽस्मीति । दुःसहं यत्त्वन्निंदाद्वेषादिमयत्वादुग्रं संसारचक्रकदनं तस्मादेव त्रस्तोऽस्मि न तु साधारणसंसारादिति प्रह्लादाभिप्रायो व्याख्येयः । "नैवोद्विजे परदुरत्ययवैतरिण्यास्त्वद्वीर्यगायनमहामृतमग्नचित्तः" इत्यग्रिमतदुक्तेः । यतो ग्रसतां त्वद्भक्तं मां भक्षितुमिवेच्छतामसुराणां मध्ये प्रणीतो निक्षिप्तः । ननु त्वं किं मया निक्षिप्तस्तत्र नहिनहीत्याह बद्धः सन् कर्मभिरेव अंघ्रिमूलमंघ्रिकमलं कमलस्यैव हरिनाभ्युद्भूतस्य सर्वमूलत्वान्मूलपदेन कमलपदावबोधो न विरुद्धः "मूलं कंजे निदानेभेऽग्रे मुख्यधनबुध्नयोः" इति धरणिः । 'बुध्नब्रध्नौ समानार्थौ' इति च । ह्वयसे पादसंवाहनार्थं मामाह्वास्यसीत्यर्थः । यद्वा—ते तवांघ्रिमूलं चरणारविंदयोर्नित्याधिष्ठानं श्रीवैकुंठं प्रति कदा नु ह्वयसे । हे कृपणवत्सलेति । मादृशदीनोपरि कृपैवं तवोचितेति भावः । तत्र हेतुत्वेन संबुद्ध्यंतरमाह—उशत्तमेति । उशंति सर्वदेच्छंति दीनोद्धरणमित्युशंतो दयालवस्तेष्वपि श्रेष्ठस्त्वदपरो नास्तीति भावः ॥ १६ ॥ ननु मदंघ्रिसेवया किं करिष्यसि यद्वा—यावदाबह्वयामि तावत्पैतृकं त्रिजगदैश्वर्यसुखं भुंक्ष्वेति चेद्दुःखमेव तदतस्तन्न प्रार्थ्यमस्तीत्याह—यस्मादिति । सकलयोनिष्विति । राजदेहेऽपि तादृशशोकाग्निदाहस्य नासद्भाव इति भावः । ननु शोकाग्नेः प्रतीकारा अपि बहवो वर्त्तंते इत्यत आह—दुःखौषधमिति । एवमपि दुःखस्वरूपत्वेपि । अतद्धिया दुःखबुद्ध्यैव शूकरादियोनावप्यहं सुखीति बुद्ध्या भ्रमामि । अतस्तव दास्यस्य योगमुपायं वद केनोपायेन तव दास्यं प्राप्नुयां तत्त्वमेवोपदिशेति त्वद्दास्यत्वे सति नानायोनिगतस्यापि मे किमपि दुःखं न स्यादिति भावः । यद्वा—दास्यं दासकर्म तच्च श्रीहरिप्रतिमापरिचर्या तदेव योगस्त्वत्संयोगरूपस्तं वदेत्यर्थः । हे भूमन्निति । भूम्नो दास्यं को न वांछतीति भावः । दास्यस्यैव परमपुरुषार्थत्वात्तदुक्तं ब्रह्मवैवर्त्ते "कृष्णे भक्तिः कृष्णदास्यं वरेषु परमं वरम् । श्रेष्ठा पञ्चविधा मुक्तेर्हरिभक्तिर्गरीयसी ॥ ब्रह्मत्वादपि देवत्वादिन्द्रत्वादमरादपि । अमृतात्सिद्धिलाभाच्च हरिदास्यं सुदुर्लभम् ॥" इति ॥ १७ ॥ अत्राक्षिपति—नन्विति । सांसारिकदुःखपरिहारोऽन्य एवान्वेष्ट

बालस्य नेह शरणं पितरौ नृसिंह नार्तस्य चागदमुदन्वति मज्जतो नौः ॥ तप्तस्य तत्प्रतिविधिर्य इहांजसेष्टस्तावद्विभो तनुभृतां त्वदुपेक्षितानाम् ॥
॥ १९ ॥ यस्मिन् यतो यर्हि येन च यस्य यस्माद्यस्मै यथा यदुत यस्त्वपरः परो वा ॥ भावः करोति विकरोति पृथक्स्वभावः संचोदितस्तद
खिलं भवतः स्वरूपम् ॥ २० ॥

भगवद्गुणानुवर्णनं ततश्च न दुःखाभिभवः स्यादिति वाक्यार्थः ॥ १८ ॥ ननु दुःखैस्तप्तस्य तत्प्रतीकारो लोके प्रसिद्ध एव किं मद्दास्यादिना तत्राह । बालस्येति । भो नृसिंह तप्तस्य तत्प्रतिविधिर्दुःखप्रतीकार इह लोके योंजसेष्टः स त्वयोपेक्षितानां तावदेव क्षणमात्रमेव न त्वात्यंतिकः । तदेवाह । बालस्य पितरौ शरणं रक्षकाविह न भवतस्ताभ्यां पाल्यमानस्यापि तस्य दुःखदर्शनात् क्वचिदजीगर्तादिषु ताभ्यामेव तद्वधदर्शनाच्च । न चार्ऽतस्य रोगिणोऽगदमौषधं शरणं कृतेऽप्यौषधे मृत्युदर्शनात् । न चोदन्वति समुद्रे मज्जतः पुंसो नौः शरणं तया सह मज्जनदर्शनात् । अतस्त्वमेव शरणमित्यर्थः । अथवैवं काक्वा व्याख्येयं तप्तस्य तत्प्रतिविधिर्य इह तावत्प्रसिद्धः स त्वदुपेक्षितानां किमंजसेष्टोऽपि तु नेष्ट एव । यद्वा यस्तावदिह प्रतिविधिरिष्टः स किमंजसा नैवांजसेत्यादि योज्यम् । बालस्येत्यादि पूर्ववदेव ॥ १९ ॥ ननु क्वचित्कुतश्चित्केनचित्कदाचित्कश्चिद्रक्षकोऽपि दृश्यत एवेत्याशंक्य तत्रापि तत्तद्रूपेण त्वमेव रक्षक इत्युररीकृत्य तस्यैव सर्वात्मतामाह । यस्मिन्निति । अपरोऽर्वाचीनः पित्रादिः परो ब्रह्मादिर्वा भावः कर्ता तत्तत्कारकैर्यद्यत्करोति तत्सर्वं भवत एव स्वरूपं न तु पृथक् यस्मिन्नधिकरणे यतो निमित्ताद्यर्हि यस्मिन्काले येन करणेन येन हेतुकर्त्रा संचोदितश्च यस्य संबंधि यस्मादपादानाद्यस्मै संप्रदानाय यदीप्सिततमं यः कर्तेत्येवं सप्तविभक्त्यर्थाः । यथा येन प्रकारेणेति क्रियाविशेषणभूतानामव्ययानामर्थः । पृथक्स्वभावः

व्यस्तत्र साटोपं सप्रागल्भास्फोटं चाह—सोहं त्वदनन्यभक्तः श्रीनारदभृत्यत्वेन प्रसिद्धः प्रह्लादोऽहमन्य इव न ज्ञानकर्मादिकं स्वप्रेप्स्यंगीकरोमीति भावः । अनुगृणन्कीर्त्तयन्नेव । इत्यर्थ इति । दुःखतरणं हि तदचिंतनमेव तच्च चेतोधर्मश्चेतश्च त्वदाविष्टं न किञ्चिदपि गणयतीति भावः । तत्र दुःखागणने यद्यहं गुणातीतः स्यां तदा मे कुतो दुःखदुःखौषधश्चेति भावः । तत् गुणातीतत्वम् । त्वद्भक्तसंगप्रसादादेव गुणातीतत्वं जातमिति भावः । तत्संप्रदायेन प्रवृत्ताः कथा इत्यत्र प्रमाणमाह—तथाचेति । देवा इंद्राद्याः । प्रजापतिं ब्रह्माणमब्रुवन्निममेव नो भगवन्नोंकारमात्मानमुपदिशेत्यादिना श्रीनृसिंहतापनीयनवमखंडे वर्णिता इति । वाक्यार्थो निर्गलितोर्थः ॥ १८ ॥ पुनराक्षिपति—नन्विति । भा नृसिंहेति । न हि गजानां सिंहं विहाय श्वभिर्हननं कर्तुं शक्यते यथा तथा दुःखौघसंघप्रतीकारोप्यौषधादिना त्वां विहाय न कर्तुं शक्य इति भावः । एवं पूर्वपद्येऽपि संबुद्ध्यभिप्राय ऊहनीयः । अजीगर्तो हि भार्गववंशीयो मुनिस्तेन शुनःशेफाख्यस्वपुत्र एव मारणाय विक्रीतो नवमस्कंधे चैतत्प्रकटी भविष्यति । आदिना हंसध्वजादिग्रहस्तेनापि सुधन्वाख्यः स्वपुत्रस्तप्ततैलकटाहे निक्षिप्तः प्रसिद्धमेतज्जैमिनीये रोगनाशादर्शनाच्चेति हेत्वंतरमार्त्तस्येति । यत एते न रक्षका अतो हेतोः । इत्यर्थ इति। तत्त दुःखप्रतीकारो हि त्वां विना न फलतीति भावः । तथा च यः प्रतिविधिरुपदिष्टः शास्त्रांतरे स त्वदुपेक्षितानां त्वद्बहिर्मुखानामेवापाततो धैर्यार्थमेवेत्याह—यद्वेति । किञ्च तत्रापि सर्वशक्त्याश्रयपरमशक्तिना त्वयैव रक्षणं तत्तद्द्वारेति भावः ॥ १९ ॥ पुनराक्षिपति—नन्विति । स्फोटितमेतत्स्वामिचरणैरेवात

माया मनः सृजति कर्ममयं बलीयः कालेन नोदितगुणानुमतेन पुंसः ॥ छंदोमयं यदजयाऽर्पितषोडशारं संसारचक्रमज कोऽतितरेत्त्वदन्यः ॥२१॥ स त्वं निहत्य विजितात्मगुणः स्वधाम्ना कालो वशीकृतविसृज्यविसर्गशक्तिः ॥ चक्रे विसृष्टमजयेश्वरषोडशारे निष्पीड्यमानमुपकर्ष विभो प्रपन्नम् ॥ २२ ॥ दृष्टा मया दिवि विभोऽखिलधिष्ण्यपानामायुः श्रियो विभव इच्छति याञ्जनोऽयम् ॥ येस्मात्पितुः कुपितहासविजृंभितभ्रूविस्फूर्जितेन लुलिताः स तु ते निरस्तः ॥ २३ ॥

सत्त्वादिप्रकृतिः । करोत्युत्पादयति विकरोति रूपांतरं नयतीति ॥ २० ॥ अतोऽन्यस्य रक्षकस्याभावादसंसारित्वाच्च नित्यमुक्तस्त्वमेव मां शरणागतं रक्षेति प्रार्थयते मायेति द्वाभ्याम् । त्वदंशस्य पुंसोऽनुमतेनेक्षणरूपेणानुग्रहेण मनो मनःप्रधानं लिंगं माया सृजति । कथंभूता । कालेन नोदिताः क्षोभिता गुणा यस्याः । कथंभूतं मनः । कर्ममयं कुर्वद्रूपं बलीयो दुर्जयं छंदोमयं वेदोक्तकर्मप्रधानं च । अजया जीवस्याविद्यया तद्भोगार्थमार्पिताः षोडशारा विकारा यस्मिन् यदेवंभूतं संसारचक्रात्मकं मनस्तत्को तितरेत् । भो अज त्वदन्यस्त्वत्तः पृथक्स्थितः । त्वामभजन्नित्यर्थः ॥ २१ ॥ ननु ममापि मायासंबंधात्कर्तृत्वाद्यविशेषाच्च त्वत्तः को विशेष इत्याह । स इति । स्वधाम्ना चिच्छक्त्या नित्यं विजिता आत्मनो बुद्धेर्गुणा येन स हि त्वम् । यतः कालो मायाप्रेरकः । अत एव वशीकृता विसृज्यानां कार्याणां विसर्गाणां साधनानां च शक्तयो येन । अत इक्षुदंडवन्निष्पीड्यमानं मामुपकर्ष स्वसमीपं नय ॥२२॥ ननु लोकपालानां भोगान्भुंक्ष्व पित्र्यं वा राज्यमिदं दास्यामि किमिति संसारादुद्विजसे तत्राह । दृष्टा इति त्रिभिः। श्रियः संपदः । विभव उद्भवः । आयुरादयो दृष्टा इति काक्वा तुच्छत्वमुक्तम् । तदेवाह । येऽस्मत्पितुः कोपहासविकृतभ्रूभंगमात्रेण विध्वस्ताः स च त्वया

उपरम्यते ॥ २० ॥ यतस्त्वमेव सर्वरूपोऽतो हेतोः । ननु यद्यहमेव सर्वरूपस्तर्हि संसारोऽप्यहमेव कुतो मद्रूपात्संसारान्मुक्तिमिच्छसीत्यत आह—द्वाभ्याम् । माया त्वदीया बहिरंगा शक्तिः मनो महदाद्यात्मकं लिंगदेहं जीवस्योपाधिं कर्माणि लौकिकवैदिकव्यापारास्तन्मयं बलीयो दुर्जयं छंदोमयं वासनामयम् 'छंदः पद्येऽभिलाषे च' इत्यमरः । यदेव खल्विदं संसारचक्रं भवेत् । हे अजेति । न जीयते केनापीत्यजस्त्वं तु मायां पराजित्य ततः परत्रास्सेऽतस्त्वत्सेवाप्रभावेणाहमपि मायां जेतुं समर्थो भविष्यामीति भावः । इत्यर्थ इति । त्वदुक्तस्तु "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इति त्वदुक्तेरेव तां तरत्येवेति भावः ॥२१॥ पुनराक्षिपति—नन्विति । ममापीति । मायायास्त्वच्छक्तित्वात्तन्मयं संसारचक्रं यद्यपि त्वद्रूपं तदपि त्वं स्वरूपशक्त्या तस्मात्पृथग्भूत एव तस्माद्विमोच्य लोकमिमं स्वचरणांतिकं नयेत्याह—स त्वमिति । यन्माया हि गुणमयं जीवोपाधिं सृजति स त्वं चिच्छक्त्या स्वरूपशक्त्या । अत एव मायाप्रेरकत्वादेव । हे ईश्वरेत्याकर्षणसामर्थ्यमाह । विभो इति पीडाऽभिज्ञतां चाह ॥ २२ ॥ पुनराक्षिपति—नन्विति । न च त्वां विनान्यं कमप्यैश्वर्यवंतं पश्यामि यमहं प्रपद्ये यो मां संसारादुद्धरिष्यतीत्याह—दृष्टा इति काक्वेति । किं न दृष्टाः किन्तु दृष्टा एवेत्यर्थः । त्वया निरस्त इत्यसाधारणप्रभावादपि त्वमेव परमेश्वर इति जानामीति भावः । विभो इति । विशेषेण भानं

तस्मादमूस्तनुभृतामहमाशिषो ज्ञ आयुः श्रियं विभवमैंद्रियमा विरिंचात् ॥ नेच्छामि ते विलुलितानुरुविक्रमेण कालात्मनोपनय मां निजभृत्य पार्श्वम् ॥ २४ ॥ कुत्राशिषः श्रुतिसुखा मृगतृष्णिरूपाः क्वेदं कलेवरमशेषरुजां विरोहः ॥ निर्विद्यते न तु जनो यदपीति विद्वान् कामानलं मधुलवैः शमयन् दुरापैः ॥ २५ ॥ क्वाहं रजःप्रभव ईश तमोधिकेऽस्मिञ्जातः सुरेतरकुले क्व तवानुकंपा ॥ न ब्रह्मणो न तु भवस्य न वै रमाया यन्मेऽर्पितः शिरसि पद्मकरः प्रसादः ॥ २६ ॥ नैषा परावरमतिर्भवतो ननु स्याज्जंतोर्यथात्मसुहृदो जगतस्तथाऽपि ॥ संसेवया सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न परावरत्वम् ॥ २७ ॥

निरस्तः ॥ २३ ॥ यस्मादेवं तस्मादाशिषो भोगान् ज्ञस्तत्परिपाकं विद्वानहमैंद्रियामिंद्रियैर्भोग्यं ब्रह्मणो भोगमभिव्याप्य किमपि नेच्छामि ते कालात्मन उरुविक्रमेण विलुलितान्विध्वस्तानणिमादीनपि ॥ २४ ॥ किं च वर्तमानकालेऽपि न भोगार्हा इत्याह । कुत्रेति । श्रुतिः श्रवणं तदेव सुखं यासु ताः मृगतृष्णिकावन्मिथ्याभूताश्चाशिषः क्व । अशेषाणां रुजां रोगाणां विरोह उद्भवस्थानं क्व चेदं कलेवरम् । एवं चेत्सर्वोऽपि जनः किं न विरज्यते तत्राह । यदपि यद्यपीत्येवं विद्वानयं जनस्तथापि न निर्विद्यते विरक्तो न भवति । कुतः । काम एवानलस्तं मधुतुल्यैः सुखलवैर्दुःसाध्यैरपि शमयन् कामाग्निशमनव्यग्रस्य निर्वेदावकाशो नास्तीत्यर्थः । यद्वाऽचिंत्यमिदं त्वन्मायाचेष्टितमिति भावः ॥ २५ ॥ तर्हि त्वं कथं निर्विण्णोऽसि अनर्हेऽपि मयि प्रवृत्तया त्वत्कृपयैवेत्याशयेनाऽह क्वेति । रजसैव प्रभवो जन्म यस्य सः सप्तम्यंतं वा कुलविशेषणम् । तमोऽधिकं यस्मिंस्तस्मिन्नसुराणां कुले जातोऽहं क्व क्व च तावनुकम्पा । तामेवाह । ब्रह्मादीनां शिरसि यो नैवार्पितः स पद्मवत्सकलसंतापहरः करः प्रसादः पुरुषार्थरूपो मे शिरस्यर्पित इति यत् । ययाऽनुकम्पयेति वा ॥ २६ ॥ न च त्वयीदमतिचित्रमित्याह । नैषेति । एते ब्रह्मादय उत्तमा अयमसुरो नीच इत्येषा परावरम

तवैवेति भावः ॥ २३ ॥ ततः किमत आह–तस्मादिति । यस्मान्मत्पिता तादृशैश्वर्यसंपत्तिमानपि निरस्तस्तस्मादहमणिमादिसिद्धीरपि निजभृत्यानां नंदसुनंदादीनां पार्श्वं समीपं नय भृत्यभृत्यं विधेहीति भावः । यद्वा–हे निजा भृत्या भक्ता यस्य तादृश 'यदात्यैकांतभक्तान्मे नानंतः श्रीरजः परः' इति । श्रीदशमे मैथिलोक्तेः । पार्श्वं स्वसमीपं दास्ये प्रवृत्तं कुर्विति । तस्यैव सर्वोत्तमपदत्वादिति भावः ॥ २४ ॥ तर्हि किमिति सर्वे लोका भोगैश्वर्यमेव वांछंति तत्राह–सर्वोऽप्यनभिज्ञ एवेत्याह–किञ्चेति । मृगतृष्णा यथा दृष्टिसुखास्तथैव राज्याद्याशिषोपि श्रुतिसुखमात्रा एव स्पर्द्धाऽसूयारागद्वेषाऽपापचितादिभिर्वस्तुतस्सुखलेशस्याप्यभावात् । अस्तु वा सुखं तस्य भोगासामर्थ्यान्महदेव दुःखमित्याह–क्वेदमिति । तथापि विद्वानपि विचार्यापि न निर्विद्यते । मूर्खः किमुतेति भावः । इत्यर्थ इति । न हि मधुलवैरनलः शाम्यति प्रत्युत दीप्यत एव बहुप्रदीप्ते बहुयत्नं करोतीति भावः । अहो विद्वानपीत्थं कुरुते चेत्तर्ह्यविद्वानेवेत्यत आह–यद्वेति । इति भाव इति । विदुषामपि तव मायया मोहो भवतीत्याशयः ॥ २५ ॥ भगवानाक्षिपति तर्हीति । यद्यपि नास्ति कोप्यधमस्तदपि त्वं मां सर्वोत्तममकरोस्तत्ते कृपामाहात्म्यं वर्णयामीत्याह–क्वेति । संभवत्वादाह–सप्तम्यंतं वेति । करविशेषणत्वे स इत्यध्याहारे च गौरवादाह–यत् ययेति ॥ २६ ॥ त्वयि परमेश्वरे । इदमधमेऽपि दयालुत्वं प्राकृतस्य सामान्यपुरुषस्य । अत्र परावरमत्यभावे । एवं सत्यपि सेवानुरूपोदये सत्यपि । सेवातारतम्येनैवोदयतारतम्यं

एवं जनं निपतितं प्रभवाहिकूपे कामाभिकाममनु यः प्रतपन् प्रसंगात् ॥ कृत्वात्मसात् सुरर्षिणा भगवन् गृहीतः सोऽहं कथं नु विसृजे तव भृत्यसेवाम् ॥ २८ ॥ मत्प्राणरक्षणमनंत पितुर्वधश्च मन्ये स्वभृत्यऋषिवाक्यमृतं विधातुम् ॥ खड्गं प्रगृह्य यदवोचदसद्विधित्सुस्त्वामीश्वरो मदपरोऽवतु कं हरामि ॥ २९ ॥

तिर्जंतोः प्राकृतस्य यथा तथा भवतो नैव स्यात् । अत्र हेतुः जगत आत्मनः सुहृदश्च । तर्हि सर्वत्र मत्प्रसाद एवंरूपश्च किं न स्यात्तत्राह । संसेवया तव प्रसादो भवति तत्र च सेवानुरूपं तत्तदिच्छानुसारेण धर्मादीनामुदयो भवति । एवंसत्यपि वैषम्याभावे दृष्टांतः । सुरतरुर्यथा सेवकस्यैव संकल्पानुसारेण फलं ददाति न च विषमस्तद्वत् । न परावरत्वमत्र कारणमिति शेषः ॥ २७ ॥ एतच्च त्वद्भृत्यकृपया मया प्राप्तमिति त्वद्भृत्यपार्श्वमेव मां नयेत्याशयेनाह । एवमिति । यथा त्वयाऽनुकंपितोऽस्म्येवं नारदेनाऽऽत्मसात्कृत्वा पूर्वमनुग्रहीतः सोऽहं कथं नु त्वद्भृत्यसेवां विसृजामि । कथंभूतोऽनुगृहीतोऽस्मि । प्रभव एवाहियुक्तः कूपस्तस्मिन्कामानभितः कामयमानं जनं निपातितमनु तत्प्रसंगात्प्रपतन्योऽहम् । तदेवं त्वद्भृत्यस्य नारदस्यानुग्रहेण त्वयाऽत्यंतमनुकंपितोऽस्म्ययमेव च मम परमोऽनुग्रहो न पुनरिदमतितुच्छं मत्प्राणरक्षणादि ॥ ॥ २८ ॥ न चेदं त्वया मदनुग्रहार्थं कृतं किंत्वन्यार्थमित्याह । भो अनंत यदेतन्मत्प्राणरक्षणं मां हंतुमुद्यतस्य मत्पितुर्वधश्च तदुभयं स्वभृत्यऋषिवाक्यमृतं सत्यं विधातु

न परावरत्वं तूत्कृष्टानुत्कृष्टत्वमत्र कृपोदयतारतम्ये कारणमित्यर्थः । अत्र संदर्भः—यत्तु भवान्भक्ताननुगृह्णाति तच्च यद्यपि चित्रं तथापि दृष्टांतसद्भावान्नातिचित्रं मय्यनुग्रहस्तु तदभावादतीव चित्रमिव । पूर्वोक्तार्थमेवोत्कर्षयितुमाह—नैषेति ॥ २७ ॥ ननु मत्संसेवया त्वयि मम सम्यक् प्रसाद इत्यत्र सुरतरुदृष्टांतेन मद्वैषम्यं पर्यहार्षीः किन्तु संसेवायां किं कारणं तद्ब्रूहीति तत्राह—एवमिति । एवमुत्कृष्टनिकृष्टभावेन जनं सर्वमेव कामान्कामयमानं निपतितमनु तत्प्रसंगात्पतितप्रसंगात्प्रपतन्नेवाहं सुरर्षिणा नारदेनात्मसात्कृत्वाऽयं जीवो मदीयो भवत्विति मयि स्वस्वत्वमारोप्य गृहीतो बलात्स्वपाणिना गृहीत्वा ततः स्वांतिकं नीत्वा तन्मंत्रराजमुपदिश्य स्वसेवकीकृत इति भावः । सोऽहं संसारकूपपतित एव संप्रत्यहं प्रह्लादस्त्वद्भक्तो यत्प्रसादादभवं तस्य तव भृत्यस्य श्रीमद्गुरोः श्रीनारदस्य सेवां त्वत्सेवनरूपामाज्ञाम् आज्ञापालनमेव मुख्यसेवेत्यर्थः । कथं विसृजामि त्यजामि । यथा कर्मिज्ञानियोगिनः फलप्राप्तौ साधनं त्यजन्ति तथेत्यर्थः । भक्तिमार्गे हि साधनस्यापि फलीभावात् । भगवंतं प्राप्तानामपि ध्रुवादीनां साधुसंगादिस्पृहा यथा “ भक्तिं मुहुः प्रवहतां त्वयि मे प्रसंगो भूयादनंत महताममलाशयानाम् ” इति । “ ध्यायंश्चराम्यनुगृहाण यथा स्मृतिः स्यात् ” इति च । अत एव विचार्यैव मया प्रार्थितम् । ‘ नय मां निजभृत्यपार्श्वम् ’ इति । स्वामिव्याख्यानेऽयमेव त्वत्सेवनोत्साह एवेत्यर्थः । संदर्भस्तु—अथैतादृश्याः कारणं स्मरन्नपि तदेवाभीष्टं प्रार्थयते—एवमिति । एवं त्वत्कृपायोग्यं यथा स्यात्तथाऽनुगृहीतो यः सोऽहं दृष्टभगवद्भृत्यातिशयत्वात्कथं विसृजे त्यक्तुं शक्नोमि नैवेत्यर्थः ॥ २८ ॥ इदं मत्प्राणरक्षणादिकम् । अतस्तव भक्तवश्यत्वाद्भक्तकृपानुगामिन्येव लोकेषु तव कृपा दृष्टा न तु त्वं स्वभक्तमनाश्रितान्कांश्चिदपि कृपयसीति न ते क्वापि वैषम्यं मय्यपि तव स्वभक्तानुरोधेनैव सर्व एवानुग्रह इत्याह—मदिति । स्वभृत्य ऋषिर्नारदस्तस्य वाक्यं सत्यं कर्तुमित्यहं मन्ये । मन्मात्रा मदर्थं प्रार्थितेन श्रीनारदेन त्वत्पुत्रस्य विद्वेषकनाशादिना कल्याणं भविष्यतीति वरदानात् । तदुक्तम्—“ऋषिं पर्यचरत्तत्र भक्त्या परमया सती । अंतर्वत्नी स्वगर्भस्य क्षेमायेच्छाप्रसूतये । ऋषिः कारुणिकस्तस्याः प्रादादुभयमीश्वरः” इति । अयुक्तं मद्धिंसनम् । कं शिरो हरामि छिनद्मि । पाठांतरे ‘कं निर्हन्मि’ इति पाठे । यत्पदस्य हेत्वर्थत्वे त्वन्वयकार्कश्यं मत्वाह—यद्यदेति । किञ्च दिग्गजादिभ्यो यथा

एकस्त्वमेव जगदेतदमुष्य यत्त्वमाद्यंतयोः पृथगवस्यासि मध्यतश्च ॥ सृष्ट्वा गुणव्यतिकरं निजमाययेदं नानेव तैरवसितस्तदनुप्रविष्टः ॥३०॥ त्वं वा इदं सदसदीश भवांस्ततोऽन्यो माया यदात्मपरबुद्धिरियं ह्यपार्था ॥ यद्यस्य जन्म निधनं स्थितिरीक्षणं च तद्वै तदेव वसुकालवदष्टि तर्वोः ॥३१॥

मित्यहं मन्ये । कुतः । यद्यस्मादसदयुक्तं विधित्सुः खड्गं प्रगृह्यावोचत् । किं मदपरो मद्व्यतिरिक्तश्चेदीश्वरोऽस्ति तर्हि त्वामिदानीमवतु तव कं शिरोऽहं हरामीति । पाठांतरेऽप्ययमेवार्थः । यद्यदाऽवोचत्तदा मत्प्राणरक्षणमिति वाऽन्वयः । एतच्च सत्यं विधातुं निजभृत्यभाषितमित्यत्रैव बहुधा व्याख्यातम् ॥ २९ ॥ न चेदं पक्षपातेन रक्षणं दैत्यहननं च त्वयि स्वाभाविकं किं तु मायागुणोपाधिकं सर्वात्मके त्वयि स्वतस्तदयोगादित्याह एक इति । एतच्च जगत् त्वमेवैकः । यद्यतोऽमुष्यादावंते च पृथगवस्यसि विरामं करोषि सन्मात्रतया कारणत्वेनावधित्वेन च वर्तस इत्यर्थः । अतो मध्यतश्च त्वमेव । कुतस्तर्हि भेदप्रतीतिस्तत्राह । निजमायया गुणपरिणामात्मकमिदं जगत्सृष्ट्वा तदनुप्रविष्टस्त्वं तैर्गुणैर्हेतुभूतैर्नानेव रक्षक इव हंतेव चावसितः प्रतीतः । तदुक्तं स्कंधोपक्रमे । "निर्गुणोऽपि ह्यजोऽव्यक्तो भगवान्प्रकृतेः परः ॥ स्वमायागुणमाविश्य बाध्यबाधकतां गतः" इत्यादिना ॥ ३० ॥ ननु यद्येतज्जगदहमेव तर्हि जगतो वैषम्येण मम वैषम्यमपि किं न स्यादित्यत आह । त्वं वै त्वमेवेदं सदसत्कार्यकारणात्मकं जगन्न तु त्वत्तः पृथक् । भवांस्तु ततोऽन्यः आद्यंतयोः पृथगवस्थानात । यद्यस्मादेवमतोऽयमात्मीयोऽयं पर इति या बुद्धिः साऽपार्था मायैव । कार्यकारणाभेददृष्टांतेन साधयति । यद्यतो यस्य जन्म ईक्षणं प्रकाशश्च यस्मिन्निधनं च स्थितिश्च तद्वै तदेव । अष्टिर्बीजं कारणं तरुः कार्यं तयोर्यथा वसुकालमात्रत्वम् । अयमर्थः । कालशब्देन नीलत्वाद्यसाधारणगुणयोगात्पृथ्वी । वसुशब्देन वस्तुमात्रं भूतसूक्ष्मम् । तत्र तरोर्यथा पृथ्वीमयबीजमात्रत्वं तस्य च यथा भूतसूक्ष्ममात्रत्वमेवं सर्वमपि कार्यं कारणात्मकं जगत्परमकारणात्मकमेवेति । तथा च पारमर्षं सूत्रम् "तदनन्यत्वमारंभणशब्दादिभ्यः" इति । श्रुतिश्च । "वाचारंभणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इति ॥३१॥

मद्रक्षणं तथा तद्वस्तान्न संभवतीति मत्वा त्वया तद्वध एव कृत इत्यर्थः । ननु सोऽप्यतिबलस्तेन मद्वधः कथं न कारिष्यत इत्यत आह–हे अनंतेति । न विद्यतेऽन्तः केनापि यस्य तादृशस्त्वमसीति भावः । एवं भगवतः सर्वत्र साम्येऽपि भक्तवश्यत्वं विशिष्यत इति प्रह्लादेन ज्ञापितम् ॥ २९ ॥ तदयोगात्पक्षपातायोगात् । इत्यर्थ इति । ' यस्तु यस्यादिरंतश्च स वै मध्यं च तस्य च ' इति न्यायेनेति भावः । अत आद्यंतयोर्विद्यमानत्वात् । स्कंधस्योपक्रमे प्रारंभे । विश्वनाथः वस्तुतस्तु–तमोगुण एव हंता सत्त्वगुण एव पालको रजोगुण एव स्रष्टा तेष्वौदासिन्येन त्वत्प्रवेशादेव त्वं हंतेत्यादि व्यपदिश्यते ॥ ३० ॥ अत्राक्षिपति–नन्विति । जगतो मायिकत्वेऽपि मायाया मच्छक्तित्वाज्जगतो वैषम्ये ममापि वैषम्यं किन्न स्यादित्यत आह–त्वं वा इति । या बुद्धिः सा मा मायाऽविद्या जीवस्याविद्याकल्पितैवेत्यर्थः । अपार्था सा तु मिथ्या भूतैवेत्यर्थः । अत्र मेति पृथक्पदं येति पृथक् ' मा लक्ष्मीमाययोरपि ' इत्यभिधानात् । उक्तमर्थं विशदयति–अयमर्थ इति । भूतसूक्ष्मं गंधः । तत्र दृष्टांते । परमर्षेः साक्षान्नारायणावतारस्यर्षेः श्रीव्यासदेवस्येत्यर्थः । तस्मात्कारणादनन्यत्वमभिन्नत्वं कार्यस्य कुतः आरंभणशब्दादिभ्यः आरंभणशब्दो वाचारंभणमिति श्रुतिरादिपदेनैतदात्म्यमिदं सर्वमित्यादयस्तेभ्य इति सूत्रार्थः । तथा च पार्थिवपदार्थानां काष्ठपाषाणादीनां वैषम्येऽपि तत्परमकारणस्य गंधस्य

न्यस्येदमात्मनि जगद्विलयांबुमध्ये शेषे त्मना निजसुखानुभवो निरीहः ॥ योगेन मीलितदृगात्मनिपीतनिद्रस्तुर्ये स्थितो न तु तमो न गुणांश्च युंक्षे ॥ ३२ ॥ तस्यैव ते वपुरिदं निजकालशक्त्या संचोदितप्रकृतिधर्मण आत्मगूढम् ॥ अंभस्यनंतशयनाद्विरमत्समाधेर्नाभेरभूत् स्वकणिकावटवन्महाब्जम् ॥ ३३ ॥ तत्संभवः कविरतोऽन्यदपश्यमानस्त्वां बीजमात्मनि ततं स्वबहिर्विचिंत्य ॥ नाविंददब्दशतमप्सु निमज्जमानो जातेंकुरे कथमुहोपलभेत बीजम् ॥ ३४ ॥ स त्वात्मयोनिरतिविस्मित आस्थितोऽब्जं कालेन तीव्रतपसा परिशुद्धभावः ॥ त्वामात्मनीश भुवि गंधमिवातिसूक्ष्मं भूतेंद्रियाशयमये विततं ददर्श ॥ ३५ ॥ एवं सहस्रवदनांघ्रिशिरःकरोरुनासास्यकर्णनयनाभरणायुधाढ्यम् ॥ मायामयं सदुपलक्षितसन्निवेशं दृष्ट्वा महापुरुषमाप मुदं विरिंचः ॥ ३६ ॥

तत्र तावदंते पृथगवस्थानं दर्शयति । न्यस्येदमिति । इदं जगदात्मनैवात्मनि निक्षिप्य स्वसुखमेवानुभवन्निष्क्रियः सन्प्रलयोदकमध्ये शयनं करोषि । तर्हि किं जीवस्येव ममापि तमोवृत्तिरूपा निद्राऽस्ति न हि । न हि योग एव तु बहिर्वृत्त्यभावसाम्यान्निद्रोच्यत इत्याह । योगेन मीलिते दृशौ येन । आत्मना स्वरूपप्रकाशेन निपीता निद्रा येन । यतस्तुर्येऽवस्थात्रयातीते स्वरूपे स्थितस्त्वं न तु सुप्त इवात्मना तमो युंक्षे योजयसि न पश्यसि न जाग्रत्स्वप्नयोरिव गुणान्विषयांश्चेत्यर्थः ॥ ३२ ॥ इदानीं कारणत्वेनादावपि पृथगवस्थानं दर्शयन्मध्यतश्च त्वमेवेत्येतत्प्रपंचयति चतुर्भिः । यस्त्वमंभसि शेषे तस्यैव ते इदं जगद्वपुः स्वरूपं नान्यस्य यतस्त्वं मध्यतोऽपि तस्य कथंभूतस्य निजया कालशक्त्या संचोदिताः प्रकृतेर्धर्माः सत्त्वादयो येन । स्वरूपत्वे हेतुः । अनंतशयनाच्छेषपर्यंकाद्विरमन्समाधिर्यस्य तस्य तव नाभेः सकाशात् । एकार्णवोदके महाब्जं लोकपद्ममभूत् । कथंभूतम् । आत्मनि त्वय्येव गूढं सत् । स्वकणिकातः सूक्ष्माद्वटबीजान्महावट इव ॥ ३३ ॥ तदेवं कारणत्वेनानुगतः सन्मध्यतश्च त्वमेव वर्तस इत्युक्तमेतदेव शुद्धसत्त्वस्य ब्रह्मणोऽनुभवेन स्फुटयितुं तस्य प्राक्तनीमवस्थामाह तस्मिन्नब्जे संभवो यस्य सः कविर्ब्रह्मा । अतः पद्मादन्यदपश्यन् बीजमुपादानकारणभूतं त्वां स्वस्मिन्व्याप्तं संतमपि नाविंदत् । युक्तं चैतत् । उ ह अहो अंकुरे जाते सति बीजं तदनुगतं कारणं पृथक्कथं नाम पुमान्पश्येत् ॥ ३४ ॥ भवदुपासनया तु स्वस्मिन्नेव दृष्टवानित्याह । स त्विति । परावृत्त्याब्जमास्थितः सन् । तीव्रेण तपसा ध्यानेन । अनेन । सन्मात्ररूपेणोपादानतया दर्शनमुक्तम् ॥ ३५ ॥ ईश्वरत्वेन च दृष्ट्वा

न वैषम्यं तथैव जगतो वैषम्येऽपि न भगवत इति ॥ ३१ ॥ तत्र तावदाद्यंतमध्यपृथगवस्थानेषु विगतलयान्यनश्वराण्यंबूनि यस्य तस्य कारणार्णवस्य मध्ये तुरीये स्वरूपे स्थितस्तन्मात्रत्वेनात्मन्युररीकृतस्फूर्तिरित्यर्थः । सुप्ते सुषुप्ते । इत्यर्थ इति । सुषुप्ताद्यभिमानिनां कारणादीनामनुभवितॄणां तुरीये लयादेवेति भावः । “ मंत्रेष्वाड्याद्रेरात्मनः ” इत्यालोपः ॥ ३२ ॥ स्या भवेरित्यर्थः ॥ ३३ ॥ अंकुरे जाते तत्र स्वांशेन वर्त्तमानमपि तत्रांकुराधिरणे कथमुपलभेत किन्तु तत्तलक्षणं एवोपलभेतेत्यर्थः । कमलसूरणादीनामंकुरेषूत्पद्योत्पद्य नष्टेष्वपि बीजनाशादृष्टेः तत्तलं तु तदानीं ब्रह्मणो गम्यमेवासीदिति भावः ॥ ३४ ॥ हे ईशेति । सर्वनियंतुस्तव कृपयैव सर्वाभीष्टसिद्धिरिति भावः । भुवि कार्यभूतायां कारणं गंधमिव ॥ ३५ ॥ महापुरुषं चिदानंदविग्रहम् । यतो मायामयम् “ स्वरूपभूतया नित्यशक्त्या मायाख्यया युतम् । अतो मायामयं विष्णुं प्रव

तस्मै भवान्हयशिरस्तनुवं च बिभ्रद्वेदद्रुहावतिबलौ मधुकैटभाख्यौ ॥ हत्वाऽनयच्छ्रुतिगणांस्तु रजस्तमश्च सत्त्वं तव प्रियतमां तनुमामनंति ॥३७॥
इत्थं नृतिर्यगृषिदेवझषावतारैर्लोकान् विभावयसि हंसि जगत्प्रतीपान् ॥ धर्मं महापुरुष पासि युगानुवृत्तं छन्नः कलौ यदभवस्त्रियुगोऽथ स त्वम् ॥३८॥
नैतन्मनस्तव कथासु विकुंठनाथ संप्रीयते दुरितदुष्टमसाधु तीव्रम् ॥ कामातुरं हर्षशोकभयैषणार्तं तस्मिन्कथं तव गतिं विमृशामि दीनः ॥ ३९ ॥

कृतार्थोऽभवदित्याह । एवमनेन प्रकारेण सहस्रमपरिमितानि यानि वदनादीनि तैराढ्यं समृद्धम् । मायामयं मायाप्रधानम् । सता प्रपंचेनोपलक्षितः सान्निवेशः पादादिरचना यस्य ॥ ३६ ॥ तदा च भवांस्तस्यानुग्रहं कृतवानित्याह । तस्मा इति । हयग्रीवमूर्तिं बिभ्रत्सन् । रजस्तमोरूपौ मधुकैटभाख्यौ हत्वा तस्मै श्रुतिगणान्समर्पितवान् । तत्र हेतुः । सत्त्वमिति ॥ ३७ ॥ एकस्त्वमेवेत्यादिभिरष्टभिः श्लोकैर्यदुक्तं पक्षपातेन रक्षणं तद्विपक्षवधश्च सत्त्वोपाधिको न तु स्वत इति तदुपसंहरति । इत्थमिति । विभावयसि पालयसि हंसि घातयसि कलौ तु तन्न करोषि यतस्तदा त्वं छन्नोऽभवः । अतस्त्रिष्वपि युगेष्वाविर्भावात्स एवंभूतस्त्वं त्रियुग इति प्रसिद्धः ॥ ३८ ॥ तदेवं भगवतस्तत्त्वं निरूप्य स्वस्य च तद्विचारायोग्यतां निवेदयन्प्रार्थयते । नैतदिति त्रिभिः । असाधु बहिर्मुखम् । तीव्रं दुर्धरम् । हर्षशोकभयैरेषणात्रयेण चार्तं दुःखितमपि

दंति मनीषिणः ॥" इति श्रुतेः । यद्वा—मयाया जीवस्याविद्याया आमयं रोगमिव विनाशकं सन्समुचितत्वेनोत्तमः उपाधिक्येन लक्षितः सामुद्रिकलक्षणांकितः सन्निवेशो नयनग्रीवादिविन्यासो यस्य तम् । यद्वा—कार्यकारण योरैक्यात्सता प्रपंचेन पातालादिना सन्निवेशो यस्य तं वैराजमिति ॥ ३६ ॥ तदा सृष्टिकाले तस्य ब्रह्मणः रजस्तमश्चेति मूर्त्तिमंतौ रजोगुणतमोगुणावेव तावित्यर्थः । तत्र तयोर्हनने हेतुः—सत्वमिति । यद्यपि गुण मात्र एवोदासीनस्य हरेः सत्त्वगुणोऽपि न प्रियस्तथापि तत्स्वरूपभूते शुद्धसत्त्वे सत्त्वगुणस्य प्रातिकूल्याभावदर्शनादेव प्रियतमत्वमुत्प्रेक्षितं न तु वस्तुतः प्रियतमत्वंमपि किन्तु सात्त्विकलोकपक्षपातित्वमेव तव तादृशोत्प्रे क्षायां हेतुः अतः शिष्टपालनार्थमेव तव दुष्टनिग्रहो यत्तत्खलु गुणानामेव स्वभावो न तु वस्तुतस्त्वयि वैषम्यमिति भावः ॥ ३७ ॥ यथा विरिञ्चस्य कृते हयग्रीवावतारस्तथैवान्येषामपि भक्तानां कृतेऽन्येऽवतारा इत्याह— इत्थमिति । युगेयुगेऽनुरूपं वृत्तं चरित्रं यस्य स तथा । द्वितीयांतपाठे तु धर्मविशेषणम् । छन्नोऽन्यदीयरूपभावाभ्यां बहिराच्छन्नः सत्यादियुगत्रये स्वस्य प्रख्यापनात्कलौ प्रायस्तदभावात्त्रियुग एवेति भावः। कलियुगस्याप्या द्यंतयोरवताराणां स्वरूपेण सत्त्वेपि मध्ये तु कुत्रचिदाविश्यैव यथाकथंचिद्धर्मपालनात्साक्षात्स्वरूपेणानाविर्भावात्त्रियुगत्वमुपचर्यते एव । सार्वकालिकस्य त्रियुगत्वासंभवात् । "सत्याद्ये त्रियुगे विष्णुः साक्षाद्रूपेण जायते । गोवेदविप्रसाधूनां रक्षणाय कलौ तु सः॥स्वावेशमेव कुरुते साक्षाद्रूपं पिधाय च। द्विजातिष्वेव नान्यत्र त्रियुगत्वमतो हरेः॥" । "शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते । यतस्ततः कथं विष्णोरवतारो द्विजेतरे ॥" इति वारतंतव्युक्तेः ' यो ब्रह्मक्षत्त्रमाविश्य बिभर्त्तीदं स्वतेजसा' इति पृथूपाख्यानोक्तेश्च श्रीनंदराजस्य वैश्यत्वेऽपि वस्तुतो यादवत्वेन क्षत्त्रियत्वमेवेति ' वयं गोवृत्तयोऽनिशम् ' इति श्रीकृष्णोक्तिर्हि वैश्यवृत्त्यभिप्रायेणैवेति श्रीदशमे श्रीनंदराजस्य यादवत्वं वर्णयिष्याम इत्यलम् । अत एवाह—हे महापुरुषेति । महांतो वेदाधिकारिणश्च ते पुरुषा महापुरुषा ब्राह्मणादयस्त्रयो वर्णास्ते विद्यंते धार्यविग्रहत्वेन यस्येति महापुरुषस्तत्संबुद्धौ तथा मत्वर्थीयोत्राच् । ' महान्तो वेदधारिणः ' इत्यादिपुराणात् । एतेन ये वैष्णवाभासादयः शूद्रादिष्वपि हर्य्यावेशावतारमामनंति ते निरस्ताः । किं च कलौ प्रच्छन्न एव हरिरित्यत्र प्रमाणवचनमप्यर्थान्तराच्छन्नतयैव वक्ष्यते " नानातंत्रवि धानेन कलावपि तथा शृणु । कृष्णवर्णं त्विषा कृष्णं सांगोपांगास्त्रपार्षदम् ॥ यज्ञैः संकीर्त्तनप्रायैर्यजंति हि सुमेधसः ॥ " इति साक्षाद्दर्शनाभाव एव संकीर्त्तनं भवतीति भावः ॥ ३८ ॥ तदेवं मुहुरवतीर्य त्वं स्वीय

जिह्वैकतोऽच्युत विकर्षति माऽवितृप्ता शिश्नोऽन्यतस्त्वगुदरं श्रवणं कुतश्चित् ॥ घ्राणोऽन्यतश्चपलदृक् क्व च कर्मशक्तिर्बह्व्यः सपत्न्य इव गेहपतिं लुनंति ॥ ४० ॥ एवं स्वकर्मपतितं भववैतरण्यामन्योन्यजन्ममरणाशनभीतभीतम् ॥ पश्यञ्जनं स्वपरविग्रहवैरमैत्रं हंतेति पारचर पीपृहि मूढमद्य ॥ ४१ ॥ को न्वत्र तेऽखिलगुरो भगवन्प्रयास उत्तारणेऽस्य भवसंभवलोपहेतोः ॥ मूढेषु वै महदनुग्रह आर्तबंधो किं तेन ते प्रियजनाननुसेवतां नः ॥ ४२ ॥

त्वत्कथासु न संप्रीयते । तस्मिन्नेवंभूते मनसि सति कथं तव तत्त्वं विचारयामि ॥३९॥ किं च जिह्वा अवितृप्ता सती भो अच्युत मा मां यतो मधुरादिरसस्तत आकर्षति उदरं तु क्षुधासंतप्तं सत्सद्य एव यत्किंचिदाहारमात्रं प्रति । चपला दृक् चक्षुः कर्मशक्तिः कर्मेंद्रियाणि । लुनंति त्रोटयंति ॥ ४० ॥ न केवलमहमेक एवैवं कष्टां दशामापन्नः किं तु महाजनोऽप्येवमेव क्लिश्यत्यतः सर्वं जनं पालयेति प्रार्थयते । एवमिति । भवः संसार एव वैतरणी यमद्वारनदी तस्याम् । अन्योऽन्यतो यानि जन्मादीनि तेभ्योऽतिभीतं स्वेषां परेषां च विग्रहेषु यथायथं वैरं मैत्रं च यस्य एवं मूढं जनं पश्यंस्त्वम् । हे पारचर तस्याः पारे स्थित नित्यमुक्त हंतेति अहो कष्टमित्येवमनुकंप्याद्य पीपृहि वैतरणीमुत्तार्य पालय ॥ ४१ ॥ एकेन मया कथं सर्वो जनस्तारणीय इति चेत्तत्राह । को न्विति । को नु ते अत्र सर्वजनोत्तारणप्रयासो न कोऽपि । कुतः अस्य विश्वस्य भवसंभवलोपानामुत्पत्तिस्थितिसंहाराणां हेतोः ततोऽपि किमेतद्दुष्करमिति भावः । उचितं चैतदित्याह । मूढेष्विति । त्वां च त्वदीयांश्च तारयिष्यामीमं दुराग्रहं मा कृथा इति चेत्तत्राह । तव ये प्रियजना भक्तास्ताननु सेवमानानां नोऽस्माकं तेनोत्तारणेन किम् । "कोऽतिप्रयासोऽसुरबालका हरेः कोऽन्वत्र तेऽखिलगुरो भगवन्प्र

रूपगुणलीलामृतं वर्षसि तदप्यस्माकं पापिष्ठं मनस्तत्र न प्रीणाति दुर्विषयगर्त एव मुहुः पतति किं कुर्म इत्याह–नेति त्रिभिः । ननु तव रूपगुणादीनामतिमाध्वीष्वपि कथासु किमिति न प्रीयते तत्राह–दुरितदुष्टम् । यथा पित्तदुष्टा रसना सितास्विति भावः । एषणात्रयेण पुत्रवित्तलोकैषणात्रयेण । यद्यपि महाभागवतप्रह्लादस्य मनो न प्राकृतमेतादृशम् ' त्वद्वीर्यगायनरसामृतमग्नचित्तः ' इत्यग्रिमतदुक्तेस्तदपि प्रेम्णो विविधविचित्रतरंगत्वेनातिदैन्यादेव प्रेमिलोकस्यैव मुक्तिर्न विरुध्यत इति । हे विकुंठनाथेति । विशेषेण कुंठा विषयेष्वाकुला विकुंठा मादृशास्तेषां नाथो रक्षकस्त्वमेवासीति भावः ॥ ३९ ॥ अन्यदाह–किञ्चेति । मनसो दुष्टत्वे.पि मत्कीर्त्तनादिना जनः कृतार्थी भवतीति चेत्तत्राह–जिह्वा वागिंद्रियं रसनेंद्रियञ्च । भो अच्युतेति। केवलं त्वमेव लोके इंद्रियाणि न च्योतसि विषयरसेनार्द्रीं करोषि वयं तु सर्वे एव च्योताम इति भावः। ग्राम्यकटुमिथ्यादिप्रलापं प्रति मधुरादिरसं प्रति चेति भावः । अन्यतस्ततोऽप्यन्यत्र कामिनीषु धर्मधनोपार्जनादावन्यताडनादौ वा कर्मशक्तिरित्येकवचनं बह्वर्थे कर्मशक्त्य इत्यर्थः । कुतश्चित्प्रियशब्दश्रवणं परनिंदादिश्रवणं च प्रति श्रोत्रमाकर्षति । घ्राणो घ्राणेंद्रियमन्यतः केतक्यादिगंधं प्रति । अतस्त्वत्कीर्त्तनादाववकाशमेव न प्राप्नोमीति भावः ॥ ४० ॥ एवमिंद्रियपरत्वेन क्लिश्यमानम् । पारचरेति । संसारवैतरणीपाररचितक्रीडस्त्वमेवासीति हेतोरेतं जनमपि तारयेति भावः । " यस्तस्य पारेभिविराजते प्रभुः " इति गजेंद्रोक्तेः । " आदित्यवर्णं तमसः परस्तात् " इति श्रुतेश्च । संसारनदीपरतटं विचार एव तस्मिन्सत्येव भगवत्प्रकाशो जायत इति तत्त्वम् ॥ ४१ ॥ इति भाव इति । न हि विश्वोत्पत्त्यादिकर्तुरीशस्य तवैतत्सर्वजनतारणं दुष्करमित्याशयः । एतन्मूढजनतारणं तव योग्यमेवेत्याह–मूढेष्विति । हे. आर्त्तबंधो इति । संसारतापार्त्तिशमकस्त्वमेवासि न त्वन्य इति । अखिलगुरे

नैवोद्विजे पर दुरत्ययवैतरण्यास्त्वद्वीर्यगायनमहाऽमृतमग्नचित्तः ॥ शोचे ततो विमुखचेतस इंद्रियार्थमायासुखाय भरमुद्वहतो विमूढान् ॥ ४३ ॥ प्रायेण देवमुनयः स्वविमुक्तिकामा मौनं चरंति विजनेन परार्थनिष्ठाः ॥ नैतान्विहाय कृपणान्विमुमुक्ष एको नान्यं त्वदस्य शरणं भ्रमतोऽनुपश्ये ॥४४॥ यन्मैथुनादिगृहमेधिसुखं हि तुच्छं कंडूयनेन करयोरिव दुःखदुःखम् ॥ तृप्यंति नेह कृपणा बहुदुःखभाजः कंडूतिवन्मनसिजं विषहेत धीरः ॥ ४५ ॥ मौनव्रतश्रुततपोऽध्ययनस्वधर्मव्याख्यारहोजपसमाधय आपवर्ग्याः ॥ प्रायः परं पुरुष ते त्वजितेंद्रियाणां वार्ता भवंत्युत न वाऽत्र तु दांभिकानाम् ॥ ४६ ॥ रूपे इमे सदसती तव वेदसृष्टे बीजांकुराविव न चान्यदरूपकस्य ॥ युक्ताः समक्षमुभयत्र विचिन्वते त्वां योगेन वह्निमिव दारुषु नान्यतः स्यात् ॥ ४७ ॥

यासः । प्रह्लाद इत्थमुपमंत्र्य मिथो नराणामीशेन सख्यमकरोदपनीय मायाम्" ॥ ४२ ॥ वत्स प्रह्लाद त्वां तावत्तारयिष्यामि तावतैव कृतार्थः स्याः किमनेन निर्बंधेनेत्यत आह । नैवेति । हे पर सर्वोत्तम त्वद्वीर्यगायनमेव महामृतं तस्मिन्मग्नं चित्तं यस्य सोऽहं भववैतरण्या नैवोद्विजे किं तु विमूढान् शोचामि । तानेवाह । ततो महामृतादि मुखं चेतो येषाम् । प्रत्युतेंद्रियार्थनिमित्तं यन्मायासुखं तदर्थं भरं कुटुम्बादिभारमुद्वहतः ॥ ४३ ॥ त्वं तावन्मुक्तिं गृहाण तांस्तु तत्त्वज्ञा मुनय उपदेक्ष्यंतीति चेत्तत्राह । प्रायेणेति । न विमुमुक्षे विमुक्तिं नेच्छामि । तर्ह्यन्यं कमपि प्रार्थय मामेव किमिति निर्बध्नासीति चेदत आह । त्वत्तोऽन्यमस्य जनस्य शरणं न पश्यामि ॥ ४४ ॥ नन्वेते स्त्रीसंभोगादिना सुखिन एव न कृपणास्तत्राह । यदिति । करयोः कंडूयनेन संघर्षणेनेव दुःखमनु दुःखं यस्मिन् तर्हि दुःखत्वादेव ततो निर्विद्य मुच्येरंस्तत्राह । कृपणाः कामुका बहुदुःखभाजोऽपीह गृहमेधिसुखे न तृप्यंत्यलमिति न मन्यंते कंडूतिवत्कामस्य दुःसहत्वात् । ननु केचित्कंडूतिमपि सहंते कामं चेत्यत्राह । त्वत्प्रसादात्तु कश्चिद्धीर एव मनसिजं कामं विषहेत न तु सर्वे । अत्रापि कंडूतिवदिति दृष्टांतः ॥ ४५ ॥ ननु मौनादिभिर्मोक्षसाधनैः सुलभैव तेषामपि मुक्तिस्तत्राह । मौनेति । हे पुरुष अंतर्यामिन् ये मौनादयो दश आपवर्ग्या अपवर्गहेतवः प्रसिद्धाः । रहो विविक्तवासः । ते तु प्रायशोऽजितेंद्रियाणामिंद्रियभोगाय अर्थार्थं विक्रीणतां वार्ताः जीवनोपाया भवंति । दांभिकानां तु वार्ता अपि भवंति वा न वा । दंभस्यानियतफलत्वात्॥४६॥त्वज्ज्ञानं भक्तिं विना सकामैर्मौनादिभिर्न भवत्येवेत्याह।रूपे इति त्रिभिः। बीजांकुराविव

इति । यथैक एव परमार्थोपदेष्टा गुरुः परः परार्द्धानपि शिष्यांस्तारयितुं समर्थस्तथा त्वमप्यखिलांस्तारयितुं समर्थ इति भावः । नन्वेतावत्सामर्थ्यं मे नास्तीति चेत्तत्राह—हे भगवन्निति । षडिधैश्वर्यसंपन्नस्य ते सर्वथा सामर्थ्यमस्तीति भावः । नोऽस्माकं तु तव भक्तसेवैव तारयिष्यति तत्र तव परिश्रमं न कारयिष्याम इति भावः । उपमंत्र्य विचार्य ॥ ४२ ॥ हे परेति । न स्वीयतारणेन सर्वोत्कर्षप्राप्तिर्भवतीति भावः ॥ ४३ ॥ हे देवेति । सर्वतो मोदमानस्त्वां विना न कोऽप्यस्ति सर्वेषां स्वकार्यासक्तत्वादिति भावः ॥ ४४ ॥ अत्राक्षिपति—नन्विति । कृपणा दीनाः । ततः स्त्रीसंगादेः । पुनराक्षिपति—नन्विति। अत्रापि कामसहनेऽपि ॥ ४५ ॥ पुनरप्याक्षिपति—नन्विति । हे पुरुषेति । अंतर्यामिणे किं विज्ञापयामीति भावः । अर्थार्थं धनावाप्तये विक्रीणतां व्रतादिविक्रयं कुर्वताम् ॥ ४६ ॥ स्वस्मिन्समवेतं समवायसंबंधेन स्थितं गौरत्वादिकं

त्वं वायुरग्निरवनिर्वियदंबुमात्राः प्राणेंद्रियाणि हृदयं चिदनुग्रहश्च ॥ सर्वं त्वमेव सगुणो विगुणश्च भूमन् नान्य त्वदस्त्यपि मनोवचसा निरुक्तम् ॥ ४८ ॥ नैते गुणा न गुणिनो महदादयो ये सर्वे मनःप्रभृतयः सह देवमर्त्याः ॥ आद्यंतवंत उरुगाय विदंति हि त्वामेवं विमृश्य सुधियो विरमंति शब्दात् ॥ ४९ ॥ तत्तेर्हत्तम नमःस्तुतिकर्मपूजाः कर्मस्मृतिश्चरणयोः श्रवणं कथायाम् ॥ संसेवया त्वयि विनेति षडंगया किं भक्तिं जनः परमहंसगतौ लभेत ॥ ५० ॥

प्रवाहापन्ने इमे सदसती कार्यकारणे एव ते रूपे उपलक्षणभूते वेदेन सृष्टे प्रकाशिते । न चान्यत् स्वसमवेतं गौरत्वादिकमिव देवदत्तादेः । कुतः । अरूपकस्य प्राकृतरूपादिशून्यस्य । अतो युक्ताः संयता एव भक्तियोगेन प्रत्यक्षं त्वामुभयत्र कार्ये कारणे चानुगतं पश्यंति मथनेन दारुषु वह्निमिव । नान्यतः स्यात्त्वज्ज्ञानमिति शेषः । यद्वा ज्ञानप्रकारमेवाह । एतदुभयमन्यतः प्रधानपरमाण्वादेर्न स्यात् । "स ऐक्षत" इत्यादिश्रुतेः । अतस्त्वमेव कारणत्वात्सर्वत्रानुस्यूत इति ॥ ४७ ॥ तदेवाह । त्वं वायुरिति । हृदयं मनः । चिच्चित्तम् । अनुग्रहोऽहंकारो देवतावर्गो वा । सगुणः स्थूलः । विगुणः सूक्ष्मः । मनश्च वचश्च मनोवचः तेन निरुक्तं प्रकाशितम् । किमपि त्वत्तोऽन्यन्नास्ति ॥ ४८ ॥ अभक्तास्तु स्वस्मिन्ननुगतमपि त्वां न जानंतीत्याह । नैत इति । एते गुणाद्यभिमानिनो देवाः आद्यंतवंतो जडोपाधित्वादनाद्यंतं निरुपाधिं त्वां न विदंति । हि यस्मात्सुधियो विद्वांसः एवं विचार्य शब्दादध्ययनादिव्यापारादुपरमंति । त्वामेव समाधिनोपासत इत्यर्थः। तथा च श्रुतिः "किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे" इति । "नानुध्यायेद्बहूञ्छब्दान्वाचो विग्लापनं हि तद्" इति । स्मृतिश्च "यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति । तदा गंताऽसि निर्वेदं श्रोतव्यस्य श्रुतस्य च" इत्यादिः ॥ ४९ ॥ उपसंहरति । तदिति । हे अर्हत्तम नमःस्तुतिकर्मपूजाः प्रणिपातस्तुतिसर्वकर्मार्पणानि कर्म च परिचर्या चरणयोः स्मृतिश्च कथायां श्रवणं चेत्येवं षडं

यथा देवदत्तादे रूपं भवति तथा भगवतस्तवाप्येतद्गौरत्वादिकं रूपं नास्तीत्यर्थः । आदिना श्यामत्वादिग्रहः । द्वितीयादिना यज्ञदत्तादिग्रहः । प्राकृतरूपादिशून्यस्य प्रकृतिकार्यपार्थिवनीलपीतादिरूपरहितस्य । यत इमे एव तव रूपे अतो हेतोः । नान्यतो भक्तेरन्यस्मान्नेत्यर्थः । अध्याहारे गौरवं मत्वाह—यद्वेति । उभयं कार्यकारणात्मकं जगत् । सांख्या हि प्रधानतः सृष्ट्युत्पत्तिं नैयायिकाश्च परमाणुभ्यो मन्यंते । आदिना मीमांसकादीनां कर्मवादादिग्रहः । परमेश्वराज्जगदुत्पत्तौ प्रमाणमाह—स ऐक्षतेति । यतस्त्वमेव जगत्कर्ताऽतो हेतोः । कुंडलादौ :स्वर्णवत्त्वमेव सर्वत्रास्तीति भावः ॥ ४७ ॥ तदेव सर्वस्वरूपत्वमेव । अवनिर्भूमिः । मात्रास्तन्मात्राः । हे भूमन्निति । सर्वस्वरूपत्वादेव तव भूमत्वमस्तीति भावः ॥ ४८ ॥ त्वज्ज्ञानं त्वद्भक्त्यैव भवेन्न तु शास्त्राध्ययनबुद्धिकौशलादिभिरित्यभिप्रेत्याह—स्वामी अभक्तास्त्वित्यादि । जडोपाधित्वात् प्रकृतिकार्यत्वात् । यद्येते त्वां न विंदंति तर्ह्येतैरेव मनोबुद्ध्यादिभिः शास्त्राध्ययनाध्यापनादिभिर्विचार्य जीवाः कथं ज्ञास्यंतीति विमृश्य । इत्यर्थ इति । तत्र क्लेशं ज्ञात्वा प्रवृत्तिरूपत्वान्निवृत्ता भवंतीति भावः । अत्र प्रमाणमाह—तथाचेति । कोऽर्थो येषां ते किमर्थाः । विग्लापनं श्रमार्त्तीकरणम् । स्मृतिरत्र श्रीगीता । ते बुद्धिर्यदा मोहकलिलमज्ञानजन्यमालिन्यमहमिदं ममेदमित्याद्यज्ञानविलसितमतिगहनमतितरिष्यति रजस्तमोमलमपहाय शुद्धभावमापत्स्यत इति तदा श्रोतव्यस्य श्रुतस्य च कर्मफलस्य वैतृष्ण्यं गंतासि प्राप्तासीत्यर्थः । हे उरुगायेति । सर्ववेदशास्त्रेतिहासपुराणादिभिर्यो गीयते तमहं कथं स्तौमीति भावः ॥ ४९ ॥ स्तुतिं समापयति यस्मादध्ययनादिभिस्त्वज्ज्ञानं न भवेत्तस्मात्त्वज्ज्ञानार्थमाग्रहं परित्यज्य सर्वपुरुषार्थसारस्य त्वत्प्रेम्णः साधनार्थमेव यतेतेत्याह—हे अर्हत्तमेति । पूज्यतमस्य

नारद उवाच ॥ एतावद्वर्णितगुणो भक्त्या भक्तेन निर्गुणः ॥ प्रह्लादं प्रणतं प्रीतो यतमन्युरभाषत ॥ ५१ ॥ श्रीभगवानुवाच ॥ प्रह्लादं भद्र भद्रं ते प्रीतोहं तेऽसुरोत्तम ॥ वरं वृणीष्वाभिमतं कामपूरोऽस्म्यहं नृणाम् ॥ ५२ ॥ मामप्रीणत आयुष्मन् दर्शनं दुर्लभं हि मे ॥ दृष्ट्वा मां न पुनर्जंतुरात्मानं तप्तुमर्हति ॥ ५३ ॥ प्रीणंति ह्यथ मां धीराः सर्वभावेन साधवः ॥ श्रेयस्कामा महाभागाः सर्वासामाशिषां पतिम् ॥ ५४ ॥ एवं प्रलोभ्यमानोऽपि वरैर्लोकप्रलोभनैः ॥ एकांतित्वाद्भगवति नैच्छत्तानसुरोत्तमः ॥ ५५ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे प्रह्लादचरिते भगवत्स्तवो नाम नवमोऽध्यायः ॥ ९ ॥ नारद उवाच ॥ भक्तियोगस्य तत् सर्वमंतरायतयाऽर्भकः ॥ मन्यमानो हृषीकेशं स्मयमान उवाच ह ॥ १ ॥ प्रह्लाद उवाच ॥ मा मां प्रलोभयोत्पत्त्या सक्तं कामेषु तैर्वरैः ॥ तत्संगभीतो निर्विण्णो मुमुक्षुस्त्वामुपाश्रितः ॥ २ ॥

गया सम्यक्सेवया विना परमहंसानां गतौ प्राप्ये त्वयि जनः कथं भक्तिं लभेत । यस्मादेवं भक्तिं विना न मोक्षः । न च भक्तिः संसेवया विना अतः प्राक् प्रार्थितं त्वद्दास्ययोगमेव देहीति प्रकरणार्थः ॥ ५० ॥ एतावंतो वर्णिताः गुणाः यस्य । यतमन्युरुपसंहृतकोपः ॥ ५१ ॥ कामान्पूरयतीति तथा । यद्वा । पुरुषार्थप्रवाहोस्मीत्यर्थः ॥ ५२ ॥ अप्रीणतः अप्रीणयतः । तप्तुमपूर्णकामत्वेन शोचितुम् ॥ ५३ ॥ प्रीणंति तोषयंति ॥ ५४ ॥ एकांतित्वान्निरुपाधिकत्वात् ॥ ५५ ॥ इति श्रीमद्भागवते सप्तमस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे त्वनुगृह्यामुं भक्तमंतर्हिते हरौ ॥ प्रसंगाद्धरिणा रुद्रे कृतोऽनुग्रह ईर्यते ॥ १ ॥ तत्सर्वं वरजातम् ॥ १ ॥ उत्पत्त्या स्वभावे

पूजारूपा भक्तिरेव सर्वथा कार्येति भावः । नमो नमस्कारश्च स्तुतिकर्मस्तवकरणञ्च पूजाऽर्चनं च ताः । कर्मपरिचर्या च चरणयोः स्मृतिश्च कथायां श्रवणं चेत्थं षडंगवत्या साधनभक्त्या भक्तिं प्रेमाणं नैव लभेतेत्यर्थः । भक्तिमिश्रज्ञानेन मुक्तिमेव लभेतेति भावः । तस्मात्सर्वकृतार्थतामूलत्वत्प्रेमभक्तिसंपादिनीं षडंगां संसेवामेव सर्वेभ्योऽपि देहि सा दुर्लभा चेन्मुक्तिमेव दत्त्वा संसारदुःखात्तावत्सर्वांस्तारय अहं तु त्वद्भक्तसेवयैव कृतार्थीकृत एव वर्त्ते इति न काचिच्चिन्तेति भावः ॥ ५० ॥ गुणाः कारुण्यादयः । निर्गुणः प्राकृतगुणरहितः । यतमन्युः मद्भक्ताय प्रह्लादायापि द्रुह्यतीति यो दुर्वारो मन्युरभूत्स प्रह्लादस्यानंददर्शनादुपशांत इत्यर्थः ॥ ५१ ॥ हे प्रह्लादेति । प्रेम्णा नामोच्चारणमिति भावः । प्रह्लादो वक्ति भगवन्नहमसुरजातीयः कथं वरार्ह इति चेदाह—हे असुरोत्तमेति । न सुरा अपि उत्तमा यस्मात्तादृशोऽसीति भावः । कथमहमेतादृशोऽत आह—हे भद्रेति । भद्रा सर्वकल्याणसर्वसुखदात्री मद्भक्तिर्विद्यते यस्य स तथा । 'मद्भक्तियुक्तो भुवनं पुनाति' इति मदुक्तेरेव त्वं सर्वोत्तमोसीति भावः । अत्र मत्वर्थीयोच्प्रत्ययः । त इति संबंधे षष्ठी । त्वदीयानामपि भद्रं भविष्यति तव तु का कथेति भावः । अभिमतं वृणीष्वेति । मयि भृत्यवत्सले परमोदारचूडामणौ कः संकोच इति भावः । येषां कृते त्वं मां प्रार्थयसे तेषामपि नृणामहं कामपूरोऽस्मि पुरुषार्थप्रवाहरूप एव वर्त्ते किं पुनरेकां मुक्तिमेव दद इति भावः । तेन प्रह्लादबुद्धिविषयीकृतास्तात्कालिका जीवा विस्तीर्णा एव जीवनामानंत्यात्तदन्यैरेव जीवैस्तदनन्तरं ब्रह्माण्डमपूरीति ज्ञेयम् ॥ ५२ ॥ हे आयुष्मन्निति । एतत्कल्पादावेवाधिकारिपुरुषत्वेन तवाविर्भावः । पुनस्तिरोधाने सति पुनराविर्भावः पुनः सृष्ट्यंते तिरोभावश्चेतदभिप्रायेणैवोक्तं चतुर्थे " दैतेया दानवा वत्सं प्रह्लादमसुरर्षभम् । विधाय दुदुहुः क्षीरमयः पात्रे सुरासवम्" इति ॥ ५३ ॥ सर्वभावेन दास्यसख्यादिना ॥ ५४ ॥ एकांतित्वात् । "एकांतिनो यस्य न कञ्चनार्थं वाञ्छति" इति तल्लक्षणात् ॥ ५५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे नवमोऽध्यायः ॥ ९ ॥ ॥ अमुं प्रह्लादम् ( १ ) तत्सर्वं वरजातम् । स्मयमान इति । मां बालकमज्ञं प्रलोभयन्प्रभुरयं मद्बुद्धिं परीक्षते इति विचारोत्थं स्मितं कुर्वाणः ॥ १ ॥ मुमुक्षुस्तान्कामान्मोक्तुमिच्छुः ॥ २ ॥

भृत्यलक्षणजिज्ञासुर्भक्तं कामेष्वचोदयत् ॥ भवान् संसारबीजेषु हृदयग्रंथिषु प्रभो ॥ ३ ॥ नान्यथा तेऽखिलगुरोर्घटते करुणात्मनः ॥ यस्त आशिष आशास्ते न स भृत्यः स वै वणिक् ॥ ४ ॥ आशासानो न वै भृत्यः स्वामिन्याशिष आत्मनः ॥ न स्वामी भृत्यतः स्वाम्यमिच्छन् यो राति चाशिषः ॥ ५ ॥ अहं त्वकामस्त्वद्भक्तस्त्वं च स्वाम्यनपाश्रयः ॥ नान्यथेहावयोरर्थो राजसेवकयोरिव ॥ ६ ॥ यदि रासीश मे कामान् वरांस्त्वं वरदर्षभ ॥ कामानां हृद्यसंरोहं भवतस्तु वृणे वरम् ॥ ७ ॥ इंद्रियाणि मनः प्राण आत्मा धर्मो धृतिर्मतिः ॥ ह्रीः श्रीस्तेजः स्मृतिः सत्यं यस्य नश्यंति जन्मना ॥ ८ ॥ विमुंचति यदा कामान्मानवो मनसि स्थितान् ॥ तर्ह्येव पुंडरीकाक्ष भगवत्त्वाय कल्पते ॥ ९ ॥

नैवासक्तं माम् । तेषां कामानां संगाद्भीतः ॥ २ ॥ ननु किमहं भक्तं प्रलोभयामि न हि किन्तु वरं वृणीष्वेति वदतस्तवाभिप्रायोऽन्य एवेत्याह भृत्यलक्षणेति । हृदयस्य ग्रंथिवद्बंधकेषु । अन्यथाऽनर्थसाधने प्रवर्तनं न घटेत इत्यर्थः ॥ ३ ॥ कथमेवं भृत्यलक्षणज्ञानं स्यात्तत्राह । य इति ते त्वत्तः ॥ ४ ॥ ननु कामनयापि सेव्यसेवकयोः स्वामिभृत्यभावः प्रसिद्धः सत्यम् । सोपाधिकोऽसौ न तु तात्त्विक इत्याह । स्वामिन्यात्मन आशिषोऽपेक्षमाणो नैव भृत्यः । भृत्यहेतुकमात्मनः स्वाम्यमिच्छन्यो भृत्याय ददाति स च नैव स्वामी ॥ ५ ॥ आवयोस्तु तात्त्विकोऽसावित्याह । अहं त्विति । अनपाश्रयो निरभिसंधिः । अन्यथा कामाद्यभिसंधिनाऽर्थः प्रयोजनं नास्ति ॥ ६ ॥ ननु तथापि परमोदारस्य मम संतोषार्थं किमपि वृणीष्वेति चेदत आह । यदीति । कामांकुराणामसंरोहमनुत्पत्तिं भवतः सकाशात् ॥ ७ ॥ ननु कामोत्पत्तौ सत्यां को दोषस्तत्राह । इंद्रियादीनि यस्य जन्मना नश्यंति आत्मा देहः ॥ ८ ॥ कामाभावे गुणमाह । विमुंचतीति । भगवत्त्वाय त्वत्समानैश्वर्याय । तथा च

अत्राक्षिपति—नन्विति । इत्यर्थ इति । स्वभृत्यस्य सर्वोत्कृष्टां निष्ठां लोके ख्यापयसीति मया दीयमानान् वरान्कथं न गृह्णासीत्युक्ते मद्भृत्य एव लक्षणं कथयिष्यसीत्यभिप्रायस्तवावगम्यते इति भावः । प्रभो इति । सर्वज्ञस्य तव जिज्ञासा नोपपद्यत इत्यतः सर्वाञ्ज्ञापयितुमेवेति भावः । अखिलगुरोः सर्वहितोपदेष्टुस्तव ब्रह्मरुद्रादीनामिव यथेप्सितं न ददासि किं–तु हितकरमेवेति भावः । तत्र हेतुः करुणात्मनः दयालुशिरोमणेः ॥ ३ ॥ तद् ब्रूहि भृत्यलक्षणमिति चेत्स्वामिभृत्ययोरुभयोरेव लक्षणं ब्रवीमीत्याह—य इति । वाणिगिति । तुभ्यं किञ्चित्पत्रपुष्पनैवेद्यादिकं दत्त्वा हस्त्यश्वरथादिमतीं संपत्तिं ब्रह्मेंद्रादिपदं वा जिघृक्षतीति भावः ॥ ४ ॥ उक्तमेवार्थं पुष्यन्नाक्षिप्य समाधत्ते—नन्विति ॥ ५ ॥ असौ स्वामिभृत्यभावः । यद्वाऽनपाश्रयः सेवकाधीनमपकृष्टमैश्वर्यं नाश्रयस इत्यर्थः ॥ ६ ॥ पुनराक्षिपति नन्विति ॥ ७ ॥ पुनराक्षिपति । नन्विति । यस्य कामस्य इंद्रियादीनां तन्माधुर्यग्रहणमेव कुपथगामिता सैव नाशः ॥ ८ ॥ ननु यदि कामं न कामयसे तर्हि 'वद मे तव दास्ययोगम्' इति ब्रुवन्कथं मद्दास्यं कामयसे तत्राह—विमुंचतीति । मनसि स्थितान्स्थायिभावतया वर्तमानान्कामानप्राकृतांस्त्वद्दास्यसख्यादीनपि यदा विशेषेण मुंचति । भगवत्त्वाय सायुज्याय तच्च सायुज्यं मे नाभीष्टम् "किं तैर्गुणव्यतिकरादिह ये स्वसिद्धाः धर्मादयः किमगुणेन च कांक्षितेन । सारंजुषां चरणयोरुपगायता

नमो भगवते तुभ्यं पुरुषाय महात्मने ॥ हरयेऽद्भुतसिंहाय ब्रह्मणे परमात्मने ॥ १० ॥ नृसिंह उवाच ॥ नैकांतिनो मे मयि जात्विहाशिष आशासतेऽमुत्र च ये भवद्विधाः ॥ अथापि मन्वंतरमेतदत्र दैत्येश्वराणामनुभुंक्ष्व भोगान् ॥ ११ ॥ कथा मदीया जुषमाणः प्रियास्त्वमावेश्य मामात्मनि संतमेकम् ॥ सर्वेषु भूतेष्वधियज्ञमीशं यजस्व योगेन च कर्म हिन्वन् ॥ १२ ॥ भोगेन पुण्यं कुशलेन पापं कलेवरं कालजवेन हित्वा ॥ कीर्तिं विशुद्धां सुरलोकगीतां विताय मामेष्यसि मुक्तबंधः ॥ १३ ॥

श्रुतिः ।"यदा सर्वे प्रमुच्यंते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योमृतो भवत्यत्र ब्रह्म समश्नुते" इति ॥ ९ ॥ निर्दोषान्कामान्दातुमिच्छंतं प्रत्याख्यास्यन्नमस्यति । नम इति ॥१०॥ सत्यमेकांतभक्तस्त्वं तथापि मदाज्ञा करणीयेत्याह । नेति । मे एकांतिनः कदाचिदपीहामुत्र च मय्याशिषो न वांछंत्येव तदाप्येतन्मन्वंतरमात्रं भोगान्भुंक्ष्व ॥ ११ ॥ ननु तर्हि बंधः स्यादित्यत आह । कथा इति द्वाभ्याम् । सर्वेषु भूतेषु संतमेकमीशं यज्ञाधिष्ठातारं मामात्मन्यावेश्य यजस्व । तर्ह्यनेनैवापि कर्मणा बंधः स्यान्नेत्याह योगेन मय्यर्पणेन कर्म हिन्वंस्त्यजन्यजस्व ॥१२॥ किं च भोगेन सुखानुभवेन प्रारब्धं पुण्यं हित्वा मुक्तबंधः सँल्लोकानुग्रहार्थं कीर्तिं च विस्तार्य मां प्राप्स्यसि कुशलेन पुण्याचरणेन पापं हित्वेति बिभीषामात्रमन्यथा तस्य राज्येऽप्रवृत्तेः । न तु तस्य प्राचीनं पापमस्ति "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति न्यायात् "तत्सुकृतदुष्कृते विधुनुत" इति श्रुतेश्च । न चेदं प्रारब्धं पापाभिप्रायं तस्य भोगेनैव क्षयात्कुशलेन हित्वेति वचनानुपपत्तेः । न चासाववविद्वानिति वाच्यं भगवतैव कृतार्थं

नः" इति मदुक्तेरेवातो भवद्दास्यरूपमप्राकृतं काममहं वृण एव भगवत्त्वाय भगवत्समानैश्वर्यायेति स्वामिचरणाः । अत्र प्रमाणमाह—तथा चेति । अमृतो मृतिशून्यः । अत्र देहे एव ब्रह्म प्राप्नोतीत्यर्थः ॥ ९ ॥ ननु मत्सायुज्यमात्मारामगुनिभिरप्यादरणीयं किमित्यसुरबालकोऽपि भूत्वा तत्र कटाक्षयसीति भगवद्वाचा पराजितंमन्यः प्रणमति-नम इति चक्रवर्ती ॥ १० ॥ न केवलं तवैवायं स्वभावोऽपि तु सर्वेषां मद्भक्तानामिति तत्रापि त्वमधिक इत्यभिप्रायेणाह—सत्यमिति । एतन्मन्वंतरमात्रं नाधिकमतो मा क्रुध्येति भावः ॥ ११ ॥ मां विषयांधकूपे केनापराधेन क्षिपसीत्यभिप्रायेणाह—नन्विति । अत्र तीर्थः—ननु कर्दमजलस्नानानिच्छया ह्येतावंतं मया कंठशोषणमकारि तदरण्यरोदनवद् व्यर्थमभूयत त्वं तत्रैव स्नाहीत्युपदिशस्यतस्त्वदाज्ञानुलंघ्या त्वमेव जानासीति शंकारोगनिर्मूलनाय सुखसाध्यमौषधं विधास्यामीत्यभिप्रायवानाह—कथा इति ॥ १२ ॥ अन्यदाह—किंचेति । पापाधिक्यशंकया तस्य प्रह्लादस्य राज्येऽप्रवृत्तिं दृष्ट्वाह—पापं हित्वेति । बिभीषामात्रं पापस्य भयमात्रमेव प्रह्लादस्यासीत्तन्निवृत्तये भगवतोक्तं पापं पुण्येन प्रायश्चित्तादिकर्मणा । अन्यथा भयनिवृत्त्यभावे पापमपि प्रारब्धमेवास्त्विति चेत्तत्राह—न त्विति । प्रारब्धाद्यभावे प्रमाणमाह—तदधीति । तस्य ब्रह्मणोऽधिगमे उत्तराघस्याश्लेषः । पूर्वाघस्य विनाशः कुतः तद्व्यपदेशात् । तयोरश्लेषविनाशयोर्व्यपदेश उपदेशः । अश्लेषस्य तद्यथा पुष्करपलाश आपो न श्लिष्यंते एवमेव विदि पापं कर्म नश्लिष्यते यद्यपि प्रह्लादस्य सदाचारित्वेन पापाभावस्तथापि बिभीषामात्रं न तु पापनिवृत्तिरिति प्रतिपाद्यते इत्यर्थः । ननु किमर्थं भक्ताय बिभीषा भगवता कृता अन्यथा विभीषाऽभावे राज्ये प्रजापालनरूपे राजधर्मेऽप्रवृत्तेः 'स्वधर्मे निधनं श्रेयः' इति 'षष्ठांशं लभते राजा प्रजा धर्मेण पालयन्' इत्यादिशास्त्रात्प्रजापालनमेव कुशलाचरणमिह ज्ञेयं यागाद्याचरणस्य प्रागेवोक्तत्वात् । ननु संचितं तस्य पापमस्तीत्याशंकोद्धारमाह—तदधिगम इत्यन्यत्र । विनाशस्य तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयतैवं हास्य सर्वे पाप्मानः प्रदूयंत इति श्रुतिभ्यामुपदेशादित्यर्थ इति सूत्रार्थः । तत्तदा शुभा

य एतत्कीर्तयेन्मह्यं त्वया गीतमिदं नरः ॥ त्वां च मां च स्मरन्काले कर्मबंधात्प्रमुच्यते ॥ १४ ॥ प्रह्लाद उवाच ॥ वरं वरय एतत्ते वरदेशान्महेश्वर ॥ यदनिंदत्पिता मे त्वामविद्वांस्तेज ऐश्वरम् ॥१५॥ विद्धामर्षाशयः साक्षात्सर्वलोकगुरुं प्रभुम् ॥ भ्रातृहेति मृषा दृष्टिस्त्वद्भक्ते मयि चाघवान् ॥ ॥ १६ ॥ तस्मात् पिता मे पूयेत दुरंताद्दुस्तरादघात् ॥ पूतस्तेपांगसंदृष्टस्तदा कृपणवत्सल ॥ १७ ॥ श्रीभगवानुवाच ॥ त्रिःसप्तभिः पिता पूतः पितृभिः सह तेऽनघ ॥ यत्साधोऽस्य गृहे जातो भवान्वै कुलपावनः ॥ १८ ॥ यत्रयत्र च मद्भक्ताः प्रशांताः समदर्शिनः ॥ साधवः समुदाचारास्ते पूयंत्यपि कीकटाः ॥ १९ ॥

त्वस्यानंतरं वक्ष्यमाणत्वात् । अत एव योगेन कर्म हिन्वन्निंतीदमपि लोकसंग्रहार्थे कर्मणि प्रवर्तितस्यानुद्वेगमात्रायेति सर्वमनवद्यम् ॥ १३ ॥ किं च । य इति । त्वां च मां चेदं मच्चरित्रं च स्मरन्नेतत्स्तोत्रं यः कीर्तयेत्सोऽपि कर्मबंधाद्विमुच्यते कुतस्तव बंधशंकेत्यर्थः ॥ १४ ॥ ईश्वराज्ञया प्राप्तकर्माधिकारः सन्पितुर्निष्कृतिं प्रार्थयते त्रिभिः । वरं वरणीयमेतदपरं वृणे ते त्वत्तः ॥ १५ ॥ विद्धोऽमर्षेण क्रोधेनाशयो यस्य ॥ १६ ॥ तेऽपांगेन संदृष्टोऽतः पूत एव तथापि भो कृपणवत्सल कार्पण्येन प्रार्थय इत्यर्थः ॥ ॥१७॥ यद्यपि कश्यपो मरीचिर्ब्रह्मा चेति तत्पितुस्त्रय एव पूर्वजास्तथापि त्रिःसप्तभिः सहेति प्राक्कल्पगतपित्रभिप्रायेणोक्तम् । यद्यस्मात् ॥ १८ ॥ सम्यगुत्तम आचारो येषां

शुभे त्यजतीति श्रुत्यर्थः । इदं वचनं प्रारब्धाभिप्रायं न तस्य प्रारब्धस्य 'नाभुक्तं क्षीयते कर्म' इति श्रुतेर्भोगेनैव क्षयात् । यदि प्रारब्धमपि ज्ञानोत्तरं नश्येत्तदा कुशलेन हित्वेत्युक्तिर्विरुद्धा स्यादित्यर्थः । असौ प्रह्लादोऽज्ञ इति न च वाच्यं भगवतैव 'यत्रयत्र च मद्भक्ताः' इत्यादिना वक्ष्यमाणत्वात् । अत एव ज्ञानित्वादेव । अत्र विश्वनाथः—भोगहेतुकात्कर्मबंधात्तु नैवाशंकिष्ठास्तव पूर्वजन्मन्येव सर्वं कर्म नष्टमेवेत्याह—भोगेन सुखानुभवेन प्रारब्धं पुण्यं कुशलेन पापं कलेवरं पूर्वदेहं च हित्वा एषि मां संप्रति प्राप्नोषि । असि मुक्तबंध इति । अस्मिञ्जन्मनि मुक्तबंधो जीवन्मुक्त एव वर्त्तसे इत्यर्थः । एवं प्रह्लादस्यांशेन साधनसिद्धत्वं नित्यसिद्धत्वं च नारदादिवज्ज्ञेयम् ॥१३॥ तत्र कर्मबंधाभावे कैमुत्यं शृण्वित्याह—किञ्चेति । इत्यर्थ इति । तत्र तु सर्वथा स्वप्नेऽपि बंधशंका न संगच्छत इति भावः॥१४॥ पूर्वं संसारिणां नृणां मोक्षाय श्रीमच्चरणेषु प्रार्थितं संप्रति यद्येतादृशं सौभाग्यं मह्यमदास्तर्ह्येकस्य महापराधिनोऽपि निस्ताराय प्रार्थय इत्याह—वरमिति त्रिभिः । वरदानां ब्रह्मादीनामीशात् । अत एवाह—महेश्वरेति । वस्तुतो महेश्वरत्वम् 'अन्यतमो मुकुंदात् । को नाम लोके भगवत्पदार्थः' इति न्यायेन त्वय्येव पर्यवस्यतीति भावः । ऐश्वरं सर्वोत्कृष्टम् ॥ १९ ॥ भ्रातृहेति । मे भ्रातृहा विष्णुरिति हेतोर्यत्त्वामनिंददित्यन्वयः ॥ १६ ॥ तस्मादघात्तव निन्दाजन्यपापात्त्वद्भक्तविरोधजन्यपापाच्च "विष्णुद्वेषाद्द्विजद्वेषाद्वेषाच्च हरिसेविनाम् । शुद्धिर्न स्यान्महाबाहो प्रायश्चित्तशतैरपि ॥" इत्युक्तेर्दुस्तरात्तर्तुमशक्यात् । इत्यर्थ इति । यद्यपि तत्रापांगेनं दृष्टः पूत एव तथापि श्रीमुखात्प्रसादवाचं श्रोतुं कार्पण्यात्प्रार्थये इति भावः । हे कृपणवत्सलेति । कुत्सितजीवेष्वपि त्वं दयामेव कुरुष इति भावः । "कृपणस्तु कृमौ पुंसि मंदकुत्सितयोस्त्रिषु" इति मेदिनी ॥ १७ ॥ विश्वनाथः—त्रिःसप्तभिरित्यस्मिञ्जन्मन्ययं तव पिता पूत इति किं वक्तव्यं तव त्रिःसप्तजन्मसु ये त्रिःसप्तसंख्याः पितरोऽभूवंस्तेपि पूता इत्यर्थः । पितॄन्पुनासीत्येतदपि कियत् यतस्त्वं कुलपावनः। पितृमात्रादिकुलमपि पतमिति भावः । यद्वा—त्रिःसप्तभिः पितृभिः सहितोऽपि यदि स्याच्चे पिता तदापि पूतो भवेत्तस्य तु त्रय एव कश्यपमरीचिब्रह्माण इति पितरोऽभूवन् प्राक्कल्पीयानामधुना पितृत्वानुपपत्तेः जयविजययोश्चापरजन्माश्रवणाच्च ॥ १८ ॥ मद्भक्तः स्वसंगिनं देशं पुनाति किमुत पित्रादीनित्याह—यत्रेति ।

सर्वात्मना न हिंसंति भूतग्रामेषु किंचन ॥ उच्चावचेषु दैत्येंद्र मद्भावेन गतस्पृहाः ॥ २० ॥ भवंति पुरुषा लोके मद्भक्तास्त्वामनुव्रताः ॥ भवान्मे खलु भक्तानां सर्वेषां प्रतिरूपधृक् ॥ २१ ॥ कुरु त्वं प्रेतकार्याणि पितुः पूतस्य सर्वशः ॥ मदंगस्पर्शनेनांग लोकान्यास्यति सुप्रजाः ॥ २२ ॥ पित्र्यं च स्थानमातिष्ठ यथोक्तं ब्रह्मवादिभिः ॥ मय्यावेश्य मनस्तात कुरु कर्माणि मत्परः ॥ २३ ॥ श्रीनारद उवाच ॥ प्रह्लादोऽपि तथा चक्रे पितुर्यत्सांपरायिकम् ॥ यथाऽह भगवान् राजन्नभिषिक्तो द्विजोत्तमैः ॥ २४ ॥ प्रसादसुमुखं दृष्ट्वा ब्रह्मा नरहरिं हरिम् ॥ स्तुत्वा वाग्भिः पवित्राभिः प्राह देवादिभिर्वृतः ॥ २५ ॥ ब्रह्मोवाच ॥ देवदेवाखिलाध्यक्ष भूतभावन पूर्वज ॥ दिष्ट्या ते निहतः पापो लोकसंतापनोऽसुरः ॥ २६ ॥ योऽसौ लब्धवरो मत्तो न वध्यो मम सृष्टिभिः ॥ तपोयोगबलोन्नद्धः समस्तनिगमानहन् ॥ २७ ॥

ते कीकटा अपि देशास्तत्तुल्या वंशाश्च पूयंते शुद्धा भवंति ॥ १९ ॥ ननु त्वद्भक्तानामयं महिमेति न चित्रम् । अहं तु तादृशो न भवामीति चेत्तत्राह । सर्वात्मनेति द्वाभ्याम् । मद्भावेन मद्भक्त्या विगता स्पृहा येषाम् ॥ २० ॥ त्वामनुगता ये केचित्पुरुषास्तेऽप्येवंलक्षणाः संतो मद्भक्ता भवंत्यतो भवान्मे भक्तानां सर्वेषां प्रतिरूपधृगुपमानास्पदम् । श्रेष्ठः खल्वित्यर्थः ॥ २१ ॥ मदंगस्पर्शनेन सर्वशः पूतस्य ते पितुः पापशंकैव नास्ति केवलं पुत्रकृत्यानि प्रेतकार्याणि कुरु ॥ २२ ॥ ब्रह्मवादिभिर्वेदवादिभिरुक्तमनतिक्रम्य मत्परः सन्कर्माणि कुरु ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ मम सृष्टिभिर्मया सृष्टैर्भूतैः । समस्तान्निगमान्धर्मानित्यर्थः । अहन्हतवान् स त्वया हत

कीकटाः अंगवंगाद्याः । "अंगवंगकलिंगेषु सौराष्ट्रमगधेषु च । तीर्थयोगं विना गत्वा पुनः संस्कारमर्हति ॥" इत्युक्तेः ॥ १९ ॥ अत्राक्षिपति—नन्विति । त्वद्भक्तानामीदृङ्माहात्म्यं कुत इत्याशंक्य तपोवृद्धिक्षयहेतुहिंसाद्यभावादित्याह—सर्वात्मना यदपि । किञ्च न कृकलासादिकमपि "तस्मात्प्राणभृतः प्राणं न विच्छिन्द्यादपि कृकलासस्य" इति श्रुतेः । तत्र निमित्तमाह—मद्भावेनेति । 'ईश्वरो जीवकलया प्रविष्टः' इत्युक्तेः । सर्वत्र मम भावो भावना निरंतरस्मरणं तेन गतस्पृहाः नष्टविषयवांछाः । स्पृहैव हिंसाकारणं निमित्ताभावे नैमित्तिकाभावस्य प्रसिद्धत्वादिति भावः ॥ २० ॥ इत्यर्थ इति । न हि त्वादृशोऽन्योऽभूदिति भावः ॥ २१ ॥ यद्यपि तव पितुः पापशंकैव नास्ति मदंगस्पृष्टत्वेन पूतत्वात्सुप्रजस्त्वाच्च । तथापि लोकसंग्रहार्थं स्वगतप्रत्यवायपरिहारार्थं वा प्रेतकार्याणि सांपरायकृत्यानि दाहपिंडदानादीनि कुरु एतेन सांपरायविधेर्नित्यत्वं ध्वनितम् । अन्यथा स्वयं नृसिंहदेवः स्वेन हतस्य तदर्थं कथमपि नावदिष्यदिति तथा च नास्तिकानुयायिनोऽपि परास्ताः ॥ २२ ॥ यद्यपि मद्भक्तस्य तव नास्ति कर्माधिकारस्तथापि मदाज्ञयैव व्यवहाररक्षार्थं कर्माणि कुरु । मत्पर इति । अहं परः प्रमाणं यस्य स तथा "नानवाप्तमवाप्तव्यं वर्त्त एव हि कर्मणि । यदि ह्यहं न वर्त्तेयं जातु कर्मण्यतंद्रितः ॥ मम वर्त्मानुवर्त्तंते मनुष्याः पार्थ सर्वशः" इत्यादिमदुक्तेर्यथाहं कर्मणि लोकसंग्रहार्थं प्रवृत्तस्तथा त्वमपि कुर्विति भावः । किञ्च 'श्रौतं स्मार्त्तं न संत्यजेत्' 'श्रुतिस्मृती ममैवाज्ञे' इति मदुक्तेश्चापि कर्म कर्त्तव्यमेवेति तत्त्वम् ॥ २३ ॥ तथा चक्रे यद्यथा भगवानाहेत्यन्वयः । हे राजन्निति । हे भक्तिप्रकाशितेति । हरिभक्तिर्हि सर्वापद्भ्य उत्तार्थ द्योतयतीति भावः ॥ २४ ॥ पवित्राभिर्वैदिकीभिः ॥ २५ ॥ ननु त्वं सुरज्येष्ठः कथं मां स्तौषीति चेदाह—हे देवदेवेति । त्वमेव सर्वेश्वरत्वात्सर्वेभ्यो महानिति भावः । अत एवाखिलाध्यक्षोऽपि त्वमेवेत्याह अखिलानामध्यक्षोऽधिपतिरित्यर्थः । "सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिपः" इति श्रुतेः । भूतभावनोऽहं तस्यापि त्वमेव पूर्वज उत्पादकोसीति भावः । ते त्वया ॥ २६ ॥ इत्यर्थ इति । नितरां

दिष्ट्यास्य तनयः साधुर्महाभागवतोऽर्भकः ॥ त्वया विमोचितो मृत्योर्दिष्ट्या त्वां समितोऽधुना ॥ २८ ॥ एतद्वपुस्ते भगवन् ध्यायतः प्रयतात्मनः ॥ सर्वतो गोप्तृ संत्रासान्मृत्योरपि जिघांसतः ॥ २९ ॥ नृसिंह उवाच ॥ मैवं वरोऽसुराणां ते प्रदेयः पद्मसभव ॥ वरः क्रूरनिसर्गाणामहीनाममृतं यथा ॥३०॥ नारद उवाच ॥ इत्युक्त्वा भगवान् राजंस्तत्रैवांतर्दधे हरिः ॥ अदृश्यः सर्वभूतानां पूजितः परमेष्ठिना ॥ ३१ ॥ ततः संपूज्य शिरसा ववंदे परमेष्ठिनम् ॥ भवं प्रजापतीन् देवान् प्रह्रादो भगवत्कलाः ॥ ३२ ॥ ततः काव्यादिभिः सार्धं मुनिभिः कमलासनः ॥ दैत्यानां दानवानां च प्रह्रादमकरोत्पतिम् ॥ ३३ ॥ प्रतिनंद्य ततो देवाः प्रयुज्य परमाशिषः ॥ स्वधामानि ययू राजन् ब्रह्माद्याः प्रतिपूजिताः ॥ ३४ ॥ एवं तौ पार्षदौ विष्णोः पुत्रत्वं प्रापितौ दितेः ॥ हृदि स्थितेन हरिणा वैरभावेन तौ हतौ ॥ ३५ ॥ पुनश्च विप्रशापेन राक्षसौ तौ बभूवतुः ॥ कुंभकर्णदशग्रीवौ हतौ तौ रामविक्रमैः ॥ ३६ ॥ शयानौ युधि निर्भिन्नहृदयौ रामसायकैः ॥ तच्चित्तौ जहतुर्देहं यथा प्राक्तनजन्मनि ॥ ३७ ॥

एतद्दिष्ट्या भद्रम् ॥ २७ ॥ समितः सम्यक्प्राप्तः ॥ २८ ॥ सर्वतः संत्रासात् । गोप्तृ रक्षकम् ॥ २९ ॥ एवं वरस्त्वया न प्रदेयः क्रूरो निसर्गः स्वभावो येषाम् । अमृतं क्षीरम् ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ शिशुपालदंतवक्त्रयोर्द्विषतोः श्रीकृष्णसायुज्यं कथमिति यत्पृष्टं तदेव तयोः पूर्वजन्मकथनादिभिरुपपादितमुपसंहरति । एवमिति सप्तभिः । दितेः पुत्रत्वं प्रापितौ । विप्रशापेनेत्युत्तरस्यानुषंगः ॥ ३५ ॥ ३६ ॥ तच्चित्तौ श्रीरामे चित्तं ययोस्तौ ॥ ३७ ॥

गमयंति प्रापयन्तीशमिति व्युत्पत्तेरिति भावः ॥ २७ ॥ २८ ॥ २९ ॥ मैवं वरोऽसुराणां त इति वरशब्दस्य द्विरुक्तिरत्र द्वितीयवरपदमुत्तमार्थपरमिति तदर्थः । नैवं वर इति बालबोधिनीपाठः । पद्मसंभवेति । पद्मो जडस्तज्जात्वात्तवापि वरदाने विचारो नेत्येकः । कमलस्यातिकोमलस्वभावत्वात्तज्जत्वेन तवाप्यतिकोमलत्वमिति द्वितीय इति संबुद्धेरभिप्रायद्वयमिति ज्ञेयम् । "अमृतं यज्ञशेषे स्यात्पीयूषे सलिले घृते । अयाचिते च मोक्षे" इति मेदिनी ॥ ३० ॥ यत्रासुरहननादि कृतं तत्रैवेत्यर्थः ॥ ३१ ॥ ततो भगवदंतर्द्धानानंतरम् । भगवत्कलाः ब्राह्मणानित्यर्थः । 'भगवत्कलावीरकुलं कदर्थीकृत्य' इति भरताख्याने पञ्चमस्कंधोक्तेः । यद्वा—भगवतः कलारूपान्प्रजापत्यादीनित्यर्थः । कला शक्तिः ॥ ३२ ॥ ततः प्रह्रादकृतप्रणत्यनंतरम् ॥ ३३ ॥ राजन्निति । सर्वदा देवकार्यव्यग्रे राजकार्यं न सेत्स्यतीति भावः ॥ ३४ ॥ ३५ ॥ पुनश्च कालांतरे ॥ ३६ ॥ तच्चित्तौ तस्मिन्भगवत्येव चित्तमावामेनमग्रिमजन्मनि हनिष्याव इत्येवंलक्षणं स्मरणं ययोस्तावित्यर्थः । प्राक्तनजन्मनि हिरण्यकशिप्वादिजन्मनीत्यर्थः । यद्वा—प्राग्जन्मनि जयविजयरूपे तच्चित्तौ

ताविहाथ पुनर्जातौ शिशुपालकरूषजौ ॥ हरौ वैरानुबंधेन पश्यतस्ते समीयतुः ॥ ३८ ॥ एनः पूर्वकृतं यत्तद्राजानः कृष्णवैरिणः ॥ जहुस्तं ते तदात्मानः कीटः पेशस्कृतो यथा ॥ ३९ ॥ यथायथा भगवतो भक्त्या परमया भिदा ॥ नृपाश्चैद्यादयः सात्म्यं हरेस्तच्चिंतया ययुः ॥ ४० ॥ आख्यातं सर्वमेतत्ते यन्मां त्वं परिपृष्टवान् ॥ दमघोषसुतादीनां हरेः सात्म्यमपि द्विषाम् ॥४१॥ एषा ब्रह्मण्यदेवस्य कृष्णस्य च महात्मनः ॥ अवतारकथा पुण्या वधो यत्रादिदैत्ययोः ॥ ४२ ॥ प्रह्लादस्यानुचरितं महाभागवतस्य च ॥ भक्तिर्ज्ञानं विरक्तिश्च याथात्म्यं चास्य वै हरेः ॥ ४३ ॥ सर्गस्थित्यप्ययेशस्य गुणकर्मानुवर्णनम् ॥ परावरेषां स्थानानां कालेन व्यत्ययो महान् ॥ ४४ ॥ धर्मो भागवतानां च भगवान्येन गम्यते ॥ आख्यानेऽस्मिन्समाम्नातमाध्यात्मिकमशेषतः ॥ ४५ ॥ य एतत् पुण्यमाख्यानं विष्णोर्वीर्योपबृंहितम् ॥ कीर्तयेच्छ्रद्धया श्रुत्वा कर्मपाशाद्विमुच्यते ॥ ४६ ॥ एतद्य आदिपुरुषस्य मृगेंद्रलीलां दैत्येंद्रयूथपवधं प्रयतः पठेत ॥ दैत्यात्मजस्य च सतां प्रवरस्य पुण्यं श्रुत्वानुभावमकुतोभयमेति लोकम् ॥ ४७ ॥

करूषजो दंतवक्रः।हरौ सायुज्यं समीयतुः॥३८॥ कृष्णनिंदादिना पूर्वकृतं च यदेनः पापं तद्ध्यानेन तदात्मानः संतो जहुः । तदात्मत्वे दृष्टांतः । कीटः पेशस्कृतो ध्यानेन यथा तदात्मा भवतीति॥३९॥ अभिदा भेददर्शनशून्यया हरेः सात्म्यं सारूप्यम् ॥४०॥४१॥ प्रह्लादचरितार्थमुपसंहरति । एषेति चतुर्भिः । अवतारः श्रीनृसिंहरूपस्तस्य कथाख्यातेति शेषः ॥ ४२ ॥ प्रह्लादस्यानुचरितमित्यादेः समाम्नातमिति तृतीयेनान्वयः । अस्येत्यनेनोक्तं सर्गस्थित्यप्ययानामीशस्य हरेर्याथात्म्यं तत्त्वम् । अनेन कृतं हरेर्गुणकर्मानुवर्णनं चेत्यर्थः ॥ ४३ ॥ परावरेषां देवदैत्यादीनां यानि स्थानानि तेषां व्यत्ययो विपर्यासः ॥ ४४ ॥ आध्यात्मिकमात्मानात्मविवेकादि ॥ ४५ ॥ एतच्छ्रवणादिफलमाह । य इति द्वाभ्याम् । एतच्छ्रुत्वा यः कीर्तयेत् ॥ ४६ ॥ एतदेतां मृगेंद्रस्य लीलाम् । तामेवाह । दैत्येंद्रस्य यथपानां च वधं यः शुचिः

भगवच्चित्तौ तथेत्यर्थः । समीयतुरिह समुपसर्गद्योत्यमाह—सम्यग्भक्त्यैवेत्यर्थः। "मधुकैटभौ भक्त्यभावादूरौ भगवतो मृतौ ॥ तत्र एव क्रमात्प्राप्तौ चैद्यो भक्त्या हरिं ययौ॥" इति तीर्थः॥३७॥३८॥३९॥४०॥॥४१॥एषा कथापि कृष्णस्यैव नृसिंहस्यापि स्वाधिष्ठानकृष्णाभिन्नत्वादित्यर्थः ।"यो धत्ते सर्वभावानामभवायोशतीः कलाः" इति श्रुतिस्तुत्यंते श्रीकृष्णस्यैव सर्वावतारमूलत्वोक्तेः । ब्रह्मण्यदेवस्येति । ब्राह्मणोक्तिं पालयितुमाविष्कृताद्भुतविग्रहस्येत्यर्थः । ब्राह्मणोऽत्र ब्रह्मा ज्ञेयः।यत्र कथायाम्॥४२॥इत्यर्थ इति।अनेन प्रह्लादेन कृतं यद्धरिगुणकर्मकीर्त्तनन्तदप्यत्र समाम्नातमिति भावः॥४३॥विपर्यासो यथा भवति सोपि समाम्नात इति योज्यम्॥४४॥येन धर्मेण गम्यते प्राप्यते॥४५॥स पुरुषः कर्मपाशैः त्यज्यत इति॥४६॥आदिपुरुषस्य मृगेंद्रलीलाम्। ऋद्धस्य राजमातंगा इतिवत्समासः। मृगेंद्रशब्देन नृमृगेन्द्रोऽत्रैकदेशन्यायेन ग्राह्यः प्रकृतत्वात् । यद्वा—य एतां मृगेंद्रलीलां पठेत स आदिपुरुषस्य विष्णोर्लोकमे

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियंति ॥ येषां गृहानावसतीति साक्षाद् गूढं परं ब्रह्म मनुष्यलिंगम् ॥ ४८ ॥ स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद्वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ४९ ॥ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पीतः ॥ ५० ॥

सन्पठेत् । पुण्यमनुभावं प्रभावं मतिनिश्चयं वा लोकं वैकुंठम् ॥ ४७ ॥ अहो प्रह्लादस्य भाग्यं येन देवो दृष्टो वयं तु मंदभाग्या इति विषीदंतं प्रत्याह । यूयमिति त्रिभिः । येषां युष्माकं गृहान्मुनयोऽभियंति सर्वतः समायांति तत्कस्य हेतोर्येषु गृहेषु नराकारं गूढं सच्छ्रीकृष्णाख्यं परं ब्रह्म साक्षाद्वसतीति ॥ ४८ ॥ ननु कृष्णोऽस्माकं मातुलेयः कथं ब्रह्मेत्युच्यते तत्राह । स वा इति । सोऽयं ब्रह्मैव । कथंभूतः । महद्भिर्विमृग्यं यत्कैवल्यनिर्वाणसुखं निरुपाधिः परमानंदस्तदनुभूतिरूपो वो युष्माकं खलु प्रियः सुहृदित्यादिरूपो भवति । विधिकृदाज्ञानुवर्ती॥४९॥ननु परं ब्रह्म चेत्कथं द्व्यष्टसहस्रस्त्रीषु रतिः कथं वा धर्माद्याचरणं तस्येत्यत आह। नेति । यस्य रूपं तत्त्वं भवादिभिरपि धिया स्वबुद्ध्या वस्तुतयेदमित्थमिति साक्षान्नोपवर्णितं स युष्माकं स्वयमेव प्रसन्नः। अस्माकं तु मौनादिसाधनैस्तत्प्रसादः प्रार्थनीय एवेत्याह । मौनेनेति। स एष सात्वतां पतिर्नः प्रसीदतु । न हि प्रह्लादस्य गृहेषु परं ब्रह्म वसति न च तद्दर्शनाय मुनयस्तद्गृहानभियंति न च तस्य ब्रह्म मातुलेयादिरूपेण वर्तते न च स्वयमेव प्रसन्न

तीत्यन्वयः । संभवत्वादाह—मतिनिश्चयं वेति ॥४७॥ विषीदंतमाकुलीभवंतं प्रति यूयं प्रह्लादात्प्रह्लादगुरोर्मत्तोऽपि अन्येभ्योऽपि भक्तेभ्यो युष्मत्पूर्वजेभ्यो यदुपुरूरवःप्रभृतिभ्यो वशिष्ठमरीचिकश्यपाद्यृषिभ्योऽपि ब्रह्मरुद्राभ्यामपि भूरिसौभाग्यवन्त इत्याह यूयं नृणां जीवानां लोकमध्ये भूरिभागा येषां युष्माकं गृहान् लोकं स्वदर्शनदानादिना पवित्री कुर्वंतोपि मुनयोभि सर्वतोभावेन स्वकृतार्थीकरणादिना हेतुनापि गच्छंति यतो गूढं सर्वतोरहस्यं यन्मनुष्यलिंगं नराकृति परं ब्रह्म तत्सम्यक्प्रकारेण युष्माभिरनाहूतमप्यासक्तिपूर्वकं येषां गृहेषु साक्षाद्वसति सदैव न हि प्रह्लादादीनां गृहेषु नराकृति परं ब्रह्म साक्षाद्वसति न च तद्दर्शनेन कृतार्थी भवितुं मुनयो गच्छंतीति भावः ॥ ४८ ॥ अत्राक्षिपति—नन्विति । अत्र विश्वनाथः—न च परं ब्रह्मैव नराकृतिः कृष्णोऽभूदिति वाच्यं किन्तु कृष्ण एव परं ब्रह्म भवतीत्याह—सोयं प्रसिद्धो नराकृतिः कृष्ण एव ब्रह्म कीदृशं महद्भिरिति स्वामि व्याख्यानवत् । ‘ कृष्णस्तु भगवान्स्वयम् ’ इतिवदनुवाद्यविधेयभावेन व्याख्येयम् । अत्र प्रमाणम् ‘ ब्रह्मणो हि प्रतिष्ठाहम् ’ इति गीतोपनिषदेव एतावदर्थस्य निश्चायकोऽत्र वैशब्दार्थः । न केवलं स युष्मद्गृहेषु वसति मात्रं किन्तु प्रियः सन्निति युष्माकं तेनानंदनीयत्वम् । सुहृदिति हिते प्रवर्त्तनीयत्वम् । मातुलेय इति । संबंधविशेषेणानुगम्यत्वम् । आत्मेति स्वीयशरीरभावेनाभिमंतव्यत्वम् । अर्हणीय इति कृपया प्रतिपाल्यत्वम् । विधिकृत्किंकर इति सारथ्यादिनोपास्यत्वम् । गुरुरित्यनुशासनीयत्वमिति । न च प्रह्लादादीनां गृहेषु स गुरुकिंकरादिभावेन तिष्ठतीति भावः ॥ ४९ ॥ अत्राक्षिपति—नन्विति । अत्र विश्वनाथः—नन्वेवं साक्षात्परब्रह्म प्रतिष्ठाभूतस्यास्य ग्राम्याणामस्मादृशानां कैंकर्य्यादौ किं कारणमिति चेत्सत्यम् अस्य महैश्वर्यस्य प्रेमवश्यत्वस्य च तत्त्वं विज्ञातुं कोऽहं वराको यतो ब्रह्माद्या अपि न जानंतीत्याह—न यस्येति । रूपं तत्त्वं वस्तुतया याथार्थ्येनेदमित्थमिति साक्षान्नोपवर्णितम् । धियेति । तत्र बुद्धेः प्रवेशादेवेति भावः । मौनेनेत्यस्मदादयो यत्प्रसादं मौनादिभिः साधनैः प्रार्थयंते स कृष्णो युष्मत्प्रसादं कैंकर्य्यादिना प्रार्थयत इति युष्मदाद्यस्मदाद्योरेतदेवांतरमिति

स एष भगवान्राजन्व्यतनोद्विहतं यशः ॥ पुरा रुद्रस्य देवस्य मयेनानंतमायिना ॥ ५१ ॥ राजोवाच ॥ कस्मिन्कर्मणि देवस्य मयोहञ्जगदीशितुः ॥ यथा चोपचिता कीर्तिः कृष्णेनानेन कथ्यताम् ॥ ५२ ॥ नारद उवाच ॥ निर्जिता असुरा देवैर्युध्यनेनोपबृंहितैः ॥ मायिनां परमाचार्यं मयं शरणमाययुः ॥ ५३ ॥ स निर्माय पुरस्तिस्रो हैमीरौप्यायसीर्विभुः ॥ दुर्लक्ष्यापायसंयोगा दुर्वितर्क्यपरिच्छदाः ॥ ५४ ॥ ताभिस्ते सुरसेनान्यो लोकांस्त्रीन् सेश्वरान् नृप ॥ स्मरंतो नाशयांचक्रुः पूर्ववैरमलक्षिताः ॥ ५५ ॥ ततस्ते सेश्वरा लोका उपासाद्येश्वरं विभो ॥ त्राहि नस्तावकान् देव विनष्टांस्त्रिपुरालयैः ॥ ५६ ॥ अथानुगृह्य भगवान् मा भैष्टेति सुरान्विभुः ॥ शरं धनुषि संधाय पुरेष्वस्त्रं व्यमुंचत ॥ ५७ ॥ ततोऽग्निवर्णा इषव उत्पेतुः सूर्यमंडलात् ॥ यथा मयूखसंदोहा नादृश्यंत पुरो यतः ॥ ५८ ॥ तैः स्पृष्टा व्यसवः सर्वे निपेतुः स्म पुरौकसः ॥ तानानीय महायोगी मयः कूपरसेऽक्षिपत् ॥ ५९ ॥ सिद्धामृतरसस्पृष्टा वज्रसारा महौजसः ॥ उत्तस्थुर्मेघदलना वैद्युता इव वह्नयः ॥ ६० ॥

मतो यूयमेव ततोऽप्यस्मत्तोऽपि भूरिभागा इति भावः ॥ ५० ॥ नन्वन्यैर्दुष्करं त्रिपुरभेदादिकं श्रीरुद्रः कृतवान् । स एवंभूत ईश्वरोऽप्यस्य तत्त्वं न जानातीति कथमित्यपेक्षायां तस्याप्येतत्साहाय्यादेवासौ प्रभावो न केवलस्येति वक्तुमाख्यानमुपक्षिपति । स एष इति ॥५१॥ राजा युधिष्ठिर उवाच । जगदीशितुर्देवस्य कीर्तिं कस्मिन्कर्मणि मयो हतवान् ॥ ५२ ॥ अनेन श्रीकृष्णेनोपबृंहितैः संवर्धितैः ॥ ५३ ॥ हैमी च रौप्या चायसी चेति तिस्रः पुरो निर्माय तेभ्यो ददाविति शेषः । दुर्लक्ष्यावपायसंयोगौ गमनागमने यासाम् । दुर्वितर्क्याः परिच्छदा यासु ॥ ५४ ॥ सेनान्यः सेनापतयः पूर्ववैरं स्मरंतः ॥ ५५ ॥ ५६ ॥ अस्त्रमभिमंत्रितं शरं पुरेषु व्यमुंचत ॥ ५७ ॥ ततः शरात् । सूर्यमंडलान्मयूखसंदोहा रश्मिसमूहा इव । यतो येभ्यः ॥ ५८ ॥ कूपरसे स्वयं निर्मितकूपामृते ॥ ५९ ॥ वज्रसारा वज्रवद्दृढांगाः महौजसो महाबलाः

भावः । संदर्भस्तु—ननु कैश्चिदेतद्रूपमप्यवस्तुत्वेन मन्यते तत्राह—न यस्येति । यस्य साक्षात्प्रत्यक्षमपि रूपं परमविद्वद्भिर्भवपद्मजादिभिस्तु अवस्तुतयाऽपरमार्थतया नोपवर्णितं किन्तु परमार्थतया निर्णीतमित्यर्थः । 'त्वं ब्रह्म परमं साक्षात्' इत्यादिना 'यन्मित्रं परमानंदम् इत्यादिना' 'मल्लानामशनिर्नृणां नरवरः' इत्यादौ—' तत्त्वं परं योगिनाम् ' इत्यादिना च ॥५०॥ पुनराक्षिपति—नन्विति । राजन्निति । रजोगुणस्य राज्ञामाधिक्यं भवति तेन बहुधोक्तमपि विस्मरसीति भावः ॥ ५१ ॥ कीर्त्तिपदं विभक्तिविपर्यासेनोभयत्रान्वेति ॥ ५२ ॥ ५३ ॥ दुर्वितर्क्या दुर्ज्ञेयाः । परिच्छदा युद्धसामग्र्यः । हेम्नो विकारो हैमी । एवमग्रेपि ॥ ५४ ॥ ताभिः पूर्भिः । नृपेति । यथा राजानः पूर्ववैरस्मृत्या रिपुं घ्नंति तद्वदिति भावः ॥ ५५ ॥ हे विभो, हे देवेति । यद्यपि वयं समर्थास्तथापि विभुर्देवस्त्वमेवेति भावः ॥ ५६ ॥ अथ देवप्रार्थनानंतरम् ॥ ५७ ॥ ५८ ॥ तैः शरैः । तान्व्यसुपुरवासिनः ॥ ५९ ॥ ६० ॥

विलोक्य भग्नसंकल्पं विमनस्कं वृषध्वजम् ॥ तदाऽयं भगवान्विष्णुस्तत्रोपायमकल्पयत् ॥ ६१ ॥ वत्स आसीत् तदा ब्रह्मा स्वयं विष्णुरयं हि गौः ॥ प्रविश्य त्रिपुरं काले रसकूपामृतं पपौ ॥ ६२ ॥ तेऽसुरा ह्यपि पश्यंतो न न्यषेधन्विमोहिताः ॥ तद्विज्ञाय माहायोगी रसपालानिदं जगौ ॥ ॥ ६३ ॥ स्वयं विशोकः शोकार्तान् स्मरन्दैवगतिं च ताम् ॥ देवोऽसुरो नरोऽन्यो वा नेश्वरोऽस्तीह कश्चन ॥ ६४ ॥ आत्मनोऽन्यस्य वा दिष्टं दैवेनापोहितुं द्वयोः ॥ अथासौ शक्तिभिः स्वाभिः शंभोः प्राधनिकं व्यधात् ॥ ६५ ॥ धर्मज्ञानविरक्त्यृद्धितपोविद्याक्रियादिभिः ॥ रथं सूतं ध्वजं वाहान्धनुर्वर्म शरादि यत् ॥ ६६ ॥ सन्नद्धो रथमास्थाय शरं धनुरुपाददे ॥ शरं धनुषि संधाय मुहूर्तेऽभिजितीश्वरः ॥ ६७ ॥ ददाह तेन दुर्भेद्या हरोऽथ त्रिपुरो नृप ॥ दिवि दुंदुभयो नेदुर्विमानशतसंकुलाः ॥ ६८ ॥ देवर्षिपितृसिद्धेशा जयेति कुसुमोत्करैः ॥ अवाकिरञ्जगुर्हृष्टा ननृतुश्चाप्सरो गणाः ॥ ६९ ॥ एवं दग्ध्वा पुरस्तिस्रो भगवान्पुरहा नृप ॥ ब्रह्मादिभिः स्तूयमानः स्वधाम प्रत्यपद्यत ॥ ७० ॥ एवंविधान्यस्य हरेः स्वमायया विडंबमानस्य नृलोकमात्मनः ॥ वीर्याणि गीतान्यृषिभिर्जगद्गुरोर्लोकान्पुनानान्यपरं वदामि किम् ॥ ७१ ॥ इति श्रीम० महा० सप्तमस्कंधे युधिष्ठिरनारदसंवादे त्रिपुरविजयो नाम दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ श्रुत्वेहितं साधुसभासभाजितं महत्तमाग्रण्य उरुक्रमात्मनः ॥ युधिष्ठिरो दैत्यपतेर्मुदा पुनः पप्रच्छ भूयस्तनयं स्वयंभुवः ॥ १ ॥

मेघदलना मेघभेदिनो विद्युद्रूपा वह्नय इव ॥६०॥६१॥ काले मध्याह्ने ॥६२॥६३॥६४॥ आत्मनो वाऽन्यस्य वा द्वयोरपि वा दैवेन दिष्टमुपकल्पितमपोहितुं परिहर्तुमिह कश्चिदपीश्वरः समर्थो नास्ति । असौ श्रीकृष्णः । प्रधनं संग्रामस्तत्साधनम् ॥६५॥६६॥ अभिजिति मध्याह्ने ॥६७॥ विमानशतानि संकुलानि संकीर्णानि येषां ते देवादयः ॥ ६८ ॥ ६९॥७०॥ आदित आरभ्य स्कंधार्थं निगमयति एवंविधानीति । नृलोकं नराकारमात्मनो विडंबमानस्यानुकुर्वतः ॥७१॥ इति श्रीमद्भागवते सप्तमे टीकायां दशमोऽध्यायः ॥ १० ॥ तदेवं दशभिर्ज्ञानभक्तियोगावुदीरितौ ॥ अथ पंचभिरध्यायैः कर्मयोगोऽनुवर्ण्यते ॥१॥ एकादशे नृणां धर्माः साधारण्येन वर्णिताः ॥ विशेषेण च वर्णानां मुख्यामुख्याश्च योषिताम् ॥ २ ॥ दैत्यपतेः प्रह्लादस्य साधूनां सभासु सभाजितं सत्कृतमीहितं चरितं श्रुत्वा पुनर्नारदं पप्रच्छ । कथंभूतस्येहितम् ।

तत्र त्रिपुरभेदने ॥ ६१ ॥ ६२ ॥ ६३ ॥ तां देवस्य विष्णोर्गतिं लीलाम् ॥ ६४ ॥ अथ रसकूपशोषणानंतरम् । असौ कृष्णः ॥ ६५ ॥ रथादिकं स्वाभिश्शक्तिभिरादिष्टक्रमेण व्यधादिति स्वशक्तीनामनश्वरत्वाज्जिष्णुत्वाच्च तदाविष्टानां रथादीनामपि तादृशत्वमेतत्स्वीयधर्मस्य भक्तियोगस्यावेशो रथे भक्तियोगाश्रितानां ज्ञानादीनां रथाश्रितेषु सूतादिषु ज्ञेयम् ॥ ६६ ॥ अभिजित्स्वरूपं तृतीयस्कंधे हिरण्याक्षवधे दर्शितम् ॥ ६७ ॥ नृपेति । नृपो यथा प्रजाविरोधिनो हंति तथेति भावः ॥ ६८ ॥ ६९ ॥ संबुद्ध्यर्थः पूर्ववत् ॥ ७० ॥ विडंबमानस्येति । अत एव मोहवशान्नृलोकस्तं न भजत इति भावः ॥ ७१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कंधे दशमोऽध्यायः ॥ १० ॥ ( १ ) साधारण्येन सामान्येन ( २ ) तत्र महत्तमाग्रणीत्वे । स्वयंभुवस्तनयं नारदम् ॥ १ ॥

युधिष्ठिर उवाच ॥ भगवञ्छ्रोतुमिच्छामि नृणां धर्मं सनातनम् ॥ वर्णाश्रमाचारयुतं यत्पुमान् विंदते परम् ॥ २ ॥ भवान् प्रजापतेः साक्षादात्मजः परमेष्ठिनः ॥ सुतानां संमतो ब्रह्मंस्तपोयोगसमाधिभिः ॥ ३ ॥ नारायणपरा विप्रा धर्मं गुह्यं परं विदुः ॥ करुणाः साधवः शांतास्त्वद्विधा न तथाऽपरे ॥ ४ ॥ नारद उवाच ॥ नत्वा भगवतेऽजाय लोकानां धर्महेतवे ॥ वक्ष्ये सनातनं धर्मं नारायणमुखाच्छ्रुतम् ॥ ५ ॥ योऽवतीर्यात्मनोंशेन दाक्षायण्यां तु धर्मतः ॥ लोकानां स्वस्तयेऽध्यास्ते तपो बदरिकाश्रमे ॥ ६ ॥ धर्ममूलं हि भगवान्सर्ववेदमयो हरिः ॥ स्मृतं च तद्विदां राजन्येन चात्मा प्रसीदति ॥ ७ ॥ सत्यं दया तपः शौचं तितिक्षेक्षा शमो दमः ॥ अहिंसा ब्रह्मचर्यं च त्यागः स्वाध्याय आर्जवम् ॥ ८ ॥

महत्तमानामग्रण्यो मुख्यस्य । तत्र हेतुः । उरुक्रमे आत्मा मनो यस्य ॥ १ ॥ श्रवणेच्छायां हेतुः । यद्यतो धर्मादनुष्ठितात्परं ज्ञानं भक्तिं च विंदते ॥ २ ॥ ३ ॥ ननु स्मृतिकारैर्धर्म उक्त एव तत्राह । नारायणपरा इति ॥ ४ ॥ अजाय श्रीनारायणाय तस्यैव मुखाच्छ्रुतम् ॥ ५ ॥ तन्मुखादात्मनः श्रवणं संभावयन्विशिनष्टि । य इति ॥ ६ ॥ प्रथमं तावद्धर्मे प्रमाणमाह । धर्मेति । धर्मस्य मूलं प्रमाणम् । स्मृतं च स्मृतिः । तद्विदां वेदविदाम् । येन चात्मा मनः प्रसीदिति तुष्यति च । तथा च याज्ञवल्क्यः । "श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ॥ सम्यक्संकल्पजः कामो धर्ममूलमिदं स्मृतम्" इति ॥ मनुश्च । "वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ॥ आचारश्चैव साधूनामात्मनस्तुष्टिरेव च" इति ॥ ७ ॥ तत्र तावन्नरमात्रसाधारणधर्ममाह । सत्यमिति पंचभिः । तप एकादश्युपवासादि । ईक्षा युक्तायुक्तविवेकः । शमो मनसः संयमः ।

भगवन्निति । ज्ञानसामर्थ्यमाह ॥ २ ॥ हे ब्रह्मन्निति । वेदस्वरूपतामाह ॥ ३ ॥ ननु मन्वादयोऽपि नारायणपरा एव तत्राह—गुह्यमिति । गुह्यत्वात्ते न प्रकाशयंतीत्यर्थः । त्वद्विधास्त्वत्तुल्यास्तेन सनकादिग्रहः । अपरे कश्यपादयः सृष्टिकर्माद्यासक्तत्वान्न विदुरित्यर्थः ॥ ४ ॥ आत्मवतामनुकंपया तपोव्यक्तगतिश्चरसीति पंचमस्कंधोक्तेर्धर्महेतव इत्युक्तम् । धर्मोऽत्र ज्ञानभक्तिजनको धर्मो ज्ञेयः ॥ ५ ॥ आत्मनोंशेन नरेण ॥ ६ ॥ आभ्यां स्मृतिभ्यां तद्बहिर्मुखधर्मस्यापार्थत्वं भगवद्धर्मस्यैवावश्यकत्वं चोक्तं सदाचारपदेन संतोऽप्यत्र भगवन्निष्ठा एव ग्राह्यास्तद्बहिर्मुखाचारस्यानाचारत्वात् । "धर्मः प्रोज्झितकैतवोऽत्र परमो निर्मत्सराणां सताम्" इत्याद्युक्तेः मूलं कारणं प्रमाणं च हि निश्चितं भगवानेव यतः सर्ववेदेति । तद्भक्त्या विना धर्मा न सिध्यंतीति भावः । तद्विदां सर्ववेदमयभगवद्विदाम् । तेन विद्धैकादश्यादिप्रतिपादिकाः स्मृतयो व्यावृत्ता इति ध्वनितम् । येन चात्मा मनः प्रसीदतीति "स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे । अहैतुक्यप्रतिहता ययात्मा संप्रसीदति ॥" इतिवत्सुशब्दाप्रयोगात् । यथा केवलया भक्त्या न तथा कर्मादिमिश्रया भक्तिमिश्रकर्मणा वा मनः प्रसीदतीति ज्ञापितं भक्तिरहितो धर्मस्त्वग्राह्य एव तेन याज्ञवल्क्यमनूक्तिभ्याम् 'धर्ममूलं हि भगवान्' इति नारदोक्तिरेव श्रेयसी । तदुक्तं नारसिंहे—"सनकादयो निवृत्ताख्ये ते च धर्मे नियोजिताः । प्रवृत्ताख्ये मरीच्याद्या मुक्त्वैकं नारदं मुनिम् ॥" इति नारदस्यैव तेभ्य उभयेभ्यः श्रैष्ठ्यं सर्वधर्मसारविज्ञत्वं च ध्वनितम् ॥ ७ ॥ तत्र धर्मकथनप्रस्तावे । तावदादौ धर्मं भक्तियोगम् । तत्र सत्याद्या एकविंशतिर्भक्त्युपकरणीभूताः श्रवणाद्या नव तु

संतोषः समदृक्सेवा ग्राम्येहोपरमः शनैः ॥ नृणां विपर्ययेहेक्षा मौनमात्मविमर्शनम् ॥ ९ ॥ अन्नाद्यादेः संविभागो भूतेभ्यश्च यथार्हतः ॥ तेष्वात्म देवताबुद्धिः सुतरां नृषु पांडव ॥ १० ॥ श्रवणं कीर्तनं चास्य स्मरणं महतां गतेः ॥ सेवेज्यावनतिर्दास्यं सख्यमात्मसमर्पणम् ॥ ११ ॥ नृणामयं परो धर्मः सर्वेषां समुदाहृतः ॥ त्रिंशल्लक्षणवान् राजन् सर्वात्मा येन तुष्यति ॥ १२ ॥ संस्कारा यत्राविच्छिन्नाः स द्विजोऽजो जगाद यम् ॥ इज्याध्ययनदानानि विहितानि द्विजन्मनाम् ॥ जन्मकर्मावदातानां क्रियाश्चाश्रमचोदिताः ॥ १३ ॥

दमो बाह्येंद्रियाणाम् । त्यागो दानम् । स्वाध्यायो यथोचितजपः ॥ ८ ॥ संतोषो दैवलब्धेनालंबुद्धिः । समदृक्सेवा समदर्शां महतां सेवा । ग्राम्येहोपरमः प्रवृत्तकर्मभ्यो निवृत्तिः । विपर्ययेहेक्षा निष्फलक्रियाणामीक्षणम् । मौनं वृथालापनिवृत्तिः । आत्मविमर्शनं देहादिव्यतिरिक्तात्मानुसंधानम् ॥ ९ ॥ आत्मेति देवतेति च बुद्धिः ॥ १० ॥ अस्य श्रीकृष्णस्य । श्रवणादयो नव । इज्याऽर्चनम् ॥ ११ ॥ एवं त्रिंशल्लक्षणवान् धर्मः ॥ १२ ॥ इदानीं वर्णधर्मान्वक्तुं द्विजानां लक्षणमाह । संस्कारा मंत्रवंतो गर्भा धानादयो यस्मिन्नविच्छिन्नाः स द्विजः । तर्हि शूद्रस्यापि संस्काराविच्छेदे सति द्विजत्वं स्यात्तत्राह । अजो ब्रह्मा यमेवंभूतसंस्कारयुक्तं जगाद स द्विजः शूद्रं तु न मंत्रवत्सं स्कारयुक्तं जगाद न चोपनयनवंतमतो नासौ द्विजः । तथा च स्मृतिः । "विवाहमात्रसंस्कारं शूद्रोऽपि लभतां सदा ॥ न केनचित्समसृजच्छंदसा तं प्रजापतिः" इति ।

साक्षाद्भक्तिरेवेति ज्ञेयम् ॥ ८ ॥ ९ ॥ अन्नमोदनादि आद्यं मोदकादि तत्तदादेर्वस्त्रस्रक्चंदनादेर्यथोचितं ब्राह्मणाय पादप्रक्षालनासनादिपूर्वकमेव तदितराणामप्यादरपूर्वकमेव चंडालादेर्दूरत एवेत्याद्यौचित्येन तद्देयमित्यर्थः । तेषु भूतेषु । हे पांडवेति । शुद्धवश्यत्वात्तव बहुधाकथनेन किमिति भावः ॥ १० ॥ ११ ॥ हे राजन्निति । त्वं तु धर्मप्रवर्त्तक एवेति भावः । येन धर्मेण ॥ १२ ॥ संस्कारविच्छेदे तु द्विजबंधुः स्यादिति भावः । अजो ब्रह्मा यं सृष्ट्वा द्विजं जगाद द्विजत्वेन निर्दिदेश तज्जातिक एव संस्कारेषु लब्धेषु द्विजः स्यादिति संदर्भः । ब्रह्मसृष्ट्यारंभत एव प्रवृत्तायां द्विजजातौ विशुद्धमातापितृकं जन्मैव मुख्यलक्षणमिति भावः " ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणो मुख्य ईरितः" इति पौलस्त्योक्तेः । अतो मंत्रवत्संस्कारत्वाभावात् । अत्रप्रमाणमाह—तथा चेति । गायत्र्यामेव वर्णांतरप्रक्षेपेण त्रिष्टुब्जगत्यौ भवतः तच्च बृहत्पाराशर्य्यामुक्तम्—तत्त्वां विश्वारूपाणीति वर्णोच्चारणाद्गायत्र्यादयस्त्रयो मंत्रा विप्रादिवर्णत्रयोपदेश्याः सिद्ध्यंतीति तत्त्वं, यद्वाऽजो वेदो यं द्विजं स्वसम्बन्धेनोत्पन्नं जगाद । स च वेदः—"गायत्र्या ब्राह्मणमसृजत्" इत्यादिरूप एव बोध्यः । "अजो ब्रह्मा तथा वेदो हरिश्शंभू रघोः सुतः । वस्तः सूर्योऽथ प्रद्युम्नो वसुदेवोऽप्यजः स्मृतः ॥" इत्यनेकार्थः । "न केन चिच्छूद्रम्" इति श्रुतेर्न शूद्रः संस्काराधिकारीति भावः । गर्भाधानादयश्चाष्टचत्वारिंशत्संख्याकाः संति । तथाहि—गर्भाधानपुंसवनसीमंतोन्नयनजातकर्मनामकरणान्नप्राशनचौलोपनयनं चत्वारि वेदव्रतानि स्नानं सहधर्मिणीसंयोगः पञ्चानां यज्ञानामनुष्ठानमष्टका पार्वणं श्राद्धं श्रावण्याग्रहायणी चैत्र्याश्वयुजीति सप्तपाकयज्ञसंस्था अग्न्याधेय मग्निहोत्रं दर्शपूर्णमासौ चातुर्मास्याग्रयणेष्टिनिरूढपशुबंधसौत्रामणीति सप्त हविर्यज्ञसंस्था अग्निष्टोमात्यग्निष्टोम उक्थः षोडशी वाजपेयोतिरात्र आप्तोर्याम इति सप्त सोमसंस्था इत्येते चत्वारिंशत्संस्काराः । अष्टावात्मगुणाः दया भूतेषु सर्वेषु क्षांतिरसूया शौचमनायासो मांगल्यमकार्पण्यमस्पृहेति यस्यैते चत्वारिंशत्संस्कारा अष्टावात्मगुणाश्च स ब्रह्मणः सायुज्यं प्राप्नोतीति गौतमः । संस्कारा एते यथोचितसमये एव कार्या अन्यथा प्रायश्चित्तेन पुनः करणम् । तदुक्तमाश्वलायनेन—"आरभ्याधानमाचौलात्कालेऽतीते तु कर्मणाम् । व्याहृत्याज्यं सुसंस्कृत्य हुत्वा कर्म यथाक्रमम् ॥ एतेष्वेकैकलोपेपि पादकृच्छ्रं समाचरेत् । चूडाया अर्द्धकृच्छ्रं स्यादापदि त्वेवमीरितम् ॥" ।

विप्रस्याध्ययनादीनि षडन्यस्याप्रतिग्रहः ॥ राज्ञो वृत्तिः प्रजागोप्तुरविप्राद्वा करादिभिः ॥ १४ ॥

श्रुतिश्च—"गायत्र्या ब्राह्मणमसृजत् त्रिष्टुभा राजन्यं जगत्या वैश्यं न केनचिच्छूद्रम्" इति। अतो विवाहव्यतिरिक्तसंस्कारस्यानावश्यकत्वादुपनयनस्य तु सर्वथा निषेधान्न तस्य द्विजत्वमित्यर्थः । पाठांतरे वैदिकादय इति गर्भाधानादय इत्यर्थः । त्रैवर्णिकानामावश्यकान्धर्मानाह । इज्येति। जन्मना विशुद्धेन कुलेन कर्मणा चाचारेणावदातानां शुद्धानां दुष्कुलानां दुराचाराणां च नैतानि विहितानीत्यर्थः । ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्च । शूद्रस्य तु वर्णधर्मा एव । आश्रमभेदकृतविशेषाभावात्॥ १३॥ब्राह्मणादीनां चतुर्णामपि वृत्तिरूपान्धर्मानाह । विप्रस्येति सार्धैः सप्तभिः । विप्रस्य षट् कर्माणि विहितानीत्यनुषंगः । तत्र त्वध्यापनं याजनं प्रतिग्रहश्च जीविका । यथाह मनुः । "षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका ॥ याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" इति । अन्यस्य क्षत्रियस्य अप्रतिग्रह इति प्रतिग्रहातिरिक्तं याजन

अनापदि सर्वत्र द्विगुणं चरेत् । उपनयने तु—"आषोडषाच्च द्वाविंशाच्चतुर्विंशाच्च वत्सरात् । ब्रह्मक्षत्रविशां काल औपनायनिकः स्मृतः ॥" इति याज्ञवल्क्यः । अत्र "सावित्री पतिता यस्य दशवर्षाणि पंच च । सशिखं वपनं कृत्वा व्रतं कुर्यात्समाहितः ॥ एकविंशतिरात्रञ्च पिबेत्प्रसृतियावकम् । हविषा भोजयेच्चैव ब्राह्मणान्पञ्च सप्त वा ॥ ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥" इति व्यासः । उपनेत्रभावकृतां व्रात्यतां तु पूर्वोक्तमेकविंशतिरात्रं व्यपोहति । उपनेतृसत्त्वे कामतः पञ्चदशवर्षातिक्रमे वशिष्ठः—"पतितसावित्रीक उद्दालकव्रतं चरेत् द्वौ मासौ यावकेन मासं पयसार्द्धमासमामिक्षयाष्टरात्रं घृतेन षड्रात्रमयाचितं त्रिरात्रमब्भक्षणमहोरात्रमुपवसेत्" इति । एतदशक्तस्य व्रतप्रतिनिधिरूपगोदानं गायत्रीजपोऽपि विहितः—"प्राजापत्येन गामेकामतिकृच्छ्रे द्वयं स्मृतम् । चांद्रायणे पराके च तिस्रो गा दक्षिणाः स्मृताः ॥" इति मदनरत्ने । गायत्र्ययुतं गोदानं च सममिति च किं बहुना "पिता पितामहो भ्राता ज्ञातयो गोत्रजोऽग्रजाः । उपनायेऽधिकारी स्यात्पूर्वाभावे परः परः ॥" इति गर्गेणोपनेतार उक्ताः । एतदभावे तु व्यासः—"वेदैकनिष्ठं धर्मिष्ठं कुलीनं श्रोत्रियं शुचिम् । स्वशाखीयमनालस्यं विप्रमाचार्यमाश्रयेत् ॥ पुरोहितो भवेन्नित्यमाचार्यः क्षत्रविप्रयोः" इत्यलं प्रसक्तानुप्रसक्त्या । अथ प्रकृतमनुसरामः । पाठांतरे "स द्विजो वैदिकादयः" इति पाठे । इत्यर्थ इति । सर्वेषां संस्काराणां तुल्येपि वैदिकत्वे गर्भाधानस्यैव स्वामिचरणैर्यद्वैदिकत्वमुक्तं तत् 'वेदो नारायणः साक्षात्' इत्युक्तेर्वेदेन विष्णुसूक्तेन धार्यत्वादेवेति भावेनोक्तमिति भावः । योनिं स्पृष्टा 'विष्णुर्योनिं प्रजापते' इत्यादिना विष्णुयोनिसूक्तं जपित्वा वीर्यसेकाभिधानादित्याचारार्कादौ स्पष्टम् । यद्वा—वेदेभ्यो दिनचतुष्टयोत्परत्र विहितो वैदिकः । आद्यरात्रिचतुष्टयस्य त्यक्तव्यत्वेनोक्तेः । "आद्याश्चतस्रः संत्यक्त्वा नरो युग्मासु रात्रिषु । पुत्रकामः स्त्रियं गच्छेत्" इति ज्योतिःशास्त्रात् । इत्यर्थ इति । एतेन शुद्धस्य सर्वशुभकर्मस्वधिकारो न त्वशुद्धकुलजात्यादेरिति भावः । शूद्रस्य गृहस्थेतराश्रमाभावात्तस्य जात्याश्रमधर्म एक एव "चत्वारो ब्राह्मणस्योक्ताः क्षत्रियस्य त्रयः स्मृताः । द्वौ वैश्यस्य तु शूद्रस्य ह्येक एव न चेतरः ॥" इति स्मृतेः । चत्वारो ब्रह्मचर्यगार्हस्थ्यवानप्रस्थसंन्यासा विप्रस्य । क्षत्रियस्य संन्यासेतरास्त्रयः । वैश्यस्यादिमौ द्वौ । शूद्रस्यादिमं विहाय द्वितीयं गार्हस्थ्यमेवेत्यर्थः ॥ १३ ॥ तत्र षट्सु । अत्र प्रमाणमाह—यथाहेति । अस्य विप्रस्य विशुद्धाद्दंत्यजादीन्विहाय शुद्धादेव विप्रादेरपि न त्वशुद्धादित्यर्थः । अत्र वैदिकाख्यानं च "तं होपानिन्ये अधीहि भगव" इत्यादिश्रुतौ कृतोपनयनस्य ब्रह्मविद्याधिकारप्रतिपादनं कृत्वा पुनश्च तानर्हानुपनीयैवेत्यनुपनीतानामपि वैश्वानरविद्यायामधिकारश्रुतेरनियतमुपनयनमिति चेन्न निषेधस्य प्राप्तिपूर्वकत्वात्प्राप्तोपनयनानां प्राचीनशालादीनां द्विजातीनामेवाधिकारान्निषेधस्तु—विद्योपदेष्टुरश्वपते राज्ञो न्यूनवर्णत्वाद्द्रष्टव्यः । तान्प्राचीनशालादीनृषीननुपनीयैवाश्वपती राजोवाचेत्यर्थः । प्राचीनशालसत्ययज्ञेंद्रद्युम्नजिनबुडिलाः समेत्येत्थं मीमांसां चक्रुः को न आत्मा किं ब्रह्मेति ते च निश्चयार्थमुद्दालकमाजग्मुः सोऽपि सम्यग्न वेदेति तेनोद्दालकेन सह वैश्वानरोऽयमिति निश्चयार्थं कैकयराजमश्वपतिमागत्योचुः को न आत्मा किं ब्रह्मेत्यात्मानमेवेमं वैश्वानरं संप्रत्यध्येषितमेव नो ब्रूहीत्युपक्रम्याम्नायते यस्त्वेतमेव प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमु

वैश्यस्तु वार्तावृत्तिश्च नित्यं ब्रह्मकुलानुगः ॥ शूद्रस्य द्विजशुश्रूषा वृत्तिश्च स्वामिनो भवेत् ॥ १५ ॥

मध्यापनं चापद्यनुजानाति वक्ष्यति चानंतरमेव ऋते राजन्यमिति । श्रूयते चाश्वपतिकैकयप्रभृतीनां क्षत्रियाणामुपदेष्टृत्वादि । प्रजापालनेऽधिकृतस्य क्षत्रियस्य वृत्त्यंतरमाह । राज्ञ इति। आदिशब्देन दंडशुल्कादि॥ १४॥वार्ता कृषिवाणिज्यादिलक्षणा वृत्तिर्यस्य । शूद्रस्य द्विजानां शुश्रूषा विहिता।स्वामिनो द्विजस्य तु शुश्रषा वृत्तिश्च भवेत्॥ १५॥

पास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमात्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्यैव मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो वस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यश्च न आस्यमाहवनीय इत्यादि संप्रत्यध्येषि सर्वदा ध्यायसि स च कैकेयराजः । द्युलोकसूर्यवाय्याकाशवारिपृथिवीनां द्युलोकादिरेकैक एव वैश्वानर इति मीमांसाकाले विवदमानाः प्राचीनशालादयः षड़ृषयो मत्समीपमागता इति ज्ञात्वा तादृशविपरीतबुद्धिनिरासेन सम्यग्वैश्वानरबुद्धिजिग्राहयिषया तानेव परिपप्रच्छ । औपमन्यव कं त्वमात्मानमुपास्स इत्यादिना पृष्टाश्च संतस्तत्रैक ऋषिर्द्युलोक एव वैश्वानर इत्युवाच । अन्यस्तु सूर्यो वैश्वानर इत्येवंक्रमेण पृथिवीपर्यंतमेकैकस्य वैश्वानरत्वं श्रुत्वा तेषां द्युसूर्यादीनां क्रमेण सुतेजस्त्वविश्वरूपत्वपृथग्वर्त्मत्वबहुलत्वरयित्वपादत्वगुणयोगं विधाय प्रत्येकं वैश्वानरपक्षं मूर्द्धपातांधत्वप्राणोत्क्रमणदेहशीर्णतावस्तिभेदपादशोषणैर्दोषैर्निंदित्वा तेषामेव द्युसूर्यादीनां वैश्वानरपुरुषं प्रति मूर्द्धादिभावमुक्त्वा कृत्स्नं वैश्वानरोपासनमुपादिशति—यस्त्वेतमित्यादिना । अभिमुखेन विश्वं मिमीते जानातीत्यभिविमानस्तं प्रादेशपरिमाणमुपास्ते । यस्तस्य सर्वलोकाद्याश्रयं फलमित्यर्थः । लोका भोगभूमयः भूतानि तदुपाधयो भोक्तारः स्वयमात्मान इति भेदः । तत्तत्संबंधिफलमन्नशब्दार्थः । ध्यानफलमुक्त्वा ध्येयमाह—तस्येति । सुतेजस्त्वगुणा द्यौर्वैश्वानरस्य मूर्द्धा विश्वरूपत्वगुणकः सूर्यश्चक्षुः एष शुक्ल एष नील इत्यादिश्रुतेर्विश्वरूपत्वं बोध्यं पृथङ्नानावर्त्मगमनमात्मा स्वभावो यस्य वायोः स तथा । नानागतित्वगुणो वायुः प्राणः बहुलत्वगुण आकाशोऽस्य संदेहो देहमध्यमित्यर्थः । रयिर्धनं तद्गुण आपोऽस्य वास्तिर्मूत्राशयः । वैश्वानरस्य होमाधारत्वसंपादनार्थमुर एवेत्यादि । एवं सति वैश्वानरशब्दस्य "अयमग्निर्वैश्वानरो योयमंतः पुरुषः" इत्यादौ "जाठरे विश्वस्मा अग्निं भुवनाय देवा वैश्वानरं केतुमह्नामकृण्वन्" इत्यादावग्निसामान्ये "वैश्वानरस्य सुमतौ स्याम राजाहिकं भुवनानामभिश्रीः" इत्यादावग्निशरीराय देवतायां च प्रयोगदर्शनात् । उपक्रमे च को न आत्मेत्युपक्रमात्र संशयः किमत्र वैश्वानरो जाठर उताग्निसामान्यमुताग्निशरीरा देवता आहोस्विच्छारीरोऽथवा परमात्मेति । श्रुत्यर्थस्तु—पुरुषे पुरुषाकारे देहे विश्वस्मै भुवनाय वैश्वानरमग्निमह्नां केतुं चिह्नं सूर्यमकृण्वन्कृतवंतो देवास्तदुदये दिनव्यवहारादित्यर्थः । वैश्वानरस्याग्न्यधिष्ठानस्य देवस्य सुमतौ शोभनबुद्धौ वयं स्याम भवेम तस्यास्मद्विषया सुमतिर्भवत्वित्यर्थः । अत्र हेतुः—राजाहीति । यस्माद्भुवनानामयं राजा कं सुखहेतुरभिमुखा श्रीरस्येत्यभिश्रीरीश्वरः तस्मात्तस्य सुमतौ स्यामेति स्तुतिवाक्यार्थः । तत्र जाठरादौ वैश्वानरशब्दस्य प्रसिद्धत्त्वाज्जाठरादिरेव वैश्वानर इति प्राप्ते ब्रूमः वैश्वानरः साधारणशब्दविशेषादिति वैश्वानरः परमात्मैव कुतः साधारणशब्दविशेषात् साधारणशब्दयोरपि विशेषः साधारणशब्दविशेषस्तस्मादित्यर्थः । जाठराग्निसामान्यतद्देवतासु साधारणो वैश्वानरशब्दः जीवपरयोः साधारण आत्मशब्दस्तयोर्वैश्वानरात्मशब्दयोर्जाठरादौ जीवादौ च साधारणयोरपि सतोः परमात्मपरत्व एव विशेषोऽवगम्यते तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्द्धैव सुतेजा इत्यादावुक्तद्युमूर्द्धत्वादेः सर्वात्मकपरमात्मपरिग्रहे एवोपपन्नतरत्वात्तस्माद्वैश्वानरः परमात्मैवेति सिद्धम् । प्रभृतिपदात्प्रवहणादिग्रहस्तदाख्यानमपि पञ्चदशाध्यायव्याख्यायां वर्णयिष्यामः । उपदेष्टृत्वादीहादिना याजनपरिग्रहः । यथा वाल्मीकीये विश्वामित्रं प्रकृत्योक्तम् "क्षत्रियो याजको यस्य' इति वाशब्दात्क्वचिद्विप्रादपि 'वपनं द्रविणादानम्' इत्याद्युक्तेः।विशेष आपद्वृत्तेरेकादशे वक्ष्यति 'जीवेन्मृगययापदि' इति॥ १४॥"कृषिगोरक्षवाणिज्यं कुसीदं तुर्यमुच्यते । वार्त्ता चतुर्विधा" इति दशमे श्रीकृष्णोक्तेः । ब्रह्मकुलं ब्राह्मणकुलमनुगच्छति तदुक्तिमनतिक्रम्य स्वीयाचरणं करोतीति तथा । नित्यमिति पदेन कदाचिदपि ब्राह्मणेतरे श्रद्धां न कुर्यादित्यसूचि । ब्रह्मकुलेत्युक्तेर्ब्रह्मकुलाद्भ्रष्टं ब्राह्मणमपि नानुगच्छेदिति भावः । अन्यथा नित्यं वै ब्राह्मणानुग इत्येवोच्येतेति

वार्ता विचित्रा शालीनयायावरशिलोंछनम् ॥ विप्रवृत्तिश्चतुर्धेयं श्रेयसी चोत्तरोत्तरा ॥ १६ ॥ जघन्यो नोत्तमां वृत्तिमनापदि भजेन्नरः ॥ ऋते राजन्यमापत्सु सर्वेषामपि सर्वशः ॥ १७ ॥ ऋतामृताभ्यां जीवेत मृतेन प्रमृतेन वा ॥ सत्यानृताभ्यां जीवेत न श्ववृत्त्या कथंचन ॥ १८ ॥ ऋतमुंछशिलं प्रोक्तममृतं यदयाचितम् ॥ मृतं तु नित्ययाच्ञा स्यात्प्रमृतं कर्षणं स्मृतम् ॥ १९ ॥ सत्यानृतं तु वाणिज्यं श्ववृत्तिर्नीचसेवनम् ॥ वर्जयेत्तां सदा विप्रो राजन्यश्च जुगुप्सिताम् ॥ सर्ववेदमयो विप्रः सर्वदेवमयो नृपः ॥ २० ॥ शमो दमस्तपः शौचं संतोषः क्षांतिरार्जवम् ॥ ज्ञानं दयाच्युतात्मत्वं सत्यं च ब्रह्मलक्षणम् ॥ २१ ॥ शौर्यं वीय धृतिस्तेजस्त्याग आत्मजयः क्षमा ॥ ब्रह्मण्यता प्रसादश्च रक्षा च क्षत्रलक्षणम् ॥२२॥ देवगुर्वच्युते भक्तिस्त्रिवर्गपरिपोषणम् ॥ आस्तिक्यमुद्यमो नित्यं नैपुण्यं वैश्यलक्षणम् ॥२३॥ शूद्रस्य सन्नतिः शौचं सेवा स्वामिन्यमायया ॥ अमंत्रयज्ञो ह्यस्तेयं सत्यं गोविप्ररक्षणम् ॥ २४ ॥ स्त्रीणां च पतिदेवानां तच्छुश्रूषाऽनुकूलता ॥ तद्बंधुष्वनुवृत्तिश्च नित्यं तद्व्रतधारणम् ॥ २५ ॥

विप्रस्य मुख्यानुकल्पभेदेन वृत्त्यंतराण्याह । वार्तेति । वार्ता विचित्रा कृष्यादिरूपा । शालीनं धार्ष्ट्यं विनैव प्राप्तमयाचितम् । यायावरं प्रत्यहं धान्ययाच्ञा शिलं शालिक्षेत्रादौ स्वामित्यक्तकणिशोपादानम् उञ्छनमापणादिपतितकणोपादानम् । शिलोञ्छनद्वयमेकीकृत्य चतुर्धेत्युक्तम् । श्रेयसी उत्तमा ॥ १६ ॥ वृत्तिष्वेव व्यवस्थां दर्शयन्नापद्वृत्तीराह । जघन्यो नीचः उत्तमामध्यापनादिरूपाम् । ऋते राजन्यं क्षत्रियस्तु प्रतिग्रहादन्यां भजेत् ॥ १७ ॥ चतुर्विधां पूर्वोक्तां विप्रवृत्तिमितरेषामपि दर्शयन्नाह । ऋतामृताभ्यामिति ॥ १८ ॥ श्लोकं व्याचष्टे । ऋतमिति ॥ १९ ॥ तयोस्तद्वर्जने हेतुमाह । सर्ववेदमय इति ॥ २० ॥ वर्णानामभिव्यंजकरूपान्धर्मानाह । शम इति चतुर्भिः । अच्युतात्मत्वं श्रीविष्णुपरत्वम् ॥ २१ ॥ शौर्यं युद्धोत्साहः । वीर्यं प्रभावः । तेजः प्रागल्भ्यम् । त्यागो दानम् । आत्मनो मनसो जयः ॥ २२ ॥ २३ ॥ अमंत्रयज्ञो नमस्कारेणैव पंचयज्ञानुष्ठानम् । तथा च याज्ञवल्क्यः । "नमस्कारेण मंत्रेण पंचयज्ञान्न हापयेत" इति ॥ २४ ॥ स्त्रीधर्मानाह ।

विहिता शूद्रधर्मत्वेन स्वामिनो द्विजातेस्सेवैव तस्य वृत्तिरपीत्यर्थः ॥ १५ ॥ विचित्रा बहुधा । धार्ष्ट्यं विनैव अहमेतावन्मात्रं त्वत्तो ग्रहीष्यामि नातो न्यूनमधिकं वेति भाषाबंधो धार्ष्ट्यं तद्विनैव स्वभावतः प्राप्तमित्यर्थः । 'कणिशं सस्यमंजरी' इत्यमरः । उत्तरोत्तरा परापरा ॥ १६ ॥ आपत्स्विति । बहुत्वोक्तेरतीवापत्तीनामाप्तौ सर्वेषां वर्णानां सर्वशः सर्वा वृत्तयो न तु यत्किञ्चिदापदीत्यर्थः । तदुक्तम्—"कुसीदकृषिवाणिज्यं प्रकुर्वीतास्वयं कृतम् । आपत्काले स्वयं कुर्वन्नैनसा युज्यते द्विजः ॥" इत्यंगिरसा ॥ १७ ॥ इतरेषां विप्रेतरेषांमपि ॥ १८ ॥ १९ ॥ नीचसेवनं स्वनिकृष्टजातेः परिचर्या तां च वृत्तिम् । सर्वपूज्यवेददेवरूपत्वात्तयोरपि पूज्यत्वमेव न तु पूजकत्वं तेन वैश्यशूद्रयोस्त्वापदि नीचसेवनेऽपि न दोष इति भावः ॥ २० ॥ शमादयः प्रथमस्कंधे स्वामिचरणैर्व्याख्याताः ॥ २१ ॥ "अधिक्षेपावमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥" इत्युक्तलक्षणं तेजः । धृतिः सत्यपि क्लेशे मनसः स्थैर्यम् । त्यागो मुक्तहस्तता । आत्मनो मनसो जयः स्वाधीनत्वम् । ब्रह्मण्यता ब्राह्मणभक्तिः । प्रसादश्चेतसः प्रफुल्लता । रक्षा प्रबलान्निर्बलानां रक्षणम् ॥ २२ ॥ देवगुरुभ्यां सहितेऽच्युते हरौ भक्तिस्सेवा त्रिवर्गस्य धर्मकामार्थस्य परिपोषणं पालनम् । आस्तिक्यं शास्त्रे विश्वासः । नैपुण्यं शुभकर्मनिष्ठत्वम् 'पुण—शुभे कर्मणि' धातुः ॥ २३ ॥ नमस्कारमंत्रेण प्रणवरहितनमोंतचतुर्थ्यंतमंत्रेण देवेभ्यो नमः पितृभ्यो नम इदमन्नमित्येवं रूपेणेत्यर्थः ॥ २४ ॥ देवः पूज्यः । तदनुकूलता तदनुकूलाचरणम् । तस्य पत्युर्यद्व्रतं गोविप्राद्यर्चनरूपो नियमस्तस्य धारणं करणम् ।

संमार्जनोपलेपाभ्यां गृहमंडलवर्तनैः ॥ स्वयं च मंडिता नित्यं परिमृष्टपरिच्छदा ॥२६॥ कामैरुच्चावचैः साध्वी प्रश्रयेण दमेन च ॥ वाक्यैः सत्यैः प्रियैः प्रेम्णा कालेकाले भजेत् पतिम् ॥२७॥ संतुष्टाऽलोलुपा दक्षा धर्मज्ञा प्रियसत्यवाक् ॥ अप्रमत्ता शुचिः स्निग्धा पतिं त्वपतितं भजेत् ॥२८॥ या पतिं हरिभावेन भजेच्छ्रीरिव तत्परा ॥ हर्यात्मना हरेर्लोके पत्या श्रीरिव मोदते ॥ २९ ॥ वृत्तिः संकरजातीनां तत्तत्कुलकृता भवेत् ॥ अचौराणामपापानामंत्यजांतेवसायिनाम् ॥ ३० ॥ प्रायः स्वभावविहितो नृणां धर्मो युगेयुगे ॥ वेददृग्भिः स्मृतो राजन्प्रेत्य चेह च शर्मकृत् ॥ ३१ ॥ वृत्त्या स्वभावकृतया वर्तमानः स्वकर्मकृत् ॥ हित्वा स्वभावजं कर्म शनैर्निर्गुणतामियात् ॥ ३२ ॥

स्त्रीणामिति पंचभिः । पतिरेव देवो यासां तस्य पत्युरेव शुश्रूषा पादसंवाहनादिभिः । तदनुकूलता च हिताचरणं तस्य यद्व्रतं नियमस्तस्य धारणमाचरणम् । एतच्चतुष्टयं पतिव्रतानां लक्षणं धर्मश्च ॥ २५ ॥ किंच । संमार्जनोपलेपाभ्यामित्यादेः पतिं भजेदित्युत्तरेणान्वयः । परिमृष्टा उद्वर्तनादिना निर्मलीकृताः परिच्छदा गृहोपकरणानि यया ॥२६॥२७॥ किं च । संतुष्टा यथालाभेन तावन्मात्रभोगेऽप्यलोलुपा दक्षाऽनलसा प्रिया सत्या च वाग्यस्याः सर्वत्राप्यप्रमत्ताऽवहिता । अपतितं महापातकशून्यम् । यथाह याज्ञवल्क्यः । "आशुद्धेः संप्रतीक्ष्यो हि महापातकदूषितः" इति ॥ २८ ॥ तत्परा सती भजेत् । श्रीर्हरिमिव हर्यात्मना पत्या सह ॥ २९ ॥ प्रतिलोमजानुलोमजानां वृत्तिमाह वृत्तिरिति । तत्तत्कुलकृता कुलपरंपराप्राप्ता । परंपराप्राप्तमपि चौर्यं हिंसादिकं च प्रतिषेधति । अचौराणामपापानां चेति । तत्तत्प्रदर्शनार्थं कांश्चित्प्रतिलोमजविशेषानाह । अंत्यजेति । "रजकश्चर्मकारश्च नटो बुरुड एव च ॥ कैवर्तमेदभिल्लाश्च सप्तैते अंत्यजाः स्मृताः" अंतेवसायिनस्तु चांडालपुल्कसमातंगादयः । तेषां परंपराप्राप्तैव वस्त्रनिर्णेजनादिवृत्तिरित्यर्थः ॥ ३० ॥ श्रेष्ठादपि परधर्मान्नीचोऽपि स्वधर्म एव श्रेयानित्याह प्राय इति । स्वभावेन सत्त्वादिप्रकृत्या विहितो धर्मः शर्मकृत्सुखहेतुः स्मृतः । कैः वेद एव दृक् चक्षुर्येषां तैः । भगवता चोक्तम् । "श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात्" इति ॥ ३१ ॥ ननु स्वाभाविकस्य कर्मणो बंधुहेतुत्वात्कथं सुखहेतुत्वं

तद्बंधुषु श्वश्रूश्वशुरज्येष्ठादिषु अनुवृत्तिः सेवनम ॥ २५ ॥ अन्यत्स्त्रीधर्ममाह—किं चे ति । गृहे रंगवल्यादिस्वस्तिकादिमंडलरचनैः अम्लद्रव्यैः संघर्षणादिना वा प्रकाशितरीतिमयादिपात्रादिसामग्र्यो यथा सा तथा ॥ २६ ॥ उच्चावचैः कामैर्भोगैः स्वन्नाद्यर्पणैः कालेकालेऽवसरेऽवसरे दिवापर्वादिरहिते समये ॥ २७ ॥ अपतितसेवने प्रमाणमाह—यथाहेति । प्रायश्चित्तेन शुद्धं पुनर्भजेदित्यर्थः ॥ २८ ॥ हरिभावेनास्मिन्पत्यौ हरिः सन्निहित इति भावेन ॥ २९ ॥ कुलपरंपराप्राप्ता यथा नापितरजकादीनां मुंडनवस्त्रनिर्णेजनादिका । अपापानामिति । कुलपरंपराप्राप्तमद्यपानविधवाविवाहादिपापवतां पापाभाव उक्तः । चौर्यंतु तेषामपि प्रतिषिद्धमित्याह—अचोराणामिति । अचौरत्वे सत्येव वृत्तिः कुलकृता विहिता पापाभावश्चेति भावः । मध्यमांगिराः—"चंडालः श्वपचः क्षत्ता सूतो वैदेहिकस्तथा । मागधायोगवौ चैव सप्तैतेंत्यावसायिनः ॥ ब्राह्मण्यां क्षत्रियात्सूतो वैश्याद्वैदेहिकस्तथा । शूद्राज्जातस्तु चंडालः सर्वधर्मबहिष्कृतः ॥ क्षत्रिया मागधं वैश्याच्छूद्रात्क्षत्तारमेवच । शूद्रादयोगवं वैश्या जनयामास वै सुतम् ॥" इति । स्वामिचरणैरंत्येवसायिषु पुल्कसमातंगादयो हि ग्रन्थांतरसंमत्या गणिता इति ज्ञेयम् । इत्यर्थ इति । तेषामपि वृत्तिः परंपरागतैवेति भावः ॥ ३० ॥ प्रायःशब्दप्रयोगात् दुर्जातीनां दुराचारत्यागो नाशर्मकृद्भवतीति ज्ञेयम् ॥ ३१ ॥ अत्राक्षिपति—नन्विति । शनैर्बहु

उप्यमानं बहु क्षेत्रं स्वयं निर्वीर्यतामियात् ॥ न कल्पते पुनः सूत्या उप्तं बीजं च नश्यति ॥ ३३ ॥ एवं कामाशयं चित्तं कामानामतिसेवया ॥ विरज्येत यथा राजन्नाग्निवत्कामबिंदुभिः ॥ ३४ ॥ यस्य यल्लक्षणं प्रोक्तं पुंसो वर्णाभिव्यंजकम् ॥ यदन्यत्रापि दृश्येत तत्तेनैव विनिर्दिशेत् ॥ ३५ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे युधिष्ठिरनारदसंवादे सदाचारनिर्णयो नामैकादशोऽध्यायः ॥ ११ ॥

तत्राह । वृत्त्येति ॥ ३२ ॥ ननु काम्यानि कर्माणि कुर्वतस्तत्फलभोगपरस्य कथं नैर्गुण्यं स्यात् । तदुक्तं प्रह्लादेन । "औपस्थ्यजैह्व्यं बहु मन्यमानः कथं विरज्येत दुरंतमोहः" इत्यादि । तत्राधिकारिभेदेन व्यवस्थां सदृष्टांतामाह । उप्यमानमिति द्वाभ्याम् । पुनः सूत्यै सस्यप्रसवाय ॥ ३३ ॥ कामा आशेरते वासनारूपेण यस्मिं स्तत् । अयं भावः । उत्कटवासनाविष्टस्य सहसैव कामत्यागासंभवाद्वेदोक्तनियमेन बहुशः कामान्भुंजानस्यैव नित्यनैमित्तिकैर्विशुद्धचेतसस्तद्दोषदर्शनेन ययातिसौभरिप्रमुखा नामिव शनैर्विरागो भवति । यथा सवीर्यं क्षेत्रं शनैर्निर्वीर्यं भवति यथा च प्रज्वलितोऽग्निर्न घृतबिंदुभिः शाम्यति महता तु घृतपूरेण शाम्यत्येव तद्वत् । प्रह्लादकृतस्तुतौ कौमार एव निवृत्त्युपदेशो मंदवासनानामधिकारेण । तदुक्तं तत्रैव । "बालानदूषितधियो द्वंद्वारामेरितेहितैः" इति । अतः सर्वमनवद्यम् ॥ ३४ ॥ शमादिभिरेव ब्राह्मणा दिव्यवहारो मुख्यो न जातिमात्रादित्याह । यस्येति । यद्यदि अन्यत्र वर्णांतरेऽपि दृश्येत तद्वर्णांतरं तेनैव लक्षणनिमित्तेनैव वर्णेन विनिर्दिशेत । न तज्जातिनिमित्तेनेत्यर्थः ॥ ॥ ३५ ॥ इति सप्तमे० टी० एकादशोऽध्यायः ॥ ११ ॥

भिर्जन्मभिरित्यर्थः । "स्वधर्मनिष्ठः शतजन्मभिः पुमान्विरिंचतामेति" इत्याद्युक्तेः ॥ ३२ ॥ अत्युत्कटवासनाविशिष्टानां तु वेदोक्तनियमेन कामभोगासंभवाद्बहुशः कामान्निषिद्धेतरान् ययातिसौभरिप्रमुखानामिव भुंजानानामकुटिलचित्तानां विरागः स्यादिति सदृष्टांतमाह द्वाभ्याम् । निर्वीर्यतामेवाह क्वचित्सूत्यै सस्यप्रसवाय न कल्पते क्वचित् उप्तमेव बीजं नश्यति ज्वलति ॥ ३३ ॥ ३४ ॥ यस्य पुंसो वर्णाभिव्यंजकं यल्लक्षणं वर्णे ब्राह्मणादिजातिमभिव्यंजयति यत् तच्च सामान्यतो विहितमेव शमदमादिकं न तु विशेषतो विहितं संध्योपास्त्यादिकं यद्यन्यत्र जात्यंतरेपि दृश्येत तज्जात्यंतरमपि तेनैव ब्राह्मणादिशब्देनैव विनिर्दिशेत् । इत्यर्थ इति । ब्राह्मणादितुल्यमादरमेव लक्षयति न तु तत्त्वेनार्चनादिकमिति । न च 'परधर्मो भयावहः' इति वाच्यं शमदमादीनां सार्ववर्णिकत्वेन परधर्मत्वाभावादिति भावः । "अहिंसा सत्यमस्तेयमकामक्रोधलोभता । भूतप्रिय हितहा च धर्मोऽयं सार्ववर्णिकः॥" इत्येकादशे श्रीकृष्णोक्तेः । अत्र विशेषमाह—"देहांतरं विना धर्मसादृश्येनापि वर्णता । योच्यते सा न तद्वर्णपूजोद्वाहादिषु स्थिता ॥" इति वारतंतव्युक्तेरमुख्यः क्षत्रियादिरूपो ब्राह्मणो मुख्यब्राह्मणपूजोद्वाहादिषु न योज्यः । किंतु पुरोहितोयं राजेतिवत्क्षत्रियोयं ब्राह्मण इति निर्देश्य एवेति भावः । एवमन्यत्रापि ज्ञेयम् । अन्यथा जगद्वैप्लव्यं स्यादिति । किञ्च—'ब्राह्मणो जन्मना श्रेयान्' इत्यादिभगवद्वचनमसमंजसं स्यात् । किंच "नाभिवाद्यास्तु विप्रेण क्षत्रियाद्याः कथंचन । ज्ञानकर्मगुणोपेता यद्यप्येते बहुश्रुताः ॥ अभिवाद्य द्विजः शूद्रं स चैलं स्नानमाचरेत् । ब्राह्मणानां शतं सम्यगभिवाद्य विशुध्यति॥" इति शातातपोक्तिरपि भज्येत । वस्तुतस्तु—"ब्रह्मवीर्यं ब्रह्मक्षेत्रं संस्कारा ब्रह्मसंभवाः । ब्राह्मणाचरणाद्ब्रह्मविद्याभिर्ब्राह्मणो भवेत् ॥ लक्षणत्रयहीनो यस्तंत्रमार्गेण सिध्यति॥" इति मेरुतंत्रोक्तेः । पञ्चलक्षणलक्षितस्यैव ब्राह्मणत्वमिति तत्त्वम् । "ब्राह्मण्यां ब्राह्मणाज्जातो ब्राह्मणः स इति श्रुतिः" इति पारिजातेऽपि कर्मतो मुख्यं ब्राह्मण्यं निरस्तमित्यलं प्रसक्तानुप्रसक्त्येति ॥ ३५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥

नारद उवाच ॥ ब्रह्मचारी गुरुकुले वसन्दांतो गुरोर्हितम् ॥ आचरन्दासवन्नीचो गुरौ सुदृढसौहृदः ॥१॥ सायंप्रातरुपासीत गुर्वग्न्यर्कसुरोत्तमान् ॥ उभे संध्ये च यतवाग् जपन्ब्रह्म सनातनम् ॥ २ ॥ छंदांस्यधीयीत गुरोराहूतश्चेत्सुयंत्रितः ॥ उपक्रमेऽवसाने च चरणौ शिरसा नमेत् ॥ ३ ॥ मेखलाजिनवासांसि जटादंडकमंडलून् ॥ बिभृयादुपवीतं च दर्भपाणिर्यथोदितम् ॥ ४ ॥

द्वादशे वर्ण्यते धर्मो ब्रह्मचारिवनस्थयोः ॥ चतुर्णामाश्रमाणां च साधारण्येन कश्चन ॥ १ ॥ वर्णादीनां धर्मा उक्ता इदानीमाश्रमधर्मा उच्यंते । तत्रास्मिन्द्वादशेऽध्याये ब्रह्मचारिवानप्रस्थयोरसाधारणाश्चतुर्णां साधारणाश्चोच्यंते । त्रयोदशे यतेर्धर्माः । चतुर्दशे गृहस्थस्य । पंचदशे सर्वधर्मसारसंग्रहः ॥ ब्रह्मचारी गुरुकुले वसन्गुर्वादीनुपासीतेत्युत्तरेणान्वयः ॥ १ ॥ तानाह । सायमिति । ब्रह्म गायत्रीं जपन् संध्यात्रयमुपासीत । उभे संध्ये तु यतवाक् । सायं प्रातः संध्याकालनिमित्तं मौनं कुर्यादित्यर्थः ॥ २ ॥ उपक्रमे आदाववसाने अंते गुरोश्चरणौ नमेत् ॥ ३ ॥ यथोदितमिति । पालाशो दंडो ब्राह्मणस्येत्यादिनिय

(१) नीचो नम्रः सन् ॥ १ ॥ चकारान्मध्याह्नेऽपि संध्यामुपासीत । इत्यर्थ इति । मौननियमेन संध्यानिषेधो न शंक्य इति भावः । द्वयोरेव संध्ययोः स्वीकारे "निशायां वा दिवा वापि यदज्ञानकृतं भवेत् । त्रिकालसंध्याकरणात्तत्सर्वं विप्रणश्यति ॥" इति याज्ञवल्क्येन कथमत्र त्रिकालसंध्येत्युक्तम् । छांदोगपरिशिष्टे कात्यायनेनाप्युक्तम्—"एतत्संध्यात्रयं प्रोक्तं ब्राह्मण्यं यदधिष्ठितम् । यस्य नास्त्यादरस्तत्र न स ब्राह्मण उच्यते ॥" इति । किं च "संधौ सध्यामुपासीत नोदिते नास्तगे रवौ । संध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ॥" इति याज्ञवल्क्यः । अत एव शातातपेन मध्याह्नसंध्याकालोऽप्युक्तः—"अध्यर्द्धयामादासायं संध्या माध्याह्निकी मता" इति । यत्तु सन्धौ रात्रिदिनयोर्या ध्यायते सा संध्येति योगबलात्संध्याद्वयमेत्र लभ्यते न तु मध्याह्ने किं तु सायं प्रातरिति द्वयमेवेति तन्न चतुरस्रम्यं 'रूढिर्योगमपहरति' इति न्यायात् । समुदायशक्ती रूढिः अवयवशक्तिर्योगः । संध्याशब्दस्य रूढित्वं तु "प्राह्णापराह्णमध्याह्नास्त्रिसंध्यम्' इत्यमरोक्तेः । अन्यथा प्रतियामादिसंधिमालम्बानन्ताः सन्ध्याः स्युरित्यलं प्रसक्तानुप्रसक्त्या । एकादशस्कंधे एतद्विस्तरेण वर्णयिष्यामो यदपि तथापि प्रसंगात्किञ्चित्कथनम् । तदाह—"संध्याकाले व्यतिक्रांते जप्त्वा मंत्रं पुनर्मनः । वैश्वानरमृचं वाचं ततः संध्यामुपाचरेत् ॥" इति । मंत्रास्तु—"ॐ पुनर्मनः पुनरायुः पुनर्म्मे आगन् । पुनः प्राणः पुनरात्मा म आगन् । पुनश्चक्षुः पुनः श्रोत्रम्म आगन् (१) । वैश्वानरो अदब्धास्तनूपा अग्निर्नः पातु दुरितादवद्यात् (२) । ऋचं वाचं प्रपद्ये चक्षुः श्रोत्रं प्रपद्ये वागोजः सहो नो मयि प्राणापानौ (३) इति संहितायाम् ॥ २ ॥ सुयंत्रितश्चापल्यरहितः । पाठारंभे पाठांते च शिरसा गुरोः पादौ वंदेतेत्यर्थः ॥ ३ ॥ 'पालाशो विप्रस्य बैल्वः क्षत्रियस्यौदुंबरो वैश्यस्य' इति पराशरः ॥ ४ ॥

सायंप्रातश्चरेद्भैक्षं गुरवे तन्निवेदयेत् ॥ भुंजीत यद्यनुज्ञातो नो चेदुपवसेत्क्वचित् ॥ ५ ॥ सुशीलो मितभुग् दक्षः श्रद्दधानो जितेंद्रियः ॥ यावदर्थं व्यवहरेत्स्त्रीषु स्त्रीनिर्जितेषु च ॥ ६ ॥ वर्जयेत् प्रमदागाथामगृहस्थो बृहद्व्रतः ॥ इंद्रियाणि प्रमाथीनि हरंत्यपि यतेर्मनः ॥ ७ ॥ केशप्रसाधनोन्मर्द स्नपनाभ्यंजनादिकम् ॥ गुरुस्त्रीभिर्युवतिभिः कारयेन्नात्मनो युवा ॥ ८ ॥ नन्वग्निः प्रमदा नाम घृतकुंभमयः पुमान् ॥ सुतामपि रहो जह्यादन्यदा यावदर्थकृत् ॥ ९ ॥ कल्पयित्वात्मना यावदाभासमिदमीश्वरः ॥ द्वैतं तावन्न विरमेत्ततो ह्यस्य विपर्ययः ॥ १० ॥ एतत्सर्वं गृहस्थस्य समाम्नातं यतेरपि ॥ गुरुवृत्तिर्विकल्पेन गृहस्थस्यर्तुगामिनः ॥ ११ ॥ अंजनाभ्यंजनोन्मर्दस्त्र्यवलेखामिषं मधु ॥ स्रग्गंधलेपालंकारांस्त्यजेयुर्ये धृतव्रताः ॥ १२ ॥

ममनतिक्रम्य । जटाधारणं तु केशप्रसाधनाभावमात्रम् ॥ ४ ॥ ५ ॥ यावदर्थं यथोपयोगमेव ॥ ६ ॥ बृहद्व्रतो ब्रह्मचर्यवान्गृहस्थव्यतिरिक्तः सर्वोऽपि प्रमदागाथां वर्जयेत् । तत्र हेतुः । इंद्रियाणि बलवंति संयतस्यापि मनो हरंतीति ॥ ७ ॥ ८ ॥ न कारयेदित्यत्र हेतुः । नन्विति । रहः एकांते । अन्यदा केशप्रसाधनादिव्यतिरिक्तावसरे अनेकांतावसरे वा । यावदर्थं तदुक्तं कुर्यात् ॥ ९ ॥ ननु मिथ्यात्वादतिकश्मलत्वाच्च स्वयं त्यक्तप्रायं स्यादि जह्यादिति कोऽयमतिनिर्बंधस्तत्राह । कल्पयित्वेति । आत्मना स्वरूपसाक्षात्कारेणेदं देहेंद्रियाद्याभासमात्रं कल्पयित्वा निश्चित्य यावदसौ जीव ईश्वरः स्वतंत्रो न भवेत्तावद्द्वैतमयं पुमानियं स्त्रीत्यादिभेदो न विरमेत् ततः किमत आह । ततो हि द्वैतात् । विपर्ययो गुणाध्यासेन भोग्यताबुद्धिः । अतो जह्यादेवेत्यर्थः ॥ १० ॥ एतत्सर्वं सुशील इत्याद्युक्तं गृहस्थस्य विशेषमाह । गुरुवृत्तिरिति ॥ ११ ॥ अंजनादीनामामिषांतानां द्वंद्वैक्यम् । अंजनं शरीरस्य । अभ्यंजनं शिरसः । स्त्रियं चावलेखां च चित्रकर्म स्त्रीणां कुड्यादौ लेखनं वा तन्निरीक्षणं वा अत्राभ्यंगादि स्वरू

क्वचिदपराधादिसत्त्वे ॥ ५ ॥ यावदर्थं गुरुसेवार्थं गुरुगृहे भिक्षार्थं गृहस्थगृहेषु च यथोपयोगमेव ॥ ६ ॥ ७ ॥ कारयेदिति गुरुपत्न्यो हि शिष्यमपि पुत्रमिव वात्सल्येन पश्यंत्यो यदि केशप्रसाधनादिकं स्वेच्छयैव कुर्वन्ति तदपि न कारयेदित्यर्थः ॥ ८ ॥ यावतावस्थानेनार्थः प्रयोजनं सिध्येत्तावदेव स्थितिं कुर्यादित्यर्थः ॥ ९ ॥ अत्राक्षिपति–ततो भेदोपरमाभावात् । इत्यर्थ इति । संसृतिहेतुत्वात्त्याज्य एवेति भावः । अत्र विश्वनाथः–ननु निवृत्ताभिमानस्य विजितेंद्रियस्य ज्ञानिनो युवतयः किमपकर्तुं प्रभवेयुस्तत्राह–कल्पयित्वेति ' ईश्वरो ज्ञानसमर्थोपीदं देहदैहिकविषयाभिमानादिकं बाधितानुवृत्तिन्यायेनाभासं कल्पयित्वा तत्त्वज्ञानेन विजितं नाममात्रेणैव स्थितमकिञ्चित्करं कृत्वापि यावदात्मना मनसा सह वर्तते तावद्द्वैतमहं पुमानियं स्त्री इदं मे प्रियमिति भेदबुद्धिर्न विरमेत् ततश्च विपर्ययः पूर्ववत्संसारावृत्तिः । यद्वा–ननु त्यक्तसुताभगिन्यादिबंधुवर्गस्य जितेंद्रियस्य किमस्माद्भयं तत्राह–कल्पयित्वेति । व्यवहारं व्यावहारिकं वस्तु च त्यक्त्वापि आत्मना मनसा यावत् यत्प्रमाणमिदमाभासमियं मे भगिन्येत्रेयं मातेयं सुतेत्यादिसंबंधाभासं कल्पयित्वेश्वरस्तत्तत्कृतस्नेहोत्थसुखेनेशितस्तावत्तत्प्रमाणकं द्वैतं भेदो न विरमेत् । नन्वस्य स्तोकत्वात्कल्पितत्वाच्च न काचिच्चिंता तत्राह–ततो हीति ॥ १० ॥ गुरुवृत्तिर्गुर्वनुवृत्तिः । विकल्पेन व्यवस्थितविकल्पेन प्राप्तावसरेण कदाचित्कर्तव्याऽवसराप्राप्तौ न कर्तव्येत्यर्थः ॥ ११ ॥ गंधलेपः सुगंधचंदनादिना तिलकादिविधानम् । आमिषं तु "प्राण्यंगचूर्णं चर्मांबु जंबीरं बीजपूरकम् । अयज्ञशिष्टमाषादि यद्विष्णोरनिवेदि

उषित्वैवं गुरुकुले द्विजोधीत्यावबुध्य च ॥ त्रयीं सांगोपनिषदं यावदर्थं यथाबलम् ॥ १३ ॥ दत्त्वा वरमनुज्ञातो गुरोः कामं यदीश्वरः ॥ गृहं वनं वा प्रविशेत् प्रव्रजेत्तत्र वा वसेत् ॥ १४ ॥ अग्नौ गुरावात्मनि च सर्वभूतेष्वधोक्षजम् ॥ भूतैः स्वधामभिः पश्येदप्रविष्टं प्रविष्टवत् ॥ १५ ॥ एवंविधो ब्रह्मचारी वानप्रस्थो यतिर्गृही ॥ चरन् विदितविज्ञानः परं ब्रह्माधिगच्छति ॥ १६ ॥ वानप्रस्थस्य वक्ष्यामि नियमान् मुनिसंमतान् ॥ याना तिष्ठन्मुनिर्गच्छेदृषिलोकमिहांजसा ॥ १७ ॥ न कृष्टपच्यमश्नीयादकृष्टं चाप्यकालतः ॥ अग्निपक्वमथामं वा अर्कपक्वमुताहरेत् ॥ १८ ॥ वन्यैश्चरुपुरोडाशान्निर्वपेत् कालचोदितान् ॥ लब्धे नवेनवेऽन्नाद्ये पुराणं तु परित्यजेत् ॥ १९ ॥ अग्न्यर्थमेव शरणमुटजं वाऽद्रिकंदराम् ॥ श्रयेत हिमवाय्वग्निवर्षार्कातपषाट् स्वयम् ॥ २० ॥ केशरोमनखश्मश्रुमलानि जटिलो दधत् ॥ कमंडल्वजिने दंडवल्कलाग्निपरिच्छदान् ॥ २१ ॥

पतो निषिध्यते । पूर्वं तु कथंचिदापदि प्राप्तमपि स्वीकर्तृकं निषिद्धमिति भेदः ॥ १२ ॥ अंगैः शिक्षादिभिरुपनिषद्भिश्च सहितां वेदत्रयीमधीत्यावबुध्य च तदर्थं च विचार्य। यावदर्थं स्वाधिकारानुसारेण ॥ १३ ॥ यदीश्वरः शक्तस्तर्हि गुरोः काममपेक्षितं वरं दत्त्वा यथाधिकारं गृहस्थाद्याश्रमं स्वीकुर्यात्प्रव्रजेत् वा तत्रैव वसेत् । नैष्ठिकः स्या दित्यर्थः ॥ १४ ॥ स्वधामभिः स्वाश्रयैर्भूतैर्जीवैः सह तन्नियंतृतया ॥ १५ ॥ चरन्नेवमाचरन् । विदितं विज्ञानं विज्ञेयं येन सः ॥ १६ ॥ ऋषिलोकं महर्लोकम् ॥ ॥ १७ ॥ अकृष्टमकृष्टपच्यम् । अकालतः पाककालात्पूर्वमेव निष्पन्नमित्यर्थः । अर्कपक्वं फलादि आहरेदश्नीयात् ॥ १८ ॥ वन्यैर्नीवारादिभिश्चरुपुरोडाशान् । कालचो दितान्नित्यान् । पुराणं पूर्वसंचितम् ॥ १५ ॥ हिमादीन्सहेत इति तथा ॥ २० ॥ केशादीन्मलं चाप्रक्षालनेन धारयन् । कमंडल्वादींश्च दधत् ॥ २१ ॥

तम् ॥ दग्धमन्नं मसूरं च मांसं चेत्यष्टधामिषम् । गोछागीमहिषीदुग्धादन्यदुग्धं तु चामिषम् ॥ द्विजक्रीतरसाः सर्वे लवणं भूमिजं तथा । ताम्रपात्रस्थितं गव्यं जलं पल्वलसंस्थितम् ॥ आत्मार्थं पाचितं चान्नं तथा पर्युषितं च यत् । प्रेतान्नं शूद्रशेषान्नं कन्यावित्तं तथैव च ॥ पतितान्नं चामिषं स्यात्तत्त्याज्यं सर्वदा बुधैः ॥ " इति पाद्मादौ वर्णितम् ॥ १२ ॥ आदिना कल्पा दिग्रहः । " शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणः । छंदोविचितिरित्येवं षडंगो वेद उच्यते ॥ " इत्युक्तेः उपनिषद्भिर्ब्रह्मप्रतिपादिकाभिः केनादिभिः । यावदर्थं स्वसामर्थ्यानुरूपं द्रव्या दियथाबलं स्वबलानुसारेण च स्वबलसाध्यं न त्वहं सुमेरुशृंगमानंयिष्यामि कुर्वाज्ञां गुरो इत्यादि न वदेदिति भावः ॥ १३ ॥ इत्यर्थ इति । यावदायुर्गुरुसेवनपूर्वकं शास्त्राभ्यासस्यैव नैष्ठिकपदार्थत्वादिति भावः ॥ १४ ॥ मुख्यप्रवेशाभावादप्रविष्टमित्यर्थः ॥ १५ ॥ एवंविधः पूर्वोक्तलक्षणलक्षितः ॥ १६ ॥ यान्नियमान् । आतिष्ठन्ननुष्ठन् ॥ १७ ॥ कृष्टपच्यं सीरोत्कृष्टक्षेत्रोद्भूतम् । अकृष्टमकृष्टपच्यम् ॥ १८ ॥ चोदितान् विहितान् । आग्रहायणिकादीष्टीरित्यर्थः । आद्यं कंदादि ॥ १९ ॥ अग्न्यर्थमग्निरक्षार्थम् । उटजं पर्णशालाम् ॥ २० ॥ मलं च दन्ताद्यधावनादि । अग्नि

चरेद्वने द्वादशाब्दानष्टौ वा चतुरो मुनिः ॥ द्वावेकं वा यथा बुद्धिर्न विपद्येत कृच्छ्रतः ॥२२॥ यदाऽकल्पः स्वक्रियायां व्याधिभिर्जरयाऽथ वा ॥ आन्वीक्षिक्यां वा विद्यायां कुर्यादनशनादिकम् ॥ २३ ॥ आत्मन्यग्नीन् समारोप्य संन्यस्याहंममात्मताम् ॥ कारणेषु न्यसेत् सम्यक् संघातं तु यथाऽर्हतः ॥ २४ ॥ खे खानि वायौ निःश्वासांस्तेजस्यूष्माणमात्मवान् ॥ अप्स्वसृक्श्लेष्मपूयानि क्षितौ शेषं यथोद्भवम् ॥ २५ ॥ वाचमग्नौ सवक्तव्यामिंद्रे शिल्पं करावपि ॥ पदानि गत्या वयसि रत्योपस्थं प्रजापतौ ॥ २६ ॥ मृत्यौ पायुं विसर्गं च यथास्थानं विनिर्दिशेत् ॥ दिक्षु श्रोत्रं सनादेन स्पर्शमध्यात्मनि त्वचम् ॥ २७ ॥ रूपाणि चक्षुषा राजञ्ज्योतिष्यभिनिवेशयेत् ॥ अप्सु प्रचेतसा जिह्वां घ्रेयैर्घ्राणं क्षितौ न्यसेत् ॥२८॥ मनो मनोरथैश्चंद्रे बुद्धिं बोध्यैः कवौ परे ॥ कर्माण्यध्यात्मना रुद्रे यदहंममता क्रिया ॥ सत्त्वेन चित्तं क्षेत्रज्ञे गुणैर्वैकारिकं परे ॥२९॥

कृच्छ्रतस्तपःक्लेशाद्यथा बुद्धिर्न नश्येत्तथा चरेत ॥२२॥ द्वादशाब्दाद्यनंतरमपि यदि स्वधर्मानुष्ठाने शक्तस्तर्हि वन एव वसेत् । यदि तु ज्ञानाभ्यासे योग्यस्तर्हि संन्यसेदित्युत्तराध्याये वक्ष्यति । तदुभयरहितस्य तु यत्कृत्यं तदाह । यदाऽकल्पोऽसमर्थः । आन्वीक्षिक्यां विद्यायां ज्ञानाभ्यासे ॥ २३ ॥ अनशनादि करिष्यतः पूर्वकृत्यमाह । आत्मनीत्यादि यावत्समाप्ति । यथाऽर्हतो यथायोग्यं स्वकारणेष्वाकाशादिषु संघातं देहं न्यसेत्प्रविलापयेत् ॥ २४ ॥ तदेव विभज्य दर्शयति । खे आकाशे खानि देहगतच्छिद्राणि । आत्मवान्धीमान् । शेषमस्थिमांसादिकठिनांशम् ॥ २५ ॥ एवं स्थूलशरीरस्य लयमुक्त्वा लिंगशरीररूपस्याध्यात्मादित्रयस्य लयमाह । वाचमित्यादिना । तत्र यद्यपि यथोद्भवं लयस्य युक्तत्वादध्यात्मादीनां स्वस्वकारणेषु राजसाहंकारादिषु लयो वाच्यस्तथापीह तेषां लयभावनेयमद्वितीयात्मप्रतिपत्तिपरेति यथाकथंचिल्लये भाव्ये देवतानां प्रवर्तकत्वेन प्राधान्यादिंद्रियतद्विषययोर्देवतासु लयः कथ्यते । वक्तव्यसहितां वाचमग्नौ न्यसेत् एवं सर्वत्र । पदानि पादौ । वयसि विष्णौ ॥२६॥ सनादेन शब्देन सह । अध्यात्मनि वायौ । अध्यात्मविदिति पाठे वायाविति ज्ञातव्यम् ॥ २७ ॥ ज्योतिष्यादित्ये । रसगंधयोस्त्विंद्रियाद्याकर्षकत्वेन प्राधान्यविवक्षया देवतासहितस्येंद्रियस्य विषये लयमाह । प्रचेतसा सह जिह्वां रसनमप्सु रसरूपासु । घ्राणशब्देनाश्विनोरप्युपलक्षणम् अश्विभ्यां सह घ्राणं घ्रेयैर्गंधैरुपलक्षितायां क्षितावित्यर्थः ॥ २८ ॥ परे कवौ ब्रह्मणि ।

परिच्छदाः दर्भसमिदादयः । यद्वा—अग्निग्रहणार्थं लोहनिर्मितद्विफालयंत्रं भस्मनिराकरणाद्यर्थं काष्ठनिर्मितमध्यदंडत्रिकोणपट्टं फूत्कारयंत्रञ्च ॥ २१ ॥ २२ ॥ आन्वीक्षिक्यां वाऽकल्प इति ॥ २३ ॥ आत्मनि स्वस्मिन् । अग्नीन् गार्हपत्यादीन् । धारणया समारोप्य । न्यासो लयभावनम् ॥ २४ ॥ तदेव न्यसनमेव । ‘ आत्मा बुद्धौ धृतौ जीवे ’ इत्यभिधानात् ॥ २५ ॥ वेति सर्वत्र प्राप्नोतीति वया विष्णुः ‘ वी—गतिव्याप्त्यादौ ’ इत्यतोऽसुच् ॥ २६ ॥ यथास्थानं स्थानमनतिक्रम्य तत्तत्स्थानं स्पृष्ट्वा विनिर्दिशेत् । प्रथमम् इमां वाचमग्नौ विलापयामीति प्रयुंजीत ततोभिनिवेशयेदित्यन्वयः ॥ २७ ॥ प्रकृष्टं चेतो यत्र स प्रचेता मधुरादिरसस्तेन सहाप्सु जलाधिष्ठातरि वरुणे इति वार्थः । घ्रेयैर्विविधगंधैः । इत्यर्थ इति । क्षितिशब्देन तदधिष्ठातृदेवता ज्ञेयाऽश्विनोरित्यर्थः ॥ २८ ॥ मनोरथैर्मननीयैर्विषयैः । बोध्यैर्बुद्धिविषयैः । कर्माणि तद्विषयान्

अप्सु क्षितिमपो ज्योतिष्यदो वायौ नभस्यमुम् ॥ कूटस्थे तच्च महति तदव्यक्तेऽक्षरे च तत् ॥ ३० ॥ इत्यक्षरतयात्मानं चिन्मात्रमवशेषितम् ॥ ज्ञात्वाऽद्वयोथ विरमेद्दग्धयोनिरिवानलः ॥ ३१ ॥ इति श्रीमद्भा० महा० सप्तमस्कंधे द्वादशोऽध्यायः ॥ १२ ॥ नारद उवाच ॥ कल्पस्त्वेवं परिव्रज्य देहमात्रावशेषितः ॥ ग्रामैकरात्रविधिना निरपेक्षश्चरेन्महीम् ॥ १ ॥ बिभृयाद्यद्यसौ वासः कौपीनाच्छादनं परम् ॥ त्यक्तं न दंडलिंगादेरन्यत् किंचिदनापदि ॥ २ ॥ एक एव चरेद्भिक्षुरात्मारामोऽनपाश्रयः ॥ सर्वभूतसुहृच्छांतो नारायणपरायणः ॥ ३ ॥ पश्येदात्मन्यदो विश्वं परे सदसतोऽव्यये ॥ आत्मानं च परं ब्रह्म सर्वत्र सदसन्मये ॥४॥ सुप्तप्रबोधयोः संधावात्मनो गतिमात्मदृक् ॥ पश्यन्बंधं च मोक्षं च मायामात्रं न वस्तुतः॥५॥

अध्यात्मनाऽहंकारेण । अध्यात्मतामिति पाठे कर्माण्यहंकारं चेत्यर्थः । कथंभूते रुद्रे । यद्यस्मादहंममतापूर्विका क्रिया भवति तस्मिन् सत्त्वेन चेतनया गुणै गुणकार्यैः प्रागवशिष्टैर्देवैः सह यद्वा सत्त्वादिभिर्गुणैर्हेतुभूतैः । वैकारिकं भोक्तृत्वादिविकारवंतं क्षेत्रज्ञं परे निर्विकारे ब्रह्मणि ॥ २९ ॥ ननु विकारवतः कथं परेऽविकारे लयः स्यात् विकारहेतूनां सर्वोपाधीनां लयद्वारेणेत्याह । अप्स्विति । अदो ज्योतिः । तच्च नभः कूटस्थेऽहंतत्त्वे । तच्च कूटस्थं महति महत्तत्त्वे । तदव्यक्ते प्रधाने । तच्चाव्यक्तमक्षरे परमात्मनि ॥ ३० ॥ इति सर्वोपाधिलयाद्धेतोरवशेषितं चिन्मात्रमात्मानं क्षेत्रज्ञमक्षरतया ज्ञात्वाऽद्वयः सन्विरमेत् । दग्धकाष्ठो यथाऽनलः ॥ ३१ ॥ इति सप्तमे टीकायां द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशे यतेर्धर्मः साधकस्योच्यते महान् ॥ अवधूतेतिहासेन सिद्धावस्था च वर्ण्यते ॥ १ ॥ एवं ध्यात्वा कल्पोऽनशनादिकं कुर्यात् । आन्वीक्षिक्यां कल्पस्त्वेवं ध्यात्वा परिव्रज्येति संबंधः । कियदत्र त्याज्यं देहव्यतिरिक्तं सर्वमित्याह । देहमात्रेति । तस्य धर्मानाह । ग्रामैकरात्रेति नवभिः ॥ १ ॥ कौपीनं गुह्यमाच्छाद्यते यावता तावन्मात्रं परं केवलमन्यदिति वा त्यक्तं प्रैषोच्चारणात्पूर्वमेव ॥ २ ॥ ३ ॥ सदसतः परे कार्यकारणव्यतिरिक्ते ॥ ४ ॥ नन्वात्मानं परं ब्रह्मेति कथं सामानाधिकरण्यनिर्देशः न हि बद्धमुक्तयोरैक्यं संभवति तत्राह । सुप्तेति । सुषुप्तौ हि तमसावृतमात्मतत्त्वं जाग्रत्स्वप्नयोस्तु विक्षिप्तं प्रकाशते संधौ तु न तमो नापि विक्षेपः । अतस्तदाऽऽत्मदृगात्मानं लक्षीकृत्य स्थितः सन्नात्मनो गतिं तत्त्वं पश्यन् अत एव बंधं मोक्षं च मायामात्रं पश्यन् आत्मानं परं ब्रह्म सर्वत्र पश्येदित्यन्वयः ।

क्षेत्रज्ञे चित्ताधिष्ठातरि वासुदेवे वासुदेवस्य गुणकार्याभावात्तदितरैरित्यर्थः । क्षेत्रज्ञपदस्य मुख्यार्थमाह—यद्वेति । वैकारिकं क्षेत्रज्ञं जीवम् ॥ २९ ॥ अत्राक्षिपति—नन्विति । अमुं वायुम् ॥ ३० ॥ अथाद्वयत्वे सति विरमेदतः परं कृत्याभावाद्यथासर्वस्मिन्काष्ठे दग्धे ततः परं दग्धव्याभावाद्वह्निर्विरमति तद्वदित्यर्थः ॥ ३१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ साधकस्यात्मावगतौ यतमानस्य ( १ ) तस्य यतेः ॥१॥ कौपीनं गुह्यस्थानम् 'कौपीनं स्यादकार्ये च चीरगुह्यप्रदेशयोः' इति मेदिनी । प्रैषा मंत्रविशेषाः । आपदि तु देहरक्षार्थं त्यक्तमपि धारयेदित्यर्थः ॥२॥३॥४॥ अत्राक्षिपति—नन्विति ।

नाभिनंदेद् ध्रुवं मृत्युमध्रुवं वाऽस्य जीवितम् ॥ कालं परं प्रतीक्षेत भूतानां प्रभवाप्ययम् ॥ ६ ॥ नासच्छास्त्रेषु सज्जेत नोपजीवेत जीविकाम् ॥
वादवादांस्त्यजेत्तर्कान्पक्षं कंच न संश्रयेत् ॥ ७ ॥ न शिष्याननुबध्नीत ग्रंथान् नैवाभ्यसेद्बहून् ॥ न व्याख्यामुपयुंजीत नारंभानारभेत्क्वचित् ॥८॥
न यतेराश्रमः प्रायो धर्महेतुर्महात्मनः ॥ शांतस्य समचित्तस्य बिभृयादुत वा त्यजेत् ॥ ९ ॥ अव्यक्तलिंगो व्यक्तार्थो मनीष्युन्मत्तबालवत् ॥
कविर्मूकवदात्मानं स दृष्ट्या दर्शयेन्नृणाम् ॥ १० ॥ अत्राप्युदाहरंतीममितिहासं पुरातनम् ॥ प्रह्लादस्य च संवादं मुनेराजगरस्य च ॥ ११ ॥
तं शयानं धरोपस्थे कावेर्यां सह्यसानुनि ॥ रजस्वलैस्तनूदेशैर्निगूढामलतेजसम् ॥ १२ ॥ ददर्श लोकान्विचरँल्लोकतत्त्वविवित्सया ॥ वृतोऽमात्यैः
कतिपयैः प्रह्लादो भगवत्प्रियः ॥ १३ ॥ कर्मणाऽऽकृतिभिर्वाचा लिंगैर्वर्णाश्रमादिभिः ॥ न विदंति जना यं वै सोऽसाविति न वेति च ॥ १४ ॥

तदुक्तं योगग्रंथे । "निद्रादौ जागरस्यांते यो भाव उपजायते ॥ तं भावं भावयन्नित्यं मुच्यते नेतरो यतिः" इति ॥५॥ अस्य देहस्य प्रभवोऽप्ययश्च यस्मात्तं कालम् ॥६॥ असच्छास्त्रेष्वनात्मपरेषु जीविकां नक्षत्रविद्यादिवृत्तिम् । वादवादान् जल्पवितंडादिनिष्ठान् । कं च कमपि पक्षं निर्बंधेन न संश्रयेत् ॥७॥ शिष्यान्नानुबध्नीत प्रलोभनादिना बलान्नापादयेत् । आरंभान्मठादिव्यापारान् ॥ ८ ॥ परमहंसस्य विशेषमाह न यतेराश्रमो धर्मार्थः । कथंभूतस्य यतेः महात्मनः । तस्य लक्षणं शांतस्येत्यादि । प्राय इत्यस्यायं भावः । ज्ञानोत्पत्तिपर्यंतं बहूदकादिलिंगमाश्रित्य सत्त्वशुद्ध्यर्थं यमान्नियमांश्चाचरन्नेव ज्ञानोत्पत्तौ यतेत । उत्पन्ने तु ज्ञाने न नियमैः कृत्यमस्ति । यमाश्च स्वत एव स्युः । अतस्तदा लिंगादिभिः प्रयोजनाभावाल्लोकसंग्रहार्थं धारयेद्वा त्यजेद्वेति ॥ ९ ॥ तस्यैव ज्ञानदार्ढ्याभावे योगभ्रंशपरिहारार्थमाह । न बहिर्व्यक्तं लिंगं यस्य व्यक्तोऽर्थः प्रयोजनमात्मानुसंधानं यस्य स मनीष्यप्युन्मत्तवद्बालवच्च कविरपि मूकवदात्मानं नृणां दृष्ट्या दर्शयेत् । ते यथोन्मत्तादिरूपं मन्येरंस्तथा वर्तेत । स्वदृष्ट्येति पाठे बाह्यानुसंधानाभावेनेत्यर्थः ॥ १० ॥ परमहंसधर्ममेवेतिहासेन स्फुटयति । अत्रापीति यावदध्यायसमाप्ति । अजगरव्रतस्य मुनेश्च ॥ ११ ॥ धरोपस्थे भूपृष्ठे सह्याद्रेस्तटे रजोभिर्धूसरैस्तनूदेशैर्देहावयवैर्निगूढममलं तेजो यस्य तम् ॥ १२ ॥ १३ ॥ कर्मादिभिर्जना यं न विदुस्तं पादयोः शिरसा स्पृशन्नत्वा अप्राक्षीदित्युत्त

यतो न तमो नापि विक्षेपः अतो हेतोः । अत एवात्मगतिदर्शनादेव । तत् संधिस्थानफलम् । यो भाव उन्मनीभावः । इतरस्तद्भिन्नः ॥ ५ ॥ ध्रुवं निश्चितम् ॥ ६ ॥ अनात्मपरेषु चिकित्सालंकारादिप्रतिपादकेषु । विजिगीषुकथा जल्पः स्वपक्षस्थापनहीना वितंडा तन्निष्ठान् । निरर्थवादं न कुर्यादित्यर्थः । पक्षं वैष्णवशैवादिरूपम् ॥ ७ ॥ बहून्ग्रंथान् वेदांततदुपयोगिग्रंथेतरग्रंथान् ज्योतिःशास्त्रादीन् । व्याख्यामपि वेदांतेतरकाव्यकोशादिग्रंथव्याकृतिमपि न कुर्वीत । आदिना कृष्यादिग्रहः ॥ ८ ॥ बहूदकादीहादिना कुटीचकग्रहः । स्वामिचरणैरेवैतद्वृत्तं स्फुटीकृतम् ॥ ९ ॥ इत्यर्थ इति । लोकसंगपरिहारार्थमेवेत्थमाचरेदिति भावः ॥ १० ॥ अत्राप्यपरोक्षज्ञानियत्याचारे । इतिहासपदार्थमाह—पुरातनमिति । आजगरव्रतं नामैकत्र स्थित्या प्रारब्धभोगः ॥ ११ ॥ कावेरीनदीतटे सह्यपर्वतोपरिदेशे ॥ १२ ॥ लोकतत्त्वविवित्सया लोकव्यवहारनिरीक्षया ॥ १३ ॥ कर्मणा संध्यावंदनादिरूपेण । आकृतिभिराकारैर्लिंगैरुपवीतादिधारणाचिह्नैः । आदिना वर्णाश्रमभिन्नैरपि लिंगैः स देवदत्तोऽसौ न वेति यं जना जन्मभूमिवासिनोऽपि न विदुः ॥ १४ ॥

तं नत्वाऽभ्यर्च्य विधिवत् पादयोः शिरसा स्पृशन् ॥ विवित्सुरिदमप्राक्षीन्महाभागवतोऽसुरः ॥ १५ ॥ बिभर्षि कायं पीवानं सोद्यमो भोगवा न्यथा ॥ वित्तं चैवोद्यमवतां भोगो वित्तवतामिह ॥ भोगिनां खलु देहोयं पीवा भवति नान्यथा ॥ १६ ॥ न ते शयानस्य निरुद्यमस्य ब्रह्मन्नुहार्थो यत एव भोगः ॥ अभोगिनोऽयं तव विप्र देहः पीवा यतस्तद्वद नः क्षमं चेत् ॥ १७ ॥ कविः कल्पो निपुणदृक् चित्रप्रियकथः समः ॥ लोकस्य कुर्वतः कर्म शेषे तद्वीक्षिताऽपि वा ॥ १८ ॥ नारद उवाच ॥ स इत्थं दैत्यपतिना परिपृष्टो महामुनिः ॥ स्मयमानस्तमभ्याह तद्वागमृतयं त्रितः ॥ १९ ॥ ब्राह्मण उवाच ॥ वेदेदमसुरश्रेष्ठ भवान्नन्वार्यसंमतः ॥ ईहोपरमयोर्नृणां पदान्यध्यात्मचक्षुषा ॥ २० ॥ यस्य नारायणो देवो भगवान् हृद्गतः सदा ॥ भक्त्या केवलयाऽज्ञानं धुनोति ध्वांतमर्कवत् ॥ २१ ॥

रेणान्वयः ॥ १४ ॥ १५ ॥ उद्यमसहित इव भोगवानिव पीवानं स्थूलं देहं धारयासि तत्र हेतुं वदेति तृतीयेनान्वयः । उद्यमं विनैव मम भोगोऽस्तीति चेत्तत्राह । वित्तं चेति ॥ ॥ १६ ॥ नु इति निश्चये । ह इति प्रसिद्धौ । तवार्थो नास्तीति प्रसिद्धमेवेत्यर्थः । यतोऽर्थादेव यतो हेतोः पीवा । क्षमं योग्यं चेत् ॥ १७ ॥ किं च वित्तार्जनायस मर्थोऽप्ययं जनस्तदर्थमुद्यमं करोति त्वं तु समर्थोऽपि किमिति न करोषीत्याह । कविर्विद्वान् । कल्पो दक्षः । निपुणदृक्चतुरः । चित्राः प्रियाः लोकरंजनाः कथाः यस्य । तथाऽपि लोकस्य कर्म कुर्वतः सतः शेषे । तद्वीक्षिताऽपि तत्सर्वं पश्यन्नपि । पाठांतरे न द्वेक्षि तत्कर्म न द्वेक्षि नौषि वा न च स्तौषीत्यर्थः ॥ १८ ॥ तस्य वागेवामृतं तेन यंत्रितो वशीकृतः सन्प्राह ॥ १९ ॥ अध्यात्मचक्षुषांतर्दृष्ट्या भवान्वेदैव । आर्याणां ज्ञानिनां संमतो ननु भवान् इदमिति यदुक्तं तदेवाह । नृणामीहो परमयोः प्रवृत्तिनिवृत्त्योः पदानि स्थानानि फलानीत्यर्थः ॥ २० ॥ वेदेत्यत्र हेतुः । यस्येति । हृदि प्रविष्टः सन्नज्ञानं धुनोति अर्को यथा बहिर्ध्वांतम् ॥ २१ ॥

तमवधूतं द्विजम् । विधिवत्पाद्यादिभिरित्यर्थः । इदं वक्ष्यमाणम् ॥ १५ ॥ तत्र देहस्थूलत्वे । अत्र विश्वनाथः—न च स्वभावेनैव मत्कायः पीवेति वाच्यमित्याह—उद्यमवतां वित्तं वित्तवतां भोगः भोगवतामेव देहः पीवेति पीवत्वस्यादिकारणमुद्यम एव न तु स्वभाव इत्यर्थः ॥ १६ ॥ ननु पीनो देवदत्तो दिवा न भुंक्ते इतिवन्ममोद्यमादिकमनुमीयतामिति चेत्तत्राह—नेति । इत्यर्थ इति । अर्थवांस्तूपकरणैर्ज्ञायते इति भावः । हे विप्रेति । ब्रह्मतेजसैव विप्रत्वावगमादिति भावः ॥ १७ ॥ किमेवं ते विचारेणेति चेत्त्वद्देहे सामुद्रिकसल्लक्षणदृष्ट्या कवित्वकल्पत्वादिकमनुमाय त्वया स्वं कृतार्थीकर्तुं कमप्यालापामृतमिच्छामीत्याह—किवेति । कर्म कुर्वतः कर्मोद्यमवंतमनादृत्य तमपश्यन्नेव शेषे शयनं करोषि तद्वीक्षिता कौतुकेन तं पश्यन्नेव वा । पाठांतरे ' शेषे न द्वेक्षि नौषि वा ' इति पाठे । इत्यर्थ इति व्याख्या ॥ १८ ॥ स दत्तात्रेयः ॥ १९ ॥ इत्यर्थ इति । भोगार्थमुद्यमैर्देहं पुष्टीकुर्वतां लोकानां दुःखं यद्यहं नाज्ञास्यं तदोद्यममहम प्यकरिष्यमिति भावः । असुरश्रेष्ठेति । यद्यप्यसुराणामेतज्ज्ञानं न भवति तव तु तेषु तत्स्वभावमनंगीकुर्वतोऽस्त्येवेति भावः ॥ २० ॥ केवलया ज्ञानकर्मा

अथापि ब्रूमहे प्रश्नांस्तव राजन् यथाश्रुतम् ॥ संभावनीयो हि भवानात्मनः शुद्धिमिच्छताम् ॥२२॥ तृष्णया भववाहिन्या योग्यैः कामैरपूरया ॥ कर्माणि कार्यमाणोऽहं नानायोनिषु योजितः ॥ २३ ॥ यदृच्छया लोकमिमं प्रापितः कर्मभिर्भ्रमन् ॥ स्वर्गापवर्गयोर्द्वारं तिरश्चां पुनरस्य च ॥ ॥ २४ ॥ अत्रापि दंपतीनां च सुखायान्यापनुत्तये ॥ कर्माणि कुर्वतां दृष्ट्वा निवृत्तोऽस्मि विपर्ययम् ॥ २५ ॥ सुखमस्यात्मनो रूपं सर्वेहोपरति स्तनुः ॥ मनःसंस्पर्शजान् दृष्ट्वा भोगान्स्वप्स्यामि संविशन् ॥ २६ ॥

यथाश्रुतमित्यौद्धत्यपरिहारायोक्तम् ॥ २२ ॥ लोकः कर्मसु प्रवर्तते त्वं तु निवृत्तः सन्किं शेषे इति यदुक्तं तत्राह । तृष्णयेति चतुर्भिः । भवप्रवाहकारिण्या यथोचितैरपि विषयैः पूरयितुमशक्यया तृष्णया कर्मसु प्रवर्त्यमानोऽहं पूर्वं नानायोनिषु प्रवेशितः ॥ २३ ॥ तयैव तृष्णयेमं लोकं मनुष्यदेहं यदृच्छया प्रापितः । कथंभूतं लोकं धर्मेण स्वर्गस्य द्वारं साधनम् । अधर्मेण तिरश्चां श्वसूकरादियोनेर्द्वारम् । मिश्राभ्यां ताभ्यां पुनरप्यस्य मनुष्यत्वस्य द्वारम् । सर्वतो निवृत्त्याऽपवर्गस्य द्वारमित्यर्थः ॥ २४ ॥ अत्रापि मनुष्यत्वेऽपि । अन्यापनुत्तये दुःखनिवृत्त्यै विपर्ययं दृष्ट्वा निवृत्तोऽस्मि ॥ २५ ॥ ननु प्रवृत्त्या कदाचित्सुखं स्यान्निवृत्त्या तु किं स्यादिति चेत्तत्राह । सुखमस्य जीवस्य स्वरूपमेव । तर्हि किं न प्रकाशते तत्राह । सर्वेति । तनोतीति तनुः सर्वक्रियानिवृत्तौ स्वत एव प्रकाशत इत्यर्थः । भोगांश्च मनःसंस्पर्शजान्मनोरथमात्रजानशा

द्यमिश्रया । बहिर्ध्वांतं बाह्यतमः ॥ २१ ॥ अतो मया त्वं संमाननीय एवेत्यतः सर्वत्र मौनवतापि त्वयि मौनमनादृत्यैवोच्यत इत्याह—अथापीति । यद्यपि भवान् वेदैवाथापीति यथाश्रुतं न तु स्वकपोलकल्पितमित्यर्थः । हे राजन्निति । हरिभक्तिरेव त्वां प्रकाशयतीति भावः । संभावनीयोहमपि श्रीप्रह्लादपदवीं कथं प्राप्नुयामिति चिंतनीयः । ‘ संभाषणीयः ’ इति पाठो हि तीर्थसंमतः ॥ २२ ॥ निवृत्तिमार्ग एव संसारोन्मूलनहेतुरीति । प्रवृत्तिमार्गस्तु—नानादुःखहेतुत्वेन हेय एव । प्रेक्षावतेत्येतत्स्वानुभवसिद्धमेवाहं श्रावयामि यदहं निरुद्यमोऽस्मि तत्र कारणं शृण्वित्याह—तृष्णयेति त्रिभिः । भवसंबंधिन्या नद्येति । यथा नद्या अंतो दुष्प्रापस्तथा तृष्णाया अपि । किञ्च नदी हींद्रेण वृष्यमाणैरंबुभिः पूर्यते इयं तु ब्रह्मणापि वृष्यमाणैः कामैर्न पूर्यत इत्याह—योग्यैरीति । यथा च नद्यां वाहितोर्थस्तृणकाष्ठपाषाणकंटकादिषु योज्यते तथैवाहमपि नानायोनिषु । यथा च नद्या ग्राहकच्छपादिभिर्भीषयित्वा तत्परित्राणाय नानासाधनानि कार्यंते तथैवाहमपि कर्माणि । यथा च नद्या कदाचित्कश्चिच्चतुष्पथसैकतदेशमपि प्राप्यते तथाहमपि सांप्रतमिमं लोकं नृशरीरं प्रापितः ॥ २३ ॥ इत्यर्थ इति । इत्थं स्वबुद्ध्या विवेचनीयमिति भावः ॥ २४ ॥ निवृत्तोस्मि कर्ममात्रेभ्य इत्यर्थः । विपर्ययमिति । यथा सुखार्थं गृहाणि क्रियंते तेषां च पातलेपनादिभिरधिकमेव पूर्वतो दुःखं दृश्यते न तु सुखमिति । एवं सुखार्थमुद्वाहः क्रियते सति तस्मिन्पुत्रानुत्पत्त्या दुःखं पुत्रे सति तद्विद्याप्राप्तिविवाहधनादिसिद्धये पूर्वस्माद्बहुतरमेव दुःखं दृश्यते लोके एवमन्यत्रापि ज्ञेयम् ॥ २५ ॥ अस्य जीवस्य । सर्वा ईहा कर्माणि तद्धेतुस्तृष्णा च तासामुपरतिरेव तनुः । इत्यर्थ इति । तनुं विना यथा सुखं नोपलभ्यते तथोपरतिं विनापीति भावः । इत्यर्थ इति । तेषां क्षणभंगुरादिकावेक्षणेन तत्रारुचिरेव जातेति भावः । अत्राक्षिपति—तर्हीति । इत्यर्थ इति । स्वाभाविकनश्वरात्मसुखमुपभुंजानः स्वप्स्यामि स्वपिमि वैतृष्णादिदिव्यकुसुमशय्यायामिति स्वस्य पीनत्वे सुखभोग एव हेतुः । ‘निर्वृतिः पुष्टीकरणम्’’ इति वैद्यकोक्तेः । यद्वा—स्वप्स्यामि संप्रत्यपि तृष्णाभासस्यानिवृत्त्या यद्यपि सम्यगात्मसुखानुपलब्धिस्तथापि पञ्चषैर्दिनैस्तस्यापि निवृत्त्या सम्यक् संवि

इत्येतदात्मनः स्वार्थं संतं विस्मृत्य वै पुमान् ॥ विचित्रामसति द्वैते घोरामाप्नोति संसृतिम् ॥ २७ ॥ जलं तदुद्भवैश्छन्नं हित्वाऽज्ञो जलकाम्यया ॥ मृगतृष्णामुपाधावेद्यथाऽन्यत्रार्थदृक् स्वतः ॥ २८ ॥ देहादिभिर्दैवतंत्रैरात्मनः सुखमीहतः ॥ दुःखात्ययं चानीशस्य क्रिया मोघाः कृताःकृताः ॥ ॥ २९ ॥ आध्यात्मिकादिभिर्दुःखैरविमुक्तस्य कर्हिचित् ॥ मर्त्यस्य कृच्छ्रोपनतैरर्थैः कामैः क्रियेत किम् ॥ ३० ॥ पश्यामि धनिनां क्लेशं लुब्धानामजितात्मनाम् ॥ भयादलब्धनिद्राणां सर्वतोऽभिविशंकिनाम् ॥ ३१ ॥ राजतश्चोरतः शत्रोः स्वजनात् पशुपक्षितः ॥ अर्थिभ्यः कालतः स्वस्मान्नित्यं प्राणार्थवद्भयम् ॥ ३२ ॥ शोकमोहभयक्रोधरागक्लैब्यश्रमादयः ॥ यन्मूलाः स्युर्नृणां जह्यात् स्पृहां प्राणार्थयोर्बुधः ॥ ३३ ॥ मधुकारमहासर्पौ लोकेऽस्मिन्नो गुरूत्तमौ ॥ वैराग्यं परितोषं च प्राप्ता यच्छिक्षया वयम् ॥ ३४ ॥ विरागः सर्वकामेभ्यः शिक्षितो मे मधुव्रतात् ॥ कृच्छ्राप्तं मधुवद्वित्तं हत्वाप्यन्यो हरेत्पतिम् ॥ ३५ ॥ अनीहः परितुष्टात्मा यदृच्छोपनतादहम् ॥ नो चेच्छये बह्वहानि महाहिरिव सत्त्ववान् ॥ ३६ ॥

श्वतान् दृष्ट्वा स्वप्स्यामि निरुद्यमोऽस्मीत्यर्थः । तर्हि कदाचित्कथं भुंक्षे तत्राह । संविशन् । प्रारब्धभोगान्भुंजान इत्यर्थः ॥ २६ ॥ एवं चेत्कोऽपि संसारं न प्राप्नुयात्तत्राह । इत्येतदात्मनः सुखात्मकं रूपं स्वार्थं स्वस्मिन्नेव संतं पुरुषार्थं विस्मृत्य असत्यपि द्वैते ॥ २७ ॥ एतदेव दृष्टांतेन स्पष्टयति । जलमिति । तदुद्भवैस्तृणशैवालादिभिः जलकाम्यया जलेच्छया । स्वत आत्मस्वरूपादन्यत्र पुरुषार्थं पश्यन् ॥ २८ ॥ एवं स्वस्य निरुद्यमत्वे कारणमुक्त्वा विपर्ययं दृष्ट्वेति यदुक्तं तद्विवृणोति । देहादिभिरिति पंचभिः । ईहत इच्छतः अनीशस्य निर्दैवस्य पुनःपुनः प्रारब्धाः क्रिया मोघा विफला एव भवंति ॥ २९ ॥ क्रियाणां सफलत्वेऽपि फलस्यानुपयोगमाह । आध्यात्मिकादिभिरिति । मर्त्यस्य मरिष्यतः कृच्छ्रेण दुःखेनोपनतैः प्राप्तैः ॥ ३० ॥ कृच्छ्रं विनैव प्राप्तेऽप्यर्थे दुःखं तदवस्थमित्याह । पश्यामीति ॥ ३१ ॥ भयं प्रपंचयति । राजत इति । स्वस्मान्मत्त एव कथंचित्त्यागभोगविस्मरणादिना नाशः स्यादिति प्राणवतामर्थवतां च भयं नित्यम् ॥ ३२ ॥ अतोऽनर्थहेतुत्वात्प्राणेऽर्थे च स्पृहा न कार्येत्याह । शोकेति ॥ ॥ ३३ ॥ नन्वेवमनर्थाननुभवंतोऽपि न केचिद्विरज्यंते न च यथालाभेन तुष्यंति त्वं तु कथं वैराग्यादिकं प्राप्तोऽसि तत्राह । मधुकारेति मधुमक्षिकाऽजगरौ । ययोः शिक्षया वृत्तपर्यालोचनया ॥ ३४ ॥ मधुकाराच्छिक्षितमाह । विराग इति । वित्तपतिं हत्वाऽन्यो वित्तं हरेदित्येवम् ॥ ३५ ॥ अजगराच्छिक्षितमाह । अनीह इति ।

शन् शयिष्य इत्यर्थः । 'संवेशः स्वापस्त्रीरतबंधयोः' इति मेदिन्युक्तेरत्र सामान्यत एव संभोगवाची ज्ञेयः ॥ २६ ॥ द्वैते देहादौ ॥ २७ ॥ तस्मिन् जले उद्भवैर्न तु तस्मादुद्भूतैरिवात्मन्युद्भूतैर्मायिकतृष्णादिभिश्छन्नमात्मसुखं हित्वा ॥ २८ ॥ २९ ॥ ३० ॥ तदवस्थं धनिजनस्थम् ॥ ३१ ॥ ३२ ॥ यतो नित्यं भयमतो हेतोः क्लैब्यं यन्मूलाः प्राणार्थमूलकाः प्राणोऽत्र संभोगादिप्रयोजकं बलं तेन प्राणार्थयोः स्पृहां जह्यात् शारीरबलाधिक्यार्थं धनाधिक्यार्थं च न यतेत स्वल्पेनापि बलेन धनेन च पारमार्थिककृत्यसिद्धेरिति भावः ॥ ३३ ॥ गुरुषु चतुर्विंशतिसंख्येष्वेतौ द्वावुत्तमौ ॥ ३४ ॥ ३५ ॥ नो चेद्यदृच्छोपनतं न चेत्तर्हि बह्वहानि

क्वचिदल्पं क्वचिद्भूरि भुंजेऽन्नं स्वाद्वस्वादु वा ॥ क्वचिद्भूरिगुणोपेतं गुणहीनमुत क्वचित् ॥ ३७ ॥ श्रद्धयोपाहृतं क्वापि कदाचिन्मानवर्जितम् ॥ भुंजे भुक्त्वाथ कस्मिंश्चिद्दिवा नक्तं यदृच्छया ॥ ३८ ॥ क्षौमं दुकूलमजिनं चीरं वल्कलमेव वा ॥ वसेऽन्यदपि संप्राप्तं दिष्टभुक्तुष्टधीरहम् ॥ ३९ ॥ क्वचिच्छये धरोपस्थे तृणपर्णाश्मभस्मसु ॥ क्वचित्प्रासादपर्यंके कशिपौ वा परेच्छया ॥ ४० ॥ क्वचित्स्नातोनुलिप्तांगः सुवासाः स्रग्व्यलंकृतः ॥ रथेभाश्वैश्चरे क्वापि दिग्वासा ग्रहवद्विभो ॥ ४१ ॥ नाहं निंदे न च स्तौमि स्वभावविषमं जनम् ॥ एतेषां श्रेय आशासे उतैकात्म्यं महात्मनि ॥ ४२ ॥ विकल्पं जुहुयाच्चित्तौ तां मनस्यर्थविभ्रमे ॥ मनोवैकारिके हुत्वा तं मायायां जुहोत्यनु ॥ ४३ ॥ आत्मानुभूतौ तां मायां जुहुयात्सत्यदृङ्मुनिः ॥ ततो निरीहो विरमेत्स्वानुभूत्यात्मनि स्थितः ॥ ४४ ॥ स्वात्मवृत्तं मयेत्थं ते सुगुप्तमपि वर्णितम् ॥ व्यपेतं लोकशास्त्राभ्यां भवान्हि भगवत्परः ॥ ४५ ॥ नारद उवाच ॥ धर्मं पारमहंस्यं वै मुनेः श्रुत्वाऽसुरेश्वरः ॥ पूजयित्वा ततः प्रीत आमंत्र्य प्रययौ गृहम् ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे युधिष्ठिरनारदसंवादे प्रह्लादाय दत्तात्रेयेण पारमहंस्यधर्मवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

सत्त्ववान्धैर्यवान् ॥ ३६ ॥ पीनत्वे हेतुं वदन्यदृच्छया प्राप्तात्परितोषं प्रपंचयति । क्वचिदल्पमिति षड्भिः ॥ ३७ ॥ ३८ ॥ चीरं जीर्णवस्त्रखंडम् । वसे परिदधे । दिष्टभुक् प्रारब्धकर्मफलभोगी ॥ ३९ ॥ प्रासादमध्ये पर्यंके तत्रापि कशिपौ तूलिकायाम् ॥ ४० ॥ चरे विचरामि । क्वचिद्ग्रहवद्दिगंबरो विचरामि ॥ ४१ ॥ न च मानापमानकर्तृषु मम वैषम्यमित्याह । नाहमिति । नाहं निंदामि न च स्तौमि । महात्मनि विष्णौ ॥ ४२ ॥ एवंभूतत्वेन स्थितावुपायमाह । विकल्पमिति द्वाभ्याम् । चित्तौ भेदग्राहकमनोवृत्तौ । अर्थरूपो विभ्रमो यस्मिन्मनसि तन्मनो वैकारिकेऽहंकारे । तमहंकारमन्वनंतरं महत्तत्त्वद्वारेणेत्यर्थः ॥ ४३ ॥ सत्यमेव पश्यतीति तथा ॥ ४४ ॥ मंददृष्ट्या लोकशास्त्राभ्यां व्यपेतं न तु तत्त्वदृष्ट्या यतो भवान्भगवत्परः ॥ ४५ ॥ ४६ ॥ इति श्रीमद्भागवते सप्तमे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥

शये ॥ ३६ ॥ भूरिगुणोपेतं षड्रसयुक्तम् ॥ ३७ ॥ यदृच्छया क्वापि श्रद्धयोपाहृतं भुक्त्वा कदाचिन्मानवर्जितं भुंजे । अथ कस्मिंश्चिद्देशे दिवा नक्तं वा भुंजे । यद्वा–यदृच्छया कस्मिंश्चिद्दिवा भुक्त्वा नक्तं भुंजे नक्तं भुक्त्वा दिवा वा भुंजे इति योजना ॥ ३८ ॥ क्षौमम‍ातसम् ॥ ३९ ॥ धरोपस्थे धराक्रोडे "उपस्थं शेफसि तथा क्रोडे मदनमंदिरे" इति मेदिनी । तत्रापि पर्यंकेऽपि । कशिपौ स्वास्तीर्णे स्वाच्छादे 'कशिपुरल्पपर्यंके भोजनच्छदे' इति कोशात् ॥ ४० ॥ ग्रहवत्पिशाचवत् 'गृह्णातीति ग्रहः' इति निरुक्तेः ॥ ४१ ॥ श्रेयो भक्तियोगं तस्य दुर्लभत्वमाशंक्याह–उतेति । ऐकात्म्यं मोक्षम् ॥ ४२ ॥ विविधं कल्पत इति विकल्पो व्यवहारस्तं मनोवृत्तौ तत एव तस्य प्रवृत्तेः । अर्थानां विविधं भ्रमणं यातायातं यतस्तस्मिन् । इत्यर्थ इति । अन्वित्यस्याव्ययत्वेनानेकार्थत्वादिति भावः ॥ ४३ ॥ आत्मानुभूतौ सत्यां माया नश्यत्येवेति भावः ॥ ४४ ॥ हि यतो भवान्भगवत्प्रियो महाभागवतोऽतस्तवानेन प्रयोजनाभावः ॥ ४५ ॥ ततो मुनेः पार्श्वतः ॥ ४६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥

युधिष्ठिर उवाच ॥ गृहस्थ एतां पदवीं विधिना येन चांजसा॥ याति देवऋषे ब्रूहि मादृशो गृहमूढधीः ॥ १ ॥ नारद उवाच ॥ गृहेष्ववस्थितो राजन् क्रियाः कुर्वन् गृहोचिताः ॥ वासुदेवार्पणं साक्षादुपासीत महामुनीन् ॥ २ ॥ शृण्वन् भगवतोऽभीक्ष्णमवतारकथाऽमृतम् ॥ श्रद्दधानो यथा कालमुपशांतजनावृतः ॥ ३ ॥ सत्संगाच्छनकैः संगमात्मजायात्मजादिषु ॥ विमुच्येन्मुच्यमानेषु स्वयं स्वप्नवदुत्थितः ॥ ४ ॥ यावदर्थमुपासीनो देहे गेहे च पंडितः ॥ विरक्तो रक्तवत्तत्र नृलोके नरतां न्यसेत् ॥ ५ ॥ ज्ञातयः पितरौ पुत्रा भ्रातरः सुहृदोऽपरे ॥ यद्वदंति यदिच्छंति चानुमोदेत निर्ममः ॥ ६ ॥ दिव्यं भौमं चांतरिक्षं वित्तमच्युतनिर्मितम् ॥ तत्सर्वमुपभुंजान एतत्कुर्यात्स्वतो बुधः ॥ ७ ॥ यावद्भ्रियेत जठरं तावत्स्वत्वं हि देहिनाम् ॥ अधिकं योऽभिमन्येत स स्तेनो दंडमर्हति ॥ ८ ॥

चतुर्दशे गृहस्थस्य परमो धर्म ईर्यते ॥ देशकालादिभेदेन पुनः श्रेयो विशेषकृत् ॥ १ ॥ गृहस्थमुल्लंघ्य मोक्षं प्रत्यंतरंगत्वेन प्रथमं वनस्थयतिधर्मेष्वभिहितेषु तर्हि गृहस्थस्य मोक्षो न स्यादिति शंकितचित्तः पृच्छति । गृहस्थ इति ॥ १ ॥ तस्य मोक्षधर्मानाह । गृहेष्वित्यादि यावदध्यायसमाप्ति । साक्षाद्वासुदेवार्पणं यथा भवत्येवं कुर्वन्नुपासीत ॥ २ ॥ ३ ॥ स्वयमेव मुच्यमानेषु वियुज्यमानेषु यथा स्वप्नादुत्थितः पुमान्स्वप्नदृष्टेषु पुत्रादिषु संगं विमुंचति तद्वत् ॥ ४ ॥ नन्वेवंभूतस्य दुर्जनैरभिभूयमानस्य कुतो गृहोचिताः क्रियाः स्युस्तत्राह । यावदर्थमिति । अंतस्त्वनासक्तो बहिस्त्वासक्त इव नृलोके जनमध्ये नरतां मनुष्यतां न्यसेत् । पुरुषकारमाविष्कुर्यादित्यर्थः ॥५॥ आग्रहं तु क्वापि न कुर्यादित्याह । ज्ञातय इति ॥ ६ ॥ नन्वेवं सर्वानुमोदने वित्तक्षयप्रसंगात्कुतो जीवनं कुतो वा कर्मकरणं तत्राह । दिव्यं वृष्ट्यादिभिर्जातं धान्यादि । भौमं निधानादि । आंतरिक्षमकस्मादेव प्राप्तम् । एवं स्वत एवाच्युतनिर्मितं दैवलब्धं यत् । एतत्पूर्वोक्तं कर्मादि ॥ ७ ॥ दैवाद्भूरिलाभे जातेऽपि तत्राभिमानो न कार्य

परमो मुख्यः । देशः कुरुक्षेत्रादिः । कालो वैषुवतादिः ( १ ) तदेवं ब्रह्मचारिवानप्रस्थयतिषु त्रिष्वधिकारिषु निवृत्तधर्ममुक्त्वा प्रवृत्तधर्ममेकस्मिन्गृहस्थ एवाधिकारिणि वक्तुं प्रवर्त्तमानं मुनिं प्रत्यलं प्रवृत्तधर्मेण जन्ममृत्युप्रवाहानुकूलेन वक्तव्येन । यदि च प्रवृत्तधर्मेणाऽपि निवृत्तधर्मफलं मोक्षं सिध्येत्तर्हि तं ब्रूहीत्याशयेनाह—गृहस्थ इति । एतां पदवीं मोक्षम् । हे देवऋषे इति । देवा अप्येतं वृत्तं जानंति कुतो देवर्षिर्भवानिति भावः ॥ १ ॥ महामुनीन्भगवद्भक्तान् ज्ञानिनो वा । हे राजन्निति । राजा त्वन्येषां धर्मेषु प्रवर्त्तकस्तस्य तत्र प्रवृत्तौ का वार्त्तेति भावः॥२॥यथाकालमपराह्णादौ । उपशांतजनावृतः सन् कथामृतमभीक्ष्णं शृण्वन्न तु कथाश्रवणकाले वार्त्तांतरं शृण्वन्नित्यर्थः । अभीक्ष्णं पौनःपुन्येन प्रतिदिनं शृणुयाद्धरिकथां कथायामलंबुद्धिं न कुर्यादित्यर्थः ॥ ३ ॥ विमुच्येदिति छांदसः श्यन् ॥ ४ ॥ अत्राक्षिपति—नन्विति । इत्यर्थ इति । अहो अयमतीव पुरुषार्थवानिति स्वस्य लोके ख्यातिं कारयेदिति भावः ॥ ५ ॥ निर्ममोऽनासक्त एवानुमोदेत स्वीकुर्यात् ॥ ६ ॥ अत्राशंकते—नन्विति । आदिना मूलकंदादिग्रहः । निधानादीहादिनाकरोत्थग्रहः । तत्तद्रूपेण सर्वमच्युतेनैव विनिर्मितमतो वित्तार्थं नैव चिंतां कुर्यादित्यर्थः । एतत्पूर्वोक्तं नित्यनैमित्तिकादि, स्वतः स्वं वित्तं तेन कुर्यादित्यर्थः ॥ ७ ॥ यावत् यावता अधिकस्य परकीयत्वात्तत्र स्वत्वाभिमानं चौरधर्मोऽतो दंडमर्हति स परलोके दंडं प्राप्नोतीत्यर्थः ।

मृगोष्ट्रखरमर्काखुसरीसृप्खगमक्षिकाः ॥ आत्मनः पुत्रवत्पश्येत् तैरेषामंतरं कियत् ॥ ९ ॥ त्रिवर्गं नातिकृच्छ्रेण भजेत गृहमेध्यपि ॥ यथादेशं यथाकालं यावद्दैवोपपादितम् ॥ १० ॥ आश्वाघांतेऽवसायिभ्यः कामान् संविभजेद्यथा ॥ अप्येकामात्मनो दारां नृणां स्वत्वग्रहो यतः ॥ ११ ॥ जह्याद्यदर्थे स्वप्राणान् हन्याद्वा पितरं गुरुम् ॥ तस्यां स्वत्वं स्त्रियां जह्याद्यस्तेन ह्यजितो जितः ॥ १२ ॥ कृमिविड्भस्मनिष्ठांतं क्वेदं तुच्छं कलेवरम् ॥ क्व तदीयरतिर्भार्या क्वायमात्मा नभश्छदिः ॥ १३ ॥ सिद्धैर्यज्ञावशिष्टार्थैः कल्पयेद्वृत्तिमात्मनः ॥ शेषे स्वत्वं त्यजन् प्राज्ञः पदवीं महतामियात् ॥ १४ ॥ देवानृषीन्नृभूतानि पितॄनात्मानमन्वहम् ॥ स्ववृत्त्यागतवित्तेन यजेत पुरुषं पृथक् ॥ १५ ॥ यर्ह्यात्मनोऽधिकाराद्याः सर्वाः स्युर्यज्ञसंपदः ॥ वैतानिकेन विधिना अग्निहोत्रादिना यजेत् ॥ १६ ॥

इत्याह । यावदिति । भ्रियेत पूर्येत ॥ ८ ॥ अत एव यं कमपि स्वगृहं क्षेत्रं वा प्रविश्य भुंजानं न निवारयेदित्याह । मृगेति । मर्को मर्कटः सरीसृप् सर्पः मक्षिकाश्च तैः पुत्रैरेषां मृगादीनां कियदंतरम् ॥९॥ अतिकृच्छ्रेणापाद्य न भजेत्किं तु यावद्दैवप्रापितं तावदेव भजेत् ॥ १० ॥ श्वानश्च अघाश्च पतिताः अंतेऽवसायिनश्चांडालादयस्तान भिव्याप्य यथार्हं कामान्संविभजेत्स्वभोज्याद्विभज्य दद्यात् । यद्यप्येकैवात्मनो दारा भार्या तस्यामतिथिशुश्रूषणे नियुक्तायां स्वस्य शुश्रूषा हीयेत यस्यां च नृणां स्वत्व ग्रहो ममैवेयमित्याग्रहस्तामेकामपि संविभजेत् । अतिथिशुश्रूषणे नियुंजीतेत्यर्थः । न त्वन्यथा मंतव्यम् । यथार्हं विभजेदित्युक्तत्वात् ॥ ११ ॥ एवं चेत्तेनेश्वरो वशीकृतः स्यादित्याह । जह्यादिति । यदर्थे यन्निमित्तम् । अन्यैरजितोऽपीश्वरस्तेन जित एव ॥ १२ ॥ ननु कथमेवं तस्यां स्वत्वाभिमानो हातुं शक्यस्तत्त्वविचारेणेत्याह । कृमिविड्भस्मसु निष्ठा पर्यवसानमंते यस्य तदीया देहार्था रतिर्यस्यां सा स्वमहिम्ना नभोऽपि छादयतीति तथा ॥ १३ ॥ किं च । सिद्धैर्दैवलब्धैर्यज्ञावशिष्टार्थैः पंचयज्ञशेषैरन्नादिभिः । महतां निवृत्तानाम् ॥ १४ ॥ एतद्विवृण्वन्नाह । देवादीन्पंच यज्ञदेवताः आत्मानं च एवं पृथक्पुरुषमंतर्यामिणमेव यजेत ॥ १५ ॥ १६ ॥

परस्य द्रव्यं स्वमिति ब्रुवाणो ज्ञेयः स चौरो नृपदंडयोग्य इति भावः॥८॥ यतोऽधिकाभिमानो दंडहेतुरत एव सरीसृबिति । किंबंतं यङंतात् । यथा पुत्रेभ्यो भोज्यं विभजेत्तथा तेभ्योऽपि विभजेत्सर्वत्रात्मन ऐक्यात् । पाञ्चभौतिकत्वेन देहतोऽप्यैक्यात्पराधीनत्वेनास्वतंत्रत्वाच्च किमप्यंतरं विचार्यमाणे न दृश्यत इति भावः ॥ ९ ॥ अतिकृच्छ्रेण शास्त्राविहितमार्गेण शूद्रांत्यजादिप्रतिग्रहलक्षणेन किन्तु स्वल्पायासेनैवावाप्तं भूरिसंभारं नापेक्षेतेत्यर्थः । अपिशब्दाद्ब्रह्मचार्यादिस्तु गुरुकुलादिषु किमुतेति भावः ॥ १० ॥ यथार्हमौचित्यानुलंघनेन । इत्यर्थ इति । यदि कश्चिदतिथिस्तया रतिमिच्छेत्तदर्थमपि तामाज्ञापयेदेवेति भावः । न त्वन्यथा मंतव्यमियं व्यभिचारदूषिता सर्वथा भ्रष्टेति न मंतव्यमिति । यथा सुदर्शनेन राज्ञा कुरुक्षेत्रवासिना गृहस्थेनाप्यतिथिरूपेण कालरूपब्राह्मणेन रममाणाऽपि स्वस्त्री न त्यक्ता किं तु मानितैव तेन कर्मणा तेनाजितोऽपि कालो जित इति प्रसिद्धं श्रीमहाभारते ॥ ११ ॥ एवं चेत्स्वभार्ययाप्यातिथ्यं कृतं यदि तर्हि तेनेश्वरो वशीकृतः स्यात्कालोऽपि तद्वशवर्त्ती स्यादत्रार्थे श्रीमहाभारतीयसुदर्शनोपाख्यानमनुसंधेयम् । स्वत्वं मद्भोग्यैवेयं नान्यस्येति हठं जह्यात् ॥ १२ ॥ यदि तस्यामभिमानत्यागेनैव स प्राप्यते तर्हि कियदेतदिति भावः ॥ १३ ॥ यावतोदरपूर्त्तिः स्यात्तावत्येव वस्तुनि स्वत्वं कुर्यादिति यदुक्तं तत्र व्यवस्थामाह—किं चेति । सिद्धैरिति ॥ १४ ॥ एवं पित्रादियजनद्वारा स्ववृत्त्यागतवित्तेन स्वजातिविहितवृत्त्यैवागतं यद्वित्तं न तु छलादिना प्राप्तं तेन ॥ १५ ॥ आत्मनः स्वस्य यज्ञाधिकारः संपदश्च स्युः । वैतानिकेन वैदिकेन "अर्थी समर्थो विद्वान्यजेत्" इति श्रुतेः ॥ १६ ॥

न ह्यग्निमुखतोऽयं वै भगवान् सर्वयज्ञभुक् ॥ इज्येत हविषा राजन् यथा विप्रमुखे हुतैः ॥ १७ ॥ तस्माद्ब्राह्मणदेवेषु मर्त्यादिषु यथार्हतः ॥ तैस्तैः कामैर्यजस्वैनं क्षेत्रज्ञं ब्राह्मणानतु ॥ १८ ॥ कुर्यादापरपक्षीयं मासि प्रौष्ठपदे द्विजः ॥ श्राद्धं पित्रोर्यथावित्तं तद्बंधूनां च वित्तवान् ॥ १९ ॥

न पुनरतिनिर्बंधो यज्ञार्थं कार्य इत्याह । न हीति । विप्रमुखे हुतैरन्नादिभिर्यथा इज्येत पूज्येत न तथाऽग्निमुखतो हविषा इज्येत ॥ १७ ॥ ब्राह्मणेषु च देवेषु पंचयज्ञदेवतासु च मर्त्यादिष्वन्येष्वपि नरेषु पश्वादिषु च क्षेत्रज्ञमंतर्यामिणं ब्राह्मणानतु मर्त्यादियजने ब्राह्मणयजनानंतरमन्येषु यजस्व । पाठांतरे ब्राह्मणा आननं यस्य तम् ॥ १८ ॥ प्रौष्ठपदे

ननु मुख्यं होमाधिकरणं भगवत्प्रीतिजनकं किमिति चेत्तत्राह—न हीति । अतो यज्ञार्थमग्निसाध्ययज्ञार्थम् । राजन्निति । राज्ञां ब्राह्मणार्चनमेव मुख्यो यज्ञ इति भावः ॥ १७ ॥ यतो ब्राह्मणा एव मुख्यं होमाधिकरणं तस्माद्धेतोः । किं च बहुजनसमाजे बहुषु ब्राह्मणेतरवृद्धेषु तिष्ठत्स्वपि तत्र ब्राह्मणे सति विभाज्यवस्तुमात्रं ब्राह्मणं विहायान्यस्मै प्राङ् न देयं किन्तु प्रथमं ब्राह्मणाय दत्त्वा पश्चादन्यस्मै देयमित्यभिप्रेत्यैवोक्तं क्षेत्रज्ञं ब्राह्मणानन्विति । क्षेत्रज्ञं प्राणिमात्रं ब्राह्मणान् ब्राह्मणेभ्योऽनु पश्चादित्यर्थः । कर्मप्रवचनीयत्वाद्द्वितीया । अयमर्थः श्रीदशमसप्ततितमाध्याये श्रीकृष्णाह्निकविवरणे स्फुटीकृतः श्रीयोगीन्द्रेण—"संविभज्य यतो विप्रान्स्रक्ताम्बूलानुलेपनैः । सुहृदः प्रकृतीर्दारानुपायुंक्त ततः स्वयम् ॥" इति । श्रीकृष्णनित्याचारप्रदर्शनद्वारेति "क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इति श्रीमुखोक्तेः । क्षेत्रज्ञो विष्णुस्तस्य मुख्यं मुखं ब्राह्मण एव न तु वह्निः मुख्यत्वं स्वयमेव भगवता तृतीये "नाहं तथाद्मि यजमानहविर्वितानेश्च्योतद्घृतप्लुतमदन् हुतभुग्मुखेन । यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासं तुष्टस्य मय्यवहितैर्निजकर्मपाकैः ॥" इति स्फुटीकृतम् । आदिपदार्थमाह—अन्येष्वपीति । पाठांतरे 'ब्राह्मणाननम्' इति पाठे न हि मनुष्येषु ब्राह्मणात्पूर्वं कस्याप्यर्चनं कार्यं तस्यैवाग्रभोजित्वादिति भावः ॥ १८ ॥ 'मासाः शुक्लादयो ग्राह्याः' इति रामोक्तेः । पंचांगलिपेरनादरादाह–आपरपक्षीयं द्वितीयपक्षीयं सिंहार्कामातः कन्यार्कामापर्यंते मासि कृष्णपक्षे पित्रोर्मातापित्रोस्तद्बंधूनां मातृपितृबंधूनां मातुलपितृव्यादीनां च । तदुक्तं स्मृतिदर्पणे "तातांबात्रितयं सपत्नजननी मातामहादित्रयं सस्त्रि स्त्रीतनयादितातजननीस्वभ्रातरस्तत्स्त्रियः । तातांबात्मभगिन्यपत्यधवयुग् जायापिता सद्गुरुः शिष्योऽमी पितरो महालयविधौ तीर्थे तथा तर्पणे ॥" इति । अस्यार्थः—तातत्रयी पितृत्रयी, अंबात्रयी, सपत्नजननी मातृसपत्नी, सस्त्रि स्त्रीयुतं, स्त्री पत्नी, तनयादि पुत्रादि, तातभ्राता पितृव्यो, जननीभ्राता मातुलः, स्वभ्राता प्रसिद्धः एषां स्त्रियः पितृष्वसृमातृष्वसृभगिन्योऽपत्यभर्तृसहिताः, जायापिता श्वशुरः श्वश्रूरपि ज्ञेया, सद्गुरुराचार्यः, शिष्य उपनीतः महालयविधौ तीर्थे तर्पणे चामी पितरः पूज्या इत्यर्थः । अत्र पितृशब्दो न केवलं जनकवाची किं तु सर्वसाधारण एव । "प्रेते पितृत्वमापन्ने सपिंडीकरणादनु" इति विष्णुस्मृतेः । हेमाद्रौ तु—"उपाध्यायगुरुश्वश्रूपितृव्याचार्यमातुलाः । श्वशुरभ्रातृतत्पुत्रपुत्रर्त्विक्शिष्यपोषकाः ॥ भगिनीस्वामिदुहितृजामातृभागिनेसुताः । पितरौ पितृपत्नीनां पितुर्मातुश्च या स्वसा ॥ सखिद्रव्यादशिष्याद्यास्तीर्थे चैव हिमालये । एकोद्दिष्टविधानेन पूजनीयाः प्रयत्नतः ॥ इतरेषां पितृणां च पार्वणं संभवेदिति ॥" इति । तदुक्तं "पितृव्यस्य च भ्रातृणां ज्येष्ठानां पार्वणं भवेत् । एकोद्दिष्टं कनिष्ठानां दंपत्योः पार्वणं मिथः । मातामहस्य तत्पत्न्यास्तथा तत्परयोरपि । पित्रादीनां त्रयाणां च पार्वणं विहितं बुधैः ॥" अशक्तस्तु– "एकस्मिन्ब्राह्मणे सर्वानाचार्यादीन्प्रपूजयेत् । दश द्वादश वा पिंडान्दद्यादक्करणं न हि ॥" इति पृथ्वीचंद्रोदये । एकोद्दिष्टस्वरूपन्तु—"एकोद्दिष्टं दैवहीनमेकार्घं

१ "ब्राह्मणोऽस्य मुखमासीत्" इति श्रुतेः ।

अयने विषुवे कुर्याद्व्यतीपाते दिनक्षये ॥ चंद्रादित्योपरागे च द्वादशीश्रवणेषु च ॥ २० ॥ तृतीयायां शुक्लपक्षे नवम्यामथ कार्तिके ॥ चतसृष्वप्यष्टकासु हेमंते शिशिरे तथा ॥ २१ ॥ माघे च सितसप्तम्यां मघाराकासमागमे ॥ राकया चानुमत्या वा मासर्क्षाणि युतान्यपि ॥ २२ ॥ द्वादश्यामनुराधा स्याच्छ्रवणस्तिस्र उत्तराः ॥ तिसृष्वेकादशी वाऽऽसु जन्मर्क्षश्रोणयोगयुक् ॥ २३ ॥

भाद्रपदे ॥ १९ ॥ २० ॥ शुक्लपक्षे । अक्षय्यतृतीयायामित्यर्थः । हेमंते शिशिरे च मार्गशीर्षादिमासचतुष्टयेऽपि याश्चतस्रोऽष्टकास्तासु ॥ २१ ॥ संपूर्णचन्द्रा पौर्णमासी राका न्यूनचंद्रा सैवानुमतिः । तथा मासर्क्षाणि तत्तन्मासनामप्रवृत्तिनिमित्तानि नक्षत्राणि युतानि यदा स्युस्तदा । तदुक्तं त्रिकांड्याम् । "पुष्ययुक्ता पौर्णमासी पौषी मासे तु यत्र सा । नाम्ना स पौषो माघाद्याश्चैवमेकादशापरे" इति ॥ २२ ॥ अनुराधा श्रवण उत्तराफाल्गुनी उत्तराषाढा उत्तराभाद्रपदा वा द्वादश्यां यदा स्यात् । आसूत्तरास्वेकादशी वा यदा स्यात्तदा च । जन्मर्क्षश्रोणयोगयुक् जन्मनक्षत्रस्य श्रवणस्य वा योगेन युक्तं दिनं यदा तदा । योगग्रहणं संबंधबाहुल्यार्थम् ॥ २३ ॥

कपवित्रकम् । आवाहनाग्नौकरणरहितं त्वपसव्यवत् ॥" इति याज्ञवल्क्यः । वित्तवानिति विशेषणाद्दरिद्रेण तु यथाकथंचित्पित्रोरेव तत्कार्यमित्यर्थः ॥ १९ ॥ अयन इति । "उदगवागयनके मृगकर्किणोः क्रियतुलाधरयोर्विषुवत्स्मृतम् ॥" इति श्रीपतिः । व्यतीपाते तदाख्ययोगे । हेमाद्रौ तु—"पंचाननस्थौ गुरुभूमिपुत्रौ मेषे रविः स्याद्यदि शुक्लपक्षे । मासाभिधाना करभेण युक्ता तिथिर्व्यतीपात इतीह योगः ॥ अस्मिंस्तु गोभूमिहिरण्यवस्त्रदानेन सर्वे परिहाय पापम् । सुरत्वमिंद्रत्वमनामयत्वं मर्त्याधिपत्यं लभते मनुष्यः ॥" इत्थमपि व्यतीपातयोग उक्तः । यद्वा—"श्रवणाश्विधनिष्ठार्द्रासार्पदैवतपंचके । यद्यमा रविवारश्च व्यतिपातस्स उच्यते ॥" इत्युक्तलक्षणे वा । "लक्षकोट्यर्बुदगुणमनंतं स्याद्यथाक्रमम् । व्यतीपातविभागेषु दानमुक्तं मनीषिभिः ॥ "इति निर्णयाब्धेः । विना पक्षिणा गरुडेनातति सातत्येन गच्छतीति व्यातीर्विष्णुस्तं पातयति प्रापयतीति व्यतिपातः 'पत गतौ' । यद्वाऽतिपतनमतिपातो निरयादिपातः विगतोऽतिपातो यद्दानप्रभावेण स व्यतिपातः । दिनक्षये तिथिक्षये "दत्तं तिथिक्षये दानमनंतफलदं भवेत्" इति व्यासः । चंद्रादित्ययोरुपरागे ग्रहणे द्वादशीयुक्तेषु श्रवणेषु द्वादशीषु श्रवणेषु च तेन सर्वासु द्वादशीषु सर्वेषु वत्सरांतर्गतेषु श्रवणेषु च श्राद्धदानादि कार्यमित्यर्थः । मन्वादियुगादिकल्पादितिथयोऽपि ग्राह्यास्ताश्च—"मन्वाद्याश्विनतिथी १९ मधौ तिथि १९ रवी १२ ऊर्जे शुचौ दिक् १० तिथी १९ ज्येष्ठेंत्ये च तिथि १९ स्त्विषे नव ९ तपस्यश्वाः ७ सहस्ये शिवा ११ ॥ भाद्रेग्नि ३ श्च सिते त्वमा ३० ष्ट ८ नभसः कृष्णे युगाद्याः सिते गो ९ ग्नी ३ बाहुलराधयोर्मदन १३ दर्शौ ३० भाद्रमाघासिते ॥" इति रामः । "कल्पादिः स्यात्कृष्णपक्षे नभस्ये च त्रयोदशी" इति नारदः ॥ २० ॥ इत्यर्थ इति । सर्वासु शुक्लतृतीयासु वैशाखशुक्लतृतीयायाः परशुरामजयंतीत्वेन युगादित्वेन चाभ्यर्हितत्वादिति भावः । अथ शुक्लपक्ष एव कार्त्तिके नवम्या अपि युगादित्वाद् ग्रहणं "हेमंतशिशिरयोश्चतुर्णामपरपक्षाणामष्टम्यष्टका" इत्याश्वलायनसूत्रात् । केचित्तु—"अमावस्याष्टकास्तिस्रः पौषमासादिषु त्रिषु" इत्यभिप्रेत्यैव स्वामिचरणैस्तिस्र इति व्याख्यातम् ॥ २१ ॥ माघेसितसप्तम्यां रथसप्तम्याम् । मघाराकासमागमे माघ्यां पौर्णमास्याम् । "कलाहीने सानुमतिः पूर्णे राका निशाकरे" इत्यमरः । तत्तन्मासप्रवृत्तिनक्षत्राणि चित्रादीनि यदा पूर्णचंद्रया राकया न्यूनचंद्रयाऽनुमत्या च युतानि स्युस्तदा तेष्वित्यर्थः । त्रिकांड्याममरनिर्मितनामलिंगानुशासनकोशे । एवमपरे मघया युक्ता पौर्णमासी यत्र स माघः । फाल्गुन्या युक्ता पौर्णमासी यत्र स फाल्गुनः एवं चैत्रादिष्वपि ज्ञेयम् ॥ २२ ॥ एकादशी ह्युपवासार्हैव ग्राह्या तत्र श्राद्धनिषेधात् तदुक्तं ब्रह्मवैवर्त्ते—"ये कुर्वंति महीपाल श्राद्धमेकादशीदिने । त्रयस्ते नरकं यांति दाता भोक्तानुमोदकः ॥" इति । उपवासार्ह

त एते श्रेयसः काला नृणां श्रेयोविवर्धनाः ॥ कुर्यात् सर्वात्मनैतेषु श्रेयोऽमोघं तदायुषः ॥ २४ ॥ येषु स्नानं जपो होमो व्रतं देवद्विजार्चनम् ॥ पितृदेवनृभूतेभ्यो यद्दत्तं तद्ध्यनश्वरम् ॥ २५ ॥ संस्कारकालो जायाया अपत्यस्यात्मनस्तथा ॥ प्रेतसंस्था मृताहश्च कर्मण्यभ्युदये नृप ॥ २६ ॥ अथ देशान्प्रवक्ष्यामि धर्मादिश्रेयआवहान् ॥ स वै पुण्यतमो देशः सत्पात्रं यत्र लभ्यते ॥ २७ ॥ बिंबं भगवतो यत्र सर्वमेतच्चराचरम् ॥ यत्र ह ब्राह्मणकुलं तपोविद्यादयान्वितम् ॥ २८ ॥ यत्रयत्र हरेरर्चा स देशः श्रेयसां पदम् ॥ यत्र गंगादयो नद्यः पुराणेषु च विश्रुताः ॥ २९ ॥ सरांसि पुष्करादीनि क्षेत्राण्यर्हाश्रितान्युत ॥ कुरुक्षेत्रं गयशिरः प्रयागः पुलहाश्रमः ॥ ३० ॥ नैमिषं फाल्गुनं सेतुः प्रभासोऽथ कुशस्थली ॥ वाराणसी मधुपुरी पंपा बिंदुसरस्तथा ॥ ३१ ॥ नारायणाश्रमो नंदा सीतारामाश्रमादयः ॥ सर्वे कुलाचला राजन्महेंद्रमलयादयः ॥ ३२ ॥

न केवलं श्राद्धस्यैवैते कालाः किं तु धर्ममात्रस्येत्याह । त एत इति द्वाभ्याम् । तदेवायुषः अमोघं साफल्यमित्यर्थः ॥ २४ ॥ २५ ॥ संस्कारकाल इति । जायायाः पुंसवनादि । अपत्यस्य जातकर्मादि । आत्मनो यज्ञदीक्षादि । प्रेतस्य संस्था दहनादि । मृताहश्च सांवत्सरिकं यदा अन्यस्मिन्नप्यभ्युदयार्थे कर्मणि श्रेयः कुर्यादित्यनुषंगः ॥ ॥ २६ ॥ यत्र यस्मिन्नेतच्चराचरमस्ति तस्य भगवतो बिंबं रूपं सत्पात्रं यत्र लभ्यते स वै पुण्यतमो देशः ॥ २७ ॥ २८ ॥ २९ ॥ अर्हैरुत्तमैराश्रितानि ॥ ३० ॥ ३१ ॥ सीताया रामस्य

यास्तस्या अप्राप्तौ तु परदिने । तदुक्तं पाद्मे—"एकादश्यां तु संप्राप्ते मातापित्रोर्मृतेऽहनि । द्वादश्यां तु प्रकर्त्तव्यं श्राद्धं नैकादशीदिने ॥" पुष्करखंडे "एकादश्यां यदा राम श्राद्धं नैमित्तिकं भवेत् । तद्दिनं तु परित्यज्य द्वादश्यां श्राद्धमाचरेत् ॥" इति वैष्णवसिद्धांते । स्मार्त्तास्तु—"एकादश्यामपि श्राद्धं प्राप्तं कुर्यान्न च त्यजेत् । पितृशेषं समाघ्राय गवे दत्त्वा व्रतं चरेत् ॥" इत्याहुः । स्वजन्मर्क्षे श्रवणर्क्षे चावश्यं दानादि कुर्याद्यस्मिन्दिने एतयोरधिकयोगो यत्राल्पयोगस्तत्रापि कार्यमेवेति भावः ॥ २३ ॥ अमोघमिति । भावप्रधानो निर्देशः । अमोघत्वमित्यर्थः । इत्यर्थ इति । उक्तकालेषु दानाद्यकरणे जन्मैव वृथेति भावः ॥ २४ ॥ एषूक्तेषु कालेषु ॥ २५ ॥ अभ्युदयार्थकर्मणि वापीकूपादिप्रतिष्ठादिकर्मणि ॥ २६ ॥ अथ कालकथनानंतरम् । आदिनार्थकामादिग्रहः । सच्च तत्पात्रं चेति सदाचारादियुक्तं दर्शनार्चनादिना रक्षकमित्यर्थः ॥ २७ ॥ तदेवाह—यत्र हेति । तपआदियुक्तं ब्राह्मणकुलमेव सत्पात्रं नान्यत् । तदुक्तम्—"न विद्यया केवलया तपसा वापि पात्रता । यत्र वृत्तमिमे चोभे तद्धि पात्रं प्रकीर्त्तितम् ॥" इति स्मृतेः । केचित्तु "केचिद्वदंति तपसा विद्यया केचिदेव हि । पात्रत्वं तस्य विज्ञेयं शूद्रान्नं यस्य नोदरे ॥" इत्याहुः ॥ २८ ॥ अर्चा प्रतिमा शालिग्रामादिरूपा "विश्वेदेवाः प्रस्तरेष्टाः" इति श्रुतेः । पुराणेषु श्रीभागवतादिषु । नद्यः कृष्णावेण्यादयः ॥ २९ ॥ क्षेत्राणि पुरुषोत्तमादीनि । उताथ वार्हैः पूज्यैरगस्त्यवसिष्ठादिभिराश्रितान्यधिष्ठितानि । गयशिरो गयाक्षेत्रम् । प्रयागो गंगायमुनासरस्वतीसंगमो देशः । पुलहाश्रमः हरिक्षेत्रम् ॥ ३० ॥ फाल्गुनं स्थानं कन्यातीर्थं हरपुरं वा "कन्यातीर्थं फाल्गुनं स्यात्स्थानं हरपुरं च तत्" इत्यभिधानादिति तीर्थः । पंपासरो बिन्दुसरश्च ॥ ३१ ॥ नारायणाश्रमो बदरीवनम् । नंदा नदीभेदः । कुलाचलानाह—महेंद्रेत्यादि । आदिना सह्यादिग्रहः । "महेंद्रो मलयः सह्यः शुक्तिमानृक्षवानपि । विंध्यश्च परियात्रश्च सप्तैते कुलपर्वताः ॥" इति भारतोक्तेः । सर्व इति सीतारामाश्रमादय इत्यत्रान्वेति । आदिनावतारांतर

एते पुण्यतमा देशा हरेरर्चाश्रिताश्च ये ॥ एतान् देशान् निषेवेत श्रेयस्कामो ह्यभीक्ष्णशः ॥ धर्मो ह्यत्रेहितः पुंसां सहस्राधिफलोदयः ॥ ३३ ॥ पात्रं त्वत्र निरुक्तं वै कविभिः पात्रवित्तमैः ॥ हरिरेवैक उर्वीश यन्मयं वै चराचरम् ॥ ३४ ॥ देवर्ष्यर्हत्सु वै सत्सु तत्र ब्रह्मात्मजादिषु ॥ राजन्य दग्रपूजायां मतः पात्रतयाच्युतः ॥ ३५ ॥ जीवराशिभिराकीर्ण आंडकोशांघ्रिपो महान् ॥ तन्मूलत्वादच्युतेज्या सर्वजीवात्मतर्पणम् ॥ ३६ ॥ पुराण्यनेन सृष्टानि नृतिर्यगृषिदेवताः ॥ शेते जीवेन रूपेण पुरेषु पुरुषो ह्यसौ ॥ ३७ ॥ तेष्वेषु भगवान्राजंस्तारतम्येन वर्तते ॥ तस्मात्पात्रं हि पुरुषो यावानात्मा यथेयते ॥ ३८ ॥ दृष्ट्वा तेषां मिथो नृणामवज्ञानात्मतां नृप ॥ त्रेतादिषु हरेरर्चा क्रियायै कविभिः कृता ॥ ३९ ॥ ततोऽर्चायां हरिं केचित् संश्रद्धाय सपर्यया ॥ उपासत उपास्तापि नार्थदा पुरुषद्विषाम् ॥ ४० ॥

चाश्रम आदिर्येषां द्वयोः पृथग्ग्रहणं वियोगकालाभिप्रायेण ॥ ३२ ॥ अर्चाश्रिताश्च स्थिरप्रतिमाश्रिताः पूर्वं तु शालग्रामशिलाद्यर्चनदेशा उक्ता इत्यपौनरुक्त्यम् । अत्र एषु देशेषु ईहितः कृतः । सहस्रगुणमधिकस्य फलस्योदयो यस्मात्स तथा ॥ ३३ ॥ अथ पात्रमाह । हरिरेव पात्रं निरुक्तं निर्णीतम् ॥ ३४ ॥ तदेवाह । देवेषु च ऋषिषु चार्हत्सु च तपोयोगादिसिद्धेषु ब्रह्मात्मजादिषु सनकादिष्वपि सत्सु तत्र त्वदीये राजसूये यद्यस्मादच्युत एव पात्रतया संमतः ॥ ३५ ॥ संमतत्वे हेतुमाह । जीवराशिभिर्व्याप्तो ब्रह्मांडकोश एव योंघ्रिपः सर्वजीवानामात्मनश्च तर्पणम् ॥ ३६ ॥ एतदेव पुरुषनामनिरुक्त्या द्रढयति । पुराणीति । नृतिर्यगादि रूपाणि पुराणि शरीराणि तेष्वंतर्यामिरूपेण प्रत्यगंशेन च यतः शेतेऽतः पुरुष इति प्रसिद्धः ॥ ३७ ॥ तारतम्येन तिर्यगादिभ्यः पुरुषे यस्मादाधिक्येन वर्तते तस्मात्पुरुषः पात्रं तत्रापि यावानात्मा ज्ञानांशो यथायथा ईयते तपआदियोगेन यत्रयत्र प्रतीयते तथातथाऽसौ पात्रमित्यर्थः । तथा च श्रुतिः । "पुरुषत्वे चाविस्तरामात्मा" इत्यादि ॥ ३८ ॥ तर्हि प्रतिमादौ हरेः किमिति पूजां कुर्वंति तत्राह । दृष्ट्वेति द्वाभ्याम् । मिथोऽवज्ञानमसन्मानस्तस्मिन्नात्मा बुद्धिर्येषां भावं दृष्ट्वा क्रियायै पूजाद्यर्थम् ॥ ३९ ॥ हरिमुपासते । उपासिता

कपिलाद्याश्रमादिग्रहः । अत एव सर्व इत्युक्तम् ॥ ३२ ॥ स्थिर प्रतिमा मन्दिरादिषु वैदिकविधिना स्थापिताः प्राक्तनार्षिदेवादिस्थापिता वा ॥ ३३ ॥ उर्वीशेति । राज्ञां बहुशास्त्रश्रवणादिसंभवात्तेषां तन्निश्चितमेव भवतीति भावः ॥ ३४ ॥ तदेव हरेः पात्रत्वमेव । हे राजन्निति । राजयति निजवृत्तश्रावणेनान्यानपीति यस्तादृशस्त्वमसीति भावः । अच्युतः सर्वथा च्युतिरहितः श्रीकृष्ण एवेत्यर्थः ॥ ३५ ॥ य आंडकोशस्तन्मूलत्वात् । 'तरोर्यथा मूलनिषेचनेन' इत्याद्युक्तेः ॥ ३६ ॥ एतदेव सर्वजीवात्मतर्पणमेव ॥ ३७ ॥ तारतम्येन न्यूनाधिकभावेन । तत्रापि पुरुषेष्वपि । आत्मशब्दस्य ज्ञानवाचकत्वं कोशादवसेयम् । इत्यर्थ इति । ज्ञानाद्याधिक्यमेव पात्रत्वे लिंगमिति भावः । पुरुषदेहे तस्य प्रत्यक्षं प्रायो भवतीत्यत्र प्रमाणमाह—तथा चेति। स्पष्टार्थो ॥ ३८ ॥ अत्राक्षिपति—तर्हीति । तेषां पुरुषोपासकानाम् । नृपेति । नृपालकत्वान्नृस्व भावं त्वं जानास्येवेति भावः । कविभिर्वेदार्थज्ञैः ॥ ३९ ॥ ततस्त्रेतात आरभ्य । केचिदित्युक्त्या बहवोर्चार्चनं विहाय मानसार्चनं कुर्वंतीति ध्वनितम् । इत्यर्थ इति । " यो मां सर्वेषु भूतेषु संतमात्मानमीश्वरम् ।

पुरुषेष्वपि राजेन्द्र सुपात्रं ब्राह्मणं विदुः ॥ तपसा विद्यया तुष्ट्या धत्ते वेदं हरेस्तनुम् ॥ ४१ ॥ नन्वस्य ब्राह्मणा राजन्कृष्णस्य जगदात्मनः ॥ पुनंतः पादरजसा त्रिलोकीं दैवतं महत् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे सदाचारनिर्णये चतुर्दशोऽध्यायः ॥ १४ ॥ नारद उवाच ॥ कर्मनिष्ठा द्विजाः केचित् तपोनिष्ठा नृपापरे ॥ स्वाध्यायेऽन्ये प्रवचने ये केचिज्ज्ञानयोगयोः ॥ १ ॥ ज्ञाननिष्ठाय देयानि कव्यान्यानंत्यमिच्छता ॥ दैवे च तदभावे स्यादितरेभ्यो यथाऽर्हतः ॥ २ ॥

ऽप्यर्चा पुरुषद्वेषिणामर्थदा न भवति पुरुषेषु द्वेषं हित्वाऽर्चिता सती साऽपि मंदाधिकारिणां पुरुषार्थप्रदा भवत्येवेत्यर्थः ॥ ४० ॥ पुरुषेष्वेव जात्या तपआदिभिश्च पुनर्विशेषांतरमाह । पुरुषेष्वपीति । यो धत्ते तं सुपात्रं विदुः ॥ ४१ ॥ एतदेव कैमुत्यन्यायेन द्रढयति नन्वस्येति ॥ ४२ ॥ इति सप्तमे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ततः पंचदशे सर्ववर्णाश्रमनिबंधनम् ॥ सारतः संग्रहेणाथ वर्ण्यते मोक्षलक्षणम् ॥ १ ॥ सर्वेषामपि मोक्षधर्माणां सारसंग्रहार्थमध्यायप्रारंभः । तत्र श्राद्धगतान्विशेषानाह । कर्मनिष्ठा इति । स्वाध्यायादिषु परिनिष्ठिता इति शेषः ॥ १ ॥ कव्यानि पितॄनुद्दिश्य देयानि । दैवे च हव्यान्यपि तस्मै देयानि । अथार्हत इति

हित्वार्चां भजते मौढ्याद्भस्मन्येव जुहोति सः ॥ अर्चादावर्चयेत्तावदीश्वरं मां स्वकर्मकृत् । यावन्न वेद स्वहृदि सर्वभूतेष्ववस्थितम् ॥ " इति श्रीकपिलदेवोक्तेरयं भावः ॥ ४० ॥ वेद एव साक्षाद्धरेस्तनुरस्ति तद्धारकत्वाद्ब्राह्मणमेव मुख्यं पात्रं विज्ञा विदुः । राजेन्द्रेति । ब्राह्मणार्चनादेव त्वया राजेंद्रत्वं लब्धमिति भावः । ब्रह्मशब्दवाच्यं वेदं योऽधीते ज्ञानेन स ब्राह्मण इति ।" तदधीते तद्वेद " इत्यणा ब्राह्मणपदव्युत्पत्तिर्दर्शिता ॥ ४१ ॥ अस्य कृष्णस्य ब्राह्मणा महद्दैवतं ननु निश्चयेन । उद्देश्यविधेयभावत्वाल्लिंगसंख्यानियमाभावः । हे राजन्निति । ब्राह्मणार्चनेन देदीप्यमानोऽसीति भावः ' अहं द्विजदेवदेवः ' इति श्रीऋषभदेवोक्तेः । " ब्रह्मण्यस्य परं दैवं ब्राह्मणाः किल ते प्रभो " इति सनकाद्युक्तेश्च ॥ ४२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥ ततो गृहस्थधर्मनिरूपणोत्तरम् ( १ ) । पूर्वत्र ब्राह्मणोत्कर्ष उक्तस्तत्र ब्राह्मणेष्वपि तारतम्यमाह—कर्मनिष्ठा गृहस्था विप्रास्तपोनिष्ठा वानप्रस्था अन्ये स्वाध्याये वेदाध्ययने प्रवचने सांगवेदाध्ययने केचिन्नैष्ठिका ब्रह्मचारिणः ज्ञानयोगनिष्ठाः संन्यासिनः समासांतर्वर्त्तिनापि निष्ठापदेनात्रानुवर्त्तिते न लक्षणया निष्ठावंतो बोध्यास्ततश्चैषां यथोत्तरं श्रैष्ठ्यं दर्शितम् ॥ १ ॥ कव्यानि पित्रुद्देश्यकवस्तूनि । दैवे च हव्यानि देवोद्देश्यकवस्तूनि च ज्ञाननिष्ठाय देयानि । आनंत्यं मोक्षं पितॄणां स्वस्य चेति मोक्षार्थिना गृहस्थेन ज्ञानिने सर्वकर्मफलमीश्वरेऽर्पितवते विप्रायैवाधिक्येन देयानि पञ्चाध्याय्या अस्या मोक्षप्रकरणत्वादत एव शुद्धभक्तानां कर्मानधिकाराद्गृहस्था अपि तेऽत्र कर्मज्ञानप्रकरणे पठिताः । तैश्च सुप्रतिष्ठितैर्व्यवहाररक्षा भरताम्बरीषादिभिरिव स्वप्रतिनिधिद्वारा कर्मकरणेन भक्तिमार्गनिन्दावादायनुत्थानार्थमेव क्रियत इत्युक्तं पञ्चमे । एकादशे प्रतिपादयिष्यते च तस्मान्मोक्षार्थिनां यथा ज्ञानिपूजैव मुख्या पुरुषांतरपूजा तु तदभाव एव तथा प्रेमभक्त्यर्थिनामैकांतिकभक्तपूजैव मुख्येति ज्ञापितमत्रापि ' स वै पुण्यतमो देशः ' इति पद्यव्याख्यायाम् । " मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने ॥ " इत्यादिना ज्ञानिभ्योपि तदुत्कर्षश्रवणात् । यथा च ज्ञानिनामर्चायां पूजा हि 'दृष्ट्वा तेषां मिथो नृणाम् इत्यादिना कनिष्ठाधिकारिणां व्याख्याता । तथा न भक्तानां व्याख्येया तेषां हि मुख्याधिकारिणामप्यर्चायां पूजादिकमुख्यमेव भक्त्यंगं तदुक्तमेकादशे "मल्लिंगमद्भक्तजनदर्शनस्पर्शनार्चनम् । परिचर्यास्तुतिप्रह्वागुणकर्मानुकीर्त्तनम् ॥ ममार्चास्थापने श्रद्धा स्वतः संहत्य चोद्यमः । वस्त्रोपवीताभरणपत्रस्रगनुलेपनैः ॥ अलं कुर्वीत सप्रेमा मद्भक्तो मां यथोचितम् ॥ "

**द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा ॥ भोजयेत् सुसमृद्धोपि श्राद्धे कुर्यान्न विस्तरम् ॥ ३ ॥**
**देशकालोचिता श्रद्धा द्रव्यपात्रार्हणानि च ॥ सम्यग् भवंति नैतानि विस्तरात् स्वजनार्पणात् ॥ ४ ॥**

सर्वत्र ज्ञानादितारतम्येन ॥ २ ॥ ३ ॥ ननु विस्तरः कुतः प्राप्तो येन निषिध्यते तत्राह । स्वजनानामर्पणात् । जामाता चेन्निमंत्र्यते तत्पित्रादयः कथं वर्ज्या इत्येवं

इति ।‘ प्रतिमा स्वल्पबुद्धीनाम् ’ इत्यादिकं तु ज्ञानिपरमल्पबुद्धीनामपीति व्याख्येयं नृसिंहपुराणे ब्रह्मांबरीषादीनामपि तत्पूजाश्रवणात् । तस्या महिमाधिक्यं विष्णुधर्मे च तामधिकृत्यांबरीषं प्रति विष्णुवाक्यम्—“तस्यां चित्तं समावेश्य त्यजेतान्यान्व्यपाश्रयन् । पूजिता सैव ते भक्त्या ध्याता चैवोपकारिणी ॥ गच्छंस्तिष्ठन्स्वपन्भुंजंस्तामेवाग्रे च पृष्ठतः । उपर्यधस्तथा पार्श्वे चिंतयंस्तामथात्मनः ॥” इत्यादि । स्कांदे च—“शालग्रामशिला यत्र तत्तीर्थं योजनत्रयम्” इति । पाद्मे च—“शालग्रामसमीपे तु क्रोशमात्रं समंततः । कीकटेऽपि मृतो याति वैकुंठभवनं नरः ॥” इति विश्वनाथः । आनंत्यं फलानंत्यं वा । तदभावे ज्ञानिविप्राभावे । यद्वा—ज्ञाननिष्ठाय श्रीगीतोक्तज्ञानलक्षणवते । तच्च“अमानित्वमदंभित्वमहिंसाक्षांतिरार्जवम् । आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः॥इंद्रियार्थेषु वैराग्यमनहंकार एव च।जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ असक्तिरनभिष्वंगः पुत्रदारगृहादिषु । नित्यं च समचित्तत्त्वमिष्टानिष्टोपपत्तिषु ॥ मयि चानन्ययोगेन भक्तिरव्यभिचारिणी । विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् । एतज्ज्ञानमिति प्रोक्तम्” इति त्रयोदशाध्याये उक्तम् । तदभावे तादृशालाभे यथार्हत इति । अमानित्वादिबहुलक्षणवतो लाभेऽल्पलक्षणवते न देयमित्यर्थः ॥ २ ॥ दैवे वैश्वदैविके । अत्रायं भावः—द्वौ द्वौ दैवे चत्वारो जाताः । पितृकार्ये त्रीस्त्रीनिति षण्णां पितॄणामष्टादश जाताः । सर्वसंयोगे द्वाविंशतिसंख्याका विप्राः समृद्धेन पार्वणे भोज्याः । स्वल्पवित्तवताऽष्टौ भोज्या उभयत्र दैवपितृकार्ये एकैकग्रहणेनेति । यद्वा—समृद्धोऽपि विस्तरं न कुर्यादिति ॥३॥ तत्र हेतुः—देशकालेति । इत्यर्थ इति । स्वजनार्पणेऽवश्यं विस्तरोपेक्ष्य इति भावः। प्रसंगाद्देशादीन्निरूपयति देशा गयादितीर्थदेशाः।“तीर्थादष्टगुणं पुण्यं स्वगृहे ददतः शुभे’ इति प्रभासखंडे । तुलसीशालग्रामादिसन्निधिमंतो देशा बहुशोभनाः । “प्रणष्टाश्रमधर्माश्च देशा वर्ज्याः प्रयत्नतः” । यमः—“रूक्षं कृमिहतं क्लिन्नं संकीर्णानिष्टगंधिकम् । देशं त्वनिष्टशब्दं च वर्जयेच्छ्राद्धकर्मणि” ॥ शंखः—“गोगजाश्वादिपृष्ठेषु कृत्रिमायां तथा भुवि । न कुर्याच्छ्राद्धमेतेषु पारक्यासु च भूमिषु ॥ नैकवासा न च द्वीपे नांतरिक्षे कदाचन॥” इत्यादिना पवित्रभूमावेव श्राद्धीयविप्राणां भोजनादिविस्तारे सर्वथा पवित्रदेशप्राप्तिर्न स्यात्। कालमाह—“द्वौ प्रहरौ घटिकान्यूनौ द्वौ प्रहरौ घटिकाधिकौ । स कालः कुतपस्तत्र पितॄणां दत्तमक्षयम्॥” इति । विस्तारे सोऽपि न लभ्यते पाकादिकरणबहुविप्राह्वानादिनेत्यर्थः । उचिता श्रद्धा अतीव श्रद्धया ब्राह्मणगृहे गत्वा स्वयं निमंत्रणादिरूपा सापि विस्तारे न स्यति बहुगृहगमनादिना वैकल्योत्पत्तेः । द्रव्याणि—“यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा । संतर्पयेत्पितन्मुद्गैः श्यामाकैः सर्षपद्रवैः ॥ नीवारैर्हरिश्यामाकैः प्रियंगुभिरथार्चयेत् ॥” । सुमंतुः—“पयो दधि घृतं चैव गवां श्राद्धेषु पावनम् । कूष्मांडं महिषीक्षीरमाढक्यो राजसर्षपाः ॥ चणका राजमाषाश्च घ्नंति श्राद्धं न संशयः॥” पूर्वं चणकस्य विधिस्तु शर्कराज्यमिलितमोदकरूपस्य । निषेधो हि केवलस्येति ज्ञेयम् । त्रिस्तारे विहिताविहितविवेको न भवति । पात्राणि ॥ ब्राह्मणाः । “सीदद्वृत्तिः सत्यवाक्पूरुषैः स्वैर्मातापित्रोः पंचभिः ख्यातवंशः । पत्नीयुक्तो ज्येष्ठनामा पुराणवेत्ता पुत्री चेतिहासेष्वभिज्ञः ॥ योगी भिक्षुः सामगो ब्रह्मवेत्ता पञ्चाग्निश्च श्रोत्रियस्तत्सुतो वा । शंभुध्यायी श्रीशपादाब्जसेवी पांथश्चैते तूत्तमाः संप्रदिष्टाः ॥ विना मांसेन मधुना विना च दक्षिणाशिषा । परिपूर्णं भवेच्छ्राद्धं यतिषु श्राद्धभोजिषु ॥ ” नारदस्तु—‘श्राद्धभोजी यतिर्नित्यमाशु गच्छति शूद्रताम्’ इत्यादिना यतेरेव दोषमाह न दातुरिति । “पितृपुत्रौ भ्रातरौ द्वौ निराग्निं गुर्विणीपतिम् । सगोत्रप्रवरं चैव श्राद्धेषु परिवर्जयेत्॥” इत्यादि । भारते तु—‘कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः । ग्रामप्रेष्यो वार्द्धुषिको गायकः सर्वविक्रयी ॥ सामुद्रिको राजभृत्यः” इत्यादिना बहवो निषिद्धाः । कुंडाशी विप्रोपि त्याज्यः । ब्राह्मे—“चतुःषष्टिपलैः प्रस्थः कुंडः प्रस्थचतुष्टयम् । भवेत्तद्यस्य रोचेत स

देशे काले च संप्राप्ते मुन्यन्नं हरिदैवतम् ॥ श्रद्धया विधिवत् पात्रे न्यस्तं कामधुगक्षयम् ॥ ५ ॥ देवर्षिपितृभूतेभ्य आत्मने स्वजनाय च ॥ अन्नं संविभजन् पश्येत् सर्वं तत्पुरुषात्मकम् ॥ ६ ॥ न दद्यादामिषं श्राद्धे न चाद्याद्धर्मतत्त्ववित् ॥ मुन्यन्नैः स्यात् परा प्रीतिर्यथा न पशुहिंसया ॥ ७ ॥ नैतादृशः परो धर्मो नृणां सद्धर्ममिच्छताम् ॥ न्यासो दंडस्य भूतेषु मनोवाक्कायजस्य सः ॥ ८ ॥ एके कर्ममयान् यज्ञाञ्ज्ञानिनो यज्ञवित्तमाः ॥ आत्मसंयमनेऽनीहा जुह्वति ज्ञानदीपिते ॥ ९ ॥

प्राप्ताद्विस्तरादित्यर्थः ॥ ४ ॥ मुन्यन्नमारण्यं व्रीह्यादि हरिदैवतं हरये निवेदितं सत् ॥ ५ ॥ पुरुषात्मकमीश्वरस्वरूपम् ॥ ६ ॥ ७ ॥ दंडस्य न्यासो हिंसायास्त्यागो य एतादृशोऽन्यो धर्मो नास्ति ॥ ८ ॥ अत एवोत्तमाधिकारिणो बाह्यानि कर्माणि त्यजंतीत्याह । एक इति । अनीहा निष्कामाः । ज्ञानदीपित आत्मस्फूर्तिमत्यात्मसंयमने

कुंडाशी पतत्यधः॥'' इति । विस्तारे ग्राह्याग्राह्यविचार एव नोदेति । अर्हणं विप्रपूजनम् । तदपि विस्तारे नश्यति पादप्रक्षालनमपि बहूनां न भवति कुतोर्हणमिति ॥ ४ ॥ ५ ॥ ६ ॥ आमिषमत्र मांसं ग्राह्यम् 'न तथा पशुहिंसया' इत्यग्रिमोक्तेः । तच्च सर्वथा त्याज्यम् । अत्रार्थे मोक्षधर्मीया भारतगाथानुसंधेयोपरिचरवसुसंबंधिनी तत्र च ''अजेन यष्टव्यमिति प्राहुर्देवा द्विजोत्तमान् । स च च्छागोप्यजो ज्ञेयो नान्यः पशुरिति स्थितिः॥ऋषय ऊचुः॥ बीजैर्यज्ञेषु यष्टव्यमिति वै वैदिकी श्रुतिः । अजसंज्ञानि बीजानि छागं नो हंतुमर्हथ॥नैष धर्मः सतां देवा यत्र वध्येत वै पशुः॥'' इति । अत्र टीकायां श्रीनीलकंठेनापीत्थमेव व्याख्यातम् । ''अजसंज्ञानि बीजानि तस्मादेष एतेषां पशूनां प्रयुक्ततमो यदजस्तेजमालभंत सोजादालब्धादुदक्रामत्स इमां प्राविशत्तस्मादियं मेध्याभवत्तमस्यामन्ववायन्सोऽनुगतो व्रीहिरभवत्'' इति बह्वृचब्राह्मणम् । सर्वेषां पशूनां स यज्ञो मेध्यताख्यः । इमां पृथिवीं प्रविष्टः अन्ववायन् अन्वेषितवंतः । इयं श्रुतिः पुरोडाशस्तुतिमात्रपरा न तु पशूनाममेध्यत्वप्रतिपादनपरा । 'न हि निंदा निंद्यं निंदितुं प्रवर्त्ततेऽपि तु विधेयं स्तोतुम्' इति न्यायात् । इति भोगलोलुपानां देवतानां मतम् । वीतरागाणामृषीणां तु मानांतराविसंवादादहिंसाशास्त्रानुग्रहाच्चावांतरतात्पर्येण प्रतीयमानोऽर्थो यथाभूत एव न तु स स्वार्थेऽप्रमाणम् । यथाहुः संप्रदायविदः ।:''विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥'' इति । तत्र यजमानः प्रस्तर इत्यादिः । प्रस्तरयजमानयोरभेदस्य प्रत्यक्षविरोधात्प्रस्तरस्तुत्यर्थं गुणवादोऽयम् 'अग्निर्हिमस्य भेषजम्' इति लोकावगतार्थत्वादनुवादः मेधातिथिं काण्वायनं मेषो भूत्वेंद्रो जहारेत्यादिर्विरोधानुवादयोरभावाद्भूतार्थवाद इति श्लोकार्थः । न चात्रापि क्रत्वर्थेनालंभविधिना पुरुषार्थनिषेधस्य विरोधोऽस्ति अतोर्थवादोऽप्ययं स्वार्थेऽवांतरतात्पर्यविधया देवताधिकरणन्यायेन प्रामाण्यमश्नुवीत अन्यथा भारतरामायणादीनामपि स्वार्थे प्रामाण्यं विहन्येतेति । तस्मादजस्थस्य मेधस्य बीजेषु संक्रमाद्बीजान्येवाजसंज्ञानीति युक्तम् । किञ्चैतन्निर्णयार्थं देवैर्ऋषिभिश्चोपरिचरवसुः पृष्टः भो राजन् केन यष्टव्यमजेनाहोस्विदौषधैरिति तेन देवपक्षपाताच्छागेनाजेन यष्टव्यमित्युक्तम् । तदा कुपितैर्मुनिभिरुक्तम्–''सुरपक्षो गृहीतस्ते यस्मात्तस्माद्दिवः पत । अद्यप्रभृति ते राजन्नाकाशे विहता गतिः ॥ अस्मच्छापाभिघातेन महीं भित्त्वा प्रवेक्ष्यसि । ततस्तस्मिन्मुहूर्त्तेऽथ राजोपरिचरस्तदा॥ अधो वै संबभूवाशु भूमेर्विवरगो नृप ॥'' इत्यलमतो न मांसेन श्राद्धादि विधेयम् कलौ तु सर्वथैव न कार्यम् ''अश्वालंभं गवालंभं संन्यासं पलपैतृकम् । देवराच्च सुतोत्पत्तिं कलौ पंच विवर्जयेत् ॥'' इति निर्णयाब्ध्युक्तेः । मांसविधिस्तु–सर्वथान्नाभावपरतयोन्नेयः श्राद्धविधेरावश्यकत्वपरो वा पायसाद्यलाभे मांसेनापि श्राद्धं कार्यमेव न कदापि तत्त्यजेदिति तात्पर्यम् ॥ ७ ॥ परः उत्कृष्टः 'अहिंसा परमो धर्मः' इति स्मृतेः ॥ ८ ॥ इत्यर्थ इति । कर्ममययज्ञा हि मनोनियमने विघ्ना एवेति भावः । तत् कर्मत्यजनम् । सर्वज्ञसूक्तैः संक्षेपशारीरिकाचार्यैः । प्रतीचो ब्रह्मणः स्फूर्त्तिर्यस्य स कर्म संत्यजेत्किं कृत्वा तनौ सूक्ष्मरूपे ब्रह्मणि या निष्ठा तस्या विघातकं संलक्ष्य, किं भूतः तत्त्वनिष्ठेति पाठस्तूत्तानार्थ एव न कदाचिदनीदृशं जगत् इति मीमांसकमते प्रपंचस्य सत्त्वोक्तेः न सतः प्रपञ्चस्य स्फूर्त्तिर्यस्य

द्रव्ययज्ञैर्यक्ष्यमाणं दृष्ट्वा भूतानि बिभ्यति ॥ एष माऽकरुणो हन्यादतज्ज्ञो ह्यसुतृब् ध्रुवम् ॥ १० ॥ तस्माद्दैवोपपन्नेन मुन्यन्नेनापि धर्मवित् ॥ संतुष्टोऽहरहः कुर्यान्नित्यनैमित्तिकीः क्रियाः ॥११॥ विधर्मः परधर्मश्च आभास उपमा छलः ॥ अधर्मशाखाः पंचेमा धर्मज्ञोऽधर्मवत्त्यजेत् ॥१२॥ धर्मबाधो विधर्मः स्यात्परधर्मोऽन्यचोदितः ॥ उपधर्मस्तु पाखंडो दंभो वा शब्दभिच्छलः ॥ १३ ॥ यस्त्विच्छया कृतः पुंभिराभासो ह्याश्रमात् पृथक् ॥ स्वभावविहितो धर्मः कस्य नेष्टः प्रशांतये ॥ १४ ॥

जुह्वति । मनो नियम्य तदंतरायतया त्यजंतीत्यर्थः । तदुक्तं सर्वज्ञसूक्तैः । “प्रत्यक्स्फूर्तिरसत्स्फूर्तिस्तनुनिष्ठाविघातकम् ॥ संलक्ष्य संत्यजेत्कर्म त्यजन्विघ्नहतोऽन्यथा” इति ॥ ९ ॥ मा मामेष ध्रुवं हन्यादिति । कुतः अकरुणः । तत्कुतः असुतृप्प्राणतर्पकः । तत्किम् । अतज्ज्ञ आत्मतत्त्वानभिज्ञः । तथा च श्रुतिः । “न तं विदाथ य इमा जजानान्यद्युष्माकमंतरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरंति” इति ॥ १० ॥ प्रस्तुतमनुवर्तयति । तस्मादिति ॥ ११ ॥ अधर्मवत्साक्षान्निषिद्धवत् ॥ १२ ॥ क्रममनादृत्य पंचापि व्याचष्टे । धर्मबाधो धर्मबुद्ध्याऽपि यस्मिन्क्रियमाणे स्वधर्मबाधः । अन्यस्य चोदितोऽन्यस्य परधर्मः । उपमेति व्याचष्टे । उपधर्मस्त्विति । शब्दस्य भिद्भेदोऽन्यथा व्याख्यानं यस्मिन् । यथा दशावरान्भोजयेदित्युक्ते दशभ्योऽवरानिति । शब्दभृदिति पाठे धर्मशब्दमात्रं बिभर्तीति तथा यथा गां दद्यादित्युक्ते मरिष्यंत्या गोर्दानम् ॥ १३ ॥ स्वधर्मानुष्ठानानंतरं धर्मभयस्त्वार्थमपि परधर्मो नानुष्ठेयोऽनुपयोगादित्याह स्वभावविहित इति ॥ १४ ॥

स तथा अन्यथा ज्ञानोदयं विना कर्म त्यजन्पुमान् विघ्नैरैहिकामुष्मिकैर्निन्दानरकादिभिर्हतः स्यादुभयभ्रष्टः स्यादिति भावः ॥ ९ ॥ द्रव्ययज्ञैः पश्वादियागैर्यक्ष्यमाणं यज्ञकरणोत्सुकं भूतानि स्थावरजंगमानि जंगमस्थावराणामपि स्वशाखोच्छेदनादिना भयोत्पत्तेः ‘तस्मात्पश्यंति पादपाः’ इत्यादिभारतोक्तेस्तेषामपि दर्शनादिज्ञानश्रवणाच्च । अत्र देवलजैगीषव्यकथाऽनुसंधेया । स च ज्ञानयज्ञं त्यक्त्वा पुनः कर्मयज्ञप्रवृत्तस्तं दृष्ट्वा सर्वस्थावराणां शोको जातस्स पुनर्देवलो जैगीषव्योपदेशेन तत्त्यक्त्वा ज्ञानमार्गे एव प्रवृत्त इति शल्यपर्वणि । हनने हेतुमाशंकते—कुत इति । तत् अकरुणत्वमपि । तत्प्राणतर्पणमपि किं कुतः । आत्मतत्त्वानभिज्ञत्वे प्रमाणमाह—तथा चेति । जजान जनयामास । अन्यद्ब्रह्म । नीहारेण तमसा । जल्प्यास्तार्किकाः । उक्थशासो मीमांसकाश्चादन्ये सांख्यादय आवृता आच्छादितास्तं न जानंतीति श्रुतिपदार्थः ॥ १० ॥ यस्माद्धिंसा न शोभना तस्माद्धेतोः संतुष्टो हिंसामकुर्वन्नित्यर्थः ॥ ११ ॥ धर्मज्ञो वेदविहितधर्मनिपुणः यथाऽधर्मस्त्यज्यते तथेमा अपि त्यजेदित्यर्थः ॥ १२ ॥ यथा रोगार्त्तेन धर्मबुद्ध्या शुद्धिधिया यथोक्तस्नानशौचादौ क्रियमाणे पापोत्पत्तेर्धर्महानिरेव “अशक्तेन शरीरेण स्नानं कुर्वंति ये बलात् । आत्महत्या कृता तैस्तु तया ते नरकाय वै ॥” इति स्मृतेः । यथा च ब्राह्मणेन धर्मबुद्ध्या ध्रियमाणे तप्तमुद्रादौ स्वधर्महानिरेव “शंखचक्रे मृदा यस्तु कुर्यात्तप्तायसेन वा । स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥” इत्याश्वलायनोक्तेः । अन्यस्य विप्रस्य चोदितो विहितो भिक्षाटनादिरन्यस्य क्षत्रियादेस्स परधर्मः । पाखंडोऽवेदमूलकः चैत्यवंदनादिः । जटाभस्मकाषायांबरधारणादिकमपि धर्मो नास्ति तत्र धर्म इव प्रतीयते एव । तत्प्रतिपादितं पृथूपाख्यानेऽश्वहरणावसरे इंद्रप्रदर्शितम् । दशभ्योऽवरानष्ट नव वेत्यर्थस्तत्पुरुषसमासाश्रयणेन न तु बहुव्रीहिणा दशावरा अधिका येषु शतादिषु तान् दशोत्तरशतादीनित्यर्थः ॥ १३ ॥ पुंभिः शास्त्रद्विड्भिर्यः स्वेच्छयैव निर्मितः यथा शिरःसशिखमुंडनमनुष्यमात्रान्नभक्षणस्वप्रियवस्त्रधृतिवेददेवब्राह्मणनिंदनादिरूपो विचार्यमाणेन कस्मिन्नप्या

धर्मार्थमपि नेहेत यात्रार्थं वाऽधनो धनम् ॥ अनीहानीहमानस्य महाहेरिव वृत्तिदा ॥ १५ ॥ संतुष्टस्य निरीहस्य स्वात्मारामस्य यत्सुखम् ॥ कुतस्तत्कामलोभेन धावतोऽर्थेहया दिशः ॥ १६ ॥ सदा संतुष्टमनसः सर्वाः सुखमया दिशः ॥ शर्कराकंटकादिभ्यो यथोपानत्पदः शिवम् ॥१७॥ संतुष्टः केन वा राजन्न वर्तेतापि वारिणा ॥ औपस्थ्यजैह्व्यकार्पण्याद्गृहपालायते जनः ॥ १८ ॥ असंतुष्टस्य विप्रस्य तेजो विद्या तपो यशः ॥ स्रवंतींद्रियलौल्येन ज्ञानं चैवावकीर्यते ॥ १९ ॥ कामस्यांतं च क्षुत्तृड्भ्यां क्रोधस्यैतत्फलोदयात् ॥ जनो याति न लोभस्य जित्वा भुक्त्वा दिशो भुवः ॥ २० ॥ पंडिता बहवो राजन् बहुज्ञाः संशयच्छिदः ॥ सदसस्पतयोऽप्येके असंतोषात्पतंत्यधः ॥ २१ ॥ असंकल्पाज्जयेत्कामं क्रोधं कामविवर्जनात् ॥ अर्थानर्थेक्षया लोभं भयं तत्त्वावमर्शनात् ॥ २२ ॥

किं चाधनो धर्मार्थं धनं नेहेत नापेक्षेत धनार्थं न व्याप्रियेतेति वा । दैवोपपन्नेनैव स्वधर्मसिद्धेरुक्तत्वात् । यात्रार्थमपि नेहेतेत्येतत्प्रपंचयति अनीहेति सार्द्धैः षड्भिः ॥ १५ ॥ ॥ १६ ॥ उपानहौ पादयोर्यस्य स उपानत्पात्तस्य ॥ १७ ॥ गृहपालः श्वा तद्वदाचरति ॥ १८ ॥ १९ ॥ क्षुधा तृषा च जनः कामस्यांतं याति । अन्नोदकातिरिक्तकामांतराभावात् । क्रोधस्य चांतं याति । एतस्य क्रोधस्य यत्फलं हिंसा तस्योदयान्निष्पत्तेः । दिशो जित्वाऽपि भुवो भुक्त्वाऽपि लोभस्य नैवांतं यातीत्यर्थः ॥ २० ॥ २१ ॥ इदानीं कामादिजयोपायानाह असंकल्पादिति चतुर्भिः । जयेदिति यथाऽपेक्षमन्वेति । अर्थेऽनर्थदर्शनेन । तत्त्वावमर्शनादद्वैतानुसंधानेन ॥ २२ ॥

श्रमेऽपर्यवसायी स च मूर्खान्प्रति धर्म इवाभासतेऽतो धर्माभासो न तु धर्मः। अतः स्वभावविहितः 'शमो दमस्तपः शौचम्' इत्यादिना श्रीगीतासु योऽभिहितः स कस्य प्रशांतये प्रकृष्टशांतये मोक्षाय नेष्टो नेप्सितोऽपि तु सर्वस्यैव "स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इति श्रीमुखोक्तेः ॥ १४ ॥ अन्यदाह—किंचेति । अनीहमानस्यावांछतः । अनीहा निर्व्यापारत्वं निष्कामत्वं वा महाहेरजगरस्यैव वृत्तिं भोगं ददातीति तथा ॥ १५ ॥ अर्थेहया धनेच्छया ॥ १६ ॥ १७ ॥ केन वा न वर्त्तेत अपि तु वारिणापि वर्त्तेतेत्यर्थः । यद्वा—केनांबुना येन केन वा संतुष्टः वार्यते मोक्षमार्गानुयायिभिस्त्यज्यत इति वारि भोगलांपट्यं तेन न वर्त्तेत तस्यैव दैन्योत्पादकत्वात् । तदेवाह—औपस्थ्येति। उपस्थस्य कर्मौपस्थ्यं सुरतं जिह्वायाः कर्म जैह्व्यं रसलेहनादि तयोस्ताभ्यां वा यत्कार्पण्यं दैन्यं तस्मात् । तद्वत्—श्ववत् 'कृशः काणः खञ्जः' इत्यादिभर्तृहरिशतकोक्तेः । ॥ १८ ॥ ब्राह्मणेन सर्वथा संतोष एव सेव्य इत्याह—असंतुष्टस्येति । तेजो ब्रह्मवर्चस्वित्वं शापानुग्रहशक्तिर्वा । अवकीर्यतेऽधः पतति ॥ १९ ॥ इत्यर्थ इति । "यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । न दुह्यंति मनःप्रीतिं पुंसः कामहतस्य वा ॥" इत्युक्तेरिति भावः ॥ २० ॥ एके बहवः । संध्यभाव आर्षः ॥ २१ ॥ असंकल्पात् स्त्रीस्मरणादिना कामोत्पत्तावपि मया नैव स्त्री भोक्तव्येति संकल्पसदृशान्निश्चयात्कामं जयेत् । सादृश्ये नञ् यथाद्य न भोक्तव्यमिति । निश्चये सत्युपवासादौ क्षुत्पिपासाजयः । कामविवर्जनात् काम इच्छाविषयः । कोऽपि न हिंसनीय इति हिंसेच्छावर्जनात्क्रोधम् । अर्थे लोभ्ये वस्तुन्यायत्यामनर्थदर्शनाभ्यासाल्लोभं यद्वैकादशे वक्ष्यमाणा 'भेदो वैरमविश्वासः' इत्यादिना पंचदशानर्थास्तेषां तत्र विचारेण 'भयं द्वितीयाभिनिवेशतः स्यात्' इत्युक्तेः "द्वितीयाद्वै भयं भवति" इति श्रुतेश्च । यद्वा—प्रारब्धफलस्यावश्य

आन्वीक्षिक्या शोकमोहौ दंभं महदुपासया ॥ योगांतरायान् मौनेन हिंसां कायाद्यनीहया ॥ २३ ॥ कृपया भूतजं दुःखं दैवं जह्यात् समाधिना ॥
आत्मजं योगवीर्येण निद्रां सत्त्वनिषेवया ॥ २४ ॥ रजस्तमश्च सत्त्वेन सत्त्वं चोपशमेन च ॥ एतत् सर्वं गुरौ भक्त्या पुरुषो ह्यंजसा जयेत् ॥ २५ ॥
यस्य साक्षाद्भगवति ज्ञानदीपप्रदे गुरौ ॥ मर्त्यासद्धीः श्रुतं तस्य सर्वं कुंजरशौचवत् ॥ २६ ॥ एष वै भगवान् साक्षात् प्रधानपुरुषेश्वरः ॥
योगेश्वरैर्विमृग्यांघ्रिर्लोको वै मन्यते नरम् ॥ २७ ॥ षड्वर्गसंयमैकांताः सर्वा नियमचोदनाः ॥ तदंता यदि नो योगानावहेयुः श्रमावहाः ॥ २८ ॥

आन्वीक्षिक्याऽऽत्मानात्मविवेकेन महतां सात्त्विकानां सेवया योगस्यांतरायान् लोकवार्तादीन् ॥ २३ ॥ येभ्यो भूतेभ्यो भयं जायेत तेष्वेव कृपया हिताचरणेन । दैवं देवोपसर्ग निमित्तं वृथा मनःपीडादि । तदुक्तं याज्ञवल्क्येन । "विमना विफलारंभः संसीदत्यनिमित्ततः" इति । आत्मजं देहजम् । योगवीर्येण प्राणायामादिबलेन । सत्त्वनिषेवया सात्त्विकाहारादिना ॥ २४ ॥ २५ ॥ ननु कथं गुरौ भक्त्या सर्वस्य जयः स्यात्तस्यापि मनुष्यत्वेन तदवस्थत्वात्तत्राह यस्येति । मर्त्यासद्धीर्मनुष्य इति दुर्बुद्धिः । तस्य शास्त्रश्रवणं कुंजरस्नानवद्व्यर्थम् ॥ २६ ॥ ननु गुरोरपि पुत्रादयस्तं नरमेव मन्यंतेऽत आह एष गुरुः साक्षाद्भगवानेव भवेत् । लोकस्य नरोऽसाविति बुद्धिर्भ्रांतिरित्यर्थः । यद्वा न हि तत्पुत्रादेर्मनुष्यबुद्ध्या प्रतीयमानोऽपि गुरुर्भगवान्न भवेत् । यथैष श्रीकृष्ण इत्यर्थः ॥ २७ ॥ एवं सर्वैरुपायैः कामादिवेगं जित्वा नियतेंद्रियो भूत्वा ध्यानपरो भवेत् । अन्यथा तं प्रति सर्वशास्त्रवैफल्यं स्यादित्याह । षड्वर्गेति । सर्वा अपि नियमचोदना इष्टापूर्तादिविधयः षडिंद्रियवर्गस्य यः संयमस्तस्मिन्नेवैकस्मिन्नंतो यासां

भोग्यत्वेन कः कस्य दुःखहेतुरित्यादितत्त्वविचारात् ॥ २२ ॥ आत्मनः कदापि न नाशोऽस्ति तथा नात्मनः कदापि सर्वथा स्थितिर्नास्तीत्यादिविचारेण शोकमोहौ । दंभो हि पामरजनसंगादेव पुरुषस्योदेति महतां संगे तद्दोषश्रवणादिना स्वयमेव शाम्यतीत्यर्थः । मौनिनः पार्श्वे लोकाः प्रायो न गच्छंति ततः स्वयमेव लोकवार्त्ताद्यभावोऽपि भवतीति भावः ॥ २३ ॥ येभ्यो भूतेभ्यः सर्पव्याघ्रादिभ्यः । स्वहिताहितकर्त्तारं सर्वे जानंति सर्वत्रांतर्यामिण ऐक्यादतो विरोधिनो हिताचरणे सोऽपि तदहितं न करोतीति भावः । देवोपसर्गा अग्निदाहादयस्तन्निमित्तकं वृथा मनःपीडादौ प्रमाणमाह—तदुक्तमिति । कर्मण्यारब्धे तदसिद्धौ वैमनस्यं वृथैव दैवस्य दुर्निवार्यत्वादतोऽनिमित्ततो वृथैव संसीदति दुःखी भवतीति स्मृत्यभिप्रायः । समाधिना चित्तैकाग्र्येण । देहजं वातादिवैषम्यजम् ॥ २४ ॥ सत्त्वेन सत्त्वाधिक्येन । उपशमेनौदासीन्येन । सर्वेषां मुख्यं जयप्रकारमेकमेवाह—एतत्पूर्वोक्तं कामादिकं सर्वं गुरौ सुदृढभक्त्यांजसा शीघ्रमनायासेनैव जयेत् । "सर्वरोगोपशमनमेकमेव महौषधम्" इतिवत् ॥ २५ ॥ अत्राक्षिपति—नन्विति । साक्षाद्भगवतीत्युक्तेर्भगवदंशबुद्धिरपि गुरौ नो कार्येति भावः ॥ २६ ॥ पुनराक्षिपति—नन्विति । इत्यर्थ इति । 'सर्वदेवमयो गुरुः' इत्युक्तेर्भ्रान्तस्यैव गुरौ मनुष्योऽयमिति धीरुदयत इति भावः । अग्नौ नायमग्निरिति ज्ञाने स किमग्निर्न भवतीत्याह—यद्वेति । इत्यर्थ इति । यथा वसुदेवादिपुत्रबुद्ध्या नारदादिभिः श्रीकृष्णे मनुष्यबुद्धिर्न क्रियते तथा शिष्येणापि गुरावेष साक्षाद्भगवानेवेति बुद्धिरेव कार्येति भावः ॥ २७ ॥ अन्यथा ध्यानाभावे । तं जितेंद्रियं प्रत्यपि । इत्यर्थ इति । सर्वेष्टपूर्त्तादयः षड्वर्गसंयमतात्पर्यका एवेति भावः । तावतापि षड्वर्गसंयमे सत्यपि । चरितार्थाः कृतार्थाः । तदंताः षड्वर्गसंयमैकांताः । इत्यर्थ इति । जलार्थं कूपखनने कृते जलानुत्पत्त्या यथा श्रम

यथा वार्त्तादयो ह्यर्था योगस्यार्थं न बिभ्रति ॥ अनर्थाय भवेयुस्ते पूर्तमिष्टं तथाऽसतः ॥ २९ ॥ यश्चित्तविजये यत्तः स्यान्निःसंगोऽपरिग्रहः ॥ एको विविक्तशरणो भिक्षुर्भिक्षामिताशनः ॥३०॥ देशे शुचौ समे राजन् संस्थाप्यासनमात्मनः ॥ स्थिरं समं सुखं तस्मिन्नासीतर्ज्वंग ओमिति ॥३१॥ प्राणापानौ सन्निरुंध्यात् पूरकुंभकरेचकैः ॥ यावन्मनस्त्यजेत्कामान्स्वनासाग्रनिरीक्षणः ॥ ३२ ॥ यतोयतो निःसरति मनः कामहतं भ्रमत् ॥ ततस्तत उपाहृत्य हृदि रुंध्याच्छनैर्बुधः ॥ ३३ ॥ एवमभ्यसतश्चित्तं कालेनाल्पीयसा यतेः ॥ अनिशं तस्य निर्वाणं यात्यनिंधनवह्निवत् ॥३४॥ कामादिभिरनाविद्धं प्रशांताखिलवृत्ति यत् ॥ चित्तं ब्रह्मसुखस्पृष्टं नैवोत्तिष्ठेत कर्हिचित् ॥३५॥ यः प्रव्रज्य गृहात्पूर्वं त्रिवर्गावपनात्पुनः ॥ यदि सेवेत तान् भिक्षुः स वै वांताश्यपत्रपः ॥३६॥ यैः स्वदेहः स्मृतो नात्मा मर्त्यो विट्कृमिभस्मसात् ॥ त एनमात्मसात्कृत्वा श्लाघयंति ह्यसत्तमाः ॥३७॥

तदेकपरा इत्यर्थः । न च तावताऽपि चारितार्था इत्याह तदंताः सत्योऽपि यदि योगान्धारणाध्यानसमाधीन्नो आवहेयुर्न साधयेयुस्तर्हि केवलं श्रमावहा एवेत्यर्थः ॥ २८ ॥ एतदेव दृष्टांतेनाह । यथा वार्तादयः कृष्यादयोऽर्थास्तत्फलानि च योगस्यार्थं मोक्षं न साधयंति प्रत्युतानर्थाय संसारायैव । असतो बहिर्मुखस्येष्टापूर्तादपि तथा ॥२९॥ एवं योगं युंजतोऽपि यस्य कुटुंबादिसंगेन चित्तं विक्षिप्येत तस्य कृत्यमाह । यश्चित्तस्य विजये यत्त उद्युक्तः स भिक्षुः स्यात्संन्यसेत् । तथा च स्मृतिः । "द्वंद्वाहतस्य गार्हस्थ्यं ध्यानभंगादिकारणम् । लक्षयित्वा गृही स्पष्टं संन्यसेदविचारयन्" इति । भिक्षया प्राप्तं मितमशनं यस्य सः ॥ ३० ॥ ऋजु सममंगं यस्य सः । सुखं यथा भवत्येवमासीत । ओमित्युच्चारयन्निति शेषः ॥ ३१ ॥ ३२ ॥ ३३ ॥ एवमनिशमभ्यस्यतस्तस्य यतेश्चित्तं निर्वाणं शांतिं याति ॥ ३४ ॥ न च पुनर्विक्षिप्येतेत्याह । कामादिभिरक्षुभितं यच्चितं तन्नोत्तिष्ठेत । यतः प्रशांता अखिला वृत्तयो यस्य कुतः ब्रह्मसुखेन स्पृष्टम् ॥ ३५ ॥ यस्तु प्रव्रज्यां कृत्वाऽपि भोगमभिलिप्सुः स्यात्तं निंदति । य इति । त्रयाणां धर्मादीनां वर्ग आसमंतादुप्यते यस्मिंस्तस्माद् गृहात्तान्धर्मादीन् वांताशी छर्दितभोजी निर्लज्जश्च ॥ ३६ ॥ न चेदमघटितं दृष्टत्वादित्याह यैः पूर्वं स्वदे

एव जायते तथाऽत्रापीति भावः ॥ २८ ॥ एतदेव श्रमावहत्वमेव । बहिर्मुखस्य भगवद्विमुखस्यावशीकृतमनसः "असंयतं यस्य मनोऽप्रशांतं दानादिभिः किं वद तस्य कृत्यम्" इत्येकादशे भिक्षुगीतोक्तेः ॥ २९ ॥ चित्तजयोद्यतस्य संन्यासे प्रमाणमाह–तथा चेति । द्वंद्वैः सुखदुःखादिभिराहतस्य गार्हस्थ्यं ध्यानभंगादेः कारणं दृष्ट्वा तत्क्षणमेव संन्यासं कुर्यादिति स्मृत्यर्थः । विविक्तं जनसंगरहितं शरणं वासस्थलं यस्य सः ॥ ३० ॥ उच्चारयन्निति शेषः । "अभ्यसेन्मनसा शुद्धं त्रिवृद्ब्रह्माक्षरं परम्" इत्युक्तेः ॥ ३१ ॥ कामान्वासना यावत्त्यजेत्तावत्पर्यंतं प्राणायामाभ्यासं कुर्यात्प्राणायामस्यापि मनोजयहेतुत्वात् । "प्राणस्पंदनिरोधश्चेत्युपाया मनसो जये" इति विद्यारण्योक्तेः । एतच्चाद्यपद्यव्याख्याशतके वर्णितं विस्तरेण ॥ ३२ ॥ यतोयतो विषयात् । उपाहृत्य संनिकृष्य । हृदि तत्रस्थे ब्रह्मणि रुंध्यात्स्थापयेत् ॥ ३३ ॥ अनिशं त्रिकालं सर्वदा वा ॥ ३४ ॥ प्रशांताखिलवृत्तित्वे हेतुं पृच्छति–कुत इति । ब्रह्मानंदे सर्वानंदानामंतर्भूतत्वात् "तस्यैवानंदस्य मात्रामुपजीवंति" इति श्रुतेः । यथा सितोपलाशिनश्चेतो द्रवीभूतासितवर्णं सितामलं प्रति कदापि नोत्तिष्ठते किन्तु तत्स्मरणेनाप्याकुलं भवति तथा ब्रह्मसुखस्पर्श्यपि चेत इतरविषयान्प्रत्युत्थानं न करोति प्रत्युत तेषां स्मरणमपि न सहत इति भावः ॥ ३५ ॥ वांताशी श्वैवेत्यर्थः ॥ ३६ ॥ अनात्मा देह आत्मा न भवतीति चिंतितः । अंते विडादिभावदर्शनादधुनापि विडादिरूप एवेत्यर्थः । आत्मसादिह च्यर्थे सातिः ।

गृहस्थस्य क्रियात्यागो व्रतत्यागो बटोरपि ॥ तपस्विनो ग्रामसेवा भिक्षोरिंद्रियलौल्यता ॥ ३८ ॥ आश्रमापसदा ह्येते खल्वाश्रमविडंबकाः ॥ देवमायाविमूढांस्तानुपेक्षेताऽनुकंपया ॥३९॥ आत्मानं चेद्विजानीयात्परं ज्ञानधुताशयः ॥ किमिच्छन् कस्य वा हेतोर्देहं पुष्णाति लंपटः ॥४०॥ आहुः शरीरं रथमिंद्रियाणि हयानभीषून् मन इंद्रियेशम् ॥ वर्त्मानि मात्रा धिषणां च सूतं सत्त्वं बृहद्बंधुरमीशसृष्टम् ॥ ४१ ॥ अक्षं दशप्राणमधर्मधर्मौ चक्रेऽभिमानं रथिनं च जीवम् ॥ धनुर्हि तस्य प्रणवं पठंति शरं तु जीवं परमेव लक्ष्यम् ॥ ४२ ॥

होऽनात्मादिरूपः स्मृतश्चिंतित एव पुनरेनमात्मेति मत्वा श्लाघयंति स्तावयंति हि ॥ ३७ ॥ यतिमुपलक्षणीकृत्यान्यानपि स्वधर्मत्यागिनो निंदति । गृहस्थस्येति द्वाभ्याम् ॥ ३८ ॥ ३९ ॥ नन्वात्मतत्त्वज्ञस्य भिक्षोरिंद्रियलौल्येऽपि को दोषस्तत्राह । आत्मानं परं ब्रह्म चेज्जानीयात् ज्ञानेन धुता निरस्ता आशया वासना यस्य । तस्य ज्ञानिनो लौल्यमेव न संभवतीत्यर्थः । तथा च श्रुतिः । "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः ॥ किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्" इति ॥ ४० ॥ अज्ञस्य तु लौल्येन नरकपातापत्तेरप्रमत्तेन सदा तत्त्वज्ञाने यतितव्यमितीममर्थम् "आत्मानं रथिनं विद्धि शरीरं रथमेव च" इत्यादिश्रुत्युक्तरथरूपकद्वारेणाह। आहुरिति षड्भिः। इंद्रियेशं मनोऽभीषून्रश्मीनाहुः । मात्राः शब्दादीन्वर्त्मानि गंतव्यदेशानाहुः । सत्त्वं चित्तं बृहद्देहव्यापि बन्धुरं बंधनं चित्तं विना ह्यनिबद्धमिव शरीरं भवति । ईशसृष्टमिति बंधनकर्ता त्वीश एवेत्यर्थः ॥ ४१ ॥ प्राणादयः पंच । "नागः कूर्मश्च कृकलो देवदत्तो धनंजयः" इत्येवं दशविधं प्राणमक्षम् अभिमानं साहंकारं जीवं रथिनं शुद्धं जीवं

तेऽतिशयेनासाधुशिरोमणयो ज्ञेयाः ॥ ३७ ॥ क्रियात्यागो नित्यनैमित्तिकादिकर्मत्यागः व्रतस्य गुरुसेवनादित्यागः :। ग्रामसेवा ग्रामवासतत्रत्यान्नादिसेवा । इंद्रियलौल्यमिन्द्रियैर्विषयसेवनादि ॥ ३८ ॥ आश्रमान्विडंबयंत्यनुकुर्वंतीति तथा । आश्रमस्यापसदः छद्म येषां ते । न त्वाश्रमिणस्ते तत्फलाप्राप्तेः । अनुकंपया तानुपेक्षेत तदंतिकमुपेत्य तत्त्वोपदेशादिकं कुर्यादित्यर्थः । यद्वा—भवन्त्वेत ईदृशाः किमस्माकमेतैः परमेषां संगस्यानर्थहेतुत्वादेषां संगान्न दानादिवर्जनीयमित्यपेक्षेतेत्यर्थः ॥ ३९ ॥ अत्राक्षिपति—नन्विति । इत्यर्थ इति । लौल्यहेतोरज्ञानस्य नष्टत्वादिति भावः । ज्ञानिनो लौल्याभावे प्रमाणमाह—तथा चेति । तामेव मूलकारोप्याह—लंपट उपस्थवशीभूतः । श्रुतौ अनुसंज्वरेत् क्लिश्यादित्यर्थः ॥ ४० ॥ इत्यर्थ इति । ईश्वरमायया बद्धत्वेपि तदाश्रयत्वादीश उपचर्यत इति भावः ॥ ४१ ॥ इत्यर्थ इति । प्रणवोपासनया जीवो ब्रह्म भवतीति भावः। ननु तर्हि रथादिरूपकसाहचर्यात्परब्रह्मणोऽपि लक्ष्यत्वेन शत्रुरूपकत्वमायातं शत्रुरेव रथमारुह्य शरेण भिद्यते युज्यते च तस्य जीवशत्रुत्वं स्वमायाशक्त्या जीवबंधकत्वात् सत्यम् "निभृतमरुन्मनोक्षदृढयोगयुजो हृदि यन्मुनय उपासते तदरयोऽपि ययुः स्मरणात्" इत्यरिसाहचर्येण मुनीनां मुक्तिरिव साधर्म्यं व्यनक्ति । उभयेषामपि परमेश्वरे शरनिक्षेपकत्वात् । परमेश्वरस्तु—स्वीयवीररससुखोपकारं ज्ञानांतर्वर्त्तिगुणीभूतस्वशक्तिकलां चालक्ष्योभयेभ्य एवं तेभ्यो मोक्षं ददातीति केचित् । अन्ये तु—परमात्मनो लक्ष्यत्वेऽपि द्रौपद्यादिस्वयंवरस्थराधाचक्रवर्त्तिमीनायमानत्वमेव न त्वन्यथा यथा चार्जुनाद्यास्तं स्वबाहुबलेनैव शरेण भित्त्वा द्रौपद्यादिकां प्रापुस्तथैव ज्ञानिनोऽपि भक्ति

रागो द्वेषश्च लोभश्च शोकमोहौ भयं मदः ॥ मानोऽवमानोऽसूया च माया हिंसा च मत्सरः ॥ ४३ ॥ रजः प्रमादः क्षुन्निद्रा शत्रवस्त्वेवमादयः ॥ रजस्तमःप्रकृतयः सत्त्वप्रकृतयः क्वचित् ॥ ४४ ॥ यावन्नृकायरथमात्मवशोपकल्पं धत्ते गरिष्ठचरणार्चनया निशातम् ॥ ज्ञानासिमच्युतबलो दधद स्तशत्रुः स्वाराज्यतुष्ट उपशांत इदं विजह्यात् ॥ ४५ ॥



शरं परं ब्रह्म लक्ष्यम् । यथा धनुषा शरो लक्ष्ये निपात्यते तथा प्रणवेन जीवो ब्रह्मणि निपात्यत इत्यर्थः ॥ ४२ ॥ रागादयो जेतव्याः शत्रवः ॥ ४३ ॥ तत्र रजोऽभिनिवेशः । क्वचिदारूढसमाधेः सत्त्वप्रकृतयोऽपि परोपकारादिप्रवृत्तयः शत्रवः ॥ ४४ ॥ नृकायरूपं रथमात्मवशः उपकल्प इंद्रियादिपरिकरो यस्मिंस्तथाभूतं यावद्धत्ते तावदेव

बलेन मुक्तिमित्याचक्षते ॥ ४२ ॥ यथा च स्वयंवरकन्याप्राप्तिबंधकदुष्टराजन्या बलिष्ठेन हन्यंते तथैव भगवद्भक्तिबलेन यतिना ज्ञानासिमादाय रागद्वेषादयो हंतव्या इत्याह–राग इति । तत्र तेषु ॥ ४३ ॥ यथा भरतस्य मृगबालककृपा सात्त्विक्यपि शत्रुरेव जातेति सत्त्वप्रकृतित्वमपि क्वचिच्छत्रुरस्तीति ॥ ४४ ॥ नृकायरूपं रथमात्मवशे उपकल्प्य इंद्रियादिपरिकरो यस्मिंस्तथाभूतं यावद्धत्ते तावदेव गरिष्ठानां गुरूणां चरणसेवया तीक्ष्णं ज्ञानखड्गं बिभ्रदच्युतभक्तिबलः सन्नेव निरस्तशत्रुर्भूत्वा स्वाराज्यस्य स्वानंदस्य प्राप्त्या तुष्टो भवन्निदं रथादिकं त्यजेदुपयोगाभावादेवेत्यर्थः । अत्र यथा साध्यस्य शक्रजयस्य स्वाराज्यलाभस्य च सिद्धौ रथादिकाद्धनुःशरादिकाच्च पुरुषो वियुज्यते तथा शारीराद्बलान्न वियुज्यते । एवमेव ज्ञानी प्राधानिकादुपाधेर्मुक्तिसाधनाज्ज्ञानाच्च वियुज्य ज्ञानांतर्भूतया केवलया भक्तिकलया सहित एव परमात्मनि सायुज्यं लभते न तु ततो वियुज्यते । तस्याः स्वरूपशक्तिवृत्तित्वेन परमात्मैक्यात् । ज्ञानाज्ञानयोस्तु मायाशक्तिवृत्तित्वात्तद्द्वयोपेक्षा समुचितैव । अत एव " धनुर्हि तस्य प्रणवं पठंति शरं तु जीवं परमेव लक्ष्यम् " इत्यत्रापि यथा रथादिभ्यो धनुषश्च वियुज्यापि शरः पुरुषबलेन वेगरूपतामापन्नेन सहैव तत्प्रभावादेव लक्ष्ये प्रविशति तथैव शुद्धजीवो देहेन्द्रियादिकमशुद्धजीवञ्चाज्ञानस्वरूपामविद्यां त्यक्त्वा मुक्तिसाधनज्ञानकारणप्रणवस्वरूपां विद्यां च त्यक्त्वाऽशुद्धजीववर्त्तिन्या भक्तिकलयैव केवलया तत्सहितस्तत्प्रभावादेव परमात्मानं ज्ञात्वा तत्र सायुज्यं लभते तदुक्तं भगवता " ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनंतरम् ॥ " अस्य पद्यद्वयस्यायमर्थः–भक्तिमिश्रज्ञानपरिपाकेनोपाध्यपगमे ब्रह्मभूतोऽनावृतचेतनत्वेन ब्रह्मरूप इत्यर्थः । गुणमालिन्यापगमात् । प्रसन्नश्चासावात्मा चेति सः । ततश्च पूर्वदशायामिव नष्टं न शोचति न चाप्राप्तं कांक्षति देहाद्यभिमानाभावादिति भावः । भूतेषु भद्राभद्रेषु समः बाह्यानुसंधानाभावादिति भावः । ततश्च निरिन्धनाग्नाविव ज्ञाने प्रांतेऽप्यनश्वरां ज्ञानांतर्भूतां मद्भक्तिं लभते तस्या मत्स्वरूपशक्तिवृत्तित्वेन मायाशक्तिभिन्नत्वात् । अविद्याविद्ययोरपगमेऽप्यनपगमात् । अत एव परां निष्कामकर्मज्ञानाद्युर्वरितत्वेन केवलां लभते इति । पूर्वं ज्ञानवैराग्यादिषु मोक्षसिद्ध्यर्थं कलया वर्त्तमानाया अपि सर्वभूतेष्वंतर्यामिण इव तस्याः स्पष्टोपलब्धिर्नासीदिति भावः । अत एव कुरुत इत्यनुक्त्वा लभत इति प्रयोगः । माषमुद्गादिषु मिलितां कालेन तेषु नष्टेष्वप्यनष्टां काञ्चनमणिकामिव तेभ्यः पृथक्तया केवलात् लभत इतिवत् संपूर्णायाः प्रेमभक्तेस्तु तदानीं लाभसंभावना नैवास्ति नापि तस्याः फलं सायुज्यमित्यतः परां प्रेमलक्षणामिति न व्याख्येयम् । ननु तया लब्धया भक्त्या तस्य किं स्यादित्यतोऽर्थांतरोपन्यासेनाह–भक्त्येति । अहं यावान् यश्चास्मि तं मां तत्पदार्थं ज्ञानी वा नानाभिधो भक्तो वा तत्त्वतो भक्त्यैवाभिजानाति ' भक्त्याहमेकया ग्राह्यः ' इत्यादिमदुक्तेः । यस्मादेवं तस्मात्ततस्तया भक्त्यैव तदनंतरं विद्योपरमोत्तरकाल एव मां ज्ञात्वा मां विशते मत्सायुज्यसुखमनुभवति मायातीतत्वात् विद्यायाश्च मायात्वाद्द्वियाप्यहमगम इति भावः । यत्तु " सांख्ययोगौ च वैराग्यं तपो भक्तिश्च केशव । पञ्चपर्वेति विद्येयं यया विद्वान्हरिं विशेत् ॥ " इति विद्यावृत्तित्वेन भक्तिः श्रूयते मत्सायुज्यसुखमनु तत्खलु ह्लादिनीभक्तिवृत्तेर्भक्तेरेव कला काचिद्विद्यासाफल्यार्थं विद्यायां प्रविष्टा यथा कर्मसाफल्यार्थं कर्मयोगेऽपि प्रविशति तया

नो चेत्प्रमत्तमसदिंद्रियवाजिसूता नीत्वोत्पथं विषयदस्युषु निक्षिपंति ॥ ते दस्यवः सहयसूतममुं तमोंधे संसारकूप उरुमृत्युभये क्षिपंति ॥ ४६ ॥
प्रवृत्तं च निवृत्तं च द्विविधं कर्म वैदिकम् ॥ आवर्तेत प्रवृत्तेन निवृत्तेनाश्नुतेऽमृतम् ॥ ४७ ॥ हिंस्रं द्रव्यमयं काम्यमग्निहोत्राद्यशांतिदम् ॥ दर्शश्च
पूर्णमासश्च चातुर्मास्यं पशुः सुतः ॥ ४८ ॥ एतदिष्टं प्रवृत्ताख्यं हुतं प्रहुतमेव च ॥ पूर्तं सुरालयारामकूपाजीव्यादिलक्षणम् ॥ ४९ ॥ द्रव्यसूक्ष्मवि
पाकश्च धूमो रात्रिरपक्षयः ॥ अयनं दक्षिणं सोमो दर्श ओषधिवीरुधः ॥ ५० ॥

गरिष्ठानां गुरूणां चरणसेवया निशितं ज्ञानखड्गं बिभ्रदच्युताश्रयः सन्निरस्तशत्रुरुपशांतः स्वानंदेन तुष्टो भूत्वेदं रथादिकमुपेक्षेतेत्यर्थः ॥ ४५ ॥ अच्युताश्रयाभावे बाधक
माह । नो चेदिति । असंतो बहिर्मुखा ये इंद्रियवाजिनः सूतश्च ते उत्पथं प्रवृत्तिमार्गं नीत्वा विषयाख्येषु दस्युषु निक्षिपंति हयैः सूतेन च सह वर्तमानं तमोंधे तमसा
व्याप्ते । उरु मृत्युभयं यस्मिन् ॥ ४६ ॥ ननु वेदविहितेष्टापूर्तादिकारिणः पुंसः कथमेवमनर्थप्राप्तिः स्यादित्याशंक्य वेदोक्तकर्मणां द्वैविध्यं दर्शयन्फलभेदमाह । प्रवृत्तं
चेति दशभिः ॥ ४७ ॥ हिंस्रं श्येनादिकर्म । अशांतिदमत्यासक्तियुक्तम् । आदिशब्दार्थविवरणं दर्शश्चेति । पशुः पशुयागः । सुतः सोमयागः ॥ ४८ ॥
हुतं वैश्वदेवम् । प्रहुतं बलिहरणम् । एतत्सर्वमिष्टमुच्यते एतदेव यदि काम्यमशांतिदं च तर्हि प्रवृत्ताख्यमपीत्यर्थः । आजीव्यं प्रपादि ॥ ४९ ॥ प्रवृत्तेन कर्मणाऽऽरोहावरो
हाभ्यामावृत्तिप्रकारमाह । द्रव्यस्य चरुपुरोडाशादेः सूक्ष्मो विपाकः परिणामो देहांतरारंभको येन संपरिष्वक्तो गच्छति य एव श्रुतावप्छब्देनोक्तः "इति तु पंचम्यामाहुतावापः
पुरुषवचसो भवंति" इति । पाठांतरे द्रव्यशब्देन तेजोमात्राशब्दोक्तानींद्रियाणि । ऊष्मविपाकशब्देन हृदयाग्रप्रद्योतः । तथा च श्रुतिः । "स इमास्तेजोमात्राः समभ्या
ददानो हृदयमेवान्वक्रामत्" इति । तथा "तस्य हैतस्य हृदयाग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति" इति । धूमादिशब्दैस्तत्तदभिमानिन्यो देवताः । तत्रापक्षयः कृष्णपक्षः
सोमः सोमलोकः । तत्र भुक्तभोगस्यावरोहणप्रकारमाह । दर्श इत्यादि । विपरीतलक्षणया विशिष्टभोगक्षयशोकाग्निना देहलयेनादर्शनमुच्यते । एतदुक्तं भवति । "भूतसूक्ष्म

विना कर्मज्ञानयोगादीनां श्रममात्रत्वोक्तेरतो निर्गुणा भक्तिः सत्त्वगुणमय्या विद्याया वृत्तिर्वस्तुतो न भवतीति । किञ्च—'सत्त्वात्संजायते ज्ञानम्' इति स्मृतेः 'सत्त्वं ज्ञानं विद्यैव यथा तथा भक्त्युत्थं ज्ञानं भक्तिरेवेति
ज्ञानमपि द्विविधं द्रष्टव्यम् ॥ ४५ ॥ अच्युताश्रयाभावे बाधकं साध्यासिद्धिमाह—नो चेद्यदि रथिनो बलं न स्यात्पक्षे यदि जीवस्य भक्तिर्न स्यादित्यर्थः । प्रमत्तं जीवं; बलाभावेपि लक्ष्यवेधार्थं रथारोहणमेव प्रमादः
दस्युषु चौरेषु । ते विषयाख्याः ॥ ४६ ॥ अत्राक्षिपति—नन्विति । अधिकारिभेदात्फलभेदाच्च व्यवस्था ज्ञेयेत्याह—प्रवृत्तं चेति ॥ ४७ ॥ ४८ ॥ ४९ ॥ आरोह ऊर्ध्वगमनमवरोहोऽधोगमनम् । इति तु इह तु । पुरु
षवचसः पुरुषसंज्ञकाः । अत्र सूत्रेणैतदर्थं स्फोटयति "तदंतरप्रतिपत्तौ रंहति परिष्वक्तः प्रश्ननिरूपणाभ्याम् ।" अस्यार्थः—तदंतरप्रतिपत्तौ देहांतरप्रतिपत्तौ तदारंभकभूतैः परिष्वक्तो रंहति गच्छति कुतः प्रश्ननिरूपणाभ्यां तथाहि—
"लोकपर्जन्यपृथिवीपुरुषयोषित्सु पञ्चस्वग्निष्वग्निरूपतयोपासनाख्यपंचाग्निविद्याप्रस्तावे प्रवहणाख्यराज्ञः सभां प्रविष्टं श्वेतकेतुं राजा पप्रच्छ "वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवंति" इति । अयमर्थः—अस्मिँल्लोके जलमय

अन्नं रेत इति क्ष्मेश पितृयानं पुनर्भवः ॥ एकैकश्येनानुपूर्वं भूत्वाभूत्वेह जायते ॥ ५१ ॥ निषेकादिश्मशानान्तैः संस्कारैः संस्कृतो द्विजः ॥ इंद्रियेषु क्रियायज्ञाञ्ज्ञानदीपेषु जुह्वति ॥ ५२ ॥ इंद्रियाणि मनस्यूर्मौ वाचि वैकारिकं मनः ॥ वाचं वर्णसमाम्नाये तमोंकारे स्वरे न्यसेत् ॥ ओंकारं बिंदौ नादे तं तं तु प्राणे महत्यमुम् ॥ ५३ ॥

युक्तो धूमाद्यातिवाहिकदेवताभिः सोमलोकं प्रापितस्तद्भोगावसाने विलीनदेहो वृष्टिद्वारेणौषधिवीरुधादिसाम्यापत्तिक्रमेण जायते । एवं पुनर्भवहेतुः पितृयानं प्रवृत्तकर्ममार्गः" इति ॥ ५० ॥ क्ष्मेश हे भूपते । पुनर्भवमेवाह । एकैकश्येन प्रत्येकं क्रमेण भूत्वा तत्तत्सान्निध्यं प्राप्येह भूमौ जायते ॥ ५१ ॥ तत्राधिकारिणमाह । निषेकादीति । अन्यस्त्विष्टादिकार्यप्येवं जन्म न लभत इत्यर्थः । निवृत्तकर्मनिष्ठस्योपासनादिविशेषमुपदिशन्नर्चिरादिमार्गेण ब्रह्मलोकप्राप्तिमाह । इंद्रियेष्वित्यादिना । यद्वा द्रव्ययज्ञेषु हिंसाया दुर्निवारत्वादतिमुख्यं निवृत्तं कर्मैव दर्शयन्नाह । ज्ञानेन दीप्यंत इति तथा तेषु । इंद्रियव्यापाराणामिष्टापूर्तादीनामिंद्रियंतावन्मात्रतां भावयतीत्यर्थः।एवमुत्तरत्रापि ॥ ॥ ५२ ॥ ऊर्मौ दर्शनादिसंकल्परूपे मनसि वैकारिकं विकारयुक्तं मनो वाचि विध्यादिलक्षणया वाचा हि मनः कर्तृत्वादिविकारं भजति । वर्णानां समाम्नाये समुदाये

दविपय:प्रभृतिद्रव्यकहोमे श्रद्धाकृते तद्धुतं जलं यजमानं प्राप्य तद्वारा द्युलोकाख्याग्निं गच्छच्छ्रद्धाख्याहुतित्वमापन्नं यजमानेंद्रियाधिष्ठातृदेवास्तस्मिन्नग्नौ जह्वति तत्र हुतं जलं सोमाख्यदेहात्मना परिणमते स च जलमयो देहः पर्जन्येऽग्नौ वृष्ट्यभिमानिदेवविशेषे हुतः स वृष्टिर्भवति तदेव जलं सोमाख्यदेहभावं वृष्टिभावं चात्यक्त्वा पृथिव्यामग्नौ हुतं सद्व्रीहियवाद्यन्नभावमाप्नोति ताश्च व्रीह्यादिभावमापन्ना आपः पुरुषाग्नौ हुताः सत्यो रेतोभावमाप्नुवंति । ताश्च रेतोभावमापन्नाः पञ्चमाहुतिरूपा आपो योषिदग्नौ हुता गर्भात्मना स्थिताः पुरुषसंज्ञां लभंत इति जानन्राजा पप्रच्छास च पितरं गौतममागत्योवाच एवमहं राज्ञा पृष्टोऽस्मि तदुत्तरं न जानामीति । गौतमः स्वयमप्यज्ञो राजसमीपं गत्वा तां विद्यां ब्रूहीत्युवाच । स च तामुवाचैवं प्रश्ननिरूपगाभ्यामवादि । भूतसंपरिष्वक्तो रंहतीति गम्यत इति । पाठांतरे 'द्रव्यसूक्ष्मविपाकश्च' इति पाठे । द्रव्यादिपदाभ्यां तत्तदर्थग्रहणे प्रमाणमाह–तथा चेति । स योगी तेजोमात्रा राजसाहंकारकार्याणींद्रियाणि समभ्याददानस्सहैव गृहीत्वा हृदयमन्वाक्रमत् अन्वगच्छत् । "तस्य हैतस्य योगिनं हृदयाग्रं हृदयेऽग्रमग्रनाडीमुखं प्रद्योतते प्रकाशते । शतं चैका हृदयस्य नाड्यस्तासां चैका मूर्द्धानं निस्सृतास्तयोर्द्धमायन्नमृतत्वमेति" इत्यादिश्रुतेः । तत्तदभिमानिन्यो धूमाद्यभिमानिन्यः । तत्र तेषु । तत्र सोमलोके । भुक्तभोगस्य अतिवाहिकदेवताः सगुणब्रह्मगमयितृदेवताः एतत्तृतीयस्कन्धे 'गत्वा चांद्रमसं लोकं सोमपाः पुनरेष्यति" इत्यत्र निरूपितम् ॥ ५० ॥ क्ष्मेशेति। क्ष्मापालनासक्तस्य राज्ञ एव यज्ञादिनिष्ठत्वेन विशेषत एतन्मार्गगामित्वमिति भावः । प्रत्येकं धूमादिक्रमेण ॥ ५१ ॥ तत्र प्रवृत्तिमार्गेऽधिकारिणं मुख्याधिकारिणम् । अन्यस्तु विवेकी तु । इत्यर्थ इति । वैदिकमार्गप्रवृत्त्यर्थं कर्म कुर्वन्नपि तत्रासक्त्यभावाज्जन्मादिकं नाप्नोति । 'तस्य पुत्रा दायम्' इत्यादिश्रुतेः । स च कर्मफलं न भुंक्त इति भावः । 'अहिंसा परमो धर्मः' इति स्मृतेर्निवृत्तस्यानासक्तस्यापि यागादौ हिंसासत्त्वे परमधर्मित्वे न सेत्स्यतीत्यत आह–यद्वेति । इत्यर्थ इति । इंद्रियव्यापार एव यागादिरतो व्यापारस्य व्यापारिनांतरीयकत्वेंद्रियभिन्नस्तद्व्यापारोपि न सेत्स्यतीति भावः ॥ ५२ ॥ इंद्रियाणां प्रवृत्तिर्मनोधीनाऽतो तान्यपि मन एव न ततो भिन्नानीत्यर्थः । वाचं श्रुत्वैव मनसि कर्तृत्वादिविकारो भवति अतो मनोऽपि वागधीनं न ततो भिन्नम् । तद्विशेषत्वाद्वर्णविशेषत्वात्–वर्णेभ्यो भिन्नाया वाचोऽनुपलब्धेः "ओंकाराद्व्यंजितस्पर्शस्वरोष्मांतस्थभूषिताम्" इत्युक्तेः । सर्ववर्णानामोंकारात्मकत्वात्तद्भिन्नत्वं नास्ति 'बिंदौ गुरुप्रसादगम्ये योगशास्त्रप्रसिद्धे स्वरे तं विंदुं

अग्निः सूर्यो दिवा प्राह्णः शुक्लो राकोत्तरं स्वराट् ॥ विश्वश्च तैजसः प्राज्ञस्तुर्य आत्मा समन्वयात् ॥ ५४ ॥ देवयानमिदं प्राहुर्भूत्वाभूत्वानुपूर्वशः ॥ आत्मयाज्युपशांतात्मा ह्यात्मस्थो न निवर्तते ॥ ५५ ॥ य एते पितृदेवानामयने वेदनिर्मिते ॥ शास्त्रेण चक्षुषा वेद जनस्थोऽपि न मुह्यति ॥ ५६ ॥ आदावंते जनानां सद्बहिरंतः परावरम् ॥ ज्ञानं ज्ञेयं वचो वाच्यं तमो ज्योतिस्त्वयं स्वयम् ॥ ५७ ॥ आबाधितोऽपि ह्याभासो यथा वस्तुतया स्मृतः ॥ दुर्घटत्वादैंद्रियकं तद्वदर्थविकल्पितम् ॥ ५८ ॥

तद्विशेषत्वाद्वाचः स्वरेऽकारादिस्वरत्रयात्मके ॐकारं बिंदौ तं च नादे प्राणे सूत्रात्मनि महति ब्रह्मणि ॥ ५३ ॥ अग्निरिति । तत्तदभिमानिन्यो देवतास्ताः प्राप्नोतीति पूर्ववत् दिवाऽहः प्राह्णस्तस्यैवांतः । राका शुक्लपक्षस्यांतः । यद्वा प्राह्णो राका इति च पुराणमतम् । उत्तरं त्वयनम् । स्वराद् ब्रह्मा । एवं ब्रह्मलोकं गतस्य भोगावसाने मोक्षप्रकारमाह । विश्व इति । विश्वः स्थूलोपाधिः । स स्थूलं सूक्ष्मे विलाप्य सूक्ष्मोपाधिस्तैजसो भवति । सूक्ष्मं कारणे विलाप्य कारणोपाधिः प्राज्ञो भवति । कारणं च सर्वसाक्षित्वेनान्वयात्साक्षिस्वरूपे विलाप्य तुर्यो भवति । तेषां च व्यभिचारिणां साक्ष्याणां लये शुद्ध आत्मा भवति मुच्यत इत्यर्थः ॥ ५४ ॥ यथेतरो भूत्वा निवर्तते तथा न निवर्तत इत्यर्थः ॥ ५५ ॥ वेदेन निर्मिते ते धूममभिसंभवंतीत्यादिना ते अर्चिरभिसंभवंतीत्यादिना च निश्चयेन विविच्य ज्ञापिते इत्यर्थः । जनस्थोऽपि देहस्थोऽपि न मुह्यति ॥ ५६ ॥ तत्र हेतुमाह । आदाविति । जनानां देहानामादौ कारणत्वेनांते चावधित्वेन यत्सत्तथा बहिर्भोग्यमंतर्भोक्तृ परमवरं चोच्चनीचम् । तमोऽप्रकाशः ज्योतिः प्रकाशः तत्तु सर्वमयं ज्ञानी स्वमेव न तस्माद्व्यतिरिक्तं वस्तु किंचिदस्ति येन मुह्येदित्यर्थः ॥ ५७ ॥ ननु तर्हि कथं पृथगर्थस्तस्यापि प्रतीयते तत्राह । आबाधित

नादे नादाख्ये स्वरविशेषे । प्राणे 'प्राणत एव नादोत्पत्तिः' इति योगशास्त्रे प्रोक्तम् । अमुं प्राणं धारणाप्रकारेण ब्रह्मणि परमात्मनि जुह्वति इत्थं सर्वं तत्रैव भावयंति कार्यकारणात्मकं सर्वं विश्वं ब्रह्मैवेति भावः ॥ ५३ ॥ इत्थं भावयतो देहादुत्क्रमणे गतिमाह—अग्निरिति । एतौ प्राह्णराकाशब्दौ भिन्नदेवतापरौ न किन्तु दिवा शुक्लपक्षाभिमानिदेवपरावेवेति वैदिकाः । यद्वा—पौराणिकमते भिन्नदेवपरावेवेति ज्ञेयम् । ब्रह्मलोकभोगावसाने स्वयं प्रभाताख्यवेदविचारेण मोक्षप्रकारमाह—विश्व इति । स्थूलशरीराभिमानी तेषां विश्वादीनां साक्षी विद्यते येषां ते साक्ष्यास्तेषां तुरीयसाक्षिकाणामित्यर्थः । इत्यर्थ इति । तुरीयावशेषस्यैव मोक्षत्वादिति भावः ॥ ५४ ॥ अर्चिरादिमार्गस्थो भूत्वाभूत्वाऽनुपूर्वशः श्रुत्युक्त्यानुपूर्व्या । इत्यर्थ इति । यथेतरो धूमादिमार्गसंचारी कर्मनिष्ठश्चंद्रलोकं गत्वा निवर्त्तते तथार्चिरादिमार्गगो न निवर्त्तत इति भावः ॥ ५५ ॥ ते कर्मनिष्ठा धूमं तदभिमानिनमभिसंभवंति प्राप्नुवंति । आदिना रात्र्यादिग्रहः । ते निवृत्तिनिष्ठाः । आर्चिरग्निम् । इत्यर्थ इति । स्फुटं बोधिते इति भावः ॥ ५६ ॥ तत्र मोहाभावे । इत्यर्थ इति । 'सकलमिदमहं च वासुदेवः' इति ज्ञानेन भेदोन्मूलनान्मोहः कथं भवेदिति भावः ॥ ५७ ॥ अत्राक्षिपति—नन्विति । विश्वनाथः—आबाधित इति । अत्राद्वयं ज्ञानमेव ब्रह्मेति ब्रह्मोपासनायां पद्धतिः सा च विविधशक्तिवैचित्र्यमयस्य विश्वस्य सत्यत्वप्रतीतौ न सिद्ध्येदतस्तदर्थं ज्ञानिनमधिकारिणं विश्वस्य मिथ्यात्वं प्रत्याययितुं विवर्त्तवादोयमष्टभिः प्रस्तूयते । यथा भक्तिमते 'तस्मात्केनाप्युपायेन मनः कृष्णे विनेशयेत्'' इत्युक्तं तथैव ज्ञानिमतेऽयमुपायो ज्ञानिमनोब्रह्ममात्रग्रहणार्थः ।

क्षित्यादीनामिहार्थानां छाया न कतमापि हि ॥ न संघातो विकारोऽपि न पृथङ्नान्वितो मृषा ॥ ५९ ॥ धातवोऽवयवित्वाच्च तन्मात्रावयवैर्विना ॥ न स्युर्ह्यसत्यवयविन्यसन्नवयवोंततः ॥ ६० ॥

स्तर्कविरोधेन सर्वतो बाधितोऽप्याभासः प्रतिबिंबादिर्वस्तुतया यथा स्मृतस्तद्वदैंद्रियकं सर्वमर्थत्वेन विकल्पितं न तु परमार्थतः । दुर्घटत्वात् ॥ ५८ ॥ तदेवाह । क्षित्यादीनां पंचभूतानां छाया ऐक्यबुद्ध्यालंबनरूपं देहादिसंघातारंभपरिणामानां मध्ये कतमाऽप्यन्यतमाऽपि न भवति । न तावत्तेषां संघातो वृक्षाणामिव वनम् । एकदेशाकर्षणे सर्वाकर्षणानुपपत्तेः । न ह्येकस्मिन्वृक्ष आकृष्टे सर्ववनमाकृष्यते । न च विकार आरब्धोऽवयवी । अपिशब्दान्न परिणामोऽपि । कुतः स किं स्वावयवेभ्यः परिणतेभ्यो वा पृथक् तदन्वितो वा । न तावदत्यंतं पृथक् । तथाऽप्रतीतेः न चान्वितः स किं प्रत्यवयवं सर्वोऽप्यन्वेत्यंशेन वा । आद्ये अंगुलिमात्रेऽपि देहबुद्धिः स्यात् । द्वितीये तस्याप्यंशांगीकारे सत्यनवस्था स्यादतो मृषैवेत्यर्थः ॥ ५९ ॥ एवं देहादेर्मिथ्यात्वमुक्त्वा तद्धेतूनां क्षित्यादीनामपि मिथ्यात्वमाह । धारयंतीति धातवो महाभूतानि तन्मात्रैः सूक्ष्मैरवयवैर्विना न स्युः । अवयवित्वात्तेषामपि । तर्ह्यवयवः सत्य इति चेत्तत्राह । उक्तप्रकारेणावयविन्यसत्यवयवोऽप्यंततोऽसन्नेव स्यात् । अवयविप्रतीत्यन्यथानुपपत्तिं

विश्वस्य सत्यत्वे मनसा निश्चिते तेन निरालंबेन मनसा विश्वस्याग्रहणं निषेधकोटिभिरपि दुर्घटमित्यतोऽत्र विवर्त्तवादेऽपि शास्त्रतात्पर्यमित्यवसेयम् । विश्ववदेव भगवद्धामनामरूपादेरसत्यत्वमनने तु ज्ञानिनोऽप्यधःपात इति प्राक्प्रतिपादितं प्रतिपादयिष्यते च यथास्थानमुपरिष्टादपि । श्रीभरतेनापि रहूगणप्रबोधनार्थम् ‘अयं जनो नाम चलन्पृथिव्याम्’ इत्यादिना विश्वस्य मिथ्यात्वमुक्त्वा तर्हि किं सत्यमित्यपेक्षायम् ‘भगवच्छब्दसंमं यद्वासुदेवं कवयो वदंति’ इत्युपसंहृतम् । अथ प्रकृतमनुसरामः । आभासः सूर्यादिप्रतिबिंब आबाधितः स्वातंत्र्यसत्तायाः सकाशान्निरस्तोपि बालादिभिः पृथक्प्रकाशमानतादर्शनाद्वस्तुतया स्वतंत्रपदार्थतया स्मृतः कल्पितः तद्वदैंद्रियकं सर्वं मूढैः स्वतंत्रार्थत्वेन विविधं कल्पितं तत्तु न तत्त्वदृष्टवा स्वातंत्र्यनिरूपणस्य दुर्घटत्वादित्यर्थः ॥ ९८ ॥ तदेव दुर्घटत्वमेव । विकारः पंचभूतैरारब्धोऽवयवीत्यर्थः । सोऽवयवी किं वाऽथ वा परिणतेभ्यो भूतेभ्यः अवयवानां पार्थक्येऽवयवदर्शनमेव न संभवतीत्यर्थः । अंगुलिमात्रे देहबुद्धौ तन्नाशे देहनाशोऽप्यापद्येत । इत्यर्थ इति । कस्यापि पक्षस्यासिद्धेर्मृषात्वमेव शिष्यत इति भावः । “आरंभवादः कणभक्षपक्षः संघातवादस्तु भदंतपक्षः । सांख्यस्य पक्षः परिणामवादो वेदांतपक्षस्तु विवर्त्तवादः ॥” इति वृद्धाः । भदंतश्चार्वाकः । अतात्त्विकोऽन्यथाभावो विवर्त्त इति ॥ ९९ ॥ इत्यर्थ इति । अवयविनं विनाऽवयवः कथं सिद्ध्येदिति भावः । अत्र संदर्भः—उक्तप्रकारेणावयविनि निरूपयितुमसति अवयवोंततोऽसन्नेव स्यात्तस्मादैक्यबुद्ध्यालंबनरूपं यत्प्रतीयते तत्सर्वत्र परमात्मलक्षणं सर्वकारणं वस्त्वेवेति साधूक्तम् ‘आदावंते जनानां सत्’ इत्यादिना । एवमेव तृतीयेऽप्युक्तम् “इति तासां स्वशक्तीनां सतीनामसमेत्य सः । प्रसुप्तलोकतंत्राणां निशाम्य गतिमीश्वरः ॥ कालसंज्ञां तदा देवीं बिभ्रच्छक्तिमुरुक्रमः । त्रयोविंशतितत्त्वानां गणं युगपदाविशत् ॥ सोऽनुप्रविष्टो भगवांश्चेष्टारूपेण तं गणम् । भिन्नं संयोजयामास सुप्तं कर्म प्रबोधयन् ॥” इति । अत एव “यस्य पृथिवी शरीरम्” इत्यादिश्रुतौ परमात्मशरीरत्वेन प्रसिद्धिः । परमात्मनस्तु शरीरित्वेन तदेवमवयवरूपेण प्रधानपरिणामः सर्वत्रावयवी तु पर

स्यात् सादृश्यभ्रमस्तावद्विकल्पे सति वस्तुनः ॥ जाग्रत्स्वापौ यथा स्वप्ने तथा विधिनिषेधता ॥ ६१ ॥ भावाद्वैतं क्रियाद्वैतं द्रव्याद्वैतं यथा त्मनः ॥ वर्तयन् स्वानुभूत्येह त्रीन् स्वप्नान् धुनुते मुनिः ॥ ६२ ॥ कार्यकारणवस्त्वैक्यमर्शनं पटतंतुवत् ॥ अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥ ६३ ॥

विना तत्सद्भावे प्रमाणाभावादित्यर्थः । तदुक्तं पंचमस्कंधे । एवं निरुक्तं क्षितिशब्दवृत्तमित्यादि ॥ ६० ॥ नन्ववयविनोऽभाव आगमापायिषु बाल्यादिषु सोऽयं देवदत्त इति प्रत्यभिज्ञानं न स्यात् । तदुक्तं भट्टैः । "आविर्भावतिरोभावधर्मकेष्वनपायि यत्" । तद्धर्मीति । तत्राह । स्यादिति । वस्तुनः परमात्मनो विकल्पे भेदेऽसति । यद्वा वस्तुनोऽविद्यया विकल्पे सति पूर्वपूर्वारोपसादृश्यात्स एवेति भ्रमः स्यात् स च तावदेव यावदविद्यानिवृत्तिः । ननु सर्वमिथ्यात्वे शास्त्रस्य विधिनिषेधकता कथं तत्राह । स्वप्नमध्ये जाग्रत्स्वापव्यवस्था यथेति ॥ ६१ ॥ इदानीमुक्तमेवाद्वैतं भावनात्रयोपदेशेन दृढीकरोति भावाद्वैतमिति चतुर्भिः । वर्तयन्नालोचयन् । स्वानुभूत्या आत्मतत्त्वानुभवेन । त्रीन् जाग्रदादीन् । "त्रय अवस्थास्त्रयः स्वप्नाः" इति श्रुतेः । यद्वा वस्तुभेदबुद्धिरेकः स्वप्नः । ततस्तदधिकारभेदेन कर्मभेदबुद्धिर्द्वितीयः । ततो मत्कर्मसाधितमेतत्फलं ममैव भोग्यमिति तृतीयः । तान्धुनुते निवर्तयति ॥ ६२ ॥ कार्यकारणयोर्वस्त्वैक्यस्य मर्शनमालोचनं तंतुरेव न पट इति ॥ ६३ ॥

मात्मवस्त्वेवेति सिद्धं ततोप्यमिथ्यात्वमेव जगत उपपद्यत इति ॥ ६० ॥ अत्राक्षिपति—नन्विति । इदंतातत्तावगाहिज्ञानं प्रत्यभिज्ञानम् । तदवयविलक्षणम् । भट्टैर्मीमांसकैः । स्पष्टार्थम् । परमात्मैक्ये तु न कस्यापि संदेह इति चेदाह—यद्वेति । पुनराक्षिपति—नन्विति । अत्र विश्वनाथः—ननु तदपि क्षित्यादीनां सत्यत्वेन प्रतीतिः कुतस्तत्राह—स्यादिति । विकल्पे क्षित्यादावसति मिथ्याभूतेऽपि वस्तुनः सत्यभूतस्य भगवन्नित्यधामक्षित्यादेः सादृश्येन भ्रमः सत्यस्य जलस्य मरीचिकायामिवेत्यर्थः । न च भगवद्धाम्न्यपि विवर्त्तः प्रवर्त्तते इति तदप्यसत्यं स्यादिति वाच्यम् "भूगोलचक्रे सप्तपुर्यो भवंति तासां मध्ये साक्षाद्ब्रह्म गोपालपुरी हि" इति गोपालतापिनीश्रुत्या गोपालपुर्या ब्रह्मस्वरूपभूतत्वप्रतिपादनात् । तासामिति निर्द्धारणषष्ठ्या साक्षादिति ब्रह्मेति पदयोश्च वैयर्थ्यादन्यवस्तूनामिव ब्रह्मणि गोपालपुर्यारोपितत्वमिति व्याख्यातुमशक्यत्वात् । किञ्चार्वाचीना अद्वैतवादिनश्च मायाशक्त्यतिरिक्तामंतरंगाह्लादिन्यादिशक्तिं तद्विलासान् भगवन्नित्यधामाक्षित्यादींश्चामन्यमाना अंधपरंपरयैव विवर्त्ते मिथ्याभूतस्यैव सादृश्यभ्रममाचक्षाणा विगर्यित एव । नन्वेवं जगतो मिथ्यात्वे सर्वज्ञेनापि वेदेन विधिनिषेधौ कथमुच्येते न हि मरीचिकाजलस्य गुणदोषौ विज्ञेनोपदिश्येते इत्यत आह—जाग्रत्स्वप्नाविति । स्वप्नमध्ये यथा जाग्रत्स्वप्नव्यवस्था तथैव मिथ्याभूते जगति तावपि मिथ्याभूतावेव 'यादृशो यक्षस्तादृशो बलिः' इति न्यायेनेत्यर्थः। अविद्वदधिकारित्वात् "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" इत्युक्तेः॥ ६१ ॥जाग्रदादित्रयाणां स्वप्नत्वे श्रुतिं प्रमाणयति—त्रय इति। आवसथाः अवस्थाः त्रयाणां स्वप्नत्वे जाग्रदादि भेदत्रयविधानं व्यर्थं स्यादिति चेदाह—यद्वेति । वस्तुनि ब्रह्मणि भेदबुद्धिः । ततो भेदबुद्धेः । एतस्य कर्मणोऽहमधिकारीत्यर्थः । ततोऽधिकारभेदेन कर्मणि कृते मत्कर्तृकर्मजातत्वादेतत्फलं ममैव भोग्यमिति ॥ ६२ ॥ अवस्तुत्वादसत्त्वात् ॥ ६३ ॥

यद्ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम् ॥ मनोवाक्तनुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥ ६४ ॥ आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ॥ यत्स्वार्थकामयोरैक्यं द्रव्याद्वैतं तदुच्यते ॥ ६५ ॥ यद्यस्य वा निषिद्धं स्याद्येन यत्र यतो नृप ॥ स तेनेहेत कर्माणि नरो नान्यैरनापदि ॥ ६६ ॥ एतैरन्यैश्च वेदोक्तैर्वर्तमानः स्वकर्मभिः ॥ गृहेऽप्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ् नरः ॥ ६७ ॥ यथा हि यूयं नृपदेव दुस्त्यजादापद्गणादुत्तरतात्मनः प्रभोः ॥ यत्पादपंकेरुहसेवया भवानहारषीन्निर्जितदिग्गजः क्रतून् ॥ ६८ ॥ अहं पुराऽभवं कश्चिद्गंधर्व उपबर्हणः ॥ नाम्नाऽतीते महाकल्पे गंधर्वाणां सुसंमतः ॥ ६९ ॥ रूपपेशलमाधुर्यसौगंध्यप्रियदर्शनः ॥ स्त्रीणां प्रियतमो नित्यं मत्तस्तु पुरुलंपटः ॥ ७० ॥ एकदा देवसत्रे तु गंधर्वाप्सरसां गणाः ॥ उपहूता विश्वसृग्भिर्हरिगाथोपगायने ॥ ७१ ॥ अहं च गायंस्तद्विद्वान् स्त्रीभिः परिवृतो गतः ॥ ज्ञात्वा विश्वसृजस्तन्मे हेलनं शेपुरोजसा ॥ याहि त्वं शूद्रतामाशु नष्टश्रीः कृतहेलनः ॥ ७२ ॥ तावद्दास्यामहं जज्ञे तत्रापि ब्रह्मवादिनाम् ॥ शुश्रूषयानुषंगेण प्राप्तोऽहं ब्रह्मपुत्रताम् ॥ ७३ ॥ धर्मस्ते गृहमेधीयो वर्णितः पापनाशनः ॥ गृहस्थो येन पदवीमंजसा न्यासिनामियात् ॥ ७४ ॥

मनोवाक्तनुभिः कृतानां कर्मणां समर्पणं तैः समर्पणमिति वा उद्देश्यफलभेदो हि क्रियाभेदे हेतुः । ईश्वरार्पणे च तदभावात्क्रियाणामद्वैतम् ॥ ६४ ॥ आत्मनः स्वस्य जायादीनां च स्वार्थश्च कामश्च तयोर्देहादीनां पंचभूतात्मकत्वेन भोक्तुश्च परमात्मत्वेनाभेदालोचनेनार्थकामयोर्यदैक्यदर्शनमित्यर्थः ॥ ६५ ॥ उक्तानाश्रमधर्मान्संक्षिप्याह । यदिति । यद्द्रव्यम् । येनोपायेन । यतः सकाशात् ॥ ६६ ॥ प्रस्तुतमुपसंहरति । एतैरिति । अस्य श्रीकृष्णस्य गतिम् । तद्भक्तिभाक् तस्य भक्तः ॥ ६७ ॥ एतत्सर्वसाधारणमुक्तम् । भक्तस्य तु भक्तिरेव सर्वपुरुषार्थहेतुरिति पांडवानेव लक्षीकृत्याह । यथा हीति । हे नृपदेव नृपैर्देवैश्च सहायैर्दुस्त्यजादिति वा । आत्मनः श्रीकृष्णादेव प्रभोर्हेतोः । अडभाव आर्षः । उत्कर्षेणातरतेत्यर्थः । यथा यथावत् । तमेव भजतेति शेषः । यद्वा यथाऽऽपद्गणादुत्तीर्णस्त्वम् ॥ यथा च क्रतूनहार्षीत्तथा श्रीकृष्णादेव तारकात्संसारादप्युत्तरतेत्यर्थः ॥ ६८ ॥ श्रीकृष्णसेवा महतामवज्ञया भ्रश्यति तत्कृपया च सिध्यतीति दर्शयन्पूर्ववृत्तांतमाह । अहमिति सार्धैः पंचभिः ॥ नाम्ना उपबर्हणः ॥ ६९ ॥ पेशलं सौकुमार्यं रूपादिभिः प्रियं दर्शनं यस्य ॥ ७० ॥ ७१ ॥ तदाह्वानं विद्वानुन्मत्तः सन् गायन्नेव गतः ॥ ७२ ॥ ७३ ॥ ७४ ॥

कृतानामिति पदाध्याहारापेक्षया लाघवमाह—तैर्मनोवाक्तनुभिरिति । तदभावादुद्देश्यफलाभावात् ॥ ६४ ॥ इत्यर्थ इति । यावेव स्वार्थकामौ साधनसाध्ये स्वस्य तावेव सर्वेषामैक्यात् स्वस्यार्थकामवदन्येषामपि संपादयेत्ताविति भावः ॥ ६५ ॥ यत्र देशे काले च । नृपेति । त्वया तथैव शिक्षणीयाः सर्वे नृपालकत्वादिति भावः । नान्यैर्निषिद्धैः ॥ ६६ ॥ गृहेपि गृहस्थोऽपि यदि तद्भक्तः स्यादित्यर्थः ॥ ६७ ॥ नृपेषु दीव्यति द्योतते इति नृपदेवस्तादृशस्य तवापत्तरणं न दुर्घटमिति भावः । तथा च देवार्चनसहायादिभिरापत्तरणं न दुर्घटमिति चेदाह—नृपैर्देवैरिति । इत्यर्थ इति । उत्कर्षप्राप्तिपूर्वकमापदं तीर्णवंत इति भावः । क्रियापदाध्याहारे गौरवं मत्वाह—यद्वेति । अहार्षीत् अकरोत् । इत्यर्थ इति । श्रीकृष्णपोते सति संसारार्णवतरणचिंता न कार्येति भावः । दिग्गज इति । तत्तद्दिग्गतराज्ञामुपलक्षणम् ॥ ६८ ॥ सुसंमतः संमान्यः ॥ ६९ ॥ पुरु अधिकं लंपटः स्त्रैणः ॥ ७० ॥ हरिगाथोपगायने हरिलीलागानार्थमित्यर्थः ॥ ७१ ॥ विश्वसृजो मरीच्यादयः ॥ ७२ ॥ तत्रापि दासीपुत्रत्वेपि । शुश्रूषया योऽनुषंगः संबंधस्तेन ॥ ७३ ॥ न्यासिनां पदवीं

यूयं नृलोके बत भूरिभागा लोकं पुनाना मुनयोऽभियंति ॥ येषां गृहानावसतीति साक्षाद्गूढं परं ब्रह्म मनुष्यलिंगम् ॥ ७५ ॥ स वा अयं ब्रह्म महद्विमृग्यं कैवल्यनिर्वाणसुखानुभूतिः ॥ प्रियः सुहृद्वः खलु मातुलेय आत्माऽर्हणीयो विधिकृद्गुरुश्च ॥ ७६ ॥ न यस्य साक्षाद्भवपद्मजादिभी रूपं धिया वस्तुतयोपवर्णितम् ॥ मौनेन भक्त्योपशमेन पूजितः प्रसीदतामेष स सात्वतां पतिः ॥ ७७ ॥ श्रीशुक उवाच ॥ इति देवर्षिणा प्रोक्तं निशम्य भरतर्षभः ॥ पूजयामास सुप्रीतः कृष्णं च प्रेमविह्वलः ॥ ७८ ॥ कृष्णपार्थावुपामंत्र्य पूजितः प्रययौ मुनिः ॥ श्रुत्वा कृष्णं परं ब्रह्म पार्थः परमविस्मितः ॥ ७९ ॥ इति दाक्षायणीनां ते पृथग्वंशाः प्रकीर्तिताः ॥ देवासुरमनुष्याद्या लोका यत्र चराचराः ॥ ८० ॥ इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे प्रह्लादानुचरिते युधिष्ठिरनारदसंवादे सदाचारनिरूपणं नाम पंचदशोऽध्यायः ॥ १५ ॥ समाप्तोऽयं सप्तमः स्कंधः ॥ ॥

त्वं तु कृतार्थ एवेति हर्षेण पुनः पूर्वश्लोकानेव पठति।यूयमिति शेषं स्पष्टम्॥७५॥७६॥७७॥७८॥७९॥८०॥ सप्तमस्कंधगूढार्थपदभावार्थदीपिका॥संसेव्यतां सदा सद्भिरियंतिश्री धरनिर्मिता॥१॥इति श्रीमद्भागवते महापुराणे सप्तमस्कंधे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां पंचदशोऽध्यायः ॥१५॥ समाप्तश्चायं सप्तमस्कन्धः।।७।।

मुक्तिम् ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ अहो अयं श्रीकृष्णो मम भ्रातेति प्रेम्णा विह्वलो विवशोऽभूत्। चकारान्नारदश्च ॥ ७८ ॥ पूर्वन्तु तद्बहुत्वश्रवणेन विस्मित एवासीत् अधुना तु परमबृहत्त्वज्ञानेन परमविस्मितः अहो परं ब्रह्मापि योगिध्यानागम्योपि मम कैंकर्यादौ प्रवृत्तो न जाने कस्य पुण्यकर्मणः फलमिति परं विस्मितो बभूवेति भावः ॥ ७९ ॥ यत्र येषु वंशेषु ॥ ८० ॥ अथास्य महिमा—''हरिरुवाच ॥ श्रीमद्भागवते स्कन्धः सप्तमो मे मुखं स्मृतम् । श्रवणात्तस्य स्त्रीघातपापान्मुच्येन्नरो ध्रुवम् ॥ १ ॥ अत्रेतिहासं शृणु भो महापापप्रणाशकम् । सौवीरदेशे नृपतिः प्रतीप इति विश्रुतः ॥ ॥ २ ॥ तस्य भार्याद्वयं चासीदंगकालिंगदेशजम् । अंगजाभूद्भानुमती नाम्ना पतिपरायणा ॥ ३ ॥ कलिंगजा चंद्रवती नाम्ना चंद्रसमानना । प्रतीपो गणिकासक्तो मद्यपो मांसभुक् तथा ॥ ४ ॥ बभूव दैवतो वेश्योच्छिष्टतोयान्नभुक् तदा । कामार्त्तश्चैकदा राजा चोत्थायार्द्धनिशं गतः ॥ ५ ॥ उत्तिष्ठ मे प्राणसमे द्वारस्योद्घाटनं कुरु । नृपतेर्वाक्यमाकर्ण्य शयनस्थाऽब्रवीदिदम् ॥ ६ ॥ स्वगेहं गच्छ नृपते स्वस्त्रीभी रतिमाचर । मम संगे रतिश्चेत्ते स्वपत्न्योः शिरसी नय ॥ ७ ॥ इति श्रुत्वा पापमतिर्गृहीत्वा मस्तके द्वयोः । खड्गेन छित्त्वा कामार्त्तो दर्शयामास तां नृपः ॥ ८ ॥ ते दृष्ट्वा सा हृष्टमना राज्ञी नरपतेरभूत् । कोलाहलः प्रभातेऽभूत्स्वपत्न्यौ मारिते इति ॥ ९ ॥ नृपेण गणिकासक्त्या तं धिक्तां धिक्च सर्वथा । श्रुत्वा राजा गर्हयित्वा चात्मानं निर्गतः पुरात् ॥ १० ॥ तत्पुत्रस्तु कृतो राजा मंत्रिभिः स मृतो यदा । गणिकाऽपि मृता तावदुभौ तौ नरकं गतौ ॥ ११ ॥ नरकांते तु गणिका किरातीत्वं समागमत् । तद्गृहे हि प्रतीपोभून्मार्जारः पापकर्मतः ॥ १२ ॥ गोपीचंदनसंस्पर्शात्तया ज्ञातो ह्ययं पतिः । गृहीत्वा तं च मार्जारं काशीपुर्यां जगाम सा ॥ १३ ॥ तत्र भागवती गाथा श्रुता सप्तमसंभवा । ताभ्यां, तत्पुण्यतो यातौ त्यक्त्वा देहं हरेः पदम् ॥ १४ ॥'' इति सप्तमस्कंधमहिमा पाद्मे वर्णिता ॥ श्रीधरस्वामिभावार्थदीपिकोद्योतकारकः । प्रकाशो रचितो यत्नाद्बहुटीकावलोकनैः ॥ १ ॥ श्रीवंशीवरविप्रेण खर्डपत्तनवासिना । प्रीयतां राधिकानाथोऽनेन श्रीनंदनंदनः ॥ २ ॥ इति श्रीखरडपत्तनवास्तव्यपण्डितवंशीधरशर्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे सप्तमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ ॥ समाप्तश्चायं सप्तमस्कन्धः ॥ ७ ॥

---

अयं श्रीभावार्थदीपिकाप्रकाशसमलंकृतभावार्थदीपिकासमेतश्रीमद्भागवतसप्तमस्कन्धो मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये ''श्रीवेङ्कटेश्वर'' ( स्टीम् ) मुद्रणालये मुद्रयित्वा प्राकाश्यमानीयत ।

इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते श्रीमद्भागवते सप्तमस्कन्धः समाप्तः ॥ ७ ॥

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते श्रीमद्भागवते अष्टमस्कन्धप्रारंभः ॥ ८ ॥

ॐ नमो भगवते वासुदेवाय ॥ राजोवाच ॥ स्वायंभुवस्येह गुरो वंशोऽयं विस्तराच्छ्रुतः ॥ यत्र विश्वसृजां सर्गो मनूनन्यान्वदस्व नः ॥ १ ॥ यत्रयत्र हरेर्जन्म कर्माणि च महीयसः ॥ गृणंति कवयो ब्रह्मंस्तानि नो वद शृण्वताम् ॥ २ ॥ यद्यस्मिन्नंतरे ब्रह्मन्भगवान्विश्वभावनः ॥ कृतवान्कुरुते कर्ता ह्यतीतेऽनागतेऽद्य वा ॥ ३ ॥ ऋषिरुवाच ॥ मनवोऽस्मिन्व्यतीताः षट् कल्पे स्वायंभुवादयः ॥ आद्यस्ते कथितो यत्र देवादीनां च संभवः ॥४॥ आकूत्यां देवहूत्यां च दुहित्रोस्तस्य वै मनोः ॥ धर्मज्ञानोपदेशार्थं भगवान्पुत्रतां गतः ॥५॥ कृतं पुरा भगवतः कपिलस्यानुवर्णितम् ॥ आख्यास्ये भगवान्यज्ञो यच्चकार कुरूद्वह ॥ ६ ॥ विरक्तः कामभोगेषु शतरूपापतिः प्रभुः ॥ विसृज्य राज्यं तपसे सभार्यो वनमाविशत् ॥ ७ ॥ सुनंदायां वर्षशतं पदैकेन भुवं स्पृशन् ॥ तप्यमानस्तपो घोरमिदमन्वाह भारत ॥ ८ ॥

श्रीगणेशाय नमः ॥ ॥ नमः श्रीपरमहंसास्वादितचरणकमलचिन्मकरंदाय भक्तजनमानसनिवासाय श्रीरामचंद्राय ॥ अथाष्टमे चतुर्विंशत्यध्यायैर्मनुवर्णनम् ॥ तत्सुतैऋषिदेवेंद्रैर्मूर्तिभिश्च हरेः सह ॥१॥ प्रतिमन्वंतरं चैव मन्वाद्याः षट् पृथक्पृथक् ॥ प्रवर्तयंति सद्धर्मान्पालयंत्याचरंति च ॥२॥ अतो मन्वंतरस्योक्तं सद्धर्म इति लक्षणम् ॥ येन वै क्रियमाणेन नरो न निरयं व्रजेत ॥ ३ ॥ तत्र तु प्रथमे स्वायंभुवः स्वारोचितषस्तथा ॥ उत्तमस्तामसश्चेति चतुर्मनुनिरूपणम् ॥ ४ ॥ स्वायंभुवेंतरेऽनंतदुरंतगुणवर्णनात् ॥ मुदितः परिपप्रच्छ सर्वमन्वंतरस्थितिम् ॥ ५ ॥ स्वायंभुवस्येति त्रिभिः । यत्र विश्वसृजां मरीच्यादीनां मनुकन्यासु पुत्रपौत्रादिसर्गः ॥ १ ॥ महीयसो हरेः । अत्र क्वचिद्बहुपाठांतरमस्ति तदुपेक्षितमस्माभिः ॥ २ ॥ यस्मिन्नतीते यत्कृतवान् यस्मिन्ननागते यत्कर्ता करिष्यत्यद्य वा वर्तमाने यत्कुरुते तद्वदेत्यन्वयः ॥३॥ अस्मिन्कल्पे षण्मनवो व्यतीता गताः ॥ ४ ॥ तस्य मनोर्दुहित्रोः देवहूत्याम् आकूत्यां च कपिलयज्ञमूर्त्तिभ्यां पुत्रतां गतः प्राप्तः॥५॥६॥७॥ घोरं दुश्चरं तपस्तप्यमानः । समाधावनु

ॐ श्रीगणपतये नमः ॥ यः कृष्णो बहुभी रूपैरपात्सर्वान्व्रजेश्वरः । मन्वंतरान्नन्दसूनुस्तं वंदे राधिकापतिम् ॥ १ ॥ मनूनां त्रैकालिकानां स्वायंभुवादीनां वर्णनम् । तत्सुतैर्मनुसुतैः । ऋषयश्च देवाश्चेंद्राश्चेति तैः ( १ )। संतः श्रौताश्च ये धर्मास्तान् ( २ )। यतस्सद्धर्मपालनादि मनुकर्म अतो हेतोः । येन सद्धर्मेण ( ३ )। तत्र चतुर्विंशत्यध्यायेषु । चत्वारो मनवश्चतुर्मनवस्तेषां निरूपणम् ( ४ )। अनंतस्य हरेर्दुरन्ता अपारिमिता ये गुणा भक्तवात्सल्यादयस्तेषां वर्णनात्। मुदितो विस्मृतानशनक्लेशः । सर्वेषां मन्वंतराणां स्थितिं मर्यादापालनम् ( ५ )। इह कल्पे । गुरो इति।भगवत्तत्त्ववर्णनान्मदज्ञाननाशकोऽसीति संबुद्ध्यभिप्रायः । यत्र स्वायंभुवमन्वंतरे । विश्वसृजां मरीच्यादीनाम् । अन्यान्स्वायंभुवव्यतिरिक्तान् ॥ १ ॥ यत्रयत्र मन्वंतरे । ब्रह्मन्निति दयालुतामाह । तानि कर्माणि । महीयसो महत्तमस्य ॥ २ ॥ यत् कर्म ॥ ३ ॥ "भूतं भव्यं वर्तमानं यो वेत्ति द्विजसत्तमः । स ऋषिः प्रोच्यते विज्ञैर्धातुर्ज्ञाने ऋषिर्मतः॥" इति निरुक्तिप्रकाशोक्तेः । कल्पे ब्रह्मदिवसे । यत्राद्ये स्वायंभुवे । आदिना दैत्यादिग्रहः ॥ ४ ॥ तस्य स्वायंभुवस्य । 'धर्मोपदेशो यज्ञेन कृतो मनव' इति तु ग्रंथांतरादवसेयः ॥ ५ ॥ पुरा तृतीयस्कंधे कृतं चरितं यत्कर्म मनुरक्षणादि ॥ ६ ॥ ७ ॥ 'त्रिधा भिन्ना विष्णुपदी सुनंदेति प्रकीर्त्तिता' इति तीर्थः । निद्रितस्य योगनिद्रानिमीलिताक्षस्य हरेरुच्छ्वसितं वेदस्तद्वत्

मनुरुवाच ॥ येन चेतयते विश्वं विश्वं चेतयते न यम् ॥ यो जागर्ति शयानेऽस्मिन्नायं तं वेद वेद सः ॥ ९ ॥
आत्मावास्यमिदं विश्वं यत्किंचिज्जगत्यां जगत् ॥ तेन त्यक्तेन भुंजीथा मा गृधः कस्यस्विद्धनम् ॥ १० ॥

भूतमिदं वक्ष्यमाणं निद्रितोच्छ्वसितवद्विस्मित इवोपदिशन्निवानुवदन्निव चाष्टभिः श्लोकैरन्वाह ॥ ८ ॥ येन चिदात्मना विश्वं चेतयते चेतनीभवति । विश्वं तु यं न चेतयते न चेतनीकरोति स्वत एव चिद्रूपत्वात् । तत्र हेतुः । अस्मिन् शयाने स्वपति यो जागर्ति साक्षितया वर्तते । अहो चित्रं नायं जनस्तं वेद स तु इमं वेद ॥ ९ ॥ तस्येश्वरत्वं दर्शयन् लोकस्य हितमुपदिशति । आत्मना ईश्वरेणावास्यं स्वसत्ताचैतन्याभ्यां संव्याप्यं विश्वं सर्वं जगत्यां लोके यत्किंचिज्जगद्भूतजातमतस्तेनैवेश्वरेण यत्किंचित्त्यक्तं दत्तं धनं तेनैव भुंजीथाः भौमान्भुंक्ष्व । यद्वा तेन हेतुना त्यक्तेनेश्वरार्पणेनैव भुंजीथाः न स्वार्थम् । कस्य स्वित्कस्यचिदपि धनं मा गृधो माभिकांक्षीः । यद्वा

वेदस्य साक्षाद्धरेरुच्छ्वसितत्वादत्र वतिना निर्देशः वेदश्लाघ्यत्वान्मनूक्तेः "यन्मनुरवदत्तद्भेषजम्" इति श्रुतेर्वेदतुल्यत्वम् । भगवदैश्वर्यस्मरणाद्विस्मित इव उपदिष्टस्य 'ईशावास्यम्' इत्यादिना प्राग्वेदेनोक्तस्योपदेशादुपदिशन्निव कथितकथनस्यैव कथनादनुवदन्निवेति चोक्तिः । अन्वाहेत्युक्तेरिवत्रयोपलब्धिरीति प्रतीयते इदमत्राहेति पाठांतरानुपादानात् । यद्वा–निद्रितो यथा विवशः श्वासान्मुंचति तद्वद्वाचमुच्चारयतीत्यर्थः ॥ ८ ॥ तत्र स्वतश्चिद्रूपत्वे । अस्मिन् विश्वस्मिन् । य आत्मा । साक्षिता च तैजसरूपेण न ज्ञेया किं तु परमात्मरूपेण । अयं जनो जीवस्तं परमात्मानम् । स तु परमात्मा तु । इमं जीवम् "सर्वं पुमान्वेद गुणांश्च तज्ज्ञो न वेद सर्वज्ञमनंतमीडे" इति प्राचेतसोक्तेः । भगवज्ज्ञाननाशाभावे "स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतिर्मानं ज्ञेयम् ॥ ९ ॥ अत्र विश्वनाथः–स्वपुत्रपौत्रादिकमुद्दिश्य हितमुपदिशति–जगत्यां त्रिभुवने यत्किंचिज्जगत्स्थानं स्वीयदेहेंद्रियादिकं तत्सर्वं भगवत एवात्मशब्दवाच्यस्यावास्यमावासविषयीभूतं कर्मणि ण्यत् । सम्यग्वासार्हमिति । तेनैव स्वक्रीडास्पदत्वेन सृष्टत्वादिति भावः । अतस्तत्रतत्र स्थाने भगवन्मंदिरं तदर्चां संस्थाप्य तदनुज्ञां संप्रार्थ्यैव स्ववासगृहं ततो निकृष्टमेव सेवकबुद्ध्या निर्मीयतां न तु तत्र स्वस्यैव स्वत्वमारोप्य तन्मंदिरमनिर्मायैवेति ध्वनिः । एवं बहुधनसत्त्वेऽपि तेन परमेश्वरेण यत्त्यक्तं कर्मकारेभ्यो वेतनमिव यद्दत्तं तेनैव भुंजीथा भोगान्भुंक्ष्व मा गृधः । अदत्तमधिकं वा मा कांक्षीः तत्सेवायां तद्भक्तसेवायां च बहुधनं पर्याप्तीकृत्य तच्छेषेणैव पुत्रमित्रकलत्रादीनां स्वस्य चोदरभरणं कुर्विति भावः । ननु ते पुत्रकलत्रादयो नात्र व्यवस्थायां संमन्येरंस्तत्र संतर्जनमाह–स्वित्प्रश्ने अरे कस्य धनं? स्वगृहे स्थितमपि धनं परमेश्वरं विना कस्य न कस्यापीत्यर्थः। "यावद्भ्रियेत जठरं तावत्स्वत्वं हि तस्य तत् । अधिकं योऽभिमन्येत स स्तेनो दंडमर्हति॥" इति नारदोक्तेः। तस्य भगवतः । यत ईश्वरेण व्याप्तमतो हेतोः । तेनैवेश्वरदत्तेनैव । प्रारब्धाधिकाप्तिस्तूद्यमसहस्रेणापि नास्तीत्यत एतदुक्तिः पुनरुक्तिमिव भातीत्यत आह–यद्वेति । "भुंजते ते त्वघं पापा ये पचंत्यात्मकारणात्" इति स्वार्थपाकादेर्दोषश्रवणात् । "यज्ञशिष्टाशिनः संतो मुच्यंते सर्वकिल्बिषैः" इति भगवदर्पिताशनादेर्माहात्म्यश्रवणाच्च । अत्र च पचिः क्रियांतराणामशनं च भोगांतराणामुपलक्षणम् । परकीयवस्तुनि नृणां दर्शनादि नेच्छोत्पद्यते परकीयत्वाभावे सा नोचितेत्याह–यद्वेति । इत्यर्थ इति । "तत्त्वमसि" इत्यादिश्रुतेरात्मनः सर्वत्रैकत्वात्परकीयत्वं धनादौ न संभवत्यत इच्छा व्यर्थैवेति भावः । उक्तमर्थं श्रुत्यारूढं करोति–तथा चेति ।

यं न पश्यति पश्यंतं चक्षुर्यस्य न रिष्यति ॥ तं भूतनिलयं देवं सुपर्णमुपधावत ॥ ११ ॥ न यस्याद्यंतौ मध्यं च स्वः परो नांतरं बहिः ॥ विश्वस्यामूनि यद्यस्माद्विश्वं च तदृतं महत् ॥१२॥ स विश्वकायः पुरुहूत ईशः सत्यः स्वयंज्योतिरजः पुराणः ॥ धत्तेऽस्य जन्माद्यजयात्मशक्त्या तां विद्ययोदस्य निरीह आस्ते ॥ १३ ॥ अथाग्रे ऋषयः कर्माणीहंतेऽकर्महेतवे ॥ ईहमानो हि पुरुषः प्रायोऽनीहां प्रपद्यते ॥ १४ ॥

कस्य स्विदिति अहो कस्यान्यस्य धनमस्ति यतो धनाकांक्षा क्रियेतेत्यर्थः । तथाच श्रुतिः । "ईशावास्यम्" इति यथाश्लोकमेव ॥ १० ॥ ननु यदि स सर्वं व्याप्नोति तर्हि चक्षुरादिभिः किं न प्रतीयते तत्राह । यं पश्यंतं जनश्चक्षुर्वा न पश्यति चक्षुराद्यविषयत्वात् । न हि प्रमातारं प्रमाणं विषयी करोतीति भावः । तथा च श्रुतिः । "चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रम्" इत्यादि । ननु तर्हि घटनाशे देवदत्तस्य तद्विषयं चाक्षुषं ज्ञानमिवेश्वरस्यापि स्वरूपभूतं तद्विषयं ज्ञानं नश्येत्तत्राह । यस्य तु पश्यतश्चक्षुर्ज्ञानं न रिष्यति न नश्यति । तत्तदाकारेणोत्पन्नाया वृत्तेरेव नाशो न स्वतःसिद्धज्ञानस्य न हि सवितृप्रकाशः प्रकाश्यनाशे नश्यतीति भावः । भूतानि निलयो यस्य तं सर्वांतर्यामिणं तथापि सुपर्णं शोभनपतनमसंगमुपधावत भजध्वम् ॥ ११ ॥ तस्य स्वरूपस्य नित्यत्वमेवोपपादयन्नाह । न यस्येति । अमून्याद्यंतादीनि विश्वस्य यस्माद्भवंति विश्वं च यत् यद्रूपमत एवाव्यभिचारित्वात्तदृतं सत्यं महत्परिपूर्णं ब्रह्म ॥ १२ ॥ ननु विश्वं चेत्तद्रूपं तर्हि तस्य कुतो जन्माद्यभावः स्वप्रकाशत्वं वा कुतः कथं वा जगज्जन्मादिकर्तृत्वेन विकारिणः सत्यत्वं पूर्णत्वं च तत्राह । स ईशोऽजः सत्यश्च स्वप्रकाशश्च पुराणश्च निर्विकारो विश्वं कायो यस्य पुरूणि हूतानि नामानि यस्य तथाविधोऽपि यतोऽस्य विश्वस्य जन्मादि स्वशक्त्या मायया धत्ते तां च नित्यसिद्धया विद्ययोदस्य हित्वा निष्क्रिय एवास्ते ॥ १३ ॥ यस्मादेवमीश्वरः कर्म कृत्वा संत्यज्य नैष्कर्म्येणास्ते अथास्माद्धेतोः ऋषयोऽप्यग्रे आदौ कर्माणि कुर्वंति । किमर्थमकर्महेतवे मोक्षार्थम् । पाठांतरे कर्मनाशाय हि यस्मात्

श्लोकमनतिक्रम्य यथाश्लोकं तथाहि श्लोके तु ईशावास्यमित्यस्य प्रतिपदमात्मावास्यमिति । सर्वमित्यस्य प्रतिपदं विश्वमिति । यत्किंचेत्यस्य प्रतिपदं यत्किंचिदिति ॥ १० ॥ सर्वव्यापकत्वमाक्षिपति—नन्विति । अविषयत्वमगोचरत्व प्रमातांतःकरणावच्छिन्ना चितिः प्रमाणमंतःकरणवृत्त्यवच्छिन्ना चितिरिति वेदांतिनो वदंति तथाप्यत्र प्रमीयते ज्ञायते रूपादीति प्रमाणं चक्षुरादि प्रमाति प्रकर्षेणेंद्रियसंबंधं विनैव सर्वं जानातीति प्रमाता परेशः । इति भाव इति । "त्वमकरणः स्वराडखिलकारकशक्तिधरः" इत्याद्युक्तेरित्याशयः । अत्र प्रमाणमाह—तथा चेति । पुनराक्षिपति—नन्विति । तद्विषयं घटविषयम् । तत्तदाकारेण घटपटाद्याकारेण । इति भाव इति । ईश्वरस्य ज्ञाननाशांगीकारे तु तत्स्वरूपहान्यापत्त्या जगदांध्यं प्रसज्जेतेति तात्पर्यम् ॥११॥ अत एव ब्रह्मरूपत्वादेव ॥१२॥ पुनराशंकते—तद्रूपं ब्रह्मरूपम् । तस्य ब्रह्मणः । पुरूणि बहूनि "सर्वनामा सर्वकर्मा" इत्यादिश्रुतेः । तथाविधोऽपि अजादिस्वरूपोऽपि । यतः यया । तां मायाम् ॥ १३ ॥ पाठांतरे 'कर्महंतवे' इति पाठे । हनधातोस्तुमर्थे "तुमर्थे से—" इत्यादिना तवेन् प्रत्ययः । ईहमानेन इत्युक्त्या "कुर्वन्नेवेह कर्माणि जिजीविषेत्" इत्यादिश्रुतिर्गृहीता । हिशब्देन तु "आचार्यकुलाद्वेदमधीत्य यथाविधानंगुरोः कर्माणि रतिविशेषेण समावृत्त्य कुटुंबी शुचौ देशे स्वाध्यायमधीयानो धार्मिको विदधदात्मनि सर्वेंद्रियाणि

ईहते भगवानीशो नहि तत्र विषज्जते ॥ आत्मलाभेन पूर्णार्थो नावसीदंति येऽनु तम् ॥ १५ ॥ तमीहमानं निरहंकृतं बुधं निराशिषं पूर्णमनन्यचोदितम् ॥ नॄन्छिक्षयंतं निजवर्त्मसंस्थितं प्रभुं प्रपद्येऽखिलधर्मभावनम् ॥ १६ ॥ श्रीशुक उवाच ॥ इति मंत्रोपनिषदं व्याहरंतं समाहितम् ॥ दृष्ट्वाऽसुरा यातुधाना जग्धुमभ्यद्रवन्क्षुधा ॥१७॥ तांस्तथावसितान्वीक्ष्य यज्ञः सर्वगतो हरिः ॥ यामैः परिवृतो देवैर्हत्वाऽशासत्त्रिविष्टपम् ॥१८॥

ईहमानः कुर्वाणः अनीहाम् अकर्मत्वम् ॥ १४ ॥ नन्वीहमानः कर्मभिरवगुंठितः कोशकार इव बध्येतैव तत्राह । ईहत इति । अतस्तमनुवर्तमाना ये ते नावसीदंति न विषज्जंते ॥ १५ ॥ तदेवं लोकानुग्रहाय विश्वसृष्ट्यादि यः करोति श्रीरामकृष्णाद्यवतारैश्च वेदोक्तमप्याचरति तं शरणं व्रजामीत्याह । तमिति । निजं वर्त्म नरावतारानुरूपो मार्गस्तत्र सम्यक् स्थितमत ईहमानं कर्माचरंतम् । तथाऽपि जीववैलक्षण्यमाह । निरहंकृतं निराशिषमनन्यचोदितमिति च । निरहंकारत्वे हेतुः । बुधम् । निराशीष्ट्वे हेतुः । पूर्णम् । अनन्यनियुक्तत्वे हेतुः । प्रभुम् । तथाऽपि कर्मानुष्ठाने हेतुः । नॄन्स्वाचारेण शिक्षयंतम् । तत्किमर्थं तत्राह । अखिलान्धर्मान्भावयति प्रवर्तयतीति तथा तम् ॥ १६ ॥ समाहितमपि संतं मंत्रोपनिषदं मंत्ररहस्यं व्याहरंतं दृष्ट्वा सुप्तोच्छ्वसितवद्विवशमिव मन्वाना असुरा यातुधानाश्च क्षुधा निमित्तेन जग्धुमत्तुमभ्यद्रवन्नभिदुद्रुवुः ॥ ॥ १७ ॥ यामैः स्वपुत्रैः । त्रिविष्टपं स्वर्गमपालयत् । स्वयमेवेंद्रो बभूवेत्यर्थः । तत्र प्रतिमन्वंतरं मन्वादयः षडन्येऽन्ये भवंति । तथाहि सूतो द्वादशे वक्ष्यति । "मन्वंतरं मनुर्देवा मनुपुत्राः सुरेश्वरः ॥ ऋषयोंशावतारश्च हरेः षड्विधमुच्यते" इति । तत्राद्ये स्वायंभुवो मनुः । प्रियव्रतोत्तानपादौ मनुपुत्रौ । यामादयो देवाः । मरीचिप्रमुखाः सप्त ऋषयः । यज्ञो हरेरवतारः । इंद्रश्च स एवेति तन्मन्वंतरं पंचविधमेव तच्चतुर्थस्कंधोपक्रमे निरूपितम् ॥ १८ ॥

संप्रतिष्ठाप्याहिंसन्सर्वाभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वेदं वर्त्तयन्यावदायुषम्" इति श्रुतिश्चात्तेति ॥ १४ ॥ पुनराशंकते—नन्विति । अवगुंठितः परिवेष्टितः । तस्य कर्माणि लोकसंग्रहार्थानि न त्वासक्तिपूर्वकाणीति वदति । ईहते कर्माणि करोति । तत्र कर्मसु । तत्र हेतुः—आत्मलाभेनेत्यादि । अत आसक्त्यभावात् । तम् ईशम् । एतेन कैमुत्यमुक्तं ये तमनुवर्तमानास्तेऽपि नावसीदंति किमुतेश इति ॥ १५ ॥ अतो नरानुरूपमार्गस्थितत्वात् । तथापि कर्मकर्तृत्वेपि । पुनस्तथापि निरहंकृतत्वाद्यवत्त्वेपि । तत् नृशिक्षणमं । ननु नृशिक्षणमपि बहिरावेश एव तत्राह—निजा भक्तास्तेषां वर्त्मनि संस्थितं तदनुकूल्यायैव सर्वं कुर्वंतमित्यर्थः । अखिलधर्मप्रवर्त्तकमिति नृशिक्षणे हेतुः ॥ १६ ॥ मंत्रवर्णेन युक्तामुपनिषदं गोप्यविद्यां व्याहरंतमुच्चारयंतम् । यथा सुप्तोत्थितो घूर्णितनेत्रो विवशत्वेन किञ्चिद्वदतीति भावः ॥ १७ ॥ तानसुरादीन् । तथावसितान् हंतुंकृतनिश्चयान् । सर्वगत इति । यातुधानेष्वपि स एवेत्याह । तेनात्महननदोषप्रसक्तिवारणायाह—हरिरिति । स्वनामोच्चारयतामपि सर्वदोषहर्तुः कुतो दोषप्रसंगः "हरिरित्यवशेनाह पुमान्नार्हति यातनाम्" इत्याद्युक्तेः । इत्यर्थ इति । तदाऽन्यस्य तदधिकारिणोऽभावात्स्वयमेवेंद्रपदं पालयामासेति भावः । तत्र चतुर्दशमनुष्वेतन्मन्वंतरं पंचविधमेवेत्यन्वयः । तत्र चतुर्दशस्वाद्ये प्रथमे । स एव यज्ञावतार एव ॥ १८ ॥

स्वारोचिषो द्वितीयस्तु मनुरग्नेः सुतोऽभवत् ॥ द्युमत्सुषेणरोचिष्मत्प्रमुखास्तस्य चात्मजाः ॥ १९ ॥ तत्रेंद्रो रोचनस्त्वासीद्देवाश्च तुषितादयः ॥ ऊर्जस्तंभादयः सप्त ऋषयो ब्रह्मवादिनः ॥ २० ॥ ऋषेस्तु वेदशिरसस्तुषितानामपत्न्यभूत् ॥ तस्यां जज्ञे ततो देवो विभुरित्यभिविश्रुतः ॥ २१ ॥ अष्टाशीतिसहस्राणि मुनयो ये धृतव्रताः ॥ अन्वशिक्षन्व्रतं तस्य कौमारं ब्रह्मचारिणः ॥ २२ ॥ तृतीय उत्तमो नाम प्रियव्रतसुतो मनुः ॥ पवनः सृंजयो यज्ञहोत्राद्यास्तत्सुता नृप ॥२३ ॥ वशिष्ठतनयाः सप्त ऋषयः प्रमदादयः ॥ सत्या वेदश्रुता भद्रा देवा इंद्रस्तु सत्यजित् ॥ २४ ॥ धर्मस्य सूनृतायां तु भगवान्पुरुषोत्तमः ॥ सत्यसेन इति ख्यातो जातः सत्यव्रतैः सह ॥ २५ ॥ सोऽनृतव्रतदुःशीलानसतो यक्षराक्षसान् ॥ भूतद्रुहो भूतगणांस्त्ववधीत्सत्यजित्सखः ॥ २६ ॥ चतुर्थ उत्तमभ्राता मनुर्नाम्ना च तामसः ॥ पृथुः ख्यातिर्नरः केतुरित्याद्या दश तत्सुताः ॥ २७ ॥ सत्यका हरयो वीरा देवास्त्रिशिख ईश्वरः ॥ ज्योतिर्धामादयः सप्त ऋषयस्तामसेंतरे ॥ २८ ॥ देवा वैधृतयो नाम विधृतेस्तनया नृप ॥ नष्टाः कालेन यैर्वेदा विधृताः स्वेन तेजसा ॥ २९ ॥ तत्रापि जज्ञे भगवान्हरिण्यां हरिमेधसः ॥ हरिरित्याहृतो येन गजेंद्रो मोचितो ग्रहात् ॥ ३० ॥ राजोवाच ॥ बादरायण एतत्ते श्रोतुमिच्छामहे वयम् ॥ हरिर्यथा गजपतिं ग्राहग्रस्तममूमुचत् ॥ ३१ ॥ तत्कथासु महत्पुण्यं धन्यं स्वस्त्ययनं शुभम् ॥ यत्रयत्रोत्तमश्लोको भगवान्गीयते हरिः ॥ ३२ ॥

द्वितीयादिषु त्रिषु मन्वंतरेषु मन्वादिषट्कमाह । स्वारोचिषो द्वितीयस्त्विति यावद्गजेंद्रमोक्षप्रश्नम् ॥ १९ ॥ २० ॥ २१ ॥ विभोरसाधारणं चरितमाह । अष्टाशीतिसहस्राणीति ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ सत्यजित इंद्रस्य सखा सन् ॥ २६ ॥ उत्तमस्तृतीयो मनुस्तस्य भ्राता तामसश्चतुर्थो मनुः ॥ २७ ॥ त्रिशिखनामा ईश्वर इंद्रः आसीत् ॥ २८ ॥ अन्यानपि विशिष्टपराक्रमान्देवानाह । देवा वैधृतय इति ॥ २९ ॥ हरिमेधसः पत्न्यां हरिण्यां नाम्ना हरिरित्याहृतो व्याहृतः । ग्रहात् ग्राहात् ॥ ३० ॥ अमूमुचत् मोचयामास ॥ ३१ ॥ श्रवणेच्छायां हेतुः । तत्कथासु तासु कथासु । सा कथैव वा सुमहत्पुण्यम् ।

तस्य स्वारोचिषस्य ॥ १९ ॥ तत्र स्वारोचिषेंतरे । आदिना पारावतादिग्रहः । द्वितीयादिना प्राणादिग्रहः । तदुक्तं मार्कंडेये "देवाः पारावताश्चैव तथैव तुषिता द्विज । ऊर्जस्तंबस्तथा प्राणो दत्तोलिर्ऋषभस्तथा ॥ निश्चरश्चार्ववीरश्च तत्र सप्तर्षयोऽभवन् ।" इति ॥ २० ॥ तस्यां तुषितायाम् । ततो वेदशिरसः ॥ २१ ॥ तस्य विभोः । व्रतं ब्रह्मचर्यं ये तेन्वशिक्षन् ॥ २२ ॥ तत्सुता उत्तमसुताः । आदिनोर्जादिग्रहः ॥ २३ ॥ आदिना द्युमदादिग्रहः ॥ २४ ॥ २५ ॥ स सत्यसेनः ॥ २६ ॥ आदिना शांतादिग्रहः ॥ २७ ॥ आदिना काव्यादिग्रहः । "ज्योतिर्द्धामा पृथुः काव्यश्चैत्रोग्निर्बलकस्तथा । पीवरश्च तथा ब्रह्मन्सप्त सप्तर्षयोऽभवन् ॥" इति मार्कंडेये ॥ २८ ॥ २९ ॥ तत्रापि तामसेंतरेपि । 'ग्रहग्राहौ तोयजीवे' इति निरुक्तिः ॥ ३० ॥ एतत् कथानकम् ॥ ३१ ॥ पूर्वव्याख्यातेऽवतारांतरकथापकर्षप्रतीतेराह—सा कथैवेति ।

सूत उवाच ॥ परीक्षितैवं स तु बादरायणिः प्रायोपविष्टेन कथासु चोदितः ॥ उवाच विप्राः प्रतिनंद्य पार्थिवं मुदा मुनीनां सदसि स्म शृण्वताम् ॥ ॥ ३३ ॥ इति श्रीभा० महा० अष्टमस्कंधे मन्वंतरानुचरिते प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ आसीद्गिरिवरो राजंस्त्रिकूट इति विश्रुतः ॥ क्षीरोदेनावृतः श्रीमान्योजनायुतमुच्छ्रितः ॥ १ ॥ तावता विस्तृतः पर्यक्त्रिभिः शृंगैः पयोनिधिम् ॥ दिशः खं रोचयन्नास्ते रौप्यायसहिरण्मयैः ॥ ॥२॥ अन्यैश्च ककुभः सर्वा रत्नधातुविचित्रितैः ॥ नानाद्रुमलतागुल्मैर्निर्घोषैर्निर्झरांभसाम् ॥ ३ ॥ स चावनिज्यमानांघ्रिः समंतात्पयऊर्मिभिः ॥ करोति श्यामलां भूमिं हरिन्मरकताश्मभिः ॥ ४ ॥ सिद्धचारणगंधर्वविद्याधरमहोरगैः ॥ किन्नरैरप्सरोभिश्च क्रीडद्भिर्जुष्टकंदरः ॥ ५ ॥ यत्र संगीतसन्नादैर्नदद्गुहममर्षया ॥ अभिगर्जंति हरयः श्लाघिनः परशंकया ॥ ६ ॥ नानारण्यपशुव्रातसंकुलद्रोण्यलंकृतः ॥ चित्रद्रुमसुरोद्यानकलकंठविहंगमः ॥ ७ ॥ सरित्सरोभिरच्छोदैः पुलिनैर्मणिवालुकैः ॥ देवस्त्रीमज्जनामोदसौरभांब्वनिलैर्युतः ॥ ८ ॥

पुण्यस्य विशेषणं धन्यमित्यादि ॥३२॥ ३३ ॥ इति श्रीमद्भागवते म० अष्टमस्कंधे टीकायां मन्वंतरानुचारितं नाम प्रथमोऽध्यायः ॥ १ ॥ तुर्ये मन्वंतरे प्रोक्तं गजेंद्रस्य विमोक्षणम् ॥ द्वितीयादित्रिभिस्तत्तु विस्तरेणोपवर्ण्यते ॥१॥ द्वितीये तु गजेंद्रस्य गजीभिः क्रीडतो जले ॥ दैवाद्ग्राहगृहीतस्य हरिस्मृतिरुदीर्यते ॥२॥ आसीदस्ति॥१॥ तावता योजनायुतेन । पर्यक् परितः । त्रिकूटसमाख्याबीजमाह । त्रिभिः शृंगैर्मुख्यैः ॥ २ ॥ अन्यैश्च शृंगैर्निर्झरांभसां निर्घोषैश्च ककुभः सर्वा रोचयन्नास्त इति पूर्वेणैवान्वयः । कथंभूतैः शृंगैः । रत्नैर्धातुभिश्च विचित्रितैः । नानाविधानां द्रुमलतानां गुल्मा येषु तैः ॥ ३ ॥ पयस ऊर्मिभिः समंतादवनिज्यमाना अंघ्रयो मूलप्रांता यस्य । हरिद्भिः पलाशवर्णैः ॥ ४ ॥ ५ ॥ किन्नरादीनां संगीतसन्नादैर्नदंत्यो गुहा यस्मिन्प्रदेशे तमभिगर्जंति । हरयः सिंहाः । अमर्षया असहनेन परमशंकया प्रतिस्पर्धिसिंहशंकया ॥ ६ ॥ नाना ये आरण्याः पशवस्तेषां व्रातैः संकुलाभिर्द्रोणीभिरलंकृत आस्ते । किं च चित्रा द्रुमा येषु तेषु सुरोद्यानेषु कलकंठा मधुरस्वना विहंगमा यस्मिन् ॥ ७ ॥ किं च स्वच्छोदकैः सरित्सरोभिर्युतः । मणय इव वालुका येषु तैः पुलिनैश्च युतः । देवस्त्रीणां मज्जनेन य आमोदस्तेन सौरभयुक्तान्यंबून्यनिलश्च तैश्च युत

अजहल्लिंगत्वात्स्त्रीत्वम् । उद्देश्यविधेयभावत्वाल्लिंगांतरविशेषणं न दोषायेति ॥ ३२ ॥ एवं हरिकथोत्कर्षवर्णनरीत्या ॥ ३३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे अष्टमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ तत् गजेंद्रमोक्षणम् ( १ ) । दैवात्प्राक्पुण्योदयात् ( २ ) । आसीदिति वर्तमाने लङार्षः । उच्छ्रित उच्चः ॥ १ ॥ २ ॥ ककुभो दिशः 'दिशस्तु ककुभः' इत्यमरः । रत्नैर्मण्यादिभिर्धातुभिर्गैरिकादिभिः । गुल्मास्तम्बाः ॥ ३ ॥ स च त्रिकूटः । अवनिज्यमानाः प्रक्षाल्यमानाः । मरकतः पाषाणभेदः ॥ ४ ॥ जुष्टकंदरः सेवितगुहः ॥ ५ ॥ यत्र पर्वतप्रांते । श्लाघिनः प्रख्यातबलाः । परशंकया सिंहांतरभ्रांत्या ॥ ६ ॥ पशवो मृगादयः । व्रातैः समूहैः । संकुलाभिर्व्याप्ताभिः । द्रोणीभिः कंदराभिः "द्रोणी काष्ठांबुवाहिन्यां पर्वतांतरनीवृतोः" इति निरुक्तिः । अन्यदाधिक्यमाह—किंचेति । सुरोद्यानेष्विति बहुत्वोक्तेः सर्वलोकपालानां तत्रोद्यानानि संति ' तस्य द्रोण्यां भगवतो वरुणस्य ' इति वक्ष्यमाणोक्तिरुपलक्षणार्था । अन्यथा स्वामिव्याख्याव्याकोपः स्यादिति ॥७॥ अन्यदाह—किंचेति ।

तस्य द्रोण्यां भगवतो वरुणस्य महात्मनः ॥ उद्यानमृतुमन्नाम आक्रीडं सुरयोषिताम् ॥ ९ ॥ सर्वतोऽलंकृतं दिव्यैर्नित्यंपुष्पफलद्रुमैः ॥ मंदारैः पारिजातैश्च पाटलाशोकचंपकैः ॥ १० ॥ चूतैः प्रियालैः पनसैराम्रैराम्रातकैरपि ॥ क्रमुकैर्नारिकेलैश्च खर्जूरैर्बीजपूरकैः ॥ ११ ॥ मधूकैः सालतालैश्च तमालैरसनार्जुनैः ॥ अरिष्टोदुंबरप्लक्षैर्वटैः किंशुकचंदनैः ॥ १२ ॥ पिचुमंदैः कोविदारैः सरलैः सुरदारुभिः ॥ द्राक्षेक्षुरंभाजंबूभिर्बदर्यक्षाभयामलैः ॥ १३ ॥ बिल्वैः कपित्थैर्जंबीरैर्वृतो भल्लातकादिभिः ॥ तस्मिन्सरः सुविपुलं लसत्कांचनपंकजम् ॥ १४ ॥ कुमुदोत्पलकह्लारशतपत्रश्रियोर्जितम् ॥ मत्तषट्पदनिर्घुष्टं शकुंतैश्च कलस्वनैः ॥ १५ ॥ हंसकारंडवाकीर्णं चक्राह्वैः सारसैरपि ॥ जलकुक्कुटकोयष्टिदात्यूहकुलकूजितम् ॥ ॥ १६ ॥ मत्स्यकच्छपसंचारचलत्पद्मरजः पयः ॥ कदंबवेतसनलनीपवंजुलकैर्वृतम् ॥ १७ ॥ कुंदैः कुरबकाशोकैः शिरीषैः कुटजेंगुदैः ॥ कुब्जकैः स्वर्णयूथीभिर्नागपुन्नागजातिभिः ॥ १८ ॥ मल्लिकाशतपत्रैश्च माधवीजालकादिभिः ॥ शोभितं तीरजैश्चान्यैर्नित्यर्तुभिरलं द्रुमैः ॥ १९ ॥ तत्रैकदा तद्गिरिकाननाश्रयः करेणुभिर्वारणयूथपश्चरन् ॥ सकंटकान्कीचकवेणुवेत्रवद्विशालगुल्मं प्ररुजन्वनस्पतीन् ॥ २० ॥

आस्ते ॥ ८ ॥ तस्य द्रोण्यां वरुणस्योद्यानमास्ते सुरयोषिताम् आसमंतात् क्रीडा यस्मिन् । नाम्ना ऋतुमत् ॥९॥ गिरिवनादि सर्वं ध्येयमिति वक्ष्यत्यतो गिरिमुपवर्ण्य वनं वर्णयति । सर्वतोऽलंकृतमिति । नित्यं पुष्पाणि च फलानि च येषु तैर्द्रुमैः । अत एव ऋतुमदिति समाख्यायुक्तम् । पुनर्गिरिं वर्णयति मंदारैरिति चतुर्भिः । मंदारादिभिर्वृत इत्यन्वयः ॥१०॥ चूताम्रयोरवांतरभेदः॥११॥१२॥ अक्षो बिभीतकः अभया हरीतकी आमलो धात्री तैः ॥ १३ ॥ तस्मिन् गिरौ सर आस्ते । तद्वर्णयति सुविपुलमित्यादिसार्धैः पंचभिः । लसंति कांचनपंकजानि यस्मिन् ॥ १४ ॥ कुमुदादीनां श्रिया ऊर्जितं समृद्धम् । कलः स्वनो येषां तैः शकुंतैश्च निर्घुष्टम् ॥ १५ ॥ चक्राह्वैश्चक्रवाकैः सारसैरप्याकीर्णम् । जलकुक्कुटादीनां कुलैः कूजितम् ॥ १६ ॥ मत्स्यानां कच्छपानां च संचारेण चलतां पद्मानां रजसा युक्तं पयो यस्मिंस्तत् ॥ १७ ॥ १८ ॥ नित्यमृतवः फलपुष्पादिसंपत्तिहेतवो येषां तैरलं शोभितम् ॥ १९ ॥ तत्रैवं सत्येकदा तद्गिरिकाननाश्रयो वारणयूथपः करेणुभिर्हस्तिनीभिः सह चरंस्तृषार्दितेन स्वयूथेन

मणय इव देदीप्यमाना वालुकाः सिकताः पुलिनैस्तोयोत्थितसैकततटैः “ वालुका सिकतासु स्यात्पुलिनं तोयनिर्गतम् । तटम् ” इति कोशः ॥ ८ ॥ तस्य त्रिकूटस्य । ऋतवो हेमंतादयो विद्यंते नित्यं यत्र तदृतुमत् । नित्ययोगे मतुप् । तदेवाह–नित्यपुष्पेति ॥ ९ ॥ १० ॥ चूतैः अम्लैः । आम्रैः मधुरैः । क्रमुकैः पूगैः ॥ ११ ॥ अरिष्टो बृहत्पत्रो निंबः । किंशुकः पलाशः ॥ १२ ॥ पिचुमन्दो निम्बः । सरलो गुग्गुलुः । रंभा कदली ॥ १३ ॥ आदिना तिंदुकादिग्रहः ॥ १४ ॥ शकुंतैः पक्षिभिः ॥ १५ ॥ समासांतर्गतमपि क्वचिदन्वेति प्रतिपादितं चैतदधस्तात् । कोयष्टिरपि जलपक्षी । दात्यूहश्चातकः ॥ १६ ॥ नलः पोतगलः । नीप कदंबौ किंचिद्भिन्नौ । वंजुलो झावुको वेत्रभेदो वा ॥ १७ ॥ कुरबकः अशोको द्विविधः सितरक्तपुष्पभेदेन । कुटजो गिरिमल्लिका । इंगुदी तापसतरुः । कुब्जकं भ्रमरीपुष्पम् । स्वर्णः कृतमालः ॥ १८ ॥ शतपत्रं कमलाद्भिन्नम् । जालकं मुकुलिता लता । “ अलंद्रुमः स विज्ञेयो नित्यपुष्पफलोद्गमः ” इत्युक्तेर्वृक्षविशेषो वा ॥ १९ ॥ तत्रेत्यव्ययमेवं सतीत्यर्थे । तत्रोद्याने वा । ते वर्णिते गिरिकानने आश्रयो निवासस्थलं यस्य स

यद्गंधमात्राद्धरयो गजेंद्रा व्याघ्रादयो व्यालमृगाः सखड्गाः ॥ महोरगाश्चापि भयाद्द्रवंति सगौरकृष्णाः शरभाश्चमर्यः ॥ २१ ॥ वृका वराहा महि
षर्क्षशल्या गोपुच्छशालावृकमर्कटाश्च ॥ अन्यत्र क्षुद्रा हरिणाः शशादयश्चरंत्यभीता यदनुग्रहेण ॥ २२ ॥ स घर्मतप्तः करिभिः करेणुभिर्वृतो
मदच्युत्कलभैरनुद्रुतः ॥ गिरिं गरिम्णा परितः प्रकंपयन्निषेव्यमाणोऽलिकुलैर्मदाशनैः ॥ २३ ॥ सरोऽनिलं पंकजरेणुरूषितं जिघ्रन्विदूरान्मद
विह्वलेक्षणः ॥ वृतः स्वयूथेन तृषार्दितेन तत्सरोवराभ्याशमथागमद् द्रुतम् ॥ २४ ॥ विगाह्य तस्मिन्नमृतांबु निर्मलं हेमारविंदोत्पलरेणुवासितम् ॥
पपा निकामं निजपुष्करोद्धृतमात्मानमद्भिः स्नपयन्गतक्लमः ॥ २५ ॥ स पुष्करेणोद्धृतशीकरांबुभिर्निपाययन्संस्नपयन्यथा गृही ॥ घृणी करेणूः
कलभांश्च दुर्मदो नाचष्ट कृच्छ्रं कृपणोऽजमायया ॥ २६ ॥ तं तत्र कश्चिन्नृप दैवचोदितो ग्राहो बलीयांश्चरणे रुषाऽग्रहीत् ॥ यदृच्छयैवं व्यसनं
गतो गजो यथाबलं सोऽतिबलो विचक्रमे ॥ २७ ॥ तथातुरं यूथपतिं करेणवो विकृष्यमाणं तरसा बलीयसा ॥ विचुक्रुशुर्दीनधियोऽपरे गजाः
पार्ष्णिग्रहास्तारयितुं न चाशकन् ॥ २८ ॥

वृतः सरोवरस्याभ्याशं समीपमगमदिति पंचमेनान्वयः । किं कुर्वन् । कीचकवेणुवेत्रवंतं विशालं महांतं गुल्मं लतादिसंदर्भं वनस्पतींश्च प्ररुजन्प्रभंजन् ॥ २० ॥ कथंभूतः ।
यस्य गंधमात्राद्धरयः सिंहा गजेंद्रादयश्च भयाद् द्रवंति पलायंते॥ २१ ॥वृकादयः क्षुद्रा अल्पाः प्राणिनोऽन्यत्र तद्दृष्टिपथं त्यक्त्वा चरंति ॥ २२॥ पुनः कीदृशः । घर्मतप्तः ।
मदच्युन्मदस्रावी । कलभैः करिशावकैरनुगतः । गरिम्णा गुरुत्वेन । मदमश्नंतीति तथा तैः ॥ २३ ॥ पंकजपरागमिश्रं सरःसंबंधिनं वायुं जिघ्रन् ॥ २४॥ निजेन पुष्करेण
कराग्रेणोद्धृतम् । गतक्लमः सन्निकामं पपौ ॥ २५ ॥ २६ ॥ २७ ॥ दीनधियः करेणवस्तं केवलं विचुक्रुशुः । अपरे गजास्तु पार्ष्णिग्रहाः संतोऽपि तं तारयितुं

तथा । वारणानां हस्तिनां यूथपः । करेणुभिरिभीभिः 'करेणुरिभ्यां स्त्री नेभे' इत्यमरः ॥ २० ॥ आदिना चित्रकादिग्रहः । व्यालमृगाः सर्पाकारा मृगाः । खड्गो गंडकः । गौरकृष्णचमर्यो मृगभेदाः । शरभोष्टापदः
सिंहहंता ॥ २१ ॥ वृको व्याघ्रभेदः । शल्यः श्वावित् । अभीताः सिंहादिभयहीनाः । यदनुग्रहेण गजेंद्रकृपया ॥ २२ ॥ स हस्तींद्रः । घर्मतप्तः सूर्यातपतप्तः । 'कलभो हस्तिशावकः' इत्यमरः । गरिम्णा स्वांग
गौरवेण । मदाशनैर्दानभोजनैः ॥ २३ ॥ सरस्संबंध्यनलो वायुस्तं पंकजानां रेणुभिः परागै रूषितं युक्तम् । द्रुतं शीघ्रम् ॥ २४ ॥ विगाह्य विलोड्य । तस्मिन् सरसि । अमृतांबु सुधास्वादुजलम् ॥ २५ ॥ करेणूः कल
भांश्च । निपाययन् पानं कारयन् । स्नपयन् स्नानं च कारयन् । यथा गृहस्थः स्वपुत्रादीन्स्नपयति पाययति च तद्वदित्यर्थः । घृणी सानुकंपः । "घृणा जुगुप्साकृपयोः" इति मेदिनी । दुर्मदो मत्तः । कृपणः मूढः "मूढे
दीने कातरे च निंदिते कृपणः खलः" इति धरणिः ॥ २६ ॥ तं गजेंद्रम् । तत्र सरसि । यदृच्छया दैवेच्छया । एवं व्यसनं पादग्रहणदुःखम् । स गजः । यथाबलं स्वबलानुरूपम् । विचक्रमे विक्रमं चकार ॥ २७ ॥ तथातुरं पादग्रहादि

नियुध्यतोरेवमिभेंद्रनक्रयोर्विकर्षतोरंतरतो बहिर्मिथः ॥ समाः सहस्रं व्यगमन्महीपते सप्राणयोश्चित्रममंसतामराः ॥ २९ ॥ ततो गजेंद्रस्य मनो बलौजसां कालेन दीर्घेण महानभूद्व्ययः ॥ विकृष्यमाणस्य जलेऽवसीदतो विपर्ययोऽभूत्सकलं जलौकसः ॥ ३० ॥ इत्थं गजेंद्रः स यदाप संकटं प्राणस्य देही विवशो यदृच्छया ॥ अपारयन्नात्मविमोक्षणे चिरं दध्याविमां बुद्धिमथाभ्यपद्यत ॥ ३१ ॥ न मामिमे ज्ञातय आतुरं गजाः कुतः करिण्यः प्रभवंति मोचितुम् ॥ ग्राहेण पाशेन विधातुरावृतोऽप्यहं च तं यामि परं परायणम् ॥ ३२ ॥ यः कश्चनेशो बलिनोंतकोरगात्प्रचंडवेगादभिधावतो भृशम् ॥ भीतं प्रपन्नं परिपाति यद्भयान्मृत्युः प्रधावत्यरणं तमीमहि ॥ ३३ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे मन्वंतरानुवर्णने गजेंद्रोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥ श्रीशुक उवाच ॥ एवं व्यवसितो बुद्ध्या समाधाय मनो हृदि ॥ जजाप परमं जाप्यं प्राग्जन्मन्यनुशिक्षितम् ॥ १ ॥ गजेंद्र उवाच ॥ ॐ नमो भगवते तस्मै यत एतच्चिदात्मकम् ॥ पुरुषायादिबीजाय परेशायाभिधीमहि ॥ २ ॥

नाशकन् ॥ २८ ॥ २९ ॥ मन उत्साहशक्तिर्बलं शारीरमोज ऐंद्रियं तेषाम् । सकलं बलादि । विपर्ययो विपरीतमधिकम् । जलौकसो ग्राहस्य ॥ ३० ॥ स इत्थं यदा प्राणस्य संकटमाप । यतो देही ॥ ३१ ॥ तां बुद्धिमेवाह । न मामिति । अहं न च प्रभवामि यतो ग्राहरूपेण केवलं विधातुः पाशेनावृतस्तथाऽपि तं परं परमेश्वरं परेषां ब्रह्मादीनामयनमाश्रयभूतं यामि शरणं व्रजामि ॥ ३२ ॥ कोऽसौ यं शरणं यासि तत्राह । यः कश्चनेति । अंतक एवोरगस्तस्मात् । तमरणं शरणमीमहि व्रजेम । यद्भयादित्यत्र श्रुतिः । "भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः ॥ भीषाऽस्मादग्निश्चेंद्रश्च मृत्युर्धावति पंचमः ॥" इति ॥ ३३ ॥ इति श्रीमद्भागवते म० अष्टमस्कंधे टीकायां गजेंद्रोपाख्याने द्वितीयोऽध्यायः ॥ २ ॥ तृतीये तु गजेंद्रेण स्तुतो हरिरुपेत्य तम् ॥ समुद्दधार तं ग्राहाद् ग्राहं देवलशापतः ॥ १ ॥ जाप्यं जप्यं स्तोत्रम् । प्राग्जन्मनि इंद्रद्युम्नसंज्ञे ॥ १ ॥ तस्मै नमो नमनमभिधीमह्यभिध्यायेम केवलम् । ग्राहगृहीतत्वेन कायप्रणतेरशक्यत्वात् । स्वस्य तज्ज्ञानं संभावयितुं विशिनष्टि । यतश्चिद्रूपादेतद्देहादिचिदात्मकं चेतनं भवति । तदुक्तम् । "येन चेतयते विश्वम्" इति । तत्र हेतुः । पुरुषाय पूर्षु कारणत्वेन प्रविष्टाय । ननु प्रकृतिपुरुषौ कारणमिति प्रसिद्धं तत्राह ।

वशम् । बलीयसा ग्राहेण । तरसा बलेन 'तरो बले च रोगे च' इति मेदिनी । पार्ष्णिग्रहाः सहायाः ॥ २८ ॥ अंतरतो ग्राहः । बहिर्गजः । सप्राणयोः सबलयोः "प्राणो हृन्मारुते जीवबले वायौ रमेश्वरे" इति धरणिः ॥ २९ ॥ ततः अन्योन्ययुद्धोत्तरम् । दीर्घेण सहस्रवर्षपरिमाणेन । महान् अतीव । व्ययो ह्रासः ॥ ३० ॥ यतो हेतोः । देहिनां द्वंद्वसंबंधस्यावश्यंभावित्वात् । अपारयन्नशक्नुवन् । इमां वक्ष्यमाणाम् ॥ ३१ ॥ प्रभवंति समर्था भवंति । यद्यपीत्थं तथापीति । यः कश्चनेत्यनिर्वचनीयतामाह । उरगः सर्पः ॥ ३२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥
तं गजेंद्रं ग्राहाद् ग्राहं च देवलशापतः समुद्दधारेति योज्यम् ( १ ) । एवम् उक्तरीत्या । व्यवसितः कृतनिश्चयः ॥ १ ॥ तत्र विश्वचेतयितृत्वे । "पूर्वमेवमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति श्रुतेः । सर्वाग्रभवत्वा

यस्मिन्निदं यतश्चेदं येनेदं य इदं स्वयम् ॥ योऽस्मात्परस्माच्च परस्तं प्रपद्ये स्वयंभुवम् ॥ ३ ॥ यः स्वात्मनीदं निजमाययार्पितं क्वचिद्विभातं क्व च तत्तिरोहितम् ॥ अविद्धदृक्साक्ष्युभयं तदीक्षते स आत्ममूलोऽवतु मां परात्परः ॥४॥ कालेन पंचत्वमितेषु कृत्स्नशो लोकेषु पालेषु च सर्वहेतुषु ॥ तमस्तदासीद्गहनं गभीरं यस्तस्य पारेऽभिविराजते विभुः ॥ ५ ॥ न यस्य देवा ऋषयः पदं विदुर्जंतुः पुनः कोऽर्हति गंतुमीरितुम् ॥ यथा नटस्याकृतिभिर्विचेष्टितो दुरत्ययानुक्रमणः स मावतु ॥ ६ ॥ दिदृक्षवो यस्य पदं सुमंगलं विमुक्तसंगा मुनयः सुसाधवः ॥ चरंत्यलोकव्रतमव्रणं वने भूतात्मभूताः सुहृदः स मे गतिः ॥ ७ ॥

आदिः प्रकृतिर्बीजं पुरुषस्तद्रूपाय । प्रविष्टत्वेऽपि जीववत्पारतंत्र्यं वारयति । परेशायेति ॥ २ ॥ परमैश्वर्यं विवृण्वन्नाह यावत्समाप्ति । यस्मिन्नधिष्ठाने यत उपादानाद्येन कर्त्रा यश्च स्वयमेवेदं विश्वं भवति । अस्मात्कार्यात्परस्मात्कारणाच्च यः परस्तं स्वयंभुवं स्वतःसिद्धं प्रपद्ये शरणं व्रजामि ॥ ३ ॥ विश्वहेतुत्वं स्वतःसिद्धत्वं चोक्तमिदानीं विश्वप्रकाशकत्वं वर्णयन्प्रार्थयते । यः स्वात्मनीति । विभातमभिव्यक्तं सत्क्वचित्प्रलये तिरोहितं लीनं सत् । तदुभयं कार्यं कारणं च साक्षी सन्नीक्षते । साक्षित्वे हेतुः । अविद्धदृगलुप्तदृष्टिः । आत्ममूलः स्वयंप्रकाशः । कुतः । परात्प्रकाशकाच्चक्षुरादेरपि परस्तस्यापि प्रकाशक इत्यर्थः । "चक्षुषश्चक्षुः" इत्यादिश्रुतेः ॥ ४ ॥ तिरोहितमीक्षत इत्येतत्प्रपंचपूर्वकं दुर्ज्ञेयत्वं वदन्प्रार्थयते कालेनेति द्वाभ्याम् । पंचत्वमितेषु नाशं प्राप्तेषु । गहनं दुरवगाहम् । गभीरमनंतम् । तस्य तमसः । "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः ॥ ५ ॥ अत एव देवादयो यस्य स्वरूपं न विदुः । जंतुरर्वाचीनः कोऽपि गंतुं ज्ञातुमीरितुं वक्तुं वा । दुरत्ययं दुर्गममनुक्रमणं चरितं कथनं वा यस्य सः । मा माम् ॥ ६ ॥ कथं तर्हि "तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतिरित्याशंक्य तज्ज्ञानोपायं कथयन्नाह । दिदृक्षव इति । अलोकव्रतं ब्रह्मचर्यादि । अव्रणमच्छिद्रम् ।

त्कारणत्वम् । अत्राशंकते—नन्विति । तद्रूपाय प्रकृतिपुरुषौ न ततो भिन्नावित्यर्थः । परेशाय स्वतंत्राय ॥ २ ॥ यस्मिन्नधिष्ठाने—" परमे व्योमन्सर्वा भूतानि " । यतश्चेदं—" यतो वा इमानि भूतानि" येनेदं—"येन जातानि जीवंति " इति । य इदं—"सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतिभ्यः योऽस्मात्प्रपंचात्परस्माच्च तद्धेतुभूतात्प्रकृतेः परोन्यः " यस्मात्क्षरमतीतोहमक्षरादपि चोत्तमः । अतोऽस्मि वेदे लोके च प्रथितः पुरुषोत्तमः ॥ " इति श्रीमुखोक्तेः । " अक्षरात्परतः परः" इति श्रुतेश्च ॥ ३ ॥ इत्यर्थ इति । जडानां स्वतः प्रकाशो न भवतीति भावः । अत्र मानम्—" चक्षुषश्च " इत्यादिश्रुतिः । " पुरुषान्न परं किंचित् " इति श्रुतेश्च ॥ ४ ॥ सर्वहेतुषु महदादिषु । नाशं प्राप्तेषु कारणतां गतेषु । तमःपारप्रकाशत्वे प्रमाणमाह—आदित्येति । आदित्यवर्णं ज्योतिःस्वरूपं तमसोऽविद्यातः ॥ ५ ॥ अत एव दुर्ज्ञेयत्वादेव । " पदं स्थानस्वरूपांघ्रिलक्ष्मनिश्चयहेतुषु " इति कोशात् । आकृतिभिर्हनुमदाद्याकारैः । विविधां चेष्टां कुर्वतो नटस्य यथा स्वरूपं न ज्ञायते तद्वदित्यर्थः ॥ ६ ॥ यद्येवं सर्वथा दुर्ज्ञेय एव तर्हि श्रुतिविरोधः स्यादित्याह—कथं तर्हीति । तमात्मानं विदित्वा ज्ञात्वा मृत्युं संसारमत्येयुल्लंघ्य मुक्तो भवतीति श्रुत्यर्थः । तज्ज्ञानोपायं दुर्ज्ञेयस्याप्यात्मनो ज्ञानयत्नम् । यस्य भगवतः । सुमंगलममंगलहरम् । सुसाधवोऽतिशयेन

न विद्यते यस्य च जन्म कर्म वा न नामरूपे गुणदोष एव वा ॥ तथाऽपि लोकाप्ययसंभवाय यः स्वमायया तान्यनुकालमृच्छति ॥ ८ ॥ तस्मै नमः परेशाय ब्रह्मणेऽनंतशक्तये ॥ अरूपायोरुरूपाय नम आश्चर्यकर्मणे ॥ ९ ॥ नम आत्मप्रदीपाय साक्षिणे परमात्मने ॥ नमो गिरां विदूराय मनसश्चेतसामपि ॥ १० ॥ सत्त्वेन प्रतिलभ्याय नैष्कर्म्येण विपश्चिता ॥ नमः कैवल्यनाथाय निर्वाणसुखसंविदे ॥ ११ ॥

भूतानामात्मभूता भूतेष्वात्मदृष्टयः संतः । स मे गतिरस्तु ॥७॥ दुरत्ययानुक्रमणत्वं प्रपंचयन्प्रणमति न विद्यत इत्यादिना । लोकानामप्ययः प्रलयः संभवो जन्म तयोर्द्वंद्वैक्यम् । तदर्थं यस्तानि जन्मादीनि स्वीकरोति तस्मै नम इत्युत्तरेणान्वयः ॥ ८ ॥ ब्रह्मणेऽरूपाय । अनंतशक्तये उरुरूपाय अत आश्चर्याणि कर्माणि यस्य तस्मै परेशाय नमः ॥ ९ ॥ आत्मप्रदीपाय प्रकाशांतरस्याविषयाय । कुतः । साक्षिणे प्रकाशकाय । परमात्मने जीवनियंत्रे । अत एव गिरां विदूरायाप्राप्याय । चेतसां चित्तवृत्तीनाम् । तथा च श्रुतिः । "यतो वाचो निवर्तंते अप्राप्य मनसा सह" इति ॥ १० ॥ एवमपि विपश्चिता निपुणेन । नैष्कर्म्येण संन्यासेन । सत्त्वेन शुद्धेन । "संन्यासयोगाद्यतयः शुद्धस

सदाचारप्रवृत्ताः । सुहृदो दयालवः । गतिर्गम्यः ॥७॥ गुणेन सहितो दोषो गुणदोषः । 'गुणदोषम्' इति पाठे समाहारद्वंद्वः । यद्यप्येवं वस्तुतोऽस्ति तथापीति । यद्वेतरेतरयोगेप्येकत्वम् "ऊकालोज्झस्वदीर्घप्लुतः" इतिवत् । संभवः सृष्टिः । स्वमायया मायिकतमोरजोभ्यां रुद्ररूपेण ब्रह्मरूपेण च । तानि जन्मकर्मादीनि । अनुकालं प्रतिप्रलयसृष्टिसमये । ऋच्छति प्राप्नोति । अत्र लोकस्थित्यर्थं विष्णुजन्मादीनि न निर्दिष्टानि तेषां मायिकत्वाभावात् । अमायिकजन्मादीनि तु नानेन निषिध्यंते । तानि देवक्यादिजन्म गोवर्द्धनधारणादिकर्म रामकृष्णादि नाम रूपाणि स्वरूपभूतान्येव न निषेद्धुं शक्यंते । श्रुत्यापि "निष्क्रियं निष्कलं शांतं निरवद्यं निरंजनम् । अशब्दमस्पर्शमरूपमव्ययम्" इत्यादौ मायिकं निषिध्य "स सर्वकर्मा सर्वगंधः सर्वरसः सर्वकामः" इत्यमायिकं कर्मादि विधीयते इति । अत एव श्रीवैष्णवे 'गुणांश्च दोषांश्च मुने व्यतीतः' इत्युक्त्वा पुनराह–'समस्तकल्याणगुणात्मको हि' इति। तथा "ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः।भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः॥" इति । पाद्मोत्तरखंडे च–"योऽसौ निर्गुण इत्युक्तः शास्त्रेषु जगदीश्वरः । प्राकृतैर्हेयसंयुक्तैर्गुणैर्हेयत्वमुच्यते ॥" इति । हेयसंयुक्तैर्हेयत्वसंयुक्तैः । प्राकृता गुणा हि हेया भवंतीति भावः । नाम्नश्चिन्मयत्वं श्रुतिराह यथा "ॐ आस्य जानंतो नाम चिद्विविक्तन महस्ते विष्णो स्वमतिं भजामहे ॐ तत्सत्" इति । श्रुत्यर्थस्तु–हे विष्णो ते तव नाम चित् चित्स्वरूपम् । अत एव महः स्वप्रकाशरूपं तस्मादस्य नाम्न आ ईषदेव जानंतो वयं न तु सम्यक् उच्चारणमाहात्म्यादिपुरस्कारेणेत्यर्थः । तथापि विविक्तन ब्रुवाणाः केवलं तदभ्यासमात्रं कुर्वाणाः । सुमतिं शोभनां तद्विषयां बुद्धिं भजामहे प्राप्नुमः । यतस्तदेव नाम ॐ प्रणवः । सत्स्वतःसिद्धमिति अनुकालं नित्यमेव । ननु कथं जन्मकर्मणोर्नित्यत्वं ते हि क्रिये सा चारंभसमाप्तिभ्यामेव सिध्यति ते विना क्रियात्वासिद्धेः । नैवं दोषः श्रीभगवति सदैवाकारानंत्यात् जन्मकर्मलक्षणलीलानंत्यादनंतप्रपंचानंतवैकुंठगततत्तल्लीलास्थानपरिकराणां व्यक्तिप्रकाशयोरानंत्याच्च । अत एवोक्तं ब्रह्मणा 'को वेत्ति भूमन्भगवन्परात्मन:' इत्यादि । क्वचिल्लीलारंभः क्वचित्समाप्तिश्चेत्यविच्छेदान्नित्यतैवेति श्रीगीतास्वपि "जन्म कर्म च मे दिव्यम्' इत्यादिना तथैवोपपादितमिति संदर्भः ॥ ८ ॥ परेषां ब्रह्मादीनामीशः । परश्चासावीशश्चेति वा तथा तस्मै । अरूपाय वस्तुतो रूपरहिताय । अतोऽरूपत्वे बहुरूपत्वात् । अरूपाय प्राकृतरूपरहिताय । उरुरूपाय अप्राकृतचिन्मयरामकृष्णादिबहुरूपायेति विश्वनाथः ॥ ९ ॥ प्रकाशांतरस्य सूर्यादेरगोचराय प्रत्युत सूर्यादिरेव तद्गोचरः "येनेद्धः सूर्यस्तपति" इत्यादिश्रुतेः । तत्र हेतुमाह–कुत इति । अत एव साक्षित्वादेरेव । प्रमाणं चात्र तथा चेति ॥ १० ॥ एवमपि वाचाद्यगोचरत्वेपि । नैष्कर्म्यादिप्राप्यत्वे श्रुति

नमः शांताय घोराय मूढाय गुणधर्मिणे ॥ निर्विशेषाय साम्याय नमो ज्ञानघनाय च ॥ १२ ॥ क्षेत्रज्ञाय नमस्तुभ्यं सर्वाध्यक्षाय साक्षिणे ॥ पुरुषायात्ममूलाय मूलप्रकृतये नमः ॥ १३ ॥ सर्वेन्द्रियगुणद्रष्ट्रे सर्वप्रत्ययहेतवे ॥ असताच्छाययोक्ताय सदाभासाय ते नमः ॥ १४ ॥ नमोनमस्तेऽखिलकारणाय निष्कारणायाद्भुतकारणाय ॥ सर्वागमाम्नायमहार्णवाय नमोऽपवर्गाय परायणाय ॥ १५ ॥ गुणारणिच्छन्नचिदूष्मपाय तत्क्षोभविस्फूर्जितमानसाय ॥ नैष्कर्म्यभावेन विवर्जितागमस्वयंप्रकाशाय नमस्करोमि ॥ १६ ॥ मादृक्प्रपन्नपशुपाशविमोक्षणाय मुक्ताय भूरिकरुणाय नमोऽलयाय ॥ स्वांशेन सर्वतनुभृन्मनसि प्रतीतप्रत्यग्दृशे भगवते बृहते नमस्ते ॥ १७ ॥

त्वाः" इति श्रुतेः । प्रतिलभ्याय प्रत्यक्त्वेन प्राप्याय । निर्वाणसुखसंविदे मोक्षानंदानुभूतये ॥ ११ ॥ शांताय सत्यानुसारिणे घोराय रजोऽनुसारिणे मूढाय तमोगुणधर्मिणे सत्त्वादिधर्मानुकारिणे । ज्ञानघनाय चेति निर्विशेषत्वेऽपि प्रधानवैलक्षण्यमुक्तम् ॥ १२ ॥ साक्षिण इति सर्वाध्यक्षत्वेऽपि निर्विकारत्वमुक्तम् । आत्मनां क्षेत्रज्ञानां मूलाय मूलस्य प्रधानस्यापि प्रकृतये उद्भवहेतवे। तत्र हेतुः । पुरुषाय पूर्वमेव सते। तथा च श्रुतिः । "पूर्वमेवाहमिहासमिति तत्पुरुषस्य पुरुषत्वम्" इति । पूर्णायेति वा ॥ १३॥ सर्वेंद्रियाणां ये गुणा विषयास्तेषां द्रष्ट्रे । सर्वे प्रत्यया इंद्रियवृत्तयो हेतवो ज्ञापका यस्य तस्मै । तदेवाह । असताऽहंकारादिप्रपंचेन । छाययाऽसद्रूपया उक्ताय जलस्थप्रतिबिंबेन बिंबं यथा सूच्यते तथा सूचिताय । तत्र हेतुः सद्रूपो विषयेष्वाभासो यस्य तस्मै । तदुक्तं तृतीये 'यथा जलस्थ आभासः' इत्यादिना । पाठांतरे असत्यस्य छाययाऽध्यासेनाक्ताय युक्ताय तदधिष्ठानायेत्यर्थः ॥ १४ ॥ अखिलकारणाय सर्वकारणरूपाय । अत एव स्वयं निष्कारणाय । कारणत्वेऽपि मृदादिवद्विकारं वारयति । अद्भुतकारणायेति । एवंभूतत्वे प्रमाणमाह । सर्वे आगमाः पंचरात्रादय आम्नायाश्च वेदास्तेषां महार्णवाय स्रोतसामिव पर्यवसानस्थानाय । अपवर्गाय मोक्षरूपाय । अतः परायणायोत्तमानामाश्रयाय ॥ १५ ॥ गुणा एवारणिस्तया छन्नश्चिदूष्मपो ज्ञानाग्निस्तस्मै । तेषां गुणानां क्षोभे कार्ये विस्फूर्जितं बहिर्वृत्तिकं मानसं यस्य । "सोऽकामयत बहु स्याम्" इति श्रुतेः । नैष्कर्म्यमात्मतत्त्वं तस्य भावेन भावनया विवर्जिता आगमा विधिनिषेधलक्षणा यैस्तेषु स्वयमेव प्रकाशो यस्य तस्मै ॥ १६ ॥ मादृक् मद्विधश्चासौ

माह—संन्यासेत्यादि । प्रत्यक्त्वेन जीवाभिन्नत्वेन ॥ ११ ॥ ज्ञानघनाय ज्ञानाकाराय ॥ १२ ॥ तत्र प्रकृत्युद्भवहेतुत्वे । सर्वपूर्वत्वे प्रमाणमाह—तथा चेति । आत्ममूलायेत्युक्तेरेवैतदर्थसिद्धेराह—पूर्णाय वेति ॥ १३ ॥ सर्वेन्द्रियाणां श्रोत्रादीनाम् । विषयाः शब्दादयः । द्रष्ट्रे साक्षिणे । तदेव इंद्रियवृत्तिज्ञाप्यत्वमेव । अहंकारादिप्रपंचरूपया छायया सूचिताय यथा प्रतिबिम्बेन विम्बः सूच्यते तथा बिंबस्थानीयो हरिः प्रतिबिम्बस्थानीयोऽहंकारादिप्रपंच इति विवेकः । तत्राहंकारादिप्रपञ्चसूचितत्वे । पाठांतरे 'असत्यच्छाययाक्ताय' इति पाठे । इत्यर्थ इति । वस्तुतः प्रपञ्चसंबंधशून्यत्वेपि विवर्त्ताधिष्ठानत्वेन तत्संबंधिवत्प्रतीयमानायेति भावः ॥ १४ ॥ सर्वाणि कारकाणि कर्तृकर्मकरणसंप्रदानापादानाधिकरणाख्यानि तद्रूपाय । अत एव सर्वकारकरूपत्वादेव । स्वस्य कारणांतररहिताय । अद्भुतमन्यत्रादृष्टश्रुतचरं यादृक् तादृक् कारणत्वं यस्मिन्स तथा भावप्रधानो निर्देशः । एवंभूतत्वेऽद्भुतकारणत्वे । आदिना विष्णुयामलादिग्रहः । पर्यवसानस्थानाय सर्वशास्त्रतात्पर्यरूपाय । सर्वैः शास्त्रैरित्थमेव प्रतिपादितायेति भावः । अतो मोक्षरूपत्वात् । उत्तमानां भक्तियोगादिनिष्ठानामाश्रयाय प्राप्याय ॥ १५ ॥ अरणिर्मथनकाष्ठरूपा तस्मै ज्ञानाग्निरूपाय । बहिर्वृत्तिमानसत्वे श्रुतिमाह—स इत्यादि । नैष्कर्म्येत्यादेरद्वैतज्ञानप्राप्यायेत्यर्थः ॥ १६ ॥ तत्र मोक्षणे । करुणा दया । अतो भूरिकरुणत्वात् ।

आत्मात्मजाप्तगृहवित्तजनेषु सक्तैर्दुष्प्रापणाय गुणसंगविवर्जिताय ॥ मुक्तात्मभिः स्वहृदये परिभाविताय ज्ञानात्मने भगवते नम ईश्वराय ॥ १८ ॥ यं धर्मकामार्थविमुक्तिकामा भजंत इष्टां गतिमाप्नुवंति ॥ किं त्वाशिषो रात्यपि देहमव्ययं करोतु मेऽदभ्रदयो विमोक्षणम् ॥१९॥ एकांतिनो यस्य न कंचनार्थं वांछंति ये वै भगवत्प्रपन्नाः ॥ अत्यद्भुतं तच्चरितं सुमंगलं गायंत आनंदसमुद्रमग्नाः ॥ २० ॥ तमक्षरं ब्रह्म परं परेशमव्यक्तमाध्यात्मिकयोगगम्यम् ॥ अतींद्रियं सूक्ष्ममिवातिदूरमनंतमाद्यं परिपूर्णमीडे ॥ २१ ॥ यस्य ब्रह्मादयो देवा वेदा लोकाश्चराचराः ॥ नामरूपविभेदेन फल्ग्व्या च कलया कृताः ॥ २२ ॥

प्रपन्नः पशुस्तस्य पाशोऽविद्या तस्य विशेषेण मोक्षणं येन । तत्र योग्यतामाह । मुक्ताय । मोचने हेतुः । भूरिः करुणा यस्य । अतस्तत्रार्थेऽलयायानलसाय । स्वांशेनांतर्यामिरूपेण सर्वेषां तनुभृतां मनसि प्रतीता प्रख्याता या प्रत्यक् दृक्तस्मै । तथा च श्रुतिः । "य आत्मनि तिष्ठन्नात्मानमंतरो यमयति" इति । भगवते सर्वेषां तनुभृतां नियमने समर्थाय । तेषां मनःस्थितत्वेऽपि बृहतेऽपरिच्छिन्नाय ॥ १७ ॥ अंतःस्थत्वेऽपि देहादिष्वासक्तैर्दुष्प्रापणाय प्राप्तुमशक्याय । तत्र हेतुः । गुणसंगेन विविर्जिताय अत एव मुक्तात्मभिर्देहादिष्वनासक्तैश्चिंतिताय । तैः परिभावितं रूपमाह ज्ञानात्मन इत्यादि ॥ १८ ॥ इष्टां गतिं कामितं धर्मादिफलं प्राप्नुवंत्येव न तु तावदेव । किं तु यास्तैरकामिता अन्या अप्याशिषो राति । देहमप्यव्ययं राति । एवं योऽदभ्रदयः स मे विमोक्षणमेव केवलं करोतु नाधिकं प्रार्थये ॥ १९ ॥ एतावदप्यहं भक्तिसुखानभिज्ञत्वेन वांछामि । यस्यैकांतभक्ता न कंचिदर्थं वांछंति तं परेशं परमेश्वरमीडे स्तौमीत्युत्तरेणान्वयः । तेषां निष्कामत्वे हेतुः । ये वै भगवतः सर्वज्ञानयुक्तान्प्रपन्नाः सेवितवंतः ॥ २० ॥ अत्यद्भुतसुमंगलत्वप्रदर्शनार्थमक्षरत्वादीनि विशेषणानि ॥ २१ ॥ परिपूर्णत्वं प्रदर्शयन्नाह त्रिभिः । यस्येति । यस्य फल्ग्व्या च स्वल्पयैव कलयांशेन

तत्र मोचनरूपेऽर्थे । प्रत्यग्रूपत्वे प्रमाणमाह—य इत्यादि । श्रुतिस्तु व्याख्यातप्रायैव। यद्वा मुक्ताय मादृग्भिरेतावंतं कालमसेविताय तदपि मादृग्भ्यो न तु क्रुध्यते प्रत्युत भूरिकरुणाय तत्र हेतुः—अमलाय प्राकृतानामिवेर्ष्याहीनत्वादिति भावः ॥ १७ ॥ आप्ताः प्रियसुहृदः । तत्र प्राप्तुमशक्यत्वे । अत एव गुणसंगविवर्जितत्वादेव । भावितं चिंतितम् । यद्वा—मुक्तात्मभिरात्मघातिभिः । परिभाविताय मायिकविग्रहोऽयमिति दृष्टया तिरस्कृताय । वस्तुतस्तु—ज्ञानात्मने ज्ञानं पूर्णं चिदेवात्मा वपुर्यस्य तस्मै ॥ १८॥ अदभ्रदयोऽत्यंतकृपालुः। आशिषः सामीप्याद्याः । अव्ययमनश्वरं देहं पार्षददेहं ध्रुवादिभ्य इव रात्येव विमोक्षणं संसाराद्ग्राहाच्च नित्यसिद्धदेहं प्रेमभक्तिं च ददात्विति भावः ॥ १९ ॥ तेषामेकांतिनाम् ॥ २० ॥ अक्षरम् " एतस्याक्षरस्य " इत्यादिश्रुतेः । परम् " अक्षरात्परमः परः " इति। " अव्यक्तमचलं शांतम् " इति । " अध्यात्मयोगेन सुनिश्चितेन " यद्वात्मानं तमेवाधिकृत्य यो योगो भक्त्याख्यस्तेन गम्यम् ' भक्त्याहमेकया ग्राह्यः ' इति तदुक्तेः। " ज्ञात्वा देवं शोकमोहौ जहाति " इति । " यतो वाचो निवर्त्तंते " इति । " सूक्ष्मात्सूक्ष्मतरं प्रपद्ये " इति । " तद्दूरे तदंतिके " इति । "सत्यं ज्ञानमनन्तम्" इति । "यो देवानां प्रथमं पुरस्तात्" इति। "पूर्णमदः पूर्णमिदम्" इत्यादिश्रुतिः । "पूर्णस्य पूर्णत्वमादाय" इत्यादिश्रुतिप्रतिपादितार्थेनात्र स्तुतिः ॥२१॥ यस्य हरेः । अंशेन मायारूपेण ।

यथाऽर्चिषोऽग्नेः सवितुर्गभस्तयो निर्यांति संयांत्यसकृत्स्वरोचिषः ॥ तथा यतोऽयं गुणसंप्रवाहो बुद्धिर्मनः खानि शरीरसर्गाः ॥ २३ ॥ स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षंढो न पुमान्न जंतुः ॥ नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः ॥ २४ ॥ जिजीविषे नाहमिहाऽमुया किमंतर्बहिश्चावृतयेभयोन्या ॥ इच्छामि कालेन न यस्य विप्लवस्तस्यात्मलोकावरणस्य मोक्षम् ॥ २५ ॥ सोऽहं विश्वसृजं विश्वमविश्वं विश्ववेदसम् ॥ विश्वात्मानमजं ब्रह्म प्रणतोऽस्मि परं पदम् ॥ २६ ॥

कृताः स जयतादिति तृतीयेनान्वयः ॥ २२ ॥ कथं कृता इत्यपेक्षायां दृष्टांतौ । यथाऽर्चिषोऽग्नेरिति प्रवाहे दृष्टांतः । सवितुर्गभस्तय इत्यानंत्ये । निर्यांत्युद्गच्छंति । संयांति लीयंते । गुणसंप्रवाहमेवाह । बुद्धिर्मन इति । खानि करणानि शरीरसर्गाः कार्यदेहप्रवाहाश्च यतो भवंति सः ॥ २३ ॥ अत एव देवादीनां मध्ये कोऽपि न भवति । न जंतुर्लिंगत्रयशून्यं प्राणिमात्रमपि किं तु सर्वस्य निषेधेऽवधित्वेनावशिष्यत इति निषेधशेषो मायया अशेषोऽशेषात्मकश्च जयतान्मद्विमोक्षणायाविर्भवतु ॥ २४ ॥ न च ग्राहाच्छरीरस्य मोक्षणेनाहं जीवितुमिच्छामि । तत्र हेतुः । अमुया अंतर्बहिश्चाविवेकेन व्याप्तया गजजात्या किं प्रयोजनम् । आत्मलोकस्यात्मप्रकाशस्य यदावरणमज्ञानं तस्यैव तु मोक्षमिच्छामि । यस्य मोक्षस्य कालेन नाशो नास्ति । यद्वा । देहस्य बंधो देहनाशे गजयोनिर्नश्येदेव किं तन्मोक्षप्रार्थनेन । आत्मलोकावरणस्य तु कालेन विप्लवो नास्ति ज्ञानैकनिवर्त्यत्वात् । अतस्तस्यैव मोक्षमिच्छामीत्यर्थः ॥ २५ ॥ सोऽहं मुमुक्षुः । विश्वं विश्वरूपम् । अविश्वं विश्वव्यतिरिक्तं च । विश्वं वेदो धन

''कल्पयत्यात्मनात्मानमात्मा देवः स्वमायया'' इति वैतथ्योक्तेः । विश्वनाथस्तु—कला द्विधा फल्गुरफल्गुश्च । तत्राद्या ब्रह्मेंद्ररुद्रादिजीवरूपा । द्वितीया मत्स्यकूर्मादीश्वररूपा चेति स एव सर्व इत्यर्थः । वेदास्तु तन्निःश्वासत्वेन तद्रूपत्वादफल्गव एवेत्याह ॥२२॥ ''यथाग्नेः क्षुद्रा विस्फुलिंगा व्युच्चरंति'' इत्यादिश्रुतिप्रतिपादितार्थमाह—यथेति । ''यतो वा इमानि'' इत्यादिश्रुतेश्च ॥२३॥ अत एव सर्वाधिष्ठानत्वादेव । निषेधशेषोऽप्युच्छिष्टवन्न त्याज्य इत्याह—अशेष इति । ''सर्वात्मकः स एष आत्मा नेतिनेति'' इत्यादिश्रुतेः ॥२४॥ तत्र ग्राहाच्छरीरमोक्षेच्छाराहित्ये । मोक्षस्य स्वरूपज्ञानलक्षणस्य । 'ज्ञानी त्वात्मैव मे मतम्' इति गीतोक्तेर्ज्ञानिनो भगवद्रूपत्वात्कालस्य च वह्निविस्फुलिंगवत्तदंशत्वान्न तेन तन्नाश इति भावः । ननूपस्थितदेहबंधमोक्षस्य तात्कालिकसुखहेतुत्वात्स कथं तेनार्थित इति चेदाह—यद्वेति । अतो ज्ञानैकनिवर्त्यत्वादेव । तस्यैवाज्ञानस्यैव । इत्यर्थ इति। ''अर्के चेन्मधु विंदेत किमर्थं पर्वतं व्रजेत्'' इति न्यायेन देहबंधस्य स्वतो निवृत्तेस्तदर्थं प्रयासो न कार्य इति भावः । यद्वात्मनस्तत्र लोकस्य वैकुंठस्य यदावरणं द्वारकपाटादि तस्य मोचनं मन्निष्ठायास्तत्प्राप्त्ययोग्यताया नाशमिति विश्वनाथः ॥२५॥ वैकुंठेच्छा चेत्तर्हि भक्तिः क्रियतां तत्राह—भक्तिमप्यहं कर्तुं पशुत्वाद्विपद्ग्रस्तत्वाच्च न शक्नोमि तस्माद्यत्किंचिच्चक्षुरादिभिरिदं जानामि तस्य यः कर्त्ता तं केवलं मनसैव नमामीत्याह—सोऽहमिति। सोहं प्रसिद्धः पशुः । दुर्ज्ञेयत्वं विश्वामित्रादिविशेषणैराह । विश्वरूपम् '' सर्वं खल्विदं ब्रह्म '' इति श्रुतेः । विश्वव्यतिरिक्तमध्यस्तादधिष्ठानस्य रज्जुभुजंगादौ पृथग्दर्शनात् । उपकरणं ज्ञानसाधनं कार्यात्कारणमनुमीयते विश्वकार्येण तत्कारणस्य

योगरंधितकर्माणो हृदि योगविभाविते ॥ योगिनो यं प्रपश्यंति योगेशं तं नतोऽस्म्यहम् ॥ २७ ॥ नमो नमस्तुभ्यमसह्यवेगशक्तित्रयायाखिलधी गुणाय ॥ प्रपन्नपालाय दुरंतशक्तये कदिंद्रियाणामनवाप्यवर्त्मने ॥ २८ ॥ नायं वेद स्वमात्मानं यच्छक्त्याऽहंधिया हतम् ॥ तं दुरत्ययमाहात्म्यं भगवंतमितोऽस्म्यहम् ॥ २९ ॥ श्रीशुक उवाच ॥ एवं गजेंद्रमुपवर्णितनिर्विशेषं ब्रह्मादयो विविधलिंगभिदाऽभिमानाः ॥ नैते यदोपससृपुर्निखिलात्मकत्वात्तत्राखिलामरमयो हरिराविरासीत् ॥ ३० ॥ तं तद्वदार्तमुपलभ्य जगन्निवासः स्तोत्रं निशम्य दिविजैः सह संस्तुवद्भिः ॥ छंदोमयेन गरुडेन समुह्यमानश्चक्रायुधोऽभ्यगमदाशु यतो गजेंद्रः ॥ ३१ ॥

मुपकरणं यस्य तम् । विश्वस्यात्मानं च । केवलं प्रणतोऽस्मि न तु तं जानामि ॥ २६ ॥ योगं विना दुर्ज्ञेयत्वादित्याह । योगेन भगवद्धर्मेण रंधितानि दग्धानि कर्माणि येषां ते यं प्रपश्यंति ॥ २७ ॥ तर्हि सर्वेऽपि योगमेव किं नास्थितास्तत्राह नम इति द्वाभ्याम् । असह्यो वेगो रागादिलक्षणो यस्य तथाभूतं शक्तित्रयं यस्य तस्मै । बहिश्चाखिलधियां सर्वेन्द्रियाणां गुणाय शब्दादिरूपेण प्रतीयमानाय । अतः कदिंद्रियाणां कुत्सितानींद्रियाणि येषां तेषामनवाप्यं वर्त्म यस्य ॥ २८ ॥ यच्छक्त्या यस्य मायया या अहंधीस्तया हतमावृतमयं जनो न वेद दुरत्ययं माहात्म्यं यस्य । तमितोऽस्मि आश्रितो भवामि ॥ २९ ॥ उपवर्णितं निर्विशेषं मूर्तिभेदं विना परं तत्त्वं येन तम् । विविधा चासौ लिंगभिदा मूर्तिभेदस्तस्यामभिमानो येषां ते । अत एते यदा नोपजग्मुः । तत्र तदा । अखिलामरमयः सर्वदेवमयमूर्तिः ॥ ३० ॥ उपलभ्य ज्ञात्वा

तस्यापि ज्ञानसंभवात्।आत्मानं नियंतारम् ''यः पृथिवीमंतरो यमयति'' इत्यादिश्रुतेः। परं पदं ततः परं प्राप्यांतराभावात्॥२६॥रंधितानि नष्टानि॥२७॥अत्राक्षिपति–तर्हीति।शक्तित्रयं रजआदित्रयम्।प्रतीयमानाय विषयाय। अत इंद्रियविषयत्वात्। कुत्सितानि कुत्सितशब्दादिविषयाणि॥२८॥२९॥मूर्त्तिभेदं विना समं ब्रह्म अवतारावतारिरूपोऽपि विशेषो यत्र नास्ति तदिति वा''पूर्णमदः पूर्णमिदम्'' इति श्रुतेः।यद्वा–विविधानि लिंगानि पद्मवज्रादीनि वा हंसवृषभादीनि एवं भिदया भेदेन योऽभिमानो वज्रपाणिरहं पद्मपाणिरहमित्येवंलक्षणो येषां स्रष्टृत्वसंहर्तृत्वादिलक्षणो येषां ते तथा। अत एव विविधलिंगभिदाभिमानित्वादेव गजेंद्रेण वयं न त्वीषदपि स्तुताः प्रत्युत यस्य ब्रह्मादयो देवाः फल्वा कलया कृता इत्याद्युक्त्या तुच्छीकृता अतो यमयं स्तौति स एव भगवानेनं रक्षतु स तु न शीघ्रं प्रत्यक्षी भविष्यति दुराराध्यस्य तस्य स्वभावं वयं जानीम एवातो ग्राहग्रस्तोयं मरिष्यत्येवेत्येवं दुरभिमानेनौदासीन्यं यदा व्यंजयामासुस्तदा तत्क्षणमेव तत्र हरिर्निखिलात्मकत्वाद्धेतोरखिलामरमय इति। तरुमूलसेकेन पल्लवाद्यासेक इव विष्णुस्तुत्यैव सर्वे स्तुता इति ते तत्त्वमविद्वांस एवेति भावः। यतो यत्र गजेंद्रः। निखिलात्मकत्वात्सर्वव्यापकत्वात्। तत्स्थ एव तत्र प्रत्यक्षीभूतो न तु दूरादागत इति। यद्वा–ब्रह्मादीनामनागमने निमित्तमिति निखिलेति सर्वस्वामित्वाद्धरेः पूर्वगमने प्रयोजनासिद्धेः। यद्वा–निखिलात्मनां सर्वजीवानां कं सुखं येन स तथा तस्य भावस्तत्त्वं तस्मात्सर्वजीवसुखहेतुत्वाद्वाविरासीत् ॥ ३० ॥ छंदोमयेन छंदसामुच्चारणवज्झटिति गमनशीलेन गरुडमपि मंदगतिमालक्ष्य तत्पृष्ठादुत्तीर्य सहसा झटित्येव। तं गजेंद्रं तद्वत् बाह्याभ्यंतरकर्षणापकर्षणप्रकारेणार्त्तं पीडितम्। चक्रायुध इति। नक्रतंतिच्छेदार्थं केवलं धृतचक्रः। आश्विति। देवतागमनप्रतीक्षोत्तरकाले। शैघ्र्यमाह–भक्तवात्सल्यत्वाद्देवतांतरमननुज्ञाप्य वह्निकुंडप्रविश्यमाणराजपुत्रन्यायेन स्वयमेव झटिति जगाम। यथा राजसभास्थ वह्निकुंडे पततं स्वात्मजं वीक्ष्य सिंहासनात्स्वयमुत्थाय झटित्येव पार्श्वस्थाननाज्ञाप्यैव कश्चिन्नृपस्तमात्मजं स्नेहपारवश्याज्जग्राह तथा भगवानपीति न्यायार्थः। अत्र शेषादीनामप्यागमनं ज्ञेयं दिविजैः सह संस्तुवद्भिरित्युक्तेः।

सोंतःसरस्युरुबलेन गृहीत आर्तो दृष्ट्वा गरुत्मति हरिं ख उपात्तचक्रम् ॥ उत्क्षिप्य सांबुजकरं गिरमाह कृच्छ्रान्नारायणाखिलगुरो भगवन्नमस्ते॥३२॥ तं वीक्ष्य पीडितमजः सहसाऽवतीर्य सग्राहमाशु सरसः कृपयोज्जहार ॥ ग्राहाद्विपाटितमुखादरिणा गजेंद्रं संपश्यतां हरिरमूमुचदुस्त्रियाणाम् ॥३३॥ इति श्रीमद्भा॰ महा॰ अष्टमस्कंधे गजेंद्रमोक्षणे तृतीयोऽध्यायः ॥३॥ श्रीशुक उवाच ॥ तदा देवर्षिगंधर्वा ब्रह्मेशानपुरोगमाः ॥ मुमुचुः कुसुमासारं शंसंतः कर्म तद्धरेः ॥१॥ नेदुर्दुंदुभयो दिव्या गंधर्वा ननृतुर्जगुः ॥ ऋषयश्चारणाः सिद्धास्तुष्टुवुः पुरुषोत्तमम् ॥ २ ॥ योऽसौ ग्राहः स वै सद्यः परमाश्चर्यरूपधृक् ॥ मुक्तो देवलशापेन हूहूर्गंधर्वसत्तमः ॥ ३ ॥ प्रणम्य शिरसाऽधीशमुत्तमश्लोकमव्ययम् ॥ अगायत यशोधाम कीर्तन्यगुणसत्कथम् ॥ ॥ ४ ॥ सोऽनुकंपित ईशेन परिक्रम्य प्रणम्य तम् ॥ लोकस्य पश्यतो लोकं स्वमगान्मुक्तकिल्बिषः ॥ ५ ॥ गजेंद्रो भगवत्स्पर्शाद्विमुक्तोऽज्ञानबंधनात् ॥ प्राप्तो भगवतो रूपं पीतवासाश्चतुर्भुजः ॥ ६ ॥ स वै पूर्वमभूद्राजा पांड्यो द्रविडसत्तमः ॥ इंद्रद्युम्न इति ख्यातो विष्णुव्रतपरायणः ॥ ७ ॥

स्तोत्रं च निशम्य श्रुत्वा दिविजैर्देवैः सह छंदोमयेन छंदांसि सामानि तन्मयेनेति शैघ्र्यायोक्तम् ॥ ३१ ॥ उरुबलेन ग्राहेण । खे दृष्ट्वा । उपात्तमुद्यतं चक्रं येन ॥ ३२॥ गरुडोऽपि मंदगतिरिति ततः सहसाऽवतीर्यारिणा चक्रेण विपाटितं मुखं यस्य । उस्त्रियाणां देवानाम् ॥ ३३ ॥ इति श्रीमद्भागवते अष्टमस्कंधे टीकायां तृतीयोऽध्यायः ॥ ॥ ३ ॥ चतुर्थे तु तयोर्ग्राहः प्राप गंधर्वतां पुनः ॥ गजं स्वपार्षदं कृत्वा हरिर्निन्ये निजं पदम् ॥ १ ॥ १ ॥ २ ॥ हूहूसंज्ञो गंधर्वसत्तमः असौ देवलस्य शापेन ग्राहो जातः । स वै स तु ततः सद्यो मुक्तः सन्नुत्तमश्लोकमगायतेत्यन्वयः । एवं ह्रीतिहासोत्तमे कथा । सरसि स्त्रीभिः क्रीडन्नसौ हूहूः स्नातुं प्रविष्टं देवलं पादे प्रगृह्य विचकर्ष स च भ्रकुपितो ग्राहो भवेति शशाप तेन च प्रसादितः सन्नुवाच एवमेव गजेंद्रं गृह्णीष्व ततश्च गजेंद्रमुद्धरन्हरिस्त्वामपि मोचयिष्यतीति ॥ ३ ॥ कथंभूतम् । यशसो धाम आश्रयम् । अतः कीर्तन्याः कीर्तनीया गुणाः सती कथा च यस्य तम् ॥ ४ ॥ स्वं लोकं गंधर्वलोकम् ॥ ५ ॥ ६ ॥ स गजेंद्रः पूर्वं द्रविडेषु सत्तमः श्रेष्ठः पांड्यदे

प्रह्लादोऽपि नित्यभक्तः ब्रह्महृदेऽक्रूरेण दृष्टत्वात् । मत्स्याद्यवतारकृतानि गंधर्वैस्तदानीं गीयमानानि प्रणवादिकमपि तत्प्रसंगेन कीर्त्यमानं ज्ञेयमेवमन्यदपि ॥ ३१ ॥ सांबुजकरमिति । सपर्यार्थं गृहीतकमलं येनेतादृशं करं शुंडादंडमुत्क्षिप्योर्ध्वं कृत्वा ॥ ३२ ॥ तं गजम् “ उस्त्रिया विजया देवा आदित्या अमरास्सुराः ” इत्यभिधानात् । ‘ उच्छ्रियाणाम् ’ इति पाठे उत्कृष्टा श्रीः शोभा येषां नरापेक्षया ते उच्छ्रिया इति । निपातनादार्षत्वाद्वा समासांतप्रत्यय इयङादेशः । समीचीनपाठस्तु ‘ उस्त्रियाणाम् ’ इत्येव भाति ॥ ३३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ तयोर्गजग्राहयोः । पुनरिति पूर्वसिद्धामाह ( १ ) । यदा हरिणा गजो मोचितस्तदेत्यर्थः । कुसुमासारं पुष्पधारापातम् “ धारासंपात आसारः ” इत्यमरः । तद्गजेंद्रमोक्षणरूपम् ॥ १ ॥ २ ॥ असौ हूहूः । स च देवलः । तेन हूहा । एवमेव मत्पादग्रहणवत् । ततो गजेंद्रग्रहणात् ॥ ३ ॥ अतो यशोधामत्वात् ॥ ४ ॥ स गंधर्वः । तम् ईशम् । स्वं गांधर्वम् ॥ ५ ॥ भगवत्स्पर्शाद्भगवत्कर्मकस्पर्शात्तत्र मनोवचोभ्यां स्पर्शादज्ञानबंधतो मुक्तः । स्थूलदेहेन स्पर्शात्स्पर्शमणिन्यायेन भगवतो रूपं प्राप्तो ध्रुव इवेति ज्ञेयम् । देहमव्ययं करोत्विति पूर्वप्रार्थनात् ॥ ६ ॥ इदानीं गजेंद्रयोनिनिमित्तमाह—स वा इति । स गजेन्द्रः । पांड्यो द्रविडदेशांतर्गतपांड्यदेशीयः । द्रविडेषु

स एकदाऽऽराधनकाल आत्मवान्गृहीतमौनव्रत ईश्वरं हरिम् ॥ जटाधरस्तापस आप्लुतोऽच्युतं समर्चयामास कुलाचलाश्रमः ॥ ८ ॥ यदृच्छया तत्र महायशा मुनिः समागमच्छिष्यगणैः परिश्रितः ॥ तं वीक्ष्य तूष्णीमकृतार्हणादिकं रहस्युपासीनमृषिश्चुकोप ह ॥ ९ ॥ तस्मा इमं शापमदादसाधुरयं दुरात्माऽकृतबुद्धिरद्य ॥ विप्रावमंता विशतां तमोंधं यथा गजः स्तब्धमतिः स एव ॥ १० ॥ श्रीशुक उवाच ॥ एवं शप्त्वा गतोऽगस्त्यो भगवान्नृप सानुगः ॥ इंद्रद्युम्नोऽपि राजर्षिर्दिष्टं तदुपधारयन् ॥ ११ ॥ आपन्नः कौंजरीं योनिमात्मस्मृतिविनाशिनीम् ॥ हर्यर्चनानुभावेन यद्गजत्वेऽप्यनुस्मृतिः ॥ १२ ॥ एवं विमोक्ष्य गजयूथपमब्जनाभस्तेनापि पार्षदगतिं गमितेन युक्तः ॥ गंधर्वसिद्धविबुधैरुपगीयमानकर्माऽद्भुतं स्वभवनं गरुडासनोऽगात् ॥ १३ ॥ एतन्महाराज तवेरितो मया कृष्णानुभावो गजराजमोक्षणम् ॥ स्वर्ग्यं यशस्यं कलिकल्मषापहं दुःस्वप्ननाशं कुरुवर्य शृण्वताम् ॥ १४ ॥ यथाऽनुकीर्तयंत्येतच्छ्रेयस्कामाद्विजातयः ॥ शुचयः प्रातरुत्थाय दुःस्वप्नाद्युपशांतये ॥ १५ ॥ इदमाह हरिः प्रीतो गजेंद्रं कुरुसत्तम ॥ शृण्वतां सर्वभूतानां सर्वभूतमयो विभुः ॥ १६ ॥

शाधिपतिः इंद्रद्युम्न इति ख्यातो राजाभूत् ॥ ७ ॥ कुलाचले मलयाद्रावाश्रमो यस्य ॥ ८ ॥ तूष्णीं रहस्युपासीनं वीक्ष्य ऋषिरगस्त्यः ॥ ९ ॥ शापमेवाह । असाधुरित्यादि । अकृताऽशिक्षिता बुद्धिर्यस्य गजो यथा स्तब्धमतिस्तथैवायमतः स एव गज एव भवत्विति शेषः ॥ १० ॥ दिष्टं दैवप्रापितं तदुपधारयन्नालोचयन् ॥ ११ ॥ कौंजरीं योनिमापन्नः । तर्हि पश्चात्कथं स्मृतिर्जाता तत्राह । हरेरर्चनस्यानुभावेनेति ॥ १२ ॥ अद्भुतं स्वभवनमगात् ॥ १३ ॥ एतद्गजराजमोक्षणं नाम कृष्णानुभावस्तवेरितः । कथंभूतं तत्राह । स्वर्ग्यमित्यादि । दुःस्वप्नं नाशयतीति तथा ॥ १४ ॥ अतः श्रेयस्कामा ये एतद्यथावदनुकीर्तयंति ॥ १५ ॥ अनेन श्रेयो भवतीति कुतो

सत्तमः श्लाघ्यः ॥ ७ ॥ स इंद्रद्युम्नः । आराधनकाले पूजनोचितसमये । आत्मवान् । स्थिरचित्तः ॥ ८ ॥ तत्र मलये । महत् समुद्रपानविंध्यपातनवाताप्यशनादिलक्षणं यशो यस्य स महायशा अगस्त्यः ‘ एवं शप्त्वा गतोऽगस्त्यः ’ इति वक्ष्यमाणत्वात् । तमिंद्रद्युम्नम् । न कृतमर्हणादिकमभ्युत्थानासनादिकं येन स तथा तम् । कोपोयं विध्यतिक्रमतः कृपामय एवेति बोध्यं भगवद्दर्शनजनकत्वाद्धेतोः । किं च ‘विप्रावमंता’ इत्युक्तेः पूर्वमपि स विप्रावज्ञाकर्त्तेति गम्यते विप्रावमंतुः पूजादिकं वृथैव “यो वा को वापि विप्रेन्द्र विप्रद्वेषपरायणः । समर्चयति गोविंदं तस्य पूजा वृथा भवेत् ॥” इति नारदीयोक्तेः । “विप्रोत्कर्षासहा ये च नरा लोके नराधिप । ते मद्द्वेष्या न संदेहः सर्वधर्मबहिष्कृताः ॥ भक्तिं तेषां न मन्येहं न दानं न व्रतादिकम् । तीर्थसेवां जपं ज्ञानं यदन्यत्सुकृतं कृतम् ॥ मत्पूज्यद्वेषिणस्तान्वै प्रक्षिपामि मुहुर्मुहुः । घोरे बहुक्लेशकरे नरके भृशदारुणे ॥ न ब्राह्मणान्मे दयितं रूपमेच्चतुर्भुजम् । सर्वं सहे महाराज विप्रनिंदां विना प्रभो ॥ जारजातः स विज्ञेयो यो निन्दत्यनपत्रपः। ब्राह्मणं मम सर्वस्वं सर्वदेवमयं परम्॥ दानं व्रतं तथा स्नानं श्राद्धं विप्रमृते वृथा । विप्रस्य देहो राजेंद्र सर्वदेहिषु सर्वदा ॥ परः शुचिर्विना कर्म सुकृतं किमु कर्मणा । नैव विप्रात्परं मन्य आत्मानं किमुतापरम् ॥ ” इत्यादिपुराणोक्तेश्च ॥ ९ ॥ तस्मै राज्ञे । इमं वक्ष्यमाणम् । अतो गजवत्स्तब्धमतित्वात् ॥ १० ॥ तच्छापप्रापणम् ॥ ११ ॥ कौञ्जरीं हस्तिसंबंधिनीम् ॥ १२ ॥ तेन गजयूथपेन ॥ १३ ॥ तव तुभ्यम् ॥ १४ ॥ अतः स्वर्गादिफलकत्वात् ॥ १५ ॥ प्रीतः स्वभक्तोद्धारजातपरमानंदः । इदं वक्ष्यमाणं वाक्यजातम् ॥ १६ ॥

श्रीभगवानुवाच ॥ ये मां त्वां च सरश्चेदं गिरिकंदरकाननम् ॥ वेत्रकीचकवेणूनां गुल्मानि सुरपादपान् ॥ १७ ॥ शृंगाणीमानि धिष्ण्यानि ब्रह्मणो मे शिवस्य च ॥ क्षीरोदं मे प्रियं धाम श्वेतद्वीपं च भास्वरम् ॥ १८ ॥ श्रीवत्सं कौस्तुभं मालां गदां कौमोदकीं मम ॥ सुदर्शनं पांचजन्यं सुपर्णं पतगेश्वरम् ॥ १९ ॥ शेषं च मत्कलां सूक्ष्मां श्रियं देवीं मदाश्रयाम् ॥ ब्रह्माणं नरदमृषिं भवं प्रह्लादमेव च ॥ २० ॥ मत्स्यकूर्मवराहाद्यैरवतारैः कृतानि मे ॥ कर्माण्यनंतपुण्यानि सूर्यं सोमं हुताशनम् ॥ २१ ॥ प्रणवं सत्यमव्यक्तं गोविप्रान्धर्ममव्ययम् ॥ दाक्षायणीर्धर्मपत्नीः सोमकश्यपयोरपि ॥ २२ ॥ गंगां सरस्वतीं नंदां कालिंदीं सितवारणम् ॥ ध्रुवं ब्रह्मऋषीन्सप्त पुण्यश्लोकांश्च मानवान् ॥ ॥ २३ ॥ उत्थायापररात्रांते प्रयताः सुसमाहिताः ॥ स्मरंति मम रूपाणि मुच्यंते ह्येनसोऽखिलात् ॥२४॥ ये मां स्तुवंत्यनेनांग प्रतिबुध्य निशात्यये ॥ तेषां प्राणात्यये चाहं ददामि विमलां मतिम् ॥ २५ ॥ श्रीशुक उवाच ॥ इत्यादिश्य हृषीकेशः प्रध्माय जलजोत्तमम् ॥ हर्षयन्विबुधानीकमारुरोह खगाधिपम् ॥ २६ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे गजेंद्रमोक्षणं नाम चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ राजन्नुदितमेतत्ते हरेः कर्माघनाशनम् ॥ गजेंद्रमोक्षणं पुण्यं रैवतं त्वंतरं शृणु ॥ १ ॥

ज्ञातं साक्षाद्भगवद्वचनादेवेत्याह इदमाहेत्यादिना यावत्समाप्ति ॥ १६ ॥ प्रसंगादन्यस्यापि स्मरणे फलमुच्यते । सर्वेषां द्वितीयांतानां स्मरंतीत्यष्टमेनान्वयः ॥ १७ ॥ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ अव्यक्तं मायाम् । अव्ययं धर्मं भक्तिलक्षणम् । सोमकश्यपयोरपि । पत्नीर्दाक्षायणीः ॥ २२ ॥ सितवारणमैरावतम् ॥ २३ ॥ प्रयताः सिद्धाः । सुसमाहिता एकाग्रचित्ताः । मम रूपाणि मद्विभूतीः ॥ २४ ॥ २५ ॥ जलजोत्तमं शंखवरं प्रध्माय वादयित्वा ॥ २६ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ अमृताख्यानमष्टाभिरध्यायैरनुवर्ण्यते ॥ स्वभक्तपक्षपातेन यत्र योषायितं प्रभोः ॥ १ ॥ पंचमे पंचमं चाथ षष्ठं चाकथयन्मनुम् ॥

प्रसंगाद्दुःस्वप्नादिहरणप्रसंगात् । अन्यस्यापि दुःस्वप्नादिहरपदार्थस्य ॥१७॥१८॥१९॥ मत्कलां वराकारां मन्मूर्तिं सूक्ष्मां दुर्ज्ञेयां विना मत्प्रसादम् । “ अवजानंति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानंतः ” इत्यादिगीतोक्तेः ॥२०॥२१॥ प्रणवं प्रणवस्य सर्ववेदात्मकत्वात्तद्ध्यानेन सर्ववेदध्यानस्य निष्पन्नत्वात् । “ ॐकारो वै सर्वा वाक् ” इत्यादिश्रुतेः । अव्यक्तध्यानं तन्निवृत्त्यर्थम् । दाक्षायणीर्दक्षकन्याः अश्विन्याद्या अदित्याद्याश्च । मूर्तिज्ञानाभावे नामोच्चारणमात्रमेव ध्यानं नामाक्षरध्यानं वा वर्णानां मंत्रात्मकत्वाद्देवानां मंत्रमूर्तित्वाच्च प्रतिपादितं चैतदधस्तात् ॥ २२ ॥ ब्रह्मऋषीन् वशिष्ठादीन् । पुण्यश्लोकान्नलयुधिष्ठिरवैदेहादीन् ॥ २३ ॥ अपररात्रांतेऽरुणोदये ॥ २४ ॥ निशात्यये परात्रंते । विमलामज्ञाननिवर्त्तिकाम् ॥ २५ ॥ २६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे चतुर्थोऽध्यायः ॥ ४ ॥ यत्रामृताख्याने योषायितं योषावदाचरितम् ( १ ) । एतत्प्रतिपदोक्तम् ॥ १ ॥

पंचमो रैवतो नाम मनुस्तामससोदरः ॥ बलिविंध्यादयस्तस्य सुता अर्जुनपूर्वकाः ॥ २ ॥ विभुरिंद्रः सुरगणा राजन्भूतरयादयः ॥ हिरण्यरोमा वेदशिरा ऊर्ध्वबाह्वादयो द्विजाः ॥ ३ ॥ पत्नी विकुंठा शुभ्रस्य वैकुंठैः सुरसत्तमैः ॥ तयोः स्वकलया जज्ञे वैकुंठो भगवान्स्वयम् ॥ ४ ॥ वैकुंठः कल्पितो येन लोको लोकनमस्कृतः ॥ रमया प्रार्थ्यमानेन देव्या तत्प्रियकाम्यया ॥ ५ ॥ तस्यानुभावः कथितो गुणाश्च परमोदयाः ॥ भौमात्रेणून्स विममे यो विष्णोर्वर्णयेद्गुणान् ॥ ६ ॥ षष्ठश्च चक्षुषः पुत्रश्चाक्षुषो नाम वै मनुः ॥ पूरुपूरुषसुद्युम्नप्रमुखाश्चाक्षुषात्मजाः ॥ ७ ॥ इंद्रो मंत्रद्रुमस्तत्र देवा आप्यादयो गणाः ॥ मुनयस्तत्र वै राजन्हविष्मद्वीरकादयः ॥ ८ ॥ तत्रापि देवः संभूत्यां वैराजस्याभवत्सुतः ॥ अजितो नाम भगवानंशेन जगतः पतिः ॥ ९ ॥ पयोधिं येन निर्मथ्य सुराणां साधिता सुधा ॥ भ्रममाणोंभसि धृतः कूर्मरूपेण मंदरः ॥ १० ॥

विप्रशापाच्च निःश्रीकैः कृतां देवैर्हरेः स्तुतिम् ॥ २ ॥ १ ॥ तामसश्चतुर्थो मनुस्तस्य सोदरो भ्राता ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ तस्य वैकुंठसंज्ञस्य हरेरनुभावः सनकादिशापेन दैत्यतां प्राप्ताभ्यां स्वपार्षदाभ्यां वराहादिरूपेण युद्धादिलक्षणः गुणाश्च ब्रह्मण्यतादयः परमोदयाश्च महर्द्धयः कथितास्तृतीयस्कंधादिषु ॥६॥७॥८॥९॥१०॥

तस्य रैवतस्य । आदिना महावीर्यादिग्रहः ॥ २ ॥ आदिना सुमेधसादिग्रहः । आदिना वेदश्र्यादिग्रहः "हिरण्यरोमा वेदश्रीरूर्द्ध्वबाहुस्तथाऽपरः । वेदबाहुः सुधामा च पर्जन्यश्च महामुनिः ॥ वशिष्ठश्च महाभागो वेदवेदांगपारगः । एते सप्तर्षयश्चासन्रैवतस्यांतरे मनोः ॥ " इति मार्कण्डेयोक्तेः ॥ ३ ॥ तयोर्विकुंठाशुभ्रयोः ॥ ४ ॥ येन वैकुंठेन स्वनाम्ना वैकुंठः कल्पितः प्रकटितः न तु रचितः । ' ब्रह्मलोकः सनातनः ' इत्युक्तेः । तत्प्रियकाम्यया लक्ष्मीप्रीत्यर्थम् । संदर्भस्तु—यथा भगवत आविर्भावमात्रं जन्मेति भण्यते तथा वैकुंठस्यापि कल्पनमाविर्भावनमेव न तु प्राकृतवत्कृत्रिमत्वम् । किञ्च श्रीविकुंठासुतस्यैवेदं वैकुंठं मूलवैकुंठं तु सृष्टेः प्राग्ब्रह्मणा दृष्टमिति द्वितीयस्कंधे प्रसिद्धम् ' स तन्निकेतं परिमृश्य शून्यम् ' इति । यन्निर्दिष्टं तत्तु स्थानं सर्गादिगतमेवेति ज्ञेयम् ॥ ५ ॥ भूरेणुसंख्यावद्विष्णुगुणवर्णनमप्यशक्यमिति भावः ॥ ६ ॥ चक्षुष इति । पूर्वजन्मनि परमेष्ठिचक्षुषो जातत्वादत्राप्यस्य चाक्षुषत्वमेवेति मार्कंडेये विस्तरेणोक्तम् । यत्तु "स चक्षुः सुतमाकूत्यां पत्न्यां मनुमवाप ह" इति चतुर्थस्कंधे सर्वतेजस उत्पत्तिकथनमस्य तदप्येतदभिप्रायकमेवेति बोध्यं सुधिया ॥ ७ ॥ तत्र चाक्षुषेंतरे । आदिना परावततुषितादयो ज्ञेयाः । " देवाः परावताश्चैव तथैव तुषितादयः " इत्यन्यत्रोक्तेः । तत्र तदा । आदिना भृग्वादिग्रहः ॥८॥ तत्रापि चाक्षुषेंतरेपि ॥९॥ येनाजिताख्यहरिणा । ' पयः स्यात् क्षीरनीरयोः' इत्यभिधानात् 'पयोधिं येन निर्मथ्य' इति योगीन्द्रास्योक्तं श्रुत्वा श्रीराजेन्द्रशिरोमणिनापि "यथा भगवता ब्रह्मन्मथितः क्षीरसागरः" इत्थमेव पृष्टं किञ्च "क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः" इति । 'ममन्थुः परमायत्ता अमृतार्थं पयोनिधिम् ' इति । देवस्तुतमहेशेनाप्युक्तम् "अहो बत भवान्येतत्प्रजानां पश्य वैशसम् । क्षीरोदमथनोद्भूतात्कालकूटात्" इति सर्वथा क्षीराब्धिमथनं प्रतीयतेतः कथमुक्तम् " ययौ जलांते उत्सृज्य हरिणा स विसर्जितः " किञ्च ' प्रविश्य तोयं गिरिमुज्जहार ' इति । ' अब्धिं मुदान्विताः ' इति ' निर्मथ्यमानादुदधेरभूद्विषम् ' इति । किञ्च " तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः " इति । ' अथोदधेर्मथ्यमानात् ' इत्यारभ्य 'धन्वंतरिरिति ख्यातः' इति चेत्तत्र कौशिकवाक्येन विरोधं परिहरति " सर्वे दुग्धार्थकाः शब्दा ज्ञेयाः पानीयवाचकाः । पानीयवाचकाः सर्वे ज्ञेया दुग्धार्थका बुधैः ॥ " इति । तेन न किञ्चिद्वि

राजोवाच ॥ यथा भगवता ब्रह्मन्मथितः क्षीरसागरः ॥ यदर्थं वा यतश्चाद्रिं दधारांबुचरात्मना ॥ ११ ॥ यथाऽमृतं सुरैः प्राप्तं किं चान्यदभवत्ततः ॥ एतद्भगवतः कर्म वदस्व परमाद्भुतम् ॥ १२ ॥ त्वया संकथ्यमानेन महिम्ना सात्वतां पते ॥ नातितृप्यति मे चित्तं सुचिरं तापतापितम् ॥ १३ ॥ सूत उवाच ॥ संपृष्टो भगवानेवं द्वैपायनसुतो द्विजाः ॥ अभिनंद्य हरेर्वीर्यमभ्याचष्टुं प्रचक्रमे ॥ १४ ॥ श्रीशुक उवाच ॥ यदा युद्धे सुरैर्देवा बाध्यमानाः शितायुधैः ॥ गतासवो निपतिता नोत्तिष्ठेरन्स्म भूयशः ॥ १५ ॥ यदा दुर्वाससः शापात्सेंद्रा लोकास्त्रयो नृप ॥ निःश्रीकाश्चाभवंस्तत्र नेशुरिज्यादयः क्रियाः ॥ १६ ॥ निशाम्यैतत्सुरगणा महेंद्रवरुणादयः ॥ नाध्यगच्छन्स्वयं मंत्रैर्मंत्रयंतो विनिश्चयम् ॥ १७ ॥ ततो ब्रह्मसभां जग्मुर्मेरोर्मूर्धनि सर्वशः ॥ सर्वं विज्ञापयांचक्रुः प्रणताः परमेष्ठिने ॥ १८ ॥ स विलोक्येंद्रवाय्वादीन्निःसत्त्वान्विगतप्रभान् ॥ लोकानमंगलप्रायानसुरानयथा विभुः ॥ १९ ॥ समाहितेन मनसा संस्मरन्पुरुषं परम् ॥ उवाचोत्फुल्लवदनो देवान्स भगवान्परः ॥ २० ॥ अहं भवो यूयमथोऽसुरादयो मनुष्यतिर्यग्द्रुमघर्मजातयः ॥ तस्यावतारांशकला विसर्जिता व्रजाम सर्वे शरणं तमव्ययम् ॥ २१ ॥

यतो हेतोः अंबुचरात्मना कूर्मरूपेण ॥ ११ ॥ सुराणां साधिता सुधेत्युक्त्या युद्धाद्यपि सूचितमतः पृच्छति । किं चान्यदिति ॥ १२ ॥ १३ ॥ १४ ॥ नोत्तिष्ठेरन्न पुनर्जीवंति स्मेत्यर्थः ॥ १५ ॥ दुर्वाससा हि कदाचिन्मार्गे गच्छंतमिंद्रं दृष्ट्वा स्वकंठस्था माला तस्मै दत्ता तेन च श्रीमदेनानादृत्यैरावतस्य कुंभयोर्निक्षिप्ता स च गजो मत्तः पद्भ्यां तां मालां चूर्णीचकार ततः कुपितो दुर्वासास्तं शशाप त्रिभिर्लोकैः सह त्वं निःश्रीको भवेति । तदेतदाह । यदा दुर्वाससः शापादिति । इज्यादयो यागाद्याः ॥ १६ ॥ १७ ॥ १८ ॥ असुरान् अयथा देववैलक्षण्येन बलपुष्ट्यादियुक्तान्विलोक्येत्यर्थः ॥ १९ ॥ हरिं शरणं गताः संतो यथापूर्वं सर्वं प्राप्स्याम इति हर्षेणोत्फुल्लं विकसितं वदनं यस्य ॥ २० ॥ मनुष्यादयो जरायुजांडजोद्भिज्जस्वेदजाः । यस्यावतारः पुरुषस्तस्यांशो ब्रह्मा तस्य कला मरीच्यादयस्ताभि

रोधः न हि केवलपयःशब्द एवोभयार्थकः किन्तु नीरक्षीरपर्यायवाचका अपीत्यर्थः । प्रमाणं चात्र प्रयुक्तोभयशब्द एवान्यथाब्धिपयोधिपदाभ्यां समुद्रद्वयमथनापत्तिः स्यादिति ॥ १० ॥ यदर्थं यत्प्रयोजनाय ॥ ११ ॥ ततस्तत्र । एतत्समुद्रमथनादिरूपम् ॥ १२ ॥ तापैराध्यात्मिकादिदुःखैः । तापितं क्लेशितम् ॥ १३ ॥ १४ ॥ यदाशब्दयोस्तत्र नेशुरित्यनेनान्वयः ॥ भूयश इति पुनरर्थेऽव्ययं निपातनाच्छसि भूयसस्सलोपः ॥ १५ ॥ तत्र तदा । नेशुर्नष्टा बभूवुः । 'णश–अदर्शने' लिट् ॥ १६ ॥ एतद्दुर्वासःशपनम् । विनिश्चयं स्वश्रेयस्साधननिश्चयं यदा नाध्यगच्छंस्तदा ब्रह्मसभां जग्मुरित्यग्रिमेण योज्यम् ॥ १७ ॥ सर्वं शापादिकारणम् ॥ १८ ॥ इत्यर्थ इति । प्राप्तजयत्वात्सुप्रभानिति भावः ॥ १९ ॥ २० ॥ सर्गादयः 'लोकवत्तु लीलाकैवल्यम्' इति न्यायेनैवेति भावः । तदुक्तम् "सर्गादिकं हरिर्नैव प्रयोजनमपेक्ष्य तु । कुरुते केवलानंदो यथा मत्तस्य नर्त्तनम् ॥" इति ॥ २१ ॥

न यस्य वध्यो न च रक्षणीयो नोपेक्षणीयाऽऽदरणीयपक्षः॥अथापि सर्गस्थितिसंयमार्थं धत्ते रजःसत्त्वतमांसि काले॥२२॥अयं च तस्य स्थितिपालनक्षणः सत्त्वं जुषाणस्य भवाय देहिनाम्॥तस्माद्व्रजामः शरणं जगद्गुरुं स्वानां स नो धास्यति शं सुरप्रियः॥२३॥श्रीशुक उवाच ॥ इत्याभाष्य सुरान्वेधाः सह देवैररिंदम ॥ अजितस्य पदं साक्षाज्जगाम तमसः परम् ॥ २४ ॥ तत्राद्दष्टस्वरूपाय श्रुतपूर्वाय वै विभो ॥ स्तुतिमब्रूत दैवीभिर्गीर्भिस्त्ववहितेंद्रियः ॥ २५ ॥ ब्रह्मोवाच ॥ अविक्रियं सत्यमनंतमाद्यं गुहाशयं निष्कलमप्रतर्क्यम् ॥ मनोऽग्रयानं वचसा निरुक्तं नमामहे देववरं वरेण्यम् ॥ २६ ॥ विपश्चितं प्राणमनोधियात्मनामर्थेंद्रियाभासमनिद्रमव्रणम् ॥ छायातपौ यत्र न गृध्रपक्षौ तमक्षरं खं त्रियुगं व्रजामहे ॥ २७ ॥

र्विसर्जिताः पुत्रपौत्रादिद्वारा जनिताः ॥ २१ ॥ ननु तर्हि सर्वेष्वसौ समः स्यात्किं तच्छरणाश्रयेण । सत्यम् । यद्यप्येवं तथाऽप्यस्मत्पक्षपाती भविष्यतीत्याशयेनाह न यस्येति द्वाभ्याम् ॥ २२ ॥ स्थितिपालनस्य क्षणः कालः अतः सुरप्रियः सन्स्वीयानां नः शं सुखं करिष्यति ॥ २३ ॥ यत्र क्षीराब्धौ हरेर्वासस्तदेव तमसः परं पदं स्थानम् । यद्वा लोकालोकात्परतो यत्तमस्ततः परं स्थानं जगाम ॥ २४ ॥ दैवीभिर्लोकेऽप्रसिद्धाभिर्वैदिकीभिर्गीर्भिस्तुतिमकरोत् ॥ २५ ॥ देववरं त्वां नमामहे नमाम । हे देववर त्वां नमामेति वा । वरत्वे हेतुः सत्यम् । कुतः । अविक्रियम् । तत्कुतः । अनंतमाद्यं चानादिम् । आद्यंतवंतो हि वृद्ध्यादिविक्रियायुक्ता भवंति । किं च गुहाशयं सर्वांतरम् । कुतः । निष्कलं निरुपाधिम् । तत्कुतः । अप्रतर्क्यम् । तत्कुतः । मनोऽग्रयानं मनसोऽपि जविष्ठम् । मनःप्राप्ये स्थाने ततः प्रागेव विद्यमानत्वात् । तथा च श्रुतिः । “ अनेजदेकं मनसो जवीयो नैनद्देवा आप्नुवन्पूर्वमर्शत् ॥ तद्धावतोऽन्यानत्येति तिष्ठत् ” इति । वचसा अनिरुक्तम् अविषयत्वात् । “ यद्वाचाऽनभ्युदितं येन वागभ्युद्यते ” इति श्रुतेः । मनोवचसोरगोचरत्वादप्रतर्क्यम् । यथेष्टं वा सर्वेषां हेतुहेतुमद्भावः ॥ २६ ॥ किं च प्राणादीनां विपश्चितं ज्ञातारम् । आत्माऽहंकारो देहो वा न तु

सर्वस्रष्टृत्वादस्य साम्यमेव सर्वत्रेत्याशंकते—नन्विति।यद्यप्येवं सर्वत्र साम्येपि तस्य तथापीति।ननु“परः पूर्वेषाम्”इति श्रुतेर्देवानां भगवत्पक्षत्वावगमादितिचेन्न, भक्तिवशः पुरुषः“यमेवैष वृणुते तेन लभ्यः”इत्यादिश्रुतेर्देवानामनुग्राह्यत्वात्तत्पक्षो न स्वार्थ इति ध्येयम्॥ २२ ॥ अतः स्थितिपालनकालत्वादेवं । तस्मात्सत्त्वसेवित्वात् । सुरप्रियः सुरेष्वेव तद्भक्तप्राचुर्यादस्मास्वेव तदनुग्रहः पर्यवस्यतीति भावः ॥ २३ ॥ अजितस्य विकुंठासुतस्य पदं तेनैव प्रकाशितं वैकुंठविशेषं तमसः परं प्रपंचांतर्गतत्वेऽपि भगवद्विग्रहवत्प्रकृत्या न स्पृष्टं यद्वा मत्समीपदेशं प्रापेत्यर्थः । क्षीराब्धौ तमोऽश्रवणाद्वाह—यद्वेति ॥ २४ ॥ तत्र स्थाने न दृष्टं स्वरूपं यस्य तस्मै । पूर्वं श्रुतः श्रुतपूर्वस्तस्मै । अदृष्टस्वरूपं श्रुतपूर्वं प्रभुमनुकूलयितुं स्तुतिमब्रूत ॥ २५ ॥ आत्मनेपदार्षत्वकल्पनानावश्यकत्वादाह—हे देवेति । सत्यम् “सत्यं ज्ञानम्” इति श्रुतेः । तत्रापि हेतुं पृच्छति—कुत इति । अविक्रियम् “निरवद्यं निरंजनम्” इति श्रुतेः । तन्निर्विकारत्वमपि कुतस्तत्राह—अनंतमित्यादि । “अनंतं ब्रह्म आत्मा इदमग्र आसीत्” इति श्रुतेः । अन्यदाह—सर्वांतरम् “यो वेद निहितं गुहायां हृदय आहितं यत्” इत्यादिश्रुतेः । निरुपाधिम् “निष्क्रियं निष्कलं शांतम्” इति श्रुतेः । तन्निरुपाधित्वम् । ततः मनसः । मनोग्रयानत्वे प्रमाणमाह—तथा चेति । श्रुत्यर्थस्तु तद्ब्रह्म अनेजत्कंपोपलक्षितगतिहीनं जवीयोऽतिवेगवत्तरम् । एतद्ब्रह्म । देवा इंद्रियाणि । पूर्वमर्शत् पूर्वमेव गच्छत् । तिष्ठत् स्थिरस्वभावं तत् धावतोऽन्यान्वागिंद्रियादीन् अतिक्रम्य गच्छतीत्यर्थः । यद्ब्रह्म अनभ्युदितं वक्तुमशक्यं येन ब्रह्मणा अभ्युद्यते स्वव्यापारसमर्था भवतीति श्रुतिपदार्थः । देववरत्वे च ‘एष सर्वेश्वर’ इति । वरेण्यमिति ‘तत्सवितुर्वरेण्यम्’इति लिंगात् ।“यतो वाचो निवर्तंते अप्राप्य मनसा सह” इति । “नैषा मतिस्तर्केणापनेया” इत्यादिश्रुतेरप्रतर्क्यम्॥२६॥अन्यदाह—किं चेति।

अजस्य चक्रं त्वजयेर्यमाणं मनोमयं पंचदशारमाशु ॥ त्रिणाभि विद्युच्चलमष्टनेमि यदक्षमाहुस्तमृतं प्रपद्ये ॥ २८ ॥ य एकवर्ण तमसः परं तदलो कमव्यक्तमनंतपारम् ॥ आसांचकारोपसुपर्णमेनमुपासते योगरथेन धीराः ॥ २९ ॥ न यस्य कश्चातितितर्ति मायां यया जनो मुह्यति वेद नार्थम् ॥ तं निर्जितात्मात्मगुणं परेशं नमाम भूतेषु समं चरंतम् ॥ ३० ॥

तद्व्यतिरिक्तं ज्ञेयमस्तीत्याह । अर्थो विषयः इंद्रियाणि तद्ग्राहकाणि तदुभयरूपेणाभासत इति तथा तम् । तथाऽप्यनिद्रं स्वप्नद्रष्टृवदज्ञानरहितम् । कुतः । अव्रणमदेहम् । अत एवाक्षरं खमाकाशमिव व्यापिनं च । सर्वत्र हेतुः । यत्र यस्मिन्गृध्रपक्षौ जीवपक्षपातिनौ छायातपावविद्या च तन्निवर्तिका विद्या च नास्ति तं त्रियुगं त्रिषु युगेष्वावि र्भवंतं शरणं व्रजामहे ॥ २७ ॥ तदेवमविक्रियत्वादिभिः सर्वज्ञत्वादिभिश्च सत्यत्वं वरेण्यत्वं चोक्तं संसारचक्राधारत्वेनापि तदेव दर्शयन्नाह । अजस्य जीवस्य चक्रं चक्रव दावर्तमानं देहाद्यजया मायया प्रेर्यमाणं योऽक्षो यस्य यदक्षं यदधिष्ठानमाहुस्तमृतं सत्यं प्रपद्ये । कथंभूतं चक्रम् । मनोमयं मनःप्रधानम् । दशेंद्रियाणि पंचप्राणाश्चेत्येवं पंचदश अरा यस्य । आशु शीघ्रगम् । त्रयो गुणा नाभिरिव मध्ये यस्य । विद्युदिव चलं न स्थिरम् । अष्टौ प्रकृतयो नेमय इवावरणानि यस्य ॥ २८ ॥ सर्वजीवनियं तृत्वादिना च वरिष्ठत्वमाह । य इति । य उपसुपर्णं जीवसमीपे तन्नियंतृत्वेनासांचकारास्ते स्म । " द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते " इति श्रुतेः । यद्वा भक्तरक्षणार्थं गरुडस्योपरि य उपविष्ट इत्यर्थः । तर्हि देहस्थत्वाद्भक्तरक्षणादिक्रियावेशाद्वा जीवसाम्यं स्यात्तत्राह । एकवर्णं ज्ञानैकस्वरूपं तमसः प्रकृतेः परमलोकम दृश्यमव्यक्तं निर्विकल्पमनंतपारं कालतो देशतश्चापरिच्छिन्नं तद्ब्रह्मैव यः । अप्रच्युतस्वरूपत्वान्न जीवसाम्यम् । " तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति " इति विशेषश्रवणादित्यर्थः । अत एव यमेनं धीरा योगेन रथेन प्राप्तिसाधनेनोपासते भजंते तं नमामेत्युत्तरेणान्वयः ॥ २९ ॥ मायानियंतृत्वेनापि जीवसाम्यं परिहरन्वरिष्ठ

ज्ञातारम् । "प्राणस्य प्राणम्" इत्यादिश्रुतेः । तथापि विषयांदिरूपेण प्रकाशमानत्वेपि । अज्ञानरहितत्वे हेतुं पृच्छति—कुत इति । अदेहं देहरूपं न । अत एवादेहरूपत्वादेव । गृध्यति विषयानभिकांक्षतीति गृध्रो जीवः । आवरणस्वभावत्वाच्छायाशब्देनाविद्याप्रकाशस्वभावत्वादातपशब्देन विद्या ज्ञेया । यद्वाऽर्थानिन्द्रियाणि च भासयति दीपयतीत्यर्थेंद्रियाभासः । अर्थेंद्रियाणां सन्निकर्षमुत्पाद्य तद्विषयं ज्ञानं जनयती त्यर्थः । "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः ॥ २७ ॥ तदेव सत्यत्ववरेण्यत्वम् । अजस्य जीवस्य "अजो ह्येको जुषमाणः" इति श्रुतेः । यः परमात्मा । अक्षश्चक्राधारो धूः ॥ २८ ॥ जीवसमीपस्थत्वे प्रमाणमाह—द्वेति । श्रुतिप्रसिद्धार्थस्य सुज्ञेयत्वाल्लोकप्रसिद्धार्थमाह—यद्वेति । इत्यर्थ इति । "भक्ताभीष्टप्रदानाय निर्गुणः सगुणोऽभवत्" इत्याद्युक्तेरिति भावः । अत्राक्षिप्य समाधत्ते—तर्हीति । इत्यर्थ इति । जीवेश्वर वैलक्षण्यस्य श्रुतिसिद्धत्वादिति भावः । यद्वा—प्रणवपक्षे योजनीयं यदेकवर्णं यदोमित्येतदक्षररूपं स्वरव्यंजनविभागविवक्षामंतरेण व्यक्तेरेकत्वमन्यथा षोडश स्वरा इति संख्यानुपपत्तिः । ओमित्येतदक्षरमिदं सर्वम् । "प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितम् । सर्वव्यापिनमोंकारम्" इत्यादिश्रुत्यर्थमाह—अनंतः पारो मात्रासमूहो यत्र तत् । "अमात्रोऽनंतमात्रश्च" इति श्रुतेः । उपसुपर्णं जीवसमीपे । आसांचकार । " सर्वस्य हृदये स्थितम्" इति श्रुतेः । एनमोंकारं योगरथेन मांडूक्योक्तध्यानेनोपासते धीरा मुनयः । "ओंकारो विदितो येन स मुनिर्नेतरो जनः" इति श्रुतेर्मुनित्वलाभाय प्रणव एवोपास्य इत्युक्तं भवति ॥ २९ ॥ भूतेषु समं चरंतम्

इमे वयं यत्प्रिययैव तन्वा सत्त्वेन सृष्टा बहिरंतराविः ॥ गतिं न सूक्ष्मामृषयश्च विद्महे कुतोऽसुराद्या इतरप्रधानाः ॥ ३१ ॥ पादौ महीयं स्वकृतैव यस्य चतुर्विधो यत्र हि भूतसर्गः ॥ स वै महापुरुष आत्मतंत्रः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३२ ॥ अंभस्तु यद्रेत उदारवीर्यं सिध्यंति जीवंत्युत वर्धमानाः ॥ लोकास्त्रयोऽथाखिललोकपालाः प्रसीदतां ब्रह्म महाविभूतिः ॥ ३३ ॥ सोमं मनो यस्य समामनंति दिवौकसां वै बलमंध आयुः ॥ ईशो नगानां प्रजनः प्रजानां प्रसीदतां नः स महाविभूतिः ॥ ३४ ॥ अग्निर्मुखं यस्य तु जातवेदा जातः क्रियाकांडनिमित्तजन्मा ॥ अंतःसमुद्रेऽनुपचन्स्वधातून्प्रसीदतां नः स महाविभूतिः ॥ ३५ ॥ यच्चक्षुरासीत्तरणिर्देवयानं त्रयीमयो ब्रह्मण एष धिष्ण्यम् ॥ द्वारं च मुक्तेरमृतं च मृत्युः प्रसीदतां नः स महाविभूतिः ॥ ३६ ॥

त्वमाह । यस्य मायां कश्च कश्चिदपि नातितितर्ति नातिक्रामति । कथंभूताम् । जनो यया मुह्यति । अर्थमात्मस्वरूपं न तु वेद । निर्जित आत्मा आत्मशक्तिर्माया च तद्गुणाश्च येन तम् ॥ ३० ॥ अर्थं न वेदेति यदुक्तं तत्प्रपंचयन्नाह । इमे वयं देवा ऋषयश्च यस्य प्रियया तन्वा सत्त्वेनैव सृष्टा अपि बहिरंतश्च सत्ताप्रकाशाभ्यामाविः प्रकटामपि सूक्ष्मां गतिं निरुपाधिस्वरूपं न विद्मः । इतरप्रधाना रजस्तमोमयाः । कुतो विदुः । तं नमामेति पूर्वेणान्वयः ॥ ३१ ॥ इदानीं वैराजरूपेण स्तुवन्प्रार्थयते पादौ महीति द्वादशभिः । यत्र मह्यां जरायुजादिभूतसर्गः सा मही यस्य पादौ स नः प्रसीदतु । आत्मतंत्रः पादादिमत्त्वेऽपि न तत्परतंत्रः । कुतः । ब्रह्म अप्रच्युतरूपः । तत्कुतः महती विभूतिरैश्वर्यं यस्य सः ॥ ३२ ॥ उदारं वीर्यं शक्तिर्यस्य तदंभो यस्य रेतः स नः प्रसीदतु । उदारवीर्यतामाह । यतोंभसो लोकादयः सिध्यंति जायंते ॥ ३३ ॥ यः सोमो देवानामंधोऽन्नम् अत एव बलमायुश्च नगानां वृक्षाणाम् । प्रकर्षेण जनयति वर्धयतीति प्रजनः तं यस्य मनः समामनंति स नः प्रसीदतु ॥ ३४ ॥ अग्निर्यस्य तु मुखं जातः । कथंभूतः । जातं वेदो धनं यस्मात् । क्रियाकांडं तत्प्रतिपाद्यं कर्म तन्निमित्तं जन्म यस्य । अंतःसमुद्रे उदरमध्ये स्वधातून्पाकाहार्नेवान्नादीननुपचन् प्रसिद्धसमुद्रेऽपि वाडवरूपेणोदकान्येवानुपचन्नग्निर्यस्य मुखं सः ॥ ३५ ॥ एष तरणिरादित्यो यस्य चक्षुरासीत् । कथंभूतः । देवयानमर्चिरादिमार्गदेवता । "त्रयीमयः

"एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतेः । परेशम् "एष सर्वेश्वरः" इति श्रुतेः । न वेदेति "अनीशया शोचति मुह्यमानः" इति श्रुतेः । शक्तिशक्तिमतोरग्निर्दहतीत्यादिष्वभेदोपचारादत्राप्यात्मपदेनात्मशक्तिग्रहः ॥ ३० ॥ विद्मह इति तङार्षः ॥ ३१ ॥ अपरतंत्रत्वे हेतुर्ब्रह्मेति । तदप्रच्युतस्वरूपत्वमपि कुत इति । अपरिच्छिन्नशक्तित्वादिति । "पादोस्य विश्वा भूतानि" इति पादवत्त्वे मानम् ॥ ३२ ॥ "यद्यत्प्रथमममृतं तद्वसव उपजीवन्ति" इति श्रुत्यर्थमाह—अंभ इति ॥ ३३ ॥ अत एवान्नत्वादेव "चंद्रमा मनसो जातः" इत्यादिश्रुतेः ॥ ३४ ॥ "मुखादग्निरजायत" इति श्रुतेः । "अग्निर्वै देवानां मुखम्" इति श्रुतेश्च । स्वधातून् स्वाधीनानि चतुर्विधान्नानि । "अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं भवति योणुस्तन्मनः" इति श्रुतेः ॥ ३५ ॥ त्रयीमयत्वे मानं च 'सैषा' इति श्रुतिः ।

प्राणादभूद्यस्य चराचराणां प्राणः सहो बलमोजश्च वायुः ॥ अन्वास्म सम्राजमिवानुगा वयं प्रसीदतां नः स महाविभूतिः ॥ ३७ ॥ श्रोत्राद्दिशो यस्य हृदश्च खानि प्रजज्ञिरे खं पुरुषस्य नाभ्याः ॥ प्राणेंद्रियात्मासुशरीरकेतं प्रसीदतां न स महाविभूतिः ॥ ३८ ॥ बलान्महेंद्रस्त्रिदशाः प्रसादा न्मन्योर्गिरीशो धिषणाद्विरिंचः ॥ खेभ्यश्च छंदांस्यृषयो मेढ्रतः कः प्रसीदतां नः स महाविभूतिः ॥ ३९ ॥ श्रीर्वक्षसः पितरश्छायया॒ऽऽसन्धर्मः स्तनादितरः पृष्ठतोऽभूत् ॥ द्यौर्यस्य शीर्ष्णोऽप्सरसो विहारात्प्रसीदतां नः स महाविभूतिः ॥ ४० ॥ विप्रो मुखं ब्रह्म च यस्य गुह्यं राजन्य आसीद्भुजयोर्बलं च ॥ ऊर्वोर्विडोजोंघ्रिरवेदशूद्रौ प्रसीदतां नः स महाविभूतिः ॥ ४१ ॥ लोभोऽधरात्प्रीतिरुपर्यभूद्द्युतिर्नस्तः पशव्यः स्पर्शेन कामः ॥ भ्रुवोर्यमः पक्ष्मभवस्तु कालः प्रसीदतां नः स महाविभूतिः ॥ ४२ ॥

सैषा त्रय्येव विद्या तपति" इति श्रुतेः । ब्रह्मणो धिष्ण्यमुपासनास्थानम् । "य एषोंतरादित्ये हिरण्मयः पुरुषः" इति श्रुतेः । मुक्तेर्द्वारं देवयानत्वात् अमृतं च पुण्यलोकत्वात् । मृत्युश्च कालात्मकत्वात् । एवंभूतस्तरणिर्यस्य चक्षुः स नः प्रसीदतु ॥ ३६ ॥ कथंभूतो वायुश्चराचराणां सहआदिधर्मवान्प्राणः यं प्राणं वयं बुद्ध्याद्यधिष्ठातारो देवाः सम्राजं भृत्या इवान्वास्मानुसृत्य स्थिताः । एवंभूतो वायुर्यस्य प्राणादभूत्सः तत्र सहो मनस उत्साहः । बलं शारीरम् । ओज ऐंद्रियम् ॥ ३७ ॥ खानि देहगतानि छिद्राणि प्राणः पंचवृत्तिः इंद्रियाणि च आत्मा मनश्च असवो नागकूर्मादयः शरीरं च तेषां केतमाश्रयभूतं खं यस्य पुरुषस्य नाभ्याः प्रजज्ञे सः ॥ ३८ ॥ यस्य बलान्महेंद्रो जज्ञे । त्रिदशा देवाः धिषणाद् बुद्धेः । छंदांसि ऋषयश्च खेभ्यः । कः प्रजापतिः ॥ ३९ ॥ इतरोऽधर्मः ॥ ४० ॥ विड्वैश्यः । ओजो नैपुणं तस्य वृत्तिः अंघ्रिः अंघ्रिजावित्यर्थः । अवेदशूद्रौ अवेदो वेदव्यतिरिक्ता शुश्रूषा तद्वृत्तिमान् शूद्रश्च । 'ऊर्वोर्विशोंघ्रेरभवंश्च शूद्राः' इति पाठांतरं सुगमम् ॥ ४१ ॥ उपर्युत्तरोष्ठात् । नस्तो नासिकातः । द्युतिः

'अंतरादित्ये' सूर्यमध्ये इति श्रुतिपदार्थः । मुक्तेर्द्वारम् 'सूर्यद्वारेण ते यांति' इत्युक्तेः । "अमृतं मर्त्यं च" इति श्रुतेः । यस्य चक्षुः "चक्षोः सूर्योऽजायत" इति श्रुतेः ॥ ३६ ॥ यस्य भगवतः प्राणादात्मनः "प्राण वा आत्मा" इति श्रुतेः । वायुः प्राणवायुः । "आत्मन एष प्राणो जायते तान्वरिष्ठप्राण उवाच मा मोहमापद्यथ अहमेवैतत्पंचधात्मानं विभज्यैतद्बाणमवष्टभ्य धारयामीति ते प्रीताः प्राणं स्तुवंत्येषोऽग्निस्तपत्येष सूर्यः प्राणैक ऋषिरत्ता विश्वस्य सत्पतिः वयमासाद्य दातारः पिता त्वं मातरिश्वनः" इति श्रुतेश्च । "अनुप्राणंति यं प्राणाः प्राणं तं सर्वजंतषु । अपानंतमपानंति नरदेवमिवानुगाः ॥" इत्युक्तेश्च ॥ ३७ ॥ "नाभ्या आसीदंतरिक्ष ७ँ दिशश्श्रोत्रात्" इत्यादिश्रुत्यर्थं संगृह्याह–श्रोत्राद्दिश इति । "ब्रह्मणो वा एतानि करणानि एतत्सर्वं परे आत्मनि संप्रतिष्ठते पृथिवी च" इत्यारभ्य "प्राणश्च विधारयितव्यं च" इत्यंतकाठकवाक्यार्थोऽप्यत्र संगृहीतः ॥ ३८ ॥ धिषणाद्धिषणाया बुद्धेः पुंस्त्वमार्षम् । 'धिषणा विरिञ्चः' इति पाठे पञ्चम्याश्छांदसो लुक् ॥ ३९ ॥ विहारात् क्रीडातः ॥ ४० ॥ भुजयोर्भुजाभ्याम् । ऊर्वोरूरुभ्याम् । इत्यर्थ इति । "पद्भ्या ७ँ शूद्रः" इति श्रुतेरिति भावः । पाठांतरम् "ऊर्वोर्विशोऽघ्रेरभवंश्च शूद्राः" इत्येवंरूपम् ॥ ४१ ॥ हितः प्रियः 'हितं पथ्ये प्रिये धृते' इति कोशात् । शिश्नोदरपरत्वात्पशूना

द्रव्यं वयः कर्मगुणान्विशेषं यद्योगमायाविहितान्वदंति ॥ यद्दुर्विभाव्यं प्रबुधापबाधं प्रसीदतां नः स महाविभूतिः ॥ ४३ ॥ नमोऽस्तु तस्मा उपशांतशक्तये स्वाराज्यलाभप्रतिपूरितात्मने ॥ गुणेषु मायारचितेषु वृत्तिभिर्न सज्जमानाय नभस्वदूतये ॥ ४४ ॥ स त्वं नो दर्शयात्मानमस्मत्करणगोचरम् ॥ प्रपन्नानां दिदृक्षूणां सस्मितं ते मुखांबुजम् ॥ ४५ ॥ तैस्तैः स्वेच्छाधृतै रूपैः कालेकाले स्वयं विभो ॥ कर्म दुर्विषहं यन्नो भगवांस्तत्करोति हि ॥ ४६ ॥ क्लेशभूर्यल्पसाराणि कर्माणि विफलानि च ॥ देहिनां विषयार्तानां न तथैवार्पितं त्वयि ॥ ४७ ॥ नावमः कर्मकल्पोऽपि विफलायेश्वरार्पितः ॥ कल्पते पुरुषस्यैष स ह्यात्मा दयितो हितः ॥ ४८ ॥

कांतिः । पशव्यः पशूनां हितः कामः स्पर्शेनाभूत् ॥ ४२ ॥ द्रव्यं भूतानि । वयः कालम् । विशेषं भौतिकप्रपंचम् । यद्यस्माद्दुर्विभाव्यम् । कुतः । प्रबुधापबाधं विद्वद्भिरपोह्यमानम् । पाठांतरे प्रबुधानां मायेत्यवबोधो यस्मिन्नित्यर्थः ॥ ४३ ॥ तदेवं सप्रपंचमुपवर्ण्य निष्प्रपंचमनुवर्णयन्प्रणमति । नमोस्त्विति । वृत्तिभिर्दर्शनादिभिः । नभस्वान्वायुस्तस्येव ऊतिर्लीला यस्य तस्मै ॥ ४४ ॥ ते सस्मितं मुखांबुजं दिदृक्षूणां नोऽस्मच्चक्षुरादिकरणगोचरं यथा भवत्येवं चात्मानं दर्शय ॥ ४५ ॥ भक्तेच्छानुवर्तित्वं च तव बहुशो दृष्टमेवेत्याह । तैस्तैरिति । यन्नो दुर्विषहमशक्यं कर्म तद्भगवान्स्वयमेव करोति हि ॥ ४६ ॥ न च बहिर्मुखानामिव त्वद्भक्तानामस्माकं त्वय्यर्पितानि पूर्वपुण्यानि विपरीतफलानि भवितुमर्हन्तीत्याह । क्लेशो भूरिर्येषु अल्पं सारं फलं येषु । यद्वा विफलान्येव सकामानां कर्माणि त्वय्यर्पितं तु नैव तथा ॥ ४७ ॥ तत्रावैफल्यमुपपादयति । अवमोऽल्पोऽपि कर्मकल्पः कर्माभासोऽपीश्वरार्पितश्चेद्विफलायासाय न कल्पते हि यस्मात्स एष ईश्वरः पुरुषस्यात्मा । अत एव दयितो हितश्च । न

मिति भावः । स्पर्शेन गुणेन । 'पशुर्मूढे मृगादौ च' इति धरणिः ॥ ४२ ॥ यद्यतो द्रव्यादि सर्वं दुर्विभाव्यमेतदेवंविधमिति वक्तुमशक्यं खपुष्पायमाणत्वादित्याह—कुत इति । अपोह्यमानम् "नेतिनेति" इत्यादिना त्यज्यमानम् । पाठांतरे 'प्रबुधावबोधम्' इति पाठे । यद्वा—द्रव्यं नवत्वसंख्याविशिष्टं पृथिव्यादि । वयति जानाति नीलो घट इत्यादिव्यवहारमनेनेति वयः समवायः । कर्म उत्क्षेपणापक्षेपणादिरूपं पंचत्वसंख्याविशिष्टम् । गुणाः शब्दस्पर्शरूपरसाद्याश्चतुर्विंशतिः । विशेषो व्यावर्त्तकः पदार्थस्स च सामान्यरूपो विशेषरूपश्च । वीयते ज्ञायते परोक्षापरोक्षतयेति वयोऽभावोपि सप्तमपदार्थो वयःशब्देनैव ग्राह्यः । एतान्सर्वान् यस्य भगवतो योगमायया गौतमादिभिर्विहितान् । 'अविद्यया मनसा कल्पितास्ते' इत्याद्युक्तेः । 'जनिमसुत' इत्यादिना वक्ष्यते वेदस्तुतौ च ॥ ४३ ॥ स्वाराज्यलाभः स्वात्मानंदानुभवस्तेन प्रतिपूरितः पूर्ण आत्मा स्वरूपं यस्य तस्मै । ननु कथं तर्हि सृष्ट्याद्यासक्तिस्तत्राह—गुणेष्विति । वृत्तिभिर्दर्शनादिभिः । वायुर्यथा सर्वत्र गच्छन्नपि न कुत्राप्यासज्जते तद्वल्लीला यस्य तस्मै ॥ ४४ ॥ ४९ ॥ तैस्तैर्मत्स्यकूर्मादिभिः । यद्दुष्टदनुजादिहननलक्षणं नोऽशक्यमसुरादेर्वाऽशक्यम् । कालेकाले इति । 'यदायदा हि धर्मस्य ग्लानिः' इत्याद्युक्तेः ॥ ४६ ॥ अल्पफलप्रदत्वेऽपि विफलोक्तिर्न युज्यत इति चेदाह—यद्वेति । 'कामधियस्त्वयि रचितान् परम रोहति' इत्युक्तेस्त्वदर्पितकर्मणां मोक्षफलत्वं च प्रथमस्कंधेऽप्युक्तम् । "एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः । त एवात्मविनाशाय कल्पंते कल्पिताः परे" इति ॥ ४७ ॥ तत्र भगवदर्पितकर्मणि । अवैकल्यं साफल्यम् । अत एवात्मत्वादेव ।

यथा हि स्कंधशाखानां तरोर्मूलावसेचनम् ॥ एवमाराधनं विष्णोः सर्वेषामात्मनश्च हि ॥ ४९ ॥ नमस्तुभ्यमनंताय दुर्वितर्क्यात्मकर्मणे ॥ निर्गुणाय गुणेशाय सत्त्वस्थाय च सांप्रतम् ॥ ५० ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधेऽमृतमथने पंचमोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ एवं स्तुतः सुरगणैर्भगवान्हरिरीश्वरः ॥ तेषामाविरभूद्राजन्सहस्रार्कोदयद्युतिः ॥ १ ॥ तेनैव महसा सर्वे देवाः प्रतिहतेक्षणाः ॥ नापश्यन्खं दिशः क्षोणिमात्मानं च कुतो विभुम् ॥ २ ॥ विरिंचो भगवान्दृष्ट्वा सह शर्वेण तां तनुम् ॥ स्वच्छां मरकतश्यामां कंजगर्भारुणेक्षणाम् ॥३॥ तप्तहेमावदातेन लसत्कौशेयवाससा ॥ प्रसन्नचारुसर्वांगीं सुमुखीं सुंदरभ्रुवम् ॥ ४ ॥

ह्यात्मनि दयिते हिते चार्पितं निष्फलं स्यात् ॥ ४८ ॥ अनंतफलत्वमाह । यथा हि मूलावसेचनं स्कंधानां शाखानां च भवति ॥ ४९ ॥ एवं सत्यपि त्वदर्पितकर्मणां त्वद्भक्तानामस्माकं किंनिमित्तमिदं दुःखमिति त्वमेव वेत्सीत्याशयेनाह । नम इति । दुर्वितर्क्याण्यात्मकर्माणि स्वभावचेष्टितानि यस्य तस्मै ॥ ५० ॥ इति श्रीमद्भागवते म० अष्टमस्कंधे टीकायां पंचमोऽध्यायः ॥ ५ ॥ षष्ठे पुनः स्तुतिर्विष्णावाविर्भूते सुरैः कृता ॥ तन्मंत्राच्चासुरैः साकममृतार्थे महोद्यमः ॥ १ ॥ सहस्रार्काणामुदये द्युतिरिव द्युतिर्यस्य ॥ १ ॥ महसा तेजसा प्रतिहतानीक्षणानि चक्षूंषि येषाम् ॥ २ ॥ तामाविर्भूतां तनुं विरिंचो दृष्ट्वा तुष्टावेति पंचमेनान्वयः । कंजगर्भवदरुणे ईक्षणे यस्याः । ॥ ३ ॥ तप्तहेमवदवदातेन पीतेन लसता कौशेयवाससा युक्ताम् । प्रसन्नानि चारूणि सर्वाण्यंगानि यस्याः । शोभनं मुखं यस्याः सुन्दरे भ्रुवौ यस्याः ॥ ४ ॥

फलितमाह–न हीति । कर्माभासः अंगवैकल्ययुतं कर्म ॥ ४८ ॥ सर्वेषामिंद्रादीनाम् । आत्मनः स्वस्य च तृप्तिकरं स्यादित्यर्थः ॥ ४९ ॥ त्वदर्पितकर्मणामेवं सत्यप्यनंतफलप्रदत्वे सत्यपि यन्निमित्तं यत इदं जातं निर्गुणाय वस्तुतो गुणसंबंधरहिताय गुणेशाय मायया सर्वगुणप्रेरकत्वेप्यधुना सत्त्वस्थत्वादस्मान्पालयेति भावः । अत्र विश्वनाथः–अस्मदभीप्सितं पूरयिष्यति न वेत्यंतेन प्राप्नुम इत्याहुः । अनंताय सर्वज्ञानामप्यस्माकं त्वयि सार्वज्ञं नास्त्येव संप्रति त्वत्करिष्यमाणं कर्मानुमानेनापि न विद्म इत्याहुः–दुर्वितर्क्येति । ननु मत्कृपामेव हेतूकृत्य मद्भक्तानामिंद्रादीनामभीष्टसिद्धिरनुमीयतां तत्र नेत्याहुः निर्गुणाय । कृपयैव गुणजन्यां संपत्तिमनर्थहेतुं न ददासि । गुणेशायेति । कृपयैव गुणजन्यां संपात्तिं ददास्यपीति तयैव त्वद्दयानुमानसंभवात् । तर्ह्येवं संशये कथं स्तौषि तत्राह–सत्त्वस्थायेति । सत्त्वगुणस्य संप्रति वृद्धिकाल इति सात्त्विकान्देवान्वर्द्धयितुमर्हसीति । एषाञ्च शुद्धभक्त्यभावाद्विषयभोगविच्छेदं कर्तुञ्च नार्हसीति निश्चयोऽपि वर्त्तत इति भावः ॥ ५० ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे अष्टमस्कंधे पञ्चमोऽध्यायः ॥ ५ ॥ तन्मंत्राद्विष्णुमंत्रोपदेशात् ( १ ) । तेषां सुरगणानां मध्ये ॥ १ ॥ तेनैव सहस्रार्कोदयसमेन । आत्मानमित्येकत्वं सामान्यापेक्षम् । आत्मनः स्वानित्यर्थः ॥ २ ॥ "विरंचिर्ना विरिंचोऽपि वैकुंठे परमेष्ठिनि" इति मेदिनी ॥ ३ ॥ "अवदातोऽरुणे पीते श्वेते श्यामे च

महामणिकिरीटेन केयूराभ्यां च भूषिताम् ॥ कर्णाभरणनिर्भातकपोलश्रीमुखांबुजाम् ॥ ५ ॥ कांचीकलापवलयहारनूपुरशोभिताम् ॥ कौस्तुभाभरणां लक्ष्मीं बिभ्रतीं वनमालिनीम् ॥ ६ ॥ सुदर्शनादिभिः स्वास्त्रैर्मूर्तिमद्भिरुपासिताम् ॥ तुष्टाव देवप्रवरः सशर्वः पुरुषं परम् ॥ सर्वामरगणैः साकं सर्वांगैरवनिं गतैः ॥ ७ ॥ ब्रह्मोवाच ॥ अजातजन्मस्थितिसंयमायागुणाय निर्वाणसुखार्णवाय ॥ अणोरणिम्नेऽपरिगण्यधाम्ने महानुभावाय नमोनमस्ते ॥ ८ ॥ रूपं तवैतत्पुरुषर्षभेज्यं श्रेयोर्थिभिर्वैदिकतांत्रिकेण ॥ योगेन धातः सह नस्त्रिलोकान्पश्याम्यमुष्मिन्नु ह विश्वमूर्तौ ॥ ९ ॥ त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यंत आसीदिदमात्मतंत्रे ॥ त्वमादिरंतो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मात् ॥ १० ॥

महांतो मणयो यस्मिंस्तेन किरीटेन। कर्णाभरणे कुंडले ताभ्यां निर्भातौ यौ कपोलौ ताभ्यां श्रीर्मुखांबुजे यस्याः ॥ ५ ॥ कौस्तुभ आभरणं कंठे यस्याः। लक्ष्मीं वक्षसि बिभ्रतीम् ॥६॥ देवप्रवरो ब्रह्मा । सर्वांगैरवनिं गतैः साष्टांगं प्रणतैः ॥७॥ अनाविराविरासेयं नाभूताऽभूदिति ब्रुवन् ॥ ब्रह्माऽभिप्रैति नित्यत्वविभुत्वे भगवत्तनोः ॥ १ ॥ श्रीमूर्तेरयमाविर्भाव एव न त्वस्मदादिवज्जन्मादि तवास्तीत्याह । न जाता जन्मादयो यस्य । कुतः अगुणाय । अतो निर्वाणसुखस्यार्णवाय । अपारमोक्षसुखरूपायेत्यर्थः । तथाऽप्यणोरप्यणिम्नेऽतिसूक्ष्माय दुर्ज्ञानत्वात् । वस्तुतस्त्वपरिगण्यमियत्तातीतं धाम मूर्तिर्यस्य तस्मै । न चैतदसंभावितम् । यतो महानचिंत्योऽनुभावो यस्य तस्मै ॥ ८ ॥ तन्मूर्तेः सनातनत्वमपरिमेयत्वं चोपपादयति। रूपमिति । हे पुरुषर्षभ हे धातः एतत्तव रूपं वैदिकेन तांत्रिकेण च योगेनोपायेन श्रेयोर्थिभिः सदेज्यं पूज्यम् । अतो नेदमिदानीमपूर्वं जातमिति भावः । ननु यूयं देवाः पूज्यत्वेन प्रसिद्धाः । सत्यम् । सर्वेऽप्यत्रैवांतर्भूता इत्याह । उ अहो । ह स्फुटम् । अमुष्मिंस्त्वयि नोऽस्मांस्त्रीन् लोकांश्च सह पश्यामि । तत्र हेतुः । विश्वं मूर्तौ यस्य । अतस्तवैतद्रूपं परिच्छिन्नमपि न भवतीति भावः ॥ ९ ॥ विश्वमूर्तित्वमेवाह । त्वयीति। घटस्य मृत्तिका यथा आदिरंतश्च मध्यं च तथा त्वमस्य जगतः ।

कथ्यते'' इत्यभिधानात् । ''अवदातः सिते गौरे विशुद्धेप्यन्यलिंगके'' इति मेदिनी ॥ ४ ॥ ५ ॥ कलापो भूषणविशेषः 'कलापः संहतौ तूणे कांच्यां भूषणबर्हयोः' इति कोशात् ॥ ६ ॥ ७ ॥ ब्रह्मा भगवत्तनोर्नित्यत्वविभुत्वे अभिप्रैति निश्चिनोति किं कुर्वन्निति ब्रुवन् इति किमियं मूर्त्तिरनाविः पूर्वमनाविर्भूता नाविर्भूता किं च पूर्वमभूताऽविद्यमानाऽधुना नाभूत्किं तु पूर्वमाविर्भूतैवाधुनाविर्भूता पूर्वं सत्येवाधुनाभूदित्यर्थः । अनित्यं वस्तु पूर्वमसदुत्पद्यते परिच्छिन्नं चानाविर्भूतमाविर्भवतीति भगवतो नित्यापरिच्छिन्नत्वात्तदुभयं नास्तीति भावः । अजातजन्मादित्वे हेतुमाशंकते—कुत इति । अतो निर्गुणत्वादेव । इत्यर्थ इति । गुणसंबंधवतो मोक्षसुखाऽसंभवादिति भावः । तथापि मोक्षसुखरूपत्वेपि । एतदपरिगण्यधामत्वम् । यतो हेतोः ॥ ८ ॥ तन्मूर्त्तेर्भगवन्मूर्त्तेः । इति भात्र इति । यतोऽनादिवैदिकतांत्रिकविधिविहिताचर्येयं मूर्त्तिरतः सदातनीयमिति तात्पर्यम् । अत्राक्षिपति—नन्विति । अत्रैव त्वन्मूर्त्तौ पुरुषत्वेन प्रसिद्धेष्वस्मास्वृषभस्त्वमेवेति 'हरिर्यथैकः पुरुषोत्तमः स्मृतः' इति प्रसिद्धेरित्यभिप्रेत्याह—पुरुषर्षभेति । धातारिति च । सर्वकारणत्वादर्च्यत्वमाह—नोस्मानिति । निजमूर्त्तिसहितानित्यर्थः । तत्र निजमूर्त्तिसहितत्रिलोकाधारत्वे । यतस्त्वं विश्वमूर्त्तिरतो हेतोः । इति भाव इति । न हि परिच्छिन्नस्य विश्वमूर्त्तित्वं संभवतीति तात्पर्यम् ॥ ९ ॥ तत्रादिमध्यांतत्वे । 'अव्यक्तात्पुरुषः परः' इति श्रुतेः ।

त्वं माययात्माश्रयया स्वयेदं निर्माय विश्वं तदनुप्रविष्टः ॥ पश्यंति युक्ता मनसा मनीषिणो गुणव्यवायेऽप्यगुणं विपश्चितः ॥११॥ यथाऽग्निमेधस्य मृतं च गोषु भुव्यन्नमंबूद्यमने च वृत्तिम् ॥ योगैर्मनुष्या आधियंति हि त्वां गुणेषु बुद्ध्या कवयो वदंति ॥ १२ ॥ तं त्वां वयं नाथ समुज्जिहानं सरोजनाभाऽतिचिरेप्सितार्थम् ॥ दृष्ट्वा गता निर्वृतिमद्य सर्वे गजा दवार्ता इव गांगमंभः ॥ १३ ॥ स त्वं विधत्स्वाखिललोकपाला वयं यदर्था स्तव पादमूलम् ॥ समागतास्ते बहिरंतरात्मन्किं वान्यविज्ञाप्यमशेषसाक्षिणः ॥ १४ ॥ अहं गिरित्रश्च सुरादयो ये दक्षादयोऽग्नेरिव केतवस्ते ॥ किं वा विदामेश पृथग्विभाता विधत्स्व शं नो द्विजदेवमंत्रम् ॥ १५ ॥

तत्र हेतुः । परस्मात्प्रधानादपि परः ॥ १० ॥ मृत्तिकादृष्टांतेन परिणामं प्राप्तं वारयति । त्वमिति । स्वया स्वाधीनया । अत एव गुणानां व्यवाये परिणामेऽप्यगुणमेव त्वां युक्ताः पश्यंति । मनीषिणो विवेकिनः । विपश्चितः शास्त्रज्ञाः ॥ ११ ॥ एतदेव सदृष्टांतमाह । यथाऽग्निं काष्ठे मथनेन । अमृतमाज्यं गोषु दोहनादिना । भुव्यन्नं व्रीह्यादिकर्षणादिना अंबु च खननेन । उद्यमने पुरुषकारे वाणिज्यादिना वृत्तिं जीविकाम् । यद्वा अंबु उद्यमने घटीयंत्रादिनोद्धरणे । योगैरुपायैर्मनुष्या अधियंति प्राप्नुवंति यथा कवयस्त्वां बुद्ध्या गुणेष्वधियंति वदंति च ॥ १२ ॥ हे नाथ हे सरोजनाभ अतिचिरादीप्सितमर्थं तं योगैकप्राप्यं त्वां सम्यगुज्जिहानमाविर्भवंतं प्रत्यक्षतो दृष्ट्वाऽद्य वयं निर्वृतिं गताः । दवार्ता दावाग्निपीडिताः ॥ १३ ॥ यद्विधेयं तत्कथयेति चेत्तत्राह । स त्वमिति । हे अंतरात्मन् अशेषसाक्षिणस्ते बहिः किं वाऽन्यैर्विज्ञाप्यमस्ति ॥ १४ ॥ यूयमेव किंचित्कुरुतेति चेत्तत्राह । अहमिति । अग्नेः केतवो विस्फुलिंगा इव ते त्वत्तो वयं पृथग्विभाताः संत आत्मनः शं श्रेयः किं वा विद्मः । अतस्त्वमेव

मृत्स्ना प्रशस्ता मृत् "सस्नौ प्रशंसायाम्" इति सूत्रात् ॥ १० ॥ परिणता मृत्स्ना यथा घटस्तथा परिणतं ब्रह्मैव जगद्भवत्विति वारयति स्वया निजया तत्रापि स्वाधीनया । अत एव स्वाधीननिजमायया कर्तृत्वादेव । "व्यवायो व्यवधाने च परिणामे च मैथुने" इत्यभिधानात् । शक्तिपरिणतौ शक्तिमतः परिणामासंभवादगुणम् । युक्ता योगिनः । मनसा मननेन । "मनः स्याद्बुन्मननयोः" इति तीर्थः । यद्वा मनसाऽग्र्यबुद्ध्या युक्ताः "दृश्यते त्वग्र्यया बुद्ध्या" इति श्रुतेः । 'मनश्चित्ते मनीषायाम्' इति मेदिनी । मनीषिविपश्चिच्छब्दौ परावरविद्यावत्त्वमाहतुः । सगुणा गुणविद्यानिपुणाः शब्दब्रह्मपरब्रह्मज्ञा इति भावः । "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः ॥११॥ एतदेव सर्वत्रानुप्रविष्टत्वमेव । योगैरुपायैः कृष्णादिभिर्मनुष्यावृत्तिमिति यथाक्रमसंभवे भुव्यन्नांबुद्वयकल्पनमयुक्तमिति चेदाह—यद्वेति । गुणेषु गुणमये जगति निर्गुणं त्वां योगैः 'भक्त्याहमेकया ग्राह्यः' इति त्वदुक्तभक्तिभेदैरधियंति प्राप्नुवंति। बुद्ध्या त्वद्दत्तया 'ददामि बुद्धियोगं तम्' इत्याद्युक्तेर्वदंति वयं भगवत्समीपं प्राप्ता इत्येवं ब्रुवंति च यथा मंथनेन काष्ठेऽग्निं तथा श्रवणकीर्तनादिभक्त्या मनोमंथनेन त्वां पश्यंति तदुक्तं पञ्चमे "यस्य स्वरूपं कवयो विपश्चितो गुणेषु दारुष्विव जातवेदसम् । मथ्नंति मथ्ना मनसा दिदृक्षवः" इति सत्सहायभूयस्त्वे त्वल्पायासेनैव त्वत्प्राप्तिरिह दृष्टांतः । गोष्वमृतं दुग्धं दोहनेन यथेति वत्समुखसंस्पृष्टापीनप्रस्नुतामित्यर्थः । प्राचीनभक्तिबीजसद्भावे तु भक्तिबाहुल्यप्राप्त्यैव त्वत्प्राप्तिरिह दृष्टांतस्तु भुव्यन्नं कर्षणादिना यथा प्राचीनसत्संगबहुभक्तिसद्भावे तु प्रतिबंधकाभाव एव त्वत्प्राप्तिरिह दृष्टांतः । अंबु जलं खननात्तदावरकमृत्तिकादिदूरीकरणेन यथेति लब्धभक्तीनां तु भजनमात्रेण नित्यमेव त्वत्प्राप्तिरिह दृष्टांतः । उद्यमेन वृत्तिं नर्तकगायकादीनां प्रतिस्वशिल्पोद्यमेनैव जीविकां यथेति विश्वनाथः ॥ १२ ॥ नाथ सरोजनाभेति संबुद्धिद्वयेन प्रभुत्वं जनकत्वं च द्योतयन्स्वस्मिन्कृपामुत्पादयति ॥ १३ ॥ यं दृष्ट्वा वयं निर्वृतिमिताः स त्वमित्यर्थः ॥ १४ ॥ यथा विस्फुलिंगा न किंचित्कर्तुं समर्थास्तथा वयमपीति भावः । इत्यर्थ इति । त्वदुपदेशेन तु

श्रीशुक उवाच ॥ एवं विरिंचादिभिरीडितस्तद्विज्ञाय तेषां हृदयं यथैव ॥ जगाद जीमूतगभीरया गिरा बद्धांजलीन्संवृतसर्वकारकान् ॥ १६ ॥ एक एवेश्वरस्तस्मिन्सुरकार्ये सुरेश्वरः ॥ विहर्तुकामस्तानाह समुद्रोन्मथनादिभिः ॥१७॥ श्रीभगवानुवाच ॥ हंत ब्रह्मन्नहो शंभो हे देवा मम भाषितम् ॥ शृणुतावहिताः सर्वे श्रेयो वः स्याद्यथा सुराः ॥ १८ ॥ यात दानवदैतेयैस्तावत्संधिर्विधीयताम् ॥ कालेनानुगृहीतैस्तैर्यावद्वो भव आत्मनः ॥१९॥ अरयोऽपि हि संधेयाः सति कार्यार्थगौरवे ॥ अहिमूषकवद्देवा अर्थस्य पदवीं गतैः ॥ २० ॥ अमृतोत्पादने यत्नः क्रियतामविलंबितम् ॥ यस्य पीतस्य वै जंतुर्मृत्युग्रस्तोऽमरो भवेत् ॥ २१ ॥ क्षिप्त्वा क्षीरोदधौ सर्वा वीरुत्तृणलतौषधीः ॥ मंथानं मंदरं कृत्वा नेत्रं कृत्वा तु वासुकिम् ॥ २२ ॥ सहायेन मया देवा निर्मंथध्वमतंद्रिताः ॥ क्लेशभाजो भविष्यंति दैत्या यूयं फलग्रहाः ॥ २३ ॥ यूयं तदनुमोदध्वं यदिच्छंत्यसुराः सुराः ॥ न संरंभेण सिध्यंति सर्वेऽर्थाः सांत्वया यथा ॥ २४ ॥

द्विजानां देवानां च मंत्रं विधत्स्व । इदं कुरुतेत्युपायमुपदिशेत्यर्थः ॥ १५ ॥ तत् हृदयं मंत्र उपदेष्टव्य इत्यभिप्रेतं यथा तथैव विज्ञाय जगाद । संवृतानि नियमितानि सर्वाणि कारकाणींद्रियाणि यैस्तान् ॥ १६ ॥ ईश्वरस्यापि तथैवाभिप्रेतमित्याह । सुरेश्वरो भगवान् एक एवेश्वरः समर्थोऽपि सुरासुरैः सह विहर्तुकामः तानाह ॥१७॥ हे सुरा हे देवा अन्ये च गंधर्वादयः ॥ १८ ॥ वः आत्मनः स्वतो यावद्भवो वृद्धिर्भवति ॥१९॥ अर्थस्य प्रयोजनस्य पदवीं सिद्धिं प्राप्तैः ततः पश्चादहिमूषकवद्वध्यघातक भावेन वर्तितव्यमिति शेषः । यद्वा सर्पग्राहिणा पेटिकायां निरुद्धोऽहिर्यथा निर्गमद्वारविधानार्थं प्रथमं मूषकेण संधिं विधत्ते पश्चात्तमेव कदाचिद्भक्षयति तथाऽर्थमार्गप्रवृत्तैः प्रथमं संधेया इत्यर्थः ॥ २० ॥ ततस्तैः सह यत्कार्यं तदाह । अमृतोत्पादन इति । यस्यामृतस्य पीतस्य सतः ॥ २१ ॥ नेत्रं रज्जुम् ॥ २२ ॥ ननु तर्हि तेऽप्यमृत पानेनामराः स्युस्तत्राह । क्लेशभाज इति ॥ २३ ॥ बालिभिः सहकारिभिः साध्या अर्थास्तदनुसरणं विना न सिध्यंतीति कृत्वा सामादिकमुपदिशति यूयमिति द्वाभ्याम् ।

वयमपि कर्तुं शक्नुयाम अस्माकं बुद्धिचातुर्यं तु रसातलं गतमित्यर्थः ॥१५॥ तत्पूर्वोक्तम् ‘ विधत्स्व शम ’ इत्यादिरूपम् । जीमूतगभीरयां मेघशब्दवदूर्जितया ॥ १६ ॥ तथैव यथा देवानामित्यर्थः । तस्मिन् देवजयसंपादनरूपे । सुरेश्वरो विष्णुः । इन्द्रस्य कर्मजसुरेश्वरत्वान्मुख्यः सुरेश्वरो विष्णुरेवेति । तान् देवान् । आदिनामृतपानादिग्रहः ॥ १७ ॥ हंतेति वाक्यारंभे । यथा येन प्रकारेण वः श्रेयः स्यात्तं प्रकारं शृणुत ॥ १८ ॥ तैर्दैतेयैः ॥ १९ ॥ कार्यार्थस्य कर्तव्यप्रयोजनस्य । गौरवे गुरुत्वे सति । पूर्वव्याख्याने गौरवं मत्वाह—यद्वेति । इत्यर्थ इति । “ यावन्मयूरसंत्रस्तः सर्पो मूषिकवेश्मनि । निलीय निर्भयः प्रश्चाद्भक्षित्वा मूषिकं गतः ॥ ” इति न्यायाद्वेति भावः ॥ २० ॥ ततः संधेरनंतरम् । तैर्दैत्यैः ॥ २१ ॥ मंथानं मंथनदंडम् । “ नेत्रं पथि गुणे वस्त्रभेदे मूले द्रुमस्य च । रथे चक्षुषि नद्यां तु नेत्री नेतारि वाच्यवत् ॥ ” इति मेदिनी ॥ २२ ॥ अत्राशंकते—नन्विति । फलग्रहा अमृतपायिनः ॥ २३ ॥ तदनुसरणं बलवत्सहकार्यनुकूलाचरणम् । आदिना दानग्रहः । संभ्रमेण कोपेन ‘ संरंभः कोपवेगयोः ’ इति हलायुधः । ‘ सांत्वं सामप्रयोगे स्यात् ’ इति

न भेतव्यं कालकूटाद्विषाज्जलधिसंभवात् ॥ लोभः कार्यो न वो जातु रोषः कामस्तु वस्तुषु ॥ २५ ॥ श्रीशुक उवाच ॥ इति देवान्समादिश्य भगवान्पुरुषोत्तमः ॥ तेषामंतर्दधे राजन्स्वच्छंदगतिरीश्वरः ॥ २६ ॥ अथ तस्मै भगवते नमस्कृत्य पितामहः ॥ भवश्च जग्मतुः स्वंस्वं धामो पेयुर्बलिं सुराः ॥ २७ ॥ दृष्ट्वारीनप्यसंयत्ताञ्जातक्षोभान्स्वनायकान् ॥ न्यषेधद्दैत्यराट् श्लोक्यः संधिविग्रहकालवित् ॥ २८ ॥ ते वैरोचनिमासीनं गुप्तं चासुरयूथपैः ॥ श्रिया परमया जुष्टं जिताशेषमुपागमन् ॥ २९ ॥ महेंद्रः श्लक्ष्णया वाचा सांत्वयित्वा महामतिः ॥ अभ्यभाषत तत्सर्वं शिक्षितं पुरुषोत्तमात् ॥ ३० ॥ तदरोचत दैत्यस्य तत्रान्ये येऽसुराधिपाः ॥ शंबरोऽरिष्टनेमिश्च ये च त्रिपुरवासिनः ॥ ३१ ॥ ततो देवाऽसुराः कृत्वा संविदं कृतसौहृदाः ॥ उद्यमं परमं चक्रुरमृतार्थे परंतप ॥ ३२ ॥ ततस्ते मंदरगिरिमोजसोत्पाट्य दुर्मदाः ॥ नदंत उदधिं निन्युः शक्ताः परिघबाहवः ॥ ३३ ॥ दूरभारोद्वहश्रांताः शक्रवैरोचनादयः ॥ अपारयंतस्तं वोढुं विवशा विजहुः पथि ॥ ३४ ॥ निपतन्स गिरिस्तत्र बहूनमर दानवान् ॥ चूर्णयामास महता भारेण कनकाचलः ॥ ३५ ॥ तांस्तथा भग्नमनसो भग्नबाहूरुकंधरान् ॥ विज्ञाय भगवांस्तत्र बभूव गरुडध्वजः ॥ ॥ ३६ ॥ गिरिपातविनिष्पिष्टान्विलोक्यामरदानवान् ॥ ईक्षया जीवयामास निर्जरान्निर्व्रणान्यथा ॥ ३७ ॥ गिरिं चारोप्य गरुडे हस्तेनैकेन लीलया ॥ आरुह्य प्रययावब्धिं सुरासुरगणैर्वृतः ॥ ३८ ॥

हे सुराः । संरंभेण संभ्रमेण । सांत्वया साममार्गेण यथा सिध्यंति ॥ २४ ॥ वस्तुषु मथनादुत्पन्नेषु ॥ २५ ॥ २६ ॥ सुरास्तु बलिमुपेयुरुपजग्मुः ॥२७॥ असंयत्तान युद्धोद्यतानपि दृष्ट्वा । श्लोक्यः कीर्त्यर्हः ॥ २८ ॥ वैरोचनिं बलिम् । जितमशेषं त्रैलोक्यं येन तम् ॥ २९ ॥ तत्सर्वममृतोन्मथनादि ॥ ३० ॥ तत्र ये अन्ये चासुराधिपाः पौलोमकालेयादयः शंबरादयश्च तेभ्यश्चारोचत ॥३१॥ संविदं समयम् ॥३२॥ परिघा इव बाहवो येषाम् ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥

च । स्त्रीत्वमार्षम् ॥ २४ ॥ कालकूटात् हलाहलात् । कालः कूटो गुप्तो यस्मिंस्तत्तथा ‘ कूटोऽस्त्री गुप्तदंभयोः ’ इति । वो युष्माभिर्युष्माकं वा “ कृत्यानां कर्त्तरि वा ” इत्यनुशासनात् । कामोऽभिलाषः ॥ २९ ॥ इतीत्थम् । तेषां देवानां मध्ये स्वच्छंदा स्वायत्ता गतिर्यस्य स तथा ॥ २६ ॥ अथ हर्यंतर्द्धानानंतरम् । तस्मै अंतर्हिताय ॥ २७ ॥ असंयत्तान् असंनद्धान् । स्वनायकान् स्वसेनामुख्यान् । निषेधे हेतुः—श्लोक्य इति ॥ ॥ २८ ॥ ते देवाः ॥ २९ ॥ यत्पुरुषोत्तमाच्छिक्षितम् । आदिना मंदरानयनादिग्रहः । दैत्यानिति शेषः ॥ ३० ॥ तत्र बलिसभायाम् । तत् समुद्रोन्मथनादि । अरोचत संमतमभवत् । उत्पत्स्यमानममृतमेतान्निर्बलांस्तिरस्कृत्य वयमेव ग्रहीष्याम इत्यभिप्रायेणेति भावः ॥ ३१ ॥ ततोन्योन्यसंभाषणानंतरम् । संविदं प्रतिज्ञाम् । ‘ संविदागूः प्रतिज्ञानम् ’ इत्यमरः । “संविद्युद्धे प्रतिज्ञायामाचारे नाम्नि तोषणे । संतोषणे क्रियाकारे संकेतज्ञानयोरपि ॥ ” इत्यजयश्च ॥ ३२ ॥ ततः संविदनंतरम् । परिघा अर्गला इव लंबाः “परिघो योगभेदेऽस्त्रविशेषेऽर्गलघातयोः” इति मेदिनी ॥ ३३ ॥ दूरदेशं प्रति भारो भरणं यस्य स दूरभारो गिरिस्तस्योद्वहो धारणं तेन श्रांताः । तं गिरिम् । अपारयंतोऽशक्नुवंतः । विजहुस्तत्यजुः ॥ ३४ ॥ तत्र तदा । कनकाचलो हेममयः कनकमयत्वादेवाचलः कनकस्य प्रस्तरापेक्षया भाराधिक्यात् ॥ ३५ ॥ तान् देवासुरान् । भग्नमनसो नष्टोत्साहान् । तत्र तदा । गरुडध्वजः गरुडवाहनः ‘ध्वजो वाहनीचह्नयोः । न द्वयोः शौंडिके पुमान् ’ इति कोशात् । आविरिति शेषः ॥ ३६ ॥ ईक्षयाऽमृतदृष्ट्या ॥ ३७ ॥ ३८ ॥

अवरोप्य गिरिं स्कंधात्सुपर्णः पततां वरः ॥ ययौ जलांत उत्सृज्य हरिणा स विसर्जितः ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधेऽमृतमथने मंदराचलानयनं नाम षष्ठोऽध्यायः ॥ ६ ॥ श्रीशुक उवाच ॥ ते नागराजमामंत्र्य फलभागेन वासुकिम् ॥ परिवीय गिरौ तस्मिन्नेत्रमब्धिं मुदान्विताः ॥ १ ॥ आरेभिरे सुसंयत्ता अमृतार्थं कुरूद्वह ॥ हरिः पुरस्ताज्जगृहे पूर्वं देवास्ततोऽभवन् ॥ २ ॥ तन्नैच्छन्दैत्यपतयो महापुरुषचेष्टितम् ॥ न गृह्णीमो वयं पुच्छमहेरंगममंगलम् ॥ ३ ॥ स्वाध्यायश्रुतसंपन्नाः प्रख्याता जन्मकर्मभिः ॥ इति तूष्णीं स्थितान्दैत्यान्विलोक्य पुरुषोत्तमः ॥ स्मयमानो विसृज्याग्रं पुच्छं जग्राह सामरः ॥ ४ ॥ कृतस्थानविभागास्त एवं कश्यपनंदनाः ॥ ममंथुः परमायत्ता अमृतार्थं पयोनिधिम् ॥ ५ ॥ मथ्यमानेऽर्णवे सोऽद्रिरनाधारो ह्यपोऽविशत् ॥ ध्रियमाणोऽपि बलिभिर्गौरवात्पांडुनंदन ॥ ६ ॥ ते सुनिर्विण्णमनसः परिम्लानमुखश्रियः ॥ आसन्स्वपौरुषे नष्टे दैवेनातिबलीयसा ॥ ७ ॥ विलोक्य विघ्नेशविधिं तदेश्वरो दुरंतवीर्योऽवितथाभिसंधिः ॥ कृत्वा वपुः काच्छपमद्भुतं महत्प्रविश्य तोयं गिरिमुज्जहार ॥ ८ ॥

विसर्जितः प्रस्थापितः । सुपर्णे तत्र स्थिते वासुकेरागमनायोगादिति भावः ॥ ३९ ॥ इति श्रीमद्भागवते अष्टमस्कंधे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ सप्तमे मथनोद्भूतविषभीत्याऽखिलैर्जनैः ॥ स्तुतः सन्कृपया रुद्रः पपौ विषमितीर्यते ॥ १ ॥ फलभागेन तवाप्यमृते भागो भविष्यतीत्यामंत्र्य संमंत्र्य वासुकिं नेत्रं गिरौ परिवीय संवेष्ट्याब्धिं मंथितुमारेभिरे ॥ १ ॥ वासुकेर्मुखं तीव्रं दैत्यान्ग्राहयितुमेव पूर्वं हरिः पुरस्तान्मुखे जगृहे । देवा अपि ततोऽभवन्मुखं जगृहुः ॥ २ ॥ ३ ॥ ४ ॥ कृतो धारणे स्थानविभागो यैः ॥ ५ ॥ ६ ॥ दैवेन हेतुना स्वपौरुषे नष्टे सति ॥ ७ ॥ विघ्नेशस्य विधिं तेन रचितं विघ्नम् । अवितथः सत्योऽभिसंधिः संकल्पो यस्य ॥ ८ ॥

जलांते जलमध्ये ॥ ३९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे षष्ठोऽध्यायः ॥६॥ ( १ ) । ते देवासुराः । तस्मिन् मंदराख्ये ॥१॥ ततो मुखपार्श्वे ॥ २ ॥ तत् स्वयं मुखग्रहणेनास्मानयमशुच्यंगं ग्राहयतीत्येतत् ! तदेवाह–नेति ॥३॥ इत्युक्त्वा विषज्वालया यूयमेव म्रियध्वमित्यभिप्रायेण स्मयमान इति ॥ ४ ॥ ५ ॥ ६ ॥ ते देवासुराः ॥ ७ ॥ विघ्नेशस्य गणेशस्य विधिम् । ‘ कार्यारंभे गणेशश्च पूजनीयः प्रयत्नतः ’ इत्यादिशास्त्रविहितपूजनलक्षणविधिं तदकरणात्तेन गणेशेन रचितं कृतम् “देवासुरास्तथा मर्त्या यत्कुर्वंति जगत्पते । अनाराध्य गणाध्यक्षं तन्न सिध्यति कर्हिचित्॥ ” इति कृष्णं प्रति नारदोक्तेः । तदा मंथनारंभे । लोकं ग्राहयितुं गणेशं संपूज्य सत्यसंकल्पः । विश्वनाथस्तु–विघ्ने ईष्टे समर्थो भवतीति विघ्नेशो यो विधिस्तं विलोक्यास्मिन्विघ्नेऽयमेव प्रकारो योग्य इति विचार्य काच्छपं वपुः कृत्वोज्जहारोर्द्ध्वं नीतवान् । कच्छपजातेरेव जलाधस्थवस्तूर्द्ध्वनयने योग्यता स्वभाविकीति विमृश्येति भावः । संदर्भस्तु–विघ्नेशविधिशब्दस्य विघ्नवाचित्वमात्रे तात्पर्यन्तु विघ्नेशरचितत्वे स्थलजलरुहशब्दवत् तस्यापि देवतास्वेकत्वादित्याह । स हरिरद्भुतमदृष्टश्रुतचरम् ॥८॥

तमुत्थितं वीक्ष्य कुलाचलं पुनः समुत्थिता निर्मथितुं सुरासुराः ॥ दधार पृष्ठेन स लक्षयोजनप्रस्तारिणा द्वीप इवापरो महान् ॥ ९ ॥ सुरासुरेंद्रैर्भुज वीर्यवेपितं परिभ्रमंतं गिरिमंग पृष्ठतः ॥ बिभ्रत्तदावर्त्तनमादिकच्छपो मेनेंगकंडूयनमप्रमेयः ॥ १० ॥ तथाऽसुरानाविशदासुरेण रूपेण तेषां बलवीर्यमीरयन् ॥ उद्दीपयन्देवगणांश्च विष्णुर्दैवेन नागेंद्रमबोधरूपः ॥ ११ ॥ उपर्यगेंद्रं गिरिराडिवान्य आक्रम्य हस्तेन सहस्रबाहुः ॥ तस्थौ दिवि ब्रह्मभवेंद्रमुख्यैरभिष्टुवद्भिः सुमनोऽभिवृष्टः ॥ १२ ॥ उपर्यधश्चात्मनि गोत्रनेत्रयोः परेण ते प्राविशता समेधिताः ॥ ममंथुरब्धिं तरसा मदोत्कटा महाद्रिणा क्षोभितनक्रचक्रम् ॥ १३ ॥ अहींद्रसाहस्रकठोरदृङ्मुखश्वासाग्निधूमाहतवर्चसोऽसुराः ॥ पौलोमकालेयबलील्वलादयो दवाग्निदग्धाः सरला इवाभवन् ॥ १४ ॥ देवांश्च तच्छ्वासशिखाहतप्रभान्धूम्रांबरस्रग्वरकंचुकाननान् ॥ समभ्यवर्षन्भगवद्वशा घना ववुः समुद्रोर्म्युपगूढवायवः ॥ १५ ॥ मथ्यमानात्तथा सिंधोर्देवासुरवरूथपैः ॥ यदा सुधा न जायेत निर्ममंथाजितः स्वयम् ॥ १६ ॥ मेघश्यामः कनकपरिधिः कर्णविद्योतविद्युन्मूर्ध्नि भ्राजद्विलुलितकचः स्रग्धरो रक्तनेत्रः ॥ जैत्रैर्दोर्भिर्जगदभयदैर्दंदशूकं गृहीत्वा मथनन्मथ्ना प्रतिगिरिरिवाशोभताथो धृताद्रिः ॥ १७ ॥

लक्षयोजनः प्रस्तारो विस्तारोऽस्यास्तीति तथा तेन पृष्ठेन ॥ ९ ॥ तस्य गिरेरावर्तनं भ्रमणमंगकंडूयनं मेने ॥ १० ॥ आसुरेणासुराकारेण दैवेन देवाकारेण रूपेणाविशत् ॥ ११ ॥ १२ ॥ आत्मनि देवदैत्यमध्ये तत्तदाकारेण । गोत्रे दार्ढ्यरूपेण नेत्रे अभेद्याबोधरूपेण । परेण हरिणा । क्षोभितं नक्राणां चक्रं समूहो यस्मिन् ॥ १३ ॥ दृशश्च मुखानि च श्वासाश्च । अहींद्रस्य साहस्रमपरिमिताः कठोरा ये दृगादयस्तेभ्यो निर्गताभ्यामग्निधूमाभ्यामाहतं वर्चो येषां ते । सरला द्रुमविशेषाः ॥ १४ ॥ देवांस्तु भगवद्वशा घनाः समभ्यवर्षन् । समुद्रोर्मिभिरुपगूढा वायवश्च शीतला ववुर्वांति स्म । कथंभूतान् । तस्याहींद्रस्य श्वासशिखाभिर्हता प्रभा येषाम् । धूम्राण्यंबरादीनि येषाम् ॥ १५ ॥ १६ ॥ धृतोऽद्रिर्येन स धृताद्रिर्भगवान्परमपुरुषोऽनंतरमशोभतेत्यन्वयः । कथंभूतः । कनकपरिधिः पीतवासाः । कर्णयोर्विद्योतमाना विद्युत्कुंडललक्षणा यस्य । तथा मूर्ध्नि भ्राजंतो विलुलिताः

तं मन्दरम् । कुलाचलं तेषु गणितम् ॥ ९ ॥ पृष्ठतः पृष्ठेन तृतीयार्थे तसिः । आदिकच्छपो यः शेषाधारः कूर्मरूपो भगवान्स एव तदा निजां तां मूर्त्तिं मंदरधृतये प्रादुश्चकारेति "कूर्मो बिभर्त्ति धरणिं निजपृष्ठभागे । कृत्वां तरानंतभुजंगराजम्" इत्याद्युक्तेः । कतिपयक्षणोत्तरं देवानां मंथनासामर्थ्यं गिरिसंघर्षजपीडया वासुकेश्च प्राणत्यागमिवालक्ष्य कृपया स्वयमेव प्रभुस्तं गिरिं दधारेत्यर्थः ॥ १० ॥ अथ कूर्मरूपेण गिरिधारणानंतरम् । तेषाम सुराणाम् । नागेंद्रं वासुकिम् । अबोधमज्ञातं रूपं यस्य स तथा । अतिबलवदाकर्षणेऽपि ज्ञानं विना यद्वेदो न जायते तादृग्रूपो वा गिरिसंघर्षजपीडाज्ञानमस्य मा भवत्वित्यबोधरूपो वा ॥ ११ ॥ एकेन रूपेणागेंद्रमाक्रम्य । हस्तेन हस्तैः एकत्वं सामान्याभिप्रायम् 'सहस्रबाहुः' इत्युक्तेः । अन्यो गिरिराडिवोपरि तस्थौ अन्यथा कूर्मपृष्ठस्य नतोन्नतत्वात्तत्र गिरिस्थितेरसंभवात् । ब्रह्मभवेंद्रेभ्योऽपि मुख्यैः श्रेष्ठैर्विष्णुपार्षदैरित्यर्थः । यद्वा– भवस्य कैलासे दिवि चेंद्रादीनां क्षीरोदतीरे स्वर्गे च कायव्यूहो ज्ञेयः । सुमनोभिः पुष्पैरभिवृष्टः ॥ १२ ॥ उपरि सहस्रबाहुरूपेणाधः कूर्मरूपेण । ते देवासुराः । तरसा बलेन ॥ १३ ॥ वर्चस्तेजः 'वर्चः स्याद्रूपतेजसोः' इति धरणिः ॥ १४ ॥ १५ ॥ तदेति पाठः सुबोधः ॥ १६ ॥ परितो धीयते धार्यते इति परिधिः "कांची कंचुकशाखोपसूर्यकाब्धिषु कथ्यते । परिधिः परिखायां च ।" इति निरुक्तिः । कनकमिव परिधिर्यस्येति कन

निर्मथ्यमानादुदधेरभूद्विषं महोल्बणं हालहलाह्वमग्रतः ॥ संभ्रांतमीनोन्मकरादिकच्छपात्तिमिंद्विपग्राहतिमिंगिलाकुलात् ॥ १८ ॥ तदुग्रवेगं दिशि दिश्युपर्यधो विसर्पदुत्सर्पदसह्यमप्रति ॥ भीताः प्रजा दुद्रुवुरंग सेश्वरा अरक्ष्यमाणाः शरणं सदाशिवम् ॥ १९ ॥ विलोक्य तं देववरं त्रिलोक्या भवाय देव्याऽभिमतं मुनीनाम् ॥ आसीनमद्रावपवर्गहेतोस्तपो जुषाणं स्तुतिभिः प्रणेमुः ॥ २० ॥ प्रजापतय ऊचुः ॥ देवदेव महादेव भूतात्मन्भूतभावन ॥ त्राहि नः शरणापन्नांस्त्रैलोक्यदहनाद्विषात् ॥ २१ ॥

कचा यस्य स तथा । जैत्रैर्जिष्णुभिः । दंदशूकं सर्पम् । मथ्ना मंदराख्येन मथ्नन् प्रतिगिरिः प्रतिद्वंद्वी पर्वतः ॥ १७ ॥ हालाहलमित्याह्वा नाम यस्य । संभ्रांता मीना उद्गता मकरादयश्च यस्मिंस्तस्मात् । तिमयो मत्स्यास्तदादिभिराकुलाच्च ॥ १८ ॥ तद्विषम् । अप्रति अप्रतिमं प्रतिक्रियाशून्यमिति वा । कुतः । उग्रो वेगो यस्य । तदेवाह दिशिदिशीति । दिशिदिशि सर्वासु दिक्षु विसर्पत् विसारि । यद्वा उग्रा वेगा रोमांचस्वेदादयो यस्मादत एवासह्यवीर्यं विलोक्य भीता अन्येन केनाप्यरक्ष्यमाणाः सदाशिवं शरणं दुद्रुवुर्जग्मुः॥ १९ ॥त्रिलोक्या भवाय उद्भवाय देव्या सहाद्रौ कैलासे आसीनं तथाऽपि मुनीनामभिमतं तेषामेवापवर्गाय तपो जुषाणम् ॥ २० ॥ " निर्गुणं सगुणं चैव शिवं हरि

कस्य परिधिर्यस्येति वा । कांचीकंचुकयोर्ग्रहणमत्र । यद्वा—विशिष्टो द्योतो दीप्तिर्ययोस्ते विद्योते कुंडले कर्णयोर्विद्योते कर्णविद्योते ताभ्यां विद्योतते दीप्यते इति कर्णविद्योतविद्युत् । 'कचो रोम्णि च जीवजे' इति धरणिः । कचा रोमाणि । अथो सुधोत्पत्त्यभावानंतरम् । धृताद्रिः कूर्मरूपेण वा ॥ १७ ॥ " हालाहलं हालहलं तथैव च हलाहलम् " इति द्विरूपकोशात् । वीरुदादिषु विषस्यामृतस्य च सत्त्वात्प्रथमं मंथनेन विषभाग एव पृथक्कृत इति ज्ञेयम् । संभ्रांताः केयं विपत्तिरागतेत्याविग्नाः मीनादयो यस्मिंस्तस्मात् । उन्मकरो उत्कृष्टमकरः । तिमिः शतयोजनो मत्स्य इति । द्विपोऽप्यत्र जलजीव एव न तु हस्ती तन्मध्यपतितन्यायेन । ॥ १८ ॥ तद्विषम् । तदेवोग्रवेगत्वमेव । तत्रोग्रवेगकल्पने । तदाधारेऽपि तत्प्रसंगादाह—यद्वेति । अत एवोग्रवेगवत्वादेव । उपसर्पणं च शनैरेव ज्ञेयं शीघ्रत्वे झटिति सृष्टिनाशापत्तेः । प्रजाश्चात्र देवासुरा एव ग्राह्याः साधारणानां झटिति कैलासगत्यसंभवात् । अत्र भगवता चंद्रमौलये तादृशकीर्त्तिं दातुं स्वयं विषात्प्रजा न रक्षिता इति ज्ञेयम् ॥ १९ ॥ अभिमतम्मान्यम् । तेषामेव मुनीनामेव । तच्छिक्षणार्थं तद्दृष्ट्वा तेषां तत्र प्रवृत्तेर्मोक्षसंभवात् । "आत्मविद्या तपोमूलम्" इत्यादिश्रुतेः "तपसैव परं ज्योतिरंजसा विंदते पुमान्" इति स्मृतेश्च ॥ २० ॥ हरिपराक्रमैः विष्णोः पराक्रमैः पालनादिरूपैः । तयोर्हरिहरयोरंतरं भेदं प्रजेशाना दक्षादयः । हरिपराक्रमैरित्युक्तेर्हरेरेव मूलत्वमायातमत एव यत्तदन्तरमस्ति तदपि स्तुतितात्पर्यान्नामन्यतेत्यायाति । स्तुतिश्च 'महिम्ना स्तूयमाना हि देवा वीर्येण वर्द्धते' इति वैदिकन्यायेन कालकूटनाशार्थैव श्रीहरमूलत्वं तु श्रीशिवेनैव वक्ष्यते "पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः । प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ॥ " इति। नवमेऽपि "वयं न तात प्रभवाम भूम्नि यस्मिन्परेऽन्येप्यजजीवकोशाः । भवंति कालेन भवंति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ॥" इति ।"एते वयं यस्य वशे महात्मनः स्थिताः शकुंता इव सूत्रयंत्रिताः" इति। पंचमेपि। देवा एतद्विषाद्रक्षणेऽशक्ता अतस्त्वां देवदेवं वयं प्रपन्ना इत्याहुः—देव देवेति । देवानामपि देवोसीत्यभिप्रायः। ननु देवदेवा इंद्राद्यन्येऽपि संतीत्यत आहुर्महादेवेति । न हि त्वत्तो महान्कश्चिद्देवोस्तीत्यभिप्रायः । तत्र हेतुः—भूतानामाकाशादीनामात्मा धारकस्त्वमेव "परमे व्योमन्सर्वा भूतानि" इति श्रुतेः। तत्रापि हेतुः—भूतानि भावयत्युत्पादयति स्वस्मादिति भूतभावनोपि त्वमेवासि "तस्माद्वा एतस्मादात्मन आकाशः संभूतः" इत्यादिश्रुतेः । चक्रवर्त्ती तु—हे महादेव त्राहि। ननु महादेवो न त्रायते किं तु संहरति

त्वमेकः सर्वजगत ईश्वरो बंधमोक्षयोः ॥ तं त्वामर्चंति कुशलाः प्रपन्नार्तिहरं गुरुम् ॥ २२ ॥ गुणमय्या स्वशक्त्याऽस्य सर्गस्थित्यप्ययान्विभो ॥ धत्से यदा स्वदृग्भूमन्ब्रह्मविष्णुशिवाभिधाम् ॥ २३ ॥ त्वं ब्रह्म परमं गुह्यं सदसद्भावभावनः ॥ नानाशक्तिभिराभातस्त्वमात्मा जगदीश्वरः॥२४॥ त्वं शब्दयोनिर्जगदादिरात्मा प्राणेंद्रियद्रव्यगुणस्वभावः ॥ कालः क्रतुः सत्यमृतं च धर्मस्त्वय्यक्षरं यत्त्रिवृदामनंति ॥ २५ ॥ अग्निर्मुखं तेऽखिलदेवतात्मा क्षितिं विदुर्लोकभवांघ्रिपंकजम् ॥ कालं गतिं तेऽखिलदेवतात्मनो दिशश्च कर्णौ रसनं जलेशम् ॥ २६ ॥

पराक्रमैः ॥ स्तुवंतस्तु प्रजेशाना नामन्यंतांतरं तयोः ॥१॥"॥ २१ ॥ २२ ॥ नन्वेवंभूतो विष्णुरिति प्रसिद्धं तत्राहुः । गुणमय्येति । अस्य जगतो यदा सर्गादीन्धत्से तदा हे भूमन्स्वदृक् स्वतःसिद्धज्ञानस्त्वं ब्रह्मादिसंज्ञां धत्से ॥ २३ ॥ तत्र हेतुः । त्वं ब्रह्मेति । सदसतो भावान्देवतिर्यगादिरूपान्भावयतीति तथा सृज्यं तु त्वद्व्यतिरिक्तं नास्तीत्याहुः । आत्मैव त्वं नानाशक्तिभिर्जगद्रूपेणाभातस्तस्मादीश्वरः ॥ २४ ॥ स्वतःसिद्धज्ञानत्वमुपपादयंतो जगदात्मना आभानप्रकारमाहुः । त्वं शब्दस्य वेदस्य योनिरतः स्वतःसिद्धज्ञानः । त्वं जगदादिर्महत्तत्त्वम् । आत्मा चाहंकारः । कथंभूतः । प्राणेंद्रियद्रव्याणां कारणभूता गुणा यस्य । राजसादित्रिविध इत्यर्थः । स्वभावादयश्च त्वमेव । तत्र क्रतुः संकल्पः सत्यमृतं चेति यो धर्मः स च त्वम् । महदादिस्वरूपत्वे हेतुः त्रिवृत् त्रिगुणात्मकं यदक्षरं प्रधानं त्वयि त्वदाश्रयं तदामनंति । यद्वा एवंभूते त्वयि त्रिवृदक्षरं प्रणवं प्रकाशकमाहुरित्यर्थः॥२५॥अखिलदेवतात्मा । "अग्निः सर्वा देवता" इति श्रुतेः । सोऽग्निस्ते मुखम् । हे लोकभव । द्वितीयांतेषु विदुरित्यस्य संबंधः॥२६॥

संहारावतारत्वात्तत्राहुः—भूतात्मन्निति । भूतानि चेतयसि हे भूतभावन भूतानि पालयस्येव । एतादृक्तु विष्णुरेव तमेव शरणं यातेति तत्राहुस्त्वमेकः । न हीश्वरा बहवः संत्यतस्त्वं विष्णुश्चैक एव मायागुणस्पर्शास्पर्शाभ्यामेव भेद इति भावः ॥ २१ ॥ "बंधको भवपाशेन भवपाशाच्च मोचकः । विष्णुरेव परं ब्रह्म" इति स्कांदोक्तेः । कुशलाः शास्त्ररहस्यज्ञाः । गुरुं हितोपदेष्टारम् ॥ २२ ॥ अत्राक्षिपति—नन्विति । एवंभूतो भवबंधमोक्षकर्त्ता । तत्राक्षेपे । भूमन्निति । त्वमेव तत्तद्रूपेण प्रतीयसे न त्वत्तो विष्णुर्भिन्नोऽस्तीति भावः ॥ २३ ॥ तत्र विष्णुभिन्नत्वे । भावयति उत्पादयति वर्द्धयति संहरति चेति सदसद्भावभावनः "यतो वा इमानि भूतानि जायंते" इत्यादिश्रुतेः । सृज्यं विश्वं नानाशक्तिभिः सत्त्वादिभिः । आभातस्त्वमेव जगत् ईश्वरः मायाशक्तिमान् 'मायिनं तु महेश्वरम्' इति श्रुतेः ॥ २४ ॥ योनिः कारणम "अस्य वै महतो भूतस्य निःश्वसितं यदृग्वेदः—" इत्यादिश्रुतेः । अतो वेदकारणत्वात् । द्रव्यपदं महाभूतार्थकम् । इत्यर्थ इति । गुणत्रयकारणीभूतप्रधानमाश्रयोऽपि त्वमेवेति भावः । प्राणेंद्रियेत्याद्युक्त्यैव प्रधानाश्रयत्वमागतं पुनस्तत्कथने पुनरुक्तिसंभवादाह—यद्वेति । एवंभूते वेदादिकारणीभूते । त्रिवृत् अकारोकारमकाररूपेण त्रिप्रकारम् । इत्यर्थ इति । "य ॐकारः स प्रणवो यः प्रणवः स प्राणो यः प्राणः स सर्वव्यापी सोऽनंतो योनंतस्तत्तारं यत्तारं तच्छुक्लं यच्छुक्लं तत्सूक्ष्मं यत्सूक्ष्मं तद्वैद्युतं यद्वैद्युतं तत्परं ब्रह्म यत्परं ब्रह्म स एको य एकः स रुद्रो यो रुद्रः स ईशानो य ईशानः स भगवान्महेश्वरः स परमशिवः" इत्यादिश्रुतेः ॥ २५ ॥ लोकानां भव उत्पत्ति

नाभिर्नभस्ते श्वसनं नभस्वान्सूर्यश्च चक्षूंषि जलं स्म रेतः ॥ परावरात्माश्रयणं तवात्मा सोमो मनो द्यौर्भगवञ्छिरस्ते ॥ २७ ॥ कुक्षिः समुद्रा गिरयोऽस्थिसंघा रोमाणि सर्वौषधिवीरुधस्ते ॥ छंदांसि साक्षात्तव सप्त धातवस्त्रयीमयात्मन्हृदयं सर्वधर्मः ॥ २८ ॥ मुखानि पंचोपनिषदस्तवेश यैस्त्रिंशदष्टोत्तरमंत्रवर्गः ॥ यत्तच्छिवाख्यं परमार्थतत्त्वं देवः स्वयंज्योतिरवस्थितिस्ते ॥ २९ ॥ छाया त्वधर्मोर्मिषु यैर्विसर्गो नेत्रत्रयं सत्त्वरजस्तमांसि ॥ सांख्यात्मनः शास्त्रकृतस्तवेक्षा छंदोमयो देवऋषिः पुराणः ॥ ३० ॥ न ते गिरित्राखिललोकपालविरिंचवैकुंठसुरेंद्रगम्यम् ॥ ज्योतिः परं यत्र रजस्तमश्च सत्त्वं न यद्ब्रह्म निरस्तभेदम् ॥ ३१ ॥

परे अवरे च ये आत्मानो जीवास्तेषामाश्रयस्तवात्माऽहंकारः ॥ २७ ॥ त्रयीमयात्मन्वेदत्रयमूर्ते ॥ २८ ॥ पंचोपनिषदस्तत्पुरुषाघोरसद्योजातवामदेवेशानरूपा मंत्राः । यैर्मुखैरष्टोत्तरत्रिंशन्मंत्राणां वर्गः । तेषामेव मंत्राणां पदच्छेदेनाष्टोत्तरत्रिंशत्कलात्मका मंत्रा इत्यर्थः । अवस्थितिरुपरतावस्था ॥ २९ ॥ अधर्मस्योर्मिषु दंभलोभादिषु ते छाया । यैरूर्मिभिर्विसर्गः प्रतिसर्गः संहारः । यद्वा यैः सत्त्वादिभिर्विविधः सर्गस्तानि ते नेत्रत्रयम् । हे देव छंदोमय ऋषिर्वेदः स तवेक्षा ईक्षणम् । साक्षान्मनुरिति पाठे मनुर्वेदः । तमेवाह । छंदोमय इति ॥ ३० ॥ हे गिरित्र ते परं ज्योतिरखिलानां लोकपालादीनां गम्यं न भवति । कुतः । यत्र रजआदि नास्ति । किं तज्ज्योतिः ।

यस्मात्स तथा । इत्यभिप्रेत्यैवं स्वामिनोक्तं लोकभावनेति । अखिलदेवतात्मा सर्वदेवतास्वरूपः । प्रमाणमाह—अग्निरिति । जलेशं वरुणम् । रसनं रसनेंद्रियम् ॥ २६ ॥ २७ ॥ स प्रसिद्धः ॥ २८ ॥ तेषां पंचानामेव परिच्छेदेन पदच्छेदेन । इत्यर्थ इति । "तत्पुरुषाय विद्महे शांत्यै १ । महादेवाय धीमहि विद्यायै २ । तन्नो रुद्रः प्रतिष्ठायै ३ । प्रचोदयात् धृत्यै ४ । अघोरेभ्यस्तमा० ५ । अथ घोरेभ्यो मोहा० ६ । अघोरेभ्यो रक्षा० ७ । अघोरतरेभ्यो निद्रा० ८ । सर्वेभ्यः सर्वव्याध्यै ९ । सर्वसर्वेभ्यो मृत्यवे १० । नमस्तेऽस्तु क्षुधा० ११ । रुद्ररूपेभ्यस्तृष्णा० १२ । वामदेवाय रजा० १३ । ज्येष्ठाय स्वाहा० १४ । श्रेष्ठाय रत्यै १५ । रुद्राय कल्याण्यै १६ । कालाय कामा० १७ । कलविकरणाय संधिन्यै १८ । बलविकारणाय क्रिया० १९ । बलाय वृद्ध्यै २० । बलच्छाया० २१ । प्रमथनाय धात्र्यै २२ । सर्वभूतदमनाय भ्रामण्यै २३ । मनःशोषिण्यै २४ । उन्मनाय ज्वरा० २५ । सद्योजातं प्रपद्यामि सिद्ध्यै २६ । सद्योजाताय वैनमः ऋद्ध्यै २७ । भवेदित्यै २८ । अभवे लक्ष्म्यै २९ । नातिभवे मेधा० ३० । भजस्व मां कांत्यै ३१ । भव स्वधा० ३२ । उद्भवाय प्रभा० ३३ । ईशानः सर्वविद्यानां शशिन्यै ३४ । ईश्वरः सर्वभूतानाम् अभयदा० ३५ । ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्मन् ब्रह्मेष्टदा० ३६ । शिवो मे अस्तु मरीच्यै ३७ । सदाशिवः ज्वालिन्यै ३८ ।" "ईशानस्य कलाः पञ्च चतस्रः पुरुषस्य हि । अष्टौ प्रोक्ता अघोरस्य वामस्याथ त्रयोदश ॥ सद्योजातकला अष्टावष्टात्रिंशत्कला इमाः" इत्युक्तं पूर्तकमलाकरे । मुखैर्मन्त्ररूपैः । यत्तदिति वक्तुमशक्यं शिवाख्यं ब्रह्माख्यं परमार्थतत्त्वं सत्यस्वरूपं स्वयं प्रकाशम् । यद्वा यच्छिवाख्यं तत्तेवस्थितिरिति योज्यम् ॥ २९ ॥ दंभाद्या ऊर्मयो धर्मार्णवतरंगभूताः छायेत्यर्थः । विरुद्धः सर्गः विसर्गः तदेवाह—प्रतिसर्ग इति । "अंते त्वधर्महरमन्युवशासुराद्याः" इत्युक्तेः । प्रसिद्धार्थपरित्यागमसहमान आह—यद्वेति । छंदोमयो गायत्र्यादिछंदःप्रचुरः । "ऋषिर्वेदे वशिष्ठादौ दीधितौ च पुमानयम्" इत्युक्तेः । सांख्यात्मनो ज्ञानरूपस्य शास्त्रकृतो वेदोद्भावयितुः ॥ ३० ॥ तव भक्ताभीष्टदत्वात्पार्वतीप्रीतये दग्धो गिरित्रातोऽतोऽस्मानपि त्राहीत्यभिप्रायेणाह—गिरित्रेति । यत्र ज्योतिषि । सगुणमेव वस्तु गोचरी भवतीति

कामाध्वरत्रिपुरकालगराद्यनेकभूतद्रुहः क्षपयतः स्तुतये न तत्ते ॥ यस्त्वंतकाल इदमात्मकृतं स्वनेत्रवह्निस्फुलिंगाशिखया भसितं न वेद ॥ ३२ ॥ ये त्वात्मरामगुरुभिर्हृदि चिंतितांघ्रिद्वंद्वं चरंतमुमया तपसाभितप्तम् ॥ कत्थंत उग्रपरुषं निरतं श्मशाने ते नूनमूतिमविदंस्तव हातलज्जाः ॥ ३३ ॥ तत्तस्य ते सदसतोः परतः परस्य नांजः स्वरूपगमने प्रभवंति भूम्नः ॥ ब्रह्मादयः किमुत संस्तवने वयं तु तत्सर्गसर्गविषया अपि शक्तिमात्रम् ॥३४॥ एतत्परं प्रपश्यामो न परं ते महेश्वर ॥ मृडनाय हि लोकस्य व्यक्तिस्तेऽव्यक्तकर्मणः ॥ ३५ ॥ श्रीशुक उवाच ॥ तद्वीक्ष्य व्यसनं तासां कृपया भृशपीडितः ॥ सर्वभूतसुहृद्देव इदमाह सतीं प्रियाम् ॥ ३६ ॥

यन्निरस्तभेदं ब्रह्म ॥ ३१ ॥ कामश्चाध्वरश्च दक्षयज्ञस्त्रिपुरादयश्च ये अनेकभूतद्रुहस्तान् क्षपयतः संहरतस्ते तत्कर्म स्तुतये न भवति । अत्यल्पमेतदित्यर्थः । गरक्षपणस्याप्यवश्यंभावित्वेन सिद्धवन्निर्देशः । स्तुतयेऽलं न भवतीत्यत्र हेतुः । यस्तु भवान्स्वनेत्रवह्निविस्फुलिंगस्य शिखयेदं जगद्भसितं भस्मसाज्जातं न वेद नालोचयत्यपि ॥ ३२ ॥ तदेवं नित्यं परानुग्रहव्यग्रं त्वां ये निंदंति तेऽतिमूर्खा इत्याहुः । ये तु उमया सह चरंतं तस्यां नितरां रतं कामिनं कत्थंते प्रलपंति तथा श्मशाने चरंतमुग्रं क्रूरं परुषं च हिंस्रं कत्थंते । कथंभूतम् । आत्मारामाश्च ते गुरवो विश्वहितोपदेष्टारस्तैर्हृदि चिंतितमंघ्रिद्वंद्वं यस्य तथाभूतमपि तपसाऽभितप्तमपि । ते नूनं तवोतिमविदन्निति काकुः । त्वल्लीलां नैव विदुरित्यर्थः । अतो हातलज्जास्त्यक्तत्रपाः । कथमात्मारामैः सेवितचरणयुगलस्य ते कामित्वं संभवति कथं वा तपसाऽभितप्तस्य शांतस्योग्रत्वं परुषत्वं वा संभवतीत्यविचार्यैव प्रलापादित्यर्थः ॥ ३३ ॥ आस्तां तावन्निंदकानां वार्ता महांतोऽपि तव तत्त्वं न जानंतीत्याहुः । तत्तस्मात्तव स्वरूपस्य गमने ज्ञाने ब्रह्मादयोऽपि न समर्थाः संस्तवने तु कुतः शक्ताः स्युस्तत्र वयं कथं प्रभवेम । यतस्तेषां सर्गेऽत्यंतार्वाचीनाः । तथापि यदेतत्तव स्तवनमेतदात्मशक्तिपरिमितमात्रमित्यर्थः ॥ ३४ ॥ तदेवाहुः एतत्परमिति । न परं रूपं तथाऽपि त्वद्दर्शनादेव कृतार्था वयमित्याहुः । मृडनाय हीति । अव्यक्तकर्मणः अतर्क्यलीलस्य ॥ ३५ ॥ ३६ ॥

भावः ॥ ३१ ॥ कालगरं मृत्युकरं विषम् । आदिनांधकादिग्रहः । यद्वा—कालो मृत्युः मृत्युंजयाभिधानत्वात् । इत्यर्थ इति । यथा त्रैलोक्यांधकारहर्तू रवेर्गृहांधकारशमकत्वं न स्तुतिस्तद्वदिति भावः । भाविकथनं त्रिकालज्ञत्वाद्देवानामित्याह—गरक्षपणेत्यादि । नालोचयति तुच्छत्वदृष्ट्येति भावः । कालगरौ दैत्यौ वा कालो मृत्युः गरं विषं वा । तस्यावश्यसंहार्यत्वेन सिद्धवन्निर्देशः ॥ ३२ ॥ गुरवो नारदादयः । तथाभूतमपि विश्वगुरुध्यातांघ्रिद्वंद्वमपि । लोकसंग्रहार्थं तपोरतमपि । इत्यर्थ इति । त्वन्निंदका खेरुलूका इव तव प्रभावं न जानंतीति भावः । अतोऽज्ञत्वात् । इत्यर्थ इति । सारमेयाः साधु पथिकमित्र ते केवलं भषंतीति भावः ॥ ३३ ॥ दुर्ज्ञेयत्वत्वमाहुः—आस्तामित्यादिना । यतो दुर्ज्ञेयोऽसि तत्तस्मात् । सदसतोः कार्यकारणयोः । परतः परायाः प्रकृतेरपि परस्य "अव्यक्तात्पुरुषः परः" इति श्रुतेः । अंजो याथार्थ्येन भूम्नस्ते ज्ञानं विना स्तवनासंभवदाह—किमुतेति । तत्र त्वयि । यतो हेतोः तेषां । ब्रह्मादीनाम् । अत्यंतार्वाचीना अतीवांतरिताः ब्रह्मसर्गो मरीचिस्तत्सर्गः कश्यपस्तद्विषयास्तत उद्भूता इति गणनयेति । यद्यपि तव प्रभावमजानंतो वयं तथापीति । इत्यर्थ इति । "नभः पतंत्यात्मसमं पतत्रिणः" इति न्यायमाश्रित्यास्मत्स्तुतिर्भक्तिप्रकटनार्थेति भावः ॥ ३४ ॥ तदेवात्मशक्तिमात्रत्वमेव एतत्पक्षमेव ते रूपं परं वागाद्यगोचरं नेति यद्यपि पररूपादर्शनमस्माकमस्ति तथापि सगुणरूपदर्शनादेव अव्यक्तकर्मणः कर्मपारतंत्र्यरहितस्य ते व्यक्तिर्देहप्रकटनम् । तथा च विषसंहारेण सर्वलोकान्सुखयेति भावः 'मृड—सुखने । धातुः ॥ ३५ ॥ तासां प्रजानाम् । तद्विषोद्भूतम् ।

श्रीशिव उवाच ॥ अहो बत भवान्येतत्प्रजानां पश्य वैशसम् ॥ क्षीरोदमथनोद्भूतात्कालकूटादुपस्थितम् ॥ ३७ ॥ आसां प्राणपरीप्सूनां विधेयमभयं हि मे ॥ एतावान्हि प्रभोरर्थो यद्दीनपरिपालनम् ॥ ३८ ॥ प्राणैः स्वैः प्राणिनः पांति साधवः क्षणभंगुरैः ॥ बद्धवैरेषु भूतेषु मोहितेष्वात्ममायया ॥ ३९ ॥ पुंसः कृपयतो भद्रे सर्वात्मा प्रीयते हरिः ॥ प्रीते हरौ भगवति प्रीयेऽहं सचराचरः ॥ तस्मादिदं गरं भुंजे प्रजानां स्वस्तिरस्तु मे ॥ ४० ॥ श्रीशुक उवाच ॥ एवमामंत्र्य भगवान्भवानीं विश्वभावनः ॥ तद्विषं जग्धुमारेभे प्रभावज्ञाऽन्वमोदत ॥ ४१ ॥ ततः करतलीकृत्य व्यापि हालाहलं विषम् ॥ अभक्षयन्महादेवः कृपया भूतभावनः ॥ ४२ ॥ तस्यापि दर्शयामास स्ववीर्यं जलकल्मषः ॥ यच्चकार गले नीलं तच्च साधोर्विभूषणम् ॥ ४३ ॥ तप्यंते लोकतापेन साधवः प्रायशो जनाः ॥ परमाराधनं तद्धि पुरुषस्याखिलात्मनः ॥ ४४ ॥ निशम्य कर्म तच्छंभोर्देवदेवस्य मीढुषः ॥ प्रजा दाक्षायणी ब्रह्मा वैकुंठश्च शशंसिरे ॥ ४५ ॥

मत्प्रभावमविचार्य विषपाने प्रवृत्तं मां कथंचिदियं प्रिया वारयेदिति शंकया तामनुज्ञापयन्नाह अहो बतेति सार्धैश्चतुर्भिः । वैशसं दुःखम् ॥ ३७ ॥ प्राणपरीप्सूनां प्राणरक्षणेच्छूनाम् । मे मया । प्रभोः समर्थस्य । अर्थः कार्यम् ॥ ३८ ॥ किं च बद्धवैरेषु भूतेषु परस्परं जिघांसत्सु ॥ ३९ ॥ कृपयतः कृपां कुर्वतः पुंसः । मे मत्तः स्वस्तिः शोभना सत्ता । सुखेन जीवितमस्त्वित्यर्थः ॥ ४० ॥ जग्धुमत्तुम् ॥ ४१ ॥ करतलीकृत्य करतलपरिमितमात्रं कृत्वा ॥ ४२ ॥ जलकल्मषो जलदोषो विषम् । यस्मात्तं गले नीलं चकार । साधोः कृपालोः ॥ ४३ ॥ ४४ ॥ ४५ ॥

व्यसनं दुःखम् । इदं वक्ष्यमाणम् । गृहस्थैर्भार्यया सह संमंत्र्यैव सर्वं कर्म कर्त्तव्यमिति द्योतयति—सतीमिति ॥ ३६ ॥ तदेव स्फुटयति ॥ ३७ ॥ ३८ ॥ साधुवृत्तमाह—किञ्चेति । "अपकारिषु यः साधुः स साधुः सद्भिरुच्यते" इत्युक्तिमाश्रित्याह—बद्धवैरेष्विति ॥ ३९ ॥ कृपां कर्त्तुः फलमाह—पुंस इति । 'वासुदेवः सर्वम्' इति भगवतोक्तेः । सचराचरोऽहमपि तत्प्रीत्यैव प्रीतो भवामीत्यर्थः ॥ ४० ॥ तत् समुद्रमथनोद्भूतम् । प्रभावज्ञा संसारविषहर्तुरेतदकिंचित्करमिति जानती । इत्यर्थ इति । विषे पीते एवैते जीविष्यंति नान्यथेति भावः ॥ ४१ ॥ ततो भवान्यनुमोदोत्तरम् । स्वप्रभावेण व्याप्यपि विषं करतलीकृत्य करतलस्थित्यर्हं कृत्वा हलहलेन पुनःपुनऽश्चालनेनार्थान्माथनेन जातं हालाहलम् । अणि पूर्वपदे वृद्धिः उत्तरवर्णदीर्घस्तु पृषोदरादित्वात् 'हल—विलेखने' धातुः ॥ ४२ ॥ तस्यापि शंकरस्यापि । तं हरम् । गले इति सप्तम्या अलुक् कंठेकालइतिवत् । तच्च नीलत्वं भूषणमेव न तु दूषणं महतां दूषणमपि भूषणमिति भावः ॥ ४३ ॥ प्रायश इत्युक्तेः प्रलयकाले सर्वलोकतापेपि तापाभावो द्योतितः । एतेन मृदुलतरत्वं सचेतस उक्तं तदुक्तम् "मृदुलं किमु वस्तु हे सखे नवनीतादपि सज्जनस्य हृत् । तदिदं द्रवते स्वतापनात्परतापाद् द्रवते सतां मनः ॥" इत्यभियुक्तैः । तद्धि परतापेन तपनं हि ॥४४॥ मीढुषोऽखिलाभिलषितसेक्तुः । प्रजा जगत् । दाक्षायणी सती । यद्वा—प्रजाविशेषणम् । तद्विषभक्षणरूपम् । निशम्यालोच्य ह्रस्वत्वमार्षम् । शशंसिरे इत्युक्ते रुद्रयशोर्थं विष्णुना विषं न पीतम् "रुद्रस्य यशसे विष्णुर्न विषं पीतवान् स्वयम्" इति ग्रंथांतरोक्तेः ॥ ४६ ॥

प्रस्कन्नं पिबतः पाणेर्यत्किंचिज्जगृहुः स्म तत् ॥ वृश्चिकाहिविषौषध्यो दंदशूकाश्च येऽपरे ॥ ४६ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे अमृतमथने शिवकृतगरादननिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥ श्रीशुक उवाच ॥ पीते गरे वृषांकेण प्रीतास्तेऽमरदानवाः ॥ ममंथुस्तरसा सिंधुं हविर्धानी ततोऽभवत् ॥ १ ॥ तामग्निहोत्रीमृषयो जगृहुर्ब्रह्मवादिनः ॥ यज्ञस्य देवयानस्य मेध्याय हविषे नृप ॥ २ ॥ तत उच्चैःश्रवा नाम हयोऽभूच्चंद्रपांडुरः ॥ तस्मिन्बलिः स्पृहां चक्रे नेंद्र ईश्वरशिक्षया ॥ ३ ॥ तत ऐरावतो नाम वारणेंद्रो विनिर्गतः ॥ दंतैश्चतुर्भिः श्वेताद्रेर्हरन्भगवतो महिम् ॥ ४ ॥ कौस्तुभाख्यमभूद्रत्नं पद्मरागो महोदधेः ॥ तस्मिन्हरिः स्पृहां चक्रे वक्षोऽलंकरणे मणौ ॥ ५ ॥ ततोऽभवत्पारिजातः सुरलोकविभूषणम् ॥ पूरयत्यर्थिनो योऽर्थैः शश्वद्भुवि यथा भवान् ॥ ६ ॥ ततश्चाप्सरसो जाता निष्ककंठ्यः सुवाससः ॥ रमण्यः स्वर्गिणां वल्गुगतिलीलावलोकनैः ॥ ७ ॥

प्रस्कन्नं गलितम् । अपरे च ये सविषास्तेऽपि जगृहुः । अनेन विषस्य तीव्रतोक्ता ॥ ४६ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे मथ्यमानेऽब्धौ लक्ष्म्या विष्णौ वृतेऽसुरैः ॥ धन्वंतरेर्हृते सोमे मोहिन्युद्भव ईर्यते ॥ १ ॥ हविर्धानी सुरभिः ॥ १ ॥ देवयानस्य ब्रह्मलोकमार्गप्रापकस्य यज्ञस्य संबंधिने हविषे ॥ २ ॥ ईश्वरशिक्षया प्रागेव कृतया ॥ ३ ॥ भगवतो यः श्वेताद्रिः कैलासस्तस्य महिं महिमानम् । दंतैः शिखरकल्पैर्हरंश्चंद्रवत्पांडुर इत्यनुषंगः ॥ ४ ॥ ॥ ५ ॥ ६ ॥ वल्गुभिर्गत्यादिभिः स्वर्गिणां रमण्यो रतिकर्त्र्यः ॥ ७ ॥

विषौषध्यो लांगलीप्रभृतयः । अनेन वृश्चिकादिग्रहणकथनेन । तीव्रता तीक्ष्णता॥४६॥इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥ धन्वंतरेः सकाशात् (१)। हविर्घृतं धीयते निधीयतेऽस्यामिति हविर्धानी कामधेनुः । ततो मथनात् ॥१॥ आग्निहोत्रीमग्निहोत्रसाधनभूताम् । अग्नौ हूयते स्रुवादिना दीयते इत्यग्निहोत्रं घृतं तदस्यामस्तीत्याग्निहोत्रीति व्युत्पत्तेः । ज्योत्स्नादित्वादण् । मेध्याय शुद्धाय ॥२॥ ततोऽनंतरम् । चंद्रपांडुरः शशिवच्छ्वेतः। तस्मिन् हये । ईश्वरस्य हरेः शिक्षया 'लोभः कार्यो न वो जातु' इत्यादिरूपया॥३॥ततस्तदनु भगवतो महादेवस्य॥४॥कुं भूमिं स्तुभ्नाति रुणद्धि निजमौल्येनेति कुस्तुभस्स एव कौस्तुभः। यद्वा—कौ भूमौ स्तूयते इति कौस्तुर्विष्णुस्तत्र भातीति कौस्तुभः।यद्वा—कुं स्तुभ्नाति जलेन रुणद्धीति कुस्तुभः समुद्रस्तस्मादाविर्भूतः कौस्तुभः स आख्या यस्य तत्तथा। पद्म इव तन्मध्यमिव रागो यस्य स तथा पुंस्त्वमजहल्लिंगत्वात् । "पद्मरागः पीतमणौ पीते वर्णेऽथ सारसे" इत्यभिधानात् । यद्वा—पद्मरागो रत्नांतरम् । तस्मिन् कौस्तुभे॥५॥ततस्तदनु पारिजातः कल्पवृक्षः। यः पारिजातः अर्थिनो याचकान् । अर्थैरभिलषितैः॥६॥"निष्कोऽस्त्री साष्टहे

ततश्चाविरभूत्साक्षाच्छ्री रमा भगवत्परा ॥ रंजयंती दिशः कांत्या विद्युत्सौदामनी यथा ॥ ८ ॥ तस्यां चक्रुः स्पृहां सर्वे ससुरासुरमानवाः ॥ रूपौदार्यवयोवर्णमहिमाक्षिप्तचेतसः ॥ ९ ॥ तस्या आसनमानिन्ये महेंद्रो महदद्भुतम् ॥ मूर्तिमत्यः सरिच्छ्रेष्ठा हेमकुंभैर्जलं शुचि ॥ १० ॥ आभिषेचनिका भूमिराहरत्सकलौषधीः ॥ गावः पंच पवित्राणि वसंतो मधुमाधवौ ॥ ११ ॥ ऋषयः कल्पयांचक्रुरभिषेकं यथाविधि ॥ जगुर्भद्राणि गंधर्वा नट्यश्च ननृतुर्जगुः ॥ १२ ॥

सुदामा पर्वतस्तत्रैकस्यां दिशि जाता सौदामनी । स्फटिकादिमयगिरिशृंगेष्वधिकं स्फुरंती विद्युदिव कांत्या दिशो रंजयंती श्रीः संपत्साक्षान्मूर्तिधारिणी सती सैव भगवत्परा रमा आविरभूदित्यर्थः॥८॥तस्या रूपादिमहिम्ना आक्षिप्तं चेतो येषाम् ॥९॥ भगवद्वक्षसि स्थितया श्रिया विलोकितानां सुराणां यथा पूर्वं संपत्प्राप्तिमसुराणां च तद्विपर्ययं वक्तुमभिषेकादिमहोत्सवपूर्वकं ब्रह्मादिपरिहारेण भगवत्प्राप्तिप्रकारमाह तस्या आसनमित्यादिना।अथासीद्वारुणीत्यतः प्राक्तनेन ग्रंथेन ॥ १ ० ॥ आभिषेचनिका अभिषेकोचिताः पंच पवित्राणि पंचगव्यानि । मधुमाधवौ चैत्रवैशाखभवं फलपुष्पादि । पाठांतरेऽपि द्वंद्वैक्ये स एवार्थः । मधुमासे भवं मध्विति वा ॥ १ १ ॥ अभिषेकमभिषेकोचितं विधिम् ।

मशते दीनारकर्षयोः । वक्षोऽलंकरणे हेमपात्रे हेमपलेऽपि च ॥'' इति मेदिनी ॥ ७ ॥ इत्यर्थ इति । सर्वसंपदां व्यक्तिर्यत्कटाक्षपाताद्भवति सा हरिप्रीतये समुद्रादाविरासेति भावः । श्रीस्संपत्तिः साक्षान्मूर्त्तिमतीत्यर्थः । रमा हरिं रमयंती हरेः प्रेयसीरूपा च प्रादुर्भूता कीदृशी भगवती चासौ परा पूर्वस्याः सकाशाच्छ्रेष्ठेति पूर्वस्या एतद्विभूतित्वमिति भावः । पूर्वा यथा विद्युत् उत्तरा यथा सौदामनी स्फटिकमयसुदामपर्वतभवत्वात्पूर्वस्याः सकाशादधिककांतिमती कांत्येति । संपत्तिपक्षे कमिरिच्छार्थको धातुः आभेलाषेणेत्यर्थः । दिशस्तस्या दिग्वर्त्तिनो जनान्रंजयंती संपत्तिरस्माकं भूयादिति रागवतीः कुर्वती । पक्षे दिशः पूर्वाद्याः कांत्या स्वरोचिषा रंजयंती ॥ ८ ॥ तस्यां लक्ष्म्याम् । वा–तस्यां पूर्वस्याम् संपद्रूपायामेव स्पृहां न तूत्तरस्याम् ''तस्याः श्रियस्त्रिजगतो जनको जनन्याः'' इति वक्ष्यमाणवाक्येन तस्या जगज्जननीत्वज्ञापनात् । किञ्च–तस्या अपि रूपादीनां महिना महिम्ना मा आक्षिप्तानि नैत्रासक्तानि चेतांसि येषां ते यतस्ते तस्याः सकाशाद्राज्यभोगादिप्रेप्सव इति भावः ॥ ९ ॥ तस्या रमायाः । सरिच्छ्रेष्ठा गंगाद्याः गंगादिजलस्य स्वभावशुचित्वाच्छुचि उज्ज्वलम् । तद्विपर्ययं संपदभावम् ॥ १० ॥ अभिषेकोचिताः । सर्वौषध्याद्या विष्णुक्रांताद्याश्च । ताश्च–''कुष्ठं मांसी हरिद्रे द्वे मुरा शैलेयचंदनम् । वचाचंपकमुस्ताश्च सर्वौषध्यो दश स्मृताः ॥ विष्णुक्रांता सहदेवा तुलसी च शतावरी । मूलानीमानि गृह्णीयात्सर्वाभावे विशेषतः.॥'' इत्याद्युक्तेः गाव इति बहुत्वोक्तेः । ''पयः कांचनवर्णाया: नीलायाश्च घृतं तथा । दधि च कृष्ण वर्णायाः श्वेताया गोमयं तथा ॥ गोमूत्रं ताम्रवर्णाया इत्येतत्पंचगव्यकम् ।'' इति स्मृतेः । पञ्चवर्णास्ता ग्राह्याः । पाठांतरेपि 'मधुमाधवम्' इति पाठेपि । 'वृत्तेरवृत्तिर्न्याय्या' इति न्यायेन पदद्वयम् । पक्षे–माधवं मधुमासे चैत्रे भवम् । मधु मकरंदम् ''मधुश्चैत्रे मधुर्दैत्ये मधुपुष्परसं विदुः'' इत्यनेकार्थमंजर्याम् ''कृत्तद्धितसमासैकशेषसनाद्यंतधातुरूपाः पञ्च वृत्तयः'' इति शाब्दिकाः ॥ ११ ॥ १२ ॥

मेघा मृदंगपणवमुरजानकगोमुखान् ॥ व्यनादयञ्छंखवेणुवीणास्तुमुलनिस्वनान् ॥ १३ ॥ ततोऽभिषिषिचुर्देवीं श्रियं पद्मकरां सतीम् ॥ दिगिभाः पूर्णकलशैः सूक्तवाक्यैर्द्विजेरितैः ॥ १४ ॥ समुद्रः पीतकौशेयवाससी समुपाहरत् ॥ वरुणः स्रजं वैजयंतीं मधुना मत्तषट्पदाम् ॥ १५ ॥ भूषणानि विचित्राणि विश्वकर्मा प्रजापतिः ॥ हारं सरस्वती पद्ममजो नागाश्च कुंडले ॥१६॥ ततः कृतस्वस्त्ययनोत्पलस्रजं नदद्द्विरेफां परिगृह्य पाणिना ॥ चचाल वक्त्रं सुकपोलकुंडलं सव्रीडहासं दधती सुशोभनम् ॥ १७ ॥ स्तनद्वयं चातिकृशोदरी समं निरंतरं चंदनकुंकुमोक्षितम् ॥ ततस्ततो नूपुरवल्गुसिंजितैर्विसर्पती हेमलतेव सा बभौ ॥ १८ ॥ विलोकयंती निरवद्यमात्मनः पदं ध्रुवं चाव्यभिचारिसद्गुणम् ॥ गंधर्वयक्षासुरसिद्धचारणत्रैविष्टपेयादिषु नान्वविंदत ॥ १९ ॥ नूनं तपो यस्य न मन्युनिर्जयो ज्ञानं क्वचित्तच्च न संगवर्जितम् ॥ कश्चिन्महांस्तस्य न कामनिर्जयः स ईश्वरः किं परतो व्यपाश्रयः ॥ २० ॥

नट्यो नटानां स्त्रियः ॥ १२ ॥ शंखवेणुवीणाश्च व्यनादयन् । तुमुलो निस्वनो येषां तान्मृदंगादीन् ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ पदमाश्रयं पतिरूपम् । ध्रुवं नित्यमव्यभिचारिणो नित्याः संतो गुणा यस्मिंस्तं नान्वविंदत । क्वचिदपि कस्यचिद्दोषस्य सद्भावात् ॥ १९ ॥ तदेवाह नूनमिति त्रिभिः । मन्युनिर्जयो

मेघा देवाः 'मेघो देवाभ्रवारिषु' इति निरुक्तिः । यद्वा—मेघा एव तत्तद्वाद्यानुकारिध्वानिं चक्रुरित्यर्थः ॥१३॥ दिगिभा ऐरावताद्याः । आकाशगंगादिजलपूर्णकुंभैः । 'जलैश्चाकाशगंगायाः' इत्याद्यन्यत्रोक्तेः ॥१४॥ पीतेति । अभिषेकानंतरं पीतवस्त्रस्यैव विहितत्वात् । वाससी वस्त्रयुगम् । वैजयंतीं पञ्चवर्णपुष्पमालाम् "श्वेतैः पीतैस्तथा नीलैर्लोहितैर्हरितैस्तथा । पुष्पैर्विरचिता माला वैजयंतीति कथ्यते॥"इत्युक्तेः॥१५॥नागा वासुक्याद्याः॥१६॥ कृतं स्वस्त्ययनं स्वस्तिवाचनं यस्या सा तथा : । यद्वाऽकृतमनादित एव स्वस्ति सर्वकालमंगलं हरिवक्ष एवायनमास्पदं यस्याः सा स्वप्रतिच्छविरूपा गुणमयीव स्थिराः संपदो ब्रह्मादिभ्यो ददानापि स्वयं गुणातीता चिन्मयसंपद्रूपा लक्ष्मीः श्रीनारायणमेकमेव सदाश्रिता वर्त्तते तथैवानादित एव कमपि गुणं नोपाधीकृत्य स्वभावत एव तस्मिन्प्रेमवती तत्सर्वेंद्रियसुखसंपादयित्री प्रेयसीरूपापि वर्त्तत इत्यर्थः । तदपि द्विविधैव लक्ष्मीः समुद्रं जनकीकृत्य प्रादुर्भूता पुनरेकीभूता सती स्वनित्यप्रियं हरिं वरायितुं स्वयं चचालेति विश्वनाथः ॥ १७ ॥ स्तनद्वयं च बिभ्रती । निरंतरं सूत्रलंघनानर्हम् । ततस्ततस्तत्रतत्र देवसमीपे । विसर्पती गच्छंती ॥ १८ ॥ नान्वविंदत न प्राप ॥ १९ ॥ तदेव दोषसद्भावनमेव । अत्र वरपरीक्षणे दृष्टांतविधयाऽतीताऽनागतसन्निहिताऽसन्निहितानामपि गणनास्ति न तु सन्निहिततात्कालिकानामेव तथात्वे हिरण्यकशिपुप्रभृतिगणनानौचित्यप्रसंगात् । यद्वा—कल्पांतरीयाब्धिमंथने सर्वेषां तत्र संनिधिरेवासीत् इति स्वामिचरणाभिप्रायः । यद्वा—हार्दब्रह्मविद्यामनुसृत्यैव सर्वज्ञशिरोमणिभूतया श्रीरमादेव्या सर्वेभूतभविष्या अपि दृष्टांतविधया वर्णिताः । तत्र हि श्रूयते "त इमे सत्याः कामा अनृतापिधानाः" इति । तस्माद्दहराकाशं प्रकृत्य "एतत्सत्यं ब्रह्मपुरमस्मिन्सर्वे कामाः समाहिताः" इति । तथा "योयो ह्यस्येतः प्रैति न तमिह दर्शनायोपलभते" इत्युपक्रम्य "ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्न लभते सर्वं तदत्र गत्वा विंदते" इत्यादि । सत्यं ब्रह्मपुरामित्यम्बरमित्यर्थः । समस्तः सदासन्नेवास्त्यत एव तत्र मुनयः पश्यंत्यतीतादिकं मिथ्याब्रह्मपुरं शरीरममुना सत्यपुरं छादितं सर्वेण स्रगिवेत्यमुष्य विलये सत्यं पुरं प्रकाशते । एतत्सर्वमाश्रमवासपर्वणि धृतराष्ट्रादेः पुत्रादिदर्शनप्रकृते श्रीमहाभारतटीकाकृता श्रीनीलकंठाचार्येण बहुधा विवृतमतोऽतीतानागतमपि विदुषां प्रत्यक्षवद्भातीत्यनवद्यम् । यस्य

धर्मः क्वचित्तत्र न भूतसौहृदं त्यागः क्वचित्तत्र न मुक्तिकारणम् ॥ वीर्यं न पुंसोऽस्त्यजवेगनिष्कृतं नहि द्वितीयो गुणसंगवर्जितः ॥ २१ ॥ क्वचि च्चिरायुर्नहि शीलमंगलं क्वचित्तदप्यस्ति न वेद्यमायुषः ॥ यत्रोभयं कुत्र च सोऽप्यमंगलः सुमंगलः कश्च न कांक्षते हि माम् ॥ २२ ॥ श्रीशुक उवाच ॥ एवं विमृश्याव्यभिचारिसद्गुणैर्वरं निजैकाश्रयतया गुणाश्रयम् ॥ वव्रे वरं सर्वगुणैरपेक्षितं रमा मुकुंदं निरपेक्षमीप्सितम् ॥ २३ ॥

नास्ति तपस्विषु दुर्वासःप्रभृतिषु । क्वचित् गुरुशुक्रादिषु । संगवर्जितं ज्ञानं नास्ति महत्त्वेऽपि ब्रह्मसोमादौ न कामनिर्जयः । परतो व्यपाश्रयः परापेक्ष इंद्रादिः । स किमीश्वरः ॥ २० ॥ न भूतसौहृदं परशुरामादिषु । न मुक्तिकारणं त्यागः शिबिप्रभृतिषु । पुंसः कार्तवीर्यादेर्वीर्यमस्ति । तत् अजवेगनिष्कृतं कालवेगेन परिहृतं तु न भवति । गुणसंगवर्जितः सनकादिर्द्वितीयो मम वरो नहि समाधिनिष्ठत्वात् ॥ २१ ॥ चिरायुष्यपि मार्कंडेयादौ शीलमंगलं च नास्ति इंद्रियदमनशीलत्वात् । क्वचित्तदप्यस्ति हिरण्यकशिपुप्रभृतौ आयुषः स्थैर्यं न वेद्यं दुर्ज्ञातम् । भगवद्द्वेषेणाकस्मादेव मृत्युसंभवात् । यत्र कुत्र च श्रीरुद्रे मार्कंडेयादिवदिंद्रियदमनाद्यभावाच्छीलमंगलं चायुर्निश्चयश्चेत्युभयमस्ति न चान्यः पूर्वोक्तः कश्चिद्दोषस्तथाऽपि सोऽप्यमंगलः श्मशानवासाद्यमंगलचेष्टितः । श्रीमुकुंदं लक्षीकृत्याह । कश्चेति । कश्चित्सुमंगलो निरवद्यश्च स तु मां नहि कांक्षते आत्मारामत्वात् ॥ २२ ॥ एवं विमृश्य रमा निरपेक्षमपि मुकुंदमेव वरं वव्रे । तत्किम् । अव्यभिचारिभिः सद्भिर्धर्मज्ञानादिभिर्गुणैर्निजैकाश्रयतया च नैरपेक्ष्येण वरं सर्वोत्तमम् । तत्र हेतुः । अगुणाश्रयं प्रकृतिगुणातीतम् । पाठांतरेऽप्ययमेवार्थः । अत एव स्वस्य ईप्सितम् । किं च सर्वैर्गुणैरणिमादिभिरपेक्षितं वृतम् । अयं भावः । यद्यपि स्वयमात्मारामत्वेनान्यनिरपेक्षस्तथाप्याश्रिता अणिमादिसिद्धीर्यथा नोपेक्षते तद्वन्मामपि नोपेक्षेत तावतैव तत्सेवयाऽहं कृतार्था स्यां किमन्यैः प्राकृतैरिति

दुर्वासआदेः । तपश्चांद्रायणादि तदुक्तम् "विधिनोक्तेन मार्गेण कृच्छ्रचांद्रायणादिभिः । शरीरशोषणं प्राहुस्तापसास्तप उत्तमम् ॥ " इति । प्रभृतिपदेन च्यवनादिग्रहः । क्वचिद्बृहस्पत्यादिषु संगो राजसप्रवृत्तिः । आदिना कश्यपादिग्रहः । "प्रजापतिः स्वां दुहितरमभ्यध्यायत्" इत्यादिश्रुतेः । परापेक्ष उपेन्द्राद्यपेक्षः । यद्वा—परतः शत्रुतो हेतोः व्यपाश्रयो व्यपगतास्पदो मुहुर्मुहुर्भवतीति सर्वपुराणप्रसिद्धेः । आदिना कुबेरादिः ॥ २० ॥ धर्मः पित्राज्ञापालनादिरूपः । मात्रादिवधकत्वाद्भूतसौहृदं नास्ति । भगवदनर्पितबुद्ध्यानुष्ठितत्वान्मुक्तिकारणं नेत्यर्थः । कालवेगेन परिहृतं तु न भवति कालवेगविजयि न भवतीत्यर्थः । सनकादीत्यादिना नारदादिग्रहः । यद्वा—द्वितीयो मुकुंदादन्यो गुणसंगवर्जितः प्राकृतगुणासक्तिरहितो नहि नास्तीत्यर्थः । 'हरिर्हि निर्गुणः साक्षात्' इत्युक्तेः ॥ २१ ॥ आदिनाऽश्वत्थामादिग्रहः । शीलं स्त्री योग्यं मंगलमपि तादृशमेव । तदप्यस्ति शीलं मंगलं चाप्यस्ति । आदिना रावणादिग्रहः । पूर्वोक्तः क्रोधवशत्वादिलक्षणः । तथापि पूर्वोक्तदोषरहितत्वेपि । कश्चानिर्वचनीयः । आत्मारामत्वान्निरवच्छिन्नस्वानंदनिष्ठत्वात् पूर्वपूर्ववदस्मिन्नर्थे को दोषोस्तीति व्याजस्तुत्या दोषमाह—न कांक्षत इति । निरपेक्षत्वलक्षणः सर्वविलक्षणो महागुणोत्रैव दृष्ट इति भावः ॥२२॥ तत्किं तद्वरणम् । कुतः । नैरपेक्ष्यं सर्वेश्वरत्वात् । तत्र सर्वोत्तमत्वे । प्राकृतगुणाधीनस्तत्तमोऽपि न भवति

१—भोगादि ।

तस्यांसदेश उशतीं नवकंजमालां माद्यन्मधुव्रतवरूथगिरोपघुष्टाम् ॥ तस्थौ निधाय निकटे तदुरः स्वधाम सव्रीडहासविकसन्नयनेन याता ॥२४॥ तस्याः श्रियस्त्रिजगतो जनको जनन्या वक्षो निवासमकरोत्परमं विभूतेः ॥ श्रीः स्वाः प्रजाः सकरुणेन निरीक्षणेन यत्र स्थितैधयत साधिपतींस्त्रिलोकान् ॥ २५ ॥ शंखतूर्यमृदंगानां वादित्राणां पृथुः स्वनः ॥ देवानुगानां सस्त्रीणां नृत्यतां गायतामभूत् ॥ २६ ॥ ब्रह्मरुद्रांगिरोमुख्याः सर्वे विश्वसृजो विभुम् ॥ ईडिरेऽवितथैर्मन्त्रैस्तल्लिंगैः पुष्पवर्षिणः ॥ २७ ॥ श्रिया विलोकिता देवाः सप्रजापतयः प्रजाः ॥ शीलादिगुणसंपन्ना लेभिरे निर्वृतिं पराम् ॥ २८ ॥ निःसत्त्वा लोलुपा राजन्निरुद्योगा गतत्रपाः ॥ यदा चोपेक्षिता लक्ष्म्या बभूवुर्दैत्यदानवाः ॥ २९ ॥ अथासीद्वारुणी देवी कन्या कमललोचना ॥ असुरा जगृहुस्तां वै हरेरनुमतेन ते ॥ ३० ॥ अथोदधेर्मथ्यमानात्काश्यपैरमृतार्थिभिः ॥ उदतिष्ठन्महाराज पुरुषः परमाद्भुतः ॥ ३१ ॥ दीर्घपीवरदोर्दंडः कंबुग्रीवोऽरुणेक्षणः ॥ श्यामलस्तरुणः स्रग्वी सर्वाभरणभूषितः ॥ ३२ ॥ पीतवासा महोरस्कः सुमृष्टमणिकुंडलः ॥ स्निग्धकुंचितकेशांतः सुभगः सिंहविक्रमः ॥ ३३ ॥

तमेव वृतवतीति ॥ २३ ॥ तदेवाह । तस्यांसदेशे कमनीयां नवकंजमालां निधाय तदनुग्रहं प्रतीक्षमाणा तूष्णीं तस्य निकटे तस्थौ । कथंभूतां मालाम् । माद्यंतो ये मधुव्रतास्तेषां वरूथस्य गिरा उपघुष्टां नादिताम् । कथंभूता श्रीः सव्रीडहासेन विकसत्प्रफुल्लं यन्नयनं तेन तस्योरः स्वधाम याता सती । वक्षःप्रतीक्षमाणा तस्थावित्यर्थः ॥ ॥ २४ ॥ भगवानपि त्रैलोक्याभिवृद्धये स्ववक्षस्तस्याः स्थानं ददावित्याह । तस्या इति । विशिष्टा भूतयो विभवा यस्याः तस्यास्त्रिजगतो जनन्याः श्रियः त्रिजगतो जनको हरिः । परमं सुस्थिरम् । यत्र वक्षसि ऐधयतावर्धयत ॥ २५ ॥ २६ ॥ तल्लिंगैर्विष्णुप्रतिपादकैः अवितथैर्यथार्थैः ॥ २७ ॥ २८ ॥ २९ ॥ वारुणी वरुणदैवत्यं यदन्नं तन्मयी सुरा ॥ ३० ॥ ३१ ॥ दीर्घौ पीवरौ दोर्दंडौ यस्य । कंबुग्रीवः शंखनाभिरिव त्रिरेखा सुवृत्ता ग्रीवा यस्य ॥ ३२ ॥ स्निग्धः कुंचितः केशानामंतो

कुतः सर्वोत्तमत्वम् । पाठांतरे 'निजैकाश्रयतागुणाश्रयम्' इति पाठे । स एव इह तृतीयाथा लुगार्षः । अत एव पूर्वोक्त एव सर्वोत्तमत्वादेव । स्वस्यात्मनः । न केवलं स्वस्यैवापेक्षितं किं त्वन्येषामपीत्याह—किञ्चेति । अत्राशयमाह—अयं भाव इति । निरपेक्षोऽप्यप्राकृताव्यभिचारिसद्गुणत्वाद्भक्तवत्सलतया मां स्वीकरिष्यतीति भावः ॥२३॥ तदेव वरणमेव । वरूथः समूहः "वरूथो रथगुप्तौ ना समूहे चर्मवेश्मनोः" इति चिंतामणिः । इत्यर्थ इति । सर्वदा हरिवक्षसि वस्तुकामा तदेव निरीक्षयामासेति भावः । तदुक्तम् "एष ब्रह्मातिवृद्धस्तपति दिनपतिश्चञ्चलो मातरिश्वा दिग्वासा नीलकंठः सुरपतिरसमो गर्वितः क्षीयतेऽब्जः । इत्थं देव्या विचिंत्य भ्रमरकुलकलागीतशब्दप्रफुल्ला दत्ता माला मुरारेः सुरतरुकुसुमालंकृता पातु युष्मान्" इत्याभियुक्तैः ॥ २४ ॥ तस्या वक्षो निरीक्षमाणायाः । यत्र हरिवक्षसि ॥ २५ ॥ "काहले गोमुखे तूर्यं दुंदुभौ च प्रचक्षते" इति तीर्थः ॥ २६ ॥ विष्णुप्रतिपादकैः । "श्रीश्च ते लक्ष्मीश्च पत्न्यौ" इत्यादिभिः ॥ २७ ॥ २८ ॥ यदोपेक्षितास्तदैवेत्यर्थः ॥ २९ ॥ वारुणमन्नं यवादि तन्मयी तद्विकारप्राया 'सुरा तु मलमन्नानाम्' इत्युक्तेः । वरुणप्रेषिता वा अथासीदाविर्बभूव सुराभिमानिनी देवता कन्यारूपेणाब्धेः प्रादुरभूदित्यर्थः । अनुमतेन अनुज्ञानेन तेऽसुराः ॥ ३० ॥ अथ वारुण्युत्पत्त्यनंतरम् ॥ ३१ ॥ ३२ ॥ ३३ ॥

अमृतापूर्णकलशं बिभ्रद्वलयभूषितः ॥ स वै भगवतः साक्षाद्विष्णोरंशांशसंभवः ॥ ३४ ॥ धन्वंतरिरिति ख्यात आयुर्वेददृगिज्यभाक् ॥ तमालो क्यासुराः सर्वे कलशं चामृताभृतम् ॥ लिप्संतः सर्ववस्तूनि कलशं तरसाऽहरन् ॥ ३५ ॥ नीयमानेऽसुरैस्तस्मिन्कलशेऽमृतभाजने ॥ विषण्ण मनसो देवा हरिं शरणमाययुः ॥ ३६ ॥ इति तद्दैन्यमालोक्य भगवान्भृत्यकामकृत् ॥ मा खिद्यत मिथोऽर्थं वः साधयिष्ये स्वमायया ॥ ३७ ॥ मिथः कलिरभूत्तेषां तदर्थे तर्षचेतसाम् ॥ अहं पूर्वमहं पूर्वं न त्वं न त्वमिति प्रभो ॥ ३८ ॥ देवाः स्वं भागमर्हंति ये तुल्यायासहेतवः ॥ सत्रयाग इवैतस्मिन्नेष धर्मः सनातनः ॥ ३९ ॥ इति स्वान्प्रत्यषेधन्वै दैतेया जातमत्सराः ॥ दुर्बलाः प्रबलान्राजन्गृहीतकलशान्मुहुः ॥४०॥ एतस्मिन्नंतरे विष्णुः सर्वोपायविदीश्वरः ॥ योषिद्रूपमनिर्देश्यं दधार परमाद्भुतम् ॥ ४१ ॥ प्रेक्षणीयोत्पलश्यामं सर्वावयवसुंदरम् ॥ समानकर्णाभरणं सुकपोलो न्नसाननम् ॥ ४२ ॥ नवयौवननिर्वृत्तस्तनभारकृशोदरम् ॥ मुखामोदानुरक्तालिझंकारोद्विग्नलोचनम् ॥ ४३ ॥ बिभ्रत्स्वकेशभारेण मालामुत्फुल्लम ल्लिकाम् ॥ सुग्रीवकंठाभरणं सुभुजांगदभूषितम् ॥ ४४ ॥

यस्य ॥ ३३ ॥ ३४ ॥ इज्यभाक् यज्ञभागभोक्ता। अमृतेन आभृतं परिपूर्णम् ॥ ३५ ॥ ३६ ॥ मिथो दैत्यानां परस्परं कलहोत्पादनेन योगमायया च मोहिन्या वोऽर्थं साधयिष्याम्यतो मा खिद्यतेत्याहेति शेषः ॥ ३७ ॥ तदेवाह । मिथ इति । तर्षः कामस्तद्युक्तानि चेतांसि येषाम् । इत्येवं समबलानां कलिरभूत् ॥ ३८ ॥ दुर्बलानां त्वाक्रोशप्रकारमाह देवा इति द्वाभ्याम् । ये देवास्तुल्येनायासेन हेतवः साधकाः । तुल्य आयासो हेतुश्च धनादिर्येषामिति वा । सत्रयागे यथा सर्वेषां समं फलं तद्वत् । तथा च श्रुतिः । "ऋद्धिकामाः सत्रमासीरन्" इति । "ये यजमानास्त ऋत्विजः" इति च ॥ ३९ ॥ ४० ॥ ४१ ॥ तद्रूपं वर्णयति पंचभिः । प्रेक्षणीयमुत्पल मिव श्यामम् । सर्वेष्ववयवेषु सुंदरम् । समानयोः कर्णयोराभरणे यस्मिन् । सुकपोलं च तदुत्कृष्टनासिकं चाननं यस्मिन् ॥ ४२ ॥ नवयौवननिर्वृत्तयोः स्तनयोर्भारेण च कृशमुदरं यस्मिन् ॥ ४३ ॥ सुष्ठु ग्रीवा यस्मिन्कंठे आभरणं यस्मिंस्तच्च तच्च । शोभना ग्रीवा येन तत्कंठाभरणं यस्मिन्निति वा । सुभुजयोरंगदाभ्यां भूषितम् ॥ ४४ ॥

अमृतेनापूर्णं पूरितं कलशम् । वलयाभ्यां कंकणाभ्यां भूषितः "वलयः कंठरोगे ना कंकणे पुंनपुंसकम्" इति मेदिनी । अनेन भावि स्त्रीत्वमुक्तं प्रायः स्त्रीभिरेव वलयानि धार्यंत इति भावः । स धन्वंतरिः । विष्णोरंशः समुद्रो विरजापुत्रत्वात् । गोलोके राधाशापेन विरजा नदी तत्पुत्राश्च जलरूपाः समुद्रा आसन्निति संहितायां स्पष्टम् । समुद्रसंभवत्वेन तदंशांशो धन्वंतरिरिति ॥३४॥तं धन्वंतरिकरस्थम् ॥३५॥३६॥३७॥ तदर्थेऽमृतनि मित्तम् ॥३८॥ साधकत्वं न केवलं तेषामेवेति चेदाह–तुल्य आयास इति । एष समविभागलक्षणः । अत्र प्रमाणं–तथाचेति । सत्रकर्मणा यजमानर्त्विजोस्सममेव फलमस्तीति श्रुतिपदार्थः ॥ ३९ ॥ ४० ॥ अनिर्देश्यम् अतीवाद्भुतत्वाद्वर्णयितुमशक्यम् ॥ ४१ ॥ ४२ ॥ नवयौवनेन निवृत्तः निष्पन्नो यस्तनभारस्तेन युतं कृशमुदरं यस्मिस्तत्तथा । यद्वा–नवयौवनेन निर्वृत्तः स्तनभारो यस्मिंस्तच्च कृशमुदरं यस्मिंस्तच्च तथा । मुखामोदेऽनुरक्ता येऽलयस्तेषां झंकारेणोद्विग्नं त्रस्तं मानसं यस्मिंस्तत्तथा ॥ ४३ ॥ ग्रीवायाः स्वतः शोभनत्वे कंठाभरणमप्रयोजकमिति चेदाह–शोभनेति ॥ ४४ ॥

विरजांबरसंवीतनितंबद्वीपशोभया ॥ कांच्या प्रविलसद्वल्गुचलच्चरणनूपुरम् ॥ ४५ ॥ सव्रीडस्मितविक्षिप्तभ्रूविलासावलोकनैः ॥ दैत्ययूथपचेतस्सु काममुद्दीपयन्मुहुः ॥४६॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कंधे अष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ तेऽन्योन्यतोऽसुराः पात्रं हरंतस्त्यक्तसौहृदाः॥क्षिपंतो दस्युधर्माण आयांतीं ददृशुः स्त्रियम्॥१॥अहो रूपमहो धाम अहो अस्या नवं वयः॥इति ते तामभिद्रुत्य पप्रच्छुर्जातहृच्छयाः॥२॥ का त्वं कंजपलाशाक्षि कुतो वा किं चिकीर्षसि ॥ कस्यासि वद वामोरु मथ्नंतीव मनांसि नः ॥ ३ ॥ न वयं त्वाऽमरैर्दैत्यैः सिद्धगंधर्वचारणैः ॥ नास्पृष्टपूर्वां जानीमो लोकेशैश्च कुतो नृभिः ॥४॥ नूनं त्वं विधिना सुभ्रूः प्रेषितासि शरीरिणाम् ॥ सर्वेंद्रियमनःप्रीतिं विधातुं सघृणेन किम् ॥५॥ सा त्वं नः स्पर्धमानानामेकवस्तुनि मानिनि ॥ ज्ञातीनां बद्धवैराणां शं विधत्स्व सुमध्यमे ॥ ६ ॥ वयं कश्यपदायादा भ्रातरः कृतपौरुषाः ॥ विभजस्व यथान्यायं नैव भेदो यथा भवेत् ॥ ७ ॥ इत्युपामंत्रितो दैत्यैर्मायायोषिद्वपुर्हरिः ॥ प्रहस्य रुचिरापांगैर्निरीक्षन्निदमब्रवीत् ॥ ८ ॥ श्रीभगवानुवाच ॥ कथं कश्यपदायादाः पुंश्चल्यां मयि संगताः ॥ विश्वासं पंडितो जातु कामिनीषु न याति हि ॥ ९ ॥

विरजांबरेण निर्मलवाससा संवीतो नितंब एव द्वीपो विशालत्वात्तत्र शोभा यस्यास्तया कांच्या प्रकर्षेण विलसत् । वल्गु यथा भवत्येवं चलतोश्चरणयोर्नूपुरे यस्मिन् ॥ ॥ ४५ ॥ सव्रीडेन स्मितेन सह विक्षिप्ता कंपिता या भ्रूस्तस्या विलासेन सह यान्यवलोकितानि तैर्दैत्ययूथपानां चेतस्सु मुहुः काममुद्दीपयत् ॥ ४६ ॥ इति श्रीमद्भागवते अष्टमस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥ नवमे मोहितैर्दैत्यैरार्पितेऽमृतभाजने ॥ तद्वंचनेन देवेभ्योऽमृतं दत्तं तयेर्यते ॥ १ ॥ १ ॥ अहो रूपं सौंदर्यं धाम द्युतिरिति संभ्रमेण वदंतः का त्वमित्यादि पप्रच्छुः ॥२॥ मथ्नंतीव क्षोभयंतीव ॥३॥ कस्यासीत्ययुक्तमुक्तमस्माभिर्यतस्त्वं न केनचिद्भुक्तपूर्वेत्याहुः नेति द्वाभ्याम् । त्वा त्वाममरादिभिरस्पृष्टपूर्वां न जानीम इति नापि तु जानीम एव ॥ ४ ॥ आस्तामिदं त्वद्दर्शनं त्वीश्वरेणैव संपादितमित्याहुः । नूनमिति । सर्वेंद्रियाणां च मनसश्च प्रीतिं विधातुं सघृणेन प्रेषिताऽसि किं वा यदृच्छयैवाऽऽगतासि नैवं नूनं प्रेषितैवेत्यर्थः ॥ ५ ॥ ६ ॥ भेदो विग्रहो यथा न भवेत्तथा ॥ ७ ॥ ८ ॥ संगता अनुसृताः ॥ ९ ॥

विगतं रजो यस्मात्तद्विरजं तच्चाम्बरं तेन संवीत आच्छादितः ॥ ४५ ॥ ४६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धेऽष्टमोऽध्यायः ॥ ८ ॥ तद्वंचनेन दैत्यप्रलंभनेन । तया मोहिन्या ( १ ) । अन्योन्यं पात्रं हरंतोऽन्योन्यं त्यक्तसौहृदा अन्योन्यं क्षिपंतश्च संतः स्त्रियं ददृशुरित्यन्वयः ॥ १ ॥ अहो अस्या नवमित्याद्युक्त्वा नवं स्तुत्यं सर्वरत्नरूपत्वात् "हास्यं शंखनिभं नितंबतुरगौ रंभादि जंघाद्वयं वैद्यस्ते हृदयं धनुश्च भ्रुकुटी मद्यं च ते दर्शनम् । वक्त्रं पूर्णशशी सुधाधरलता दंता मणिश्रेणयः कांतिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमः ॥ वाणी कामदुघा कटाक्षलहरी तत्कालकूटं विषं हे तन्वंगि मुधैव किन्नु मथितो मूढैः सुरैः सागरः॥" इत्यभियुक्तोक्तेः ॥ २ ॥ ३ ॥ स्वोक्तौ दोषमुद्भावयंत आहुः—कस्यासीत्यादिना ॥४॥ इदं त्वन्नामाधिपत्यादिप्रश्नादि । प्रीतिं तृप्तिम् । सघृणेन दयालुना । इत्यर्थ इति । त्वादृश्या यदृच्छागमनमसंभूतमिति भावः ॥ ९ ॥ एकवस्तुनि सुधायाम् ॥ ६ ॥ ७ ॥ इदं वक्ष्यमाणम् ॥ ८ ॥ पुमांसश्चलंति कंपंति यस्यास्सा पुंश्चली विष्णुमूर्त्तिरतिव शौर्यसंपन्नत्वेन दैत्यपुरुषचालनशी

सालावृकाणां स्त्रीणां च स्वैरिणीनां सुरद्विषः॥सख्यान्याहुरनित्यानि नूत्नंनूत्नं विचिन्वताम्॥१०॥श्रीशुक उवाच॥इति ते क्ष्वेलितैस्तस्या आश्वस्तमनसोऽसुराः॥ जहसुर्भावगंभीरं ददुश्चामृतभाजनम् ॥ ११ ॥ ततो गृहीत्वाऽमृतभाजनं हरिर्बभाष ईषत्स्मितशोभया गिरा ॥ यद्यभ्युपेतं क्व च साध्वसाधु वा कृतं मया वो विभजे सुधामिमाम् ॥ १२ ॥ इत्यभिव्याहृतं तस्या आकर्ण्यासुरपुंगवाः ॥ अप्रमाणविदस्तस्यास्तत्तथेत्यन्वमंसत ॥१३॥ अथोपोष्य कृतस्नाना हुत्वा च हविषाऽनलम् ॥ दत्त्वा गोविप्रभूतेभ्यः कृतस्वस्त्ययना द्विजैः ॥१४॥ यथोपजोषं वासांसि परिधायाऽहतानि ते ॥ कुशेषु प्राविशन्सर्वे प्रागग्रेष्वभिभूषिताः ॥ १५ ॥

हे सुरद्विषः ॥ १० ॥ भावेन केनाप्यभिप्रायेण गंभीरं यथा भवत्येवं जहसुः ॥ ११ ॥ ईषत्स्मितेन शोभा यस्यास्तया । मया कृतं साधु वा असाधु यद्यभ्युपेतांगीकुरुत तर्हि विभजे ॥ १२ ॥ असुरपुंगवा दैत्यश्रेष्ठाः । प्रमाणमियत्तामजानंतः ॥१३॥१४॥ यथोपजोषं यथाप्रीति । अहतस्य लक्षणम् । "अहतं यंत्रनिर्मुक्तमुक्तं

लायां मयि यूयं दैत्याः कथं वैरिणि संगता इति वास्तवोर्थः । कश्यं मद्यं पिबंतीति कश्यपास्तेषां दायो दानीयो मद्यपदार्थस्तमदंतीति कश्यपदायादा मद्यार्हाः कथममृतं पातुं प्रवृत्ताः । पंडितो देयादेयविवेकवान् । कामिभिरयोग्येप्सुंभिर्नीयंते प्राप्यंते कामिन्यो धूर्त्तास्तेषु । क्विंबंतात्काम्युपपदान्नयतेः प्रयोगः । कथमहं धूर्त्तेभ्यो भवद्भयोऽमृतं दास्यामीति भावः । उत्तानार्थो ज्ञातप्राय एव ॥ विश्वनाथस्तु—कश्यपस्य दायादाः पुत्रा इति । पिता युष्माकमृषिर्यूयं कथमेवं कामिनोऽभूवन्निति हासो ध्वनितः । सत्यं वयं स्त्रीजातिमात्रेणैव भावैर्वशीकर्त्तुमशक्याः भवत्या परमशुद्धस्वरूपया तु स्वपावित्र्येणैव वयं विजिता वर्त्तामहे इति चेत्तत्राह—पुंश्चल्यामिति । हंतहंत भवत्या निष्कामत्वस्यावधिं किं स्तुमहे यतस्त्वमाबाल्यं समाघ्रातपुरुषगंधापि स्वं गोपयंत्येव खल्वेवं ब्रूषे, स्त्रीजातिः पुंश्चल्यपि स्वं सतीमेव प्रथयतीति स्त्रीजातिविलक्षणस्वभावायै भवत्यै निष्कपटायै सर्वस्वमपि दित्सामहे इति स्वगतोक्तया विस्मयस्तिमितदृष्टीँरतानालक्ष्याह—विश्वासमिति । भोः पंडिता मयि विश्वासं मा कुरुत यद्यात्मनां भद्रमिच्छथेति भावो बाह्यः।आभ्यंतरस्तु—सर्वमहं विपरीतलक्षणयैव ब्रवीमीति पंडिता भवंतो ज्ञात्वा यदुचितं तत्कुर्वंत्विति भावः । पूर्वत्रोत्तरत्राप्याभ्यंतरो ध्वनिः । एवमेव ज्ञेयं कामिनीष्विति । यद्यप्यहं युष्मदनुभवेन शुद्धैव भवामि तथापि यौवनवत्त्वादाभ्यंतरः कामोऽनुमेय एव । कामवत्त्वे स्त्रीत्वे च कामिनीपतिपित्राद्यावरणाभावात्स्वैरिण्यपि कथं न भवामीत्यविश्वास्यैव सर्वथा भवद्भिरहमिति भावः ॥ ९ ॥ स्वैरिभिर्विरक्तैर्नीयंत इति स्वैरिण्यो विवेकिनस्तेषां सख्यानि साहचर्याणि 'तथापि तस्यांघ्रियुगं नवंनवम्' इत्याद्युक्तेः । परमेशं विचारयतां तथा च यदि मंदत्रिसेवकैरपि " सपदि गृहकुटुंबं दीनमुत्सृज्य दीनः " इत्याद्युक्तेः सख्यं न क्रियते तत्कुतोऽहं करिष्यामीति भावः । ततः किं शृणुत तत्त्वमित्याह—शालेति । ' शालावृका कपिक्रोष्टुश्वानः ' इत्यमरः । इति विश्वनाथः ॥ १० ॥ क्ष्वेलितैः छद्मवचनैः " छद्मोक्तौ क्ष्वेलितं प्रोक्तं सविषान्ने किले तथा " इति निरुक्तिः । आश्वस्तमनसो विश्वस्तचित्ताः । केनाप्यनिर्वचनीयेन कामाक्रांतचेतसेत्यर्थः । गंभीरमविदुषामप्रवेशं यथा स्यात्तथा जहसुः । हे सर्वगुणमंडिते किमस्मान्परीक्षसे वयमविश्वासिनोऽशुद्धांतःकरणा नैव भवामस्तदिदममृतकुंभं गृहाणास्मभ्यं विभज्य देहि स्वयं वा पिबान्यत्र वा क्षिप यथेच्छं कुरु अस्मांस्तु स्वसाद्गुण्यरतानात्मीयानेव जानीहीति भावः ॥ ११ ॥ ततस्तेभ्यः ॥ १२ ॥ इतीत्थम् । तस्या मोहिन्याः । असुरेषु पुंगवा बलीवर्दा इव निर्बुद्धय इत्यर्थः । तद्वचनम् । अन्वमंसत स्वीचक्रुः ॥ १३ ॥ अथ मोहिन्युक्तिस्वीकरणोत्तरम् । उपोष्य भोजनाद्यकृत्वा । भूतेभ्यो दीनेभ्यः । पौष्टिककृत्यविधिरेतेन सूचिता ॥ १४ ॥ यंत्रनिर्मुक्तं वयनयंत्रादुद्धृतं परिहृतान्नादिविलेपम् । तावन्मात्रे मंगलकर्मकृतिवेलायामेव । यद्वा " ईषद्धौतं नवं श्वेतं सदशं

प्राङ्मुखेषूपविष्टेषु सुरेषु दितिजेषु च ॥ धूपामोदितशालायां जुष्टायां माल्यदीपकैः ॥ १६ ॥ तस्यां नरेंद्र करभोरुरुशद्दुकूलश्रोणीतटालसग तिर्मदविह्वलाक्षी ॥ सा कूजती कनकनूपुरसिंजितेन कुंभस्तनी कलशपाणिरथाविवेश ॥ १७ ॥ तां श्रीसखीं कनककुंडलचारुकर्णनासाकपो लवदनां परदेवताख्याम् ॥ संवीक्ष्य संमुमुहुरुत्स्मितवीक्षणेन देवासुरा विगलितस्तनपट्टिकांताम् ॥ १८ ॥ असुराणां सुधादानं सर्पाणा मिव दुर्नयम् ॥ मत्वा जातिनृशंसानां न तां व्यभजदच्युतः ॥ १९ ॥ कल्पयित्वा पृथक्पंक्तीरुभयेषा जगत्पतिः ॥ तांश्चोपवेशयामास स्वेषुस्वेषु च पंक्तिषु ॥ २० ॥

वासः स्वयं भुवा ॥ शस्तं तन्मांगलिक्येषु तावन्मात्रेण सर्वदा ॥" इति । प्रागग्रेषु कुशेषु विविशुः ॥ १५ ॥ धूपैरामोदितायां सुरभीकृतायां शालायाम् ॥ १६ ॥ अथ तस्यां शालायां हे नरेंद्र सा कलशपाणिराविवेश । कथंभूता । "मणिबंधादाकनिष्ठं करस्य करभो बहिः ॥ " करभसदृशौ सुवृत्तावूरू यस्याः सा । उशत्कमनीयं दुकूलं यस्मिंस्तेन श्रोणीतटेन । विशालया श्रोण्या अलसा मंदा गतिर्यस्याः सा । पाठांतरे करभसदृशयोरूर्वोर्लसद्दुकूलं यस्याः सा चासौ श्रोणीतटेनालसगतिश्च । मदेन विह्वले अक्षिणी यस्याः॥१७॥ तां श्रियः सखीं संवीक्ष्य देवासुराः संमुमुहुः । कथंभूताम् । कनकमये कुंडले यस्याः सा चासौ चारवः कर्णादयो यस्याः सा च ताम् । विगलितः स्रस्तः स्तनपट्टिकाया अंतो यस्याः॥१८॥एवं तान्मोहयित्वा यत्कृतवांस्तदाह त्रिभिः।असुराणां सुधादानं सर्पाणां क्षीरदानमिव दुर्नयमन्याय्यं मत्वा तां सुधां तेभ्यो न व्यभ जत् । अयं भावः । दैत्यैर्मदीयं साध्वसाधु वा सर्वमनुमतमेवातो मद्भक्तान्देवानेव सुधां पाययिष्यामि । किं च तैर्यथान्यायं विभजस्वेत्युक्तं न चैतेभ्यो जात्यैव क्रूरेभ्यो दानं न्याय्यमतस्तेभ्यः सुधां न दयामिति ॥ १९ ॥ पंक्तीः पृथग्विविक्ताः कल्पयित्वा विधाय । तासु पंक्तिषु स्वेषुस्वेषु तत्समजातीयेषु । तांश्चासुरानपि प्रतारणार्थमेवोपवेश

यन्न धारितम् । अहतं तद्विजानीयात्पावनं सर्वकर्मसु ॥" अस्यार्थः—ईषद्धौतं क्षारं विना धौतम् । नवं तद्दिनधौतं प्रत्यहं नवस्यासंभवात् । सुदशमकृत्रिमदशं तथा च "अकृत्रिमदशं वस्त्रं प्रशस्तं वर्सकर्मसु । अकृत्रिमा दशा ज्ञेया सिद्धा वायनकर्मणि ॥ " इति स्मृतिसमुच्चयोक्तेः ॥ १५ ॥ १६ ॥ अथोभयपंक्तिनिवेशानंतरम् । पाठांतरे 'करभोरुलसद्दुकूले' इति पाठे ॥ १७ ॥ स्तनपट्टिका कंचुकी ॥ १८ ॥ तान् देवासुरान् । अत्रा शयमाह—अयं भाव इति । सर्वं कर्म । अतोऽनुमतत्वादेव । दैत्येभ्योऽमृताऽदाने कारणांतरमाह—किञ्चेति । यतो जात्यैव दैत्याः क्रूरा अतो हेतोः । दृष्टांते 'पयःपानं भुजंगानां केवलं विषवर्द्धनम्' इत्युक्तिरनुसंधेया । किञ्च दैत्यैर्यथान्यायं विभजस्वेत्युक्तमतो न्यायश्चायमेवेति भावः ॥ १९ ॥ पंक्तिषु मध्ये याया पंक्तयोः येषांयेषां स्वानि धनवत्स्वीयानि स्युस्तेषु स्वेषु स्वत्वविशिष्टासु पंक्तिष्वित्यर्थो विधेयः । अन्यथा स्वासुस्वासु चेति वक्तव्यं

दैत्यान्गृहीतकलशो वंचयन्नुपसंचरैः ॥ दूरस्थान्पाययामास जरामृत्युहरां सुधाम् ॥ २१ ॥ ते पालयंतः समयमसुराः स्वकृतं नृप ॥ तूष्णीमासन्कृतस्नेहाः स्त्रीविवादजुगुप्सया ॥ २२ ॥ तस्यां कृतातिप्रणयाः प्रणयापायकातराः ॥ बहुमानेन चाबद्धा नोचुः किंचन विप्रियम् ॥ २३ ॥ देवलिंगप्रतिच्छन्नः स्वर्भानुर्देवसंसदि ॥ प्रविष्टः सोममपिबच्चंद्रार्काभ्यां च सूचितः ॥ २४ ॥ चक्रेण क्षुरधारेण जहार पिबतः शिरः ॥ हरिस्तस्य कबंधस्तु सुधयाऽप्लावितोऽपतत् ॥ २५ ॥ शिरस्त्वमरतां नीतमजो ग्रहमचीक्लृपत् ॥ यस्तु पर्वणि चंद्रार्कावभिधावति वैरधीः ॥ २६ ॥ पीतप्रायेऽमृते देवैर्भगवाँल्लोकभावनः ॥ पश्यतामसुरेंद्राणां स्वं रूपं जगृहे हरिः ॥ २७ ॥ एवं सुराऽसुरगणाः समदेशकालहेत्वर्थकर्ममतयोपि फले विकल्पाः ॥ तत्राऽमृतं सुरगणाः फलमंजसापुर्यत्पादपंकजरजःश्रयणान्न दैत्याः ॥ २८ ॥

यामास ॥ २० ॥ उपसंचरैर्बहुमानप्रियवाक्यादिना ताननतिक्रम्यातिक्रम्य गमनैः । दूरस्थानपि देवान् ॥ २१ ॥ तया कृतः स्नेहो येषु । स्त्रिया सह विवादस्य जुगुप्सया ॥२२॥ कृतोऽतिप्रणयः स्नेहो यैः । प्रणयापायेन कातरा भीताः । एते तावत्कृपणाः पूर्वं किंचित्पिबंतु यूयं तु धीराः क्षणं प्रतीक्षध्वमित्यादिबहुमानेनाऽऽबद्धा नियंत्रिताः । समयपालनादिभिः षड्भिरेतैः कारणैरप्रियं किंचिदपि नोचुः किं तु तूष्णीमासन् ॥ २३ ॥ देवपंक्तौ चंद्रार्कयोर्मध्ये प्रविष्टः सोममममृतमपिबत् ॥ २४ ॥ हरिस्तस्य शिरो जहार । अप्लावितोऽसंस्पृष्टः ॥ २५ ॥ ग्रहं सूर्यादिवद्ग्रहत्वाधिकारिणम् ॥ २६ ॥ २७ ॥ हरिभक्तानामेवोद्यमः फलति नान्येषामित्येवमाख्यानतात्पर्यमाह । एवमिति ।

स्यात्स्वशब्दस्य सर्वादित्वेन त्रिलिंगत्वात् ॥ २० ॥ यद्वा—उप निकटे संचरैः संचरणैर्भ्रूभंगिनेत्रस्मितव्रीडामुखार्द्धाच्छादननूपुरादिभूषणवसनसंचालनपूर्वकैश्चरणसंचलनैः किञ्चिन्मात्रप्रदानेन दूरस्थदेवानामुत्कंठां निवर्त्त्य संपूर्णमस्मानेव संपाययिष्यतीति प्रत्यायनैः । वञ्चयन्निति । अस्माभिः श्रोत्रनेत्रमनोभिर्यदिदममृतं पीयतेऽतोऽधिकं सामुद्रममृतं न भविष्यतीति तदलं तेन एतस्या आनुकूल्यमेवाकांक्षणीयमित्यपि तेषां मनसि विचारं प्रापयामासेति भावः। आदिना उपरितनं लघु देवेभ्यो दत्त्वा घनमधोगतं वो दास्यामीत्याग्रहः॥२१॥समयं संकेतम् । ‘ स्त्रीवादो लघुताहेतुः’ इत्युक्तेः ।तदुक्तं “बालसखित्वमकारणहास्यं स्त्रीजनवादसुदुष्कृतसेवा । गर्दभयानमसंस्कृतवाणी षट् त इमे लघुताजनका वै ॥” ॥२२॥ षड्भिः समयपालनतत्कृतस्नेहत्वस्त्रीविवादजुगुप्सितत्वस्वकृतस्नेहत्वप्रणयापायकातरत्वबहुमानाबद्धत्वरूपैः ॥ २३ ॥ तदेवं मोहिनीमूर्त्त्या भगवता सद्य एवामृतप्रभावं दर्शयितुं स्वर्भानुं विना सर्वे दैत्या मोहिताः । स च मोहिन्याभिप्रेतं ज्ञात्वा देवपंक्तौ प्रविष्ट इत्याह—देवलिंगेति । अत एव देवास्तं पूर्वं परिचेतुं न शेकुः उपविष्टे तु चंद्रार्काभ्यां परिचितोपीतोऽन्यत्र पंक्तावुपविशेति तद्भयान्नोक्तमिति ज्ञेयं, यदाऽमृतमपिबत्तदाऽसुरोऽसाविति भ्रूभंग्या सूचितम् ॥२४॥ चक्रेण तदैव स्मरणादाविर्भूतेन कबंधोऽपतदिति केतुस्तु छायारूपो ग्रहो न तु कबंधरूपः “ राहुच्छाया स्मृतः केतुः ” इति भुवनदीपिकोक्तेः ॥ २५ ॥ योऽजकल्पस्तराहुरूपो ग्रहः । पर्वणि पूर्णिमामावास्यारूपे ॥२६॥ स्वरूपं प्राक्तनं स्त्रीरूपेतरपुंरूपम् ॥ २७ ॥ देशः क्षीराब्धिः । कालस्तत्तत्क्षणसमूहः । हेतुर्मथनसाधनं मंदराद्रिः । अर्थः समुद्रक्षिप्तवीरुदादि । कर्म मथनम् । मतिरमृतकामना । इत्यर्थ इति । “हठाद्यत्क्रियते कर्म तत्तु सिध्यति कर्हिचित्” इत्युक्तेरिति भावः । तदेव फलवैषम्यमेव । यस्य हरेः । इत्यर्थ इति। तदालाभेपि नित्यसंबंधादेव लाभ

यद्युज्यतेऽसुवसुकर्ममनोवचोभिर्देहात्मजादिषु नृभिस्तदसत्पृथक्त्वात् ॥ तैरेव सद्भवति यत्क्रियतेऽपृथक्त्वात्सर्वस्य तद्भवति मूलनिषेचनं यत् ॥२९॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे अमृतमथनेऽमृतदाननिरूपणं नाम नवमोऽध्यायः॥९॥श्रीशुक उवाच ॥ इति दानवदैतेया नाविंदन्नमृतं नृप ॥ युक्ताः कर्मणि यत्ताश्च वासुदेवपराङ्मुखाः ॥ १ ॥ साधयित्वाऽमृतं राजन्पाययित्वा स्वकान्सुरान् ॥ पश्यतां सर्वभूतानां ययौ गरुडवाहनः ॥ २ ॥ सपत्नानां परामृद्धिं दृष्ट्वा ते दितिनंदनाः ॥ अमृष्यमाणा उत्पेतुर्देवान्प्रत्युद्यतायुधाः ॥ ३ ॥ ततः सुरगणाः सर्वे सुधया पीतयैधिताः ॥ प्रतिसंयुयुधुः शस्त्रैर्नारायणपदाश्रयाः ॥ ४ ॥ तत्र दैवासुरो नाम रणः परमदारुणः ॥ रोधस्युदन्वतो राजंस्तुमुलो रोमहर्षणः ॥ ५ ॥

समा देशादयो येषाम् । हेतुर्मंदराद्रिः । अर्थः समुद्रे क्षिप्तं वीरुत्तृणादि । विविधः कल्पः फलं केषांचिज्जातं केषांचिन्नेति वैचित्र्यमेषां ते फलवैषम्यवंतो बभूवुरित्यर्थः । तदेवाह । तत्र तेषु यस्य पादपंकजरजःश्रयणाद्देवा अमृतं फलमापुः स एव सेव्य इत्यर्थः । यत्तदोर्नित्यसंबंधात् ॥ २८ ॥एतदेवोपपादयति । यदिति । असुः। प्राणः । वसु धनम् । प्राणादिभिर्देहात्मजादिषु नृभिर्यद्युज्यते प्रयुज्यते देहाद्यर्थं यत्क्रियत इत्यर्थः । तदसद्व्यर्थं भवति । कुतः । पृथक्त्वाद्भेदाश्रयत्वात् । शाखानिषेचनवत्तैरेव प्राणादिभिरीश्वरोद्देशेन यत्क्रियते तत्तु सन्महाफलं भवति अपृथक्त्वादीश्वरस्य सर्वत्रानुगतत्वात् । तत्र दृष्टांतः । यत्तरोर्मूलनिषेचनं तद्यथा सर्वस्य स्कंधशाखादेरपि भवतीति। यद्वा ल्यब्लोपे पंचम्यौ । पृथक्त्वं पर्यालोच्य भेददृष्ट्या देहाद्युद्देशेन यत्क्रियते तदसत् । अपृथक्त्वं पर्यालोच्येश्वरदृष्ट्या तैरेव तेष्वेव च यत्क्रियते तत्सद्भवतीति शेषं समानम् ॥ ॥ २९ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे मत्सराद्दैत्यैरारब्धे तु मृधे सुरैः ॥ दैत्यमायाविषण्णेषु देवेष्वाविर्बभौ हरिः ॥ १ ॥ तदेवममृतावाप्तिर्नाभक्तानामितीरितम् ॥ भक्तमत्सरतः प्राणहानिः पुनरुदीर्यते ॥ २ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ रणः संग्रामः। उदन्वतः समुद्रस्य । रोधसि तीरे बभूव ॥ ५ ॥

इत्यर्थः । सेव्य इति शेष इति ज्ञेयमत्रेति॥२८॥एतदेव हरिसेव्यत्वमेव। इत्यर्थ इति तात्पर्यम्। तत्रेश्वरस्य सर्वानुगतत्वे 'फलं कर्त्तुरभिप्रायात्' इत्युक्तेरभिप्रेतं फलं कर्त्तुर्भवत्येवेत्याशयेनाह—यद्वेति। भेदाभेदयोरसत्सत्त्वात्तद्दृष्ट्या कृतकर्मणामपि तथात्वमेवेति वृक्षाच्छाखा भिन्नेति बुद्ध्या मूलं विहाय यथा शाखा निषिच्यते तथैव भगवंतं विहाय देहाद्याः प्रारिचर्यंते मूढैः। मूलाच्छाखा न भिन्नेति बुद्ध्या यथा मूलमेव सिच्यते तथैव भगवानेव परिचर्यते विज्ञैरिति भावः ॥ २९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे नवमोऽध्यायः ॥ ९ ॥ मत्सरादेवोत्कर्षासहनात् ( १ ) । भक्तानां देवानां मत्सरतः ( २ ) । इति भगवदनाश्रयणात् । यत्ताः कृतप्रयत्नाः । अमृतानाप्तौ हेतुः—वासुदेवेति ॥ १ ॥ ययावदृश्योऽभूत् ॥ २ ॥ ३ ॥ ततः दैत्योत्थानोत्तरम् ॥ ४ ॥ तत्र तदा । तुमुलो भयंकरः ' तुमुलः कलिवृक्षे ना भयदे रणसंकुले ' इति ॥ ५॥

तत्रान्योन्यं सपत्नास्ते संरब्धमनसो रणे ॥ समासाद्यासिभिर्वाणैर्निजघ्नुर्विविधायुधैः ॥ ६ ॥ शंखतूर्यमृदंगानां भेरीडमरिणां महान् ॥ हस्त्यश्वरथ पत्तीनां नदतां निस्वनोऽभवत् ॥ ७ ॥ रथिनो रथिभिस्तत्र पत्तिभिः सह पत्तयः ॥ हया हयैरिभाश्चेभैः समसज्जंत संयुगे ॥ ८ ॥ उष्ट्रैः केचिदिभैः केचिदपरे युयुधुः खरैः ॥ केचिद्गौरमृगैर्ऋक्षैर्द्वीपिभिर्हरिभिर्भटाः ॥ ९ ॥ गृध्रैः कंकैर्बकैरन्ये श्येनभासैस्तिमिंगिलैः ॥ शरभैर्महिषैः खड्गैर्गोवृषैर्गवयारुणैः ॥ १० ॥ शिवाभिराखुभिः केचित्कृकलासैः शशैर्नरैः ॥ बस्तैरेके कृष्णसारैर्हंसैरन्ये च सूकरैः ॥ ११ ॥ अन्ये जलस्थलखगैः सत्त्वैर्विकृतविग्रहैः ॥ सेनयोरुभयो राजन्विविशुस्तेऽग्रतोऽग्रतः ॥ १२ ॥ चित्रध्वजपटै राजन्नातपत्रैः सितामलैः ॥ महाधनैर्वज्रदंडैर्व्यजनैर्बार्हचामरैः ॥१३॥ वातोद्धूतोत्तरोष्णीषैरर्चिर्भिर्वर्मभूषणैः ॥ स्फुरद्भिर्विशदैः शस्त्रैः सुतरां सूर्यरश्मिभिः ॥ १४ ॥ देवदानववीराणां ध्वजिन्यौ पांडुनंदन ॥ रेजतुर्वीरमालाभिर्यादसामिव सागरौ ॥ १५ ॥ वैरोचनो बलिः संख्ये सोऽसुराणां चमूपतिः ॥ यानं वैहायसं नाम कामगं मयनिर्मितम् ॥ १६ ॥ सर्वसांग्रामिकोपेतं सर्वाश्चर्यमयं प्रभो ॥ अप्रतर्क्यमनिर्देश्यं दृश्यमानमदर्शनम् ॥ १७ ॥

अन्योन्यं समासाद्य निजघ्नुः ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ चित्रध्वजपटादिभिश्च वीराणां मालाभिश्च राजिभिर्देवदानववीराणां ध्वजिन्यौ यादसां मालाभिः सागराविव रेजतुरिति त्रयाणामन्वयः । यादोभिरिति वा । सितैरमलैरातपत्रैश्च बर्हैश्चामरैश्च व्यजनैश्च ॥ १३ ॥ वातेनोद्धूतैरुत्तरीयैरुष्णीषैश्च सूर्यरश्मिभिः सुतरां स्फुरद्भिः ॥ १४ ॥ १५ ॥ संख्ये युद्धे । असुराणां या चमूस्तस्याः पतिः स बलिर्यानमास्थितः ॥ १६ ॥ १७ ॥

तत्र रणे॥६॥डमरी डमरुः डमडमेत्येवं रौतीति व्युत्पत्तेः। णिनिप्रत्यये टिलोपस्त्वार्षः॥७॥तत्र रणे। 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायेन हयेभशब्दौ तदारूढपरौ।उष्ट्रस्थवस्तुनि क्रीते उष्ट्रः क्रीत इतिवत्॥८॥गौरमृगो मृगः श्याममृगेतरः। हरयो वानरा अश्वा वा 'हरी कीशतुरंगमौ' इति केशवः ॥९॥ श्येनतुल्यभासाः श्येनभासाः । श्येनैर्युक्ता भासा वा गृध्रादयो भासांताः पक्षिभेदाः ।:तिमिंगिलैर्मत्स्यैः । शरभैस्सिंहाशिभिः । खड्गैर्गंडकैः । अरुणोऽपि मृगभेदः ॥ १० ॥ आखुर्मूषिकः ॥ ११ ॥ विकृतो भयंकरो विग्रहो देहो येषां तैस्सत्त्वैर्जीवैः 'सत्त्वं जंतौ गुणे बले' इति धरणिः ॥ १२ ॥ समासांतर्गतपदभेदेनान्वयं त्वगतिकगतिकं मत्वाह—यादोभिरिति। अयं तु पाठः श्रेयान् । बार्हैर्बर्हिपक्षरचितैः ॥ १३ ॥ १४ ॥ 'ध्वजिनी वाहिनी सेना' इति कोशात् ॥ १५ ॥ स यानम् आस्थित इति तृतीयश्लोकगेनान्वयः ॥ १६ ॥ सर्वैः सांग्रामिकैः संग्रामसाधनभूतैः शस्त्रा

आस्थितस्तद्विमानाग्र्यं सर्वानीकाधिपैर्वृतः ॥ बालव्यजनछत्राग्र्यै रेजे चंद्र इवोदये ॥ १८ ॥ तस्यासन्सर्वतो यानैर्यूथानां पतयोऽसुराः ॥ नमुचिः शंबरो बाणो विप्रचित्तिरयोमुखः ॥ १९ ॥ द्विमूर्धा कालनाभोऽथ प्रहेतिर्हेतिरिल्वलः ॥ शकुनिर्भूतसंतापो वज्रदंष्ट्रो विरोचनः ॥ २० ॥ हयग्रीवः शंकुशिराः कपिलो मेघदुंदुभिः ॥ तारकश्चक्रदृक् शुंभो निशुंभो जंभ उत्कलः ॥ २१ ॥ अरिष्टोऽरिष्टनेमिश्च मयश्च त्रिपुराधिपः ॥ अन्ये पौलोमकालेया निवातकवचादयः ॥ २२ ॥ अलब्धभागाः सोमस्य केवलं क्लेशभागिनः ॥ सर्वे एते रणमुखे बहुशो निर्जितामराः ॥ ॥ २३ ॥ सिंहनादान्विमुंचंतः शंखान्दध्मुर्महास्वनान् ॥ दृष्ट्वा सपत्नानुत्सिक्तान्बलभित्कुपितो भृशम् ॥ २४ ॥ ऐरावतं दिक्करिणमारूढः शुशुभे स्वराट् ॥ यथा स्रवत्प्रस्रवणमुदयाद्रिमहर्पतिः ॥ २५ ॥ तस्यासन्सर्वतो देवा नानावाहध्वजायुधाः ॥ लोकपालाः सह गणैर्वाय्वग्निवरुणादयः ॥ ॥ २६ ॥ तेऽन्योन्यमभिसंसृत्य क्षिपंतो मर्मभिर्मिथः ॥ आह्वयंतो विशंतोऽग्रे युयुधुर्द्वंद्वयोधिनः ॥ २७ ॥ युयोध बलिरिंद्रेण तारकेण गुहोऽस्यत ॥ वरुणो हेतिनाऽयुध्यन्मित्रो राजन्प्रहेतिना ॥ २८ ॥ यमस्तु कालनाभेन विश्वकर्मा मयेन वै ॥ शंबरो युयुधे त्वष्ट्रा सवित्रा तु विरोचनः ॥ २९ ॥ अपराजितेन नमुचिरश्विनौ वृषपर्वणा ॥ सूर्यो बलिसुतैर्देवो बाणज्येष्ठैः शतेन च ॥ ३० ॥

उदयगिरिशिखरे स्थितश्चंद्र इव रेज इतित्रयाणामन्वयः ॥ १८ ॥ १९ ॥ २०॥२१॥२२॥२३॥२४॥ स्रवंति प्रस्रवणानि यस्मिन्निति मदधारासादृश्यम् ॥ २५ ॥ नानावाहनादीनि येषां ते देवाः असुराश्च मिथोऽभिसंगम्य नामभिर्नामानि गृहीत्वा क्षिपंतस्तिरस्कुर्वंतो युयुधुः ॥ २६ ॥ २७ ॥ द्वंद्वान्येवाह युयोधेति सप्तभिः । अस्यत आस्यदयुध्यतेत्यर्थः ॥ २८ ॥ २९ ॥ सूर्यो देव एक एव शतेन बलिसुतैः । बाणो ज्येष्ठो येषां तैः ॥ ३० ॥



दिभिरुपेतम् । सर्वाश्चर्याणि प्रधानानि यत्र तत् । तदेवाह—अप्रतर्क्यमित्यादि ॥ १७ ॥ बालव्यजनैश्चामरैः ॥ १८ ॥ तस्य बलेः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ अहर्पतिः ॥ २५ ॥ तस्य इंद्रस्य ॥ २६ ॥ ते देवासुराः ॥ २७ ॥ इत्यर्थ इति । क्षेपणमपि युद्धमेवेति भावः ॥ २८ ॥ २९ ॥ ३० ॥

राहुणा च तथा सोमः पुलोम्ना युयुधेऽनिलः ॥ निशुंभशुंभयोर्देवी भद्रकाली तरस्विनी ॥ ३१ ॥ वृषाकपिस्तु जंभेन महिषेण विभावसुः ॥ इल्वलः सहवातापिर्ब्रह्मपुत्रैररिंदम ॥ ३२ ॥ कामदेवेन दुर्मर्षे उत्कलो मातृभिः सह ॥ बृहस्पतिश्चोशनसा नरकेण शनैश्वरः ॥ ३३ ॥ मरुतो निवातकवचैः कालेयैर्वसवोऽमराः ॥ विश्वेदेवास्तु पौलोमै रुद्राः क्रोधवशैः सह ॥ ३४ ॥ त एवमाजावसुराः सुरेंद्रा द्वंद्वेन संहत्य च युध्यमानाः ॥ अन्योन्यमासाद्य निजघ्नुरोजसा जिगीषवस्तीक्ष्णशरासितोमरैः ॥ ३५ ॥ भुशुंडिभिश्चक्रगदर्ष्टिपट्टिशैः शक्त्युल्मुकैः प्रासपरश्वधैरपि ॥ निस्त्रिंशभल्लैः परिघैः समुद्गरैः सभिंदिपालैश्च शिरांसि चिच्छिदुः ॥ ३६ ॥ गजास्तुरंगाः सरथाः पदातयः सारोहवाहा विविधा विखंडिताः ॥ निकृत्तबाहूरुशिरोधरांघ्रयश्छिन्नध्वजेष्वासतनुत्रभूषणाः ॥ ३७ ॥ तेषां पदाघातरथांगचूर्णितादायोधनादुल्बण उत्थित स्तदा ॥ रेणुर्दिशः खं द्युमणिं च छादयन्न्यवर्ततासृक्स्रुतिभिः परिप्लुतात् ॥ ३८ ॥ शिरोभिरुद्धूतकिरीटकुंडलैः संरंभदृग्भिः परिदष्टदच्छदैः ॥ महाभुजैः साभरणैः सहायुधैः सा प्रास्तृता भूः करभोरुभिर्बभौ ॥ ३९ ॥

निशुंभशुंभाभ्यां देवी ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ॥ ३५ ॥ ३६ ॥ आरोहंतीत्यारोहास्तैः सहिता अन्ये च वाहाः पूर्वं तु केवलं गजादय उक्ताः कथंभूताः । निकृत्ता बाह्वादयो येषाम् । छिन्नानि ध्वजादीनि येषां ते ॥ ३७ ॥ तेषां देवादीनां पदाघातै रथांगैश्च चूर्णितादायोधनाद्रणभूमेरुत्थितो रेणुर्दिशः खं द्युमणिं च सूर्यं छादयंस्तदैव खादेर्न्यवर्तत । कथंभूतात् । असृक्स्रुतिभिः रक्तक्षरणैः परिप्लुतात्सिक्तात् । यद्वा परिप्लवनाद्धेतोर्न्यवर्तत । भावे क्तः । रक्तधाराणां तत्पर्यंतमुच्छलना दित्यर्थः । प्रथमांतपाठे रेणोर्विशेषणम् ॥ ३८ ॥ शिरोभिर्महाभुजैश्च करभसदृशैरूरुभिश्च सा रणभूः प्रकर्षेणास्तृता सती बभौ । कथंभूतैः शिरोभिः । उद्धूतान्युत्प तितानि किरीटानि कुंडलानि च येभ्यस्तैः संरंभयुक्ता दृशो येषु तैः । परिदष्टा दच्छदा ओष्ठा येषु तैः ॥ ३९ ॥

तरस्विनी अतीवतेजस्विनी ॥ ३१ ॥ ब्रह्मपुत्रैः सनकाद्यैरिति न व्याख्येयं तेषां विरक्तत्वेन योद्धृत्वं न युक्तमतो वसिष्ठाद्यैरिति ध्येयम् ॥ ३२ ॥ ३३ ॥ ३४ ॥ एवमुक्तरीत्या ॥ ३५ ॥ ३६ ॥ ३७ ॥ खादे राकाशादेः । उपसर्गवशादर्थांतरमित्याह–यद्वेति । इत्यर्थ इति । यावत्पर्यंतं रेणुर्गतस्तावदिति भावः ॥ ३८ ॥ ३९ ॥

कबंधास्तत्र चोत्पेतुः पश्यंतः स्वशिरोक्षिभिः ॥ उद्यतायुधदोर्दंडैराधावंतो भटान्मृधे ॥ ४० ॥ बलिर्महेंद्रं दशभिस्त्रिभिरैरावतं शरैः ॥ चतुर्भिश्चतुरो वाहानेकेनारोहमार्छयत् ॥ ४१ ॥ स तानापततः शक्रस्तावद्भिः शीघ्रविक्रमः ॥ चिच्छेद निशितैर्भल्लैरसंप्राप्तान्हसन्निव ॥ ४२ ॥ तस्य कर्मोत्तमं वीक्ष्य दुर्मर्षः शक्तिमाददे ॥ तां ज्वलंतीं महोल्काभां हस्तस्थामच्छिनद्धरिः ॥ ४३ ॥ ततः शूलं ततः प्रासं ततस्तोमरमृष्टयः ॥ यद्यच्छस्त्रं समादद्यात्सर्वं तदच्छिनद्विभुः ॥ ४४ ॥ ससर्जाऽथासुरीं मायामंतर्धानगतोसुरः ॥ ततः प्रादुरभूच्छैलः सुरानीकोपरि प्रभो ॥ ४५ ॥ ततो निपेतुस्तरवो दह्यमाना दवाग्निना ॥ शिलाः सटंकशिखराश्चूर्णयंत्यो द्विषद्बलम् ॥ ४६ ॥ महोरगाः समुत्पेतुर्दंदशूकाः सवृश्चिकाः ॥ सिंहव्याघ्रवराहाश्च मर्दयंतो महागजान् ॥ ४७ ॥ यातुधान्यश्च शतशः शूलहस्ता विवाससः ॥ छिंधि भिंधीति वादिन्यस्तथा रक्षोगणाः प्रभो ॥ ४८ ॥ ततो महाघना व्योम्नि गंभीरपरुषस्वनाः ॥ अंगारान्मुमुचुर्वातैराहताः स्तनयित्नवः ॥ ४९ ॥ सृष्टो दैत्येन सुमहान्वह्निः श्वसनसारथिः ॥ सांवर्तक इवात्युग्रो विबुधध्वजिनीमधाक् ॥ ५० ॥ ततः समुद्र उद्वेलः सर्वतः प्रत्यदृश्यत ॥ प्रचंडवातरुद्धूततरंगावर्तभीषणः ॥ ५१ ॥ एवं दैत्यैर्महामायैरलक्ष्यगतिभीषणैः ॥ सृज्यमानासु मायासु विषेदुः सुरसैनिकाः ॥ ५२ ॥ न तत्प्रतिविधिं यत्र विदुरिंद्रादयो नृप ॥ ध्यातः प्रादुरभूत्तत्र भगवान्विश्वभावनः ॥५३॥ ततः सुपर्णांसकृतांघ्रिपल्लवः पिशंगवासा नवकंजलोचनः ॥ अदृश्यताष्टायुधबाहुरुल्लसच्छ्रीकौस्तुभानर्घ्यकिरीटकुंडलः ॥५४॥

पतितानि यानि स्वशिरांसि तत्रत्यैरक्षिभिस्तैः पश्यंत इत्यर्थः । उद्यतान्यायुधानि यैस्तैर्दोर्दंडैर्युक्ताः ॥ ४० ॥ वाहानैरावतपादरक्षकान् । आरोहं गजयंतारमार्छयद्विव्याध ॥ ४१ ॥ ४२ ॥ दुर्मर्षोऽसहनो बलिः ॥ ४३ ॥ ४४ ॥ ४५ ॥ टंकवत्तीक्ष्णाग्रैः शिखरैः सहिताः ॥ ४६ ॥ ४७ ॥ ४८ ॥ स्तनयित्नवः सनिर्घाता महामेघा अंगारान्मुमुचुरित्यनुषंगः ॥ ४९ ॥ अधाक् आर्षः । अधाक्षीदित्यर्थः ॥ ५० ॥ उद्धूतैस्तरंगैरावर्तैश्च भीषणः ॥ ५१ ॥ एवमन्यैश्च दैत्यैः सृज्यमानासु ॥ ५२ ॥ यत्र यदा । तत्र तदा । तैर्ध्यातः सन् ॥ ५३ ॥ अष्टावायुधयुक्ता बाहवो यस्य । श्रीश्च कौस्तुभश्च अनर्घ्ये किरीटं च कुंडले च उल्लसंति



इत्यर्थ इति । पश्यंत इत्यक्षिपदोक्तेरायातमिति भावः । तत्र युद्धे ॥ ४० ॥ ४१ ॥ तान् शरान् ॥ ४२ ॥ तस्येंद्रस्य ॥ ४३ ॥ ततः शक्तिच्छेदोत्तरम् । ततः शूलच्छेदोत्तरम् । ततः प्रासच्छेदोत्तरम् । ऋष्ट्य ऋष्टीः । विभुः इंद्रः ॥ ४४ ॥ अथ सर्वशस्त्रच्छेदोत्तरम् । ततो मायासृष्टेः ॥ ४५ ॥ ततः शैलात् । टंकवत्पाषाणभेदनशस्त्रवत् “ सार्द्धे माषत्रयं टंकष्टंकोऽस्त्री ग्रावभेदने ” इति धरणिः ॥ ४६ ॥ ४७ ॥ ४८ ॥ स्तनयित्नवः सनिर्घातमेघाः ॥४९॥ इत्यर्थ इति । आर्षत्वात्सिजभावो तिपो लोपश्चेति भावः ॥५०॥ ततो देवसेनादहनोत्तरम् ॥५१॥ परसैनिका देवसैनिकाः ॥५२॥ प्रतिविधिं निवर्त्तनोपायम् ॥५३॥ ततो हरिप्रादुर्भूतेरनंतरम्॥५४॥

तस्मिन्प्रविष्टेऽसुरकूटकर्मजा माया विनेशुर्महिना महीयसः ॥ स्वप्नो यथा हि प्रतिबोध आगते हरिस्मृतिः सर्वविपद्विमोक्षणम् ॥ ५५ ॥ दृष्ट्वा मृधे गरुडवाहमिभारिवाह आविध्य शूलमहिनोदथ कालनेमिः ॥ तल्लीलया गरुडमूर्ध्नि पतद्गृहीत्वा तेनाहनन्नृप सवाहमरिं त्र्यधीशः ॥ ५६ ॥ माली सुमाल्यतिबलौ युधि पेततुर्यच्चक्रेण कृत्तशिरसावथ माल्यवांस्तम् ॥ आहत्य तिग्मगदयाऽहनदंडजेंद्रं तावच्छिरोऽच्छिनदरेर्नदतोऽरिणाऽऽद्यः ॥ ५७ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कंधे दशमोध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ अथो सुराः प्रत्युपलब्धचेतसः परस्य पुंसः परयानुकंपया ॥ जघ्नुर्भृशं शक्रसमीरणादयस्तांस्तांत्रणे यैरभिसंहताः पुरा ॥ १ ॥ वैरोचनाय संरब्धो भगवान्पाकशासनः ॥ उदयच्छद्यदा वज्रं प्रजा हाहेति चुक्रुशुः ॥ २ ॥ वज्रपाणिस्तमाहेदं तिरस्कृत्य पुरस्स्थितम् ॥ मनस्विनं सुसंपन्नं विचरंतं महामृधे ॥ ३ ॥ नटवन्मूढमायाभिर्मायेशान्नो जिगीषसि ॥ जित्वा बालान्निबद्धाक्षान्नटो हरति तद्धनम् ॥ ४ ॥ आरुरुक्षंति मायाभिरुत्सिसृप्संति ये दिवम् ॥ तान्दस्यून्विधुनोम्यज्ञान्पूर्वस्माच्च पदादधः ॥ ५ ॥

श्रीकौस्तुभादीनि यस्मिन् ॥ ५४ ॥ असुराणां कूटकर्म मंत्रादिप्रयोगस्तस्माज्जाताः । महिना महिम्ना । हरेः स्मृतिरेव सर्वासां विपदां मोक्षणरूपा किमुत हरेः प्रवेश इत्यर्थः ॥ ५५ ॥ इभारिवाहः सिंहवाहः । अहिनोच्चिक्षेप । लीलयैव तद्गृहीत्वा अहनदहन् । हे नृप ॥ ५६ ॥ यस्य चक्रेण कृत्तशिरसौ पेततुस्तं तथाभूतमप्याहत्य संघटयांडजेंद्रं गरुडमहनत् । तं हंतुं गदामुन्निन्य इत्यर्थः । आद्यो हरिः ॥ ५७ ॥ इति श्रीमद्भागवते अष्टमस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ एकादशे तु देवेषु दैत्यघातिषु नारदः ॥ देवानवारयच्छुक्रो मृतान्दैत्यानजीवयत् ॥ १ ॥ १ ॥ उदयच्छदुन्निन्ये ॥ २ ॥ ३ ॥ निबद्धान्यक्षीणि येषां तान्बालान् जित्वा नटः कपटवृत्तिर्यथा तेषां धनं हरति तथा हे मूढ मायेशानस्माञ्जेतुमिच्छसि ॥ ४ ॥ मत्प्रभावं शृण्वित्याह । आरुरुक्षंत्यारोढुमिच्छंति । ये चोत्सिसृप्संत्युल्लंघयितुमिच्छंति । मोक्षमिच्छंती

तस्मिन् हरौ । असुराणां कूटकर्मणा जाताः । महीयसो हरेर्महिना तेजसा । प्रतिबोधे जागरणे ॥५५॥ इभस्य गजस्यारिः सिंहः वाहो यस्य स तथा । अथ शूलप्रक्षेपादनंतरम् । सवाहं ससिंहम् । त्र्यधीशो हीरः ॥५६॥ अथोभयपतनानंतरन् । संघटय मिलित्वा । इत्यर्थ इति । यावदहंस्तावदेव हननात्प्रागित्यागतमिति भावः । आरिणा चक्रेण ॥ ५७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे दशमोऽध्यायः ॥ १० ॥ ( १ )। अभिसंहता युद्धाय मिलिताः ॥ १ ॥ संरब्धः कुपितः ॥ २ ॥ तं वैरोचनम् ॥ ३ ॥ मायेशान्सर्वमायाविशारदान् । नटतुल्यमायस्य तव मायया वयं न जेया इत्यर्थः ॥ ४ ॥ इत्यर्थ इति । मुमुक्षूणामेव स्वर्गादीच्छा नोदयते इति भावः । पूर्वस्माच्च पदादिति । पादमेकमपि गंतुं प्रवृत्तं ततः प्रागेव पादोत्थानसमय एव तं पातयामीत्यर्थः । केचित्पूर्वस्मात्सर्वलोकपूर्वाद्रसातलात्पदादध इत्याहुस्तच्चेत्थं रसातलादधो रसाया भूमेस्त

सोऽहं दुर्मायिनस्तेऽद्य वज्रेण शतपर्वणा ॥ शिरो हरिष्ये मंदात्मन्घटस्व ज्ञातिभिः सह ॥ ६ ॥ बलिरुवाच ॥ संग्रामे वर्तमानानां कालचोदितकर्मणाम् ॥ कीर्तिर्जयोऽजयो मृत्युः सर्वेषां स्युरनुक्रमात् ॥ ७ ॥ तदिदं कालरशनं जनाः पश्यंति सूरयः ॥ न हृष्यंति न शोचंति तत्र यूयमपंडिताः ॥ ८ ॥ न वयं मन्यमानानामात्मानं तत्र साधनम् ॥ गिरो वः साधु शोच्यानां गृह्णीमो मर्मताडनाः ॥ ९ ॥ श्रीशुक उवाच ॥ इत्याक्षिप्य विभुं वीरो नाराचैर्वीरमर्दनः ॥ आकर्णपूर्णैरहनदाक्षेपैराहतं पुनः ॥ १० ॥ एवं निराकृतो देवो वैरिणा तथ्यवादिना ॥ नामृष्यत्तदधिक्षेपं तोत्राहत इव द्विपः ॥ ११ ॥ प्राहरत्कुलिशं तस्मा अमोघं परमर्दनः ॥ सयानो न्यपतद्भूमौ छिन्नपक्ष इवाचलः ॥ १२ ॥ सखायं पतितं दृष्ट्वा जंभो बलिसखः सुहृत् ॥ अभ्ययात्सौहृदं सख्युर्हतस्यापि समाचरन् ॥ १३ ॥ स सिंहवाह आसाद्य गदामुद्यम्य रंहसा ॥ जत्रावताडयच्छक्रं गजं च सुमहाबलः ॥ १४ ॥ गदाप्रहारव्यथितो भृशं विह्वलितो गजः ॥ जानुभ्यां धरणीं स्पृष्ट्वा कश्मलं परमं ययौ ॥ १५ ॥ ततो रथो मातलिना हरिभिर्दशशतैर्वृतः ॥ आनीतो द्विपमुत्सृज्य रथमारुरुहे विभुः ॥ १६ ॥ तस्य तत्पूजयन्कर्म यंतुर्दानवसत्तमः ॥ शूलेन ज्वलता तं तु स्मयमानोऽहनन्मृधे ॥ १७ ॥ सेहे रुजं सुदुर्मर्षां सत्त्वमालंब्य मातलिः ॥ इंद्रो जंभस्य संक्रुद्धो वज्रेणापाहरच्छिरः ॥ १८ ॥ जंभं श्रुत्वा हतं तस्य ज्ञातयो नारदादृषेः ॥ नमुचिश्च बलः पाकस्तत्रापेतुस्त्वराऽन्विताः ॥ १९ ॥ वचोभिः परुषैरिंद्रमर्दयंतोऽस्य मर्मसु ॥ शरैरवाकिरन्मेघा धाराभिरिव पर्वतम् ॥ २० ॥ हरीन्दशशतान्याजौ हर्यश्वस्य बलः शरैः ॥ तावद्भिरर्दयामास युगपल्लघुहस्तवान् ॥ २१ ॥

त्यर्थः । अधो विधुनोमि पातयामि ॥५॥६॥७॥ कालरशनं कालयंत्रितम् । अतो न हृष्यंति । तत्र एवं विवेके यूयमपंडिता अनिपुणाः ॥८॥ तत्र कीर्तिजयादावात्मानं साधनं मन्यमानानां वो गिरो न गृह्णीमः । मर्मसु ताडनं याभिस्ताः ॥ ९ ॥ विभुमिंद्रम् । वीरो बलिः ॥ १० ॥ तोत्रमंकुशस्तेनाहत इव ॥ ११ ॥ सयानो विमानसहितः ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥१८॥ नमुचिर्बलः पाकश्चेति त्रय आजग्मुः ॥१९॥२०॥ त्रयाणां पृथग्विक्रमानाह हरी

लादधो नरक इत्यर्थः ॥ ५ ॥ घटस्व यत्नं कुरुष्व ॥ ६ ॥ ७ ॥ तदिदं जगत् कीर्त्यादि वा काल एव रशना बंधनरज्जुर्यत्र तत्तथा । अतः कालाधीनत्वात् । यतस्सूरीणां हर्षादि नास्त्यतो हेतोः एवं विवेके कालाधीने को हर्षः को वा शोक इत्येवं ज्ञाने ॥ ८ ॥ मर्मसु पीडाऽसहावयवेषु । ''शरीरावयवे मर्म पीडनासहने हृदि'' इति कोशात् । यथा यूयं जीवंतोऽपि साधुभिः शोच्यध्वे तथा वयं मृता अपि न शोच्यामहे इति भावः ॥ ॥ ९ ॥ आक्षेपैर्दुरुक्तैः ॥ १० ॥ 'तोत्रं प्राजनसृण्योश्च' इति यादवः ॥ ११ ॥ तस्मै बलये । कुलिशं वज्रम् ॥ १२ ॥ १३ ॥ स जंभः ॥ १४ ॥ १५ ॥ ततो गजकश्मलोत्तरम् । विभुरिंद्रः ॥ १६ ॥ तस्य मातलेः । तत्कर्म झटिति रथानयनरूपम् । तं मातलिम् ॥ १७ ॥ सत्त्वं धैर्यम् ॥ १८ ॥ तस्य जंभस्य । तत्र इन्द्रसमीपे ॥ १९ ॥ २० ॥ २१ ॥

शताभ्यां मातलिं पाको रथं सावयवं पृथक् ॥ सकृत्संधानमोक्षेण तदद्भुतमभूद्रणे ॥ २२ ॥ नमुचिः पंचदशभिः स्वर्णपुंखैर्महेषुभिः ॥
आहत्य व्यनदत्संख्ये सतोय इव तोयदः ॥ २३ ॥ सर्वतः शरकूटेन शक्रं सरथसारथिम् ॥ छादयामासुरसुराः प्रावृट्सूर्यमिवांबुदाः ॥ २४ ॥
अलक्षयंतस्तमतीव विह्वला विचुक्रुशुर्देवगणाः सहानुगाः ॥ अनायकाः शत्रुबलेन निर्जिता वणिक्पथा भिन्ननवो यथाऽर्णवे ॥ २५ ॥ तत
स्तुराषाडिषुबद्धपंजराद्विनिर्गतः साश्वरथध्वजाग्रणीः ॥ बभौ दिशः खं पृथिवीं च रोचयन्स्वतेजसा सूर्य इव क्षपात्यये ॥ २६ ॥ निरीक्ष्य
पृतनां देवः परैरभ्यर्दितां रणे ॥ उदयच्छद्रिपुं हंतु वज्रं वज्रधरो रुषा ॥ २७ ॥ स तेनैवाष्टधारेण शिरसी बलपाकयोः ॥ ज्ञातीनां पश्यतां राज
न्नहार जनयन्भयम् ॥ २८ ॥ नमुचिस्तद्वधं दृष्ट्वा शोकामर्षरुषान्वितः ॥ जिघांसुरिंद्रं नृपते चकार परमोद्यमम् ॥ २९ ॥ अश्मसारमयं शूलं
घंटावद्धेमभूषणम् ॥ प्रगृह्याभ्यद्रवत्क्रुद्धो हतोऽसीति वितर्जयन् ॥ प्राहिणोद्देवराजाय निनदन्मृगराडिव ॥ ३० ॥ तदापतद्गगनतले महाजवं विचि
च्छिदे हरिरिषुभिः सहस्रधा ॥ तमाहनन्नृप कुलिशेन कंधरे रुषान्वितस्त्रिदशपतिः शिरो हरन् ॥ ३१ ॥ न तस्य हि त्वचमपि वज्र ऊर्जितो
बिभेद यः सुरपतिनौजसेरितः ॥ तदद्भुतं परमतिवीर्यवृत्रभित्तिरस्कृतो नमुचिशिरोधरत्वचा ॥ ३२ ॥ तस्मादिंद्रोऽबिभेच्छत्रोर्वज्रः प्रतिहतो यतः ॥
किमिदं दैवयोगेन भूतं लोकविमोहनम् ॥ ३३ ॥ येन मे पूर्वमद्रीणां पक्षच्छेदः प्रजात्यये ॥ कृतो निविशतां भारैः पतत्रैः पततां भुवि ॥ ३४ ॥

निति त्रिभिः । हर्यश्वस्येंद्रस्य । तावद्भिर्दशभिः शतैः ॥ २१ ॥ २२ ॥ आहत्येंद्रं विद्ध्वा ॥ २३ ॥ प्रावृट्कालीनं सूर्यम् ॥ २४ ॥ वणिक्पथा वणिजः । भिन्ना नौर्येषां ते भिन्ननाव इत्यर्थः ॥ २५ ॥ तुराषाडिंद्रः । अश्वादिसहितो विनिर्गतः । अग्रणीः सारथिः ॥ २६ ॥ २७ ॥ २८ ॥ शोकामर्षाभ्यां युक्तया रुषा क्रोधेनान्वित इंद्रं हंतुं परमोद्योगं चकार ॥ २९ ॥ घंटावत् घंटाभिर्युक्तम् ॥ ३० ॥ ३१ ॥ अतिवीर्यं वृत्रमभिनदिति तथा ॥ ३२ ॥ ३३ ॥ तथा पतत्रैः पक्षैः ॥ ३४ ॥

तत् सकृत्संधानेन मोक्षणम् ॥ २२ ॥ २३ ॥ २४ ॥ इत्यर्थ इति । आर्षत्वाद्ध्रस्व इति भावः ॥ २५ ॥ ततो देवगणाक्रोशोत्तरम् । क्षपात्यये रात्र्यंते ॥ २६ ॥ २७ ॥ स इंद्रः । तेनैव वज्रेणैव ॥ २८ ॥ तयोर्बलपाकयोर्वधम् अमर्षोऽसहसनम् ॥ २९ ॥ ३० ॥ तत् शूलम् । तं नमुचिम् ॥ ३१ ॥ तस्य नमुचेः । तत् नमुचित्वगभेदनं परमाश्चर्यम् । नमुचेः शिरोधरस्य कंठस्य त्वचा तिरस्कृतो विमानितोऽभूदिति शेषः ॥ ३२ ॥ तस्मान्नमुचेः । यतो यस्मात् । भूतं जातम् ॥ ३३ ॥ येन वज्रेण । मे मया ॥ ३४ ॥

तपःसारमयं त्वाष्ट्रं वृत्रो येन विपाटितः ॥ अन्ये चापि बलोपेताः सर्वास्त्रैरक्षतत्वचः॥३५॥सोऽयं प्रतिहतो वज्रो मया मुक्तोऽसुरेऽल्पके ॥ नाहं तदा ददे दंडं ब्रह्मतेजोऽप्यकारणम् ॥ ३६ ॥ इति शक्रं विषीदंतमाह वागशरीरिणी ॥ नायं शुष्कैरथो नार्द्रैर्वधमर्हति दानवः ॥ ३७ ॥ मयास्मै यद्वरो दत्तो मृत्युर्नैवार्द्रशुष्कयोः ॥ अतोऽन्यश्चिंतनीयस्त उपायो मघवन्रिपोः ॥ ३८ ॥ तां दैवीं गिरमाकर्ण्य मघवान्सुसमाहितः ॥ ध्यायन्फेनमथापश्यदुपायमुभयात्मकम् ॥ ३९ ॥ न शुष्केण न चार्द्रेण जहार नमुचेः शिरः ॥ तं तुष्टुवुर्मुनिगणा माल्यैश्चावाकिरन्विभुम् ॥ ४० ॥ गंधर्वमुख्यौ जगतुर्विश्वावसुपरावसू ॥ देवदुंदुभयो नेदुर्नर्तक्यो ननृतुर्मुदा ॥ ४१ ॥ अन्येऽप्येवं प्रतिद्वंद्वान्वाय्वग्निवरुणादयः ॥ सूदयामासुरस्त्रौघैर्मृगान्केसरिणो यथा ॥ ४२ ॥ ब्रह्मणा प्रेषितो देवान्देवर्षिर्नारदो नृप ॥ वारयामास विबुधान्दृष्ट्वा दानवसंक्षयम् ॥ ४३ ॥ नारद उवाच ॥ भवद्भिरमृतं प्राप्तं नारायणभुजाश्रयैः ॥ श्रिया समेधिताः सर्व उपारमत विग्रहात् ॥ ४४ ॥ श्रीशुक उवाच ॥ संयम्य मन्युसंरंभं मानयंतो मुनेर्वचः ॥ उपगीयमानानुचरैर्ययुः सर्वे त्रिविष्टपम् ॥ ४५ ॥ येऽवशिष्टा रणे तस्मिन्नारदानुमतेन ते ॥ बलिं विपन्नमादाय अस्तं गिरिमुपागमन् ॥ ॥ ४६ ॥ तत्राऽविनष्टावयवान्विद्यमानशिरोधरान् ॥ उशना जीवयामास संजीविन्या स्वविद्यया ॥ ४७ ॥ बलिश्चोशनसा स्पृष्टः प्रत्यापन्नेंद्रियस्मृतिः ॥ पराजितोऽपि नाखिद्यल्लोकतत्त्वविचक्षणः ॥ ४८ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे देवासुरसंग्रामवर्णनं नाम एकादशोऽध्यायः ॥ ११ ॥ श्रीबादरायणिरुवाच ॥ वृषध्वजो निशम्येदं योषिद्रूपेण दानवान् ॥ मोहयित्वाऽसुरगणान्हरिः सोममपाययत् ॥ १ ॥

सारमयं वीर्याधिकं त्वाष्ट्रं तप एव वृत्रः स येन वज्रेण मया विपाटितः ॥ ३५ ॥ दंडं लगुडतुल्यं कुलिशम् । ब्रह्मतेजो दधीचेः सामर्थ्यम् ॥ ३६ ॥ ३७ ॥ आर्द्रशुष्काभ्यां मृत्युर्नैवेति ॥ ३८ ॥ ३९ ॥ उभयात्मकत्वमेवाह । न शुष्केण न चार्द्रेण फेनेन तथा च श्रुतिः—“अपां फेनेन नमुचेः शिर इंद्रोदवर्तयत्” इति॥४०॥४१॥४२॥४३॥४४॥ अनुचरैरनुगीयमाना इत्यर्थः । उपगीयमानैरनुचरैः सहेति वा ॥४५॥४६॥ अविनष्टा अवयवा येषाम् । विद्यमाना शिरोधरा येषां तान् ॥ ४७ ॥ प्रत्यापन्नानि पुनः प्राप्तानींद्रियाणि स्मृतिश्च येन सः ॥ ४८ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे मोहिनीरूपविभ्रमालोकनोत्सुकम् ॥ भवं संमोहयामास हरिः पुनरसांत्वयत् ॥१॥ अमुह्यन्नसुरा विष्णुमायया न तदद्भुतम् ॥ इति वक्तुं महादेवमोहोऽयमुपवर्ण्यते ॥ २ ॥ हरिः सोम

त्वष्ट्रा तपसोत्पादितत्वाद्वृत्रस्य तपोरूपत्वं कार्यकारणयोरभेदोपचारात् ॥ ३५ ॥ लगुडः काष्ठदंडः । अकारणं निष्फलम् ॥ ३६ ॥ ३७ ॥ अत आर्द्रशुष्काभ्यामन्यः ॥ ३८ ॥ “अपां फेनं न शुष्कं न चार्द्रम्” इति श्रुतेः ॥ ३९ ॥ स्वाम्युपन्यस्त श्रुतिस्थोदवर्तयदित्यस्य चिच्छेदेत्यर्थः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ इत्यर्थ इति । छांदसत्वात् संधिरिति भावः । गौरवं मत्वाह—उपगीयमानैरिति । उद्गीयंत इत्युद्गीयमानास्ते चानुचरास्तैः उद्गीयमानाऽनुचरैरित्यपि क्वचित्पाठः ॥ ४५ ॥ विपन्नं मृतम् ॥ ४६ ॥ तत्र रणे ॥ ४७ ॥ स्पृष्टो मंत्रेणेत्यर्थः । लोकतत्त्वे लोकानां जयादेः कर्माधीनत्वमिति विचारे ॥ ४८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ पुनर्मोहितम् ( १ ) ॥ १ ॥

वृषमारुह्य गिरिशः सर्वभूतगणैर्वृतः ॥ सोमया च ययौ द्रष्टुं यत्रास्ते मधुसूदनः ॥ २ ॥ सभाजितो भगवता सादरं सोमया भवः ॥ सूपविष्ट उवाचेदं प्रतिपूज्य स्मयन्हरिम् ॥३॥ श्रीमहादेव उवाच ॥ देवदेव जगद्व्यापिञ्जगदीश जगन्मय ॥ सर्वेषामपि भावानां त्वमात्मा हेतुरीश्वरः ॥ ४ ॥ आद्यंतावस्य यन्मध्यमिदमन्यदहं बहिः ॥ यतोऽव्ययस्य नैतानि तत्सत्यं ब्रह्म चिद्भवान् ॥ ५ ॥ तवैव चरणांभोजं श्रेयस्कामा निराशिषः ॥ विसृज्योभयतः संगं मुनयः समुपासते ॥ ६ ॥ त्वं ब्रह्म पूर्णममृतं विगुणं विशोकमानंदमात्रमविकारमनन्यदन्यत् ॥ विश्वस्य हेतुरुदयस्थिति संयमानामात्मेश्वरश्च तदपेक्षतयाऽनपेक्षः ॥ ७ ॥

मपाययदितीदं निशम्य स यत्रास्ते तत्र तद्रूपं द्रष्टुं ययावित्युत्तरेणान्वयः ॥ १ ॥ २ ॥ सोमया उमया सह ॥ ३ ॥ "त्वयि किंचिन्न चाश्चर्यं वयं त्वाश्चर्यमानसाः ॥ इति वक्ष्यन्महादेवस्तुष्टाव हरिमष्टभिः ॥ १ ॥" त्वयि महामायाविनि परमेश्वरे नहि किंचिदघटितमिव । वयं तु परमकौतूहलेन द्रष्टुमागता इति बहुधा संबोधयन्स्तौति । हे देवदेव । कुतोऽहं देवानां देव इत्यत आह । हे जगद्व्यापिन् । तत्कुतः हे जगन्मय । तर्हि किं प्रधानम् । न । हे जगदीश । तच्च कुतस्तत्राह । सर्वेषामपि त्वं हेतुरत ईश्वरः आत्मा च आत्मत्वाच्च न जडं प्रधानं त्वमित्यर्थः ॥ ४ ॥ ननु जगन्मयत्वोक्त्या जगत उत्पत्त्यादिना सत्यत्वेन जाड्येन च ममापि किं तथात्वं ब्रूषे नहिनहीत्याह । आद्यंतौ मध्यं चास्य जगतो यतो ब्रह्मणो भवंति । यस्य चाव्ययस्यैतान्याद्यंतमध्यानि न संति । यच्च ब्रह्म इदंकारास्पदं दृश्यमहंकारास्पदं द्रष्टृ च बहिर्भोग्यमन्यद्भोक्तृ च अयं च धर्मो जगत एव न त्वव्ययस्य तत्तस्मात्सत्यं च चिद्रूपं च ब्रह्मैव भवानतो न तव विकारादिशंकेत्यर्थः ॥५॥ तवैवंभूतत्वे मुमुक्षूणामाचारः प्रमाणमित्याह । तवैवेति । उभयत इहामुत्र च संगं त्यक्त्वा ॥ ६ ॥ ननु ब्रह्मैव चेदहं तर्ह्यसंगोदासीनस्य मम चरणांभोजोपासनया किं तेषां तत्राह । त्वमिति । ब्रह्मत्वेऽपि त्वं नात्यंतमुदासीनः ।

सहार्थे गम्यमाने तृतीया स शिवः उमया सहेत्यर्थः । सोषामविंददित्यादिवत्संधिः । यत्र स्थाने ॥ २ ॥ सोमयेति पूर्ववत् ॥ ३ ॥ तज्जगद्व्यापित्वम् । जगन्मयत्वमाक्षिपति—तर्हीति । तदपाकरोति नहीति । तच्च जगदीशत्वञ्च । अतः सर्वहेतुत्वात् । 'यो विश्वकर्त्ता स हि सर्वेशः' इत्यादिश्रवणात् । इत्यर्थ इति । न ह्यचेतने प्रधान ईशत्वं कारणत्वं च भवतीति भावः ॥ ४ ॥ अत्र भगवानाक्षिपति—नन्विति । तथात्वमसत्त्वं जडत्वमुत्पत्त्यादिमत्त्वं च ब्रह्मणः सकाशादित्यत्र "यतो वा इमानि भूतानि जायंते" इत्यादिश्रुतिर्मानम् । यतः सर्वं ब्रह्मैवातो हेतोः । इत्यर्थ इति । न हि विवर्त्ताधिष्ठाने विवर्तकृतविकारादि संभवतीति भावः ॥ ५ ॥ एवंभूतत्वे निर्विकारब्रह्मरूपत्वे । श्रेयस्कामा मुमुक्षवः 'श्रेयो निःश्रेयसामृतम्' इत्यमरः । निराशिषो धनपुत्राद्यभिलाषरहिताः । तत्र हेतुः—विसृज्येति । इहामुत्र संगं राज्यस्वर्गादिष्वासक्तिम् ॥ ६ ॥ पुनरत्राक्षिपति—नन्विति । तेषां मुनीनाम् । तदुपाधीनामुत्पत्त्याद्युपाधीनाम् । तत्तत्फलदाता कर्मानुसारेण सुखदुःखादिभोजयिता । पुनराक्षिपति—तर्हीति । नहीति द्विरुक्त्या सर्वथानपेक्षत्वमेवोक्तम् । अनपेक्षत्वेप्या

एकस्त्वमेव सदसद्द्वयमद्वयं च स्वर्णं कृताकृतमिवेह न वस्तुभेदः॥अज्ञानतस्त्वयि जनैर्विहितो विकल्पो यस्माद्गुणैर्व्यतिकरो निरुपाधिकस्य॥८॥
त्वां ब्रह्म केचिदवयंत्युत धर्ममेक एके परं सदसतोः पुरुषं परेशम् ॥ अन्येऽवयंति नवशक्तियुतं परं त्वां केचिन्महापुरुषमव्ययमात्मतंत्रम् ॥ ९ ॥

किं तु विश्वस्य प्रपंचस्योदयादीनां हेतुस्तदुपाधीनामात्मनां जीवानामीश्वरश्च तत्तत्फलदाता । तर्हि किं राजादिवत्कयाऽप्यपेक्षया सेवकेभ्यः फलं ददामि नहिनहि अनपेक्ष एव त्वम् । तर्हि किमीश्वरत्वेन तत्राह । तैरात्मभिस्तत्फलदानार्थमपेक्ष्यत इति तदपेक्षस्तस्य भावस्तदपेक्षता तया । अनपेक्षत्वमेव दर्शयितुं तदीयं ब्रह्मत्वं विशिनष्टि । पूर्णममृतं च सुखरूपम् । विषयसुखवैलक्षण्यार्थमाह । अविकारं नित्यमानंदमात्रं च । कुतः । विशोकम् । तत्कुतः । विगुणम् । किं च अनन्यत् न विद्यतेऽन्ययस्मात् । ब्रह्मव्यतिरिक्ताभावादपि निरपेक्षस्त्वमित्यर्थः । तर्हि सर्वात्मकत्वे तत्तद्विकारप्रसंगो दुर्वारस्तत्राह । अन्यत्सर्वतो व्यतिरिक्तं च कारणत्वात् । न ह्येवंभूतसुखात्मकब्रह्मस्वरूपस्य तवान्यापेक्षाऽस्त्यतः केवलं भक्तानुग्रहार्थमेव तवैश्वर्यं न स्वार्थमित्यर्थः ॥ ७ ॥ अन्यत्वमनन्यत्वं चैकस्य कुत इत्याशंक्य दृष्टांतेनोपपादयति । सदसत्कार्यकारणरूपं द्वयमद्वयं च परमकारणं त्वमेवैकः कृतं कुंडलादिरूपं द्वयमकृतं च केवलमद्वयं स्वर्णं यथैकमेव तद्वदेवेह त्वयि वस्तुतो भेदो नास्ति । कथं तर्हि भेदप्रतीतिस्तत्राह । अज्ञानत इति । कुतः । यस्मान्निरुपाधिकस्यैव तवायं गुणैर्व्यतिकरो भेदो न स्वतः ॥ ८ ॥ अत एव त्वां बहुधा वर्णयंति तत्त्वतस्तु केऽपि न जानंतीत्याह द्वाभ्याम् । त्वां ब्रह्म वेदांतिनोऽवयंति मन्यंते । त्वामेव धर्मं मीमांसका मन्यंते । प्रकृतिपुरुषयोः परं पुमांसं सांख्याः । विमलोत्कर्षिणी ज्ञाना क्रिया योगा प्रह्वी सत्या ईशाना अनुग्रहा

क्षिपति—तर्हीति । तत्रेश्वरत्वे । आनंदमात्रत्वे हेतुं पृच्छति—कुत इति । तद्विशोकत्वम् । विगता गुणा यस्मात्तत्तथा । निरपेक्षत्वं प्रकारांतरेणाह—किं चेति । इत्यर्थ इति । भिन्नवस्तुन एवापेक्षोत्पद्यते दर्शनादौ स्वाभिन्ने तस्मिन्न सेति भावः । पुनराक्षिपति—तर्हीति । सर्वात्मकत्वे घटपटादिरूपत्वे । तत्तद्विकारो घटाद्युत्पत्त्यादौ तदुत्पत्त्यादिप्रसंगापत्तिः स्यादिति । तत्राक्षेपे । कारणत्वादिति । कारणात्कार्यं न पृथक् कार्याच्च कारणं पृथगेवेति भावः । सर्वात्मकत्वमत्रैवंभूतपदार्थः यतस्त्वं सर्वथानपेक्षोऽस्यतो हेतोः । इत्यर्थ इति । निरपेक्षैश्वर्यं परार्थमेव भवतीति भावः ॥ ७ ॥ न हि परस्परविरोधि तेजस्तिमिरमिवान्यत्वानन्यत्वमेकत्र स्थातुं समर्थमित्याशंकामुद्धाट्य परिहरन्नाह—अनन्यत्वमित्यादिना । द्वयं द्वैतम् । अज्ञानतः वस्तुस्वरूपाज्ञानात् । वस्तुतो निरुपाधिकस्यात्मनः स कुत इति चेदाह—गुणैर्मायागुणकार्यदेहेंद्रियाद्यध्यासैरेव न स्वतः स्वाभाविकः अध्यासनिवृत्तौ तन्निवृत्तेरिति भावः ॥ ८ ॥ अत एव वस्तुस्वरूपाज्ञानादेव । कवयस्तत्तच्छास्त्रज्ञाः । "तमेकं संतं बहुधा वदंति" इत्यादिश्रुतेः । "नीहारेण प्रावृता जल्प्याः" इत्यादिश्रुतेः । तत्त्वतो यथार्थतः । वेदांतिनोऽद्वैतनिष्ठाः । पांचरात्रा वैष्णवाः । महापुरुषं पुरुषविशेषम् । पातंजला योगशास्त्रनिष्ठाः । "क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः" इति सूत्रात् ॥ ९ ॥

नाहं परायुर्ऋषयो न मरीचिमुख्या जानंति यद्विरचितं खलु सत्त्वसर्गाः ॥ यन्मायया मुषितचेतस ईश दैत्यमर्त्यादयः किमुत शश्वदभद्र वृत्ताः ॥ १० ॥ स त्वं समीहितमदः स्थितिजन्मनाशं भूतेहितं च जगतो भवबंधमोक्षौ ॥ वायुर्यथा विशति खं च चराचराख्यं सर्वं तदात्मक तयाऽवगमोऽवरुंत्से ॥ ११ ॥ अवतारा मया दृष्टा रममाणस्य ते गुणैः ॥ सोऽहं तद्द्रष्टुमिच्छामि यत्ते योषिद्वपुर्धृतम् ॥ १२ ॥ येन संमो हिता दैत्या पायिताश्चामृतं सुराः ॥ तद्दिदृक्षव आयाताः परं कौतूहलं हि नः ॥ १३ ॥ श्रीशुक उवाच ॥ एवमभ्यर्थितो विष्णुर्भगवाञ्छूलपा णिना ॥ प्रहस्य भावगंभीरं गिरिशं प्रत्यभाषत ॥ १४ ॥ श्रीभगवानुवाच ॥ कौतूहलाय दैत्यानां योषिद्वेषो मया कृतः ॥ पश्यता सुरकार्याणि गते पीयूषभाजने ॥ १५ ॥

चेत्येवं नवशक्तियुतं परं पांचरात्राः । महापुरुषं पातंजलाः ॥ ९ ॥ परायुर्ब्रह्मा । सत्त्वसर्गाः सत्त्वगुणेन सृष्टा अपि येन त्वया विरचितं विश्वमपि खलु तत्त्वतो न जानंति किं पुनस्त्वाम् । हे ईश अभद्रं राजसं तामसं च वृत्तमुत्पत्तिर्येषां ते न जानंतीति किमु वक्तव्यम् ॥ १० ॥ किं तु त्वं तत्सर्वं जानासीत्याह । स त्वं सर्वमवरुंत्से व्याप्नोषि जानासि । किं तत्सर्वम् । समीहितं स्वकृतमदः स्थितिजन्मनाशममुष्य जगतो जन्मादिभूतानामीहितं च जगतो भवबंधमोक्षौ च व्याप्तौ दृष्टांतः । चराचराख्यं देहजातं खं च यथा वायुराविशति तथा । कथमवरुंत्से । तदात्मकतया तस्य सर्वस्यात्मतयेत्यर्थः । आत्मत्वे हेतुः । अवगमो ज्ञानरूप इति ॥ ११ ॥ एवं स्तुत्वा प्रस्तुतं विज्ञापयति अवतारा इति द्वाभ्याम् ॥ १२ ॥ १३ ॥ १४ ॥ सुरकार्याणि योषिद्वेषेण भविष्यंतीति पश्यता । अयं भावः । अवश्यं तावदुन्मत्तान्दैत्यान्वंचयित्वा देवेभ्योऽमृतं देयं न

परायुस्सर्वोत्कृष्टायुस्तेन द्विपरार्द्धो लक्ष्यते । "द्विपरार्द्धावसाने हि प्रलयो ब्रह्मणः स्मृतः" इत्युक्तेः । 'वृत्तं स्त्रीजीविकोत्पत्त्योः' इति दंडी । कैमुत्येन राजसतामसेषु भगवल्लीलाज्ञानस्यात्यंतासंभव उक्तः ॥ १० ॥ भगवति सर्वज्ञत्वं समर्थयति–किं त्विति । उपसर्गवशाद्धुधेर्व्याप्तिज्ञानोभयार्थता च । सम्यगीहितं चेष्टितं स्वेनेहितं समीहितं वा स्वशब्दस्य समादेशो हि पृषोदरादित्वात् । पृषोदरादिश्चाकृतिगणः । इत्यर्थ इति । सर्वात्मरूपत्वेन सर्वत्र व्याप्तोसीति तात्पर्यम् । अवगम्यते सर्वमनेनेत्यवगमः "ज्ञानमेवात्मनो रूपं सर्वं तद्विषयं जगत्" इति वचनात् ॥ ११ ॥ प्रस्तुतं प्रकृतम् । येन दृष्टाः सोऽहमित्यर्थः । ते त्वया ॥ १२ ॥ येन वपुषा । तद्वपुः । आयाता इति । गणापेक्षं बहुत्वम् । कौतूहलम् उत्कंठा । प्रहस्येति।स्वस्य योगेश्वरत्वं लोकेषु प्रख्यापयितुं मोहिनीरूपं दिदृक्षसे चेत्सत्यं ते तव सर्वं व्यक्तीभविष्यतीति भावः । भाव गंभीरं महादेवेनापि दुःप्रवेशम् ॥ १३ ॥ कौतूहलाय मोहनाय हर्षाय वा "कौतूहलं कौतुके तु हर्षमोहनकांतिषु" इति कोशात् । अत्राशयमाह–अयं भाव इति । ननु स्वाभाविकरूपपरित्यागे को हेतुरिति चेदाह–न चेति । एवं वैषम्यं दैत्यवंचनपूर्वं देवेभ्योऽमृतदानलक्षणं वैषम्यं रूपांतरेण स्त्रीरूपं विना । यत इत्थमत इति ॥ १४ ॥ १५ ॥

तत्तेऽहं दर्शयिष्यामि दिदृक्षोः सुरसत्तम ॥ कामिनां बहुमंतव्यं संकल्पप्रभवोदयम् ॥ १६ ॥ श्रीशुक उवाच ॥ इति ब्रुवाणो भगवांस्तत्रैवांतरधीयत ॥ सर्वतश्चारयंश्चक्षुर्भव आस्ते सहोमया॥१७॥ ततो ददर्शोपवने वरस्त्रियं विचित्रपुष्पारुणपल्लवद्रुमे ॥ विक्रीडतीं कंदुकलीलया लसद्दुकूलपर्यस्तनितंबमेखलाम् ॥ १८ ॥ आवर्तनोद्वर्तनकंपितस्तनप्रकृष्टहारोरुभरैः पदेपदे ॥ प्रभज्यमानामिव मध्यतश्चलत्पदप्रवालं नयतीं ततस्ततः ॥१९॥ दिक्षु भ्रमत्कंदुकचापलैर्भृशं प्रोद्विग्नतारायतलोललोचनाम् ॥ स्वकर्णविभ्राजितकुंडलोल्लसत्कपोलनीलालकमंडिताननाम् ॥ २० ॥ श्लथद्दुकूलं कबरीं च विच्युतां सन्नह्यतीं वामकरेण वल्गुना ॥ विनिघ्नतीमन्यकरेण कंदुकं विमोहयंतीं जगदात्ममायया ॥ २१ ॥ तां वीक्ष्य देव इति कंदुकलीलयेषद्व्रीडास्फुटस्मितविसृष्टकटाक्षमुष्टः ॥ स्त्रीप्रेक्षणप्रतिसमीक्षणविह्वलात्मा नात्मानमंतिक उमां स्वगणांश्च वेद ॥ २२ ॥ तस्याः कराग्रात्स तु कंदुको यदा गतो विदूरं तमनुव्रजत्स्त्रियाः ॥ वासः ससूत्रं लघु मारुतोऽहरद्भवस्य देवस्य किलानुपश्यतः ॥ २३ ॥

चैवं वैषम्यं रूपांतरेण कर्तुमुचितम् अतो वंचनमोहनादिसारं कामिनीरूपं मया धृतमिति ॥ १५ ॥ तद्रूपं दर्शयिष्यामि संकल्पप्रभवः कामस्तस्योदयो यस्मात्॥ १६ ॥ १७॥ विचित्राणि पुष्पाण्यरुणाः पल्लवाश्च येषां ते द्रुमा यस्मिन् । लसद्दुकूलेन पर्यस्ते परिवृते नितंबे मेखला यस्यास्ताम् ॥ १८ ॥ उत्पतत्पतत्कंदुकलीलावशेन ये आवर्तनोद्वर्तने नमनोन्नमने ताभ्यां कंपितयोः स्तनयोः प्रकृष्टहाराणां चोरुभारैः प्रतिपदं मध्ये प्रभज्यमानामिव चलत्पदमेव प्रवालवत्कोमलं ततस्ततो नयंतीम् ॥ १९ ॥ दिक्षु भ्रमतः कंदुकस्य चापलैश्चांचल्यैर्भृशं प्रोद्विग्नतारे आयते लोले चंचले लोचने यस्याः । स्वकर्णाभ्यां विभ्राजिते ये कुंडले ताभ्यामुल्लसंतौ कपोलौ ताभ्यां नीलालकैश्च मंडितमाननं यस्याः ॥ २० ॥ संनह्यंतीं बध्नंतीम् । जगद्विमोहयंतीम् ॥ २१ ॥ तां वीक्ष्य देवः श्रीरुद्र आत्मानमंतिके स्थितामुमां स्वगणांश्च न वेद । कथंभूतः इति एवंभूतया कंदुकलीलया या ईषद् व्रीडा तयाऽस्फुटं स्मितं तेन सह विसृष्टो यः कटाक्षस्तेन मुष्टो वंचितः अत एव स्वयं यत् स्त्रियाः प्रेक्षणं तया च यत् प्रतिसमीक्षणं ताभ्यां विह्वल आत्मा मनो यस्य ॥ २२ ॥ तं कंदुकमनुव्रजंत्याः स्त्रियाः । लघु सूक्ष्मं वासः ससूत्रं कांचीसहितम् ॥ २३ ॥

संकल्पाच्चिन्तनात्प्रभवतीति तथा दैत्यानां कौतूहलायेति । तादृशानामेव मोहजनकं तदतिविस्मयास्पदं योषिद्वपुर्युष्माकं योगेश्वराणां तु तदकिंचित्करं न हि मृगो मृगयुं हिंसितुं क्षमते इति भावः । दैत्यानामिति । तत्रैव स्थिताः सात्त्विकत्वाद्देवा नैव मुमुहुरिति भावः । ननु तुच्छानां दैत्यानां कृते कोयं ते यत्नस्तत्राह—पश्यतेति । गत्यंतराभावादिति भाव इति विश्वनाथः । भवतु यथा तथा तथापि तदर्थमेतावद्दूरदेशागमनं तव न वृथा भवितुमर्हतीत्याह—तदिति । दिदृक्षोरिति । दिदृक्षाऽभावे तत्रैव तव विशिष्टबुद्धिर्नापयास्यतीति भावः । कामिनां बहु मंतव्यं भवतु कामशत्रोस्तव काम उद्भवितुं नैव शक्नोति तदपि कौतुकं चेत् पश्येति भावो बाह्यः । आंतरस्तु कामजेतुरपि योगीश्वरस्यापि कामसिंधुमहावर्त्तनिक्षेपे तद्दिदृक्षैव हेतुरभून्मम नात्र दोष इति भावः ॥ १६ ॥ तत्रैव परस्परवार्त्तास्थल एव । चारयन् चालयन् ॥ १७ ॥ तत इतस्ततश्चक्षुश्चालनोत्तरम्। वरस्त्रियं सुरूपां स्त्रीम् । कंदुकस्य वस्त्रनिर्मितदृढसूत्रबद्धपिंडाकारक्रीडनकस्य लीलयेतस्ततः प्रक्षेपपूर्वकधारणेन ॥ १८ ॥ प्रभज्यमानामिव त्रुट्यमानामिव । ततस्ततस्तत्रतत्र ॥ १९ ॥ २० ॥ दुकूलमुत्तरीयम् । कबरीं केशपाशम् । मायाया बहिरंगशक्त्या जगन्मोहयंती संप्रति जितमायमात्माराममपि शंभुमात्मस्वरूपेणैव मोहयंतीमिति भावः ॥ २१ ॥ अत एव वंचितत्वादेव विह्वल आकुलः ॥ २२ ॥ तस्या मोहिन्याः ॥ २३ ॥

एवं तां रुचिरापांगीं दर्शनीयां मनोरमाम् ॥ दृष्ट्वा तस्यां मनश्चक्रे विषज्जंत्यां भवः किल ॥ २४ ॥ तयाऽपहृतविज्ञानस्तत्कृतस्मरविह्वलः ॥ भवान्या अपि पश्यंत्या गतह्रीस्तत्पदं ययौ ॥ २५ ॥ सा तमायांतमालोक्य विवस्त्रा व्रीडिता भृशम् ॥ निलीयमाना वृक्षेषु हसंती नान्व तिष्ठत ॥ २६ ॥ तामन्वगच्छद्भगवान्भवः प्रमुषितेंद्रियः ॥ कामस्य च वशं नीतः करेणुमिव यूथपः ॥ २७ ॥

विषज्जंत्यां कुंचितकटाक्षैरात्मानं निरीक्षमाणायाम् ॥ २४ ॥ तत्पदं तस्याः समीपं ययौ ॥ २५ ॥ २६ ॥ २७ ॥

कुंचितं वक्रम् ॥ २४ ॥ तस्या मोहिन्याः । पदं समीपम् "पदं व्यवसितत्राणलक्ष्मनैकव्यवस्तुषु । शब्दे वाक्ये च चरणे प्रमाणे सूक्ष्मशस्तयोः ॥" इति धरणिः ॥ २५ ॥ सा मोहिनी । तं भवम् । निलीयमानात्मानं गोपायंती । नान्वतिष्ठत एकत्र न तस्थौ ॥ २६ ॥ 'करेणुरिभ्याम्' इत्यमरः । करेणुपदसान्निध्याद्यूथपोत्र हस्ती ग्राह्यः । सन्निधेरपि शक्तिग्राहकत्वात् । तदुक्तं काव्यप्रकाशे—"संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिंगं शब्दस्यान्यस्य संनिधिः ॥ सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः । शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ॥" इति । अनवच्छेदेऽनिश्चये बाहुल्ये वा सति विशेषो विवक्षितार्थस्तस्य स्मृतिर्ज्ञानं तस्य हेतव इत्यर्थः । आदिनाऽभिनयो ग्राह्यः । विप्रयोगः संयोगध्वंसो विभागो वा । विरोधस्सहानवस्थानं वध्यघातकत्वं च । अर्थः प्रयोजनम् । प्रकरणं बुद्धिस्थत्वम् । लिंगमसाधारणधर्मः । अन्यस्य शब्दस्य संनिधिः सामानाधिकरण्यम् । सामर्थ्यं कारणत्वम् । औचिती योग्यता । व्यक्तिः स्त्रीनपुंसकादिः । स्वर उदात्तादिः । संयोगोदाहरणम् 'सशंखचक्रो हरिः' । विप्रयोगस्य 'अशंखचक्रोहरिः' इति । अत्र हरौ शंखचक्र इति व्यत्यासो ज्ञेयः । अन्यथाऽन्यशब्दसामानाधिकरण्येन पौनरुक्त्यं स्यादिति देवनाथकाव्यप्रदीपौ अशंखे संयोगपूर्वकत्वात्तद्ध्वंसस्य च तेन विष्णुधीरित्यर्थः । साहचर्यस्याह—'रामलक्ष्मणौ' इति । दाशरथौ । लक्ष्मणसाहचर्याद्रामो न भार्गवादिः । रामसाहचर्याच्च लक्ष्मणो न सारसः किं तूभावपि दाशरथी वर्त्तेते इत्यर्थः । विरोधस्याह—'रामार्जुनगतिस्तयोः' इति । भार्गवकार्त्तवीर्ययोः । अर्जुनविरोधाद्रामो भार्गवः तद्वध्यत्वाच्चार्जुनः कार्त्तवीर्यः । तद्वत्तयोर्योद्ध्रोर्गतिः प्रकारः । सहानवस्थाने तु छायातपावित्युदाहार्यम् । अर्थस्याह—'स्थाणुं भज भवच्छिदे' इति हरे । छिदे छेदाय क्विप् । भवच्छेदस्य फलस्य वृक्षाद्यसाध्यत्वात्स्थाणुपदं शिवपरम् । प्रकरणस्याह—'सर्वं जानाति देवः' इति । युष्मदर्थे । राजामररूपनानार्थस्य देवपदस्य राजानं संबोध्य कथाप्रवृत्तौ प्रकृतराजपरत्वं स एव युष्मदर्थः बुद्धिस्थत्वात् । लिंगस्याह—'कुपितो मकरध्वजः' इति । कामे । कुपितपदात्सर्वकोपवतां प्राप्तौ मकरध्वजेन चिह्नेन कुपितपदं कामपरं यच्च मकरो ध्वजश्चिह्नं केतुर्वास्येति समुद्रे राज्ञि वा विरहि कोपस्य बाधात्कामपदं मकरध्वजपरमिति परमानंदादयस्तन्न मकरध्वजपदस्य समुद्रादौ काव्यप्रयोगात् । अन्यशब्दसन्निधेराह—'देवस्य पुरारातेः' इति । शंभौ । अन्यस्य देवपदार्थस्य त्रिपुरभेदाभावाद्देवपदं शंभुपरं यद्यपि भवच्छिद इत्यत्रान्यशब्दसंनिधिस्तुल्यस्तथापि सामानाधिकरण्याभावादगतार्थता 'सशंखचक्रम्' इत्यादौ तत्सत्त्वेपि व्यत्यासो ज्ञेय इत्युक्तम् । केचित्तु पुरारातिपदं न नृपे किं तु शंभौ नियम्यत इत्याहुः । सामर्थ्यमाह—'मधुना मत्तः कोकिलः' इति । वसंते । कोकिलमदहेतुत्वस्यान्यत्राभावान्मधुर्वसंत एव न सुरादिः । औचित्यस्याह—'पातु वो दयितामुखम्' इति । सांमुख्ये । मुखपदं सांमुख्यपरं न वदनपरं कामत्राणायोगात् । यद्यपि वदनमपि कामत्रायकं तथापि सांमुख्यमेव योग्यमन्यथा वैरस्यात् । न च सामर्थ्येन गतार्थत्वं तत्र फलोपधानस्यात्र स्वरूपयोग्यताया विवक्षणात् । देशस्याह—'भात्यत्र परमेश्वरः' इति । राजधानीरूपाद्देशाद्राजनि अत्र राजधानीदेशे परमेश्वरो राजा न विष्णुस्तस्य सर्वगतत्वादत्रेति वैयर्थ्यात् । कालस्याह—'चित्रभानुर्विभाति' इति । दिने रवौ रात्रौ वह्नौ । चित्रा भानवः किरणा यस्येत्यविशेषेपि दिने रविः रात्रौ वह्निस्तयोस्तत्रैव दीप्त्याधिक्यात् । व्यक्तेराह—'मित्रं भाति' इति । सुहृदि । 'मित्रो भाति' इति । रवौ । 'मित्रं सुहृदि मित्रोर्कः' इत्यनुशासनात्तत्तत्परत्वं भातीति पदाच्च लिंगनिर्णयः । अन्यथा द्वितीयैकवचने पुंस्त्वेपि तत्सत्त्वात् । स्वरस्याह—'इंद्रशत्रुः' इत्यादौ वेदे एव न काव्ये स्वरोर्थविशेषप्रतीतिकृदिति । इंद्रशत्रुपदेंतोदात्ते इंद्रस्य शत्रुः शातयिता मारयितेति षष्ठीतत्पुरुषार्थः । समासस्य' इति सूत्रात् । आद्युदात्ते तु इंद्रः शातयिता यस्येति बहुव्रीह्यर्थः । "बहुव्रीहौ प्रकृत्या पूर्वपदम्" इत्युक्तेः ।

सोऽनुव्रज्यातिवेगेन गृहीत्वाऽनिच्छतीं स्त्रियम् ॥ केशबंध उपानीय बाहुभ्यां परिषस्वजे ॥ २८ ॥ सोपगूढा भगवता करिणा करिणी यथा ॥ इतस्ततः प्रसर्पंती विप्रकीर्णशिरोरुहा ॥ २९ ॥ आत्मानं मोचयित्वांऽग सुरर्षभभुजांतरात् ॥ प्राद्रवत्सा पृथुश्रोणी माया देवविनिर्मिता ॥ ३० ॥ तस्याऽसौ पदवीं रुद्रो विष्णोरद्भुतकर्मणः ॥ प्रत्यपद्यत कामेन वैरिणेव विनिर्जितः ॥ ३१ ॥ तस्यानुधावतो रेतश्चस्कंदामोघरेतसः ॥ शुष्मिणो यूथपस्येव वासितामनुधावतः ॥ ३२ ॥ यत्रयत्रापतन्मह्यां रेतस्तस्य महात्मनः ॥ तानि रूप्यस्य हेम्नश्च क्षेत्राण्यासन्महीपते ॥ ३३ ॥ सरित्सरःसु शैलेषु वनेषूपवनेषु च ॥ यत्र क्व चासन्नृषयस्तत्र सन्निहितो हरः ॥ ३४ ॥ स्कन्ने रेतसि सोऽपश्यदात्मानं देवमायया ॥ जडीकृतं नृपश्रेष्ठ संन्यवर्तत कश्मलात् ॥ ३५ ॥ अथावगतमाहात्म्य आत्मनो जगदात्मनः ॥ अपरिज्ञेयवीर्यस्य न मेने तदुहाद्भुतम् ॥ ३६ ॥

॥२८॥२९॥ अंग हे राजन्॥३०॥३१॥३२॥३३॥एवं तामनुधावन् हरः सरित्सरस्सु शैलादिषु च सन्निहितो बभूव॥३४॥३५॥ जगदात्मनोऽवगतं माहात्म्यं येन स

इति । एवं द्व्यर्थविषावगमे श्लेषभंगापत्तेः । यथा श्लेषे वक्ष्यति च 'काव्यमार्गे स्वरो न गण्यते' इति । ननु काव्येऽपि स्वरोर्थधीहेतुरस्त्येव तथाहि ध्वनेः पाठविशेषात्स्वरे विशेषधीः । यथोक्तम् 'वीरबीभत्सरौद्रेषु स्वरितोदात्तं कुर्यात्' इति । काकोश्च मथ्नातीत्यादिषु व्यंजकत्वं वक्ष्यति कुस्वराच्च रोधनादिधीः।'दृष्टे प्रसीदाधुना' इति दृष्टे इत्यत्र प्लुते मयीति व्यावृत्तेः कांतादृष्टिर्वार्थः।अतः कथं न काव्य इत्युक्तम् । अत्र लाटभास्करः—स्वरशब्देनोदात्तादिरेव विवक्षित इत्याह । अर्वाचस्तु—यथा वेदे बाहुल्येन स्वरादर्थधीर्न तथा काव्ये किं तु क्वचिदित्याहुः । मधुमतीकारादयस्तु—अभिधानियामकः स्वरो वेद एव अनुशासनात् । न काव्ये तत्र तु काक्वादिसहकृतादर्थाद्व्यंजनयार्थधीर्नाभिधयेत्याहुरित्यलं प्रसक्तानुप्रसक्त्या ॥ २७ ॥ स शिवः ॥ २८ ॥ सा मोहिनी । भगवता रुद्रेण ॥ २९ ॥ 'मम माया दुरत्यया' इत्याद्युक्तेर्मायाया देवो विष्णुस्तेन विनिर्मिता स्वस्वरूपात्प्रकटिता सेति योज्यम् ॥ ३० ॥ तस्य मोहिनीरूपस्य । मोहिनीरूपत्वे हेतुरद्भुतकर्मण इति । इवशब्देन वस्तुतः कामात्पराजयाभाव उक्तः । तेनैव कामनाशस्य शास्त्रे श्रवणात् ॥ ३१ ॥ चस्कंद पपात । अमोघरेतस इत्यनेन पतदपि तद्रेतो लोके बहुकार्यकार्यभूदित्युक्तम् 'तानि रुद्रस्य हेम्नश्च' इति वक्ष्यमाणत्वात् । हेमत्वादिना परिणाम एवामोघरेतस्त्वमिति भावः । शुष्मिणो मत्तस्य हस्तींद्रस्य । वासितां हस्तिनीम् 'वासिता करिणीनार्योः' इति मेदिनी ॥ ३२ ॥ तानि रुद्ररेतःपातस्थलानि । रुद्रस्य रजतस्य पारदस्य च क्षेत्राण्युत्पत्तिस्थलानि । 'रुद्री स्तो रजतस्थाणू रुद्री पारददुष्कृती' इति निरुक्तिः ॥ ३३ ॥ यत्र सरिदादिषु ऋषय आसंस्तत्र सर्वत्र संनिहितो निकटः तत्रतत्र धावनं तु हरस्य योगभ्रंशमृषिभ्यो दर्शयितुमेवेति ध्वनिः । तेन योगारूढैरपि मुनिभिस्स्वजितमपि मनो युवतिषु न विश्वसनीयमित्यनुध्वनिः ॥ ३४ ॥ "विषादक्लेशपापेषु कश्मलं बाधने त्रिषु" इति कोशात् ॥ ३५ ॥ अथ रेतःपातोत्तरम् । आत्मनः स्वस्य । तत् मोहिन्यनुगमनादि । उहेति वितर्के । अद्भुतमननाभावे हेतुः—जगदात्मनो भगवतोऽवगतं माहात्म्यं स्वमोहविवेकौ हर्यायत्ताविति महत्त्वं येन स तथा । अपरिज्ञेयवीर्ये भगवति सर्वं मम मोहनादिकं नासंभवीति ज्ञातवानित्यर्थः । "मा मंस्था ह्येतदाश्चर्यं सर्वाश्चर्यमयेऽच्युते" इत्याद्युक्तेः । यद्वात्मनः स्वस्यावगतमाहात्म्यो ज्ञातयोगैश्वर्यप्रभावः । तज्जडीकरणं विवेकप्रदानं चाद्भुतं

तमविक्लवमव्रीडमालक्ष्य मधुसूदनः ॥ उवाच परमप्रीतो बिभ्रत्स्वां पौरुषीं तनुम् ॥ ३७ ॥ श्रीभगवानुवाच ॥ दिष्ट्या त्वं विबुधश्रेष्ठ स्वां निष्ठामात्मना स्थितः ॥ यन्मे स्त्रीरूपया स्वैरं मोहितोऽप्यंग मायया ॥ ३८ ॥ को नु मेऽतितरेन्मायां विषक्तस्त्वदृते पुमान् ॥ तांस्तान्विसृजतीं भावान्दुस्तरामकृतात्मभिः ॥ ३९ ॥ सेयं गुणमयी माया न त्वामभिभविष्यति ॥ मया समेता कालेन कालरूपेण भागशः ॥ ४० ॥ श्रीशुक उवाच ॥ एवं भगवता राजञ्छ्रीवत्सांकेन सत्कृतः ॥ आमंत्र्य तं परिक्रम्य सगणः स्वालयं ययौ ॥ ४१ ॥ आत्मांशभूतां तां मायां भवानीं भगवान्भवः ॥ शंसतामृषिमुख्यानां प्रीत्याचष्टाथ भारत ॥ ४२ ॥ अयि व्यपश्यस्त्वमजस्य मायां परस्य पुंसः परदेवतायाः ॥ अहं कलानामृषभो विमुह्ये ययाऽवशोऽन्ये किमुतास्वतंत्राः ॥ ४३ ॥ यं मामपृच्छस्त्वमुपेत्य योगात्समासहस्रांत उपारतं वै ॥ स एष साक्षात्पुरुषः पुराणो न यत्र कालो विशते न वेदः ॥ ४४ ॥

आत्मनः तदु ह देवमायया जडीकरणम् अद्भुतं न मेने॥ ३६॥ अविक्लवं स्वस्थम्॥ ३७॥ आत्मना स्वयं स्वां निष्ठां प्रकृतिम्॥ ३८॥ विषक्तो मोहपाशयंत्रितः त्वदृते त्वां विना। भावान् चेष्टाविशेषान् ॥ ३९ ॥ कालेन सृष्ट्यादिनिमित्तेन मया कालरूपेण । भागशो रजआद्यंशेन । समेता मदधीना सती ॥ ४० ॥ ४१ ॥ विष्णोरंशभूतां तां स्तुवतां सतां हे भारत ॥ ४२ ॥ अयि हे प्रिये व्यपश्यः दृष्टवत्यसि । कलानां विभूतीनाम् ऋषभोप्यवशोऽपरवशोऽपि विमुह्ये ॥ ४३ ॥ वर्षसहस्रांते योगात्समाधेरुपारतं

न मेने । तत्र हेतुः जगदात्मनः जगन्मध्यवर्तिनं मामपि मोहयितुं बोधयितुं च समर्थस्येत्यर्थः । ॥ ३६ ॥ अविक्लवमनाकुलमव्रीडं तदनुधावनेऽप्यप्राप्तलज्जं हंतहंत महायोगेश्वरोऽप्यहं विषयांध एवाभूवमित्यनुतापराहित्याद विक्लवं स्वांतर्यामिणि का लज्जेत्यव्रीडम् । अयं भावः । नाहमन्येन केनापि मोहयितुं शक्यः मत्प्रभुणा मन्मोहनं न दूषणावहं प्रत्युत भूषणावहमेव भक्त्युत्कर्षहेतुत्वादिति विश्वनाथः । मधुसूदन इति । महादेवस्य योगेश्वरत्वाहंकारासुरसूदकः । तं रुद्रम् । पौरुषीं पुरुषसंबंधिनीम् ॥३७॥ प्रकृतिं ज्ञानलक्षणां भक्तिलक्षणाम् "कचिन्मोहितोप्यंग मायया" इत्यपि पाठः । स च शोभनो भाति कचिच्च 'मोहितो नांग मायया' इति पाठः । स च सुबोध एव । स्वैरं स्वेच्छया स्त्रीरूपयेति योज्यम् । यद्वा स्वैरं लीलयैव मोहितोऽसि न वस्तुत इत्यर्थः । यद्यतो मे मम स्वां निष्ठां निरहंकारतां वा । यद्वा—स्वां निष्ठां स्वस्थानस्थितिरूपां न तु मद्रूपदर्शनमोहित इतश्चचालेत्युपहासो वा । आत्मना स्वरूपत्वेन स्थितः । यद्वात्मना स्वभावेनैवेत्यर्थः ॥ ३८ ॥ विषक्तो विषयासक्तः । त्वदिति पंचमी । त्वां विहाय न कोपि मन्मायां तरितुं समर्थः त्वदाराधनबलेन विषयासक्तोऽपि तरेदिति भगवता रुद्रस्य स्वरूपत्वं दर्शितम् । अन्यथा "मामेव ये प्रपद्यंते मायामेतां तरंति ते" इत्युक्तिरसमंजसा स्यादिति भावः । तांस्तान्कामोद्दीपकान्भावानभिप्रायान् । अकृतात्मभिरसंयतचित्तैः ॥ ३९ ॥ सेयमिति । या साक्षादनुभूतेत्यर्थः । सृष्ट्यादिनिमित्तेन । विश्वसृष्टिस्थितिसंहृतिहेतुना सृष्टिप्रलयादौ त्वां माया न तिरस्करिष्यतीत्यर्थः । मया समेता सम्यक्प्रेरिता मदधीनेति यावत् । समाङ्पूर्वादिणः क्तप्रत्यये रूपं समेतेति ॥ ४० ॥ श्रीवत्सांकेनेत्यनेन प्रणतमुत्थाप्य वक्षसालिंगितवानिति सूचितम् । तं श्रीवत्सांकम् ॥४१॥ आत्मनोंऽशोर्द्धं तद्रूपाम् । "अर्द्धो वा एष आत्मनो यत्पत्नी" इति श्रुतेः । यद्वांशः शक्तिः । तां भगवता दर्शितां मायाम् । शंसतां कथयताम् । तान्निवर्त्य अनादरे षष्ठी ॥ ४२ ॥ कलानां भगवदंशभूतानाम् । देवानां मध्ये । यया मायया । अवशो भगवदधीनः ॥४३॥ समासहस्रांते सहस्रवर्षान्ते । योगात्समाधेरुपारतं निवृत्तं त्वं समाधौ कं ध्यायसीति

श्रीशुक उवाच ॥ इति तेऽभिहितस्तात विक्रमः शार्ङ्गधन्वनः ॥ सिंधोर्निर्मथने येन धृतः पृष्ठे महाचलः ॥४५॥ एतन्मुहुः कीर्तयतोऽनुशृण्वतो न रिष्यते जातु समुद्यमः क्वचित् ॥ यदुत्तमश्लोकगुणानुवर्णनं समस्तसंसारपरिश्रमापहम् ॥ ४६ ॥ असदविषयमंघ्रिं भावगम्यं प्रपन्नानमृतममरवर्यानाशयत्सिंधुमथ्यम् ॥ कपटयुवतिवेषो मोहयन्यः सुरारींस्तमहमुपसृतानां कामपूरं नतोऽस्मि ॥ ४७ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे शंकरमायामोहनं नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ मनुर्विवस्वतः पुत्रः श्राद्धदेव इति श्रुतः ॥ सप्तमो वर्तमानो यस्तदपत्यानि मे शृणु ॥ १ ॥ इक्ष्वाकुर्नभगश्चैव धृष्टः शर्यातिरेव च ॥ नरिष्यंतोऽथ नाभागः सप्तमो दिष्ट उच्यते ॥ २ ॥ करूषश्च पृषध्रश्च दशमो वसुमान्स्मृतः ॥ मनोर्वैवस्वतस्यैते दश पुत्राः परंतप ॥ ३ ॥ आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥ अश्विनावृभवो राजन्निंद्रस्तेषां पुरंदरः ॥ ४ ॥ कश्यपोऽत्रिर्वसिष्ठश्च विश्वामित्रोऽथ गौतमः ॥ जमदग्निर्भरद्वाज इति सप्तर्षयः स्मृताः ॥ ५ ॥ अत्रापि भगवज्जन्म कश्यपाददितेरभूत् ॥ आदित्यानामवरजो विष्णुर्वामनरूपधृक् ॥ ६ ॥ संक्षेपतो मयोक्तानि सप्त मन्वंतराणि ते ॥ भविष्याण्यथ वक्ष्यामि विष्णोः शक्त्यान्वितानि च ॥ ७ ॥

मां किं ध्यायसीति त्वं यमपृच्छः स एष यत्र कालो न विशते अपरिच्छिन्नत्वात् । न च वेदः अगोचरत्वात् ॥ ४४ ॥ अष्टाध्यायार्थनिगमनम् । इतीति ॥ ४५ ॥ एतत्कीर्तनादौ फलमाह । एतदिति ॥ ४६ ॥ भगवता कृतं भक्तपक्षपातं स्मरन्नमस्करोति । असतामविषयम् । भावो भजनं तेन गम्यमंघ्रिं प्रपन्नान् शरणागतान्सिंधुमथ्यं सिंधोर्मथनेन जातममृतं य आशयदभोजयत् ॥ ४७ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां द्वादशोऽध्यायः ॥ १२ ॥ त्रयोदशे तु वर्ण्यंते सप्तमादीन्यनुक्रमात् ॥ मन्वंतराणि सर्वाणि षड्विधानि पृथक्पृथक् ॥ १ ॥ सप्तमादिमन्वंतराण्याह मनुरित्यादिना यावदध्यायसमाप्ति ॥ १ ॥ २ ॥ ३ ॥ आदित्यादयो देवा इत्यन्वयः ॥ ४ ॥ ॥ ५ ॥ भगवतो जन्म अवतारः । तमेवाह । आदित्यानां विवस्वानर्यमा पूषेत्याद्युक्तानां मध्ये अवरं जन्म यस्य सः ॥ ६ ॥ शक्त्याऽवतारेणान्वितानि ॥ ७ ॥

पृष्टवती वेदोऽपि यं तात्पर्येणैव बोधयति न साक्षादविषयत्वात् । स एष इत्यर्थः ॥ ४४ ॥ निगमनं बोधनम् । येन शार्ङ्गधन्वना । कूर्मरूपेण ॥ ४५ ॥ न रिष्यते न नश्यति । रिष्यतेस्तङार्षः । यद्यतः । समस्तः समग्रो यः संसारपरिश्रमः शोकमोहादिरूपस्तमपहंतीति तथा ॥ ४६ ॥ असतां कुटिलमनसामविषयमगम्यम् । अशेः प्रत्यवसानार्थत्वादणिकर्तुः कर्मत्वममरवर्यानिति । कपटेन छद्मना युवतिवेषो यस्य स तथा । तादर्थ्यचतुर्थ्या वा समासः । सुरारीन्दैत्यान् । उपसृतानां शरणं प्राप्तानाम् । कामानभिलषितान्पूरयतीति तथा तम् ॥ ४७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे द्वादशोऽध्यायः ॥ १२ ॥ षड्विधानि मन्वंतरं मनुपुत्रा इत्याद्युक्तलक्षणानि ( १ ) । तदपत्यानि श्राद्धदेवपुत्रान् ॥ १ ॥ २ ॥ ३ ॥ तेषामादित्यादीनाम् ॥ ४ ॥ ५ ॥ अवरं पश्चिमम् ॥ ६ ॥ ७ ॥

विवस्वतश्च द्वे जाये विश्वकर्मसुते उभे ॥ संज्ञा छाया च राजेंद्र ये प्रागभिहिते तव ॥ ८ ॥ तृतीयां वडवामेके तासां संज्ञासुतास्त्रयः ॥ यमो यमी श्राद्धदेवश्छायायाश्च सुतांच्छृणु ॥ ९ ॥ सावर्णिस्तपती कन्या भार्या संवरणस्य या ॥ शनैश्चरस्तृतीयोऽभूदश्विनौ वडवात्मजौ ॥ १० ॥ अष्टमेंऽतर आयाते सावर्णिर्भविता मनुः ॥ निर्मोकविरजस्काद्याः सावर्णितनया नृप ॥ ११ ॥ तत्र देवाः सुतपसो विरजा अमृतप्रभाः ॥ तेषां विरोचनसुतो बलिरिंद्रो भविष्यति ॥ १२ ॥ दत्त्वेमां याचमानाय विष्णवे यः पदत्रयम् ॥ राद्धमिंद्रपदं हित्वा ततः सिद्धिमवाप्स्यति ॥ १३ ॥ योऽसौ भगवता बद्धः प्रीतेन सुतले पुनः ॥ निवेशितोऽधिके स्वर्गादधुनास्ते स्वराडिव ॥ १४ ॥ गालवो दीप्तिमान्रामो द्रोणपुत्रः कृपस्तथा ॥ ऋष्यशृंगः पिताऽस्माकं भगवान्बादरायणः ॥ १५ ॥ इमे सप्तर्षयस्तत्र भविष्यंति स्वयोगतः ॥ इदानीमासते राजन्स्वेस्व आश्रममंडले ॥ १६ ॥ देवगुह्यां सरस्वत्यां सार्वभौम इति प्रभुः ॥ स्थानं पुरंदराद्धृत्वा बलये दास्यतीश्वरः ॥ १७ ॥ नवमो दक्षसावर्णिर्मनुर्वरुणसंभवः ॥ भूतकेतुर्दीप्तिकेतुरित्याद्यास्तत्सुता नृप ॥ १८ ॥

अष्टमं मनुं वक्तुं कथामाह विवस्वत इति त्रिभिः ॥ ८ ॥ एके वडवां तृतीयामाहुः मम तु संज्ञैव वडवेति मतम् । तदुक्तं षष्ठे । "सैव भूत्वाऽथ वडवा नासत्यौ सुषुवे भुवि" इति । यमश्च यमी च यमुना श्राद्धदेवश्चेति त्रयः सुताः ॥ ९ ॥ सावर्णिः पुत्रः ॥ १० ॥ ११ ॥ १२ ॥ पदत्रयं याचमानायेमां सर्वां महीं सप्तमे मन्वंतरे दत्त्वाऽष्टमे मन्वंतरे विष्णोः प्रसादेन च राद्धं लब्धमिंद्रपदं हित्वेत्यर्थः ॥ १३ ॥ १४ ॥ रामः परशुरामः । द्रोणपुत्रोऽश्वत्थामा ॥ १५ ॥ इदानीं तु स्वयोगत आसते ॥ १६ ॥ १७ ॥ १८ ॥

प्राक् षष्ठस्कंधे ॥ ८ ॥ एके केचित् । तासां तिसृणां मध्ये सुतौ च सुता चेत्येकशेषः । एवमग्रेपि ॥ ९ ॥ संवरणस्य राज्ञः ॥ १० ॥ आयाते आगामिनि । सावर्णिश्छायासूनुः । आदिनार्वरीरादिग्रहः । "वीरजाश्चार्ववीरश्च निर्मोहस्सत्यवाक् कृतिः । विष्णवाद्याश्चैव तनयाः सावर्णेश्च मनोः स्मृताः" इति मार्कंडेयोक्तेः । हरिवंशे तु "वरीयांश्चावरीयांश्च संमतो धृतिमान् वसुः । चरिष्णुरप्यधृष्णुश्च वाजः सुमतिरेव च ॥ सावर्णस्य मनोः पुत्रा भविष्या दश भारत ॥" इत्युक्तम् । नामभेदस्तु कल्पांतराभिप्रायको ज्ञेयः सर्वत्र ॥ ११ ॥ तत्र सावर्णेरंतरे । तेषां सुतपआदीनाम् ॥ १२ ॥ इमां भुवम् । राद्धं लब्धम् ततो विष्णोः सिद्धिं भोगमोक्षरूपाम् । इत्यर्थ इति । शतक्रतून् विनेंद्रपदस्थितिर्दुर्लभाऽतो भगवता दानमिषेणानंताश्वमेधफलं तस्येंद्रपदस्थितये दातुं स्वयं गृहीतं पदत्रयमिषेण त्रैलोक्यमिति भावः ॥ १३ ॥ योऽसौ बलिः बुद्धिस्थत्वेन सन्निहितत्वादसावित्युक्तिः । स्वराडिव इंद्रवत् । तत्र नित्यं द्वारपवद्भगवत्संनिधित्वात्स्वर्गाधिक्यम् "नित्यं मां तत्र द्रष्टासि गदापाणिमवस्थितम्" इत्युक्तेः । यद्यपि स्वर्गेप्युपेंद्ररूपेण नित्यं भगवतः स्थितिरस्ति तथापि तत्र द्वारपरूपेण नास्त्यतस्तत आधिक्यमिति ॥ १४ ॥ १५ ॥ इमे वक्ष्यमाणाः । तत्र सावर्णेरंतरे । स्वयोगतो निजयोगबलेन । इदानीं त्वदीयकाले ॥ १६ ॥ अंतर्जलवाहिनीत्वेन देवैरप्यलक्ष्यायां सरस्वत्याम् तत्तटे जातः । वस्तुतस्तु—'देवगुह्यात्सरस्वत्याम्' इति पाठः शोभनः प्रतिभाति । यद्वा—सरस्वतीनाम्न्यां मातरि । सार्वभौमनामा प्रभुरीश्वरावतारः । स्थानं स्वर्गम् ॥ १७ ॥ वरुणसंभवो वरुणपुत्रः । यत्तु मार्कंडेयादौ "दक्षपुत्रश्च सावर्णिर्भावी यो नवमो मनुः" इत्युक्तं तत् कल्पांतराभिप्रायं दक्षस्यैव वरुणेति

पारा मरीचिगर्भाद्या देवा इंद्रोऽद्भुतः स्मृतः ॥ द्युतिमत्प्रमुखास्तत्र भविष्यंत्यृषयस्ततः ॥ १९ ॥ आयुष्मतोंबुधारायामृषभो भगवत्कला ॥ भविता येन संराद्धां त्रिलोकीं भोक्ष्यतेऽद्भुतः ॥ २० ॥ दशमो ब्रह्मसावर्णिरुपश्लोकसुतो महान् ॥ तत्सुता भूरिषेणाद्या हविष्मत्प्रमुखा द्विजाः ॥ २१ ॥ हविष्मान्सुकृतः सत्यो जयो मूर्तिस्तदा द्विजाः ॥ सुवासनविरुद्धाद्या देवाः शंभुः सुरेश्वरः ॥२२॥ विष्वक्सेनो विषूच्यां तु शंभोः सख्यं करिष्यति ॥ जातः स्वांशेन भगवान्गृहे विश्वसृजो विभुः ॥ २३ ॥ मनुर्वै धर्मसावर्णिरेकादशम आत्मवान् ॥ अनागतास्तत्सुताश्च सत्यधर्मादयो दश ॥ ॥ २४ ॥ विहंगमाः कामगमा निर्वाणरुचयः सुराः ॥ इंद्रश्च वैधृतिस्तेषामृषयश्चारुणादयः ॥ २५ ॥ आर्यकस्य सुतस्तत्र धर्मसेतुरिति स्मृतः ॥ वैधृतायां हरेरंशस्त्रिलोकीं धारयिष्यति ॥२६॥ भविता रुद्रसावर्णी राजन्द्वादशमो मनुः ॥ देववानुपदेवश्च देवश्रेष्ठादयः सुताः ॥ २७ ॥ ऋतधामा च तत्रेंद्रो देवाश्च हरितादयः ॥ ऋषयश्च तपोमूर्तिस्तपस्व्यग्नीध्रकादयः ॥ २८ ॥ स्वधामाख्यो हरेरंशः साधयिष्यति तन्मनोः ॥ अंतरं सत्यसहसः सूनृतायाः सुतो विभुः ॥ २९ ॥

अद्भुत इंद्रः ॥ १९ ॥ २० ॥ २१ ॥ हविष्मत्प्रमुखा इत्युक्तानामेव केषांचिन्नामान्याह । हविष्मानिति ॥ २२ ॥ विषूच्यां जातः सन् ॥ २३ ॥ एकादशम इत्यादिरार्षः ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ तस्य मनोरंतरं साधयिष्यति । सत्यसहसः या सूनृता स्त्री तस्याः सुतः सन् ॥ २९ ॥

नामांतराभिप्रायम् । तत्सुता दक्षसावर्णिपुत्राः । आदिना पंचहोत्रादिग्रहः "मनोः पुत्रो धृष्टकेतुः पंचहोत्रो निराकृतिः । पृथुश्रवा भूरिधामा ऋर्बाकोष्टगतो गयः ॥ एते हि दक्षसावर्णेर्नव पुत्रा महौजसः ॥" इति हरिवंशोक्तेः ॥१८॥ आदिना सुधर्मग्रहः । "पारा मरीचिगर्भाश्च सुधर्माणस्तथा सुराः। एते त्रिधा भविष्यंति सर्वे द्वादशका गणाः ॥" इति मार्कंडेयोक्तेः । अद्भुतनामा "अद्भुतो नाम शक्रोऽसौ भावी तस्यांतरे मनोः " इति च । तत्रैव द्युतिमान्प्रमुखो येषां ते तथा । तदुक्तं मार्कंडेये "मेधातिथिर्वसुः सत्यो ज्योतिष्मान्द्युतिमांस्ततः । सप्तर्षयोऽन्यः सबलस्तथाऽन्यो हव्यवाहनः॥" इति । ततस्तत्र ॥१९॥ अंबुधारायां तन्नाम्न्याम् । ऋषभस्तन्नामा भगवतः कलाऽवतारः । येनर्षभेण । संराद्धां साधिताम् ॥२०॥ उपश्लोकेति । ब्रह्मणो नामांतरम् । 'मन्वंतरे तु दशमे ब्रह्मपुत्रस्य धीमतः ।' इति मार्कंडेयोक्तेः । तत्सुता ब्रह्मसावर्णिसुताः । आदिना सुक्षेत्रादयो ज्ञेयाः । तदुक्तं मार्कंडेये—"सुक्षेत्रश्चोत्तमौजाश्च भूमिसेनश्च वीर्यवान् । शतानीकोऽथ वृषभो ह्यनमित्रो जयद्रथः । भूरिद्युम्नस्सुपर्वा च तस्यैते तनया मनोः । " इति ॥ २१ ॥ मार्कंडेये तु "आपो मूर्त्तिर्हविष्मांश्च सुकृती सत्य एव च । नाभागोऽप्रतिमश्चैव वाशिष्ठश्चैव सप्तमः॥" इत्युक्तम् । आपो मूर्त्तिरिति नामद्वयं जय इत्यापस्य नामात्रेति । आदिना सुखग्रहः । "सुखाः सीनानि रुद्धाश्च त्रिप्रकाराः सुराः स्मृताः । शतसंख्या हि ते देवाः" इति मार्कंडेयात् ॥ २२ ॥ शंभोरिंद्रस्य । विश्वसृजो मरीच्यादिष्वन्यतमस्यानिर्दिष्टनाम्नः ॥ २३ ॥ अनागता भविष्याः । आदिना क्षेमधन्वादिग्रहः । "संवर्तकः सुशर्मा च देवानीकः पुरूद्वहः । क्षेमधन्वा दृढायुश्च ह्यादर्शः पंडको मनुः॥" इति हरिवंशात् ॥ २४ ॥ 'एकादशे त्रिधा देवा एकैकस्त्रिंशतो गणः' इति मार्कंडेये । आदिना हविष्मदादिग्रहः "हविष्मांश्च वरिष्ठश्च ऋषिरन्यस्तथारुणिः । निश्चरश्चानघश्चैव विष्टिश्चान्यो महामुनिः ॥ सप्तर्षयोंतरे तस्मिन्नग्निदेवश्च सप्तमः ।" इति मार्कंडेयोक्तेः ॥ २५ ॥ तत्रैकादशे धर्मसावर्णेरंतरे । आर्यकस्य पितुः । वैधृतायां मातरि ॥ २६ ॥ आदिना विदूरथादिग्रहः । तदुक्तं मार्कंडेये "देववानुपदेवश्च देवश्रेष्ठो विदूरथः । मित्रवान्मित्रविंदश्च भाविनस्तत्सुता नृपाः ॥ इति" ॥ २७ ॥ तत्र रुद्रसावर्णेरंतरे । आदिना सुधर्मादिग्रहः । "सुधर्माणः सुमनसो हरिता रोहितास्तथा । सुवर्णाश्च सुरास्तत्र पंचैते दशका गणाः ॥" इति मार्कंडेयोक्तेः । तृतीयादिना द्युत्यादिग्रहः । तदुक्तं तत्रैव "द्युतिस्तपस्वी सुतपास्तपोमूर्त्तिस्तपोनिधिः । तपोरतिस्तथैवान्यः सप्तमस्तु तपोधृतिः ॥" इति ॥ २८ ॥ तन्मनो रुद्रसावर्णिमनोः ।

मनुस्त्रयोदशो भाव्यो देवसावर्णिरात्मवान् ॥ चित्रसेनविचित्राद्या देवसावर्णिदेहजाः ॥ ३० ॥ देवाः सुकर्मसुत्रामसंज्ञा इंद्रो दिवस्पतिः ॥ निर्मो कतत्त्वदर्शाद्या भविष्यंत्यृषयस्तदा ॥ ३१ ॥ देवहोत्रस्य तनय उपहर्ता दिवस्पतेः ॥ योगेश्वरो हरेरंशो बृहत्यां संभविष्यति ॥ ३२ ॥ मनुर्वा इंद्रसावर्णिश्चतुर्दशम एष्यति ॥ उरुगंभीरबुद्ध्याद्या इंद्रसावर्णिवीर्यजाः ॥ ३३ ॥ पवित्राश्चाक्षुषा देवाः शुचिरिंद्रो भविष्यति ॥ अग्निर्बाहुः शुचिः शुद्धो मागधाद्यास्तपस्विनः ॥ ३४ ॥ सत्रायणस्य तनयो बृहद्भानुस्तदा हरिः ॥ वितानायां महाराज क्रियातंतून्वितायिता ॥ ३५ ॥ राजंश्चतुर्दशैतानि त्रिकालानुगतानि ते ॥ प्रोक्तान्येभिर्मितः कल्पो युगसाहस्रपर्ययः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे मन्वंतरानुवर्णनं नाम त्रयोदशोऽध्यायः ॥ १३ ॥ राजोवाच ॥ मन्वंतरेषु भगवन्यथा मन्वादयस्त्विमे ॥ यस्मिन्कर्मणि ये येन नियुक्तास्तद्वदस्व मे ॥ १ ॥ ऋषिरुवाच ॥ मनवो मनुपुत्राश्च मुनयश्च महीपते ॥ इंद्राः सुरगणाश्चैव सर्वे पुरुषशासनाः ॥ २ ॥ यज्ञादयो याः कथिताः पौरुष्यस्तनवो नृप ॥ मन्वादयो जगद्यात्रां नयंत्याभिः प्रचोदिताः ॥ ३ ॥ चतुर्युगांते कालेन ग्रस्तांच्छ्रुतिगणान्यथा ॥ तपसा ऋषयोऽपश्यन्यतो धर्मः सनातनः ॥ ४ ॥ ततो धर्मं चतुष्पादं मनवो हरिणोदिताः ॥ युक्ताः संचारयंत्यद्धा स्वेस्वे काले महीं नृप ॥ ५ ॥

॥ ३० ॥ ३१ ॥ दिवस्पतेरिंद्रस्योपहर्ता संपादकः देवहोत्रस्य बृहत्यां संभविष्यति ॥ ३२ ॥ ३३ ॥ ३४ ॥ क्रियातंतून् कर्मसंततीः वितायिता विस्तारयिष्यति ॥ ३५ ॥ युगसाहस्रेण पर्ययः परिवर्तो यस्य युगसहस्रप्रमाण इत्यर्थः ॥ ३६ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशे तु सर्वेषां मन्वादीनां यथायथम् ॥ पृथक्कर्माणि वर्ण्यंते भगवद्वशवर्तिनाम् ॥ १ ॥ १ ॥ पुरुषेणेश्वरेण यज्ञाद्यवतारैः शास्यंते नियुज्यंते इति तथा ॥ २ ॥ तदेवाह । यज्ञादय इति ॥ ३ ॥ ऋष्यादीनां कर्माण्याह चतुर्युगांत इति चतुर्भिः । यतो येभ्यः श्रुतिगणेभ्यः ॥ ४ ॥ उदिता उक्ताः युक्ताः संयताः संतो महीं धर्मं संचारयंति । मह्यां

अंतरं कालम् । सत्यसहसः पितुः ॥ २९ ॥ त्रयोदशमाह—देहजाः पुत्राः । आदिना नयत्यादिग्रहः "चित्रसेनो विचित्रश्च नयतिर्निर्भयो दृढः । सुनेत्रः क्षत्रबुद्धिश्च सुव्रतश्चैव तत्सुताः ॥" इति मार्कंडेयोक्तेः ॥ ३० ॥ आदिना धृतिमदादिग्रहः । तदुक्तं तत्रैव "धृतिमानव्ययश्चैव तत्त्वदर्शी निरुत्सुकः । निर्मोहः सुतपाश्चैव निष्प्रकंपश्च सप्तमः ॥" इति ॥ ३१ ॥ योगेश्वरनामा ॥ ३२ ॥ चतुर्दशमाह—आदिना भरतादिग्रहः । "गुरुगभीरो ब्रध्नश्च भरतोऽनुग्रहस्तथा । स्त्रीमानी च प्रतीरश्च विष्णुः संक्रंदनस्तथा ॥ तेजस्वी सुबलश्चैव ह्यत्यस्येते मनोः सुताः ॥" इति मार्कंडेयोक्तेः ॥ ३३ ॥ आदिनाग्नीध्रादिग्रहः "अग्नीध्रश्चाग्निबाहुश्च शुचिर्मुक्तोऽथ माधवः । शुक्रोऽजितश्च सप्तैते तदा सप्तर्षयः स्मृताः ॥" इति मार्कंडेयात् ॥ ३४ ॥ तदा चतुर्दशे मन्वंतरे । वितानायां मातरि जातः ॥ ३५ ॥ परिवर्त्तः पर्यावृत्तिः । इत्यर्थ इति । चतुर्युगसहस्रपरिमाणकब्रह्मदिनापरपर्यायः कल्प इति । त्रिकालं भूतभविष्यवर्तमानलक्षणमनुगतानि प्राप्तानीत्यर्थः ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ यथायथं यस्य यस्य यद्यत्कर्म तत्तदित्यर्थः ( १ ) । ॥ १ ॥ २ ॥ पुरुषस्येश्वरस्येमाः पौरुष्यः । जगद्यात्रां जगन्निर्वाहम् । नयंति कारयंति ॥ ३ ॥ यथा यथावत् । धर्मः सिद्ध इति शेषः ॥ ४ ॥ तत ऋष्युपदिष्टदिशा । ताभ्यः श्रुतिभ्यः । इत्यर्थ इति । सप्तम्यर्थे द्विती

पालयंति प्रजापाला यावदंतं विभागशः ॥ यज्ञभागभुजो देवा ये च तत्रान्विताश्च तैः ॥ ६ ॥ इंद्रो भगवता दत्तां त्रैलोक्यश्रियमूर्जिताम् ॥ भुंजानः पाति लोकांस्त्रीन्कामं लोके प्रवर्षति ॥ ७ ॥ ज्ञानं चानुयुगं ब्रूते हरिः सिद्धस्वरूपधृक् ॥ ऋषिरूपधरः कर्मयोगं योगेशरूपधृक् ॥ ८ ॥ सर्गं प्रजेशरूपेण दस्यून्हन्यात्स्वराड्वपुः ॥ कालरूपेण सर्वेषामभावाय पृथग्गुणः ॥ ९ ॥ स्तूयमानो जनैरेभिर्मायया नामरूपया ॥ विमोहितात्मभिर्नानादर्शनैर्न च दृश्यते ॥ १० ॥ एतत्कल्पविकल्पस्य प्रमाणं परिकीर्तितम् ॥ यत्र मन्वंतराण्याहुश्चतुर्दश पुराविदः ॥ ११ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कंधे मनुवर्णनं नाम चतुर्दशोऽध्यायः ॥ १४ ॥ राजोवाच ॥ बलेः पदत्रयं भूमेः कस्माद्धरिरयाचत ॥ भूत्वेश्वरः कृपणवल्लब्धार्थोऽपि बबंध तम् ॥ १ ॥ एतद्वेदितुमिच्छामो महत्कौतूहलं हि नः ॥ यज्ञेश्वरस्य पूर्णस्य बंधनं चाप्यनागसः ॥ २ ॥

धर्मं प्रवर्तयंतीत्यर्थः ॥ ५ ॥ प्रजापाला मनुपुत्रास्तं धर्मं पालयंति । यावदंतं यावन्मन्वंतरावसानम् । विभागशः पुत्रपौत्रादिक्रमेण । ये चान्ये द्यावापृथिव्यादयो यत्र कर्मणि भोक्तृत्वेनान्वितास्तैश्च सह ॥ ६ ॥ ७ ॥ प्रसंगाद्रूपांतरैरपि जगद्यात्राप्रवर्तनमाह ज्ञानमिति द्वाभ्याम् । सिद्धाः सनकादयः । ऋषयो याज्ञवल्क्यादयः । योगेशा दत्तात्रेयादयः तत्तद्रूपः सन् ज्ञानं कर्म च योगं च ब्रूते ॥ ८ ॥ प्रजेशा मरीच्यादयस्तेन रूपेण सर्गं करोतीति शेषः । स्वराड्वपू राजमूर्तिः । सर्वेषामभावाय भवति । पृथग्विधा गुणाः शीतोष्णादयो यस्य ॥ ९ ॥ नामरूपात्मिकया मायया विमोहितात्मभिरेभिर्जनैर्नानादर्शनैः अनेकशास्त्रैः स्तूयमानो निरूप्यमाणोऽपि नैव दृश्यत इत्यर्थः ॥ १० ॥ प्रासंगिकं निरूप्य प्रस्तुतमेवोपसंहरति । एतदिति । कल्पविकल्पस्यावांतरकल्पस्य एतत् प्रमाणमुक्तं यत्र चतुर्दश मन्वंतराण्याहुः ॥ ११ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ बलिं पंचदशे विश्वजिताचार्या अयाजयन् ॥ ततोऽसौ स्वर्गमयजद्भयाद्देवा निलिल्यिरे ॥ १ ॥ अत्रेर्यते नवाध्याय्या वामं वामनचेष्टितम् ॥ निग्रहच्छलतो यत्र बलेर्भूयाननुग्रहः ॥ २ ॥ ईश्वरः स्वयं कृपणवत्कस्माद्धेतोरयाचत लब्धार्थो भूत्वाऽपि तं कस्माद्बबंध ॥ १ ॥ २ ॥

येति व्याख्या ॥ ९ ॥ यावदन्तं मन्वंतरावतारपर्यन्तम् । विभागशः पुत्रपौत्रादिरूपेणेति चक्रवर्ती ॥ ६ ॥ ऊर्जितामुत्कृष्टाम् ॥ ७ ॥ हरिरेव मन्वादिरूपेण सर्वं करोतीति ज्ञापयन्मन्वादिषट्कमपि न नियतमित्युक्तानुक्तं संक्षेपेणाह—ज्ञानमिति । सिद्धा भक्तिज्ञानाभ्यां प्राप्तोत्कर्षाः । त्रिकालदर्शिन ऋषयः । योगसिद्धिमंतो योगेशाः ॥ ८ ॥ दस्यून्म्लेच्छचौरादीन् "दस्युश्चौरे म्लेच्छजातौ क्षयितेऽपि च कथ्यते" इति निरुक्तिः ॥ ९ ॥ इत्यर्थ इति । शास्त्रिणामपि भ्रमवत्त्वोक्तेः । उपदिशंति त आरूपितैरिति वक्ष्यमाणत्वादिति भावः ॥ १० ॥ कल्पे महाकल्पे विकल्प्यते विविधत्वेन कल्प्यत इति कल्पविकल्पस्तस्य । यत्रावांतरकल्पे । पुराविदः व्यासादयः । "स कल्पो यत्र मनवश्चतुर्दश विशांपते" इति वक्ष्यमाणत्वात् ॥ ११ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥ विश्वजिता यागेन । आचार्या भृगवः । ततो विश्वजिद्यागबलात् । असौ बलिः । निलिल्यिरे इतस्ततो गुप्ता बभूवुः(१) । वामं मनोहरम् 'वामं वल्गुप्रतीपयोः' इति कोशात् । निग्रहो बंधनम् "निग्रहो भर्त्सनेऽपि स्यान्मर्यादायां च बंधने" इति मेदिनी । यत्र वामनचेष्टिते । 'चेष्टितं गतिलीलयोः' इति (२) । हरिर्हरणसमर्थः । ईश्वरः सर्वथा समर्थः । कृपण वद्दीनवत् । लब्धार्थः प्राप्तावाप्तव्यः । तं बलिम् ॥ १ ॥ एतद्वामनचरितम् । हि यतः । यज्ञेश्वरस्य सर्वयज्ञपतेः । पूर्णस्य विष्णोः एतद्याचनम् । अनागसो बलेर्बंध

श्रीशुक उवाच ॥ पराजितश्रीरसुभिश्च हापितो हींद्रेण राजन्भृगुभिः स जीवितः ॥ सर्वात्मना तानभजद्भृगून्बलिः शिष्यो महात्माऽर्थनिवेदनेन ॥ ॥ ३ ॥ तं ब्राह्मणा भृगवः प्रीयमाणा अयाजयन्विश्वजिता त्रिणाकम् ॥ जिगीषमाणं विधिनाऽभिषिच्य महाऽभिषेकेण महानुभावाः ॥ ४ ॥ ततो रथः कांचनपट्टनद्धो हयाश्च हर्यश्वतुरंगवर्णाः ॥ ध्वजश्च सिंहेन विराजमानो हुताशनादास हविर्भिरिष्टात् ॥ ५ ॥ धनुश्च दिव्यं पुरटोपनद्धं तूणावरिक्तौ कवचं च दिव्यम् ॥ पितामहस्तस्य ददौ च मालामम्लानपुष्पां जलजं च शुक्रः ॥ ६ ॥ एवं स विप्रार्जितयोधनार्थस्तैः कल्पित स्वस्त्ययनोऽथ विप्रान् ॥ प्रदक्षिणीकृत्य कृतप्रणामः प्रह्लादमामन्त्र्य नमश्चकार ॥ ७ ॥ अथारुह्य रथं दिव्यं भृगुदत्तं महारथः ॥ सुस्रग्धरोऽथ सन्नह्य धन्वी खड्गी धृतेषुधिः ॥ ८ ॥ हेमांगदलसद्बाहुः स्फुरन्मकरकुंडलः ॥ रराज रथमारूढो धिष्ण्यस्थ इव हव्यवाट् ॥ ९ ॥

तत्र तावद्बलेस्त्रिलोकीमपहर्तुं याच्ञादिच्छलनं कृतवानिति वक्तुं ब्राह्मणाराधनबलेन बलेरकांड एव स्वर्गविजयक्रममाह पराजितश्रीरित्यादिना यावदध्यायसमाप्ति । युद्धे पराजिता श्रीर्येन सः । इंद्रेणासुभिश्च त्याजितः सन् । भृगून्भृगोर्वंश्यान् शुक्रादीन् । महात्मा उदाराचित्तः । अर्थानां निवेदनेनार्पणेन ॥ ३ ॥ त्रिणाकं स्वर्गं जेतुमिच्छंतं विश्वजिता यागेनायाजयन् । महाभिषेकेणैंद्रेण बह्वृचब्राह्मणप्रसिद्धेन ॥ ४ ॥ हर्यश्वस्येंद्रस्य ये तुरंगास्तेषामिव वर्णो हरितो येषाम् ॥ ५ ॥ पुरटं सुवर्णम् । तूणाविषुधी । अरिक्ता वक्षय्यशरौ । पितामहः प्रह्लादः । जलजं शंखम् ॥ ६ ॥ विप्रैरर्जितः संपादितो योधनार्थो युद्धपरिकरो यस्य तैरेव कल्पितं कृतं स्वस्त्ययनं मंगलवाचनादि यस्य । आमंत्र्य पृष्ट्वा ॥ ७ ॥ अथारुह्य रराजेति द्वयोरन्वयः । सुस्रग्धरः शोभनमालाधरः संनह्य कवचं न्यस्य ॥ ८ ॥ हेमांगदाभ्यां लसंतौ बाहू यस्य । धिष्ण्यस्थो वने

नं च एतत्पदमावृत्त्य योज्यमत्र ॥ २ ॥ तत्र नियोगे । तावदादौ । अकाण्डेऽनवसरे एव " कांडः स्तंबे तरुस्कंधे बाणेवसरनीरयोः " इति मेदिनी । यैर्भृगुभिः । स जीवितो जीवं प्रापितस्तानित्यर्थः ॥ ३ ॥ तं बलिम् । विश्वजिता सर्वस्वदक्षिणावता यागेन ॥ ४ ॥ ततो यागात् । पट्टानि पत्राणि । " पट्टः पेषणपाषाणे व्रणबंधनपत्रयोः । राजार्पितलिपौ पीठे " इति कोशात् ॥ ५ ॥ कवचं संनाहः ॥ ६ ॥ तैरेव विप्रैरेव ॥ ७ ॥ अथ स्वस्त्ययनादुत्तरक्षणे ॥ ८ ॥ रथमारूढः । हव्यं हुतं वहति प्राप्नोति विशेषेणेति तथा । धिष्ण्यस्थो वेदिकास्थो वा । स्वामिचरणैः पूर्वव्याख्याने धिष्ण्यशब्दस्य वने प्रयोगादर्शनादेवार्थांतरः कृतः कुंडस्थ इत्यादिना तत्राहवनीयपदमुपलक्षणम् । यद्वा—आहवनीय एवाग्नौ विशेषतो हूयते तेन वा स गृहीतः " यजावाहवनीयाग्नौ हूयते बहुधा यतः । तत आहवनीयः स कथ्यते शब्दपारगैः ॥ " इत्युक्तेः ॥ ९ ॥

तुल्यैश्वर्यबलश्रीभिः स्वयूथैर्दैत्ययूथपैः ॥ पिबद्भिरिव खं दृग्भिर्दहद्भिः परिधीनिव ॥ १० ॥ वृतो विकर्षन्महतीमासुरीं ध्वजिनीं विभुः ॥ ययाविंद्रपुरीं स्वृद्धां कंपयन्निव रोदसी ॥ ११ ॥ रम्यामुपवनोद्यानैः श्रीमद्भिर्नंदनादिभिः ॥ कूजद्विहंगमिथुनैर्गायन्मत्तमधुव्रतैः ॥ १२ ॥ प्रवालफलपुष्पोरुभारशाखामरद्रुमैः ॥ हंससारसचक्राह्वकारंडवकुलाकुलाः ॥ नलिन्यो यत्र क्रीडंति प्रमदाः सुरसेविताः ॥ १३ ॥ आकाशगंगया देव्या वृतां परिखभूतया ॥ प्राकारेणाग्निवर्णेन साट्टालेनोन्नतेन च ॥ १४ ॥ रुक्मपट्टकपाटैश्च द्वारैः स्फटिकगोपुरैः ॥ जुष्टां विभक्तप्रपथां विश्वकर्मविनिर्मिताम् ॥ १५ ॥ सभाचत्वररथ्याढ्यां विमानैर्न्यर्बुदैर्युताम् ॥ शृंगाटकैर्मणिमयैर्वज्रविद्रुमवेदिभिः ॥ १६ ॥ यत्र नित्यवयोरूपाः श्यामा विरजवाससः ॥ भ्राजंते रूपवन्नार्यः अर्चिर्भिरिव वह्नयः ॥ १७ ॥

प्रज्वलितः कुंडस्थ आहवनीय इवेति वा ॥ ९ ॥ तुल्यमैश्वर्यं नियंतृत्वं बलं च श्रीश्च येषां तैर्निजयूथभूतैर्दैत्ययूथपैर्वृतो ययाविति द्वयोरन्वयः । परिधीन् दिशः ॥ १० ॥ स्वृद्धामतिसमृद्धाम् ॥ ११ ॥ धिक् ग्राम्यसुखं तथाविधामपि पुरीमकस्मादेव परित्यज्येंद्रादयः पलायिता इति वैराग्यार्थमिंद्रपुरीमनुवर्णयति रम्यामिति सार्द्धैरेकादशभिः । उपवनानि फलप्रधानानि निकटानि वा उद्यानानि पुष्पप्रधानानि दूरस्थानि वा तै रम्याम् । कूजंति विहंगमिथुनानि येषु । गायंतो मत्ता मधुव्रता येषु ॥ १२ ॥ प्रवालादीनामुरुर्भारो यासु ताः शाखा येषां तेऽमरद्रुमा येषु तैः । यत्र यासु सुरसेविताः प्रमदाः क्रीडंति ता हंसादिकुलैराकुला व्याप्ता नलिन्यः सरांसि यत्र येषु संति तैरुपवनोद्यानै रम्यामिति पूर्वेणैवान्वयः ॥ १३ ॥ किं च परिखाभूतया आकाशगंगया वृताम् । प्राकारेण सौवर्णेन चावृताम् । अट्टालाः प्राकारोपरि रचितान्युन्नतानि युद्धस्थानानि तत्सहितेन ॥ १४ ॥ पट्टमुपरिबंधः रुक्मपट्टानि कपाटानि येषु तैर्द्वारैरवांतरैः स्फटिकमयैर्गोपुरैश्च पुरद्वारैर्जुष्टाम् । विभक्ताः प्रपथा राजमार्गा यस्याम् ॥ १५ ॥ सभा उपवेशस्थानानि चत्वराण्यंगणानि रथ्या उपमार्गास्तैराढ्यां संपन्नाम् । न्यर्बुदं दशकोटयस्तैर्गणनीयैरनंतैर्विमानैर्युताम् । वज्रविद्रुममय्यो वेदयो येषु तैः शृंगाटकैश्चतुष्पथैर्युताम् ॥ १६ ॥ नित्यं वयस्तारुण्यं रूपं च सौकुमार्यं यासां ताः श्यामाः षोडशवर्षाः वीरजानि दिव्यानि वासांसि यासां ताः रूपवन्नार्यः स्वलंकृताः स्त्रियः यत्र यस्यां भ्राजंते ॥ १७ ॥

"परिधिर्ना द्रुशाखायां ककुभि चोपसूर्यके" इति कोशात् ॥ १० ॥ ध्वजिनीं सेनाम् । विभुर्विशेषद्युतिमान् ॥ ११ ॥ आदिना पुष्पभद्रकवैस्रंभकादिग्रहः । "वैस्रंभके सुरसने नंदने पुष्पभद्रके" इत्याद्युक्तेः । फलप्राधान्यं दूरस्थेष्वप्यस्तीत्यत आह–निकटानि वेति । पुष्पप्राधान्यं निकटस्थेऽप्यस्तीत्यत आह–दूरस्थानि वेति ॥ १२ ॥ प्रवालानि नवपत्राणि "प्रवालोऽस्त्री किसलये वीणादंडे च विद्रुमे" इति मेदिनी । नलिन्यः सरस्यः ॥ ॥ १३ ॥ परिखभूतया इह ह्रस्वत्वमार्षम् । क्वचित् 'पारिधिभूतया' इत्यपि पाठः ॥ १४ ॥ रुक्मस्य हेम्नः पट्टानि पत्राणि येषु तानि तथा ॥ १५ ॥ न्यर्बुदैरित्युपलक्षणमनंतैरित्यर्थः ॥ १६ ॥ यत्रेंद्रपुरि । "वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्' इति मेदिनी ।" रूपं स्वभावे सौंदर्ये सौकुमार्ये बलाकृतौ" इति च ॥ श्यामाः षोडशवार्षिक्यः । यद्वा 'अप्रसूतांगना श्यामा' इति मेदिन्यादौ । चक्रवर्तिकारस्तु "शीतकाले

सुरस्त्रीकेशविभ्रष्टनवसौगंधिकस्रजाम् ॥ यत्रामोदमुपादाय मार्ग आवाति मारुतः ॥१८॥ हेमजालाक्षनिर्गच्छद्धूमेनागुरुगंधिना ॥ पांडुरेण प्रतिच्छन्नमार्गे यांति सुरप्रियाः ॥ १९ ॥ मुक्तावितानैर्मणिहेमकेतुभिर्नानापताकावलभीभिरावृताम् ॥ शिखंडिपारावतभृंगनादितां वैमानिकस्त्रीकलगीतमंगलाम् ॥ २० ॥ मृदंगशंखानकदुंदुभिस्वनैः सतालवीणामुरजर्ष्टिवेणुभिः ॥ नृत्यैः सवाद्यैरुपदेवगीतकैर्मनोरमां स्वप्रभया जितप्रभाम् ॥ २१ ॥ यां न व्रजंत्यधर्मिष्ठाः खला भूतद्रुहः शठाः ॥ मानिनः कामिनो लुब्धा एभिर्हीना व्रजंति यत् ॥ २२ ॥ तां देवधानीं स वरूथिनीपतिर्बहिः समंताद्रुरुधे पृतन्यया ॥ आचार्यदत्तं जलजं महास्वनं दध्मौ प्रयुंजन्भयमिंद्रयोषिताम् ॥ २३ ॥ मघवांस्तमभिप्रेत्य बलेः परममुद्यमम् ॥ सर्वदेवगणोपेतो गुरुमेतदुवाच ह ॥ २४ ॥ भगवन्नुद्यमो भूयान्बलेर्नः पूर्ववैरिणः ॥ अविषह्यमिमं मन्ये केनासीत्तेजसोर्जितः ॥ २५ ॥ नैनं कश्चित्कुतो वापि प्रतिव्योढुमधीश्वरः ॥ पिबन्निव मुखेनेदं लिहन्निव दिशो दश ॥ दहन्निव दिशो दृग्भिः संवर्ताग्निरिवोत्थितः ॥ २६ ॥ ब्रूहि कारणमेतस्य दुर्धर्षत्वस्य मद्रिपोः ॥ ओजः सहो बलं तेजो यत एतत्समुद्यमः ॥ २७ ॥

सुरस्त्रीणां केशेभ्यो विभ्रष्टानां नवसौगंधिकस्रजामामोदमुपादाय ॥ १८ ॥ हेमगवाक्षेभ्यो हिरण्मयगवाक्षेभ्यो निर्गच्छता धूमेन । सुरप्रिया अप्सरसः ॥ १९ ॥ मुक्तामयैर्वितानैर्मणिहेममयैः केतुभिश्च ध्वजैर्नानापताकायुक्ताभिर्वलभीभिश्च विमानानां पुरोभागैरावृतां व्याप्ताम् । वैमानिकस्त्रीणां कलगीतैर्मंगलाम् ॥ २० ॥ उपदेवानां गंधर्वादीनां गीतकैश्च मनोरमाम् । जिता प्रभा साक्षाद्दीप्त्यधिष्ठात्री देवता यया ताम् । अन्यैरजितप्रभामिति वा। पाठांतरे जिता ग्रहाः सूर्यादयो यया ॥ २१ ॥ यत याम् ॥ २२ ॥ पृतन्यया सेनया ॥ २३ ॥ २४ ॥ केन हेतुनैवं तेजसोर्जित आसीत् ॥ २५ ॥ प्रतिव्योढुमपाकर्तुम् ॥ २६ ॥ यतः कारणादेतस्य ओजआदि

भवंत्युष्णा उष्णकाले च शीतलाः । स्तनौ सुकठिनौ यासां श्यामास्ताः परिकीर्त्तिताः ॥ '' इत्याह । रूपवन्नार्यः सुंदरस्त्रियः वह्नयो यथाऽर्चिर्भिर्दीप्तिभिस्तथाऽर्चिर्भिः स्त्रांगकांतिभिरित्यर्थः । नार्यः अर्चिर्भिरिह संध्यभावस्त्वार्षः॥१७॥ ''सौगंधिकं तु कह्लारे स्थूलचंपकके पुमान्'' इति कोशात् । नवस्थूलचंपकमालानाम् । आमोदं गंधम् 'आमोदो गंधहर्षयोः' इति मेदिनी ॥ १८ ॥ १९ ॥ कलगीतैः रम्यगायनैर्मंगलां मंगलाढ्याम् ॥ २० ॥ दीप्त्यधिष्ठातृदेवताजयस्याप्रसिद्धत्वादाह—अन्यैरिति । अकारप्रश्लेषेण अन्यैः स्वेतरैर्लोकपालपुरैः । पाठांतरे जितग्रहामिति पाठे ॥ २१ ॥ खला निष्कारणविरोधिनः । शठा वंचकाः । एभिरगमनेहेतुभिरधर्मादिभिः ॥ २२ ॥ पृतन्यया पृतनया । स्वार्थिकोत्र यत् ॥ २३ ॥ तं पुरीनिरोधादिरूपम् ॥ २४ ॥ ऊर्जित आप्यायितः ॥ २५ ॥ एनं बलिम् । इदं जगत् । संवर्तः प्रलयः ॥ २६ ॥ यत इत्यावृत्त्या योज्यम् ॥ २७ ॥

गुरुरुवाच ॥ जानामि मघवञ्छत्रोरुन्नतेरस्य कारणम् ॥ शिष्यायोपभृतं तेजो भृगुभिर्ब्रह्मवादिभिः ॥ २८ ॥ भवद्विधो भवान्वापि वर्जयित्वेश्वरं हरिम् ॥ नास्य शक्तः पुरः स्थातुं कृतांतस्य यथा जनाः ॥ २९ ॥ तस्मान्निलयमुत्सृज्य यूयं सर्वे त्रिविष्टपम् ॥ यात कालं प्रतीक्षंतो यतः शत्रो र्विपर्ययः ॥ ३० ॥ एष विप्रबलोदर्कः संप्रत्यूर्जितविक्रमः ॥ तेषामेवापमानेन सानुबंधो विनंक्ष्यति ॥ ३१ ॥ एवं सुमंत्रितार्थास्ते गुरुणार्थानुद र्शिना ॥ हित्वा त्रिविष्टपं जग्मुर्गीर्वाणाः कामरूपिणः ॥ ३२ ॥ देवेष्वथ निलीनेषु बलिर्वैरोचनः पुरीम् ॥ देवधानीमधिष्ठाय वशं निन्ये जगत्र यम् ॥ ३३ ॥ तं विश्वजयिनं शिष्यं भृगवः शिष्यवत्सलाः ॥ शतेन हयमेधानामनुव्रतमयाजयन् ॥ ३४ ॥ ततस्तदनुभावेन भुवनत्रयविश्रुताम् ॥ कीर्तिं दिक्षु वितन्वानः स रेज उडुराडिव ॥ ३५ ॥ बुभुजे च श्रियं स्वृद्धां द्विजदेवोपलंभिताम् ॥ कृतकृत्यमिवात्मानं मन्यमानो महामनाः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे पंचदशोऽध्यायः ॥ १५ ॥

तत् कारणं ब्रूहि । यत ओजआदेः । एतस्य बलेः समुद्यमः ॥ २७ ॥ उपभृतं संचितम् ॥ २८ ॥ २९ ॥ तत्रोचितं मंत्रमाह । तस्माद्यूयं त्रिविष्टपमुत्सृज्य निलयम दर्शनं यात । यतः कालात् ॥ ३० ॥ केनास्य विपर्ययः स्यादित्यत आह । एष इति । विप्राणां बलेनोदर्क उत्तरोत्तरमधिकं फलं यस्य सः ॥ ३१ ॥ सुमंत्रितोऽर्थः कार्यं येषां ते निलयं जग्मुः ॥ ३२ ॥ ३३ ॥ एवं प्राप्तमिंद्रपदं स्थिरीकर्तुमयाजयन् । अनुव्रतमनुवर्तिनम् ॥ ३४ ॥ ३५ ॥ द्विजदेवैर्ब्राह्मणैरुपलंभितां प्रापिताम् ॥ ॥ ३६ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां पंचदशोऽध्यायः ॥ १५ ॥

शिष्याय शिष्यं संवर्द्धयितुं स्वीयं तेज एव तस्मिन्नुपभृतं निहितमित्यर्थः । चक्रवर्ती तु शिष्याय श्रद्धाभक्त्यतिशयेन सर्वस्वोपहारकाय बलये स्वीयमेव तेज उपभृतं प्रत्युपहारत्वेन दत्तमिति व्याचख्यौ ॥ २८ ॥ २९ ॥ यतोऽयं महाबलस्तस्माद्धेतोः । "स्थानादर्शनसंगेषु निलयः प्रलयेऽपि च" इति निरुक्तिः । भविष्यतीति शेषः ॥ ३० ॥ तद्विपर्ययं पृच्छति—केनेति । "उदर्क एष्यत्कालीनफले मदनपादपे" इति मेदिनी । येषां विप्राणाम् । सानुबंधः सवर्गः । यद्यपि भगवत्पक्षपातेन व्यावहारिकगुरूणां बचनातिक्रमरूपावमानो न दोषावहः 'गुरुर्न सतस्यात्' इत्याद्युक्तेस्तथापि केवलं व्यवहारदृष्ट्यैवैवमुक्तम् । वस्तुतस्तु विष्णुभक्त्यनुकूलः स विप्रावमान स्तस्य महाकीर्त्तिस्वर्गाधिकसुतलभोगद्वारपालीकृतविष्णुत्वभाविमन्वंतरेंद्रत्वाद्यर्थसंपादक एवाभूदिति संदर्भविश्वनाथौ ॥ ३१ ॥ अर्थान्कर्त्तव्याकर्तव्यरूपान्पश्यतीति तथा तेन । निलयमिति शेषः ॥ ३२ ॥ अथ कात्स्न्येन । देवा धीयंते निधीयंतेऽत्रेति देवधानी अमरावती ॥ ३३ ॥ एवं प्राप्तं शतक्रतून्विनैव केवलबलेनावाप्तम् ॥ ३४ ॥ ततः शतक्रतुयाजनोत्तरम् । तेषां विप्राणाम् । अनुभावेन प्रतापेन । स बलिः ॥ ३५ ॥ द्विजेषु दीव्यंति द्योतंत इति द्विजदेवा भृगवः । इत्नेन सर्वथा कृतकृत्यत्वाभाव उक्तः । विष्णुपक्षपातेन देवजयावश्यंभावनिश्चयादिति भावः ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥

श्रीशुक उवाच ॥ एवं पुत्रेषु नष्टेषु देवमाताऽदितिस्तदा ॥ हृते त्रिविष्टपे दैत्यैः पर्यतप्यदनाथवत् ॥ १ ॥ एकदा कश्यपस्तस्या आश्रमं भगवानगात् ॥ निरुत्सवं निरानंदं समाधेर्विरतश्चिरात् ॥ २ ॥ स पत्नीं दीनवदनां कृतासनपरिग्रहः ॥ सभाजितो यथान्यायमिदमाह कुरूद्वह ॥ ३ ॥ अप्यभद्रं न विप्राणां भद्रे लोकेऽधुनागतम् ॥ न धर्मस्य न लोकस्य मृत्योश्छंदानुवर्तिनः ॥ ४ ॥ अपि वा कुशलं किंचिद्गृहेषु गृहमेधिनि ॥ धर्मस्यार्थस्य कामस्य यत्र योगो ह्ययोगिनाम् ॥ ५ ॥ अपि वाऽतिथयोऽभ्येत्य कुटुंबासक्तया त्वया ॥ गृहादपूजिता याताः प्रत्युत्थानेन वा क्वचित् ॥ ६ ॥ गृहेषु येष्वतिथयो नार्चिताः सलिलैरपि ॥ यदि निर्यांति ते नूनं फेरुराजगृहोपमाः ॥ ७॥ अप्यग्नयस्तु वेलायां न हुता हविषा सति ॥ त्वयोद्विग्नधिया भद्रे प्रोषिते मयि कर्हिचित् ॥ ८ ॥ यत्पूजया कामदुघान्याति लोकान्गृहान्वितः ॥ ब्राह्मणोऽग्निश्च वै विष्णोः सर्वदेवात्मनो मुखम् ॥ ९ ॥ अपि सर्वे कुशलिनस्तव पुत्रा मनस्विनि ॥ लक्षयेऽस्वस्थमात्मानं भवत्या लक्षणैरहम् ॥ १० ॥

षोडशे पुत्रनाशेन शोचंत्या अदितेः पतिः ॥ प्रार्थितः कश्यपः प्राह पयोव्रतमितीर्यते ॥ १ ॥ इदानीं श्रीवामनावतारप्रसंगमाह एवमित्यादि यावत्समाप्ति । नष्टेष्वदृष्टेषु सत्सु ॥ १ ॥ २ ॥ स कश्यपः पत्नीमिदमाह ॥ ३ ॥ दीनवदनत्वादिकमालक्ष्य बहुधा विकल्पयन्पृच्छति अप्यभद्रमिति सप्तभिः । हे भद्रे मृत्योश्छंदमिच्छामनुवर्तत इति तथा । मृत्युवशवर्तिनो जनस्येत्यर्थः ॥ ४ ॥ हे गृहमेधिनि । अपि वा किं वा गृहेषु धर्मादेः किं चिदकुशलमिति काका प्रश्नः । यत्र येषु गृहेषु । अयोगिनामपि योगः स्वधर्मादिना योगफलं भवति ॥ ५ ॥ किं वा त्वयाऽपूजिता एवाभ्येत्य गृहाद्याताः ॥ ६ ॥ नार्चिता अनर्चिताः संतो यदि निर्गच्छंति ते गृहाः फेरुराजः सृगालराजस्तदीयविवरतुल्याः ॥ ७ ॥ वेलायां होमकाले कर्हिचिन्न हुताः किम् ॥ ८ ॥ ९ ॥ भवत्या आत्मानं

( १ ) । पतिना तस्याः सनाथत्वमुक्तम् ॥ १ ॥ तस्या अदितेः । भगवान् भूतगत्यागत्यादिज्ञः ॥ २ ॥ सभाजितोऽर्चितः ॥ ३ ॥ अपीति संभावनायाम् । विप्रादीनामभद्रं किं नागतम् । इत्यर्थ इति । छंदश्शब्दस्य "छंदः पद्ये च वेदे च स्वेच्छाचाराभिलाषयोः" इत्युक्तेरनेकार्थत्वेनात्रेच्छार्थो ग्राह्य इति भावः ॥४॥ काकुश्शोकभीत्यादिना ध्वनिविकृतिः । सा च किंशब्दद्योत्या । योगफलं मोक्षः "गृहेष्यस्य गतिं यायाद्राजंस्तद्भक्तिभाङ्नरः" इत्युक्तेः । "मद्वार्त्तायातयामानां न बंधाय गृहा मताः" इत्याद्युक्तेश्च ॥ ५ ॥ वाप्यर्थे । प्रत्युत्थानेनाप्यपूजिता इत्यर्थः । यद्वा–प्रत्युत्थानमुपलक्षणमासनान्नदानादेः ॥ ६ ॥ अतिथ्यनर्चनेन गृहस्थो न शोभते इत्याह–गृहेष्विति ॥ ७ ॥ ८ ॥ यत्पूजया यस्य वह्नेरर्चनेन अतिथिषु ब्राह्मणस्यैव मुख्यत्वमभिप्रेत्य वा ब्राह्मणार्चनेन । कामदुघान्स्वर्गब्रह्मलोकादीन् । तत्र हेतुः ब्राह्मणोग्निश्चेत्यादि ॥ ९ ॥ १० ॥

अदितिरुवाच॥भद्रं द्विजगवां ब्रह्मन्धर्मस्यास्य जनस्य च॥त्रिवर्गस्य परं क्षेत्रं गृहमेधिन्गृहा इमे॥ ११॥अग्नयोऽतिथयो भृत्या भिक्षवो ये च लिप्सवः॥ सर्वं भगवतो ब्रह्मन्ननुध्यानान्न रिष्यति ॥ १२ ॥ को नु मे भगवन्कामो न संपद्येत मानसः ॥ यस्या भवान्प्रजाध्यक्ष एवं धर्मान्प्रभाषते ॥ १३ ॥ तवैव मारीच मनःशरीरजाः प्रजा इमाः सत्त्वरजस्तमोजुषः ॥ समो भवांस्तास्वसुरादिषु प्रभो तथापि भक्तं भजते महेश्वरः ॥ १४ ॥ तस्मादीश भजंत्या मे श्रेयश्चिंतय सुव्रत ॥ हृतश्रियो हृतस्थानान्सपत्नैः पाहि नः प्रभो ॥ १५ ॥ परैर्विवासिता साऽहं मग्ना व्यसनसागरे ॥ ऐश्वर्यं श्रीर्यशः स्थानं हृतानि प्रबलैर्मम ॥ १६ ॥ यथा तानि पुनः साधो प्रपद्येरन्ममात्मजाः ॥ तथा विधेहि कल्याणं धिया कल्याणकृत्तम ॥ १७ ॥ श्रीशुक उवाच ॥ एवमभ्यर्थितोऽदित्या कस्तामाह स्मयन्निव ॥ अहो मायाबलं विष्णोः स्नेहबद्धमिदं जगत् ॥ १८॥ क्व देहो भौतिकोऽनात्मा क्व चात्मा प्रकृतेः परः ॥ कस्य के पतिपुत्राद्या मोह एव हि कारणम् ॥ १९॥ उपतिष्ठस्व पुरुषं भगवंतं जनार्दनम् ॥ सर्वभूतगुहावासं वासुदेवं जगद्गुरुम्॥ २०॥

मनः अस्वस्थमप्रकृतिस्थं लक्षणैर्मुखम्लान्यादिभिर्लक्षयामि ॥ १० ॥ अस्वास्थ्यकारणमन्यदस्तीति वक्तुं त्वत्पृष्टमभद्रादिकं नास्तीत्याह भद्रमिमि । द्वाभ्याम् । इमे गृहास्त्रिवर्गस्य परं क्षेत्रमुद्भवस्थानम् । त्रिवर्गोऽपि यथावद्वर्तत इत्यर्थः ॥ ११ ॥ भगवतस्तवानुध्यानं यन्मया क्रियते तस्मादग्नयोऽतिथय इत्यादि सर्वं न रिष्यति न हीयते ॥ १२ ॥ प्रस्तुतं विज्ञापयितुमाह । को न्विति ॥ १३ ॥ संपाद्यं काममाह तवैवेति चतुर्भिः ॥ १४ ॥ सपत्नैर्दैत्यैर्हृता श्रीर्येषाम् । हृतं स्थानं येषामिति पुत्राभिप्रायेण बहुवचनम् ॥ १५॥ १६॥ १७॥ कः कश्यपः । प्रथमं तावत्पुत्रस्नेहं त्याजयितुं विस्मयव्याजेनैव तत्त्वमुपदिशति अहो इति सार्धेन॥ १८॥ १९॥ अत्रापरितुष्यंतीं

इत्यर्थ इति । गृहमेधिन्नित्युक्तेर्भवतो यदि गृहे मेधा तर्हि कुतस्त्रिवर्गहानिर्भवेदिति भावः ॥ ११ ॥ १२ ॥ यस्या मे । एवं धर्मान् गृहस्थेन कर्तुं योग्यान् ॥ १३ ॥ तासु प्रजासु । असुरा आदयो यासां देवादीनां तासु । यद्यपि समस्तथापीत्यर्थः । मारीचेति पितृक्रमागतं सामर्थ्यं सूचयति । यद्यपि सर्वत्र जगति समोऽपि भगवान्यथा भक्तं भजते तथा पुत्रेषु समोपि भवानिंद्रमेव पालयितुमर्होऽस्तीति भावः ॥ १४ ॥ यत ईशो भजंतं भजति तस्मादित्यर्थः । सुव्रतेति । दयामुत्पादयितुमाह—न इति । बहुत्वं पुत्रसाहित्यमाह । प्रभो इति । तपोबलेन सर्वं मदभीष्टं दातुं समर्थोऽसीत्याह ॥ १५ ॥ व्यसनसागरे विपत्त्यर्णवे ॥ १६ ॥ साधो इति । परकार्यसाधकत्वात्त्वमन्वर्थनामासीत्याह। धिया विचारेण । परोपकरणसदृशान्यकल्याणाभावात्तत्कर्तृत्वेन भवान्सर्वकल्याणकृतां मध्ये श्रेष्ठोऽस्तीति भावः ॥ १७ ॥ एवमात्मजव्यसनापनुत्त्यर्थप्रार्थनप्रकारेण । स्मयन्निव विस्मयं प्राप्त इव । तदेवाह—अहो इति । यद्वा—स्मयन्निवेतीवेन न स्मयमानस्तस्या दुःखेनांतर्दुःखितत्वात् ॥ १८ ॥ मोहो यथार्थज्ञानाभावः । कारणं संसृतेरिति शेषः । एव हीति निपातद्वयं तद्द्रढयति ॥ १९ ॥ अत्र तत्त्वोपदेशे। पुत्रस्नेहेन रुदंतीं प्रत्याह—उपतिष्ठस्वेति। पुरुषं वस्तुतः पतिम् । अहं तु लौकिक एव ते पतिरिति भावः । भगवंतं सर्वज्ञमिति । त्वत्पुत्राणां कल्याणोपायमपि स एव जानातीति भावः । जननाम्नोऽसुरस्यार्दनं त्वत्सपत्नान्हंतुमपि स एव समर्थ इति भावः । जनं स्वभक्तं बलिं त्रिलोकीमप्यर्दयिष्यतींद्रार्थं याचिष्यत इति तु वास्तवोर्थः । सर्वभूतेति । बलेरंतःकरणं प्रेर्य गुरुहेलन

स विधास्यति ते कामान्हरिर्दीनानुकंपनः ॥ अमोघा भगवद्भक्तिर्नैतरेति मतिर्मम ॥ २१ ॥ अदितिरुवाच ॥ केनाहं विधिना ब्रह्मन्नुपस्थास्ये जगत्पतिम् ॥ यथा मे सत्यसंकल्पो विदध्याच्च मनोरथम् ॥ २२ ॥ आदिश त्वं द्विजश्रेष्ठ विधिं तदुपधावनम् ॥ आशु तुष्यति मे देवः सीदंत्याः सह पुत्रकैः ॥ २३ ॥ कश्यप उवाच ॥ एतन्मे भगवान्पृष्टः प्रजाकामस्य पद्मजः ॥ यथाह ते प्रवक्ष्यामि व्रतं केशवतोषणम् ॥ २४ ॥ फाल्गुनस्यामले पक्षे द्वादशाहं पयोव्रतः ॥ अर्चयेदरविंदाक्षं भक्त्या परमयान्वितः ॥ २५ ॥ सिनीवाल्यां मृदाऽऽलिप्य स्नायात्क्रोडविदीर्णया ॥ यदि लभ्येत वै स्रोतस्येतं मंत्रमुदीरयेत् ॥ २६ ॥ त्वं देव्यादिवराहेण रसायाः स्थानमिच्छता ॥ उद्धृतासि नमस्तुभ्यं पाप्मानं मे प्रणाशय ॥ २७ ॥ निर्वर्तितात्मनियमो देवमर्चेत्समाहितः ॥ अर्चायां स्थंडिले सूर्ये जले वह्नौ गुरावपि ॥ २८ ॥ नमस्तुभ्यं भगवते पुरुषाय महीयसे ॥ सर्वभूतनिवासाय वासुदेवाय साक्षिणे ॥ २९ ॥ नमोऽव्यक्ताय सूक्ष्माय प्रधानपुरुषाय च ॥ चतुर्विंशद्गुणज्ञाय गुणसंख्यानहेतवे ॥ ३० ॥ नमो द्विशीर्ष्णे त्रिपदे चतुःशृंगाय तंतवे ॥ सप्तहस्ताय यज्ञाय त्रयीविद्यात्मने नमः ॥ ३१ ॥

प्रत्याह उपतिष्ठस्वेति द्वाभ्याम् ॥ २० ॥ नन्वेवंभूतकामप्राप्तिहेतुर्देवांतरसेवा प्रसिद्धा तत्राह । अमोघेति ॥ २१ ॥ यथा च मे मनोरथं विदध्यात् ॥ २२ ॥ यथा च मे आशु तुष्यति तथा तत्सेवाप्रकारमादिश ॥ २३ ॥ मे मया पृष्टः पद्मजो मे यद्व्रतमाह एतत्ते तव प्रवक्ष्यामीत्यन्वयः ॥ २४ ॥ अमले शुक्ले ॥ २५ ॥ तत्रादौ पूर्वेद्युःकृत्यमाह सिनीवाल्यामित्यादिना ब्रह्मचार्यथ तद्वादत्र्यामित्यंतेन ग्रंथेन । यदि लभ्येत तर्हि क्रोडविदीर्णया वन्यवराहोत्खातया आलिप्य ॥ ॥ २६ ॥ तत्र मंत्रः "त्वं देवि" इति । हे देवि त्वं रसाया उद्धृतासि ॥ २७ ॥ निर्वर्तित आत्मनियमो नित्यनैमित्तिको येन ॥ २८ ॥ तत्रावाहनादौ नव मंत्रानाह । नमस्तुभ्यमिति । पाद्यादौ विशेषतस्तु द्वादशाक्षरं वक्ष्यति ॥ २९ ॥ चतुर्विंशतिगुणास्तत्वानि जानातीति तथा तस्मै । गुणसंख्यानस्य हेतवे सांख्यप्रवर्तकाय ॥ ३० ॥ एवं सामान्यतो नत्वा गुणावतारान्प्रणमति त्रिभिः । तत्रादौ मंत्रोक्तयज्ञरूपेण विष्णोः प्रणामो नम इति । द्वे शीर्षे यस्य । त्रयः पादा यस्य । तंतवे फलविस्तारकाय । त्रय्यां

मापि तं कारयिष्यत इति भावः । वसुदेवे शुद्धसत्त्वे आविर्भवतीति वासुदेवमिति । भक्त्या स्वांतःकरणं शुद्धीकृत्य तत्रैव तं ध्यायंत्यां त्वयि स दयासिंधुराविर्भवितुमपि न विलंबिष्यत इति भावः । जगद्गुरुमिति । तव मम बलेरिंद्रस्य सर्वजगतोऽपि गंगाप्रादुर्भावादिना हितं विधास्यतीति भावः ॥२०॥ स हरिः । अत्राशंकते—नन्विति । तत्राक्षेपे । अमोघा वैगुण्येपि फलजनिका नेतरा देवतांतरसेवा तु सांगोपांगैव फलदेति भावः ॥ २१ ॥ ब्रह्मन्निति । वेदवित्त्वेन विधिबोधनकुशलोसीत्याह ॥ २२ ॥ तस्य हेरुपधावनं सेवनविषयं विधिं प्रकारं तमादिश येन मे देव आशु तुष्यतीति योज्यम् ॥ २३ ॥ २४ ॥ पयसो व्रतं नियतभक्ष्यादि यस्य स तथा ॥ २५ ॥ सिनीवाल्यां दृष्टचंद्रायाममायामर्थाच्चतुर्दशीयुक्तामायामित्यायातम् । स्रोतसि स्रतोनिस्सृतांबुसरआदौ 'स्रोतोंबुसरणं स्वतः' इत्यमरः ॥ २६ ॥ रसायाः रसातलात् ॥ २७ ॥ निर्वर्त्तितो निष्पादितः । स्थंडिले वालुकानिर्मितवेद्याम् ॥२८॥ तत्र अर्चने । आदिना पाद्यार्घ्याचमनीयस्नानपुनराचमनीयगंधपुष्पधूपदीपनैवेद्यानां ग्रहः । महीयसे ज्यायसे ॥ २९ ॥ ३० ॥ गुणावतारान्ब्रह्मविष्णुरुद्रान् । तत्र तेषु । यत्र

**नमः शिवाय रुद्राय नमः शक्तिधराय च ॥ सर्वविद्याधिपतये भूतानां पतये नमः ॥ ३२ ॥**

विद्यायामात्मा यस्येति त्रिधा बद्ध इत्यस्यार्थ उक्तः । तथा च मंत्रः । "चत्वारि शृंगा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा बद्धो वृषभो रोरवीति महोदेवो मर्त्यां आविवेश ॥" इति "मार्गमुद्भवदालूनः सोऽयं प्राज्ञैर्यथायथम् ॥ विष्णुस्तु यज्ञरूपेण स्तूयतेऽनेन तत्त्वतः ॥" तथा च यास्कः—चत्वारि शृंगेति । वेदा वा एत उक्ता स्रयोऽस्य पादाः सवनानि त्रीणि द्वे शीर्षे प्रायणीयोदयनीये सप्तहस्तासः सप्तच्छंदांसि त्रिधा बद्धस्त्रेधा बद्धो मंत्रब्राह्मणकल्पैर्वृषभो रोरवीति रोरवणमस्य सवनक्रमेण ऋग्भिर्यजुर्भिः सामभिर्यदेनमृग्भिः शंसन्ति यजुर्भिर्यजन्ति सामभिः स्तुवन्ति महोदेव इत्येष हि महान् देवो यद्यज्ञो मर्त्यां आविवेशेत्येष हि मनुष्यानाविशति यजनायेति ॥ ३१ ॥ ३२ ॥

मंत्रे स्वरूपमुक्त तं मंत्रमाह—तथा चेति । शृंगा इति छांदसत्वाच्छेराकार आगमजस्यापि नुमो नस्य लोपे सिध्यति । अस्य व्याख्यानं यास्केन कृतमपि प्रकारांतरेणाह—वृषभो धर्मस्वरूपो महादेवो यज्ञमूर्त्तिर्विष्णुर्मर्त्यान्मनुष्यानाविवेश । स च वृषभो रोरवीति अत्यर्थं शब्दं करोति । "सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज" इत्यादिनोपदिशति । अस्य वृषभस्य । चत्वारि ब्रह्मोद्गातृहोत्राध्वर्युरूपाणि शृंगाणि । अस्य त्रय ऋग्यजुःसामाख्याः पादाः । द्वे हविर्द्धानमहावीराख्ये शीर्षे । सप्त होता मैत्रावरुणो ब्राह्मणाच्छंशी ग्रावस्तोता पोता अच्छावाक् नेष्टा एतेस्य हस्ताः । किंभूतः प्रातःसवनादित्रिभिर्बद्ध इति । केचित्तु महादेवः शब्दो मर्त्यानाविवेश । चत्वारि नामाख्यातोपसर्गनिपाताख्यान्यस्य शृंगाणि । त्रयो भूतभविष्यद्वर्त्तमानाख्याः काला अस्य पादाः । द्वे शब्दात्मानौ शीर्षे । सप्त विभक्तयो हस्ताः । त्रिषु स्थानेषूरःशिरःकंठेषु बद्धः । कामानां वर्षणाद्वृषभः । रोरवीति अतिशयेन वदतीत्यर्थः । स्वामिश्लोकव्याख्या—निवृत्तिमार्गमलभ्यमजानंतः प्रवृत्तिमार्गे मुदं गच्छंतीति मार्गमुद्वास्तत्प्रवर्तकाचार्यास्ते विद्यंते येष्वर्वाचीनेषु ते मार्गमुद्वंतस्तैराच्छन्नो व्यवच्छिन्नः । यद्वा—मार्गे मुदं वहंतो ये तैरालूनः पृथक्त्वेनोपासितः । अत्र पक्षे पाठस्तु 'मार्गमूद्वहदालूनः' इति । 'मार्गमुग्धवदालूनः' इति पाठे मार्गे विचारमार्गे ये मुग्धाः सुंदरा विवेकिनस्तद्वाद्भिस्ताच्छिष्यैश्चालूनः स्वरूपत्वेनोपासित इत्यर्थः । यद्वा—मार्गमुग्धो मार्गानभिज्ञः पथिकः 'मुग्धः सुंदरमुढयोः' इति विश्वः । तद्वत् । स यथा प्राज्ञैः पांथलुंठननिपुणैर्यथायथं तस्य कर्णभूषणमाच्छिद्य कंठालंकृतिं त्यक्त्वा हस्तभूषणमाछिद्यते तदनु पादभूषणं तदनु कटिभूषणमित्यादिक्रमव्यतिरेकेणैवालूयते तथैवानेन मंत्रेणापि प्राज्ञैर्मंत्रावयवैर्यज्ञरूपो विष्णुरंगवर्णनक्रममतिहाय स्तूयते । न हि शृंगवर्णनानंतरं पादवर्णनमुचितं तयोरुत्तमनिकृष्टत्वेनासमत्वात् । किन्तु शृंगवर्णनोत्तरं शीर्षवर्णनं तदनु हस्तवर्णनं तदनु च पादवर्णनं न्याय्यमिति प्रतीयते इति।'मार्गमुद्भरता लूनः' इति पाठे मार्गे कर्ममार्गमुद्भरता जैमिनियास्कादिना यथायथं यथैवालूनो मंत्रमार्गेण प्रकाशितस्तथैवैतत्कालीनैरपि सायनप्रभृतिभिर्वर्ण्यत इत्यर्थः । मंत्रो व्याख्येयरूपो ब्राह्मणश्च तद्व्याख्यानरूपः । यथा 'यो वेद निहितं गुहायाम्' इति मंत्रः । 'अन्योंतर आत्मा' इति तद्ब्राह्मणश्च कल्पो बौधायनादिपद्धतिग्रंथ इति यास्कव्याख्योक्तमंत्रादिपदत्रयार्थः । यद्यतः । एनं यज्ञम् । शंसंति श्लाघंते इति ॥ ३१ ॥ तमोगुणावतारं स्तौति—नम इति । शिवाय सुकृतिनां शुभफलदात्रे । रुद्राय दुष्कृतिनां रोदकाय । "त्वं कर्मणां मंगलमंगलानां कर्त्तुस्स्म लोकं तनुषे स्वः परं वा ।

१—व्युत्पत्त्यव्युत्पत्ती ।

नमो हिरण्यगर्भाय प्राणाय जगदात्मने ॥ योगैश्वर्यशरीराय नमस्ते योगहेतवे ॥ ३३ ॥ नमस्ते आदिदेवाय साक्षिभूताय ते नमः ॥ नारायणाय ऋषये नराय हरये नमः ॥ ३४ ॥ नमो मरकतश्यामवपुषेऽधिगतश्रिये ॥ केशवाय नमस्तुभ्यं नमस्ते पीतवाससे ॥ ३५ ॥ त्वं सर्ववरदः पुंसां वरेण्य वरदर्षभ ॥ अतस्ते श्रेयसे धीराः पादरेणुमुपासते ॥ ३६ ॥ अन्ववर्तंत यं देवाः श्रीश्च तत्पादपद्मयोः ॥ स्पृहयंत इवामोदं भगवान्मे प्रसीदताम् ॥ ३७ ॥ एतैर्मंत्रैर्हृषीकेशमावाहनपुरस्कृतम् ॥ अर्चयेच्छ्रद्धया युक्तः पाद्योपस्पर्शनादिभिः ॥ ३८ ॥ अर्चित्वा गंधमाल्याद्यैः पयसा स्नपयेद्विभुम् ॥ वस्त्रोपवीताभरणपाद्योपस्पर्शनैस्ततः ॥ गंधधूपादिभिश्चार्चेद्द्वादशाक्षरविद्यया ॥ ३९ ॥ शृतं पयसि नैवेद्यं शाल्यन्नं विभवे सति ॥ ससर्पिः सगुडं दत्त्वा जुहुयान्मूलविद्यया ॥ ४० ॥ निवेदितं तद्भक्ताय दद्याद्भुंजीत वा स्वयम् ॥ दत्त्वाचमनमर्चित्वा तांबूलं च निवेदयेत् ॥ ४१ ॥ जपेदष्टोत्तरशतं स्तुवीत स्तुतिभिः प्रभुम् ॥ कृत्वा प्रदक्षिणं भूमौ प्रणमेद्दंडवन्मुदा ॥ ४२ ॥ कृत्वा शिरसि तच्छेषं देवमुद्वासयेत्ततः ॥ द्व्यवरान्भोजयेद्विप्रान्पायसेन यथोचितम् ॥ ४३ ॥ भुंजीत तैरनुज्ञातः शेषं सेष्टः सभाजितैः ॥ ब्रह्मचार्यथ तद्रात्र्यां श्वोभूते प्रथमेऽहनि ॥ ४४ ॥

प्राणाय सूत्रात्मने । योगैश्वर्यं शरीरं यस्य ॥ ३३ ॥ ३४ ॥ अधिगता प्राप्ता श्रीर्यस्य तस्मै ॥ ३५ ॥ ३६ ॥ तत्पादपद्मयोरामोदं स्पृहयंत इव देवाश्च श्रीश्च यमन्ववर्तंत स मे प्रसीदतु ॥ ३७॥ आवाहने पुरस्कृतं संमानितम् ॥ ३८॥ ३९॥ पयसि शृतं पक्वं पायसम् । मूलविद्यया द्वादशाक्षरेणैव ॥ ४० ॥ ४१ ॥ पूर्वोक्ताभिरन्याभिश्च स्तुतिभिः ॥ ४२ ॥ तस्य शेषं निर्माल्यम् । द्वाववरौ येषां तान् । असंभवे द्वावपि भोजयेदित्यर्थः ॥ ४३ ॥ सभाजितैस्तैरनुज्ञातः सन् । सेष्टो

अमंगळानां च तमिस्रमुल्वणम्’ इति दक्षोपाख्यानोक्तेः । शक्तिरुमा शस्त्रं वा ॥ ३२ ॥ रजोगुणावतारं स्तौति–नम इति । हर्य्यंत इति हिरण्यं ब्रह्मांडं गर्भे यस्य तस्मै ॥ ३३ ॥ ३४ ॥ ३५ ॥ यतस्त्वं पुंसां सर्ववरदः अतो हेतोः । पादाभ्यां पादरेणोः प्रस्वेदादिना रोमकूपमार्गेणांतःप्रवेशादंतरघनाशकत्वेन महत्त्वम् । “यत्पादपंकजरजः श्रुतिभिर्विमृग्यं पादारविंदरजसाप्लुतदेहिनां स्युः । यावन्महत्पादरजोभिषेकम्” इत्याद्युक्तेः ॥ ३६ ॥ यमन्ववर्त्तंत स भगवान् ॥ ३७ ॥ उपस्पर्शनमाचमनम् ॥ ३८ ॥ प्रथमं पाद्यादिभिरार्चित्वा पयसा दुग्धेन स्नापयेत् । ततः स्नापयित्वा वस्त्रोपवीताभरणपरिधापनोत्तरं पुनरपि पाद्यादिभिरित्यर्थः । पाद्यादौ सर्वत्र द्वादशाक्षरः “ॐ नमो भगवते वासुदेवाय” इत्येवमुक्तो मंत्रो ज्ञेयः ॥ ३९॥ शाल्यन्नं सुगंधिशुक्लतंडुलौदनम् । विभवे धनिकत्वे । सर्पिः घृतम् । नैवेद्यं दत्वा जुहुयात् ॥ ४० ॥ तद्भक्ताय विष्णुभक्ताय । तन्निवेदितमिति वा । भक्तालाभे स्वयमपि भुंजीत वा प्रसादबुद्ध्या । अर्चित्वा पूजनं समाप्य । यद्वाऽर्चित्वा नीराजनं कृत्वा भोजनांतेऽपि नीराजनस्य सर्वपूजनरूपस्य विहितत्वात् । तदुक्तम् “उत्थाने पूजनांते च भोजनांते दिनांतके । शयनादौ निशि कार्यं वै मुख्यं नीराजनार्चनम्” इति गोविंदार्चनपद्धतिग्रंथोक्तेः ॥ ४१ ॥ जपेद्द्वादशाक्षरमेव ॥ ४२ ॥ तस्य हरेः । निर्माल्यमर्पणोत्तरमुत्तारितपुष्पादि । अवरावधिकौ द्वादशद्वाविंशतिद्वात्रिंशादित्येवंरूपान् । यद्वा–द्वाववरौ न्यूनौ येषां तांस्त्र्यादीन्भोजयेदित्यर्थः । असंभवे ब्राह्मणालाभे निस्स्वत्वे च । इत्यर्थ इति । सर्वथा ब्राह्मणभोजनस्यावश्यकत्वेन द्वावेव वा भोजयेदिति भावः । यथोचितं विप्रानिति योज्यम् । तेन भोजनार्हान्संध्योपास्त्यादिस्वकर्मनिष्ठानेव भोजयेन्न त्वनुपनीतधूमपानादिरतानित्युक्तम् ॥ ४३ ॥ तस्यां रात्र्यां यस्मिन्दिने व्रतमारब्धं तद्दिवसरात्र्याम् । प्रथमेऽहनि अद्यादिने । प्रभाते

स्नातः शुचिर्यथोक्तेन विधिना सुसमाहितः ॥ पयसा स्नापयित्वार्चेद्यावद्व्रतसमापनम् ॥ ४५ ॥ पयोभक्षो व्रतमिदं चरेद्विष्णवर्चनादृतः ॥ पूर्ववज्जुहुयादग्निं ब्राह्मणांश्चापि भोजयेत् ॥ ४६ ॥ एवं त्वहरहः कुर्याद्द्वादशाहं पयोव्रतः ॥ हरेराराधनं होममर्हणं द्विजतर्पणम् ॥ ४७ ॥ प्रतिपद्दिनमारभ्य यावच्छुक्लत्रयोदशी ॥ ब्रह्मचर्यमधः स्वप्नं स्नानं त्रिषवणं चरेत् ॥ ४८ ॥ वर्जयेदसदालापं भोगानुच्चावचांस्तथा ॥ अहिंस्रः सर्वभूतानां वासुदेवपरायणः ॥ ४९ ॥ त्रयोदश्यामथो विष्णोः स्नपनं पंचकैर्विभोः ॥ कारयेच्छास्त्रदृष्टेन विधिना विधिकोविदैः ॥ ५० ॥ पूजां च महतीं कुर्याद्वित्तशाठ्यविवर्जितः ॥ चरुं निरूप्य पयसि शिपिविष्टाय विष्णवे ॥ ५१ ॥ शृतेन तेन पुरुषं यजेत सुसमाहितः ॥ नैवेद्यं चातिगुणवद्दद्यात्पुरुषतुष्टिदम् ॥ ५२ ॥ आचार्यं ज्ञानसंपन्नं वस्त्राभरणधेनुभिः ॥ तोषयेदृत्विजश्चैव तद्विद्ध्याराधनं हरेः ॥ ५३ ॥ भोजयेत्तान्गुणवता सदन्नेन शुचिस्मिते ॥ अन्यांश्च ब्राह्मणाञ्छक्त्या ये च तत्र समागताः ॥ ५४ ॥ दक्षिणां गुरवे दद्यादृत्विग्भ्यश्च यथाऽर्हतः ॥ अन्नाद्येनाऽश्वपाकांश्च प्रीणयेत्समुपागतान् ॥ ५५ ॥

बंधुभिः सहितः । तस्यां रात्र्यां ब्रह्मचारी सन् । श्वोभूते प्रभाते सति ॥ ४४ ॥ ४५ ॥ पय एव भक्ष आहारो यस्य ॥४६॥४७॥ अधः स्वप्नं शयनम् ॥४८॥४९॥ पंचकैः पंचामृतैः ॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥

सति पूर्ववत्स्नानादि कुर्यादित्यर्थः ॥४४॥ यथोक्तेन प्रथमदिनसदृशेन ॥ ४९ ॥ पयः गोक्षीरं भक्षो भोजनं यस्य स तथा सन् । 'व्रते क्षीरादि गोभवम्' इति स्मरणात् ॥ ४६ ॥ द्वादशाहमहरहः ॥ ४७ ॥ त्रिषवणं त्रिकालम् ॥ ४८ ॥ असतोऽनृतस्यासद्भिर्दुश्चरणैश्चालापम् । उच्चावचान् हस्त्यारोहनेपालकंबलहेमालंकारसुगंध्यादीनुच्चान् । गर्दभारोहजीर्णवस्त्रभृत्यादीनवचांश्च ॥ ४९ ॥ अथ व्रतसमाप्तेरनंतरम् । शास्त्रदृष्टेनेत्युक्तेस्तत्तन्मंत्रेण तत्तद्द्रव्येण स्नपयेत् । न त्वेकदैव सर्वद्रव्याणि संयोज्य विना तत्तन्मंत्रैस्तथाकरणे पञ्चामृतत्वासंभवात् । "श्रीविष्णोरुत्सवे कार्यं मंत्रैः पञ्चामृतं पृथक्" इति संहितोक्तेः । विधिकोविदैर्विप्रैरेव स्वयं मंत्राद्यज्ञाने तद्विदो विप्रानाहूय तैः कारयेत् । विप्रपदानुक्तावपि याजनस्य तदधिकारत्वाद्विप्र एवात्र ज्ञेयो न तु कोविदः क्षत्रियादिरिति । "याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः" इति विप्रमुद्दिश्य मनुनोक्तत्वादिति ॥ ५० ॥ महापूजाया द्रव्यनिर्णयस्त्वेकादशस्कंधव्याख्याने वक्ष्यते । चरंति भक्षंति देवा यमिति चरुर्घृतं पयसि क्षीरे निरूप्य कृत्वा विष्णवे जुहुयादिति शेषः । यच्च गयाश्राद्धपद्धतावुक्तम् "ओदने परमान्ने च पात्रमासाद्य मूढधीः । घृतेन पूरयेत्पात्रं तद् घृतं रुधिरं भवेत् ॥" इति । तच्छ्राद्धपरं न तु होमपरं विना घृतं द्रव्यांतर होमस्यैवानुक्तत्वात्सर्वं द्रव्यं घृतेनैव जहुयात् 'अन्यथा नोपतिष्ठते' इति स्मृतेर्निषिद्धत्वादित्यलमधिकोक्त्या । शिपिषु रश्मिषु यज्ञपशुषु वा विष्टः शिपिविष्टः 'शिपिर्यज्ञ एव पशुषु प्रविष्टः' इति श्रुतेः । "शैत्याच्छयनयोगाच्च शीति वारि निगद्यते । तत्पानाद्रक्षणाच्चैव शिपयो रश्मयो मताः ॥ तेषु प्रवेशाद्विश्वेशः शिपिविष्ट इहोच्यते" । इति भाष्यात् । यद्वा येन चरुणा शृतेन पुरुषं यजेत विष्णवे नैवेद्यं च दद्यात् । अतिगुणवत् मधुरादिगुणयुक्तमन्यदपि नैवेद्यं दद्यादिति द्वयोरन्वयः ॥ ५१ ॥ ५२ ॥ ऋत्विजो होमसमये वृतान्ब्रह्मादीन् । तत् आचार्यर्त्विक्तोषणम् ॥ ५३ ॥ तान् आचार्यादीन् । गुणवता षड्रसेन । सदन्नेन पायसाद्यन्नेन । शक्त्या सामर्थ्यानुरोधतः । तत्र भोजनकाले । ये ब्राह्मणास्समागतास्तानन्यांश्च ॥ ५४ ॥ गुरवे व्रतोपदेष्ट्राचार्याय । यथार्हतः यथा तेषां दक्षिणा विहिता तदनुसारेण ।

भुक्तवत्सु च सर्वेषु दीनांधकृपणेषु च ॥ विष्णोस्तत्प्रीणनं विद्वान्भुंजीत सह बंधुभिः ॥ ५६ ॥ नृत्यवादित्रगीतैश्च स्तुतिभिः स्वस्तिवाचकैः ॥ कारयेत्तत्कथाभिश्च पूजां भगवतोऽन्वहम् ॥ ५७ ॥ एतत्पयोव्रतं नाम पुरुषाराधनं परम् ॥ पितामहेनाभिहितं मया ते समुदाहृतम् ॥ ५८ ॥ त्वं चानेन महाभागे सम्यक्चीर्णेन केशवम् ॥ आत्मना शुद्धभावेन नियतात्मा भजाव्ययम् ॥ ५९ ॥ अयं वै सर्वयज्ञाख्यः सर्वव्रतमिति स्मृतम् ॥ तपःसारमिदं भद्रे दानं चेश्वरतर्पणम् ॥ ६० ॥ त एव नियमाः साक्षात्त एव च यमोत्तमाः ॥ तपो दानं व्रतं यज्ञो येन तुष्यत्यधोक्षजः ॥ ६१ ॥ तस्मादेतद्व्रतं भद्रे प्रयता श्रद्धया चर ॥ भगवान्परितुष्टस्ते वरानाशु विधास्यति ॥ ६२ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधेऽदितिपयोव्रतं नाम षोडशोऽध्यायः ॥ १६ ॥ श्रीशुक उवाच ॥ इत्युक्ता साऽदिती राजन्स्वभर्त्राकश्यपेन वै ॥ अन्वतिष्ठद्व्रतमिदं द्वादशाहमतंद्रिता ॥ १ ॥ चिंतयंत्येकया बुद्ध्या महापुरुषमीश्वरम् ॥ प्रगृह्येंद्रियदुष्टाश्वान्मनसा बुद्धिसारथिः ॥ २ ॥ मनश्चैकाग्रया बुद्ध्या भगवत्यखिलात्मनि ॥ वासुदेवे समाधाय चचार ह पयोव्रतम् ॥ ३ ॥ तस्याः प्रादुरभूत्तात भगवानादिपूरुषः ॥ पीतवासाश्चतुर्बाहुः शंखचक्रगदाधरः ॥ ४ ॥ तं नेत्रगोचरं वीक्ष्य सहसोत्थाय सादरम् ॥ ननाम भुवि कायेन दंडवत्प्रीतिविह्वला ॥ ५ ॥

॥ ५६ ॥ ५७ ॥ मया च ते समुदाहृतम् ॥ ५८ ॥ ५९ ॥ सर्वयज्ञाख्योऽयं यज्ञः सर्वव्रतमिति च स्मृतमेतद्व्रतम् ॥ ६० ॥ ६१ ॥ ६२ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां षोडशोऽध्यायः ॥ १६ ॥ ततः सप्तदशेऽदित्या कृते तस्मिन्व्रते हरिः ॥ तत्कामपूरणायादौ तत्पुत्रोऽभूदितीर्यते ॥ १ ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

"दद्याद्गोमिथुनान्यष्टावाचार्याय सुभक्तिमान् । चतुर्विंशतिसंख्याकैर्हैमगद्याणकैः सह॥ ब्रह्मणे निष्कषट्काढ्यं दद्याद्गोमिथुनद्वयम् । एकैकमन्यऋत्विग्भ्यो दद्याद्गोमिथुनं समम् ॥ निष्कत्रयसमायुक्तं वस्त्रालंकारसंयुतम् ।" इति मंत्रशास्त्रात् । "चतुर्भिर्माषकैर्निष्कः षड्भिर्गद्याणको भवेत्" इति मानचंद्रिकायाम् । आदिनांबुग्रहः ॥ ५५ ॥ कृपणाः कदर्याः । आदिना दरिद्रादिग्रहः । तत् दीनादिभोजनम् ॥ ५६ ॥ स्वस्तिवाचकैर्मंत्रैः । तत्कथाभिः पुराणेतिहासगाथाभिः ॥ ५७ ॥ ५८ ॥ सम्यक्चीर्णेन यथावदाचरितेन ॥ ५९ ॥ इदं सारं श्रेष्ठं तप इदं सारं दानं च । विश्वनाथस्तु—सर्वयज्ञोऽयं यज्ञः अनेनैकेनैव कृतेन सर्वे यज्ञाः कृता भवंतीत्यर्थः । एवमिदं सर्वव्रतं तपःसारं तेन यज्ञसारदानसारव्रतसारशब्दानामपीदं वाच्यमिति द्योतितम् । किंभूतमिदम् ? ईश्वरं तर्पयति प्रीणयतीतीश्वरतर्पणम् ॥ ६० ॥ ईश्वरतोषकधर्माणामेव धर्मत्वमित्याह—त एवेति । "तपः संतोष आस्तिक्यं दानमीश्वरपूजनम् । सिद्धांतश्रवणं चैव ह्रीर्मतिश्च जपो व्रतम् ॥ एते तु नियमाः प्रोक्ताः" इति । "अहिंसा सत्यमस्तेयं ब्रह्मचर्यं दयार्जवम् । क्षमा धृतिर्मिताहारः शौचं चैते यमा स्मृताः ॥" इति । एकादशे त्वेते प्रकारांतरेण वक्ष्यंते भगवता । यैर्हरितोषस्त एव यमादयः श्रेष्ठा अन्यथा श्रम एव "श्रमः स्यात्सर्वथा धर्मो यो न प्रीतिकरो हरेः" इत्यादिपुराणात् ॥ ६१ ॥ यत एतद्व्रतमीश्वरतर्पणं तस्माद्धेतोः ॥ ६२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे षोडषोऽध्यायः ॥ १६ ॥ ततः कश्यपोपदेशानंतरम् । तस्मिन् पयोव्रते । तस्या अदितेः । कामपूरणायाभीष्टदानाय । तस्या अदितेः पुत्रः ( १ )। अतंद्रिता अनलसा ॥ १ ॥ प्रगृह्य प्रग्रहरूपेण मनसा वशीकृत्येत्यर्थः 'मनो रश्मिर्बुद्धिसूतः' इत्युक्तेः । एकया स्थिरया ॥ २ ॥ ३ ॥ तस्या आदित्याः । अग्रे इति शेषः ॥ ४ ॥ तं भगवंतम् ॥ ५ ॥

सोत्थाय बद्धांजलिरीडितुं स्थिता नोत्सेह आनंदजलाकुलेक्षणा ॥ बभूव तूष्णीं पुलकाकुलाकृतिस्तद्दर्शनात्युत्सवगात्रवेपथुः ॥ ६ ॥ प्रीत्या शनैर्गद्गदया गिरा हरिं तुष्टाव सा देव्यदितिः कुरूद्वह ॥ उद्वीक्षती सा पिबतीव चक्षुषा रमापतिं यज्ञपतिं जगत्पतिम् ॥ ७ ॥ अदितिरुवाच ॥ यज्ञेश यज्ञपुरुषाच्युत तीर्थपाद तीर्थश्रवः श्रवणमंगलनामधेय ॥ आपन्नलोकवृजिनोपशमोदयाद्य शं नः कृधीश भगवन्नसि दीननाथः ॥ ८ ॥ विश्वाय विश्वभवनस्थितिसंयमाय स्वैरं गृहीतपुरुशक्तिगुणाय भूम्ने ॥ स्वस्थाय शश्वदुपबृंहितपूर्णबोधव्यापादितात्मतमसे हरये नमस्ते ॥ ९ ॥ आयुः परं वपुरभीष्टमतुल्यलक्ष्मीर्द्योभूरसाः सकलयोगगुणास्त्रिवर्गः ॥ ज्ञानं च केवलमनंत भवंति तुष्टात्त्वत्तो नृणां किमु सपत्नजयादिराशीः ॥ १० ॥

प्रीतिविह्वलत्वादेव सा बद्धांजलिः सती स्थिता केवलमीडितुं पुनर्नोत्सेहे न शशाकापि तु तूष्णीं बभूव । कथंभूता । आनंदजलैराकुले ईक्षणे यस्याः । पुलकैराकुला आकृतिर्देहो यस्याः । तस्य दर्शनेन योऽत्युत्सवस्तेन गात्रे वेपथुः कंपो यस्याः ॥ ६ ॥ तुष्टाव पिबतीवोद्वीक्षमाणेति च क्रियाभेदात्सेत्यस्य पदस्य द्विरुक्तिरदोषः ॥ ७ ॥ "अयत्नतो विनिर्जित्य दैत्यानत्यूर्जितानपि ॥ भक्तान्रक्षितुमीशस्त्वमित्यस्तौददितिस्त्रिभिः ॥ " यज्ञेशेत्यादिदशभिः संबोधनैस्तवाशक्यं किमपि नास्तीति वदंती प्रार्थयते । शं नः कृधि कुरु । यतो दीनानां नाथोऽसि त्वम् । तीर्थं श्रवः कीर्तिर्यस्य श्रवणमेव मंगलं यस्य तन्नामधेयं यस्य आपन्नानां शरणागतानां वृजिनोपशमायोदयो यस्य ॥ ८ ॥ हे आद्य भूम्ने महते नमः । महत्त्वे हेतवः विश्वाय विश्वस्य भवनस्थितिसंयमार्थं स्वैरं गृहीताः पुरुशक्तेर्मायाया गुणा येन तस्मै । तथाऽपि स्वस्थायाप्रच्युतस्वरूपाय । कुतः । शश्वदुपबृंहितो नित्योर्जितो यः पूर्णबोधस्तेन व्यापादितं नित्यनिरस्तमात्मनि तमो मायालक्षणं येन तस्मै ॥ ९ ॥ अस्मदीयमनोरथपूरणमीषत्करमेव तवेति कैमुत्यन्यायेनाह । आयुः परं ब्रह्मायुः । पुनरपि द्यौश्च

सा अदितिः । पुलकैः रोमांचैः "पुलकः कृमिप्रभेदे प्रस्तरभेदे च मणिदोषे । रोमांचे हरिताले गजान्नपिंडे च गंधर्वे ॥" इति मेदिनी । तस्य भगवतः ॥६॥ सेति पदस्य ॥७॥ अत्यूर्जितानतीव बलिनः । भक्तान् देवान् । कृधीत्यार्षः । यज्ञानामीशः फलदाता । न्यूनेऽपि तस्मिंस्त्वं स्वरूपात्पूर्णमेव फलं ददासीत्याह—यज्ञपुरुषेति । तत्र हेतुः—अच्युतेति । सर्वथा च्युतिरहितोऽसीति । तीर्थं श्रीगंगा स्वाभीष्टप्रसकलदुष्कृतनाशिनी पादयोर्यस्य स तथा । यद्वा—तीर्थवच्छोधकौ ध्यानेनैवाखिलाघहरौ पादौ यस्य स तथेति । ध्यानेप्यसमर्थानां हितकरोऽसीत्याह—तीर्थं पावनं श्रवो यस्येति तथा । तत्रापि मननाद्यपेक्षा नास्तीत्याह—श्रवणमंगलेति । केवलश्रवणादेव मंगलं करोषीति । आद्यत्वात्सर्वविदसि ईशत्वात्सर्वथा समर्थोऽसीत्यर्थः ॥ ८ ॥ विश्वाय तद्रूपाय तथापि विश्वोत्पत्त्याद्यर्थं मायया दर्शितब्रह्मादिमूर्तित्रयत्वेन पृथगिव प्रतीताय । पुनस्तथात्वेपि अप्रच्युतस्वरूपत्वे हेतुं पृच्छति—कुत इति । भुजंगाधिष्ठानरज्जुवत्सर्वथा निर्विकारायेत्यर्थः ॥ ९ ॥ भगवन्महिमानं वदंती तत्प्रभुत्वं द्योतयति—अस्मदीयेति । रसेति पाठे निर्विसर्गपाठे । द्यौर्भूरसेति त्रीणीति । गुणाः कार्याणि ॥ १० ॥

श्रीशुक उवाच ॥ अदित्यैवं स्तुतो राजन्भगवान्पुष्करेक्षणः ॥ क्षेत्रज्ञः सर्वभूतानामिति होवाच भारत ॥ ११ ॥ श्रीभगवानुवाच ॥ देवमातर्भवत्या मे विज्ञातं चिरकांक्षितम् ॥ यत्सपत्नैर्हृतश्रीणां च्यावितानां स्वधामतः ॥ १२ ॥ तान्विनिर्जित्य समरे दुर्मदानसुरर्षभान् ॥ प्रतिलब्धजयश्रीभिः पुत्रैरिच्छस्युपासितुम् ॥ १३ ॥ इंद्रज्येष्ठैः स्वतनयैर्हतानां युधि विद्विषाम् ॥ स्त्रियो रुदंतीरासाद्य द्रष्टुमिच्छसि दुःखिताः ॥ १४ ॥ आत्मजान्सुसमृद्धांस्त्वं प्रत्याहृतयशःश्रियः ॥ नाकपृष्ठमधिष्ठाय क्रीडतो द्रष्टुमिच्छसि ॥ १५ ॥ प्रायोऽधुना तेऽसुरयूथनाथा अपारणीया इति देवि मे मतिः ॥ यत्तेऽनुकूलेश्वरविप्रगुप्ता न विक्रमस्तत्र सुखं ददाति ॥ १६ ॥ अथाप्युपायो मम देवि चिंत्यः संतोषितस्य व्रतचर्यया ते ॥ ममार्चनं नार्हति गंतुमन्यथा श्रद्धानुरूपं फलहेतुकत्वात् ॥ १७ ॥ त्वयार्चितश्चाहमपत्यगुप्तये पयोव्रतेनानुगुणं समीडितः ॥ स्वांशेन पुत्रत्वमुपेत्य ते सुतान् गोप्तास्मि मारीचतपस्यधिष्ठितः ॥ १८ ॥ उपधाव पतिं भद्रे प्रजापतिमकल्मषम् ॥ मां च भावयती पत्यावेवंरूपमवस्थितम् ॥ १९ ॥ नैतत्परस्मा आख्येयं पृष्टयाऽपि कथंचन ॥ सर्वं संपद्यते देवि देवगुह्यं सुसंवृतम् ॥ २० ॥

भूश्च रसातलं च द्योभूरसाः । द्यौरिति पृथक्पाठे भूश्च रसाश्च बिलस्वर्गा इति विग्रहः । रसेति पाठे त्रीणि पदानि । सकला योगगुणा अणिमादयः ॥ १० ॥ क्षेत्रज्ञोंतर्यामी ॥ ११ ॥ सपत्नैर्हृता श्रीर्येषां स्वधामतश्च्यावितानां च पुत्राणां संबंधि यत्तद्भवत्याश्चिरमाकांक्षितं मया विज्ञातम् ॥ १२ ॥ कांक्षितमेवाह तानिति त्रिभिः । प्रतिलब्धो जयश्च श्रीश्च यैस्तैः पुत्रैः सहोपासितुमेकत्र स्थातुमिच्छसि ॥ १३ ॥ १४ ॥ प्रत्याहृतं यशश्च श्रीश्च यैस्तान् ॥ १५ ॥ अपारणीया अनतिक्रमणीयाः । यद्यस्मात् अनुकूल ईश्वरः कालो येषां तैर्विप्रैर्गुप्ता रक्षिताः । अनुकूलैरीश्वरैः समर्थैर्विप्रैर्गुप्ता इति वा ॥ १६ ॥ मम मया चिंत्य एव । तत्र हेतुः । संतोषितस्येत्यादि । श्रद्धानुरूपमिच्छानुसारेण फलहेतुत्वात् ॥ १७ ॥ मारीचस्य तपस्यधिष्ठाय स्थितः सन् । गोप्तास्मि पालयिष्यामि ॥ १८ ॥ अतः पतिमुपधाव भजस्व ॥ १९ ॥ देवानां गुह्यं रहस्यं

इति वक्ष्यमाणरीत्या ॥ ११ ॥ १२ ॥ १३ ॥ आसाद्य स्वं स्थानं प्राप्य ॥ १४ ॥ १५ ॥ प्रथमव्याख्याने भवतु विप्राणामनुकूल ईश्वरस्तस्य तत्प्रतिकूलत्वे त्वस्मत्कार्यं सेत्स्यत्येवेत्याह—अनुकूलैरित्यादि । तत्र असुरेषु ॥ १६ ॥ यद्यपि विक्रमकालोऽधुना न तथापीत्यर्थः । तत्र चिंत्यत्वे । फलस्य हेतुरेव फलहेतुकस्तस्य भावस्तत्त्वात् ॥ १७ ॥ अनुगुणं यथोचितम् । सुतानिंद्रादीन् । मारीचः कश्यपः । तपस्यधिष्ठितः तपश्चर्यया प्रसन्न इत्यर्थः ॥ १८ ॥ भाविकल्याणं सूचयन्नामंत्रयति—भद्र इति । भावयंती चिंतयंती । एवंरूपं संप्रतिदर्शितरूपसदृशरूपम् । यतोऽहं मारीचतपस्यधिष्ठितो गोप्तास्मि अंतोहेतोः ॥ १९ ॥ एतत् मदुक्तम् । देवानां त्वत्पुत्राणाम् । रहस्यं गुप्तकार्यम् । क्वचित्पुस्तकेष्वत्र सार्द्धत्रयश्लोकाः प्रक्षिप्तास्संति ते च "नाहं वोढुं क्षमा देव त्वामाद्यं पुरुषं परम् । ब्रह्मांडकोटिसाहस्रं रोमकूपे तवाव्यय ( १ ) । महापातकयुक्तोऽपि यन्नामस्मृतिमात्रतः । प्रयाति मुक्तिं देवेश तं कथं धारयाम्यहम् (२) । श्रीभगवानुवाच । सत्यमुक्तं महाभागे त्वया नास्त्यत्र संशयः । पतिव्रताः पतिप्राणाः पतिभक्तिपरायणाः ( ३ )। वहंति सततं बाले स्त्रियोऽपि त्यक्तमत्सराः" ॥

श्रीशुक उवाच ॥ एतावदुक्त्वा भगवांस्तत्रैवांतरधीयत ॥ अदितिर्दुर्लभं लब्ध्वा हरेर्जन्मात्मनि प्रभोः ॥ २१ ॥ उपाधावत्पतिं भक्त्या परया कृतकृत्यवत् ॥ स वै समाधियोगेन कश्यपस्तदबुद्ध्यत ॥ २२ ॥ प्रविष्टमात्मनि हरेरंशं ह्यवितथेक्षणः ॥ सोऽदित्यां वीर्यमाधत्त तपसा चिरसंभृतम् ॥ समाहितमना राजन्दारुण्यग्निं यथाऽनिलः ॥ २३ ॥ अदितेर्धिष्ठितं गर्भं भगवंतं सनातनम् ॥ हिरण्यगर्भो विज्ञाय समीडे गुह्यनामभिः ॥ २४ ॥ ब्रह्मोवाच ॥ जयोरुगाय भगवन्नुरुक्रम नमोऽस्तु ते ॥ नमो ब्रह्मण्यदेवाय त्रिगुणाय नमोनमः ॥ २५ ॥ नमस्ते पृश्निगर्भाय वेदगर्भाय वेधसे ॥ त्रिनाभाय त्रिपृष्ठाय शिपिविष्टाय विष्णवे ॥ २६ ॥ त्वमादिरंतो भुवनस्य मध्यमनंतशक्तिं पुरुषं यमाहुः ॥ कालो भवानाक्षिपतीश विश्वं स्रोतो यथांतःपतितं गभीरम् ॥ २७ ॥

सर्वं सुसंवृतं सुगुप्तं सत्संपद्यते सिध्यति ॥ २० ॥ प्रभोर्हरेरात्मनि जन्म लब्ध्वा ॥ २१ ॥ २२ ॥ अवितथमीक्षणं दृष्टिर्यस्य सः । अनिलो यथा सर्वत्र समोऽपि दारुणि संघर्षेण वनदाहकमग्निमाधत्ते एवं स्वयं पुत्रेषु सर्वेषु समोऽपि दैत्यक्षपणं वीर्यमाधत्तेत्यर्थः ॥ २३ ॥ धिष्ठितमधिष्ठाय स्थितम् । समीडे तुष्टावेत्यर्थः ॥ २४ ॥ २५ ॥ अदितेरेव पूर्वस्मिन् जन्मनि पृश्निरिति नाम तस्या गर्भायार्भकाय । तत्रापि वेदा गर्भे यस्य । यद्वा वेदानां गर्भाय वेदेषु प्रकाशमानायेत्यर्थः । त्रयो लोका नाभौ यस्य स त्रिनाभस्तस्मै । त्रयाणां लोकानां पृष्ठे उपरि स्थिताय । शिपिशब्देन पशवो जीवास्तेष्वंतर्यामितया प्रविष्टाय । "यज्ञो वै विष्णुः पशवः शिपिर्यज्ञ एव पशुषु प्रतितिष्ठति" इति श्रुतेः । यद्वा शिपयो रश्मयस्तैर्वेष्टितायेत्यर्थः । तथापि विष्णवे व्यापिने ॥ २६ ॥ अंतःपतितं तृणादि यथा गंभीरं स्रोत आक्षिपत्याकर्षति

इति । परं चैते स्वामित्यक्ता एव ॥२०॥ तत्रैवादितिपयोव्रतदेश एव ॥२१॥ तत् तं हरेरंशमात्मनि प्रविष्टमबुध्येतेति द्वयोरन्वयः । स कश्यपः ॥२२॥ इत्यर्थ इति । समाहितमनस्त्वात्स्वेच्छानुरूपं वीर्यमाहितवानिति भावः । वीर्यं भगवद्रूपं तेजः । समाहितमना भगवद्रूपैकाग्रचित्तः । अनिलो यथा संघर्षेण दारुस्थमग्निमेव मूर्त्तं दारुगर्भे प्रकटीकरोति तथैव कश्यपोऽप्यंतःकरणस्थं भगवंतमेव स्वदेहसंगेन तदीयगर्भे स्थिरीचकारेत्यर्थः । यथैवाग्निरनिलदार्वंशो न भवति तथैव भगवद्देहोऽपि कश्यपादित्यंशो न भवतीति शुक्रशोणितसंबंधो निरस्त इति विश्वनाथः ॥ २३ ॥ गुह्यनामभिर्वेदोक्तनामभिः । इत्यर्थ इति । प्रथमपुरुषस्थान उत्तमपुरुषप्रयोगोऽत्रार्ष इति भावः । यद्वा—भगवतो भक्तिवश्यतां विज्ञाय नामसंकीर्त्तनलक्षणां भक्तिमेव चकारेति भावः ॥ २४ ॥ उरुभिर्महद्भिर्गीयत इत्युरुगायः । उरवः क्रमाः पादन्यासा यस्येति भाविकर्मसूचनम् । त्रयो गुणाः प्रकृत्यधिष्ठातृत्वेन यस्य स तथा ॥ २५ ॥ त्रयाणामूर्द्ध्वाधोमध्यवर्त्तिनां लोकानां पृष्ठ उपरिष्टे वैकुंठे स्थितायेत्यर्थः । वेदगर्भत्वं ब्रह्मणोऽप्यस्ति "त्वयाहं तोषितः सम्यग्वेदगर्भसिसृक्षया" इति ब्रह्माणं प्रति विष्णूक्तेरत आह—वेदानामिति । इत्यर्थ इति । "सर्वे वेदा यत्पदमामनंति" इति श्रुतेः 'वेदैश्च सर्वैरहमेव वेद्यः' इति स्मृतेश्चेति भावः । शिपिविष्टपदं व्याख्यातचरम् । अत्रत्यमानभूता श्रुतिः स्पष्टार्था । शिपिशब्दो लोके जीवार्थकोऽप्रसिद्धोऽतः प्रसिद्धार्थपरत्वेन व्याचष्ट इत्यत आह—यद्वेति । यद्यपि रश्मिवेष्टितत्वेन परिच्छिन्नतायाति तथापीति । औपाधिकपरिच्छेदवत्त्वेप्याकाशवद्वस्तुतोऽपरिच्छिन्नायेत्यर्थः ॥ २६ ॥ दृष्टान्तमाह—स्रोतो

त्वं वै प्रजानां स्थिरजंगमानां प्रजापतीनामसि संभविष्णुः ॥ दिवौकसां देव दिवश्च्युतानां परायणं नौरिव मज्जतोऽप्सु ॥ २८ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे अदितिवरदानं नाम सप्तदशोऽध्यायः ॥ १७ ॥ श्रीशुक उवाच ॥ इत्थं विरिंचस्तुतकर्मवीर्यः प्रादुर्बभूवामृतभूरदित्याम् ॥ चतुर्भुजः शंखगदाब्जचक्रः पिशंगवासा नलिनायतेक्षणः ॥ १ ॥ श्यामावदातो झषराजकुंडलत्विषोल्लसच्छ्रीवदनांबुजः पुमान् ॥ श्रीवत्सवक्षा वलयांगदोल्लसत्किरीटकांचीगुणचारुनूपुरः ॥ २ ॥ मधुव्रतव्रातविघुष्टया स्वया विराजितः श्रीवनमालया हरिः ॥ प्रजापतेर्वेश्मतमः स्वरोचिषा विनाशयन्कंठनिविष्टकौस्तुभः ॥ ३ ॥ दिशः प्रसेदुः सलिलाशयास्तदा प्रजाः प्रहृष्टा ऋतवो गुणान्विताः ॥ द्यौरंतरिक्षं क्षितिरग्निजिह्वा गावो द्विजाः संजहृषुर्नगाश्च ॥ ४ ॥

तथा कालात्मा भवान्विश्वमाक्षिपति ॥ २७ ॥ प्रजापतीनां च त्वमेव संभविष्णुरुत्पादनशीलोऽसि । अयं भावः । न ह्येवंभूतस्य तव जन्मादिसंभवः किं तु देवानां प्रजापतीनां प्रजानां च परमाश्रयत्वेन तत्कार्यसाधनायावतारोऽयमतस्तान्स्वर्गच्युतान्पुनः स्वर्गे स्थापयेति ॥ २८ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां सप्तदशोऽध्यायः ॥ १७ ॥ ततस्त्वष्टादशे भूत्वा वामनः सत्कृतोऽखिलैः ॥ यज्ञं गतस्ततस्तेन सत्कृत्योक्तो वरान् वृणु ॥ १ ॥ इत्थं विरिंचेन स्तुतं कर्म देवकार्यलक्षणं वीर्यं च प्रभावो यस्य स हरिरदित्यां प्रादुर्बभूवेति त्रयाणामन्वयः । अमृतभूर्मृत्युजन्मशून्यः । शंखगदाब्जचक्राण्यस्य संतीति तथा । अर्शआदित्वेन मत्वर्थीयोऽच् प्रत्ययः । अविसर्गपाठे स चासौ पिशंगवासाश्च ॥ १ ॥ श्यामावदातः श्यामेषु प्रवरः । झषराजो मकरस्तदाकारयोः कुंडलयोस्त्विषा उल्लसंती श्रीर्वदनांबुजे यस्य । श्रीवत्सो वक्षसि यस्य । वलयैरंगदैश्च सहोल्लसंति किरीटादीनि यस्य ॥ २ ॥ श्रीमत्या वनमालया विराजितः । वेश्मगतं तमः ॥ ३ ॥ अग्निजिह्वा देवाः । नगाः पर्वताः ॥ ४ ॥

नद्यादिप्रवाहः । आकर्षति तीरं प्रत्यानयति ॥ २७ ॥ परायणमुत्कृष्टाश्रयः । अत्राशयमाह—अयं भाव इति । एवंभूतस्य सर्वोत्पत्त्यादिकारणस्य । यतो देवकार्यार्थमेवावतारोऽतो हेतोः। तान् देवान्॥ २८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥ ततो देवप्रार्थनानंतरम् । ततो यज्ञे गमनोत्तरम् । तेन बलिना (१) । इत्थं जयोरुगायेत्यादिरीत्या । मृतं मृतिः भूः भवनं जनिः मृतं च भूश्च मृतभुवौ न मृतभुवौ यस्य सोऽमृतभूः । यद्वा—प्राकृतानामिव न मृता नाशवती भूरुत्पत्तिर्यस्य 'जन्म कर्म च मे दिव्यम्' इत्युक्तेः । अविसर्गपाठे चक्रपिशंगेति पाठे ॥ १ ॥ २ ॥ प्रजापतेः कश्यपस्य । वेश्मगतं गृहगम् । स्वरोचिषा स्वांगतेजसा । तदाह—कंठनिविष्टेति । कौस्तुभादीनां सहैवाविर्भूतत्वेनांगत्वमेव हस्तादिवत् ॥ ३ ॥ तदा वामनाविर्भावसमये । सलिलाशया ह्रदाः । ऋतव इति बहुत्वेन कृष्णाविर्भावकालवत्सर्वेर्त्तवस्तदा स्वस्वकालीनपुष्पादिरूपगुणान् दर्शयामासुः ! द्यौः स्वर्गोऽपि स्वस्वामींद्रप्राप्त्याशया प्रससाद । द्यौरिति तत्स्थगंधर्वादिपरं वा अग्निजिह्वानां पृथगुपदेशात् । अंतरिक्षप्रसादस्तु निर्मलोडुगणान्वितत्वादिरूपो ज्ञेयः । क्षितिरपि तत्स्थद्विजेतरगावितरनगेतरपरा द्विजादीनां पृथग्गणनात् । यद्वा—पादस्पर्शेनाहं सर्वोत्कृष्टा स्यामिति प्रसादः । नगप्रसादो नैर्मल्येन प्रतीतिस्तदधिष्ठातृदेवा वा ग्राह्याः ॥ ४ ॥

श्रोणायां श्रवणद्वादश्यां मुहूर्तेऽभिजिति प्रभुः ॥ सर्वे नक्षत्रताराद्याश्चक्रुस्तज्जन्म दक्षिणम् ॥५॥ द्वादश्यां सवितातिष्ठन्मध्यंदिनगतो नृप ॥ विजया नाम सा प्रोक्ता यस्यां जन्म विदुर्हरेः ॥ ६ ॥ शंखदुंदुभयो नेदुर्मृदंगपणवानकाः ॥ चित्रवादित्रतूर्याणां निर्घोषस्तुमुलोऽभवत् ॥ ७ ॥ प्रीताश्चाप्सरसोऽनृत्यन्गंधर्वप्रवरा जगुः ॥ तुष्टुवुर्मुनयो देवा मनवः पितरोऽग्नयः ॥८॥ सिद्धविद्याधरगणाः सकिंपुरुषकिन्नराः ॥ चारणा यक्षरक्षांसि सुपर्णा भुजगोत्तमाः ॥ ९ ॥ गायंतोऽतिप्रशंसंतो नृत्यंतो विबुधानुगाः ॥ अदित्या आश्रमपदं कुसुमैः समवाकिरन् ॥१०॥ दृष्ट्वाऽदितिस्तं निजगर्भसंभवं परं पुमांसं मुदमाप विस्मिता ॥ गृहीतदेहं निजयोगमायया प्रजापतिश्चाह जयेति विस्मितः ॥ ११ ॥ यत्तद्वपुर्भाति विभूषणायुधैरव्यक्तचिद्व्यक्तमधारयद्धरिः ॥ बभूव तेनैव स वामनो बटुः संपश्यतोर्दिव्यगतिर्यथा नटः ॥ १२ ॥ तं बटुं वामनं दृष्ट्वा मोदमाना महर्षयः ॥ कर्माणि कारयामासुः पुरस्कृत्य प्रजापतिम् ॥ १३ ॥ तस्योपनीयमानस्य सावित्रीं सविताऽब्रवीत् ॥ बृहस्पतिर्ब्रह्मसूत्रं मेखलां कश्यपोऽददात् ॥ १४ ॥

तत्प्रादुर्भावसमयमाह । श्रोणायामिति । भाद्रपदशुक्लद्वादशी श्रवणद्वादशीति प्रसिद्धा तस्याम् । तत्रापि श्रोणायां श्रवणस्थे चंद्रे इत्यर्थः । तत्रापि श्रवणस्य प्रथमांशेऽभिजिति नक्षत्रे । तच्च श्रुत्या दर्शितम् । "अभिजिन्नाम नक्षत्रमुपरिष्टादषाढानामवस्ताच्छ्रोणायाः" इति । एवंविशिष्टे मुहूर्ते सुसमये प्रभुः प्रादुर्बभूवेत्यर्थः । किं च नक्षत्राण्यश्विन्यादीनि । ताराशब्देन ग्रहा गुरुशुक्रादयस्ते आद्या येषां ते सूर्यादयोऽपि सर्वे तस्य जन्म दक्षिणमुदारं चक्रुः । जन्ममुहूर्ते गुणा बहवो बभूवुरित्यर्थः ॥ ५ ॥ विशेषांतरमाह । यस्या द्वादश्यां हरेर्जन्म तत्तस्यामहन्येव विदुः । तदा च मध्यंदिनगतः सविताऽतिष्ठत् । अनेन अभिजिन्मुहूर्ते जन्म उक्तं सा च द्वादशी विजया नाम प्रोक्तेत्यन्वयः ॥ ६ ॥ शंखादयो ये तेषामन्येषां च चित्रतूर्याणां निर्घोषोऽभवत् ॥ ७ ॥ देवा मनव इत्यादीनां कुसुमैः समवाकिरन्निति तृतीयेनान्वयः ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ विस्मयांतरमाह । यत्तदिति । यत्तद्वपुर्हरिरधारयत्प्रकटितवांस्तेनैव वपुषा मातापित्रोः संपश्यतोरेव वामनो बटुर्बभूव । दिव्यगतिरद्भुतचेष्टितः । स्वयं कथंभूतः । अव्यक्तचिद्रूपः । कथमधारयत् । भातिर्दीप्तिर्विभूषणानि चायुधानि च तैर्व्यक्तं यथा भवति तथा ॥ १२ ॥ कर्माणि जातकर्मादीनि ॥ १३ ॥ १४ ॥

तत्रापि भाद्रशुक्लद्वादश्यामपि । इत्यर्थ इति । श्रोणापदश्रवणर्क्षपरत्वस्य श्रुत्या दर्शितत्वाद्यद्दिने यन्नक्षत्रमस्ति तद्दिने तत्रैव चंद्रस्तिष्ठतीति भावः । तच्च श्रवणर्क्षप्रथमांशस्याभिजित्त्वम् । आषाढानामुत्तराषाढानां बहुत्वं तारापेक्षम् 'पूर्वाषाढे तथोत्तरे त्रयम्' इति काशीनाथोक्तेः । इत्यर्थ इति । पूर्वश्लोकोक्तं क्रियापदमत्रानेयमिति भावः । अन्यदाधिक्यमाह–किञ्चेति, तस्य । "दक्षिणः सरलोदारे निपुणे चंदनद्रुमे" इति विश्वः । इत्यर्थ इति । अतीव शोभनसमये भगवानाविर्बभूवेति भावः ॥५॥ विशेषांतरमाधिक्यांतरम् । तत् जन्म । तस्यां द्वादश्याम् । तदा च तस्मिन्दिने च । अत्र 'मध्यंदिनगतोऽहनि'इति पाठोऽपेक्षितो भाति स्वामिचरणैः । यस्यां द्वादश्यां हरेर्जन्म तत्तस्यामहन्येव विदुरित्यन्वयोक्तेः । विश्वनाथोऽपि अहनि मध्यंदिनगतः सविता यदाऽभूत्तदा जन्मेति शेष इति योजनां कुर्वन्नुक्तमेव पाठमभिप्रैति । दृष्टश्चायं पाठः केषुचित्पुस्तकेषु ॥ ६ ॥ तुमुलो रोमहर्षोत्पादकः ॥७॥ गंधर्वेषु प्रवरा हाहाहूहूप्रभृतयः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ व्यक्तं सहजातत्वात्तैर्दीप्त्याद्यैरीशोऽयं नान्यत्र भूषणायुधादीनां सहजत्वमिति प्रकटितम् ॥ १२ ॥ बटुं बालम् "बटू स्तो बालवर्णिनौ" इति धरणिः । प्रजापतिं ब्रह्माणं कश्यपं वा ॥ १३ ॥ तस्य वामनबटोः । उपनीयमानस्य योपनयनक्रियां प्राप्तस्य । ब्रह्मसूत्रमुपवीतम् । मेखलां प्रवरग्रंथियुतां मौंजीं कांचीम् 'मेखला खड्गबंधे स्यात्कांची शैलनितंबयोः' इति मेदिनी ॥१४॥

ददौ कृष्णाजिनं भूमिर्दंडं सोमो वनस्पतिः ॥ कौपीनाच्छादनं माता द्यौश्छत्रं जगतः पतेः ॥ १५ ॥ कमंडलुं वेदगर्भः कुशान्सप्तर्षयो ददुः ॥ अक्षमालां महाराज सरस्वत्यव्ययात्मनः ॥ १६ ॥ तस्मा इत्युपनीताय यक्षराट् पात्रिकामदात् ॥ भिक्षां भगवती साक्षादुमाऽदादंबिका सती ॥ ॥ १७ ॥ स ब्रह्मवर्चसेनैवं सभां संभावितो बटुः ॥ ब्रह्मर्षिगणसंजुष्टामत्यरोचत मारिषः ॥ १८ ॥ समिद्धमाहितं वह्निं कृत्वा परिसमूहनम् ॥ परिस्तीर्य समभ्यर्च्य समिद्भिरजुहोद्द्विजः ॥ १९ ॥ श्रुत्वाऽश्वमेधैर्यजमानमूर्जितं बलिं भृगूणामुपकल्पितैस्ततः ॥ जगाम तत्राखिलसारसंभृतो भारेण गां सन्नमयन्पदेपदे ॥ २० ॥ तं नर्मदायास्तट उत्तरे बलेर्य ऋत्विजस्ते भृगुकच्छसंज्ञके ॥ प्रवर्तयंतो भृगवः क्रतूत्तमं व्यचक्षताराददुदितं यथा रविम् ॥ २१ ॥ त ऋत्विजो यमानः सदस्याः हतत्विषो वामनतेजसा नृप ॥ सूर्यः किलायात्युत वा विभावसुः सनत्कुमारोऽथ दिदृक्षया क्रतोः ॥ २२ ॥ इत्थं सशिष्येषु भृगुष्वनेकधा वितर्क्यमाणो भगवान्स वामनः ॥ छत्रं सदंडं सजलं कमंडलुं विवेश बिभ्रद्धयमेधवाटम् ॥ २३ ॥ मौंज्या मेखलया वीतमुपवीताजिनोत्तरम् ॥ जटिलं वामनं विप्रं मायामाणवकं हरिम् ॥ २४ ॥

वनस्पतिर्वनानां पतिः सोमः ॥ १५ ॥ १६ ॥ पात्रिकां भिक्षापात्रीम् ॥ १७ ॥ स एवं संभावितो मारिषः श्रेष्ठो बटुर्ब्रह्मवर्चसेन ब्रह्मर्षिगणसंजुष्टां तां सभामतिक्रम्यारोचत ॥ १८ ॥ १९ ॥ यदर्थं बटुर्बभूव तदाह श्रुत्वेत्यादि यावत्समाप्ति । यजमानं यजंतम् । भृगूणां भृगुभिः । उपकल्पितैः प्रवर्तितैः । अखिलेन सारेण बलेन संभृतः संपूर्णः ॥ २० ॥ नर्मदाया उत्तरे तटे भृगुकच्छसंज्ञके क्षेत्रे क्रतूत्तमं प्रवर्तयंतो ये बलेर्ऋत्विजो भृगवस्ते तं व्यचक्षतापश्यन् । आरात्समीप एवोदितं रविमिव ॥ २१ ॥ तम् ऋत्विगादयः सूर्यः किलेत्येवमादि व्यतर्कयन्निति शेषः ॥ २२ ॥ हयमेधवाटमश्वमेधमंडपं विवेश ॥ २३ ॥ उपवीताजिनमुपवीतवद्धृतमजिनमेवोत्तरमुत्तरीयं

कौपीनं गुह्यप्रदेश आच्छाद्यतेऽनेनेति कौपीनाच्छादनं चीरम् "कौपीनं स्यादकार्येऽपि चीरगुह्यप्रदेशयोः" इति मेदिनी । यद्वा—कौपीनं चाच्छादनमंसधार्यं वस्त्रं चेति कौपीनाच्छादनं वस्त्रद्वयमित्यर्थः । द्यौः तदभिमानिनी देवता ॥ १५ ॥ वेदगर्भो ब्रह्मा । अक्षमाला जपमाला । "आदिक्षांताक्षरमिता जपमालाक्षमालिका" इति मंत्रकोशात् ॥ १६ ॥ यक्षराट् कुबेरः । उमेति । 'उमा सस्यविशेषः स्याद्धिमालयसुताऽपि च' इति हट्टः । इति सस्यरूपार्थान्तरवारणाय आह—अम्बिकेति । मातृवारणायाह—सती दक्षात्मजेति ॥ १७ ॥ संभावितः पूज्यः ॥ १८ ॥ परिसमूहनं कुशैर्भूमिसमूहनं कृत्वा आहितं स्थापितम् वह्निं परिस्तीर्य आग्नेयादीशानांतं ब्रह्मणोग्निपर्यंतमित्याद्युक्तरीत्या परिस्तरणं विधाय समिद्भिः प्रादेशमितसमित्त्रयेण समभ्यर्च्य अजुहोत् । शेषहोममकरोत् ॥ १९ ॥ ततः कश्यपाश्रमात्तत्र जगाम यत्र बलिर्यागमकरोदिति ॥ २० ॥ उत्तरे तटे परपारे । तं वामनम् ॥ २१ ॥ विभावसुरग्निः " विभावसुः पुमान्सूर्ये हारभेदे च पावके " इति मेदिनी ॥ २२ ॥ सशिष्यैर्भृगुभिरित्यर्थः । ' छत्रं सदंडम् ' इति पाठस्तु प्राचीनः । हयमेधशालाम् ॥ २३ ॥ मायया माणवकं बालम् " माणवको हारभेदे बाले कुपुरुषे तथा " इति मेदिनी । वस्तुतो हरिं सर्व

प्रविष्टं वीक्ष्य भृगवः सशिष्यास्ते सहाग्निभिः ॥ प्रत्यगृह्णन्समुत्थाय संक्षिप्तास्तस्य तेजसा ॥ २५ ॥ यजमानः प्रमुदितो दर्शनीयं मनोरमम् ॥ रूपानुरूपावयवं तस्मा आसनमाहरत् ॥ २६ ॥ स्वागतेनाभिनंद्याथ पादौ भगवतो बलिः ॥ अवनिज्यार्चयामास मुक्तसंगं मनोरमम् ॥ २७ ॥ तत्पादशौचं जनकल्मषापहं स धर्मविन्मूर्ध्न्यदधात्सुमंगलम् ॥ यद्देवदेवो गिरिशश्चंद्रमौलिर्दधार मूर्ध्ना परया च भक्त्या ॥ २८ ॥ बलिरुवाच ॥ स्वागतं ते नमस्तुभ्यं ब्रह्मन्किं करवाम ते ॥ ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वार्य वपुर्धरम् ॥ २९ ॥ अद्य नः पितरस्तृप्ता अद्य नः पावितं कुलम् ॥ अद्य स्विष्टः क्रतुरयं यद्भवानागतो गृहान् ॥ ३० ॥ अद्याग्नयो मे सुहुता यथाविधि द्विजात्मजत्वच्चरणावनेजनैः ॥ हतांहसो वार्भिरियं च भूरहो तथा पुनीता तनुभिः पदैस्तव ॥ ३१ ॥

यस्य तम् ॥ २४ ॥ संक्षिप्ता अभिभूताः संतः ॥ २५ ॥ रूपस्यानुरूपा अवयवा यस्य तम् । दृष्ट्वेति शेषः ॥ २६ ॥ २७ ॥ चंद्रमौलिश्चेत्यन्वयः । अप्यर्थे चकारः चंद्रमौलिरपि गंगारूपं यन्मूर्ध्ना दधारेत्यर्थः ॥ २८ ॥ हे आर्य त्वा त्वां साक्षात्प्रत्यक्षं ब्रह्मर्षीणां तप एव मन्ये । कथंभूतं तपः वपुर्धरं मूर्तिधारि ॥ २९ ॥ ३० ॥ त्वच्चरणावनेजनैर्वार्भिर्हतमंहो यस्य तस्य मे । पुनीता पवित्रीकृता ॥ ३१ ॥

स्वहरम् । ननु 'सशिखक्तक्षौरमुपनयेत्' इत्युक्तमुपनयनपद्धतौ 'सशिखं वपनं कृत्वा व्रतं कुर्यात्' इति स्मृतेस्तत्रेत्थम् "रिक्तो वा एषो न पिहितो यन्मुंडस्तस्यैतदपिधानं यच्छिखा" इति । तासां मध्यशिखावर्जमुपनयने वपनं कार्यम् । "प्रतिदिशश्च वपति" इति श्रुतेः । श्रीवामनस्यापि "तस्योपनीयमानस्य सावित्रीं सवितात्रवीत्" इत्युक्तेरुपनीतत्वाज्जटिलमित्युक्तिः कथं संगच्छेत । "जटिला पिप्पलीमांस्योर्जटायुक्ते तु वाच्यवत्" इति मेदिन्युक्तेः । अत्रेदमवधेयम् । जटिभिर्जटायुक्तैस्तपस्विभिर्लीयते गृह्यत इति जटिलस्तम् "ब्रह्मर्षीणां तपः साक्षान्मन्ये त्वार्य वपुर्द्धरम्" इत्युक्तेः तपोमूर्त्तिमित्यर्थः । यद्वा–बहुकर्तृकोपनयने मुंडनाभाव एवास्ति जटिलमित्युक्त्यैव ज्ञाप्यत इति किञ्चिन्मायया स्वरूपशक्त्यैव बालम् "स्वरूपभूतया नित्यशक्त्या मायाख्यया युतम्" इति श्रुतेः ॥ २४ ॥ प्रत्यगृह्णन्पाद्यार्घ्यादिदानेन संमानयामासुः । "प्रतिग्रहस्स्वीकरणे सैन्यपृष्ठे पतद्ग्रहे । द्विजेभ्यो विधिवद्देये" इति मेदिनी ॥ २५ ॥ अनुरूपा योग्याः शरीरानुसारिहस्तपादादयोऽवयवाः । तस्मै वामनाय ॥ २६ ॥ मुक्तसंगानामात्मारामाणां मनो रमयति स्वानुरागि करोतीति तथा तम् ॥ २७ ॥ कलिः कलहो युगश्च । यद्वा–कलिसंबंधिकल्मषापहम् । कुलेति पाठे कुलस्य वंशस्य कल्मषापहम् । एकोऽपि यदि तत्स्पृशेत्तर्हि कुलमेव तदीयं निष्पापं भवेदित्यर्थः । क्वचिज्जनकल्मषेति पाठः । स च सुबोध एव । स बलिः । इत्यर्थ इति । अहो तन्माहात्म्यं सकलदेववंद्यो महादेवोऽपि तद्धारेति भावः । चंद्रमौलिरिति । ललाटधृतचन्द्रोपि चंद्रस्योपरि दधारेति भावः ॥ २८ ॥ आर्य पूज्य ॥ २९ ॥ स्विष्टः सुपूजितः । यद्यतः ॥ ३० ॥ तनुभिः सूक्ष्मैः । पुनीतेति प्रयोगस्त्वार्षः ॥ ३१ ॥

यद्यद्वटो वांछसि तत्प्रतीच्छ मे त्वामर्थिनं विप्रसुतानुतर्कये ॥ गां कांचनं गुणवद्धाम मृष्टं तथान्नपेयमुत वा विप्र कन्याम् ॥ ग्रामान्समृद्धांस्तुरगा न्गजान्वा रथांस्तथाऽर्हत्तम संप्रतीच्छ ॥ ३२ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे बलिवामनसंवादेऽष्टादशोऽध्यायः ॥ १८ ॥ श्रीशुक उवाच ॥ इति वैरोचनेर्वाक्यं धर्मयुक्तं स सूनृतम् ॥ निशम्य भगवान्प्रीतः प्रतिनंद्येदमब्रवीत् ॥ १ ॥ श्रीभगवानुवाच ॥ वचस्तवैतज्जनदेव सूनृतं कुलोचितं धर्मयुतं यशस्करम् ॥ यस्य प्रमाणं भृगवः सांपराये पितामहः कुलवृद्धः प्रशांतः ॥ २ ॥ नह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमान् ॥ प्रत्याख्याता प्रतिश्रुत्य यो वाऽदाता द्विजातये ॥३॥ न संति तीर्थे युधि चार्थिनाऽर्थिताः पराङ्मुखा ये त्वमनस्विनो नृपाः ॥ युष्मत्कुले यद्यशसाऽमलेन प्रह्लाद उद्भाति यथोडुपः खे ॥ ४ ॥ यतो जातो हिरण्याक्षश्चरन्नेक इमां महीम् ॥ प्रतिवीरं दिग्विजये नाविंदत गदायुधः ॥ ५ ॥ यं विनिर्जित्य कृच्छ्रेण विष्णुः क्ष्मोद्धार आगतम् ॥ नात्मानं जयिनं मेने तद्वीर्यं भूर्यनुस्मरन् ॥ ६ ॥ निशम्य तद्वधं भ्राता हिरण्यकशिपुः पुरा ॥ हंतुं भ्रातृहणं क्रुद्धो जगाम निलयं हरेः ॥ ७ ॥ तमायांतं समालोक्य शूलपाणिं कृतांतवत् ॥ चिंतयामास कालज्ञो विष्णुर्मायाविनां वरः ॥ ८ ॥

मे मत्तः प्रतीच्छ गृहाण । हे अर्हत्तम पूज्यतम ॥३२॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कंधे टीकायामष्टादशोऽध्यायः ॥१८॥ ऊनविंशे तु हरिणा याचिते च पदत्रये ॥ प्रतिश्रुते च बलिना जानन्भृगुरवारयत् ॥ १ ॥ १ ॥ "दातुः स्तुतिः स्वयंतुष्टिरित्यादिप्रस्तुतोचितम् ॥ वक्तव्यमिति भिक्षुंस्तु शिक्षयन्नाह वामनः ॥१॥" वचस्तवैतदिति षोडशभिः । हे जनदेव सांपराये पारलौकिके धर्मे पितामहश्च प्रह्लादः प्रमाणम् ॥ २॥ निःसत्त्वस्य लक्षणं यो द्विजातये याचकाय प्रत्याख्याता न ददामीति वक्ता । कृपणस्य लक्षणं प्रथमं प्रतिश्रुत्य यो वा न दातेति ॥ ३ ॥ तीर्थे दानावसरे । यद्यस्मिन्युष्मत्कुले ॥ ४ ॥ यतो यस्मिन् जातः ॥५॥ क्ष्मोद्धारे भूम्या उद्धरणे ॥ ६ ॥ ७ ॥ ८॥

गुणवत् शीतोष्णवृष्टिकालेषु सुखदं तेन शीतकाले उष्णमुष्णकाले शीतं वर्षासु वाय्वागमनयुतं जलस्रावहीनमित्युक्तम् । 'गुणवाय्यवस्त्रम्' इति पाठे तु गुणवन्नानावर्णतंतुनिर्मितम् । मृष्टं शुद्धम् समृद्धान्बहुसस्योत्पत्तिमत्क्षेत्रवतः वाशब्दाद्यदन्यदभीप्सितं तदपि गृहाणेति भावः ॥ ३२ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ प्रतिश्रुते प्रतिज्ञाते ( १ ) । स्वयंतुष्टिः स्वस्य संतोषः ( २ ) । स वामनः । सूनृतं प्रियसत्ययुतम् । " सूनृतं मंगलेऽपि स्यात्प्रियसत्ये वचस्यपि " इति मेदिनी ॥ १ ॥ यस्य तत्र ॥ २ ॥ स्तुत एव सर्वोऽभीष्टदो भवतीति सूचयन्नाह—न ही ति ॥३ ॥ अर्थिना विप्रेण दानावसरे युधि त्वर्थिना क्षत्रियेण चार्थिताः प्रार्थिता अमनस्विनोऽनुदारचित्ताः पराङ्मुखाश्च न संतीति क्रमेण योज्यम् । 'ये तु मनस्विनः' इति पाठः शोभनः प्रतिभाति । तत्र च ये नृपा मनस्विनः स्थिरचित्तास्ते तीर्थे युधि चार्थिताः पराङ्मुखा न संतीति योजना । नैतादृशास्तव कुले संतीति भावः उडुपश्चंद्रः॥४॥५॥कुर्वंतीति कृतः कृतिनस्तानयत्याश्रयतीति कृच्छ्रो यत्नस्तेनेति वास्तवोर्थः । जयिनं न मेने । तज्जन्मद्वयजयस्यावशिष्टत्वात् । तीर्थस्तु—क्ष्माया भूमेरुद्धारो येन स तथा । विष्णुर्ना परपुरुषः । यं विनिर्जित्य तत्स्वीयं वीर्यं भूयनंतं स्मरन् आत्मानं जयशीलोपेतम् कृच्छ्रेणागतं प्राप्तम्। यद्वा—तद्वीर्यं स्मरन्नेवात्मात्मानं जयिनं न मेने किन्तु ततः प्रागपि नित्यजयित्वात्स्वस्य ' विष्णुर्जयति नासुरः ' इति गारुडाच्च ॥ ६ ॥ तद्वधं हिरण्याक्षवधम् । निलयं श्वेतद्वीपादिरूपम् ॥ ७ ॥ तं हिरण्यकशिपुम् । मायाविनां कृपालूनां ज्ञानिनां वा

यतोयतोऽहं तत्रासौ मृत्युः प्राणभृतामिव ॥ अतोऽहमस्य हृदयं प्रवेक्ष्यामि पराग्दृशः ॥ ९ ॥ एवं स निश्चित्य रिपोः शरीरमाधावतो निर्विविशेऽसुरेंद्र ॥ श्वासानिलांतर्हितसूक्ष्मदेहस्तत्प्राणरंध्रेण विविग्नचेताः ॥ १० ॥ स तन्निकेतं परिमृश्य शून्यमपश्यमानः कुपितो ननाद ॥ क्ष्मां द्यां दिशः खं विवरान्समुद्रान्विष्णुं विचिन्वन्न ददर्श वीरः ॥ ११ ॥ अपश्यन्निति होवाच मयाऽन्विष्टमिदं जगत् ॥ भ्रातृहा मे गतो नूनं यतो नावर्तते पुमान् ॥ १२ ॥ वैरानुबंध एतावानामृत्योरिह देहिनाम् ॥ अज्ञानप्रभवो मन्युरहंमानोपबृंहितः ॥ १३ ॥ पिता प्रह्लादपुत्रस्ते तद्विद्वान्द्विजवत्सलः ॥ स्वमायुर्द्विजलिंगेभ्यो देवेभ्योऽदात्स याचितः ॥ १४ ॥ भवानाचरितान्धर्मानास्थितो गृहमेधिभिः ॥ ब्राह्मणैः पूर्वजैः शूरैरन्यैश्चोद्दामकीर्तिभिः ॥ १५ ॥ तस्मात्त्वत्तो महीमीषद्वृणेऽहं वरदर्षभात् ॥ पदानि त्रीणि दैत्येंद्र संमितानि पदा मम ॥ १६ ॥

पराग्दृशो बहिर्दृष्टेः ॥ ९ ॥ अतो हृदये स्थितं मां न ज्ञास्यतीत्येवं निश्चित्य श्वासानिलेंतर्हितः सूक्ष्मो देहो यस्य । विविग्नमतिकंपितं चेतो यस्य । अकंपितचित्त इति वास्तवोऽर्थः ॥ १० ॥ न ददर्श अंतःप्रविष्टत्वात् ॥ ११ ॥ पुमान्यतः सकाशान्नावर्तते तद्ब्रह्मैव नूनं गतो नित्यमुक्तत्वादिति वास्तवोऽर्थः ॥ १२ ॥ एवं मृत्युपर्यंतमखंडं विष्णोर्वैरं यत्कृतवांस्तदुचितमेव तस्याप्रतिद्वंद्वमहाबलपराक्रमस्य शूराहंमानविजृंभितक्रोधानुबंधस्य कथं नामासौ शूरशिरोमणिर्जीवन्नेव कातरवद्वैरमुपेक्षितवानित्याशंक्याह । वैरानुबंध एतावानामृत्योर्भवति । देहिनां देहे निगूढाभिमानवतां शूराणां तथाऽहंमानेनोपबृंहितो मन्युश्च भवत्येव । यतोऽज्ञानप्रभवः अज्ञाननिवृत्तेः प्राक् पौरुषत्यागो मौग्ध्यमेवेत्यर्थः ॥ १३ ॥ तदेवं पूर्वजान्स्तुत्वा तत्पितरं स्तौति । पितेति । द्विजवेषधारिणो मद्वैरिणो देवा एते न तु द्विजा इति तद्विद्वानपि स याचितः सन्स्वीयमायुर्देवेभ्योऽपि वैरिभ्यो ददौ ॥ १४ ॥ १५ ॥ मम पदा संमितानीति त्रिविक्रमपदाभिप्रायेण । न चानृतवादः । तत्रापि स्वपदत्वानपगमात् ॥ १६ ॥

'माया स्याज्ज्ञानकृपयोः' इति विश्वादिः ॥ ८ ॥ यतो हेतोः । यतो यत्र अहं गमिष्यामि तत्रासौ हिरण्यकशिपुः जीवेश्वरयोरेकत्र समावेशस्य नित्यत्वात् "समानं वृक्षं परिषस्वजाते" इति श्रुतेः । अतो हेतोः । परं दूरमंचतीति पराक् तत्स्थं पश्यतीति तथा दूरदर्शिनो वा तथा च दूरदर्शित्वाद्धृदयस्थमतिनिकटं मामयं न चक्षुरंजनमिव द्रक्ष्यतीति भावः ॥ ९ ॥ हे असुरेंद्र बले विशब्दस्य गतार्थत्वस्वीकारेण विगतं विग्नं भयं यस्मात् तद्विविग्नं तादृशं चेतो यस्य स तथा । इदानीं नायं मारणीय एतद्भोगस्यावशिष्टत्वादित्यनुकंपितोऽभूदिति भावः ॥ १० ॥ निकेतं परिमृश्य दृष्ट्वा सोऽसुरः तमपश्यमानः शून्यं यथा स्यात्तथा ननादेति संबंधः । कुतो न ददर्श यतो वीरः विगतमीरं ज्ञानं यस्य स तथा । एतेन पराग्दृक्त्वं समर्थितम् ॥ ११ ॥ १२ ॥ तत् वैरकरणम् । तस्यासुरस्य । अत्राक्षिपति—कथं नामेति । असौ हिरण्यकशिपुः । इत्यर्थ इति । ज्ञानिनस्तु कृतकृत्यत्वात्किंचित्कर्त्तव्यं नास्ति लोकसंग्रहमंतरेणेति भावः ॥ १३ ॥ प्रह्लादस्य पुत्रो विरोचनः । पुराणांतरे चेयं कथा युद्धपरित्रस्तैर्देवैर्वैरोचनं ब्रह्मण्यं ज्ञात्वा विप्रवेषेण तत्पार्श्वमागत्य तदायुर्याचितं तेन च तत्कपटं ज्ञात्वाऽपि तद्दत्तमिति ॥ १४ ॥ ब्राह्मणैर्दध्यङ्ङादिभिः । पूर्वजैः पित्रादिभिः । अन्यैः शूरैर्दानशूरैर्हरिश्चंद्रादिभिः । उद्दामकीर्त्तिभिर्विजृंभितयशोभिः । आचरितान् अनुष्ठितान् ॥ १५ ॥ यस्मात्त्वं पुण्यवतां कुले जातोऽसि

नान्यत्ते कामये राजन्वदान्याज्जगदीश्वरात् ॥ नैनः प्राप्नोति वै विद्वान्यावदर्थपरिग्रहः ॥ १७ ॥ बलिरुवाच ॥ अहो ब्राह्मणदायाद वाचस्ते वृद्धसंमताः ॥ त्वं बालो बालिशमतिः स्वार्थं प्रत्यबुधो यथा ॥ १८ ॥ मां वचोभिः समाराध्य लोकानामेकमीश्वरम् ॥ पदत्रयं वृणीते यो–बुद्धिमान्द्वीपदाशुषम् ॥ १९ ॥ न पुमान्मामुपव्रज्य भूयो याचितुमर्हति ॥ तस्माद्वृत्तिकरीं भूमिं बटो कामं प्रतीच्छ मे ॥ २० ॥

यावदर्थमेव प्रतिग्रहो यस्य सः ॥१७॥ ईश्वरस्यापि याच्ञाप्रकारं चोक्त्वा बलेर्बंधनप्रश्नोत्तरत्वेन तस्य गर्वातिरेकेणाधिक्षेपप्रकारमाह अहो इति त्रिभिः । ते तव वाचो वृद्धानां संमतास्त्वं तु बालो बालिशमतिश्च । बालिशानामज्ञानामिव मतिर्यस्य । अत एव स्वार्थं प्रति यथावदबुधः । वस्तुतस्तु बाल इवाबालिशमतिश्चेति छेदः । स्वार्थं प्रत्यबुध इति च भक्तानामेवार्थं बुध्यसे न स्वार्थम् । परिपूर्णस्य तव तद्व्यतिरेकेण स्वार्थाभावादित्यर्थः ॥ १८ ॥ अबुधत्वमेवाह । मामिति । द्वीपस्य दाशुषं दातारम् । अबुद्धिमान्वस्तुतस्तु बुद्धिमानित्येव छेदः ॥ १९ ॥ कामं यथेच्छं सम्यक्पादप्रसारणेनेत्यर्थः । अत एव तथा करिष्यति ॥ २० ॥

तस्माद्धेतोः । पदानीति बहुवचनोक्त्या भीतो मा भूरित्याह–त्रीणीति । तेषां महत्त्वेन भयशंका बदवर्थैवेति चेत्तत्राह–संमितानीति । मन्वल्पवपुर्दर्शयित्वा पुनर्भूमाने दीर्घकरणेनानृतवादित्वं स्यादत आह–न चेति । तत्रापि दीर्घवपुष्यपि ॥ १६ ॥ इतोऽप्यधिकं गृहाण दास्यामीति चेदाह–वदान्याद्दानशौंडात् "वदान्यो दानशौंडे स्याच्चारुवादिनि वाच्यवत्" इति मेदिनी । 'दशसूनासमो नृपः' इत्युक्ते राजप्रतिग्रहात्तव दोषः किं न स्यात्तत्राह–यावदर्थमिति । यावताऽर्थः प्रयोजनं सिध्यति तावतः प्रतिग्रहो यस्य स तथा । एनो दूषणम् "न वा अजीवी स्यामिमां च खादन्" इति श्रुतेः । इमां जाघनीम् । अजीवी जीवरहितो नाहं स्यामिति विश्वामित्रः । विद्वान् प्रतिग्रहदोषापाकरणज्ञानवान् । यद्वा–यावंतस्तवार्थास्तेषां परिग्रहो यस्य स तल्लक्षणो विद्वानेनः कष्टं नाप्नोतीति वास्तवोर्थः ॥ १७ ॥ ब्राह्मणस्य दायादः पुत्रः 'दायादौ पुत्रबांधवौ' इति विश्वः । एतेनादीर्घदर्शित्वमुक्तम् । "अदीर्घदर्शिनो विप्राः परशुरामस्य शापतः" इत्युक्तेः । यद्वा–ब्राह्मणाय दीयत इति ब्राह्मणदायस्तमत्तीति ब्राह्मणदायादस्तत्सम्बुद्धौ तथा "ब्राह्मणोऽस्य मुखमासीत्" इति श्रुतेर्मुखदत्तमेव भुज्यते न तु बाह्वादिदत्तमपि । उक्तमपि "यद्ब्राह्मणस्य मुखतश्चरतोऽनुघासम्' इत्यादिना तृतीयादौ । तथा ब्राह्मणो भूत्वैव मम यज्ञ आगतोस्यतोऽहमपि दास्याम्येवेति भावः। अवृद्धानां वासुदेववर्द्धितानां भक्तानां संमताः । यद्वाऽवृद्धानामज्ञानां संमताः । कुतस्तत्राह–त्वं बाल इति । ननु बुद्धिवैशद्ये बालत्वमप्रयोजकमिति चेदाह–बालिशो जडमतिः स्वप्रयोजनज्ञानहीनः । कथमेतदवगतं तत्राह–मां वचोभिरित्यादि । अबुद्धिमानिति स्वामिचरणव्याख्यातमाह । बंधनप्रश्नः लब्धार्थोऽपि बबंध तमिति प्रश्नः । तस्योत्तरत्वे गर्वाधिक्येनाधिक्षेपो निंदामिश्रितवचः । अत एव बालिशमतित्वादेव । इत्यर्थ इति । भक्तार्थ एव तवार्थः "आप्तकामः" इति श्रुतेरिति भावः ॥ १८ ॥ १९ ॥ स्वाधिक्यमाह–नेति । उपव्रज्य याचित्वा । यतोऽहं बहुदाता तस्माद्धेतोः । इत्यर्थ इति । भगवति यथेच्छत्वानुज्ञापनेन दीर्घपादभूप्रमापणेऽपि न दोष इति भावः । अत एव यथेष्ट

श्रीभगवानुवाच ॥ यावंतो विषयाः प्रेष्ठास्त्रिलोक्यामजितेंद्रियम् ॥ न शक्नुवंति ते सर्वे प्रतिपूरयितुं नृप ॥ २१ ॥ त्रिभिः क्रमैरसंतुष्टो द्वीपेनापि न पूर्यते ॥ नववर्षसमेतेन सप्तद्वीपवरेच्छया ॥ २२ ॥ सप्तद्वीपाधिपतयो नृपा वैन्यगयादयः ॥ अर्थैः कामैर्गता नांतं तृष्णाया इति नः श्रुतम् ॥ ॥ २३ ॥ यदृच्छयोपपन्नेन संतुष्टो वर्तते सुखम् ॥ नासंतुष्टस्त्रिभिर्लोकैरजितात्मोपसादितैः ॥ २४ ॥ पुंसोऽयं संसृतेर्हेतुरसंतोषोऽर्थकामयोः ॥ यदृच्छयोपपन्नेन संतोषो मुक्तये स्मृतः ॥ २५ ॥ यदृच्छालाभतुष्टस्य तेजो विप्रस्य वर्धते ॥ तत्प्रशाम्यत्यसंतोषादंभसेवाशुशुक्षणिः ॥ २६ ॥ तस्मात्त्रीणि पदान्येव वृणे त्वद्वरदर्षभात् ॥ एतावतैव सिद्धोऽहं वित्तं यावत्प्रयोजनम् ॥ २७ ॥ श्रीशुक उवाच ॥ इत्युक्तः स हसन्नाह वांछातः प्रतिगृह्यताम् ॥ वामनाय महीं दातुं जग्राह जलभाजनम् ॥ २८ ॥ विष्णवे क्ष्मां प्रदास्यंतमुशना असुरेश्वरम् ॥ जानंश्चिकीर्षितं विष्णोः शिष्यं प्राह विदां वरः ॥ २९ ॥ शुक्राचार्य उवाच ॥ एष वैरोचने साक्षाद्भगवान्विष्णुरव्ययः ॥ कश्यपाददितेर्जातो देवानां कार्यसाधकः ॥ ३० ॥ प्रतिश्रुतं त्वयैतस्मै यदनर्थमजानता ॥ न साधु मन्ये दैत्यानां महानुपगतोऽनयः ॥ ३१ ॥ एष ते स्थानमैश्वर्यं श्रियं तेजो यशः श्रुतम् ॥ दास्यत्याच्छिद्य शक्राय मायामाणवको हरिः ॥ ३२ ॥ त्रिभिः क्रमैरिमाँल्लोकान्विश्वकायः क्रमिष्यति ॥ सर्वस्वं विष्णवे दत्त्वा मूढ वर्तिष्यसे कथम् ॥ ३३ ॥ क्रमतो गां पदैकेन द्वितीयेन दिवं विभोः ॥ खं च कायेन महता तार्तीयस्य कुतो गतिः ॥ ३४ ॥

पुनरपि निःस्पृहत्वमेवाविष्कुर्वन्नाह यावंत इति सप्तभिः ॥ २१ ॥ नववर्षसमेतेन द्वीपेनापि । सप्तानां द्वीपवराणामिच्छया ॥ २२ ॥ तृष्णाया अंतं न गता इत्यस्माभिः श्रुतम् ॥२३॥ असंतुष्टस्तु प्राप्तैस्त्रिभिर्लोकैरपि न सुखं वर्तते ॥ ५४ ॥ २५ ॥ आशुशुक्षणिरग्निः ॥२६॥ सिद्धोऽहं कृतार्थः एतावतैव । सर्वस्वापहारसिद्धेरिति गूढोऽभिप्रायः । तदेवाह । वित्तं हि यावत्प्रयोजनमेव सुखम् । अधिकस्य क्लेशावहत्वादित्यर्थः ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ अनयोऽन्यायः ॥ ३१ ॥ अन्यायमेवाह । एष इति ॥ ३२ ॥ ननु मया पदत्रयमेव प्रतिश्रुतं नाधिकं तत्राह । त्रिभिरिति । क्रमतामिति चेत्तत्राह । सर्वस्वमिति ॥ ३३ ॥ तथाऽपि प्रतिश्रुतं संपादनीयमेवेति

मनुज्ञानादेव । तथा यथेच्छम् ॥ २० ॥ भगवान्स्वस्यालालसत्वं द्योतयन्नाह—यावंत इति । प्रतिपूरयितुमलंबुद्धिं कार[illegible]तुम् । नृपेत्यधिकाभिलाषुकत्वमाह ॥ २१ ॥ द्वीपेन जंबूद्वीपेन । नवभिर्वर्षैः समेतेन सप्तद्वीपवरेच्छया हेतुना ॥ २२ ॥ सप्तद्वीपानेव गृहाणेति चेदाह—सप्तद्वीपेति । आदिना प्रियव्रतादिग्रहः ॥ २३ ॥ यदृच्छया स्वत एव । उपसादितैः प्राप्तैः ॥ २४ ॥ अयमिति । साक्षाद्दृश्यमानः ॥ २५ ॥ तेजो बलादिकं ब्राह्मं वा । तत्तेजः । "अशुशुक्षणिरर्केऽग्नौ यजनेप्यासुतीवले" इति हलायुधः ॥ २६ ॥ यतोऽहं संतुष्टस्तस्माद्धेतोः । इत्यर्थ इति । "आये दुःखं व्यये दुःखं धिगर्थान् क्लेशकारिणः" इत्युक्तेरिति भावः ॥ २७ ॥ अहो अधिकगृहीताप्ययं किमर्थं तन्मद्दत्तं न गृह्णातीति विस्मयेन हसन्नाह—वांछातः वांछितम् ॥ २८ ॥ विदुषा गुरुणा शिष्याय हितं वाच्यमिति शिक्षयन्नाह—उशना शुक्रः । क्ष्मां भूमिम् ॥ २९ ॥ एष वामनबटुः ॥३०॥ अनर्थं वंचनारूपम् । यत्प्रतिश्रुतं तदहं न साधु मन्य इत्यन्वयः । अन्यायो दुःखहेतुः ॥३१॥३२॥ अत्राक्षिपति—नन्विति । तत्राक्षेपे । स्ववासयोग्यभूमेरप्यरक्षणान्मूढोसीत्यभिप्रायः॥३३॥यद्यप्यहं मूढस्तथापीति ।

निष्ठां ते नरके मन्ये ह्यप्रदातुः प्रतिश्रुतम् ॥ प्रतिश्रुतस्य योऽनीशः प्रतिपादयितुं भवान् ॥ ३५ ॥ न तद्दानं प्रशंसंति येन वृत्तिर्विपद्यते ॥ दानं यज्ञस्तपः कर्म लोके वृत्तिमतो यतः ॥ ३६ ॥ धर्माय यशसेऽर्थाय कामाय स्वजनाय च ॥ पंचधा विभजन् वित्तमिहामुत्र च मोदते ॥ ३७ ॥ अत्रापि बह्वृचैर्गीतं शृणु मेऽसुरसत्तम ॥ सत्यमोमिति यत्प्रोक्तं यन्नेत्याहानृतं हि तत् ॥ ३८ ॥ सत्यं पुष्पफलं विद्यादात्मवृक्षस्य गीयते ॥ वृक्षे जीवति तन्न स्यादनृतं मूलमात्मनः ॥ ३९ ॥

चेत्तत्राह क्रमत इति द्वाभ्याम् । एकेन पदा पादन्यासेन भूमिं क्रममाणस्येत्यर्थः । तार्तीयस्य तृतीयपादन्यासस्य ॥ ३४ ॥ ३५ ॥ तथाऽपि सर्वस्वदानात्कीर्तिस्ता वद्भविष्यतीति चेत्तत्राह । न तद्दानमिति । तपश्चित्तैकाग्र्यम् । कर्म पूर्तम् ॥ ३६ ॥ ३७ ॥ ननु तर्हि प्रतिश्रुत्य नेति कथमनृतं वाच्यं तत्राह अत्रापीति सार्धैः षड्भिः । अत्रापि सत्यानृतव्यवस्थायाम् । बह्वृचैर्ऋग्वेदिभिः । बह्वृचश्रुत्या हि "प्रथममोमिति सत्यं नेत्यनृतम्" इत्यादिना सत्यानृतयोर्लक्षणपूर्वकं स्तुतिनिंदाभ्यां सत्यं विहितमनृतं च निषिद्धम् । अनंतरं च " पराग्वा एतद्रिक्तमक्षरम् " इत्यादिना सत्ये दोषाननृते च गुणानुक्त्वा " तस्मात्काल एव दद्यात्कालेन दद्यात्तत्सत्यानृते मिथुनीकरोति " इत्युपसंहारेण वृत्तिसंकटादिष्वनृतमप्यनुज्ञातम् । तमिमं श्रुत्यर्थं दर्शयन्नाह । ओमित्यंगीकारेण यत्प्रोक्तं तत्सत्यम् । नेति यदाह तदेवानृतम् ॥ ३८ ॥ तत्तु सत्यमीष दनृतं विना न सिध्यतीत्याशयेनाह । सत्यं पुष्पफलं विद्याज्जानीयात् । आत्मवृक्षस्य देहरूपस्य वृक्षस्य । कुतः । गीयते श्रुत्योच्यते इत्यर्थः । आत्मवृक्षस्य जीवत इति पाठांतरं तु सुगमम् । यद्यपि श्रुत्या वाचः सत्यं पुष्पं फलं चेत्युक्तं तथापि वाचो देहनिर्वाहाधीनत्वादात्मवृक्षस्येति प्रस्तुतानुसारेणोक्तम् । भवतु पुष्पफलस्थानीयं सत्यम् । ततः किमत आह । वृक्षे देहेऽजीवति तत्पुष्पफलं न स्यात् । सा नस्यादिति पाठे श्रुत्युक्ताया वाचः परामर्शः । अतो देहश्चानृतेन रक्षणीय इत्याह । अनृतं त्वात्मनो

इत्यर्थ इति । सर्वा भूमिरेकपादाधो यास्यतीति भावः । ऊर्द्ध्वं स्थितस्य भूप्रमापणे खस्यार्थलब्धत्वात्कायेन तदादानेऽपि न त्रिपदप्रतिज्ञा हीयत इति ॥ ३४ ॥ निष्ठां नितरां स्थितिम् । प्रतिश्रुतमदातुस्ते नरके निरये "विप्रसंकल्पितद्रव्यापूरणे निरयो नृणाम्" इत्युक्तेः । यद्वा-हे नर बले प्रतिश्रुतं भूपादत्रयम् आय वासुदेवाय प्रदातुस्ते के स्वर्गे निष्ठां मन्ये भावींद्रत्वात् । यो भवान् प्रतिश्रुतस्य प्रतिपादयितुं न ईशो यस्मात्सोऽनीशः समर्थः 'भक्तानां किन्न सिद्ध्यति' इत्युक्तेः । यद्यपि 'सुतलं स्वर्गिभिः प्रार्थ्यम्' इत्युक्तेस्सुतललोकस्य स्वर्गाधिक्यं प्रतीयते तथापि तस्य मायामयभोगस्थानत्वाद्भगवत्प्रतिपादितदानफलत्वं नास्ति तद्वर्णितं तथैव पंचमस्कंधे । तत्फलं तु भगवत्सन्निधिरेव । तथा च के सुखरूपे ब्रह्मणि निष्ठां मन्य इति वास्तवोर्थः । सुतलेऽधोमगनसाम्यान्नरकशब्दप्रयोगः ॥ ३५ ॥ यद्यप्यहं पूरयितुमसमर्थस्तथापीति । विपद्यते नश्यति । यतो हेतोः ॥ ३६ ॥ पंचधा धनविनियोगीहामुत्र सुखभाग्भवतीत्याह–धर्मायेति । अर्थाय कोशवृद्धये ॥ ३७ ॥ अत्राशंकते–नन्विति । अनंतरं सत्यानृतविधिनिषेधानंतरम् ॥ ३८ ॥ इत्यर्थ इति । कुत इत्यस्याग्रे

तद्यथा वृक्ष उन्मूलः शुष्यत्युद्वर्तंतेऽचिरात् ॥ एवं नष्टानृतः सद्य आत्मा शुष्येन्न संशयः ॥ ४० ॥ पराग्रिक्तमपूर्णं वा अक्षरं यत्तदोमिति ॥ यत्किंचिदोमिति ब्रूयात्तेन रिच्येत वै पुमान् ॥ ४१ ॥ भिक्षवे सर्वमों कुर्वन्नालं कामेन चात्मने ॥ अथैतत्पूर्णमभ्यात्मं यच्च नेत्यनृतं वचः ॥ सर्वं नेत्यनृतं ब्रूयात्स दुष्कीर्तिः श्वसन्मृतः ॥ ४२ ॥

देहस्य मूलम् ॥ ३९ ॥ एतदेव दृष्टांतेन स्पष्टयति । तद्यथा वृक्ष उत्पाटितमूलः शुष्यत्यचिरादेवोद्वर्तते पतति च एवं नष्टमनृतं यस्य स आत्मा देहः शुष्येत् । यद्यपि च श्रुत्या एवमेवानृतं वदन्नात्मानमाविर्मूलं करोतीत्येवं निंदयाऽनृतं निषिद्धं तथाऽप्युपसंहारानुसारेण तत्केवलानृतविषयमित्यभिप्रेत्यैवं व्याख्यातम् । 'दयेत त्वेतेन' इति च तयैवोक्तेः । तथा च श्रुतिः । "ओमिति सत्यं नेत्यनृतं तदेतत्पुष्पं फलं वाचो यत्सत्यं स हेश्वरो यशस्वी कल्याणकीर्तिर्भविता पुष्पं हि फलं वाचः सत्यं वदत्यथैतन्मूलं वाचो यदनृतं तद्यथा वृक्ष आविर्मूलः शुष्यति स उद्वर्तत एवमेवानृतं वदन्नाविर्मूलमात्मानं करोति स शुष्यति स उद्वर्तते तस्मादनृतं न वदेद्दयेत त्वेतेन" इति । एतेनानेन त्वनृतेन दयेत संकटेष्वात्मानं रक्षेदिति श्रुत्यर्थः ॥ ४० ॥ सर्वथा सत्यवचनेन देहो न निर्वहेदिति स्फुटीकर्तुं सत्यस्य दोषाननृतस्य च गुणानाह परागिति द्वाभ्याम् । यदोमित्यक्षरं तत्पराक् परांचति दूरेऽर्थं गृहीत्वा व्रजतीति पराग्रिक्तमिति श्रुतिपदस्य व्याख्यानमपूर्णं वै इति । तत्तस्मादर्थिने यत्किंचिदोमिति ब्रूयात्तेन रिच्येत न्यूनो भवेत् । किञ्च भिक्षवे सर्वमों कुर्वन्दास्यामीत्यंगीकुर्वन्नात्मने कामेन नालं पर्याप्तो न भवति । तस्य भोगो न सिध्यतीत्यर्थः । तथाच श्रुतिः । "पराग्वा एतद्रिक्तमक्षरं यदेतदोमिति तद्यत्किंचोमित्याहात्रैवास्मै तद्रिच्यते स यत्सर्वमों कुर्याद्रिच्यादात्मानं स कामेभ्यो नालं स्यात्" इति ॥ ४१ ॥ नेति यदनृतं वच एतत्पूर्णमर्थव्ययाभावात् । अभ्यात्मं चेति चकारान्वयः । आत्मनोऽभिमुखमन्यस्यार्थमाकर्षतीत्यभ्यात्मम् । यो हि नित्यं मम किंचिदपि नास्ति सीदामीति ब्रूते स हि तेनानृतेन परेषामर्थानाकर्षतीति प्रसिद्धम् । ननु तर्हीदमनृतमेव सर्वदा सेव्यं स्यान्नेत्याह । सर्वमिति । तथा च श्रुतिः " अथैतत्पूर्णमभ्यात्मं यन्नेति स यत्सर्वं नेति ब्रूयात्पापिकाऽस्य कीर्तिर्जायेत

यत इति शेषः । कुतो जानीयात् यतः श्रुत्योच्यत इति भावः । पाठांतरे जीवतः सप्राणस्य देहनिर्वाहाधीनत्वाद्देहान्वयव्यतिरेकित्वात् । ततः पुष्पफलस्थानीयत्वात् ॥ ३९ ॥ एतदेव अनृतस्य देहमूलत्वमेव । तदिति वाक्यालंकारे । आविर्मूलं प्रकटितजटम् । वृक्षो हि यावद्भूमिष्ठमूलत्वेनानाविर्मूलो भवति तावद्वर्द्धतेऽन्यथा खननादिनाविर्मूलः पतत्येवेति तन्निषेधनम् । तयैव श्रुत्यैव । तामेव श्रुतिं दर्शयति—तथा चेति । स सत्यवक्ता । ह स्फुटम् ॥ ४० ॥ रिक्तं पृथक्कृतमार्थिने दत्तमित्यर्थपरं श्रुतिस्थस्यास्मै तद्रिच्यत इत्यस्य व्याख्यानं च । अन्यदाह—किञ्चेति । आत्मने स्वस्मै । इत्यर्थ इति । सर्वस्वदानाद्भोगाभावः प्रसिद्ध एव भोगस्य धनसाध्यत्वादिति भावः । अत्र प्रमाणमाह—तथा चेति । अत्रैवेहैव । अस्मै पुरुषाय तद्रिच्यते तन्न प्राप्नोतीत्यर्थः ॥ ४१ ॥ अथ चार्थे । अत्राक्षिपति—नन्विति । सर्वदानृतस्य दोषमाह श्रुतिः—तथा चेति स्पष्टार्थः ॥ ४२ ॥

स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्राणसंकटे ॥ गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितम् ॥ ४३ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे वामनप्रादुर्भावे एकोनविंशोऽध्यायः ॥ १९ ॥ श्रीशुक उवाच ॥ बलिरेवं गृहपतिः कुलाचार्येण भाषितः ॥ तूष्णीं भूत्वा क्षणं राजन्नुवाचावहितो गुरुम् ॥ १ ॥ बलिरुवाच ॥ सत्यं भगवता प्रोक्तं धर्मोऽयं गृहमेधिनाम् ॥ अर्थं कामं यशो वृत्तिं यो न बाधेत कर्हिचित् ॥ २ ॥ स चाहं वित्तलोभेन प्रत्याचक्षे कथं द्विजम् ॥ प्रतिश्रुत्य ददामीति प्राह्लादिः कितवो यथा ॥ ३ ॥ न ह्यसत्यात्परोऽधर्म इति होवाच भूरियम् ॥ सर्वं सोढुमलं मन्ये ऋतेऽलीकपरं नरम् ॥ ४ ॥ नाहं बिभेमि निरयान्नाधन्यादसुखार्णवात् ॥ न स्थानच्यवनान्मृत्योर्यथा विप्रप्रलंभनात् ॥ ५ ॥ यद्यद्धास्यति लोकेऽस्मिन्संपरेतं धनादिकम् ॥ तस्य त्यागे निमित्तं किं विप्रस्तुष्येन्न तेन चेत् ॥ ६ ॥

सैनं तत्रैव हन्यात् " इति ॥ ४२ ॥ अतो वृत्तिसंकटादिष्वनृतं न दोषायेत्युपसंहरति । स्त्रीषु प्रोत्साहनेन वशीकरणे । नर्मणि परिहासे । विवाहे च वरादिस्तुतौ । गवां ब्राह्मणानां च हितार्थम् । हिंसायां च कस्यचित्प्राप्तायाम् । तथा च याज्ञवल्क्यः । " वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् " इति । तथा च श्रुतिः । " तस्मात्काल एव दद्यात्कालेन दद्यात्तत्सत्यानृते मिथुनीकरोति " इति ॥ ४३ ॥ इति श्रीमद्भागवते अष्टमस्कंधे टीकायां वामनप्रादुर्भावे एकोनविंशोऽध्यायः ॥ १९ ॥ छ ॥ विंशे त्वनृतभीतोऽसौ ज्ञात्वाऽपि कपटं हरेः ॥ ददावेव ततो विष्णुः सहसाऽवर्धताद्भुतम् ॥ १ ॥ १ ॥ भगवता त्वया प्रोक्तं सत्यम् । किं तत् । योऽर्थकामादिकं न बाधेत सोऽयं हि गृहमेधिनां धर्म इति ॥ २ ॥ कथं प्रत्याचक्षे निराकरोमि ॥ ३ ॥ ४ ॥ नन्वप्रत्याख्याने दोषा उक्तास्तत्राह । नाहमिति । अधन्याद्दारिद्र्यान्मृत्योरपि ॥ ५ ॥ किं च यद्यद्धनादिकं तत्सर्वं संपरेतं मृतं पुरुषं हास्यति त्यक्ष्यत्येव । तत्किमिति जीवतैव स्वयं न देयमिति भावः । तथाऽपि तावद्वृत्तिसंकटपरिहारार्थमर्धं दीयतामिति चेत्तत्राह । तस्येति । विप्रश्चेत्तेनार्थेन दत्तेनापि न तुष्येत्तर्हि तस्यार्धस्य त्यागे दाने किं निमित्तं न किंचित् । याचितादल्पस्य दाने विप्रस्यासंतोषेण दानं व्यर्थमेव स्यादतस्त

यतस्सर्वदा निषिद्धमतो हेतोः । अनृतादोषत्वे स्मृतिमाह—तथा चेति । श्रुतिमप्यत्र प्रमाणयति—यस्मात्सर्वदा दानादाने निषिद्धे तस्माद्धेतोः । काले समृद्ध्यवसरे । द्वितीयकालपदं दारिद्र्यावस्थापरम् । तत्ततोऽवसरभेदेन सत्यानृते योजयतीत्यर्थः ॥ ४३ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥ ततो दानग्रहणानंतरम् । सहसा शीघ्रम् ( १ ) । अहो गुरुणा किमर्थमित्थमुक्तमिति विमर्शाय तूष्णीमासेति ॥ १ ॥ २ ॥ यथा कितव इति । धूर्त्तवत् "यश्चोक्त्वा न प्रकुर्वीत कितवः प्रोच्यते हि सः" इति ॥ ३ ॥ अलीकपरमनृतपरम् ॥ ४ ॥ अत्राशंकते—नन्विति । अप्रत्याख्यानेंगीकारे । दोषा अर्थकामादिबाधादिरूपाः । यत्त्वयोक्तम् 'निष्ठां ते नरके मन्ये' इति ततोऽहं न बिभेमि । असुखार्णवा दुःखसमुद्रात् । स्थानस्य स्वर्गादेश्च्यवनाच्च्युतेः । प्रलंभनं वंचनम् ॥ ५ ॥ इति भाव इति । जीवतः स्वयं प्रदातुर्दत्तं सुखाय भवतीत्याशयः । तदुक्तं भर्तृहरिणा "अवश्यं यातारश्चिरतरमुषित्वापि विषया वियोगे को भेदस्त्यजति न जनो यत्स्वयममून् । व्रजंतः स्वातंत्र्यादतुलपरितापाय मनसः स्वयं त्यक्ता ह्येते शमसुखमनंतं

श्रेयः कुर्वंति भूतानां साधवो दुस्त्यजासुभिः ॥ दध्यङ्ङ्शिबिप्रभृतयः को विकल्पो धरादिषु ॥ ७ ॥ यैरियं बुभुजे ब्रह्मन्दैत्येंद्रैरनिवर्तिभिः ॥ तेषां कालोऽग्रसील्लोकान्न यशोऽधिगतं भुवि ॥ ८ ॥ सुलभा युधि विप्रर्षे ह्यनिवृत्तास्तनुत्यजः ॥ न तथा तीर्थ आयाते श्रद्धया ये धनत्यजः ॥ ९ ॥ मनस्विनः कारुणिकस्य शोभनं यदर्थिकामोपनयेन दुर्गतिः ॥ कुतः पुनर्ब्रह्मविदां भवादृशां ततो बटोरस्य ददामि वांछितम् ॥ १० ॥ यजंति यज्ञक्रतुभिर्यमादृता भवंत आम्नायविधानकोविदाः ॥ स एव विष्णुर्वरदोऽस्तु वा परो दास्याम्यमुष्मै क्षितिमीप्सितां मुने ॥ ११ ॥ यद्यप्यसावधर्मेण मां बध्नीयादनागसम् ॥ तथाप्येनं न हिंसिष्ये भीतं ब्रह्मतनुं रिपुम् ॥ १२ ॥ एष वा उत्तमश्लोको न जिहासति यद्यशः ॥ हत्वा मैनां हरेद्युद्धे शयीत निहतो मया ॥ १३ ॥

याचितं सर्वं देयं न किंचिदिति भावः ॥ ६ ॥ तर्हि न देयमेवेति चेत्तत्राह । श्रेय इति । दुस्त्यजैरसुभिरपि । को विकल्पो विचारः ॥ ७ ॥ यैर्दैत्येन्द्रैर्युद्धेऽनिवर्तिभिरियं भूर्बुभुजे उपभुक्ता तेषामिह लोकान्परलोकांश्च भोगानिति वा कालोऽग्रसीत्संहृतवान्न तु भुवि तैरधिगतं प्राप्तं यशोऽग्रसीत् । अतः कीर्तिरेव साध्या नान्यदिति भावः ॥ ॥ ८ ॥ देहत्यागादपि धनत्यागे कीर्तिर्भवतीत्याह । सुलभा इति । तनुं त्यजंतीति तनुत्यजः । तथा तीर्थे पात्रे अतोऽतिदुष्करो धनत्याग एव मया कार्य इति भावः ॥ ॥ ९ ॥ तर्हि निर्धनत्वेन दैन्यं स्यादिति चेत्तत्राह । मनस्विन इति । यादृशतादृशानामप्यर्थिनां कामोपनयेन कामपूरणेन दुर्गतिर्दैन्यमिति यत्तच्छोभनं भद्रमेव भवादृशानां तु कामोपनयेन दुर्गतिः शोभनमिति किं पुनर्वक्तव्यमित्यर्थः ॥ १० ॥ ननु नायं बटुः किं तु विष्णुस्तव शत्रुरित्युक्तं तर्हि सुतरामेव दास्यामीत्याह । यजंतीति । परः शत्रुर्वाऽस्तु ॥ ११ ॥ १२ ॥ यद्यदि यशो न जिहासति तर्हि युद्धेऽयं मा मां हत्वैनां भूमिं हरेच्छयीत वा । सम्यग्ज्ञातः सन्मम चित्ते शयीतेति वास्तवोऽर्थः ॥ १३ ॥

विदधते ॥ '' इति । यद्यपीत्थं तथापीति । तेनार्द्धेन तस्यार्द्धस्य निमित्तं फलम् '' हेतौ चिह्ने फले चैव निमित्तं निश्चितेऽपि च'' इति धरणिः । यतो याचितादानं व्यर्थम् अतो हेतोः । इति भाव इति । ब्राह्मणतृप्तिरेव दानफलमिति तात्पर्यम् ॥ ६ ॥ प्रभृतिपदादुञ्छवृत्त्यादिग्रहः । आदिना वसुरत्नादिग्रहः ॥ ७ ॥ दैत्येंद्रैर्हिरण्यकशिपुप्रभृतिभिः । इति भाव इति । 'यावत्कीर्तिर्मनुष्यस्य पुण्या लोकेषु गीयते । तावत्प्रमोदते स्वर्गे '' इति स्मृतेः । परलोकसुखहेतुत्वादपि कीर्तिरेव संपाद्येत्याशयः ॥ ८ ॥ ''तीर्थं मंत्राद्युपाध्यायशास्त्रेष्वंभसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः ॥'' इति यादवः । इति भाव इति । तस्करसेवकवणिजो धनार्थं प्राणत्यागमंगीकुर्वंत्यतः प्राणाद्धनस्य प्रियत्वं प्रतीयते । तत्त्यागः प्राणत्यागादपि दुष्कर इत्याशयः । अनिवृत्ताः पृष्ठादर्शयितारः । ये श्रद्धया धनत्यजस्ते न सुलभा इत्यर्थः ॥ ९ ॥ मनस्विन उदारस्य । यतोऽयं बटुरपि भवादृशस्ततो हेतोः । दुर्गतिर्दारिद्र्यम् । इत्यर्थ इति । कैमुत्येन सर्वथा देययोग्यत्वमस्येति भावः ॥ १० ॥ पुनराक्षिपति—नायमिति । यं विष्णुम् । मुने इति । नायं दाननिवारणरूपो मुनिधर्म इत्याह ॥ ११ ॥ एनं बटुम् । अहिंसने हेतुः—भीतमिति । तत्रापि हेतुः—ब्रह्मतनुमिति । मां ब्राह्मणशरीरमवध्यं ज्ञात्वा बलिर्न प्रहरिष्यतीति भावः ॥ १२ ॥ वात्राध्याहार्यम् । युद्धजयस्यानिश्चितत्वाद्वात्र स्वरूपं

श्रीशुक उवाच ॥ एवमश्रद्धितं शिष्यमनादेशकरं गुरुः ॥ शशाप दैवप्रहितः सत्यसंधं मनस्विनम् ॥ १४ ॥ दृढं पंडितमान्यज्ञः स्तब्धोऽस्यस्मदुपेक्षया ॥ मच्छासनातिगो यस्त्वमचिराद्भ्रश्यसे श्रियः ॥ १५ ॥ एवं शप्तः स्वगुरुणा सत्यान्न चलितो महान् ॥ वामनाय ददावेनामर्चित्वोदकपूर्वकम् ॥ १६ ॥ विंध्यावलिस्तदाऽऽगत्य पत्नी जालकमालिनी ॥ आनिन्ये कलशं हैममवनेजन्यपां भृतम् ॥ १७ ॥ यजमानः स्वयं तस्य श्रीमत्पादयुगं मुदा ॥ अवनिज्यावहन्मूर्ध्नि तदपो विश्वपावनीः ॥ १८ ॥

अश्रद्धितमजातश्रद्धम् ॥ १४ ॥ १५ ॥ १६ ॥ जालकं मुक्ताभरणविशेषस्तन्मालावती । अवनेजनीनामपां कलशम् । भृतं पूर्णम् ॥ १७ ॥ १८ ॥

प्रकटय्य युद्ध्यतो मच्छस्त्रघातेन मरणस्यापि संभवाच्छयींतेत्यर्थः । यद्वा–एष उत्तमश्लोकत्वात्स्वयशो न जिहासत्यतो भूर्न देयेति मयोक्ते याच्ञाभंगपराभवमसहमानेन तर्हि युद्धं देहीति प्रार्थिते मयि चोमित्युक्तवति सति युद्धे मां हत्वैमां भूमिं हरेदेव । ननु महावीरात्त्वत्तोऽस्य पराभवोऽपि संभवेदेवेति चेत्तत्राह–शयिष्यति मया निहतो युद्धे शयीतेति काकुः । नैव शयीत विष्णोर्मृतिशून्यत्वादिति भावः । यद्वा–मेत्यस्यावृत्त्याऽस्मदर्थे निषेधार्थे च वर्तनाद्विनापि काकुं संगतिः ॥ १३ ॥ अनादेशकरमाज्ञालंघिनम् ॥ १४ ॥ स्तब्धोऽनम्रः । पंडितानां माननीयः, न ज्ञो यस्मात्सः । अस्मत्कर्तृकयोपेक्षयापि स्तब्धो भयाभावादनम्रः मच्छासनमतिक्रम्य गच्छसि विष्णुमिति भावः । तस्मान्न चिरात् अचिरस्थायिश्रियो भ्रश्यसे भगवद्दत्ता नित्याः संपदः प्राप्स्यस्येवेति वास्तवोर्थः ॥ १५ ॥ उदकसंकल्पपूर्वकम् "संकल्पं तु सदा कुर्यात्स्नानदानव्रतादिके । अन्यथा पुण्यकर्माणि निष्फलानि न संशयः ॥" इति मार्कंडेयोक्तेः । तत्स्वरूपं निर्णयसुधाकरे–"ॐ तत्सदद्येत्युक्त्वादौ देशकालादिकीर्त्तनम् । कृत्वा स्वनामगोत्रोक्तिं प्रवरोक्तिं विधाय च ॥ देयनामाधिपावुक्त्वा स्वेहितोच्चारणं तथा । यत्र वाक्ये संप्रदाननामाद्युक्तिर्भवेत्तथा ॥ सतोयकुशमादाय संकल्पः स प्रकीर्त्तितः ।" इति । "मासपक्षतिथीनां च निमित्तानां च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत् ॥" इत्यन्यत्रोक्तेश्च संकल्पस्यावश्यकत्वात् । यद्वा–गुरुणा भृगुणा शप्तः 'उकारः शंभुरुदितः' इत्येकाक्षरादुः शिवस्तं महतेऽर्चयतीत्युमहो ब्राह्मणः स चेह वामनो ज्ञेयः । यद्वा–उना शंभुना मह्यते पूज्यत इत्युमहः "अतो महेशोपि विहाय भेदबुद्धिं सदा सेवत एव विष्णुम्" इति विद्वन्मोदतरंगिण्युक्तेः । स चात्र वामन एव "त्वं हि भगवन्देवेषु ब्राह्मणोऽहं मनुष्येषु ब्राह्मणो ब्राह्मणो हि ब्राह्मणमुपधावति" इति जाबालश्रुतेः । उमहेनानिति चेष्टत इत्युमहान् बलिस्तदाज्ञाधारित्वात् । छांदसत्वात् "न लोपः प्रातिपदिकांतस्य" इत्यनेन न लोपः । एनां पूर्वोद्दिष्टां भुवमुदकपूर्वकं पाद्यादिना समर्च्य । अन्वादेशादेनादेशः । किंभूतेन गुरुणा ? संत्यज्यते दीयते वस्तुजातमेभिरिति सत्याः घनरसास्तान् । संपूर्वात्त्यजेर्डः समो मलोपस्त्वार्षः । 'मेघपुष्पं घनरसः' इत्यमरः । चालयतीति चलित् औणादिक इति प्रत्ययः । तडिद्वच्चलित् न चलिन्नचलित्तथा सत्यास्तोयानि तेषां नचलित्सत्यान्नचलित्तेन तथाऽर्थोद्दानजलं निरोधयता नञर्थोऽत्र नशब्दः । पुनर्विपरीतलक्षणया सुष्ठु अगुरुणाऽहितोपदेष्टृत्वात् । यद्वा–न गौर्नेत्रं दर्भाग्रप्रहारेणेत्यगुः रुणति रुणद्धीति रुण् स चासौ स च गुरुण् तेन तथा ॥ १६ ॥ तन्मालावती तच्च मस्तकधार्यं तत्रैव मुक्ताभरणपंक्तिसत्त्वात् । तदा संकल्पदानवेलायाम् । परमलज्जावत्यसूर्यंपश्यापि भर्तुर्भक्तिनिष्ठामवगम्यानंदाश्रुस्तिमिता हर्षोत्थचापल्यं निह्नोतुमशक्नुवती दासीरनपेक्षमाणा स्वयमेव कलशं वहंती बहिर्निश्चक्रामेत्याह-विंध्यावलीति । यद्वा-'जालकं कोरकः पुमान्' इत्यमरः । चंपकादिकुड्मलमालावती । यद्वा–जालकेन मुक्ताभरणेन मालते शोभत इति तथा । अवनेजनीनां शुचीनां पादप्रक्षालनादियोग्यानाम् ॥ तदुक्तं बृहन्नारदीये "मायामाश्रित्य तस्तम्भ धारां दानकमंडलोः । भार्गवः शिष्यराज्यस्य स्थित्यै योगेन भूरिद ॥ तदेरितो वामनेन कुशेनाशोधयद्बलिः । कुशाग्रभिन्ननेत्रोऽसौ त्यक्त्वा पात्रमुखं मुनिः ॥ प्रापाक्ष्णस्तु वैकल्यं सद्यो दानस्य वारणात् ।" एवमन्यत्रापि "अत्युग्रपुण्यपापानामिहैव फलमश्नुते । त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः ।" इति यामघटयादीनामप्युपलक्षणम् । अत्युग्रत्वं तु "विप्रस्य वृत्तिहननात्कोटिगोघातजं फलम्" इत्युक्तेरित्यनुसंधेया पुराणांतरकथेति ॥ १७ ॥ यजमानो बलिः । तस्य

तदासुरेंद्रं दिवि देवतागणा गंधर्वविद्याधरसिद्धचारणाः ॥ तत्कर्म सर्वेऽपि गृणंत आर्जवं प्रसूनवर्षैर्ववृषुर्मुदाऽन्विताः ॥ १९ ॥ नेदुर्मुदुंदुभयः सहस्रशो गंधर्वकिंपूरुषकिन्नरा जगुः ॥ मनस्विनाऽनेन कृतं सुदुष्करं विद्वानदाद्यद्रिपवे जगत्त्रयम् ॥ २० ॥ तद्वामनं रूपमवर्धताद्भुतं हरेरनंतस्य गुणत्रयात्मकम् ॥ भूः खं दिशो द्यौर्विवराः पयोधयस्तिर्यङ्नृदेवा ऋषयो यदासत ॥ २१ ॥ काये बलिस्तस्य महाविभूतेः सहर्त्विगाचार्यसदस्य एतत् ॥ ददर्श विश्वं त्रिगुणं गुणात्मके भूतेंद्रियार्थाशयजीवयुक्तम् ॥ २२ ॥ रसामचष्टांघ्रितलेऽथ पादयोर्महीं महीध्रान्पुरुषस्य जंघयोः ॥ पतत्रिणो जानुनि विश्वमूर्तेरूर्वोर्गणं मारुतमिंद्रसेनः ॥ २३ ॥ संध्यां विभोर्वाससि गुह्य ऐक्षत्प्रजापतीञ्जघने आत्ममुख्यान् ॥ नाभ्यां नभः कुक्षिषु सप्तसिंधूनुरुक्रमस्योरसि चर्क्षमालाम् ॥ २४ ॥ हृद्यंग धर्मं स्तनयोर्मुरारेर्ऋतं च सत्यं च मनस्यथेंदुम् ॥ श्रियं च वक्षस्यरविंदहस्तां कंठे च सामानि समस्तरेफान् ॥ २५ ॥

॥१९॥२०॥ अवर्धत 'वांछातः प्रतिगृह्यताम्' इति बलिना पूर्वमुक्तत्वात् । गुणत्रयमात्मनि यस्य तत् । अत एव भूः खमित्यादयो यद्यस्मिन्नासत स्थितवंतः ॥२१॥ ऋत्विगादिसहितो बलिस्तस्य हरेः काये एतद्विश्वं ददर्श ॥ २२ ॥ तदेव प्रपंचयति रसामिति पादोनैः सप्तभिः । रसामधस्तलम् । मारुतं गणं वायुसंघम् । इंद्रस्य सेनेव सेना यस्य सः । इंद्रपदे स्थितत्वात् । अचष्ट ऐक्षत ॥ २३ ॥ आत्मा स्वयं बलिर्मुख्यो येषां तानसुरान् । ऋक्षमालां नक्षत्रपंक्तिम् ॥ २४ ॥ अंग हे राजन् समस्तान्

वामनस्य । अवनिज्य प्रक्षाल्य । तदपः पादावनेजनीरपः ॥ १८ ॥ तदा संकल्पदानसमये । तत्कर्म ज्ञात्वापि गुरुतः श्रवणेन पुनश्शत्रवे भूदानरूपम् । आर्जवमकौटिल्यं च ॥ १९ ॥ यत् यतः ॥ २० ॥ येन रूपेण संकल्पो गृहीतस्तदेव रूपमवर्द्धत । "जले तु पतिते हस्ते वामनोभूदवामनः" इति हरिवंशोक्तेः । हरेर्हरणशीलस्य । अनंतस्येयत्ताशून्यस्य । आत्मनि देहे । "आत्मा जीवे धृतौ देहे स्वभावे परमात्मनि । यत्नेऽर्केऽग्नौ मतौ वाते" इति यादवः ॥ २१ ॥ त्रिगुणं गुणत्रयकार्यम् । गुणात्मके सगुणे । अर्थाः शब्दादयो विषयाः । आशयश्चतुर्विधमंतःकरणम् । जीवश्चिदाभासः ॥ २२ ॥ रसा रसातलम् । एकदेशोच्चारणन्यायेन मह्याः पृथङ्निर्देशात् । महीध्रान्पर्वतान् । पतत्रिणः पक्षिणः ॥ २३ ॥ २४ ॥ "ऋतं च सूनृता वाणी सत्यञ्च समदर्शनम्" इत्येकादशे वक्ष्यमाणत्वात् । सामानि गीतिशब्दान् । रेफशब्दोपलक्षितवर्णमयान् शब्दानित्यर्थः । रेफोपलक्षितानकारादिसर्ववर्णानिति चक्रवर्ती । यद्वा—रेफस्य सर्वाक्षरेषून्नतत्वाद्रेफग्रहणेन सर्वाक्षरग्रहणं यथा "जायमानो वै ब्राह्मणस्त्रिभिर्ऋणवान् जायते" इति श्रुतौ ब्राह्मणस्य सर्ववर्णोन्नतत्वात्तद्ग्रहणेन क्षत्रियादिग्रहणं तद्वत् रेफस्योन्नतत्वं सर्ववर्णोपरि विराजमानत्वं तदपि रामनामसंयोगत्वादेव तदुक्तम् "राम त्वन्नामसंयोगान्नरः के नोन्नतिं गताः । रकारः सर्ववर्णानामुपरिष्टात्प्रवर्त्तते ॥" इति । अन्यत्रापि "यन्नामसंसर्गवशाद्वर्णो नष्टस्वरो ह्यूर्द्ध्वगतिं प्रयाति । तन्नामपादं हृदि संनिधाय देही कथं नोर्द्ध्वगतिं प्रयाति" । इत्यलं प्रसक्तानुप्रसक्त्या ॥ २५ ॥

इंद्रप्रधानानमरान्भुजेषु तत्कर्णयोः ककुभो द्यौश्च मूर्ध्नि ॥ केशेषु मेघाञ्छ्वसनं नासिकायामक्ष्णोश्च सूर्यं वदने च वह्निम् ॥२६॥ वाण्यां च छन्दांसि रसे जलेशं भ्रुवोर्निषेधं च विधिं च पक्ष्मसु ॥ अहश्च रात्रिं च परस्य पुंसो मन्युं ललाटेऽधर एव लोभम् ॥२७॥ स्पर्शे च कामं नृप रेतसांभः पृष्ठे त्वधर्मं क्रमणेषु यज्ञम् ॥ छायासु मृत्युं हसिते च मायां तनूरुहेष्वोषधिजातयश्च ॥ २८ ॥ नदीश्च नाडीषु शिला नखेषु बुद्धावजं देवगणानृषींश्च ॥ प्राणेषु गात्रे स्थिरजंगमानि सर्वाणि भूतानि ददर्श वीरः ॥ २९ ॥ सर्वात्मनीदं भुवनं निरीक्ष्य सर्वेऽसुराः कश्मलमापुरंग ॥ सुदर्शनं चक्रमसह्य तेजो धनुश्च शार्ङ्गं स्तनयित्नुघोषम् ॥ ३० ॥ पर्जन्यघोषो जलजः पांचजन्यः कौमोदकी विष्णुगदा तरस्विनी ॥ विद्याधरोऽसिः शतचंद्रयुक्त स्तूणोत्तमावक्षयसायकौ च ॥ ३१ ॥ सुनंदमुख्या उपतस्थुरीशं पार्षदमुख्याः सहलोकपालाः ॥ स्फुरत्किरीटांगदमीनकुंडलः श्रीवत्सरत्नोत्तममेखलांबरैः ॥ ॥ ३२ ॥ मधुव्रतस्रग्वनमालया वृतो रराज राजन्भगवानुरुक्रमः ॥ क्षितिं पदैकेन बलेर्विचक्रमे नभः शरीरेण दिशश्च बाहुभिः ॥३३॥ पदं द्वितीयं क्रमतस्त्रिविष्टपं न वै तृतीयाय तदीयमण्वपि ॥ उरुक्रमस्यांघ्रिरुपर्युपर्यथो महर्जनाभ्यां तपसः परं गतः ॥ ३४ ॥ इति श्रीमद्भा० म० अष्टम० भूमिदानविश्वरूपदर्शनं नाम विंशतमोऽध्यायः ॥ २० ॥

रेफांश्च शब्दान् ॥ २५ ॥ द्यौश्च द्यां च ॥ २६ ॥ रसे रसने ॥ २७ ॥ रेतसो रेतसि । क्रमणेषु पादन्यासेषु । ओषधिजातय ओषधिजातीः ॥ २८ ॥ प्राणेष्विंद्रियेषु ॥ २९ ॥ सर्वात्मनीत्यादिवाक्यांतरम् । सुदर्शनमित्यादीनामीशमुपतस्थुरित्युत्तरेणान्वयः ॥ ३० ॥ विद्याधरसंज्ञोऽसिः ॥ ३१ ॥ मकरकुण्डले मीनकुंडले । स्फुरंति किरीटादीनि यस्य सः ॥ ३२ ॥ मधुव्रतानां स्रजो यस्यां तया वनमालया श्रीवत्सादिभिश्चावृतो व्याप्तः । उरुक्रमत्वमेवाह । क्षितिमिति ॥ ३३ ॥ द्वितीयं पदं क्रमतो विक्षिपतस्त्रिविष्टपं तदीयं किंचिन्मात्रं जातम् । तृतीयाय तु न किंचिदपि । तत्र हेतुः । उरुक्रमस्यांघ्रिस्त्रिविष्टपादुपर्युपरि गच्छन्महर्जनलोकाभ्यां तपसश्च परं गतः सत्यलोकं गत इति ॥ ३४ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कंधे टीकायां विंशोऽध्यायः ॥ २० ॥

ककुभो दिशः ॥२६॥ छंदांसि गायत्र्यादीनि । भ्रुवोर्मस्तकाधस्तननेत्रोर्द्ध्वदेशयोः । मन्युं क्रोधम् ॥२७॥ रेतस इति सप्तम्यर्थे षष्ठी । सर्वा ओषधीरित्यर्थः ॥२८॥ वाक्यांतरमापुरित्युत्तरेणान्वयि ॥ २९ ॥ ३० ॥ जलजः शंखः पांचजन्य इति संज्ञा । नंदकस्यैव नामांतरं विद्याधर इति । शतचंद्रप्रतिबिंबयुक्तः । यद्वा शतचंद्रांकितकोशयुक्तः । केचित्तु वैद्याधर इति वदंति तदर्थश्च कस्माचिद्विद्याधरादात्त इति ॥३१॥ ३२ ॥ स्रजः पंक्तयः । न च पदत्रयमितभूमेरेव ग्राह्यत्वात् नभआदिव्यापनमन्याय्यमिति वाच्यम् । तावत्यां भूमावूर्द्ध्वावस्थितेरप्यपेक्षितत्वेन तस्यार्थसिद्धत्वादित्युक्तमपि प्राक् ॥ ३३ ॥ तत्र तृतीयपदार्थे तदीयत्वाभावे । द्वितीयपदं कियद् वृद्धमभूदित्यपेक्षायामाह–तपसः परमिति । सत्यलोकमित्यर्थः । तदीयनखस्तु ब्रह्मांडकटाहं बिभेदेत्यर्थः । "वामपादांगुष्ठनखनिर्भिन्नांडकटाहविवरेण प्रविष्टा या बाह्यजलधारा" इति पंचमस्कन्धोक्तेः । अष्टावरणानि भित्त्वा विरजाजले प्रविष्ट इत्यन्यत्र ॥ ३४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे विंशोध्यायः ॥ २० ॥

श्रीशुक उवाच ॥ सत्यं समीक्ष्याब्जभवो नखेंदुभिर्हतस्वधामद्युतिरावृतोऽभ्यगात् ॥ मरीचिमिश्रा ऋषयो बृहद्व्रताः सनंदनाद्या नरदेव योगिनः ॥ ॥ १ ॥ वेदोपवेदा नियमान्विता यमास्तर्कैतिहासांगपुराणसंहिताः ॥ ये चापरे योगसमीरदीपितज्ञानाग्निना रंधितकर्मकल्मषाः ॥ ववंदिरे यत्स्मरणानुभावतः स्वायंभुवं धाम गता अकर्मकम् ॥ २ ॥ अथांघ्रये प्रोन्नमिताय विष्णोरुपाहरत्पद्मभवोऽर्हणोदकम् ॥ समर्च्य भक्त्याऽभ्यगृणच्छुचिश्रवा यन्नाभिपंकेरुहसंभवः स्वयम् ॥ ३ ॥ धातुः कमंडलुजलं तदुरुक्रमस्य पादावनेजनपवित्रतया नरेंद्र ॥ स्वर्धुन्यभून्नभसि सा पतती निमार्ष्टि लोकत्रयं भगवतो विशदेव कीर्तिः ॥ ४ ॥ ब्रह्मादयो लोकनाथाः स्वनाथाय समादृताः ॥ सानुगा बलिमाजह्रुः संक्षिप्तात्मविभूतये ॥५॥ तोयैः समर्हणैः स्रग्भिर्दिव्यगंधानुलेपनैः ॥ धूपैर्दीपैः सुरभिभिर्लाजाक्षतफलांकुरैः ॥ ६ ॥ स्तवनैर्जयशब्दैश्च तद्वीर्यमहिमांकितैः ॥ नृत्यवादित्रगीतैश्च शंखदुंदुभिनिस्वनैः ॥ ७ ॥ जांबवानृक्षराजस्तु भेरीशब्दैर्मनोजवः ॥ विजयं दिक्षु सर्वासु महोत्सवमघोषयत् ॥ ८ ॥

एकविंशे पदापूर्तिमिषेण बलिबंधनम् ॥ विष्णुना कृतमुत्कर्षं तस्य ख्यापयितुं जने ॥ १ ॥ उरुक्रमस्यांघ्रिस्तपसः परं गत इत्युक्तं ततः किं वृत्तं तदाह । सत्यं सत्यलोकं प्राप्तं तमंघ्रिं समीक्ष्याब्जभवोऽभ्यगात् । तथा मरीचिमिश्रादयश्चेति द्वयोरन्वयः । कथंभूतोऽब्जभवः । हरेरंघ्रेर्नखा एवेंदवस्तैर्हता स्वधाम्नो द्युतिर्यस्य स स्वयं च तैरावृतश्छन्नः । हे नरदेव । बृहद्व्रता योगिनश्च ॥ १ ॥ अंगानि शिक्षादीनि । पुराणानि तत्संहिताश्च योग एव समीरस्तेन दीपितं ज्ञानमेवाग्निस्तेन रंधितं दग्धं कर्मकल्मषं कर्ममलं येषाम् ॥ २ ॥ ते च सर्वे तमंघ्रिं ववंदिरे । यस्यांघ्रेः स्मरणानुभावतः । अकर्मकं कर्मभिरप्राप्यम् । विष्णोरंघ्रये । स्वयं यस्य नाभिपंकेरुहसंभवस्तस्य विष्णोरंघ्रिं समर्च्य ॥ ३ ॥ लोकत्रयं निमार्ष्टि पवित्रयति ॥ ४ ॥ संक्षिप्ता उपसंहृतात्मविभूतिः स्वविस्तारो येन तस्मै । यथापूर्वं वामनरूपेण स्थितायेत्यर्थः ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

पदानामपूर्त्तिमिषेण । तस्य बलेः ( १ ) । ततः तपसः परं गतेरनन्तरम् । वृत्तं जातम् । सत्यं सत्यलोको विद्यते प्राप्तत्वेन यस्य स सत्यस्तं मत्वर्थीयोच्प्रत्ययः । अभ्यगुरिति वचनव्यत्यासेनान्वयः । बृहद्व्रता नैष्ठिकाः ॥ १ ॥ "शिक्षा कल्पो व्याकरणं निरुक्तं ज्योतिषां गणः । छंदसां लक्षणं चैव षडंगो वेद उच्यते ॥" इत्युक्तानि । पुराणानि ब्राह्मादीनि । उपपुराणानि सांबपुराणादीन्यपि पुराणपदेनानुक्तानि ज्ञेयानि । उपवेदा गांधर्वादयः । तर्कपदेन सांख्यमीमांसादीनामपि ग्रहस्तेषामपि तर्कगर्भत्वात् ॥ २ ॥ शुचिश्रवाः पूतकीर्त्तिः । अभ्यगृणात् तुष्टाव ॥ ३ ॥ यद्धातुः कमंडलुजलं तत्स्वर्धुनी गंगा । पंचमस्कन्धे तु वामनपदनखनिर्भिन्नांडकटाहबाह्यजलधारैव गंगाऽभूदित्युक्तम् । क्वचित्संहितादौ—साक्षाच्छ्रीकृष्ण एव गंगारूपेण द्रुतोभूदित्युक्तम् । "श्रीगंगाद्रवरूपेण त्रैलोक्यं व्याप्य तिष्ठति" इति श्रीशंकरोक्तिरपि संमोहने । तथा च जलत्रयं मिलितमेव गंगेति ध्येयम् । नभसि व्योम्नि । पतती पतंती ॥ ४ ॥ इत्यर्थ इति । कार्यकारणोत्तरं स्थविष्ठरूपप्रयोजनाभावादिति भावः ॥ ५ ॥ अक्षतास्तु शालिग्रामार्चन एव निषिद्धा इति न दोषः । अंकुरं दूर्वांकुरम् ॥ ६ ॥ तद्वीर्यस्य महिम्नांकितैः "त्रिविक्रम नमस्तुभ्यम्' इत्यादिस्तोत्रैः ॥ ७ ॥ सर्वासु दिक्ष्वित्यनेन प्रदक्षिणं लक्ष्यते । तच्च वाल्मीकीये प्रतिपादितं सीतान्वेषणार्थगताब्धितटस्थवानरकृतस्वस्ववीर्यप्रकाशनावसरे जांबवताप्युक्तम्—"वृद्धोऽहमधुना वामनावतारे यूना मयैकविंशतिप्रदक्षिणा विश्वरूपधारिणो भगवतः कृताः" इति ॥ ८ ॥

महीं सर्वां हृतां दृष्ट्वा त्रिपद्व्याजयाञ्चया ॥ ऊचुः स्वभर्तुरसुरा दीक्षितस्यात्यमर्षिताः ॥ ९ ॥ न वा अयं ब्रह्मबंधुर्विष्णुर्मायाविनां वरः ॥ द्विजरूपप्रतिच्छन्नो देवकार्यं चिकीर्षति ॥ १० ॥ अनेन याचमानेन शत्रुणा बटुरूपिणा ॥ सर्वस्वं नो हृतं भर्तुर्न्यस्तदंडस्य बर्हिषि ॥ ११ ॥ सत्यव्रतस्य सततं दीक्षितस्य विशेषतः ॥ नानृतं भाषितुं शक्यं ब्रह्मण्यस्य दयावतः ॥ १२ ॥ तस्मादस्य वधो धर्मो भर्तुः शुश्रूषणं च नः ॥ इत्यायुधानि जगृहुर्बलेरनुचरासुराः ॥ १३ ॥ ते सर्वे वामनं हंतुं शूलपट्टिशपाणयः ॥ अनिच्छतो बले राजन्प्राद्रवञ्जातमन्यवः ॥ १४ ॥ तान भिद्रवतो दृष्ट्वा दितिजानीकपान्नृप ॥ प्रहस्यानुचरा विष्णोः प्रत्यषेधन्नुदायुधाः ॥ १५ ॥ नंदः सुनंदोऽथ जयो विजयः प्रबलो बलः ॥ कुमुदः कुमुदाक्षश्च विष्वक्सेनः पतत्रिराट् ॥ १६ ॥ जयंतः श्रुतदेवश्च पुष्पदंतोऽथ सात्वतः ॥ सर्वे नागायुतप्राणाश्चमूं ते जघ्नुरासुरीम् ॥ १७ ॥ हन्य मानान्स्वकान्दृष्ट्वा पुरुषानुचरैर्बलिः ॥ वारयामास संरब्धान्काव्यशापमनुस्मरन् ॥ १८ ॥ हे विप्रचित्ते हे राहो हे नेमे श्रूयतां वचः ॥ मा युध्यत निवर्तध्वं न नः कालोऽयमर्थकृत् ॥ १९ ॥ यः प्रभुः सर्वभूतानां सुखदुःखोपपत्तये ॥ तं नातिवर्तितुं दैत्याः पौरुषैरीश्वरः पुमान् ॥ २० ॥ यो नो भवाय प्रागासीदभवाय दिवौकसाम् ॥ स एव भगवानद्य वर्तते तद्विपर्ययम् ॥ २१ ॥ बलेन सचिवैर्बुद्ध्या दुर्गैर्मंत्रौषधादिभिः ॥ सामादि भिरुपायैश्च कालं नात्येति वै जनः ॥ २२ ॥

त्रिपाद्व्याजयाञ्चाया त्रिपदविषया या व्याजयाञ्चा कपटयाञ्चा तया स्वभर्तुर्बलेर्महीं हृतां दृष्ट्वाऽत्यमार्षिताः संतः ऊचुः ॥ ९ ॥ किमूचुस्तदाह न वै इति सार्धैस्त्रिभिः ॥ ॥ १० ॥ ११ ॥ १२ ॥ अनुचराश्च ते असुराश्च ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ अर्थकृदनुकूलः ॥ १९ ॥ पौरुषैस्तं कालमतिवर्तितुं पुमानीश्वरः समर्थो न भवति ॥ २० ॥ २१ ॥ २२ ॥

अत्यमर्षिता असहमानाः ॥ ९ ॥ तत् वंचनम् । ब्रह्मबंधुरित्यनेनाधमोऽपि ब्राह्मण एतादृशं कर्म नाचरति यादृशमनेनाचरितमित्युक्तम् । किन्तु द्विजविडंबनमात्रमेवास्येति भावः ॥ १० ॥ बर्हिषि यज्ञे "स्याद्बर्हिः कुशाकृत्वर्चिर्नृपभेदमुनिष्वथ" इति धरणिः ॥ ११ ॥ १२ ॥ यतोऽयं कपटरूपेण हृतवांस्तस्माद्धेतोः । अस्य छद्मविप्रस्य । क्वचिद्वधे इति सप्तम्यंतः ॥ १३ ॥ १४ ॥ तान्बल्यनु चरान् ॥ १५ ॥ ननु जयविजययोः शापवशादधःपातादत्र तयोः कथं संभव इत्याशंक्य भगवतो ब्रह्मण्यत्वस्य भक्तानामपराधविभीषिकायाश्च प्रदर्शनार्थमेवानयोः प्रकाशावेव वैकुंठादधः पेततुर्न साक्षादिति समाहितं चक्रवर्त्तिना । अन्यथा 'न मत्परा नंक्ष्यंति शांतरूपाः' इत्युक्तेर्व्याकोपः स्यादिति ॥ १६ ॥ १७ ॥ संरब्धान्कुपितान् ॥ १८ ॥ १९ ॥ यः कालः । तं कालम् ॥ २० ॥ भवाय समृद्धये । ततो भवाद्विपर्ययं यथा स्यात्तथेति ॥ २१ ॥ बलेन सैन्येन दैहिकेन वा । सचिवैः सहायैः 'सचिवो मंत्रिचेटयोः । सहाये च' इति मेदिनी । आदिना यंत्रादिग्रहः । आदिना दानभेददंडानां ग्रहः । नात्येति नातिक्रमति ।

भवद्भिर्निर्जिता ह्येते बहुशोऽनुचरा हरेः ॥ दैवेनर्द्धैस्त एवाद्य युधि जित्वा नदंति नः ॥ २३ ॥ एतान्वयं विजेष्यामो यदि दैवं प्रसीदति ॥ तस्मात्कालं प्रतीक्षध्वं यो नोऽर्थत्वाय कल्पते ॥ २४ ॥ श्रीशुक उवाच ॥ पत्युर्निगदितं श्रुत्वा दैत्यदानवयूथपाः ॥ रसां निर्विविशू राजन्विष्णुपार्षदताडिताः ॥ २५ ॥ अथ तार्क्ष्यसुतो ज्ञात्वा विराट् प्रभुचिकीर्षितम् ॥ बबंध वारुणैः पाशैर्बलिं सौत्येऽहनि क्रतौ ॥ २६ ॥ हाहाकारो महानासीद्रोदस्योः सर्वतो दिशम् ॥ निगृह्यमाणेऽसुरपतौ विष्णुना प्रभविष्णुना ॥ २७ ॥ तं बद्धं वारुणैः पाशैर्भगवानाह वामनः ॥ नष्टश्रियं स्थिरप्रज्ञमुदारयशसं नृप ॥ २८ ॥ पदानि त्रीणि दत्तानि भूमेर्मह्यं त्वयाऽसुर ॥ द्वाभ्यां क्रांता मही सर्वा तृतीयमुपकल्पय ॥ २९ ॥ यावत्तपत्यसौ गोभिर्यावदिंदुः सहोडुभिः ॥ यावद्वर्षति पर्जन्यस्तावती भूरियं तव ॥ ३० ॥ पदैकेन मया क्रांतो भूर्लोकः खं दिशस्तनोः ॥ स्वर्लोकस्तु द्वितीयेन पश्यतस्ते स्वमात्मना ॥ ३१ ॥ प्रतिश्रुतमदातुस्ते निरये वास इष्यते ॥ विश त्वं निरयं तस्माद्गुरुणा चानुमोदितः ॥ ३२ ॥ वृथा मनोरथस्तस्य दूरे स्वर्गः पतत्यधः ॥ प्रतिश्रुतस्यादानेन योऽर्थिनं विप्रलंभते ॥ ३३ ॥

हरेरनुचरा देवाः । दैवेन ऋद्धैः समृद्धैर्भवद्भिः ॥२३॥ अर्थत्वायानूकुल्याय॥२४॥२५॥विषु पक्षिषु राजत इति विराट् । प्रभोश्चिकीर्षितं ज्ञात्वा । अयमर्थः अस्य सर्वस्वापहारेण ममेत्यभिमानं संत्याज्येदानीं देहस्वीकारेणाहंकारमपि त्याजयित्वा परमानुग्रहं कर्तुमिच्छति । न चानेन तुल्योऽन्यः कोऽपि सत्यसंधो धीरो वाऽस्तीति तद्यशःप्रख्यापनार्थं किंचित्पातयितुमपीच्छतीति प्रभोरभिप्रायं ज्ञात्वा तं बबंधेति । सौत्येऽहनि सोमाभिषवदिने ॥२६॥ रोदस्योर्द्यावापृथिव्योः ॥२७॥२८॥२९॥ असौ सूर्यः॥३०॥ मया आत्मनेत्यन्वयः । व्यापिनेत्यर्थः । खं च दिशश्च । तनोः तन्वा । ते स्वं त्वदीयं सर्वस्वम्॥३१॥गुरुणा शुक्रेणानुमोदितः सन्॥३२॥एवमुक्तेऽपि निरयपरिहारार्थं स्वर्गभ्रं

अप्रतिक्रियत्वात् । 'यस्य नेह प्रतिक्रिया' इत्युक्तेः ॥ २२ ॥ ये बहुशो निर्जितास्त एव ॥ २३ ॥ यतोऽधुना दैवप्रातिकूल्यं नोऽस्ति तस्मादित्यन्वय : ॥ २४ ॥ रसां रसातलम् ॥ २५ ॥ अथ दैत्यरसातलप्रवेशोत्तरम् । अत्राभिप्रायमाह—अयमर्थ इति । अस्य बलेः । पातयितुमधः पातयितुम् । 'यातयितुम्' इति पाठे यातनाः प्रदातुम् । 'याचयितुम्' इति पाठे तु अवशिष्टं तृतीयं पादमित्यर्थः ॥ २६ ॥ निगृह्यमाण इत्यक्षराधिक्यमार्षम् ॥ २७ ॥ वारुणैर्नागैः ॥ २८ ॥ उपकल्पय देहि ॥ २९ ॥ ३० ॥ इत्यर्थ इति । व्यापिनेति भावः । पश्यत इति । न तु त्वत्तः परोक्षं किंचित्कृतमित्यर्थः ॥ ३१ ॥ निरये 'निर्निश्चयनिषेधयोः' इति कोषात् निश्चयेनायः शुभावहोऽहं विष्णुर्यत्र स निरयस्तस्मिन् 'नित्यं मां तत्र द्रष्टासि' इति मयैव वक्ष्यमाणत्वात् । प्रतिश्रुतमदातुरिति व्याख्यातचरम् । यतः प्रतिश्रुतमदाता तस्मात् । गुरुणापि 'निष्ठां ते नरके मन्ये' इत्यादिनाऽनुमोदितः कथित इत्यर्थः । अत्र विश्वनाथः—तर्हि मया किं कर्त्तव्यमिति चेन्निरये वासः क्रियतामिति । तस्य धीरत्वं निरूप्यापि भक्तिनिष्ठां च लोके ख्यापयितुमाह—प्रतीति । निरये नरके । गुरुणानुमोदिते इति किमहं युक्तं ब्रवीम्ययुक्तं वेति तत्त्वं स्वगुरुं विद्वांसं शुक्राचार्यमेव पृच्छेति भावः । वस्तुतस्तु—भक्ताभासस्यापि नरकासंभवात्प्रतिश्रुतमदातुरपि ते निरये रत्नयोरैक्यान्निलये मदीये वैकुंठे वास इष्यत उचितो भवति यद्यपि तदपि निलयं मया दीयमानं सुतलाख्यं मदीयस्थानविशेषं विशत्वदधिकारांते एव वैकुंठे त्वां वासयिष्यामीति भावः । गुरुणा शुक्रेण यद्यपि त्वं विमुखो ज्ञात्वा संप्रत्यवमन्यसे तदपि स त्वद्विषयकस्नेहभरेणैव लुप्तविवेको मयातिप्रियः एवावगतः अतस्तेन सहैव विशेत्यर्थः ॥ ३२ ॥ विप्रलंभते वंचते । तस्य विप्रलब्धुः । तस्य प्रसिद्धमङ्गक्तस्य भवत इंद्रपदमवाप्तव्यमिति मनोरथो वृथैव यतस्त्वत्तो वैकुंठस्थाद्दूरं

विप्रलब्धो ददामीति त्वयाहं चाढ्यमानिना ॥ तद्व्यलीकफलं भुंक्ष्व निरयं कतिचित्समाः ॥३४॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे बलिनिग्रहो नामैकविंशोऽध्यायः ॥ २१ ॥ श्रीशुक उवाच ॥ एवं विप्रकृतो राजन्बलिर्भगवताऽसुरः ॥ भिद्यमानोऽप्यभिन्नात्मा प्रत्याहाविक्लवं वचः ॥१॥ बलिरुवाच ॥ यद्युत्तमश्लोक भवान्ममेरितं वचो व्यलीकं सुरवर्य मन्यते ॥ करोम्यृतं तन्न भवेत्प्रलंभनं पदं तृतीयं कुरु शीर्ष्णि मे निजम् ॥ २ ॥

शपरिहारार्थं च मनोरथं कुर्वंतं प्रत्याह । वृथेति । यः प्रतिश्रुतस्यादानेन याचकं विप्रलंभते तस्य मनोरथो वृथैव स्वर्गश्च तस्य दूर एव । स चाधः पतत्येव॥ ३३॥ त्वया चाहं विप्रलब्धस्तस्माद्व्यलीकस्यानृतस्य फलं निरयं भुंक्ष्वेत्यर्थः ॥३४॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां बलिनिग्रहो नामैकविंशोऽध्यायः॥२१॥ द्वाविंशे तु प्रसन्नः सन्प्रस्थाप्य सुतलं बलिम् ॥ दत्त्वा वरान्हरिर्न्यूनं मत्वा तद्द्वारपोऽभवत् ॥१॥ समर्पिततनूवित्तनिर्मलाचलभक्तितः । छलितो बलिना चित्रं स्वमेवार्पयदच्युतः ॥२॥ विप्रकृतोऽपकृतः । भिद्यमानः सत्त्याच्चाल्यमानः ॥ १ ॥ हे उत्तमश्लोकेति कटाक्षः । मम वच ईरितं प्रतिश्रुतं न तावद्व्यलीकम् । त्वया कपटेन वामनतया भिक्षित्वा रूपांतरस्याविष्कृतत्वात् । एवमपि यदि भवान् व्यलीकं मन्यते तथाऽपि ऋतमेवाहं करोमि । मदुक्तं विप्रलंभनं न भवतु । मे शीर्ष्णि निजं तृतीयं पदं कुरु न च द्वाभ्यां विश्वं क्रांतवतो

स्वर्गोयं पतति संप्रत्यपि भवान् सुतलं प्रस्थाप्यमानोऽपि स्वर्गादूर्ध्वमधिरोहसि सुतलभोगस्य स्वर्गेप्यविद्यमानत्वादिति भावः । यो भवान्स्वदेहात्मसर्वस्वसमर्पणात्प्रतिश्रुतस्य आ सम्यक्प्रकारेण दानेन मामर्थिनं पुरुषार्थचतुष्टयवंतमपि विशेषतः प्रकर्षेण लभते, त्वदीयद्वारपालो भूत्वा स्थास्यामीति भावः ॥ ३३ ॥ आढ्यैर्भक्तिधनाढ्यैर्मान्यते पूज्यत इत्याढ्यमानी तेन। विशेषेण प्रकृष्टतया लब्धः विप्रलब्धः । यत इत्थं तस्माद्धेतोः । विगतमलीकमनृतं यस्मात्कर्मणस्तद्व्यलीकं तस्य फलं निरयं सुतलं कतिचिदित्युक्तेस्त्वदभिलषितेंद्रराज्यादि संपाद्य ततस्त्वां मोक्षयिष्यामीति भावः । उत्तानार्थस्तु स्पष्ट एव । तत्रापि भगवता प्रतिश्रुतादातुर्निरयोऽवश्यं भवतीति बोधितम् ॥ ३४ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥ ॥ न्यूनमात्मानं प्रतिज्ञाताधिकग्रहणेन ज्ञात्वा । तस्य बलेर्द्वारपः ( १ ) । चित्रमद्भुतम् । तदाह—छलितुं प्रवृत्तः स्वयमेव छलित इति । समर्पिते तनूवित्ते यस्यां सा समर्पिततनूवित्ता निर्मला चासावचला चेति निर्मलाचला सा चासौ भक्तिश्चेति निर्मलाचलभक्तिः पुनः समर्पिततनूवित्ता चासौ निर्मलाचलभक्तिश्चेति समर्पिततनूवित्तनिर्मलाचलभक्तिस्तस्याः । स्वमेवात्मानमेव ( २ ) । अपकृतो निंदित इवोपालब्धोपि । असुरः असून्त्रातुं दातुं प्रवृत्त इत्यर्थः । अविक्लवं सत्यधर्मयुतम् ॥ १ ॥ कटाक्ष इति । न ह्येतादृशकर्मकृतामुत्तमश्लोकत्वोक्तिः शोभत इति भावः । एवमपि स्वयं कपटं कृत्वापि । विप्रलंभनं विरुद्धम् । स्वयमेवाक्षिप्य समाधत्ते—न चेत्यादिना । पदपर्याप्तं पदपूर्त्तिकरम् । इदं मच्छिरः । इति भाव इति । 'स्वात्स्वामी द्विगुणोऽधिकः' इति वाक्यादित्यभिप्रायः । उत्तमश्लोकेति । स्वप्रभौ सनर्मोक्तिः स्वस्य वामनस्य त्रिभिः पदैः परिमितां भुवं भिक्षित्वा स्वरूपांतरस्य त्रिविक्रमस्य त्रिभिः पदैः प्रतिग्रहीतुं प्रयतमानस्य निर्लोभस्य विप्रबटोस्तव निःस्पृहत्वं व्यक्तीभूतमित्येतां कीर्त्तिसुधामेव निरपायं पायंपायमेव भक्ता वयमानंदमग्ना भवाम यदहो लक्ष्मीकांतोऽपि मां तावदतिरंकमपि भूमिं भिक्षते तत्रापि छलेनाधिका जिघृक्षा तत्रापि बटुवेषेण बटुजनानां कपटमर्थस्पृहामशांतिमप्राप्त्या दातारि दंडं च स्वाभाविकं धर्ममभिव्यज्य तेषां विडंबनं शास्त्राभिज्ञानां सद्गुरूणामपि बुद्धिलोपं स्वकृपापरिमाणुमात्रस्पृष्टेष्विंद्रादिषु स्वपक्षत्वव्यंजना स्वरूपामृतमहोदधिमध्यग्ने मयि विपक्षत्वव्यंजनेत्येवमादय एवोत्तमाः श्लोकाः कविभिः श्लोकैर्गास्यंत इति भावः । यदि भवान्मद्वचो मिथ्या मन्यते स्वभक्तमन्यायेनापि जिगीषुणा त्वया तत् स्वभक्तवचो मिथ्या कर्त्तुमशक्यमेव "स्वनिगममपहाय

बिभेमि नाहं निरयात्पदच्युतो न पाशबंधाद्व्यसनाद्दुरत्ययात् ॥ नैवार्थकृच्छ्राद्भवतो विनिग्रहादसाधुवादाद्भृशमुद्विजे यथा ॥ ३ ॥ पुंसां श्लाघ्य तमं मन्ये दंडमर्हत्तमार्पितम् ॥ यं न माता पिता भ्राता सुहृदश्चादिशंति हि ॥ ४ ॥ त्वं नूनमसुराणां नः पारोक्ष्यः परमो गुरुः ॥ यो नोऽनेकमदां धानां विभ्रंशं चक्षुरादिशत् ॥५॥ यस्मिन्वैरानुबंधेन रूढेन विबुधेतराः ॥ बहवो लेभिरे सिद्धिं यामुहैकांतयोगिनः ॥ ६ ॥ तेनाहं निगृहीतोऽस्मि भवता भूरिकर्मणा ॥ बद्धश्च वारुणैः पाशैर्नातिव्रीडे न च व्यथे ॥ ७ ॥ पितामहो मे भवदीयसंमतः प्रह्राद आविष्कृतसाधुवादः ॥ भवद्विपक्षेण विचित्रवैशसं संप्रापितस्त्वत्परमः स्वपित्रा ॥ ८ ॥

मे तव शिरः पादपर्याप्तं न भवतीति मन्येथाः । वित्तेन चेत्पदद्वयं जातं तर्हीदमधिकमेव स्यात् । वित्तादपि वित्तवतोऽधिकत्वादिति भावः ॥ २ ॥ ननु च "आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि॥आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥" इत्यादिवचनादात्मभयपरिहाराय सर्वस्वं त्यज्यते त्वं तु कुतो भीतः सन्नात्मानमर्पयस्यत आह । बिभेमीति । पदच्युतः स्थानभ्रष्टो असाधुवादादपकीर्तेर्यथाऽहं भृशमुद्विजे निरयादिभ्यो न तथा बिभेमि व्यसनाद्दुःखात् अर्थकृच्छ्राद्दारिद्र्यात् निग्रहाद्दण्डादपि ॥ ३ ॥ ननु मया निगृह्णता त्वापकीर्तिर्जातैव नैवेत्याह । पुंसामिति । अर्हत्तमैरर्पितम् । यं दंडं मात्रादयोऽपि नह्यादिशंति नैवार्पयंति । हितैषिणा त्वया निगृहीतोऽहं श्लाघ्य एवास्मीति भावः ॥ ४ ॥ नन्वहं देवानां हितैषी नासुराणां तत्राह । त्वं नूनमिति । पारोक्ष्यः शत्रुच्छलेन वर्तमानः ॥ ५ ॥ शत्रुत्वं पुनर्भक्तानिवास्माननुग्रहीतुमेवेत्याह । यस्मिन्निति । उ अहो । ह प्रसिद्धम् ॥ ६ ॥ अतो नात्र मम लज्जा नापि दुःखमित्याह । तेन गुरुणा भवता ॥ ७ ॥ किं च योऽयं दंडरूपो ममानुग्रहस्त्वया कृतः स तु त्वद्भक्तपौत्रत्वेन न त्वहमनुग्र

मत्प्रतिज्ञामृतमधिकर्तुम्" इति भीष्मोक्तेरिति भावः । हे सुरवर्येति । सुरैर्वरणीयत्रैलोक्यं भिक्षित्वा बलेः सकाशादानीयास्मभ्यं भोगार्थं देहीति सुरैर्मन्ये वरं प्रार्थितो भवानभूदिति भावः । तद्वचः सत्यं करोमि मदुक्तं हि प्रलंभनं न भवेत् यथा, स्वांघ्रिप्रेमामृतमददानस्य तव वचस्त्रिवर्गमात्रप्रदायकत्वात्सुरप्रलंभकमिति भावः । अन्यत्स्वामिवत् ॥ २ ॥ अत्राक्षिपति भगवान्—नन्विति । कुत इत्यात्मनोऽधिकपदार्थाभावमाह । पदाद्राज्याच्च्युतेः । व्यसनाद्विपदः ध्वंसाद्वा । "'व्यसनं विपदि ध्वंसे' इति कोशात् । दुरत्ययात् चिरस्थायिनः । अर्थकृच्छ्राद्धनहानेः । भवतस्त्वत्कृतात् । विनिग्रहाद्दंडात् । विश्वनाथः—ननु वारुणपाशबंधभयान्नरकभयाद्वाऽऽत्मानं दातु मिच्छसीति तत्राह—अर्थकृच्छ्राद् द्रव्योपार्जनकष्टात् । असाधुवादात् भगवद्भक्ता ब्राह्मणवंचका भवंतीति यथा बलिरिति वैष्णवलोकदुष्कीर्त्तिवादात् ॥ ३ ॥ पुनराक्षिपति—नन्विति । इति भाव इति । "परमोऽनुग्रहो दंडो भृत्येषु प्रभुणार्पितः । बालो न वेद तत्तन्वि बंधुकृत्यममर्षणः" ॥ इत्युक्तेः । "बिभर्षि दंडं खलनिग्रहाय हिताय चेच्छातनुभिः शरीरिणाम्" इतींद्रोक्तेश्चेत्याशयः ॥ ४ ॥ पुनराक्षिपति—नन्विति । गुरुर्हितकर्त्ता । विभ्रंशं मदभ्रंशरूपम् । चक्षुर्ज्ञानम् 'चक्षुर्ज्ञाने दृगिंद्रिये' इति धरणिः । देवानां तत्कामितैश्वर्यदानात्परमहितैषी नेति भावः ॥५॥ यस्मिन् त्वयि । रूढेन दृढेन । वैरस्यानुबंधेनाधिक्येन । विबुधेतरा दैत्याः 'विबुधा दैत्यबुद्धज्ञेतराः' इति कोशात् । सिद्धिं भुक्तिमुक्तिलक्षणाम् ॥ ६ ॥ ७ ॥ स्वस्य संबंधित्वं द्योतयन्नाह—किं चेति । त्वद्भक्तः प्रह्रादः । तत्पुत्रो विरोचनस्तत्पुत्रत्वादहं पौत्रः भवदीयानां भक्तानां सम्मतः मान्यः । हिंसां विषदानमत्तगजाग्र

किमात्मनाऽनेन जहाति योंततः किं रिक्थहारैः स्वजनाख्यदस्युभिः ॥ किं जायया संसृतिहेतुभूतया मर्त्यस्य गेहैः किमिहायुषो व्ययः ॥ ९ ॥ इत्थं स निश्चित्य पितामहो महानगाधबोधो भवतः पादपद्मम् ॥ ध्रुवं प्रपेदे ह्यकुतोभयं जनाद्भीतः स्वपक्षक्षपणस्य सत्तमः ॥ १० ॥ अथाहमप्यात्मरिपोस्तवांतिकं दैवेन नीतः प्रसभं त्याजितश्रीः ॥ इदं कृतांतांतिकवर्ति जीवितं ययाऽध्रुवं स्तब्धमतिर्न बुध्यते ॥ ११ ॥ श्रीशुक उवाच ॥ तस्येत्थं भाषमाणस्य प्रह्लादो भगवत्प्रियः ॥ आजगाम कुरुश्रेष्ठ राकापतिरिवोत्थितः ॥ १२ ॥ तमिंद्रसेनः स्वपितामहं श्रिया विराजमानं नलिनायतेक्षणम् ॥ प्रांशुं पिशंगांबरमंजनत्विषं प्रलंबबाहुं सुभगं समैक्षत ॥ १३ ॥ तस्मै बलिर्वारुणपाशयंत्रितः समर्हणं नोपजहार पूर्ववत् ॥ ननाम मूर्ध्नाऽश्रुविलोललोचनः सव्रीडनीचीनमुखो बभूव ह ॥ १४ ॥ स तत्र हासीनमुदीक्ष्य सत्पतिं सुनंदनंदाद्यनुगैरुपासितम् ॥ उपेत्य भूमौ शिरसा महामना ननाम मूर्ध्ना पुलकाश्रुविह्वलः ॥ १५ ॥ प्रह्राद उवाच ॥ त्वयैव दत्तं पदमैंद्रमूर्जितं हृतं तदेवाद्य तथैव शोभनम् ॥ मन्ये महानस्य कृतो ह्यनुग्रहो विभ्रंशितो यच्छ्रिय आत्ममोहनात् ॥ १६ ॥ यया हि विद्वानपि मुह्यते यतस्तत्को विचष्टे गतिमात्मनो यथा ॥ तस्मै नमस्ते जगदीश्वराय वै नारायणायाखिलोकसाक्षिणे ॥ १७ ॥

हस्य पात्रमित्याशयेनाह । पितामह इति । भवदीयानां संमतः । यत आविष्कृतः साधुवादो यस्य । त्वमेव परमः आश्रयो यस्य सः । अतो भवतो विपक्षेण विद्विषा हिरण्यकशिपुना विचित्रवैशसं हिंसां संप्रापितोऽपि देहादीनामसारतां निश्चित्याकुतोभयं ध्रुवं च भवतः पादपद्ममेव प्रपेदे । अथ तस्मादहमपि दैवेन तस्यैव भाग्येन तवांतिकं नीत इति चतुर्णामन्वयः ॥ ८ ॥ अंतत आयुषोंते । रिक्थहारैः पुत्रैः । इह गेहेषु केवलमायुषो व्यय एव न तु सुखं किंचित् ॥ ९ ॥ स प्रसिद्धो महान् । स्वपक्षं दैत्यकुलं क्षपयतीति तथा तस्यापि ॥ १० ॥ प्रसभं बलात्त्याजिता श्रीर्यस्य । यया श्रिया स्तब्धमतिः सन्पुमानिदं जीवितमध्रुवं न बुध्यते । कथंभूतम् । कृतांतस्यांतिकवर्ति मृत्योः सन्निहितम् ॥ ११ ॥ राकापतिः पूर्णेंदुः ॥ १२ ॥ अंजनत्विषं श्यामम् ॥ १३ ॥ स्वकृताहंकारादिरूपापराधस्मरणेन सव्रीडं नीचीनमधोमुखं यस्य सः ॥ १४ ॥ शिरसा नमन्नेवोपेत्य मूर्ध्ना ननाम । बलेस्तत्कृतमनुग्रहं दृष्ट्वा पुलकैरश्रुभिश्च विक्लवो विह्वलः ॥ १५ ॥ त्वयैवेति । न ह्यैंद्रं पदमेतदीयं त्वयाऽपहृतं किं तु स्वीयमेव पुनः स्वीकृतं तच्च शोभनमेव कृतम् । तत्र हेतुः । मन्य इति । यद्यस्माच्छ्रीरेव यदात्ममोहनं तस्माद्विभ्रंशितः ॥ १६ ॥ मोहनत्वमेवाह । यया श्रिया विद्वानपि यतः

प्रक्षेपादिना । तस्यैव प्रह्लादस्यैव ॥ ८ ॥ आत्मना देहेन । संसृतेर्हेतुभूतया "पुंसः स्त्रिया मिथुनीभावमेतं तयोर्मिथो हृदयग्रंथिमाहुः" इत्यत्र स्त्रीसंगस्य संसृतिहेतुभूतहृदयग्रंथिशब्दवाच्यत्वोक्तेः । 'भिद्यते हृदयग्रंथिः' इत्यत्र हृदयग्रंथिभेद एव संसृतिनाशको ध्वनितोतः संसृतिकारणं ह्येवेति ॥ ९ ॥ १० ॥ स्तब्धमतिरुच्छृंखलधीः ॥ ११ ॥ तस्य बलेः ॥ १२ ॥ सुभगं सर्वलोकप्रियम् । पिशंगम्पीतम् ॥ १३ ॥ तस्मै प्रह्लादाय ॥ १४ ॥ स प्रह्लादः । 'हारिं सुनंदाद्यनुगैः' इत्यपि क्वचित्पाठः ॥ १५ ॥ तच्च स्वीकरणम् । तत्र शोभनत्वे ॥ १६ ॥ संयतः जितेंद्रियः । न चात्र तव दत्तापहारलक्षणो दोषोऽपि स्नेहेन पुत्रहस्ते दत्त

श्रीशुक उवाच ॥ तस्यानुशृण्वतो राजन्प्रह्लादस्य कृतांजलेः ॥ हिरण्यगर्भो भगवानुवाच मधुसूदनम् ॥ १८ ॥ बद्धं वीक्ष्य पतिं साध्वी तत्पत्नी भयविह्वला ॥ प्रांजलिः प्रणतोपेंद्रं बभाषेऽवाङ्मुखी नृप ॥ १९ ॥ विंध्यावलिरुवाच ॥ क्रीडाऽर्थमात्मन इदं त्रिजगत्कृतं ते स्वाम्यं तु तत्र कुधियोऽपर ईश कुर्युः ॥ कर्तुः प्रभोस्तव किमस्यत आवहंति त्यक्तह्रियस्त्वदवरोपितकर्तृवादाः ॥ २० ॥ ब्रह्मोवाच ॥ भूतभावन भूतेश देवदेव जगन्मय ॥ मुंचैनं हृतसर्वस्वं नायमर्हति निग्रहम् ॥ २१ ॥ कृत्स्ना तेऽनेन दत्ता भूर्लोकाः कर्मार्जिताश्च ये ॥ निवेदितं च सर्वस्वमात्माऽविक्लवया धिया ॥२२॥ यत्पादयोरशठधीः सलिलं प्रदाय दूर्वांकुरैरपि विधाय सतीं सपर्याम् ॥ अप्युत्तमां गतिमसौ भजते त्रिलोकीं दाश्वानविक्लवमनाः कथमार्तिमृच्छेत् ॥ २३ ॥

संयतोऽपि मुह्यति तत्तस्यां सत्यां कोऽन्यः पुमानात्मनो गतिं तत्त्वं यथावद्विचष्टे पश्यति । तस्मै महाकारुणिकाय ॥१७॥ तस्य प्रह्लादस्यानुशृण्वत उवाचेति ॥ किंचित्तद्वक्तुं प्रवृत्त इत्यर्थः ॥१८॥ तदैव विंध्यावलिरपि वक्तुं प्रवृत्ता तां च संमानयन्हिरण्यगर्भः क्षणं तूष्णीं स्थितोऽतस्तस्या एव वाक्यं प्रथममवतारयति । बद्धं वीक्ष्येति ॥ १९ ॥ त्रिजगतः कर्तुः प्रभोः पालकस्यास्यतः संहर्तुश्चेश्वरस्य तवान्ये किमावहंति किं समर्पयंति । त्वयाऽवरोपितः कर्तृवादः कर्तारः स्वतंत्रा वयमिति वादमात्रमपि येषां ते । तथापि त्यक्तलज्जास्तत्र स्वाम्यं कुर्युः । अयं भावः । लोकत्रयं मयाऽर्पितं तृतीयपादाय देहं समर्प्य प्रतिश्रुतमृतं करोमीति देहादिषु स्वाम्याविष्कारेण ब्रुवन्नयं कुबुद्धिर्निर्लज्जश्च यतस्त्वमेव सर्वस्यापि स्वामी अतो मंदबुद्धिमेनं केवलं कृपया विमुच्य पालयेति ॥ २० ॥ तदेवं प्रह्लादस्य विंध्यावलेश्च परमार्थोक्त्या प्रसन्नो हरिः । ब्रह्मा तु लोकदृष्ट्यैव विज्ञापयति भूतभावनेति त्रिभिः ॥ २१ ॥ निग्रहानर्हत्वे हेतुः । कृत्स्नेति । सर्वस्वमेवाह । आत्मेति अविक्लवया अविह्वलया ॥ २२ ॥ तदेव कैमुत्यन्यायेनाह । यस्य तव पादयोः सलिलमात्रमपि प्रदाय सर्वोऽपि जन उत्तमां गतिं प्राप्नोति तस्मै तुभ्यमसौ बलिस्त्रिलोकीं दाश्वान्दत्तवान्स आर्तिं कथं प्राप्नुयात् ॥ २३ ॥

स्यापि मोदकादेरहिताशंकया पुनराच्छिद्य नीतवतः पितुर्यथा तथेत्यर्थः ॥ १७ ॥ इत्यर्थ इति । अन्यथा बद्धं वीक्ष्येति वक्ष्यमाणवचनं विरुध्येतेति भावः ॥ १८ ॥ तदैव ब्रह्मोक्तिसमये एव । तां विन्ध्यावलिम् । अतः सांत्वनार्थत्वादेव । तस्या विंध्यावल्याः । ननु ब्रह्मसंमुखे वक्तुं कथं प्रवृत्ता तस्यातिज्येष्ठत्वादिति चेद् ग्रथांतरसंमत्या तन्न दोष इत्याह–"अन्यत्र लज्जा कर्त्तव्या स्त्रिया श्वशुरसंनिधौ । गुणानुकथने विष्णोस्त्यक्तलज्जा सदा भवेत् ॥" इति श्वशुरपदं गुरुजनोपलक्षकम् । अवाङ्मुखी अधोमुखी । राजपत्नीनां सभ्यसंभाषणं न दोषाय द्रौपद्यादिषु दृष्टत्वादिति त्वं जानास्येवेति द्योतयन्नाह–नृपेति ॥ १९ ॥ अत्राशयमाह–अयं भाव इति । अयं मत्पतिः ॥ २० ॥ निग्रहं बंधनम् ॥ २१ ॥ आत्मा देहस्तद्रूपं सर्वस्वमित्यर्थः ॥ २२ ॥ तदेव निग्रहानर्हत्वमेव । अशठधीर्निष्कपटमनाः । अविक्लवमना अव्याकुलचेताः ॥ २३ ॥

श्रीभगवानुवाच ॥ ब्रह्मन्यमनुगृह्णामि तद्विशो विधुनोम्यहम् ॥ यन्मदः पुरुषः स्तब्धो लोकं मां चावमन्यते ॥ २४ ॥ यदा कदाचिज्जीवात्मा संसरन्निजकर्मभिः ॥ नानायोनिष्वनीशोऽयं पौरुषीं गतिमाव्रजेत् ॥ २५ ॥ जन्मकर्मवयोरूपविद्यैश्वर्यधनादिभिः ॥ यद्यस्य न भवेत्स्तंभस्तत्रायं मदनुग्रहः ॥ २६ ॥ मानस्तंभनिमित्तानां जन्मादीनां समंततः ॥ सर्वश्रेयःप्रतीपानां हंत मुह्येन्न मत्परः ॥ २७ ॥ एष दानवदैत्यानामग्रणीः कीर्तिवर्धनः ॥ अजैषीदजयां मायां सीदन्नपि न मुह्यति ॥ २८ ॥ क्षीणरिक्थश्च्युतः स्थानात्क्षिप्तो बद्धश्च शत्रुभिः ॥ ज्ञातिभिश्च परित्यक्तो यातनामनुयापितः ॥ २९ ॥ गुरुणा भर्त्सितः शप्तो जहौ सत्यं न सुव्रतः ॥ छलैरुक्तो मया धर्मो नायं त्यजति सत्यवाक् ॥ ॥ ३० ॥

तस्य विशोऽर्थान् । नन्वर्थापहारः कोऽयमनुग्रहस्तत्राह । यन्मदः यैरर्थैर्मदो यस्य सः । अत एव स्तब्धोऽनम्रः सन् । मदस्तंभहेतूनामर्थानामपहार एवानुग्रह इत्यर्थः ॥ २४ ॥ दुर्लभं पुरुषजन्म कथंचिल्लब्धवतो जीवस्य जन्मादिनिमित्तो गर्वो महाहानिकरस्तस्य च नाशो मदनुग्रहादेवेत्याह यदेति द्वाभ्याम् । अनीशः परतंत्रः सन्निजैः कर्मभिर्नाना योनिषु कृमिकीटकादिषु संसरन् ॥ २५ ॥ तत्र पौरुष्यां गतौ जन्मादिभिरपि यस्य यदि स्तंभो न भवेत्तर्ह्ययं मदनुग्रह एव ॥ २६ ॥ कथं तर्हि ध्रुवादिभ्योऽर्थसंपदो ददासीति चेत्तत्राह । मान एव स्तंभोऽनम्रता तस्य निमित्तभूतानां समंततः सर्वशः सर्वश्रेयःप्रतिकूलानां जन्मादीनां सत्त्वेऽपि जन्मादिभिरिति वा । हंतेति खेदे । हे ब्रह्मन्मत्परो न मुह्येदतो भक्तस्येच्छया संपदोऽपि ददामि । अभक्तस्तु मुह्येदिति तदपहाररूपमेव तस्यानुग्रहं करोमीति भावः ॥ २७ ॥ अस्य चेदानीं मत्परत्वादन्यैर्दुष्प्रापमपि दास्यामीति वक्तुं तस्य मोहाभावमाह एष इति त्रिभिः ॥ २८ ॥ २९ ॥ न ह्येतस्मिन्कुले कश्चिन्निःसत्त्वः कृपणः पुमानित्यादिना छलैरेव मया धर्म उक्तस्तथाऽपि तं धर्ममयं न त्यज

अर्थापहारस्यानुग्रहत्वे आक्षिपति–नन्विति । अत एवार्थमत्तत्वादेव । इत्यर्थ इति । "अनुग्रहोऽयं भवता कृतो हि नो राज्यानुबंधाय दमो यदृच्छया" इति कृष्णं प्रति जरासंधबद्धराजन्योक्तेः । "असतः श्रीमदांधस्य दारिद्र्यं परमञ्जनम् " इति श्रीदशमोक्तेश्चेति भावः । विशो धनानि "विट् पुंसि मनुजे वैश्ये प्रजापुत्रीहरित्सु च । स्त्रियां प्रवेशे वा पुंसि धने चाथ नपुंसकम् ॥ " इति ॥ २४ ॥ न च सर्वस्यानुग्राह्यजीवस्य धनानि हराम्येव कस्यचिन्न हरामि कस्मैचिदतिशयेन ददामीति मदनुग्रहस्य लोकैरतर्क्यस्यानेकविधत्वमस्तीति मुख्यं मदनुग्रहं शृण्वित्याह–यदेति । तस्य गर्वस्य ॥ २५ ॥ आदिना परिजनग्रहः । अस्य जीवस्य । स्तंभो गर्वः । " स्थूणाभिमानी स्तंभौ स्तः स्तम्बौ तु पत्रगुच्छकौ ॥" इति निरुक्तेः ॥ २६ ॥ अत्र प्रतिबंद्याशंकते–कथमिति । सत्त्वेपीति । पदद्वयानयनापेक्षया तृतीयांते समस्ते पदे बोध्ये । ' मानस्तंभनिमित्तैश्च जन्मादिभिः समंततः ' इति पाठकल्पना कार्या । इति भाव इति । अभक्तस्याज्ञत्वेन मोहसंभवात्तन्मोहनिवृत्त्यर्थमुचितमेव तत्संपदपहरणमिति तात्पर्यम् ॥ २७ ॥ अस्य बलेः । सीदन्नपि धनापहारबंधनादिना पीडितोऽपि ॥ २८ ॥ क्षिप्तः तिरस्कृतः.। यातनां तीव्रवेदनाम् । अनुयापितः प्रापितः ॥ २९ ॥ भर्त्सितो वाचा तिरस्कृतः । अतो धर्मत्यागाभावात् ॥ ३० ॥

एष मे प्रापितः स्थानं दुष्प्रापममरैरपि ॥ सावर्णेरंतरस्यायं भवितेंद्रो मदाश्रयः ॥ ३१ ॥ तावत्सुतलमध्यास्तां विश्वकर्मविनिर्मितम् ॥ यत्राधयो व्याधयश्च क्लमस्तंद्रा पराभवः ॥ नोपसर्गा निवसतां संभवंति ममेक्षया ॥ ३२ ॥ इंद्रसेन महाराज याहि भो भद्रमस्तु ते ॥ सुतलं स्वर्गिभिः प्रार्थ्यं ज्ञातिभिः परिवारितः ॥ ३३ ॥ न त्वामभिभविष्यंति लोकेशाः किमुतापरे ॥ त्वच्छासनातिगान्दैत्यांश्चक्रं मे सूदयिष्यति ॥ ३४ ॥ रक्षिष्ये सर्वतोऽहं त्वां सानुगं सपरिच्छदम् ॥ सदा सन्निहितं वीर तत्र मां द्रक्ष्यते भवान् ॥ ३५ ॥ तत्र दानवदैत्यानां संगात्ते भाव आसुरः ॥ दृष्ट्वा मदनुभावं वै सद्यः कुंठो विनंक्ष्यति ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे अष्टमस्कंधे बलिवामनसंवादो नाम द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीशुक उवाच ॥ इत्युक्तवंतं पुरुषं पुरातनं महानुभावोऽखिलसाधुसंमतः ॥ बद्धांजलिर्बाष्पकलाकुलेक्षणो भक्त्युद्गलो गद्गदया गिराऽब्रवीत् ॥ १ ॥ बलिरुवाच ॥ अहो प्रणामाय कृतः समुद्यमः प्रपन्नभक्तार्थविधौ समाहितः ॥ यल्लोकपालैस्त्वदनुग्रहोऽमरैरलब्धपूर्वोऽपसदेऽसुरेऽर्पितः ॥ २ ॥

त्यतः सत्यवाक् ॥ ३० ॥ मे मया । अहमेवाश्रयः पालको यस्य सः ॥ ३१ ॥ स्थानं प्रापित इति यदुक्तं तदेव स्थानमाह । तावत्सावर्णिमन्वंतरपर्यंतं सुतलमध्यास्तामधिवसत्वित्यर्थः । यद्यस्मिन्वसतां व्याध्यादयो ममेक्षया न संभवंति ॥ ३२ ॥ एवं ब्रह्माणं प्रत्युक्त्वा करुणापरवशः साक्षाद्बलिं प्रत्याह इंद्रसेनेति चतुर्भिः ॥ ३३ ॥ त्वच्छासनमतिगच्छंत्यतिवर्तंत इति तथा तान् ॥ ३४ ॥ तथाऽपि भगवद्वियोगात्तदनिच्छंतं प्रत्याह । सदेति ॥ ३५ ॥ संगाद्य आसुरो भावः स सद्यः कुंठो मंदः सन् विनंक्ष्यति ॥ ३६ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे टीकायां द्वाविंशोऽध्यायः ॥ २२ ॥ ॥ त्रयोविंशे बलौ याते सुतलं सपितामहे ॥ उपेंद्रेण दिवं गत्वा पूर्ववन्मोदते हरिः ॥ १ ॥ बाष्पस्य कलाभिर्बिंदुभिराकुले ईक्षणे यस्य । भक्त्या उद्गल उत्कंठः ॥ १ ॥ अहो त्वत्प्रणाममहिमा यदर्थं कृतः समुद्यम एव प्रपन्नानां भक्तानां

अमरैरपि विनाश्वमेधशतं प्राप्तुमशक्यम् ॥ ३१ ॥ इत्यर्थ इति । यावदिंद्रत्वं न यास्यत्ययं तावत्सुतललोके वसत्विति भावः । क्लमः ग्लानिः । तंद्रा आलस्यम् । उपसर्गाः पिशाचादिकृतोपद्रवाः । ईक्षया दर्शनेन ॥ ३२ ॥ किं मृतवदेक एव यास्यामीति चेदाह—ज्ञातिभिरिति ॥ ३३ ॥ ननु तत्र गतं मामिंद्रादयः पराभविष्यंत्येव तत्राह—न त्वामिति । तत्रत्यदैत्या मे शासनं न करिष्यंति बद्ध्वा पातितत्वादित्यत्राह—त्वदिति ॥ ३४ ॥ तथापि भगवता सांत्वितेऽपि । तत्र सुतले ॥ ३५ ॥ ननु तत्र कुसंगदोषोऽस्त्येवेति चेदाह—तत्र लोके । आसुरोऽहंकारमदादिरूपः । अनुभावं प्रभावं दर्पघ्नत्वादिरूपम् । दृष्ट्वा ज्ञात्वा । कुंठः छिन्नः ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥ उपेंद्रेण वामनेन सह । हरिरिंद्रः ( १ ) । बाष्पस्य नेत्रजलस्य ॥ १ ॥ अभक्तेऽपि मयीत्यहो अद्भुतम् । अपसदेऽधमे । " असभ्याधमपुण्येषु सुखिन्यपसदो मतः " इति वारतान्तवेः। अत्राशयमाह—अयं भाव इति ॥ २ ॥

श्रीशुक उवाच ॥ इत्युक्त्वा हरिमानम्य ब्रह्माणं सभवं ततः ॥ विवेश सुतलं प्रीतो बलिर्मुक्तः सहासुरैः ॥३॥ एवमिंद्राय भगवान्प्रत्यानीय त्रिविष्टपम् ॥
पूरयित्वाऽदितेः काममशासत्सकलं जगत् ॥४॥ लब्धप्रसादं निर्मुक्तं पौत्रं वंशधरं बलिम् ॥ निशाम्य भक्तिप्रवणः प्रह्राद इदमब्रवीत् ॥ ५ ॥ प्रह्राद
उवाच ॥ नेमं विरिंचो लभते प्रसादं न श्रीर्न शर्वः किमुतापरे ते ॥ यन्नोऽसुराणामसि दुर्गपालो विश्वाभिवंद्यैरपि वंदितांघ्रिः ॥ ६ ॥ यत्पादपद्म
मकरंदनिषेवणेन ब्रह्मादयः शरणदाश्नुवते विभूतीः ॥ कस्माद्वयं कुसृतयः खलयोनयस्ते दाक्षिण्यदृष्टिपदवीं भवतः प्रणीताः ॥ ७ ॥ चित्रं तवेहित
महोऽमितयोगमायालीलाविसृष्टभुवनस्य विशारदस्य ॥ सर्वात्मनः समदृशो विषमः स्वभावो भक्तप्रियो यदसि कल्पतरुस्वभावः ॥ ८ ॥

योऽर्थस्तस्य विधावभक्तेऽपि तस्य संपादने समाहितोऽप्रमत्तः स्थितः । कुतः । यद्येनोद्यमेन लोकपालैरमरैः सत्त्वप्रधानैरप्यलब्धपूर्वस्त्वदनुग्रहोऽपसदे नीचेऽसुरे राजसे मय्य
र्पितः । अयं भावः । परमेश्वराय तुभ्यमहं वराकस्त्रिलोकीं दत्तवानित्येतदास्तां प्रणामोऽपि न सम्यक्कृतः । किं तु तदर्थमुद्यममात्रं कृतं तेन च कर्मतपोदानादिकोटिभिरप्यल
भ्यस्त्वदनुग्रहः संपादितः अहो त्वत्प्रणामप्रभावाश्चर्यमिति ॥ २ ॥ ३ ॥ अशासदुपेंद्रः सन् पालयामास ॥ ४ ॥ ५ ॥ दुर्गपालोऽसि 'रक्षिष्ये सर्वतोऽहं त्वाम्' इत्युक्त
त्वात् ॥ ६ ॥ हे शरणदाश्रयप्रद । ये कुसृतयो दुर्वृत्ताः खलयोनय उग्रजातयश्च ते वयं तस्य भवतो दाक्षिण्यदृष्टेः पदवीं कस्माद्धेतोः प्रणीताः बहुमानेन चित्तानुवर्तनं
दाक्षिण्यं तेन या दृष्टिस्तद्विषयतां प्रापिताः ॥ ७ ॥ भक्तप्रियत्वादिति चेत्तर्ह्येवं तवेहितमहो चित्रम् । किं तत् । सर्वात्मनः समदृशश्च स्वभावो विषम इति यत् । सर्वा
त्मत्वे चित्रचरितत्वे हेतुः । अमिताऽचिंत्या योगमाया तस्या या लीला तया विसृष्टानि विरचितानि भुवनानि येन तस्य । अहो इत्यत्र संधिरार्षः । समदृक्त्वे हेतुः ।

ततो हर्य्यादिनत्युत्तरम् । मुक्तः वारुणपाशैरिति शेषः । विवेश गंतुमुद्यतोभूदित्यर्थः । अन्यथा बलिना सह प्रह्रादस्य " वत्स प्रह्राद भद्रं ते प्रयाहि सुतलालयम् " इति 'प्रविवेश महीबिलम्' इत्युक्तं
प्रवेशनं न संगच्छत इति ॥ ३ ॥ प्रत्यानीय समर्प्य ॥ ४ ॥ निशाम्य दृष्ट्वा । भक्त्या प्रवणो नम्रः । 'क्रमनिम्नमहीभागोदरप्रह्वचतुष्पथे । प्रवणः' इति मेदिनी ॥ ५ ॥ दुर्गेभ्यो दुःखेभ्यः पालयतीति तथा ।
द्वारपालो वा ॥ ६ ॥ अश्नुवते प्राप्नुवंति भुंजते वा अनेकार्थत्वाद्धातूनाम् । कुत्सिता सृतिः पंथा येषां ते कुसृतयः 'सृतिः स्त्री गमने मार्गे' इति मेदिनी ॥ ७ ॥ तत् ईहितम् । लीला विलासः 'लीला केलिविलासयोः'
इति मेदिनी । अकारप्रश्लेषेणाह—अथ वेति । अविषमस्वभाव इति छेदः । इत्यर्थ इति । नहि कल्पतरोः केनचिदपि सार्द्धं प्रीतिर्द्वेषो वा यतो वैषम्यं स्यात्तथापि ये तमाश्रितास्तानेव फलैरापूरयति तद्वत्त्वमपीति भावः ।
न केवलं मादृशभक्तेष्वेव तवैतावाननुग्रहः किं तु भक्तमात्रेषु येषु केष्वपीत्याह—चित्रमिति । हेऽमितयोग अपरिमितयोगैश्वर्य । तवेहितं चारित्रमहो चित्रमत्याश्चर्यं युक्त्यतीतमित्यर्थः । किं तत् समदृशोऽपि तव विषमस्वभाव
इति यत् । किं मे समदृक्त्वलक्षणं तत्राह—मायायाः स्वीयमायाशक्तेर्लीलया विसृष्टानि भुवनानि येन तस्य सर्वस्रष्टुरित्यर्थः । विशारदस्य सर्वाभिज्ञस्य । सर्वात्मनः सर्वेषां चेतयितुः । तेन सर्वेषां तव सृज्यत्वादभिज्ञेयत्वाच्चेतयित
व्यत्वाच्च सर्वेषु तेषु तव समदृक्त्वमेव दृष्टमित्यर्थः । किं मे वैषम्यं दृष्टं तत्राह—भक्तप्रियो यदसीति तेषु सृष्टेषु मध्ये ये भक्तास्तेष्वेव प्रीणाति नान्येष्विति यत् एतदेव वैषम्यमित्यर्थः । तर्हि किं ममैष दोष एव स्थाप्यते
नहिनहि किन्तु महागुण एवेत्याह—कल्पतरुस्वभाव इति । कल्पतरुर्यथाश्रितानामेव कामं पूरयति न त्वनाश्रितानां तथैव त्वं भक्तेष्विति भजनवत्स्वेव तव प्रीतिरिति । वस्तुतस्ते साम्यमेवायातं तदुक्तं त्वयैव "समोऽहं सर्व

श्रीभगवानुवाच ॥ वत्स प्रह्लाद भद्रं ते प्रयाहि सुतलालयम् ॥ मोदमानः स्वपौत्रेण ज्ञातीनां सुखमावह ॥ ९ ॥ नित्यं द्रष्टासि मां तत्र गदापाणिमव स्थितम् ॥ मद्दर्शनमहाह्लादध्वस्तकर्मनिबंधनः ॥ १० ॥ श्रीशुक उवाच ॥ आज्ञां भगवतो राजन्प्रह्लादो बलिना सह ॥ बाढमित्यमलप्रज्ञो मूर्ध्न्याधाय कृतांजलिः ॥ ११ ॥ परिक्रम्यादिपुरुषं सर्वासुरचमूपतिः ॥ प्रणतस्तदनुज्ञातः प्रविवेश महाबिलम् ॥ १२ ॥ अथ होशनसं राजन्हरिर्नारायणोंतिके ॥ आसीनमृत्विजां मध्ये सदसि ब्रह्मवादिनाम् ॥ १३ ॥ ब्रह्मन्संतनु शिष्यस्य कर्मच्छिद्रं वितन्वतः ॥ यत्तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवेत् ॥ १४ ॥ शुक्र उवाच ॥ कुतस्तत् कर्मवैषम्यं यस्य कर्मेश्वरो भवान् ॥ यज्ञेशो यज्ञपुरुषः सर्वभावेन पूजितः ॥ १५ ॥ मंत्रतस्तंत्रतश्छिद्रं देशकालार्हवस्तुतः ॥ सर्वं करोति निश्छिद्रमनुसंकीर्तनं तव ॥ १६ ॥

विशारदस्य सर्वज्ञस्य । अथवा भक्तप्रियत्वेऽपि तव वैषम्यं नास्त्येव यतः कल्पतरुस्वभावः सन् भक्तप्रियोऽसि । न हि कल्पतरुराश्रितानामेव कामान्पूरयन्नपि विषमो भवतीत्यर्थः ॥ ८ ॥ ९ ॥ मद्दर्शनेन यो महाह्लादस्तेन ध्वस्तं कर्मनिबंधनमज्ञानं यस्य ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ कर्म वितन्वतः शिष्यस्य यच्छिद्रमंतरं न्यूनं जातं तत्संतनु विस्तारय संधत्स्व । यजमानं विना कथं संधातव्यमिति न वाच्यमित्याह । यत्तदिति । ब्रह्मदृष्टं ब्राह्मणैर्दृष्टमेव समं भवेत् । किं पुनरनुष्ठितमित्यर्थः ॥ १४ ॥ भवान्यस्य सर्वेणापि भावेन देहगेहादिना वस्तुमात्रेण पूजितस्तस्य कर्मसु कुतो वैषम्यम् । कथंभूतः । कर्मणामीश्वरः प्रवर्तकः यज्ञेशो यज्ञफलप्रदः । यज्ञमयश्च पुरुषः ॥ ॥ १५ ॥ आस्तां तावत्पूजा । यस्मान्मंत्रतः स्वरादिभ्रंशेन । तंत्रतो व्युत्क्रमादिना । देशतः कालतश्च अर्हतः पात्रतः । वस्तुतश्च दक्षिणादिना यच्छिद्रं न्यूनं तत्सर्वं तव

भूतेषु न मे द्वेष्योस्ति न प्रियः । ये भजंति च मां भक्त्या मयि ते तेषु चाप्यहम् ॥" इति विश्वनाथः ॥ ८ ॥ वत्स प्रिय "वत्सं वक्षः प्रिये पुंसि तर्णके पुत्रवर्षयोः" इति धरणिः ॥ ९ ॥ ननु मां किमर्थमधोलोके त्वद्दर्शनशून्ये प्रेषयसीति चेदाह—नित्यमिति । तत्र सुतले । गदापाणिमिति । तत्रागतभवद्रिपुनाशार्थं सशस्त्र एव स्थास्यामि 'रक्षिष्ये सर्वतोऽहं त्वाम्' इति प्रतिज्ञातत्वात् । ननु गदया बाह्यशत्रुनाशेऽप्यंतस्थाज्ञानशत्रुनाशः कथं स्यादितिचेदाह—मद्दर्शनेति । महाह्लादः स्वरूपसाक्षात्कारानंदलक्षणं ज्ञानम् "विज्ञानमानंदं ब्रह्म" इति श्रुतेरानंदापरपर्यायमहाह्लादज्ञानशब्दयोरेकार्थत्वात्तेन ध्वस्तं नष्टं कर्मभिर्निबध्नातीति कर्मनिबंधनमज्ञानं यस्य स तथा । तथा च मद्दर्शनजसाक्षात्कारेणाज्ञाननिवृत्त्या तव जीवन्मुक्तिसुखमपि भविष्यतीति भावः ॥ १० ॥ मूर्ध्न्याधायेत्यपि क्वचित्पाठः ॥ ११ ॥ तेन भगवताऽनुज्ञातः 'वत्स प्रह्लाद भद्रं ते' इत्यादिना ज्ञप्तः ॥ १२ ॥ अथ बलिसुतलप्रवेशानंतरम् । लोकसंग्रहार्थमुशनसं भार्गवम् । अंतिके समीपे स्थितम् ॥ १३ ॥ शिष्यस्य बलेः । इत्यर्थ इति । ब्राह्मणकृतं सर्वेषां सर्वफलप्रदं भवतीति भावः । तदुक्तम् "विप्रैः संपादितं यस्य तीर्थस्नानव्रतादिकम् । उपवासः क्रतुर्होमः संपन्नं तस्य तत्फलम्" इति धर्मविवृतौ 'ब्रह्मविद्ब्रह्म ईरितम्' इति कोशात् । समं न्यूनाधिक्यवर्जितं परिपूर्णमित्यर्थः । 'समस्तुल्ये च पूर्णे च लक्ष्मीनारायणेस्ययोः' इति निरुक्तिकोशात् ॥ १४ ॥ १५ ॥ निश्छिद्रं पूर्णं करोतीत्यर्थः । तदुक्तम् "यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु । न्यूनं संपूर्णतां याति तं वंदे हरिमच्युतम् ॥" इति । किञ्च "प्रमादात्कुर्वतां

तथाऽपि वदतो भूमन्करिष्याम्यनुशासनम् ॥ एतच्छ्रेयः परं पुंसां यत्तवाज्ञाऽनुपालनम् ॥ १७ ॥ श्रीशुक उवाच ॥ अभिनंद्य हरेराज्ञामुशना भगवानिति ॥ यज्ञच्छिद्रं समाधत्त बलेर्विप्रर्षिभिः सह ॥ १८ ॥ एवं बलेर्महीं राजन्भिक्षित्वा वामनो हरिः ॥ ददौ भ्रात्रे महेंद्राय त्रिदिवं यत्परैर्हृतम् ॥ १९ ॥ प्रजापतिपतिर्ब्रह्मा देवर्षिपितृभूमिपैः ॥ दक्षभृग्वंगिरोमुख्यैः कुमारेण भवेन च ॥ २० ॥ कश्यपस्यादितेः प्रीत्यै सर्वभूतभवाय च ॥ लोकानां लोकपालानामकरोद्वामनं पतिम् ॥२१॥ वेदानां सर्वदेवानां धर्मस्य यशसः श्रियः ॥ मंगलानां व्रतानां च कल्पं स्वर्गापवर्गयोः ॥ ॥ २२ ॥ उपेंद्रं कल्पयांचक्रे पतिं सर्वविभूतये ॥ तदा सर्वाणि भूतानि भृशं मुमुदिरे नृप ॥ २३ ॥ ततस्त्विंद्रः पुरस्कृत्य देवयानेन वामनम् ॥ लोकपालैर्दिवं निन्ये ब्रह्मणा चानुमोदितः ॥ २४ ॥ प्राप्य त्रिभुवनं चेंद्र उपेंद्रभुजपालितः ॥ श्रिया परमया जुष्टो मुमुदे गतसाध्वसः ॥ २५ ॥ ब्रह्मा शर्वः कुमारश्च भृग्वाद्या मुनयो नृप ॥ पितरः सर्वभूतानि सिद्धा वैमानिकाश्च ये ॥२६॥ सुमहत्कर्म तद्विष्णोर्गायंतः परमाद्भुतम् ॥ धिष्ण्यानि स्वानि ते जग्मुरदितिं च शशंसिरे ॥२७॥ सर्वमेतन्मयाख्यातं भवतः कुलनंदन ॥ उरुक्रमस्य चरितं श्रोतॄणामघमोचनम् ॥ २८ ॥ पारं महिम्न उरुविक्रमतो गृणानो यः पार्थिवानि विममे स रजांसि मर्त्यः ॥ किं जायमान उत जात उपैति मर्त्य इत्याह मंत्रदृगृषिः पुरुषस्य यस्य ॥ २९ ॥

नामानुकीर्तनमात्रमेव निश्छिद्रं करोतीति ॥ १६ ॥ १७ ॥ हरेराज्ञां प्रतिनंद्य बलेर्यज्ञच्छिद्रं समाधत्त संदधे । पाठांतरे समाधाय तदाज्ञां संपादितवानिति शेषः ॥१८॥ ॥ १९ ॥ देवाश्च ऋषयश्च भूमिपाश्च मनवस्तैः सहितः ॥ २० ॥ २१ ॥ ननु लोकादीनां पतिरिंद्रोऽस्त्येव । सत्यम् । तथाऽपि वेदादीनां कल्पं पालने दक्षं वामनमुपेंद्रं कल्पयांचक्रे ॥ २२ ॥ २३ ॥ देवयानेन तत्संज्ञकमार्गेण विमानेनेति वा ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ एतच्चरितमाख्यातमिति विशेषोक्त्याऽन्यान्यपि संतीत्युक्तम् ॥ २८ ॥ तानि तर्हि निःशेषाणि वर्णनीयानीत्यपेक्षायामाह । पारमिति । उरु बहुधा विक्रमतो विष्णोर्महिम्नः पारं यो गृणानो भवति स मर्त्यः पार्थिवानि रजांस्यपि विममे गणितवान् । यथा पार्थिवपरमाणुगणनमशक्यं तथा विष्णोर्गुणगणनमप्यशक्यमित्यर्थः । तथा च मंत्रः । " विष्णोर्नु कं वीर्याणि " इति । एतदेव मंत्रांतरार्थं सूचयन्नाह । यस्य पुरुषस्य पुर्णमहिम्नः पारं मंत्रदृगृषिर्वसिष्ठ इति एवमाह । कथम् । किं जायमानो जातो वा उपैति न कोऽपीति वदन्ननंतत्वेनैवाहेत्यर्थः । तथा च मंत्रः ।

कर्म प्रच्यवेताध्वरेषु यत् । स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥" इति ॥ १६ ॥ यद्यपि तव नामस्मरणाद्येव सर्वकर्मसांगतापादकं किं पुनस्तव साक्षाद्दर्शनादिकं तथापीति । भूमन्निति । सर्वोत्कृष्टस्य तवाज्ञापालनमुचितमेवेत्याह ॥ १७ ॥ पाठांतरे 'समाधाय' इत्येवंरूपे सम्यगवसंधाय ॥ १८ ॥ महीं भिक्षित्वा पृथ्वीभिक्षामिषेण त्रिलोकीं भिक्षित्वा ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ तदा उपेंद्रकल्पनावसरे ॥ २३ ॥ तत उपेंद्रकल्पनोत्तरम् ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ निःशेषाणि समग्राणि । इत्यर्थ इति । पार्थिवपरमाणुगणनं तु कथंचिच्छक्यमपि विष्णुगुणगणनं तु सर्वथाऽशक्यमनंतत्वादिति भावः । अत्र प्रमाण

य इदं देवदेवस्य हरेरद्भुतकर्मणः ॥ अवतारानुचरितं शृण्वन्याति परां गतिम् ॥ ३० ॥ क्रियमाणे कर्मणीदं दैवे पित्र्येऽथ मानुषे ॥ यत्रय त्रानुकीर्त्येत तत्तेषां सुकृतं विदुः ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणेऽष्टमस्कंधे वामनावतारचरिते त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि हरेरद्भुतकर्मणः ॥ अवतारकथामाद्यां मायामत्स्यविडंबनम् ॥ १ ॥ यदर्थमदधाद्रूपं मात्स्यं लोकजुगुप्सितम् ॥ तमःप्रकृति दुर्मर्षं कर्मग्रस्त इवेश्वरः ॥ २ ॥ एतन्नो भगवन्सर्वं यथावद्वक्तुमर्हसि ॥ उत्तमश्लोकचरितं सर्वलोकसुखावहम् ॥ ३ ॥ सूत उवाच ॥ इत्युक्तो विष्णुरातेन भगवान्बादरायणिः ॥ उवाच चरितं विष्णोर्मत्स्यरूपेण यत्कृतम् ॥ ४ ॥ श्रीशुक उवाच ॥ गोविप्रसुरसाधूनां छंदसामपि चेश्वरः ॥ रक्षामिच्छंस्तनूर्धत्ते धर्मस्यार्थस्य चैव हि ॥ ५ ॥ उच्चावचेषु भूतेषु चरन्वायुरिवेश्वरः ॥ नोच्चावचत्वं भजते निर्गुणत्वाद्धियो गुणैः ॥ ६ ॥

"न ते विष्णो जायमानो न जातो देव महिम्नः परमं तमाप" इति ॥ २९ ॥ य इदं शृण्वन् भवति स परां गतिं याति ॥ ३० ॥ सुकृतं यथावत्कृतं विदुः ॥ ३१ ॥ इति श्रीमद्भागवते अष्टमस्कंधे टीकायां त्रयोविंशतितमोऽध्यायः ॥ २३ ॥ चतुर्विंशे प्रसंगेन मत्स्यरूपस्य शार्ङ्गिणः ॥ लीलोच्यते यतः सत्यव्रतरक्षा महार्णवे ॥ १ ॥ तनुं तनुं विदर्श्यादौ निजैश्वर्यनिदर्शनात् ॥ मत्स्यं पृच्छति पृथ्वीशो लीलया वामनोपमम् ॥ २ ॥ मायया मत्स्यविडंबनं मत्स्यरूपानुकरणं यस्यां निरूप्यते ताम् ॥ १ ॥ ननु कस्मादकस्मादेव मत्स्यावतारश्रवणेच्छा श्रीवामनसादृश्यादित्याह यदर्थमिति द्वाभ्याम् । दुर्मर्षं दुःसहम् ॥ २ ॥ बलेरनुग्रहाय जुगुप्सितमपि याचकरूपं धृत्वा ववृध इति युक्तमुक्तं यदर्थं तु लोकजुगुप्सितं मात्स्यं रूपमधारयदेतन्नो यथावद्वक्तुमर्हसीत्यर्थः ॥ ३ ॥ ४ ॥ सामान्येनावतारप्रयोजनमाह । गोविप्रेति ॥ ५ ॥ जुगुप्सितत्वं परि

माह—तथा चेति । व्याख्यातोऽयं मंत्रो द्वितीयस्कंधाष्टमाध्याये स्वामिचरणैरित्युपरम्यते । एतदेव विष्णुगुणगणनाशक्यत्वमेव । इत्यर्थ इति । गणनाशक्यत्वादनंतमित्याहेति भावः । अत्र प्रमाणं मंत्रांतरमाह—तथा चेति । स्पष्टार्थोयं मंत्रः ॥ २९ ॥ इदं पूर्वमुक्तम् ॥ ३० ॥ दैवे यज्ञादौ । पित्र्ये श्राद्धादौ । मानुषे विवाहादौ । तेषां कीर्तयताम् । तत् कर्म । यथावत्कृतं यथोक्तफलदम् । विदुः शास्त्रज्ञा इति शेषः ॥ ३१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे त्रयोविंशोऽध्यायः ॥ २३ ॥ "मनवे ह वै प्रातः अवनेज्यमुदकमाजह्रुर्यथेदं पाणिभ्यामवनेजनायाहरंत्येव तस्यावनेनिजानस्य मत्स्यः पाणी आपेदे स हास्मै वाचमुवाच बिभृहि मा पारयिष्यामि त्वेति कस्मान्मा पारयिष्यसीत्यौघ इमाः सर्वाः प्रजा निर्वोढा ततस्त्वां पारयितास्मीति कथं ते भृतिरिति स होवाच यावद्वै क्षुल्लका भवामो बह्वी वैनस्तावन्नाष्ट्रा भवत्युत मत्स्य एव मत्स्यं गिलति कुंभ्यां मयि बिभरासि स यदा तामतिवर्द्धा अथ कर्षूं खात्वा तस्यां मा बिभरासि स यदा तामतिवर्द्धा अथ मा समुद्रमभ्यवहरासि तर्हि वातिनाष्ट्रो भवितास्मीति शश्वद्ध झष आस स हि ज्येष्ठं वर्द्धते अथ तिथिं७ स मां तदौघ आगंता तन्मा नावमुपकल्प्योपासासै स ओघ उत्थिते नावमापद्यासै ततस्त्वा पारयितास्मि" इत्यादिशतपथब्राह्मणप्रथमकांडाष्टमाध्याये षष्ठप्रपाठके वर्णितां कथामनुवदति श्रीव्यासः । प्रसंगेनावतारकथाप्रसंगेन । यतः येन कृतेति शेषः ( १ ) । तनुं सूक्ष्मम् । तनुं शरीरम् । आदौ पूर्वम् । पश्चान्निजैश्वर्यनिदर्शनात् लीलया वामनोपमं मत्स्यम् ( २ ) । आद्यां दशावतारेष्वादेर्मत्स्यावतारस्येमामाद्याम् । मायामत्स्यस्यानुकरणमेव स्वयं त्वमायिक एव मत्स्य एवेति भावः । यद्वा—स्वस्यालौकिकैः प्रभावैर्मायामत्स्यस्य विडंबनं तिरस्कारो यस्याः सा तथा ॥ १ ॥ अत्राशंकते—नन्विति । तिर्यग्योनित्वान्निंद्यम् । कर्मग्रस्तो जीवः ॥ २ ॥ इत्यर्थ इति । इह कस्यानुग्रहार्थं लोकनिंद्यं रूपं धृतवानिति वदेति भावः ॥ ३ ॥ ४ ॥ साधवो वैदिकाचारनिष्ठाः । छंदसां वेदानाम् । अर्थस्य शिष्टानां सुमार्गसंपादितधनस्य चौरादिभ्यो रक्षार्थमित्यर्थः ॥ ५ ॥ धियो गुणैः "सत्त्वं रजस्तम

आसीदतीतकल्पांते ब्राह्मो नैमित्तिको लयः ॥ समुद्रोपप्लुतास्तत्र लोका भूरादयो नृप ॥७॥ कालेनागतनिद्रस्य धातुः शिशयिषोर्बली ॥ मुखतो निःसृतान्वेदान्हयग्रीवोंतिकेहरत् ॥ ८ ॥ ज्ञात्वा तद्दानवेंद्रस्य हयग्रीवस्य चेष्टितम् ॥ दधार शफरीरूपं भगवान्हरिरीश्वरः ॥ ९ ॥ तत्र राजऋषिः कश्चिन्नाम्ना सत्यव्रतो महान् ॥ नारायणपरोऽतप्यत्तपः स सलिलाशनः ॥ १० ॥ योऽसावस्मिन्महाकल्पे तनयः स विवस्वतः ॥ श्राद्धदेव इति ख्यातो मनुत्वे हरिणाऽर्पितः ॥ ११ ॥ एकदा कृतमालायां कुर्वतो जलतर्पणम् ॥ तस्यांजल्युदके काचिच्छफर्येकाऽभ्यपद्यत ॥ १२ ॥ सत्यव्रतोंजलिगतां सह तोयेन भारत ॥ उत्ससर्ज नदीतोये शफरीं द्रविडेश्वरः ॥ १३ ॥ तमाह साऽतिकरुणं महाकारुणिकं नृपम् ॥ यादोभ्यो ज्ञातिघातिभ्यो दीनां मां दीनवत्सल ॥ कथं विसृजसे राजन्भीतामस्मिन्सरिज्जले ॥ १४ ॥ तमात्मनोऽनुग्रहार्थं प्रीत्या मत्स्यवपुर्धरम् ॥ अजानन्रक्षणार्थाय शफर्याः स मनो दधे ॥ १५ ॥ तस्या दीनतरं वाक्यमाश्रुत्य स महीपतिः ॥ कलशाप्सु निधायैनां दयालुर्निन्य आमश्रम् ॥ ॥ १६ ॥ सा तु तत्रैकरात्रेण वर्धमाना कमंडलौ ॥ अलब्ध्वात्मावकाशं वा इदमाह महीपतिम् ॥ १७ ॥ नाहं कमंडलावस्मिन्कृच्छ्रं वस्तुमिहोत्सहे ॥ कल्पयौकः सुविपुलं यत्राहं निवसे सुखम् ॥१८॥ स एनां तत आदाय न्यधादौदंचनोदके ॥ तत्र क्षिप्ता मुहूर्तेन हस्तत्रयमवर्धत ॥ १९ ॥

हरति । धियो गुणैर्यान्युच्चावचानि भूतानि तेषु नियंतृत्वेन चरन्नपीश्वरो नोच्चावचत्वं भजते निर्गुणत्वात् । कुतः पुनः शुद्धसत्त्वमयैर्मत्स्याद्याकारैरुच्चावचत्वशंकेति भावः ॥ ६ ॥ विशेषतो मत्स्यावतारप्रयोजनमाह आसीदिति त्रिभिः । ब्रह्मणो निद्रायां भवो ब्राह्मस्तेनैव निमित्तेन जातो नैमित्तिकः । समुद्रे उपप्लुता निमग्नाः ॥ ७ ॥ अंतिके निःसृतान् ॥ ८ ॥ शफरीरूपं मत्स्यरूपम् ॥ ९ ॥ प्रयोजनांतरं लीलाप्रकारं चाह तत्र राजऋषिरित्यादि यावत्समाप्ति ॥ १० ॥ स एव श्राद्धदेव इति ख्यातः ॥ ११ ॥ कृतमालायां नद्याम् ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ यत्राहं सुखं निवसामि तदोकः स्थानं कल्पय ॥ १८ ॥ औदंचनोदके मणि

इति गुणा बुद्धेर्न चात्मनः'' इति वक्ष्यमाणत्वात्सत्त्वादिभिर्यानि भूतानि जायंते तेषु धीपदं प्रकृतिपरमत्र ज्ञेयम् । निर्गुणत्वात् प्रकृतेः परस्तात् । ''आदित्यवर्णं तमसः परस्तात्'' इति श्रुतेः ॥ ६ ॥ तत्र लये । नृपालनव्यग्रत्वात्त्वैतज्ज्ञानं नास्तीत्याह–नृपेति ॥ ७ ॥ हयग्रीवो दैत्यः ॥ ८ ॥ तत् वेदहरणरूपम् ॥ ९ ॥ तत्र तदा ॥ १० ॥ महाकल्पो हि यद्यपि ब्रह्मण आयुर्षोते भवति तथापि दर्शितव्याकस्मिककल्पापेक्षया दैनंदिनकल्पस्यापि महाकल्पत्वमस्तीत्युक्तमस्मिन्महाकल्प इति । अर्पितः स्थापितः ॥ ११ ॥ तस्य सत्यव्रतस्य । 'प्रोष्ठी तु शफरी द्वयोः' इत्यमरादत्र स्त्रीपुंसप्रयोगोक्तौ न विरोधः शंक्यः ॥१२॥ १३ ॥ तं सत्यव्रतम् । ययादोभ्यो जलजंतुभ्यः । 'यादांसि जलजंतवः' इत्यमरः ॥ १४ ॥ तं विष्णुम् । स सत्यव्रतः ॥ १५ ॥ तस्याः शफर्याः । स राजा । एनां मत्सीम् ॥ १६ ॥ सा मत्सी । तत्र कलशजले । कमंडलावलब्ध्वात्मावकाशं यथा स्यात्तथा । इदं वक्ष्यमाणं वचः ॥ १७ ॥ यत्र ओकसि ॥ १८ ॥ स राजा । एनां मत्सीम् । ततः कमंडलुजलात् । न्यधात्स्थापितवान् । ''पात्रं हस्तत्रयव्यानमुदंचनमुदीरितम्'' इति स्वामी । तत्र औदं

न म एतदलं राजन्सुखं वस्तुमुदंचनम् ॥ पृथु देहि पदं मह्यं यत्त्वाऽहं शरणं गता ॥ २० ॥ तत आदाय सा राज्ञा क्षिप्ता राजन्सरोवरे ॥ तदावृत्त्यात्मना तोयं महामीनोऽन्ववर्धत ॥ २१ ॥ नैतन्मे स्वस्तये राजन्नुदकं सलिलौकसः ॥ निधेहि रक्षायोगेन ह्रदे मामविदासिनि ॥ २२ ॥ इत्युक्तः सोऽनयन्मत्स्यं तत्रतत्राविदासिनि ॥ जलाशये संमितं तं समुद्रे प्राक्षिपज्झषम् ॥ २३ ॥ क्षिप्यमाणस्तमाहेदमिह मां मकरादयः ॥ अदंत्यतिबला वीर मां नेहोत्स्रष्टुमर्हसि ॥ २४ ॥ एवं विमोहितस्तेन वदता वल्गुभारतीम् ॥ तमाह को भवानस्मान्मत्स्यरूपेण मोहयन् ॥ ॥ २५ ॥ नैवंवीर्यो जलचरो दृष्टोऽस्माभिः श्रुतोऽपि च ॥ यो भवान्योजनशतमह्नाऽभिव्यानशे सरः ॥ २६ ॥ नूनं त्वं भगवान्साक्षाद्धरिर्नारायणोऽव्ययः ॥ अनुग्रहाय भूतानां धत्से रूपं जलौकसाम् ॥ २७ ॥ नमस्ते पुरुषश्रेष्ठ स्थित्युत्पत्त्यप्ययेश्वर ॥ भक्तानां नः प्रपन्नानां मुख्यो ह्यात्मगतिर्विभो ॥ २८ ॥ सर्वे लीलाऽवतारास्ते भूतानां भूतिहेतवः ॥ ज्ञातुमिच्छाम्यदो रूपं यदर्थं भवता धृतम् ॥ २९ ॥ न तेऽरविंदाक्ष पदोपसर्पणं मृषा भवेत्सर्वसुहृत्प्रियात्मनः ॥ यथेतरेषां पृथगात्मनां सतामदीदृशो यद्वपुरद्भुतं हि नः ॥ ३० ॥ श्रीशुक उवाच ॥ इति ब्रुवाणं नृपतिं जगत्पतिः सत्यव्रतं मत्स्यवपुर्युगक्षये ॥ विहर्तुकामः प्रलयार्णवेऽब्रवीच्चिकीर्षुरेकांतजनप्रियः प्रियम् ॥ ३१ ॥

कस्थे जले ॥ १९ ॥ २० ॥ २१ ॥ रक्षायोगेन रक्षाया योगेनोपायेन । यथा महाह्रदप्राप्तेरर्वाक् जलं विना न शुष्येयं तेनोपायेन निधेहि । अविदासिनि अनुपक्षये ॥ २२ ॥ संमितं तत्तज्जलाशयपरिमितम् ॥ २३ ॥ २४ ॥ २५ ॥ अभिव्यानशेऽभितो व्याप्तवान् ॥ २६ ॥ २७ ॥ मुख्यः सत्य आत्मा च गतिश्चाश्रयः ॥ २८ ॥ २९ ॥ हे अरविंदाक्ष पृथगात्मनां देहाद्यभिमानिनां सतामितरेषां पदोपसर्पणं यथा मृषा भवेत्तथा सर्वसुहृत्प्रियात्मनस्तव पदोपसर्पणं मृषा न भवेत् । यद्यस्मान्नो भक्तानामद्भुतं वपुरदीदृशो दर्शितवानसि । पाठांतरे पृथगात्मनो भेददर्शिनः पुंसः । असतां परिच्छिन्नानां पदोपसर्पणं यथा मृषेत्यर्थः ॥ ३० ॥ एकांतजना भक्ताः प्रिया यस्य ॥ ३१ ॥

चने ॥ १९ ॥ यत् यतः ॥ २० ॥ तत उदंचनात् । सा मत्सी । तत् तस्य सरोवरस्य । आत्मना देहेन । आवृत्य व्याप्य । 'सोयम्' इत्यपि पाठः । तत्र सोऽयं मत्स्य इत्यर्थः ॥ २१ ॥ अविदासिनीति । विपूर्वकस्य 'दसु–उपक्षये' इत्यस्य विदास इति घञि रूपं विदास उपक्षयस्तदभावोऽविदासस्तद्वतीत्यर्थः ॥ २२ ॥ स राजा । तत्रतत्र तस्मिंस्तस्मिन् ॥ २३ ॥ तं राजानम् । इदं वक्ष्यमाणम् । न हि वीराः शरणागतं त्यजंतीति सूचनायाह–वीरेति । इह समुद्रे । आदिना शिशुमारादिग्रहः ॥ २४ ॥ तेन मत्स्यरूपिणा । तं मत्स्यम् ॥ २५ ॥ एवंवीर्यो दिनसमाप्तितोऽर्वाग्बहुयोजनवर्द्धनशीलः । योजनशतं सरो द्वीपांतरापेक्षया समुद्रैकदेशभूतमेव ग्राह्यमन्यस्य तथा संभवाभावादश्रुतेः । 'अह्नाय व्यानशे' इति पाठे । अह्नाय झटिति ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ पाठांतरे 'पृथगात्मनोऽसताम्' इति पाठे । इत्यर्थ इति व्याख्येयम् । उभयोः सेव्यसेवकयोरयोग्यत्वादिति भावः ॥ ३० ॥ ३१ ॥

श्रीभगवानुवाच ॥ सप्तमेऽद्यतनादूर्ध्वमहन्येतदरिंदम ॥ निमंक्ष्यत्यप्ययांभोधौ त्रैलोक्यं भूर्भुवादिकम् ॥ ३२ ॥ त्रिलोक्यां लीयमानायां संवर्ता भसि वै तदा ॥ उपस्थास्यति नौः काचिद्विशाला त्वां मयेरिता ॥ ३३ ॥ त्वं तावदोषधीः सर्वा बीजान्युच्चावचानि च ॥ सप्तर्षिभिः परिवृतः सर्व सत्त्वोपबृंहितः ॥ ३४ ॥ आरुह्य बृहतीं नावं विचरिष्यस्यविक्लवः ॥ एकार्णवे निरालोके ऋषीणामेव वर्चसा ॥ ३५ ॥ दोधूयमानां तां नावं समी रेण बलीयसा ॥ उपस्थितस्य मे शृंगे निबध्नीहि महाहिना ॥ ३६ ॥ अहं त्वामृषिभिः साकं सहनावमुदन्वति ॥ विकर्षन्विचरिष्यामि यावद्ब्राह्मी निशा प्रभो ॥ ३७ ॥ मदीयं महिमानं च परं ब्रह्मेति शब्दितम् ॥ वेत्स्यस्यनुगृहीतं मे संप्रश्नैर्विवृतं हृदि ॥ ३८ ॥

अप्ययांभोधौ प्रलयार्णवे । भूर्भुवआदिकमित्यर्थः ॥ ३२ ॥ संवर्ताभसि प्रलयोदके । त्वामुपस्थास्यति प्राप्स्यति ॥ ३३ ॥ ओषधीः आदायेति शेषः ॥ ३४ ॥ ऋषीणा मेवालोकेन विचरिष्यसि ॥ ३५ ॥ महाहिना वासुकिना ॥ ३६ ॥ ३७ ॥ मे मयाऽनुगृहीतं प्रसादीकृतं हृदि अपरोक्षं वेत्स्यसि ज्ञास्यसि । त्वया कृतैः संप्रश्नैर्मया

इत्यर्थ इति । संधिरत्रार्षः । यद्वा—भूर्भुव आदिर्यस्य तत् कं स्वर्गमित्यर्थः ॥ ३२ ॥ तदा तस्मिन् । मत्प्रेरिता नौः ॥ ३३ ॥ तावत् निश्चितम् ॥ ३४ ॥ आलोकेन तपस्तेजसा ॥ ३५ ॥ ॥ ३६ ॥ भीतमुत्साहयन्नाह--प्रभो इति । मत्कृपया समर्थो भविष्यसीत्यभिप्रायः । ब्राह्मी निशेति । यद्यप्ययं ब्रह्मदिनगतचाक्षुषमन्वंतरमध्य एव भगवदिच्छयैवाकस्मिकप्रलयोऽभूत् तदपि त्रैलोक्यमज्ज नाद्दैनंदिनप्रलयसाम्यदृष्ट्या भगवत्क्रीडेच्छामंतःस्मृत्य निर्व्याकुलो ब्रह्मापि कश्चित्कालं सुष्वाप । तदनुसारेण गौण्या वृत्त्या ब्राह्मी निशेत्युक्तमिति भागवतामृतानुसारी संदर्भः । तत्र भागवतामृतं यथा "मध्ये मन्वंतरस्यैव मुनेः शापान्मनुं प्रति । प्रलयोऽसौ बभूवेति पुराणे क्वचिदीर्यते ॥ अयमाकस्मिको जातश्चाक्षुषस्यांतरे मनोः । प्रलयः पद्मनाभस्य लीलयैवेति कुत्रचित् ॥" इति । किं च दक्षस्य मानसकायिकप्रजासृष्ट्यन्यथा नुपपत्तेरेव प्रलयोयमवश्यं मंतव्य एव तदुक्तं चतुर्थे "चाक्षुषे त्वंतरे प्राप्ते प्राक्सर्गे कालविद्रुते । यः ससर्ज प्रजा इष्टाः स दक्षो दैवचोदितः ॥" इति । प्रलयस्य चातुर्विध्यमपि नानुपपन्नम् । अस्य क्षुद्रप्रलयस्य नैमित्तिक एवांतर्भावात् । अत एव पृथिव्युद्धरणे हिरण्याक्षवधोऽपि श्रीवराहदेवेन चाक्षुषप्रलयान्त एव स्वायंभुवान्ते पृथिव्युद्धरणे हिरण्याक्षसंभवाभावात्तदुक्तं तत्रैव "उत्तानपादवंश्यानां तनयस्य प्रचेतसाम् । दक्षस्यैव दितिः पुत्री हिरण्याक्षो दितेः सुतः ॥ कल्पारंभे तदा नास्ति सुतोत्पत्तिर्मनोरपि । क्वासौ प्राचेतसो दक्षः क्व दितिः क्व दितेः सुतः ॥ यतः कालद्वयोद्भूतं श्रीवराहस्य चेष्टितम् । एकत्रैवाह मैत्रेयः क्षत्तुः प्रश्नानुसारतः" ॥ इति । एवमिहापि कल्पद्वयोद्भूतं मत्स्यचेष्टितं स्पष्टमविविच्य खल्वेकीकृत्यैवाह श्रीमन्मुनींद्रः । वस्तुतस्तु 'आसीदतीतकल्पान्ते' इत्यादिनोक्ता या शफरी वेदानयनार्था सान्या सत्यव्रतांजलिगता तु चाक्षुषमन्वंतरीया न्यैवेति ज्ञेयम् । श्रीसूतस्तु चाक्षुषीयमत्स्यमेवावतारगणमध्ये गणितवांस्तथा हि "रूपं स जगृहे मात्स्यं चाक्षुषोदधिसंप्लवे । नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् ॥" इति । श्रीस्वामिचरणास्तु—अत्रेदं चिंत्यमित्युक्त्वा ब्राह्मो लय इति योऽसावस्मिन्महाकल्पे इति चोक्तेरयं महाप्रलयश्चेन्न महाप्रलये पृथिव्यादीनामवशेषः संभवति 'यावद्ब्राह्मी निशा'' इत्युक्तेरयं दैनंदिन एवेति चेन्न सांवर्त्तकैरनावृष्ट्यादिभिर्विनाऽकस्मादेव सप्तमेहनि त्रैलोक्यं निमज्जतीति मत्स्योरनुपपत्तेस्तस्मात्सत्यव्रतस्य ज्ञानाद्युपदेशार्थमाविर्भूतो भगवान्वैराग्यार्थं माययैव मार्कंडेयमिव तत्प्रलयं दर्शयामासेत्याहुरिति विश्वनाथः ॥ ३७ ॥ मदीयं महिमानं महत्त्वं तस्य गुणत्वेनाधे यत्वादाधारस्तस्याहमेव 'ब्रह्मणो हि प्रतिष्ठाहम्' इति श्रीमुखोक्तेर्यदि कश्चिदत्र ब्रह्मपदमाम्नायपरं वदेत्तदापि न दोषः 'वेदो नारायणः साक्षात्' इत्युक्तेः । 'शब्दब्रह्म परब्रह्म ममोभे शाश्वती तनू' इत्युक्तेश्च । शब्दितं

श्रीशुक उवाच ॥ इत्थमादिश्य राजानं हरिरंतरधीयत ॥ सोऽन्ववैक्षत तं कालं यं हृषीकेश आदिशत् ॥ ३९ ॥ आस्तीर्य दर्भान्प्राक्कूलान्राजर्षिः प्रागुदङ्मुखः ॥ निषसाद हरेः पादौ चिंतयन्मत्स्यरूपिणः ॥ ४० ॥ ततः समुद्र उद्वेलः सर्वतः प्लावयन्महीम् ॥ वर्धमानो महामेघैर्वर्षद्भिः समदृश्यत ॥ ४१ ॥ ध्यायन्भगवदादेशं ददृशे नावमागताम् ॥ तामारुरोह विप्रेंद्रैरादायौषधिवीरुधः ॥ ४२ ॥ तमूचुर्मुनयः प्रीता राजन्ध्यायस्व केशवम् ॥ स वै नः संकटादस्मादविता शं विधास्यति ॥ ४३ ॥ सोऽनुध्यातस्ततो राज्ञा प्रादुरासीन्महार्णवे ॥ एकशृंगधरो मत्स्यो हैमो नियुतयोजनः ॥ ४४ ॥ निबद्ध्य नावं तच्छृंगे यथोक्तो हरिणा पुरा ॥ वरत्रेणाहिना तुष्टस्तुष्टाव मधुसूदनम् ॥ ४५ ॥ राजोवाच ॥ अनाद्यविद्योपहतात्मसंविदस्तन्मूलसंसारपरिश्रमातुराः ॥ यदृच्छयेहोपसृता यमाप्नुयुर्विमुक्तिदो नः परमो गुरुर्भवान् ॥ ४६ ॥

विवृतं प्रकाशितं संतम् ॥ ३८ ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ वरत्रेण दोरकरूपेण ॥ ४५ ॥ "सागरं तारयिष्यंतं तरिष्यन्निव सागरम् ॥ सत्यव्रतो गुरुत्वेन तुष्टाव हरिमष्टभिः ॥" अत्रेदं चिंत्यम् । किमयं महाप्रलयो दैनंदिनो वेति । तत्र तावद् ब्राह्मो लय इति योऽस्तावस्मिन्महाकल्पे इति चोक्तेर्महाप्रलय इति प्राप्तम् । नेति ब्रूमः । महाप्रलये पृथिव्यादीनामवशेषासंभवात् । यावद्ब्राह्मी निशेत्याद्युक्तिविरोधाच्च । अतो दैनंदिन इति युक्तम् । न चैतदपि संगच्छते सांवर्तकैरनावृष्ट्यादिभिर्विना अकस्मादेव सप्तमेऽहनि त्रैलोक्यं निमंक्ष्यतीति मत्स्योक्तेरनुपपत्तेः । यच्चोक्तं प्रथमस्कंधे । " रूपं स जगृहे मात्स्यं चाक्षुषांतरसंप्लवे ॥ नाव्यारोप्य महीमय्यामपाद्वैवस्वतं मनुम् " इति । तदपि तदा दुर्घटम् । न हि प्रलयद्वयेऽपि महीमय्यां नाव्यारोहः संभवति । न च चाक्षुषमन्वंतरे प्रलयोऽस्ति । तथा च सति सप्तमो मनुर्वैवस्वत इत्यपि दुर्घटं स्यात् । त्वं तावदोषधीः सर्वा इत्यादिनिर्देशोऽपि न संगच्छते । न हि तदा ओषध्यादीनां सत्त्वानां चावशेषः संभवति । तस्मादन्यथा वर्ण्यते नैवायं वास्तवः कोऽपि प्रलयः । किं तु सत्यव्रतस्य ज्ञानोपदेशायाविर्भूतो भगवान्वैराग्यार्थमकस्मात्प्रलयमिव दर्शयामास । यथाऽस्मिन्नेव वैवस्वतमन्वंतरे मार्कंडेयाय दर्शितवान् । तदपेक्षयैव महाकल्पेऽस्मिन्निति विशेषणं संगच्छते। तथा च "ततः समुद्र उद्वेलः सर्वतः समदृश्यत" इति । तस्यैव तथा दर्शनमुक्तमित्येषा दिक् । प्रस्तुतं स्तोत्रं व्याख्यास्यामः ।

वेदांतनिष्ठैः कथितम ॥ ३८ ॥ स राजा । अन्ववैक्षत प्रत्यैक्षत ॥ ३९ ॥ प्राचि कूलं मूलं येषां तांस्तथा "कूलं मूले तटे सैन्यपृष्ठे सूपतडागयोः" इति कोशात् । प्रागुदीचोर्मध्ये ऐशान्यां शीघ्रप्रसादेनाधिष्ठितायां मुखं यस्य सः । यद्वा–प्राक् पूर्वमुदङ्मुखो निषसाद । पश्चाद्दिगंतरमुखोऽप्यद्भुतदर्शनाद्बभूवेत्यर्थः ॥ ४० ॥ ततो नृपतिकर्तृकहारिचिंतनोत्तरम् । उद्वेलस्त्यक्तमर्यादः ॥ ४१ ॥ विप्रेंद्रैः ऋषिभिः ॥ ४२ ॥ ४३ ॥ सः केशवः ॥ ४४ ॥ दोरकरूपेण रज्जुरूपेण । 'वरत्रा रज्जुकक्षयोः' इति मेदिनी । पुंस्त्वमार्षम् ॥ ४५ ॥ सागरं संसारसागरम् । इवेति दर्शितसागरस्य मिथ्यात्वमाह । अत्र प्रलये । इदं विकल्पादि । चिंत्यं विचार्यम् ।

जनोऽबुधोयं निजकर्मबंधनः सुखेच्छया कर्म समीहतेऽसुखम् ॥ यत्सेवया तां विधुनोत्यसन्मतिं ग्रंथिं स भिंद्याद्धृदयं स नो गुरुः ॥ ४७ ॥ यत्सेवयाऽग्नेरिव रुद्ररोदनं पुमान्विजह्यान्मलमात्मनस्तमः ॥ भजेत वर्णं निजमेष सोऽव्ययो भूयात्स ईशः परमो गुरोर्गुरुः ॥ ४८ ॥ न यत्प्रसादायुतभागलेशमन्ये च देवा गुरवो जनाः स्वयम् ॥ कर्तुं समेताः प्रभवंति पुंसस्तमीश्वरं त्वां शरणं प्रपद्ये ॥ ४९ ॥ अचक्षुरंधस्य यथाग्रणीः कृतस्तथा जनस्याविदुषोऽबुधो गुरुः ॥ त्वमर्कदृक् सर्वदृशां समीक्षणो वृतो गुरुर्नः स्वगतिं बुभुत्सताम् ॥ ५० ॥

तत्र नानायोनिषु संसरतः स्वस्य भगवत्कृपयैव तत्प्राप्तिं दृष्ट्वा मुक्तये तमेव प्रार्थयते। अनादिर्याऽविद्या तयोपहता आवृताऽऽत्मनः संविद्येषां तेऽत एवाविद्यामूलैः संसारपरिश्रमैरातुरा इह संसारे यदृच्छया यदनुग्रहादेवोपसृता आश्रिताः संतो यमाप्नुयुः प्राप्नुवंति स भवानेव साक्षान्नो गुरुः सन् ग्रंथिं भिंद्यादित्युत्तरेणान्वयः ॥ ४६ ॥ ननु वैराग्यं विना कुतो मुक्तिस्तर्हि तस्य त्वत्सेवैकफलत्वात्सेवामादिशेत्याशयेनाह । जन इति । अबुधोऽयं जनः असुखं यथा भवति तथा कर्म समीहते ता सुखेच्छाम् । नो हृदयरूपं ग्रंथिं स भिंद्यात् । यतः स एव परमो गुरुः ॥ ४७ ॥ ननु यज्ञदानादिभिः सत्त्वशुद्धिं विना कथं ग्रंथिभेदः स्यात्तत्राह । यत्सेवयेति । यस्य सेवयैव पुमानात्मनो मनसो मलं तमो विजह्यात। एष हीनमलो निजं वर्णं च स्वरूपं भजेत्। स ईशो नो गुरुर्भूयात् । यतः स एव गुरोरपि परमो गुरुः । मलहाने दृष्टांतः । रुद्ररोदनं रुद्रस्य रोदनं रजतम्। "यदरोदीत्तद्रुद्रस्य रुद्रत्वम् ॥ यदश्रवः शीर्यंत तद्रजतं हिरण्यमभवत्" इति श्रुतेः । तद्यथाऽग्नेः संपर्कान्मलं जहाति स्वं वर्णं भजते न तु क्षालनादिभिस्तथा न यज्ञादिभिर्मलत्यागः किं तु त्वत्सेवयैव तेषां तु सेवांगत्वमिति भावः ॥ ४८ ॥ परमेश्वरत्वं परमगुरुत्वं च प्रपंचयन्नाह । नेति । यत्प्रसादस्यायुतभागस्तस्य लेशमात्रमप्यन्ये देवादयः सर्वे समेता अपि स्वयं तन्निरपेक्षाः संतः कर्तुं न प्रभवंति ॥ ४९ ॥ तदेव दृष्टांतेन स्पष्टयन्नाह । अचक्षुरिति । अविदुषो जनस्याबुधोऽविद्वान्गुरुस्तथैव । त्वं तु अर्कप्रकाशवत्स्वत एव दृग्ज्ञानं यस्य सोऽर्कदृक्। अतः सर्वदृशां सर्वेंद्रियाणां समीक्षणः प्रकाशकः अत एव स्वगतिं बोद्धुमिच्छद्भिर्नोऽस्मा

तत्र तावदिति प्रथममित्यर्थे । प्राप्तं खंडयति–नेति ब्रूम इत्यादिना । एतदपि दैनंदिनोऽयं लय इत्यपि । तदपि प्रथमस्कंधोक्तमपि । तदा उपस्थितलये । तथा च सति चाक्षुषमन्वंतरे प्रलयांगीकारे सति । यतो दैनंदिनमहाप्रलययोरयं कोऽपि न तस्माद्धेतोः । अन्यथा प्रकारांतरेण । तदपेक्षयैवाकस्मिकाल्पकालिकदर्शितप्रलयापेक्षयैव । इति दिक् सिद्धांतदेशः । तत्रादौ । संवित् ज्ञानम् । परमपदमत्रत्यमुत्तरत्रान्वेति तेनात्र श्लोके गुरुरूपत्वमुक्तम् ॥ ४६ ॥ अत्राशंकते–नन्विति । तस्य वैराग्यस्य । यस्य तव सेवया हृत् अयते गच्छतीति हृदयोऽहंकारस्तद्रूपम् । पूर्वश्लोकस्य परमपदान्वयादत्र श्लोके परमगुरुरूपत्वमुक्तम् ॥ ४७ ॥ पुनराक्षिपति–नन्विति । गुरोरपि परमो गुरुरनेनात्र श्लोके परात्परगुरुत्वमुक्तम्। रजतस्य रुद्ररोदनत्वे श्रुतिं प्रमाणयति–यदिति । स्पष्टार्था श्रुतिः । तेषां यज्ञादीनाम् । इति भाव इति । सेवैवांगी यज्ञादयस्तदंगा इति तात्पर्यम् ॥ ४८ ॥ ४९ ॥ तदेव त्वां

जनो जनस्यादिशतेऽसतीं मतिं यया प्रपद्येत दुरत्ययं तमः ॥ त्वं त्वव्ययं ज्ञानममोघमंजसा प्रपद्यते येन जनो निजं पदम् ॥ ५१ ॥
त्वं सर्वलोकस्य सुहृत्प्रियेश्वरो ह्यात्मा गुरुर्ज्ञानमभीष्टसिद्धिः ॥ तथापि लोको न भवंतमंधधीर्जानाति संतं हृदि बद्धकामः ॥ ५२ ॥
तं त्वामहं देववरं वरेण्यं प्रपद्य ईशं प्रतिबोधनाय ॥ छिंध्यर्थदीपैर्भगवन्वचोभिर्ग्रंथीन्हृदय्यान्विवृणु स्वमोकः ॥ ५३ ॥ श्रीशुक उवाच ॥
इत्युक्तवंतं नृपतिं भगवानादिपूरुषः ॥ मत्स्यरूपी महांभोधौ विहरंस्तत्त्वमब्रवीत् ॥ ५४ ॥ पुराणसंहितां दिव्यां सांख्ययोगक्रियावतीम् ॥
सत्यव्रतस्य राजर्षेरात्मगुह्यमशेषतः ॥ ५५ ॥ अश्रौषीदृषिभिः साकमात्मतत्त्वमसंशयम् ॥ नाव्यासीनो भगवता प्रोक्तं ब्रह्म सनातनम् ॥ ५६ ॥
अतीतप्रलयापाय उत्थिताय स वेधसे ॥ हत्वाऽसुरं हयग्रीवं वेदान्प्रत्याहरद्धरिः ॥ ५७ ॥ स तु सत्यव्रतो राजा ज्ञानविज्ञानसंयुतः ॥ विष्णोः प्रसादा
त्कल्पेऽस्मिन्नासीद्वैवस्वतो मनुः ॥ ५८ ॥ सत्यव्रतस्य राजर्षेर्मायामत्स्यस्य शार्ङ्गिणः ॥ संवादं महदाख्यानं श्रुत्वा मुच्येत किल्बिषात् ॥ ५९ ॥
अवतारो हरेर्योऽयं कीर्तयेदन्वहं नरः ॥ संकल्पास्तस्य सिध्यंति स याति परमां गतिम् ॥ ६० ॥

र्भिर्गुरुर्वृतोऽसि ॥५०॥ किं च प्राकृतो गुरुरनर्थहेतुरित्याह । जन इति । आदिशते उपदिशति । असतीं मतिमर्थकामादिमतिम् । तमः संसारम् ॥५१॥ ननु तर्हि सर्वोऽपि लोको मामेव किं नोपसरति अज्ञानादित्याह। त्वमिति । प्रियश्चासावीश्वरश्च ॥ ५२ ॥ अहं तु त्वामेव शरणं यामीत्याह । तं त्वामिति ॥ प्रतिबोधनायोपदेशाय । अर्थदीपैः परमार्थप्रकाशकैः । हृदये भवान् ग्रंथीनहंकारादीन् । स्वमोकः स्वं रूपं विवृणु प्रकाशय ॥ ५३ ॥ नृपतिं प्रति ॥ ५४ ॥ पुराणसंहितां मत्स्यपुराणमशेषतोऽब्रवीदित्यनुषंगः ॥ ५५ ॥ ५६ ॥ अतीतः पूर्वो यः प्रलयस्तस्यापायेऽवसाने ॥ ५७ ॥ ५८ ॥ ५९ ॥ योऽयं हरेरवतारस्तं यः प्रकीर्तयेत् ॥ ६० ॥

विना कोऽपि किंचित्कर्तुं न समर्थ इत्युक्तमेव । तथैव अंधानुगांधवत् । एतेन "श्रोत्रियं ब्रह्मनिष्ठम्" इति श्रुत्यर्थः सूचितः ॥ ५० ॥ विद्वानेव गुरुः कार्य इत्याह—किं चेति । एतेन यद्वदंति लोका यादृश तादृशगुरुरपि शिष्यभावनया कल्याणकृद्भवतीति प्रत्युक्तम् । न हि क्लीबसेवया कदापि स्त्री गर्भं धृत्वा पुत्रं प्रसूते तथैवाज्ञगुरुसेवया कदाचिदपि शिष्यो ज्ञानं प्राप्य मोक्षं न प्राप्नोति । यथा स्त्री दृढांगयुवपुरुषसेवया सद्य एव गर्भं धृत्वा संततिमुत्पादयति तथैव विद्वद्गुरुसेवया ज्ञानं प्राप्य मोक्षमपीति भावः । यादृशो गुरुः कर्तव्यस्तन्निरूपितमस्माभिराद्यपद्यव्याख्याशतके । एकादशस्कंधे च निरूपयिष्याम इत्यलम् ॥ ५१ ॥ पुनराक्षिपति—ननु तर्हीति । 'अवजानंति मां मूढाः' इत्यादिना श्रीगीतासूक्तेः । 'न ते जानंति मां मूढा हृदिस्थं य इदम्' इत्याद्युक्तेः ॥ ५२ ॥ वरेण्यं वरणीयम् ॥ ५३ ॥ ५४ ॥ सांख्ययोगक्रियावतीं ज्ञानभक्तिकर्मयोगप्रतिपादिकाम् । आत्मनां जीवानाम् । गुह्यं गोप्यमात्मतत्त्वमश्रौषीदिति परेणान्वेति ॥ ५५ ॥ तत्किमिति चेदाह—सनातनं ब्रह्मेति ॥ ५६ ॥ ५७ ॥ ज्ञानं शास्त्रीयम् । विज्ञानमनुभवः ॥ ५८ ॥ ५९ ॥ तस्य कीर्त्तयितुः ।

प्रलयपयासि धातुः सुप्तशक्तेर्मुखेभ्यः श्रुतिगणमपनीतं प्रत्युपादत्त हत्वा ॥ दितिजमकथयद्यो ब्रह्म सत्यव्रतानां तमहमखिलहेतुं जिह्ममीनं नतो ऽस्मि ॥६१॥ इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां संहितायामष्टमस्कंधे मत्स्यावतारचरितानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

दितिजं हयग्रीवं हत्वा तेनापनीतं श्रुतिगणं प्रत्युपादत्त प्रत्यानीतवान् । सत्यव्रतानां सत्यव्रतस्य ऋषीणां च । छत्रिणो गच्छंतीतिवल्लिंगसमवायाद्बहुवचनम् । जिह्ममीनं मायामत्स्यम् ॥ ६१ ॥ इति श्रीमद्भागवतेऽष्टमस्कंधे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ ॥ समाप्तोऽयमष्टमस्कंधः ॥८॥

स च कीर्त्तयिता ॥ ६० ॥ लिंगस्य छत्रादिचिह्नस्य । समवायः समुदाये प्रवेशस्तस्मात् । एतच्च पंचमस्कंधे वर्णितमपि विशेषतः श्रीदशमस्कंधे 'श्यालः स्वस्नोरथाग्रहीत्' इत्यत्र वर्णयिष्याम इति । दितिजमसुरमित्यर्थः । 'रूढिर्योगमपहरति' इति न्यायात् ॥ ६१ ॥ ॥ अथास्य माहात्म्यम् ॥ "विष्णुरुवाच । अष्टमस्कन्ध इह मे नेत्रद्वयमुदाहृतः । तस्य श्रवणमात्रेण ब्रह्महा शुद्धिमाप्नुयात् ॥ १ ॥ अत्र ते वर्णयिष्यामि कथां पापविनाशिनीम् । विदर्भनगरे राजा जिष्णुजित्संज्ञकोभवत् ॥ २ ॥ मृगयासक्तचेताः स जगाम गहनं वनम् । ददर्श राक्षसं तत्र शूलहस्तं नरांतकम् ॥ ३ ॥ तत्संमुखं जगामाशु जयाकांक्षी धरापतिः ॥ दैत्य उवाच ॥ किमर्थमागतो ह्यत्र मंदभाग्य नराधिप ॥ ४ ॥ तुरगं मम भक्षार्थं दत्वा सत्त्वरमन्यतः । स्वगेहं वा याहि राजन्मात्र तिष्ठ ममाग्रतः ॥ ५ ॥ न चेत्त्वामपि भक्षामि श्रुत्वेत्थं धनुरग्रहीत् । दैत्योपि वृक्षमुत्पाट्य युयुधे तेन सत्वरम् ॥ ६ ॥ छिन्ने वृक्षे मुष्टिघातं राज्ञि दैत्यश्चकार ह । तदा च कुपितो राजा पत्रिणा तच्छिरोऽच्छिनत् ॥ ७ ॥ देवांतकश्च तद्भ्राता निशम्य भ्रातरं मृतम् । रुरोद बहुधा तत्र भ्रातृघ्नं घातये कथम् ॥ ८ ॥ इति संचिंत्य मनसा सूदो भूत्वा जगाम तम् । उवाच भूमिपायेत्थं मत्समः पाचको भुवि ॥ ९ ॥ न विद्यतेऽन्यो राजेंद्र नाहञ्चानृतवाचकः । मत्कृतपाकार्पणेनैव तृप्यंति पितृदेवताः ॥ १० ॥ श्रुत्वा राजा दैत्यवचः पाकाध्यक्षं चकार तम् । एकदा श्राद्धदिवसे पक्त्वा दत्त्वा नरामिषम ॥ ११ ॥ ब्राह्मणानां भोजनार्थं भ्रातृप्रतिचिकीर्षया । तज्ज्ञात्वा तद्गुरुर्विप्रः शशाप श्रीधरो नृपम् ॥ १२ ॥ राक्षसो भव दुर्बुद्धे नरमांसप्रदानतः । स गुरोर्वचनं श्रुत्वा प्रोवाचेंद्रजितो नृपः ॥ १३ ॥ शापयोग्यस्त्वहं नास्मि नापराधोऽस्ति मे गुरो । दत्तं नृमांसं सूदेनेत्युक्त्वा राजा पपात ह ॥१४॥ श्रीगुरोः पादयोस्तर्हि गुरुस्तुष्टमना नृपम् । उवाच द्वादशाब्दांते तव शापः प्रणश्यति ॥ १५ ॥ ततः स राक्षसो भूत्वा नदीतीरे चरन् क्षुधा । बभक्ष ह मुनेः पुत्रं ब्रह्महत्यायुतोऽभवत् ॥ १६ ॥ शापांते तां विचार्याशु त्यक्तराज्यो वनं गतः । ब्रह्महत्याविनाशार्थं शोचमानः सदा नृपः ॥ १७ ॥ तीर्थाटनं कृतवता कदाचिद्गौतमाश्रमे । अष्टमस्कंधजा तेन श्रुता भागवती कथा ॥ १८ ॥ ब्रह्महत्या गता तस्य मृतो वैकुंठमाययौ । संदेहो नात्र कर्तव्यो नासत्यं मम भाषितम् ॥ १९ ॥ " इति यो यज्ञाद्यवतारैश्च ह्यरक्षन्निखिलान्मनून् । भक्तसर्वाघशमनं तं वंदे नंदनंदनम् ॥ १ ॥ भावार्थदीपिकाटीकाप्रकाशोष्टमकांडगः । यथामति कृतो गौडश्रीवंशीधरशर्मणा ॥ २ ॥ ॥ इति श्रीखरडपत्तनवास्तव्यपण्डितवंशीधरशर्मविरचित श्रीमद्भागवतभावार्थदीपिकाप्रकाशेऽष्टमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तश्चायमष्टमस्कन्धः ॥ ८ ॥

---

अयं श्रीभावार्थदीपिकाप्रकाशसमलंकृतभावार्थदीपिकासमेतश्रीमद्भागवताष्टमस्कन्धो मुम्बय्यां श्रीकृष्णदासात्मजक्षेमराजश्रेष्ठिना स्वकीये " श्रीवेङ्कटेश्वर " ( स्टीम् ) मुद्रणालये मुद्रयित्वा प्राकाश्यमानीयत ।

इति श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते श्रीमद्भागवते अष्टमस्कन्धः समाप्तः ॥ ८ ॥

अथ श्रीधरीयटीकया वंशीधरशर्मकृततद्भावार्थदीपिकाप्रकाश
टीकया चोपेते श्रीमद्भागवते नवमस्कन्धप्रारंभः ॥ ९ ॥

नवमस्कंधः


अश्विनीकुमार:
सुकन्या:
च्यवनः
अंबरीषः
सुदर्शनः
दुर्वासः
कृत्या
सगरपुत्राः
कपिलः
सौदासराजा
ऋषिपत्नी
सहस्रार्जुनः
परशुरामः
श्रीरामः
सीता
हनुमानः
देवयानी
ययातिपुत्राः
शर्मिष्ठा
ययातिः

श्रीगणेशाय नमः ॥ राजोवाच ॥ मन्वंतराणि सर्वाणि त्वयोक्तानि श्रुतानि मे ॥ वीर्याण्यनंतवीर्यस्य हरेस्तत्र कृतानि च ॥ १ ॥ योऽसौ सत्यव्रतो नाम राजर्षिर्द्रविडेश्वरः ॥ ज्ञानं योऽतीतकल्पांते लेभे पुरुषसेवया ॥ २ ॥ स वै विवस्वतः पुत्रो मनुरासीदिति श्रुतम् ॥ त्वत्तस्तस्य सुताश्चोक्ता इक्ष्वाकुप्रमुखा नृपाः ॥ ३ ॥ तेषां वंशं पृथग्ब्रह्मन्वंश्यानुचरितानि च ॥ कीर्तयस्व महाभाग नित्यं शुश्रूषतां हि नः ॥ ४ ॥ ये भूता ये भविष्याश्च भवंत्यद्यतनाश्च ये ॥ तेषां नः पुण्यकीर्तीनां सर्वेषां वद विक्रमान् ॥५॥ सूत उवाच ॥ एवं परीक्षिता राज्ञा सदसि ब्रह्मवादिनाम् ॥ पृष्टः प्रोवाच भगवाञ्छुकः परमधर्मवित् ॥६॥ श्रीशुक उवाच ॥ श्रूयतां मानवो वंशः प्राचुर्येण परंतप ॥ न शक्यते विस्तरतो वक्तुं वर्षशतैरपि ॥७॥

श्रीगणेशाय नमः ॥ गुणा यं गुणतावाप्त्यै वृणते करुणानिधिम् ॥ तमहं शरणं यामि परमानंदमाधवम् ॥ १ ॥ त्रिगुणाष्टभिरध्यायैर्वैवस्वतसुतान्वयः ॥ नवमे कृष्णसत्कीर्तिप्रसंगाय वितन्यते ॥ २ ॥ एवमुक्तोऽष्टमस्कंधे सद्धर्मः सत्त्वशोधकः ॥ कर्तृपालकवक्त्रादिमन्वादीनां निरूपणैः ॥ ३ ॥ सद्धर्मशुद्धसत्त्वानामंतरंगेशसत्कथा ॥ सूर्यसोमान्वयाख्यानैरधुना संगतोच्यते ॥ ४ ॥ तत्र च । त्रयोदशभिरध्यायैः सूर्यवंशोऽनुवर्ण्यते ॥ एकादशभिरध्यायैः सोमवंशस्ततः परैः ॥ ५ ॥ तत्र तु प्रथमेऽध्याये वैवस्वतसुतान्वये ॥ सोमवंशप्रवेशोक्त्यै सुद्युम्नस्त्रीत्वमुच्यते ॥६॥ उक्तानुवादपूर्वकं वैवस्वतमनोर्वंशं पृच्छति । मन्वंतराणीति पंचभिः ॥१॥२॥३॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

ॐ स्वस्ति श्रीगणेशाय नमः ॥ यशोदानंदनं नत्वा गोपीचीरहरं मुदा ॥ तासामभीप्सितं दातुं कात्यायन्यर्चनार्थितम् ॥ १ ॥ गुणाः सत्यशौचादयः प्रथमस्कंधे पृथिव्युक्ता भक्तवात्सल्यादयो वा । यं करुणायाः कृपायाः निधिम् अधिष्ठानम् । वृणते सेवंते । गुणतायाः श्लाघाहेतुताया द्रव्यनिष्ठाधिकरणतानिरूपिताधेयताया वाऽवाप्त्यै प्राप्त्यर्थम् । यदि भगवानस्मभ्यं स्वस्मिन्वासं दास्यति तर्हि वयं गुणा अन्यथा त्वगुणा एव स्याम इति । न्यायनये हि द्रव्याश्रयस्यैव गुणत्वमिष्यते ते चेश्वरमपि द्रव्यमेवाहुरिति । तमिति यमित्यत्रान्वेति ( १ ) । त्रिभिर्गुण्यंत इति त्रिगुणाः ते च तेऽष्टेति त्रिगुणाष्टौ तैः चतुर्विंशतिभिरित्यर्थः । वैवस्वतः श्राद्धदेवस्तस्य सुतानामिक्ष्वाकुप्रभृतीनाम् । यद्वा—विवस्तेजोऽस्यास्तीति विवस्वांश्चंद्रस्तस्य सुतो वैवस्वतो बुधस्तस्यान्वयः । वैवस्वतस्य सुता इला तस्या अन्वयो वंशः पुरूरवआयुप्रभृतिप्रवृत्तः । एतेन सूर्येंद्वोरुभयोर्वंशवर्णनमत्र क्रियते इति सिद्धम् । वंशवर्णनप्रयोजनं तूपोद्घात एवेत्याह—कृष्णेति । कृष्णकथाप्रसंगाय वंशकथनमिति (२) । सतां वेदानुयायिनां मन्वादीनां धर्मः । कर्त्तारो ब्राह्मणादयः । पालका राजानः । वक्तारो मनुयाज्ञवल्क्यादयः । आदिनाऽनुमोदितारश्शिष्टा गृह्यंते । द्वितीयादिना तद्वंशावताराद्विग्रहः ( ३ ) । पूर्वार्द्धस्य संगतेति पदेनान्वयः । संगता प्राप्ता भवति अशुद्धसत्त्वानां तत्र श्रद्धानुदयात् । सा च सूर्यादिवंशकथनैरुच्यते ( ४ ) । तत्र च वंशकथने च । ततः परैस्त्रयोदशतः परैः ( ५ ) । तत्र तु त्रयोदशस्वपि । प्रवेशस्योक्त्यै ( ६ ) । सर्वाणि चतुर्दशसंख्याकानि । तत्र मन्वंतरेषु । कृतानि वीर्याणि प्रभावबोधककर्माणि । चोत्र पादपूरणे ॥ १ ॥ असौ बुद्धिस्थोऽष्टमस्कंधांताध्यायोक्तप्रभावः । पुरुषसेवया मत्स्यमूर्त्युपासनया ॥ २ ॥ त्वत्तोऽष्टमस्कंधे मनुवर्णनप्रसंगे । तस्य श्राद्धदेवाख्यमनोः ॥ ३ ॥ तेषाम् इक्ष्वाकादीनाम् ॥ ४ ॥ तेषां मध्ये पुण्यकीर्त्तीनां सर्वेषाम् । पुण्यकीर्त्तयश्च भगवद्भक्ता एव तेषामेव यशश्श्रवणं श्रवणेंद्रियसार्थक्यकरम् " श्रुतस्य पुंसां सुचिरश्रमस्य नन्वंजसा सूरिभिरीडितोर्थः । तत्तद्गुणानुश्रवणं मुकुंदपादारविंदं हृदयेषु येषाम् ॥ " इत्युक्तेः । हरिभक्तेतरराजकथाश्रवणस्यायुरसद्व्ययत्वात् । "किमन्यैरसदालापैरायुषो यदसद्व्ययः" इत्युक्तेश्च । विक्रमान् चरितानि ॥ ५ ॥ परमधर्मो भक्तिलक्षणः " स वै पुंसां परो धर्मो यतो भक्तिरधोक्षजे" इत्युक्तेः । तद्वित् तज्ज्ञाता ॥६॥ प्राचुर्य्येण प्राधान्येन ' प्राचुर्य्यं स्फिरमुख्ययोः ' इत्यभिधानात् " प्रधानाधिक्ययोश्चैरमुख्येऽपि प्रचुरः स्मृतः " इत्यन्यत्रोक्तेश्च । अनंतशाखत्वात्तद्वंशो विस्तारेण वक्तुं न शक्यत इत्याह—न शक्यत इति ॥ ७ ॥

परावरेषां भूतानामात्मा यः पुरुषः परः ॥ स एवासीदिदं विश्वं कल्पांतेन्यन्न किंचन ॥ ८ ॥ तस्य नाभेः समभवत्पद्मकोशो हिरण्मयः ॥ तस्मि ञ्जज्ञे महाराज स्वयंभूश्चतुराननः ॥ ९ ॥ मरीचिर्मनसस्तस्य जज्ञे तस्यापि कश्यपः ॥ दाक्षायण्यां ततोऽदित्यां विवस्वानभवत्सुतः ॥ १० ॥ ततो मनुः श्राद्धदेवः संज्ञायामास भारत ॥ श्रद्धायां जनयामास दश पुत्रान्स आत्मवान् ॥ ११ ॥ इक्ष्वाकुनृगशर्यातिदिष्टधृष्टकरूषकान् ॥ नरि ष्यंतं पृषध्रं च नभगं च कविं विभुः ॥ १२ ॥ अप्रजस्य मनोः पूर्वं वशिष्ठो भगवान्किल ॥ मित्रावरुणयोरिष्टिं प्रजार्थमकरोत्प्रभुः ॥ १३ ॥ तत्र श्रद्धा मनोः पत्नी होतारं समयाचत ॥ दुहित्रर्थमुपागम्य प्रणिपत्य पयोव्रता ॥ १४ ॥ प्रेषितोऽध्वर्युणा होता ध्यायंस्तत्सुसमाहितः ॥ हविषि व्यचरत्तेन वषट्कारं गृणन्द्विजः ॥ १५ ॥ होतुस्तद्व्यभिचारेण कन्येला नाम साऽभवत् ॥ तां विलोक्य मनुःप्राह नातिहृष्टमना गुरुम् ॥ १६ ॥ भगवन् किमिदं जातं कर्म वो ब्रह्मवादिनाम् ॥ विपर्ययमहो कष्टं मैवं स्याद्ब्रह्मविक्रिया ॥ १७ ॥ यूयं मंत्रविदो युक्तास्तपसा दग्धकिल्बिषाः ॥ कुतः संकल्पवैषम्यमनृतं विबुधेष्विव ॥ १८ ॥

अनुक्तं वंशं वक्तुं पूर्वोक्तमेव तावद्वंशं तत्प्रवर्तकं श्रीनारायणमारभ्यानुस्मारयति । परावरेषामिति पंचभिः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ नाभागं चेति पाठेऽपि नभग एव नाभागः ॥ १२ ॥ सूर्यपौत्रस्य सुद्युम्नस्य स्त्रीत्वे सति बुधात्पुरूरवःप्रभृतिसोमवंशसंचारं वक्तुं सप्रस्तावमिलोपाख्यानमाह । अप्रजस्य मनोः पूर्वमित्यादिना यावदध्या यसमाप्ति । पूर्वमिक्ष्वाकुप्रभृतीनामुत्पत्तेः प्राक् ॥ १३ ॥ दुहित्रर्थं मम कन्या यथा भवेत्तथा यजेति होतारं सम्यगयाचत पय एव व्रतमाहारो नियतो यस्याः ॥ १४ ॥ अध्वर्युणा होतर्यजेति प्रेषितो होता तेन गृहीते हविषि सति तत्तया प्रार्थितं ध्यायन्व्यचरदयजत । पाठांतरे तत आध्यायत् । वाचा वषट्कारं गृणन्वौषडित्युच्चारयन् ॥ ॥ १५ ॥ १६ ॥ ब्रह्मविक्रिया मंत्रान्यथात्वम् ॥ १७ ॥ १८ ॥

कल्पांते प्रलये । अन्यत् स्थूलसूक्ष्मम् । किंचिन्नासीदित्यर्थः “ नो सदासीन्नासदासीत् ” इति श्रुतेः ॥ ८ ॥ तस्य परमात्मनः । हिरण्मयः प्रकाशबहुलः । तस्मिन् पद्मकोशे । स्वयंभूशब्दस्य “ विष्णुः स्वयंभूरथभु क्खभूर्विश्वपतिर्हरिः ” इत्युक्तेर्विष्णावपि वृत्तेस्तद्वारणाय चतुरानन इति ॥ ९ ॥ तस्य ब्रह्मणः । तस्यापि मरीचेरपि । ततः कश्यपात् ॥ १० ॥ ततो विवस्वतः । स श्राद्धदेवः । आत्मवान् निपुणः ॥ ११ ॥ अष्टम स्कंधोक्तनभगवसुमतोरेव नामांतरे नृगकवी इति न विरोधः शंक्यः । कचिद्विभुमिति पाठे कविविशेषणम् ॥ १२ ॥ चंद्रवंशांकुरं सूचयन्नाह–अप्रजस्येति ॥ १३ ॥ तत्र इष्टौ ॥ १४ ॥ तेन होत्रा गृहीते इति शेषः । तया श्रद्धया । प्रार्थितं कन्याभवनम् । पाठांतरे ‘ ऽऽध्यायत्तत्सु समाहितः ’ इति पाठे ॥ १५ ॥ स चासौ व्यभिचारस्तेन । यद्वा–तस्य कर्मणो व्यभिचारेणान्यथोच्चारणरूपेण । वाङ्निमित्तत्वाद्व्यभिचारस्य वाङ्नाम्नीला “ वाणी सरस्वती भाषा वागिरेला प्रकीर्त्तिता ” इत्यभिधानात् । तां कन्याम् ॥ १६ ॥ वो युष्माकम् । इदं विपर्ययं कर्म । किं कथम् । ब्रह्मविदां क्रिया कर्म ब्रह्मवित्क्रियेति पा० । मैवं मा भूदित्यर्थः ॥ १७ ॥ भवत्सु कथंचिदप्यन्यथात्वं न युक्तमित्याह–मंत्रविदः । “ मैत्रावरुणीमिष्टिं कुर्यात्पुत्रकामः ” इत्यादिमंत्रज्ञाः । किञ्च “ यस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट् करिष्यन् ” इति मनोयोगयुक्ताः । न च दोषादन्यथात्वं मनस

तन्निशम्य वचस्तस्य भगवान्प्रपितामहः ॥ होतुर्व्यतिक्रमं ज्ञात्वा बभाषे रविनंदनम् ॥ १९ ॥ एतत्संकल्पवैषम्यं होतुस्ते व्यभिचारतः ॥ तथाऽपि साधयिष्ये ते सुप्रजास्त्वं स्वतेजसा ॥ २० ॥ एवं व्यवसितो राजन् भगवान् सुमहायशाः ॥ अस्तौषीदादिपुरुषमिलायाः पुंस्त्वकाम्यया ॥२१॥ तस्मै कामवरं तुष्टो भगवान् हरिरीश्वरः ॥ ददाविलाऽभवत्तेन सुद्युम्नः पुरुषर्षभः ॥ २२ ॥ स एकदा महाराज विचरन् मृगयां वने ॥ वृतः कतिपयामात्यैरश्वमारुह्य सैंधवम् ॥ २३ ॥ प्रगृह्य रुचिरं चापं शरांश्च परमाद्भुतान् ॥ दंशितोऽनुमृगं वीरो जगाम दिशमुत्तराम् ॥ २४ ॥ स कुमारो वनं मेरोरधस्तात्प्रविवेश ह ॥ यत्रास्ते भगवान् रुद्रो रममाणः सहोमया ॥ २५ ॥ तस्मिन् प्रविष्ट एवासौ सुद्युम्नः परवीरहा ॥ अपश्यत् स्त्रियमात्मानमश्वं च वडवां नृप ॥ २६ ॥ तथा तदनुगाः सर्वे आत्मलिंगविपर्ययम् ॥ दृष्ट्वा विमनसोऽभूवन् वीक्षमाणाः परस्परम् ॥ २७ ॥ राजोवाच ॥ कथमेवंगुणो देशः केन वा भगवन् कृतः ॥ प्रश्नमेनं समाचक्ष्व परं कौतूहलं हि नः ॥ २८ ॥ श्रीशुक उवाच ॥ एकदा गिरिशं द्रष्टुमृषयस्तत्र सुव्रताः ॥ दिशो वितिमिराभासाः कुर्वंतः समुपागमन् ॥ २९ ॥ तान् विलोक्यांबिका देवी विवासा व्रीडिता भृशम् ॥ भर्तुरंकात् समुत्थाय नीवीमाश्वथ पर्यधात् ॥ ३० ॥ ऋषयोऽपि तयोर्वीक्ष्य प्रसंगं रममाणयोः ॥ निवृत्ताः प्रययुस्तस्मान्नरनारायणाश्रमम् ॥ ३१ ॥ तदिदं भगवानाह प्रियायाः प्रियकाम्यया ॥ स्थानं यः प्रविशेदेतं स वै योषिद्भवेदिति ॥ ३२ ॥

प्रपितामहो वशिष्ठः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ विगतं तिमिरमाभासः प्रकाशश्चान्यस्य यासु तथाभूता दिशः कुर्वंतः ॥ २९ ॥ ३० ॥ प्रसंगं रत्यभिनिवेशम् । स्त्रीप्रसंगदर्शनकलुषितमनसः संतस्तत्प्रसंगशून्यं नरनारायणाश्रमं ययुः ॥ ३१ ॥ ३२ ॥

इत्याह–तपसेत्यादि । एवंविधेषु भवत्सु संकल्पस्य चिंतितस्य वैषम्यमन्यथात्वं कुतो न कुतोऽपि संभाव्यते विबुधेषु देवेषु ज्ञानिषु वानृतं दृष्टचरं न हीति । यस्मात् “ अनृतं न वदेत् ” इति श्रुतेर्देवेष्वनृतमिव सर्वथैतदसंभावितमिति भावः ॥ १८ ॥ तस्य मनोः । तत् पूर्वोक्तम् । मनोः पिता सूर्यः पितामहः कश्यपः प्रपितामहो मरीचिः वशिष्ठस्य ब्रह्मपुत्रत्वेन मरीचिभ्रातृत्वात्प्रपितामहत्वम् । यद्वा–शुकस्य पिता व्यासः पितामहः पराशरः प्रपितामहश्शक्तिस्तत्पिता वशिष्ठोऽस्ति । यद्यपि वशिष्ठस्य शुकवृद्धप्रपितामहत्वं तथापि “ आत्मैव पुत्रनामासि ” इति श्रुतेः शक्तिरूपत्वं तत्र संभाव्य प्रपितामह इत्युक्तम् । यद्वा–भगवानिति विशेषणं तत्र प्रपितामहत्वं सूचयति । व्यतिक्रममन्यथाकरणम् । रविनंदनं श्राद्धदेवम् ॥ १९ ॥ व्यभिचारतः ध्यानस्यान्यथाकरणलक्षणात् । यद्यपीत्थं तथापीति ॥ २० ॥ स भगवान्वशिष्ठः ॥ २१ ॥ तस्मै वशिष्ठाय । तेन कामवरेण॥२२॥स सुद्युम्नः । सैंधवं सिंधुदेशजम् ॥२३॥ दंशितो बद्धकवचः ॥२४॥ स सुद्युम्नः । मेरोरधस्तादिलावृतखंडे । यत्र इलावृतवने ॥२५॥ तस्मिन् वने ॥२६॥ तथा सुद्युम्नवत् । तदनुगाः सुद्युम्नानुचराः ॥२७॥ एवंगुणः पुंस्त्वविपर्यायकः ॥ २८ ॥ तत्र इलावृतवने ॥ २९ ॥ तान् ऋषीन् । नीवीं कट्यावरकवस्त्रम् ॥ ३० ॥ तयोः गौरीशंकरयोः । तस्मात् स्थानात् । नरनारायणाश्रमं बदरिकाश्रमम् ॥ ३१ ॥ तत् तदा ॥ ३२ ॥

तत ऊर्ध्वं वनं तद्वै पुरुषा वर्जयंति हि ॥ सा चानुचरसंयुक्ता विचचार वनाद्वनम् ॥ ३३ ॥ अथ तामाश्रमाभ्याशे चरंतीं प्रमदोत्तमाम् ॥ स्त्रीभिः परिवृतां वीक्ष्य चकमे भगवान् बुधः ॥ ३४ ॥ सापि तं चकमे सुभ्रूः सोमराजसुतं पतिम् ॥ स तस्यां जनयामास पुरूरवसमात्मजम् ॥३५॥ एवं स्त्रीत्वमनुप्राप्तः सुद्युम्नो मानवो नृपः ॥ सस्मार स्वकुलाचार्यं वशिष्ठमिति शुश्रुम ॥३६॥ स तस्य तां दशां दृष्ट्वा कृपया भृशपीडितः ॥ सुद्युम्नस्याशयन् पुंस्त्वमुपाधावत शंकरम् ॥ ३७ ॥ तुष्टस्तस्मै स भगवानृषये प्रियमावहन् ॥ स्वां च वाचमृतां कुर्वन्निदमाह विशां पते ॥३८॥ मासं पुमान् स भविता मासं स्त्री तव गोत्रजः ॥ इत्थं व्यवस्थया कामं सुद्युम्नोऽवतु मेदिनीम् ॥ ३९ ॥ आचार्यानुग्रहात् कामं लब्ध्वा पुंस्त्वं व्यवस्थया ॥ पालयामास जगतीं नाभ्यनंदन् स्म तं प्रजाः ॥ ४० ॥ तस्योत्कलो गयो राजन् विमलश्च सुतास्त्रयः ॥ दक्षिणापथराजानो बभूवुर्धर्मवत्सलाः ॥ ॥ ४१ ॥ ततः परिणते काले प्रतिष्ठानपतिः प्रभुः ॥ पुरूरवस उत्सृज्य गां पुत्राय गतो वनम् ॥ ४२ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे इलोपाख्याने प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ एवं गतेऽथ सुद्युम्ने मनुर्वैवस्वतः सुते ॥ पुत्रकामस्तपस्तेपे यमुनायां शतं समाः ॥ १ ॥ ततोऽयजन्मनुर्देवमपत्यार्थं हरिं प्रभुम् ॥ इक्ष्वाकुपूर्वजान् पुत्राँल्लेभे स्वसदृशान् दश ॥ २ ॥

प्रासंगिकमुक्त्वा प्रस्तुतमनुवर्णयति । अनुचरीसंयुक्तेति वक्तव्ये भूतपूर्वगत्या पुंस्त्वनिर्देशः ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ आशयन्निच्छन् ॥ ३७ ॥ ३८ ॥ ३९ ॥ नाभ्यनंदन् स्त्रीत्वे लज्जया मासंमासं निलीयावस्थानात् ॥ ४० ॥ ४१ ॥ ४२ ॥ इति श्रीमद्भा० नवमस्कंधे टीकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये मनुपुत्राणां द्वावपुत्रौ विरागतः ॥ करूषकादिपंचानां वंशानाह लघुक्रमात् ॥ १ ॥ वैवस्वतो मनुः श्राद्धदेवः ॥ १ ॥ इक्ष्वाकुः पूर्वजो येषां तान्दश पुत्राँल्लेभे ॥ २ ॥

ततः शिवशापात् । ऊर्द्धम् अनंतरम् । सा च प्राप्तपूर्वभावेला ॥३३॥ अथ अतोऽनंतरम् । बुधः चंद्रसुतः । चकमे रंतुमैच्छत् ॥३४॥ स बुधः । तस्याम् इलायाम् ॥३५॥३६॥ स वशिष्ठः । तस्य सुद्युम्नस्य । उपाधावत सिषेवे ॥ ३७ ॥ स शिवः । तस्मै वशिष्ठाय ॥ ३८ ॥ इत्थं व्यवस्थया अनया मर्यादया । गोत्रजः शिष्यः " गोत्रं वंशे नाम्नि शिष्ये पर्वते च महेश्वरे " इति निरुक्तिः । मासमिति " कालाध्वनोरत्यंतसंयोगे " इति द्वितीया ॥ ३९ ॥ कामं काम्यमानम् ॥ ४० ॥ तस्य सुद्युम्नस्य । दक्षिणापथो देशः ॥ ४१ ॥ ततः पुत्राद्युत्पत्त्युत्तरम् । परिणते वृद्धत्वे । प्रतिष्ठानं नगरम् । पुरूरवसे स्त्र्यवस्थायां जाताय । गां भूमिं दत्त्वा ॥४२॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे प्रथमोऽध्यायः ॥ १ ॥ द्वौ कविपृषध्रौ । लघुक्रमात् संक्षेपात् ( १ ) । एवं पुत्राय राज्यं दत्त्वा । अथ अनंतरम् ॥ १ ॥ तपस्स्वरूपमाह–तत इति । ततः तस्मिंस्तपसि । सप्तम्यर्थे तसिः ॥ २ ॥

पृषध्रस्तु मनोः पुत्रो गोपालो गुरुणा कृतः ॥ पालयामास गा यत्तो रात्र्यां वीरासनव्रतः ॥ ३ ॥ एकदा प्राविशद्गोष्ठं शार्दूलो निशि वर्षति ॥ शयाना गाव उत्थाय भीतास्ता बभ्रमुर्व्रजे ॥ ४ ॥ एकां जग्राह बलवान् सा चुक्रोश भयातुरा ॥ तस्यास्तत्क्रंदितं श्रुत्वा पृषध्रोऽभिससार ह ॥ ५ ॥ खड्गमादाय तरसा प्रलीनोडुगणे निशि ॥ अजानन्नहनद्बभ्रोः शिरः शार्दूलशंकया ॥ ६ ॥ व्याघ्रोऽपि वृक्णश्रवणो निस्त्रिंशाग्राहतस्ततः ॥ निश्चक्राम भृशं भीतो रक्तं पथि समुत्सृजन् ॥ ७ ॥ मन्यमानो हतं व्याघ्रं पृषध्रः परवीरहा ॥ अद्राक्षीत्स्वहतां बभ्रुं व्युष्टायां निशि दुःखितः ॥ ८ ॥ तं शशाप कुलाचार्यः कृतागसमकामतः ॥ न क्षत्रबंधुः शूद्रस्त्वं कर्मणा भवितामुना ॥ ९ ॥ एवं शप्तस्तु गुरुणा प्रत्यगृह्णात्कृतांजलिः ॥ अधारयद्व्रतं वीर ऊर्ध्वरेता मुनिप्रियम् ॥ १० ॥ वासुदेवे भगवति सर्वात्मनि परेऽमले ॥ एकांतित्वं गतो भक्त्या सर्वभूतसुहृत्समः ॥ ११ ॥ विमुक्तसंगः शांतात्मा संयताक्षोऽपरिग्रहः ॥ यदृच्छयोपपन्नेन कल्पयन् वृत्तिमात्मनः ॥ १२ ॥ आत्मन्यात्मानमाधाय ज्ञानतृप्तः समाहितः ॥ विचचार महीमेतां जडांधबधिराकृतिः ॥ १३ ॥

तत्र पृषध्रस्य वंशो नाभवदिति सहेतुकमाह । पृषध्रस्त्वित्यादिना । कविः कनीयानित्यतः प्राक्तनेन ग्रंथेन । खड्गपाणेः सततस्तिष्ठतो जागरणं वीरासनं तदेव व्रतं यस्य यत्तोऽवहितः सन् गाः पालयामास ॥ ३ ॥ शार्दूलो व्याघ्रः ॥ ४ ॥ ५ ॥ प्रलीना उडुगणा यस्मिंस्तस्मिन्समये । बभ्रोः कपिलाया गोः ॥ ६ ॥ गां कामतो न जघानेति ख्यापयितुं वृक्णश्रवण इत्याद्युक्तम् ॥ ७ ॥ व्युष्टायां प्रभातायाम् ॥ ८ ॥ क्षत्त्रबंधुरपि त्वं न भविताऽपि तु शूद्रो भवितेति ॥९॥१०॥११॥१२॥१३॥

तत्र दशसु ॥ ३ ॥ ४ ॥ एकां गाम् । तस्या गृहीतायाः । तत् दीनम् । क्रंदितं शब्दम् ॥ ५ ॥ “ बभ्रुर्गौः सौरभेयी च माहेयी गोमतल्लिका ” इति यादवः । गोशिरश्छेदे हेतुमाह–निशीति । रात्रावपि नक्षत्राद्युद्योतेन ज्ञानं भवत्येवेत्यत्राह–प्रलीनेति । अभ्रच्छायया तदपि नाभूदित्यर्थः ॥ ६ ॥ वृक्णं छिन्नं श्रवणं कर्णं यस्य सः । निर्गतस्त्रिंशद्भ्योंगुलिभ्य इति निस्त्रिंशः खड्गः । ततो गोष्ठात् ॥ ७ ॥ ८ ॥ तं पृषध्रम् । कुलाचार्यो वशिष्ठः । कामतोऽविधिना गोहनने तु म्लेच्छस्स्यादिति “ अविधिना कामतो गां यो हन्यात्स म्लेच्छ उच्यते ” इत्युक्तेः । “ अज्ञानाद्गां द्विजो हत्वा द्विजत्वाद्धीयते ध्रुवम्” इत्युक्तेश्च । अकामतोऽनिच्छातोपि कृतापराधं शशापैव न तु प्रायश्चित्तं दिदेश कोपावेशवशेन विचारापगमात् । यतः कुलाचार्यः कुलपौरोहित्यस्य तमोबहुलत्वात् । “कथं विगर्ह्यं नु करोम्यधीश्वराः पौरोधसं ह्रेष्यति येन दुर्मतिः’ इति विश्वरूपोक्तेः ॥ ९ ॥ कृतांजलिरिति । शापं महाप्रसादमिव प्रत्यगृह्णादिति गुरुभक्तिलक्षणं न तु त्वमपरामृश्य मह्यं किमिति वृथा शपसीति प्रत्युवाचेति भावः । तेन परित्यक्तोपि गुरौ भक्तिमान्निष्प्रत्यूहं तरतीति सिद्धांतो द्योतितः । मुनिप्रियं त्यागरूपं व्रतं यद्वोर्ध्वरेतस्त्वरूपम् ॥ १० ॥ मुनिप्रियत्वमेवाह–वासुदेव इति । एकांतित्वं परप्रेमत्वम् ॥ ११ ॥ १२ ॥ आत्मनि परमेशे । आत्मा

एवंवृत्तो वनं गत्वा दृष्ट्वा दावाग्निमुत्थितम् ॥ तेनोपयुक्तकरणो ब्रह्म प्राप परं मुनिः ॥ १४ ॥ कविः कनीयान् विषयेषु निःस्पृहो विसृज्य राज्यं सह बंधुभिर्वनम् ॥ निवेश्य चित्ते पुरुषं स्वरोचिषं विवेश कैशोरवयाः परं गतः ॥ १५ ॥ करूषान्मानवादासन् कारूषाः क्षत्त्रजातयः ॥ उत्तरापथगोप्तारो ब्रह्मण्या धर्मवत्सलाः ॥ १६ ॥ धृष्टाद्धाष्टर्यमभूत्क्षत्रं ब्रह्मभूयं गतं क्षितौ ॥ नृगस्य वंशः सुमतिर्भूतज्योतिस्ततो वसुः ॥ १७ ॥ वसोः प्रतीकस्तत्पुत्र ओघवानोघवत्पिता ॥ कन्या चौघवती नाम सुदर्शन उवाह ताम् ॥ १८ ॥ चित्रसेनो नरिष्यंताद्दक्षस्तस्य सुतोऽभवत् ॥ तस्य मीढ्वांस्ततः कूर्च इंद्रसेनस्तु तत्सुतः ॥ १९ ॥ वीतिहोत्रस्त्विंद्रसेनात्तस्य सत्यश्रवा अभूत् ॥ उरुश्रवाः सुतस्तस्य देवदत्तस्ततोऽभवत् ॥ २० ॥ ततोऽग्निवेश्यो भगवानग्निः स्वयमभूत्सुतः ॥ कानीन इति विख्यातो जातूकर्ण्यो महानृषिः ॥ २१ ॥ ततो ब्रह्मकुलं जातमाग्निवेश्यायनं नृप ॥ नरिष्यंतान्वयः प्रोक्तो दिष्टवंशमतः शृणु ॥२२॥ नाभागो दिष्टपुत्रोऽन्यः कर्मणा वैश्यतां गतः ॥ भलंदनः सुतस्तस्य वत्सप्रीतिर्भलंदनात् ॥ २३ ॥

उपयुक्तकरणो दग्धदेहः ॥ १४ ॥ कवेरपि वंशो नाभवदित्याह । कविरिति । बंधुभिः सह राज्यं विसृज्य ॥ १५ ॥ १६ ॥ ब्रह्मभूयं ब्राह्मणत्वम् । नृगस्य वंशः पुत्रः सुमतिस्ततो भूतज्योतिस्ततो वसुः ॥ १७ ॥ ओघवतः पिता तत्पुत्रोऽप्योघवानेवेत्यर्थः ॥ १८ ॥ तदेवं त्रिभिः श्लोकैः करूषधृष्टनृगाणां वंशा उक्ताः । नरिष्यंतस्य वंशमाह । चित्रसेन इति सार्धैस्त्रिभिः । तत इत्यादेर्यत्राधिक्यं स्यात्तत्रानंतर्ये तत इत्यादि पदं व्याख्येयम् । यत्र तु न्यूनत्वं तत्र पूर्वस्य परस्य वाऽनुषंगादिभिर्व्याख्येयम् ॥ १९ ॥ २० ॥ अग्निवेश्य एव कानीन इति जातूकर्ण्य इति च विख्यातः ॥ २१ ॥ २२ ॥ दिष्टस्य पुत्रो नाभागो वक्ष्यमाणनाभागादन्य इति भ्रांतिव्युदा

नमाधायैकीकृत्य ब्रह्मास्मीति निश्चित्य । ज्ञानेतृप्त इत्युक्तेर्भक्तावतृप्त इति भावः ॥ १३ ॥ एवंवृत्तो अंगीकृतजडाद्याकारः । तेन दावाग्निना । "करणं साधकतमे शरीरेंद्रिययोरपि" इति हैमः । "ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेर्देहत्यागेन विदेहलक्षणां मुक्तिमापेत्यर्थः ॥ १४ ॥ कनीयान् ततः कनिष्ठः । पुरुषं नारायणम् । तत्प्रसादेन परं ब्रह्मभावं प्राप्तोऽभूदित्यर्थः ॥ १५ ॥ १६ ॥ 'वंशो वेणौ समीपे च संघे पुत्रे कुले तथा' इति विश्वः । ततो भूतज्योतिषः ॥ १७ ॥ तत्पुत्रः प्रतीकपुत्रः । इत्यर्थ इति । पितृपुत्रयोस्सनामतैवाभूदिति भावः । सुदर्शनोग्निपुत्रो येन गृहस्थेनैव मृत्युर्जितोऽतिथये भार्याप्रदानेनेति प्रसिद्धं महाभारते । तामोघवतीम् ॥ १८ ॥ करूषादित्रयवंशमुक्त्वा नरिष्यंतस्याह- तस्य चित्रसेनस्य । तस्य दक्षस्य । अनुषंगादिभिरिहादिना प्रक्रमग्रहः । अग्रिमस्यानयनमनुषंगः पूर्वस्यानयनं प्रक्रम इति । ततो मीढुषोऽनंतरं कूर्चः ! तत्सुतः कूर्चपुत्रः ॥ १९ ॥ तस्य वीतिहोत्रस्य । तस्य सत्यश्रवसः । तत उरुश्रवसोऽनंतरम् ॥ २० ॥ ततो देवदत्तात् । स्वयमग्निरेव तन्नाम्ना जातः स एव कानीनो जातूकर्ण्यश्चोच्यते ॥ २१ ॥ ततो जातूकर्ण्यात् । अतो नरिष्यंतान्वयोक्तेरनंतरम् ॥ २२ ॥ अनुवादमात्रम् 'नाभागो नभगापत्यम्' इत्युक्तभेदस्य कथनात् । कर्मणा वैश्यकन्योद्वाहकर्मणा । कथा चेयं मार्कंडेयपुराणे—[ कस्यचिद्वैश्यस्य कन्यां दृष्ट्वा दिष्टपुत्रो नाभागः पित्रनुमतिं विना तां राक्षसेन विधिना जहार । तत्पित्रा प्रार्थितो दिष्टस्तं त्यजेमामित्युवाच । स न तत्याज ततः पित्रा युध्यमानस्तं जिग्ये । ततोंतरिक्षादागत्य केनचिन्मुनिनोक्तं त्वं युद्धाद्विरमायं व्युत्क्रमेण वैश्यकन्योद्वहनाद्वैश्यो

वत्सप्रीतेः सुतः प्रांशुस्तत्सुतं प्रमतिं विदुः ॥ खनित्रः प्रयतेस्तस्माच्चाक्षुषोऽथ विविंशतिः ॥ २४ ॥ विविंशतिसुतो रंभः खनिनेत्रोऽस्य धार्मिकः ॥ करंधमो महाराज तस्यासीदात्मजो नृपः ॥ २५ ॥ तस्यावीक्षित्सुतो यस्य मरुत्तश्चक्रवर्त्यभूत् ॥ संवर्तोऽयाजयद्यं वै महायोग्यंगिरःसुतः ॥२६॥ मरुत्तस्य यथा यज्ञो न तथाऽन्यस्य कश्चन ॥ सर्वं हिरण्मयं त्वासीद्यत्किंचिच्चास्य शोभनम् ॥ २७ ॥ अमाद्यदिंद्रः सोमेन दक्षिणाभिर्द्विजातयः ॥ मरुतः परिवेष्टारो विश्वेदेवाः सभासदः ॥ २८ ॥ मरुत्तस्य दमः पुत्रस्तस्यासीद्राज्यवर्धनः ॥ सुधृतिस्तत्सुतो जज्ञे सौधृतेयो नरः सुतः ॥ २९ ॥ तत्सुतः केवलस्तस्माद्बंधुमान् वेगवांस्ततः ॥ बंधुस्तस्याभवद्यस्य तृणबिंदुर्महीपतिः ॥ ३० ॥ तं भेजेऽलंबुषा देवी भजनीयगुणालयम् ॥ वराप्सरा यतः पुत्राः कन्या चेडविडाऽभवत् ॥ ३१ ॥ तस्यामुत्पादयामास विश्रवा धनदं सुतम् ॥ प्रादाय विद्यां परमामृषियोंगेश्वरात्पितुः ॥ ३२ ॥ विशालः शून्यबंधुश्च धूम्रकेतुश्च तत्सुताः ॥ विशालो वंशकृद्राजा वैशालीं निर्ममे पुरीम् ॥ ३३ ॥ हेमचंद्रः सुतस्तस्य धूम्राक्षस्तस्य चात्मजः ॥ तत्पुत्रात्संयमादासीत्कृशाश्वः सहदेवजः ॥ ३४ ॥ कृशाश्वात्सोमदत्तोऽभूद्योऽश्वमेधैरिडस्पतिम् ॥ इष्ट्वा पुरुषमापाग्र्यां गतिं योगेश्वराश्रितः ॥ ३५ ॥

सार्थमनुवादमात्रम् ॥ २३ ॥ २४ ॥ २५ ॥ अंगिरसः सुतो महायोगी संवर्तो यमयाजयत्सः मरुत्तः ॥ २६ ॥ अस्य यत्किंचित्पात्रादिकमस्ति तत्तु सर्वं हिरण्मयं शोभनमासीत् ॥ २७ ॥ अमाद्यदहृष्यत् ॥ २८ ॥ २९ ॥ ३० ॥ यतो यस्यां तृणबिंदोः पुत्रा अभवन् ॥ ३१ ॥ ३२ ॥ तानेवाह । विशाल इति । तस्य तृणबिंदोः सुताः॥३३॥ सहदेवजः देवजेन सहितः । पाठांतरे नामान्यत्वमात्रमर्थस्तु स एव ॥ ३४ ॥ ३५ ॥

जातोऽतो वैश्येन मा युध्यस्वेति । "यस्यायस्या हि हीनायाः कुरुते पाणिसंग्रहम् । अकृत्वा वर्णसंयोगं सोऽपि तद्वर्णभाग्भवेत् ॥ सोऽयं वैश्यत्वमापन्नस्तव पुत्रः सुमंदधीः । नास्याधिकारो युद्धाय क्षत्रियेण त्वया सह ॥" ] इत्युक्तेः । तस्य नाभागस्य ॥ २३ ॥ तत्सुतं प्रांशुसुतम् । तस्मात् खनित्रात् । अथ चाक्षुषात् ॥ २४ ॥ अस्य रंभस्य । करयोर्धमनेन सेनोत्पादकत्वेन करंधमः [ कदाचित्सर्वभूपनिरुद्धं स्वपुरं दृष्ट्वा करौ मुखाग्रतः कृत्वा स निशश्वास । ततो धर्मप्रसादतः सेनोत्पत्तिर्जाता इत्युक्तं मार्कंडेये—"अपश्यमानः शरणं सबलो द्विजसत्तम" इत्यरभ्य "धुतयोः करयोर्जज्ञे यतस्तस्यारिदाहदम् । बलं करंधमस्तस्मात्सबलाश्वोऽभिधीयते॥" इत्यंतेन ] ॥ २५ ॥ तस्य करंधमस्य । यस्य अवीक्षितः । यं मरुत्तम् ॥ २६ ॥२७॥२८ ॥ तस्य दमस्य । तत्सुतो राज्यवर्द्धनसुतः ॥२९॥ तत्सुतः नरसुतः । तस्मात् केवलात् । ततो बंधुमतः । तस्य वेगवतः । यस्य बंधोः ॥ ३० ॥ तं तृणबिंदुम् । अलंबुषानाम्नी वराप्सरा अप्सरासु श्रेष्ठा ॥ ३१ ॥ तस्याम् इडविडायाम् । योगेश्वरात्पितुः पुलस्त्यात् । परमाम् ऐहिकामुष्मिकफलप्रदाम् ॥ ३२ ॥ ३३ ॥ तस्य विशालस्य । तस्य हेमचंद्रस्य। तत्पुत्रात् धूम्राक्षपुत्रात् । पाठांतरे 'सहदेवकः' इति पाठे । केचित्तु सहदेवाज्जातस्सहदेवजः कृशाश्व इति व्याचख्युः । तथा च संयमात्सहदेवस्तस्मात्कृशाश्व इति फलितम् ॥ ३४ ॥ यः सोमदत्तः । इडस्प

सौमदत्तिस्तु सुमतिस्तत्सुतो जनमेजयः ॥ एते वैशालभूपालास्तृणबिंदोर्यशोधराः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे द्विती योऽध्यायः ॥ २ ॥ श्रीशुक उवाच ॥ शर्यातिर्मानवो राजा ब्रह्मिष्ठः स बभूव ह ॥ यो वा अंगिरसां सत्त्रे द्वितीयमह ऊचिवान् ॥ १ ॥ सुकन्या नाम तस्यासीत्कन्या कमललोचना ॥ तया सार्धं वनगतो ह्यगमच्च्यवनाश्रमम् ॥ २ ॥ सा सखीभिः परिवृता विचिन्वंत्यंघ्रिपान्वने ॥ वल्मीकरंध्रे ददृशे खद्योते इव ज्योतिषी ॥ ३ ॥ ते दैवचोदिता बाला ज्योतिषी कण्टकेन वै ॥ अविध्यन्मुग्धभावेन सुस्रावासृक् ततो बहु ॥ ४ ॥ शकृन्मूत्रनिरोधोऽभूत्सैनिकानां च तत्क्षणात् ॥ राजर्षिस्तमुपालक्ष्य पुरुषान् विस्मितोऽब्रवीत् ॥ ५ ॥ अप्यभद्रं न युष्माभिर्भार्गवस्य विचेष्टितम् ॥ व्यक्तं केनापि नस्तस्य कृतमाश्रमदूषणम् ॥ ६ ॥ सुकन्या प्राह पितरं भीता किंचित्कृतं मया ॥ द्वे ज्योतिषी अजानंत्या निर्भिन्ने कंटकेन वै ॥ ७ ॥ दुहितुस्तद्वचः श्रुत्वा शर्यातिर्जातसाध्वसः ॥ मुनिं प्रसादयामास वल्मीकांतर्गतं शनैः ॥ ८ ॥ तदभिप्रायमाज्ञाय प्रादाद्दुहितरं मुनेः ॥ कृच्छ्रान्मुक्तस्तमामंत्र्य पुरं प्रायात्समाहितः ॥ ९ ॥ सुकन्या च्यवनं प्राप्य पतिं परमकोपनम् ॥ प्रीणयामास चित्तज्ञा अप्रमत्ताऽनुवृत्तिभिः ॥ १० ॥ कस्यचित्त्वथ कालस्य नासत्यावाश्रमागतौ ॥ तौ पूजयित्वा प्रोवाच वयो मे दत्तमीश्वरौ ॥ ११ ॥

वैशालभूपाला विशालस्यान्वये जाताः ॥ ३६ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां द्वितीयोऽध्यायः ॥ २ ॥ तृतीये मनुपुत्रस्य शर्यातेः कीर्त्यतेऽन्वयः ॥ यत्र सौकन्यमाख्यानं रैवतं च महाऽद्भुतम् ॥ १ ॥ ब्रह्मिष्ठो वेदार्थतत्त्वज्ञः । तदेवाह । यो वा इति । द्वितीयमहो द्वितीयेऽह्नि क्रियमाणं कर्म ऊचिवानुवाच । तस्य वंशम् " उत्तानबर्हिरानर्तः " इत्यादिना वक्ष्यति ॥ १ ॥ आदौ तावत्तत्कन्यावृत्तांतमाह । सुकन्या नामेत्यादिना ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ भार्गवस्य च्यवनस्य । अभद्रमपराधः ॥ ६ ॥ ७ ॥ ८ ॥ मुग्धेयं मम कन्या क्षंतव्यं त्वयेत्युच्यमाने कति वर्षाण्यस्या विवाहः कृतो न वेत्यादिवाक्यैस्तदभिप्रायं ज्ञात्वा तस्मै तां दुहितरं प्रादात् ॥ ९ ॥ १० ॥ हे ईश्वरौ सद्वैद्यौ युवां मह्यं वयस्तारुण्यं दत्तं संपादयतम् ॥ ११ ॥

तिम् अन्नपतिं भूपतिं वाक्पतिं वा "इडा स्यादन्नवाक्पृथ्वीयज्ञपात्रे बुधस्त्रियाम्" इति निरुक्तिः । इडाया इडसादेशस्त्वार्ष एव । योगेश्वरा नारदादयस्तानाश्रितः । अग्र्यां मोक्षरूपाम् ॥ ३५ ॥ तत्सुतः सुमतिपुत्रः । एते हेमचंद्राद्याः ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे द्वितीयोऽध्यायः ॥ २ ॥ यत्र शर्यात्यन्वये ( १ ) । यो वा शर्यातिः ॥ १ ॥ तस्य शर्यातेः । तया सुकन्यया ॥ २ ॥ विचिन्वंती मृगयंती । ज्योतिषी ज्योतिराश्रये चक्षुषी ॥३॥ ते ज्योतिषी । दिष्टप्रेरिता सती मुग्धभावेन बालभावेन । ततो वाल्मीकरंध्रद्वारा चक्षुर्भ्याम् । असृक् रुधिरम् ॥४॥ राजर्षिः शर्यातिः । तं शकृन्मूत्रनिरोधम् । उपालक्ष्य दृष्ट्वा ॥५॥ अभद्रम् अयुक्तम् । न विचेष्टितं न कृतं किं तु कृतमेव । "अभद्रमपराधेपि मंगलाभावमंगले" इति निरुक्तिः । व्यक्तं निश्चितम् । नः अस्माकं मध्ये । अत इदं सेनाशकृन्मूत्रस्तंभनं भार्गवस्य विचेष्टितमिति व्यक्तमित्यावृत्त्यापि योज्यम् ॥ ६ ॥ ७ ॥ प्रजातं साध्वसं भयं यस्य सः ॥ ८ ॥ तं च्यवनम् ॥ ९ ॥ परमकोपनमत्यंतक्रोधिनम् । अनुवृत्तिभिरनुकूलाचरणैः । संध्यभाव आर्षः ॥ १० ॥ कालस्य संयोगे इति शेषः ।

ग्रहं ग्रहीष्ये सोमस्य यज्ञे वामप्यसोमपोः ॥ क्रियतां मे वयो रूपं प्रमदानां यदीप्सितम् ॥ १२ ॥ बाढमित्यूचतुर्विप्रमभिनंद्य भिषक्तमौ ॥ निमज्जतां भवानस्मिन् ह्रदे सिद्धविनिर्मिते ॥ १३ ॥ इत्युक्त्वा जरया ग्रस्तदेहो धमनिसंततः ॥ ह्रदं प्रवेशितोऽश्विभ्यां बलीपलितविप्रियः ॥ १४ ॥ पुरुषास्त्रय उत्तस्थुरपीच्या वनिताप्रियाः ॥ पद्मस्रजः कुंडलिनस्तुल्यरूपाः सुवाससः ॥ १५ ॥ तान्निरीक्ष्य वरारोहा सरूपान् सूर्यवर्चसः ॥ अजानती पतिं साध्वी अश्विनौ शरणं ययौ ॥ १६ ॥ दर्शयित्वा पतिं तस्यै पातिव्रत्येन तोषितौ ॥ ऋषिमामंत्र्य ययतुर्विमानेन त्रिविष्टपम् ॥ ॥ १७ ॥ यक्ष्यमाणोऽथ शर्यातिश्च्यवनस्याश्रमं गतः ॥ ददर्श दुहितुः पार्श्वे पुरुषं सूर्यवर्चसम् ॥ १८ ॥ राजा दुहितरं प्राह कृतपादाभिवंदनाम् ॥ आशिषश्चाप्रयुंजानो नातिप्रीतमना इव ॥ १९ ॥ चिकीर्षितं ते किमिदं पतिस्त्वया प्रलंभितो लोकनमस्कृतो मुनिः ॥ त्वं यज्जराग्रस्तमसत्यसंमतं विहाय जारं भजसेऽमुमध्वगम् ॥ २० ॥

असोमपोः सोमपानरहितयोरपि वां युवयोः सोमस्य ग्रहं सोमपूर्णं पात्रं ग्रहीष्ये दास्यामीति । युवां सोमेन यक्ष्य इत्यर्थः । “ऐंद्रवायवं गृह्णाति” इत्यादिषु द्रव्यदेवतासंबंधानुपपत्त्या गृह्णातेर्यागपर्यवसायित्वात् ॥ १२ ॥ बाढमित्यभिनंद्य भवानस्मिन्निमज्जतामित्यूचतुः ॥ १३ ॥ ह्रदं प्रवेशितः । तावपि तमपि वृद्धं गृहीत्वा प्रविष्टावित्यर्थः ॥ १४ ॥ १५ ॥ अश्विनौ शरणं ययौ युवां पृथक् स्थित्वा मत्पतिं दर्शयतमिति प्रार्थयामासेत्यर्थः ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ प्रलंभितो वंचितः । हे असति । असंमतमनभीष्टम् ॥ २० ॥

नासत्यावाश्विनेयौ । युवां दत्तम् । “वयः पक्षिणि बाल्यादौ यौवने च नपुंसकम्” इति मेदिन्युक्तेर्वयो यौवनम् ॥ ११ ॥ तव वयोदानेनावयोः किं फलमिति चेदाह–ग्रहमिति । इत्यर्थ इति । यज्ञभागिनौ करिष्यामीति भावः । ग्रहेर्यागार्थाभावेपि मंत्रप्रामाण्यात्तदाह–ऐंद्रेति । इंद्रवायुदेवताकद्रव्यस्य पुरुषकर्तृकग्रहणं न युज्यतेऽतोऽत्र गृह्णातेर्यजतीत्यर्थे पर्यवसानम् ॥ १२ ॥ भिषक्तमौ स्ववैद्यौ । सिद्धेन सिद्धौषधियोगेन विनिर्मितेऽस्मत्संपादिते । यद्वा–सिद्धा प्रत्यक्षफलप्रदा या विद्या तया निर्मिते अत्र द्वेत्यस्य लोपश्छांदसः ॥ १३ ॥ धमनिसंततः शिराव्याप्तः । बलीभिर्जराश्लथचर्मभिः पलितैश्श्वेतरोमभिश्च विप्रियो विरूपः “बलिर्दैत्यप्रभेदे च करचामरदंडयोः । उपहारे पुमान्स्त्री तु जरया श्लथचर्मणि॥” इति मेदिनी । “पलितं जरसा शौक्ल्यम्” इत्यमरः ॥ १४ ॥ अपीच्याः सुंदराः । षोडशवर्षप्रायाः ॥ १५ ॥ सरूपान् तुल्यरूपान् । इत्यर्थ इति । मत्पातिव्रत्यभंगो न कार्यो युवाभ्यामित्येवं तौ देवौ प्रार्थयांचकारेति भावः ॥ १६ ॥ तस्यै सुकन्यायै अन्वर्थनामवत्यै । ऋषिं च्यवनम् ॥ १७ ॥ यक्ष्यमाणो यज्ञं करिष्यमाणः ॥ १८ ॥ नातिप्रीतमना व्यभिचारशंकया व्यथित इवेति पुत्र्याः स्वास्थ्यदर्शनेन वस्तुतस्तथा नेत्याह ॥ १९ ॥ असति दुर्वृत्ते । अनभीष्टत्वे हेतुः–जराग्रस्तमिति । अध्वगं पांथममुं मत्संमुखस्थम् ॥ २० ॥

कथं मतिस्तेऽवगतान्यथा सतां कुलप्रसूते कुलदूषणं त्विदम् ॥ बिभर्षि जारं यदपत्रपा कुलं पितुश्च भर्तुश्च नयस्यधस्तमः ॥ २१ ॥ एवं ब्रुवाणं पितरं स्मयमाना शुचिस्मिता ॥ उवाच तात जामाता तवैष भृगुनंदनः ॥ २२ ॥ शशंस पित्रे तत्सर्वं वयोरूपाभिलंभनम् ॥ विस्मितः परमप्रीतस्तनयां परिषस्वजे ॥ २३ ॥ सोमेन याजयन् वीरं ग्रहं सोमस्य चाग्रहीत् ॥ असोमयोरप्यश्विनोश्च्यवनः स्वेन तेजसा ॥ २४ ॥ हंतुं तमाददे वज्रं सद्योमन्युरमर्षितः ॥ सवज्रं स्तंभयामास भुजमिंद्रस्य भार्गवः ॥ २५ ॥ अन्वजानंस्ततः सर्वे ग्रहं सोमस्य चाश्विनोः ॥ भिषजाविति यत्पूर्वं सोमाहुत्या बहिष्कृतौ ॥ २६ ॥ उत्तानबर्हिरानर्तो भूरिषेण इति त्रयः ॥ शर्यातेरभवन्पुत्रा आनर्ताद्रेवतोऽभवत् ॥ २७ ॥ सोंतःसमुद्रे नगरीं विनिर्माय कुशस्थलीम् ॥ आस्थितोऽभुंक्त विषयानानर्तादीनरिंदम ॥ २८ ॥ तस्य पुत्रशतं जज्ञे ककुद्मिज्येष्ठमुत्तमम् ॥ ककुद्मी रेवतीं कन्यां स्वामादाय विभुं गतः ॥ २९ ॥

हे सतां कुलप्रसूते तव मतिरन्यथा तद्विपर्ययेण कथमवगतावसन्नाऽध्यवसितेति वा । तदेवाह । कुलदूषणं त्विदमित्यादि ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ सद्यस्तत्क्षणमेव मन्युर्यस्य स इंद्रः ॥ २५ ॥ २६ ॥ २७ ॥ विषयान्देशानानर्तादीनभुंक्तापालयत् ॥ २८ ॥ ककुद्मी ज्येष्ठो यस्मिंस्तत् पुत्रशतम् । विभुं

सतां शुद्धक्षत्रियाणाम् । तद्विपर्ययेण सत्कुलप्रसूतिस्वभाववैपरीत्येन । अवसन्ना नष्टा । नष्टमत्यास्तु तव नत्यापि किमिति चेदाह—अध्यवसिता कृतनिश्चयेत्यर्थः । तदेवाह वैपरीत्यमेवाह । इदम् औपपत्यम् यत् यतः । जरयति शोषयत्युभयकुलमिति जारस्तम् । तदेवाह—पितुश्चेति । अधस्तमो नरकम् ॥ २१ ॥ शुचिस्मिता शोभनस्मितयुक्ता । स्मयमाना विस्मिता चाशोभनश्रुतेः । ताततेति । तवाग्रे कथनं ममानुचितमित्याह—भृगुनंदनश्च्यवनः ॥ २२ ॥ तत्सर्वं नासत्यागमनादि । वयसो रूपस्य चाभिलभनं येन तत् ॥ २३ ॥ सोमेन सोमवता यागेन । वीरं शर्यातिम् । असोमयोः पूर्वं सोमभागशून्ययोः । ग्रहं पात्रम् । अग्रहीत् अंतर्भावितण्यर्थः अग्राहयत् । अश्विनोरिति षष्ठी तृतीयार्थे । अश्विभ्यामित्यर्थः । तेजसा तपोबलेन ॥ २४ ॥ तं च्यवनम् । अमर्षितोऽसहमानः । भार्गवश्च्यवनः ॥ २५ ॥ तत इंद्रभुजस्तंमनोत्तरम् । सर्वे देवाः । अन्वजानन् अनुज्ञां ददुः । तयोः पूर्वं सोमग्रहाभावः कथमिति चेदाह—भिषजाविति । "भिषजां गणकानां च गायकानां च नृत्यताम् । हव्यकव्ये न दातव्ये गर्हिता वृत्तयस्त्विमाः ॥" इति स्मृतेः ॥ २६ ॥ प्रकृतमनुसरति—उत्तानबर्हिरिति ॥ २७ ॥ स रेवतः । अंतःसमुद्रे समुद्रद्वीपे । कुशस्थलीं यज्ञयोग्यत्वादन्वर्थनाम्नीम् । समुद्रे नगर्यादिनिर्माणसामर्थ्यं तु तस्य तपःप्रभावाज्जातं तथा हि—[ कदाचिदानर्त्तेनोक्तं पुत्र मया मही कष्टेन जिता पालिता चातस्त्वमपि यत्नेन पालयेति श्रुत्वाह पितः पृथ्वीपालयिता श्रीश एक एव न ततोन्यः पालयिता जेता चातो मया पालितेति वृथाभिमानं त्यजेति पुत्रवाक्यं श्रुत्वा यावदंतं मे भूमिराज्यं ततो निर्गच्छ नवां श्रीशादेव तां गृहीत्वा तत्रैव वसेत्युक्तः स समुद्रतटे तपश्चकार तत्तपसा तुष्टः श्रीहरिस्सर्वां भूमिं तत्पितुर्ज्ञात्वा निजवैकुंठाच्छतयोजनं विभज्यांशेन सुदर्शनोपरि तं भूखंडं समुद्रे स्थापयामास तं चानर्तः शशास ] इति पुराणांतरादवसेयम्। आदिनाऽन्यानपि देशानित्यर्थः । "नीवृज्जनपदो देशो विषयस्तूपवर्तनम्" इत्यमरः । अरिं संसारासक्तिलक्षणं मोहं दाम्यतीति तथा एवंविधसामर्थ्यवत्त्वाद्भवानपि हरिभक्तोऽस्तीति तात्पर्यम् ॥ २८ ॥ तस्य रेवतस्य ॥ २९ ॥

कन्यावरं परिप्रष्टुं ब्रह्मलोकमपावृतम् ॥ आवर्तमाने गांधर्वे स्थितोऽलब्धक्षणः क्षणम् ॥ ३० ॥ तदंत आद्यमानम्य स्वाभिप्रायं न्यवेदयत् ॥ तच्छ्रुत्वा भगवान् ब्रह्मा प्रहस्य तमुवाच ह ॥ ३१ ॥ अहो राजन् निरुद्धास्ते कालेन हृदि ये कृताः ॥ तत्पुत्रपौत्रनप्तृणां गोत्राणि च न शृण्महे ॥ ॥ ३२ ॥ कालोभियातस्त्रिणवचतुर्युगविकल्पितः ॥ तद्गच्छ देवदेवांशो बलदेवो महाबलः ॥ ३३ ॥ कन्यारत्नमिदं राजन्नररत्नाय देहि भोः ॥ भुवो भारावताराय भगवान् भूतभावनः ॥ ३४ ॥ अवतीर्णो निजांशेन पुण्यश्रवणकीर्तनः ॥ इत्यादिष्टोऽभिवंद्याजं नृपः स्वपुरमागतः ॥ ३५ ॥ त्यक्तं पुण्यजनत्रासाद्भ्रातृभिर्दिक्ष्ववस्थितैः ॥ सुतां दत्त्वाऽनवद्यांगीं बलाय बलशालिने ॥ बदर्याख्यं गतो राजा तप्तुं नारायणाश्रमम् ॥ ३६ ॥ इति श्रीभागवते महापुराणे नवमस्कंधे तृतीयोऽध्यायः ॥ ३ ॥ श्रीशुक उवाच ॥ नाभागो नभगापत्यं यं ततं भ्रातरः कविम् ॥ यविष्ठं व्यभजन् दायं ब्रह्मचारिणमागतम् ॥ १ ॥

ब्रह्माणम् ॥ २९ ॥ न लब्धः क्षणोऽवसरो येन ॥ ३० ॥ आद्यं ब्रह्माणम् ॥ ३१ ॥ ते त्वया हृदये ये कृतास्ते सर्वे कालेन विरुद्धाः संहृताः ॥ ॥ ३२ ॥ त्रिणव सप्तविंशतिः चतुर्युगाणि तैर्विकल्पितो विभक्तः । यो देवदेवस्यांशोऽस्ति तस्मै नररत्नाय देहि ॥ ३३ ॥ तदेवाह । भुव इति ॥ ३४ ॥ पुण्यजनत्रासाद्यक्षभयात्पूर्वमेव चिरं पुरं तद्भ्रातृभिस्त्यक्तम् ॥ ३५ ॥ ३६ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां तृतीयोऽध्यायः ॥ ३ ॥ चतुर्थे मनुपुत्रस्य नभगस्य कथोच्यते ॥ तत्सूनोश्चांबरीषस्य कृत्या प्रतिहता यतः ॥ १ ॥ नभगस्य वंशमाह । नभगस्यापत्यं नाभागः । नाभागादंबरीषो महाभागवतोऽभूदिति वक्ष्यंस्तद्धेतुत्वेन वंशप्रवर्तकस्य नभगस्य निष्कपटं चरितं तेन तु श्रीरुद्रप्रसादमाह यं ततमित्यादिना । ब्रह्मचारिणं बहुकालं गुरुकुले वसंतं नैष्ठिकोऽसाविति मत्वा विभागसमये तस्मै भागमप्रक

अपावृतं सर्वोत्कृष्टत्वात्प्रकाशबहुलम् ॥ ३० ॥ तदंते गांधर्वांते । स्वाभिप्रायं कन्यादानलक्षणममुकस्मै दास्याम्यमुकस्मै वेत्येवंरूपम् । तच्छ्रुत्वा तदुक्तं राज्ञां नामाद्याकर्ण्य । तं ककुद्मिनम् ॥ ३१ ॥ ये राजानः । न केवलं त एवापि तु तत्पुत्रादयोऽपीत्याह—तत्पुत्रेति । नप्ता पौत्रपुत्रः । गोत्राणि कुलानि वा नामानि 'गोत्रं कुलाख्ययोः' इति मेदिनी । शृण्महे तङार्षः ॥ ३२ ॥ तर्हि किं करोमि कन्या चावश्यं देयैव कस्मै दास्यामीति चेदाह—तद्गच्छेति । यतस्त्वच्चिंतितानां न कोप्यवशिष्टस्तत्तस्मात् । गच्छ भूलोकमिति शेषः । देवदेवस्य हरेश्चतुर्व्यूहमूर्त्तेरंशः संकर्षणरूपश्चतुर्थी मूर्त्तिः तस्मै बलेन प्रकाशमानाय । रत्नं रत्नेनैव योज्यमित्याह—कन्यारत्नमिति ॥ ३३ ॥ तदेव भगवदंशत्वमेव । निजांशेन संकर्षणेन सह ॥ ३४ ॥ स्वपुरं कुशस्थलीम् । तत्स्थानप्रतिष्ठापितद्वारवतीमित्यर्थः ॥ ३५ ॥ अनवद्यांगीं शोभनावयवाम् ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे तृतीयोऽध्यायः ॥ ३ ॥ तत्सूनोर्नभगसूनोर्नाभागस्यांबरीषस्य चेति त्रयाणां कथा । यतो अंबरीषात् । कृत्या मारणसमर्था मंत्राद्युत्पादिता देवप्रतिकृतिः ( १ ) । तद्धेतुत्वेनांबरीषकारणत्वेन । तस्मै नाभागाय मनुपुत्राय

भ्रातरोऽभाक्त किं मह्यं भजाम पितरं तव ॥ त्वां ममार्यास्तताभाक्षुर्मा पुत्रक तदादृथाः ॥ २ ॥ इमे अंगिरसः सत्रमासतेऽद्य सुमेधसः ॥ षष्ठंषष्ठमुपेत्याहः कवे मुह्यंति कर्मणि ॥ ३ ॥ तांस्त्वं शंसय सूक्ते द्वे वैश्वदेवे महात्मनः ॥ ते स्वर्यंतो धनं सत्रपरिशेषितमात्मनः ॥ ४ ॥ दास्यंत्यथ ततो गच्छ तथा स कृतवान् यथा ॥ तस्मै दत्त्वा ययुः स्वर्गं ते सत्रपरिशेषितम् ॥ ५ ॥ तं कश्चित्स्वीकरिष्यंतं पुरुषः कृष्णदर्शनः ॥ उवाचोत्तरतोऽभ्येत्य ममेदं वास्तुकं वसु ॥ ६ ॥ ममेदमृषिभिर्दत्तमिति तर्हि स्म मानवः ॥ स्यान्नौ ते पितरि प्रश्नः पृष्टवान् पितरं तथा ॥ ७ ॥

ल्प्यैव भ्रातरः सर्वं दायं विभज्य गृहीत्वा पश्चाद्गुरुकुलादागतं यं भागार्थिनं कविं विद्वांसं यविष्ठं प्रति ततं तातं पितरं दायं व्यभजन्नित्यर्थः ॥ १ ॥ एतदेव प्रश्नोत्तराभ्यां दर्शयति । तत्र नाभागः पृच्छति । हे भ्रातरो मह्यं किमभाक्त व्यभजत कं भागं मदर्थं यूयं प्रकल्पितवंतः । भ्रातर आहुः । तदा विस्मृतमस्माभिरिदानीं तु तव पितरं विभजाम त्वं पितरं गृहाणेत्यर्थः । स च पितरं गत्वाऽऽह । तत हे तात आर्याः श्रेष्ठा मे मम त्वामभाक्षुर्भागं चक्रुः । मदीयो भागस्त्वमित्यर्थः । पाठांतरे हे तात किमिद ममाभाक्षुः भजाम पितरं तवेत्युक्तवंत आर्यास्त्वां मह्यं किमर्थं ददुरित्यर्थः । पिताऽऽह । हे पुत्रक तत्तैरुक्तं मादृथाः प्रतारणमात्रं तैः कृतं तस्मिन्नादरं मा कार्षीः । न ह्यहं दाय इव भोगसाधनमित्यर्थः ॥ २ ॥ तथाऽपि तैर्भागत्वेन दत्तोऽहं तव जीवनोपायमुपदेक्ष्यामीत्याह । इम इति सपादाभ्यां द्वाभ्याम् । “ अभिप्लवः षडहो भवति पृष्ठ्यः षडहो भवति ” इति विहितेषु षडहेष्वावर्त्यमानेषु षष्ठंषष्ठमहः कर्मोपेत्य प्राप्य कर्मणि तदनुष्ठाने । सुमेधसोऽपि ते सूक्तविशेषाज्ञानेन मुह्यंति । कवे हे विद्वन् ॥ ३ ॥ तान्महात्मनोऽपि त्वम् “ इदमित्थारौद्रम् ” इति च “ ये यज्ञेन दक्षिणया ” इति च वैश्वदेवे द्वे सूक्ते शंसय पाठय । ततः कर्मणि समाप्ते सति ते स्वर्यंतः स्वर्गं गच्छंतः स्वसत्रे परिशेषितमवशिष्टमात्मनो धनं तुभ्यं दास्यंति अथ तस्मात्तान्गच्छेति । तथेत्यादि शुकवाक्यम् । यथावत्कृतवान् । सत्रपरिशेषितं सत्त्रावशिष्टं धनम् ॥ ४ ॥ ॥ ५ ॥ पुरुषः श्रीरुद्रः दृश्यत इति दर्शनं शरीरं कृष्णं दर्शनं यस्य सः वास्तुकं यज्ञभूमिगतं वसु धनं ममेत्युवाच ॥ ६ ॥ तर्हि स्म तदैव ममेदमिति मानवो नाभाग

दायं भ्रातृदेयं भागम् । यं नभगं मानवम् । यविष्ठं कनिष्ठम् । इत्यर्थ इति । भागकाले तत्स्मरणाभावात्पितरमेव भागत्वेन कल्पयामासुरिति भावः ॥ १ ॥ एतदेवं दायविस्मरणे पितृविभजनमेव । तत्र आदौ । इत्यर्थ इति । सर्वेषामविभक्तं साधारणं स्वत्वाधिकरणं पितरमेव भागं स्वीकुर्वीति भावः । इत्यर्थ इति । मह्यं भ्रातृभिस्त्वं भागः कल्पित इति भावः । पाठांतरे ‘किं मे आर्यास्तताभाक्षुः’ इति पाठे । इत्यर्थ इति तेष्वन्यतमेन किमर्थं न गृहीत इति भावः । इत्यर्थ इति भोगसाधनस्य दायत्वं भवति न हि भोक्तुरिति भावः ॥ २ ॥ यद्यपि पुत्त्र तैरनुचितं कृतं तथापीति । अभिप्लवोऽभिप्लवनामको यागः षडहः षड्भिर्दिवसै र्भवतीत्यर्थः । एवं पृष्ठ्यः पृष्ठ्यनामकोपीति श्रुतिपदार्थः । तदनुष्ठाने यथावत्करणे ॥ ३ ॥ ‘‘इदमित्थं रौद्रमिति च’’ इत्यादिकमेकम् ‘‘ये यज्ञेन दक्षिणया’’ इति चेत्यादिकं द्वितीयम् । इत्थं द्वे सूक्ते । ततः सूक्तशंसनात् ॥ ४ ॥ दास्यंतीति पूर्वान्वयि । अथ अतः । ततः तानंगिरसः । स नभगः । यथा पित्रोक्तं तथा । तस्मै नभगाय ॥ ५ ॥ तं नभगम् ॥ ६ ॥ यथा रुद्रेणोक्तम् ॥ ७ ॥

यज्ञवास्तुगतं सर्वमुच्छिष्टमृषयः क्वचित् ॥ चक्रुर्विभागं रुद्राय स देवः सर्वमर्हति ॥ ८ ॥ नभगस्तं प्रणम्याह तवेश किल वास्तुकम् ॥ इत्याह मे पिता ब्रह्मन्छिरसा त्वां प्रसादये ॥ ९ ॥ यत्ते पिताऽवदद्धर्मं त्वं तु सत्यं प्रभाषसे ॥ ददामि ते मंत्रदृशे ज्ञानं ब्रह्म सनातनम् ॥ १० ॥ गृहाण द्रविणं दत्तं मत्सत्रे परिशेषितम् ॥ इत्युक्त्वांतर्हितो रुद्रो भगवान् सत्यवत्सलः ॥ ११ ॥ य एतत् संस्मरेत् प्रातः सायं च सुसमाहितः ॥ कविर्भवति मंत्रज्ञो गतिं चैव तथात्मनः ॥ १२ ॥

उवाच । पुनश्च रुद्र उवाच । नौ आवयोरस्मिन्विवादे ते पितरि प्रश्नः स्यादिति । पृष्टवानिति शुकोक्तिः॥७॥पृष्टस्य मनोर्वाक्यं यज्ञवास्तुगतमिति । उच्छिष्टमुर्वरितम् । क्वचिदिति दक्षाध्वरे । "उच्छेषणभागो वै रुद्रः"इति श्रुतेश्च । किं च स देव ईश्वरः सर्वमप्यर्हति किं पुनर्यज्ञावशिष्टमित्यर्थः॥८॥९॥श्रीरुद्र आह । यत्ते इति॥१०॥इदमाख्यानं श्रुतिप्रसिद्धम् । तथाहि बह्वृचब्राह्मणम् । " नाभानेदिष्ठं शंसति नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसंतं भ्रातरो निरभजन्सोऽब्रवीत् " इत्यादि ॥ ११ ॥ अस्याख्यानस्य

इत्यर्थ इति । सर्वयोग्यस्यावशिष्टयोग्यता तु कैमुत्यसिद्धेति भावः ॥ ८ तं रुद्रम् ॥ ९ ॥ मंत्रदृशे वैश्वदेवसूक्ते दृष्टवते ज्ञातवत इत्यर्थः । ब्रह्म महत् ॥ १० ॥ ११ ॥ एतत् श्रुतिप्रसिद्धमाख्यानम् । कविः क्रांतदर्शी । गतिं स्वरूपम् । आख्यानं चैतद्बह्वृचब्राह्मणेऽस्ति तथाहि । "नाभानेदिष्ठं वै मानवं ब्रह्मचर्यं वसंतं भ्रातरो निरभजन् सोऽब्रवीदेत्य किं मह्यमभाक्त त एनमब्रुवन् भजान पितरं तवैतमेव निष्ठावमव वदितारमित्यब्रुवंस्तदप्येतर्हि पितरं पुत्रानिष्टावावदितेत्येवाचक्षते । त्वामंतरेणाभांक्षन् त्वां ह वाव मह्यं तताभांक्षुः तं पिताब्रवीन्मा पुत्रक तदादृथाः अंगिरसो वा इमे स्वर्गाय लोकाय सत्त्रमासते ते षष्ठंषष्ठमेवाहरागत्य मुह्यंति तानेते सूक्ते षष्ठेऽहनि शंसय तेषां यत्सहस्रं सत्त्रपरिवेषणं तत्ते स्वर्यंतो दास्यंतीति तथेति तानुपैत् । प्रतिगृम्णीत मानवं सुमेधस इति तमब्रुवन् किंकामो वदसीतीदमेव वः षष्ठमहः प्रज्ञापयामीत्यब्रवीदथ यद्व एतत्सहस्रं सत्त्रपरिवेषणं तत्ते स्वर्यंतो दत्तेति तथेति तेनैते सूक्ते षष्ठेहन्यशंसयत् ततो वेति प्रयज्ञमजानन्प्रस्वर्गं लोकं तद्यदेते सूक्ते षष्ठेहनि शंसति यज्ञस्य प्रज्ञात्यै स्वर्गस्यानुख्यात्या इति ते स्वर्यंतोऽब्रुवन्नेतत्ते ब्राह्मणसहस्रपरिवेषणं तदेनं समाकुर्वाणं पुरुषः कृष्णशवास्युत्तरतयोत्थायाब्रवीन्मम वा इदं मम वै वास्तुहमिति सोब्रवीन्मह्यं वा इदमदुः तमब्रवीत्तद्वै नो तवैव पितरि प्रश्न इति स पितरमैत तं पिताब्रवीत्ततु ते पुत्रकादुरित्यदुरेव स इत्यब्रवीत्तत्तु मे पुरुषः कृष्णशवास्युत्तरत उपोदतिष्ठन्मम वा इदं मम वै वास्तुहमित्यादत्तवानिति । तं पिताब्रवीत्तस्यैव पुत्रक तत्तुभ्यं दास्यतीति स पुनरेत्याब्रवीत्तव ह बाब किल भगव इदमिति मे पिताहेति सोब्रवीत्तदहं तुभ्यं ददामि य एवं सत्यमवादीरिति तस्मादेवं विदुषा सत्यमेव वदितव्यमिति स एष सनिर्मंत्रो यत्राभानेदिष्ठ उपैतं सहस्रं नमति प्रषष्ठेनाह्ना स्वर्गं लोकं जानाति य एवं वेद" इति ब्राह्मणम् । नाभानेदिष्ठं नभगं मानवं मनुपुत्रं ब्रह्मचर्यमुद्दिश्य गुरुकुले वसंतं निरभजन् दायविभागमकुर्वत स तानुवाच मम भागं किमर्थं विभक्तवंतः को मम भागः कल्पित इत्यप्राक्षीत् ते भ्रातर एनं नाभानेदिष्ठं पितरं भज । अन गच्छ 'अन–चेष्टायाम् ' यदि तव विभागापेक्षा तर्हि गच्छ तं प्रसाद्य विचारय वयं चागत्य पृच्छाम इत्यर्थः । एतमेव पितरमेव । निष्ठावं व्यवस्थागमकम् अत एवावगम्य वदितारं पितरमब्रुवन्नित्यर्थः । यतो नाभागादयो निश्चयार्थं पितरं गत्वाब्रुवंस्तस्मादेतर्हि अद्यापि पुत्राः पितरं निर्णीय व्यवस्थापका इत्याहुरित्यर्थः । स नभगो गत्वा भ्रातृभिस्सह पितरमपृच्छत् त्वां विना कथमभाक्षुः । किञ्च त्वां ह बाबेति स्फुटनिश्चयेऽव्ययद्वयं हे तत स पिताह हे पुत्रक तत्तस्मिन्दायविभागे मा आदरमकार्षीरिति । तर्हि मम जीवनोपायः क इत्यत आह–अंगिरस इति स्फुटार्थः । हे सुमेधसः मानवं मां प्रतिगृम्णीत स्वीकुरुतेति मंत्रमुक्त्वा कस्मिन्धने विद्यायामप्यस्मदपेक्षिते विद्योपदेशो कामो यस्य स किं कामः युष्मदधिकविद्याविक्त्वाद्द्वितीयोऽधुना नाभिगत इति तृतीयकाम इत्याह–इदमेवेति । प्रथमविकल्पकामोऽपि भवामीत्याशयेनाह–यदिति । सर्वयज्ञेषूपयोगमाह–तद्यदिति । अनुख्यातिः प्रकाशः । हे ब्राह्मण वेदविद्याविशारद

नाभागादंबरीषोऽभून्महाभागवतः कृती ॥ नास्पृशद्ब्रह्मशापोऽपि यं न प्रतिहतः क्वचित् ॥ १३ ॥ राजोवाच ॥ भगवञ्छ्रोतुमिच्छामि राजर्षेस्तस्य धीमतः ॥ न प्राभूद्यत्र निर्मुक्तो ब्रह्मदंडो दुरत्ययः ॥ १४ ॥ श्रीशुक उवाच ॥ अंबरीषो महाभागः सप्तद्वीपवतीं महीम् ॥ अव्ययां च श्रियं लब्ध्वा विभवं चातुलं भुवि ॥ १५ ॥ मेनेऽतिदुर्लभं पुंसां सर्वं तत्स्वप्नसंस्तुतम् ॥ विद्वान् विभवनिर्वाणं तमो विशति यत्पुमान् ॥ १६ ॥ वासुदेवे भगवति तद्भक्तेषु च साधुषु ॥ प्राप्तो भावं परं विश्वं येनेदं लोष्टवत्स्मृतम् ॥ १७ ॥ स वै मनः कृष्णपदारविंदयोर्वचांसि वैकुंठगुणानुवर्णने ॥ करौ हरेर्मंदिरमार्जनादिषु श्रुतिं चकाराच्युतसत्कथोदये ॥ १८ ॥ मुकुंदलिंगालयदर्शने दृशौ तद्भृत्यगात्रस्पर्शेंगसंगमम् ॥ घ्राणं च तत्पादसरोजसौरभे श्रीमत्तुलस्या रसनां तदर्पिते ॥ १९ ॥

स्मरणे फलमाह । य एतदिति । आत्मनो गतिं च प्राप्नोतीति शेषः ॥ १२ ॥ क्वचिदपि न प्रतिहतो ब्रह्मशापोऽपि ब्राह्मणेन दुर्वाससा निर्मितः कृत्यानलोऽपि यं नास्पृशत् अतोऽसौ महाभागवतोऽत एव कृती पुण्यवान् ॥ १३ ॥ तस्य श्रोतुमिच्छामि । चरितमिति शेषः । ब्रह्मदंडः कृत्यानलो न प्राभून्न समर्थो बभूव ॥ १४ ॥ श्रियं संपदम् । विभवमैश्वर्यम् । अतुलं निरुपमम् ॥ १५ ॥ पुंसामतिदुर्लभमपि तत्सर्वं स्वप्नवत्संस्तुतं निरूपितमनुपादेयं मेने । तत्र हेतुः । विभवस्य निर्वाणं नाशं विद्वान् यद्येन विभवेन तन्नाशेन वा पुमांस्तमो विशति मोहे निमज्जति ॥ १६ ॥ नन्वेवं जानंतोऽपि विभवैषिणो दृश्यंते तत्राह । वासुदेव इति । भावं भक्तिं प्राप्तः येन भावेनेदं विश्वं लोष्टवदतितुच्छं स्मृतम् ॥ १७ ॥ भक्तिमेव सर्वेंद्रियाणां भगवत्परत्वकथनेन प्रपंचयति स वा इति त्रिभिः । श्रुतिं श्रोत्रमच्युतस्य सत्कथानामुदये श्रवणे चकारेत्यस्य सर्वत्रान्वयः ॥ १८ ॥ मुकुंदस्य लिंगानामालयाः स्थानानि तेषां दर्शने दृशौ नेत्रे श्रीमत्यास्तुलस्यास्तत्पादसरोजेन यत्सौरभं तस्मिन् ।

समाकुर्वाणं राशीकृत्य स्वीकुर्वाणं कृष्णशरीरवाससी वास्तुहं वास्तवं मूलभद्रभाषायां हकारवकारयोः पर्यायत्वांगीकारात् । मानवस्तर्हि यदि ममेदमिति वदसि ऋषिभिरिदं मम दत्तमित्याह सोऽब्रवीदिति स नभगम् । हे मानव नौ आवयोः ऐत्प्राप हे पुत्रक तेंगिरसस्तवादुर्न दत्तवंत एव किमिति पृष्टे स नभगः मे अदुरेव न तत्र संदेह इत्यब्रवीत् । तर्हि किमत्र बाधकमत्राह–तत्तु म इति । सत्रपरिशेषितं यद्वनं तन्ममैवेत्युक्त्वा आदत्तवान्स्वीकृतवान् इत्युक्ते पिता तमाह–य इह नाभानेदिष्टः स एष सहस्रसनिः 'षन–दाने' सहस्रेत्युपलक्षणमनेकजनाय धनदाता मंत्रो मंत्रज्ञानी पुरुषः एवमुक्तमितिहासार्थं वेद एनं पुरुषमुद्दिश्य सहस्रमुपनमति षष्ठेनाह्नानापेक्षितसूक्तपूर्वककृतकर्मणा स्वर्गं सुखज्ञानात्मकं लोकं सर्वाधारं हरिं प्रजानातीति भावः ॥ १२ ॥ अंबरीषपदार्थमन्वर्थयति अंबादिकं रीषं नश्वरमिति ज्ञानं यस्य सोम्बरीषः रीषोऽपि हिंसार्थे गतौ च मत्वर्थीयोऽच् । यद्वाम्बरवदीषं ज्ञानं यस्य स तथा विस्तृतज्ञान इत्यर्थः । अं ब्रह्म तस्य वरिर्वरणं तत्रेच्छा यस्य स तथा वा । अत एव महाभागवतत्वादेव ॥ १३ ॥ तस्य अम्बरीषस्य । यत्र अंबरीषे ॥ १४ ॥ १५ ॥ तत्र अनुपादेयत्वे । विभवस्य धनादेः । विभवेऽज्ञो व्यसनैस्तमो नरकं तन्नाशे भोगनाशाच्च ॥ १६ ॥ अत्राक्षिपति–नन्विति । विभवैषिणो धनादीच्छावंतः । तद्भक्तेषु वासुदेवभक्तेषु । साधुषु सदाचारवत्सु । "लोष्टः पिंडे मृदस्तुच्छे लेपनोच्छिष्टगोमये" इति धरणिः । एतेन भगवद्विमुखा एव वैभवेच्छव इत्युक्तम् ॥ १७ ॥ सः अंबरीषः । आदिना पुष्पतुलस्यादानादिग्रहः ॥ १८ ॥ लिंगानां मत्स्यादिरूपाणां स्थानानि प्रतिमाशालग्रामादीनि । तद्भृत्या हरिभक्ताः ।

पादौ हरेः क्षेत्रपदानुसर्पणे शिरो हृषीकेशपदाभिवंदने ॥ कामं च दास्ये न तु कामकाम्यया यथोत्तमश्लोकजनाश्रया रतिः ॥२०॥ एवं सदा कर्मक लापमात्मनः परेऽधियज्ञे भगवत्यधोक्षजे ॥ सर्वात्मभावं विदधन्महीमिमां तन्निष्ठविप्राभिहितः शशास ह ॥२१॥ ईजेऽश्वमेधैरधियज्ञमीश्वरं महावि भूत्योपचितांगदक्षिणैः ॥ ततैर्वशिष्ठासितगौतमादिभिर्धन्वन्यभिस्रोतमसौ सरस्वतीम् ॥ २२ ॥ यस्य क्रतुषु गीर्वाणैः सदस्या ऋत्विजो जनाः ॥ तुल्यरूपाश्चानिमिषा व्यदृश्यंत सुवाससः ॥ २३ ॥ स्वर्गो न प्रार्थितो यस्य मनुजैरमरप्रियः ॥ शृण्वद्भिरुपगायद्भिरुत्तमश्लोकचेष्टितम् ॥ २४ ॥

तदर्पिते तस्मै निवेदितान्नादौ ॥ १९॥ कामं स्रक्चंदनादिसेवां दास्ये निमित्ते तत्प्रसादस्वीकाराय न तु कामकाम्यया विषयेच्छया । कथं चकार । उत्तमश्लोकजनाश्रया रतिर्यथा भवेत्तथा । अनेन तद्भक्तेषु च परं भावं प्राप्त इत्येतत्स्फुटीकृतम् ॥ २० ॥ सर्वत्रात्मेति भावो भावना यस्मिंस्तमात्मनः स्वस्य कर्मणां कलापं समूहं भगवति विदधत्समर्पयंस्तन्निष्ठैर्भागवतैर्विप्रैरभिहितः शिक्षितः सन् महीं शशास पालयामास । अनेनाधिकृतो धर्मोऽपि यथावद्दर्शितः ॥ २१ ॥ किं च । यज्ञाधिष्ठातारमीश्वरमश्वमेधैरीजे आराधयामास । महाविभूत्योपचितान्यंगानि दक्षिणाश्च येषु तैः वशिष्ठादिभिर्हेतुभूतैस्तैर्विस्तृतैः । धन्वनि धन्वदेशे निरुदके । सरस्वतीमभिस्रोतम् । तस्याः प्रतिलोममित्यर्थः ॥ २२ ॥ किं च । यस्य क्रतुषु सदस्यादयो गीर्वाणैः सह भूषणादिभिस्तुल्यरूपा व्यदृश्यंत स इत्थमिति चतुर्थेनान्वयः । न च देवानां निमेषाभावाद्वैलक्षण्यं यतोऽनिमिषाश्च व्यदृश्यंत । न निमिषंतीति तथा । आश्चर्यदर्शनौत्सुक्येन तेषां निमेषोपरमादिति भावः ॥ २३ ॥ यस्य यदीयैर्मनुजैरपि स्वर्गो न प्रार्थितस्तस्य तु का

तत्पादसरोजेन तत्पादसरोजसंबंधेन भगवच्चरणार्पिततुलसीगंधेनेत्यर्थः । तस्मै कृष्णाय । आदिना जलादिग्रहः ॥ १९ ॥ क्षेत्त्रेषु मथुरादिषु पदानि केशवदेवादिस्थलानि तत्रानुसर्पणे गमने । हृषीकेशस्य पदानां चरणानां भक्तानां वाभिवंदने उत्तमश्लोकजनानाश्रयतीति तथा । अनेन भक्तजनरत्युत्पादनेन ॥२०॥ यद्वा सर्वेष्वाब्रह्मादिष्वात्मभावमात्मैक्यं सर्वात्मनि हरावात्मभावं भक्तिं वा यथा तथा । तस्मिन्हरौ निष्ठा स्थितिर्येषां तैस्तन्निष्ठैः।अनेन भागवतशिक्षया भूपालनेन । अधिकृतस्य स्वीकृतस्य राज्यस्य धर्मः । विश्वनाथस्तु—हरिभक्तिनिष्ठब्राह्मणेनाभिहितस्त्वमष्टावेव यामान्निर्विक्षेपेण सर्वात्मना हरिं भज राज्यकर्मणि स्वनियुक्तयोग्यपुरुषैरेव महीं शाधीति शिक्षितः सन्नित्याह ॥ २१ ॥ अन्यराजधर्ममाह—किञ्चेति । असितो व्यासः । धन्वन्निति ङिलोपस्त्वार्षः । तस्याः सरस्वत्याः । इत्यर्थ इति । यजतः सरस्वतीप्रवाहो यथा संमुखो भवेत्तथा तत्तटेष्विति भावः । अत्र संदर्भः—ननु कथं स वै मन इत्यादौ सति यज्ञक्रिया स्यादेकात्मत्वात्तत्राह—वशिष्ठादिभिः । वशिष्ठादिद्वारा कृतैः "विप्रैः संपादितं यस्य यज्ञदानव्रतादिकम् । पाणिग्रहं परित्यज्य तत्तस्यैव न संशयः॥" इति स्मृतेः । सरस्वतीमिति। कर्ममार्गे तस्याः प्रधानत्वात् "सरस्वत्यास्तटे कर्म कृतमक्षय्यमीरितम्" इत्यादिपुराणात् ॥ २२ ॥ यज्ञाधिक्यमाह—किं चेति । गीर्वाणैर्देवैः 'गीर्वाणा दानवारयः' इत्यमरः । सनिमेषाणां देवसादृश्यं न संगच्छत इत्याह—न चेति । यतस्तेऽप्यनिमेषा अतो वैलक्षण्यं नेत्यर्थः । इति भाव इति । यज्ञे साक्षाद्देवागमनदर्शनान्निर्निमेषा एवाभवन्निति तात्पर्यम् ॥ २३ ॥ यस्यांबरीषनृपतेः । का वार्त्ता किं कथनम् । तत्र

समर्धयंति तान्कामाः स्वाराज्यपरिभाविताः ॥ दुर्लभा नापि सिद्धानां मुकुंदं हृदि पश्यतः ॥ २५ ॥ स इत्थं भक्तियोगेन तपोयुक्तेन पार्थिवः ॥ स्वधर्मेण हरिं प्रीणन् संगान्सर्वाञ्छनैर्जहौ ॥ २६ ॥ गृहेषु दारेषु सुतेषु बंधुषु द्विपोत्तमस्यंदनवाजिपत्तिषु ॥ अक्षय्यरत्नाभरणायुधादिष्वनंतकोशेष्वकरोदसन्मतिम् ॥ २७ ॥ तस्मा अदाद्धरिश्चक्रं प्रत्यनीकभयावहम् ॥ एकांतभक्तिभावेन प्रीतो भृत्याभिरक्षणम् ॥ २८ ॥ आरिराधयिषुः कृष्णं महिष्या तुल्यशीलया ॥ युक्तः सांवत्सरं वीरो दधार द्वादशीव्रतम् ॥ २९ ॥

वार्ता ॥ २४ ॥ आस्तां स्वर्गप्रार्थनशंकाऽपि यतः मुकुंदं हृदि पश्यतस्तान् जनान्कामा विषया न समर्द्धयंति न हर्षयंति । कथंभूताः । स्वाराज्येन स्वरूपसुखेन परिभाविता अतिशायिताः अत एव सिद्धानामपि दुर्लभाः । यानिति पाठे यान्मनुजान् । स्वाराज्येत्यत्रापि द्वितीयांतपाठे मनुजानां विशेषणम् । यमिति पाठे यमंबरीषम् । पश्यतामिति पाठे सिद्धानां विशेषणम् ॥ २५ ॥ एवं भगवदाराधनपरस्य कामाद्युपेक्षा नैव चित्रमित्युपसंहरति स इत्थमिति द्वाभ्याम् ॥ २६ ॥ २७ ॥ नन्वेवंभूतोऽसौ कथं प्रतिपक्षान् जयेत्तत्राह । तस्मा इति ॥ २८ ॥ तदेवं तस्य वैराग्यादिकं हरिभक्तिं चोक्त्वा ब्रह्मदंडो यत्र न प्राभूदिति यदुक्तं तदेव द्वादशीव्रतनिष्ठां कथयन्नाह । आरि

हेतुः—शृण्वद्भिरिति । अनेन हरिकथाश्रवणगानात्स्वर्गो नाधिकसुखद इति ध्वनितम् ॥ २४ ॥ विषयेप्सूनामेव स्वर्गाद्याकांक्षितं भवति तेषामतथात्वात्तन्नेत्याह—आस्तामिति । आस्तां तिष्ठतु । स्वरूपसुखेनात्मानंदावाप्त्या । अतिशायिताः उपेक्षणत्वादधिकवृद्धिमिताः उपेक्षितरोगादिवद्वृद्धिं प्राप्ताः । अत एव अधिकवृद्धिमत्त्वादेव । सिद्धानां योगादिसिद्धानाम् । द्वितीयांतपाठे 'स्वाराज्यान्' इति पाठे । स्वे आत्मनि राज्यं सुखं स्वराज्यं तद्विद्यते येषामिति मत्वर्थेऽण् । ते स्वाराज्यास्तान् ज्ञानिन इत्यर्थः । यमिति पाठे 'समर्द्धयन्ति यं कामाः' इति पाठे । 'हृदि पश्यताम्' इति पाठे ॥ २९ ॥ सः अम्बरीषः । स्वधर्मेण प्रजापालनलक्षणेन । राज्ञः प्रजापालनमेव धर्म इत्युक्तेः । संग आसक्तिर्विद्यते येषु ते संगास्तान् स्त्रीपुत्रराज्यादीन् । तेष्वासक्तिं तत्याजेत्यर्थः ॥ २६ ॥ तदेव प्रपंचयति—गृहेष्विति । अक्षय्या अनंता ये रत्नादयस्तेषु । आदिना वस्त्रादिग्रहः । वस्तुपदेन द्विपाद्युपकरणादि ज्ञेयम् । रत्नादयः शारीरका ज्ञेयाः कोशानां पृथग्ग्रहणात् । असन्मतिं ममत्वधियम् ॥ २७ ॥ राज्यस्यातीवासक्तिसाध्यत्वात्तस्य तत्कथमित्याक्षिप्य भगवदनुग्रहादिति समाधत्त इत्याह—नन्विति । एवंभूतो विषयासक्तिरहितोऽसावंबरीषः । प्रतिपक्षान् शत्रून् । तस्मै अंबरीषाय । एकांतभक्तिरनन्यसेवा तया भावः स्नेहस्तेन । भृत्यादीत्यादिना राज्यादिग्रहः ॥ २८ ॥ सांवत्सरं संवत्सरनिर्वर्त्यं लोकानां भगवद्व्रतेषु प्रीत्युत्पादनार्थं संवत्सरनियमरूपेण सदा व्रतकरणश्रद्धावतां सांवत्सरं त्ववश्यं कार्यमिति शिक्षणार्थं तावन्मात्रकमपि दधारेत्यर्थः । न तु तावत्कालमेव हरिभक्तानां विप्रादीनां संध्योपासनादिवदेकादशीव्रतं नित्यमेव तत्त्यागे प्रत्यवायश्रवणात् ।''पापानि निखिलान्यन्नमायांति हरिवासरे । भक्तैस्तत्र न भोक्तव्यं भुक्त्वा भवति नारकी॥''इत्याद्युक्तेः । द्वादशीव्रतं द्वादशीमिलितैकादशीव्रतमित्यर्थः । एतेन दशमीवेधरहितमित्युक्तम् । अन्यथा 'मुहूर्त्तार्द्धावशिष्टायां द्वादश्याम्' इत्युक्तिरसंगता स्यादिति भावः । वेधादिनिर्णयस्त्वाद्यपद्यव्याख्याशतके श्रीदशमे च नंदव्रतोपाख्याने मया बहुशः प्रपञ्चितमित्युपरम्यते । यद्वा—महाभारतानुशासनपर्वोक्तसांवत्सरद्वादशीव्रतं कृतवानिति ज्ञेयम् । वस्तुतस्तु—श्रीमहाभारतानुशासनपर्वनवाधिकशततमाध्यायोक्तद्वादशीव्रतमेव कृत्वा तदन्ते त्रिरात्रोपवासः कृतः । तत्प्रकारश्च मार्गशीर्षेऽहोरात्रमुपोष्य केशवनाम्ना संपूज्याश्वमेधफलं, पौषे नारायणनाम्नार्चनाद्वाजपेयफलं, माघे माधवनाम्ना राजसूयफलं, फाल्गुने गोविंदनाम्नाऽतिरात्रफलं, चैत्रे विष्णुनाम्ना पौण्डरीकफलं, वैशाखे मधुसूदननाम्नाग्निष्टोमफलं, ज्येष्ठे त्रिविक्रमनाम्ना गोमधफलम्, आषाढे वामननाम्ना

व्रतांते कार्तिके मासि त्रिरात्रं समुपोषितः ॥ स्नातः कदाचित्कालिंद्यां हरिं मधुवनेऽर्चयत् ॥३०॥ महाभिषेकविधिना सर्वोपस्करसंपदा ॥ अभिषिच्यांबराकल्पैर्गंधमाल्यार्हणादिभिः ॥ ३१ ॥ तद्गतांतरभावेन पूजयामास केशवम् ॥ ब्राह्मणांश्च महाभागान् सिद्धार्थानपि भक्तितः ॥ ३२ ॥ गवां रुक्मविषाणीनां रूप्यांघ्रीणां सुवाससाम् ॥ पयःशीलवयोरूपवत्सोपस्करसंपदाम् ॥३३॥ प्राहिणोत्साधुविप्रेभ्यो गृहेषु न्यर्बुदानि षट् ॥ भोजयित्वा द्विजानग्रे स्वाद्वन्नं गुणवत्तमम् ॥३४॥ लब्धकामैरनुज्ञातः पारणायोपचक्रमे ॥ तस्य तर्ह्यतिथिः साक्षाद्दुर्वासा भगवानभूत् ॥३५॥ तमानर्चातिथिं भूपः प्रत्युत्थानासनार्हणैः ॥ ययाचेऽभ्यवहाराय पादमूलमुपागतः ॥ ३६ ॥ प्रतिनंद्य स तद्याच्ञां कर्तुमावश्यकं गतः ॥ निममज्ज बृहद्ध्यायन्कालिंदीसलिले शुभे ॥ ३७ ॥ मुहूर्तार्धावशिष्टायां द्वादश्यां पारणं प्रति ॥ चिंतयामास धर्मज्ञो द्विजैस्तद्धर्मसंकटे ॥ ३८ ॥

राधयिषुरित्यादिना यावदध्यायसमाप्ति ॥ २९ ॥ अर्चयत् अडागमाभाव आर्षः ॥ ३० ॥ ३१ ॥ ब्राह्मणांश्च पूजयामास । सिद्धार्थानाप्तकामान्पूजाऽनपेक्षानपि ॥ ३२ ॥ रूप्यांघ्रीणां रूप्यखुराणाम् । पयःशीलादिसंपदो यासां तासाम् ॥ ३३ ॥ न्यर्बुदानि षट् षष्टिकोटीः ॥ ३४ ॥ तर्हि तदैव दुर्वासा अतिथिः साक्षात्प्रत्यक्षोऽभूत् ॥ ३५ ॥ आनर्चार्चितवान् । अभ्यवहाराय भोजनाय ॥ ३६ ॥ आवश्यकं नैयमिकं माध्याह्निकं कर्म कर्तुं गतः । बृहद्ब्रह्म ॥ ३७ ॥ ३८ ॥

नरमेधफलं, श्रावणे श्रीधरनाम्ना पंचयज्ञफलं, भाद्रे हृषीकेशनाम्ना सौत्रामणिफलम् , आश्विने पद्मनाभनाम्ना गोसहस्रदानफलं, कार्तिके दामोदरनाम्ना गवां यज्ञफलमिति ॥ २९ ॥ मार्गमासादरभ्य कार्त्तिके व्रतांते प्राप्ते त्रिरात्रं नवमीत एकादश्यंतम् । यद्वा—तस्य स्वायुःपर्यंतमेकादशीव्रतनिष्ठत्वेऽपि संवत्सरमात्रं तु मथुरायामेव कर्त्तव्यमित्यभिलाष आसीदतस्तत्समाप्तौ सत्यां व्रतांते इति दशमीद्वादश्योर्विहितेतरभोजनाभावेनैकादश्यां निराहारत्वेन च त्रिरात्रमुपोषित इत्युक्तमिति विश्वनाथः ॥ ३० ॥ साम्राज्याभिषेकप्रकारो महाभिषेकविधिस्तेन । यद्वा—महाभिषेको महास्नानं तच्च "स्नाने पलशतं देयमभ्यंगे पञ्चविंशतिः । पलानां द्वे सहस्रे तु महास्नानं प्रकीर्त्तितम् ॥दातव्यं येन सर्वासु दिक्षु निर्याति तद्द्रुतम् । " इति दधिघृतजलमधुपयसां समुदितानां भिन्नानां वा शक्त्यनुसारेण मानं शर्करां तु यथासंभवं देया "घृतं क्षीरं दधि चैव गवामेव प्रयोजयेत् । यथासंभवमानेन माहिष्यादि विवर्जयेत्॥" इति विष्णुधर्मेषु "पंचकृष्णलका माषस्ते सुवर्णस्तु षोडश । सुवर्णानां च चत्वारः पलमित्यभिधीयते ॥" कृष्णलो गुंजा ॥३१॥ तद्गतांतरभावेन हरिनिष्ठमनस्कत्वेन । "तपोविद्यादयायुक्ता हरिनिष्ठैकचेतसः । प्रतिग्रहनिवृत्ता ये महाभागा द्विजाः स्मृताः॥" इत्युक्तलक्षणान्महाभागान् ॥ ३२ ॥ उपस्कराणि घंटाचामरदोहनपात्रादीनि ॥ ३३ ॥ साधुविप्रेभ्यो देवपितृपूजनहोमपरायणबालकुटुंबानाढ्येभ्यः । तदुक्तं महाभारते "स्वाध्यायाढ्यं शुद्धयोनिं प्रशांतं वैतानस्थं पापभीरुं बहुज्ञम् । गोषु क्षांतं नातितीक्ष्णं शरण्यं वृत्तिग्लानं तादृशं पात्रमाहुः ॥ वृत्तिग्लाने सीदति चातिमात्रं कृष्यर्थे वा हौम्यहेतोः प्रसूतेः । गुर्वर्थे वा बालसंवृद्धये वा धेनुं दद्याद्देशकाले विशिष्टे॥" इति । अग्रे दानात्पूर्वं दक्षिणात्वेन समर्पयामासेत्यर्थः । गुणवत्तमं षड्रससंयुक्तम् । प्राहिणोदित्युक्तेः पूर्वोक्तमहाभागलक्षणवत्त्वेन ते साक्षाद्दानं न गृह्णंतीत्यतस्तद्गृहेषु प्रेषयामास मनसा पात्रमुद्दिश्य संकल्पोदकं क्षिप्त्वेत्यर्थः। तदुक्तम् । "मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् । भवेच्च सागरस्यान्तं दानस्यांतं न जायते॥"इति स्मृतिकौमुद्यामतो हस्तदानाज्जले दानमनंतफलदमिति भावः । अत एव तीर्थदानमप्येवं कार्यं तदुक्तं तत्रैव "तीर्थे संकल्पितं द्रव्यं यद्यन्यत्र प्रदीयते । दाता तीर्थफलं भुंक्ते प्रतिग्राही न दोषभाक्॥" इति ॥३४॥ लब्धकामैः प्राप्तदक्षिणैर्विप्रैः । पारणाय व्रतांतभोजनाय । "समाप्तौ पारणा प्रोक्ता व्रतांताभ्यवहारके" इति निरुक्तिः । तस्य भोक्तुमुद्यतांबरीषस्य । भगवानतीतानागतादिज्ञः ॥३५॥ तं दुर्वाससम् ॥३६॥ स दुर्वासाः । ब्रह्म अघमर्षणसूक्तम् । निममज्ज सस्नौ ॥ ३७ ॥ धर्मसंकटे धर्मरूपापत्तौ

ब्राह्मणातिक्रमे दोषो द्वादश्यां यदपारणे ॥ यत्कृत्वा साधु मे भूयादधर्मो वा न मां स्पृशेत् ॥ ३९ ॥ अंभसा केवलेनाथ करिष्ये व्रतपारणम् ॥ प्राहुरब्भक्षणं विप्रा ह्यशितं नाशितं च तत् ॥४०॥ इत्यपः प्राश्य राजर्षिश्चिंतयन्मनसाऽच्युतम् ॥ प्रत्यचष्ट कुरुश्रेष्ठ द्विजागमनमेव सः ॥४१॥ दुर्वासा यमुनाकूलात्कृतावश्यक आगतः ॥ राज्ञाऽभिनंदितस्तस्य बुबुधे चेष्टितं धिया ॥ ४२ ॥ मन्युना प्रचलद्गात्रो भ्रुकुटीकुटिलाननः ॥ बुभुक्षितश्च सुतरां कृतांजलिमभाषत ॥ ४३ ॥ अहो अस्य नृशंसस्य श्रियोन्मत्तस्य पश्यत ॥ धर्मव्यतिक्रमं विष्णोरभक्तस्येशमानिनः ॥ ४४ ॥ यो मामतिथिमायातमातिथ्येन निमंत्र्य च ॥ अदत्त्वा भुक्तवांस्तस्य सद्यस्ते दर्शये फलम् ॥ ४५ ॥ एवं ब्रुवाण उत्कृत्य जटां रोषविदीपितः ॥ तया स निर्ममे तस्मै कृत्यां कालानलोपमाम् ॥ ४६ ॥ तामापतंतीं ज्वलतीमसिहस्तां पदा भुवम् ॥ वेपयंतीं समुद्वीक्ष्य न चचाल पदान्नृपः ॥ ॥ ४७ ॥ प्राग्दिष्टं भृत्यरक्षायां पुरुषेण महात्मना ॥ ददाह कृत्यां तां चक्रं क्रुद्धाहिमिव पावकः ॥ ४८ ॥ तदभिद्रवदुद्वीक्ष्य स्वप्रयासं च निष्फलम् ॥ दुर्वासा दुद्रुवे भीतो दिक्षु प्राणपरीप्सया ॥ ४९ ॥

धर्मसंकटमेवाह । यथतो ब्राह्मणातिक्रमे दोषोऽधर्मः द्वादश्यामपारणेऽपि दोषो व्रतवैगुण्यम् । यत्कृत्वा यस्मिन्कृते ॥३९॥ एवं द्विजैः सह विचार्य निश्चिनोति । अंभसेति । व्रतस्य पारणं समाप्तिम् । तदशितमाहुरशितं नेति चाहुः । श्रुतिश्च । “अपोऽश्नाति तन्नैवाशितं नैवानशितम्” इति ॥ ४० ॥ प्रत्यचष्ट प्रत्यैक्षत ॥ ४१ ॥ ४२ ॥ प्रचलत्कंपमानं गात्रं यस्य । भ्रुकुटीभ्यां कुटिलमाननं यस्य ॥४३॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ क्रुद्धमहिं पावको दावाग्निरिव ॥४८॥ निष्फलमुद्वीक्ष्य॥४९॥

प्राप्तायाम् “एकादशीव्रतं कृत्वा द्वादश्यां यो न पारयेत् । व्रतं सांवत्सरं तस्य व्येति कंदर्पपारणात्॥” इति स्मृतेः । कंदर्पस्त्रयोदशी ॥ ३८ ॥ साधु उभयदोषपरिहारेण श्रेयः । तत् द्विजैश्चितयामासेति पूर्वेणान्वयः ॥ ॥३९॥तत् अपामशनम् । अशितं भुक्तम् । अत्र प्रमाणं श्रुतिश्चेति—यः पुमानपो जलमश्नाति तदपामशनम् अनशितमभुक्तमिति श्रुत्यर्थः । यद्वा—विप्रांस्तूष्णीं स्थितानालक्ष्य स्वयमेव निश्चितमाह—अंभसेति । हे विप्राः । आहुर्धर्मशास्त्रज्ञाः ॥ ४० ॥ सः अंबरीषः ॥ ४१ ॥ तस्य अंबरीषस्य । चेष्टितं व्रतपारणलक्षणम् ॥ ४२ ॥ ४३ ॥ नृभिः शंसः स्तुतिर्यस्य तस्य । श्रियाऽपि उन्मत्तस्य मत्तं मदमुत्तीर्णस्य । न भक्तो यस्मात्तस्य । ईशं स्वेष्टदेवं मानयतीति तस्य । यद्वेशौरिंद्रादिभिर्मान्यत इति तस्य । धर्मस्य व्यतिक्रमं विगतोऽतिक्रमो लंघनं व्यतिक्रमस्तं पश्यतेति वास्तवोर्थः ॥ ४४ ॥ तस्य निमंत्र्य भोक्तुस्ते “अभुक्ते भुक्तवत्तोयं भुक्ते तोयमभुक्तवत्” इति स्मृतेः ॥ ४५ ॥ तया जटया ॥ ४६ ॥ तां कृत्याम् । वेपयंतीं कंपयंतीम् । पदान्न चचालेति ब्रह्मतेजसः प्रतिकर्तुमनर्हत्वं सर्वथा सहनार्थत्वं च विभाव्येति भावः ॥ ४७ ॥ दिष्टम् आज्ञप्तम् । पुरुषेण हरिणा । तां जटानिर्मिताम् । चक्रं कर्तृ । कृत्यां ददाह । ननु किं राज्ञा स्वरक्षार्थं निवेदितं सद्दाह नहिनहि प्रागंबरीषभजनप्रारंभदशायामेव क्वापि स्वापकारिलोकेऽप्यनपकरण स्वभावं तस्यालक्ष्य पुरुषेण भक्तवत्सलेनैव भगवतादिष्टं हे चक्र यदास्य प्राणसंकटमापतेत्तदा त्वं स्वयमेवास्याभिहंतारं जहीत्यादिष्टमिति विश्वनाथः ॥ ४८ ॥ तच्चक्रम् । उद्वीक्ष्येत्युभयत्रान्वेति ॥ ४९ ॥

तमन्वधावद्भगवद्रथांगं दावाग्निरुद्भूतशिखो यथाऽहिम् ॥ तथानुषक्तं स निरीक्षमाणो गुहां विविक्षुः प्रससार मेरोः ॥ ५० ॥ दिशो नभः क्ष्मां विवरान् समुद्राँल्लोकान् सपालांस्त्रिदिवं गतः सः ॥ यतोयतो धावति तत्रतत्र सुदर्शनं दुष्प्रसहं ददर्श ॥ ५१ ॥ अलब्धनाथः स यदा कुतश्चित्संत्रस्तचित्तोऽरणमेषमाणः ॥ देवं विरिंचं समगाद्विधातस्त्राह्यात्मयोनेऽजिततेजसो माम् ॥ ५२ ॥ ब्रह्मोवाच ॥ स्थानं मदीयं सहविश्वमेतत्क्रीडावसाने द्विपरार्धसंज्ञे ॥ भ्रूभंगमात्रेण हि संदिधक्षोः कालात्मनो यस्य तिरो भविष्यति ॥ ५३ ॥ अहं भवो दक्षभृगुप्रधानाः प्रजेशभूतेशसुरेशमुख्याः ॥ सर्वे वयं यन्नियमं प्रपन्ना मूर्ध्न्यर्पितं लोकहितं वहामः ॥ ५४ ॥ प्रत्याख्यातो विरिंचेन विष्णुचक्रोपतापितः ॥ दुर्वासाः शरणं यातः शर्वं कैलासवासिनम् ॥ ५५ ॥ श्रीरुद्र उवाच ॥ वयं न तात प्रभवाम भूम्नि यस्मिन् परेऽन्येऽप्यजजीवकोशाः ॥ भवंति काले न भवंति हीदृशाः सहस्रशो यत्र वयं भ्रमामः ॥ ५६ ॥ अहं सनत्कुमारश्च नारदो भगवानजः ॥ कपिलोऽपांतरतमो देवलो धर्म आसुरिः ॥ ५७ ॥ मरीचिप्रमुखाश्चान्ये सिद्धेशाः पारदर्शनाः ॥ विदाम न वयं सर्वे यन्मायां माययावृताः ॥ ५८ ॥ तस्य विश्वेश्वरस्येदं शस्त्रं दुर्विषहं हि नः ॥ तमेव शरणं याहि हरिस्ते शं विधास्यति ॥ ५९ ॥ ततो निराशो दुर्वासाः पदं भगवतो ययौ ॥ वैकुंठाख्यं यदध्यास्ते श्रीनिवासः श्रिया सह ॥ ६० ॥

अनुषक्तं पृष्ठतः संसक्तम् । मेरोर्गुहां विविक्षुरधावत् ॥ ५० ॥ ५१ ॥ अरणमेषमाणः शरणमिच्छन् । अजिततेजसो हरेश्चक्रात् ॥ ५२ ॥ एतत्सर्वं यस्य भ्रूभंगमात्रेण तिरो भविष्यति । कदा । क्रीडाया अवसाने तदपि कदा द्विपरार्धसंज्ञे काले ॥ ५३ ॥ अतो वयं सर्वे यस्य नियममाज्ञां प्रपन्नाः प्राप्ताः संतो लोकहितं यथा भवत्येवं तन्नियमं मूर्ध्न्यर्पितं वहामः । अतस्तद्भक्तद्रोहिणं त्वां रक्षितुं न समर्थोऽहमिति शेषः यत्तदोर्नित्यसंबंधात् ॥ ५४ ॥ ५५ ॥ श्रीरुद्रोपि प्रत्याचष्टे वयमिति चतुर्भिः । भूम्नि महति । महत्त्वमेवाह । यस्मिन्परमेश्वरे अजा ब्रह्माणस्त एव जीवास्तेषां कोशा उपाधिभूता ब्रह्माडविग्रहा ईदृशा दृश्यमानब्रह्मांडप्रमाणा अन्येऽपि भवंति जायन्ते नश्यन्ति च । यत्र येषु ब्रह्माण्डेषु लोकेशाभिमानिनो वयं भ्रमामः ॥ ५६ ॥ ननु सर्वज्ञस्य तव भ्रमः कुतस्तत्राह । अहमिति ॥ ५७ ॥ पारदर्शनाः सर्वज्ञा अपि यस्य मायां न विद्मः ॥ ५८ ॥ ५९ ॥ ६० ॥

तं दुर्वाससम् । तथा धावनविधया । मुनिर्दुर्वासाः ॥ ५० ॥ चक्रानुषक्तो मुनिरेतान्देशान्बभ्रामेत्याह–दिश इति ॥ ५१ ॥ स दुर्वासाः ॥ ५२ ॥ यस्य हरेः ॥ ५३ ॥ यतस्त दाज्ञाकारका अतो हेतोः । तद्भक्तेत्यादिशेषकरणे हेतुः–यत्तदोरिति ॥ ५४ ॥ प्रत्याख्यातोऽस्वीकृतः ॥ ५५ ॥ तातेति । प्रियत्वेप्यसामर्थ्यमाह । जीवाः समष्ट्यभिमानित्वाद्धिरण्यगर्भस्य जीवत्वम् ॥ ५६ ॥ अत्राक्षिपति–नन्विति । अपांतरतमो व्यासः ॥ ५७ ॥ ५८ ॥ तमेव चक्रेश्वरमेव ॥ ५९ ॥ ततः कैलासात् । निराश इति । शिवशिव मम ब्रह्मतेजस्वित्वाभिमानो रसातलं गतोऽन्येन ब्रह्मादिना केनाप्यहं न त्रातः मदिष्टदेवः शंभुर्मा

संदह्यमानोऽजितशस्त्रवह्निना तत्पादमूले पतितः सवेपथुः ॥ आहाच्युतानंत सदीप्सित प्रभो कृतागसं माऽव हि विश्वभावन ॥ ६१ ॥ अजानता ते परमानुभावं कृतं मयाघं भवतः प्रियाणाम् ॥ विधेहि तस्यापचितिं विधातर्मुच्येत यन्नाम्न्युदिते नारकोऽपि ॥ ६२ ॥ श्रीभगवानुवाच ॥ अहं भक्तपराधीनो ह्यस्वतंत्र इव द्विज ॥ साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः ॥ ६३ ॥ नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ॥ श्रियं चात्यंतिकीं ब्रह्मंस्तेषां गतिरहं परा ॥ ६४ ॥

हे सतामीप्सित मा माम् अव पाहि ॥ ६१ ॥ अपराधं निवेदयन्प्रार्थयते । अजानतेति । अघं दुःखम् । अपचितिं निष्कृतिम् । मद्भक्तद्रोहे निष्कृतिं न पश्यामीति चेत्तत्राह । यस्य तव नाम्नि कीर्तिते नरकस्थोऽपि मुच्यते तस्य तव किमशक्यमिति भावः ॥ ६२ ॥ ६३ ॥ न आशासे न स्पृहयामि ॥ ६४ ॥

त्रास्यतीत्याशासीत्सापि व्यर्था जाता संप्रति यस्य भक्तेनैतां दुरवस्थां प्रापितस्तस्यैव विष्णोः सन्निधिर्मम प्राणरक्षार्थं कर्त्तव्यो बभूव धिङ् मे लज्जां प्राणांश्चेति निर्वेदो ध्वनितः ॥ ६० ॥ तस्य विष्णोः । पादमूले चरणाग्रे "मूलं प्रांते जटायां चाधोदेशे भाग्रहेतुषु" इति निरुक्तिः । अवहीत्यार्षत्वाद्धेरलुक् हीति पृथक्पदं वाऽऽवश्यकेर्थे । विश्वभावन सर्वपाल ॥ ६१ ॥ तस्याघस्यापचितिं प्रायश्चित्तम् "भवेदपचितिः पूजा व्ययनिष्कृतिहानिषु" इति मेदिनी । अघापाकरणसामर्थ्यं तवैवेति स्वयमेवाह—मुच्येतेति । नारको नरकीयसमदेहं प्राप्तः श्वपचादिरपि । "चित्रं विदूरविगतः सकृदाददीत यन्नामधेयमधुना स जहाति बंधम्"इत्युक्तेः । नरकस्थानां तन्नामोच्चारणासंभवान्नरकस्थस्यात्र न ग्रहणम् । इति भाव इति । प्रभुत्वात्तव न किंचिदघटितमित्याशयः॥ ६२॥इवेन स्वातंत्र्यमेव स्वस्याह । द्विजेति पश्चाद्द्विजत्वमाह । पर्शुरामस्य शापेन 'पश्चाद्वीर्ब्राह्मणोऽभवत्' इति पुराणांतरोक्तेः । स्वतंत्रस्यास्वातंत्र्ये हेतुः—भक्तैर्ग्रस्तहृदयो वशीकृतचेता इति। यथा मदधीनत्वेनास्वातंत्र्याद्ब्रह्मरुद्रादयस्त्वां त्रातुं नाशक्नुवंस्तथैवाहमपि पराधीनत्वात्त्वां त्रातुं न शक्नोमीत्याह—अहमिति।ननु त्वं स्वयमेव भक्तपराधीनो भवसि न तु भक्तैस्त्वं पराधीनी कर्त्तुमिष्टोऽतस्त्वं स्वतंत्र एवासि।सत्यम् । स्वतंत्रोऽप्यहं स्वेच्छयैव भक्तपरतंत्रो भवामीति स्वस्वभावस्य प्रायो दुस्त्यजत्वादिवशब्दः। एतादृशमद्दुःखदर्शनेपि तव करुणा नोदयत इति चेत्सत्यम् । करुणा खलु यस्य धर्मस्तन्मन एव मम नास्तीत्याह—साधुभिर्मोक्षांतकामनाशून्योत्तमभक्तैर्ग्रस्तमात्मवशीकृतं हृदयं मनो यस्य सः। दिप्सितं मोक्षादिकमरोचकत्वात्तेषामयोग्यमालक्ष्य मया स्वहृदयमेव बलाद्दत्तं तैरपि तद्गृहीत्वा स्वहृदयेनैकीकृत्य सांदरं स्थापितमिति ध्वनिः । अत एव तेषामनुकंप्य एव ममानुकम्प्य इति भक्तकृपानुगामिनी भगवत्कृपेति सर्वलोकप्रसिद्धिस्त्वया ज्ञायत एवेति प्रतिध्वनिः। भक्तानां जना अपि प्रिया यस्य किमुत त इति । हे द्विज विप्रबटो इदमपि किन्न परामृशसीति भाव इति विश्वनाथः ॥ ६३॥ तदेवाह—नाहमिति । नाशासे नेच्छामि । तदप्रिये मम शरीरधारणेन किमपि प्रयोजनं नास्तीति भावः । यदा चात्मानमपि नाशासे तदा श्रियं नाशासे इति किं वक्तव्यमित्याह— श्रियं चेति । येषां भक्तानाम् । परा गतिः परायणम् । ननु भक्तास्ते कियत्प्रीतिविषया इति चेच्छृणु यत्राऽऽरमणादहमात्माराम इति प्रसिद्धस्तमात्मानमपि न कांक्षे मत्स्वरूपभूतानंदादपि सद्भक्तस्वरूपानंदोऽतिस्पृहणीय इति द्वयोरपि चिद्रूपत्वेपि भक्तवर्त्तिन्या भक्तेरनुग्रहाख्यचिद्वृत्तिविपाकरूपायाः सर्वचित्सारभूतत्वान्ममानंदस्वरूपस्याप्यानंदकत्वादाकर्षकत्वाच्च । श्रियं षडैश्वर्यसंपत्तिमात्यंतिकीं नित्यामपि यैर्विना वंध्यामिव

ये दारागारपुत्राप्तान् प्राणान् वित्तमिमं परम् ॥ हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ॥ ६५ ॥ मयि निर्बद्धहृदयाः साधवः समदर्शनाः ॥ वशे कुर्वंति मां भक्त्या सत्स्त्रियः सत्पतिं यथा ॥ ६६ ॥ मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम् ॥ नेच्छंति सेवया पूर्णाः कुतोऽन्यत्कालविद्रुतम् ॥ ६७ ॥ साधवो हृदयं मह्यं साधूनां हृदयं त्वहम् ॥ मदन्यत्ते न जानंति नाहं तेभ्यो मनागपि ॥ ६८ ॥ उपायं कथयिष्यामि तव विप्र शृणुष्व तत् ॥ अयं ह्यात्माभिचारस्ते यतस्तं यातु वै भवान् ॥ साधुषु प्रहितं तेजः प्रहर्तुः कुरुतेऽशिवम् ॥ ६९ ॥ तपो विद्या च विप्राणां निःश्रेयसकरे उभे ॥ ते एव दुर्विनीतस्य कल्पेते कर्तुरन्यथा ॥ ७० ॥

इमं परं च लोकं हित्वा ॥६५॥६६॥ प्रतीतं प्राप्तमपि ॥ ६७ ॥ ६८ ॥ आत्मनस्तवैवाभिचारो हिंसा यतोऽभूत्तमेव यातु । अशिवमनर्थम् ॥ ६९ ॥ तपोविद्यासंपन्नस्य

वेद्मीति भावः । येषां भक्तानामहमेव गतिरुपादेय इत्यर्थः ॥६४॥ कीदृशास्ते भक्ता इति चेत्तानाह—य इति । इमं लोकं परं च स्वर्गादिकम् । यद्वा—ब्रह्मण्यदेव मां नोपेक्षस्वेति चेत्सत्यं तर्हि किं भक्तानुपेक्षे भक्तापकारकस्य तव रक्षणेन स्वत एव ते त्यक्तास्स्युस्तत्तु नोपपद्यत इत्याह—य इति । भक्ताः खलु मदर्थं दुस्त्यजदाराद्यासक्तिमत्यजन् ब्राह्मणस्त्वं किं मदर्थमत्यजस्तद्ब्रूहीति भावः । न चांबरीषेण न किमपि त्यक्तमिति वाच्यं यदा त्वयांबरीषवधार्थं कृत्या विनियुक्ता तदा तेन स्वदेहरक्षार्थं पदमात्रमपि नाभिद्रुतं त्वया त्वात्मारामेण महाविरक्तेन स्वदेहरक्षार्थं जगदेव परिक्राम्यता ब्रह्मादयोऽपि प्रार्थिताः एतेनैव स्वस्य तस्य च मूल्यं जानीहि किमधिकं त्वमबुधो बोधयितव्य इति ॥ ६५ ॥ युष्माभिर्ब्रह्मवादिभिरप्यहं दुर्वशस्तैर्वशीकृत एवाहमस्मीत्याह—मयीति । मय्येव हृदयस्य निर्बद्धत्वात्साधवो निष्कामाः स्वस्य परेषां च दुःखादिकं समं पश्यंतः ॥ ६६ ॥ तेषां निष्कामत्वस्य परमकाष्ठामाह—मत्सेवयेति । यद्वा—अत्यागे कारणं तु नैरपेक्ष्यमेवेत्याह—मदिति । प्रतीतं स्वतः प्राप्तमपि । कुतोऽन्यदिति सालोक्यादीनां कालेनाविद्रुतत्वं दर्शयति । कालविद्रुतं पारमेष्ठ्यादि ॥ ६७ ॥ किं च मां संतापयते तुभ्यं समुचितं फलं दित्सन्नपि यन्न ददामि एतामेव मे परां ब्रह्मण्यतामवेहीत्याह—साधव इति । मह्यं ममांबरीषं ज्वलयितुमिच्छंस्त्वं मद्धृदयमेव ज्वालयितुं प्रवृत्तोऽभूरित्यर्थः । तर्हि त्वदपराध एवायं चेत्तर्हि त्वच्चरणे पतामि प्रसीदेत्यत आह—साधूनां हृदयं त्वहं साधुहृदयप्रसादे सत्येव मत्प्रसाद इत्यतो याहि तमंबरीषमेव प्रसादयेति भावः । नन्वंबरीषो मां निमंत्र्याभोजयित्वा स्वयं भुक्तवांस्तद्दोषं कुतो न पश्यसि तत्राह—मदन्यत्ते न जानंतीति । मच्चिकीर्षितमेवांबरीषेण कृतमिति भावः । तर्हि त्वामेवाहं पृच्छामि ब्रूहि ब्राह्मणद्वादश्योर्मध्ये कस्यादरो धर्म इति चेद्याहि तमंबरीषमेव पृच्छ स एव त्वां धर्मशास्त्रानभिज्ञं बोधयिष्यति मात्र लज्जां कामपि कार्षीस्तादृशो नाहमपि विज्ञ इत्याह—नाहं तेभ्यो मनागप्याधिकं जानामीत्यर्थः । तेन श्रुतौ पानीयस्याशितत्वानशितत्वयोस्तुल्यत्वदर्शनाद्द्वादशीब्राह्मणयोस्तुल्य एवादरः कृतो भद्भक्तेनांबरीषेण त्वं त्वनभिज्ञस्तन्न जानासीति ध्वनिः । दुर्वासास्तु फलदर्शनेन द्वादश्या एव भक्तित्वात्सर्वधर्माधिक्यं निर्द्धारयन्नंबरीषं किमपि नो पृष्टवानित्यनुध्वनिः । हृदयं प्रियाः 'वेदाः प्रमाणम्' इतिवत्संबंधः । मदन्यत् प्रियमिति शेषः । 'स्वांते हृद्ये प्रिये वुक्के हृदयं हार्दवक्षसोः" इति धरणिः । मनाक् ईषदर्थे॥६८॥किं च तन्निस्तारोपायं स्पष्टमेव ब्रवीति—अयमिति । यद्वधार्थं त्वयाभिचारः कृतः स एव त्वां त्रास्यते नान्य इति भावः । यतो नृपाद्धेतोः।तमेव नृपम् । यद्वा ते तव । आत्मन कृतोऽभिचारः कृत्या । यतो यस्मै तमिति संबंधः । ननु तस्मै कृतो मह्यं कथमाप्त इति चेदाह—साधुष्विति । यद्वा न चांबरीषं त्वं दुःखदं मन्येथा इत्याह—साधुष्विति । प्रहितं प्रयुक्तम् । क्षुद्रोपद्रवलक्षणं तेजः प्रभावा 'तेजो बले प्रभावे च' इति ॥६९॥ ननु तपोविद्यासंपन्नस्य मम कुतः क्षत्रियात्त्राणं युज्यत इति चेदपात्रस्य तव तपोविद्ये नैव स्तः प्रत्युत ते विपरीते एवेत्याह—तप इति । यद्वा—ममैतदयुक्तमित्याक्षिपति—तपोविद्येति ।

ब्रह्मंस्तद्गच्छ भद्रं ते नाभागतनयं नृपम् ॥ क्षमापय महाभागं ततः शांतिर्भविष्यति ॥ ७१ ॥ इति श्रीमद्भागवते महापुराणे अष्टादशसाहस्र्यां संहितायां नवमस्कंधे अंबरीषचरिते चतुर्थोऽध्यायः ॥ ४ ॥ श्रीशुक उवाच ॥ एवं भगवतादिष्टो दुर्वासाश्चक्रतापितः ॥ अंबरीषमुपावृत्य तत्पादौ दुःखितोऽग्रहीत् ॥ १ ॥ तस्य सोद्यमनं वीक्ष्य पादस्पर्शविलज्जितः ॥ अस्तावीत्तद्धरेरस्त्रं कृपया पीडितो भृशम् ॥ २ ॥ अंबरीष उवाच ॥ त्वमग्निर्भगवान् सूर्यस्त्वं सोमो ज्योतिषां पतिः ॥ त्वमापस्त्वं क्षितिर्व्योम वायुर्मात्रेंद्रियाणि च ॥ ३ ॥ सुदर्शन नमस्तुभ्यं सहस्राराच्युतप्रिय ॥ सर्वास्त्रघातिन् विप्राय स्वस्ति भूया इडस्पते ॥ ४ ॥ त्वं धर्मस्त्वमृतं सत्यं त्वं यज्ञोऽखिलयज्ञभुक् ॥ त्वं लोकपालः सर्वात्मा त्वं तेजः पौरुषं परम् ॥ ५ ॥ नमः सुनाभाखिल धर्मसेतवे ह्यधर्मशीलासुरधूमकेतवे ॥ त्रैलोक्यगोपाय विशुद्धवर्चसे मनोजवायाद्भुतकर्मणे गृणे ॥ ६ ॥

मम कथमनर्थः समजनीति मा स्म विस्मयं कार्षीरित्याह । तप इति ॥ ७० ॥ ७१ ॥ इति नवमस्कंधे टीकायां चतुर्थोऽध्यायः ॥ ४ ॥ पंचमे विष्णुचक्रं तु प्रसाद्य प्राणसंकटात् ॥ दुर्वासा रक्षितस्तेन तथा तद्वृत्तमीर्यते ॥ १ ॥ १ ॥ स उद्यमनमिति छेदः । सुलोपः पादपूरणार्थः ॥ २ ॥ ज्योतिषां नक्षत्राणां पतिः सोमस्त्वम् । मात्राणींद्रियाणि च । त्वच्छक्त्यैवाग्न्यादयः स्वंस्वं कार्यं कुर्वंतीत्यर्थः ॥ ३ ॥ सहस्रमरा यस्य हे सहस्रार । स्वस्ति शरणं भूयाः । इडस्पते पृथ्वीपते ॥ ४ ॥ ब्राह्मणरक्षणं तव युक्तमेवेत्याह । त्वं धर्म इति । न च तवेयमतिस्तुतिरित्याह । पौरुषं पुरुषस्येश्वरस्य परं तेजः सामर्थ्यं त्वम् । अयं भावः । "स ऐक्षत" इत्यादिश्रुतिप्रसिद्धं भगवतः शोभनं दर्शनं सुदर्शनं तत एव सर्वं जातमतस्त्वमेव सर्वात्मेति ॥ ५ ॥ हे सुनाभ अद्भुतकर्माणं त्वां कः स्तोतुं समर्थोऽतस्तुभ्यं केवलं नमो गृण इत्यन्वयः । अद्भुतकर्मत्वमेवाह । अखिलानां धर्माणां सेतवे मर्यादारूपाय । अत एवाधर्मशीलानामसुराणां धूमकेतवे दाहकाय त्रैलोक्यं गोपायतीति तथा । विशुद्धमत्युज्ज्वलं

ते एव तपोविद्ये एव । दुर्विनीतस्य विनयशून्यस्य । कर्तुः पुंसः । अन्यथाऽनर्थंकरे । कल्पेते भवतः ॥७०॥ ब्रह्मन्निति । ब्राह्मणत्वात्त्वेदं ब्रवीमीत्याह । यतोऽहं भक्ताधीनत्वान्न किंचित्कर्तुं समर्थस्ततस्मात् । नृपमंबरीषम् । ततो नृपादेव । शांतिः कल्याणम् । 'शान्तिः कल्याणनाशयोः' इति निरुक्तिः ॥ ७१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे चतुर्थोऽध्यायः ॥४॥ तेन अंबरीषेण । तद्वृत्तमंबरीषधर्मस्थितिरूपम् ( १ ) । तत्पादावंबरीषांघ्री ॥ १ ॥ तस्य दुर्वाससः । सः अंबरीषः । उद्यमनं स्तवनाद्युद्यमम् । तत् सुदर्शनम् ॥२॥ इत्यर्थ इति । "यच्चंद्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्" इति भावः ॥३॥ अराणि नेमिनाभ्यंतरालगतानि चक्रांगानि " अरं शीघ्रे च चक्रांगे शीघ्रगे पुनरन्यवत् " इति मेदिनी । इडस्पत इति व्याख्यातचरम् ॥ ४ ॥ परतेजस्त्वाभिप्रायमाह—अयं भाव इति । दर्शनं विमर्शरूपम् । तत एव भगवदीक्षणलक्षणसुदर्शनादेव । सर्वं जातम् "स इमाँल्लोकानसृजत" इति श्रुतेः । यतस्सुदर्शनाच्छोभनेक्षणात्सर्वोत्पत्तिः अतो हेतोः ॥ ५ ॥ सुष्ठु नाभिरराक्षाधिकरणस्थानं यस्य तत्तथा । "अच् प्रत्यन्वव—" इत्यत्राजितियोगविभागात् समासांतोच् । ननु भक्तिधर्मपालकाय तुभ्यं द्रुह्यंतमेनं विप्रमवश्यं तापयामि तत्राह—अधर्मशीलेति । धर्मशीला असुरा अधर्मशीला विप्रा अपि त्वया रक्षणीया इति भावः । अतः स्तुत्यसमर्थत्वात् । अत एव सर्वधर्माधारत्वा

त्वत्तेजसा धर्ममयेन संहृतं तमः प्रकाशश्च धृतो महात्मनाम् ॥ दुरत्ययस्ते महिमा गिरां पते त्वद्रूपमेतत्सदसत्परावरम् ॥ ७ ॥ यदा विसृष्टस्त्व मनंजनेन वै बलं प्रविष्टोऽजित दैत्यदानवम् ॥ बाहूदरोर्वंघ्रिशिरोधराणि वृश्चन्नजस्रं प्रधने विराजसे ॥ ८ ॥ स त्वं जगत्त्राणखलप्रहाणये निरूपितः सर्वसहो गदाभृता ॥ विप्रस्य चास्मत्कुलदैवहेतवे विधेहि भद्रं तदनुग्रहो हि नः ॥ ९ ॥ यद्यस्ति दत्तमिष्टं वा स्वधर्मो वा स्वनुष्ठितः ॥ कुलं नो विप्रदैवं चेद्द्विजो भवतु विज्वरः ॥ १० ॥ यदि नो भगवान् प्रीत एकः सर्वगुणाश्रयः ॥ सर्वभूतात्मभावेन द्विजो भवतु विज्वरः ॥ ११ ॥ श्रीशुक उवाच ॥ इति संस्तुवतो राज्ञो विष्णुचक्रं सुदर्शनम् ॥ अशाम्यत् सर्वतो विप्रं प्रदहद्राजयाच्ञया ॥ १२ ॥ स मुक्तोऽस्त्राग्नितापेन दुर्वासाः स्वस्तिमांस्ततः ॥ प्रशशंस तमुर्वीशं युंजानः परमाशिषः ॥ १३ ॥

वर्चस्तेजो यस्य तस्मै ॥ ६ ॥ तदेव प्रपंचयति त्वत्तेजसेति द्वाभ्याम् । सूर्यादीनां प्रकाशश्च त्वयैव रूप्यते प्रकाश्यत इति त्वद्रूपम् ॥ ७ ॥ हे अजितानंजनेन श्रीहरिणा यदा विसृष्टस्त्वं तदा दैत्यदानवानां बलं प्रविष्टः संस्तेषां बाह्वादीन्भिदन्विराजसे । पाठांतरे ऊर्जिता दैत्यदानवा यस्मिंस्तद्बलम् । पूर्वपदेन संधिरार्षः ॥८॥ किं च । त्वया भगवन्नियुक्तेन खलानामेव दंडः कार्यः साधवस्तु रक्षणीया अतो विप्रस्य रक्षणेनास्माननुगृहाणेत्याह । सं त्वमिति । हेजगत्त्राण स एवंभूतस्त्वं खलानामेव प्रहारार्थं निरूपितो नियुक्तः अतोऽस्मत्कुलस्य दैवहेतवे भाग्यलाभाय विप्रस्य भद्रं विधेहि तदेव नोऽनुग्रहः ॥ ९ ॥ सर्वसुकृतार्पणेन विप्ररक्षां प्रार्थयते यद्यस्तीति द्वाभ्याम् । विप्रो दैवं देवता यस्मिंस्तत् ॥ १० ॥ ११ ॥ राज्ञस्तस्यैव यच्ञया ॥ १२ ॥ १३ ॥

देव ॥ ६ ॥ गिरां वेदलक्षणानां पतेऽवैदिकसंहर्तृत्वेन पालक । तमोऽधर्मलक्षणम् । प्रकाशो धर्मप्रवर्तनम् । महति वेद आत्मा बुद्धिर्येषां तेषां शिष्टानामित्यर्थः । नन्वस्य तेजस्विमांनिनो विप्रस्यैं चिकित्सावश्यं कर्त्तव्यैव तत्राह—त्वद्रूपमिति । त्वं साक्षात्परमेश्वरोसि तत एवान्यत्र स्वतेजो न दर्शनीयं सर्वस्य त्वद्रूपत्वादिति भावः ॥ ७ ॥ ननु तदप्यनेन सह विहर्त्तुकामोऽस्मीति चेन्मैवं तवासुरसंग्राम एव विहाररंगभूमिरित्याह—यदेति । अंजनमुपाधिस्तद्रहितेन । पाठांतरे 'ऊर्जितदैत्यदानवम्' इति पाठे । पूर्वपदेन प्रविष्ट इति पदेन । प्रधने संग्रामे ॥ ८ ॥ धर्ममयतजस्त्वमाह—किञ्चेति । जगतां त्राणो येन यस्माद्वा स तथा । एवं भूतः साधुरक्षणा साध्वरक्षणप्रभावः । अतः खलहंतृत्वादेव । 'दैवं दिष्टं भागधेयं भाग्यं स्त्री' इत्यमरः । मन्निमित्तं ब्रह्महत्ययास्मत्कुलमेव नश्यतीति भावः । तदेव ब्राह्मणरक्षणमेव । सर्वसहत्वाद्द्विप्रापराधस्त्ववश्यं सहनीय एव त्वयेत्यर्थः । नन्वहं त्वद्विद्वेषिसंहाराय भगवता नियुक्तस्तत्राह—हे जगत्त्राण खलानां संहाराय सर्वसहः सर्वबलस्वरूपः । यद्वा—वात्सल्यात्सर्वमप्यस्माकमपराधं सहसे इति सर्वसहः । अस्य विप्रस्यापराधः क्षम्यतामिति । न चास्य मद्द्वेषित्वमित्याह—अस्मत्कुलस्य दैवहेतवे भाग्यलाभाय विप्रस्य भद्रं विधेहीति विश्वनाथः ॥ ९ ॥ ब्रह्मण्यदेवानुयायित्वेन स्वकुलस्यापि ब्रह्मण्यदेवत्वमाह—चेदस्ति तर्हि विज्वरो निरुपद्रवः ॥ १० ॥ सर्वभूतेष्वात्मभावेन भगवद्दृष्ट्या यदि नो भगवान्हरिः॥ ११ ॥राज्ञोंबरीषस्य । याच्ञया प्रार्थनया । प्रदहद्भस्मीकुर्वत्॥ १२ ॥योऽतीव दुःसहक्रोधः स दुर्वासाः।ततः अस्त्रतापनिवृत्त्यनंतरम् । तम् अम्बरीषम्। उर्वीशं धरापतिम्॰। परं स्वस्मादुत्कृष्ट

दुर्वासा उवाच ॥ अहो अनंतदासानां महत्त्वं दृष्टमद्य मे ॥ कृतागसोऽपि यद्राजन्मंगलानि समीहसे ॥ १४ ॥ दुष्करः को नु साधूनां दुस्त्यजो वा महात्मनाम् ॥ यैः संगृहीतो भगवान् सात्वतामृषभो हरिः ॥ १५ ॥ यन्नामश्रुतिमात्रेण पुमान्भवति निर्मलः ॥ तस्य तीर्थपदः किं वा दासानामवशिष्यते ॥ १६ ॥ राजन्ननुगृहीतोऽहं त्वयाऽतिकरुणात्मना ॥ मदघं पृष्ठतः कृत्वा प्राणा यन्मेऽभिरक्षिताः ॥ १७ ॥ राजा तमकृताहारः प्रत्यागमनकांक्षया ॥ चरणावुपसंगृह्य प्रसाद्य समभोजयत् ॥ १८ ॥ सोऽशित्वाऽऽहृतमानीतमातिथ्यं सार्वकामिकम् ॥ तृप्तात्मा नृपतिं प्राह भुज्यतामिति सादरम् ॥ १९ ॥ प्रीतोऽस्म्यनुगृहीतोऽस्मि तव भागवतस्य वै ॥ दर्शनस्पर्शनालापैरातिथ्येनात्ममेधसा ॥ २० ॥ कर्मावदातमेतत्ते गायंति स्वःस्त्रियो मुहुः ॥ कीर्तिं परमपुण्यां च कीर्तयिष्यति भूरियम् ॥ २१ ॥ श्रीशुक उवाच ॥ एवं संकीर्त्य राजानं दुर्वासाः परितोषितः ॥ ययौ विहायसाऽऽमंत्र्य ब्रह्मलोकमहैतुकम् ॥ २२ ॥ संवत्सरोऽत्यगात्तावद्यावता नागतो गतः ॥ मुनिस्तद्दर्शनाकांक्षो राजाऽब्भक्षो बभूव ह ॥ २३ ॥ गते च दुर्वाससि सोंबरीषो द्विजोपयोगातिपवित्रमाहरत् ॥ ऋषेर्विमोक्षं व्यसनं च बुद्ध्वा मेने स्ववीर्यं च परानुभावम् ॥ २४ ॥

॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ राजेत्यादिश्लोकद्वयं शुकोक्तिः ॥ १८ ॥ १९ ॥ प्रीतोऽस्मीति श्लोकद्वयं पुनश्च विप्रोक्तिः । आत्मनि मेधा येन तेनातिथ्येन ॥ २० ॥ भूरियं तत्रस्थो जनः कीर्तयिष्यति ॥ २१ ॥ २२ ॥ तस्य धैर्यातिशयमाह । गतो मुनिर्यावता नागतस्तावत्संवत्सरोऽतिक्रांत इति ॥ २३ ॥ द्विजस्योपयोगेन भोजनेनातिपवित्रमाहरद्बुभुजे । स्ववीर्यं च धैर्यादिलक्षणं परानुभावं भगवतः प्रभावं मेने ॥ २४ ॥

प्रभावम् । यद्वा—परमा ऐहिकामुष्मिकहिताः । आशिषः शुभवाचः । युंजानो वदन् ॥ १३ ॥ स्वानुभूतं हरिभक्तोत्कर्षमाह—अहो इति । महत्त्वं महिमा । कृतापराधस्यापि यतो मम मंगलानि प्राणरक्षणादीनि । संमीहसे कुरुषे ॥ १४ ॥ कोऽनुग्रहः दुष्करो न कोपीति । कोऽपराधो दुस्त्यज इति । साधुमहात्मशब्दौ परोपकृतिदयालुतावत्त्वरूपप्रवृत्तिनिमित्तभेदादेकार्थावपि पृथक्पतितौ । यैः साधुभिः । संगृहीत इति । यथान्यैर्धनादिस्संगृह्यते तथेत्यर्थः । हरिः संगृहीतोपि तदीयचेतश्चोरयतीत्यर्थः ॥ १५ ॥ हरिभक्तानां नैतदाश्चर्यमित्याह—यन्नामेति ॥ १६ ॥ १७ ॥ तं दुर्वाससं प्रसाद्य ॥ १८ ॥ स दुर्वासाः । अशित्वा भुक्त्वा । आदृतं यथा स्यात्तथा नीतमतिथ्यर्थमन्नादिकमातिथ्यमतिथिप्रियं, सर्वे कामाः काम्यमाना रसा यस्मिंस्तत्सार्वकामिकम् ॥ १९ ॥ मेधा बुद्धिः । पूर्वं त्वद्दर्शनादिभिः कर्तृभिरहं नानुगृहीतः प्रीतश्चाभवं यतो रुषांधः कृत्यां ससृजे इदानीं त्वनुगृहीतः । तत्र हेतुः—भक्तकर्माणि तद्विषयकभक्त्युत्थानि यदि दर्शनादीनि स्युस्तदैव ज्ञानितपस्विविप्राननुगृह्णंति नान्यथा इत्यत्राहमेव दृष्टांत इत्यसूचि । आत्ममेधसा आत्मनो मम मेधसा ईदृग्बुद्ध्या । यद्यहमंबरीषवचनमग्रहीष्यं तदा कथमित्थमभविष्यं तेन चक्रतापोपि मम परोपकारकः संसारतारको भक्तिपथज्ञापकोऽभूदिति भावः ॥ २० ॥ एतत् सुदर्शनान्मन्मोक्षणरूपम् । तत्रस्थो भूमिष्ठः 'तात्स्थ्यात्ताच्छब्द्यम्' इति न्यायात् । यावद्भूः स्थास्यति तावदेतत्ते कर्मापीति भावः ॥ २१ ॥ अहैतुकं कर्मालभ्यम् ॥ २२ ॥ अब्भक्षः पारणकालिकजलमात्रमेव भक्षो भोजनं यस्य स तथा ॥ २३ ॥ २४ ॥

एवंविधानेकगुणः स राजा परात्मनि ब्रह्मणि वासुदेवे ॥ क्रियाकलापैः समुवाह भक्तिं ययाऽऽविरिंचान्निरयांश्चकार ॥ २५ ॥ अथांबरीषस्तनयेषु राज्यं समानशीलेषु विसृज्य धीरः ॥ वनं विवेशात्मनि वासुदेवे मनो दधद्ध्वस्तगुणप्रवाहः ॥ २६ ॥ इत्येतत्पुण्यमाख्यानमंबरीषस्य भूपतेः ॥ संकीर्तयन्ननुध्यायन् भक्तो भगवतो भवेत् ॥ २७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे अंबरीषचरिते पंचमोऽध्यायः ॥ ५ ॥ श्रीशुक उवाच ॥ विरूपः केतुमाञ्शंभुरंबरीषसुतास्त्रयः ॥ विरूपात्पृषदश्वोऽभूत्तत्पुत्रस्तु रथीतरः ॥ १ ॥ रथीतरस्याप्रजस्य भार्यायां तंतवेऽर्थितः ॥ अंगिरा जनयामास ब्रह्मवर्चस्विनः सुतान् ॥ २ ॥ एते क्षेत्रे प्रसूता वै पुनस्त्वांगिरसाः स्मृताः ॥ रथीतराणां प्रवराः क्षत्रोपेता द्विजातयः ॥ ३ ॥ क्षुवतस्तु मनोर्जज्ञे इक्ष्वाकुर्घ्राणतः सुतः ॥ तस्य पुत्रशतज्येष्ठा विकुक्षिनिमिदंडकाः ॥ ४ ॥ तेषां पुरस्तादभवन्नार्यावर्ते नृपा नृप ॥ पंचविंशतिः पश्चाच्च त्रयो मध्ये परेऽन्यतः ॥ ५ ॥

एवंविधा अनेके गुणा यस्य सः । आविरिंचान्विरिंचपदसहितान्भोगान्निरयप्रायानपश्यदित्यर्थः ॥ २५ २६ ॥ २७ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां पंचमोध्यायः ॥ ५ ॥ षष्ठारंभेंबरीषस्य वंशमुक्त्वा ततः परम् ॥ षष्ठाद्यष्टभिरध्यायैरिक्ष्वाकोर्वंश उच्यते ॥ १ ॥ तत्र षष्ठे शशादादिर्मांधात्रंतो निरूप्यते ॥ प्रसंगात्सौभरेराख्या मांधातृतनयापतेः ॥ २ ॥ १ ॥ तंतवे संतानार्थम् ॥ २ ॥ ये अंगिरसा जनिता एते रथीतरस्य क्षेत्रे प्रसूतत्वेन रथीतरगोत्राः संतोंगिरसो वीर्येण प्रसूतत्वादांगिरसाश्च । पुनरपि रथीतराणामन्येषां जातानां प्रवरा मुख्याः स्मृताः । यतः क्षत्रोपेता ब्राह्मणा इत्यर्थः ॥ ३ ॥ तदेवं मनोर्दशसु पुत्रेषु पृषध्रश्च कविश्च विरं कत्वान्न वंशप्रवर्तकौ करूषादीनां च सप्तानां वंशास्तारतम्यक्रमेणोक्ताः इदानीमतिविततमिक्ष्वाकोर्वंशमाह । क्षुवतस्त्वित्यादिना यावत्सोमवंशप्रस्तावः । क्षुतं कुर्वतो मनो घ्राणतो जज्ञे । श्रद्धायां जनयामास दश पुत्रानिति पूर्वोक्तं बाहुल्याभिप्रायेणेति द्रष्टव्यम् । पुत्राणां शते ज्येष्ठाः ॥ ४ ॥ "आर्यावर्तः पुण्यभूमिर्मध्यं विंध्यहिमालयोः" तस्मिन्पुर

एवंविधा दुर्वासोमोक्षणसदृशाः । इत्यर्थ इति । भक्तिरसानंदमग्नस्य पुनरावृत्तिमत्सु ब्रह्मलोकपर्यंतलोकभोगेषु । निरयवन्नेच्छाप्युदयत इति भावः ॥ २५ ॥ अथ लोकेषु निरयदृष्ट्या वैराग्योत्पत्त्यनंतरम् । गुणप्रवाहस्संसारः ॥ २६ ॥ आख्यानफलमाह—इतीति ॥ २७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे पंचमोऽध्यायः ॥ ५ ॥ ॥ ततोंबरीषवंशोक्तेः ( १ ) । तत्र अष्टसु मध्ये । आख्या कथा ( २ ) । तत्पुत्रः पृषदश्वसुतः ॥ १ ॥ २ ॥ इत्यर्थ इति । क्षत्त्रधर्मयुता ब्राह्मणा एव रथीतरगोत्रप्रवरा बभूवुर्न तु क्षत्त्रिया इति । यद्वा—द्वे जाती येषां ते इत्यन्वर्थसंज्ञा बभूवुः ॥ ३ ॥ क्षुतं छिक्काम 'क्षुवं क्षुते राजिकायाम्' इति मेदिनी । घ्राणतो घ्राणाधिकरणनासिकातः । पूर्वं श्रद्धायां तदुत्पत्तिकथनं तु तस्यां बहुपुत्त्रोत्पत्तिकथनप्रसंगात्केवलपितृजस्यापि मातृसहोदरत्वाभावेप्येकपितृजत्वेन सहोदरत्वोपचाराद्दशसु निवेशात् । भारते तु मनोः प्रसंधिः प्रसंधेः क्षुपस्तस्मादिक्ष्वाकुरित्युक्तम् तच्चेत्थमनुसंधेयम्—मनोः घ्रं भगमणति प्राप्नोत्यनेनेति घ्राणः पुत्त्रस्तस्मात् प्रसंधेर्जातात् क्षुवतः क्षुवनामक पुत्त्रादिक्ष्वाकुर्जात इति "घ्रो घोषो मदनश्चूतो भगो ज्ञो यामिनीपतिः" इति सौभरिः । क्षुवक्षुपनाम्नि वर्णभेद उच्चारणकृत एव कल्पांतराभिप्रायेण यथाश्रुत एव वास्त्विति ॥ ४ ॥ "आ समुद्रात्पुरस्तात्तु आ समुद्रात्तु

स एकदाऽष्टकाश्राद्ध इक्ष्वाकुः सुतमादिशत् ॥ मांसमानीयतां मेध्यं विकुक्षे गच्छ मा चिरम् ॥ ६ ॥ तथेति स वनं गत्वा मृगान्हत्वा क्रियार्हणान् ॥ श्रांतो बुभुक्षितो वीरः शशं चाददपस्मृतिः ॥ ७ ॥ शेषं निवेदयामास पित्रे तेन च तद्गुरुः ॥ चोदितः प्रोक्षणायाह दुष्टमेतदकर्मकम् ॥ ८ ॥ ज्ञात्वा पुत्रस्य तत्कर्म गुरुणाऽभिहितं नृपः ॥ देशान्निःसारयामास सुतं त्यक्तविधिं रुषा ॥ ९ ॥ स तु विप्रेण संवादं जापकेन समाचरन् ॥ त्यक्त्वा कलेवरं योगी स तेनावाप यत्परम् ॥ १० ॥ पितर्युपरतेऽभ्येत्य विकुक्षिः पृथिवीमिमाम् ॥ शासदीजे हरिं यज्ञैः शशाद इति विश्रुतः ॥ ११ ॥ पुरंजयस्तस्य सुत इंद्रवाह इतीरितः ॥ ककुत्स्थ इति चाप्युक्तः शृणु नामानि कर्मभिः ॥ १२ ॥ कृतांत आसीत्समरो देवानां सह दानवैः ॥ पार्ष्णिग्राहो वृतो वीरो देवैर्दैत्यपराजितैः ॥ १३ ॥ वचनाद्देवदेवस्य विष्णोर्विश्वात्मनः प्रभोः ॥ वाहनत्वे वृतस्तस्य बभूवेंद्रो महावृषः ॥ १४ ॥

स्तात्समुद्रपर्यंतं मंडलविभागेन पंचविंशतिर्नृपा अभवन् । हे नृप तथैव पश्चाच्च पंचविंशतिः । मध्ये तु ज्येष्ठास्त्रयः । अपरे त्वन्यतो दक्षिणोत्तरादिषु ॥५॥ विकुक्षिरेव शशाद इति विश्रुत इति वक्ष्यति तत्र हेतुमाह । एकदेति चतुर्भिः ॥ ६ ॥ क्रियार्हणान् श्राद्धार्हान् । आददभक्षयत् ॥ ७ ॥ तद्गुरुर्वशिष्ठः । प्रोक्षणाय श्राद्धोचितसंस्काराय ॥ ८ ॥ त्यक्तो विधिः सदाचारो येन तम् ॥ ९ ॥ स त्विक्ष्वाकुः जापकेन वशिष्ठेन । राज्यभोगेन विरक्तो योगी संस्तेन योगेन कलेवरं त्यक्त्वा स यत्परं तत्त्वं तदवाप ॥ १० ॥ शासत्पालयन्हरिमीजे ॥ ११ ॥ दैत्यपुरस्य जयात्पुरंजयः इंद्रो वाहो यस्येतींद्रवाहः ककुदि स्थितत्वात्ककुत्स्थ इति च शशादसुतस्य त्रीणि नामानि तत्तत्कर्मनिमित्तानि ॥ १२ ॥ तान्येव व्याचक्षाण आह कृतांत इहि सप्तभिः । कृतं विश्वमंतयतीति तथा । पार्ष्णिग्राहः सहायः ॥ १३ ॥ इंद्रो यदि मम वाहनं

पश्चिमात् । तयोरेवांतरं गिर्योरार्यावर्त्तं प्रचक्षते ॥" इति केचित् । मध्ये मध्यदेशे । अपरे सप्तचत्वारिंशन्नृपाः ॥ ५ ॥ यस्य घ्राणतो जन्म स इति । तत्र शशादत्वे मेध्यं श्राद्धार्हम् ॥ ६ ॥ पितुर्वचस्तथेति गृहीत्वा । अदने हेतुः—अपस्मृतिस्तत्रापि श्रांतस्तत्रापि बुभुक्षित इति ॥ ७ ॥ तेन पित्रा । तत्तस्येति वा स चासौ गुरुः प्रसिद्धगुरुः तद्गुरुः । अकर्मकं कर्मानर्हम् ॥ ८ ॥ तत्कर्म मांसोच्छिष्टकरणरूपं कर्म ॥ ९ ॥ स योगी अभूदिति शेषः । तेन स इत्यस्य पौनरुक्तं न वाक्यभेदात् ॥ १० ॥ शासदिति । जक्षादित्वाच्छतरि नुमभावः ॥ ११ ॥ तस्य शशादस्य । ककुदि वृषस्कंधोच्चदेशे "वृषांगे राजचिह्ने च ककुच्च ककुदो वरे" इति निरुक्तिः ॥ १२ ॥ तान्येव नामान्येव । व्याचक्षाणो व्याख्यातुकामः । यद्वा—कृतस्य युगस्यांते त्रेतादौ । सप्तम्यंतपाठांगीकारे एवायमर्थः ॥ १३ ॥ तव वाहनत्वम् । तस्य शशादात्मजस्य । इत्यर्थ इति ।

स संनद्धो धनुर्दिव्यमादाय विशिखाञ्छितान् ॥ स्तूयमानः समारुह्य युयुत्सुः ककुदि स्थितः ॥ १५ ॥ तेजसाऽऽप्यायितो विष्णोः पुरुषस्य परा
त्मनः ॥ प्रतीच्यां दिशि दैत्यानां न्यरुणत्रिदशैः पुरम् ॥ १६ ॥ तैस्तस्य चाभूत्प्रधनं तुमुलं लोमहर्षणम् ॥ यमाय भल्लैरनयद्दैत्यान् येऽभिययु
र्मृधे ॥ १७ ॥ तस्येषुपाताभिमुखं युगांताग्निमिवोल्बणम् ॥ विसृज्य दुद्रुवुर्दैत्या हन्यमानाः स्वमालयम् ॥ १८ ॥ जित्वा पुरं धनं सर्वं सश्रीकं
वज्रपाणये ॥ प्रत्ययच्छत्स राजर्षिरिति नामभिराहृतः ॥ १९ ॥ पुरंजयस्य पुत्रोऽभूदनेनास्तत्सुतः पृथुः ॥ विश्वरंधिस्ततश्चंद्रो युवनाश्वश्च
तत्सुतः ॥ २० ॥ शावस्तस्तत्सुतो येन शावस्ती निर्ममे पुरी ॥ बृहदश्वस्तु शावस्तिस्ततः कुवलयाश्वकः ॥ २१ ॥ यः प्रियार्थमुतंकस्य धुंधुना
माऽसुरं बली ॥ सुतानामेकविंशत्या सहस्रैरहनद्वृतः ॥ २२ ॥ धुंधुमार इति ख्यातस्तत्सुतास्ते च जज्वलुः ॥ धुंधोर्मुखाग्निना सर्वे त्रय एवावशे
षिताः ॥ २३ ॥ दृढाश्वः कपिलाश्वश्च भद्राश्व इति भारत ॥ दृढाश्वपुत्रो हर्यश्वो निकुंभस्तत्सुतः स्मृतः ॥ २४ ॥ बर्हणाश्वो निकुंभस्य
कृशाश्वोऽथास्य सेनजित् ॥ युवनाश्वोऽभवत्तस्य सोऽनपत्यो वनं गतः ॥ २५ ॥ भार्याशतेन निर्विण्ण ऋषयोऽस्य कृपालवः ॥ इष्टिं स्म वर्तयां
चक्रुरैंद्रीं ते सुसमाहिताः ॥ २६ ॥ राजा तद्यज्ञसदनं प्रविष्टो निशि तर्षितः ॥ दृष्ट्वा शयानान् विप्रांस्तान् पपौ मंत्रजलं स्वयम् ॥ २७ ॥

स्यात्तर्हि दैत्यान्हनिष्यामीति तेन वाहनत्वेन वृतः सन्निंद्रो लज्जया तदनंगीकुर्वन्विष्णोर्वचनात्तस्य वाहनत्वाय महान्वृषो बभूवेत्यर्थः ॥ १४ ॥ १५ ॥ १६ ॥
येऽभिमुखं ययुस्तान् यमं दर्शयितुं सदेहानेव भल्लैरनयदित्यर्थः ॥ १७ ॥ तच्च दृष्ट्वाऽन्ये दुद्रुवुः । स्वमालयं पातालम् ॥ १८ ॥ इति एतैः कर्मभिः पुरंजयादिनामभिः
आहृतो व्याहृतः । पाठांतरे आहूत इत्यर्थः ॥ १९ ॥ २० ॥ शावस्तिः शावस्तस्य पुत्रः कुवलयाश्वक एव धुंधुमार इति ख्यातः ॥२१॥ तत्र कारणमाह । य इति ।
सुतानामेकविंशत्या सहस्रैर्वृतः सन्हतवान् ॥२२॥ धुंधुमार इति चेति चकारस्यान्वयः ॥२३॥२४॥ अथ तस्मान्निकुंभात्कृशाश्वः ॥ २५ ॥ भार्याणां शतेन सह अस्य
पुत्रार्थमिंद्रदैवत्यामिष्टिं वर्तयामासुः । स्मेत्याश्चर्ये ॥२६॥ तदेवाह राजेति षड्भिः । तर्षितस्तृषितः सन् जलार्थं प्रविष्टो मंत्राभिमंत्रितं जलं पत्न्यै देयं स्वयं पपौ ॥ २७ ॥

स्वकार्यार्थमकृत्यमपि स्वीचकारेति भावः । "अवमानं पुरस्कृत्य मानं कृत्वा तु पृष्ठतः । स्वकार्यं साधयेद्धीमान्कार्यध्वंसेन मूर्खता ॥" इति राजशास्त्रोक्तेः ॥ १४ ॥ स शाशादिः । विशिखान्बाणान् । स्तूयमानः
देवैस्तदनुगैश्च ॥१५॥ आप्यायितः वर्द्धितः । न्यरुणत् रुरोध ॥ १६ ॥ तैर्दैत्यैः । तस्य शाशादेः । तुमुलं भयंकरम् । इत्यर्थ इति । "क्रियार्थोपपदस्य च कर्मणि स्थानिनः ॥ २ ॥ ३ ॥ १४ ॥" इति चतुर्थी ।
तद्बाणपातभीत्या पलायंतो यमपुरं जीवंत एव ययुरिति भावः ॥१७॥ तच्चेष्वभिमुखागतानां यमपुरगमनं च । तस्य शाशादेः । इषुपाताभिमुखं बाणपातसांमुख्यं विसृज्य ॥ १८ ॥ एतैः पुरजयादिकर्मभिः । पाठांतरे
'आह्वतः' इति पाठे । इत्यर्थ इति ह्रस्वत्वमार्षमिति भावः ॥ १९ ॥ तत्सुतोऽनेनसः पुत्रः । ततः पृथोः । तत इत्युभयत्रान्वेति । ततो विश्वरंधेश्चंद्रः । तत्सुतश्चंद्रसुतः ॥ २० ॥ तत्सुतो युवनाश्वपुत्रः । ततो बृहद
श्वात् ॥ २१ ॥ यः कुवलयाश्वकः । धुंधुमार इति च ख्यातः । द्वितीयेनान्वयः । उत्तंकस्य मुनेः ॥ २२ ॥ तत्सुतास्ते एकविंशतिसहस्रसंख्याकाः । समुद्रतटवालुकांतर्गतो धुंधुनामा दैत्यः स्वनिश्वासेनोद्धृतवालु
काभिरुत्तंकाश्रममुपद्रवितं चक्रे । तपोव्ययभयादुत्तंकस्तमशपन्नेव तन्नाशार्थं कुवलयाश्वाकं ययाचे । स च स्वपुत्रैस्सह तेन युयुधे स्वसुतदाहोत्तरं तं विनाशयामासेति प्रसिद्धं विस्तरेण भारते । ते चेत्यत्र पठितश्चकार
इति शब्दात्परत्रान्वेति ॥ २३ ॥ तत्सुतः हर्यश्वसुतः ॥ २४ ॥ अस्य कृताश्वस्य । तस्य सेनजितः । स युवनाश्वः ॥ २५ ॥ अस्य युवनाश्वस्य ॥ २६ ॥ तदेव पुत्रार्थयजनमेव । तत् प्रकृतम् । पत्न्यै गर्भधार

उत्थितास्ते निशम्याथ व्युदकं कलशं प्रभो ॥ पप्रच्छुः कस्य कर्मेदं पीतं पुंसवनं जलम् ॥ २८ ॥ राज्ञा पीतं विदित्वाथ ईश्वरप्रहितेन ते ॥ ईश्वराय नमश्चक्रुरहो दैवबलं बलम् ॥ २९ ॥ ततः काल उपावृत्ते कुक्षिं निर्भिद्य दक्षिणम् ॥ युवनाश्वस्य तनयश्चक्रवर्ती जजान ह ॥ ३० ॥ कं धास्यति कुमारोऽयं स्तन्यं रोरूयते भृशम् ॥ मां धाता वत्स मा रोदीरितींद्रो देशिनीमदात् ॥ ३१ ॥ न ममार पिता तस्य विप्रदेवप्रसादतः ॥ युवनाश्वोऽथ तत्रैव तपसा सिद्धिमन्वगात् ॥ ३२ ॥ त्रसद्दस्युरितींद्रोंग विदधे नाम तस्य वै ॥ यस्मात्त्रसंति ह्युद्विग्ना दस्यवो रावणादयः ॥ ३३ ॥ यौवनाश्वोथ मांधाता चक्रवर्त्यवनीं प्रभुः ॥ सप्तद्वीपवतीमेकः शशासाच्युततेजसा ॥ ३४ ॥ ईजे च यज्ञं क्रतुभिरात्मविद्भूरिदक्षिणैः ॥ सर्वदेवमयं देवं सर्वात्मकमतीन्द्रियम् ॥३५॥ द्रव्यं मंत्रो विधिर्यज्ञो यजमानस्तथर्त्विजः ॥ धर्मो देशश्च कालश्च सर्वमेतद्यदात्मकम् ॥ ॥ ३६ ॥ यावत्सूर्य उदेति स्म यावच्च प्रतितिष्ठति ॥ सर्वं तद्यौवनाश्वस्य मांधातुः क्षेत्रमुच्यते ॥ ३७ ॥ शशबिंदोर्दुहितरि बिंदुमत्यामधान्नृपः ॥ पुरुकुत्समंबरीषं मुचुकुंदं च योगिनम् ॥ ३८ ॥ तेषां स्वसारः पंचाशत्सौभरिं वव्रिरे पतिम् ॥ यमुनांऽतर्जले मग्नस्तप्यमानः परंतपः ॥ ३९ ॥

व्युदकं निरुदकम् । पुंसवनं पुत्रोत्पत्तिकारणम् ॥ २८ ॥ अहो दैवबलमेव मुख्यं बलं पुरुषबलं तु न किंचिदिति वदंत ईश्वराय नमस्कारं चक्रुः ॥ २९ ॥३०॥ अयं कं धास्यति पास्यतीति दुःखितैर्विप्रैरुक्ते सति तस्यामिष्टयामाराधित इंद्रो मां धाता पाता हे वत्स मा रोदीरिति ब्रुवन् देशिनीं तर्जनीमदादित्यर्थः ॥३१॥ तस्य पिता युवनाश्वो भिन्नकुक्षिरपि न ममार किं तु कालांतरे तपसा सिद्धिमन्वगात् ॥ ३२ ॥ मांधातुर्महिमानमाह त्रसद्दस्युरिति षड्भिः । अंग हे राजन्यस्मान्मांधातुर्दस्यव उद्विग्नाः कंपिताः संतस्त्रसंत्यत इंद्रो यस्य त्रसद्दस्युरिति नाम विदधे स मांधाताऽवनीमेकः शशासेत्युत्तरेणान्वयः ॥ ३३ ॥ अच्युतस्य तेजसा । अप्रच्युततेजसेति वा ॥ ३४ ॥ आत्मविदपि स यज्ञं विष्णुमीजे । तमेव विशिनष्टि सर्वदेवमयमिति सार्द्धेन ॥ ३५ ॥ ३६ ॥ प्रतितिष्ठत्यस्तं गच्छति ॥ ३७ ॥ ३८ ॥ प्रसंगात्सौभरेश्चरितमाह तेषा

णार्थं देयं दातुमर्हम् । स्वयं राजा ॥ २७ ॥ निशाम्य दृष्ट्वा । व्युदकं जलशून्यम् । इदं जलपानरूपम् । पुमान्सूयतेऽनेनेति पुंसवनम् ॥ २८ ॥ अथ जलपानज्ञानोत्तरम् । ते ऋषयः ॥ २९ ॥ ततः गर्भभवनोत्तरम् । काले प्रसूतिकाले । उपावृत्ते प्राप्ते । जजानेति परस्मैपदमार्षम् ॥ ३० ॥ अयं बालः । स्तन्यमुद्दिश्य रोरूयते भृशं रोदिति । 'स्तन्ये' इति पाठे सप्तमी निमित्ते ज्ञेया । इत्यर्थ इति । निजाराधनतुष्टस्तस्मायमृतपूर्णां निजांगुलीं पानाय तन्मुखे ददाविति भावः ॥ ३१ ॥ तस्य बालस्य । विप्राणां देवानां च प्रसादतः विप्रा एव देवा इति वा । अथ स्वस्मात्पुत्रोत्पत्तेरनंतरम् । लज्जया राजधानीमगत्वा तत्रैव मुन्याश्रम एव सिद्धिं मोक्षलक्षणाम् ॥ ३२ ॥ तस्य बालस्य । अतो दस्युत्रासकर्तृत्वात् । आदिनाऽन्यदैत्यादिग्रहः ॥ ३३ ॥ अथ नामप्राप्त्यनंतरं प्राप्तयौवनभावः सन् । अच्युतस्य हरेः । विष्णुतेजसा सर्वे एव राजानश्शासति तत्र को विशेष इति चेदाह—अच्युतं प्रगल्भं यत्तेजस्तेनामृतपानेन विलक्षणप्रभावेणेति ॥ ३४ ॥ स मांधाता ॥ ३५ ॥ यदात्मकं हर्यात्मकम् "सर्वं खल्विदं ब्रह्म" इति श्रुतेः ॥ ३६ ॥ यावत् क्षेत्रं भूभागम् । उदेति उदयेन प्रकाशयति । अस्तं गच्छति यावत्प्राप्यास्तमेति । एतेनोदयाचलादस्ताचलपर्यंतं क्षेत्रमिव क्षेत्रं यथा स्वक्षेत्रं कर्षकोऽन्वहं गत्वा निरीक्ष्य स्वगृहमायाति तथा मांधातापीति प्रसिद्धं महाभारतादौ । "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति मेदिनी ॥ ३७ ॥ शशबिंदो राज्ञः । योगिनं योगफलीभूतश्रीकृष्णदर्शित्वात् ॥ ३८ ॥ तेषां पुरुकुत्सादीनाम् । सौभरेर्विवाहमाक्षिपति—नन्विति । जरया जर्जरं जीर्णम् । तं

निर्वृतिं मीनराजस्य वीक्ष्य मैथुनधर्मिणः ॥ जातस्पृहो नृपं विप्रः कन्यामेकामयाचत ॥ ४० ॥ सोऽप्याह गृह्यतां ब्रह्मन्कामं कन्यास्त्वयंवरे ॥ स विचिंत्याप्रियं स्त्रीणां जरठोऽयमसंमतः ॥ बलीपलित एजत्क इत्यहं प्रत्युदाहृतः ॥ ४१ ॥ साधयिष्ये तथात्मानं सुरस्त्रीणामपीप्सितम् ॥ किं पुनर्मनुजेंद्राणामिति व्यवसितः प्रभुः ॥ ४२ ॥ मुनिः प्रवेशितः क्षत्रा कन्यांतःपुरमृद्धिमत् ॥ वृतश्च राजकन्याभिरेकः पंचाशता वरः ॥ ४३ ॥ तासां कलिरभूद्भूयांस्तदर्थेऽपोह्य सौहृदम् ॥ ममानुरूपो नायं व इति तद्गतचेतसाम् ॥ ४४ ॥ स बह्वृचस्ताभिरपारणीयतपःश्रियाऽनर्घ्यपरिच्छदेषु ॥ गृहेषु नानोपवनामलांभःसरस्सु सौगंधिककाननेषु ॥ ४५ ॥ महाऽर्हशय्यासनवस्त्रभूषणस्नानानुलेपाभ्यवहारमाल्यकैः ॥ स्वलंकृतस्त्रीपुरुषेषु नित्यदा रेमेऽनुगायद्द्विजभृंगबंदिषु ॥ ४६ ॥

मिति यावत्समाप्ति । तेषां स्वसारो मांधातुः कन्याः । ननु महातापसस्य कुतो विवाहप्रसंगः कथं वा जराजर्जरं तं राजकन्या वव्रिरे तदाह । यमुनांतर्जल इति षड्भिः । ॥ ३९ ॥ नृपं मांधातारम् ॥ ४० ॥ सोऽपि मांधाता स्वयंवरे कामं गृह्यतामित्याह । स विप्रः स्त्रीणामप्रियं मां विचिंत्यानेनाहं प्रत्युक्तोऽत आत्मानं तथा साधयिष्यामीति व्यवसितो निश्चितवानिति द्वयोरन्वयः । अप्रियत्वे हेतुः । जरठो वृद्धः बलीभिर्युक्तः पलितश्च । एजत्कः कंपमानशिराः । तापसत्वादिना वाऽसंमतोऽहमिति कृत्वा ॥ ॥ ४१ ॥ तथेत्यस्य प्रपंचः । सुरस्त्रीणामपीप्सितं किं पुनर्मनुजेंद्राणां याः स्त्रियस्तासामिति ॥ ४२ ॥ ततः किं वृत्तं तदाह मुनिरिति द्वाभ्याम् । क्षत्रा प्रतीहारेण । पंचाशताऽपि राजकन्याभिः स एक एव वरो वृतः ॥४३॥४४॥ तस्य गार्हस्थ्यं वर्णयति । स इति चतुर्भिः । बह्वृच इति मंत्रसामर्थ्यमुक्तम् । ताभिः सह रेमे इत्युत्तरेणान्वयः । क्व रेमे । अपारणीयं दुरंतं यत्तपस्तस्य श्रिया समृद्ध्याऽनर्घ्याः परिच्छदा येषु तेषु गृहेषु तथा नानाविधेषूपवनेषु च अमलान्यंभांसि येषां तेषु सरस्सु च । कथंभूतेषु । सौगंधिकानां कह्लाराणां च काननानि स्तोमा येषु ॥ ४५ ॥ कथंभूतेषु गृहादिषु । स्वलंकृताः स्त्रियः पुरुषाश्च येषु । अनुगायंतो द्विजाश्च पक्षिणो भृंगाश्च

सौभरिम् । तत् वरणम् । यमुनांतर्जले श्रीवृंदावनदेशे ॥ ३९ ॥ निर्वृतिं मैथुनानंदम् ॥ ४० ॥ प्रत्युक्तः प्रत्याख्यातः । यथा सुरस्त्रीणामपीप्सितो भवेत्तथेत्यर्थः । असंमतोऽननुमतः ॥ ४१ ॥ प्रभुः सर्वसामर्थ्ययुतः ॥ ४२ ॥ "क्षत्ता शूद्राक्षत्त्रियजे प्रतीहारे च सारथौ । भुजिष्यातनयेऽपि स्यात्" इति मेदिनी । स मुनिः ॥ ४३ ॥ तासां मांधातृकन्यानाम् । तदर्थे सौभरिवरणार्थे । अपोह्य त्यक्त्वा । अयं मुनिर्ममानुरूपो योग्यो वो युष्माकं नेति पृथक्पृथक् तस्मिन्मुनौ गतं चेतो यासां तासाम् । कलिः कलहः । "कलिः स्त्री कलिकारंगे शूराजिकलहे युगे" इति कोशात् ॥ ४४ ॥ स सौभरिः । स्तोमाः समूहाः ॥ ४५ ॥ ४६ ॥

यद्गार्हस्थ्यं तु संवीक्ष्य सप्तद्वीपवतीपतिः ॥ विस्मितः स्तंभमजहात्सार्वभौमश्रियान्वितः ॥ ४७ ॥ एवं गृहेष्वभिरतो विषयान्विविधैः सुखैः ॥ सेवमानो न चातुष्यदाज्यस्तोकैरिवानलः ॥ ४८ ॥ स कदाचिदुपासीन आत्मापह्नवमात्मनः ॥ ददर्श बह्वृचाचार्यो मीनसंगसमुत्थितम् ॥ ४९ ॥ अहो इमं पश्यत मे विनाशं तपस्विनः सच्चरितव्रतस्य ॥ अंतर्जले वारिचरप्रसंगात्प्रच्यावितं ब्रह्म चिरं धृतं यत् ॥ ५० ॥ संगं त्यजेत मिथुनव्रतिनां मुमुक्षुः सर्वात्मना न विसृजेद्बहिरिंद्रियाणि ॥ एकश्चरन्रहसि चित्तमनंत ईशे युंजीत तद्व्रतिषु साधुषु चेत्प्रसंगः ॥ ५१ ॥ एकस्तपस्व्यहमथांभसि मत्स्यसंगात्पंचाशदासमुत पंचसहस्रसर्गः ॥ नांतं व्रजाम्युभयकृत्यमनोरथानां मायागुणैर्हृतमतिर्विषयेऽर्थभावः ॥ ५२ ॥ एवं वसन्गृहे कालं विरक्तो न्यासमास्थितः ॥ वनं जगामानुययुस्तत्पत्न्यः पतिदेवताः ॥ ५३ ॥ तत्र तप्त्वा तपस्तीक्ष्णमात्मकर्षणमात्मवान् ॥ सहैवाग्निभिरात्मानं युयोज परमात्मनि ॥ ५४ ॥

बंदिनश्च येषु । कथंभूतः । महार्हशय्यादिभिरुपलक्षितः सन् ॥ ४६ ॥ स्तंभं गर्वम् ॥ ४७ ॥ आज्यस्तोकैर्घृतबिंदुभिः ॥ ४८ ॥ इदानीं तस्यानुतापपूर्वकं वानप्रस्थाश्रममाह स कदाचिदिति सप्तभिः । आत्मनो मनसो हेतोरात्मनोपह्नवं तपोहानिं ददर्श ॥ ४९ ॥ संश्वासौ चारितव्रतश्च योऽहं तस्य ब्रह्म तपः ॥ ५० ॥ मिथुनव्रतिनां दांपत्यधर्मवताम् । चेद्यदि प्रसंगस्तर्हि । तद्व्रतिषु ईश्वरार्थधर्मपरेष्वेव कार्य इति शेषः ॥ ५१ ॥ संगाज्जातं दोषं प्रपंचयति । एक इति । पंचाशता भार्याभिः संबंधात्पंचाशदासमभूवमित्यर्थः । ततश्च सुतैः पंचसहस्रसर्ग आसम् । प्रत्येकं तासु पुत्रशतरूपेणोत्पत्तेः । उभयकृत्यान्यैहिकपारत्रिकाणि कर्माणि तद्विषयाणां मनोरथानाम् । अर्थभावः पुरुषार्थबुद्धिमान् ॥ ५२ ॥ न्यासोऽत्र संगत्याग एव । वानप्रस्थधर्म इत्यर्थः ॥ ५३ ॥ ५४ ॥

आन्वितमनुप्राप्तम् ॥ ४७ ॥ ४८ ॥ तस्य सौभरेः । "आत्मा ब्रह्माणि जीवे च यत्नधृतितपोधिषि" इति कोशादात्मापह्नवं तपोहानिमिति स्वामी ॥ ४९ ॥ 'ब्रह्म वेदस्तपस्तत्त्वम्' इति कोशात् ॥ ५० ॥ साधुषु निर्मत्सरेषु । "संगः सर्वात्मना त्याज्यश्चेत्त्यक्तुं शक्यते नहि । सत्स्वेव स विधातव्यः संतः संगस्य भेषजम् ॥' इत्युक्तेः ॥ ५१ ॥ इत्यर्थ इति । संगादेकस्यापि बहुत्वं जातमिति भावः । तत एकपञ्चाशद्भवनोत्तरम् । सुतैः पञ्चसहस्राणि सर्गा देहा यस्य स तथा । यद्वा—पुत्राणां विवाहादि कन्यानां प्रदानादीत्युभयं कृत्यं तत्र ये मनोरथाः अस्य विवाह एतस्मिन्कुले इयं चास्मै शोभनाय वराय देयेत्यादयः । यद्वोभयेन स्त्रीपुरुषद्वयेन यत्कृत्यं तत्र ये मनोरथास्तेषामन्तमवसानम् ॥ ५२ ॥ इत्यर्थ इति । वानप्रस्थेऽपि वित्तगृहादिविषयत्यागसाम्यान्न्यासशब्दो न विरुद्ध इति भावः । एवं कालमेतावत्पर्यंतम् ॥ ५३ ॥ तत्र वानप्रस्थाश्रमे । आत्मने देहादेः कर्षणं कृशत्वापादकं शोषणमिति यावत् । अग्निभिर्गार्हपत्यादिभिरात्मानं देहं दग्ध्वा परमात्मनि युयुजे सायुज्यमोक्षमवापेत्यर्थः । आत्मपदमावृत्त्या वा योज्यम् । आत्मानं देहमग्निभिः तथात्मानं जीवं परमात्मनि

ताः स्वपत्युर्महाराज निरीक्ष्याध्यात्मिकीं गतिम् ॥ अन्वीयुस्तत्प्रभावेण अग्निं शांतमिवार्चिषः ॥ ५५ ॥ इति श्रीमद्भागवते महापुराणे नवम स्कंधे षष्ठोऽध्यायः ॥ ६ ॥ श्रीशुक उवाच ॥ मांधातुः पुत्रप्रवरो योंबरीषः प्रकीर्तितः ॥ पितामहेन प्रवृतो यौवनाश्वश्च तत्सुतः ॥ हारीतस्तस्य पुत्रोऽभून्मांधातृप्रवरा इमे ॥ १ ॥ नर्मदा भ्रातृभिर्दत्ता पुरुकुत्साय योरगैः ॥ तया रसातलं नीतो भुजगेंद्रप्रयुक्तया ॥ ॥ २ ॥ गंधर्वानवधीत्तत्र वध्यान्वै विष्णुशक्तिधृक् ॥ नागाल्लब्धवरः सर्पादभयं स्मरतामिदम् ॥ ३ ॥ त्रसदस्युः पौरुकुत्सो योऽनरण्यस्य देहकृत् ॥ हर्यश्वस्तत्सुतस्तस्मा दरुणोऽथ निबंधनः ॥ ४ ॥ तस्य सत्यव्रतः पुत्रस्त्रिशंकुरिति विश्रुतः ॥ प्राप्तश्चांडालतां शापाद्गुरोः कौशिकतेजसा ॥ ५ ॥

आध्यात्मिकीं गतिं ब्रह्मणि लयम् ॥ ५५ ॥ इति नवमस्कंधे टीकायां षष्ठोऽध्यायः ॥ ६ ॥ मांधातुरन्वयः प्रोक्तः सप्तमे यत्र गीयते ॥ पुरुकुत्सस्य चाख्यानं हरिश्चंद्रस्य चोत्तमम् ॥ १ ॥ पुत्रप्रवरः पुत्रश्रेष्ठः । स पितामहेन युवनाश्वेन प्रवृत्तः पुत्रत्वेन स्वीकृतः अत एव तस्य मांधातृप्रवर्ग्यत्वम् । तत्सुतोंबरीषस्य सुतः । इमे यौवनाश्वांबरीषहारीता मांधातृगोत्रस्य प्रवरा अवांतरविशेषप्रवर्तकाः । यद्वा यौवनाश्वविशेषणम् । पितामहेन मांधात्रा सह आर्षेयवरणे प्रवृत्तः मांधाता प्रवरो येषां ते इमे अंबरीषयौवनाश्वहारीताः । यथाऽऽहाश्वलायनः । "हरितकुत्सपिंगदर्भभैमगवानामांगिरसांबरीषयौवनाश्वेति मांधातारं हैके ब्रुवते ॥ अतीत्यांगिरसं मांधात्रंबरीषयौवनाश्वेति" इति ॥ १ ॥ पुरुकुत्सस्य वंशं कथयिष्यन्नादौ तावत्तस्य विवाहं प्रभावं चाह । उरगैर्भ्रातृभिर्या दत्ता नर्मदा तया ॥ २ ॥ वध्यान्वधार्हान् । स च पुरुकुत्सो नागाल्लब्धवरोऽभूत् । वरमाह । इदं नर्मदया रसातलानयनादिकं स्मरतां सर्पादभयमिति ॥ ३ ॥ देहकृत्पिता । त्रसदस्योः सुतोऽनरण्य इत्यर्थः ॥ ४ ॥ त्रयः शंकव इव दुःखहेतवो दोषा यस्यासौ त्रिशंकुः । तदुक्तं हरिवंशे । "पितुश्चापरितोषेण गुरोर्दोग्ध्रीवधेन च ॥ अप्रोक्षितोपयोगाच्च त्रिविधस्ते व्यतिक्रमः" इति । परिणीयमानविप्रकन्याऽपह

च युयुजे योजयामासेत्यर्थः ॥ ५४ ॥ ता मांधातृसुताः । तत्प्रभावेण पत्युर्भक्त्या तामेव गतिमनुगता इत्यर्थः ॥ ५५ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे षष्ठोऽध्यायः ॥ ६ ॥ यत्र मांधातुरन्वये (१) । नन्वंबरीषस्य मध्यमपुत्रत्वात्कथं प्रवरत्वं तत्राह—पितामहेनेति । अत एव पितामहस्वीकारादेव । तस्य अंबरीषस्य (२) । तस्य यौवनाश्वस्य । तपोविद्यादिना प्रभाववत्त्वेऽवांतरगोत्रप्रवर्त्तकत्वं प्रवरत्वं न केवलं पितामहप्रवरणात्प्रवरत्वमित्याह—यद्वेति । आर्षेयवरणे प्रकृष्टतपश्चर्यादिना गोत्रप्रवर्त्तकत्वे प्रवृतः स्वीकृतः शिष्टैरित्यर्थः । तत्र प्रमाणमाह—यथा हेति । ह स्फुटम् । एके केचित् ॥ १ ॥ तस्य पुरुकुत्सस्य । तया नर्मदया । भुजगेंद्रो वासुकिः ॥ २ ॥ तत्र रसातले ॥ ३ ॥ तत्सुतोऽनरण्यसुतः । तस्माद्धर्यश्वात् । अथ अरुणात् ॥ ४ ॥ तस्य निबंधनस्य । 'शंकुः संख्याभिदि कीले' इति । कीला इवेत्यर्थः । अत्र मानमाह—तदुक्तमिति । दोग्ध्री

सशरीरो गतः स्वर्गमद्यापि दिवि दृश्यते ॥ पातितोऽवाक्शिरा देवैस्तेनैव स्तंभितो बलात् ॥ ६ ॥ त्रैशंकवो हरिश्चंद्रो विश्वामित्रवशिष्ठयोः ॥ यन्निमित्तमभूद्युद्धं पक्षिणोर्बहुवार्षिकम् ॥ ७ ॥ सोऽनपत्यो विषण्णात्मा नारदस्योपदेशतः ॥ वरुणं शरणं यातः पुत्रो मे जायतां प्रभो ॥ ८ ॥

रणात्क्रुद्धस्य गुरोः पितुः शापात् । कौशिकस्य विश्वामित्रस्य तेजसा प्रभावेण ॥ ५ ॥ तेनैव कौशिकेन ॥ ६ ॥ पक्षिणोराडीबकयोः । विश्वामित्रो राजसूयदक्षिणाछलेन हरिश्चंद्रं सर्वस्वमपहृत्य यातयामास तच्छ्रुत्वा कुपितो वशिष्ठोऽपि विश्वामित्रं त्वमाडी भवेति शशाप सोऽपि त्वं बको भवेति वशिष्ठं शशाप तयोश्च युद्धमभूदिति प्रसिद्धम् ॥ ७ ॥ " हरिश्चंद्रो ह वैधस ऐक्ष्वाको राजा पुत्र आस " इत्यादिश्रुतिप्रसिद्धं हरिश्चंद्रस्य चरितमाह । सोऽनपत्य इत्यादि यावत्समाप्ति । कथं शरणं यातस्तत्

धेनुः । अप्रोक्षितमांसस्य दानात् ॥ ५ ॥ ६ ॥ प्रसिद्धं मार्कंडेयादौ ॥ ७ ॥ ह स्फुटम् । वेधा विष्णुस्तं सेवते इति वैधसः "वेधाः पुंसि हृषीकेशे बुधे च परमेष्ठिनि" इति मेदिनी । विष्णुभक्त इत्यर्थः । स हरिश्चंद्रोऽपुत्रः 'अपुत्रस्य गतिर्नास्ति' इति स्मृतेः "नापुत्रस्य लोकोऽस्ति" इति श्रुतेश्च । वैदिकीं गाथामाह—[ अथैनमुवाच वरुणं राजानमुपधाव पुत्रो मे जायतां तेन त्वा यजा इति । तथेति स वरुणं राजानमुपससार पुत्रो मे जायतां तेन त्वा यजा इति । तथेति तस्य ह पुत्रो जज्ञे रोहितो नामेति । तं होवाचाजनि वै ते पुत्रो यजस्व मानेनेति । स होवाच यदा वै पशुर्निर्दशो भवत्यथ स मेध्यो भवति निर्दशोन्वस्त्वथ त्वा यजा इति । स ह निर्दश आस तं होवाच निर्दशोन्वथाभूद्यजस्व मानेनेति । स होवाच यदा वै पशोर्दंता जायंते अथ स मेध्यो भवति दंतान्वस्य जायंतामथ त्वा यजा इति । तस्य ह दंता जज्ञिरे । तं होवाच जाता वा अस्य दंता यजस्व मानेनेति । स होवाच यदा वै पशोर्दंता पद्यंते अथ स मेध्यो भवति दंतान्वस्य पद्यंतामथ त्वा यजा इति । तस्य ह दंताः पेदिरे । तं होवाचापतन्सुतता अस्य दंता यजस्व मानेनेति । स होवाच यदा वै पशोर्दंताः पुनर्जायंतेऽथ स मेध्यो भवति दंतान्वस्य पुनर्जायंतामथ त्वा यजा इति । तस्य ह दंताः पुनर्जज्ञिरे । तं होवाच जाता वा अस्य पुनर्दंता यजस्व मानेनेति । स होवाच यदा वै क्षत्रियः सान्नाहिको भवत्यथ स मेध्यो भवति सन्नाहं नु प्राप्तोन्वथ त्वा यजा इति । स ह सन्नाहं प्राप । तं होवाच सन्नाहं नु प्राप्तो यजस्व मानेनेति । स तथेत्युक्त्वा पुत्रमामंत्रयामास नताय वै मह्यं त्वामददाद्धंत त्वयाहमिमं यजा इति । स ह नेत्युक्त्वा धनुरादायारण्यमगात्तस्थौ स संवत्सरमरण्ये चचार । अथ हैक्ष्वाकं वरुणो जग्राह तस्य होदरं ज इति पुरुषरूपस्तमेत्य इंद्रो वृद्धविप्रो भूत्वा तं रोहितमेत्य पर्युवाच नानाश्रांताय श्रीरस्तीति । नृषद्वरोनुक्तकारीति शुश्रुम चरत इंद्र एव सखा भवतीत्यतश्चरैव द्वितीयं संवत्सरमरण्ये चचार । पुष्पिण्यौ जंघे चरतः भूष्णुः पुरुषः सततं पर्यटन्फलग्रहिः प्रपथे हता अस्य सर्वे पाप्मानः शेरे इति । आसीनस्य भगोप्यास्ते तिष्ठतो भग ऊर्द्धस्तिष्ठति पुरुषच्छायेव निपद्यमानस्य भगः शेते चरतो भगश्चराति कलिः शयानः द्वापरः संजिहानः त्रेतोत्तिष्ठन् कृतः कृतं चरन्संपद्यते∴चरन्मधुर्विंदति वै स्वादिष्ठमुदुंबरं चरन् यश्चरन्न तंद्रयते तस्य सूर्यस्य पप्रिमाणं पश्य तावप्येवमरण्ये चरतः। जीवनक्षेमं षष्ठं संवत्सरमरण्ये चचार सोऽजीगर्त्तं सौयवसिमृषिमशनया परीतमरण्य उपेयाय । तस्य ह त्रयः पुत्रा आसुः शुनःपुच्छः शुनःशेफः शुनोलांगूल इति । तं होवाच ऋयेहं ते शतं ददाम्यहमेषामेकेनात्मानं निष्क्रीणा इति । स ज्येष्ठं पुत्रं निगृह्णान उवाच न त्विमामिति नो एवेममिति । कनिष्ठं माता तौ ह मध्यमे संपादयांचक्रतुः शुनःशेफे तस्य ह शतं दत्त्वा स तमादाय सोऽरण्याद् ग्राममेयाय स पितरमेत्योवाच तत हंताहमनेनात्मानं निष्क्रीणा इति । स वरुणं राजानमुपससारानेन त्वा यजा इति । तथेति भूयान्वै ब्राह्मणः क्षत्रियादिति वरुण उवाचेति । तस्मा एतं राजसूयं यज्ञक्रतुं प्रोवाच एतमभिषेचनीयं पुरुषमालभ इति । सोऽनुलेभे तस्य ह विश्वामित्रो होतासीज्जमदग्निरध्वर्युर्वशिष्ठो ब्रह्मायास्य उद्गातेति ] अत्र केषांचित्पदानामर्थः प्रकाश्यते—पदिरे पद्यंते पद्यंतामपत्स्यतेत्येषां पतनमर्थः । सन्नाहः शस्त्रास्त्रयोग्यता ।

१—सायं गृहम् । २ गवाम् । ३ पुत्रेण आत्मनो निष्क्रयं करोमीत्यर्थः ।

यदि वीरो महाराज तेनैव त्वां यजे इति ॥ तथेति वरुणेनास्य पुत्रो जातस्तु रोहितः ॥ ९ ॥ जातः सुतो ह्यनेनांग मां यजस्वेति सोऽब्रवीत् ॥ यदा पशुर्निर्दशः स्यादथ मेध्यो भवेदिति ॥ १० ॥ निर्दशे च स आगत्य यजस्वेत्याह सोऽब्रवीत् ॥ दंताः पशोर्यज्जायेरन्नथ मेध्यो भवेदिति ॥ ११ ॥ जाता दंता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ यदा पतंत्यस्य दंता अथ मेध्यो भवेदिति ॥ १२ ॥ पशोर्निपतिता दंता यजस्वेत्याह सोऽब्रवीत् ॥ यदा पशोः पुनर्दंता जायंतेऽथ पशुः शुचिः ॥ १३ ॥ पुनर्जाता यजस्वेति स प्रत्याहाथ सोऽब्रवीत् ॥ सान्नाहिको यदा राजन्राजन्योऽथ पशुः शुचिः ॥ १४ ॥ इति पुत्रानुरागेण स्नेहयंत्रितचेतसा ॥ कालं वंचयता तंतमुक्तो देवस्तमैक्षत ॥ १५ ॥ रोहितस्तदभिज्ञाय पितुः कर्म चिकीर्षितम् ॥ प्राणप्रेप्सुर्धनुष्पाणिररण्यं प्रत्यपद्यत ॥ १६ ॥ पितरं वरुणग्रस्तं श्रुत्वा जातमहोदरम् ॥ रोहितो ग्राममेयाय तमिंद्रः प्रत्यषेधत ॥ १७ ॥ भूमेः पर्यटनं पुण्यं तीर्थक्षेत्रनिषेवणैः ॥ रोहितायादिशच्छक्रः सोऽप्यरण्येवसत्समाम् ॥ १८ ॥

दाह। पुत्रो मे जायताम् ॥ ८ ॥ यदि वीरः पुत्रो मे जायेत तर्हि तेनैव पुरुषपशुना त्वां यजे यजामीति भाषया तथेत्युक्तवता वरुणेन निमित्तेनास्य रोहितो नाम पुत्रो जातः ॥ ९ ॥ जाते पुत्रे स वरुणो जातः सुतो मामनेन यजस्वेत्यब्रवीत्। यदा पशुर्निर्दशो निर्गतदशदिवसः स्यादित्यत्र स राजाऽब्रवीदित्यनुषंगः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ राजन् हे वरुण राजन्यः पशुर्यदा सान्नाहिकः कवचसंबंधार्हः संग्रामसमर्थः अथ तदा शुचिः ॥ १४ ॥ इत्येवं तंतं कालं वंचयता राज्ञोक्तः प्रार्थितो देवो वरुणस्तंतं कालं प्रत्यैक्षतेत्यर्थः ॥ १५ ॥ चिकीर्षितमात्मना पशुना वरुणयजनम् ॥ १६ ॥ ततश्च कुपितेन वरुणेन ग्रस्तमत एव जातं महदुदरं यस्य तं पितरं श्रुत्वा ॥ १७ ॥ समां वर्षम् ॥ १८ ॥

नताय पूजते । ज्ञो वरुणः । पुरुषरूपः प्रशस्तपुरुषः विप्र इत्यर्थः । प्रशंसायां रूपप्प्रत्ययविधानात् । पर्युवाचेत्यत्र परि निषेधे न गंतव्यमित्युक्तवान् । तत्र हेतुमाह—पुण्यतीर्थनिषेवणेन नानाविधेन श्रांतस्य श्रीरैहिकामुष्मिकसंपदस्तीति । नृषद्वरः चर्मकारोऽतिपापो वा । अनुक्तकारी गुर्वादिवचनमशृण्वन्स्तंभवत्तिष्ठन्नित्यर्थः । एकाकिनश्चरतश्चोरादिभयमपि नेत्याह—चरत इति । चरैव त्वमटनं कुरुष्वैव कश्चिद्ब्राह्मणो मामवोचत् । पुष्पिणी गर्भिणी जंघयोर्बलाच्चरति नैकत्रास्ते यथा भूष्णुर्बुभूषुः पुरुषः आत्मा फलं गृह्णातीति । फलग्रहिस्तथा किं फलमाप्नोतीति तत्राह—प्रपथे महामार्गे । तीर्थयात्राश्रमेण हता अस्य पुंसः शेरे शीर्णा भवंतीत्यतस्त्वमपि चरन्फलं लभस्वेत्यर्थः । चरैवेत्युक्तार्थम् । आसीनस्य निर्व्यापारस्य । भगो भाग्यमप्यास्ते आसीनं भवति समृद्धं न भवति ।तिष्ठत उत्थानं कुर्वतः । ऊर्ध्वस्तिष्ठत्युत्थानं करोति । निपद्यमानस्य निकृष्टं गच्छतः । शेते निकृष्टो भवति । चरतः पुण्येन यथा संचरमाणस्य चरति तं प्राप्नोति कलिः कलिजातः शयानस्तामसत्वेन शुभप्रवृत्तिशून्यः । सांजिहानः संशयानः । इदं वाऽदो वा तत्त्वमिति न निश्चिनोति । उत्तिष्ठन् धर्मार्थकार्ययोगिकृतं विहितं चरन्संपद्यते ज्ञानसंपन्नो भवतीत्यतस्त्वं चरको भवेत्यर्थः । मधु सुखम् । अशनक्लेशोऽपि नास्तीत्याह—स्वादिष्टं चरन्भक्षयन् । भूमिपर्यटनं कुर्वत इत्थंभावमाह—चरन्निति । श्रवणमननाभ्यां स्वादु पुनःपुनः सेवाबुद्धिजनकम् । उदुंबरम् अत्यंतं वरं वरणीयं सर्वगुणाभिरामं हरिं चरन् शरणं गच्छन्निति वा । नित्यमटन्कोऽस्तीति चेदाह—सूर्यस्येति । चरन्नविरतमटन् न तंद्रयते आलस्यं न करोति । पप्रिमाणमव्याहतगमनम् शिक्षां सुगममन्यदिति । अथ प्रकृतमनुसरामः—स्पष्टार्थोयमध्यायोऽनेनैव तथापि कचिद्व्याख्यास्यामः ॥ ८ ॥ "वीरः पुत्रे रसे शूरे भ्रातृपक्षिघ्नयोरपि" इति निरुक्तिः ॥ ९ ॥ स हरिश्चंद्रः ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ इत्यर्थ इति । आत्मयागकालप्रतीक्षां चकारेति भावः ॥ १५ ॥ तत् निजबलिदानरूपम् ॥ १६ ॥ तं रोहितम् ॥ १७ ॥ 'हायनोऽस्त्री शरत्समाः इत्यमरः ॥ १८ ॥

एवं द्वितीये तृतीये चतुर्थे पंचमे तथा ॥ अभ्येत्याभ्येत्य स्थविरो विप्रो भूत्वाह वृत्रहा ॥ १९ ॥ षष्ठं संवत्सरं तत्र चरित्वा रोहितः पुरीम् ॥ उपव्रजन्नजीगर्तादक्रीणान्मध्यमं सुतम् ॥ २० ॥ शुनःशेपं पशुं पित्रे प्रदाय समवंदत ॥ ततः पुरुषमेधेन हरिश्चंद्रो महायशाः ॥ २१ ॥ मुक्तोदरोऽयजद्देवान् वरुणादीन् महत्कथः ॥ विश्वामित्रोऽभवत्तस्मिन् होता चाध्वर्युरात्मवान् ॥ २२ ॥ जमदग्निरभूद्ब्रह्मा वशिष्ठोऽयास्यसामगः ॥ तस्मै तुष्टो ददाविंद्रः शातकौंभमयं रथम् ॥ २३ ॥ शुनःशेपस्य माहात्म्यमुपरिष्टात् प्रचक्ष्यते ॥ सत्यसारां धृतिं दृष्ट्वा सभार्यस्य च भूपतेः ॥ २४ ॥ विश्वामित्रो भृशं प्रीतो ददाववहितां गतिम् ॥ मनः पृथिव्यां तामद्भिस्तेजसाऽपोऽनिलेन तत् ॥ २५ ॥

द्वितीये च वर्षे वृत्रहा अभ्येत्याभ्येत्य तथैव तं प्रतिषेधन्किंचित्किंचिदाह ॥ १९ ॥ २० ॥ २१ ॥ वरुणेन मुक्तमुदरं यस्य । महत्तु कथा यस्य सः । आत्मवान् जमदग्निरध्वर्युरभूत् ॥ २२ ॥ अयास्यो मुनिः सामग उद्गाता अभूदित्यर्थः ॥ २३ ॥ उपरिष्टाद्विश्वामित्रसुताख्यानप्रसंगेन ॥ २४ ॥ अविहतां गतिं ज्ञानम् । तामेव गतिमाह सार्द्धाभ्याम् । मनः पृथिव्यां धारयन् ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहंस्तां च हित्वा मुक्त्वा मुक्तबंधनस्तस्थावित्यन्वयः । मनोमूलो हि संसारः मनश्चान्नमयम् । "अन्नमयं हि सोम्य मनः" इति श्रुतेः । अतोऽन्नशब्दवाच्यायां पृथिव्यां मनो धारयन्नेकीकुर्वंस्तां पृथिवीमद्भिरेकीकुर्वन्नपस्तेजसा तत्तेजोऽ

॥ १९ ॥ अजीगर्त्ताद्भार्गवाद्दषेः ॥ २० ॥ क्वचित्फांतं नाम । ततः पुरुषपशुप्राप्त्युत्तरम् ॥ २१ ॥ तस्मिन् त्यागे ॥ २२ ॥ अयास्यश्चासौ सामगश्चेति तथा यद्वार्षो विभक्तिलोपः । इत्यर्थ इति । सामगातैवोद्गाताः भवतीति भावः । तस्मै शुनःशेपाय शुनःशेपस्येति वाक्यशेषात् । शातकौंभमयं सौवर्णम् ॥ २३ ॥ सत्यसारामित्यत्रोपयुक्ता पुराणांतरगीता कथास्ति तथाहि—[ हरिश्चंद्रेण यज्ञे सर्वा भूर्विश्वामित्राय दत्ता तद्दक्षिणायां सौवर्णं शाकटायुतभारं च दत्तवांस्तांश्च विश्वामित्रो ययाचे तदर्थं सभार्यपुत्रो हरिश्चंद्रस्तमुक्तवान्भगवन्नस्मान्विक्रीय दक्षिणां गृहाण । तेन च तद्भार्यापुत्रौ काश्यां कस्मैचिद्द्विजिने मूल्येन दत्तौ हरिश्चंद्रश्च शववस्त्रापहारिणे विक्रीतः । स च तेन शववस्त्रग्रहार्थं श्मशाने स्थापितः । तत्र च कदाचित्पुष्पार्थं धनिप्रेषितो विक्रीतहरिश्चंद्रात्मजोऽहिना दष्टो ममार । तं दाहार्थमादाय जीर्णवस्त्रवेष्टितं तन्माता श्मश्मानं रात्रौ जगाम । तदा तां रुदंतीं श्रुत्वा हरिश्चंद्रस्तत्रागत्य तद्वस्त्रमुत्तारयितुं प्रवृत्तस्तयोक्तं मा जीर्णवस्त्रं गृहाण तेन तदनादृत्य वस्त्रं हृतं सा तदाहाहो विधातरहं हरिश्चंद्रनृपतेर्भार्याऽयं तस्य पुत्रो ययोरीदृग्दशा जातेति तच्छ्रुत्वा तां तं च परीक्ष्येतस्ततः श्मशानकाष्ठान्यादाय तैश्चितिं कृत्वा पुत्रं तत्र संस्थाप्य स्वयमपि सभार्यस्तेन सहैव दाहार्थं प्रवृत्तस्तदैवागत्य विश्वामित्रो निवार्य तत्पुत्रं च संजीव्य तस्मै राज्यं दत्त्वा हरिश्चंद्राय ज्ञानं च ददौ । सत्यस्थित्या तुष्टः ] इति स्कांदादौ स्फुटमित्युक्तम्—सत्यसाराम् । सत्यमेव सारो यस्यां ताम् । धृतिं धैर्यम् ॥ २४ ॥ तां ज्ञानरूपाम् । 'मनः संसृतिकारणम्' इत्युक्तेः । अन्नमयं पार्थिवम् । 'तेज आपोन्नमात्मनः' इत्यादावन्नशब्दः पृथिवीवाचको दृश्यते ॥ २५ ॥

खे वायुं धारयंस्तच्च भूतादौ तं महात्मनि ॥ तस्मिन्ज्ञानकलां ध्यात्वा तयाऽज्ञानं विनिर्दहन् ॥ २६ ॥ हित्वा तां स्वेन भावेन निर्वाणसुखसं
विदा ॥ अनिर्देश्याप्रतर्क्येण तस्थौ विध्वस्तबंधनः ॥ २७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे हरिश्चंद्रोपाख्यानं नाम सप्तमोऽध्यायः ॥
॥ ७ ॥ श्रीशुक उवाच ॥ हरितो रोहितसुतश्चंपस्तस्माद्विनिर्मिता ॥ चंपापुरी सुदेवोऽतो विजयो यस्य चात्मजः ॥ १ ॥ भरुकस्तत्सुतस्तस्माद्वृकस्त
स्यापि बाहुकः ॥ सोऽरिभिर्हृतभू राजा सभार्यो वनमाविशत् ॥ २ ॥ वृद्धं तं पंचतां प्राप्तं महिष्यनुमरिष्यती ॥ और्वेण जानतात्मानं प्रजावंतं
निवारिता ॥ ३ ॥ आज्ञायास्यै सपत्नीभिर्गरो दत्तोंधसा सह ॥ सह तेनैव संजातः सगराख्यो महायशाः ॥ ४ ॥ सगरश्चक्रवर्त्यासीत् सागरो
यत्सुतैः कृतः ॥ यस्तालजंघान् यवनाञ्छकान् हैहयबर्बरान् ॥ ५ ॥ नावधीद्गुरुवाक्येन चक्रे विकृतवेषिणः ॥ मुंडाञ्श्मश्रुधरान् कांश्चिन्मुक्तके
शार्धमुंडितान् ॥ ६ ॥ अनंतर्वाससः कांश्चिदबहिर्वाससोऽपरान् ॥ सोऽश्वमेधैरयजत सर्ववेदसुरात्मकम् ॥ ७ ॥

निलेन ॥ २५ ॥ तं च खे आकाशे तच्च भूतादावहंकारे तं च भूतादिमहंकारम् । महात्मनि महत्तत्त्वे तस्मिन्विषयाकारं व्यावर्त्य ज्ञानकलां ज्ञानांशमात्मत्वेन ध्यात्वा तया
ध्यानवृत्तिरूपयाऽऽत्मावरकमज्ञानं विनिर्दहन् ॥ २६ ॥ निर्वाणसुखसंविदा तां च हित्वा मुक्तबंधः सन्ननिर्देश्येनाप्रतर्क्येण स्वेन भावेन स्वस्वरूपेण तस्थौ ॥ २७ ॥ इति
श्रीमद्भागवते नवमस्कंधे टीकायां सप्तमोऽध्यायः ॥ ७ ॥ अष्टमे रोहितस्योक्तो वंशो यत्राभवन्नृपः ॥ सगरः कपिलाक्षेपान्निर्दग्धा यस्य सूनवः ॥ १ ॥ चंपस्तस्मादभूत् येन
चंपापुरी निर्मिता । अतश्चंपात्सुदेवः ॥ १ ॥ हृता भूर्यस्य ॥ २ ॥ और्वेण ऋषिणा । आत्मानं देहम् । प्रजावंतं सगर्भम् ॥ ३ ॥ गरो विषम् । तेन गरेण सहैव
जातः ॥ ४ ॥ ५ ॥ गुरुवाक्येनौर्ववचनेन । कांश्चिदहत्वैव विकृतवेषिणश्चक्रे । तदेवाह । मुंडानिति । मुक्तकेशानर्धमुंडितांश्च ॥ ६ ॥ ७ ॥

तस्मिन्महत्तत्त्ववाच्ये चेतसि । आत्मत्वेनात्मरूपत्वेन ॥ २६ ॥ निर्वाणसुखसंविदा मोक्षानंदज्ञानेन । अनिर्देश्येन निर्देशानर्हेण । अप्रतर्क्येण तर्काविषयेण ॥ २७ ॥ इति श्रीमद्भागवतभावार्थदीपिका
प्रकाशे नवमस्कन्धे सप्तमोऽध्यायः ॥ ७ ॥ ॥ यत्र रोहितान्वये । कपिलस्याक्षेपादवज्ञानात् । यस्य सगरस्य ( १ ) । तस्माद्धरितात् । येन चंपेन । यस्य सुदेवस्य ॥ १ ॥ तत्सुतः विजयसुतः । तस्माद्भरुकात् ।
तस्यापि वृकस्यापि । स बाहुकः ॥ २ ॥ तं बाहुकम् । अनुमरिष्यती अनुमरणं कर्तुमिच्छंती । सगर्भं पुत्रवंतम् ॥३॥ अस्यै सगर्भायै । अंधसाऽन्नेन ॥ ४ ॥ यत्सुतैः सगरसुतैः । कृतः खात्वा संपादितः । यः सगरः ।
तालजंघहैहयौ यवनशकबर्बराश्च म्लेच्छभेदाः ॥ ५ ॥ पामरान्मा वधीरित्यौर्ववाक्येन विकृतो विरूपो वेषो नेपथ्यादि येषां ते "वेषो व्याप्तौ च नेपथ्ये शृंगारे वृत्तशीलयोः" इति निरुक्तिः । तदेव विकृतवेषत्वमेव ।
मुंडानकेशान् । मुक्तकेशान् इतस्ततः प्रसृतकेशान् । अर्द्धं शिरःपूर्वार्द्धं परार्द्धं च मुंडितं येषां तान् । श्मश्रुधरान्केवलं श्मश्रुधरान् ॥ ६ ॥ धौतवस्त्रस्य नाभ्यधोदेशकच्छस्य तत्समानसूत्रनिपातदेशे धारणमंतर्वा
सस्त्वं तन्न विद्यते येषां ते तथा । धौतवस्त्रस्य नाभ्यधोदेशकच्छस्यार्द्धभागस्य च यत्नेन स्थापनं बहिर्वासस्त्वं तन्न विद्यते येषां ते तथा । तथा च मुक्तकच्छान् द्विकच्छकांश्च चक्रे । " विशिखो द्विशिखश्चैव मुक्तकच्छो

औवौंपदिष्टयोगेन हरिमात्मानमीश्वरम् ॥ तस्योत्सृष्टं पशुं यज्ञे जहाराश्वं पुरंदरः ॥ ८ ॥ सुमत्यास्तनया दृप्ताः पितुरादेशकारिणः ॥ हयमन्वेषमाणास्ते समंतान्न्यखनन् महीम् ॥ ९ ॥ प्रागुदीच्यां दिशि हयं ददृशुः कपिलांतिके ॥ एष वाजिहरश्चौर आस्ते मीलितलोचनः ॥ १० ॥ हन्यतांहन्यतां पाप इति षष्टिसहस्रिणः ॥ उदायुधा अभिययुरुन्मिमेष तदा मुनिः ॥ ११ ॥ स्वशरीराग्निना तावन्महेंद्रहृतचेतसः ॥ महद्व्यतिक्रमहता भस्मसादभवन् क्षणात् ॥ १२ ॥ न साधुवादो मुनिकोपभर्जिता नृपेंद्रपुत्रा इति सत्त्वधामनि ॥ कथं तमो रोषमयं विभाव्यते जगत्पवित्रात्मनि खे रजो भुवः ॥ १३ ॥ यस्येरिता सांख्यमयी दृढेह नौर्यया मुमुक्षुस्तरते दुरत्ययम् ॥ भवार्णवं मृत्युपथं विपश्चितः परात्मभूतस्य कथं पृथङ्मतिः ॥ १४ ॥ योऽसमंजस इत्युक्तः स केशिन्यां नृपात्मजः ॥ तस्य पुत्रोंऽशुमान् नाम पितामहहिते रतः ॥ १५ ॥

औवेंणोपदिष्टो योग उपायस्तेन ॥८॥ तस्य द्वे भार्ये सुमतिः केशिनी च । तत्र सुमत्याः पुत्राणां प्रभावं मृत्युं चाह । सुमत्या इति षड्भिः ॥९॥ १० ॥ एष वाजिहर इति ब्रुवंतोऽभिययुः । षष्टिसहस्राणि परिच्छेदकतया संति येषाम् । उन्मिमेष लोचनोन्मीलनं चकार ॥ ११ ॥ १२ ॥ केचित्तु कपिलस्य कोपाग्निना दग्धा इति वर्णयंति तन्निराकरोति । नेति । कुत इत्यत आह । सत्त्वधामनि शुद्धसत्त्वमूर्तौ । जगतः पवित्रः शुद्धिकर आत्मा यस्य तस्मिन्कथं विभाव्यते संभाव्यते । असंभावनायां दृष्टांतः । भुवो रजः खे कथं संभाव्यते इति ॥१३॥ किं च । यस्य येनेरिता प्रवर्तिता तस्य विपश्चितः सर्वज्ञस्य कथं पृथङ्मतिररिमित्रादिभेददृष्टिः ॥ १४ ॥ तदेवं सुमत्याः पुत्रेषु

द्विकच्छकः । तावद्भवति चांडालो यावद्गंगां न मज्जति ॥'' इति स्मृतेश्चांडालान्साभिज्ञानांश्चकारेत्यर्थः । यद्वाऽनंतर्वाससो नीवीसूत्रवत्पादाग्रधार्याधोवस्त्रयुतानित्यर्थः । अत एव ब्राह्मणं प्रकृत्य वात्स्येनाप्युक्तम् ''ऊर्ध्ववस्त्रादधोवस्त्राद्धूमपानात्तथैव च । षड्भिर्विप्राः प्रणश्यंति हालाहलहलाहलैः॥'' इति ।''स्त्रीणामेव धृतिः कार्या ऊर्ध्वाधोवाससां क्वचित्'' । क्वचिदित्युक्तेः तासामपि सदा धार्ये इति । यद्वा—''चतुर्द्वादशकाष्ठाभिरंगुलैर्विस्तृतं तु यत् । व्यामदीर्घं गुदोपस्थच्छादकं वस्त्रमिष्यते ॥ अंतर्वासो बुधैः कव्याच्छादकं बहिरेव तत्'' इति स्मृत्यंतरोक्तेर्बहून् गुदोपस्थावरककौपीनमात्रानेव कटिवेष्टनादिरहितांश्चक्रे बहूंश्च तद्रहितकेवलकटिवेष्टनवस्त्रयुतांश्च चक्रे । एतेन कटिवेष्टनरहितकौपीनधारिणः केवलकटिवेष्टनधारिणश्च यवनसमा इत्यपि ध्वनितम् । ''दृष्ट्वा संमीलयेच्चक्षुर्विकृतान्सगरभूभुजा'' इति निषेधाच्च तस्य धर्मस्थितिमाह--स इति । स सगरः । सर्वे वेदाः सुराश्चात्मा स्वरूपं यस्य स तम् ॥ ७ ॥ तस्य सगरस्य ॥८॥ तस्य सगरस्य । तत्र तयोर्मध्ये । सुमत्या गरुडस्वसुः । न्यखनन् अन्वेषयामासुः । भूमिं खात्वा वा मार्गयामासुः ॥९॥ प्रागुदीच्याम् ऐशान्याम् ॥ १० ॥ परिच्छेदकतया भेदकतया । तदा हननशब्दोच्चारणसमये ॥ ११ ॥ स्वशरीराग्निना निजदेहोद्भूतवह्निना । तावत्साकल्येन । महेंद्रेण लोकार्त्तिकरत्वात्तेषां हृतं चेतो विचारसामर्थ्यं येषां ते तथा । महतः श्रीपुरुषोत्तमावतारस्य कपिलस्य व्यतिक्रमो हन्यतां चौरोऽयमित्युक्तिलक्षणस्तेनैव हताः । यद्वा—महतामृषीणां लोकानां च व्यतिक्रमाद्धताः । नारदादिपुराणेषु तेषां व्यतिक्रमोऽपि वर्णित इति । भस्मसात् सर्वे भस्मराशयो बभूवुः ॥ १२ ॥ मतांतरमपाकरोति—केचित्त्वित्यादिना । भर्जिता दग्धाः । मुनिकोपदग्धत्वे हेतुं पृच्छति—कुत इति । आत्मा स्वभावः ''आत्मा देहे धृतौ जीवे स्वभावेशमतिष्वपि'' इति यादवः ॥ १३ ॥ तमोगुणकार्यस्य कोपस्य हरावनवसरमाह—यस्येति । यया सांख्यनावा । मृत्योः पंथा यत्र तं दुरत्ययं विना ज्ञानमत्येतुमशक्यम् । परात्मभूतस्य नारायणावतारस्य ॥ १४ ॥ न समंजसो योग्यो यस्मात्स तथा । तस्य असमंजसस्य । पितामहस्स

असमंजस आत्मानं दर्शयन्नसमंजसम् ॥ जातिस्मरः पुरा संगाद्योगी योगाद्विचालितः ॥ १६ ॥ आचरन् गर्हितं लोके ज्ञातीनां कर्म विप्रियम् ॥ सरय्वां क्रीडतो बालान् प्रास्यदुद्वेजयञ्जनम् ॥ १७ ॥ एवंवृत्तः परित्यक्तः पित्रा स्नेहमपोह्य वै ॥ योगैश्वर्येण बालांस्तान् दर्शयित्वा ततो ययौ ॥ १८ ॥ अयोध्यावासिनः सर्वे बालकान् पुनरागतान् ॥ दृष्ट्वा विसिस्मिरे राजन् राजा चाप्यन्वतप्यत ॥ १९ ॥ अंशुमांश्चोदितो राज्ञा तुरंगान्वेषणे ययौ ॥ पितृव्यखातानुपथं भस्मांति ददृशे हयम् ॥ २० ॥ तत्रासीनं मुनिं वीक्ष्य कपिलाख्यमधोक्षजम् ॥ अस्तौत्समाहितमनाः प्रांजलिः प्रणतो महान् ॥ २१ ॥ अंशुमानुवाच ॥ न पश्यति त्वां परमात्मनोऽजनो न बुध्यतेऽद्यापि समाधियुक्तिभिः ॥ कुतोऽपरे तस्य मनःशरीरधीविसर्गसृष्टा वयमप्रकाशाः ॥ २२ ॥

मृतेषु केशिन्याः पौत्रेणाश्वः समानीतः पितृव्योद्धरणप्रयत्नश्च कृत इति दर्शयितुमाह । योऽसमंजसः । इत्युक्तः केवलमज्ञैर्वस्तुतस्तु समंजस एव । स तु केशिन्याः सुतः क्षेत्रजत्वमिव प्रतीतं वारयति । तस्यैव नृपस्यात्मनो देहाज्जातः ॥ १५ ॥ तस्य कथामाह चतुर्भिः । असमंजसः पुरा पूर्वजन्मनि योगी सन्संगाद्धेतोर्योगाद्विचालितोऽत इदानीं जातिस्मरः सन्संगपरिहाराय जनमुद्वेजयन् लोके गर्हितं ज्ञातीनां च विप्रियं कर्माचरन् क्रीडतो बालान्सरय्वां प्रास्यत्प्राक्षिपदिति द्वयोरन्वयः ॥ ॥ १६ ॥ १७ ॥ एवंविधं वृत्तं कर्म यस्य सः ॥ १८ ॥ १९ ॥ पितृव्यखातमनु यः पंथास्तं ययौ भस्मांति भस्मसमीपे ॥ २० ॥ २१ ॥ अजानंतोऽवजानंतोऽप्यनुकंप्या वयं त्विति ॥ तुष्टाव षड्भिरीशानमंशुमानेवमाशयः ॥ अजनोऽजो ब्रह्माऽपि त्वामद्यापि न पश्यति न च बुध्यते । कथंभूतम् आत्मनः स्वस्मात्परं परमेश्वरम् । कैर्हेतुभिः । समाधियुक्तिभिः समाधिनाऽप्यपरोक्षं न पश्यति युक्तिभिः परोक्षमपि सम्यङ् न बुध्यत इत्यर्थः । अपरेऽर्वाचीनास्तु कुतस्त्वां पश्येयुः । अर्वाचीनत्वे हेतुः । तस्य ब्रह्मणो मनश्च शरीरं च धीश्च सत्त्वतमोरजःकार्याणि ताभिर्ये विविधा देवतिर्यङ्नराणां सर्गास्तेषु सृष्टास्तत्रापि वयमप्रकाशा अज्ञाः कुतः पश्यामेत्यर्थः ॥ २२ ॥

गरः ॥ १९ ॥ यतो योगाद्विचालितोऽतो हेतोः । इदानीं वर्तमानजन्मनि जातिं पूर्वजन्म स्मरतीति तथा । योगादीश्वरोपासनारूपात् ॥ १६ ॥ उद्वेजयन् भीषयन् ॥ १७ ॥ एवंविधं नद्यां बालप्रक्षेपलक्षणम् । तान् नदीजलमग्नान् । एते युष्मद्बाला इति दर्शयित्वा ततोऽयोध्यातः । अयोध्यावासिन इत्यग्रे वक्ष्यमाणत्वात् ॥ १८ ॥ राजा सगरः । अन्वतप्यत पुत्रगमनेन पश्चात्तापं प्रापत् ॥ १९ ॥ २० ॥ तत्र भस्मसमीपे । महान् महदादरकर्त्ता ॥ २१ ॥ एवमाशयः—श्रो ज्ञानुकंपिहरिप्रसादाकांक्षिचेतास्तुष्टाव स्तुतिं चकारा स्तुतिश्च द्वेधा विद्यमानगुणविषयाऽविद्यमानगुणविषया च । तत्र द्वितीया विद्वदविद्वद्विषयभेदेन द्विधा । उभयतोपि तस्या स्तुतेः फलं न लभ्यते विदुषः । आत्मन्यविद्यमानगुणकथनेन स्तोतारि द्वेषसंभवात् । अविदुषोऽज्ञानेन मुखविकाशादिसंभवेऽपि स्तोतुः स्तुतिफलप्रदानसामग्र्यभावादतः प्रथमैव श्रेयसीति भावेन स्तौत्ति—न पश्यतीति । इत्यर्थ इति । "कः छंदसां योग मा वेद धीरः को धिया प्रतिवाचं पपार" इति श्रुतेरिति भावः । ताभिर्मनआदिरूपेण परिणतसत्त्वादिशक्तिभिः । तत्रापि तेषु सर्गेष्वपि । इत्यर्थ इति । ब्रह्मादिदुर्ज्ञेये मादृशानां

ये देहभाजास्त्रिगुणप्रधाना गुणान् विपश्यंत्युत वा तमश्च ॥ यन्मायया मोहितचेतसस्ते विदुः स्वसंस्थं न बहिःप्रकाशाः ॥ २३ ॥ तं त्वामहं ज्ञानघनं स्वभावप्रध्वस्तमायागुणभेदमोहैः ॥ सनंदनाद्यैर्मुनिभिर्विभाव्यं कथं हि मूढः परिभावयामि ॥ २४ ॥ प्रशांतमायागुणकर्मलिंगमनामरूपं सदसद्विमुक्तम् ॥ ज्ञानोपदेशाय गृहीतदेहं नमामहे त्वां पुरुषं पुराणम् ॥ २५ ॥ त्वन्मायारचिते लोके वस्तुबुद्ध्या गृहादिषु ॥ भ्रमंति कामलोभेर्ष्यामोहविभ्रांतचेतसः ॥ २६ ॥ अद्य नः सर्वभूतात्मन् कामकर्मेंद्रियाशयः ॥ मोहपाशो दृढश्छिन्नो भगवंस्तव दर्शनात् ॥ २७ ॥

अपरे तर्हि किं पश्यंति तदाह । ये देहभाजस्ते स्वस्मिन्सम्यक् स्थितमपि त्वां न विदुः किं तु गुणानेव विपश्यंति । अथ वा न गुणानपि तु तम एव पश्यंति । यतस्त्रिगुणा बुद्धिरेव प्रधानं येषामतो बहिरेव प्रकाशो ज्ञानं येषाम् । बुद्धिपरतंत्रतया जाग्रत्स्वप्नयोर्विषयान्पश्यंति सुषुप्तौ तम एव केवलं न तु निर्गुणं त्वाम् । सर्वत्र हेतुः । यद्यतः यस्य तव माययेति वा मोहितं चेतो येषां ते ॥ २३ ॥ तथाऽप्यहं विचारेण ज्ञास्यामीति चेत्तत्राह । तं त्वामहं विमूढः कथं परिभावयामि विचारयामि । कथंभूतम् । ज्ञानघनं शुद्धज्ञानमूर्तिम् । स्वत एव प्रध्वस्तौ मायागुणनिमित्तौ भेदमोहौ येषां तैर्विभाव्यं विचिंत्यम् । अयं भावः । ज्ञानघनत्वान्न तावज्ज्ञानविषयत्वम् । विचारविषयत्वेऽपि मायागुणैरभिभूतोऽहं न विचारे समर्थ इति ॥ २४ ॥ हे प्रशांत तस्मात्त्वां पुरुषं पुराणं केवलं नमामेत्यन्वयः । पुराणपुरुषत्वे हेतुः । मायाया गुणाः कर्माणि च विश्वसृष्ट्यादीनि लिंगानि च ब्रह्मादिरूपाणि यस्य तम् । प्रशांतत्वे हेतुः । सदसद्भ्यां कार्यकारणाभ्यां पुण्यपापाभ्यां वा विमुक्तम् । अतोऽनामरूपं तत्तत्कृतनामरूपशून्यं किं तु ज्ञानोपदेशाय गृहीतः प्रकटितो देहः शुद्धसत्त्वमूर्तिर्येन तम् । यद्वा हे प्रशांतमायेति हे अगुणेति च संबोध्य कर्मभिः सृष्ट्यादिकार्यैर्लिंगानि यस्येति योज्यम् । यद्वा प्रशांता मायागुणादयो यस्मिन्नित्येकमेव पदम् ॥ २५ ॥ स्वभाग्यं श्लाघते त्वन्मायेति द्वाभ्याम् । कामादिभिर्विभ्रांतानि चेतांसि येषां ते इमे सर्वे गृहादिषु भ्रमंति ॥ २६ ॥ हे सर्वभूतात्मन्

तज्ज्ञानं कथं स्यादिति भावः ॥ २२ ॥ अतस्त्रिगुणप्रधानत्वात् ॥ २३ ॥ यद्यपि त्वं दुर्ज्ञेयस्तथापीति । अत्राशयमाह—अयं भाव इति । ज्ञानस्वरूपस्य ज्ञानविषयत्वे त्वात्माश्रयोऽनात्मत्वं च स्यादतो विमृश्य एवेत्याह—विचारविषयत्वेपीति । विचारो निदिध्यासनम् । ज्ञानं श्रवणादीति भेदः ॥ २४ ॥ यतो विचारासमर्थोऽहं तस्माद्धेतोः । बहुत्वं पितामहाद्यभिप्रायम् । गुणाः सत्त्वादयः । पुरुषस्य स्वतोऽसंगत्वान्मायया सृष्ट्यादिहेतुत्वात्प्राक्कालिकत्वाच्च पुराणत्वं कार्यकारणाकारेण प्रतीयमानत्वात्कथं तद्विमुक्तमिति चेदाह—पुण्यपापाभ्यां विमुक्तम् असंगम् तत्कृताभ्यां कार्यकारणकृताभ्याम् नामरूपाभ्यां शून्यं वस्तुतो नामरूपशून्यत्वेपि भक्तानुग्रहाय तद्धाति "योऽनुग्रहार्थं भजतां पादमूलमनामरूपो भगवाननंतः । नामानि रूपाणि च जन्मकर्मभिर्भेजे स मह्यं परमः प्रसीदताम् ॥" इत्युक्तेरित्याह—किं त्विति । ननु प्रशांते मायागुणादिसंबंधो न संगच्छते तत्संबंधे प्रशांतत्वस्यैवासम्भवादित्यत आह—यद्वेति । पुनरपि तद्दोषतादवस्थ्यमेव प्रशांतमायागुणयोर्मायागुणकृतसर्गादिलिंगासंभवादत आह—यद्वेति ॥ २९ ॥ कामो विषयेच्छा । लोभो धर्मादिविपयार्थत्यागानिच्छा । ईर्ष्याऽक्षमा । मोहो वैचित्यम् एतैः । गृहादिष्विहादिना अर्थादिग्रहः ॥ २६ ॥ सर्वभूतात्मनः सर्वांतर्यामिणः । मोहमयोऽज्ञानहेतुकः । इत्यर्थ इति । भगवत्प्रसादादप्राप्यमपि

श्रीशुक उवाच ॥ इत्थंगीतानुभावस्तं भगवान् कपिलो मुनिः ॥ अंशुमंतमुवाचेदमनुगृह्य धिया नृप ॥ २८ ॥ श्रीभगवानुवाच ॥ अश्वोऽयं नीयतां वत्स पितामहपशुस्तव ॥ इमे च पितरो दग्धा गंगांभोर्हंति नेतरत् ॥ २९ ॥ तं परिक्रम्य शिरसा प्रसाद्य हयमानयत् ॥ सगरस्तेन पशुना क्रतुशेषं समापयत् ॥ ३० ॥ राज्यमंशुमति न्यस्य निःस्पृहो मुक्तबंधनः ॥ और्वोपदिष्टमार्गेण लेभे गतिमनुत्तमाम् ॥ ३१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे सगरोपाख्यानेऽष्टमोऽध्यायः ॥ ८ ॥ श्रीशुक उवाच ॥ अंशुमांश्च तपस्तेपे गंगानयनकाम्यया ॥ कालं महांतं नाशक्नोत्ततः कालेन संस्थितः ॥ १ ॥ दिलीपस्तत्सुतस्तद्वदशक्तः कालमेयिवान् ॥ भगीरथस्तस्य पुत्रस्तेपे स सुमहत्तपः ॥ २ ॥ दर्शयामास तं देवी प्रसन्ना वरदाऽस्मि ते ॥ इत्युक्तः स्वमभिप्रायं शशंसावनतो नृपः ॥ ३ ॥ कोऽपि धारयिता वेगं पतंत्या मे महीतले ॥ अन्यथा भूतलं भित्त्वा नृप यास्ये रसातलम् ॥ ४ ॥

नोऽस्माकं त्वत्कृपयैव घटितात्त्वद्दर्शनादतिदृढोऽपि मोहमयः पाशश्छिन्नः । कथंभूतः । कामादीनामाशय आश्रयः । त्वत्प्रसादेन कृतार्थोऽस्मीत्यर्थः ॥ २७ ॥ २८ ॥ अश्वं लब्ध्वाऽपि साकांक्षं प्रत्याह । इमे चेति ॥ २९ ॥ तं परिक्रम्येति शुकोक्तिः ॥ ३० ॥ ३१ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामष्टमोऽध्यायः ॥ ८ ॥ नवमेंशुमतो वंशः खट्वांगावधि वर्ण्यते ॥ गंगां भूतलमानिन्ये यस्य पौत्रो भगीरथः ॥ १ ॥ यथा सगरः पौत्राय राज्यं दत्त्वा तपस्तेपे तथांशुमांश्च स्वपुत्राय राज्यं दत्त्वा महांतं कालं तपस्तेपे इति चकारस्यार्थः । नाशक्नोत् गंगामानेतुमिति शेषः । संस्थितो मृतः ॥ १ ॥ कालं मृत्युमेयिवान्प्राप्तः ॥ २ ॥ तं प्रत्यात्मानं दर्शयामास । ते वरदास्मीति गंगयोक्तः सन्स्वमभिप्रायं पूर्वजोद्धरणं शशंस कथयामास ॥ ३ ॥ आह गंगा । कोऽपि गगनात्पतंत्या मे वेगं धारयिता धारयिष्यति ॥ ४ ॥

प्राप्यते इति भावः ॥ २७ ॥ नृपाणां महदाराधनमेव धर्म इति संबुद्ध्यभिप्रायः ॥ २८ ॥ वत्सेति । प्रियात्वास्पदतामाह । तदेवाह—गंगांभ इति । अर्हन्ति अपेक्षन्ते । विप्रावमानहतत्वात्तदुक्तम् । "ब्रह्मावज्ञहतानाञ्च शुद्धिर्नेह कथंचन । विना गंगांभसो राजन्प्रायश्चित्तशैरपि ॥" इति पुराणांतरे ॥ किञ्च "गंगा हिमवतो ज्येष्ठा दुहिता पुरुषर्षभ । तस्यां कुरु महाबाहो पितॄणां सलिलक्रियाम् ॥ चांडालादुदकात्सर्पाद्वैद्युताद्ब्राह्मणादपि । दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मणाम् ॥ उदकं पिंडदानं च न तु तेषां विधीयते ॥" इति स्मृतेः । "श्रीगंगाजलस्पृष्टानां प्रायश्चित्तं विनैव हि । और्द्ध्वदैहिकयोग्यत्वं जायते पापमृत्युतः ॥" इत्युक्तेः । "पापमृत्युमृतानां च गंगायामुदकक्रिया । भवेद्येषां ते नरा हि गच्छंति कृतिनां पदम् ॥" इत्युक्तेश्च । नेतरत् गंगोदकेतरदेषां तरणसाधनं नास्तीत्यर्थः ॥२९॥ तं कपिलम् । तेन अंशुमदानीतेन । पशुनाऽश्वेन ॥३०॥ अनुत्तमां मोक्षलक्षणाम् ॥ ३१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कंधेऽष्टमोऽध्यायः ॥ ८ ॥ ॥ यस्यांशुमतः ( १ ) ततो गंगानयनं विनैव तपसोऽनंतरम् ॥ १ ॥ तत्सुतोंऽशुमत्सुतः । तद्वदंशुमद्वत् । गंगामानेतुमशक्तः । तस्य दिलीपस्य ॥ २ ॥ तं भगीरथम् ॥ ३ ॥ कोपि कश्चिदपि ब्रह्मापि वा न कोपीति । अन्यथा मद्वेगधारयित्रभावे । त्वं तु नृप एद न त्वमरेष्वसमत्सदशेषु तत्राज्ञास्तीति संबुद्ध्यभि

किं चाहं न भुवं यास्ये नरा मय्यामृजंत्यघम् ॥ मृजामि तदघं कुत्र राजंस्तत्र विचिंत्यताम् ॥ ५ ॥ भगीरथ उवाच ॥ साधवो न्यासिनः शांता ब्रह्मिष्ठा लोकपावनाः ॥ हरंत्यघं तेंगसंगात् तेष्वास्ते ह्यघभिद्धरिः ॥ ६ ॥ धारयिष्यति ते वेगं रुद्रस्त्वात्मा शरीरिणाम् ॥ यस्मिन्नोतमिदं प्रोतं विश्वं शाटीव तंतुषु ॥ ७ ॥ इत्युक्त्वा स नृपो देवं तपसाऽतोषयच्छिवम् ॥ कालेनाल्पीयसा राजंस्तस्येशः समतुष्यत ॥ ८ ॥ तथेति राज्ञाभिहितं सर्वलोकहितः शिवः ॥ दधारावहितो गंगां पादपूतजलां हरेः ॥ ९ ॥ भगीरथः स राजर्षिर्निन्ये भुवनपावनीम् ॥ यत्र स्वपितॄणां देहा भस्मीभूताः स्म शेरते ॥ १० ॥ रथेन वायुवेगेन प्रयांतमनुधावती ॥ देशान्पुनंती निर्दग्धानासिंचत्सगरात्मजान् ॥ ११ ॥ यज्जलस्पर्शमात्रेण ब्रह्मदंडहता अपि ॥ सगरात्मजा दिवं जग्मुः केवलं देहभस्मभिः ॥ १२ ॥

किं च आमृजंति क्षालयंति तत्रोपायो विचिंत्यताम् ॥ ५ ॥ अघं हरंति हरिष्यंति । अघं भिनत्तीत्यघभित् ॥ ६ ॥ आत्मा कथंभूतः । यस्मिन्निदं विश्वमोतं ग्रथितमूर्ध्वतंतुषु शाटीव पट इव प्रोतं च तिर्यक्तंतुषु पट इव । असौ सर्वाधारस्त्वद्वेगं धारयिष्यतीत्यर्थः ॥ ७ ॥ इत्येवं गंगामुक्त्वा । तच्छ्रुत्वेति पाठे श्रावयित्वेत्यर्थः ॥ ८ ॥ राज्ञाऽभिहितं तथेत्यंगीकृत्य । हरेः पादेन पूतं जलं यस्याः ॥ ९ ॥ १० ॥ ११ ॥ प्रसंगाद्गंगामाहात्म्यमाह चतुर्भिः । यस्याः जलस्पर्शमात्रेण तच्च केवलं देहभस्मभिरेव न

प्रायः ॥ ४ ॥ तत्रानागमने कारणांतरमाह–तत् मनुष्यत्यक्तम् । कुत्र स्थले मृजामि मार्ज्मि शब्लुगभावोऽत्रार्षः । तत्र मदघमार्जननिमित्तम् । नरास्तु मय्यघं निक्षिप्य शुद्धा भविष्यंति स्वाघमहं कुत्र निक्षिप्य शुद्धा भविष्यामीति विचार्यतामिति भावः ॥ ९ ॥ प्रथमं द्वितीयप्रश्नस्योत्तरमाह–साधवः शास्त्रानुयायिनः । न्यासिनः भगवदर्पितसर्वकर्मफलाः । शांताः शमादिसाधनसंपन्नाः । ब्रह्मिष्ठा इति ब्रह्म जातिर्वेदो वात्मध्यानं वा विद्यते येषां ते ब्रह्मवन्तोऽतिशयेन ब्रह्मवंतो ब्रह्मिष्ठाः । "विन्मतोर्लुक्" इतीष्ठनि मतुपो लुक् । तथा च वेदाभ्यासरता हरिभक्ता ब्राह्मणा इत्यायातम् । ब्रह्मणि स्थिता इत्यर्थस्वीकारे ब्रह्मस्था इत्येव स्यात् । तदेव समर्थयति । लोकपानिंद्रादीनप्यवंति बृहस्पत्यादिरूपेण याजयितृरूपेण वेति तथा । यद्वा–लोकान्पावयंति सन्मार्गोपदेशेनेति वा । 'ब्राह्मणेभ्यो नमस्यामः' इत्यारभ्य "श्रवणाद्दर्शनाद्वापि महापातकिनोऽपि वः । शुद्ध्येरन्नंत्यजाश्चापि किमु संभाषणादिभिः ॥ " इति मार्कंडेयं प्रति शंकरोक्तेः । अंगसंगात्त्वयि स्नानात् । तर्हि ते पापिनो भविष्यंतीति चेदाह–तेष्विति । सर्वव्यापिनोऽपि हरेस्तेषु ज्ञातत्वेन साक्षात्स्थितत्वात्तस्य च हरति पापमित्यन्वर्थनामत्वान्न तेषां पापसंसर्गो भवितुमर्हति । "विषशीतापहौ मंत्रवह्नी किं दोषभागिनौ" इति न्यायाद्ब्रह्मनिष्ठावतां संगादन्यस्यापि पापो नोत्पद्यते किं तेषामिति भावः । पापहारित्वं भगवत आह–अघभिदिति । स्वत एव पापानि तान्नोपसर्पंति भेदकत्वाद्बिडालं मूषिका इवेत्यर्थः ॥ ६ ॥ द्वितीयस्योत्तरं दत्त्वा प्रथमप्रश्नोत्तरमाह–धारयिष्यतीति । रूणि दुःखानि द्रावयति सर्वेषामिति रुद्रः । दयालुत्वान्ममोपर्यपि दयां करिष्यति मद्दुःखद्रावणेन । इत्यर्थ इति । सर्वविश्वधारिणो विश्वैकदेशभूतायास्तव धारणं नाद्भुतमिति भावः । "पटे शाटी शंकरस्य भार्यायां धौतवाससि" इति निरुक्तिः ॥ ७ ॥ इत्यर्थ इति । आर्षत्वादिति भावः । स भगीरथः । शीघ्रप्रसादत्वमाह–कालेनेति ॥ ८ ॥ अवहित इति । अतिदुर्लभमिदं भगवत्पादांभ इतस्ततो मा गच्छेदिति सावधानः ॥ ९ ॥ तत्र निन्ये इति योज्यं यत्तदोर्नित्यसंबंधात् ॥ १० ॥ प्रयान्तं भगीरथमनुधावती पृष्ठतो गच्छंती । देशान्मार्गगतान् ॥ ११ ॥ तत्र स्पर्शनमपि । भस्मीभूतेति । अत एवोक्तम् "दशाहाभ्यंतरे यस्य गंगातोयेऽस्थि मज्जति । गंगायां मरणं यादृक्तादृक्फलमवाप्नुयात् ॥ " इति नारदीये ।

भस्मीभूतांगसंगेन स्वर्याताः सगरात्मजाः ॥ किं पुनः श्रद्धया देवीं ये सेवंते धृतव्रताः ॥ १३ ॥ न ह्येतत् परमाश्चर्यं स्वर्धुन्या यदिहोदितम् ॥ अनंतचरणांभोजप्रसूताया भवच्छिदः ॥ १४ ॥ संनिवेश्य मनो यस्मिञ्छ्रद्धया मुनयोऽमलाः ॥ त्रैगुण्यं दुस्त्यजं हित्वा सद्यो यातास्तदात्मताम् ॥ ॥ १५ ॥ श्रुतो भगीरथाज्जज्ञे तस्य नाभोऽपरोऽभवत् ॥ सिंधुद्वीपस्ततस्तस्मादयुतायुस्ततोऽभवत् ॥ १६ ॥ ऋतुपर्णो नलसखो योऽश्वविद्यामयान्नलात् ॥ दत्त्वाऽक्षहृदयं चास्मै सर्वकामस्तु तत्सुतः ॥ १७ ॥ ततः सुदासस्तत्पुत्रो मदयंतीपतिर्नृपः ॥ आहुर्मित्रसहं यं वै कल्माषांघ्रिमुत क्वचित् ॥ वशिष्ठशापाद्रक्षोऽभूदनपत्यः स्वकर्मणा ॥ १८ ॥ राजोवाच ॥ किंनिमित्तो गुरोः शापः सौदासस्य महात्मनः ॥ एतद्वेदितुमिच्छामः कथ्यतां न रहो यदि ॥ १९ ॥ श्रीशुक उवाच ॥ सौदासो मृगयां किंचिच्चरन्रक्षो जघान ह ॥ मुमोच भ्रातरं सोऽथ गतः प्रतिचिकीर्षया ॥ २० ॥ स चिंतयन्नघं राज्ञः सूदरूपधरो गृहे ॥ गुरवे भोक्तुकामाय पक्त्वा निन्ये नरामिषम् ॥ २१ ॥

साक्षात् । ब्रह्मणि स्वकृतेन दंडेन हता अपि ॥ १२ ॥ तत्प्रपंचयति । भस्मीभूतेनांगेन यः संगस्तेन तां श्रद्धया ये सेवंते ते इति शेषः ॥ १३ ॥ १४ ॥ अनंतस्य विशेषणं संनिवेश्येति । त्रैगुण्यं देहसंबंधम् ॥ १५ ॥ १६ ॥ नलस्य सखा । अयात्प्राप्तः । तत्सुतः ऋतुपर्णस्य सुतः ॥ १७ ॥ तत्पुत्रः सौदासः ॥ १८ ॥ न रहो न रहस्यम् ॥ १९ ॥ मृगयां चरन्कंचिद्राक्षसं जघान तस्य भ्रातरं मुमोच । स भ्राता पलाय्य गतः ॥ २० ॥ अघमनिष्टम् । सूदः पाचकस्तद्रूपधरः सन् राज्ञो गृहे वर्तमानः ॥ २१ ॥

तां गंगाम् । ब्रह्मदण्डहतस्यापरिहार्यनरकवासत्वादित्यपिनोक्तम् "न ब्रह्मदण्डदग्धस्य न भूतभयदस्य च । नारकाश्चानुगृह्णंति यांयां योनिमसौ व्रजेत् ॥" इति वचनान्नारकाः श्वशूकरगर्दभादयोऽपि तं न स्पृशंत्यतिगर्हितत्वादिति ॥ १२ ॥ तत् श्रद्धया सेवनम् । ते यदि स्वर्गं प्राप्नुवंतीति किमु वक्तव्यं पुनरंति कैमुत्यमुक्तम् ॥ १३ ॥ यन्माहात्म्यं स्वर्धुन्या इहोदितमेतदाश्चर्यन्न किं त्वितोप्यधिकं तच्चाद्यपद्यव्याख्याशतके निरूपितम् । तत्र हेतुः—अनन्तेत्यादि । अनन्तोद्भूताया माहात्म्यानंत्यमुचितमेव । कारणगुणानां कार्येनुवृत्तिदर्शनात् । भवच्छिदः संसारच्छेत्र्याः । "इदं हि गांगं त्यजतामिहांगं पुनर्न चांगम्—" इत्याद्युक्तेः ॥ १४ ॥ यस्मिन्ननंते वा तदुद्भूतगांगप्रवाहे । "स्मरणादेव गंगाया मुक्तिभागी भवेन्नरः" इत्युक्तेः । दुस्त्यजं ज्ञानं विना त्यक्तुमशक्यम् । तदात्मतामनंतस्वरूपताम् । "—यदि वापि चांगम् । करे रथांगं शयनेभुजंगं याने विहंगं चरणेऽम्बु गांगम् ॥" इति गंगापक्षे "स्थित्वास्यामंतकालेपि ब्रह्म निर्वाणमृच्छति" इत्यनंतपक्षे ॥ १५ ॥ तस्य श्रुतस्य । अपरो मानवसुतादन्यः । ततो नाभात् । तस्मात्सिंधुद्वीपात् । ततोऽयुतायुषः । ऋतुपर्ण इत्यग्रिमेण संबंधः ॥ ॥ १६ ॥ य ऋतुपर्णः । अश्वानां दूरदेशचालनपालनचिकित्सादिरूपां विद्याम् । अस्मै नलाय । अक्षाणां पाशकानां हृदयमभिलाषानुरूपपातनमंत्रम् ॥ १७ ॥ ततः सर्वकामात् । तत्पुत्रः सुदासपुत्रः । यं सौदाम् । क्वचित्कारणांतरे । रक्षः राक्षसः ॥ १८ ॥ महात्मनो दयायुक्तस्य "दिशः खमवनिं सर्वं पश्यञ्जीवमयं नृपः" इति वक्ष्यमाणत्वात् । एतच्छापकारणम् ॥ १९ ॥ अथ सुदासात्मजान्मुक्तेरनन्तरम् । स रक्षोभ्राता । प्रतिचिकीर्षया भ्रातृहननप्रतीकारेच्छया । गतः सौदासमिति शेषः । यद्वा—स भ्रातरं मृतं मुमोचेति "ततः पलायनं कृत्वा गतश्च प्रतिचिकीर्षया ।" इत्युक्तेः ॥ २० ॥ गुरवे वशिष्ठाय ।

परिवेक्ष्यमाणं भगवान् विलोक्याभक्ष्यमंजसा ॥ राजानमशपत्क्रुद्धो रक्षो ह्येवं भविष्यसि ॥ २२ ॥ रक्षःकृतं तद्विदित्वा चक्रे द्वादशवार्षिकम् ॥
सोऽप्यपोंजलिनादाय गुरुं शप्तुं समुद्यतः ॥ २३ ॥ वारितो मदयंत्यापो रुशतीः पादयोर्जहौ ॥ दिशः खमवनीं सर्वं पश्यञ्जीवमयं नृपः ॥ २४ ॥
राक्षसं भावमापन्नः पादे कल्माषतां गतः ॥ व्यवायकाले ददृशे वनौकोदंपती द्विजौ ॥ २५ ॥ क्षुधार्तो जगृहे विप्रं तत्पत्न्याऽऽहाऽकृतार्थवत् ॥
न भवान्राक्षसः साक्षादिक्ष्वाकूणां महारथः ॥ २६ ॥ मदयंत्याः पतिर्वीर नाधर्मं कर्तुमर्हसि ॥ देहि मेऽपत्यकामाया अकृतार्थं पतिं द्विजम् ॥
॥ २७ ॥ देहोऽयं मानुषो राजन्पुरुषस्याखिलार्थदः ॥ तस्मादस्य वधो वीर सर्वार्थवध उच्यते ॥ २८ ॥ एष हि ब्राह्मणो विद्वांस्तपःशीलगुणा
न्वितः ॥ आरिराधयिषुर्ब्रह्म महापुरुषसंज्ञितम् ॥ सर्वभूतात्मभावेन भूतेष्वंतर्हितं गुणैः ॥ २९ ॥ सोऽयं ब्रह्मर्षिवर्यस्ते राजर्षिप्रवराद्विभो ॥ कथम
र्हति धर्मज्ञ वधं पितुरिवात्मजः ॥ ३० ॥ तस्य साधोरपापस्य भ्रूणस्य ब्रह्मवादिनः ॥ कथं वधं यथा बभ्रोर्मन्यते सन्मतो भवान् ॥ ३१ ॥

अभक्ष्यमंजसा विलोक्य एवं नरमांसव्यवहारेण ॥ २२ ॥ वशिष्ठ एव तं शापं द्वादशवार्षिकं चक्रे ॥ २३ ॥ रुशतीस्तीक्ष्णा अपः स्वपादयोर्जहौ नान्यत्र तत्र हेतुः । दिश इति । एवमनेन मित्रसहत्वमपि दर्शितम् । मित्रस्य कलत्रस्य वाचः सहनात् ॥ २४ ॥ तदेवं राक्षसत्वे कल्माषांघ्रित्वे च कारणमुक्त्वा स्वकर्मणाऽनपत्य इति यदुक्तं तत्प्रपंचयति । व्यवायकाल इत्यादिना कर्मणा अप्रजा इत्यंतेन । वनमोको निवासो ययोस्तौ वनौकसौ च तौ दंपती च । पृथक्पदत्वे सकारलोप आर्षः ॥ २५ ॥ अकृतार्थवद्दीनवत् ॥ २६ ॥ अकृतार्थमसमाप्तरतिम् ॥ २७ ॥ २८ ॥ सर्वभूतानामात्मेति भावनयाऽऽराधयितुमिच्छुः । यद्वा सर्वभूतानामात्मभावेन भूतेषु स्थितमपि गुणै रंतर्हितं ब्रह्मेति संबंधः । पाठांतरे अंतर्हितः सोऽयमित्युत्तरेणान्वयः ॥ २९ ॥ ३० ॥ भ्रूणस्य श्रोत्रियस्य । गर्भस्य सत इति वा । बभ्रोर्गोः । सतां मतो भवान्वधं कथं

नरामिषं नरमांसम् ॥ २१ ॥ भगवान्सर्वज्ञो वशिष्ठः । परिवेक्ष्यमाणं भोजनपात्रे क्रियमाणम् ॥ २२ ॥ न मयेदं कारितं नरामिषं किन्तु सूदेन स्वेच्छया कृतमिति राजकथनं तत्पदार्थः । सोऽपि सौदासोपि ॥ २३ ॥ तत्र पादयोस्त्यागे । एवम् इत्थम् । अनेन अन्यत्र शापजलत्यागेन । रुशतीर्हिंसयंतीर्मैत्रितत्वात् । यद्वा हतं प्रतिचिकीर्षाम इति शब्दायमानाः ''माघमासे रटंत्यापः' इति वचनात् । 'रुश—हिंसायां शब्दे च' इति धातुपाठात् ॥ २४ ॥ कल्माषतां वनमाषवर्णवत्ताम् । व्यवायकाले मैथुनावसरे ॥ २५ ॥ तत्पत्नी ब्राह्मणी । राक्षसस्य कृपाजननायावध्यत्वेऽनेककारणान्याह—न भवानिति । साक्षाद्राक्षसो न किं त्विक्ष्वाकूणां महारथः ॥ २६ ॥ यथा त्वं मदयंत्या अनपत्यायाः प्रियस्तथाऽयं ममेति । अकृतार्थम् अगतपितृणम् ॥ २७ ॥ अखिलार्थदश्चतुर्वर्गप्रदः । यत इत्थं तस्मात् । अस्य मनुष्यदेहस्य । सर्वार्थवधश्चतुर्वर्गहानिकरः ॥ २८ ॥ अस्य तु सर्वथा वधोऽकार्य एवेत्याह—एष इत्यादि । ब्राह्मणत्वेऽपि विद्वान् धर्माधर्मज्ञः । तत्रापि तप इत्यादि । महापुरुषः सर्वनियंतेति संज्ञा जाता अस्य तद्ब्रह्म । सर्वभूतात्मभावेनाराधयितुमिच्छुरित्यन्वयः ।: ब्रह्माराधनं तु ''सर्वं खल्विदं ब्रह्म'' इति श्रुतेः सर्वभूतात्मभावेनैव भवति । पुनः कथनं पुनरुक्तमिव प्रतीयत इत्याह—यद्वेति । पाठांतरे 'अंतर्हितो गुणैः' इति पाठे ॥ २९ ॥ ३० ॥ गर्भस्य सत इदानीमेव मयि गर्भरूपेणो

यद्ययं क्रियते भक्षस्तर्हि मां खाद पूर्वतः ॥ न जीविष्ये विना येन क्षणं च मृतकं यथा ॥ ३२ ॥ एवं करुणभाषिण्या विलपंत्या अनाथवत् ॥ व्याघ्रः पशुमिवाखादत्सौदासः शापमोहितः ॥ ३३ ॥ ब्राह्मणी वीक्ष्य दिधिषुं पुरुषादेन भक्षितम् ॥ शोचंत्यात्मानमुर्वीशमशपत्कुपिता सती ॥ ॥ ३४ ॥ यस्मान्मे भक्षितः पाप कामार्तायाः पतिस्त्वया ॥ तवापि मृत्युराधानादकृतप्रज्ञ दर्शितः ॥ ३५ ॥ एवं मित्रसहं शप्त्वा पतिलोकपरायणा ॥ तदस्थीनि समिद्धेऽग्नौ प्रास्य भर्तुर्गतिं गता ॥ ३६ ॥ विशापो द्वादशाब्दांते मैथुनाय समुद्यतः ॥ विज्ञाय ब्राह्मणीशापं महिष्या स निवारितः ॥ ३७ ॥ तत ऊर्ध्वं स तत्याज स्त्रीसुखं कर्मणाऽप्रजाः ॥ वशिष्ठस्तदनुज्ञातो मदयंत्यां प्रजामधात् ॥ ३८ ॥ स वै सप्त समा गर्भम बिभ्रन्न व्यजायत ॥ जघ्नेऽश्मनोदरं तस्याः सोऽश्मकस्तेन कथ्यते ॥ ३९ ॥ अश्मकान्मूलको जज्ञे यः स्त्रीभिः परिरक्षितः ॥ नारीकवच इत्युक्तो निःक्षत्रे मूलकोऽभवत् ॥ ४० ॥

साधु मन्यते इत्यर्थः ॥ ३१ ॥ क्षणमपि येन विना न जीविष्यामि सोऽयं यदि भक्षः क्रियते तर्हि मृतकं यथा मृतप्रायां मां पूर्वं भक्षय ॥ ३२ ॥ ३३ ॥ दिधिषुं गर्भाधानकर्तारम् ॥ ३४ ॥ आधानान्मैथुनात् । हे अकृतप्रज्ञ मृत्युर्मया दर्शितः ॥ ३५ ॥ ३६ ॥ ३७ ॥ तदेवं कर्मणा अप्रजाः ॥ ३८ ॥ अविभ्रद्धारेत्यर्थः । न व्यजायत न प्रासूत अतो वशिष्ठ एव तस्या उदरमश्मना जघान । स उत्पन्नः सुतोऽश्मकः ॥ ३९ ॥ स्त्रीभिः संवेष्ट्य परशुरामात्परिरक्षितोऽतो नारीकवच इत्युक्तः । निःक्षत्रे सति

त्पत्स्यमानत्वाद्भ्रूणरूपस्य सत इत्यर्थः । "अथ भ्रूणो गार्भिण्यां श्रोत्रिये द्विजे । अर्भके स्त्रैणगर्भे च" इति हैमः । भ्रूणस्य श्रोत्रियस्येत्यर्थः । "जन्मना ब्राह्मणो ज्ञेयः संस्कारात्तु द्विजो भवेत् । वेदाभ्यासाद्भवेद्विप्रस्त्रिभिश्श्रोत्रियशब्दभाक् ॥" इति याज्ञवाल्क्योक्तेः । ब्रह्मद्विषस्तु 'जन्मना जायते शूद्रः' इति वदन्ति ते तु 'ब्राह्मण्यां ब्राह्मणज्जातो ब्राह्मणः परिकीर्त्तितः' इति जातूकर्ण्योक्त्या परिहार्याः। न हि गौर्वृषभसङ्गाच्छानं रासभं वा जनयितुं कदापि कल्पा भवितुमर्हति किं तु गोरूपमेव वत्सं जनयति तथैव ब्राह्मणी ब्राह्मणाद्ब्राह्मणमेव जनयति न कदापि शूद्रमिति भावः । इत्यर्थ इति । न हि सत्संभावितस्य ते ब्राह्मणहननमुचितमिति भावः । "माहेयी सौरभेयी च बभ्रुरघ्न्या रमाश्रयः" इति धरणिः ॥ ३१ ॥ पूर्वत इति सप्तम्यर्थे तसिः । पूर्वस्मिन्काले इत्यर्थः ॥ ३२ ॥ अखादत् तमिति शेषः ॥ ३३ ॥ "पत्यौ धैर्यहरे पुंसि दिधिषुर्धारणेच्छके । द्विरूढायाः स्त्रियाः पत्यौ दीर्घितोऽप्ययमिष्यते ॥" इति कोशात् ॥३४॥ "आधानं मैथुने स्थाने पात्रे गर्भस्य धारणे" इति निरुक्तिः । दर्शितः मया शापेनेति शेषः । अकृता शिक्षाहीना प्रज्ञा यस्य स तथा ॥३५॥ तदस्थीनि पत्यस्थीनि । प्रास्य प्रक्षिप्य ॥ ३६ ॥ स मित्रसहः ॥ ३७ ॥ ततः शापादूर्ध्वम् । स्त्रीसुखं व्यवायम् । कर्मणा व्यवायप्रवृत्तविप्रभक्षणलक्षणेन अप्रजोऽभूदित्यर्थः । तद्वंशप्रवृत्तिः कथं जातेति चेदाह—वशिष्ठ इति । तदनुज्ञातः मित्रसहप्रार्थनया मद्भार्यायां पुत्रमुत्पादयेत्येवं रूपया ॥ ३८ ॥ सा मदयंती । समा वत्सरान् । इत्यर्थ इति । भृत्रः पोषणार्थो नात्र ग्राह्य इति भावः । यतो न व्यजायत अतो हेतोः। तस्या मदयंत्याः । अश्मना पाषाणेन । तेनाश्मना कुट्टनेन हेतुनाश्मकः पृषोदरादित्वादत्र कादेशो आकृष्टशब्दस्य ॥ ३९ ॥ अतः स्त्रीरक्षणात् । निःक्षत्त्रे परशुरामेण दुष्टक्षत्त्रसंहारे सति । क्षत्त्रमूलं यतोऽतो हेतोः ॥ ४० ॥

ततो दशरथस्तस्मात् पुत्र ऐडविडस्ततः ॥ राजा विश्वसहो यस्य खट्वांगश्चक्रवर्त्यभूत् ॥ ४१ ॥ यो देवैरर्थितो दैत्यानवधीद् युधि दुर्जयः ॥ मुहूर्तमायुर्ज्ञात्वैत्य स्वपुरं संदधे मनः ॥ ४२ ॥ न मे ब्रह्मकुलात्प्राणाः कुलदैवान्न चात्मजाः ॥ न श्रियो न मही राज्यं न दाराश्चातिवल्लभाः ॥ ॥ ४३ ॥ न बाल्येऽपि मतिर्मह्यमधर्मे रमते क्वचित् ॥ न पश्याम्युत्तमश्लोकादन्यत्किंचन वस्त्वहम् ॥ ४४ ॥ देवैः कामवरो दत्तो मह्यं त्रिभुवनेश्वरैः ॥ न वृणे तमहं कामं भूतभावनभावनः ॥ ४५ ॥ ये विक्षिप्तेंद्रियधियो देवास्ते स्वहृदि स्थितम् ॥ न विंदंति प्रियं शश्वदात्मानं किमुतापरे ॥ ४६ ॥ अथेशमायारचितेषु संगं गुणेषु गंधर्वपुरोपमेषु ॥ रूढं प्रकृत्याऽऽत्मनि विश्वकर्तुर्भावेन हित्वा तमहं प्रपद्ये ॥ ४७ ॥ इति व्यवसितो बुद्ध्या नारायणगृहीतया ॥ हित्वाऽन्यभावमज्ञानं ततः स्वं भावमाश्रितः ॥४८॥ यत्तद्ब्रह्म परं सूक्ष्ममशून्यं शून्यकल्पितम् ॥ भगवान्वासुदेवेति यं गृणंति हि सात्वताः॥४९॥इति श्रीमद्भा०महा०नवम०सूर्यवंशानुवर्णने नवमोऽध्यायः ॥९॥ श्रीशुक उवाच ॥ खट्वांगाद्दीर्घबाहुश्च रघुस्तस्मात्पृथुश्रवाः ॥ अजस्ततो महाराज तस्माद्दशरथोऽभवत् ॥१॥ तस्यापि भगवानेष साक्षाद्ब्रह्ममयो हरिः ॥ अंशांशेन चतुर्धाऽगात्पुत्रत्वं प्रार्थितः सुरैः ॥२॥

क्षत्रवंशस्य मूलमभवदतो मूलक इति चोक्तः ॥ ४० ॥ ४१ ॥ प्रसन्नैर्देवैर्वरं वृणीष्वेत्युक्ते खट्वांगेनोक्तं प्रथमं तावन्ममायुः कथ्यतामिति । देवैश्चोक्तं मुहूर्तमात्रमिति । तज्ज्ञात्वा देवैर्दत्तेन विमानेन शीघ्रं स्वपुरमेत्य मनः परमेश्वरे संदधे ।। ४२ ।। एतदेव स्वसाधुवृत्तानुस्मरणपूर्वकं तत्कृतेन निश्चयेन दर्शयति । नेति सप्तभिः । कुलदैवाद्ब्रह्मकुलात्सकाशान्मे प्राणादयो नातिवल्लभा नातिप्रियाः ॥ ४३ ॥ मह्यं मम ॥ ४४ ॥ भूतभावनो हरिस्तस्मिन्नेव भावना यस्य सोऽहं तं कामं न वृणे ॥ ४५ ।। तत्र हेतुः । य इति विक्षिप्तानींद्रियाणि धीश्च येषां ते देवा अपि ।। ४६ ।। अथ तस्मात्प्रकृत्या स्वभावेनात्मनि रूढं गुणेषु संगं विश्वकर्तुर्भावेन हित्वा तमेवाहं प्रपद्ये ।।४७।। अन्यभावं देहाद्यभिमानरूपमज्ञानं हित्वा ॥ ४८ ॥ स्वं भावमेवाह । यत्तदिति । शून्यवत्कल्पितं वागाद्यविषयत्वात् । वासुदवे इति यं गृणंति । ब्रह्मण एव भक्तानुग्रहार्थमाविष्कृततनोर्वासुदेवत्वात् ॥ ४९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां नवमोऽध्यायः ॥ ९ ॥ दशमे प्राह खट्वांगवंशे श्रीरामसंभवम् ॥ तच्चरित्रं च लंकेशं हत्वाऽयोध्यागमावधि ॥ १ ॥ खट्वांगाच्च दीर्घबाहुः ॥ १ ॥ २ ॥

ततो मूलकात् । तस्माद्दशरथात् । तत ऐडविडात् । यस्य विश्वसहस्य ॥ ४१ ॥ यः खट्वांगः ॥४२॥ एतदेव परमेशे मनःसंधानमेव । तत्कृतेन खट्वांगकृतेन ॥४३॥ ४४ ॥ भावना चेतोवृत्तिः ॥४५॥ तत्र कामावरणे । विक्षिप्तानि विषयाकुलानि देवानामपि परेशज्ञानाभावात्तदन्यवरदाने प्रवृत्तेः । अपरे सात्त्विकदेवेतरराजसतामसा मनुष्यादयः ॥४६॥ तस्माद्विक्षिप्तेंद्रियदेवदत्तवराणां विक्षेपकत्वात् । गुणेषु तत्कार्येषु देहादिषु । गंधर्वपुरोपमेषु नश्वरेषु । रूढं दृढम् । संगं स्नेहलक्षणं पाशम् । भावेन भक्त्या । तमेव निश्चकर्त्तारमेव ॥ ४७ ॥ ततः अज्ञानहानोत्तरम् । स्वं भावमात्मज्ञानलक्षणमाश्रितो भवामीति शेषः ॥ ४८ ॥ यत्तदिति । यत्तच्छब्दद्योत्यमनिर्वचनीयम् । अशून्यं शून्यसाक्षिणम् । वासुदेवेति । संधिरार्षः ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे नवमोऽध्यायः ॥ ९ ॥ तच्चरित्रं श्रीरामचारितम् ( १ ) । तस्माद्दीर्घबाहोः । पृथुश्रवा महायशा इति रघुविशेषणम् । ततो रघोः । तस्मात् अजात् ॥ १ ॥ तस्यापि दशरथस्यापि । एष इति बुद्धिसन्निहितत्वात् । साक्षाद्ब्रह्ममयः मयडत्र स्वरूपे । भक्तार्तिहरत्वात्पृथ्वीभारहरत्वाच्च हरिः । साक्षादित्युक्तेः परिपूर्ण

रामलक्ष्मणभरतशत्रुघ्ना इति संज्ञया ॥ तस्यानुचरितं राजन्नृषिभिस्तत्त्वदर्शिभिः ॥ श्रुतं हि वर्णितं भूरि त्वया सीतापतेर्मुहुः ॥ २ ॥ गुर्वर्थे त्यक्तराज्यो व्यचरदनुवनं पद्मपद्भ्यां प्रियायाः पाणिस्पर्शाक्षमाभ्यां मृजितपथरुजो यो हरींद्रानुजाभ्याम् ॥ वैरूप्याच्छूर्पणख्याः प्रियविरहरुषारोपि तभ्रूविजृंभत्रस्ताब्धिर्बद्धसेतुः खलदवदहनः कोशलेंद्रोऽवतान्नः ॥ ४ ॥

ऋषिभिर्वाल्मीकिमुख्यैर्भूरि वर्णितं त्वया मुहुः श्रुतं तथापि संक्षेपतः कथ्यमानं शृणु ॥ ३ ॥ "ग्रंथकोटिभिराकीर्णमद्भुतं रामविक्रमम् ॥ अध्यायद्वयतो वक्ष्यन्नेकश्लोके

स्वरूप एवावतीर्णो न त्वंशत इति ध्येयम् । ('एते चांशकलाः पुंसः' इत्यत्र चकारश्श्रीरामसमुच्चयार्थक एवान्यथा 'ते ह्यंशकलाः पुंसः' इत्थमेव वदेदिति भावः) । "रमंते योगिनोऽनंतनित्यानंदे चिदात्मनि । इति राम पदेनासौ परब्रह्माभिधीयते ॥" इत्यादिना रामतापनीयाथर्वशिरशि श्रीरामस्य साक्षाद्ब्रह्मतोक्तेः । अंशांशेन पायसरूपवैष्णवतेजोंशांशेनेत्यर्थः । तदुक्तं कालिदासेन "स तेजो वैष्णवं पत्न्योर्विभजे चरुसंज्ञितम् । द्यावा पृथिव्योः प्रत्यग्रमहर्पतिरिवातपम ॥ अर्चिता तस्य कौशल्या प्रिया केकयवंशजा । अतः संभावितां ताभ्यां सुमित्रामैच्छदीश्वरः ॥ ते बहुज्ञस्य चित्तज्ञे पत्न्यौ पत्युर्महीक्षितः । चरोरर्द्धार्द्धभागाभ्यां तामयोजयतामुभे ॥सा हि प्रणयवत्यासीत्सपत्न्योरपि"इति रघुवंशे । अत एव पाद्मे "युगं बभूवतुस्तत्र सुस्निग्धौ रामलक्ष्मणौ । तथा भरतशत्रुघ्नौ पायसांशव शात्स्वतः ॥"इत्युक्तम् । चरोरर्द्धार्द्धभागाभ्यां स्वलब्धांशसंबंध्यर्द्धार्द्धभागाभ्यामित्यर्थः । यद्वा– पायसांशेन स्वयं पायसांशांशेन भरतादिरूपमित्यर्थः । तदुक्तं वाल्मीकीये "कौशल्यायै नरपतिः पायसार्द्धं ददौ तदा । अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिपः ॥ कैकय्यै चावशिष्टार्द्धं ददौ पुत्रार्थकारणात् । प्रददौ चावशिष्टार्द्धं पायसस्यामृतोपमम् ॥ अनुचिंत्य सुमित्रायै पुनरेव महामतिः । एवं तासां ददौ राजा भार्याणां पायसं पृथक् ॥" इति बालकांडे । प्रथमोऽर्द्धशब्दः समविभागार्थकः । अर्द्धादर्द्धं तुरीयां शमित्यर्थः । अवशिष्टार्द्धमवशिष्टस्य तुरीयांशस्यार्द्धमष्टमांशमित्यर्थः । पुनरवशिष्टार्द्धमष्टमांशमित्यर्थः । अनुचिंत्येति । कैकेय्यपेक्षया ज्येष्ठत्वं कौशल्यापेक्षया कनिष्ठत्वं च सुमित्राया विचार्य पादोनार्द्धांशदानमिति भावः । सुरैः प्रार्थितश्चतुर्द्धा पुत्रत्वमगात् । तदुक्तम् । "राज्ञो दशरथस्य त्वमयोध्याधिपतेर्विभो । धर्मज्ञस्य वदान्यस्य महर्षिसमतेजसः॥ अस्य भार्यासु तिसृषु ह्रीश्रीकीर्त्युपमासु च । विष्णो पुत्रत्वमागच्छ कृत्वात्मानं चतुर्विधम् ॥" इति वाल्मीकीये । आत्मानं सोपकरणमात्मानमित्यर्थः । "अन्येद्युः पांचजन्यात्मा कैकेय्यां भरतोऽभवत् । तदन्येद्युः सुमित्रायामनंतात्मा च लक्ष्मणः । सुदर्शनात्मा शत्रुघ्नो द्वौ जातौ युगपत्प्रिये ॥" इति पाद्मोक्तेः । अत्रात्मानमित्युक्त्या शंखचक्रानंतानामपि भगवद्रूपतैव सूचिता । चातुर्विध्यविधानं रावणेंद्रजिल्लवणगंधर्वाणां चतुर्णां वधार्थमिति भावः । रामलक्ष्मणभरतशत्रुघ्ना इति संज्ञयेति । एकस्यैव संज्ञाभेदेप्यर्थैक्यादैक्यमेव । अरायीति राः बाहुलकात्कर्मणि विच् । राः गृहीता पत्नीत्वेन मा लक्ष्मीस्सीता येन स रामः । 'सीता साक्षात्स्वयं लक्ष्मीः' इत्युक्तेः । एवं रा आत्ता मारीचवधावसरे मा सीता रक्षणार्थं रामाज्ञया येन स रामो लक्ष्मणोपि राम एव । तथा रा आत्ता मा राज्यलक्ष्मीर्निक्षेपभूता येन स भरतोपि राम एव । तथा रा आत्ता मा शोभा लवणवधमथुरानिवेशजा येन स शत्रुघ्नोपि राम एव।यद्वा–रं रेफममंति प्राप्नुवन्तीति चत्वार एव रेफाढ्यनामत्वाद्रामा एव लक्ष्मणे लकारोऽपि रेफ एव रलयोरैक्यात् । तथा लक्ष्मीर्विद्यतेऽस्येति लक्ष्मणः श्रीरामोऽपि लक्ष्मण एव"लक्ष्म्या अच"।लक्ष्माणि युद्धपतितशस्त्रांकानि यद्वा–परममंगलश्रीरामसेवाबोधकहस्तरेखादीनि यस्य स लक्ष्मणः सौमित्रिः । तथा भरतोऽपि लक्ष्मीः सौभ्रात्रलक्षणा कीर्त्तिर्विद्यतेऽस्येति लक्ष्मण एव 'न भरतेन समो भ्राता' इति श्रीवाल्मीक्युक्तेः । तथा शत्रुघ्नोऽपि लक्ष्माणि राजचिह्नानि छत्रचामरादीनि संत्यस्येति लक्ष्मण इति लक्ष्मण एव 'शत्रुघ्नः श्वेतछत्राढ्यश्चामरांदोलितो ययौ' इति पाद्मोक्तेः । एवं भरेण राज्यभरेण ताम्यति ग्लायतीति भरतः । भरपूर्वात्ताम्यतेर्डः । वृत्तं चैतद्रामायणे स्पष्टम् । तथा भरात्तारयति भुवमिति । श्रीरामोऽपि भरत एव "यः पृथ्वीभरवारणाय दिविजैः संप्रार्थितः" इति ब्रह्मांडोक्तेः । तथा भरं भरणं तनोति वन्यमूलफलाद्यानयनेन श्रीसीतारामयोर्वनवास इति लक्ष्मणोऽपि भरत एव ॥ तथा भरं ज्येष्ठभ्रात्रनुरोधेन नानादुःखसहन भारं तनोति निजांग इति शत्रुघ्नोऽपि भरत एवेति । एवं शत्रुं लवणाख्यं हंतीति शत्रुघ्नः । स्तथा शत्रून् रावणप्रभृतीन्रागद्वेषादीन्वा हंतीति रामोऽपि शत्रुघ्न एव । तथा शत्रून् गंधर्वादीन्हंतीति भरतोऽपि शत्रुघ्न एव । एवं शत्रून्मे घनादादीनालस्यं वा हंति सदा श्रीरामसेवायां प्रवृत्तत्वाल्लक्ष्मणोऽपि शत्रुघ्न एवेति कृत्वा चतुर्णां नामार्थसाम्येनैक्यमेवेति तत्त्वम् ॥ २ ॥ तस्य चतुर्विधात्मनः श्रीरामस्य ॥ ३ ॥ आकीर्णं व्याप्तम् । वर्णितमिति यावत् ।

विश्वामित्राध्वरे येन मारीचाद्या निशाचराः ॥ पश्यतो लक्ष्मणस्यैव हता नैर्ऋतपुंगवाः ॥ ५ ॥ यो लोकवीरसमितौ धनुरैशमुग्रं सीतास्वयंवरगृहे त्रिशतोपनीतम् ॥ आदाय बालगजलील इवेक्षुयष्टिं सज्जीकृतं नृप विकृष्य बभंज मध्ये ॥ ६ ॥ जित्वानुरूपगुणशीलवयोंगरूपां सीताऽभिधां श्रियमुरस्यभिलब्धमानाम् ॥ मार्गे व्रजन्भृगुपतेर्व्यनयत्प्ररूढं दर्पं महीमकृत यस्त्रिरराजबीजाम् ॥ ७ ॥ यः सत्यपाशपरिवीतपितुर्निदेशं स्त्रैणस्य चापि शिरसा जगृहे सभार्यः ॥ राज्यं श्रियं प्रणयिनः सुहृदो निवासं त्यक्त्वा ययौ वनमसूनिव मुक्तसंगः ॥ ८ ॥

समस्यति ॥ " स कोशलेंद्रः श्रीरामो नोऽस्मानवतात्पातु । कथंभूतः । यो गुर्वर्थे पितुः सत्यस्य पालनार्थं त्यक्तराज्यः सन् । पद्मवदतिसुकुमाराभ्यां पद्भ्याम् । तदेवाह । प्रियायाः पाणिनाऽपि स्पर्शे नास्ति क्षमा ययोस्ताभ्यां प्रतिवनं व्यचरत् । हरींद्रो हनुमान्सुग्रीवो वाऽनुजो लक्ष्मणस्ताभ्यां मृजिताऽपनीता पथरुजा मार्गश्रमो यस्य । शूर्पणख्या वैरूप्यात्कर्णनासिकाच्छेदाद्धेतोः तया प्रलोभितेन रावणेनापहारात्प्रियेण कलत्रेण विरहस्तेन रुट् तयाऽऽरोपितयोर्भ्रुवोर्विजृंभेणैव त्रस्तोऽब्धिर्यस्मात् । ततस्तद्विज्ञापनेन बद्धः सेतुर्येन । ततः खला रावणादय एव दवो वनं तस्य दहनः ॥ ४ ॥ संक्षेपतो वर्णितं रामचरितमादित आरभ्य विस्तरेणाह । विश्वामित्राध्वर इत्यादिना यावदुत्तराध्यायसमाप्ति । पश्यत एव लक्ष्मणस्य । तमप्यनपेक्ष्यैव हता इत्यर्थः । यच्छब्दानां स कोशलेंद्रोवतादित्यनेनैवान्वयः ॥ ५ ॥ लोके ये वीरास्तेषां समितौ समाजे ऐशं त्रैयंबकं धनुरिक्षुयष्टिमिव लीलयैवादाय सज्जीकृतमारोपितं विकृष्य मध्ये बभंज । हे नृप । उग्रं कठिनं गारिष्ठम् । तदाह । वाहकानां त्रिभिः शतैरुपनीतम् । बालगजस्य लीलेव लीला यस्य सः ॥ ६ ॥ अनुरूपाणि स्वयोग्यानि गुणशीलादीनि यस्यास्तां सीतासंज्ञां पूर्वमुरस्यभिलब्धो मानो यया तां श्रियं जित्वा धनुर्भंगमहानादश्रवणक्षुभितस्य भृगुपतेर्दर्पं व्यनयदपनीतवान् । कथंभूतस्य । त्रिःसप्तकृत्वो राजबीजशून्यां महीं योऽकरोत्तस्य ॥ ७ ॥ इदानीं गुर्वर्थ इति श्लोकं

"चरितं रघुनाथस्य शतकोटिप्रविस्तरम् । एकैकमक्षरं पुंसां महापातकनाशनम्॥" इत्युक्तेः । समस्यति संक्षेपेण कथयति ( १ ) । सत्यस्य केकैयीदत्तवरदानद्वयस्य । तदेवातिसुकुमारत्वमेव । प्रियायाः सीतायाः । प्रतिवनं बहुवनम् । हरीणां वानराणामिंद्रः । परमसुखदः परमसुखदत्वेपींद्रपदं राज्ञ्येवोचितमिति चेदाह–सुग्रीवो वेति । शूर्पणख्याः सीताभक्षणप्रवृत्ताया रावणस्वसुः । तया शूर्पणख्या । प्रलोभितेन सीतासौंदर्यश्रावणोत्सादितदानयनलोभेन । कलत्रेण सीतारूपेण । विरहो वियोगः । रुट् रोषः । आरोपितयोरुन्नतां नीतयोर्भ्रुवोर्भ्रूदेशयोः । विजृंभेण प्रसरणेन । त्रस्तो भीतः ! तत अब्धिभीतेरनंतरम् । तद्विज्ञापनेनाब्धिप्रार्थनया । सेतुः आलिः । 'सेतुरालौ पुमान्स्त्रियाम्' इत्यमरः । ततः सेतुबंधोत्तरम् । 'दवदावौ वनानिलौ' इत्यमरः । दहनो वह्निः ॥ ४ ॥ इत्यर्थ इति । केवलस्यैव सर्वसमर्थत्वान्नान्यापेक्षा तस्यास्तीति भावः । येन रामेण ॥ ५ ॥ गरिष्ठमतिदुर्भरम् । तदेव गरिष्ठत्वमेव । वाहकानां नराणाम् । इक्षुयष्टिं रसालदंडम् । "इक्षुस्त्विच्छायुते ज्ञाते गुडादीनां च कारणे" इति निरुक्तिः ॥ ६ ॥ पूर्वं चिह्नरूपेणोरसि वक्षसि । भृगुपतेः पर्शुरामस्य । प्ररूढं प्रकृष्टम् ॥ ७ ॥ पूर्वोक्तं स्मारयति–इदानीमिति । परिवीतस्य परिवेष्टितस्य । पितुर्दशरथस्य । निवासमयोध्याम् । मुक्तसंग इति । "असंगो ह्ययं पुरुषः" इति श्रुत्यर्थमाह । असूनिति त्यागानर्हता

रक्षःस्वसुर्व्यकृत रूपमशुद्धबुद्धेस्तस्याः खरत्रिशिरदूषणमुख्यबंधून् ॥ जघ्ने चतुर्दशसहस्रमपारणीयकोदंडपाणिरटमान उवास कृच्छ्रम् ॥ ९ ॥
सीताकथाश्रवणदीपितहृच्छयेन सृष्टं विलोक्य नृपते दशकंधरेण ॥ जघ्नेऽद्भुतैणवपुषाऽऽश्रमतोऽपकृष्टो मारीचमाशु विशिखेन यथा कमुग्रः ॥ १० ॥
रक्षोधमेन वृकवद्विपिनेऽसमक्षं वैदेहराजदुहितर्यपयापितायाम् ॥ भ्रात्रा वने कृपणवत्प्रियया वियुक्तः स्त्रीसंगिनां गतिमिति प्रथयंश्चचार ॥ ११ ॥ दग्ध्वा
त्मकृत्यहतकृत्यमहन् कबंधं सख्यं विधाय कपिभिर्दयितागतिं तैः ॥ बुद्ध्वाथ वालिनि हते प्लवगेंद्रसैन्यैर्वेलामगात्स मनुजोऽजभवार्चितांघ्रिः ॥ १२ ॥

विवृण्वन्नाह । य इति । कदाचित्कैकेय्यास्तुष्टेन राज्ञा त्वदपेक्षितं दास्यामीति प्रतिश्रुतम् । ततः श्रीरामस्य युवराज्याभिषेकसमये तया भरतस्य राज्यं रामस्य च वने वासः प्रार्थितस्तदा सत्यपाशेन परिवीतस्य पितुर्निदेशमाज्ञां शिरसा जगृहे । ततो राज्यादिकं त्यक्त्वा सभार्यो वनं ययौ । दुस्त्यजस्यापि सहर्षत्यागे दृष्टांतः । मुक्तसंगो योगी असून्प्राणानिवेति ॥ ८ ॥ रक्षसो रावणस्य स्वसुः शूर्पणखाया अशुद्धबुद्धेः सीतां जिघृक्षोः कामातुराया इति वा रूपं व्यकृत विकारमनयत् । तस्याः । खरत्रिशिरदूषणमुख्या बंधवो येषु तांश्चतुर्दशसहस्रं जघान । अपारणीयमलंघ्यमसह्यं कोदंडं पाणौ यस्य सः ॥ ९ ॥ सीतायाः कथाश्रवणेन दीपितो हृच्छयो यस्य तेन सीतां हरिष्यता स्वस्माद्भीतेन स्वस्याश्रमादपकर्षणार्थं सृष्टं निसृष्टं मारीचं विलोक्य जघान । कथंभूतम् । अद्भुतैणवपुषा स्वर्णहरिणदेहेनोपलक्षितम् । अत एव प्रलोभनेनाश्रमतस्तेनापकृष्टः सन् कं दक्षं यथा उग्रः श्रीरुद्रः ॥ १० ॥ ततश्च रक्षोऽधमेन रावणेनासमक्षमपनीतायाम् । प्रियया वियुक्तो भ्रात्रा लक्ष्मणेन सह कृपणवद्वने चचार । किमभिप्रायः सन् इत्यनेन प्रकारेण स्त्रीसंगिनां दुःखोदर्कां गतिं प्रख्यापयन् ॥ ११ ॥ आत्मार्थेन कृत्येन कर्मणा रावणेन सह युद्धेन हतं कृत्यं शास्त्रीयं दहनादिकं यस्य तं जटायुषं पुत्र इव दग्ध्वा कबंधं स्वग्रहणाय प्रसारितबाहुं राक्षसमहन् । अथ वालिनि हते तैः कपिभिर्दयितायाः गतिं बुद्ध्वा अजभवाभ्यामर्चितावंघ्री यस्य स मनुजो वेलां समुद्रतीमाह ॥ ८ ॥ रक्षोधर्मत्वात्सीताग्रहणेनाशुद्धित्वं तद्बुद्धेरित्यत आह—कामातुराया वेति । व्यभिचारेच्छावती धीरशुद्धैवेत्यर्थः । विकारमंगन्यूनतापादनम् । स रामः । तस्याः शूर्पणख्याः । अटमानो वने विचरन् ॥ ९ ॥ कथा सौन्दर्यकथा तस्याः शूर्पणखामुखाच्छ्रवणेन । हृच्छयः कामः । स्वस्माद्रामात् । स्वस्य रामस्य । सर्वात्मत्वाद्रामे स्वशब्दः स्वामिचरणैः प्रयुक्त इति । सृष्टं मृगरूपतया रचितं प्रेरितम् "सृष्टं त्यक्ते प्रेरिते च कृत्रिमे वाच्यलिंगभाक्" इति निरुक्तिः । अत एव हेममृगदेहोपलक्षितत्वादेव । तेन मृगरूपमारीचेन । अपकृष्टो दूरं नीतः । 'उग्रः कपर्दी श्रीकंठः' इत्यमरः । कं ब्रह्माणं सरस्वत्यनुगतम् । यद्वा—उग्रः श्रीनृसिंहः अकं सर्वदुःखदं हिरण्यकशिपुं यथा । "उग्रो जज्ञे वीर्याय स्वधावान्" इति श्रुतेः ॥ १० ॥ ततश्च मारीचमरणोत्तरं च । वृकवद्व्याघ्रवत् स यथानवहितं गृह्णाति तथा । असमक्षम् अप्रत्यक्षम् । वैदेहराजदुहितरि सीतायाम् । अपनीतायां हृतायाम् । कृपणवत् दीनवत् । किमर्थमित्थं चचारेत्यनुयुनक्ति—किमिति । अत्रेति शब्दः प्रकर्षे । तं ग्रंथांतरसंमत्याह—"भोभो वृक्षाः पर्वतस्था गिरिगहनलतावायुना घूर्णमाना रामोऽहं व्याकुलात्मा दशरथतनयः शोकतोऽतीवदग्धः । बिंबोष्ठी चारुनेत्रा गजपतिगमना दीर्घकेशी सुमध्या हा सीता केन नीता मम हृदयगता क्वापि केनापि दृष्टा ॥" इत्याद्युक्तप्रकारेणेत्यर्थः । दुःखोदर्का दुःखपर्यवसानाम् ॥ ११ ॥ कबंधं वक्षोमुखम् । तैः

यद्रोषविभ्रमविवृत्तकटाक्षपातसंभ्रांतनक्रमकरो भयगीर्णघोषः ॥ सिंधुः शिरस्यर्हणं परिगृह्य रूपी पादारविंदमुपगम्य बभाष एतत् ॥१३॥ न त्वां वयं जडधियो नु विदाम भूमन् कूटस्थमादिपुरुषं जगतामधीशम् ॥ यत्सत्त्वतः सुरगणा रजसः प्रजेशा मन्योश्च भूतपतयः स भवान् गुणेशः ॥१४॥ कामं प्रयाहि जहि विश्रवसोऽवमेहं त्रैलोक्यरावणमवाप्नुहि वीरपत्नीम् ॥ बध्नीहि सेतुमिह ते यशसो वितत्यै गास्यंति दिग्विजयिनो यमुपेत्य भूपाः ॥ ॥ १५ ॥ बद्ध्वोदधौ रघुपतिर्विविधाद्रिकूटैः सेतुं कपींद्रकरकंपितभूरुहांगैः ॥ सुग्रीवनीलहनुमत्प्रमुखैरनीकैर्लंकां विभीषणदृशाऽविशदग्रदग्धाम् ॥ ॥१६॥ सा वानरेंद्रबलरुद्धविहारकोष्ठश्रीद्वारगोपुरसदोवलभीविटंका ॥ निर्भज्यमानधिषणध्वजहेमकुंभशृंगाटका गजकुलैर्ह्रदिनीव घूर्णा ॥१७॥ रक्षःपतिस्तदवलोक्य निकुंभकुंभधूम्राक्षदुर्मुखसुरांतनरांतकादीन् ॥ पुत्रं प्रहस्तमतिकायविकंपनादीन् सर्वानुगान्समहिनोदथ कुंभकर्णम् ॥ १८ ॥

रमगात ॥ १२ ॥ तत्र त्रिरात्रमुपवासेन प्रतीक्षितोऽपि सिंधुर्यदा नोपस्थितस्तदा यस्य रोषविभ्रमेण क्रोधलीलया विवृत्तो यः कटाक्षस्तस्य पातेन संभ्रांता नक्रा मकराश्च यस्मिन् । भयेन गीर्णो ग्रस्तः स्तंभितो घोषो येन स सिंधुरेतद्वक्ष्यमाणं बभाषे । अर्हणमर्घ्यादिकम् । रूपी मूर्तिमान् ॥ १३ ॥ भाषणमेवाह । न त्वामिति द्वाभ्याम् । एतावत्पर्यंतं नु निश्चितं त्वां न विदाम न जानीम इत्यर्थः। इदानीं तु ज्ञातोऽसीत्याह। यदिति पृथक् पदम् । यस्येत्यर्थः । यद्वशेभ्यः सत्त्वादिभ्यः सुरगणादयो भवंति स भवान् इति ॥ १४ ॥ कामं यथेच्छं जलमाक्रम्यापि प्रयाहि । अवमेहं पुरीषप्रायम् । त्रैलोक्यं रावयत्याक्रंदयतीति तथा तं जहि । हे वीर यद्यपि तव जलं प्रतिबंधकं न भवति तथापीह सेतुं बध्नीहि । तर्हि किमर्थम् । ते यशसो विस्ताराय । तदेवाह । यं सेतुमुपेत्य दुष्करं कर्मावेक्ष्य त्वद्यशो गास्यंति भूपास्तम् ॥ १५ ॥ तद्वाक्यमभिनंद्य यत्कृतं तदाह । बद्ध्वेति । विविधैरद्रीणां कूटैः शृंगैः । सेतुं बद्ध्वाऽग्रे सीतान्वेषणे हनुमतैव दग्धां लंकामाविशत् कथंभूतैः शृंगैः । कपींद्राणां करैः कंपितानि भूरुहाणामंगानि शाखादीनि येषु तैः । विभीषणस्य दृशा बुद्ध्या कैः सहाविशत् । सुग्रीवादयः प्रमुखा येषां तैरनीकैः ॥ १६ ॥ ततश्च सा लंका घूर्णा प्रचलिता बभूव । कथंभूता वानरेंद्राणां बलै रुद्धा विहारादयो यस्याम् । निर्भज्यमाना धिषणादयो यस्यां सा । तत्र विहारः क्रीडास्थानम् । कोष्ठं धान्यागारादि । श्रीः कोशः । द्वारं गृहादीनाम् । गोपुरं पुरद्वारम् । सदः सभा । वलभी प्रासादादिपुरोभागच्छादिनी । विटंकः कपोतपालिका । धिषणं वेदिकादि । शृंगाटकं चतुष्पथम् ॥१७॥ रक्षःपती रावणः । पुत्रमिंद्रजितं

संख्यस्थापितैः ॥ १२ ॥ तत्र वेयालायाम् । विवृतः प्रसृतः । संभ्रांता इतस्ततोनवस्थिताः । मूर्त्तिमान् करचरणाद्यवयवोपेतः ॥ १३ ॥ इत्यर्थ इति । आर्षत्वाद्गुणाभावो वर्तमानार्थता च लोट इति भावः । जडधियः ज्ञानपूर्वप्रवृत्तिशून्याः । कूटस्थं लयविक्षेपशून्यम् । मन्योस्तमोगुणाच्च कार्येण कारणग्रहात् । भूतपतयो ब्रह्मराक्षसादयः । परब्रह्मत्वेन ज्ञानाभावेपि । त्वदीक्षणवशादेव त्वां गुणनियंतारं यथा कथंचिज्जानीम इत्याह–स भवानिति ॥ १४ ॥ पुरीषप्रायं पुरीषसमम् । यथा पुरीषं देहनिर्गतं शुनामुपभोगाय भवति तथायमपि विश्रवसो देहान्निर्गतत्वेनावमेहस्थानीयस्त्वच्छरनिर्भिन्नदेहः शुनामशनाय भवत्वित्यत उक्तं विश्रवसोऽवमेहम् । परमेशस्य तव जलेशस्यैवाज्ञाकारित्वान्न तदधीनजलस्य प्रतिबंधकत्वमिति सेतुबंधने को लाभ इत्याक्षिपति–तर्हीति । तमेव यशोविस्तारमेव ॥१५॥ तद्वाक्यं समुद्रवाक्यम् । 'दृग्ज्ञानेक्षणचक्षुषी' इति कोशात् । प्रमुखा अग्रण्यः । 'अनीकं सैन्ययुद्धयोः' इति निरुक्तिः ॥ १६ ॥ ततः सैन्यप्रवेशात् । तत्र तेषु ॥ १७ ॥ तत् वानरेंद्रसेनाकृतं कर्म । प्रहस्तं सेनापतिम् । अथ निकुंभादिसर्वमरणानंतरम् ॥ १८ ॥

तां यातुधानपृतनामसिशूलचापप्रासर्ष्टिशक्तिशरतोमरखड्गदुर्गाम् ॥ सुग्रीवलक्ष्मणमरुत्सुतगंधमादनीलांगदर्क्षपनसादिभिरन्वितोऽगात् ॥ १९ ॥
तेऽनीकपा रघुपतेरभिपत्य सर्वे द्वंद्वं वरूथमिभपत्तिरथाश्वयोधैः ॥ जघ्नुर्द्रुमैर्गिरिगदेषुभिरंगदाद्याः सीताऽभिमर्शहतमंगलरावणेशान् ॥ २० ॥
रक्षःपतिः स्वबलनष्टिमवेक्ष्य रुष्ट आरुह्य यानकमथाभिससार रामम् ॥ स्वःस्यंदने द्युमति मातलिनोपनीते विभ्राजमानमहनन्निशितैः क्षुरप्रैः ॥ २१ ॥ रामस्तमाह पुरुषादपुरीष यन्नः कांताऽसमक्षमसताऽपहृता श्ववत्ते ॥ त्यक्तत्रपस्य फलमद्य जुगुप्सितस्य यच्छामि काल इव कर्तुरलंघ्यवीर्यः ॥ २२ ॥ एवं क्षिपन् धनुषि संधितमुत्ससर्ज बाणं स वज्रमिव तद्धृदयं बिभेद ॥ सोऽसृग् वमन् दशमुखैर्न्यपतद्विमानाद्धाहेति जल्पति जने सुकृतीव रिक्तः ॥ २३ ॥ ततो निष्क्रम्य लंकाया यातुधान्यः सहस्रशः ॥ मंदोदर्या समं तस्मिन् प्ररुदत्य उपाद्रवन् ॥ ॥ २४ ॥ स्वान्स्वान् बंधून् परिष्वज्य लक्ष्मणेषुभिरर्दितान् ॥ रुरुदुः सुस्वरं दीना घ्नंत्य आत्मानमात्मना ॥ २५ ॥

प्रहस्तादींश्च समहिनोत्प्रायुंक्त ॥ १८ ॥ असिशूलादिभिर्दुर्गमां तां यातुधानपृतनां सुग्रीवादिभिरान्वितः श्रीरामोऽभ्यगात् । मरुत्सुतो हनूमान् । ऋक्षो जांबवान् ॥ १९ ॥ ते रघुपतेरनीकपा अंगदाद्याः सर्वे रावणस्येभादिभिर्यद्वरूथं सैन्यं तत्र द्वंद्वं यथा भवति तथाऽभिपत्य संगम्य द्रुमादिभिर्जघ्नुः । कान्। सीताया आभिमर्शेन हतं मंगलं यस्य सः रावण ईशो येषां तान् ॥ २० ॥ स्वबलस्य नष्टिं नाशमवेक्ष्य रुष्टः क्रुद्धः सन्यानकं पुष्पकं विमानं रथं वाऽऽरुह्य श्रीराममभिससार । अथ तं स्वःस्यंदने स्वर्गस्थे इंद्रस्य रथे मातलिनेंद्रसारथिनोपनीते द्युमति दीप्तियुक्ते विभ्राजमानमहनदहन् ॥ २१ ॥ हे पुरुषादपुरीष राक्षसपुरीषप्राय । यद्यस्मादपहृता । श्ववत् श्वा यथाऽसमक्षं गृहं प्रविश्य किमपि हरति तद्वत् । तस्माज्जुगुप्सितस्य कर्मणः कर्तुस्तेऽद्य काल इवालंघ्यवीर्योऽहं फलं यच्छामि । अधर्मकर्तुः पुंसः कालो यथा यच्छतीति वा ॥ २२ ॥ रिक्तः क्षीणपुण्यः सुकृती विमानादिव । विमानात्पुष्पकान्न्यपतदिति वा ॥ २३ ॥ राक्षसस्त्रीणां विलापमाह तत इति पंचभिः । मंदं स्वल्पमुदरं यस्यास्तया रावणभार्यया सह ॥ २४ ॥ २५ ॥

प्रासः कुंतः । तोमरं लोहफालं काष्ठदंडम् ॥ १९ ॥ २० ॥ यानकमिह कप्रत्ययस्य स्वार्थिकत्वात्सामान्यदानमाहात आह—रथं वेति । अथ रामसंमुखागमनोत्तरम् । तं रामम् । विषमयुद्धं विलोक्येंद्रप्रेरितेन मातलिना । अहनत् अडत्रार्षः । क्षुरप्रैः ‘अर्द्धचंद्रः क्षुरप्रः स्यात्’ इत्यभिधानात् । अर्द्धचंद्राकारैर्बाणैः॥२१॥ ‘‘पुरीषमपकृष्टं स्याद्विष्टानिष्ट्यूतमप्युत’’ इति तर्थिः । पुरुषाद पुरीषप्रायपुरुषादाधमेत्यर्थः । असताऽप्रशस्तकर्मणा ॥२२॥ क्षिपन् धिक्कुर्वन् । स बाणः । तद्धृदयं रावणहृदयम् । स रावणः । दार्ष्टांतिक उपलब्धं दृष्टांतेन योज्यमिति न्यायादाह—पुष्पकादिति ॥ २३ ॥ ततो रावणपतनोत्तरम् । समं सह ॥ २४ ॥ अर्दितान् हिंसितान् ।

हा हताः स्म वयं नाथ लोकरावण रावण ॥ कं यायाच्छरणं लंका त्वद्विहीना परार्दिता ॥ २६ ॥ नैवं वेद महाभाग भवान् कामवशं गतः ॥ तेजोऽनुभावं सीताया येन नीतो दशामिमाम् ॥२७॥ कृतैषा विधवा लंका वयं च कुलनंदन ॥ देहः कृतोऽन्नं गृध्राणामात्मा नरकहेतवे ॥२८॥ श्रीशुक उवाच ॥ स्वानां विभीषणश्चक्रे कोशलेंद्रानुमोदितः ॥ पितृमेधविधानेन यदुक्तं सांपरायिकम् ॥२९॥ ततो ददर्श भगवानशोकवनिकाश्रमे ॥ क्षामां स्वविरहव्याधिं शिंशपामूलमास्थिताम् ॥ ३० ॥ रामः प्रियतमां भार्यां दीनां वीक्ष्यान्वकंपत ॥ आत्मसंदर्शनाह्लादविकसन्मुखपंकजाम् ॥ ३१ ॥ आरोप्यारुरुहे यानं भ्रातृभ्यां हनुमद्युतः ॥ विभीषणाय भगवान् दत्त्वा रक्षोगणेशताम् ॥ ३२ ॥ लंकामायुश्च कल्पांतं ययौ चीर्णव्रतः पुरीम् ॥ अवकीर्यमाणः कुसुमैर्लोकपालार्पितैः पथि ॥ ३३ ॥ उपगीयमानचरितः शतधृत्यादिभिर्मुदा ॥ गोमूत्रयावकं श्रुत्वा भ्रातरं वल्कलांबरम् ॥३४॥ महाकारुणिकोऽतप्यज्जटिलं स्थंडिलेशयम् ॥ ३५ ॥ भरतः प्राप्तमाकर्ण्य पौरामात्यपुरोहितैः ॥ पादुके शिरसि न्यस्य रामं प्रत्युद्यतोऽग्रजम् ॥ ३६ ॥ नंदिग्रामात् स्वशिबिराद्गीतवादित्रनिस्वनैः ॥ ब्रह्मघोषेण च मुहुः पठद्भिर्ब्रह्मवादिभिः ॥ ३७ ॥

परैरर्दिता पीडिता ॥ २६ ॥ २७ ॥ गृध्राणामन्नं भक्ष्यः । नरकहेतवे नरकभोगाय ॥ २८ ॥ सांपरायिकमौर्ध्वदेहिकम् ॥ २९ ॥ ३० ॥ आत्मगः स्वस्य संदर्शनेन य आह्लादस्तेन विकसन्मुखपंकजं यस्यास्ताम् ॥३१॥ यानं पुष्पकम् । भ्रातृभ्यां लक्ष्मणसुग्रीवाभ्याम् ॥ ३२ ॥ आयुश्च दत्त्वा तेनापि सहैव ययौ ॥ ३३॥ गोमूत्रपक्वयवान्न भोजिनं भ्रातरं भरतम् ॥ ३४ ॥ ३५ ॥ ३६ ॥ स्वशिबिराद्ग्रामं विनाऽयोध्यामप्रविशन् स्वस्य वासं यत्र निर्मितवांस्तस्मात्सकाशाद्गीतादिभिर्युक्तो रामं प्रत्युद्यतो

आत्मानमुदरम् । आत्मना करेण अवयवावयविनोरभेदोपचारात् । करेणेत्यकत्वं सामान्याभिप्रायम् । 'घ्नंत्यः कराभ्यामुर उच्चकैरपि' इत्यन्यत्रोक्तेः ॥ २५ ॥ अर्दिता पीडिता ॥ २६ ॥ येन सीतातेजोनुभावेन । तं न वेद ॥ २७ ॥ गृध्रप्राणरक्षणेन पुण्यं स्यादिति चेदाह—नरकेति । यद्यपि श्रीरामहतस्य "येये हताश्चक्रधरेण विष्णुना त्रैलोक्यनाथेन जनार्दनेन । तेते गता विष्णुपुरं नरेन्द्राः क्रोधोऽपि देवस्य वरेण तुल्यः ॥" इत्याद्युक्तेः "स्वर्गं प्रयांतु रिपवोऽपि हि शस्त्रपूताः" इत्युक्तेश्च रावणस्य नरको न संभावी तथापि व्यभिचारिणां तदवश्यंभावद्योतनायेयमुक्तिः । यद्वा—रामचंद्रहतस्यापि ते परदारप्रवृत्तत्वेन मोक्षो न भविष्यति किं तु नरक इव परिणामदुःखदो भोगिकुलजन्मैव भविष्यतीत्यर्थः ॥ २८ ॥ पितृमेधस्य पितृयागस्य वितानं विधानम् शवदाहादारभ्य सपिंडनांतं तेन । यदुक्तं श्रुतिस्मृतिभ्यां विहितम् । और्ध्वदेहिकं भाविदेहप्राप्यम् । "संपरायः परे लोके युद्धापत्त्यायतिष्वपि" इति कोशात् । कोशलेंद्रो रामः ॥ २९ ॥ ततः पितृमेधवितानोक्तरावणादिदाहानंतरम् । "क्रीडा यत्र वने स्त्रीभिरशोकवनिका तु सा" इति कोशात् । सैवाश्रमोऽशोकवनिकाश्रमस्तत्र । क्षामां कृशाम् । स्वस्य विरह एव व्याधिर्यस्यास्ताम् । शिंशपा स्निग्धपत्रो वृक्षविशेषः ॥ ३० ॥ ३१ ॥ ३२ ॥ कल्पांतं यावत्कल्पम् । "स कल्पो यत्र मनवश्चतुर्दश विशांपते" इत्युक्तेर्ब्रह्मैकदिनजीविनं चकारेत्यर्थः । चीर्णव्रतः पूर्णप्रतिज्ञातवनवाससंकल्पः । पुरीमयोध्याम् ॥ ३३ ॥ गोमूत्रयावकमस्ति भोज्यत्वेनास्येति मत्वर्थीयोच् । भ्रातरं भरतम् । स्थंडिलेशयं मृन्निर्मितवेदिकाशय्यम् ॥ ३४ ॥ पादुके चित्रकूटस्थरामानयनगतभरतप्रार्थितश्रीरामदत्तकाष्ठमयपादरक्षके ॥ ३५ ॥ नंदिग्रामोऽयोध्याप्रांतग्रामविशेषः ॥ ३६ ॥ स्वर्णकक्षाः स्वर्णसूत्रसंबद्धाः पताकाः ॥ ३७ ॥

स्वर्णकक्षपताकाभिर्हैमैश्चित्रध्वजै रथैः ॥ सदश्वै रुक्मसन्नाहैर्भटैः पुरटवर्मभिः ॥ ३८ ॥ श्रेणीभिर्वारमुख्याभिर्भृत्यैश्चैव पदानुगैः ॥ पारमेष्ठ्यान्यु पादाय पण्यान्युच्चावचानि च ॥ ३९ ॥ पादयोर्न्यपतत् प्रेम्णा प्रक्लिन्नहृदयेक्षणः ॥ पादुके न्यस्य पुरतः प्रांजलिर्बाष्पलोचनः ॥ ४० ॥ तमा श्लिष्य चिरं दोर्भ्यां स्नापयन्नेत्रजैर्जलैः ॥ रामो लक्ष्मणसीताभ्यां विप्रेभ्यो येऽर्हसत्तमाः ॥ तेभ्यः स्वयं नमश्चक्रे प्रजाभिश्च नमस्कृतः ॥ ४१ ॥ धुन्वंत उत्तरासंगान् पतिं वीक्ष्य चिरागतम् ॥ उत्तराः कोशला माल्यैः किरंतो ननृतुर्मुदा ॥ ४२ ॥ पादुके भरतोऽगृह्णाच्चामरव्यजनोत्तमे ॥ विभी षणः ससुग्रीवः श्वेतच्छत्रं मरुत्सुतः ॥ ४३ ॥ धनुर्निषंगाञ्शत्रुघ्नः सीता तीर्थकमंडलुम् ॥ अबिभ्रदंगदः खड्गं हैमं चर्मर्क्षराण् नृप ॥ ४४ ॥ पुष्पक स्थोऽन्वितः स्त्रीभिः स्तूयमानश्च बंदिभिः ॥ विरेजे भगवान् राजन् ग्रहैश्चंद्र इवोदितः ॥ ४५ ॥ भ्रातृभिर्नंदितः सोऽपि सोत्सवां प्राविशत् पुरीम् ॥ प्रविश्य राजा भवनं गुरुपत्नीः स्वमातरम् ॥ ४६ ॥ गुरून्वयस्यावरजान्पूजितः प्रत्यपूजयत् ॥ वैदेही लक्ष्मणश्चैव यथावत्समुपेयतुः ॥ ॥ ४७ ॥ पुत्रान्स्वमातरस्तास्तु प्राणांस्तन्व इवोत्थिताः ॥ आरोप्यांकेऽभिषिंचंत्यो बाष्पौघैर्विजहुः शुचः ॥ ४८ ॥ जटा निर्मुच्य विधिवत् कुलवृद्धैः समं गुरुः ॥ अभ्यषिंचद्यथैवेंद्रं चतुःसिंधुजलादिभिः ॥ ४९ ॥

ऽभिमुखं ययौ ब्रह्मघोषेण महता घोषेण पठद्भिः स्वर्णरसाक्ताः कक्षाः प्रांता यासां ताभिः पताकाभिः हैमैरिति चत्वारि रथविशेषणानि ॥ ३७ ॥ ३८ ॥ पारमे ष्ठ्यानि राजार्हाणि छत्रचामरादीनि ॥ ३९ ॥ प्रेम्णा प्रक्लिन्नं हृदयमीक्षणे च नेत्रे यस्य ॥ ४० ॥ नेत्रजैर्जलैः स्नापयन्नाश्लिष्य येऽर्हसत्तमाः कुलवृद्धास्तेभ्योऽपि नमनं चक्रे ॥ ४१ ॥ ४२ ॥ अयोध्याप्रवेशप्रकारमाह । पादुके इति सार्द्धैस्त्रिभिः ॥ ४३ ॥ धनुश्च निषंगौ च तान् । ऋक्षराट् जांबवान् ॥ ४४ ॥ ४५ ॥ गुरुपत्नीः कैकेय्याद्याः ॥ ४६ ॥ वयस्यानवरजांश्च । यथावदनुक्रमेण समुपेयतुः ॥ ४७ ॥ बाष्पौघैरभिषिंचंत्यः शुचः शोकान्विजहुः । शेषं स्पष्टम् ॥ ४८ ॥ ४९ ॥

रुक्मसन्नाहैः स्वर्णसूत्रसंबद्धकौशेयरज्जुबंधनैरश्वैः । पुरटवर्मभिः स्वर्णकवचैर्भटैः योद्धृभिः । पुरटं स्वर्णम् "पुरोगे पुरटः प्रोक्तः सुवर्णे प्राग्दिशि स्थिते" इति कोशात् । श्रेणीभिस्सजातीयशिल्पिसंघैः । "श्रेणी स्त्रीपुंसयोः पंक्तौ समानशिल्पिसंहतौ" इति मेदिनी ॥ ३८ ॥ ३९ ॥ तं भरतम् ॥ ४० ॥ ४१ ॥ उत्तरासंगमुत्तरीयवस्त्रम् । धुन्वंतः कंपयंतः । यद्वोत्तरासंगं कंठगृहीतवाद्यं हस्ताभ्यां वादयंतः "प्रावारमुत्तरासंगं वाद्यं यत्कंठलंबितम् । चर्मावनद्धं हस्ताभ्यां वाद्यते मर्दलादि तत् ॥" इति कोशात् ॥ ४२ ॥ ४३ ॥ तीर्थकमंडलुं तीर्थोदकसंभृतकरकाम् । ऋक्षराट् जांबवान् ॥ ४४ ॥ ४५ ॥ सोपि भरतोपि । रामो वा । श्रीरामे गते भरतोऽप्ययोध्यां नाविक्षदिति प्रसिद्धेः । स्वमातरं कौशल्याम् ॥ ४६ ॥ समुपेयतुः नमस्कारादि यथोचितं चक्रतुः ॥ ४७ ॥ गतान्प्राणानवाप्य तन्वः शरीराणि ॥ ४८ ॥ गुरुर्वशिष्ठः । निर्मुच्य

एवं कृतशिरःस्नानः सुवासाः स्रग्व्यलंकृतः ॥ स्वलंकृतैः सुवासोभिर्भ्रातृभिर्भार्यया बभौ ॥ ५० ॥ अग्रहीदासनं भ्रात्रा प्रणिपत्य प्रसादितः ॥ प्रजाः स्वधर्मनिरता वर्णाश्रमगुणान्विताः ॥ जुगोप पितृवद्रामो मेनिरे पितरं च तम् ॥ ५१ ॥ त्रेतायां वर्त्तमानायां कालः कृतसमोऽभवत् ॥ रामे राजनि धर्मज्ञे सर्वभूतसुखावहे ॥ ५२ ॥ वनानि नद्यो गिरयो वर्षाणि द्वीपसिंधवः ॥ सर्वे कामदुघा आसन् प्रजानां भरतर्षभ ॥ ॥ ५३ ॥ नाधिव्याधिजराग्लानिदुःखशोकभयक्लमाः ॥ मृत्युश्चानिच्छतां नासीद्रामे राजन्यधोक्षजे ॥ ५४ ॥ एकपत्नीव्रतधरो राजर्षिचरितः शुचिः ॥ स्वधर्मं गृहमेधीयं शिक्षयन् स्वयमाचरन् ॥ ५५ ॥ प्रेम्णानुवृत्त्या शीलेन प्रश्रयावनता सती ॥ धिया ह्रिया च भावज्ञा भर्तुः सीताऽहरन्मनः ॥ ५६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे श्रीरामचरिते दशमोऽध्यायः ॥ १० ॥ श्रीशुक उवाच ॥ भगवानात्मनात्मानं राम उत्तमकल्पकैः ॥ सर्वदेवमयं देवमीज आचार्यवान्मखैः ॥ १ ॥ होत्रेऽददाद्दिशं प्राचीं ब्रह्मणे दक्षिणां प्रभुः ॥ अध्वर्यवे प्रतीचीं च उदीचीं सामगाय सः ॥ २ ॥ आचार्याय ददौ शेषां यावती भूस्तदंतरा ॥ मन्यमान इदं कृत्स्नं ब्राह्मणोऽर्हति निःस्पृहः ॥ ३ ॥ इत्ययं तदलंकारवासोभ्यामवशेषितः ॥ तथा राज्ञ्यपि वैदेही सौमंगल्यावशेषिता ॥ ४ ॥ ते तु ब्रह्मण्यदेवस्य वात्सल्यं वीक्ष्य संस्तुतम् ॥ प्रीताः क्लिन्नधियस्तस्मै प्रत्यर्प्येदं बभाषिरे ॥ ५ ॥

॥ ५० ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४॥५५॥५६॥ इति नवमस्कंधे टीकायां दशमोऽध्यायः ॥ १० ॥ ततश्चैकादशेऽयोध्यामावसन्ननुजैः सह ॥ यज्ञादि यच्चकारेशो रामस्तदनुवर्ण्यते ॥ १ ॥ १ ॥ २ ॥ तदंतरा तासां दिशां मध्ये यावती भूस्तां ब्राह्मण एवार्हतीति मन्यमानः ॥ ३ ॥ अयं श्रीरामः । तत्तदा । सौमंगल्यमाभरणादिकं तावन्मात्रमवशेषितं तस्याः तद्व्यतिरिक्तं हिरण्यादि सर्वं ददावित्यर्थः ॥ ४ ॥ ५ ॥

मोचयित्वा । आदिना तीर्थांतरांबुग्रहः ॥ ४९ ॥ ५० ॥ भ्रात्रा भरतेन ॥ ५१ ॥ कृतसमः सत्ययुगतुल्यः ॥ ५२ ॥ ५३ ॥ ग्लानिर्मालिन्यम् । क्लमः श्रमः ॥ ५४ ॥ राजर्षीणां मन्वादीनां चरितमिव चरितं यस्य स तथा ॥ ५५ ॥ अनुवृत्त्या शुश्रूषया । शीलेनानुकूलाचरणेन । प्रश्रयेण विनयेनावनता नम्रा । धिया सद्बुध्या । ह्रियाऽसत्कृत्यलज्जया ॥ ५६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे दशमोऽध्यायः ॥ १० ॥ तत् यज्ञादि ( १ ) । उत्तमाः कल्पकाः सामग्र्यो येषु तैः । आचार्यवान् इत्यनेन गुरुकुलवासित्वं शिक्षितत्वं च सूचयति । "आचार्यवान्पुरुषो वेद" इति श्रुतेः ॥ १ ॥ स रामः ॥ २ ॥ ३ ॥ सौमंगल्यं सुमंगलतापादकं । हारवलयादि । इत्यर्थ इति । स्वपरिहितालंकारवस्त्रादीनामुच्छिष्टत्वेन दातुमयोग्यत्वात्तदितरत्सर्वधनं ब्राह्मणेभ्यो ददाविति भावः ॥ ४ ॥ ननु "दत्त्वा दानं द्विजाग्र्याय पुनर्गृह्णाति योऽधमः । स सर्वयातनां भुक्त्वा तैर्यक्त्वं याति चानिशम् ॥" इति स्मृतेः । श्रीरामेण कथं भूर्गृहीतेति चेन्न गां दत्त्वा विप्रेभ्यस्ततो जगृहे इति कथमेतदवगतमिति चेदेतच्छ्लोकव्याख्यानादित्याह–तथाहि । ब्रह्मणि

अप्रत्तं नस्त्वया किंतु भगवन् भुवनेश्वर ॥ यन्नोंतर्हृदयं विश्य तमो हंसि स्वरोचिषा ॥६॥ नमो ब्रह्मण्यदेवाय रामायाकुंठमेधसे ॥ उत्तमश्लो कधुर्याय न्यस्तदंडार्पितांघ्रये ॥ ७ ॥ कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ॥ चरन् वाचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित् ॥८॥ नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ॥ स्त्रीलोभी बिभृयात् सीतां रामो नाहं भजे पुनः ॥९॥ इति लोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥ पत्या भीतेन सा त्यक्ता प्राप्ता प्रचेतसाश्रमम् ॥ १० ॥ अंतर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ॥ कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥११॥ अंगदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ॥ तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ १२ ॥ सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ॥ गंधर्वान् कोटिशो जघ्ने भरतो विजये दिशाम् ॥१३॥ तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ॥ शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ॥ हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ॥१४॥ मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता ॥ ध्यायंती रामचरणौ विवरं प्रविवेश ह ॥ १५ ॥ तच्छ्रुत्वा भगवान् रामो रुंधन्नपि धिया शुचः ॥ स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥ १६ ॥

किमप्रत्तं किमदत्तं सर्वं दत्तमित्यर्थः । विश्य प्रविश्य ॥६॥ न्यस्तदंडैर्मुनिभिरर्पितौ चित्ते न्यस्तावंघ्री यस्य तस्मै । तेष्वर्पितावंघ्री येनेति वा ॥७॥८॥९॥ असंविदोऽज्ञात् । प्राचेतसो वाल्मीकिस्तस्याश्रमं प्राप्ता ॥ १० ॥ अंतर्वत्नी गर्भिणी । क्रिया जातकर्माद्याः ॥११॥१२॥१३॥१४॥१५॥ ईश्वरोऽपि शुचो रोद्धुं नाशक्नोत् ॥१६॥

ब्राह्मणे साधुर्ब्रह्मण्यः स चासौ देवश्चेति तस्य । ब्राह्मणदेवस्येति पाठः प्रचुरः स च स्पष्टार्थ एव । संस्तुतं चरितं समस्तभूदानलक्षणं वीक्ष्य प्रीताः । वत्साय लाति ददाति पयस्तमाददाति स्नेहाद्वेति वत्सला सैव वात्सल्यं स्वार्थिको ष्यञ् । धेनुरूप द्रव्यं त्वं प्रत्यर्प्य अस्मभ्यं देहि भूप्रतिनिधित्वेनेदं वाक्यं बभाषिरे । ‘अर्प—अतिसर्जने’ दैवादिकः । “एकत्र पृथिवी सर्वा सशैलवनकानना । तस्या गौर्ज्यायसी प्रोक्ता” इति पराशरोक्तेः । यद्वा—विप्रैर्भगवतः स्वरूपज्ञानमादाय गुरुदक्षिणात्वेन पुनः स्वस्य तत्पालनेऽयोग्यतां च मत्वा ददे । यद्वा—प्रीतिदानं न दोषायेति वाल्मीकीयोत्तरकांडेऽगस्त्योक्तेः । ‘प्रीताः प्रत्यर्पयामासुः’ इति भावः ॥ ५ ॥ भगवत्त्वं भुवनेश्वरत्वं च तवैव क्षत्रियत्वाद्योग्यमिति संबुद्धिद्वयतात्पर्यम् । यद्यतः । अंतश्चित्ते । स्वरोचिषा निजज्ञानप्रकाशेन । तमोऽज्ञानलक्षणम् । अतः सर्वं दत्तमिति भावः ॥ ६ ॥ त्वमस्मभ्यमनश्वरं वनं दत्तवान्वयं तत्प्रतिकर्त्तुमसमर्थाः संतः केवलं नमनमेव कुर्म इत्याशयेनाहुः—नम इति । ननु न्यस्तदंडानां निष्कामत्वात्तदंघ्रिध्यानं किमर्थमित्याक्षेपनिवृत्त्या आह—तेषु न्यस्तदंडेषु । अर्पितौ समर्पितावंघ्री ज्ञानवैराग्यलक्षणे मती येनेति वा ॥ ७ ॥ कस्यचित्पुंसः रजकस्येति जैमिनीये ॥ ८ ॥ असतीमसाध्वीं तदेवाह—परवेश्मगामिति “ नित्यं स्वं वेश्म संत्यज्य परगेहं प्रयाति या । सा नारी सर्वथा त्याज्या प्रत्यब्दं पुत्रसूरपि ॥” इत्यादिपुराणात् ॥ ९ ॥ दुराराध्यात् ‘कः सर्वमाराधयितुं समर्थः ’ इत्युक्तेः । पत्या श्रीरामेण भीतेन लोकापवादादिति शेषः । ‘मृत्युश्च को वाऽपयशः स्वकीयम्’ इति शुकोक्तेः । स्वयं स्वापवादश्रवणं जीवन्मृतत्वापादकं तन्निवृत्तये सा सीता त्यक्तेति ॥ १० ॥ कुशलवनाम्नोरन्वर्थता च वाल्मीकीयोत्तरकांडे “कुशमुष्टिमुपादाय लवं चैव तु स द्विजः । वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् ॥ कुशानामग्रभागस्तु कुशमुष्टिरिहोच्यते । अधोभागः कुशानां तु लवः प्रोक्तो मनीषिभिः ॥ कुशमुष्ट्या मार्जितो यः स कुशः प्रोक्त आख्यया । लवेन मार्जितो यो वै स लवः परिकीर्त्तितः ॥ ” इति । तयोः कुशलवयोः । ॥ ११ ॥ १२ ॥ १३ ॥ तदीयं गंधर्वीयम् । राज्ञे श्रीरामाय ॥ १४ ॥ विवासिता त्यक्ता विवरं भूबिलम् ॥ १५ ॥ तत् सीताया बिलप्रवेशनम् । वाल्मीकीये तु रामसंमुखमेव नानानीतविमानमारुह्य पृथ्व्या गृहीता

स्त्रीपुंप्रसंग एतादृक् सर्वत्र त्रासमावहः ॥ अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः॥१७॥तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः॥त्रयोदशाब्दसाहस्रमग्निहोत्रमखंडितम् ॥ १८ ॥ स्मरतां हृदि विन्यस्य विद्धं दंडककंटकैः ॥ स्वपादपल्लवं राम अत्मज्योतिरगात्ततः ॥ १९ ॥ नेदं यशो रघुपतेः सुरयाच्ञयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः ॥ रक्षोवधो जलधिबंधनमस्त्रपूगैः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥

न चातिचित्रमेतत् स्त्रीपुंसोः प्रसंगश्चासक्तिः । त्रासमावहतीति तथा विभक्तेरलुगार्षः।पाठांतरं सुगमम् । किमुतेति प्रासंगिकोक्तिः ॥ १७ ॥ अग्निहोत्रमजुहोत् प्रभुः रामः ॥ १८ ॥ आत्मज्योतिर्निजं धाम॥१९॥जलधिबंधनमस्त्रपूगैश्च रक्षसां वध इतीदं कविभिराश्चर्यमिव वर्णितमपि यशः स्तुतिर्न भवति।तत्र हेतुः । अधिकसाम्याभ्यां

पातालं जगामेति तत्कल्पांतराभिप्रायम् । शुचोऽश्रूणि । तस्याः सीतायाः । तांस्तान् सौशील्यप्रश्रयादीन् ॥ १६ ॥ एतादृक् वियोगे क्लेशकर एव । पाठांतरम् 'सर्वत्रैव भयावहः' इत्येवंरूपम् । भयं शोकमोहादि ॥ १७ ॥ ततः सीताभूविवेशानंतरम् । पूर्वं कथित्खंडितमिति न ध्येयं किन्तु ततः पूर्वमपि तथा ब्रह्मचर्यमित्यस्याप्यूर्ध्वरेतस्त्वं नार्थः किन्तु ब्रह्मणा लक्ष्म्या सीतया सह चर्यं चरणं वर्तनं बाहुलकाद्भावे यत् । धारयन्कुर्वन्नेव 'मम योनिर्महद्ब्रह्म' इति वचनात् । अन्यथा त्रयोदशाब्दसाहस्रमित्युक्तिरयुक्ता स्यात् । सर्वात्मना राज्यकरणस्य तावन्मात्रत्वात् । नाक्षत्रमासस्य सप्तविंशतिदिनात्मकस्य गणनयात्र गणना त्रयोदशाब्दसहस्राणाम् । यद्वाऽग्निर्हूयतेऽत्रेत्यग्निहोत्रं भूमंडलम् । अखंडितं ब्रह्मलोकसमं तल्लोकसममर्यादम् । त्रयोदशाब्दसाहस्रं धारयन् ब्रह्मचर्यं सीतासाहचर्यमजुहोत् स्वीचकार । ब्रह्मलोकस्याखंडितत्वं वेदानां तत्र मूर्तिमत्त्वश्रुतेः । जुहोतेः स्वीकारार्थस्तु 'हु–दानाऽदनयोः ' अत्र आदाने चेत्येके इत्युक्तेः । "नक्षत्रमासगणितं त्रयोदशसहस्रकम् । ब्रह्मलोकसमं चक्रे समस्तं क्षितिमंडलम् ॥" इति तीर्थः । मम त्वित्थं प्रतिभाति–ननु पृथव्यर्थितब्रह्मादिप्रार्थनानंतरं श्रीवाल्मीकीये "दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम् ॥" इति श्रीभगवतैव प्रतिश्रुतं तत्कथं त्रयोदशाब्दसाहस्रमिति तत्राह–तत्रापि पृथिवीपालन एवैतत्काल प्रतिज्ञा श्रूयते तेन तदनंतरमग्निहोत्रादिकरणं समंजसमेव । "आयुवर्षाणि लक्षं स्युः कृते नॄणां महात्मनाम् । त्रेतायामयुतं तच्च सहस्रं द्वापरे ततः । कलौ शतं पापवशात्तस्यापि ह्यनवस्थितिः ॥"इति पुराणांतरोक्तिविरोधपरिहारस्तु "तपसा दानधर्मेण योगाभ्यासेन वर्द्धते । आयुर्द्धनं सुखं चेह चिकित्सा नेह विद्यते ॥" इत्युक्तेर्ध्येयः । तथा च "अग्निहोत्रं परो धर्मो न तस्माद्विद्यते परम्" इत्युक्तेस्तस्मिन्नायुर्वर्द्धनं न चित्रमन्यथा "षष्टिवर्षसहस्राणि जातस्य मम कौशिक " इति विश्वामित्रं प्रति दशरथोक्तिः कथं संगच्छेतेति । यच्च "शतायुर्वै पुरुषः " इति श्रुतौ शतपदं तदानंत्यमाह प्रतिपादितं चैतन्नीलकंठेन श्रीमहाभारते । "आनंत्यार्थाः स्मृताः सर्वे प्रायश्शब्दाः शतादयः । इतिहासपुराणेषु वाच्यार्थं ब्रुवते क्वचित् ॥" इत्युक्तेः । श्रौतं शतपदं कृतादित्रिष्वानंत्यपरं कलौ वाच्यार्थपरमिति न किंचिदसमंजसम् । यद्वा–त्रयोदशभिः सहितमब्दसाहस्रं त्रयोदशाब्दसाहस्रं तथा च त्रयोदशाब्दन्यूनायुताब्दपर्यंतं राज्यं कृत्वा त्रयोदशाधिकसहस्राब्दं यावदग्निहोत्रं चकार तेन "दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके" इति प्राचेतसोक्तिः "दशवर्षसहस्राणि रामो राज्यमचीकरत्" इति पुराणांतरोक्तिश्च समंजसा भवेदिति । यद्वा–त्रयेण प्रभावोत्साहमंत्ररूपेण शक्तित्रयेणोदश्नाति भुंक्ते राज्यमिति त्रयोदशो नृपस्तत्संबुद्धौ । तथा अब्दसहस्रमग्निहोत्रमजुहोत् । अखंडितं ब्रह्मचर्यं धारयन्नित्यन्वयः ॥ १८ ॥ विन्यस्य विधिवन्निधाय । आत्मना स्वयमेव ज्योतिःप्रकाशो यत्र तद्वैकुंठम् "यद्भ्राजमानं स्वरुचैव सर्वतः " इत्युक्तेः । ब्रह्माख्यं स्वरूपं वा "न तत्र सूर्यो भाति" इत्यादिश्रुतेः॥१९॥ स्तुतिराधिक्यं न । तत्र आधिक्याभावे । अधिकसाम्येत्यत्राधिकेति भावप्रधानो निर्देशः । आधिक्यसाम्याभ्यामित्यर्थः । अधिकसाम्यविमुक्तत्वं तु श्रीमहादेवस्यापि ध्येयत्वत्ताद्युक्तं तेनैव पाद्मे "रामरामेतिरामेति रमेरामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ १ ॥" अस्यार्थस्तु–रमा लक्ष्मीस्तस्या ईरणमीः कंपनम् 'ईर–गतौ कंपने च ' इति धातोर्भावे क्विप् । यया सा रमेः रूपसंपत्तिस्तया रमेराऽर्थाद्रूपसंपत्त्या मनोरमे

यस्याऽमलं नृपसदस्सु यशोऽधुनापि गायंत्यघघ्नमृषयो दिगिभेंद्रपट्टम्॥तं नाकपालवसुपालकिरीटजुष्टपादांबुजं रघुपतिं शरणं प्रपद्ये॥२१॥यैः संस्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा॥कोशलास्ते ययुः स्थानं यत्र गच्छंति योगिनः॥२२॥पुरुषो रामचरितं श्रवणैरुपधारयन्॥आनृशंस्य परो राजन्कर्मबंधैर्विमुच्यते॥२३॥राजोवाच ॥ कथं स भगवान्रामो भ्रातॄन्वा स्वयमात्मनः॥ तस्मिन्वा तेऽन्ववर्तंत प्रजाः पौराश्च ईश्वरे॥२४॥

विमुक्तं धाम प्रभावो यस्य तस्य किं कपयः सहायाः अतः सुग्रीवाद्याश्रयणं यथा लीलामात्रं तथैवेदमपि । युक्तं चैतदित्याह । सुराणां याच्ञयाऽऽत्ता स्वीकृता लीलार्था तनुर्येन तस्य॥२०॥एवंविधलीलाप्रयोजनं दर्शयन्प्रणमति । यस्य यशो नृपाणां युधिष्ठिरादीनां सदस्सु ऋषयो मार्कंडेयादयो गायंति । दिगिभेंद्राणां पट्टवदाभरणरूपम् । तत्पर्यंतं व्याप्तमित्यर्थः । नाकपाला देवाः वसुपाला वसुधापालाश्च तेषां किरीटैर्जुष्टं पादांबुजं यस्य तं रघुपतिम् । पाठांतरे तत्तस्य रघुपतेर्नाकपालादिभिर्जुष्टं पादांबुजं प्रपद्य इत्यर्थः ॥ २१ ॥ स रामः । संविष्ट उपवेशितोऽनुगतो वा यैस्ते कोशलदेशवासिनः सर्वेऽपि यत्र योगिनो गच्छंति तत्स्थानं ययुः ॥ २२ ॥ आनृशंस्यपर उपशमनिष्ठः सन्विमुच्यते ॥२३॥ स रामः स्वयं कथमवर्तत भ्रातॄन्प्रति वा कथमवर्तत । कथंभूतान् आत्मनः आत्मांशभूतान् । तस्मिन्वा ईश्वरे ते भ्रात्रादयोऽनु अनंतरं कथमवर्तंतेति प्रश्नत्रयम् ॥ २४ ॥

सुंदरि संबुद्धिरियं पार्वतीं प्रति शिवस्य । वरानने सुमुखे रामनामास्ति मुखसौष्ठवं रामनाम्नैव नान्यथेति भावः । तदुक्तम् "मथुरार्णविलोमेन मध्यमं नो यदक्षरम् । यो न स्मरति तच्छिष्टं यन्मध्यं तच्च तन्मुखे॥" इति शिष्टैः यद्वा—मे वरानने इति योज्यं किंभूतं रामनाम रामस्य दाशरथे रामा सीता तस्या इतिर्गमनं यत्र तद्रामरामेति लंकापुरं रामरामेतितिनि रामो रमणं यस्य स रामरामेतिरामो रावणस्तस्येतिः समाप्तिर्येन तद्रामरामेतिरामेतिसंज्ञासंज्ञिनोरभेदोपचारो हि सूर्यादिशब्दवत् । मीमांसकैर्मंत्रस्यैव देवताविग्रहत्वेन स्वीकृतत्वात् पुनः किंभूतं सहस्रैरनंतैर्नम्यत उच्चार्य्यत इति सहस्रनाम 'णम—प्रह्वत्वे शब्दे च' इत्यन्प्रत्ययः । यद्वा—'म्ना—अभ्यासे' इतो मन् । पुनः किंभूतं तेन ब्रह्मणा तुल्यं तत्तुल्यम् " तदिति ब्रह्मणो नाम " इति श्रुतेः । यथा ब्रह्माभ्यासान्मोक्षस्तथा रामनामतोऽपीति भावः । यदुक्तमभियुक्तैः "यन्नामसंसर्गवशाद्व्रणों नष्टस्वरोऽप्यूर्द्ध्वगतिं प्रयाति । तन्नामपादं हृदि संनिधाय देही कथं नोर्द्ध्वगतिं प्रयायात् ॥" इति । अपरोऽप्यर्थोऽस्यास्ति तथा हि—हे वराननेऽहं रामे श्रीदाशरथावतिरमेऽतिशयेन तं सेवे । किंभूते रामेऽतिक्रांतो रामो जामदग्न्यो येन सोऽतिरामस्तस्मिन्नतिरामे पुनर्मनोरमेऽतिसुंदरे संबुद्धिर्वयम् । किंभूतोऽहं रामो रा धनं यस्य स रामराः । किं च मे यत्सहस्रनाम तत्तुल्यं रामनाम मत्तदोर्नित्यसंबंधात् । यन्मे नामसहस्रोच्चारणफलं तत्सकृद्रामनामोच्चारणेन भवतीति भावः । अत्र छेदस्तु— "रामराऽमेतिरामेऽतिरमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥" इति । किं सहाया अपि तु न । यतो न सहायाः अतो हेतोः । इदमपि जलधिबंधनाद्यपि । लीलामात्रास्वीकारे वालिभयार्दितसुग्रीवस्य निजकार्यं कर्त्तुमशक्तस्य किं परकार्यसहायकत्वं स्यादिति ध्येयमत्र ॥ २० ॥ यस्य श्रीरामस्य । वसुपाला इत्यत्र धालोप आर्षः । वसुधारकत्वेन वसुपदं वा वसुधां लक्षयति तेन राजान इत्यर्थः । तीर्थस्तु वसुपालाः कुबेराद इत्याह । मूलपाठे तमिति छेदः । पाठांतरे 'पादांबुजं रघुपतेः' इति पाठे तदिति छेदः । इत्यर्थ इति । तत्पदं षष्ठ्या विपरिणमनीयमिति भावः ॥ २१ ॥ स यैरिति पाठः प्रचुरः । स्पृष्टो नमनादिना । कोशला अयोध्यावासिनः । योगिनो भक्तिज्ञानयोगसिद्धाः । ततः वैकुंठापरपर्यायं सांतानिकमिति प्राचेतसः ॥ २२ ॥ आसमंतान्नृशंस्यं क्रौर्यं तत्परो वानेन "रामोरामोराम इति सर्वेषामभवत्तदा । सर्वो राममयो लोको यदा रामोऽभवन्नृपः ॥" इति वाक्यमसूचि । तथा च पुरुषमात्रस्य श्रवणमात्रेणापि नाम्ना कर्मबंधविमोक्षोऽभूदिति भावः ॥ २३ ॥ कथं केन योगेन भ्रात्रादिषु रामो रमयितृत्वेनौरसवत् ।

श्रीशुक उवाच ॥अथादिशद्दिग्विजये भ्रातॄंस्त्रिभुवनेश्वरः॥ आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः॥२५॥आसिक्तमार्गां गंधोदैः करिणां मदसीकरैः॥ स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥ २६ ॥ प्रासादगोपुरसभाचैत्यदेवगृहादिषु ॥ विन्यस्तहेमकलशैः पताकाभिश्च मंडिताम्॥२७॥पूगैः सवृन्दै रंभाभिः पट्टिकाभिः सुवाससाम् ॥ आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २८॥ तमुपेयुस्तत्रतत्र पौरा अर्हणपाणयः ॥ आशिषो युयुजुर्देव पाहि मां प्राक् त्वयोद्धृताम्॥२९॥ततः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः ॥ आरुह्य हर्म्याण्यरविंदलोचनमतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥ अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ॥ अनन्ताखिलकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥ विद्रुमोदुंबरद्वारैर्वैडूर्यस्तंभपंक्तिभिः ॥ स्थलैर्मारकतैः स्वच्छैर्भातं स्फटिकभित्तिभिः ॥३२॥ चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः ॥ मुक्ताफलैश्चिदुल्लासैः कांतकामोपपत्तिभिः ॥ ३३ ॥

तत्र श्रीरामस्य भ्रात्रादिषु प्रवृत्तिप्रकारमाह । अथेति अनेनैव भ्रातॄणामपि तदाज्ञाऽनुसारितया प्रवृत्तिरुक्ता।अथ सिंहासनस्वीकारानंतरम् ॥२५॥पुरीं वर्णयति त्रिभिः । गंधोदकैर्मदबिंदुभिश्चासिक्ता मार्गा यस्याम् । सुतरां मत्तामिव समृद्धाम् । वा इति वितर्के । पाठांतरे वासितगां वासितां कामोन्मत्तां गामिवेत्यर्थः ॥२६॥२७॥२८॥ पौराणां तस्मिन्वृत्तिमाह । तमुपेयुरिति वराहरूपेण त्वयोद्धृतामिमां पृथ्वीं पाहीति॥२९॥प्रजानां तस्मिन्वृत्तिमाह।ततः प्रजा इति॥३०॥स्वयं कथमवर्ततेत्यस्योत्तरमाह । अथेति यावत्समाप्ति । स्वगृहं प्रविष्टः संस्तस्मिन् रेम इति पंचमेनान्वयः । गृहं वर्णयति।सार्द्धैस्त्रिभिः।अनंता येऽखिलानां रत्नादीनां कोशास्तैराढ्यम् ।अनर्घ्याः उरवः परिच्छदा यस्मिन्॥३१॥विद्रुममया उदुंबरा देहल्यो येषु तैर्द्वारैः । स्वच्छैः स्थलैः।तृतीयांतानां मंडितमिति तृतीयेनान्वयः ॥ ३२ ॥ वाससां मणिगणानां चांशुकैर्दीप्तिभिः । चित् चैतन्यं तद्वदुल्लासैरुज्ज्वलैः । यद्वा चिदिति क्वचित् वैडूर्यस्तंभादिषु यथाशोभमुज्ज्वलैर्मुक्ताफलैर्मंडितमित्यर्थः।कांताः कमनीयाः कामोपपत्तयो भोगसाध

यथौरसः स्वदेहोत्पन्नः पितरं रमयति तद्वदिति तीर्थः ॥ २४ ॥ तत्र त्रिषु प्रश्नेषु ॥ २५ ॥ आदिना प्रजादिग्रहः । अथ राज्यप्राप्तेरनंतरम् । अनेन दिग्विजयाज्ञापनेन अनुवर्तिनं प्रत्येवाज्ञा दीयते न त्वननुवर्तिनमिति । स्वानां प्रजादीनाम् । पाठांतरे 'वासितगाम्' इति पाठे । इत्यर्थ इति व्याख्या ॥ २६ ॥ चैत्यं पाषाणादिबद्धं वृक्षमूलस्थलं बुद्धशालास्थलं वा । आदिना प्रजागृहादिग्रहः ॥ २७ ॥ संवृतैः क्रमुकफलगुच्छैः । सवृन्दैः 'सुवृंदैः' इति पाठेऽप्ययमेवार्थः रंभाभिः कदलीस्तम्भैः । सुवाससां बहुमूल्यवस्त्राणाम् । पट्टिका अल्पध्वजाः । यत्र कुत्र न्यस्तैरादर्शैर्दर्पणैः । स्रग्भिर्मालाभिः । वस्त्रैरापणमार्गस्तृतैः । एभिस्सह कृतकौतुकानि विरचितमंगलानि च तोरणानि गृहाग्रभागाणि यस्यां ताम् । "गृहाणामग्रभागेऽपि तोरणं पल्लवस्रजि" इति धरणिः ॥ २८ ॥ तस्मिन्ग्रामे । तं श्रीरामम् तत्रतत्र स्थले स्थिताः ॥ २९ ॥ तस्मिन् श्रीरामे । ततो रामराज्याप्तेरुत्तरम् ॥ ३० ॥ अथ पुरीदर्शनोत्तरकाले । अनर्घ्या अमूल्याः । उरवो बहवः । परिच्छदा उपकराः ॥ ३१ ॥ "उदुंबरस्तु देहल्यां वृक्षभेदे च पंडके । कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम् ॥" इति मेदिनी । "विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्" इति च । भाता दीप्ता याः स्फटिकभित्तयस्ताभिः । क्वचित् 'भ्राजत्स्फटिक'--इत्यपि पाठः ॥ ३२ ॥पट्टिकाभिर्वितानैः । "लाक्षायां च वितानेऽपि पट्टिका

धूपदीपैः सुरभिभिर्मंडितं पुष्पमंडनैः ॥ स्त्रीपुंभिः सुरसंकाशैर्जुष्टं भूषणभूषणैः॥३४॥तस्मिन् स भगवान्रामः स्निग्धया प्रिययेष्टया ॥ रेमे स्वारा मधीराणामृषभः सीतया किल ॥ ३५ ॥ बुभुजे च यथाकालं कामान्धर्ममपीडयन् ॥ वर्षपूगान्बहून्नृणामभिध्याताङ्घ्रिपल्लवः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे श्रीरामोपाख्यानं नामैकादशोऽध्यायः ॥ ११ ॥ छ ॥ श्रीशुक उवाच ॥ कुशस्य चातिथिस्तस्मान्निष धस्तत्सुतो नभः ॥ पुंडरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत्ततः ॥ १ ॥ देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः ॥ ततो बलः स्थलस्तस्माद्वज्र नाभोऽर्कसंभवः ॥ २ ॥ खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः ॥ ३ ॥ शिष्यः कौशल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः ॥ योगं महोदयमृषिर्हृदयग्रंथिभेदकम् ॥४॥ पुष्यो हिरण्यनाभस्य ध्रुवसंधिस्ततोऽभवत् ॥ सुदर्शनोऽग्नि वर्णश्च शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥ योऽसावास्ते योगसिद्धः कलापग्राममाश्रितः ॥ कलेरंते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥ तस्मात्प्रसु श्रुतस्तस्य संधिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत॥ ७ ॥ततः प्रसेनजित्तस्मात्तक्षको भविता पुनः ॥ ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ ८ ॥

नानि ताभिः ॥ ३३ ॥ भूषणानां भूषणभूतैः ॥३४॥३५॥ नृणां मध्ये । यद्वा नृणां नृभिरभिध्यातमंघ्रिपल्लवं यस्येति ॥३६॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ॥ एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥१॥ कुशस्य रामपुत्रस्यातिथिः सुतोऽभवत्॥ १ ॥ अर्कसंभवोऽर्कस्यांशात्संभूतः ॥ २ ॥ ततो विधृतेर्हिरण्यनाभः कथंभूतः जैमिनेः शिष्यो योगाचार्यः ॥ ३ ॥ तदाह। यतः सकाशात् कौशल्यो याज्ञवल्क्यऋषि राध्यात्मं योगमध्यगात् । महांत उदयाः सिद्धयो यस्मिंस्तम् । हृदयग्रंथेर्भेदकं च॥४॥५॥मरुं विशिनष्टि । योऽसाविति। पुनर्भावयिता भावयिष्यति॥६॥७॥पित्राऽभिम

न्यध्वजेंशुके" इति निरुक्तिः । यद्वा–चिदभ्ययं कचिदर्थे । इत्यर्थ इति । शुद्धचैतन्यत्वेदेदीप्यमानमिति भावः ॥ ३३ ॥ ३४ ॥ तस्मिन् गृहे । प्रियामनआह्लादकरी चेष्टा व्यवहारो यस्यास्तया । स्वारामधीराणां ज्ञानिनाम् । ऋषभः प्रियः ॥ ३५ ॥ निर्द्धारणार्थषष्ठीस्वीकारे भगवतो नरत्वमापतेत्तद्वारणाय यद्वेति । तृतीयार्थे षष्ठी ज्ञेया ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ एवम् इत्थम् उक्तरीत्या ( १ ) । तस्मात् अतिथिः । तत्सुतो निषधसुतः । अथ नभस्य । तत्पुत्रः पुण्डरीकपुत्रः । तत इत्यग्रिमेणान्वेति । तथा च क्षेमधन्वनो देवानीकः ॥ १ ॥ ततो देवानीकात् । अथानीकानंतरम् । तत्सुतोऽनीहसुतः । ततः पारियात्रात् । तस्माद्बलात् । ततः स्थलाद्वज्रनाभः ॥ २ ॥ तत्सुतो वज्रनाभसुतः । तस्मात् खगणात् । ततो विधृतेः ॥ ३ ॥ शिष्य इति पूर्वान्वयि । तत् योगाचार्यत्वम् । यतो हिरण्यनाभात् । कौशल्यः कोशलदेशवासी ॥ ४ ॥ ततः पुष्यात् ध्रुवसन्धिः । ततः सुदर्शनः । ततः अग्निवर्णः । ततः शीघ्रः । तस्य शीघ्रस्य । तस्ये त्यावृत्त्या योज्यम् ॥ ५ ॥ यो मरुः । असावित्युक्तिस्त्वधुनापि तत्सत्त्वात् कलापग्रामो बदरिकाश्रमे ऋषिग्रामः ॥ ६ ॥ तस्मान्मरोः । तस्य प्रसुश्रुतस्य ।तस्यापि संधेरपि । तत्सुतोऽमर्षणसुतः । तस्मान्महस्वतः ॥ ७ ॥ ततो विश्वसाह्वात् । तस्मात्प्रसेनजितः । ततस्तक्षकात् । यो

एते ह्रीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ बृहद्बलस्य भविता पुत्रो नाम बृहद्रणः ॥ ९॥ उरुक्रियस्ततस्तस्य वत्सवृद्धो भविष्यति ॥ प्रतिव्योमस्ततो भानुर्दिवाको वाहिनीपतिः ॥ १० ॥ सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ॥ प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः॥११॥ भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः ॥ तस्यांतरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ॥१२॥ बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतंजयः ॥ रणंजयस्तस्य सुतः संजयो भविता ततः ॥ १३ ॥ तस्माच्छाक्योऽथ शुद्धोदो लांगलस्तत्सुतः स्मृतः ॥ ततः प्रसेनजित्तस्मात्क्षुद्रको भविता ततः ॥ १४ ॥ रणको भविता तस्मात्सुरथस्तनयस्ततः ॥ सुमित्रो नाम निष्ठांत एते बार्हद्बलान्वयाः ॥ १५ ॥ इक्ष्वाकूणामयं वंशः सुमित्रांतो भविष्यति ॥ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे इक्ष्वाकुवंशवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ॥ आरभ्य सत्रं सोऽप्याह शक्रेण प्राग् वृतोऽस्मि भोः ॥ १ ॥ तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ॥ तूष्णीमासीद्गृहपतिः सोऽपींद्रस्याकरोन्मखम् ॥ २ ॥

न्युना ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ तत्तस्मादमित्रजित् ॥ १२ ॥ १३ ॥ १४ ॥ निष्ठा वंशस्य स्थितिस्तस्या अंतः ॥ १५ ॥ तदेवाह । इक्ष्वाकूणामिति ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे टीकायां द्वादशोऽध्यायः ॥१२॥ इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे ॥ वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ १ ॥ निमेरौरसः पुत्रो नाभूदिति दर्शयन्कथामाह निमिरित्येकादशभिः । सत्रमारभ्य वशिष्ठमृत्विजमवृत वव्रे ॥ १ ॥ तं शक्रस्य मखं निर्वर्त्य प्रतिपालय

बृहद्बलः । ते पित्राऽभिमन्युना । समरे महाभारतयुद्धे॥८॥अनागतान्भविष्यतः ॥९॥ततो बृहद्रणात्। तस्योरुक्रियस्य । ततो वत्सवृद्धात्। पुनस्ततः प्रतिव्योमात् । पुनर्भानोः पुनर्दिवाकात्॥१०॥ततो वाहिनीपतेः पुनः सहदेवात्। पुनर्वीरात् । अथ बृहदश्वात् । पुनर्भानुमतः । तत्सुतः सुप्रतीकसुतः । परेणान्वेत्ययम्॥११॥अथ मरुदेवात् । अथ सुनक्षत्रात् । तस्य पुष्करस्य । तत्पुत्रोऽन्तरिक्षपुत्रः । तत्तस्मात्सुतपसः॥१२॥तस्याप्यमित्रजितोऽपि । तस्माद्बार्हिषः । तस्य जयस्य । ततो रणंजयात्॥ १३ ॥ तस्मात्संजयात् । अथ शाक्यात् । तत्सुतः शुद्धोदसुतः । ततो लांगलात् । तस्मात्प्रसेनजितः । तत इति परेणान्वेति क्षुद्रकादित्यर्थः ॥ १४ ॥ तस्मात् रणकात् । ततः सुरथात् । अंतो वंशावधिभूतः । बृहद्बलस्यान्वयो वंशः तत्र भवा बार्हद्बलान्वयाः॥१५॥तदेव वंशावसानमेव । अयं बुद्धिसन्निहितः सुमित्रोंतेऽवसाने यस्य स तथा । यतो यस्मात् । तं सुमित्रम्। संस्थां समाप्तिम् "संस्थाव्यवस्थाप्रणधिसमाप्त्याचारमंत्रिषु" इति हलायुधः॥१६॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे द्वादशोऽध्यायः ॥१२॥ वंशावसानमुक्त्वा पुनस्तस्य कथनं ज्ञातित्वेन अनौरसत्वेन वैलक्षण्यार्थमित्याह-इक्ष्वाकोरेवेति । तदेवाह-यत्र निमिवंशे । ब्रह्मज्ञा जीवन्मुक्ताः(१) । ऋत्विजं यज्ञकर्तारम् । सत्रं यागम् । सोऽपि वशिष्ठोऽपि। प्राक् तव यज्ञार्थवरणतः पूर्वम् । भो निमे॥१॥निर्वर्त्य समाप्य । "गृहं

निमिश्चलमिदं विद्वान् सत्रमारभतात्मवान् ॥ ऋत्विग्भिरपरैस्तावन्नागमद्यावता गुरुः॥३॥शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ॥ अशप त्पततादेहो निमेः पंडितमानिनः ॥ ४ ॥ निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ॥ तवापि पततादेहो लोभाद्धर्ममजानतः ॥ ५ ॥ इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥ गंधवस्तुषु तद्देहं निधाय मुनिसत्तमाः ॥ समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥७॥ राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ॥ तथेत्युक्ते निमिः प्राह माभून्मे देहबन्धनम् ॥८॥यस्य योगं न वांछंति वियोगभयकातराः॥भजंति चरणांभोजं मुनयो हरिमेधसः ॥९॥ देहं नावरुरुत्सेऽहं दुःखशोकभयावहम् ॥ सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥ देवा ऊचुः ॥ विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ॥ उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥११॥ अराजकभयं नृणां मन्यमाना महर्षयः ॥ देहं ममंथुः स्म निमेः कुमारः समजायत ॥ १२ ॥ जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः॥मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥

प्रतीक्षस्वेति । गृहपतिर्निमिः ॥२॥ इदं जीवितं चलमस्थिरं विद्वान् ॥ ३॥ इंद्रस्य मखं निर्वर्त्यागतो गुरुः शिष्यस्य व्यतिक्रममन्यायं वीक्ष्य निमेर्देहः पतत्वित्यशपत् ॥ ॥ ४ ॥ ५ ॥ उर्वशीदर्शनात्स्कन्नं रेतस्ताभ्यां कुंभे निषिक्तं तस्मात्प्रपितामहो वशिष्ठो जज्ञे । तदाह । मित्रावरुणयोरिति । तथा च श्रुतिः । "कुंभे रेतः सिषिचतुः समानम्" इति॥ ६ ॥ ७ ॥ यदि प्रसन्नाः प्रभवः समर्थाश्चेत्तर्हि जीवत्वित्यूचुः ॥ ८ ॥ यस्य देहस्य योगं न वांछंत्यपि तु मोक्षायैव भजंति ॥९ ॥ १० ॥ निमिर्विदेह एव सन्नुष्यतां वसतु कामं यथेच्छम् । एवं सति युष्माभिः प्रार्थितं जीवितमस्य भविष्यति न च देहबन्ध इति भावः ।स चाध्यात्मसंस्थितो लोचनयोः स्थितः सन्नुन्मेषणनिमेषाभ्यां तत्प्रवर्तकत्वेन लक्षितो वर्तत इति शेषः।११॥तदेव मृतादपि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति । अराजकभयमिति॥१२॥तस्यान्वर्थानि त्रीणि नामान्याह । जन्मनाऽ

यज्ञे सद्मनि च देहे स्वीकृतवस्तुनि । भूमंडलेऽपि " इति निरुक्तिः । सोऽपि वशिष्ठोऽपि ॥ २ ॥ आत्मवान् विवेकी स्वतंत्रो वा । यावता कालेन । अपरैर्वशिष्ठेतरैः ॥ ३ ॥ पंडितमानिनः मूर्खस्य ॥ ४ ॥ अधर्मवर्तिने लोभिने । तदेवाह -लोभादिति ॥ ५ ॥ मित्रावरुणसंभवत्वे प्रमाणमाह—तथा चेति । उर्वशीदर्शनस्कन्नस्य मित्रावरुणौ रेतसस्सेकं कुंभे चक्रतुः । समानं समकालम् ॥ ६ ॥ तस्य निमेर्देहम् । गंधवस्तुषु गंधवासितहरिद्रादियुततैलेषु ॥ ७ ॥ देवैस्तथेत्युक्ते ॥ ८ ॥ यस्य देहस्य । हरिस्सूर्यस्तद्वत्प्रकाशमाना मेधा बुद्धिर्यस्य तस्य विष्णोः । यद्वा—हरिर्भक्तजनतापहरणशीला मेधा धारणावती धीरेते मया पापान्मोचनीया इत्येवंरूपा यस्य तस्य ॥ ९ ॥ नावरुरुत्से स्वीकर्तुं नेच्छामि दुःखं तीव्रवेदना । शोक इष्टवियोगजः क्लेशः । भयं संचलनम् । इतोऽपि देहं नेच्छामीत्याह—सर्वत्रेति । जले महाजलचरात्स्थले वासायोग्यत्वाच्च ॥ १० ॥ निरधिष्ठानवासोऽस्य कथं संभवेत्तत्राह—लोचनेष्विति । एवं सति लोचनयोर्वासे सति । इति भाव इति । उभयोर्मनोरथः संपद्यत इत्याशयः । कथमस्य सद्भावो ज्ञेय इत्यत्राह उन्मेषेति । स च निमिः । लोचनशब्दोक्तचक्षुरिन्द्रियस्याध्यात्मत्वात्तत्र वासेनाधिभूतदेहसंबंधो न संभवतीति भावः । "चक्षुराध्यात्ममुच्यते । अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम्" इति महाभारतोक्तेः । परंपरासंबन्धस्य गौणसंबंधत्वान्मुख्यसंबंधाभाव एव तदभिप्रेत इति ध्येयमत्रेति ॥ ११ ॥ वेनात्पृथुवंशवद्वंशप्रवृत्तिमाह—तदेवमिति ॥ १२ ॥ तस्य मृतदेहोद्भूतकुमारस्य । अन्वर्थानि यथार्थानि असाधारणेनान्यत्राविद्यमानेन ।

तस्मादुदावसस्तस्य पुत्रोऽभून्नंदिवर्धनः ॥ ततः सुकेतुस्तस्यापि देवरातो महीपते ॥ १४ ॥ तस्माद्बृहद्रथस्तस्य महावीर्यः सुधृत्पिता ॥ सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः ॥ १५ ॥ मरोः प्रतीपकस्तस्माज्जातः कृतरथो यतः ॥ दवमीढस्तस्य सुतो विश्रुतोऽथ महाधृतिः ॥ १६ ॥ कृतिरातस्ततस्तस्मान्महारोमाथ तत्सुतः ॥ स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥ ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ॥ सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः ॥ १८ ॥ कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः ॥ धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९ ॥ कृतध्वजात्केशिध्वजः खांडिक्यस्तु मितध्वजात् ॥ कृतध्वजसुतो राजन्नात्मविद्याविशारदः ॥ २० ॥ खांडिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद् द्रुतः ॥ भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः ॥ २१ ॥ शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ॥ ऊर्ध्वकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः ॥ २२ ॥

साधारणेन । जन एव जनकः । यद्वा स्वदेहद्वारा जनकत्वात्स निमिजनकोऽभूदित्यर्थः । मिथिला येन निर्मिता इत्यनेन व्युत्पत्त्यंतरमथाहुक्तम् ॥ १३ ॥ १४ ॥ सुधृत सुधृतिस्तस्य पिता ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्य केशिध्वजस्य भानुमान् ॥ २१ ॥ २२ ॥

स्वार्थिककप्रत्ययेन जनक इति । असाधारणत्वं तु तत्र नास्ति पृथुराज्ञि तद्दर्शनादत आह–यद्वेति । इत्यर्थ इति । 'जनयतीति जनकः' इति निरुक्तेः । स्वयमेव देहं द्वारीकृत्याध्यात्मसंस्थितत्वात्कुमारं जनयामासेति भावः । अत्राध्यात्मसंस्थित इत्यनुवृत्त्य तस्य च योगसंस्थित इति व्याख्या कार्येति । मथनेन भवनं यस्येति मिथिलो निपातनात् । शवानां शयनं यत्रेति श्मशानमितिवत् । यद्वा–मिथिला पूरस्ति निर्मेयाऽस्येति मिथिलः अर्शआदित्वादच् । इत्यभिप्रेत्यैव स्वामिचरणैरुक्तम्–इत्यनेन व्युत्पत्त्यंतरमित्यादि ॥ १३ ॥ तस्मान्मिथिलात् । तस्योदावसोः । ततो नंदिवर्द्धनात् । तस्यापि सुकेतोरपि ॥ १४ ॥ तस्माद्देवरातात् । तस्य बृहद्रथस्य महावीर्यः स एव सुधृत्पिता सुधृतेः पितेत्यर्थः । सुधृच्छब्दस्तान्त इदंतश्चेत्याह–सुधृतेरिति । अथ धृष्टकेतोः । ततो हर्यश्वात् ॥ १५ ॥ तस्मात्प्रतीपकात् । 'कृतरथः' इत्यपि पाठः । यतः कृतिरथात् । तस्य देवमीढस्य । अथ विश्रुतात् ॥ १६ ॥ ततो महाधृतेः । तस्मात्कृतिरातात् । अथानंतरम् । तत्सुतो महारोमसुतः । तस्य स्वर्णरोमा ॥ १७ ॥ ततो ह्रस्वरोम्णः । सीरो हलं तदेव ध्वजः कीर्त्तिव्यंजको यस्य स सीरध्वजः । तस्मात्सीराग्रतः सीताख्यकन्योपलब्धिरूपध्वजाद्गमकात् । 'ध्वज–गतौ' इति धातुः । ननु तत्र कर्षणभूमौ कन्या कुतः समागतेति चेदत्राद्भुतरामायणीयोपाख्यानात्तज्जानीहि तच्चेत्थम्–[ कदाचित्सर्वदिग्विजयं कृत्वा रावणः समागतान्सप्तर्षीनाह भवतो विना सर्वे देवासुरादयः मां करं ददति यूयं तं कथं न दत्थ त ऊचुरकिंचना वयं किं दास्यामस्तच्छ्रुत्वा स आह । यद्येवं तर्हि स्वरुधिरं दत्त तच्छ्रुत्वा ते तन्नाशार्थं स्वरुधिरं गात्रेभ्यो निःस्राव्य पात्रे कृत्वा तस्मै ददुः स च तत्पात्रं पृच्छंत्याः किमिदमिति मंदोदर्याः समक्षं तस्या अप्रदर्श्यैवैकांते भूदेशे निखात्वा स्थापितम् । रावणे कचिद्गते स्त्रीत्वात् सा च तत्पात्रमुद्धृत्य विधिवशात्तत्रस्थं रुधिरं पपौ । तेन तस्याः कन्यागर्भो बभूव । तं दृष्ट्वा रावणभीता राक्षसविद्याबलात्कुरुक्षेत्रदेशमागत्य गर्भात्कन्यां निस्सार्य पात्रे कृत्वा भूमौ तत्संस्थाप्य लंकामाययौ । तत्रैव यज्ञार्थं काकतालीयन्यायेन ह्रस्वरोमनाम्ना मिथिलेशेन भूमिं कर्षता सा लब्धा सीराग्रतो लब्धत्वात्तस्याः सीतेति नामकृतम् ] 'सीता लांगलपद्धतिः' इति कोशादिति संक्षेपः ॥ १८ ॥ तस्य सीरध्वजस्य । ततः कुशध्वजात् ॥ १९ ॥ इहात्मविशारद इति । खांडिक्यस्य तदभावप्रदर्शनार्थमुक्तम् । वस्तुतः सर्वेषां मैथिलानामात्मविशारदत्वस्याध्यायांतिमपद्ये कथनात् ॥ २० ॥ केशिध्वजाद्भीतस्त्रस्तः । कारणांतरे तेन जितो गतः पलायितः । 'द्रुतः' इत्यपि पाठः । तत्सुतो भानुमत्सुतः ॥ २१ ॥ तत्तनयः शतद्युम्नपुत्रः ततस्तदंनतरम् । तस्माच्छुचेः । अथोर्द्ध्व

अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः॥ततश्चित्ररथो यस्य क्षेमधिर्मिथिलाधिपः॥२३॥तस्मात्समरथस्तस्य सुतः सत्यरथस्ततः॥आसीदुपगुरुस्तस्मादुपगुप्तोऽग्निसंभवः ॥ २४ ॥ वस्वनंतोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ॥ श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृतः सुतः ॥२५॥ शुनकस्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः॥ बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥२६॥ एते वै मैथिला राजन्नात्मविद्याविशारदाः ॥ योगेश्वरप्रसादेन द्वंद्वैर्मुक्ता गृहेष्वपि॥२७॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे निमिवंशानुवर्णनं नाम त्रयोदशोऽध्यायः ॥१३॥ श्रीशुक उवाच ॥ अथातः श्रूयतां राजन् वंशः सोमस्य पावनः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यंते पुण्यकीर्तयः॥१॥सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ॥ जातस्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः ॥२॥ तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल ॥ विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः॥३॥

तत्तस्मात्सुपार्श्वकः ॥ २३ ॥अग्निसंभवोऽग्नेरंशात्संभूतः ॥ २४ ॥ यद्यस्मात्सुभाषणः ॥ २५ ॥ २६ ॥ योगेश्वरा याज्ञवल्क्यादयस्तेषां प्रसादेन ॥ २७ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशादिभिः सोमवंशमाहासमापितः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यंते पुण्यकीर्तयः ॥ १ ॥ चतुर्दशे गुरोः पत्न्यां तारायां सोमजाद् बुधात् ॥ जातश्चैलः षड्वर्श्यामायुर्मुख्याजीनजनत् ॥ २ ॥ १ ॥ २ ॥ दृग्भ्यः आनंदाश्रुभ्यः अत एवामृतमयः । किलेत्याश्चर्ये । पाठांतरे दृशो नेत्रात् । वक्ष्यमाणदर्पकारणमाह । विप्रेति ॥ ३ ॥

केतोः ॥ २२॥ तस्यापि पुरुजितोपि ! पुनस्तस्य श्रुतायुः । तस्माच्छ्रुतायुषः । ततः सुपार्श्वकात् । यस्य चित्ररथस्य ॥२३॥ तस्मात् क्षेमधियः । तस्य समरथस्य । ततस्सत्यरथात् । तस्मादुपगुरोः ॥२४ ॥ अथोपगुप्तात् । तत्पुत्रः वस्वनंतपुत्रः । यस्माद्युयुधात् । ततः सुभाषणात् । तस्माच्छ्रुतात् । पुनस्तस्माज्जयात् । अस्माद्विजयात ॥२५॥तत्सुतः ऋतसुतः । पूर्वश्लोके क्वचित् 'विजयोऽस्मात्ततः सुतः' इत्यपि पाठः । तत्र चेत्थं ज्ञेयम् । अस्माज्जयाद्विजयः ततो विजयात्सुतः शुनकः । तत्सुतः शुनकसुतः । ततो वीतहव्यात् । तस्य बहुलाश्वस्य । अस्य कृतेः ॥ २६ ॥ एते मिथिलप्रभृतयः खांडिक्यं विना । आदिना पंचशिखासूर्यादिग्रहः।द्वंद्वै रागद्वेषादिभिः । गृहेष्वपि गृहस्था अपि मुक्ता आत्मारामा इत्यर्थः ॥ २७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ आसमाप्तितः स्कन्धसमाप्तिपर्यंतम् । यस्मिन्सोमवंशे ( १ )। गुरोर्बृहस्पतेः । ऐलः पुरूरवाः । षट् पुत्रान् ( २ ) । अथात इति । अथ सूर्यवंशकथनानंतरम् । यतः वंशकथनं पुरुषार्थसाधनमतो हेतोरित्यर्थः । ज्ञानं पुरुषार्थसाधनं सर्वत्र श्रूयते कथं वंशश्रवणं तद्भवेदिति चेदाह--पावन इति अंतःकरणशुद्धिकरः । तत्र हेतुः--यस्मिन्निति । पुण्यकीर्त्तिनरयशःश्रवणस्य पुरुषार्थत्वं तु शौनकादिप्रश्नतोऽवसीयते तथाहि--"तत्कथ्यतां महाभाग यदि कृष्णकथाश्रयम् । अथ वास्य पदांभोजमकरंदलिहां सताम् ॥ किमन्यैरसदालापैरायुषो यदसद्व्ययः" इति ॥ १ ॥ सर्वमूलकारणीभूतहरिरेवास्य मुख्यादिपुरुष इति स्मारयति--सहस्रशिरस इति । "सहस्रशीर्षा पुरुषः" इत्यादिश्रुतिप्रतिपादितस्य पुंसः पुरुषस्य । पितृसमो ब्रह्मणा तुल्यः । गुणैः तपःप्रभावादिभिः ॥ २ ॥ तस्य अत्रेः । अत एवानंदाश्रुजलोद्भूतत्वादेव । अमृतस्वरूपः अमृतं जलं सुधास्वीकारे तु क्षयो न भवेत् । यद्वा--

सोऽयजद्राजसूयेन विजित्य भुवनत्रयम् ॥ पत्नीं बृहस्पतेर्दर्पात्तारां नामाहरद्बलात् ॥४॥ यदा स देवगुरुणा याचितोऽभीक्ष्णशो मदात्॥नात्य जत्तत्कृते जज्ञे सुरदानवविग्रहः ॥५॥शुक्रो बृहस्पतेर्द्वेषादग्रहीत्सासुरोडुपम्॥हरो गुरुसुतं स्नेहात्सर्वभूतगणावृतः॥६॥सर्वदेवगणोपेतो महेंद्रो गुरुम न्वयात्॥सुरासुरविनाशोऽभूत्समरस्तारकामयः॥७॥निवेदितोऽथांगिरसा सोमं निर्भर्त्स्य विश्वकृत्॥तारां स्वभर्त्रे प्रायच्छदंतर्वत्नीमवैत्पतिः ८॥ त्यजत्यजाशु दुष्प्रज्ञे मत्क्षेत्रादाहितं परैः॥नाहं त्वां भस्मसात्कुर्यां स्त्रियं सांतानिकः सति॥९॥तत्याज व्रीडिता तारा कुमारं कनकप्रभम्॥स्पृहामां गिरसश्चक्रे कुमारे सोम एव च ॥१०॥ममायं न तवेत्युच्चैस्तस्मिन् विवदमानयोः ॥ पप्रच्छुर्ऋषयो देवा नैवोचे व्रीडिता तु सा ॥११॥ कुमारो मातरं प्राह कुपितोऽलीकलज्जया ॥ किं न वोचस्यसद्वृत्ते आत्मावद्यं वदाशु मे ॥१२॥ब्रह्मा तां रह आहूय समप्राक्षीच्च सांत्वयन् ॥ सोम स्येत्याह शनकैः सोमस्तं तावदग्रहीत् ॥१३॥ तस्यात्मयोनिरकृत बुध इत्यभिधां नृप ॥ बुद्ध्या गंभीरया येन पुत्रेणापोडुराण्मुदम् ॥१४॥

सोमस्य पुत्रो बुध इति कथाद्वारेणाह । पत्नीमिति सार्धैर्नवभिः ॥ ४ ॥ तत्कृते तन्निमित्तम् ॥ ५ ॥ सुराणां दानवानां च विग्रहे कारणमाह । शुक्र इति । असुरैः सहितः उडुपमग्रहीदित्यर्थः । संधिरार्षः गुरोः सुतं बृहस्पतिमग्रहीत्।अंगिरसः सकाशात्प्राप्तविद्यो हर इति प्रसिद्धिः ॥६॥७॥ निवेदितो विज्ञापितः । विश्वकृद्ब्रह्मा । अवैदबुध्यत ॥८॥ बृहस्पतिराह । त्यजत्यजेति । परैराहितं गर्भम् । गर्भे त्यक्ते भस्मीकरिष्यतीति बिभ्यतीं प्रत्याह । नाहमिति । सांतानिकः संतानार्थी । सांतानिके इति पाठे हे सत्पुत्रे इत्यर्थः ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ रहः एकांते ॥ १३ ॥ पुरूरवस उर्वश्यामायुःप्रमुखाः षट्पुत्रा जाता इति वक्तुं कथामाह ॥

भगवन्मायाया अघटनघटनापटीयस्त्वात्सुधावत्त्वेऽपि क्षयो नाद्भुतमिति । पाठांतरे 'तस्य दर्शोऽभवत्' इति पाठे ॥ ३ ॥ स सोमः । बृहस्पतिभार्याहरणं स्वज्येष्ठभ्रातुरुतथ्यभार्यागमनादेव. जातमिति ब्रह्मवैवर्त्ते स्फुटम् ॥ ४ ॥ स सोमः । अभीक्ष्णशः मुहुर्मुहुः । मदाद्गर्वात् । तत्कृते तारानिमित्तम् ॥ ५ ॥ इत्यर्थ इति । असुरानुमतेन चंद्रं रक्षणार्थं स्त्रीचकारेति भावः । यलोपस्यासिद्धत्वेन गुणस्याकर्त्तव्यत्वादाह--संधिरिति । बृहस्पतिर्हरगुरुसुत इत्यत्र पुराणांतरसंमतिमाह--अंगिरसो भार्या केनचित्कर्मदोषेण मृतवत्सासीत्सा च विरिंच्याज्ञया कृष्णव्रतं पुंसवनं वर्षमेकं चकार । तत्तुष्टेन श्रीकृष्णेन बृहस्पतिः पुत्रो दत्तः स च कृष्णस्यापि वरजः पुत्र एव तदुक्तम् "वरजो वीर्यजश्चैव क्षेत्रजः पालितस्तथा । विद्यामंत्रसुतानां च गृहीता सप्तमः सुतः ॥" इति। कृष्णश्च शिवस्य गुरुरभूत् तदुक्तम् "श्रीकृष्णो हि गुरुः शंभोः परात्परतमः स्वयम् । अतो हि तत्सुरगुरुर्गुरुपुत्रः शिवस्य च ॥" इति । यद्वा--सत्यां मृतायां दक्षयज्ञे तच्छोकेन सर्वं स्वज्ञानं शिवो विस्मृतवान् तदा तद्बोधनाय कृष्णप्रेरितोंगिरास्तं बोधयामास। तस्माच्छिवगुरुरेव स एवं तत्पुत्रो बृहस्पतिः। शिवगुरुसुत एतत्सर्वं ब्रह्मवैवर्ते स्फुटम्॥६॥तारैव तारका तस्या हेतोरागतः प्राप्तस्तारकामयः "मयट् च " इति हेतुवाचकादागत इत्यर्थे मयट् ॥ ७॥ अथ युद्धानंतरम् स्वभर्त्रे बृहस्पतये । पतिर्बृहस्पतिः ॥ ८ ॥ इत्यर्थ इति । श्रेष्ठे पुत्रे सति त्वां न भस्माहं करोमीति भावः । प्रथमांतपाठेऽसतीति संबुद्धिः ॥ ९ ॥ १० ॥ तस्मिन् तारागर्भनिर्गते पुत्रे । विवदमानयोर्गुरुचन्द्रयोः सतोः । सा तारा ॥११॥ अलीकलज्जया अप्रियकर्मलज्जया । "अलीकमप्रियेऽपि स्यादयोग्यासत्ययोस्तथा" इति कोशात् । न वोचसि वदसि 'वुच -परिभाषणे' भ्वादिः । असद्वृत्ते दुराचारे अमंगलस्वरूपे वा"वृत्तं स्वरूपे चरिते वृत्तं छंदोविधासु च"इति हलायुधः। आत्मावद्यं निजदोषम् । 'अवद्यं पापदोषयोः' इति निरुक्तिः ॥ १२ ॥ सांत्वयन् प्रसह्य परपुरुषसंगो न दोषायेत्यादि साम प्रयुंजन् । तं कुमारम् । तावत्तदा ॥१३॥ तस्य कुमारस्य । यावत्समाप्ति स्कंधसमाप्तिपर्यंतम्।

ततः पुरूरवा जज्ञे इलायां य उदाहृतः ॥ तस्य रूपगुणौदार्यशीलद्रविणविक्रमान् ॥१५॥ श्रुत्वोर्वशीन्द्रभवने गीयमानान् सुरर्षिणा ॥ तदंतिक मुपेयाय देवी स्मरशरार्दिता ॥ १६ ॥ मित्रावरुणयोः शापादापन्ना नरलोकताम् ॥ निशम्य पुरुषश्रेष्ठं कंदर्पमिव रूपिणम् ॥ १७ ॥ धृतिं विष्टभ्य ललना उपतस्थे तदंतिके ॥ स तां विलोक्य नृपतिर्हर्षेणोत्फुल्ललोचनः उवाच श्लक्ष्णया वाचा देवीं हृष्टतनूरुहः ॥ १८ ॥ राजोवाच ॥ स्वागतं ते वरारोहे आस्यतां करवाम किम् ॥ संरमस्व मया साकं रतिर्नौ शाश्वतीः समाः ॥ १९ ॥ उर्वश्युवाच ॥ कस्यास्त्वयि न सज्जेत मनो दृष्टिश्च सुन्दर ॥ यदंगांतरमासाद्य च्यवते ह रिरंसया ॥२०॥ एतावुरणकौ राजन् न्यासौ रक्षस्व मानद ॥ संरंस्ये भवता साकं श्लाघ्यः स्त्रीणां वरः स्मृतः ॥२१॥ घृतं मे वीर भक्ष्यं स्यान्नेक्षे त्वाऽन्यत्र मैथुनात् ॥ विवाससं तत्तथेति प्रतिपेदे महामनाः ॥ २२ ॥

तस्येत्यादिना यावत्समाप्ति ॥ १४ ॥ १५ ॥ १६ ॥ ननु देवी कुतो मनुष्यस्यांतिकमुपागच्छेत्तत्राह । मित्रावरुणयोः शापान्नरलोकतां मनुष्यभावमापन्ना सती ॥१७॥१८॥ नौ आवयो रतिरस्त्विति ॥१९॥ यस्य तवांगांतरं वक्ष आसाद्य रिरंसया रंतुमिच्छया ह स्फुटं न च्यवते नापयाति । यद्यस्मादिति वा ॥ २० ॥ शापावसाने भाषाभंगमिषेण जिगमिषोस्तस्या भाषाबंधमाह एतावितिं द्वाभ्याम्। उरणकौ मेषौ न्यासौ निक्षेपरूपौ रक्षस्व । यः श्लाघ्यः स एव स्त्रीणां वरः स्मृतः।अतो विजातीयत्वं न दोष इति भावः॥२१॥हे वीर घृतं मे भक्ष्यं स्यात् । "अमृतं वा आज्यम्" इति श्रुतेः।देवानां चामृताशित्वात् । मैथुनादन्यत्र विवाससं त्वां नेक्षिष्ये । इति प्रतिपेदेऽगीकृतवान् ॥२२॥

आत्मा परमात्मा योनिः कारणं यस्य स ब्रह्मा । अभिधां नाम । तत्र निमित्तमाह–बुद्ध्येति । सदसद्विचारो बुद्धिः । येन बुद्धिसंपन्नपुत्रेण । उडुराट् चंद्रः ॥ १४ ॥ ततो बुधात् । य उदाहृतः प्रथमाध्याये तस्य पुरूरवसः ॥ १५ ॥ तदंतिकं पुरूरवःसमीपम् ॥ १६ ॥ तदागमनमाक्षिपति–नन्विति । स्मरार्दितमित्रावरुणाभ्यां रत्यर्थं प्रार्थितोर्वशी तौ नाभ्यनंदती त्वां मनुष्यो भोक्ष्यतीति शप्तेति स्पष्टं पुराणांतरे इत्यत आह-मित्रावरुणयोरिति ॥ १७ ॥ धृतिं धैर्यम । विष्टभ्य विहाय । स पुरूरवाः । तामुर्वशीम् । श्लक्ष्णया शोभनया ॥ १८ ॥ शाश्वतीः समा बहून्संवत्सरान् । रतिः ग्राम्यविषया क्रीडा ॥ १९ ॥ अंगस्य देहस्यांतरं मध्य भागोऽर्थाद्वक्षःस्थलम् । पूर्वार्द्धस्थनञुत्तरार्धेऽपि योज्यम् । यद्यस्मात् । हे अंग राजन् । अंतरमवकाशमासाद्य प्राप्य मनश्च्यवते रिरंसया विकृतीभवतीति विश्वनाथः॥२०॥ तस्या उर्वश्याः भाषाबंधः प्रतिज्ञा । कालांतर स्वीकार्यं विश्वस्तस्थापितं वस्तु न्यासः । "मेढ्रोरभ्रोणोरर्णायुमेषवृष्णय एडके" इत्यमरः । उरणावेवोर्णकौ । इति भात्र इति । स्त्रीणां पतित्वे श्लाघ्यत्वं रतिसमर्थयुवत्वादिलक्षणमेव कारणं न वै जात्यादीति तात्प र्यम् ॥ २१ ॥ समयं बध्नाति -घृतामिति । ननु देवभोज्यं त्वमृतमस्ति तत्कथं घृतमशिष्यसीतिच घृतमेवामृतमित्यत्र श्रुतिं प्रमाणयति–अमृतमिति । विवाससं शिश्नाच्छादकवस्त्रहीनम् । इतोऽन्यथाकरणे नाहमत्र

अहो रूपमहो भावो नरलोकविमोहनम् ॥ को न सेवेत मनुजो देवीं त्वां स्वयमागताम्॥२३॥तया स पुरुषश्रेष्ठो रमयंत्या यथार्हतः॥ रेमे सुरविहारेषु कामं चैत्ररथादिषु॥२४॥रममाणस्तया देव्या पद्मकिंजल्कगंधया ॥ तन्मुखामोदमुषितो मुमुदेऽहर्गणान्बहून् ॥ २५ ॥ अपश्यन्नुर्वशीमिंद्रो गंधर्वान्समनोदयत् ॥ उर्वशीरहितं मह्यमास्थानं नातिशोभते॥२६॥त उपेत्य महारात्रे तमसि प्रत्युपस्थिते ॥ उर्वश्या उरणौ जह्रुर्न्यस्तौ राजनि जायया॥२७॥ निशम्याक्रंदितं देवी पुत्रयोर्नीयमानयोः ॥ हतास्म्यहं कुनाथेन नपुंसा वीरमानिना॥ २८ ॥ यद्विश्रंभादहं नष्टा हतापत्या च दस्युभिः ॥ यः शेते निशि संत्रस्तो यथा नारी दिवा पुमान् ॥२९॥ इति वाक्सायकैर्विद्धः प्रतोत्रैरिव कुंजरः ॥ निशि निस्त्रिंशमादाय विवस्त्रोऽभ्यद्रवद्रुषा ॥ ३० ॥ ते विसृज्योरणौ तत्र व्यद्योतंत स्म विद्युतः ॥ आदाय मेषावायांतं नग्नमैक्षत सा पतिम् ॥३१ ॥ ऐलोऽपि शयने जायामपश्यन्विमना इव ॥ तच्चित्तो विह्वलः शोचन्बभ्रामोन्मत्तवन्महीम् ॥३२॥ स तां वीक्ष्य कुरुक्षेत्रे सरस्वत्यां च तत्सखीः ॥ पंच प्रहृष्टवदनाः प्राह सूक्तं पुरूरवाः ॥ ३३ ॥ अहो जाये तिष्ठतिष्ठ घोरे न त्यक्तुमर्हसि ॥ मां त्वमद्याप्यनिर्वृत्य वचांसि कृणवावहै॥३४॥

तदेवाह । अहो इति ॥ २३ ॥ २४ ॥ पद्मकिंजल्कस्य गंध इव गंधो यस्यास्तस्या मुखामोदेन मुषितः प्रलोभितः सन् ॥ २५ ॥ मह्यं मम ॥ २६ ॥ महारात्रे मध्यरात्रे । " महानिशा द्वे घटिके रात्रौ मध्यमयामयोः" इति स्मृतेः ॥ २७ ॥ जिगमिषोस्तस्याः परुषोक्तिमाह । हताऽस्मीति सार्धेन । नपुंसा नपुंसकेन ॥ ॥२८॥यथा नारी तथा संत्रस्तः शेते ॥ २९ ॥ ३० ॥ विद्युतो विशिष्टद्युतिमंतो व्यद्योतंत दीप्तिमकुर्वत । यद्वा तदैव तडितः प्राकाशंतेत्यर्थः । नग्नमैक्षत अतो भाषाभंगान्निर्जगामेति ज्ञेयम् ॥ ३१ ॥ ३२ ॥ तस्याः सखीश्च पंच वीक्ष्य । सूक्तं शोभनं वचनम् । "हये जाये" इत्यादि ॥ ३३ ॥ तदेवार्थत आह । अहो इति

वत्स्यामीति भावः। स च तदुर्वश्युक्तं सर्वं तथेति॥२२॥तदेवांगीकरणमेव । भावः शृंगारादिः । न रीयंते स्रवंति रेतोरूपेणेति नरास्तपस्विनस्तेषां लोकः समूहस्तं विमोहयतीति तथा । मनुज इति दौर्लभ्यमाह ॥२३॥ हयोर्वश्या । स ऐलः यथार्हतः मानपूर्वं सुराणां विहारो येषु । आदिना नंदनवैभ्राजादिग्रहः॥२४॥ तस्या उर्वश्याः । मुखामोदेन निश्वाससुरभिगंधेन। कचित् 'मुमुहे' इति पाठः॥२५॥आस्थानं सभा।इति पदमध्यार्थमत्र॥२६॥ते गंधर्वाः ! मध्यमयामयोर्द्वितीययामांतैकघटिका तृतीययामाद्यैकघटिकेति द्वे॥२७॥तस्या उर्वश्याः परुषोक्तिं कठोरवाक्यम् । पुत्रयोः पुत्रवत्पाल्यमानयोः ॥२८॥ यः पुमान्सन्नपि यथा नारी निशि तथा संत्रस्तः भीतः । यद्वा- दिवैव पुमान्न तु रात्राविति । यतः संत्रस्तः शेते।यद्विस्रंभात् वीरोऽयमिति विश्वासात्॥२९.।वाक्सायकैर्वचनबाणैः । प्रतोत्रैरंकुशैः । कुंजेषु रमत इति कुंजरो गजः । यद्वा--कुञ्जो हस्तिहनुः सोऽस्यास्तीति "खमुखकुञ्जेभ्य उपसंख्यानम्" इति रः । ॥३०॥ते गंधर्वाः । तत्र तस्मिन्समये देशे वा विद्युतः प्रकाशकदीप्तीः व्यद्योतंत चक्रुः । यद्वा--दीप्ता बभूवुः । विद्युत इवेति लुप्तोपमात्र । सा उर्वशी । स्वामिव्याख्याने विशिष्टदीप्तिमंतश्चेत्तर्हि पूर्वमेव कथं न ज्ञाता इति चेदाह--यद्वेति इत्यर्थ इति । पूर्वं प्रकाशं गोपायित्वा मेषदानोत्तरं राज्ञो नग्नदर्शनार्थं पश्चात्प्रकाशं चक्रुरिति भावः । यतो नग्नदर्शनं जातमतो हेतोः।प्रतिज्ञाभंगादनुक्तमपि तद्गमनमत्र ज्ञेयम्॥३१॥तदेवाह--बभ्राम इतस्ततो धावनं चकार।तच्चित्त उर्वशीनिक्षिप्तचेताः। विह्वलोऽस्वस्थः॥३२॥स ऐलः ।हये इत्यादि--"हये जाये मनसा तिष्ठ घोरे वचांसि मिश्रा कृणवावहै नु न नौ मंत्रा अनुदितास एते मयस्करन्परतरे च नाहन्"इत्येवंरूपं सूक्तं व्याख्यातं चेदमेकादशस्कन्धषड्विंशाध्याये।।३३॥तदेव सूक्तमर्थतो व्याख्यानेनाह- हे घोरे सुरतशौंडे।निर्वृतिमानंदम्।पाठांतरे'अनिर्वर्त्य'इति पाठे।विषयेभ्यो

सुदेहोऽयं पतत्यत्र देवि दूरं हृतस्त्वया॥खादंत्येनं वृका गृध्रास्त्वत्प्रसादस्य नास्पदम्॥३५॥ उर्वश्युवाच ॥ मा मृथाः पुरुषोसि त्वं मा स्म त्वाद्युर्वृका इमे ॥ क्वापि सख्यं न वै स्त्रीणां वृकाणां हृदयं यथा ॥३६॥ स्त्रियो ह्यकरुणाः क्रूरा दुर्मर्षाः प्रियसाहसाः ॥ घ्नंत्यल्पार्थेऽपि विश्रब्धं पतिं भ्रातरमप्युत ॥ ३७ ॥ विधायालीकविश्रंभमज्ञेषु त्यक्तसौहृदाः ॥ नवंनवमभीप्संत्यः पुंश्चल्यः स्वैरवृत्तयः ॥ ३८ ॥ संवत्सरांते हि भवानेकरात्रं मयेश्वर ॥ वत्स्यत्यपत्यानि च ते भविष्यंत्यपराणि भोः ॥ ३९ ॥

द्वाभ्याम् । अनिर्वृत्य मत्कृतां निर्वृतिमप्राप्य । पाठांतरे मां निर्वृतिमगमयित्वा मंत्राननुक्त्वेति वा । वचांसि कृणवावहै गोष्ठीः करवावहै ॥३४॥ सुदेहोऽतिकमनीयोऽयं मम देहः ॥ ३५॥ "पुरूरवो मा मृथाः" इत्यादि तस्याः सूक्तं तदप्यर्थत आह मा मृथा इति चतुर्भिः । मा म्रियस्व पुरुषोऽसि अतो धैर्यमावहेति भावः। इमे वृकाः प्रसिद्धा इंद्रियाणि वा त्वा इति त्वां मा स्म अद्युर्भक्षयेयुः । इंद्रियवशो मा भवेत्यर्थः ॥३६॥ प्रिये निमित्ते साहसं यासाम् ॥ ३७ ॥३८॥ तं सांत्वयति । संवत्सरांत इति ॥३९॥

निर्वृतिस्तु सर्वथा दुःशकेति चेदाह–मंत्रानिति । गुप्तभाषणानि ॥ ३४ ॥ अत्र कुरुक्षेत्रे अस्यामवस्थायां वा । एनं मद्देहम् । अत्र काश्चन वाचो विहाय सारार्थमाह–" सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गतवा उ अथाशयीत निर्ऋतेरुपस्थेधैनं वृका रभसासो अद्युरिति किमेता वाचा कृणुबः अहमुषसामग्र्येव प्राक्रमिषम् " हे देवि परावतम् परवंतं दीर्घश्छांदसः । परमां गतिं गतवै उर्गंतुर्मे सुदेवः सुष्ठु ज्ञानसाधनं शरीरं प्रपतेत्प तिष्यति । कुतः अनावृत् आधारहीनः । अथ पतनोत्तरम् । निर्ऋतेर्भूमेरुपस्थे पृष्ठे शयीत पतेत् । अथ परावतं पराधीनं निर्जीवमेनं शरीरं रभसासः भक्षणसंभ्रमाकुला वृका अद्युः खादंति । पतित्वापि कथंचित्सप्राणं चेद्वृका इंद्रियाणि बाधंत इत्यर्थः । हये जाये इत्यस्या उत्तरमाह–किमिति । तवैतया वाचा किं कृणुव किं कुर्वः । आवयोः पूर्ववत्संगमानुपपत्तेः। किंनिमित्तं तत्राह–अहमिति । अहमुषसां प्रातरादीनामग्रे प्रथममेव प्राक्रमिषं यथा प्रथमोषसोऽतिक्रांतत्वात्पाश्चात्यानामुषसां योगो न घटते तथाऽवयोरपीत्यर्थः । तर्ह्यहं किं करोमीति तत्राह–'पुरूरवः पश्चादस्तं परेहि दुरापना यथा वात' इति । अस्तं गृहं परेहि गच्छ इदानीमेवं कर्तव्यमित्यर्थः । "अस्तमेयाय"इति श्रुतेः । किमर्थं पश्चाद्गमनं तत्राह–दुरापनेति । यथा वातो वायुर्ग्रहीतुमशक्यस्तथाहमपि दुरापना दुर्ग्रहेत्यर्थः ॥३९॥ मृदुवचनोत्तरेणायं गृहं न यास्यतीत्यभिसंधाय कठिनोत्तरेण निवर्तयिष्यामीत्याह–मा मृथेति । हे पुरूरवः पुरुषस्य बलिष्टत्वात्कामनिमित्तं मरणं नोचितमबलायाश्चाबलत्वेन कथंचित्संभावितं स्यादित्यर्थः । अनेनार्थतः "माप्रपप्त इत्येतद्विवृतं भवति पुरूरवो म मृथा मा प्रपप्तो मा त्वा वृकासो अशिवास उक्षन् न वै स्त्रैणानि सख्यानि संति शालावृकाणं हृदयान्येताः" इत्युत्तरत्वेनोर्वश्योक्तम् । व्याख्यातं चेदमेकादशस्कंधे ऐलोपाख्याने । यथा वृकाणां हृदयं क्रूरं तथा स्त्रीणामपीति । इत्यर्थइति । पुरुषस्येंद्रियाणां क्लीबत्वेन तदधीनत्वमयुक्तमिति भावः ॥ ३६ ॥ दुर्गतं मर्षः सहनं यासां ताः । साहसं बलात्कारलक्षणं कर्म । एतदेवाह–घ्नंतीति । अल्पस्तुच्छोर्थो व्यभिचारलक्षणस्तन्निमित्तम् । "अस्वर्ग्य मयशस्यं च फल्गु कृच्छ्रं भयावहम् । जुगुप्सितञ्च सर्वत्र औपपत्यं कुलस्त्रियाः ॥" इत्युक्तेर्व्यभिचारस्याल्पत्वम् ॥ ३७ ॥ अलीकविस्रंभं कपटविश्वासम् । पुंश्चल्यः पुरुषमात्रभोक्त्र्यः । अस्यैव विवरणं स्वैरवृत्तय इति ॥ ३८ ॥ तमैलम् । वत्स्यति सुरतक्री

अंतर्वत्नीमुपालक्ष्य देवीं स प्रययौ पुरम् ॥ पुनस्तत्र गतोऽब्दांत उर्वशीं वीरमातरम् ॥ ४० ॥ उपलभ्य मुदा युक्तः समुवास तया निशाम् ॥ अथैनमुर्वशी प्राह कृपणं विरहातुरम् ॥ ४१ ॥ गंधर्वानुपधावेमांस्तुभ्यं दास्यंति मामिति ॥ तस्य संस्तुवतस्तुष्टा अग्निस्थालीं ददुर्नृप ॥ उर्वशीं मन्यमानस्तां सोऽबुध्यत चरन् वने ॥४२॥ स्थालीं न्यस्य वने गत्वा गृहांस्तां ध्यायतो निशि ॥ त्रेतायां संप्रवृत्तायां मनसि त्रय्यवर्तत ॥४३॥ स्थालीस्थानं गतोऽश्वत्थं शमीगर्भं विलक्ष्य सः ॥ तेन द्वे अरणी कृत्वा उर्वशीलोककाम्यया ॥ ४४ ॥ उर्वशीं मंत्रतो ध्यायन्नधरारणिमुत्तराम् ॥ आत्मानमुभयोर्मध्ये यत्तत्प्रजननं प्रभुः ॥ ४५ ॥ तस्य निर्मंथनाज्जातो जातवेदा विभावसुः ॥ त्रय्या स विद्यया राज्ञा पुत्रत्वे कल्पितस्त्रिवृत् ॥ ४६ ॥ तेनायजत यज्ञेशं भगवंतमधोक्षजम् ॥ ऊर्वशीलोकमन्विच्छन् सर्वदेवमयं हरिम् ॥ ४७ ॥ एक एव पुरा वेदः प्रणवः सर्ववाङ्मयः ॥ देवो नारायणो नान्य एकोऽग्निर्वर्ण एव च ॥ ४८ ॥

अपराणीति वचनादंवर्तत्नीमुपालक्ष्य ज्ञात्वा ॥ ४० ॥ ४१ ॥ अनेनाग्निना कर्म कृत्वा तद्वशादुर्वशीं प्राप्स्यतीत्यभिप्रायेणाग्निस्थालीं ददुः । स तु तां स्थालीमेवोर्वशीं मन्यमानस्तया सहितो वने विचरन्नेयमुर्वशी किं त्वाग्निस्थालीत्यबुध्यत ॥ ४२ ॥ ततश्च । तां स्थालीं वने स्थापयित्वा गृहान्गत्वा निशि नित्यं तामेवाध्यायतस्तस्य मनसि त्रेतायां त्रयी अवर्तत कर्मबोधकं वेदत्रयं प्रादुरभूत् ॥ ४३ ॥ ततः स्थालीस्थानं गतः सन् शम्या गर्भे जातमश्वत्थं विलक्ष्यास्मिन्नसावग्निरस्तीति विशेषेण लक्षयित्वा तेनाश्वत्थेन द्वे अरणीकृत्वाऽग्निं ममंथेति शेषः । "शमीगर्भादग्निं ममंथ" इति श्रुतिः ॥ ४४ ॥ मथनप्रकारमाह । अधरारणिमुर्वशीं ध्यायन्नुत्तरारणिमात्मानं ध्यायन्नुभयोर्मध्ये यत्काष्ठं तत्प्रजननं पुत्रं ध्यायन् । तथा च मंत्रः । "उर्वश्यस्यायुरसि पुरूरवाः" इति ॥ ४५ ॥ तस्य तेन कृतान्निर्मंथनाद्विभावसुरग्निर्जातः । कथंभूतः । जातं वेदो धनं भोग्यं यस्मात् । स च त्रय्या विद्यया विहितेनाधानसंस्कारेण । त्रिवृदाहवनीयादिरूपः सन् राज्ञा पुरूरवसा पुत्रत्वे कल्पितः पुण्यलोकप्रापकत्वात् ॥ ४६ ॥ तदाह । तेनेति ॥ ४७ ॥ नन्वनादिर्वेदत्रयबोधितो ब्राह्मणादीनामिंद्राद्यनेकदेवयजनेन स्वर्गप्राप्तिहेतुः कर्ममार्गः कथं सादिरिव वर्ण्यते तत्राह एक एवेति द्वाभ्याम् ।

डामनु भविष्यतीत्यर्थः । ते तव । मयि अपराण्यन्यानि ॥ ३९ ॥ स ऐलः । यत्र कुरुक्षेत्रदेशे सा पूर्वं दृष्टा तत्रेत्यर्थः ॥ ४० ॥ तयोर्वश्या । समुवास सुरतमनुभूतवान् । अथ रात्र्यंते । इमान्मया सहागतान् । उपधाव शरणं गच्छ । 'धावु–गतिशुद्ध्योः' । "इति त्वा देवा इमे आहुरैल यथेमे तद्भवसि मृत्युबंधुः प्रजा ते देवान् हविषा यजाति स्वर्ग उत्त्वमपि मादयास" इति श्रुतेः ॥ ४१ ॥ तस्यैलस्य । अग्निना सहितां स्थालीमग्निस्थापनयोग्यपात्रम् । तया स्थाल्या ॥ ४२ ॥ ततश्चाग्निस्थाल्येवेयं नोर्वशीति ज्ञानानंतरम् । परस्मिन्दिवसे । त्रेतायां सम्प्रवृत्तायां त्रेतायुगारंभे जाते सति । तामेवोर्वशीमेव । तस्यैलस्य ॥ ४३ ॥ ततो मनसि प्रवृत्तेरनंतरम् । असौ वृक्षः । अरणी अग्निमन्थसाधनकाष्ठे । शमीगर्भेऽग्निरस्तीत्यत्र प्रमाणमाह शमीगर्भादिति ॥ ४४ ॥ प्रजननं पुत्रम् । अत्र प्रमाणं–तथा चेति । उर्वश्या अप्सरस उरसि उपरिभागे पुरूरवा आस्तेति मंत्रार्थः ॥ ४५ ॥ तस्येति तृतीयार्थे षष्ठीत्याह–तेनैलेन । स चाग्निः । आदिना गार्हपत्यदक्षिणयोर्ग्रहः ॥ ४६ ॥ तत् पुत्रधर्मत्वम् । तेन त्रिवृदग्निना ॥ ४७ ॥ अत्राक्षिपति–नन्विति

पुरूरवस एवासीत् त्रयी त्रेतामुखे नृप ॥ अग्निना प्रजया राजा लोकं गांधर्वमेयिवान् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे ऐलोपाख्याने चतुर्दशोऽध्यायः ॥ १४ ॥ श्रीशुक उवाच ॥ ऐलस्य चोर्वशीगर्भात् षडासन्नात्मजा नृप ॥ आयुः श्रुतायुः सत्यायू रयोऽथ विजयो जयः ॥ १ ॥ श्रुतायोर्वसुमान् पुत्रः सत्यायोश्च श्रुतंजयः ॥ रयस्य सुत एकश्च जयस्य तनयोऽमितः ॥ २ ॥ भीमस्तु विजयस्याथ कांचनो होत्रकस्ततः ॥ तस्य जह्नुः सुतो गंगां गंडूषीकृत्य योऽपिबत् ॥ जह्नोस्तु पूरुस्तत्पुत्रो बलाकश्चात्मजोऽजकः ॥ ३ ॥ ततः कुशः कुशस्यापि कुशांबुर्मूर्तयो वसुः ॥ कुशनाभश्च चत्वारो गाधिरासीत् कुशांबुजः ॥ ४ ॥ तस्य सत्यवतीं कन्यामृचीकोऽयाचत द्विजः ॥ वरं विसदृशं मत्वा गाधिर्भार्गवमब्रवीत् ॥ ५ ॥ एकतः श्यामकर्णानां हयानां चंद्रवर्चसाम् ॥ सहस्रं दीयतां शुल्कं कन्यायाः कुशिका वयम् ॥ ६ ॥

पुरा कृतयुगे सर्ववाङ्मयः सर्वासां वाचां बीजभूतः प्रणव एक एव वेदः देवश्च नारायण एक एव । अग्निश्चैक एव लौकिकः । वर्णश्चैक एव हंसो नाम ॥ ४८ ॥ वेदत्रयी तु पुरूरवसः सकाशादासीत् । एयिवान्प्राप । अयं भावः । कृतयुगे सत्त्वप्रधानाः प्रायशः सर्वेऽपि ध्याननिष्ठाः रजःप्रधाने तु त्रेतायुगे वेदादिविभागेन कर्ममार्गः प्रकटो बभूवेति ॥ ४९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां चतुर्दशोऽध्यायः ॥ १४ ॥ ॥ ततः पंचदशे गाधिरैलपुत्रान्वयेऽजनि ॥ यद्दौहित्रसुतो रामः कार्तवीर्यमहन् रुषा ॥ १ ॥ १ ॥ सुग्रहत्वायाल्पादिक्रमेण श्रुतायुप्रभृतिषण्णां वंशानाह श्रुतायोरित्यादिना । एक एकसंज्ञः । अमितस्तत्संज्ञः ॥ २ ॥ जह्नोः पूरुस्तस्य बलाकस्तस्याजकः ॥ ३ ॥ ४ ॥ गाधेः पुत्रो विश्वामित्रो ब्रह्मर्षिरभूदित्युत्तराध्यायांते वक्ष्यति 'गाधेरभून्महातेजाः' इत्यादिना । तत्र तावत्तदुपोद्घातत्वेन भृगुवंशसंभवस्य ऋचीकस्य चरितं प्रसक्तानुप्रसक्तेन च परशुरामावतारचरितमाह । तस्य सत्यवतीमित्यादिना । विसदृशमननुरूपम् । भार्गवमृचीकम् ॥ ५ ॥ दक्षिणवामयोरेकतः

" ॐकार एव सर्वा वाक् " इति श्रुतेः ॥ ४८ ॥ अत्राशयमाह—अयं भाव इति । इत्यर्थ इति । अनादिरपि कर्ममार्गो ग्राहकाभावान्न प्रादुरभूत्कृतयुग इति भावः । वस्तुतस्तु—ब्रह्ममुखेभ्य एवाविर्भूता त्रयी सा च कर्मप्रचुरत्वात्कृतयुगेऽनाविर्भूतेवातिष्ठतेति प्रतिमन्वंतरकृतादिषु प्रायस्त एव राजानोऽन्ये च प्रादुर्भवंति ." यथापूर्वमकल्पयत् " इति श्रुतेः । त्रयीशब्दोऽत्र तदुक्तकर्मैव वक्ति कारणेन कार्यग्रहणात् ' गोभिः श्रिणीत मत्सरम् ' इति न्यायात् ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे चतुर्दशोऽध्यायः ॥ १४ ॥ तत ऐलस्य गंधर्वलोकगमनानंतरम् । गाधिरजनि जातः । यस्य गाधेर्दौहित्रस्य जमदग्नेः सुतः । रुषा क्रोधेन ( १ ) । अथ रयानंतरम् ॥ १ ॥ सुग्रहत्वाय झटिति बोधाय । तत्संज्ञोऽमितनामा ॥ २ ॥ अथ भीमस्य । ततः कांचनस्य । तस्य होत्रकस्य । यो जह्नुः । यज्ञसामग्रीप्लावनात्कुपितः प्रवाहभूतां भगीरथानुयांतीं गंगां गंडूषीकृत्य योगबलेन चुलकीकृत्यापिबदिति प्रथितं वाल्मीकीये । तत्पुत्रः पूरुपुत्रः । आत्मजः बलाकात्मजः ॥ ३ ॥ ततः अजकस्य । कुशांबोर्जायत इति तथा । कुशांबुनेंद्रतुल्यात्मजकामनया तपः कृतं ततो मत्सदृशो मे राज्यं हरिष्यतीति शंकमान इन्द्र एव स्वांशेन गाधिनाम्ना तत्पुत्रतामवाप । तत एवेंद्रः कौशिक इत्युच्यत इति हरिवंशे ॥ ४ ॥ तत्र विश्वामित्रस्य ब्रह्मर्षित्वे । प्रसक्तं जमदग्निचरितं तत्रानुप्रसक्तं परशुरामचरितम् । तस्य गाधेः ॥ ५ ॥ इदं सहस्रश्यामकर्णाश्वदानमपि पर्याप्तं पूर्णं शुल्कं न । श्यामकर्णलक्षणन्तु "सर्वश्वेतो हयो यस्तु श्यामैकश्रवणो भवेत् । स वाजी वाजिमेधार्हः श्यामकर्णः प्रकी

इत्युक्तस्तन्मतं ज्ञात्वा गतः स वरुणांतिकम् ॥ आनीय दत्त्वा तानश्वानुपयेमे वराननाम् ॥ ७ ॥ स ऋषिः प्रार्थितः पत्न्या श्वश्र्वा चापत्यकाम्यया ॥ श्रपयित्वोभयैर्मंत्रैश्चरुं स्नातुं गतो मुनिः ॥८॥ तावत् सत्यवती मात्रा स्वचरुं याचिता सती ॥ श्रेष्ठं मत्वा तयाऽयच्छन्मात्रे मातुरदत्स्वयम् ॥ ९ ॥ तद्विज्ञाय मुनिः प्राह पत्नीं कष्टमकारषीः ॥ घोरो दंडधरः पुत्रो भ्राता ते ब्रह्मवित्तमः ॥ १० ॥ प्रसादितः सत्यवत्या मैवं भूदिति भार्गवः ॥ अथ तर्हि भवेत्पौत्रो जमदग्निस्ततोऽभवत् ॥ ११ ॥ सा चाभूत्सुमहापुण्या कौशिकी लोकपावनी ॥ रेणोः सुतां रेणुकां वै जमदग्निरुवाह याम् ॥ १२ ॥ तस्यां वै भार्गवऋषेः सुता वसुमदादयः ॥ यवीयाञ्जज्ञ एतेषां राम इत्यभिविश्रुतः ॥१३॥ यमाहुर्वासुदेवांशं हैहयानां कुलांतकम् ॥ त्रिःसप्तकृत्वो य इमां चक्रे निःक्षत्रियां महीम् ॥ १४ ॥ दुष्टं क्षत्रं भुवो भारमब्राह्मण्यमनीनशत् ॥ रजस्तमोवृतमहन्फल्गुन्यपि कृतेंहसि ॥ १५ ॥

श्यामः कर्णो येषाम् । सर्वस्मिन्नंगे चंद्रस्येव वर्चो येषाम् । न चेदमपि पर्याप्तमस्मत्कन्यायाः । यतः कुशिकाः कौशिका वयम् ॥ ६ ॥ ७ ॥ उभयैर्मंत्रैः पत्न्यै ब्राह्मैर्मंत्रैः श्वश्र्वै तु क्षात्रैरित्यर्थः ॥ ८ ॥ यावत्स्नात्वा मुनिर्नागतस्तावद्भार्यायां भर्तृस्नेहाधिक्यात्पुत्र्याः सत्यवत्याश्चरुं श्रेष्ठं मत्वा तया मात्रा सत्यवती याचिता सती ब्राह्ममंत्राभिमंत्रितं स्वचरुं मात्रे अयच्छत्प्रादात् । मातुश्चरुं क्षात्रमंत्राभिमंत्रितं स्वयमददादत ॥ ९ ॥ कष्टं जुगुप्सितम् । तदेवाह । ते पुत्रो घोरो भविष्यति भ्राता तु ब्रह्मवित्तमो भविष्यतीति ॥ १० ॥ एवं मा भूदिति प्रसादितो भार्गव आह । अथ तर्हि पौत्रो घोरो भविष्यति । जमदग्निः पुत्रोऽभवदित्यर्थः ॥ ११ ॥ सा च सत्यवती कौशिकी नद्यभूत ॥ १२ ॥ भार्गवऋषेर्जमदग्नेः सुताः ॥ १३ ॥ १४ ॥ अनीनशन्नाशयामास । तदेवाह । रजस्तमोवृतमिति । पाठांतरं

त्तितः ॥'' इति नकुलशास्त्रे । यतो हेतोः । कुं कुत्सितं श्यति नाशयति प्रजाया यथाशास्त्रपालनेन, कौ भूमौ शेते तपश्चर्याहेतोर्वा, कोर्भूमेः शं कल्याणं विशेषधर्मप्रवर्तकतया येन वा स कुशस्तस्य वंशोद्भूता वयमन्यराजकुलापेक्षया प्रशस्ततमकुलीना अतः सर्वभूसमर्पणमपि नास्मत्कन्याशुल्कतां प्राप्स्यतीति । एतच्च केवलं वरसामर्थ्यपरीक्षणार्थं न तु वयं शुल्केन कन्याप्रदास्तस्यातीव गर्हितत्वात् ''कन्याशुल्कगृहीतारः पतंति नरके भृशम्'' इत्याद्युक्तेः ॥ ६ ॥ तन्मतं मच्छयापभीतेनेदमुक्तमयोग्योयमिति मत्वेति तदभिप्रायम् । तान् श्यामकर्णान् । उपयेमे स्वीचकार ॥ ७ ॥ स ऋचीकः । पत्न्या सत्यवत्या । ब्राह्मैर्वैष्णवैः सात्त्विकैः । क्षात्रैः रौद्रै राजसैः । इत्यर्थ इति । मत्पुत्रो ब्राह्मणो मच्छ्यालश्च क्षत्रियो भवत्वित्यभिप्रायेणोभयविधचरुं पक्तवानिति भावः ॥ ८ ॥ ९ ॥ तच्चरुविनिमयलक्षणं कर्म । तदेव जुगुप्सितत्वमेत्र । घोरो भयंकरकर्मकरः । ब्रह्मवित्तमः वेदविदां वरः ॥ १० ॥ अथ पुत्रानंतरम् । ततः सत्यवत्याः । इत्यर्थ इति । तपःप्रभावादन्यथा चकारेति भावः ॥ ११ ॥ रेणुनाम्नः इक्ष्वाकुसुतस्य ''इक्ष्वाकुपुत्रो रेणुश्च तत्सुता रेणुका स्मृता'' इति हरिवंशादौ । तस्यैव प्रसेनजिदित्यपि नामांतरमिति भारते । यामुवाह तस्यामिति परेणान्वयः ॥१२॥ भार्गवऋषेर्जमदग्नेः । आदिना वसुसुषेणरुमण्वतां ग्रहः । एतेषां वसुमदादीनाम् ।यवीयान् कनिष्ठः॥१३॥ यं रामम् । हैहयानां हैहयसंबंधिनां क्षत्रियाणाम्॥१४॥क्षत्रं क्षत्रियजातिम् । (अनीनशत् नाशयामास) । तदेव दुष्टत्वमेव । पाठांतरम् 'अब्रह्मण्यमधार्मिकम्' इत्येवंरूपम् । कचित् 'दप्तं क्षत्रम्' इति पाठः । फल्गुनि तुच्छे ''तुच्छे तीर्थविशेषे च मलप्वां फल्गुवाच्यवत्'

राजोवाच ॥ किं तदंहो भगवतो राजन्यैरजितात्मभिः ॥ कृतं येन कुलं नष्टं क्षत्रियाणामभीक्ष्णशः ॥ १६ ॥ श्रीशुक उवाच ॥ हैहयानामधिपतिरर्जुनः क्षत्रियर्षभः ॥ दत्तं नारायणस्यांशमाराध्य परिकर्मभिः ॥ १७ ॥ बाहून्दशशतं लेभे दुर्धर्षत्वमरातिषु ॥ अव्याहतेंद्रियौजःश्रीस्तेजोवीर्यं यशो बलम् ॥ १८ ॥ योगेश्वरत्वमैश्वर्यं गुणा यत्राणिमादयः ॥ चचाराव्याहतगतिर्लोकेषु पवनो यथा ॥ १९ ॥ स्त्रीरत्नैरावृतः क्रीडन्रेवांभसि मदोत्कटः ॥ वैजयंतीं स्रजं बिभ्रद्रुरोध सरितं भुजैः ॥ २० ॥ विप्लावितं स्वशिबिरं प्रतिस्रोतःसरिज्जलैः ॥ नामृष्यत् तस्य तद्वीर्यं वीरमानी दशाननः ॥ २१ ॥ गृहीतो लीलया स्त्रीणां समक्षं कृतकिल्बिषः ॥ माहिष्मत्यां सन्निरुद्धो मुक्तो येन कपिर्यथा ॥ २२ ॥ स एकदा तु मृगयां विचरन्विपिने वने ॥ यदृच्छयाऽऽश्रमपदं जमदग्नेरुपाविशत् ॥ २३ ॥ तस्मै स नरदेवाय मुनिरर्हणमाहरत् ॥ ससैन्यामात्यवाहाय हविष्मत्यास्तपोधनः ॥ २४ ॥ स वीरस्तत्र तद्दृष्ट्वा आत्मैश्वर्यातिशायनम् ॥ तन्नाद्रियताग्निहोत्र्यां साभिलाषः स हैहयः ॥ २५ ॥ हविर्धानीमृषेर्दर्पान्नरान्हर्तुमचोदयत् ॥ ते च माहिष्मतीं निन्युः सवत्सां क्रंदतीं बलात् ॥ २६ ॥

सुगमम् ॥ १५ ॥ १६ ॥ कार्तवीर्यार्जुनेन कृतमपराधं वक्तुं तस्य दर्पहेतुमैश्वर्यादिकमाह । हैहयानामिति षड्भिः । परिकर्मभिः परिचर्यादिभिर्दत्तं दत्तात्रेयमाराध्य ॥ १७ ॥ अव्याहतमिंद्रियादिकं च लेभे ॥ १८ ॥ यत्र यस्मिन्नैश्वर्येऽणिमादयो गुणाः ॥ १९ ॥ रेवांभसि नर्मदाजले सरितं नर्मदाम् ॥ २० ॥ रावणो दिग्विजये माहिष्मत्याः समीपे नर्मदायां देवपूजां कुर्वंस्तेन प्रवाहस्यावरोधात्प्रतिस्रोतसः सत्यास्तस्याः सरितो जलैर्विप्लावितं स्वशिबिरमालक्ष्य तद्वीर्यं न सेहे ॥ २१ ॥ ततश्च कृतकिल्बिषः क्रीडंतमभिभवितुं प्रवृत्तः सन्गृहीतो माहिष्मत्यां स्वपुर्यां कपिरिव सन्निरुद्धश्च पुनश्चावज्ञया येन मुक्तः ॥ २२ ॥ इदानीं तत्कृतमपराधं दर्शयन्नाह स एकदेत्यादिना ॥ २३ ॥ अर्हणमातिथ्यादि । हविष्मत्या कामधेन्वा ॥ २४ ॥ तदर्हणं नाद्रियत तस्मिन्नातुष्यत् । यतोऽग्निहोत्र्यां होमधेनौ साभिलाषः सहैहयो हैहयैः सह वर्तमानः ॥ २५ ॥ दर्पाद्धेतोः ऋषेर्हविर्धानीमग्निहोत्र

इति निरुक्तिः । अंहसि अपराधे 'अंहः पापापराधयोः' इति धरणिः ॥ १५ ॥ येन अपराधेन ॥ १६ ॥ तस्य कार्त्तवीर्यस्य ॥ १७ ॥ दुर्द्धर्षत्वमपराजितत्वम् ॥ १८ ॥ अव्याहताऽनिवार्या गतिर्गमनं यस्य स तथा ॥ १९ ॥ वैजयंतीम् अष्टधामौक्तिकमयीं पञ्चरत्नमयीं वा ॥ २० ॥ तस्य कार्त्तवीर्यस्य । तद्वीर्यं प्रतिस्रोतसा शिबिराप्लावनरूपम् । प्रति प्रतीपं स्रोतः प्रवाहो यस्याः सरितस्तस्या जलैः "स्रोतोंबुनिर्गमद्वार इंद्रियेषु जलस्रुतौ" इति हलायुधः ॥ २१ ॥ ततश्शिबिराप्लावनाद्धेतोः । अवज्ञया उपेक्षया । मुक्तस्त्यक्तः । येन कार्त्तवीर्येण ॥ २२ ॥ तत्कृतं कार्त्तवीर्यकृतम् । स कार्त्तवीर्यः । एकदा कदाचित् । वेपंति प्रवेष्टुमपि कंपंति जना अत्रेति विपिनं वनविशेषणम् । आर्षो ह्रस्वः । 'विजने' इति पाठः क्वचित् । यदृच्छया दैवेच्छया ॥ २३ ॥ तस्मै कार्तवीर्याय । स जमदग्निः । तपोधन इति । सर्वसाधनसमर्थतामाह ॥ २४ ॥ स कार्त्तवीर्यः । तत्र वने आश्रमे । आत्मनः स्वस्यैश्वर्यस्यातिशायनमतिक्रम्य वर्तमानमधिकम् । तत् मुनेरैश्वर्यम् ॥ २५ ॥ प्रथमं साम्ना प्रार्थने तस्या अदाने पुनर्दर्पादिति । ते च तत्पुरुषाः । क्रंदतीं सवत्सत्वात्तस्याः वत्सं

अथ राजनि निर्याते राम आश्रम आगतः ॥ श्रुत्वा तत्तस्य दौरात्म्यं चुक्रोधाहिरिवाहतः ॥ २७ ॥ घोरमादाय परशुं सतूणं चर्म कार्मुकम् ॥ अन्वधावत दुर्धर्षो मृगेंद्र इव यूथपम् ॥ २८ ॥ तमापतंतं भृगुवर्यमोजसा धनुर्धरं बाणपरश्वधायुधम् ॥ ऐणेयचर्मांबरकर्मधामभिर्युतं जटाभिर्ददृशे पुरीं विशन् ॥ २९ ॥ अचोदयद्धस्तिरथाश्वपत्तिभिर्गदासिबाणर्ष्टिशतघ्निशक्तिभिः ॥ अक्षौहिणीः सप्तदशातिभीषणास्ता राम एको भगवानसूदयत् ॥ ३० ॥ यतो यतोऽसौ प्रहरत्परश्वधो मनोनिलौजाः परचक्रसूदनः ॥ ततस्ततश्छिन्नभुजोरुकंधरा निपेतुरुर्व्यां हतसूतवाहनाः ॥ ॥ ३१ ॥ दृष्ट्वा ससैन्यं रुधिरौघकर्दमे रणाजिरे रामकुठारसायकैः ॥ विवृक्णचर्मध्वजचापविग्रहं निपातितं हैहय आपतद्रुषा ॥ ३२ ॥ अथार्जुनः पंचशतेषु बाहुभिर्धनुःषु बाणान्युगपत्स संदधे ॥ रामाय रामोऽस्त्रभृतां समग्रणीस्तान्येकधन्वेषुभिराच्छिनत्समम् ॥ ३३ ॥ पुनः स्वहस्तैरचलान्मृधेंघ्रिपानुत्क्षिप्य वेगादभिधावतो युधि ॥ भुजान्कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं त्वहेरिव ॥ ३४ ॥ कृत्तबाहोः शिरस्तस्य गिरेः शृंगमिवाहरत् ॥ हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात् ॥ ३५ ॥ अग्निहोत्रीमुपावर्त्य सवत्सां परवीरहा ॥ समुपेत्याश्रमं पित्रे परिक्लिष्टां समर्पयत् ॥ ३६ ॥ स्वकर्म तत्कृतं रामः पित्रे भ्रातृभ्य एव च ॥ वर्णयामास तच्छ्रुत्वा जमदग्निरभाषत ॥ ३७ ॥ रामराम महाबाहो भवान्पापमकारषीत् ॥ अवधीन्नरदेवं यत्सर्वदेवमयं वृथा ॥ ३८ ॥

धेनुं हर्तुं नरानचोदयत्प्रेरितवान् ॥ २६ ॥ २७ ॥ सतूणं कार्मुकं चर्म चादाय ॥ २८ ॥ ऐणेयं चर्म कृष्णाजिनमंबरं यस्य ॥ २९ ॥ ३० ॥ प्रहरन्परश्वधो यस्य । मनश्चानिलश्च तयोरिवौजो वीर्यं यस्य । परेषां चक्रं सैन्यं सूदयतीति तथा । छिन्ना भुजा ऊरवः कंधराश्च येषाम् । हता सूता वाहनानि च येषां ते वीरा निपेतुः ॥ ३१ ॥ विवृक्णाश्चर्मादयो यस्य ॥ ३२ ॥ पंचशतेषु धनुःषु सोऽर्जुनो रामाय संदधे । एकमेव धनुर्यस्य सः । पाठांतरे एक एव बंधः संधानं येषां तैरिषुभिः । तानि धनूंषि समं सह तत्क्षणमेवाच्छिनत् ॥ ३३ ॥ मृधे साधनभूतानचलानंघ्रिपांश्चोत्क्षिप्याभिधावतस्तस्य भुजांश्चिच्छेद । अहेः फणा इवेत्यर्थः ॥ ३४ ॥ ३५ ॥ समर्पयत्समार्पयत ॥ ३६ ॥ ३७ ॥ ३८ ॥

विनैवेति महाभारते ॥ २६ ॥ अथ धेनुहरणानंतरम् । राजनि कार्त्तवीर्ये । तस्य कार्तवीर्यस्य । तत् गोहरणलक्षणम् ॥ २७ ॥ 'तूणी नील्यां निषंगे ना' इति मेदिनी ॥ २८ ॥ तं रामम् ॥ २९ ॥ ३० ॥ यतोयतो यस्मिन्यस्मिन् देशे । असौ रामः । चक्रं सेनाम् "चक्रः कोके पुमान् क्लीबं व्रजे सैन्यरथांगयोः" इति मेदिनी ॥ ३१ ॥ ३२ ॥ अथ स्वसैन्यपातानंतरम् । पाठांतरे 'एकबंधेषुभिः' इति पाठे ॥ ३३ ॥ इत्यर्थ इति । फणा इति पदमध्य्'हार्यम् । 'फणा द्वयोः' इत्यमरः ॥ ३४ ॥ उपावर्त्य निवर्त्त्य परिक्लिष्टामितस्तत आकर्षणादिना खिन्नाम् ॥ ३५ ॥ ३६ ॥ तत्स्वकर्म ससैन्यसहस्रबाहुवधरूपं निजकर्म । तत् रामकर्म ॥ ३७ ॥ ३८ ॥

वयं हि ब्राह्मणास्तात क्षमयार्हणतां गताः ॥ यया लोकगुरुर्देवः पारमेष्ठ्यमियात्पदम् ॥ ३९ ॥ क्षमया रोचते लक्ष्मीर्ब्राह्मी सौरी यथा प्रभा ॥ क्षमिणामाशु भगवांस्तुष्यते हरिरीश्वरः ॥४०॥ राज्ञो मूर्धाऽवसिक्तस्य वधो ब्रह्मवधाद् गुरुः ॥ तीर्थसंसेवया चांहो जह्यंगाच्युतचेतनः ॥ ४१ ॥ इति श्रीमद्भागवते महा० नवमस्कंधे परशुरामचरिते पंचदशोऽध्यायः ॥ १५ ॥ श्रीशुक उवाच ॥ पित्रोपशिक्षितो रामस्तथेति कुरुनंदन ॥ संवत्सरं तीर्थयात्रां चरित्वाश्रममाव्रजत् ॥ १ ॥ कदाचिद्रेणुका याता गंगायां पद्ममालिनम् ॥ गंधर्वराजं क्रीडंतमप्सरोभिरपश्यत ॥ २ ॥ विलोकयंती क्रीडंतमुदकार्थं नदीं गता ॥ होमवेलां न सस्मार किंचिच्चित्ररथस्पृहा ॥ ३ ॥ कालात्ययं तं विलोक्य मुनेः शापविशंकिता ॥ आगत्य कलशं तस्थौ पुरोधाय कृतांजलिः ॥ ४ ॥ व्यभिचारं मुनिर्ज्ञात्वा पत्न्याः प्रकुपितोऽब्रवीत् ॥ घ्नतैनां पुत्रकाः पापामित्युक्तास्ते न चक्रिरे ॥ ५ ॥ रामः संचेोदितः पित्रा भ्रातॄन् मात्रा सहावधीत् ॥ प्रभावज्ञो मुनेः सम्यक् समाधेस्तपसश्च सः ॥ ६ ॥ वरेणच्छंदयामास प्रीतः सत्यवतीसुतः ॥ वव्रे हतानां रामोऽपि जीवितं चास्मृतिं वधे ॥ ७ ॥

अर्हणतां पूज्यताम् ॥ ३९ ॥ सौरी सूर्यस्य प्रभेव ॥ ४० ॥ तीर्थसंसेवया चकारायमनियमैश्च । अच्युते चेतना चित्तं यस्य सः ॥ ४१ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां पंचदशोऽध्यायः ॥ १५ ॥ षोडशेऽथार्जुनसुतैर्जमदग्नौ हते मुहुः ॥ रामात्क्षत्रवधः प्रोक्तो विश्वामित्रस्य चान्वयः ॥ १ ॥ १ ॥ २ ॥ किंचिदीषच्चित्ररथे गंधर्वराजे स्पृहा यस्याः सा । किंचिन्न सस्मारेति वा ॥ ३ ॥ कलशं पुरोधायाग्रे निधाय ॥ ४ ॥ व्यभिचारं मानसं ज्ञात्वा ॥ ५ ॥ आज्ञाऽतिलंघिनां भ्रातॄणां मातुश्च वधे संचोदितः सन् मुनेर्यः समाधिस्तपश्च तयोः प्रभावज्ञः । यदि न हन्यां तर्हि मामपि शप्तुं समर्थः यदि तु हन्यां तर्हि मयि संतुष्टः संस्तानपि जीवयितुं समर्थ इति जानन्नित्यर्थः ॥ ६ ॥ ७ ॥

यया क्षमया । लोकगुरुर्ब्रह्मा ॥ ३९ ॥ ब्राह्मी ब्राह्मणसंबंधिनी लक्ष्मीः संपत् शोभा वा 'लक्ष्मीः संपत्तिशोभयोः' इति मेदिनी ॥ ४० ॥ मूर्ध्नि मस्तकेऽवसिक्तो वैदिकमंत्रैर्यः स मूर्द्धावसिक्तः । यद्वा चक्रवर्त्ती "मूर्द्धावसिक्तो नृपतौ ब्राह्मणे चक्रवर्त्तिनि" इति निरुक्तेः । ब्रह्मवधाद्ब्राह्मणहननात् । गुरुर्महान् । तीर्थानां गंगादीनाम् । सम्यक्सेवया चाद्यमनियमादिभिः । यद्वा—न च्युता चेतना चिच्छक्तिर्यस्य तथाभूत ईश्वरोऽपि लोकसंग्रहार्थमिति विश्वनाथः ॥ ४१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे पञ्चदशोऽध्यायः ॥ १५ ॥ अथार्जुनमरणानंतरम् । अन्वयो वंशः ( १ ) ॥ १ ॥ गंधर्वराजं चित्ररथम् ॥ २ ॥ स्पृहाया ईषत्वे होमवेलास्मरणाभावो न संगच्छेतेत्यत आह—किंचिन्न सस्मारेति । किञ्चिदिति नः सस्मारेत्यत्रान्वेति होमवेलायाः किञ्चिन्मात्रविस्मरणमभूत्तत्र हेतुः चित्रमये रथे दर्शनकौतुकार्थं स्पृहा यस्याः सेति ब्रह्मांडे दर्शितमिति विश्वनाथसंदर्भौ ॥ ३ ॥ होमवेलातः प्रागेव जलमानयिष्यामीति तस्या वचनस्य व्यभिचारं ज्ञात्वा स्वनित्यकर्मासिद्ध्या च प्रकर्षेण कुपितः ॥ ४ ॥ घ्नत हत मारयतेति यावत् । ते पुत्राः ॥ ५ ॥ इत्यर्थ इति । पितुराज्ञापालनं सर्वाभीष्टप्रदमिति विचार्य भ्रात्रादीनवधीदिति भावः ॥ ६ ॥ सत्यवतीसुतो जमदग्निः । छंदयादास प्रीणयामास । हतानां भ्रात्रादीनाम् अस्मृतिं वयं रामेण हताः

उत्तस्थुस्ते कुशलिनो निद्रापाय इवांजसा ॥ पितुर्विद्वांस्तपोवीर्यं रामश्चक्रे सुहृद्वधम् ॥ ८ ॥ येऽर्जुनस्य सुता राजन् स्मरंतः स्वपितुर्वधम् ॥ रामवीर्यपराभूता लेभिरे शर्म न क्वचित् ॥ ९ ॥ एकदाश्रमतो रामे सभ्रातरि वनं गते ॥ वैरं सिषाधयिषवो लब्धच्छिद्रा उपागमन् ॥ १० ॥ दृष्ट्वाग्न्यगार आसीनमावेशितधियं मुनिम् ॥ भगवत्युत्तमश्लोके जघ्नुस्ते पापनिश्चयाः ॥ ११ ॥ याच्यमानाः कृपणया राममात्राऽतिदारुणाः ॥ प्रसह्य शिर उत्कृत्य निन्युस्ते क्षत्रबंधवः ॥ १२ ॥ रेणुका दुःखशोकार्ता निघ्नंत्यात्मानमात्मना ॥ रामरामेहि ताततेति विचुक्रोशोच्चकैः सती ॥ ॥ १३ ॥ तदुपश्रुत्य दूरस्थो हा रामेत्यार्तवत् स्वनम् ॥ त्वरयाऽऽश्रममासाद्य ददृशे पितरं हतम् ॥ १४ ॥ तद्दुःखरोषामर्षार्तिशोकवेगविमोहितः ॥ हा तात साधो धर्मिष्ठ त्यक्त्वाऽस्मान् स्वर्गतो भवान् ॥ १५ ॥ विलप्यैवं पितुर्देहं निधाय भ्रातृषु स्वयम् ॥ प्रगृह्य परशुं रामः क्षत्रांताय मनो दधे ॥ १६ ॥ गत्वा माहिष्मतीं रामो ब्रह्मघ्नविहतश्रियम् ॥ तेषां स शीर्षभी राजन् मध्ये चक्रे महागिरिम् ॥ १७ ॥ तद्रक्तेन नदीं घोरामब्रह्मण्यभयावहाम् ॥ हेतुं कृत्वा पितृवधं क्षत्रेऽमंगलकारिणि ॥ १८ ॥ त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां प्रभुः ॥ स्यमंतपंचके चक्रे शोणितोदान् ह्रदान्नव ॥ १९ ॥

नन्वतिनिंदितं तत्कथं कृतवांस्तत्राह । पितुर्विद्वानिति पूर्वोक्त एवाभिप्रायः ॥ ८ ॥ सर्वक्षत्रियवधे कारणं वक्तुमाह येऽर्जुनस्य सुता इत्यादिना ॥ ९ ॥ ॥ १० ॥ भगवत्यावेशिता धीर्येन तम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ दुःखादीनां वेगेन विमोहितः ॥ १५ ॥ १६ ॥ ब्रह्मघ्नैर्विहता श्रीर्यस्यास्ताम् । हे राजन्स रामस्तेषां शीर्षभिर्माहिष्मत्या मध्ये महांतं गिरिं चक्रे ॥ १७ ॥ येषां रक्तेनाब्रह्मण्यानां भयावहां घोरां नदीं चक्रे । तथाऽपि सर्वक्षत्रियवधे किं कारणं तदाह हेतुं कृत्वेति सार्धेन । अमंगलकारिण्यन्यायवर्तिनि सति ॥ १८ ॥ त्रिःसप्तकृत्वो रेणुकया दुःखावेशादुरस्ताडनं कृतं ततो रामस्तावत्कृत्वः क्षत्रमुत्सादितवा

संतः पुनरुज्जीवनं प्राप्ता इति स्मृतिशून्यत्वलक्षणं च वरम् ॥ ७ ॥ अत्राक्षिपति—नन्विति । तत् भ्रात्रादिहननम् ॥ ८ ॥ निरपराधायाः पतिव्रताशिरोमणे रेणुकाया वधमादिष्टवतो जमदग्नेरपि तदपराधफलं वधं दर्शयति—येऽर्जुनस्येति ॥ ९ ॥ लब्धच्छिद्राः प्राप्तावसराः ॥ १० ॥ ११ ॥ राममात्रा रेणुकया ॥ १२ ॥ एहि शीघ्रमागच्छ ॥ १३ ॥ तत् मात्रुक्तम् ॥ १४ ॥ तेन पितृमरणजेन दुःखेन । यो रोषादीनां वेगस्तेन विमोहितः ॥ १५ ॥ क्षत्राणामविशेषेणांताय परशुं शत्रुनाशकरं शस्त्रभेदम् ॥ १६ ॥ ब्रह्मघ्नैर्ब्राह्मणं हतवद्भिः । राज्ञामेतत्स्वभावताद्योतनार्थमाह—हे राजन्निति ॥ १७ ॥ तेषाम् अर्जुनात्मजानाम् । तदाह—कारणमाह ॥ ॥ १८ ॥ भारते तु पञ्चह्रदकरणमुक्तं तद्विरोधापहाराय नूयते स्तूयते सूतमागधबंदिभिरिति नवस्तत्संबुद्धौ तथेति । ह्रदानगाधप्रदेशान् "ह्रदोगाधजले देशे घट्टे तीर्थे ध्वनावपि" इति निरुक्तिः ॥ १९ ॥

पितुः कायेन संधाय शिर आदाय बर्हिषि ॥ सर्वदेवमयं देवमात्मानमयजन्मखैः ॥ २० ॥ ददौ प्राचीं दिशं होत्रे ब्रह्मणे दक्षिणां दिशम् ॥ अध्व
र्यवे प्रतीचीं वै उद्गात्रे उत्तरां दिशम् ॥ २१ ॥ अन्येभ्योऽवांतरदिशः कश्यपाय च मध्यतः ॥ आर्यावर्तमुपद्रष्ट्रे सदस्येभ्यस्ततः परम् ॥ २२ ॥
ततश्चावभृथस्नानविधूताशेषकिल्बिषः ॥ सरस्वत्यां ब्रह्मनद्यां रेजे व्यभ्र इवांशुमान् ॥ २३ ॥ स्वदेहं जमदग्निस्तु लब्ध्वा संज्ञानलक्षणम् ॥
ऋषीणां मंडले सोऽभूत् सप्तमो रामपूजितः ॥२४॥ जामदग्न्योऽपि भगवान् रामः कमललोचनः ॥ आगामिन्यंतरे राजन्वर्तयिष्यति वै बृहत् ॥२५॥
आस्तेऽद्यापि महेंद्राद्रौ न्यस्तदंडः प्रशांतधीः ॥ उपगीयमानचरितः सिद्धगंधर्वचारणैः ॥ २६ ॥ एवं भृगुषु विश्वात्मा भगवान् हरिरीश्वरः ॥
अवतीर्य परं भारं भुवोऽहन् बहुशो नृपान् ॥ २७ ॥ गाधेरभून्महातेजाः समिद्ध इव पावकः ॥ तपसा क्षात्रमुत्सृज्य यो लेभे ब्रह्मवर्चसम् ॥२८॥

निति प्रसिद्धिः ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ संज्ञानं स्मृतिस्तदेव लक्षणं चिह्नं यस्य तं स्वदेहं लब्ध्वा स ऋषीणां मंडले सप्तम ऋषिरभूत् ॥ २४ ॥
बृहद्ब्रह्म वेदम् । वेदप्रवर्तकेषु सप्तर्षिष्वेकतमो भविष्यतीत्यर्थः ॥ २५ ॥ २६ ॥ भुवो भारमहन् । भारमेवाह । नृपानिति ॥ २७ ॥ तदेवं प्रसक्तानुप्रसक्तं समाप्य

बर्हिषि यज्ञे। 'स्याद्बर्हिर्यज्ञदर्भयोः' इति धरणिः।आत्मानं स्वरूपभूतं हरिम् । मखैरवांतरेष्टिप्रभेदैः॥२०॥२१॥अन्येभ्य ऋत्विग्भ्यः प्रस्तोत्रादिभ्यः।अवांतरदिशः आग्नेय्यादिविदिशः।मध्यतो मध्यदेशम् । उपद्रष्ट्रे न्यूनातिरिक्तक
र्मद्रष्ट्रे । सदस्येभ्यो विधिदर्शिभ्यः ततो मध्यदेशात् । परम् अवशिष्टदेशम् ॥ २२ ॥ तत ऋत्विगादिभ्यो भूसमर्पणानंतरम् । अवभृथस्नानेत्यत्र स्नानपदं तु विशिष्टवाचकानां पदानां सति विशेषणसमवधाने विशेष्यमात्रपर
तायाः स्वीकारात् 'सकीचकैर्मारुतपूर्णरंध्रैः' इत्यादिवद्विज्ञेयम् ॥ २३ ॥ स्मृतिः पूर्वपरानुसंधानरूपा ॥ २४ ॥ अंतरे सावर्णिमन्वंतरे । 'महति बृहदित्युक्तं, वेदब्राह्मणराजसु' इति निरुक्तिः । इत्यर्थ इति । मुख्यत्वेन
वेदाचार्यो भविष्यतीति भावः ॥ २५ ॥ अद्यापि चिरजीवित्वात् ॥ २६ ॥ २७ ॥ महद्विश्वरचनसमर्थं तेजो यस्य स तथा । तपसा चरुनिष्ठब्राह्ममंत्रप्रभावप्रेरणाचरितानुष्ठानेन । तच्च भारतादौ प्रसिद्धं, तथाहि–( कदा
चिद्वशिष्ठाश्रमं विचरन्विश्वामित्रः ससैन्यमाप । तं च वशिष्ठस्स्वाश्रमागतमातिथ्येनानर्च । स च तदातिथ्यमलौकिकं वीक्ष्य स्वानुचरानाह कथमनेनाकिंचनेनेदृगदृष्टश्रुतचरपदार्थैरस्माकमातिथ्यं कृतं निरीक्ष्यतां भवद्भिरिति ।
ते च तदाज्ञप्ता मुनिकुट्यामनेकद्रव्यं दुहंतीं गां नंदिनीं दृष्ट्वा विश्वामित्रायाचख्युः । स च श्रुत्वा मुनेस्तां धेनुमनेकधेन्वादिविनिमयेन याचमानो यदा तां न प्राप तदा भृत्येभ्यो गृह्यतां मुनेरियं धेनुरित्यादिदेश । तां तै
र्गृह्यमाणां दृष्ट्वा यदा मुनिर्न किंचिदूचे तदा धेन्वोक्तं किमर्थं मामुपेक्षसे मुने इत्युक्तो मुनिराह नंदिनि मे सेना नास्ति यया त्वामितो मोचयानि । इति श्रुत्वा गौराह भगवन्मामाज्ञापयाहमनेकधा सेनां प्रकटयामीत्यु
क्तस्स तथेति तामाह । सा च स्वांगेभ्यो नानाशस्त्रयुतं म्लेच्छादिसैन्यं प्रादुष्कृत्य विश्वामित्रसैन्यं नाशयामास । स च निवृत्य पुनः सेनामादाय वशिष्ठाश्रमं युद्धाय ययौ । पुनरपि गवोद्भूतसैन्येन तथैव तत्सैन्यं नाशि
तमेव । एवं सप्तकृत्वो ययौ । ततश्च कृशाश्वन्यस्तनानाविधशस्त्रास्त्रजालैः स्वयमेव वशिष्ठं पराभवितुम्प्रवृत्तः । तं तथाविधं दृष्ट्वा वशिष्ठेन ब्रह्मदंडोऽग्रे कृतस्तं प्राप्य विश्वामित्रस्य सर्वं शस्त्रास्त्रजालं मुधा बभूव । तदंते
तन्नाशाय वशिष्ठोद्यतं ब्रह्मदंडं स्वयमागत्य ब्रह्मा निवर्त्तयामास । तदा व्रीडितो विश्वामित्र आह 'धिक् च मे क्षत्रियबलं ह्यहो ब्रह्मबलं बलम् । एकेन ब्रह्मदंडेन सर्वास्त्राणि हतानि मे ॥'' इति । अतोहमपि ब्राह्मण एव
स्यामित्युक्त्वा महत्तपश्चकार । ब्रह्मणा तत्तपसा प्रीतेनोक्तोऽपि त्वं ब्राह्मणस्तथापि वशिष्ठाद्यैरनुक्तः पुनःपुनस्तपश्चकार पृथग्लोकरचने प्रवृत्तं वारयितुं ब्रह्मणोक्तो वशिष्ठोऽपि तं ब्रह्मर्षित्वेनोपजुहावेति प्रसिद्धं वाल्मीकी

विश्वामित्रस्य चैवासन् पुत्रा एकशतं नृप ॥ मध्यमस्तु मधुच्छंदा मधुच्छंदस एव ते ॥२९॥ पुत्रं कृत्वा शुनःशेपं देवरातं च भार्गवम् ॥ आजीगर्तं सुतानाह ज्येष्ठ एष प्रकल्प्यताम् ॥ ३० ॥ यो वै हरिश्चंद्रमखे विक्रीतः पुरुषः पशुः ॥ स्तुत्वा देवान् प्रजेशादीन् मुमुचे पाशबंधनात् ॥ ३१ ॥ यो रातो देवयजने देवैर्गाधिषु तापसः ॥ देवरात इति ख्यातः शुनःशेपः स भार्गवः ॥ ३२ ॥ ये मधुच्छंदसो ज्येष्ठाः कुशलं मेनिरे न तत् ॥ अशपत् तान् मुनिः क्रुद्धो म्लेच्छाः भवत दुर्जनाः ॥ ३३ ॥

प्रस्तुतमाह । गाधेरिति । महातेजा विश्वामित्रः ॥ २८ ॥ ते सर्वे लिंगसमवायन्यायेन । प्राणभृत उपदधातीतिवन्मधुच्छंदस एवोच्यंते । तथा च श्रुतिः । "तस्य ह विश्वामित्रस्यैकशतं पुत्रा आसुः पंचाशदेव ज्यायांसो मधुच्छंदसः पंचाशत्कनीयांसः" इत्यादि । तत्र च विश्वामित्रपुत्रेषु भार्गवस्याजीगर्तस्य देवरातस्य ज्येष्ठत्वमवगम्यते । तथा अश्वलायनबौधायनादिभिः कौशिकानां देवरातप्रवरत्वमुक्तम् । प्रवरश्च तस्मिन्नेव वंशेऽवांतरभेदो न तु वंशांतरम् । तथा च स्मृतिः । "एक एव ऋषिर्यावत्प्रवरेष्वनुवर्तते । तावत्समानगोत्रत्वं विना भृग्वंगिरोगणात्" इति ॥ २९ ॥ तत्कुतो भृगुवंशसंभवस्य देवरातस्य कौशिकप्रवरत्वमित्याशंक्य तदुपपादयन्नाह । पुत्रं कृत्वेत्यादि यावत्समाप्ति । पूर्वमजीगर्तसुतत्वे मध्यमत्वेन पितृभ्यां ममतां विहाय विक्रीतत्वात्तस्य कृपया सुतानाह । ज्येष्ठ एष प्रकल्प्यतामिति ॥ ३० ॥ एतदेव स्पष्टयितुं विशिनष्टि य इति द्वाभ्याम् । मुमुचे अमुच्यत ॥ ३१ ॥ भार्गवोऽपि गाधिषु गाधेर्वंशजेषु देवरात इति ख्यातः ॥ ३२ ॥ तत्तस्य ज्येष्ठत्वं कुशलं न मेनिरे । मध्यमस्यानर्थावहत्वं दृष्ट्वा नांगीकृतवंतः । मुनिर्विश्वा

येपि ॥ २८ ॥ ते सर्वे । एकोत्तरशतसंख्याका एव एकश्च शतं चानयोः समाहार एकशतम् । चयनयागे मंत्रेण संस्कृता एकैवेष्टिका प्राणभृच्छब्देनोच्यते तत्र तस्याः प्राधान्येनान्या अपीष्टिकाः प्राणभृत उच्यंते तथा मधुच्छंदसः प्राधान्यात्सर्वे मधुच्छंदस इत्यर्थः । अत्र प्रमाणमाह—तथा चेति । आसुरासन् । मध्यमापेक्षया ज्यायस्त्वकनीयस्त्वमत्रेति । तत्र च तेषु च । यथा देवरातस्य ज्येष्ठत्वं तथाश्वलायनादिभिरुक्तमिति संबन्धः । प्रवरस्य वंशावांतरत्वे स्मृतिमाह—तथा चेति । भृग्वंगिरोगणेष्वेकऋषित्वेपि भिन्नगोत्रता भवतीति ज्ञेयं प्रवरमंजर्यादिभ्यः ॥ २९ ॥ यदुक्तं देवरातस्य प्रवरत्वं तत्कुत इति योऽयं पूर्वमजीगर्त्तेत्यादिहरिश्चंद्रोपाख्याने प्रतिपादितमधस्तात् । तीर्थस्त्विदं पद्यमित्थं व्याचख्यौ । अत्र किंवदंती विश्वामित्रेणोक्तमाजीगर्ताय त्वं मे पुत्रो भव तेनोक्तं यदि सर्वपुत्रज्येष्ठं मां करिष्यसि तदा ते पुत्रो भविष्यामीति तदा तेनोक्तमेवमस्त्विति । ततो विश्वामित्रस्तं पुत्रं कृत्वौरसानाह—एष शुनःशेपो युष्माभिर्ज्येष्ठः प्रकल्प्यतां शुनःशेपशब्दं श्रुत्वा शुनीजातोयं किमित्यन्यथा प्रतीतिं वारयितुमाह—भार्गवमिति । तथापि कथं निवारितेत्यत आह—आजीगर्तमजीगर्तपुत्रम् । तर्हि तव पुत्रत्वे का संगतिरित्यत आह—देवै रातमिति । दत्तकपुत्रत्वेन संबंध इति ॥ ३० ॥ प्रजेशो ब्रह्मा पाशबंधनात्पशुत्वेन बल्यर्थं वंशे बद्ध्वा स्थापितस्तद्बंधनादित्यर्थः । मुमुचे कर्मकर्त्तरि प्रयोगः । "कस्य नूनं कतमस्यामृतानां मनामहे चारुदेवस्य नाम" इत्यारभ्य "अस्य रयिं निधारये" इत्यंतवेदवाक्येन स्तुत्वेत्यर्थः ॥ ३१ ॥ रातो रक्षितस्तैरेव । 'गाधिसुताय सः' इति पाठे स दत्त इत्यर्थः ॥ ३२ ॥ मध्यमस्य मधुछंदसोऽनर्थावहत्वं गोत्रांतरस्य निजगोत्रप्रवेशदानोत्सुकत्वेनानर्थकरत्वं दृष्ट्वा । यद्वा—मध्यमेन मधुच्छंदसा वयं ज्येष्ठाः संतोऽनेन कनिष्ठाः स्यामो यदि मध्यमो न स्यात्तदा तु सर्वे वयं

स होवाच मधुच्छंदाः सार्धं पंचाशता ततः ॥ यन्नो भवान् संजानीते तस्मिंस्तिष्ठामहे वयम् ॥ ३४ ॥ ज्येष्ठं मंत्रदृशं चक्रुस्त्वामन्वंचो वयं स्म हि ॥ विश्वामित्रः सुतानाह वीरवंतो भविष्यथ ॥ ये मानं मेऽनुगृह्णंतो वीरवंतमकर्त माम् ॥ ३५ ॥ एष वः कुशिका वीरो देवरातस्तमन्वित ॥ अन्ये चाष्टकहारीतजयक्रतुमदादयः ॥ ३६ ॥ एवं कौशिकगोत्रं तु विश्वामित्रैः पृथग्विधम् ॥ प्रवरांतरमापन्नं तद्धि चैवं प्रकल्पितम् ॥ ३७ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ श्रीशुक उवाच ॥ यः पुरूरवसः पुत्र आयुस्तस्याभवन्सुताः ॥ नहुषः क्षत्रवृद्धश्च रजी रंभश्च वीर्यवान् ॥ १ ॥

मित्रः ॥ ३३ ॥ पंचाशता कनिष्ठैः साकं स मध्यमो मधुच्छंदा उवाच । नोऽस्माकं यज्ज्येष्ठत्वं कनिष्ठत्वं वा भवान्पिता संजानीते मन्यते तस्मिन्वयं तिष्ठामेति ॥ ३४ ॥ एवमुक्त्वा मंत्रदृशम् "कस्य नूनं कतमस्यामृतानाम्" इत्यादिमंत्राणां द्रष्टारं शुनःशेपं ज्येष्ठं चक्रुः । तदाह । वयं सर्वे त्वामन्वंचः स्म हि अनुगंतारः कनिष्ठाः स्म इत्यर्थः । ततः प्रसन्नो विश्वामित्रस्तान्सुतानाह । वीरवंतः पुत्रवंतो भविष्यथ । ये यूयं मे मानं पूज्यत्वमनुगृह्णंतोऽनुवर्तमानाः संतो मां वीरवंतं पुत्रवंतमकर्त कृतवंत इत्यर्थः ॥ ३५ ॥ हे कुशिका एष देवरातो वो युष्मदीयः कौशिक एव । यतो वीरो मत्पुत्रस्तमेनमन्वितानुगच्छत । अन्ये चाष्टकादयस्तस्य सुता आसन् ॥ ३६ ॥ उपसंहरति । एवमिति । एके शप्ता एकेऽनुगृहीता अन्यस्तु पुत्रत्वेन स्वीकृत इत्येवं कौशिकगोत्रं पृथग्विधं नानाप्रकारं जातं तच्च प्रवरांतरमापन्नं प्राप्तम् । हि यस्मादेवं देवरातज्येष्ठत्वेन तत्प्रकल्पितम् ॥ ३७ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां षोडशोऽध्यायः ॥ १६ ॥ आयोः सप्तदशे त्वैलज्येष्ठपुत्रस्य पंचसु ॥ सुतेषु क्षत्रवृद्धादिचतुर्णां वंशवर्णनम् ॥ १ ॥ इह श्रीकृष्णावतारप्रस्तावाय वंशानुक्रमणमैलादिक्रमेण प्रक्रांतमिति यस्य वंशे कृष्णावतारस्तस्य वंशोऽतिविततत्वादंते निरूप्यते । अतः पुरूरवसः पुत्राणां पंचानां कनिष्ठान

तुल्या एवातो मध्यमोऽस्माकमनर्थकर इति वा । म्लेच्छत्वं च " गोमांसभक्षको यश्च वेदवाह्यं च भाषते । सर्वाचारपरिभ्रष्टो म्लेच्छ इत्यभिधीयते ॥" इति हरिदीक्षितः । दुर्गता जना ये स्पर्शादिपरिहारेण ते दुर्जनाः ॥ ३३ ॥ ततः शापश्रवणोत्तरम् । हेत्यनेन ब्राह्मणानुकरणम् । स विश्वामित्रः । पंचाशता सार्द्धं मधुच्छंदसमुवाच । तदुत्तरं स होवाचेति । तिष्ठामहे "प्रकाशनस्थेयाख्ययोश्च" इत्यात्मनेपदम् ॥ ३४ ॥ इत्यर्थ इति । त्वदाज्ञया ज्येष्ठा अपि कनिष्ठाः स्यामेति भावः । ततः पुत्रोक्तिश्रवणात् । तान् आज्ञास्वीकर्तॄन् । इत्यर्थ इति । सत्यपि बहुपुत्रत्वे पुनरीर्षात्यागेनापुत्रमपि पुत्रं मानयामासुरिति भावः ॥ ३५ ॥ आदिना गालवादिग्रहः ॥ ३६ ॥ कौशिकगोत्रप्रवरा अप्युक्ताः प्रवरग्रंथेषु 'कौशिकानां विश्वामित्रदेवरातकौशिका' इति ॥ ३७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे षोडशोऽध्यायः ॥ १६ ॥ आयोः तत्राद्यः ( १ ) नन्विदं वंशनिरूपणं किमर्थं कृतमिति चेदाह–इदमिति । यस्य यदोः । यतस्तस्यांते निरूपणमतो हेतोः प्रथमस्य आयोः । य उक्तस्तस्येत्यन्वयः । उक्तमर्थमन्यत्रातिदिशति–एवमिति ।

अनेना इति राजेंद्र शृणु क्षत्रवृधोऽन्वयम् ॥ क्षत्रवृद्धसुतस्यासन्सुहोत्रस्यात्मजास्त्रयः ॥ २ ॥ काश्यः कुशो गृत्समद इति गृत्समदादभूत् ॥ शुनकः शौनको यस्य बह्वृचप्रवरो मुनिः ॥ ३ ॥ काश्यस्य काशिस्तत्पुत्रो राष्ट्रो दीर्घतमःपिता ॥ धन्वंतरिर्दैर्घतम आयुर्वेदप्रवर्तकः ॥ ४ ॥ यज्ञभुग्वासुदेवांशः स्मृतमात्रार्तिनाशनः ॥ तत्पुत्रः केतुमानस्य जज्ञे भीमरथस्ततः ॥ ५ ॥ दिवोदासो द्युमांस्तस्मात्प्रतर्दन इति स्मृतः ॥ स एव शत्रुजिद्वत्स ऋतध्वज इतीरितः ॥ तथा कुवलयाश्वेति प्रोक्तोऽलर्कादयस्ततः ॥ ६ ॥ षष्टिवर्षसहस्राणि षष्टिवर्षशतानि च ॥ नालर्कादपरो राजन्मेदिनीं बुभुजे युवा ॥ ७ ॥ अलर्कात्संततिस्तस्मात्सुनीथोऽथ सुकेतनः ॥ धर्मकेतुः सुतस्तस्मात्सत्यकेतुरजायत ॥ ८ ॥ धृष्टकेतुः सुतस्तस्मात्सुकुमारः क्षितीश्वरः ॥ वीतिहोत्रस्य भर्गोऽतो भार्गभूमिरभून्नृपः ॥ ९ ॥

वंशानुक्त्वेदानीं प्रथमस्य वंशमाह । य इति । एवं नहुषययातियदुप्रभृतिष्वपि द्रष्टव्यम् ॥ १ ॥ क्षत्रवृधः क्षत्रवृद्धस्य ॥ २ ॥ ३ ॥ दीर्घतमसः पिता ॥ ४ ॥ स्मृतमात्र एवार्तिरोगदुःखं नाशयतीति तथा ॥ ५ ॥ प्रतर्दनादिशब्दवाच्याद्द्युमतः सकाशादलर्कादयः ॥ ६ ॥ ७ ॥ अलर्कात्संततिसंज्ञः ॥ ८ ॥ सत्यकेतोर्धृष्टकेतुस्तस्मात्सुकुमारस्तस्माद्वी

यथा विस्तृतवंशनिरूपणमिहांते प्रतिज्ञातं स्वल्पानां प्रथमं निरूपणं कृतमियमेव रीतिर्नहुषादिवंशनिरूपणेऽपि ज्ञेया सूचीकटाहन्यायेन ॥ १ ॥ वृद्धवृत्-(ध्) शब्दौ पर्यायाविति मत्वाह-क्षत्रवृध इति ॥ २ ॥ ननु पुरूरवःपौत्रस्य क्षत्रवृधोन्वये जातेन द्वादशस्कन्धे मार्कण्डेयोपाख्याने शौनकेन "स वा अस्मत्कुलोत्पन्नः कल्पेऽस्मिन्भार्गवर्षभ" इत्यनेन स्वस्य भार्गवत्वं कथमुक्तमिति चेत्रदेदमवधेयं-गृत्समदो राजा प्रतिपक्षनृपभीतो भार्गवाश्रममाविश्य भृगुं प्राह भगवन्मत्पृष्ठलग्नान्मत्प्रतिपक्षनृपान्मां रक्ष मद्वंशक्षयंकरात्तच्छ्रुत्वा तं मा भैरित्याश्वास्याश्रमाद्बहिरागत्य तं नत्वा स विपक्षनृपो भगवन्मद्विरोधिनं स्वाश्रमप्रविष्टं नृपं मह्यं देहीत्याकार्ण्य मुनिस्तमिह सर्वे ब्राह्मणा एव सन्तीत्यूचे । तदाकर्ण्य तेनोक्तं यदीह सर्वे ब्राह्मणा एव तर्हि जितं मया तज्जातित्याजनादित्युक्त्वा मुनिं नत्वा स गतवांस्तदा गृत्समदो भार्गववचनाद्भार्गवत्वमापेति महाभारते मार्कंडेये च प्रथितं, वाक्यानि विस्तरभिया नो लिखितानि । अत एव शौनकं प्रति हे भार्गव हे भृगूद्वहेति सम्बुद्धिर्न विरुद्धेति ॥ ३ ॥ तत्पुत्रः काशिपुत्रः । अयमेव समुद्रादमृतं गृहीत्वा प्रादुर्बभूवेत्यपि ज्ञेयं, केचित्तमन्यमाहुरिति ॥ ४ ॥ तत्पुत्रः धन्वंतरिपुत्रः । अस्य केतुमतः । ततो भीमरथात् ॥ ५ ॥ तस्माद्दिवोदासात् । प्रकर्षेण दुष्टनाशकत्वात्प्रतर्दनः । 'तृद-हिंसायामनादरे च' दुष्टानादरकत्वाद्वा । स एव द्युमानेवेति प्रतर्दनादिपंचभिरन्वेति । लोकप्रियत्वाद्वत्स इति । सत्यपरत्वादृतध्वज इति । तथा प्रतर्दनादिवत्स एवेति योज्यम् । कुर्भूमिस्तदेव वलयं कंकणाकारत्वाद्भूमंडलस्य अश्नुते यशसा व्याप्नोति राज्यत्वेनाश्नाति भुंक्ते वेति कुवलयाश्वः । संधिरार्षः ॥ ६ ॥ षट्षष्टिसहस्राणि । युवा सन् । अपरोलर्कभिन्नः ॥ ७ ॥ तस्मात्संततेः । अथ सुनीथात् । तस्मात् सुकेतनात् । पुनस्तस्माद्धर्मकेतोः ॥ ८ ॥ ९ ॥

इतीमे काशयो भूपाः क्षत्रवृद्धान्वयायिनः ॥ रंभस्य रभसः पुत्रो गंभीरश्चाक्रियस्ततः ॥ १० ॥ तस्य क्षेत्रे ब्रह्म जज्ञे शृणु वंशमनेनसः ॥ शुद्धस्ततः शुचिस्तस्मात्त्रिककुद्धर्मसारथिः ॥ ११ ॥ ततः शांतरयो जज्ञे कृतकृत्यः स आत्मवान् ॥ रजेः पंच शतान्यासन्पुत्राणाममितौजसाम् ॥ १२ ॥ देवैरभ्यर्थितो दैत्यान्हत्वेंद्रायाददाद्दिवम् ॥ इंद्रस्तस्मै पुनर्दत्त्वा गृहीत्वा चरणौ रजेः ॥ १३ ॥ आत्मानमर्पयामास प्रह्रादाद्यरिशंकितः ॥ पितर्युपरते पुत्रा याचमानाय नो ददुः ॥ १४ ॥ त्रिविष्टपं महेंद्राय यज्ञभागान्समाददुः ॥ गुरुणा हूयमानेऽग्नौ बलभित्तनयान्रजेः ॥ १५ ॥ अवधीद्भ्रंशितान्मार्गान्न कश्चिदवशेषितः ॥ कुशात्प्रतिः क्षात्रवृद्धात्संजयस्तत्सुतो जयः ॥ १६ ॥ ततः कृतः कृतस्यापि जज्ञे हर्यवनो नृपः ॥ सहदेवस्ततोऽहीनो जयसेनस्तु तत्सुतः ॥ १७ ॥ संकृतिस्तस्य च जयः क्षत्रधर्मा महारथः ॥ क्षत्रवृद्धान्वया भूपाः शृणु वंशं च नाहुषात् ॥ १८ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे चंद्रवंशानुवर्णने सप्तदशोऽध्यायः ॥ १७ ॥

दिहोत्रस्तस्य भर्गः । अतो भर्गोद्भार्गभूमिः ॥ ९ ॥ काशयः काशेर्वंश्याः काशेः प्रपितामहस्य क्षत्रवृद्धस्यान्वयमयंते यांतीति तथा ॥ १० ॥ ततोऽनेनसः शुद्धो जज्ञे ॥ ११ ॥ कृतकृत्यः सः यत आत्मवान् ज्ञानी । अतः पुत्रोत्पादनं न कृतवानित्यर्थः ॥ १२ ॥ १३ ॥ १४ ॥ तेषां मतिभ्रंशाय गुरुणा बृहस्पतिनाऽभिचारविधानेनाग्नौ हूयमाने सति ॥ १५ ॥ सिंहावलोकनेनाह । क्षात्रवृद्धात्क्षत्रवृद्धपौत्रात्कुशात्प्रतिः । प्रतेः संजयः ॥ १६ ॥ १७ ॥ १८ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां सप्तदशोऽध्यायः ॥ १७ ॥

आयुचतुर्थपुत्रस्य रंभस्य वंशमाह—रंभस्येति । तत इत्यावृत्त्या योज्यम् । रभसाद्गंभीरः गंभीरात् अक्रियः ॥ १० ॥ तस्य अक्रियस्य । क्षेत्रे भार्यायाम् । ब्रह्म ब्राह्मणजातिः । अनेनस आयुपंचमपुत्रस्य । तस्माच्छुद्धात् । ततस्त्रिककुत् । ततो धर्मसारथिः । केचिद्धर्मसारथिरिति त्रिककुद्विशेषणमाहुः ॥ ११ ॥ ततो धर्मसारथेः । इत्यर्थ इति । ज्ञातसंसारस्वरूपत्वाद्विरक्तोऽभूदिति भावः । आयुतृतीयपुत्रस्य वंशमाह—रजेरिति । अमितौजसामतिबलवताम् ॥ १२ ॥ एकदा देवासुरसंग्रामे प्रवृत्ते उभयोर्ब्रह्माणं प्रति जयपराजयप्रश्ने ब्रह्मणोक्तम् "यतो रजिर्धृतिस्तत्र श्रीश्च तत्र यतो रजिः । श्रीश्च धृतिश्च यत्रैव तत्र धर्मस्तथा जयः ॥" इत्येवं ब्रह्मवाक्यं श्रुत्वा रजेः पार्श्वे देवा दैत्याश्च गत्वोचुः त्वमस्मत्सहायो भवेति । स चाह यो मामिंद्रं करिष्यति तत्सहायो भविष्यामि । दैत्यैरुक्तं न वयं सैंहिकेयदौहित्रं त्वामिंद्रं करिष्यामः किं तु प्रह्लादमिंद्रं करिष्यामः । देवैरुक्तं त्वामेवेति । ततो देवानां सहायं कृत्वा दैत्यान् विजित्येंद्रो बभूव । इन्द्रश्च रजेः पुत्रतां जगामेति हरिवंशे प्रसिद्धां कथामाश्रित्याह—देवैरिति । तस्मै रजये ॥ १३ ॥ अर्पयामास रजिपुत्रत्वमाजगाम । उपरते मृते । याचमानाय अहमपि रजेः पुत्रोऽतो मामेवेंद्रं स्थापयतेति प्रार्थयते इंद्राय त्रिविष्टपं स्वर्गं नो ददू रजेः पुत्रा इति परेणान्वयः ॥ १४ ॥ गुरुणांगिरसेन ॥ १५ ॥ मार्गाद्धर्ममार्गात् । बृहस्पतिना नास्तिकमतप्रवृत्तिजनकस्वनिर्मितसूत्रोपदेशेन धर्माद्भ्रंशितानिंद्रोऽवधीदिति हरिवंशे । तत्सुतः संजयसुतः ॥ १६ ॥ ततो जयात् । ततो हर्यवनात् । तत्सुतोऽहीनसुतः ॥ १७ ॥ तस्य जयसेनस्य । पुनस्तस्य संस्कृतेः । तस्य पुनर्जयस्य । महारथ इति क्षत्रधर्मविशेषणम् । भूपा उक्ताः । नाहुषात् नहुषपुत्राद्ययातेरारभ्य 'नाहुषम्' इति पाठे तु स्पष्टोर्थः ॥ १८ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे सप्तदशोऽध्यायः ॥ १७ ॥

श्रीशुक उवाच ॥ यतिर्ययातिः संयातिरायतिर्वियतिः कृतिः ॥ षडिमे नहुषस्यासन्निंद्रियाणीव देहिनाम् ॥ १ ॥ राज्यं नैच्छद्यतिः पित्रा दत्तं तत्परिणामवित् ॥ यत्र प्रविष्टः पुरुष आत्मानं नावबुध्यते ॥ २ ॥ पितरि भ्रंशिते स्थानादिंद्राण्या धर्षणाद्द्विजैः ॥ प्रापितेऽजगरत्वं वै ययातिरभवन्नृपः ॥ ३ ॥ चतसृष्वादिशद्दिक्षु भ्रातॄन् भ्राता यवीयसः ॥ कृतदारो जुगोपोर्वीं काव्यस्य वृषपर्वणः ॥ ४ ॥ राजोवाच ॥ ब्रह्मर्षिर्भगवान् काव्यः क्षत्रबंधुश्च नाहुषः ॥ राजन्यविप्रयोः कस्माद्विवाहः प्रतिलोमकः ॥ ५ ॥ श्रीशुक उवाच ॥ एकदा दानवेंद्रस्य शर्मिष्ठा नाम कन्यका ॥ सखीसहस्रसंयुक्ता गुरुपुत्र्या च भामिनी ॥ ६ ॥ देवयान्या पुरोद्याने पुष्पितद्रुमसंकुले ॥ व्यचरत्कलगीतालिनलिनीपुलिनेऽबला ॥ ७ ॥ ता जलाशयमासाद्य कन्याः कमललोचनाः ॥ तीरे न्यस्य दुकूलानि विजह्रुः सिंचतीर्मिथः ॥ ८ ॥ वीक्ष्य व्रजंतं गिरिशं सह देव्या वृषस्थितम् ॥ सहसोत्तीर्य वासांसि पर्यधुर्व्रीडिताः स्त्रियः ॥ ९ ॥ शर्मिष्ठाऽजानती वासो गुरुपुत्र्याः समव्ययत् ॥ स्वीयं मत्वा प्रकुपिता देवयानीदमब्रवीत् ॥१०॥ अहो निरीक्ष्यतामस्या दास्याः कर्म ह्यसांप्रतम् ॥ अस्मद्धार्यं धृतवती शुनीव हविरध्वरे ॥ ११ ॥ यैरिदं तपसा सृष्टं मुखं पुंसः परस्य ये ॥ धार्यते यैरिह ज्योतिः शिवः पंथाश्च दर्शितः ॥ १२ ॥

अष्टादशे ययातेस्तु नाहुषस्य कथोच्यते ॥ यस्य पंचसु पुत्रेषु कनीयानग्रहीज्जराम् ॥ १ ॥ १ ॥ तस्य राज्यस्य परिणाममनर्थावहत्वं वेत्तीति तथा । तत्र हेतुः । यत्रेति ॥ २ ॥ स्थानात्स्वर्गात । द्विजैरगस्त्यादिभिः ॥ ३ ॥ यवीयसो भ्रातॄनादिशत । काव्यस्य शुक्रस्य वृषपर्वणश्च कन्याभ्यां कृतदारः सन् ॥ ४ ॥ ५ ॥ नात्र प्रतिलोमतादोष ईश्वरघटनादिति दर्शयन्कथामाह । एकदेत्यादिना प्रतिजग्राह तद्वच इत्यंतेन । गुरोः शुक्रस्य पुत्र्या देवयान्या च व्यचरदिति द्वयोरन्वयः ॥ ६ ॥ कलगीता अलयो येषु तानि नलिनीपुलिनानि यस्मिंस्तस्मिन्पुरोद्याने । अबला शर्मिष्ठा ॥ ७ ॥ सिंचतीः सिंचंत्यः ॥ ८ ॥ ९ ॥ अजानती स्वीयं मत्वा गुरुपुत्र्या वासः समव्ययत्पर्यधात् ॥ १० ॥ असांप्रतमन्याय्यम् ॥ ११ ॥ अन्यायमेव ब्राह्मणोत्कर्षवर्णनेन व्यनक्ति यैरिति त्रिभिः । ये ब्राह्मणाः परस्य पुंसो मुखं मुखा

यस्य ययातेः । कनीयान्पूरुः ( १ ) ॥ १ ॥ तात्रानर्थावहत्वे । यत्र राज्ये ॥ २ ॥ पितारि नहुषे । धर्षणात् मैथुनार्थं प्रार्थनात् ॥ ३ ॥ चकारः कन्याभ्यामिति चात्र शेषः । कृतदारः कृतोद्वाहः । दारपदमत्र दारकर्मलक्षकम ॥४॥ प्रातिलोम्येनोद्वहनमसंगतं मत्वा पृच्छति–ब्रह्मर्षिरिति । भगवानिति ब्रह्मर्षिष्वप्याधिक्यमाह । प्रातिलोमको विपरीतकः ॥५॥ प्रातिलोम्येपि दोषाभावमाह—नात्रेति । अत्र विवाहे । दानवेंद्रस्य वृषपर्वणः ॥६॥ नलिनीपुलिनानि । सकमलसरसीतोयोत्थितसैकततटानि । पुरोद्याने नगरोपकंठवने ॥ ७ ॥ सिंचंत्योऽन्योन्यं जलक्षेपं कुर्वंत्यः ॥ ८ ॥ सहसा झटिति । पर्यधुराच्छादितवत्यः ॥ ९ ॥ इदं वक्ष्यमाणम् ॥ १० ॥ दास्याः दासीतुल्यायाः । असांप्रतमनुचितम् । “चिरे चानुचिते प्रोक्तमसांप्रतमिति ध्वनिः” इति निरुक्तिः । अध्वरे यज्ञे । हविर्देवदेयचरुभागम् ॥ ११ ॥ यैर्ब्राह्मणैर्मरीच्यादिभिः । इत्यर्थ इति । निजाशनद्वारा भगवतस्तृप्ति

यान् वंदंत्युपतिष्ठंते लोकनाथाः सुरेश्वराः ॥ भगवानपि विश्वात्मा पावनः श्रीनिकेतनः ॥१३॥ वयं तत्रापि भृगवः शिष्योऽस्या नः पिताऽसुरः ॥ अस्मद्धार्यं धृतवती शूद्रो वेदमिवासती ॥१४॥ एवं शपंतीं शर्मिष्ठा गुरुपुत्रीमभाषत ॥ रुषा श्वसंत्युरंगीव धर्षिता दष्टदच्छदा ॥१५॥ आत्मवृत्तम विज्ञाय कत्थसे बहु भिक्षुकि ॥ किं न प्रतीक्षसेऽस्माकं गृहान् बलिभुजो यथा ॥ १६ ॥ एवंविधैः सुपरुषैः क्षिप्त्वाचार्यसुतां सतीम् ॥ शर्मिष्ठा प्राक्षिपत्कूपे वास आदाय मन्युना ॥१७॥ तस्यां गतायां स्वगृहं ययातिर्मृगयां चरन् ॥ प्राप्तो यदृच्छया कूपे जलार्थी तां ददर्श ह ॥ १८ ॥ दत्त्वा स्वमुत्तरं वासस्तस्यै राजा विवाससे ॥ गृहीत्वा पाणिना पाणिमुज्जहार दयापरः ॥ १९ ॥ तं वीरमाहौशनसी प्रेमनिर्भरया गिरा ॥ राजंस्त्वया गृहीतो मे पाणिः परपुरंजय ॥ २० ॥ हस्तग्राहोऽपरो मा भूद्गृहीतायास्त्वया हि मे ॥ एष ईशकृतो वीर संबंधो नौ न पौरुषः ॥ २१ ॥ यदिदं कूपमग्नाया भवतो दर्शनं मम ॥ न ब्राह्मणो मे भविता हस्तग्राहो महाभुज ॥ कचस्य बार्हस्पत्यस्य शापाद्यमशपं पुरा ॥ २२ ॥

दुत्पन्नत्वेन तृप्तिद्वारत्वेन श्रेष्ठा इत्यर्थः । ज्योतिर्ब्रह्म । पंथा वेदमार्गः ॥ १२ ॥ १३ ॥ तदेवं ब्राह्मणमात्रमेव तावत्पूज्यं तत्रापि भृगवः । अस्याश्च पिता नः शिष्यः । एवं सत्यप्यस्माभिर्धार्यं वास इयमसती धृतवती ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ निषिद्धोऽयं प्रतिलोमसंबंध इति चेत्तत्राह । एष इति ॥ २१ ॥ ब्राह्मणमेव त्वं वृणीहि किमनेनाग्रहेणेति चेत्तत्राह । न ब्राह्मण इति । बृहस्पतेः सुतः कचः शुक्रान्मृतसंजीवनीं विद्यामध्यगात् । तदा च देवयानी तं पतिं चकमे । स च गुरुपुत्री मम पूज्येति न तामुदवहत् । ततश्च कुपिता सती तवेयं विद्या निष्फला भवत्विति तं शशाप । स च तव ब्राह्मणः पतिर्न भवेदिति तां शशाप । तदेतदाह ।

जनकत्वेन न ब्राह्मणसमं किंचिदस्तीति भावः । ते ब्रह्मपर्यः आत्मसाक्षात्कारोस्ति येषामित्यर्थः ॥ १२ ॥ यान् ब्राह्मणान् । वंदंति वंदंते लोकनाथा जगत्प्रार्थ्याः । सुरेश्वरा इंद्राद्याः । अपिना किमन्ये इत्युक्तम् । यद्वा–विश्वात्मापि पावनोऽपि श्रीनिकेतनोऽपीति । एतेन पूज्यतमत्वमुक्तम् ॥ १३ ॥ तत्रापि ब्राह्मणेष्वपि । भृगवोऽतितपस्विनो वा यत्पादताडनं सर्वेश्वरेणापि सोढं तद्वंश्याः । अस्याः शर्मिष्ठायाः । एवं सत्यपि सर्वथास्माकमुत्कर्षे ज्ञातेऽपि । असती अनुत्कृष्टा ॥ १४ ॥ शपंतीमाक्रोशंतीम् । धर्षिता तुच्छीकृता । दष्टदच्छदा दंताक्रांताधरा । उरंगी सर्पिणी ॥ १५ ॥ आत्मवृत्तं निजजीवनम् । कत्थसे व्यर्थं वदसि । बलिभुजः काकाः श्वानो वा ॥ १६ ॥ सुपरुषैरतिकठोरोक्तिभिः । क्षिप्त्वा तिरस्कृत्य ॥ १७ ॥ तस्यां शर्मिष्ठायाम् । तां शर्मिष्ठाक्षिप्तां देवयानीम् ॥ १८ ॥ उत्तरमुत्तरीयम् । तस्यै कूपपतितदेवयान्यै । विवाससे नग्नायै ॥ १९ ॥ तं ययातिम् । औशनसी शुक्रात्मजा । निर्भरः पूर्णः । "गुरौ पूर्णे लघौ पालयितारि निर्भरः स्मृतः" इति निरुक्तिः ॥ २० ॥ ईशकृतो दैवकृतो नारायणकृतो वा । पौरुषः पुरुषकारकृतः । सर्वस्यैवं संबंधस्येशकृतत्वान्न कस्यापि पापं स्यात् । तत्रेदमवधेयम्–न हि भगवदेकाश्रयाणामधर्मे मतिप्रवेशः कदापि तेषां यदि तत्र प्रवृत्तिः सा धर्मरूपैव ये मामेवात्मानं समर्पयंति न तेषां मतिमधर्मे प्रेरयामीति सिद्धांतितं भगवता श्रीगीतादौ ॥ २१ ॥ तदा विद्यासमाप्तौ । तं कचम् । चकमे इयेष । स च कचः । तां देवयानीम् । ततो विवाहानंगीकारात् । सा देवयानी । तं कचम् । स च कचश्च । तां देवयानीम् । तदेतद्वृत्तमभि

ययातिरनभिप्रेतं दैवोपहतमात्मनः ॥ मनस्तु तद्गतं बुद्ध्वा प्रतिजग्राह तद्वचः ॥२३॥ गते राजनि सा वीरे तत्र स्म रुदती पितुः ॥ न्यवेदयत्ततः सर्वमुक्तं शर्मिष्ठया कृतम् ॥ २४ ॥ दुर्मना भगवान् काव्यः पौरोहित्यं विगर्हयन् ॥ स्तुवन् वृत्तिं च कापोतीं दुहित्रा स ययौ पुरात् ॥ २५ ॥ वृषपर्वा तमाज्ञाय प्रत्यनीकविवक्षितम् ॥ गुरुं प्रसादयन् मूर्ध्ना पादयोः पतितः पथि ॥ २६ ॥ क्षणार्धमन्युर्भगवाञ्छिष्यं व्याचष्ट भार्गवः ॥ कामोऽस्याः क्रियतां राजन्नैनां त्यक्तुमिहोत्सहे ॥ २७ ॥ तथेत्यवस्थिते प्राह देवयानी मनोगतम् ॥ पित्रा दत्ता यतो यास्ये सानुगा यातु मामनु ॥ ॥ २८ ॥ स्वानां तत्संकटं वीक्ष्य तदर्थस्य च गौरवम् ॥ देवयानी पर्यचरत् स्त्रीसहस्रेण दासवत् ॥ २९ ॥ नाहुषाय सुतां दत्त्वा सह शर्मिष्ठयोशनाः ॥ तमाह राजञ्शर्मिष्ठामाधास्तल्पे न कर्हिचित् ॥ ३० ॥

यमहमशपं तस्य शापात् ॥ २२ ॥ अशास्त्रीयत्वादनभिप्रेतमपि दैववोपहतं प्रापितं बुद्ध्वा तद्गतं तस्यां सकामं स्वं मनश्च बुद्ध्वा न ह्यधर्मे मदीयं मनः प्रविशेदिति तस्या वचः प्रतिजग्राहांगीकृतवान् ॥ २३ ॥ शर्मिष्ठासंबंधोऽपि दैववशादेवाभवदिति दर्शयन्नाह गते राजनीति नवभिः । उक्तं भिक्षुकीत्यादि । कृतं कूपे प्रक्षेपादि ॥ २४ ॥ कापोतीमुंछवृत्तिम् ॥ २५ ॥ प्रत्यनीका देवास्ते विवक्षिता जयं प्रापणीया इत्यभिप्रेतं यस्य तथाभूतं ज्ञात्वा । प्रत्यनीकानां विवक्षितमिति वा ॥२६॥२७॥ सानुगा सखीसहिता शर्मिष्ठा मामनुयात्विति ॥ २८ ॥ तत्तस्मान्निर्गताच्छुक्रात्संकटं वीक्ष्य । तत्तस्मादवस्थितादर्थस्य प्रयोजनस्य गौरवं च वीक्ष्य ॥ २९ ॥ तल्पेनाधाः नोपगच्छे

प्रेत्याह–यं कचम् ॥ २२ ॥ अशास्त्रीयत्वान्निषिद्धत्वात् । अनभिप्रेतमवांछितम् । दैवेनेशेनोपहतम् । तस्या देवयान्याः । बाल्यमारभ्य कदापि मेऽधर्मे प्रवृत्तिर्नाभूत् । तदेकशरणस्य मे मन ईशोऽपि न प्रवेशयेदिति 'धर्मस्य सूक्ष्मा गतिः' इति निश्चित्य नायमधर्मो भविष्यतीति तस्या वचो जग्राहेति संदर्भः ॥ २३ ॥ राजनि ययातौ । तत्र तदा । सा देवयानी । ततः कूपोत्तारणानंतरम् । ततस्तया वा शर्मिष्ठया । यद्वा–तते राजनीति योज्यम् ॥ २४ ॥ पौरोहित्यं पुरोहितत्वम् । कपोतः पक्षी तद्वत्संग्रहयाचनादिशून्यां वृत्तिमित्यभिप्रेत्याह–वृत्तिमिति । दुहित्रा सह । स काव्यः । २५ ॥ तं शुक्रम् । प्रत्यनीकाः शत्रवोऽर्थाद्दैत्यानामिति, ते च देवा एव विवक्षिता विवक्षाविषया विवक्षा च यूयं मया जयं प्रापणीया इत्येवंरूपा बोध्या । भार्गवाभिप्रायस्य दुर्ज्ञेयत्वं मत्वाह–प्रत्यनीकानामिति । विवक्षितं त्यक्तदैत्यस्त्वमस्माकं जयमाशास्वेत्येवंरूपं वक्तुमिष्टम् ॥ २६ ॥ "प्रणिपातप्रतीकारः संरंभो हि महात्मनाम्" इत्यभिप्रायेणाह–क्षणार्द्धमन्युः अग्निस्थदुग्धोद्गमसमकोपः । शिष्यं वृषपर्वाणम् । अस्या देवयान्याः । कामोऽभिलषितः । एनां मातृहीनाम् ॥ २७ ॥ तथेत्यवस्थिते यदस्या अभीष्टं तत्करिष्ये इत्युक्त्वा वृषपर्वणि स्थितवति सति । मनोगतं स्वाभीष्टम् । तदेवाह–पित्रेति । यतो यस्मै वराय यास्ये प्राप्स्यामि तमेव वरम् अनु यातु दासी भूत्वा गच्छतु ॥ २८ ॥ निर्गतात् गृहं विहाय गतात् । संकटं यद्यहमेनां नानुगमिष्यामि तदा गुरुद्रोहान्मत्पितृकुलं नंक्ष्यतीत्येवंरूपं क्लेशम् । स्वानां निजपितृकुलादीनाम् । अवस्थितान्मत्पितृगेहस्थिताच्चस्माच्छुक्रात् । प्रयोजनस्य गुरुप्रसादपितृकुलवृद्धिरूपस्य । गौरवमाधिक्यम् । स्त्रीसहस्रेण सखीसहस्रेण । दासवद्दासीवत् । क्लीबभावश्छांदसः ॥ २९ ॥ नाहुषाय ययातये । तं ययातिम् ! तल्पे शय्यायाम् । इत्यर्थ इति । अनया मैथुनं न कार्य

विलोक्यौशनसीं राजञ्शर्मिष्ठा सप्रजां क्वचित् ॥ तमेव वव्रे रहसि सख्याः पतिमृतौ सती ॥ ३१ ॥ राजपुत्र्यार्थितोऽपत्ये धर्मं चावेक्ष्य धर्मवित् ॥ स्मरञ्शुक्रवचः काले दिष्टमेवाभ्यपद्यत ॥ ३२ ॥ यदुं च तुर्वसुं चैव देवयानी व्यजायत ॥ द्रुह्युं चानुं च पूरुं च शर्मिष्ठा वार्षपर्वणी ॥ ३३ ॥ गर्भसंभवमासुर्या भर्तुर्विज्ञाय मानिनी ॥ देवयानी पितुर्गेहं ययौ क्रोधविमूर्छिता ॥ ३४ ॥ प्रियामनुगतः कामी वचोभिरुपमंत्रयन् ॥ न प्रसादयितुं शेके पादसंवाहनादिभिः ॥ ३५ ॥ शुक्रस्तमाह कुपितः स्त्रीकामानृतपूरुष ॥ त्वां जरा विशतां मंद विरूपकरणी नृणाम् ॥ ३६ ॥ ययातिरुवाच ॥ अतृप्तोऽस्म्यद्य कामानां ब्रह्मन् दुहितरि स्म ते ॥ व्यत्यस्यतां यथाकामं वयसा योभिधास्यति ॥ ३७ ॥ इति लब्धव्यवस्थानः पुत्रं ज्येष्ठमवोचत ॥ यदो तात प्रतीच्छेमां जरां देहि निजं वयः ॥ ३८ ॥ मातामहकृतां वत्स न तृप्तो विषयेष्वहम् ॥ वयसा भवदीयेन रंस्ये कतिपयाः समाः ॥ ३९ ॥ यदुरुवाच ॥ नोत्सहे जरसा स्थातुमंतरा प्राप्तया तव ॥ अविदित्वा सुखं ग्राम्यं वैतृष्ण्यं नैति पूरुषः ॥ ४० ॥

रित्यर्थः ॥ ३० ॥ ३१ ॥ अपत्यार्थमृतुकाले प्रार्थनात्तस्याः कामपूरणं धर्ममवेक्ष्य शुक्रस्य वचश्च स्मरन् दिष्टं दैवप्रापितमेव तत्संगमभ्यपद्यत । न तु कामत इत्यर्थः ॥ ३२ ॥ ३३ ॥ आसुर्याः शर्मिष्ठायाः । भर्तुः सकाशात ॥ ३४ ॥ उपमंत्रयन्प्रसादयन् ॥ ३५ ॥ विकृतं रूपं करोतीति तथा ॥ ३६ ॥ ते दुहितरि कामैरद्याप्यतृप्तोऽस्मि कामानां भोगैरिति वा । शुक्र आह । तर्हि योऽभिधास्यत्यभितो धारयिष्यति तस्य वयसा यथाकामं व्यत्यस्यतां यथेच्छं जराव्यत्ययं यातु । व्यत्ययं नीयतामिति वा । यद्वा व्यत्यस्येति छेदः । तां जरां व्यत्यस्य व्यत्यासं गमयेत्यर्थः ॥ ३७ ॥ इति लब्धं व्यवस्थानं जराया व्यवस्थितिर्येन सः ॥ ३८ ॥ ३९ ॥ ४० ॥

मिति ॥ ३० ॥ तमेव ययातिम् ॥ ३१ ॥ अपत्ये संताननिमित्तम् । धर्मं श्रौतम् । "न कांचन परिहरेत्तद्व्रतम्" । इति श्रुतेः । अनन्यपूर्विकां गम्यां कांचनस्त्रियमृतुमतीं याचमानां न परिहरेत्प्रत्याचक्षीतेति तदपरित्यागो व्रतं व्रततुल्यफलदमिति श्रुत्यर्थः । इत्यर्थ इति । दिष्टमेवात्र कारणमिति निश्चित्य तत्संगं चकारेति भावः ॥ ३२ ॥ व्यजायत उत्पादयामास ॥ ३३ ॥ ३४ ॥ ३५ ॥ तं ययातिम् । अनृतपुरुष असत्यवादिपुरुष । विकृतं चर्मश्लथपलितविशीर्णदंतादिना विरूपम् ॥ ३६ ॥ कामानामिति तृतीयार्थे षष्ठी । भोगैरिति शेषेण वा । यद्येवं तर्हीति । कर्मकर्तरि प्रयोगापेक्षया कर्मणि प्रयोगस्य सुगमत्वादाह—व्यत्ययं नीयतां त्वया । ततोऽपि सौगम्यमाह—यद्वेति । इत्यर्थ इति । व्यत्यस्येति व्यतिपूर्वस्यास्यतेर्मध्यमपुरुषस्यैकवचनम् । आत्मनेपदं त्वार्षत्वान्न । यः पुमान्स्वीयेन वयसा धारयिष्यति तत्रैतां स्थापयेति भावः । यद्वा तां जरां व्यत्यस्य संक्रमय्य यथाकाममहं भुंज इति ॥ ३७ ॥ प्रतीच्छ प्रतिगृहाण । ताते ति । पुत्राणां पितृवाक्यकरणमेवोचितमित्यभिप्रायेण संबोधयति ॥ ३८ ॥ मातामहेन शुक्रेण कृताम् । वत्सेत्यपि पूर्वाभिप्रायेणैव ॥ ३९ ॥ अंतरा मध्ये । अविदित्वाऽननुभूय । वैतृष्ण्यं वैराग्यम् । अविदित्वेत्यस्यायमभिप्रायः—मम विधित्सितभगवद्भक्त्यनुकूलं विषयवैतृष्ण्यमपेक्षितं वर्त्तते तच्च भोगबाहुल्यं विना प्रायो न भवेत्, तत्र यद्यपि कालविलंबे सति त्वं स्वीयां जरां गृहीत्वा मद्यौवनं दास्यस्येवेति जानामि तदपि निरंतरायहारिभजनस्योत्कृष्टस्य मम कालविलंबस्यासह्यत्वात्पितुरपि तवेमामाज्ञां न पालयामात्र यद्भवेत्तद्भवत्विति । अत एव "यदोश्च धर्मशीलस्य' इति राजा दशमे वक्ष्यते । परमधर्मापेक्षया पितुराज्ञापालनधर्मस्य प्राकृतस्य सनकादिभिरिव त्यागात् । अत एव संतुष्यंस्तद्वंशे भगवान्स्वयमेवावततार 'यदोः प्रियस्यान्ववाये' इति कुंतीस्तुतेश्च । या तूत्तरश्लोकेऽधर्मज्ञा इति शुकोक्तिः सा तु तुर्व

तुर्वं सुश्चोदितः पित्रा द्रुह्युश्चानुश्च भारत ॥ प्रत्याचख्युरधर्मज्ञा ह्यनित्ये नित्यबुद्धयः ॥ ४१ ॥ अपृच्छत्तनयं पूरुं वयसोनं गुणाधिकम् ॥ न त्व मग्रजवद्वत्स मां प्रत्याख्यातुमर्हसि ॥ ४२ ॥ पूरुरुवाच ॥ को नु लोके मनुष्येंद्र पितुरात्मकृतः पुमान् ॥ प्रतिकर्तुं क्षमो यस्य प्रसादाद्विंदते परम् ॥ ४३ ॥ उत्तमश्चिंतितं कुर्यात्प्रोक्तकारी तु मध्यमः ॥ अधमोऽश्रद्धया कुर्यादकर्तोच्चरितं पितुः ॥ ४४ ॥ इति प्रमुदितः पूरुः प्रत्यगृह्णा ज्जरां पितुः ॥ सोऽपि तद्वयसा कामान्यथावज्जुजुषे नृप ॥ ४५ ॥ सप्तद्वीपपतिः सम्यक् पितृवत्पालयन्प्रजाः ॥ यथोपजोषं विषयाञ्जुजुषेऽ व्याहतेंद्रियः ॥ ४६ ॥ देवयान्यप्यनुदिनं मनोवाग्देहवस्तुभिः ॥ प्रेयसः परमां प्रीतिमुवाह प्रेयसी रहः ॥ ४७ ॥ अयजद्यज्ञपुरुषं क्रतुभिर्भूरिद क्षिणैः ॥ सर्वदेवमयं देवं सर्ववेदमयं हरिम् ॥४८॥ यस्मिन्निदं विरचितं व्योम्नीव जलदावलिः ॥ नानेव भाति नाभाति स्वप्नमायामनोरथः ॥४९॥

यतो न धर्मज्ञाः अनित्ये च यौवने नित्यबुद्धयः ॥ ४१ ॥ त्वां जरां किं ग्रहीष्यसीत्यपृच्छत् । प्रत्याख्यानं मा कृथा इत्याह । न त्वमिति ॥ ४२ ॥ आत्मकृतः स्वदेह कर्तुः प्रत्युपकारं कर्तुं को नु क्षमः ॥ ४३ ॥ तथाऽपि पितुर्यच्चिंतितं कुर्यात्स उत्तमः । यस्तु प्रोक्तकारी स मध्यमः । यस्त्वश्रद्धया कुर्यात्सोऽधमः । अकर्ता पितुरुच्चरितं पुरीषप्रायः ॥ ४४ ॥ जुजुषे सेवितवान् ॥ ४५ ॥ यथोपजोषं यथाप्रीति जुजुषे ॥ ४६ ॥ ४७ ॥ ४८ ॥ नानेव भाति यावदिंद्रियप्रवृत्तिः । तदुपरमे नाभाति ।

स्वादीन्प्रत्येवेति चक्रवर्त्ती ॥ ४० ॥ अनित्ये क्षणभंगुरे नित्यबुद्धयः स्थायीदमिति मतयः ॥ ४१ ॥ वयसोनं कनिष्ठम् । प्रत्याख्यातुमपाकर्तुम् ॥ ४२ ॥ को नु क्षमः न कोपीति । यस्य पितुः । परं तद्दत्तदेहेन मोक्षं विंदते प्राप्नोति । यद्वा—मातापित्रोस्साक्षाल्लक्ष्मीनारायणस्वरूपत्वात्तत्सेवनं शालग्रामादिसेवनवन्मोक्षोपयोगिज्ञानसिद्धिप्रदम् । तदुक्तं जैमिनीये "पितृभक्त्या विना किंचिल्लभ्यते भुवि नो नरैः । लक्ष्मीनारायणावेतौ पितरौ चिंतयाम्यहम् ॥" इति चंद्रहासोक्तेः । महाभारतेपि धर्मव्याधोपाख्याने मातापितृसेवामाहात्म्यं बहुधा वर्णितम् । श्रीवाल्मीकीयेपि श्रीरामचंद्रेण सीतां प्रत्युक्तम्—"न सत्यं दानमानौ वा यज्ञो वाप्याप्तदक्षिणः । तथा बलकराः सीते यथा सेवा पितुर्मता ॥ स्वर्गो धनं वा धान्यं वा विद्याः पुत्राः सुखानि च । गुरुवृत्त्यनुरोधेन न किंचिदपि दुर्लभम् ॥ देवगंधर्वगोलोकान्ब्रह्मलोकांस्तथापरान् । प्राप्नुवंति महात्मानो मातापितृपरायणाः ॥" इत्ययोध्याकांडे ॥४३॥ "एतावत्यात्मजैर्वीर कार्या ह्यपचितिर्गुरौ । शक्त्याप्रमत्तैर्गृह्येत सादरं गतमत्सरैः ॥ इति । "पुत्राणां हि परो धर्मः पितुराज्ञानुपालनम्" इत्यादि बहु प्रपंचितम् । किं च "जीवतोर्वाक्यकरणात्प्रत्यब्दं भूरिभोजनात् । गयायां पिंडदानाच्च त्रिभिः पुत्रस्य पुत्रता ॥" इति स्मृतेः । पुत्रत्वं पितुराज्ञाकरणेनैव अन्यथा मलत्वं स्यादित्याह । 'उच्चरितं गुदनिर्गतम्' इति कोशः॥४४॥इतीत्युक्त्वा । सोपि ययातिरपि । तद्वयसा पूरुव वसा ॥ ४५ ॥ ४६ ॥ प्रेयसो भर्त्तुः ॥ ४७ ॥ सर्ववेदमयं सर्ववेदप्रधानम् । 'वेदैश्च सर्वैरहमेव वेद्यः' इति श्रीगीतासूक्तेः ॥ ४८ ॥ इत्यर्थ इति । यथा स्वप्नमायामनोरथा असंतोपि भांति तद्वदसदेव प्रतीयत

१ 'ऋणापकरणात्तथा' इत्यपि क्वचित्पाठः ।

तमेव हृदि विन्यस्य वासुदेवं गुहाशयम् ॥ नारायणमणीयांसं निराशीरयजत्प्रभुम् ॥ ५० ॥ एवं वर्षसहस्राणि मनःषष्ठैर्मनःसुखम् ॥ विदधानोऽपि नातृप्यत्सार्वभौमः कदिंद्रियैः ॥ ५१ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे अष्टादशोऽध्यायः ॥ १८ ॥ श्रीशुक उवाच ॥ स इत्थमाचरन्कामान्स्त्रैणोपह्नवमात्मनः ॥ बुद्ध्वा प्रियायै निर्विण्णो गाथामेतामगायत ॥ १ ॥ शृणु भार्गव्यमूं गाथां मद्विधाचरितां भुवि ॥ धीरा यस्यानुशोचंति वने ग्रामनिवासिनः ॥ २ ॥ बस्त एको वने कश्चिद्विचिन्वन्प्रियमात्मनः ॥ ददर्श कूपे पतितां स्वकर्मवशगामजाम् ॥ ३ ॥ तस्या उद्धरणोपायं बस्तः कामी विचिंतयन् ॥ व्यधत्त तीर्थमुद्धृत्य विषाणाग्रेण रोधसी ॥ ४ ॥ सोत्तीर्य कूपात्सुश्रोणी तमेव चकमे किल ॥ तया वृतं समुद्वीक्ष्य बह्वयोऽजाः कांतकामिनीः ॥ ५ ॥ पीवानं श्मश्रुलं प्रेष्ठं मीढ्वांसं याभकोविदम् ॥ स एकोऽजवृषस्तासां बह्वीनां रतिवर्धनः ॥ रेमे कामग्रहग्रस्त आत्मानं नावबुध्यत ॥ ६ ॥

स्वप्नमायाभ्यां सहितो मनोरथ इवेत्यर्थः ॥ ४९ ॥ ५० ॥ मनःसुखं कामभोगम् । कदिंद्रियैः कुत्सितैः पराङ्मुखैरिंद्रियैः ॥ ५१ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामष्टादशोऽध्यायः ॥ १८ ॥ ऊनविंशे ययातिः स्वं चेष्टितं नन्वजोपमम् ॥ देवयानीं समाश्राव्य विरक्तो मुक्तिमाप्तवान् ॥ १ ॥ भुक्तभोगामजां हास्यन्नजवद्वृत्तमात्मनः ॥ विडंबयन्प्रियामाह निर्वेदयितुमात्मवान् ॥ २ ॥ कामानाचरन्नुपभुंजानः । गाथामितिहासम् ॥ १ ॥ मद्विधेन मत्सदृशेनाचरितामनुष्ठिताम् । मद्विधस्याचरितं यस्यामिति वा । यस्य ग्रामनिवासिनः कामिनो मद्विधस्याचरितं वने स्थिता धीराः शोचंति तस्य गाथां शृणु ॥ २ ॥ आत्मानमनुलक्ष्याह । बस्त इति । प्रियामनुलक्ष्याह । अजामिति । वने संसारे । प्रियं विषयम् ॥ ३ ॥ रोधसि तटे । विषाणाग्रेण मृदादिकमुद्धृत्य तीर्थनिर्गमाय मार्गं व्यधत्त ॥४॥ बह्वय इति शर्मिष्ठाप्रमुखाः कामयामासुः कांतं प्रति कामिनीः कामवत्यः ॥ ५ ॥ पीवानं पुष्टम् । श्मश्रुलं श्मश्रुबहुलम् । रतिसमर्थमित्यर्थः । मीढ्वांसं रेतःसेक्तारम् । याभे कोविदमभिज्ञमत एव प्रेष्ठम् ।

इति भावः ॥ ४९ ॥ तमेव यस्मिन्प्रपञ्चः कल्पितस्तमित्यर्थः । निराशीर्निष्कामः ॥ ५० ॥ विदधानः कुर्वाणोऽपि सार्वभौमोऽपि वर्षसहस्राण्यपीति त्रिधा योज्यम् । कथमन्येषामल्पकालाल्पवित्तादिभिस्तृप्तिर्भवेदिति भावः ॥ ५१ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धेऽष्टादशोऽध्यायः ॥ १८ ॥ अजेन बस्तेनोपमीयेत इति तथा ( १ ) । हास्यन् त्यजन् 'ओहाक्–त्यागे' विडंबयन्ननुकुर्वन् । आत्मवान् प्राप्तज्ञानः । ( २ ) । स ययातिः । स्त्रैणः स्त्रीवशवर्ती । अपह्नवं नित्यसुखहानिलक्षणं नाशम् । प्रियायै देवयान्यै । एतां वक्ष्यमाणत्वेन बुद्धिसन्निहिताम् ॥ १ ॥ भार्गवि भृगुकुलोद्भूते । मद्विधेन स्त्रैणेन । न केनापि तं विनाचरितेत्यसत्यानिवृत्त्यर्थमाह–मद्विधस्येति ॥ २ ॥ अत्र वनकूपशब्दौ संसारलक्षकौ । बस्ताजाशब्दौ च प्रकृतिपुरुषलक्षकौ ॥ ३ ॥ तस्या अजायाः । रोधसि कूपतीरे । तीर्थम् उद्धरणस्थानम् "तीर्थं मंत्राद्युपाध्यायशास्त्रेष्वंभसि पावने । पात्रोपायावतारेषु स्त्रीपुष्पे योनियज्ञयोः ॥" इति यादवः ॥ ४ ॥ सा अजा । तमेवोद्धारकमेवाजम् ॥ ५ ॥ इत्यर्थ इति । युवावस्थत्वाद्रतियोग्यामिति भावः । तीर्थस्तु 'यावकोविदम्' इति पपाठ । 'यावः

तमेव प्रेष्ठतमया रममाणमजाऽन्यया ॥ विलोक्य कूपसंविग्ना नामृष्यद्बस्तकर्म तत् ॥ ७ ॥ तं दुर्हृदं सुहृद्रूपं कामिनं क्षणसौहृदम् ॥ इंद्रियाराम मुत्सृज्य स्वामिनं दुःखिता ययौ ॥ ८ ॥ सोऽपि चानुगतः स्त्रैणः कृपणस्तां प्रसादितुम् ॥ कुर्वन्निडविडाकारं नाशक्नोत्पथि संधितुम् ॥ ९ ॥ तस्यास्तत्र द्विजः कश्चिदजास्वाम्यच्छिनद्रुषा ॥ लंबंतं वृषणं भूयः संदधेऽर्थाय योगवित् ॥ १० ॥ संबद्धवृषणः सोऽपि ह्यजया कूपलब्धया ॥ कालं बहुतिथं भद्रे कामैर्नाद्यापि तुष्यति ॥ ११ ॥ तथाहं कृपणः सुभ्रु भवत्याः प्रेमयंत्रितः ॥ आत्मानं नाभिजानामि मोहितस्तव मायया ॥ १२ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ न दुह्यंति मनःप्रीतिं पुंसः कामहतस्य ते ॥ १३ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १४ ॥ यदा न कुरुते भावं सर्वभूतेष्वमंगलम् ॥ समदृष्टेस्तदा पुंसः सर्वाः सुखमया दिशः ॥ १५ ॥

नावबुध्यत नान्वबुध्यत ॥ ६ ॥ ७ ॥ स्वामिनमिति शुक्राभिप्रायेणाह ॥ ८ ॥ इडविडाकारं बस्तजातिशब्दम् । संधितुं प्रसादयितुम् ॥ ९ ॥ वृषणमच्छिनज्जरया संभोगासमर्थमकरोत् । अर्थाय स्वपुत्र्याः कामोपभोगाय । योगविदुपायज्ञः । जराव्यत्ययेन रतिशक्तिं ददावित्यर्थः ॥ १० ॥ कूपलब्धया सह कामैः सेव्यमानैर्न तुष्यति ॥ ॥ ११ ॥ १२ ॥ ननु तर्हि पुनरपि बहवो विषयाः सेव्यंतां ततो मनसि प्रीते सति कामोपशांत्या मोहो निवर्तेतेति चेत्तत्राह यदिति द्वाभ्याम् । न दुह्यंति न पूरयंति ॥ ॥ १३ ॥ हविषा घृतेन कृष्णवर्त्माऽग्निरिव ॥ १४ ॥ तर्हि कदा केनोपायेन वा मनसः संपूर्णा प्रीतिः स्यात्कया कामोपशमः स्यादित्यत आह यदेति षड्भिः । अमंगलं

केवलकुल्माषे बलके तोयपर्णिके' इति कोशात्कुल्माषादिभक्षणसक्तमिति व्याचख्यौ । मीढ्वांसमित्यनेन पुनरुक्तित्वात् । अजेषु वृषः श्रेष्ठः ॥ ६ ॥ अन्यया प्रेष्ठतमया स्वतोऽप्यधिकप्रियया । तत् अन्यासक्तिलक्षणम् ॥ ७ ॥ दुर्हृदं दुष्टहृदयं शत्रुं वा । स्वामिनं शरीरोत्पादकत्वेन स्वत्ववंतं पितरम् । अत्र विश्वनाथः—स्वामिनमिति । विरुद्धमतिकृद्दोषस्त्वार्षत्वादत्र सोढव्यः । यद्वा—"स्वामिन्नैश्वर्ये" इति पाणिनिस्मरणान्न केवलं भर्तृपर्याय एव पतिशब्दः । यद्वा—स्वामिनं ययातिमुत्सृज्येति योजना । प्रतिज्ञात्यागेन दुःखिता ॥ ८ ॥ ९ ॥ तत्र तदा । वृषणं शिश्नम् । वृष्यते सिच्यते रेतोऽनेनेति व्युत्पत्तेः । याऽजा तस्याः स्वामी द्विज इति योज्यम् । तस्य तत्रेति पाठस्तु सुगमः । "शिश्ने शिश्नासने चैव वृषणं कामनाप्रदे" इति निरुक्तिः । वस्तुतस्तु—मैथुनसामर्थ्यं वृषणपदेन लक्ष्यते । जराप्रदानेन मैथुनायोग्यं चकारेति भावः । संदधे युयुजे । इत्यर्थ इति । योगबलेन पुनः समर्थं चकारेति भावः ॥ १० ॥ सोप्यजोपि । संबद्धवृषणोऽन्यत्र जराव्यत्यासेनाप्तभोगसामर्थ्यः । बहूनां संख्यापूरकम् "बहूपूगे—" इति तिथुक् ॥ ११ ॥ यथा सोजस्तथेत्यर्थः ॥ १२ ॥ व्रीहियवमित्येकवद्भावः । ते व्रीह्यादयः न दुह्यंति न पूरयंति 'दुह—प्रपूरणे' प्रपूरणं नामोधसो रिक्तीकरणं पात्रस्य पूरणीकरणम् । अतः स्त्रीपुंसयोरुभयोरपि कामभोगादिनाऽलंबुद्धिर्न भवतीति भावः ॥ १३ ॥ ननु प्रावृडुपरमे नदीजलह्रासवत्कामानामुपभोगेन शांतिः स्यादित्यत आह—नेति "हविर्गव्ये घृते तोये हविष्ये हेम्नि चौषधे" इति यादवः ॥ १४ ॥ भावं स्वभावम् । "पदार्थमात्रे सत्तायां भाव आत्मस्वभावयोः" इति यादवः । सुखमयाः सुखप्रापकाः ॥ १५ ॥

या दुस्त्यजा दुर्मतिभिर्जीर्यतो या न जीर्यते ॥ तां तृष्णां दुःखनिवहां शर्मकामो द्रुतं त्यजेत् ॥ १६ ॥ मात्रा स्वस्रा दुहित्रा वा नाविविक्तासनो भवेत् । बलवानिंद्रियग्रामो विद्वांसमपि कर्षति ॥ १७ ॥ पूर्णं वर्षसहस्रं मे विषयान् सेवतोसकृत् ॥ तथाऽपि चानुसवनं तृष्णा तेषूपजायते ॥ ॥ १८ ॥ तस्मादेतामहं त्यक्त्वा ब्रह्मण्याधाय मानसम् ॥ निर्द्वंद्वो निरहंकारश्चरिष्यामि मृगैः सह ॥ १९ ॥ दृष्टं श्रुतमसद्बुद्ध्वा नानुध्यायेन्न संविशेत् ॥ संसृतिं चात्मनाशं च तत्र विद्वान् स आत्मदृक् ॥ २० ॥ इत्युक्त्वा नाहुषो जायां तदीयं पूरवे वयः ॥ दत्त्वा स्वां जरसं तस्मादाददे विगतस्पृहः ॥ २१ ॥ दिशि दक्षिणपूर्वस्यां द्रुह्युं दक्षिणतो यदुम् ॥ प्रतीच्यां तुर्वसुं चक्र उदीच्यामनुमीश्वरम् ॥ २२ ॥ भूमंडलस्य सर्वस्य पूरुमर्हत्तमं विशाम् ॥ अभिषिच्याग्रजांस्तस्य वशे स्थाप्य वनं ययौ ॥ २३ ॥ आसेवितं वर्षपूगान्षड्वर्गं विषयेषु सः ॥ क्षणेन मुमुचे नीडं जातपक्ष इव द्विजः ॥ २४ ॥ स तत्र निर्मुक्तसमस्तसंग आत्मानुभूत्या विधुतत्रिलिंगः ॥ परेऽमले ब्रह्मणि वासुदेवे लेभे गतिं भागवतीं प्रतीतः ॥ २५ ॥

भावं रागद्वेषादिवैषम्यम् ॥ १५ ॥ दुःखानि नितरां वहतीति तथा ताम् ॥ १६ ॥ स्त्रीसन्निधानं तु सर्वथा त्याज्यमित्याह । मात्रेति । अविविक्तं संकीर्णमासनं यस्य सः । कर्षत्याकर्षति ॥ १७ ॥ १८ ॥ १९ ॥ ननु तृष्णात्यागस्यातिदुष्करत्वात्कथं ब्रह्मणि मनस आधानं स्यात्तत्राह । दृष्टमिति । यो नानुध्यायेन्न संविशेन्न चोपभुंजीत । तत्र दृष्टश्रुतयोरनुध्यानादौ । स आत्मदृक् भवति ॥ २० ॥ २१ ॥ २२ ॥ तस्य पूरोर्वशे स्थापयित्वा ॥ २३ ॥ विषयेषु शब्दादिष्वासेवितं षड्वर्गं षडिंद्रियसुखं मुमुचे तत्याज । यद्वा विषयेष्वासेवितं सेवां कारितं षण्णामिंद्रियाणां वर्गं मुमुचे उपैक्षतेत्यर्थः॥ २४ ॥ विधुतं निरस्तं त्रिगुणात्मकं लिंगं येन । प्रतीतः प्रख्यातः॥ २५॥

ननु स्थाविर्ये निराहारत्वे वा विषयतृष्णां त्यजतो मुक्तिः स्वयमेव स्यादिति चेत्सत्यं तृष्णात्यागे मुक्तिः स्यात्स एव नास्ति तस्मात् ज्ञानेन तत्त्याग एवापाद्य इत्याह—शर्मकामः कल्याणेच्छुः। जीर्यतोऽनशनेन वयसा वा जरामाप्नुवतः॥ १६ ॥किमुतान्यया तथा किमुताविद्वानिति कैमुत्यं सूचितम्॥ १७ ॥तथापि वर्षसहस्रं सेवितेपि। विषयग्रामे । अनुसवनम् अनुकालम् “सवनं त्वध्वरे स्नाने सोमाभिषवकालयोः”इति । तेषु विषयेषु॥ १८ ॥यतस्तृष्णा विषयप्रीतिकरास्तस्माद्धेतोः । एतां तृष्णाम् । मृगयंते तत्त्वमिति मृगा ज्ञानिनस्तैः ॥ १९ ॥ दृष्टं राजादि । श्रुतमिंद्रादि । अनुध्यायेत् तद्विषयं चिंतयेत् । आदिनोपभोगग्रहः । आत्मनाशं स्वरूपज्ञाननाशम् ॥ २० ॥ तदीयं पूरुसंबंधिनम् । तस्मात्पूरोः ॥ २१ ॥ दक्षिणेति संबुद्धिः परीक्षितं प्रति । दक्षिणो निपुणः “दक्षिणो दक्षिणोद्भूते स्वच्छंदनिपुणर्जुषु” इति कोशात् । स्ववंश्यपराक्रमाकर्णने मा सक्तोभूस्तेषामीदृशानामपि कथैवावशिष्टेति विचारयेति द्योतयति दक्षिणेति संबोधयन् । यथाश्रुते तु एकस्य विदिशोऽन्येषां दिशां राज्यार्पणेन वैषम्यं स्यादिति ॥ २२ ॥ अर्हत्तममभिषिच्य चक्रवर्त्तिनं कृत्वेत्यर्थः । एतेन पितुराज्ञाकरणं कनिष्ठस्यापि ज्येष्ठत्वसंपादकं तदकरणं तु ज्येष्ठानामपि कनिष्ठत्वसंपादकमिति ध्वनितम् । विमृष्टं चैतन्महाभारते—“यः पुत्रस्त्वानुवर्त्तेत स राजा पृथिवीपतिः । शुक्रेणायं वरो दत्तः” इत्यंतेन ॥ २३ ॥ नन्वासेवितत्यागस्तु सर्वथा दुष्कर इति चेदाह—यद्वेति। इत्यर्थ इति । स्वयमेव सेवां कर्तुं प्रवृत्तं षड्वर्गं नाभ्यनंददिति भावः ॥ २४ ॥ स ययातिः । तत्र तदा । लिंगं शरीरम् । यद्वा—विधुतं त्रिलिंगमाध्यात्मिकादित्रयं येनेति । भागवतीं भगवदभेदलक्षणाम् ।

श्रुत्वा गाथां देवयानी मेने प्रस्तोभमात्मनः ॥ स्त्रीपुंसोः स्नेहवैक्लव्यात्परिहासमिवेरितम् ॥ २६ ॥ सा सन्निवासं सुहृदां प्रपायामिव गच्छताम् ॥ विज्ञायेश्वरतंत्राणां मायाविरचितं प्रभोः ॥ २७ ॥ सर्वत्र संगमुत्सृज्य स्वप्नौपम्येन भार्गवी ॥ कृष्णे मनः समावेश्य व्यधुनोल्लिंगमात्मनः ॥२८॥ नमस्तुभ्यं भगवते वासुदेवाय वेधसे ॥ सर्वभूताधिवासाय शांताय बृहते नमः ॥ २९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे एकोनविंशो ध्यायः ॥१९॥ श्रीशुक उवाच ॥ पूरोर्वंशं प्रवक्ष्यामि यत्र जातोसि भारत ॥ यत्र राजर्षयो वंश्या ब्रह्मवंश्याश्च जज्ञिरे ॥ १ ॥ जन्मेजयो ह्यभूत्पूरोः प्रचिन्वांस्तत्सुतस्ततः ॥ प्रवीरोऽथ नमस्युर्वै तस्माच्चारुपदोऽभवत् ॥ २ ॥ तस्य सुद्युरभूत्पुत्रस्तस्माद्बहुगवस्ततः ॥ संयातिस्तस्याहंयाती रौद्राश्वस्तत्सुतः स्मृतः ॥ ३ ॥ ऋतेयुस्तस्य कुक्षेयुः स्थंडिलेयुः कृतेयुकः ॥ जलेयुः संततेयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ दशैतेऽप्सरसः पुत्रा वनेयुश्चावमः स्मृतः ॥ घृताच्यामिंद्रियाणीव मुख्यस्य जगदात्मनः ॥ ५ ॥

प्रस्तोभमेवाह । परिहासमिवेति । यद्वा प्रस्तोभं निवृत्तिमार्गे प्रोत्साहनं मेने ॥ २६ ॥ २७ ॥ २८ ॥ कथं समावेश्य तदाह । नम इति नमनादिभिः समावेश्येत्यर्थः । शुको वा नमस्करोति ॥ २९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामेकोनविंशोऽध्यायः ॥ १९ ॥ विंशे पितृप्रसादात्तराजासनमहोन्नतेः ॥ पूरोर्वंशे हि दौष्यंतेर्भरतस्ये र्यते यशः ॥ १ ॥ १ ॥ २ ॥ तत्सुतः अहंयातेः सुतः ॥ ३ ॥ धर्मेयुश्च व्रतेयुश्च सत्येयुश्च धर्मसत्यव्रतेयवः ॥ ४ ॥ वनेयुश्चावमः स्मृतः एवं दशैते ऋतेयुप्रमुखास्तस्य

प्रतीतो हृष्टो वा "प्रतीतः सादरे ज्ञाते हृष्टप्रख्यातयोरपि" इति मेदिनी ॥ २९ ॥ प्रस्तोभमुपालंभम् "प्रस्तोभो वंचने रागपूर्व्युपालभयोरपि" इति निरुक्तिः । विकलविक्लवौ पर्यायौ । स्नेहस्य वैकल्यभयादित्यर्थः । सत्युपरमे उपालंभो नोचित इति चेदाह–यद्वेति ॥ २६ ॥ सा देवयानी । 'प्रपा पानीयशालिका' इत्यमरः ॥ २७ ॥ सर्वत्र पतिपुत्रराज्यादिषु । कृष्णे परब्रह्मणि । लिंगं शरीरम् । व्यधुनोत् व्यमुंचत् ॥ २८ ॥ मनःसमावेशप्रकारं पृच्छति–कथमिति । तत् मनःसमावेशनम् । आदिना ध्यानादिग्रहः । इत्यर्थ इति । नतिस्तुतिध्यानैर्निजमनस्तन्मयं चकारेति भावः । प्रकृतं समाप्य पुनस्तत्कथनं समाप्तपुनरात्तदोषावहं भवति 'व्यधुनोल्लिंगमात्मनः' इति प्रकृतसमाप्त्युक्तेरत आह–शुको वेति । अत्रेदमवसेयम्–यदांबरीषः सप्तद्वीपाधिपतिश्चक्रवर्त्ती तदैव ययातिस्तन्मंडलाध्यक्षः प्रायो भारतवर्षभूपतिरित्यवसीयते । ब्रह्ममरीचिकश्यपविवस्वच्छ्राद्धदेवनभगनाभागांबरीषास्तथा ब्रह्मात्रिचंद्रबुधपुरूरवआयुनहुषययातय इति वक्ष्यंते तयोरष्टमपुरुषत्वात् । तथा चांबरीषसंगप्रभावादेव तादृशविषयलंपटस्यापि ययातेस्तादृशी भक्तिर्ययातेश्च संगाद्देवयान्याश्च किञ्चैवमेव सूर्यवंशचंद्रवंशयोर्युगपत्प्रवृत्तयोर्यदा सूर्यवंश्यः सप्तद्वीपाधिपतिश्चक्रवर्ती स्यात्तदा चंद्रवंश्यस्तन्मंडलाध्यक्षो राजा यदा चंद्रवंश्यश्चक्रवर्त्ती तदा सूर्यवंश्यो राजेत्युभयवंश्यानां व्यवस्थया चक्रवर्त्तित्वराजत्वे ज्ञेये इति विश्वनाथः ॥२९॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे एकोनविंशोऽध्यायः ॥ १९ ॥ पितृप्रसादेनाप्ता राजसंबंध्यासनरूपा महोन्नतिर्ज्येष्ठापेक्षया महदौन्नत्यं येन स तथा तस्य दुष्यंतपुत्रस्य ( १ )। यत्र पूरोर्वंशे । वंश्या राजर्षयः । ब्रह्म ब्राह्मणजातिर्वंश्ये येषां ते ब्रह्मवंश्या ब्राह्मणाश्च जज्ञिरे इत्यर्थः ॥ १ ॥ तत्सुतो जन्मेजयसुतः । ततः प्रचिन्वतः । अथ प्रवीरात् । तस्मान्नमस्योः ॥ २ ॥ तस्य चारुपदस्य । तस्मात्सुद्योः । ततो बहुगवात् । तस्य संयातः ॥ ३ ॥ तस्य रौद्राश्वस्य । ऋतेय्वादयो दश पुत्रा इत्यग्रिमेणान्वयः । धर्मेषु सत्येय्वोरवयवलोप आर्षः । यद्वा धर्मश्च सत्यश्च व्रतश्च धर्मसत्यव्रतास्तैः सहिता इयवो धर्मसत्यव्रतेयवः । द्वंद्वांते युपदस्य त्रिभिरन्वयः । 'द्वंद्वांते श्रूयमाणं पदं प्रत्येकमभिसंबध्यते' इति न्यायात् ॥ ४ ॥ अवमः कनिष्ठः । ते च तदनुगा इति शेषः । इं

ऋतेयो रंतिभारोऽभूत्त्रयस्तस्यात्मजा नृप ॥ सुमतिर्ध्रुवोऽप्रतिरथः कण्वोऽप्रतिरथात्मजः ॥ ६ ॥ तस्य मेधातिथिस्तस्मात्प्रस्कण्वाद्या द्विजातयः ॥ पुत्त्रोऽभूत्सुमते रैभ्यो दुष्यंतस्तत्सुतो मतः ॥ ७ ॥ दुष्यंतो मृगयां यातः कण्वाश्रमपदं गतः ॥ तत्रासीनां स्वप्रभया मंडयंतीं रमामिव ॥ ८ ॥ विलोक्य सद्यो मुमुहे देवमायामिव स्त्रियम् ॥ बभाषे तां वरारोहां भटैः कतिपयैर्वृतः ॥ ९ ॥ तद्दर्शनप्रमुदितः सन्निवृत्तपरिश्रमः ॥ पप्रच्छ कामसंतप्तः प्रहसञ्श्लक्ष्णया गिरा ॥ १० ॥ का त्वं कमलपत्राक्षि कस्यासि हृदयंगमे ॥ किं वा चिकीर्षितं त्वत्र भवत्या निर्जने वने ॥ ॥ ११ ॥ व्यक्तं राजन्यतनयां वेद्म्यहं त्वां सुमध्यमे ॥ न हि चेतः पौरवाणामधर्मे रमते क्वचित् ॥ १२ ॥ शकुंतलोवाच ॥ विश्वामित्रात्मजैवाहं त्यक्ता मेनकया वने ॥ वेदैतद्भगवान्कण्वो वीर किं करवाम ते ॥ १३ ॥ आस्यतां ह्यरविंदाक्ष गृह्यतामर्हणं च नः ॥ भुज्यतां संति नीवारा उष्यतां यदि रोचते ॥ १४ ॥ दुष्यंत उवाच ॥ उपपन्नमिदं सुभ्रु जातायाः कुशिकान्वये ॥ स्वयं हि वृणुते राज्ञां कन्यकाः सदृशं वरम् ॥ १५ ॥

रौद्राश्वस्य घृताच्यामप्सरसि पुत्राः जाताः । अप्सरस इति षष्ठी सप्तम्यर्थे । वशवर्तित्वे दृष्टांतः जगदात्मनो जगत आत्मभूतस्य मुख्यस्य प्राणस्येंद्रियाणीव ॥५॥६॥७॥ दुष्यंतस्य शकुंतलायां भरतः पुत्रोऽभवदिति कथाद्वारेणाह दुष्यंतो मृगयामिति पंचदशभिः । तमाश्रमं मंडयंतीम् ॥ ८ ॥ स्त्रियं विलोक्य मुमुहेऽमुह्यत ॥ ९ ॥ तस्या दर्शनेन प्रमुदितोऽत एव सन्निवृत्तः परिश्रमो यस्य ॥ १० ॥ ११ ॥ पौरवाणां चेतो न ह्यधर्मे रमते अतो मच्चेतसस्त्वयि रमणादेवाहं त्वां राजन्यतनयां वेद्मि ॥ १२ ॥ विश्वामित्रस्यात्मजाऽहं मेनकायां जाता तया च स्वर्गं गच्छंत्याऽत्र त्यक्ता । अतो राजकन्यैवाहमित्यर्थः ॥ १३ ॥ १४ ॥ किं करवामेत्यादिवाक्यात्तदभिप्रायं ज्ञात्वाऽऽह । उपपन्नमिति ॥ १५ ॥

त्यभिप्रेत्याह—वशवर्तित्व इति । मुख्यस्य महाप्राणस्य । “ अनुप्राणंति यं प्राणाः प्राणंतं सर्वजंतुषु । अपानंतमपानंति नरदेवमिवानुगाः ॥ ” इत्युक्तेः ॥ ५ ॥ तस्य रंतिभारस्य ॥ ६ ॥ तस्य कण्वस्य । तस्मान्मेधातिथेः । तत्सुतो रैभ्यसुतः । पूर्वमत्र परत्र च ‘ दुष्कंत ’ इत्यपि पाठो बहुपुस्तकेषु दृश्यते परं च दुष्यंत इति पाठो भारतादिसंमत इति ॥ ७ ॥ तत्र कण्वाश्रमे ॥ ८ ॥ ९ ॥ अत एव प्रमुदितत्वादेव ॥ १० ॥ हृदयंगमे सुंदरि ॥ ११ ॥ १२ ॥ इत्यर्थ इति । ब्राह्मणत्वावाप्तये तपश्चरतः क्षत्रियत्वाभिमानवतो विश्वामित्राज्जातत्वात्क्षत्रियात्मजाहमिति भावः ॥ १३ ॥ नीवारा देवव्रीहयः ॥ १४ ॥ तस्याः कन्याया अभिप्रायम् । उपपन्नमुचितम् ॥ १५ ॥

ओमित्युक्ते यथाधर्ममुपयेमे शकुंतलाम् ॥ गांधर्वविधिना राजा देशकालविभागवित् ॥ १६ ॥ अमोघवीर्यो राजर्षिर्महिष्यां वीर्यमादधे ॥ श्वोभूते स्वपुरं यातः कालेनासूत सा सुतम् ॥१७॥ कण्वः कुमारस्य वने चक्रे समुदिताः क्रियाः ॥ बद्ध्वा मृगेंद्रांस्तरसा क्रीडति स्म स बालकः ॥ ॥१८॥ तं दुरत्ययविक्रांतमादाय प्रमदोत्तमा ॥ हरेरंशांशसंभूतं भर्तुरंतिकमागमत् ॥ १९ ॥ यदा न जगृहे राजा भार्यापुत्रावनिंदितौ ॥ शृण्वतां सर्वभूतानां खे वागाहाशरीरिणी ॥ २० ॥ माता भस्त्रा पितुः पुत्रो येन जातः स एव सः ॥ भरस्व पुत्रं दुष्यंत माऽवमंस्थाः शकुंतलाम् ॥ २१ ॥ रेतोधाः पुत्रो नयति नरदेव यमक्षयात् ॥ त्वं चास्य धाता गर्भस्य सत्यमाह शकुंतला ॥ २२ ॥

गांधर्वविधिना मिथः समयपूर्वकेण ॥ १६ ॥ १७ ॥ १८ ॥ दुरत्ययं विक्रांतं विक्रमणं यस्य ॥ १९ ॥ २० ॥ भस्त्रा चर्मपात्रं तद्वन्माता आधारपात्रम् । पितुरेव तु पुत्रः । तत्र हेतुः । येनेति । "आत्मा वै पुत्रनामासि" इति श्रुतेः । भरस्व पुषाण । अनेन भरतनाम निरुक्तम् ॥ २१ ॥ किं च रेतोधा रेतःसेक्ता वंशकृत्पुत्रो यमक्षयात्पितरं नयति तारयति । तथा च श्रुतिः । "पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः ॥ तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयंभुवा" इति पाठांतरे मातापित्रोः पुत्रं प्रति विवादे यमक्षयाद्धर्मनिर्णेतुर्यमस्य सभायाः सकाशाद्रेतोधा रेतःसेक्ता पितैव धर्मेण विजित्य पुत्रं नयति न तु मातेत्यर्थः । ततश्च भार्यापुत्रौ स्वीकृतवानिति ज्ञेयम् ॥ २२ ॥

तया ओमित्युक्तेंगीकृतं भवदुक्तमिति कथिते । यथाधर्मं राज्ञां गांधर्वराक्षसादिविहितत्वाद्धर्मानतिक्रमेण तदुक्तं मनुना "ब्राह्मो दैवस्तथैवार्षः प्राजापत्यस्तथासुरः । गांधर्वो राक्षसश्चैव पैशाचश्चाष्टमोऽधमः ॥ षडानुपूर्व्या विप्रस्य क्षत्रस्य चतुरोवरान् । विट्शूद्रयोस्तु तानेव विद्याद्धर्म्यानराक्षसान् ॥ पृथक्पृथग्वा मिश्रौ वा विवाहौ पूर्वचोदितौ । गांधर्वो राक्षसश्चैव धर्म्यौ क्षत्रस्य तौ स्मृतौ ॥ " इति ॥ १६ ॥ कालेन प्रसूतियोग्यसमयेन । सा शकुंतला ॥ १७ ॥ समुदिता वेदविहितजातकर्मादिकाः । तरसा बलेन ॥ १८ ॥ अंतिकं समीपम् ॥ १९ ॥ २० ॥ यथा कारुशाला चुल्लीस्थाग्निशक्त्युद्दीपकत्वेनाग्नेराधारमात्रं भस्त्रा चर्मयंत्रम् 'भस-भरणदीप्त्योः' इति त्रन् । तथा भर्त्राहितं वीर्यमाधाय करचरणाद्यवयवविशिष्टदेहाकारेण परिणममानस्य वीर्यस्य प्रथममाधारभूतत्वात् । मातुः पुत्रत्वमौपचारिकं तर्हि कस्य मुख्यपुत्रत्वं तत्राह–पितुरिति । तत्र पितृपुत्रत्वे येन पित्रा । प्रमाणं चात्राह–आत्मेति । श्रुत्यंतरं च " तज्जायाया जायात्वं यदस्यां जायते पुनः " इति । पितृदेहस्यैकदेशोपादानत्वद्योतनाय पितुरित्युक्तम् । अन्यथा पिता पुत्र इति प्रयोगस्याप्यसंभवात् । प्रकृते किमपेक्षितं तत्राह–भरस्वेति । स्वीकुरु । शकुंतला स्वैरिणीति माऽवमंस्था मावज्ञातां कुरु । अनेन भरस्वेति वचनेन भ्रियते इति भरत इति नामव्युत्पादनमुक्तम् ॥२१॥धारणे फलांतरं चाह–किंचेति । यमस्य क्षयान्निवासात् । प्रमाणमाह–तथा चेति । स्पष्टार्था । पाठांतरे 'पुत्रं नयति' इति पाठे । इत्यर्थ इति । सर्वधर्मनिर्णेत्रा पक्षपातहीनेन श्रीयमराजेनापि पुत्रे पितुस्स्वत्वमेवापादितमिति भावः । ततश्च श्रुत्यादिप्रमाणश्रवणाच्च । तीर्थस्तु–"पुत्रः रेतोधाः रेतोधातारं पितरं यं लोकमक्षयं वदंति तं वैकुंठं नयति प्रापयति यस्मात्पुत्रमनुशिष्टं लोकमाहुस्तस्मादेवमनुशासति " इति श्रुतेः । रेतोधा इति प्रथमा द्वितीयार्थे । " द्वितीया सर्वविभक्तिषु" इति कश्चिदुक्तेः आर्षत्वाद्वा।यद्वा रेतोधा रेतःसेक्ता वंशकृत्पुत्र एव पितरं तारयति न तु वंशत्यागीत्यत्र जरत्कारुतत्पितृसंवादरूपा भारतीया इचितपितृसंवादरूपा मार्कंडेयीया कथा चानुसंधेया। व्याख्यानानि विस्तरभिया नोक्तानि । यद्वा–"प्राप्ते च द्वादशे वर्षे या गर्भं न बिभर्त्ति हि । धारितं तु तया रेतो रेतोधाः सा प्रकीर्त्तिता ॥ " इति पराशरोक्तेः । रेतोधाः पुत्रं नयति स्वीकरोति । यमक्षयमुद्दिश्य "अपुत्रस्य गतिर्नास्ति" इति न्यायेन, ल्यब्लोपे पञ्चमी ।

पितर्युपरते सोऽपि चक्रवर्ती महायशाः ॥ महिमा गीयते तस्य हरेरंशभुवो भुवि ॥ २३ ॥ चक्रं दक्षिणहस्तेऽस्य पद्मकोशोऽस्य पादयोः ॥ ईजे महाभिषेकेण सोऽभिषिक्तोऽधिराड् विभुः ॥ २४ ॥ पंचपंचाशता मेध्यैर्गंगायामनु वाजिभिः ॥ मामतेयं पुरोधाय यमुनायामनु प्रभुः ॥ २५ ॥ अष्टसप्ततिमेध्याश्वान्बबंध प्रददद्वसु ॥ भरतस्य हि दौष्यंतेरग्निः साचीगुणे चितः ॥ सहस्रं बद्वशो यस्मिन्ब्राह्मणा गा विभेजिरे ॥ २६ ॥ त्रयस्त्रिंशच्छतं ह्यश्वान्बद्ध्वा विस्मापयन् नृपान् ॥ दौष्यंतिरत्यगान्मायां देवानां गुरुमाययौ ॥ २७ ॥

चक्रवर्ती बभूवेति शेषः । "तस्य महिमा गीयते तदप्येते श्लोका अभिगीताः" इत्यादिबह्वृचश्रुत्या । हरेरंशभुवोंशाज्जातस्य ॥ २३ ॥ तत्र लिंगमाह । चक्रमिति ॥ ॥ २४ ॥ गंगायामनुलोमं पंचपंचाशता वाजिभिरीजे । पुरोधाय पुरोहितं कृत्वा । यमुनायामनु च यमुनायाश्चानुलोमम् ॥ २५ ॥ अष्टाधिकसप्ततिं मेध्यानश्वान्बबंध । किं कुर्वन् । वसु धनं प्रकर्षेण ददत् । साचीगुणे प्रकृष्टगुणवति देशेऽग्निश्चितोऽभूत् । यस्मिन्नग्निचयने देशे वा सहस्रं ब्राह्मणा भरतेन भूरिदानेन दत्ता गा बद्वशः प्रत्येकं बद्वंबद्वं विभेजिरे विभज्य जगृहुः । चतुरशीत्यधिकैस्त्रयोदशसहस्रैरेकं बद्वं भवति । तथा हि "हिरण्येन परिवृतान्कृष्णाञ्शुक्लदतो मृगान् ॥ मष्णारे भरतोऽददाच्छतं बद्वानि सप्त च" इति श्रुत्युक्तानि सप्ताधिकशतं बद्वानि श्रीशुकेनोत्तरश्लोके चतुर्दशलक्षत्वेन संगृहीतानि "अदात्कर्मणि मष्णारे नियुतानि चतुर्दश" इति । एवं चतुर्दशलक्षाणां सप्ताधिकशतभागो बद्वमित्युक्तम् । इयं च बद्वसंख्या श्लोकेन संगृह्यते । "चतुर्दशानां लक्षणां सप्ताधिकशतांशकः ॥ बद्वं चतुरशीत्यग्रसहस्राणि त्रयोदश" ॥२६॥ देवानामपि मायां वैभवमत्यगादत्यशेत । यतः गुरुं पूज्यं हरिमाययौ प्राप्तः तदंशभवत्वात् । मायवत्तर इति पाठे ह्रस्वः श्रुत्यनु

यद्वा—रेतोधा अपि या स्त्री त्रयोदशादिवर्षेषु गर्भं दधाति तस्या अपि यः पुत्रः सोऽपि यमक्षयात्पितरं नयन्निव तारयति । न केवलं द्वादशाब्दगृहीतरेतस एवेति भावः । यद्वा—रेतो दधाति गर्भं इति रेतोधाः स्त्री यच्छति नियच्छतीति यमो भर्ता तस्य क्षयान्मृतेरनंतरं पुत्रं नयति न तु तस्मिन् जीवतीति । अतस्त्वं पुत्रं गृहाणेति भावः।यद्वा—ऊर्ध्वरेता इतिवत् रेतः अधोऽर्थात्पतति यस्य स रेतोधा गृहस्थः स पुत्रं नयति"हरिवंशकथां श्रुत्वा शतचंडीविधानतः । भक्त्या श्रीशिवमाराध्य पुत्रोत्पत्तिं प्रसाधयेत्॥ " इत्यादिवाक्येभ्यः स्वस्य पुत्रं साधयति यमक्षयमुद्दिश्य " पुत्रेण जयति लोकान् " इत्यादिश्रुतेः ॥२२॥ तस्य शाकुंतलस्य । केन गीयते तत्राह—तदपीति । तदपि तस्यापि भरतस्यापि । एते बह्वृचब्राह्मणे पठितास्श्लोका यशोवाक्यानि श्रुत्याऽभिगीतास्ते च वेदादवसेयाः ॥२३॥ तत्र हरेरंशोद्भूतत्वे । लिंगं गमकम् । "यस्याप्रतिहतं चक्रमंशः स परमेष्ठिनः" इत्युक्तेः । "पादयोररविंदश्च तं वै मेने हरेः कलाम्" इत्युक्तेः । महाभिषेकश्चक्रवर्त्तिपदस्थापनकालिको वेदविहितोऽभिषेकप्रकारस्तेन॥२४॥मामतेयं ममतात्मजमुतथ्योद्भूतं दीर्घतमसम् । अनुलोमेन प्रवाहगत्यनुसारेण । मेध्यैर्यज्ञार्हैः ॥ ॥२५॥ साचीत्यव्ययं प्रकर्षे । अग्निचयनस्य कर्मत्वात्तत्र विभागसंभवादाह—देशे वेति । स्फुटमग्रे ॥ २६ ॥ 'माया वैभवकूटयोः' इति कोशात् । अत्यशेतातिक्रांतवान् । कुत इत्याकांक्षायामाह—यत इति । श्रुत्यनुसारेण

मृगान्छुक्लदतः कृष्णान्हिरण्येन परीवृतान् ॥ अदात् कर्मणि मष्णारे नियुतानि चतुर्दश ॥ २८ ॥ भरतस्य महत्कर्म न पूर्वे नापरे नृपाः ॥ नैवापुर्नैव प्राप्स्यंति बाहुभ्यां त्रिदिवं यथा ॥ २९ ॥ किरातहूणान्यवनानंध्रान्कंकान्खशाञ्छकान् ॥ अब्रह्मण्यान्नृपांश्चाहन्म्लेच्छान्दिग्विजयेऽखिलान् ॥ ३० ॥ जित्वा पुराऽसुरा देवान्ये रसौकांसि भेजिरे ॥ देवस्त्रियो रसां नीताः प्राणिभिः पुनराहरत् ॥ ३१ ॥ सर्वकामान्दुदुहतुः प्रजानां तस्य रोदसी ॥ समास्त्रिणवसाहस्रीर्दिक्षु चक्रमवर्तयत् ॥ ३२ ॥ स सम्राट् लोकपालाख्यमैश्वर्यमधिराट्छ्रियम् ॥ चक्रं चास्खलितं प्राणान्मृषेत्युपरराम ह ॥ ३३ ॥

सारेण । मायावतां श्रेष्ठो हरिरेवासावित्यर्थः ॥ २७ ॥ मृगान् श्रेष्ठगजान् । भद्रमंद्रमृगादयो गजजातिभेदाः मष्णारे इत्यस्य श्रुतिपदस्य व्याख्यानं कर्मणीति कस्मिंश्चित्कर्मविशेषे केचित्तु मष्णारे तीर्थे इति व्याचक्षते ॥ २८ ॥ २९ ॥ ३० ॥ पुरा देवान् जित्वा येऽसुरा रसौकांसि रसातलादिस्थानानि भेजिरे तैः प्राणिभिर्बलिभिर्देवस्त्रियो रसातलं नीताः सतीः पुनराहरदानिन्ये । प्राणिभिरन्यैर्मनुष्यादिभिः सह नीता इति वा । पाणिभिरिति पाठे पणयोऽसुरास्तैर्नीताः सतीः । यद्वा पणयो दूतास्तैर्दूतान्प्रस्थाप्याहरदित्यर्थः ॥ ३१ ॥ त्रिणवसाहस्रीः समाः सप्तविंशतिसहस्रं वत्सरान् । चक्रं सेना आज्ञा वा ॥ ३२ ॥ तस्य वैराग्येण मोक्षप्रकारमाह । स इति । मृषेति विचा

बहूचश्रुत्यनुरोधेन । तत्र 'मायवताम्' इति पाठोस्तीति । इत्यर्थ इति । अंशांशिनोरभेदोपचारादिति भावः ॥२७॥ "भद्रा मंद्रा मृगाश्चेति विज्ञेयास्त्रिविधा गजाः । क्रमेण हिमवद्विंध्यसह्याद्रिप्रभवा हि ते॥" इति रामोक्तेः । आदिना संकीर्णगजग्रहः। नियुतानि लक्षाः॥२८॥ हे न पूर्व नपूर्वो नियोजको यस्मात्स नपूर्वस्तत्संबुद्धौ तथा । नृपत्वात्स एव सर्वनियोजक इति भावः । इनेत्यपि संबुद्धिरेव हे इन स्वामिन् । यद्वा--नो नकारः पूर्वो यस्य नाम्नः स तथा हे नरेशेत्यर्थः । यद्वा—न पूर्वेनेत्येकमेव संबोधनं नो नकारः पूर्वो यस्य स नपूर्वो नारायणः स इनः स्वामी यस्येति नपूर्वेनस्तत्संबुद्धौ । नञर्थेन नशब्देन समासः। तस्य भरतस्य । महत्कर्म यज्ञदानशत्रुजयहरिस्मरणलक्षणम्। त्वं भर धारय तत्रापि भगवद्भक्तत्वात् । अपरे नृपाः पूर्वकालिका उत्तरकालिकाश्च नैव प्राप्स्यंति यथा बाहुभ्यां त्रिदिवमिति। यद्वा—भरतस्य महत्कर्मापरे नृपा नैवापुर्नैव प्राप्स्यंतीति । यद्वा—पूर्वे महत्कर्म नैवापुरिति न किं त्वापुरेव यद्भरतस्य तन्न अपरे महत्कर्म नैव प्राप्स्यंतीति न ।किं तु प्राप्स्यंत्येव यद्भरतस्य तन्नेति भावः । यद्वा—नकारद्वयस्य दार्ष्टांतिकद्वयस्य च दृष्टांतेऽन्वयो विधेय इति । केचित्तु नः पूर्वो येषां ते न पूर्वे नहुषादयः । नोऽपरस्मिन्येषां ते नापरेऽर्जुनादयस्ते भरतस्येति पूर्ववदिति व्याचख्युस्तन्मते सर्वकार्यमप्यार्षत्वादेवेति । यद्वा—हे न पूर्वोऽप्रणीरिनः स्वामी प्रेरको यस्य स नपूर्वेनस्तत्संबुद्धौ तथाऽर्थोद्धे सम्राट् परीक्षित्त्वं तस्य भरतस्य महत्कर्म वैराग्यलक्षणं भर धारय यथा स विरक्त आसीत्तथेदानीं भव । "स सम्राट् लोकपालाख्यमैश्वर्यं देवदुर्लभम् । चक्रं चास्खलितं प्राणान्मृषेत्युपरराम ह॥" इत्युक्तेः। किञ्च परे नृपाः तस्य कर्म। नैवापुर्नैव प्राप्स्यंतीति स्पष्टमग्रे ॥ २९ ॥ किरातादीन् म्लेच्छविशेषान् । अब्रह्मण्यान् ब्राह्मणविरोधिनः ॥३०॥ प्रयोगाप्राचुर्यादाह—अन्यैरिति । "पणिर्दैत्यसमूहे स्यात्स्तुतौ दूते क्रयादिके" इति धरणिः ॥ ३१ ॥ तस्य भरतस्य । "चक्रं सैन्ये जलावर्ते चक्रमाज्ञारथांगयोः" इति हलायुधः ॥३२॥ तस्य भरतस्य । लोकपालेष्वाख्यायते स्तूयत इति लोकपालैराख्यायते वेति लोकपालाख्यम् । षष्ठ्यंतपाठोऽपि बहुत्रास्ति । मृषा नाशशिरस्कम ॥ ३३ ॥

तस्यासन्नृप वैदर्भ्यः पत्न्यस्तिस्रः सुसंमताः ॥ जघ्नुस्त्यागभयात्पुत्रान्नानुरूपा इतीरिते ॥ ३४ ॥ तस्यैवं वितथे वंशे तदर्थं यजतः सुतम् ॥
मरुत्सोमेन मरुतो भरद्वाजमुपाददुः ॥ ३५ ॥ अंतर्वत्न्यां भ्रातृपत्न्यां मैथुनाय बृहस्पतिः ॥ प्रवृत्तो वारितो गर्भं शप्त्वा वीर्यमवासृजत् ॥ ३६ ॥
तं त्यक्तुकामां ममतां भर्तृत्यागविशंकिताम् ॥ नामनिर्वचनं तस्य श्लोकमेनं सुरा जगुः ॥ ३७ ॥ मूढे भरद्वाजमिमं भरद्वाजं बृहस्पते ॥ यातौ
यदुक्त्वा पितरौ भरद्वाजस्ततस्त्वयम् ॥ ३८ ॥

र्येति शेषः॥ ३३॥ नानुरूपा मत्सदृशा न भवंतीति भर्त्रा ईरिते सति व्यभिचारशंकयाऽस्मांस्त्यक्ष्यतीति भयात्पुत्रान् जघ्नुः पुनः पुत्राणां दर्शने वैसादृश्यानुसंधानेन त्यजेन्ना न्यथेत्याशयेन हतवत्यः ॥ ३४ ॥ वितथे व्यर्थे सति । तदर्थं पुत्रार्थं मरुत्स्तोमेन यागेन यजतस्तस्य प्रसन्नाः संतो मरुतो भरद्वाजं नाम पुत्रमुपाददुः समर्पयामासुः ॥ ३५॥ मरुतां भरद्वाजागमप्रकारं प्रदर्शयन्नाह अंतर्वत्न्यामिति चतुर्भिः । अंतर्वत्न्यां गर्भिण्यां भ्रातुरुतथ्यस्य पत्न्यां ममतायां चौर्येण मैथुनाय कदाचित्प्रवृत्तो बृहस्पतिस्तदा द्विती यगर्भस्यावकाशाभावादाक्रोशपूर्वकं गर्भस्थेन वारितस्ततः क्रुद्धो बृहस्पतिरंधो भवेति तं गर्भं शप्त्वा बलाद्वीर्यं न्यषिंचत्ततो बृहस्पतेः शापाद्गर्भस्थो दीर्घतमा अंधो बभूव तेन च तद्वीर्यं पार्ष्णिप्रहारेण योनेर्बहिर्निःसारितं भूमौ पतितं सद्य एव कुमारोऽभवत् ॥ ३६॥ तं च परवीर्यजं भर्तुस्त्यागाद्विशंकितां सतीं त्यक्तुकामां ममतां प्रति सुरा एनं बृहस्पतेर्ममतायाश्च विवादरूपं श्लोकं जगुः । किमर्थं जगुरत आह । तस्य नाम निरुच्यते येन तत् । तन्नामनिर्वचनेनैव भर्तुस्त्यागशंकामपाकर्तुमित्यर्थः ॥ ३७॥ तत्र पुत्रं त्यक्त्वा यांतीं ममतां बृहस्पतिराह । हे मूढे इमं पुत्रं भर पुषाण । भर्तुर्बिभेमीति चेत्तत्राह । द्वाजमेकस्य क्षेत्रेऽन्यस्य बीजादित्येवं द्वाभ्यां जातमतस्तस्याप्ययं पुत्र इति न तस्माद्भयशंकेत्यर्थः । एवमुक्त्वा सती तं प्रत्याह । हे बृहस्पते त्वमिमं भर यतो द्वाजं द्वाभ्यामावाभ्यामन्यायतो जातम् । अतो नाहमेकाकिनी भरामीत्यर्थः । यद्यस्मादेव मुक्त्वा पितरौ ममताबृहस्पती विवदमानौ पुत्रं परित्यज्य यातौ ततो हेतोरयं भरद्वाज इति । पाठांतरे यस्य त्यागदुःखात्पितरौ यातावित्यर्थः ॥ ३८ ॥

वैदर्भ्यो विदर्भराजपुत्र्यः । ईरिते उक्ते ॥ ३४ ॥ तस्य भरतस्य । यागेन यागविशेषेण ॥ ३५ ॥ तेन दीर्घतमसा । तद्वीर्यं बृहस्पतिरेतः । पार्ष्णिः पादपश्चाद्भागः ॥ ३६ ॥ तन्नामनिर्वचनेन तस्य नामनिरुक्त्या । इत्यर्थ इति । यथा स्कंदधर इत्यादौ क्रियापदस्य सुबंतयोगेन 'धरं क्रौञ्चगिरिं स्कन्द पातय' इत्यर्थप्रत्यायकत्वात्कार्त्तिकेयेन गिरिदारणं स्वीकृतं तेन तन्नामत्वं च जातमेवमत्रापि क्रियापदसुबंतयोगस्य द्वाभ्यां जातत्वरूपार्थ प्रत्यायकतया तन्नामत्वं तदंगीकार्यत्वं च भवत्विति भावः ॥ ३७ ॥ तत्र तयोर्मध्ये । अतः क्षेत्रजत्वात् । इत्यर्थ इति । क्षेत्रजपुत्रस्यापि विहितत्वात्त्वां स न त्यक्ष्यतीति भावः । तं बृहस्पतिम् । इत्यर्थ इति । तवाप्ययं पुत्रो यतस्त्वं न भरसि तर्हि कथमहं द्वयोः समसंबंधत्व एकाकिनी धारयामीति भावः । पाठांतरे "यद्दुःखात्पितरौ" इति पाठे । इत्यर्थ इति । लोकापवादभीतौ तं त्यक्त्वैव गताविति

चोद्यमाना सुरैरेवं मत्वा वितथमात्मजम् ॥ व्यसृजन्मरुतोऽबिभ्रन्दत्तोऽयं वितथेऽन्वये ॥ ३९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे विंशोऽध्यायः ॥ २० ॥ श्रीशुक उवाच ॥ वितथस्य सुतो मन्युर्बृहत्क्षत्रो जयस्ततः ॥ महावीर्यो नरो गर्गः संकृतिस्तु नरात्मजः ॥ १ ॥ गुरुश्च रंतिदेवश्च संकृतेः पांडुनंदन ॥ रंतिदेवस्य हि यश इहामुत्र च गीयते ॥ २ ॥ वियद्वित्तस्य ददतो लब्धंलब्धं बुभुक्षतः ॥ निष्किंचनस्य धीरस्य सकुटुंबस्य सीदतः ॥ ३ ॥ व्यतीयुरष्टचत्वारिंशदहान्यपिबतः किल ॥ घृतपायससंयावं तोयं प्रातरुपस्थितम् ॥ ४ ॥ कृच्छ्रप्रातकुटुंबस्य क्षुत्तृड्भ्यां जातवेपथोः ॥ अतिथिर्ब्राह्मणः काले भोक्तुकामस्य चागमत् ॥ ५ ॥ तस्मै संव्यभजत्सोऽन्नमादृत्य-श्रद्धयान्वितः ॥ हरिं सर्वत्र संपश्यन्स भुक्त्वा प्रययौ द्विजः ॥ ६ ॥ अथान्यो भोक्ष्यमाणस्य विभक्तस्य महीपते ॥ विभक्तं व्यभजत्तस्मै वृषलाय हरिं स्मरन् ॥ ७ ॥

वितथं व्यभिचारसंभवात्तमात्मजं वितथं निरर्थकं मत्वा ममता व्यसृजत्तत्याज । पाठांतरे आदिजं प्रथमजं भर्तुर्वीर्याज्जातमेव मुख्यमात्मजं मत्वा बृहस्पतेर्जातं तत्याजेत्यर्थः । एवं तया त्यक्तं मरुतोऽबिभ्रन्नबिभरुः । तदेवं मरुद्भिः प्राप्तोऽयं भरतस्यान्वये वितथे सति दत्तः ॥ ३९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां विंशोऽध्यायः ॥ २० ॥ एकविंशे तु दौष्यंतेः सुतस्यान्वय उच्यते । रंतिदेवाजमीढादेर्यत्र कीर्तिः प्रतन्यते ॥ १ ॥ भरतस्यान्वये वितथे सति दत्तत्वाद्वितथसंज्ञो भरद्वाजः स च ब्राह्मणोऽपि भरतस्य दत्तः पुत्रो जात इति तद्वंशोऽनुक्रम्यते । वितथस्य सुतो मन्युस्तस्माद्बृहत्क्षत्रजयमहावीर्यनरगर्गाः पंच पुत्रा बभूवुः ॥ १ ॥ २ ॥ वियद्वित्तस्य वियतो गगनादिवोद्यमं विना दैवादुपस्थितमेव वित्तं भोग्यं यस्य । यद्वा वियद्वयं प्राप्नुवद्वित्तं भोग्यं यस्य तदेवाह । बुभुक्षतोऽपि सतो लब्धंलब्धं ददतः । तत्प्रपंचयति । निष्किंचनस्येत्यादिसार्द्धैः पंचदशभिः ॥ ३ ॥ अपिबतो जलपानमप्यकुर्वतः । घृतादित्रयाणां द्वंद्वैक्यम् । तोयं च ॥ ४ ॥ ५ ॥ ६ ॥ अथान्यो वृषलाऽतिथिरागमत् । विभक्तस्य कुटुम्बार्थम

भावः ॥ ३८ ॥ पाठांतरे 'मत्वा दितरमात्मजम्' इति पाठे 'मत्वा चादिजमात्मजम्' । इति पाठे वा । इत्यर्थ इति । व्यभिचारजात्मजधारणस्य निंदितत्वात्तं त्यक्तवतीति भावः । हरिवंशे तु "ततोऽथ वितथो नाम भरद्वाजसुतोऽभवत् । ततोथ वितथे जाते भरतस्तु दिवं ययौ । वितथं चाभिषिच्याथ भरद्वाजो वनं ययौ ॥" इत्युक्तम् । एतदानुकूल्यं त्वयं भरद्वाजो वितथेऽन्वये पुत्रे सति वनं ययाविति शेषेण स्यादित्यर्थः ॥ ३९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे विंशोऽध्यायः ॥ २० ॥ यत्र दौष्यंत्यन्वये ( १ ) । ततो मन्योः ॥ १ ॥ शुद्धवंशोद्भूतत्वेनाधिकारित्वात्त्वां ब्रवीमीत्यभिप्रेत्याह—पांडुनंदनेति ॥ २ ॥ ननु राज्ञ एतन्न संभवतीति चेदाह—यद्वेति । तदेव भोग्यशून्यत्वमेव । तत् लब्धलब्धदानम् । संचयाभावाद्भिक्षुकवत्कृपणः स्यात्तत्राह—धीरस्येति । धिया रममाणस्य विषयचिंताशून्यस्येत्यर्थः । एकाकिनः का चिंतेति चेदाह—सकुटुंबस्य । अत एव सीदतः पीडामाप्तवतः ॥ ३ ॥ तत्र हेतुमाह—अपिबत इति ॥ ४ ॥ काले भोजनावसरे ॥ ५ ॥ तस्मै अतिथये । स राजा ॥ ६ ॥ अथ ब्राह्मणातिथिभोजनानंतरम् । विभक्तस्य प्राप्तविभागस्य ॥

याते शूद्रे तमन्योऽगादतिथिः श्वभिरावृतः ॥ राजन्मे दीयतामन्नं सगणाय बुभुक्षते ॥ ८ ॥ स आदृत्यावशिष्टं यद्बहुमानपुरस्कृतम् ॥ तच्च दत्त्वा नमश्चक्रे श्वभ्यः श्वपतये विभुः ॥ ९ ॥ पानीयमात्रमुच्छेषं तच्चैकपरितर्पणम् ॥ पास्यतः पुल्कसोऽभ्यागादपो देह्यशुभस्य मे ॥ १० ॥ तस्य तां करुणां वाचं निशम्य विपुलश्रमाम् ॥ कृपया भृशसंतप्त इदमाहामृतं वचः ॥ ११ ॥ न कामयेऽहं गतिमीश्वरात्परामष्टर्द्धियुक्तामपुनर्भवं वा ॥ आर्तिं प्रपद्येऽखिलदेहभाजामंतःस्थितो येन भवंत्यदुःखाः ॥ १२ ॥ क्षुत्तृट् शमो गात्रपरिश्रमश्च दैन्यं क्लमः शोकविषादमोहाः ॥ सर्वे निवृत्ताः कृपणस्य जंतोर्जिजीविषोर्जीवजलार्पणान्मे ॥ १३ ॥ एवं प्रभाष्य पानीयं म्रियमाणः पिपासया ॥ पुल्कसायाददाद्धीरो निसर्गकरुणो नृपः ॥ १४ ॥ तस्य त्रिभुवनाधीशाः फलदाः फलमिच्छताम् ॥ आत्मानं दर्शयांचक्रुर्माया विष्णुविनिर्मिताः ॥ १५ ॥ स वै तेभ्यो नमस्कृत्य निःसंगो विगतस्पृहः ॥ वासुदेवे भगवति भक्त्या चक्रे नमः परम् ॥ १६ ॥ ईश्वरालंबनं चित्तं कुर्वतोऽनन्यराधसः ॥ माया गुणमयी राजन्स्वप्नवत्प्रत्यलीयत ॥ १७ ॥ तत्प्रसंगानुभावेन रंतिदेवानुवर्तिनः ॥ अभवन्योगिनः सर्वे नारायणपरायणाः ॥ १८ ॥ गर्गाच्छिनिस्ततो गार्ग्यः क्षत्राद्ब्रह्म ह्यवर्तत ॥ दुरितक्षयो महावीर्यात्तस्य त्रय्यारुणिः कविः ॥ १९ ॥

न्नादिकं विभक्तवतः ॥ ७ ॥ सगणाय श्वयूथसहिताय ॥ ८ ॥ ९ ॥ उच्छेषमुर्वरितम् । एकमेव तर्पयतीति तथा ॥ १० ॥ ११ ॥ परदुःखासहिष्णुतया सर्वेषां दुःखं स्वयं भोक्तुमाशास्ते । नेति । अणिमाद्यष्टसमृद्धियुक्तां गतिमपि मोक्षमपि चाहं न कामये । तर्हि किं कामयसे तदाह । अखिलदेहभाजामार्तिं दुःखं तत्तद्भोक्तृरूपेणांतःस्थितः सन्नहं प्रपद्ये प्राप्नुयामित्येवं कामये येन तद्दुःखभोक्त्रा मया हेतुभूतेन ते सर्वेऽदुःखा भवंति ॥ १२ ॥ ननु दुःखं किमिति प्रार्थयसे परदुःखनिवृत्त्यैवमम सर्वदुःखनिवृत्तिरित्याह । क्षुत्तृडिति । कृपणस्य जंतोर्जीवनहेतोर्जलस्यार्पणान्मे सर्वे क्षुत्तृडादयो निवृत्ताः ॥ १३ ॥ इत्येवं प्रभाष्य ॥ १४ ॥ त्रिभुवनाधीशा ब्रह्मादयः । मायास्तदीयधैर्यपरीक्षार्थं प्रथमं मायया वृषलादिरूपेण प्रतीताः संत इत्यर्थः ॥ १५ ॥ परं केवलं वासुदेवे भक्त्या नमश्चक्रे न तु तान्किमपि याचितवान् ॥ १६ ॥ अनन्यराधस ईश्वरातिरिक्तफलांतरानपेक्षस्य । प्रत्यलीयतात्मन्येव लीना बभूव ॥ १७ ॥ १८ ॥ मन्युसुतस्य नरस्य वंशमुक्त्वा तत्सुतस्यैव गर्गस्य वंशमाह । गर्गादिति । महावीर्यस्य

तस्मै वृषलः शूद्रस्तद्रूपायातिथये ॥ ७ ॥ बुभुक्षते भोक्तुमिच्छते ॥ ८ ॥ ९ ॥ पुल्कसो म्लेच्छभेदः । अशुभस्य दानाद्ययोग्यस्य ॥ १० ॥ तस्य पुल्कसस्य । करुणां दीनाम् । विपुलश्रमामतिश्रमेणोच्चारिताम् । इदं वक्ष्यमाणम् । अमृतवच्छ्रोत्राह्लादकरम् ॥ ११ ॥ १२ ॥ अत्राक्षिपति—नन्विति । श्रमो मानस आयासः । क्लमो ग्लानिः । एतेन क्षुदादिमते दातुः क्षुदादिमतेऽतिथयेऽन्नादिदाने तन्निवृत्तिस्तददाने तदनिवृत्तिरित्यन्वयव्यतिरेकौ दर्शितौ ॥ १३ ॥ निसर्गेण स्वभावेन करुणो दयालुः ॥ १४ ॥ तस्य रंतिदेवस्य । इत्यर्थ इति । न केवलं तेऽतिथ्यादय एव किन्तु मायया विष्णुना विनिर्मिता देवा एव परीक्षणार्थमागता इति भावः ॥ १५ ॥ स राजा । तेभ्यो विष्णुमायानिर्मितदेवेभ्यो वासुदेवस्वरूपा एवेमे न तद्भिन्ना इत्येवं भक्त्या ॥ १६ ॥ गुणमयी संसाराख्या ॥ १७ ॥ तस्य रंतिदेवस्य । प्रसंगः प्रकृष्टसंगस्तस्यानुभावेन प्रभावेण । "अनुभावः प्रभावे स्यान्निश्चये भावसूचके" इति यादवः । योगिनो भक्तियोगिनः । तदेवाह—नारायणेति ॥ १८ ॥ प्रस्तुतमनुसरति—गर्गादिति । तत्सुतस्यैव मृत्युसुतस्यैव । ब्रह्म ब्राह्मणकुलम् । अवर्तत प्रवृत्तोभूदित्यर्थः ।

पुष्करारुणिरित्यत्र ये ब्राह्मणगतिं गताः ॥ बृहत्क्षत्रस्य पुत्रोऽभूद्धस्ती यद्धस्तिनापुरम् ॥ २० ॥ अजमीढो द्विमीढश्च पुरुमीढश्च हस्तिनः ॥ अजमीढस्य वंश्याः स्युः प्रियमेधादयो द्विजाः ॥ २१ ॥ अजमीढाद् बृहदिषुस्तस्य पुत्रो बृहद्धनुः ॥ बृहत्कायस्ततस्तस्य पुत्र आसीज्जयद्रथः ॥ ॥ २२ ॥ तत्सुतो विशदस्तस्य सेनजित्समजायत ॥ रुचिराश्वो दृढहनुः काश्यो वत्सश्च तत्सुताः ॥ २३ ॥ रुचिराश्वसुतः पारः पृथुसेनस्तदात्मजः ॥ पारस्य तनयो नीपस्तस्य पुत्रशतं त्वभूत् ॥ २४ ॥ स कृत्व्यां शुककन्यायां ब्रह्मदत्तमजीजनत् ॥ स योगी गवि भार्यायां विष्वक्सेनमधात्सुतम् ॥ २५ ॥

वंशमाह । दुरितक्षयस्तस्य त्रय्यारुणिः कविः पुष्करारुणिश्चेति त्रयः पुत्राः ॥ १९ ॥ कथंभूताः । ये अत्र क्षत्रवंशे ब्राह्मणगतिं ब्राह्मणरूपतां गतास्ते । मन्युपुत्राणां पंचानां ज्येष्ठस्य वंशमाह । बृहत्क्षत्रस्येति । यद्येन हस्तिनापुरं कृतमित्यर्थः ॥ २० ॥ अजमीढादयस्त्रयो हस्तिनः पुत्राः ॥ २१ ॥ अजमीढादेवान्यः पुत्रो बृहदिषुर्नामाऽभवत् ॥ ॥ २२ ॥ २३ ॥ पारस्य तनयो नीपः । नीपस्य पुत्रशतम् ॥ २४ ॥ स एव कृत्व्यां कृत्वीसंज्ञायां शुककन्यायां ब्रह्मदत्तं जनयामास । तदुक्तं हरिवंशादिषु । "पराशरकुलोत्पन्नः शुको नाम महायशाः । व्यासादरण्यां संभूतो विधूमोऽग्निरिवोज्ज्वलन् ॥ स तस्यां पितृकन्यायां वीरिण्यां जनयिष्यति । कृष्णं गौरप्रभं शंभुं तथा भूरिश्रुतं जयम् ॥ कन्यां कीर्तिमतीं षष्ठीं योगिनीं योगमातरम् ॥ ब्रह्मदत्तस्य जननीं महिषीमणुहस्य च ॥" इति । यद्यपि शुक उत्पत्त्यैव विमुक्तसंगो निर्गतस्तथाऽपि विरहातुरं व्यासमनुयांतं

महावीर्यस्य मन्युसुतस्य । तस्य दुरितक्षयस्य ॥ १९ ॥ इत्यर्थ इति । कृतमिति शेष इति भावः ॥ २० ॥ २१ ॥ तस्य बृहदिषोः । ततो बृहद्धनुषः । तस्य बृहत्कायस्य ॥ २२ ॥ तत्सुतो जयद्रथसुतः । तस्य विशदस्य । तत्सुताः सेनजित्सुताः । रुचिराश्वादयश्चत्वारः ॥ २३ ॥ तदात्मजः पारात्मजः । तस्य नीपस्य ॥ २४ ॥ स एव नीप एव । नीपस्याणुह इत्यपि नामांतरम् । तदुक्तमित्यत्रादिना विष्णुपुराणादिग्रहः । किं च हरिवंशे तु नीपात्सप्तमोणुहस्तस्य ब्रह्मदत्तः पुत्र इत्युक्तम् । अत्र तु नीपस्य पुत्र इत्युक्तमिति विरोधस्तु कल्पांतरव्यवस्थया वार्य इति । यद्वाऽरण्युद्भूतच्छायाशुकाभ्यामन्यस्तृतीयः शुकोऽपि मुख्यः ब्रह्मवैवर्त्ते व्यासात्मज उक्तस्तदभिप्रायं गार्हस्थ्यमिति ध्येयम् । तथाहि–["प्राप्ते कलियुगे व्यासश्चक्रे यो जगतः कृते । महाभारतमाख्यानं सर्ववेदार्थसंग्रहम् ॥" इत्याद्युक्त्वा "ब्रह्मचर्यपरिभ्रंशे मातृवाक्यादुपस्थिते । स्वयं पितृऋणात्मानं द्विपवत्सोढुमक्षमः ॥ विचिंत्य मनसा चक्रे भार्यां जाबालिकन्यकाम् । वीटिकाख्यां ददौ तस्मै सोऽपि वैखानसाश्रमी ॥ चक्रे तया सह तप ऋतुगामी तदिच्छया । अथ गर्भोऽभवत्तस्मात्तस्यां स ववृधे शनैः ॥ कलाभिः शुक्लपक्षे वै हिमद्युतिरिव द्विज । द्वादशाब्दानि जातानि न प्रसूते स्म सा तदा ॥ कृष्णद्वैपायनप्रोक्तं वेदवेदार्थसंग्रहम् । पुराणं भारतं धर्मशास्त्रं यदश्रृणोद्द्विज ॥ तत्सर्वं प्रज्ञया गर्भश्चक्रे हृदि पपाठ च । गर्भसंस्थोऽपि कुरुते न तु निष्क्रमणे मतिम् ॥ सा च गर्भभराक्रांता बभूवातीव पीडिता । अथ द्वादशमे वर्षे कृष्णद्वैपायनो मुनिः ॥ उपविश्य कृतस्नानो गर्भमामंत्र्य सामभिः । संबोधयामास तदा वचोभिर्भक्तिभावितैः ॥ व्यास उवाच ॥ यत्त्वं मदीयगृहिणीमिधुनाति कालमाविश्य पीडयसि गर्भ तथा यथार्थम् । तद्ब्रूहि निष्क्रमसि नाम कथं न मूढ किं मारयिष्यसि विरुद्धकरस्त्वमेताम् ॥ गर्भ उवाच ॥ रक्षोऽहमस्मि सुरयक्ष–इत्यादि । "भ्रांतोऽहं तेषु सर्वेषु कोऽहं त्वां च ब्रवीमि किम् ॥ सांप्रतं मानुषो भूत्वा जठरेऽस्या ह्यवस्थितः ॥ तद्व्यास न करिष्यामि गर्भान्निष्क्रमणं बहिः । नात्मानं वेष्टयिष्यामि दीनचित्तो हि मायया ॥" इत्यादि । "व्यास उवाच ॥ यद्येवमस्त्यभिमतं तव तर्हि निंद्यान्निष्क्रम्य तुल्यनरकादिह गर्भवासात् । सम्यक्स

संहिताः प्राच्यसाम्नां वै नीपो ह्युग्रायुधस्ततः ॥ तस्य क्षेम्यः सुवीरोऽथ सुवीरस्य रिपुंजयः ॥ २९ ॥ ततो बहुरथो नाम पुरुमीढोऽप्रजोऽभवत् ॥ नलिन्यामजमीढस्य नीलः शांतिः सुतस्ततः ॥ ३० ॥ शांतेः सुशांतिस्तत्पुत्रः पुरुजोऽर्कस्ततोऽभवत् ॥ भर्म्याश्वस्तनयस्तस्य पंचासन्मुद्गलादयः ॥ ॥ ३१ ॥ यवीनरो बृहदिषुः कांपिल्यः संजयः सुताः ॥ भर्म्याश्वः प्राह पुत्रा मे पंचानां रक्षणाय हि ॥ ३२ ॥ विषयाणामलमिमे इति पंचालसंज्ञिताः ॥ मुद्गलाद्ब्रह्म निर्वृत्तं गोत्रं मौद्गल्यसंज्ञितम् ॥ ३३ ॥ मिथुनं मुद्गलाद्भार्म्याद्दिवोदासः पुमानभूत् ॥ अहल्या कन्यका यस्यां शतानंदस्तु गौतमात् ॥ ३४ ॥ तस्य सत्यधृतिः पुत्रो धनुर्वेदविशारदः ॥ शरद्वांस्तत्सुतो यस्मादुर्वशीदर्शनात्किल ॥ ३५ ॥ शरस्तंबेऽपतद्रेतो मिथुनं तदभूच्छुभम् ॥ तद्दृष्ट्वा कृपयाऽगृह्णाच्छंतनुर्मृगयां चरन् ॥ कृपः कुमारः कन्या च द्रोणपत्न्यभवत्कृपी ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे सोमवंशानुकीर्तने एकविंशोऽध्यायः ॥ २१ ॥ श्रीशुक उवाच ॥ मित्रेयुश्च दिवोदासाच्च्यवनस्तत्सुतो नृप ॥ सुदासः सहदेवोऽथ सोमको जंतुजन्मकृत् ॥ १ ॥ तस्य पुत्रशतं तेषां यवीयान्पृषतः सुतः ॥ द्रुपदो द्रौपदी तस्य धृष्टद्युम्नादयः सुताः ॥ २ ॥

तवान्॥ २८॥ २९॥ अजमीढस्य वंश्या प्रियमेधादयः। केचिद्ब्राह्मणा बभूवुर्बृहदिषुप्रभृतयः क्षत्रियाश्चेति वंशद्वयमुक्तम्। तस्यैव वंशांतरमाह। नलिन्यामिति यावत्समाप्ति॥ ३०॥ ॥ ३१॥ मुद्गल एको यवीनरादयश्चत्वार इत्येवं पंच ॥ ३२॥ ३३॥ भार्म्याद्भर्म्याश्वपुत्रात्। मिथुनं चाभूत्। तदेवाह। दिवोदासः पुमानहल्या च कन्यकेति॥ ३४॥ ३५॥ ३६॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामेकविंशतितमोऽध्यायः॥ २१॥ द्वाविंशे तु दिवोदासवंशमुक्त्वाऽथ वर्णिताः॥ ऋक्षवंशे जरासंधपार्थदुर्योधनादयः॥ १॥ १॥ तस्य सोमकस्य

कौसल्य आध्यात्म्यं याज्ञवल्क्योऽध्यगाद्यतः। योगं महोदयम्" इत्युक्तेः ॥ २८ ॥ प्राच्यसाम्नामेतत्संज्ञसाम्नाम् । ततः कृतिनः। ततो नीपात् । तस्योग्रायुधस्य । तस्य क्षेम्यस्य । पुनः सुवीरः ॥ २९ ॥ ततः रिपुंजयस्य । अथो हस्तिपुत्रः। पुरुमीढः । पुनरजमीढस्यैव वंशमाह–ततो नीलात् ॥ ३० ॥ तत्पुत्रः सुशांतिपुत्रः । ततः पुरुजात् । तस्यार्कस्य । पुनस्तस्य भर्म्याश्वः ॥ ३१ ॥ ३२ ॥ विषयाणां देशानाम् । "नीवृज्जनपदो देशो विषयस्तूपवर्तनम्" इत्यमरः ॥ ३३ ॥ तदेव मिथुनम् । यस्यामहल्यायाम् ॥ ३४ ॥ तस्य शतानंदस्य । तत्सुतः सत्यधृतिसुतः । यस्माच्छरद्वतः ॥ ३५ ॥ शरस्तंबे तेजनकगुल्मे । "शरस्तेजनके बाणे दध्यग्रे नाशरंजले" इति । तद्रेतः। शुभं दीप्तिमत् । मिथुनं कन्याकुमाररूपम् तन्मिथुनम् ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे एकविंशोऽध्यायः ॥ २१ ॥ ॥ अथ दिवोदासवंशवर्णनोत्तरम् ( १ ) । प्रसंगाद्भगिनीवंशमुक्त्वा भ्रातृवंशमाह–पूर्वोक्तभार्म्यदिवोदासात् । तत्सुतो मित्रेयुसुतः । पुनस्तत्सुतः सुदासस्तत्सुतः सहदेवः । अथ सहदेवात् । जंतुनाम्नो जन्मकृत्पिता । सोमकाज्जंतुः पुत्रोऽभूदित्यर्थः ॥ १ ॥ यद्वा–तस्य जंतोः शरीरहोमात् पुत्रशतं तच्छरीरोद्भवत्वात्पुत्रत्वोक्तिः । वस्तुतस्तु–जंत्वाख्यैकपुत्रवता सोमकेन स्त्रीशतवता बहुपुत्रेच्छया कस्यचिदृषिवचनेन जंतुशरीरं हुत्वाहुततच्छरीरगंधग्रहणेन स नारीशतकेन शतपुत्रतां लेभे । जंतुरपि सचिह्नः पूर्वस्यामेव निजमातरि जज्ञे । अन्ये तद्भ्रातरोऽपि तच्छरीरोद्भवत्वेन तत्पुत्रत्वेनोक्ता इति विस्तृतं महाभारते । तेषां शतस्य

जैगीषव्योपदेशेन योगतंत्रं चकार ह ॥ उदक्स्वनस्ततस्तस्माद्ब्रह्मदो बार्हदीषवाः ॥ २६ ॥ यवीनरो द्विमीढस्य कृतिमांस्तत्सुतः स्मृतः ॥ नाम्ना सत्यधृतिर्यस्य दृढनेमिः सुपार्श्वकृत् ॥२७॥ सुपार्श्वात्सुमतिस्तस्य पुत्रः सन्नतिमांस्ततः ॥ कृती हिरण्यनाभाद्यो योगं प्राप्य जगौ स्म षट् ॥२८॥

दृष्ट्वा छायाशुकं निर्माय गतवांस्तदभिप्रायेणैव गार्हस्थ्यादिव्यवहार इत्यविरोधः । स ब्रह्मदत्तो योगी । गवि वाचि सरस्वत्याम् ॥ २५ ॥ स एव योगतंत्रं चकार । बार्हदीषवो बृहदिषोर्वंश्या इमे दीर्घत्वमार्षम् ॥ २६ ॥ सुपार्श्वकृत्सुपार्श्वस्य पिता ॥ २७ ॥ प्राच्यसाम्नां षट् संहिता जगौ विभज्याध्यापि

माश्रय महोदयहेतुमेकं श्रीप्राणनाथमुभयोः कुरु वा विवेकम् ॥ गर्भ उवाच॥ज्ञानं विवेकभवमस्ति च तावदेव वैराग्यमन्यभवसंस्मरणञ्च तावत् । यावन्न निष्क्रमति जंतुरितो निबद्धो देवस्य चित्तनिलयस्य न मायया स्यात्''॥ इत्यादि।'' व्यास उवाच॥माया भविष्यति न ते पुरुषोत्तमस्य वक्त्रं प्रदर्शय निजं मम वत्स शीघ्रम्''इत्यादि। ''गर्भ उवाच॥ यद्येत्य मे स भविता प्रतिभूर्मुरारिर्मायाप्रहाणविषये यदुवंशनाथः।गर्भं विहाय तदहं बहिरद्य भावी नैवान्यथा कथमपीति विनिश्चयो मे'' इत्यादि । ''सूत उवाच ॥ इत्थं तदीयवचनं द्विज शुश्रुवान्स व्यासोतिदुःखितमनाः प्रययौ तदानीम् । नारायणं व्यवसितो हृदि तस्य हेतोरानेतुमीषदनिवृत्तमतिर्भवाब्धेः॥तत्र त्रिलोकमहितेन कृतप्रणामः कृष्णेन विश्वसुहृदा द्विजदैवतेन । प्राप्तार्हणो निखिलमात्महृदिस्थमस्मै व्यासो न्यवेदयदसावपि प्रत्यपेदे ॥ कर्त्तव्यमेतदिह नाम कियन्मदीयं गेहं पवित्रयितुमद्य तवागतस्य । तीर्थस्य जंगमगतिं दधतो तरंगजंबालशोधनपटोरिति चाह वाचम् ॥ नारायणाय चितिभाजनमेवमेष भूत्वा ययौ द्विजवरः सह कृष्णयुक्तः । प्राह प्रविश्य पुनरेव स कांदिशीकः किंचित्परानुभवधिष्ठितगर्भशंकी ॥ व्यास उवाच ॥ अयमस्त्याविर्भावो वै द्वारावत्या गदाधरः । गृहीत्वैनं प्रतिभुवं निष्क्रमं कुरु पुत्रक ॥ गर्भ उवाच । त्वं ब्रूहि माधव जगन्निगडोपमेयं मायाखिलस्य न विलंघ्यतमा त्वदीया । बध्नाति मां न यदि गर्भमिमं विहाय यास्यामि संप्रति बहिः प्रतिभूस्त्वमत्र॥आब्रह्म विश्वमखिलं तव माययेव बद्धं त्वयैव भवदुःखहरस्त्वमेव॥'' इत्यादि । 'सूत उवाच ॥ इत्थं तदीयवचसा भगवान्प्रतीतः प्राह प्रहस्य शनकैरिति वाचमीशः । मन्मायया न भवति तव संप्रयोगो योगावृतांग कुरु निष्क्रमणं विशंकम् ॥ गंतासि मोक्षमधुनैव मम प्रसादाज्जीवन्नवाप्स्यसि महोदयसौख्यमंग । यं तं वदंति मुनयो बहुदुःखयोगबुद्धेर्वियोगमवियोगकरं मया तत् ॥ वाक्यावसानमनुविश्य ततस्तु गर्भात्तस्माज्झटित्यथ विनिर्गत एव योगी। स द्वादशाब्दमतिवेषवयाः प्रणम्य व्यासं हरिं स्वजननीमथ संप्रतस्थे॥ततश्च पितृपुत्रसंवादानंतरम् । ''श्रीभगवानुवाच॥व्यास त्वदीयतनयः शुकवन्मनोज्ञं ब्रूते वचो भवतु तच्छुक एव नाम्ना । हर्म्ये च वत्स्यति तथापि न मायया मे स्पृष्टः पथो मम कृथा हृदि मास्य शोकम्॥यामो गृहं वयमपि प्रकुरुष्व वाक्यं यत्त्वामयं परमभावयतोभ्युवाच ॥'' इत्यादि । ''इत्थं जगत्रयगुरुः पुरुषोत्तमस्त्वं संबोध्य बोधनिधिमाशु रथाधिरूढः । आमंत्र्य भारत कविर्द्विजवर्यमुच्चैस्तां द्वारकां सुरपुरीं द्रुतमाजगाम ॥'' ] इति ब्रह्मवैवर्त्ते । किञ्च—पुराणानां कल्पभेदेनैव व्यवस्था स्कंदपुराणादावुक्ता ''कथावैचित्र्यमखिलं सत्यमेव न संशयः । पुराणानां यतः कर्त्ता व्यासः साक्षात्स्वयं हरिः॥ कल्पभेदं समादाय कथाभेदं जगाद ह । धीदोषकल्पनं चात्र सर्वज्ञे न हि संभवेत् ॥ कचिदासुरमोहार्थं व्यत्यासेनापि संजगौ ॥ नार्थत्वादृशैः कार्या यतः सा पुण्यकर्त्तरी ॥ इतिहासपुराणा हि वेदभागो न संशयः॥'' इति वारतंतव्युक्तेः । किञ्च ''पुराणं सर्वशास्त्राणां प्रथमं ब्रह्मणः स्मृतम् । अनंतरञ्च वक्त्रेभ्यो वेदास्तस्य विनिर्गताः ॥ पुराणमेकमेवासीत्तदा कल्पांतरेनघ । त्रिवर्गसाधनं पुण्यं शतकोटिप्रविस्तरम् ॥ अंगानि चतुरो वेदाः पुराणं न्यायविस्तरम् । मीमांसा धर्मशास्त्रञ्च परिगृह्य मया कृतम्॥प्रवृत्तिः सर्वशास्त्राणां पुराणस्याभवत्ततः । कालेनाग्रहणं दृष्ट्वा पुराणस्य ततो नृप॥व्यासरूपमहं कृत्वा संहरामि युगेयुगे । चतुर्लक्षप्रमाणेन द्वापरेद्वापरे सदा॥ तथाष्टादशधा कृत्वा भूर्लोकेऽस्मिन्प्रकाश्यते । अद्यापि देवलोकेऽस्ति शतकोटिप्रविस्तरम् । तदर्थोत्र चतुर्लक्षसंक्षेपेण निरूपितम् ॥'' इति मात्स्ये त्रिपंचाशत्तमाध्याये मनुं प्रति श्रीमत्स्योक्तेश्च ॥२९॥ स एव ब्रह्मदत्त एव । जैगीषव्यो मुनिः । योगतंत्रमष्टांगयोगप्रतिपादकं शास्त्रम् । ततो विष्वक्सेनात् । तस्मादुदक्सेनात् ॥ २६ ॥ हस्तिपुत्रद्विमीढस्य वंशमाह—यवीनर इति । तत्सुतो यवीनरसुतः । यस्य कृतिमतः । पुनर्यस्य सत्यधृतेः ॥ २७ ॥ तस्य सुमतेः । ततः संनतिमतः । यः कृती । हिरण्यनाभात्कौसल्यात् । जैमिनिशिष्यात्प्राज्ञः । योगं ज्ञानकर्मादिरूपम् । ''ततो हिरण्यनाभोभूद्योगाचार्यस्तु जैमिनेः । शिष्यः

धृष्टद्युम्नाद्धृष्टकेतुर्भार्म्याः पंचालका इमे ॥ योऽजमीढसुतो ह्यन्य ऋक्षः संवरणस्ततः ॥ ३ ॥ तपत्यां सूर्यकन्यायां कुरुक्षेत्रपतिः कुरुः ॥ परीक्षित्सु धनुर्जह्नुर्निषधाश्वः कुरोः सुताः ॥ ४ ॥ सुहोत्रोऽभूत्सुधनुषश्च्यवनोऽथ ततः कृती ॥ वसुस्तस्योपरिचरो बृहद्रथमुखास्ततः ॥ ५ ॥ कुशांबमत्स्य प्रत्यग्रचेदिपाद्याश्च चेदिपाः ॥ बृहद्रथात्कुशाग्रोऽभूदृषभस्तस्य तत्सुतः ॥ ६ ॥ जज्ञे सत्यहितोऽपत्यं पुष्पवांस्तत्सुतो जहुः ॥ अन्यस्यां चापि भार्यायां शकले द्वे बृहद्रथात् ॥ ७ ॥ ते मात्रा बहिरुत्सृष्टे जरया चाभिसंधिते ॥ जीवजीवेति क्रीडंत्या जरासंधोऽभवत्सुतः ॥ ८ ॥ ततश्च सहदेवोऽभूत्सोमापिर्यच्छ्रुतश्रवाः ॥ परीक्षिदनपत्योऽभूत्सुरथो नाम जाह्नवः ॥ ९ ॥ ततो विदूरथस्तस्मात्सार्वभौमस्ततोऽभवत् ॥ जयसेनस्तत्तनयो राधिकोऽतोऽयुतो ह्यभूत ॥१०॥ ततश्च क्रोधनस्तस्माद्देवातिथिरमुष्य च ॥ ऋष्यस्तस्य दिलीपोऽभूत्प्रतीपस्तस्य चात्मजः ॥ ११ ॥

पुत्राणां शतं बभूव । तेषां जंतुर्ज्येष्ठो यवीयान्पृषतः ॥ २ ॥ अजमीढस्यैव वंशांतरमाह । य इति । ततः संवरणात्कुरुः ॥ ३ ॥ ४ ॥ तस्य कृतिनः उपरिचरो वसुः । ततो वसोः बृहद्रथो मुखमादिर्येषाम् ॥ ५ ॥ तानेवाह । कुशांबेति । तत्सुतः पुष्पवान् जज्ञे । तस्यापत्यं सत्यहित इति योज्यम् ॥६॥७॥ जरया राक्षस्या ॥ ८ ॥ यच्छ्र स्मात्सोमापेः श्रुतश्रवाः कुरोः पुत्रः परीक्षिदनपत्यः । जाह्नवो जह्नोः पुत्रः ॥ ९ ॥ अतो राधिकादयुतोऽभूदित्यर्थः ॥ १० ॥ ११ ॥

मध्ये यवीयान् कनिष्ठः । पृषतस्य द्रुपदः । तस्य द्रुपदस्य । आदिना शिखंड्यादिग्रहः ॥ २ ॥ भार्म्या भर्म्याश्ववंशजाः । 'एकदेशविकृतमनन्यवत्' इति न्यायेन भर्म्याश्वस्यैव भर्म्य इत्यपि नाम ज्ञेयम् । पचालका पंचालसंज्ञदेशराजानः । पुनः सिंहावलोकनन्यायेनाजमीढवंशं स्मारयति ऋक्षपर्वतोद्भूतर्क्षै रक्षितत्वादृक्ष इति महाभारते । ततः ऋक्षस्य ॥ ३ ॥ कुरुक्षेत्रं पाति तत्र यजनादिनिमित्तमधिकस्थित्या रक्षतीति तथा । सार्वभौमोऽप्येकदेशपतित्वेनाधिकस्थित्योच्यते ॥ ४ ॥ अथ सुहोत्रात् । ततश्च्यवनात् । तस्य कृतिनः । ततः उपरिचरवसोः ॥ ५ ॥ तानेव बृहद्रथमुखान् । आदिनान्येपि । तस्य कुशाग्रस्य ॥ ६ ॥ इति योज्यं ग्रंथांतरसंमत्येति तथोक्तं हरिवंशे "वृषभस्य तु दायादः पुष्पवान्नमपार्थिवः । दायादस्तस्य विक्रांतो राजा सत्यहितः स्मृतः ॥" इति । वृषभ इति संज्ञर्षभस्यैवेति । तत्सुतः सत्यहितसुतः । किञ्च अन्यस्यां वस्वादि जननीतरस्याम् । यद्वा—चोनुक्तसमुच्चायकस्तेनान्यस्यामन्यस्यां द्वयोरित्यर्थः । तथैवोक्तं महाभारते—काशिराजसुते यमजे परिणीय बृहद्रथोऽलब्धपुत्रो गौतमात्मजचंडकौशिकं सपत्नीको वने गत्वाराध्य पुत्रं प्रार्थयामास स चाम्रतले स्थितो ध्यानं कुर्वन्नकस्मात्पतितमाम्रफलं राज्ञे ददौ स चावैषम्यं पत्न्योर्वर्त्तमानः फलं द्विधा विधायैकैकं भागं ताभ्यां ददौ ते च तदशनात्सगर्भे भूत्वा समये शकलद्वयं देहस्य सुषुवाते ते च ताभ्यां धात्री द्वारा बहिरुत्सृष्टे जराराक्षस्या भक्षणार्थं गृहीत्वा संयोज्य शिरसि धृते ते च मुनिवरप्रभावात्कुमारोऽतिबलो भूत्वा शब्दं चक्रतुः । जरा तु गृहपूजया प्रसन्ना राज्ञे ददौ । राजा च जरया संधितत्वात्तन्नाम जरासंध इति चकारेत्यलम् ॥७॥८॥ ततो जरासंधात् । यद्यस्मात्सहदेवात् । पुनर्यतः सोमापेः॥९॥ ततः सुरथात् । तस्माद्विदूरथात् । ततः सार्वभौमात् । तत्तनयो जयसेनतनयः । अतो राधिकात् ॥१०॥ ततोऽयुतात् । तस्मात्क्रे

देवापिः शंतनुस्तस्य बाह्लीक इति चात्मजाः ॥ पितृराज्यं परित्यज्य देवापिस्तु वनं गतः ॥ १२ ॥ अभवच्छंतनू राजा प्राङ् महाभिषसंज्ञितः ॥ यंयं कराभ्यां स्पृशति जीर्णं यौवनमेति सः ॥ १३ ॥ शांतिमाप्नोति चैवाग्र्यां कर्मणा तेन शंतनुः ॥ समा द्वादश तद्राज्ये न ववर्ष यदा विभुः ॥ ॥ १४ ॥ शंतनुर्ब्राह्मणैरुक्तः परिवेत्ता त्वमग्रभुक् ॥ राज्यं देह्यग्रजायाशु पुरराष्ट्रविवृद्धये ॥ १५ ॥ एवमुक्तो द्विजैर्ज्येष्ठं छंदयामास सोऽब्रवीत् ॥ तन्मंत्रिप्रहितैर्विप्रैर्वेदाद्विभ्रंशितो गिरा ॥ १६ ॥ वेदवादातिवादान्वै तदा देवो ववर्ष ह ॥ देवापिर्योगमास्थाय कलापग्राममाश्रितः ॥ १७ ॥ सोमवंशे कलौ नष्टे कृतादौ स्थापयिष्यति ॥ बाह्लीकात्सोमदत्तोऽभूद्भूरिर्भूरिश्रवास्ततः ॥ १८ ॥ शलश्च शंतनोरासीद्गंगायां भीष्म आत्मवान् ॥ सर्वधर्मविदां श्रेष्ठो महाभागवतः कविः ॥ १९ ॥

तस्य प्रतीपस्य देवापिशंतनुबाह्लीकाः ॥ १२ ॥ प्राक् पूर्वजन्मनि महाभिष इति संज्ञा यस्य सः ॥ १३ ॥ यदा देवो न ववर्ष तदा शंतनुस्तत्र कारणं ब्राह्मणान्पप्रच्छ ॥ १४ ॥ ब्राह्मणैश्चैवमुक्तः । "दाराग्निहोत्रसंयोगं कुरुते योऽग्रजे स्थिते ॥ परिवेत्ता स विज्ञेयः परिवित्तिस्तु पूर्वजः" इति स्मृतेर्योऽग्रभुक् भुवमग्रतो भुनक्ति अयं त्वाद शोऽपि परिवेत्तैव भवति । अतस्तद्दोषपरिहाराय राज्यमग्रजाय देहि ततो वृष्टिर्भविष्यतीत्येवमुक्तः शंतनुर्वनं गत्वा ज्येष्ठं छंदयामास राज्ञः प्रजापालनादिः परो धर्मोऽतस्त्वं राज्यं स्वीकुर्विति प्रार्थितवान् । ततः पूर्वमेव तस्य मंत्रिणा अश्मरावसंज्ञेन देवापिं पाखंडीकृत्य राज्यानर्हं कर्तुं ये प्रहिता विप्रास्तैः पाखंडमताश्रयया गिरा वेदाद्विभ्रंशितः सन् वेदवादस्यातिवादान्निंदावचनानि सोऽब्रवीत् । ततस्तस्य पातित्येन राज्यानर्हत्वे जाते शंतनोर्दोषाभावाद्देवो ववर्षेत्यर्थः ॥ १५ ॥ १६ ॥ १७ ॥ ततः सोमदत्ताद्भूरिर्भूरिश्रवाः शलश्चेति त्रयः ॥ १८ ॥ १९ ॥

धनात् । अमुष्य देवातिथेः । तस्यर्ष्यस्य । तस्य दिलीपस्य ॥ ११ ॥ १२ ॥ महाभिष इक्ष्वाकुवंश्यो राजा । यंयं जीर्णं वृद्धम् ॥ १३ ॥ अग्र्यामुत्कृष्टां यद्वाऽग्र्यां वृद्धभावात्प्राक्कालिकीं शांतिं सुखं तत्स्पृष्ट आप्नोतीति पूर्वान्वयि । तेन यौवनजननलक्षणेन । तद्राज्ये शंतनुराज्ये । समा वर्षाणि । तत्रा वर्षणे ॥ १४ ॥ दारसंयोगमग्निहोत्रसंयोगम् । अग्रजे ज्येष्ठभ्रातरि । स कनिष्ठः । पूर्वजो ज्येष्ठ इति स्मृतिपदार्थः । राज्ञो भूपतित्वेन भुवोऽपि दारत्वादग्रजे स्थिते दारसंयोगकर्तृत्वादयं भवान् भवादृशोन्योऽपि परिवेत्तैवेत्यर्थः । यतस्त्वं परिवेत्तास्यतो हेतोः । तद्दोषपरिहाराय परिवेष्टृत्वनिवृत्तये । राज्यं दारसमर्पणवत् । अग्रजाय देवापये ॥ १५ ॥ एवमुक्तरीत्या । स देवापिः । वेदवादातिवादान्यदाब्रवीत्तदेत्युत्तरेणान्वयः । यतो धर्मोऽतो हेतोः । ततः पूर्वमेव शंतनुप्रार्थनातः प्रागेव । तस्य शंतनोः । अयं शंतनुवदस्मदनुरोधी भविष्यति न वेति शंकया पूर्वमेव वेदनिंदां कारयित्वा राज्यानर्हतां प्रापित इति भावः । "ग्रहीता श्रुतिधर्माणां श्रुतिनिंदनतत्परान् । सर्वथा हंति यो नित्यं स राजा क्षत्रियो भवेत् ॥" इत्यादि पुराणात् ॥ १६ ॥ निंदावचनानि "त्रयो वेदस्य कर्त्तारो मुनिभंडनिशाचराः" । "स्वर्गः कुत्र च कुत्र दैवतकुलं कुत्राथ जन्मांतरम्" इत्यादीनि । ततो वेदनिंदनात् । तस्य देवापेः । पातित्येन पतितत्वेन । इत्यर्थ इति । "आम्नायस्मृतिशास्त्राणामितिहासपुराणयोः । कुत्सया विप्रदेवानां महापातकितामियात् ॥ तद्दर्शनस्पर्शनाद्यैः प्रायश्चित्ती भवेन्नरः" इति नारदीयोत्तरभागोक्तेरिति भावः ॥ १७ ॥ १८ ॥ गंगायां ब्रह्म शापतो

वीरयूथाग्रणीर्येन रामोऽपि युधि तोषितः ॥ शंतनोर्दाशकन्यायां जज्ञे चित्रांगदः सुतः ॥ २० ॥ विचित्रवीर्यश्चावरजो नाम्ना चित्रांगदो हतः ॥ यस्यां पराशरात्साक्षादवतीर्णो हरेः कला ॥ २१ ॥ वेदगुप्तो मुनिः कृष्णो यतोऽहमिदमध्यगाम् ॥ हित्वा स्वशिष्यान्पैलादीन्भगवान्बादरायणः ॥ २२ ॥ मह्यं पुत्राय शांताय परं गुह्यमिदं जगौ ॥ विचित्रवीर्योऽथोवाह काशिराजसुते बलात् ॥ २३ ॥

रामो जामदग्न्यः । दाशकन्यायामिति । उपरिचरस्य वसोर्वीर्येण मत्स्यगर्भादुत्पन्ना दाशैः कैवर्तैः पालिताऽतो दाशकन्येति प्रसिद्धायां सत्यवत्याम् ॥२०॥ नाम्ना तत्समाननाम्ना चित्रांगदेन गंधर्वेण युद्धे हतः । यस्यां सत्यवत्यां शंतनुपरिग्रहात्पूर्वमेव॥२१॥ वेदा गुप्ता येन । यतोऽहं जात इदं भागवतं चाध्यगामधिगतवानस्मि॥२२॥२३॥

मनुषीभावं प्राप्तायाम् ॥ १९ ॥ येन भीष्मेण । अत्र चेयं कथानुसंधेया–[ यदा भीष्मेण काशिराजस्यांबिकांबालिकांबेति सुतात्रयं स्वयंवरे जित्वा विचित्रवीर्याय भ्रात्रे दत्तं तदांबोवाच मया तु मनसा पूर्वमेव शाल्वो वृतोऽतो नाहमेनं वरिष्य इति । तदा भीष्मेण सा तत्र प्रेषिता स च तामागतां वीक्ष्य नाहं भीष्मजितां वरिष्येऽतस्तमेव गच्छ । सा च पुनरागत्योवाच भीष्म त्वजितां मां शाल्वो न गृह्णात्यतस्त्वमेव मां गृहाण । स प्रोवाच न चान्यमनसं ग्रहीष्ये । तदा सा ऋषिमंडलमागत्य तद्गुरुं परशुरामं याचितवती रामः । स्वशिष्याय भीष्मायाहं त्वां दास्यामीत्युवाच । ततस्तां गृहीत्वा रामो भीष्ममागत्योवाच–भो शिष्य स्वजितामेनां त्वमेव गृहाण । स चोवाच भगवन्मया पितुरर्थे विवाहपरित्यागः कृतोऽतो नाहं प्रतिज्ञामतिहायैनामुद्वहिष्येऽन्यमनसं भ्रात्रेऽपि नदास्येऽत एनामन्यस्मै कस्मैचिद्देहीति श्रुत्वा कुपितो राम उवाच मद्वचनादेनां गृहाणान्यथा युद्धेनाधुनैव त्वां नाशयिष्यामीत्याकर्ण्य भीष्मो भगवन्युद्धं त्वया सह करिष्ये नैनां ग्रहीष्ये इति । ततः कुरुक्षेत्रे एकविंशतिदिनं यावद्युद्धं कृत्वा रामं भीष्मो जितवान् । सा च वनं गत्वा तपस्तप्त्वा शिखंडी भूत्वा । भीष्मं महाभारतयुद्धे मारितवती ] इति विततं महाभारते। ननु व्यासमाता शंतनुं कथं प्राप्तेत्यत्राप्याह–[कदाचिच्छंतनुर्मृगयां चरन्कालिंदीतीरस्थामतीव सुंदरीं दृष्ट्वा तद्वपुर्गंधहृतचेता मम शंकेयं देवी गांधर्वी वेति विमृशन्नपि न निश्चयं प्राप तद्दर्शनाद्दूं गां मनसा स्मरन्का त्वमिति तां पप्रच्छ । सोवाच दाशकन्याहं मत्पिता मामत्र तरीवाहनार्थं निधाय स्वगेहं गतोऽधुना । स तदाकर्ण्य तां यतःप्रभृति मद्भार्या गंगा मां त्यक्त्वा गता ततःप्रभृति पत्नीरहितोऽहमतस्त्वं मां राजानं वरयाहं च तव दासोस्मीत्यादि बहुशः कथयामास । सा चाह मत्पितरं ब्रूह्येवं पितैव कन्याप्रद इति प्रसिद्धेः । तच्छ्रुत्वा स नृपो दाशगेहं गतस्तं वीक्ष्य दाशस्तमानर्च पप्रच्छ च प्रभो मम दरिद्रस्य गेहे कथं श्रीमत आगमनम् । ततो राजा तं त्वं मह्यं निजपुत्रीं देहीत्युवाच । ततो दाशः प्रभो त्वादृशो वरो महाभाग्येन लभ्यते परन्तु ममैका विज्ञप्तिरस्ति तां श्रुत्वेमां गृहाण । कथयेति नृपेणोक्ते । मत्पुत्रीपुत्रं यदि राज्येऽभिषिंचेः तदेनां गृहाणेति दाशः प्रोवाच । तच्छ्रुत्वा गांगेयं राज्याधिकारिणं मनसा स्मृत्वा गेहं राजा ययौ । आगत्य च भोजनादि त्यक्त्वा शोकाकुलो मौनी संस्तस्थौ । तदोचे भीष्मः पितरं किमर्थं शोकाकुलोसीत्युच्यतां श्रीमतः शोकमहमपनेष्ये रामादिवत् । तदाकर्ण्यापि स न किंचनोवाच । तदा मंत्रिभ्यस्तद्वृत्तं श्रुत्वा स दाशगेहमागत्य मम पित्रे स्वपुत्रीं प्रयच्छेत्याह–स च त्वं गृहाण त्वद्दूतोऽस्याः पुत्रो राजा भविष्यत्यन्यथा नेति तच्छ्रुत्वाह नाहं दारपरिग्रहं करिष्य इति सत्यं मद्वचः । ततो दाशः शंतनवे सत्यवतीं ददौ । शंतनुश्च सुतकर्मणा तुष्टस्तस्मै स्वच्छंदमृत्युतां ददौ ] इति भारतादौ ॥२०॥ २१ ॥ २२ ॥ परं गुह्यं सर्ववेदार्थोपबृंहितत्वादतीव गोप्यम् । अत एव मह्यं ददौ । अतीव प्रियधनं सुवृत्तपुत्रायैव दीयत इति भावः । किञ्च मयापि वैकुंठाज्ञयेयं संहिताधीतेति वैकुंठगतं मां तदीश इत्थं प्रोक्तवान् । तथा हि–“आकल्पांतं तपःसंस्थौ नरनारायणावृषी । तयोर्निदेशतो व्यासो जनकस्तत्र सुव्रत ॥ कर्ता भागवतं शास्त्रं तदधीष्व भुवं व्रज । स तप्यति तपस्त्वद्य पर्वते गंधमादने ॥ त्वद्वियोगेन खिन्नात्मा तं प्रसादय मत्प्रियम् । एवमुक्तः शुको विप्र नमस्कृत्य चतुर्भुजम् ॥ यथागतो निवृत्तोऽसौ पितुरंतिकमागमत् । पुत्रं प्राप्य प्रहृष्टात्मा नारायणनियोगतः ॥ चकार

स्वयंवरादुपानीते अंबिकांबालिके उभे ॥ तयोरासक्तहृदयो गृहीतो यक्ष्मणा मृतः ॥ २४ ॥ क्षेत्रेऽप्रजस्य वै भ्रातुर्मात्रोक्तो बादरायणः ॥ धृतराष्ट्रं च पांडुं च विदुरं चाप्यजीजनत् ॥ २५ ॥ गांधार्यां धृतराष्ट्रस्य जज्ञे पुत्रशतं नृप ॥ तत्र दुर्योधनो ज्येष्ठो दुःशला चापि कन्यका ॥ २६ ॥ शापान्मैथुनरुद्धस्य पांडोः कुंत्यां महारथाः ॥ जाता धर्मानिलेन्द्रेभ्यो युधिष्ठिरमुखास्त्रयः ॥ २७ ॥ नकुलः सहदेवश्च माद्र्यां नासत्यदस्रयोः ॥ द्रौपद्यां पंच पंचभ्यः पुत्रास्ते पितरोऽभवन् ॥२८॥ युधिष्ठिरात्प्रतिविंध्यः श्रुतसेनो वृकोदरात् ॥ अर्जुनाच्छ्रुतकीर्तिस्तु शतानीकस्तु नाकुलिः ॥ ॥ २९ ॥ सहदेवसुतो राजञ्छ्रुतकर्मा तथाऽपरे ॥ युधिष्ठिरात्तु पौरव्यां देवकोऽथ घटोत्कचः ॥ ३० ॥ भीमसेनाद्धिडिंबायां काल्यां सर्वगतस्ततः ॥ सहदेवात्सुहोत्रं तु विजयाऽसूत पार्वती ॥ ३१ ॥ करेणुमत्यां नकुलो निरमित्रं तथार्जुनः ॥ इरावंतमुलूप्यां वै सुतायां बभ्रुवाहनम् ॥ मणिपूरपतेः सोऽपि तत्पुत्रः पुत्रिकासुतः ॥ ३२ ॥

स्वयंवराद्भीष्मेण बलादुपानीते ॥ २४ ॥ मात्रा सत्यवत्योक्त इति निषेधाभावमाह । "अपतिरपत्यलिप्सुर्देवराद्गुरुप्रयुक्ता ऋतुमतीयात्" इत्यादिवचनात् ॥ ॥ २५ ॥ दुःशला नाम कन्या च जज्ञे ॥ २६ ॥ अरण्ये मृगशापान्मैथुनेन रुद्धस्य प्रतिबद्धस्य ॥ २७ ॥ नासत्यदस्राभ्यामश्विनीकुमाराभ्याम् । पंचभ्यो युधिष्ठिरादिभ्यः पंचाभवन् ॥ २८ ॥ २९ ॥ तथाऽपरे भार्यांतरेषु ॥ ३० ॥ काली चान्या भीमस्य भार्या तस्यां ततो भीमसेनात्सर्वगतो नाम पुत्रोऽभवदित्यर्थः ॥ ३१ ॥ उलूप्यां नागकन्यायाम् । मणिपूरपतेः सुतायां पुत्रिकाधर्मेण दत्तायां बभ्रुवाहनमसूत अतस्तत्पुत्रः सन्नपि स पुत्रिकासुतः मातामहसुत इत्यर्थः ॥ ३२ ॥

संहितां दिव्यां नानाख्यानसमन्विताम् । वेदतुल्यां भागवतीं हरिभक्तिविवर्द्धनीम् ॥ निवृत्तिनिरतं पुत्रं शुकमध्यापयच्च ताम् । त्वन्मुखेन समावाप्तामष्टादशसहस्रिकाम् ॥" इति नारदपुराणे सनत्कुमारेण नारदं प्रत्युक्तं सुमेरौ । अथेति मंगले सार्द्धेनाह ॥ २३ ॥ तयोरंबिकांबालिकयोः । यक्ष्मणा क्षयरोगेण । गृहीतो ग्रस्तः ॥ २४ ॥ अप्रजस्यापुत्रस्य । क्षेत्रे भार्यायाम् । भ्रातुर्विचित्रस्य । समासांतविधेरनित्यत्वान्नासिच् । "क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" इति मेदिनी । ननु सत्यवत्या कथमकार्ये प्रयुक्त इति चेदाह—अपतिरिति । अपतिर्विधवा । अपत्यलिप्सुस्संततीच्छुः । देवरात्पतिभ्रातुः । गुरुप्रयुक्ता श्वसुराद्याज्ञप्ता । "ऋतुस्नाता प्राप्नुयात्" इत्यादिश्रुतिस्मृतिप्रमाणत्वान्नाकार्यत्वमित्यर्थः । "श्यालाः स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ" इत्यमरः । दास्या अपि क्षेत्रत्वमनेन बोध्यतेऽत एव विदुरोपि त्रिषूक्तः ॥ २५ ॥ तत्र शतमध्ये ॥ २६ ॥ मृगशापान्मृगरूपमुनेः शापात् । धर्मानिलेंद्रेभ्यो दुर्वासोदत्तमंत्राहूतेभ्यः । शास्त्रस्य मनुष्यपरत्वान्न देवेषु पितृभुक्तस्त्रीसंगे दोषः पूर्वं सूर्यभुक्तकुंत्याः पुनस्सूर्यात्मजधर्मराजसंगलक्षणो नोद्भावनीय इति ॥ २७ ॥ २८ ॥ तथा हि—युधिष्ठिरादिति ॥ २९ ॥ तथापरे पञ्चानां पुत्राः पौरव्यां पूरुवंश्याम् । अथ भीमसेनात् । घटः शिर उत्कचो रोमरहितो यस्य स घटोत्कचः । "घटः । समाधिभेदेभशिरःकूटकुटेषु च" इति मेदिनी ॥ ३० ॥ इत्यर्थ इति । विवेचनीयमिति भावः ॥ ३१ ॥ पार्वती पर्वतदेशजा । इरावान्राक्षसयुद्धे भारते हतः । सुतायांचित्रांगदायाम् । अतः पुत्रिकाधर्मेण दत्तत्वात् । तत्पुत्रोऽर्जुनपुत्रः ।

तव तातः सुभद्रायामभिमन्युरजायत ॥ सर्वातिरथजिद्वीर उत्तरायां ततो भवान् ॥ ३३ ॥ परिक्षीणेषु कुरुषु द्रौणेर्ब्रह्मास्त्रतेजसा ॥ त्वं च कृष्णानुभावेन सजीवो मोचितोंतकात ॥ ३४ ॥ तवेमे तनयास्तात जनमेजयपूर्वकाः ॥ श्रुतसेनो भीमसेन उग्रसेनश्च वीर्यवान् ॥३५॥ जनमेजयस्त्वां विदित्वा तक्षकान्निधनं गतम् ॥ सर्पान्वै सर्पयागाग्नौ स होष्यति रुषाऽन्वितः ॥ ३६ ॥ कावषेयं पुरोधाय तुरं तुरगमेधयाट् ॥ समंतात्पृथिवीं सर्वां जित्वा यक्ष्यति चाध्वरैः ॥ ३७॥ तस्य पुत्रः शतानीको याज्ञवल्क्यात्त्रयीं पठन् ॥ अस्त्रज्ञानं क्रियाज्ञानं शौनकात्परमेष्यति ॥ ३८ ॥ सहस्रानीकस्तत्पुत्रस्ततश्चैवाश्वमेधजः ॥ असीमकृष्णस्तस्यापि नेमिचक्रस्तु तत्सुतः ॥३९॥ गजाह्वये हृते नद्या कौशांब्यां साधु वत्स्यति ॥ उक्तस्ततश्चित्ररथस्तस्मात्कविरथः सुतः ॥ ४० ॥ तस्माच्च वृष्टिमांस्तस्य सुषेणोऽथ महीपतिः ॥ सुनीथस्तस्य भविता नृचक्षुर्यत्सुखीनलः ॥ ४१ ॥ परिप्लवः सुतस्तस्मान्मेधावी सुनयात्मजः ॥ नृपंजयस्ततो दूर्वस्तिमिस्तस्माज्जनिष्यति ॥ ४२ ॥ तिमेर्बृहद्रथस्तस्माच्छतानीकः सुदासजः ॥ शतानीकाद्दुर्दमनस्तस्यापत्यं वहीनरः ॥४३॥ दंडपाणिर्निमिस्तस्य क्षेमको भविता नृपः ॥ ब्रह्मक्षत्रस्य वै प्रोक्तो वंशो देवर्षिसत्कृतः ॥ ४४ ॥ क्षेमकं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ अथ मागधराजानो भवितारो वदामि ते ॥ ४५ ॥

॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ तुरसंज्ञं पुरोहितं कृत्वा ॥ ३७ ॥ भविष्यानाह । तस्य पुत्र इति यावत्समाप्ति । याज्ञवल्क्यात्क्रियाज्ञानं परं चात्मानं शौनकात्प्राप्स्यत्यस्त्रज्ञानं च कृपाचार्यादिति द्रष्टव्यम् । "याज्ञवल्क्यात्त्रयीमधीत्य कृपादस्त्राण्यवाप्य" इति वैष्णवोक्तेः । क्वचित्तु अस्त्रज्ञानं कृपाचार्यादित्येव पाठः ॥३८॥ ३९ ॥ ॥ ४० ॥ यद्यस्मात्सुखीनलः पुत्रः ॥ ४१ ॥ तस्मात्परिप्लवात्सुनयस्तस्यात्मजो मेधावीत्यर्थः ॥ ४२ ॥ तस्मात्सुदासस्ततः शतानीक इत्यर्थः ॥४३॥ ४४ ॥ ४५ ॥

इत्यर्थ इति । "अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलंकृताम् । अस्यां यो जायते पुत्रः स मे पुत्रो भविष्यति ॥" इत्युक्तेरिति भावः ॥ ३२ ॥ तातः पिता । ततोऽभिमन्योः ॥ ३३ ॥ अंतकान्मृत्योर्मोचयित्वा सजीवः कृत इत्यर्थः ॥ ३४ ॥ इम इति । सन्निहितत्वादंगुल्या निर्दिष्टाः ॥ ३५ ॥ होष्यति आहुतिस्थानापन्नान्करिष्यति । स प्रसिद्धः ॥ ३६ ॥ कवषस्य कवषाया वा अपत्यं कावषेयस्तम् । तुरगमेधेन यजतीति तथा । अध्वरैर्ज्योतिष्टोमादिभिः । देवानिति शेषः । यद्वा–'सर्वा स्याद्देवसंहतौ' इति धरण्युक्तेः सर्वदेवपंक्तिः तत्तद्यागैः ॥ ३७ ॥ तस्य जनमेजयस्य ॥ ३८ ॥ तत्पुत्रः शतानीकपुत्रः । ततः सहस्रानीकात् । तस्याप्यश्वमेधजस्यापि । तत्सुतोऽसीमकृष्णसुतः ॥ ३९ ॥ नद्या गंगया । हृते प्लाविते सति । कौशांब्यां नगर्य्याम् । ततो निमिचक्रस्य चित्ररथः सुत उक्तः । तस्माच्चित्ररथात् ॥ ४० ॥ तस्मात्कविरथात् । तस्य वृष्टिमतः । अथ सुषेणात् । तस्य सुनीथस्य ॥ ४१ ॥ तस्मात्सुखीनलात्पारिप्लवः । पुनस्तस्मात्सुतः । इत्यर्थ इति व्याख्येयम् । ततो मेधाविनः पुनस्ततो नृपंजयात् दूर्वः । तस्मात् दूर्वात् । इत्यर्थ इति । तस्माद् बृहद्रथात् । ततः सुदासात् इति व्याख्येयम् ॥ ४२ ॥ तस्य दुर्मनसस्य । पुनस्तस्य वहीनरस्य ॥ ४३ ॥ तस्य दंडपाणेः । ततो निमेः ॥ ४४ ॥ संस्थां समाप्तिम् । पूर्वोक्तं स्मारयति

भविता सहदेवस्य मार्जारिर्यच्छ्रुतश्रवाः ॥ ततोऽयुतायुस्तस्यापि निरमित्रोऽथ तत्सुतः ॥ ४६ ॥ सुनक्षत्रः सुनक्षत्राद् बृहत्सेनोऽथ कर्मजित् ॥ ततः सृतंजयाद्विप्रः शुचिस्तस्य भविष्यति ॥ ४७ ॥ क्षेमोऽथ सुव्रतस्तस्माद्धर्मसूत्रः शमस्ततः ॥ द्युमत्सेनोऽथ सुमतिः सुबलो जनिता ततः ॥ ॥ ४८ ॥ सुनीथः सत्यजिदथ विश्वजिद्यद्रिपुंजयः ॥ बार्हद्रथाश्च भूपाला भाव्याः साहस्रवत्सरम् ॥ ४९ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे द्वाविंशोऽध्यायः ॥ २२ ॥ श्रीशुक उवाच ॥ अनोः सभानरश्चक्षुः परोक्षश्च सुतास्त्रयः ॥ सभानरात्कालनरः सृंजयस्तत्सुतस्ततः ॥ १ ॥ जन्मेजयस्तस्य पुत्रो महाशीलो महामनाः ॥ उशीनरस्तितिक्षुश्च महामनस आत्मजौ ॥ २ ॥ शिबिर्वनः शमिर्दक्षश्चत्वारोशीनरात्मजाः ॥ वृषादर्भः सुवीरश्च मद्रः कैकेय आत्मजाः ॥ ३ ॥ शिबेश्चत्वार एवासंस्तितिक्षोश्च रुशद्रथः ॥ ततो हेमोऽथ सुतपा बलिः सुतपसोऽभवत् ॥ ४ ॥ अंगवंगकलिंगाद्याः सुह्मपुंड्रांध्रसंज्ञिताः ॥ जज्ञिरे दीर्घतमसो बलेः क्षेत्रे महीक्षितः ॥ ५ ॥ चक्रुः स्वनाम्ना विषयान्षडिमान्प्राच्यकांश्च ते ॥ खनपानोंगतो जज्ञे तस्माद्दिविरथस्ततः ॥ ६ ॥ सुतो धर्मरथो यस्य जज्ञे चित्ररथोऽप्रजाः ॥ रोमपाद इति ख्यातस्तस्मै दशरथः सखा ॥ शांतां स्वकन्यां प्रायच्छदृष्यशृंग उवाह ताम् ॥ ७ ॥

बृहद्रथस्य जरासंधस्य सहदेवस्तस्य मार्जारिः यस्मान्मार्जारेः श्रुतश्रवाः॥४६॥४७॥४८॥सहस्रसंवत्सरमेते भाव्या भूपालास्ततः परं भाव्यान् द्वादशस्कन्धे वक्ष्यति॥४९॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे टीकायां द्वाविंशोऽध्यायः ॥२२॥ त्रयोविंशे त्वनोर्द्रुह्योस्तुर्वसोश्चान्वयः क्रमात् ॥ यदोश्च वंशोऽनुक्रांतो यावज्ज्यामघसंभवः ॥१॥ तदेवं ययातेः पुत्राणां पंचमस्य पुरोर्वंशोऽनुक्रांत इदानीं चतुर्थस्य वंशमनुक्रामति । अनोरिति । कर्णस्य जगतीपतेरित्यन्वेन ॥ १ ॥ तस्य जन्मेजयस्य महाशीलस्तस्य महामनाः ॥ २ ॥ चत्वार उशीनरात्मजाः । संधिरार्षः ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

अथ पूरुवंशांतर्गतमिव । मागधराजानो मगधदेशराजानः । भवितारो भविष्या ये तांस्ते वदामीत्यन्वयः ॥ ४९ ॥ भविता भविष्यति । ततः श्रुतश्रवसः । तस्याप्ययुतायोरपि । पुनस्ततो निरमित्रात् । अथ बृहत्सेनात् ॥ ॥ ४६ ॥ ततः कर्मजितः । तस्य विप्रस्य ॥ ४७ ॥ अथ शुचेः । तस्मात् क्षेमात् । ततो धर्मसूत्रात् । ततः शमात् । अथ द्युमत्सेनात् । ततः सुमतेः ॥ ४८ ॥ ततः पुनः सुबलात् । अथ सुनीथात् । अथ पुनस्सत्यजितः । यद्यस्माद्विश्वंजयात् । बार्हद्रथाः बृहद्रथवंशभवाः । भाव्या भविष्याः । सहस्रवत्सरमेव साहस्रवत्सरं स्वार्थिकोण् । "कालाध्वनोरत्यंतसंयोगे" इति द्वितीया । सहस्रसंवत्सरामिते काले एते भविष्यंतीत्यर्थः । ततो रिपुंजयात्परमग्रे भाव्यान्प्रद्योतादीन् ॥ ४९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे द्वाविंशोऽध्यायः ॥ २२ ॥ यावज्ज्यामघसंभवो ज्यामघोत्पत्तिपर्यंतम् ( १ ) । तत्सुतः कालनरसुतः । ततः सृंजयात् ॥ १ ॥ तस्य जन्मेजयस्य । तस्य महाशीलस्य ॥ २ ॥ संधिरार्षः । शिबिरात्मजाश्चत्वार इत्यग्रिमेणान्वेति ॥ ३ ॥ तितिक्षोर्महामनसः पुत्रात् । ततो रुशद्रथात् । अथ हेमात् ॥ ४ ॥ बलेर्महीक्षितो राज्ञः । क्षेत्रे भार्यायाम् । दीर्घतमसः उतथ्यात्मजात् ॥ ५ ॥ इमान् अंगादीन् । प्राच्यकान् भारतवर्षप्राग्दिग्वर्त्तिनः । तस्मात्खानपानात् । ततो दिविरथात् ॥ ६ ॥ यस्य धर्मरथस्य । तस्मै रोमपादाय । दशरथोऽज

देवेऽवर्षति यं रामा आनिन्युर्हरिणीसुतम् ॥ नाट्यसंगीतवादित्रैर्विभ्रमालिंगनार्हणैः ॥ ८ ॥ स तु राज्ञोऽनपत्यस्य निरूप्येष्टिं मरुत्वतः ॥ प्रजामदाद्दशरथो येन लेभेऽप्रजाः प्रजाः ॥ ९ ॥ चतुरंगो रोमपादात्पृथुलाक्षस्तु तत्सुतः ॥ १० ॥ बृहद्रथो बृहत्कर्मा बृहद्भानुश्च तत्सुतः ॥ आद्याद्बृहन्मनास्तस्माज्जयद्रथ उदाहृतः ॥ ११ ॥ विजयस्तस्य संभूत्यां ततो धृतिरजायत ॥ ततो धृतव्रतस्तस्य सत्कर्माऽधिरथस्ततः ॥ १२ ॥ योऽसौ गंगातटे क्रीडन्मंजूषांतर्गतं शिशुम् ॥ कुंत्यापविद्धं कानीनमनपत्योऽकरोत्सुतम् ॥ १३ ॥ वृषसेनः सुतस्तस्य कर्णस्य जगतीपतेः ॥ द्रुह्योश्च तनयो बभ्रुः सेतुस्तस्यात्मजस्ततः ॥ १४ ॥ आरब्धस्तस्य गांधारस्तस्य धर्मसुतो धृतः ॥ धृतस्य दुर्मनास्तस्मात्प्रचेताः प्राचेतसं शतम् ॥ १५ ॥ म्लेच्छाधिपतयोऽभूवन्नुदीचीं दिशमाश्रिताः ॥ तुर्वसोश्च सुतो वह्निर्वह्नेर्भर्गोऽथ भानुमान् ॥ १६ ॥ त्रिभानुस्तत्सुतोऽस्यापि करंधम उदारधीः ॥ मरुतस्तत्सुतोऽपुत्रः पुत्रं पौरवमन्वभूत् ॥ १७ ॥ दुष्यंतः स पुनर्भेजे स्ववंशं राज्यकामुकः ॥ ययातेर्ज्येष्ठपुत्रस्य यदोर्वंशं नरर्षभ ॥ १८ ॥ वर्णयामि महापुण्यं सर्वपापहरं नृणाम् ॥ यदोर्वंशं नरः श्रुत्वा सर्वपापैः प्रमुच्यते ॥ १९ ॥ यत्रावतीर्णो भगवान्परमात्मा नराकृतिः ॥ यदोः सहस्रजित्क्रोष्टा नलो रिपुरिति श्रुताः ॥ २० ॥ चत्वारः सूनवस्तत्र शतजित्प्रथमात्मजः ॥ महाहयो वेणुहयो हैहयश्चेति तत्सुताः ॥ २१ ॥

॥८॥९॥१०॥११॥१२॥१३॥१४॥१५॥१६॥ १७ ॥ स दुष्यंतः । स्वं वंशं पौरवं वंशम् ॥ १८ ॥ १९ ॥ २० ॥ प्रथमस्य सहस्रजित आत्मजः ॥ २१ ॥

पुत्रः । प्रायच्छत्पुत्रीत्वेन ददौ । ऋष्यो मृगस्तद्वच्छृंगे यस्य स विभांडकात्मजो मुनिः । तां दशरथदत्तां रोमपादपुत्रीं शांताम् ॥ ७ ॥ अवर्षति वर्षणमकुर्वाणे सति । यम् ऋष्यश्रृंगम् । रामा वारांगनाः । हरिणीसुतं कांचिदप्सरसं दृष्ट्वा जलच्युतविभांडकवीर्यपानतो हरिणीजातम् ॥ ८ ॥ स ऋष्यश्रृंगः[१] । राज्ञो दशरथस्य । येन मरुत्वद्यागेन । प्रजाश्चतुरः पुत्रान् ॥ ९ ॥ तत्सुतश्चतुरंगसुतः ॥ १० ॥ तत्सुताः पृथुलाक्षसुताः । आद्याद्बृहद्रथात् । तस्माद्बृहन्मनसः ॥ ११ ॥ तस्य जयद्रथस्य । संभूत्यां तत्संज्ञायाम् । ततो विजयात् । ततो धृतेः । तस्य धृतव्रतस्य । ततः सत्कर्मणः ॥ १२ ॥ योऽधिरथः । अपविद्धं लोकं लज्जया त्यक्तम् । कन्याभावे जातं कर्णमित्यर्थः ॥ १३ ॥ अथ ययातिपुत्रस्य द्रुह्योर्वंशमाह—तस्य बभ्रोः । ततः सेतोः ॥ १४ ॥ तस्यारब्धस्य । तस्य गांधारस्य । ततो धर्मस्य । तस्माद्दुर्मनसः । प्रचेतसोऽग्रे वंशो मालिन्यमित इति ॥ १५ ॥ यायातस्य तुर्वसोर्वंशमाह—अथ भर्गात् ॥ १६ ॥ तत्सुतो भानुमत्सुतः । अस्यापि त्रिभानोरपि । तत्सुतः करंधमसुतः । पौरवं पुरुवंशोद्भूतं दुष्यंतमेव पुत्रमन्वभूत् स्वीचकार ॥ १७ ॥ सः प्रसिद्धः । पुनस्त्यक्तमपि स्वं वंशं राज्यं कुलं वा “वंशो राज्ये कुले वेणौ पृष्ठांगसुतसंहतौ” इति धरणिः । पृष्ठांगादीनां समाहारद्वंद्वः । सूचीकटाहन्यायेनाल्पवंशान्वर्णयित्वा कृष्णावतारसंगतिलाभाय यदुवंशमाह—ययातेरिति ॥ १८ ॥ सर्वपापहरत्वं श्रीकृष्णाविर्भावाधिकरणत्वात् ॥ १९ ॥ तदेवाह यत्रेति । नराकृतिरिति । लीलामाधुर्यमाह ॥ श्रुताः प्रसिद्धाः ॥ २० ॥ तत्र चतुर्षु प्रथमः सहस्रजित्तदात्मजः शतजि

---

[१] तालव्यमध्योपि क्वचित्पाठः ।

धर्मस्तु हैहयसुतो नेत्रः कुंतेः पिता ततः ॥ सोहंजिरभवत्कुंतेर्महिष्मान्भद्रसेनकः ॥ २२ ॥ दुर्मदो भद्रसेनस्य धनकः कृतवीर्यसूः ॥ कृताग्निः कृतवर्मा च कृतौजा धनकात्मजाः ॥ २३ ॥ अर्जुनः कृतवीर्यस्य सप्तद्वीपेश्वरोऽभवत् ॥ दत्तात्रेयाद्धरेरंशात्प्राप्तयोगमहागुणः ॥ २४ ॥ न नूनं कार्तवीर्यस्य गतिं यास्यन्ति पार्थिवाः ॥ यज्ञदानतपोयोगश्रुतवीर्यजयादिभिः ॥ २५ ॥ पंचाशीतिसहस्राणि ह्यव्याहतबलः समाः ॥ अनष्टवित्तस्मरणो बुभुजेऽक्षय्यषड्वसु ॥ २६ ॥ तस्य पुत्रसहस्रेषु पंचैवोर्वरिता मृधे ॥ जयध्वजः शूरसेनो वृषभो मधुरूर्जितः ॥ २७ ॥ जयध्वजात्तालजंघस्तस्य पुत्रशतं त्वभूत् ॥ क्षत्रं यत्तालजंघाख्यमौर्वतेजोपसंहृतम् ॥ २८ ॥

कुंतेः सोहंजिः सोहंजेर्महिष्मान्माहिष्मतो भद्रसेनकः॥२२॥भद्रसेनस्य दुर्मदो धनकश्चेति द्वौ पुत्रौ।कृतवीर्यसूः कृतवीर्यस्य जनकः।कृतवीर्यादयश्चत्वारो धनकस्यात्मजा इत्यर्थः ॥२३॥२४॥२५॥ अनष्टमविनाशं वित्तं येन तथाविधं स्मरणं यस्य सः।अक्षय्यं षड्वसु षडिंद्रियविषयं बुभुजे॥२६॥२७॥और्वस्य तेजसा सगरेणोपसंहृतमित्यर्थः२८॥

दित्यर्थः । तत्सुताश्शतजित्सुताः ॥ २१ ॥ ततो धर्मात् । कुंतेः पिता नेत्रोभूत् । धर्मान्नेत्रो नेत्रात्कुंतिरित्यर्थः ॥ २२ ॥ तस्य भद्रसेनकस्य । कृतवीर्यं सूत उत्पादयतीति कृतवीर्यसूरित्यभिप्रेत्योक्तं स्वामिचरणैः कृतवीर्यस्य जनक इति । इत्यर्थ इति । कृतवीर्यसूरिति तस्य नाम न मंतव्यमिति भावः ॥ २३ ॥ अंशादंशावतारात् । प्राप्तयोगस्य यमाद्यष्टांगस्य महागुणास्तज्जन्यसिद्ध्युत्कर्षा येन स प्राप्तयोगमहागुणः ॥ २४ ॥ तपः कृच्छ्राद्यनुष्ठानम् । श्रुतं शास्त्राभ्यासः । वीर्यं बलम् । आदिना दुष्टदलनादिग्रहः ॥ २५ ॥ समा वर्षाणि । अविनाशं विनाशरहितम् । वित्तं धनम् । "कार्त्तवीर्योऽर्जुनो नाम राजा बाहुसहस्रवान् । तस्य स्मरणमात्रेण हृतं नष्टं च लभ्यते ॥ " इति मंत्रशास्त्रादस्य जपेनापि हृतनष्टाप्तिरिति । अस्य पुरश्चरणविधिस्तु– आदौ दत्तात्रेयाय मूलमंत्रेण सहस्रनतीः कृत्वाऽनुलोममातृकामालामादौ प्रतिलोममातृकामालाश्चान्ते जपेत् । ॐ क्रों व्रीं क्लीं भ्रूं आं ह्रीं क्रों श्रीं हुं फट् कार्त्तवीर्यार्जुनाय नमः । अस्य प्रत्यहं पञ्चसहस्रजपः । पञ्चत्रिंशत्संख्याकपीततन्तुनिर्मितवर्तियुक्तचतुर्दिशमुखस्ताम्रपात्रदीपः कार्यः । गोघृतेन तिलतैलेन वाऽन्वहं सपादपलमितेन । अस्य मंत्रस्य दत्तात्रेय ऋषिर्गायत्री छंदः सहस्रबाहुर्देवताऽमुककार्यार्थे जपे विनियोगः। ॐ कार्त्तवीर्याय नमः अंगुष्ठाभ्यां नमः । सहस्राक्षाय तर्जनी० । कृतवीर्यसुताय मध्यमा० । बलिनेऽनामिका० । सहस्रबाहवे कनि० । शत्रुघ्नाय करतलकरपृ० । रक्तवाससे हृदयायनमः । धनुर्द्धराय शिरसे स्वाहा । रक्तगंधाय शिखायै वषट् । रक्तमाल्याय कवचाय हुम् । राज्ञे नेत्रत्रयाय वौषट् । स्मर्तुरभीष्टदायास्त्राय फट् । ध्यानं तु–रक्तवर्णं रक्तभूषावस्त्रावृत्तं पञ्चशतधनुर्द्धरं ध्यायेत् । इमं दीपं प्रज्वलयामि तूर्णं मे नष्टं वस्त्वानयेति वाच्यम् । सर्वतोभद्रे कलशं संस्थाप्यानुष्ठानारंभः सुदिने एव कार्यः । अत्र यंत्रे दीपः स्थाप्यः । दीपोपि पूर्वोक्तमंत्रेणैव देयः । किं च "कार्त्तवीर्यः सहस्राक्षः कृतवीर्यसुतो बली । सहस्रबाहुः शत्रुघ्नो रक्तवासा धनुर्द्धरः ॥ रक्तगंधो रक्तमाल्यो राजा स्मर्तुरभीष्टदः । द्वादशैतानि नामानि कार्त्तवीर्यस्य यः स्मरेत् ॥ अनष्टद्रव्यता तस्य नष्टस्य पुनरागमः । संपदस्तस्य जायंते जनास्तस्य वशे सदा ॥" इति ग्रंथांतरोक्तेः । षष्ठांशं वसु षड्वसु षड्भ्यो गुणेभ्यः संधिविग्रहादिभ्यो लब्धं वसु वा षड्वसु । अक्षय्यं क्षेतुमशक्यं यत् षड्वसु तदक्षय्यषड्वस्विति वा । प्रथमसमासस्तु पृषोदरादिरवधेयः ॥ २६ ॥ तस्य कार्त्तवीर्यस्य । पुत्राणां सहस्राण्ययुतं तेषु "हते पितरि तत्पुत्रा अयुतं दुद्रुवुर्भयात्" इत्युक्तेः॥ २७ ॥ तस्य तालजंघस्य । यत् पुत्रशतकुलम् । इत्यर्थ इति । यद्वा–और्वादवाप्तं तेज आग्नेयास्त्रं येन स और्वतेजः । समासांतोऽत्र डः । सगरस्तेनोपसंहृतं नाशितम् । "आग्नेयमस्त्रं लब्ध्वा च भार्गवात्सगरो नृपः । जिगाय पृथिवीं हत्वा तालजंघान्सहैहयान् ।" इति हरिवंशोक्तेः ॥ २८ ॥

कार्तवीर्यदीपस्थापनयन्त्रम्.



तेषां ज्येष्ठो वीतिहोत्रो वृष्णिः पुत्रो मधोः स्मृतः ॥ तस्य पुत्रशतं त्वासीद्वृष्णिज्येष्ठं यतः कुलम् ॥ २९ ॥ माधवा वृष्णयो राजन्यादवाश्चेति संज्ञिताः ॥ यदुपुत्रस्य च क्रोष्टोः पुत्रो वृजिनवांस्ततः ॥ ३० ॥ श्वाहिस्ततो रुशेकुर्वै तस्य चित्ररथस्ततः ॥ शशबिंदुर्महायोगी महाभोजो महान भूत् ॥ ३१ ॥ चतुर्दशमहारत्नश्चक्रवर्त्यपराजितः ॥ तस्य पत्नीसहस्राणां दशानां सुमहायशाः ॥ ३२ ॥ दशलक्षसहस्राणि पुत्राणां तास्वजीजनत् ॥ तेषां तु षट्प्रधानानां पृथुश्रवस आत्मजः ॥ ३३ ॥ धर्मो नामोशनास्तस्य हयमेधशतस्य याट् ॥ तत्सुतो रुचकस्तस्य पंचासन्नात्मजाः शृणु ॥ ३४ ॥ पुरुजिद्रुक्मरुक्मेषुपृथुज्यामघसंज्ञिताः ॥ ज्यामघस्त्वप्रजोऽप्यन्यां भार्यां शैब्यापतिर्भयात् ॥ ३५ ॥ नाविंदच्छत्रुभवनाद्भोज्यां कन्यामहारषीत् ॥ रथस्थां तां निरीक्ष्याह शैब्या पतिमर्मर्षिता ॥ ३६ ॥

तेषां तालजंघपुत्राणां ज्येष्ठः । तस्य मधोः पुत्रशतम् । वृष्णिर्ज्येष्ठो यस्मिन् । यतो मधोर्वृष्णेर्यदोश्च हेतोरिदं कुलम् ॥ २९ ॥ ३० ॥ ३१ ॥ चतुर्दश महारत्नानि तत्तज्जातिश्रेष्ठानि यस्य सः । तानि च मार्कंडेयपुराणे वर्णितानि "गजवाजिरथस्त्रीषुनिधिमाल्यांबरद्रुमाः ॥ शक्तिपाशमणिच्छत्रविमानानि चतुर्दश" इति । दशानां पत्नीसहस्राणां भार्यायुतस्य प्रत्येकं लक्षंलक्षमित्येवं तासु पुत्राणां दशलक्षसहस्राणि जनयामास ॥ ३२ ॥ पृथुश्रवाः पृथुकीर्तिः पृथुयशा इत्यादयः षट् प्रधानाः श्रेष्ठा येषां तेषां मध्ये ॥ ३३ ॥ पंच आत्मजा आसंस्तान् शृणु ॥ ३४ ॥ तानेवाह । पुरुरिजिदिति । भार्याभयादेवैकभार्यस्य वंध्यापतेर्ज्यामघस्यापुत्रस्य तद्भयमेव पुत्रप्रदमभवदिति दर्शयन्नाह । ज्यामघस्त्विति ॥ ३५ ॥ ३६ ॥

तेषां तालजंघानाम् । सुजोतभोजतौंद्विकेर इत्याद्यभिधानां मध्ये । अथार्जुनात्मजस्य मधोः पुत्रो वृष्णिर्ज्येष्ठस्तादितरे नवनवतिश्चेति वंशप्रवृत्तिः ॥ २९ ॥ ततो वृजिनवतः ॥ ३० ॥ ततः श्वाहेः । तस्य रुशेकोः । ततश्चित्ररथात् । महान्भगवद्भक्तिलक्षणो ब्रह्मावाप्तिलक्षणो वा योगो यस्य स महायोगी । यमाद्यष्टांगयोगवान् । वा महानामुत्सवानामासमंताद्भोजो भोगो यस्य स महाभोजः । यद्वा—महानां पूज्यानां देवानामाभोगः सर्वदा यजनं यस्य स तथा । अत एव महान्पूज्यः ॥ ३१ ॥ तानि च रत्नानि च । इषुर्बाणः । निधयो महापद्मादयः । माल्यानि दिव्यपुष्पाणि । अंबराणि धारणाज्जरामयादिहराणि वस्त्राणि । द्रुमः कल्पद्रुमः । मणयः पद्मरागादयो न तु कौस्तुभस्तस्य सर्वदा भगवत्कंठस्थत्वेन पार्श्ववर्त्तिपार्षदेष्वप्यविद्यमानत्वात् । "आत्मतुल्यैः षोडशभिर्विना श्रीवत्सकौस्तुभौ" इत्युक्तेः । स्त्रियोऽप्सरसो न तु श्रीस्तस्या अपि भगवदनपायात् । "अनपायिनी भगवतः श्रीः साक्षादात्मनो हरेः" इत्युक्तेः । तस्य शशबिंदोः । प्रत्येकं लक्षंलक्षमितिवदिति शेषेणान्वयः कार्य इत्यभिप्रेत्यैव स्वामिचरणैः प्रत्येकमित्याद्युक्तमन्यथाक्षरसंगतिर्दुर्घटा स्यादिति । मम त्वत्र तीर्थपाठः सम्यग्भाति । स च "तस्य पत्नीसहस्राणां दशासन्सुमहायशः" इति । सुबोधश्चायम् ॥ ३२ ॥ तेषां दशलक्षसहस्राणां वृन्दमितसंख्याकानां शतकोटीनामिति यावत् । आदिना पृथुश्रवादिग्रहः । पृथुश्रवसः षट्स्वाद्यस्याग्रिमेण धर्मपदेनान्वयः ॥ ३३ ॥ तस्य धर्मस्य । तत्सुत उशनस्सुतः । तस्य रुचकस्य ॥ ३४ ॥ भयाद्भार्याभयात् ॥ ३५ ॥ नाबिंदन्न प्राप । भोज्यां भोजवंश्यां भोगार्हां वा । शत्रुभवनात् विरोधिनृपगृहात् । बलात्का

केयं कुहक मत्स्थानं रथमारोपितेति वै ॥ स्नुषा तवेत्यभिहिते स्मयंती पतिमब्रवीत् ॥ ३७ ॥ अहं वंध्याऽसपत्नी च स्नुषा मे युज्यते कथम् ॥ जनयिष्यसि यं राज्ञि तस्येयमुपयुज्यते ॥ ३८ ॥ अन्वमोदंत तद्विश्वेदेवाः पितर एव च ॥ शैब्या गर्भमधात्काले कुमारं सुषुवे शुभम् ॥ स विदर्भ इति प्रोक्त उपयेमे स्नुषां सतीम् ॥ ३९ ॥ इति श्रीमद्भागवते नवमस्कन्धे यदुवंशानुवर्णने त्रयोविंशोऽध्यायः ॥ २३ ॥ श्रीशुक उवाच ॥ तस्यां विदर्भोऽजनयत्पुत्रौ नाम्ना कुशक्रथौ ॥ तृतीयं रोमपादं च विदर्भकुलनंदनम् ॥ १ ॥ रोमपादसुतो बभ्रुर्बभ्रोः कृतिरजायत ॥ उशिकस्तत्सुतस्तस्माच्चेदिश्चैद्यादयो नृप ॥ २ ॥ क्रथस्य कुंतिः पुत्रोऽभूद्धृष्टिस्तस्याथ निर्वृतिः ॥ ततो दशार्हो नाम्नाऽभूत्तस्य व्योमः सुतस्ततः ॥ ३ ॥ जीमूतो विकृतिस्तस्य यस्य भीमरथः सुतः ॥ ततो नवरथः पुत्रो जातो दशरथस्ततः ॥ ४ ॥ करंभिः शकुनेः पुत्रो देवरातस्तदात्मजः ॥ देवक्षत्रस्ततस्तस्य मधुः कुरुवशादनुः ॥ ५ ॥

॥३७॥ यदि मे सपत्नी स्यात्तर्हि स्नुषेयं युज्येतापि न त्वेतदस्तीत्याह । असपत्नी चेति । अतिभयव्याकुल आह जनयिष्यसीति ॥ ३८ ॥ भार्याभयप्रकंपमानस्विन्नसर्वांगस्य राज्ञः प्राणसंकटमालोक्यानुकंपितास्तेन पूर्वं बहुकालमाराधिताश्च विश्वेदेवाः पितरश्च तथेत्यन्वमोदंत । ततश्च देवताप्रसादेन जनयिष्यसीति प्रतिवचनमुहूर्तगुणेन च निवृत्तरजस्काऽपि शैब्या गर्भमधात् तस्य च महिमा पराशरादिभिरुक्तः । यथोक्तम् । ''भार्यावश्यास्तु ये केचिद्भविष्यंत्यथ वा मृताः ॥ तेषां तु ज्यामघः श्रेष्ठः शैब्यापतिरभून्नृप'' इति ॥ ३९ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥ चतुर्विंशे विदर्भस्य पुत्रत्रयसमुद्भवाः ॥ वंशा नानामुखाः प्रोक्ता रामकृष्णोद्भवावधि ॥ १ ॥ १ ॥ चैद्यादयो दमघोषादयः ॥ २ ॥ ३ ॥ ततो दशरथाच्छकुनिः । पुराणांतरादेवमादिविशेषो द्रष्टव्यः ॥ ४ ॥ ततः कुरुवशादनुः ॥ ५ ॥

रेण जहार । तां कन्याम् ॥ ३६ ॥ मत्स्थानं वामभागे ॥ ३७ ॥ ३८ ॥ अनुकंपिता जातानुकंपा । तेन ज्यामघेन । तद्राज्ञो वचनम् । अन्वमोदंत पुत्रं दत्तवंत इति भावः । यतो विश्वदेवपितृभिरनुमोदितं ततो हेतोः । यद्वा–ततो विश्वदेवाद्यनुमोदनादनंतरम् । यस्मिन्काले तेन जनयिष्यति यमित्युक्तं स कालोऽपि वचनसिद्धिकरोऽभूत् । तन्माहात्म्याच्च निवृत्तरजस्कापि निवृत्तार्त्तवापि । ''अभाव्यं भाव्यतां याति मुहूर्त्ताधिपतौ शुभे । भाव्यं त्वभाव्यतां याति ह्यशुभे कालनायके॥'' इति गणकमंडनोक्तेः । तस्य च ज्यामघस्य च । आदिना वशिष्ठादिग्रहः वाक्यमाह–यथोक्तमिति । तु शब्दाद्वर्त्तमानकालिकग्रहः । तेषां त्रिकालवर्त्तिनां भार्यानुयायिनां मध्ये श्रेष्ठो भार्यावंध्यात्वापाकरणादानीतास्वीकाराच्चेति भावः ॥ ३९ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे त्रयोविंशोध्यायः ॥ २३ ॥ पुत्रत्रयात्समुद्भवो येषां ते तथा ( १ ) । तस्यां स्वयंवराज्ज्यामेवानीतायाम् । विदर्भश्शैब्याजातः ॥ १ ॥ तत्सुतः कृतिसुतः । तस्मात्कुशिकात् । पुनश्चेदेः । आदिना ग्रंथातरोक्ततद्भ्रातृपुत्रादिग्रहः ॥ २ ॥ क्रथस्य विदर्भात्मजस्य । तस्य कुंतेः । अथ वृष्टेः । ततो निवृत्तेः । तस्य दशार्हस्य । ततो व्योम्नः व्योमेति नांतम् । ''दशार्हस्य सुतो व्योमा व्याम्नो जीमूत उच्यते'' इति हरिवंशात् ॥ ३ ॥ तस्य जीमूतस्य । यस्य विकृतेः । ततो भीमरथात् । ततो नवरथात् ॥ ४ ॥ पुराणांतराद्धरिवंशविष्णुपुराणादितः । ''तस्य चासीद्दशरथश्शकुनिस्तस्य चात्मजः'' इति हरिवंशोक्तेः । तदात्मजः करंभ्यात्मजः । ततो देवरातस्य । तस्य देवक्षत्रस्य । पुनस्तस्य मधोः कुरुवंशः ॥ ५ ॥

पुरुहोत्रस्त्वनोः पुत्रस्तस्यायुः सात्वतस्ततः ॥ भजमानो भजिर्दिव्यो वृष्णिर्देवावृधोंधकः ॥ ६ ॥ सात्वतस्य सुताः सप्त महाभोजश्च मारिष ॥ भजमानस्य निम्लोचिः किंकिणो धृष्टिरेव च ॥ ७ ॥ एकस्यामात्मजाः पत्न्यामन्यस्यां च त्रयः सुताः ॥ शताजिच्च सहस्राजिदयुताजिदिति प्रभो ॥ ८ ॥ बभ्रुर्देवावृधसुतस्तयोः श्लोकौ पठंत्यमू ॥ यथैव शृणुमो दूरात् संपश्यामस्तथांतिकात् ॥ ९ ॥ बभ्रुः श्रेष्ठो मनुष्याणां देवैर्देवावृधः समः ॥ पुरुषाः पंचषष्टिश्च षट्सहस्राणि चाष्ट च ॥ १० ॥ येऽमृतत्वमनुप्राप्ता बभ्रोर्देवावृधादपि ॥ महाभोजोऽपि धर्मात्मा भोजा आसंस्तदन्वये ॥ ११ ॥ वृष्णेः सुमित्रः पुत्रोऽभूद्युधाजिच्च परंतप ॥ शिनिस्तस्यानमित्रश्च निम्नोऽभूदनमित्रतः ॥ १२ ॥ सत्राजितः प्रसेनश्च निम्नस्याप्यासतुः सुतौ ॥ अनमित्रसुतो योन्यः शिनिस्तस्याथ सत्यकः ॥ १३ ॥ युयुधानः सात्यकिर्वै जयस्तस्य कुणिस्ततः ॥ युगंधरोऽनमित्रस्य वृष्णिः पुत्रोऽपरस्ततः ॥ १४ ॥ श्वफल्कश्चित्ररथश्च गांदिन्यां च श्वफल्कतः ॥ अक्रूरप्रमुखा आसन्पुत्रा द्वादश विश्रुताः ॥ १५ ॥

अनोः पुत्रः पुरुहोत्रः ॥ ६ ॥ महाभोजश्चेत्येवं सप्त । मारिष हे आर्य ॥ ७ ॥ ८ ॥ ९ ॥ ततस्तदुपदेशेन ये पंचषष्ट्यादिसंख्याः पुरुषास्ते अमृतत्वं मोक्षं प्राप्ताः ॥ ॥ १० ॥ ११ ॥ तस्य युधाजितः शिनिरनमित्रश्च ॥ १२ ॥ १३ ॥ सत्यकस्य पुत्रो युयुधानस्तस्य जयस्तस्य कुणिस्ततः कुणेर्युगंधरः । अनमित्रस्यैवापरो वृष्णिर्नामपुत्रः ॥ १४ ॥ अक्रूरः प्रमुखो येषामित्यतद्गुणसंविज्ञानो बहुव्रीहिः ॥ १५ ॥

तस्य पुरुहोत्रस्य । तत आयोः । भजमानान्महाभोजांताः सप्त ॥ ६ ॥ 'मारिषः शाकभिद्यार्ये' इति मेदिनी ॥ ७ ॥ एकस्यां बाह्यकसृंजय्याम् । अन्यस्यामुपबाह्यकसृंजय्याम् । ''भजमानस्य सृंजय्यौ बाह्यकार्थोपबाह्यका । आस्तां भार्ये तयोस्तस्माज्जज्ञिरे बहवः सुता ॥'' इति हरिवंशात् ॥ ८ ॥ तयोर्बभ्रुदेवावृधयोः पितृपुत्रयोः । श्लोकौ प्राक्सिद्धे पद्ये पठंति पौराणिकाः । 'श्लोकः पद्ये यशस्यपि' इति मेदिनी । अमू द्वौ पितापुत्रौ । यथाऽनेकधात्मानं योगेन कृत्वा चरंतौ शृणुमस्तथांतिकात्समीपात् ॥ ९ ॥ त्रिसप्तत्युत्तरषट्सहस्राणि पुरुषाः ॥ १० ॥ तदन्वये महाभोजवंशे । भोजा भोजसंज्ञकाः ॥ ११ ॥ वृष्णेः सात्वतात्मजस्य ॥ १२ ॥ अन्यः युधाजिदात्मजाद्भिन्नः । तस्य शिनेः । अथानंतरम् ॥ १३ ॥ तस्य युयुधानस्य । तस्य जयस्य । अपरः सात्वतात्मजादन्यः । ततो वृष्णेर्द्वौ श्वफल्कचित्ररथौ पुत्रौ ॥ १४ ॥ गां प्रत्यहं दास्यतीति गांदिनी भविष्यत्यर्थे किन् । काशिराजसुता तया गर्भे चिरं स्थितं, स्वपूर्वजन्मनि श्रुतगोदानमाहात्म्यया नाहं गर्भान्निर्जिगमिषामीत्यूचे । तत्पित्रा पृष्टं कुतस्ततस्तयोक्तमन्वहं यदि कश्चिन्मत्तो विप्राय गां दापयिष्यति तदाहं

आसंगः सारमेयश्च मृदुरो मृदुविद्गिरिः ॥ धर्मवृद्धः सुकर्मा च क्षेत्रोपेक्षोऽरिमर्दनः ॥ १६ ॥ शत्रुघ्नो गंधमादश्च प्रतिबाहुश्च द्वादश ॥ तेषां स्वसा सुचीराख्या द्वावक्रूरसुतावपि ॥ १७ ॥ देववानुपदेवश्च तथा चित्ररथात्मजाः ॥ पृथुर्विदूरथाद्याश्च बहवो वृष्णिनंदनाः ॥ १८ ॥ कुकुरो भजमानश्च शुचिः कंबलबर्हिषः ॥ कुकुरस्य सुतो वह्निर्विलोमा तनयस्ततः ॥ १९ ॥ कपोतरोमा तस्यानुः सखा यस्य च तुंबुरुः ॥ अंधको दुंदुभिस्तस्मादरिद्योतः पुनर्वसुः ॥ २० ॥ तस्याहुकश्चाहुकी च कन्या चैवाहुकात्मजौ ॥ देवकश्चोग्रसेनश्च चत्वारो देवकात्मजाः ॥ ॥ २१ ॥ देववानुपदेवश्च सुदेवो देववर्धनः ॥ तेषां स्वसारः सप्तासन् धृतदेवादयो नृप ॥ २२ ॥ शांतिदेवोपदेवा च श्रीदेवा देवरक्षिता ॥ सहदेवा देवकी च वसुदेव उवाह ताः ॥ २३ ॥ कंसः सुनामा न्यग्रोधः कंकः शंकुः सुहुस्तथा ॥ राष्ट्रपालोऽथ सृष्टिश्च तुष्टिमानौग्रसेनयः ॥ २४ ॥ कंसा कंसवती कंका शूरभू राष्ट्रपालिका ॥ उग्रसेनदुहितरो वसुदेवानुजस्त्रियः ॥ २५ ॥ शूरो विदूरथादासीद्भजमानः सुतस्ततः ॥ शिनिस्तस्मात्स्वयं भोजो हृदीकस्तत्सुतो मतः ॥ २६ ॥

अतोऽक्रूरातिरिक्तान् द्वादश दर्शयति आसंग इति ॥ १६ ॥ १७ ॥ पृथुरेकः विदूरथाद्या अन्ये च बहवः विपृथुधामाद्या इति पाठे आद्यशब्देन विदूरथोऽप्युक्त स्ततश्च शूरो विदूरथादासीदिति वक्ष्यमाणनिर्देशोपपत्तिः कुकुरादयश्चत्वारोंधकस्य सुता इति ज्ञेयम् । तथा च पराशरः । "कुकुरभजमानशुचिकंबलबर्हिषाख्यास्तथांधकस्य पुत्राः " इति ॥ १९ ॥ अनोरंधकोंधकाद्दुंदुभिरित्यपि तद्वचनादेव ज्ञेयम् ॥ २० ॥ २१ ॥ धृतदेवा आदिर्यासां शांतिदेवादीनां षण्णां ताः सप्त ॥ २२ ॥ ताः सप्त ॥ २३ ॥ औग्रसेनय उग्रसेनस्य सुताः ॥ २४ ॥ वसुदेवस्य ये अनुजा देवभागादयस्तेषां स्त्रियो भार्याः ॥ २५ ॥ अंधकसुतानां चतुर्णां प्रथमस्य कुकुरस्य वंश उक्तो

बहिरायास्यामीति तच्छ्रुत्वा तत्पित्रोक्तं हे देवि बहिरागच्छैवमेव करिष्यामीति । ततः सा बहिरागता गांदिनीति प्रसिद्धाभूदिति हरिवंशे ॥ १५ ॥ यतोऽतद्गुणसंविज्ञानो बहुव्रीहिरतो हेतोः । अक्रूरादतिरिक्तान् भिन्नान् ॥ १६ ॥ तेषामक्रूरादीनाम् । 'सुचाराख्या' इति क्वचित्पाठः ॥ १७ ॥ यथा श्वफल्कस्यात्मजा बहवस्तथा तद्भ्रातुश्चित्ररथस्यात्मजा बहव इति ॥ १८ ॥ कुकुरादीनामंधकात्मजत्वे प्रमाणमाह—तथा चेति । हरिवंशेऽपि "अंधकात्काश्यदुहिता चतुरोऽलभतात्मजान् । कुकुरं भजमानं च शुचिं कंबलबर्हिषम् ॥" इति । अंधकश्च सात्वतसुतः । ततो वह्नेः ॥ १९ ॥ पुनस्ततो विलोम्नः । तस्य कपोतरोम्णः । यस्यानोः । तुंबरुर्गंधर्वः । तद्वचनात्पराशरवाक्यात् । तस्माद्दुंदुभेः । पुनस्तस्मादरिद्योतात् ॥ २० ॥ तस्य पुनर्वसोः । देवकोग्रसेनौ आहुकात्मजौ ॥ २१ ॥ ॥ तेषां देववदादीनाम् । तद्गुणसंविज्ञानो बहुव्रीहिरित्याह—धृतदेवा इत्यादि ॥ २२ ॥ ताः सप्तैव उवाह उपयेमे ॥ २३ ॥ नवोग्रसेनपुत्राः ॥ २४ ॥ पुत्र्यः पंच वसुदेवस्यानुजानां देवभागादीनां स्त्रियः पत्न्यः ॥ २५ ॥ आदिना हरिवंशादिग्रहः । तथा च—"भजमानस्य पुत्रोऽथ रथमुख्यो विदूरथः । राजाधिदेवश्शूरस्तु विदूरथसुतोभवत्" इति हरिवंशे । यद्वेति । विकल्पश्च कल्पांतरापेक्षः । ततः शूरात् । पुनस्ततः भजमानात् । तस्माच्छिनेः । तत्सुतः स्वयंभोजसुतः ॥ २६ ॥

देवबाहुः शतधनुः कृतवर्मेति तत्सुताः ॥ देवमीढस्य शूरस्य मारिषा नाम पत्न्यभूत् ॥ २७ ॥ तस्यां स जनयामास दश पुत्रानकल्मषान् ॥ वसुदेवं देवभागं देवश्रवसमानकम् ॥ २८ ॥ सृंजयं श्यामकं कंकं शमीकं वत्सकं वृकम् ॥ देवदुंदुभयो नेदुरानका यस्य जन्मनि ॥ २९ ॥ वसुदेवं हरेः स्थानं वदंत्यानकदुंदुभिम् ॥ पृथा च श्रुतदेवा च श्रुतकीर्तिः श्रुतश्रवाः ॥ ३० ॥ राजाधिदेवी चैतेषां भगिन्यः पंच कन्यकाः ॥ कुंतेः सख्युः पिता शूरो ह्यपुत्रस्य पृथामदात् ॥ ३१ ॥ साऽऽप दुर्वाससो विद्यां देवहूतिं प्रतोषितात् ॥ तस्या वीर्यपरीक्षार्थमाजुहाव रविं शुचिम् ॥ ३२ ॥ तदैवोपागतं देवं वीक्ष्य विस्मयमानसा ॥ प्रत्ययार्थं प्रयुक्ता मे याहि देव क्षमस्व मे ॥ ३३ ॥ अमोघं दर्शनं देवि आधत्से त्वयि चात्मजम् ॥ योनिर्यथा न दुष्येत कर्ताऽहं ते सुमध्यमे ॥ ३४ ॥

द्वितीयस्य भजमानस्य वंशमाह । शूरो विदूरथादिति "भजमानाच्च विदूरथः पुत्रोऽभूद्विदूरथाच्च शूरः" इति पराशरादिवचनात् । यद्वा पृथुर्विदूरथाद्याश्चेति पूर्वोक्ताच्चित्ररथात्मजाद्विदूरथात् ॥२६॥ देवमीढस्य यः शूरो नाम पुत्रस्तस्य । देवमीढो हृदीकस्यैव सुतः ॥ तथाह पराशरः । "तस्यापि कृतवर्मशतधनुर्देवमीढुषाद्या बभूवुः देवमीढुषस्य शूरस्यापि मारिषा नाम पत्न्यभवत्तस्यां चासौ दशपुत्रानजनयद्वसुदेवपूर्वान्" इति ॥ २७ ॥ २८ ॥ आनकाश्च नेदुः ॥ २९ ॥ हरेः प्रादुर्भावस्य स्थानम् ॥ ३० ॥ पृथायाः कन्यकावस्थायां कर्णोत्पत्तिप्रकारमाह कुंतेरिति पंचभिः ॥ ३१ ॥ कदाचिद्गृहमागतं दुर्वाससं पृथा परिचर्यादिना तोषयामास ततश्च सा तस्माद्देवहूतिं देवाह्वानहेतुं विद्यामवाप तदाह । साऽऽपेति ॥ ३२ ॥ देवमुपागतं वीक्ष्य सा प्राह । प्रत्ययार्थं परीक्षार्थं मया विद्या प्रयुक्ता न तु त्वया किंचित्कार्यमित्यभिसंधिनाऽतो याहीति ॥ ३३ ॥ एवमुक्तो रविरुवाच । अमोघं दर्शनमिति । कन्याऽहमिति चेत्तत्राह । यथा योनिर्न दुष्येत तथाऽहं कर्ता करिष्यामि ॥ ३४ ॥

तत्सुता हृदीकसुता । देवमीढस्य हृदीकपुत्रत्वे प्रमाणमाह–यथाहेति । तस्यापि हृदीकस्यापि । आदिना देवबाह्वादिग्रहः । तस्यापि शूरस्यापि ॥ २७ ॥ तस्यां मारिषायाम् । स शूरः ॥ २८ ॥ यस्य वसुदेवस्य ॥ २९ ॥ तम् आनकदुंदुभिम् । हरेः श्रीकृष्णस्य । "सत्त्वं विशुद्धं वसुदेवशब्दितं यदीयते तत्र पुमानपावृतः" इति शंकरोक्तेर्विशुद्धसत्त्वस्यावतारमेव वसुदेवं वदंतीति तस्यैव हरेराविर्भावयोग्यत्वम् ॥३०॥ एतेषां वसुदेवादीनाम् । शूरेण स्वमित्रायानपत्याय कुंतिराजाय प्रतिज्ञातं प्रथमापत्यं तुभ्यं दास्यामीति । प्रथमं च पृथा जाता सा तेन कुंतये पुत्र्यर्थं दत्ता । इति महाभारते प्रसिद्धां कथां सूचयति–कुंतेरिति ॥ ३१ ॥ आदिना चित्तप्रसादादिग्रहः । ततश्च दुर्वासःपरितोषानंतरम् । तस्मात् दुर्वाससः। तत् वृत्तम् । सा पृथा । देवा हूयंते आहूयंते यया सा देवहूतिस्ताम् । तस्या विद्यायाः । वीर्यस्य प्रभावस्य परीक्षार्थम् । शुचिः ऋतुस्नाता । तस्यास्तदैव स्त्रीधर्मसद्भावः सूर्यप्रभावाज्जात इत्यनुसंधेयं महाभारतात् ॥ ३२ ॥ तदैव मंत्रप्रयोगसमकालमेव । विस्मयमाश्चर्यम् । 'अगता प्राप्ता । क्वचित् विस्मितमानस' इति पाठः । परीक्षार्थं विश्वासार्थम् । प्रयुक्ता प्रयोजिता । त्वया भगवता । अभिसंधिनाऽभिप्रायेण । अतः कार्याभावात् ॥ ३३ ॥ किमिच्छसीति कुंत्योक्ते रविराह । आधत्स इति । मैथुनयोग्यतारुण्यादर्शनाच्छिन्नयोनिरहं दूषिता स्यामिति कुंत्यभिप्रायं वीक्ष्याह–योनिरिति । तथाहं कर्त्तेति

इति तस्यां स आधाय गर्भं सूर्यो दिवं गतः ॥ सद्यः कुमारः संजज्ञे द्वितीय इव भास्करः ॥ ३५ ॥ तं साऽत्यजन्नदीतोये कृच्छ्राल्लोकस्य बिभ्यती ॥ प्रपितामहस्तामुवाह पांडुर्वै सत्यविक्रमः ॥ ३६ ॥ श्रुतदेवां तु कारूषो वृद्धशर्मा समग्रहीत् ॥ यस्यामभूद्दंतवक्त्र ऋषिशप्तो दितेः सुतः ॥ ३७ ॥ कैकेयो धृष्टकेतुश्च श्रुतकीर्तिमविंदत ॥ संतर्दनादयस्तस्यां पंचासन्कैकयाः सुताः ॥ ३८ ॥ राजाधिदेव्यामावंत्यौ जयसेनोऽजनिष्ट ह ॥ दमघोषश्चेदिराजः श्रुतश्रवसमग्रहीत् ॥ ३९ ॥ शिशुपालः सुतस्तस्याः कथितस्तस्य संभवः ॥ देवभागस्य कंसायां चित्रकेतुबृहद्बलौ ॥ ४० ॥ कंसवत्यां देवश्रवसः सुवीर इषुमांस्तथा ॥ कंका यामानकाज्जाताः सत्यजित्पुरुजित्तथा ॥ ४१ ॥ सृंजयो राष्ट्रपाल्यां च वृषदुर्मर्षणादिकान् ॥ हरिकेशहिरण्याक्षौ शूरभूम्यां च श्यामकः ॥ ४२ ॥ मिश्रकेश्यामप्सरसि वृकादीन्वत्सकस्तथा ॥ तक्षपुष्करशालादीन्दुर्वाक्ष्यां वृक आददे ॥ ४३ ॥ सुमित्राऽर्जुनपालादीञ्शमीकात्तु सुदामिनी ॥ कंकश्च कर्णिकायां वै ऋतधामजयावपि ॥ ४४ ॥ पौरवी रोहिणी भद्रा मदिरा रोचना इला ॥ देवकीप्रमुखा आसन्पत्न्य आनकदुंदुभेः ॥ ४५ ॥ बलं गदं सारणं च दुर्मदं विपुलं ध्रुवम् ॥ वसुदेवस्तु रोहिण्यां कृतादीनुदपादयत् ॥ ४६ ॥ सुभद्रो भद्रबाहुश्च दुर्मदो भद्र एव च ॥ पौरव्यास्तनया ह्येते भूताद्या द्वादशाभवन् ॥ ४७ ॥ नंदोपनंदकृतकशूराद्या मदिरात्मजाः ॥ कौशल्या केशिनं त्वेकमसूत कुलनंदनम् ॥ ४८ ॥ रोचनायामतो जाता हस्तहेमांगदादयः ॥ इलायामुरुवल्कादीन्यदुमुख्यानजीजनत् ॥ ४९ ॥ विपृष्ठो धृतदेवायामेक आनकदुंदुभेः ॥ शांतिदेवात्मजा राजन्छ्रमप्रतिश्रुतादयः ॥ ५० ॥

॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ आवंत्यौ विंदानुविंदौ ॥ ३९ ॥ तदेवं वसुदेवस्य भगिनीनां पतीन्पुत्रांश्चोक्त्वा तद्भ्रातॄणां नवानां पत्नीः पुत्रांश्चाह । देवभागस्येति नवभिः श्लोकार्धैः ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ वसुदेवस्य पत्नीः पुत्रांश्चाह पौरवीत्येकादशभिः ॥ ४५ ॥ ४६ ॥ ४७ ॥ कौशल्या भद्रा ॥ ४८ ॥ ४९ ॥ ५० ॥

निजैश्वर्यप्रभावेण पुनस्ते कन्यात्वं संपादयिष्यामीति भावः ॥ ३४ ॥ इत्युक्त्वा । तस्यां पृथायाम् । स रविः । दिवं गताम् अंतरिक्षस्थां निजमूर्त्तिं प्रविष्टः । तस्मिन् गते सद्यस्तत्क्षणमेव ॥ ३५ ॥ तं कुमारम् । लोकस्यापवादादिति शेषः । तां पृथाम् । त इति शेषः प्रपितामहः पितामहस्यार्जुनस्य पिता पांडुः ॥ ३६ ॥ कारूषः करूषदेशाधिपः । यस्यां श्रुतदेवायाम् । ऋषिभिः सनकादिभिर्वैकुंठे शप्तो जयो दितेः सुतः प्राक् हिरण्यकशिपुः सन्निदानीं दंतवक्त्रोऽभूदित्यर्थः ॥ ३७ ॥ कैकेयः केकयदेशाधिपः । तस्यां श्रुतकीर्त्याम् । आदिना प्रतर्दनादिग्रहः ॥ ३८ ॥ अजनिष्ट जनयामास । आवंत्यावुज्जयिनीराजौ ॥ ३९ ॥ तस्याः श्रुतश्रवसः । तस्य शिशुपालस्य । कथितः सप्तमस्कंधे ॥ ४० ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ अतो वसुदेवात् ॥ ४९ ॥ ५० ॥

राजानः कल्पवर्षाद्या उपदेवासुता दश ॥ वसुहंससुवंशाद्याः श्रीदेवायास्तु षट् सुताः ॥ ५१ ॥ देवरक्षितया लब्धा नव चात्र गदादयः ॥ वसुदेवः सुतानष्टावादधे सह देवया ॥ ५२ ॥ पुरुविश्रुतमुख्यांस्तु साक्षाद्धर्मो वसूनिव ॥ वसुदेवस्तु देवक्यामष्ट पुत्रानजीजनत् ॥ ५३ ॥ कीर्तिमंतं सुषेणं च भद्रसेनमुदारधीः ॥ ऋजुं संमर्दनं भद्रं संकर्षणमहीश्वरम् ॥ ५४ ॥ अष्टमस्तु तयोरासीत्स्वयमेव हरिः किल ॥ सुभद्रा च महाभागा तव राजन्पितामही ॥ ५५ ॥ यदायदेह धर्मस्य क्षयो वृद्धिश्च पाप्मनः ॥ तदा तु भगवानीश आत्मानं सृजते हरिः ॥ ५६ ॥ न ह्यस्य जन्मनो हेतुः कर्मणो वा महीपते ॥ आत्ममायां विनेशस्य परस्य द्रष्टुरात्मनः ॥ ५७ ॥ यन्मायाचेष्टितं पुंसः स्थित्युत्पत्त्यप्ययाय हि ॥ अनुग्रहस्तन्निवृत्ते रात्मलाभाय चेष्यते ॥ ५८ ॥

॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ अष्टमस्तु स्वयमेवासीन्न तु कर्मादिना हेतुना ताभ्यां जनितो वा । यतोऽसौ हरिः ॥ ५५ ॥ तदेवोपपादयति यदेति त्रिभिः ॥ ५६ ॥ ईशस्य मायानियंतुः । परस्यासंगस्य । द्रष्टुः साक्षिणः । आत्मनः सर्वगस्य । न ह्येवंभूतस्य मायाविनोदं विना जन्मनः कर्मणो वा हेतुः संभवतीत्यर्थः ॥ ५७ ॥ किं च यस्य मायाचेष्टितं पुंसो जीवस्यानुग्रहस्तस्य जीवानुग्राहकस्य कुतः कर्मादिपारतंत्र्येण जन्मादिसंभवः । अनुग्रहमेवाह । हि यस्मात्तदेव स्थित्यादये इष्यते । प्रलये लीनोपाधेर्जीवस्य धर्माद्यसंभवादुपाधिसृष्ट्यादिना धर्मादिसंपादनेनानुग्रहः । तथाऽऽत्मलाभाय मोक्षाय चेष्यते । तत्र हेतुः । तेनैव श्रूयमाणेन तस्य स्थित्यादेर्निवृत्तेः ॥५८॥

॥५१॥सह देवया सह मिलित्वा॥५२॥५३॥५४॥तयोर्निमित्तभूतयोः । ताभ्यां देवकीवसुदवाभ्याम् । यतोऽसौ हरिः । स्वसेविनामपि जनिहरणशीलस्य कुतो जन्मेति भावः ॥५५॥ तदेव वास्तवजन्माभवनमेव । पाप्मनोऽधर्मस्य । तदुक्तं श्रीगीतासु "यदायदा हि धर्मस्य ग्लानिर्भवति भारत । अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥" इति ॥५६॥ ननु यदि हरिरपि जीववज्जन्मकर्माणि भजेत तर्हि तस्य सेवया कथं जीवानां मोक्षः स्यादिति चेदाह—जीवस्य तु पापपुण्ये जन्मादिकारणविधिबद्धत्वात् । ईशस्य तदभावात्ते न स्त इति । 'न हि कार्यमकारणम्' इति न्यायात्कारणं वक्तव्यं चेत्तर्हि लोकानुग्रहोद्बुद्धात्मेच्छैवेति ब्रूम इत्याशयेनाह—न हीति । एवंभूतस्य मायानियंतृत्वादिधर्मवतः । आत्मसु जीवेषु । माया कृपा तदुद्धरणेच्छा तां विनाऽन्यो हेतुः कल्पयितुं न शक्यते "भवेस्मिन् क्लिश्यमानानामविद्याकामकर्मभिः । श्रवणस्मरणार्हाणि करिष्यन्निति केचन॥" इति प्रथमस्कंधोक्तेः । "आत्मा देहे धृतौ जीवे स्वभावे परमात्मनि इति यादवः । "मायेच्छाकृपयोर्दंभे विष्णुशक्तींद्रजालयोः" इति च ॥ ५७ ॥ जीवानुग्रहार्थमेव हरेर्जन्मादीति प्रपञ्चयति—किञ्चेति । यस्य हरेर्मायायाश्चेष्टितम् । तदेवमायाचेष्टितमेव। स्थितिरादिर्यस्योत्पत्त्यप्ययस्य स स्थित्यादिस्तस्मै स्थित्यादये । लीनोपाधेर्देहेंद्रियाद्युपाधिरहितस्य । उपाधिसृष्ट्यादिनेति । इहादिना स्थितिभंगग्रहः । द्वितीयादिना मोक्षग्रहः । तत्र हरिमायाचेष्टितस्य मोक्षकारणत्वे । तेनैव मायाचेष्टितेनैव । "मायां वर्णयतोऽमुष्य ईश्वरस्यानुमोदतः । शृण्वतः श्रद्धया नित्यं माययात्मा न मुह्यति ॥" इति ब्रह्मोक्तेः । मायामोहेनैव सृष्ट्यादिप्रवृत्तिस्तन्निवृत्तौ तन्निवृ

अक्षौहिणीनां पतिभिरसुरैर्नृपलांछनैः ॥ भुव आक्रम्यमाणाया अभाराय कृतोद्यमः ॥ ५९ ॥ कर्माण्यपरिमेयाणि मनसाऽपि सुरेश्वरैः ॥ सह संकर्षणश्चक्रे भगवान्मधुसूदनः ॥ ६० ॥ कलौ जनिष्यमाणानां दुःखशोकतमोनुदम् ॥ अनुग्रहाय भक्तानां सुपुण्यं व्यतनोद्यशः ॥ ६१ ॥ यस्मिन्सत्कर्णपीयूषे यशस्तीर्थवरे सकृत् ॥ श्रोत्रांजलिरुपस्पृश्य धुनुते कर्मवासनाम् ॥ ६२ ॥ भोजवृष्ण्यंधकमधुशूरसेनदशार्हकैः ॥ श्लाघनीये हितः शश्वत्कुरुसृंजयपांडुभिः ॥ ६३ ॥ स्निग्धस्मितेक्षितोदारैर्वाक्यैर्विक्रमलीलया ॥ नृलोकं रमयामास मूर्त्या सर्वांगरम्यया ॥ ६४ ॥ यस्याननं मकरकुंडलचारुकर्णभ्राजत्कपोलसुभगं सुविलासहासम् ॥ नित्योत्सवं न ततृपुर्दृशिभिः पिबंत्यो नार्यो नराश्च मुदिताः कुपिता निमेश्च ॥ ६५ ॥

तस्य चेष्टितं भूमेरनुग्रह इत्याह अक्षौहिणीनामिति द्वाभ्याम् । अभाराय भारपरिहाराय ॥ ५९ ॥ सुरेश्वरैरपि मनसाऽप्यपरिमेयाण्यवितर्क्याणि । संकर्षणसहितश्चक्रे ॥ ६० ॥ संकल्पमात्रेण भूभारहरणसमर्थस्यापि कर्मकरणं यशोविस्तारद्वारा भक्तानुग्रहार्थमित्याह कलाविति द्वाभ्याम् । दुःखशोकतमांसि नुदतीति तथा तद्यशो व्यतनोत् ॥ ६१ ॥ यस्मिन्सतां कर्णपीयूषे यशोरूपे तीर्थवरे श्रोत्रमेवांजलिः पानसाधनं यस्य स पुरुषः सकृदप्युपस्पृश्याचमनमात्रं कृत्वा तत्सौंदर्याकृष्टचित्तः कर्मवासनां धुनुते ॥ ६२ ॥ तदेवाह द्वाभ्याम् । भोजादिभिः श्लाघनीयमीहितं यस्य ॥ ६३ ॥ सर्वैरंगै रम्यया मूर्त्या च ॥ ६४ ॥ तत्प्रदर्शनार्थं मुखशोभामाह । यस्याननं दृशिभिर्नेत्रैः पिबंत्यो नार्यो नराश्च न ततृपुर्न तृप्ताः निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्तुर्निमेः कुपिताश्च बभूवुः । कथंभूतमाननम् । मकरकुंडलाभ्यां चारू कर्णौ भ्राजंतौ कपोलौ च तैः सुभगम् । सविलासो

त्तिः अग्न्यपाये तापापायवत्प्रथितैवेति भावः ॥ ५८ ॥ तस्य हरेः । नृपाणां लाञ्छनं नाम चिह्नं वा येषां तैः कंसादिभिः । 'लांछनं नामचिह्नयोः' इति मेदिनी ॥ ५९ ॥ अवितर्क्याणि दावानलपानादीनि । यतो लोकहिताय मधुनामानं दैत्यं हतवानिति ॥ ६० ॥ तदेवाह—दुःखमैहिकामुष्मिकं संसृत्यनुभवः शोकः संसारस्तमस्तद्धेतुरज्ञानम् । सुपुण्यं तीर्थदानतपआदिभ्योऽतिपवित्रम् "तीर्थं दानं तपो यागो न समं यशसा हरेः" इत्यादिपुराणात् ॥ ६१ ॥ सकृदपि किं बहुकृत्वः । कर्मवासनानिवृत्तेस्तत्रैव प्रीत्यतिशयोऽभवति । "कीर्त्यमानं यशो यस्य सकृदाकर्ण्य रोचनम् । सत्संगान्मुक्तदुस्संगो हातुं नोत्सहते बुधः ॥" इत्युक्तेः ॥ ६२ ॥ तदेव कर्मवासनाधूननमेव । ईहितं चेष्टितम् ॥ ६३ ॥ स्निग्धस्मितेक्षितेनोदारै रम्यैः । विक्रमस्य शौर्यस्य लीलया विलासेन नृलोकं जनसमूहं नृणाति भक्तिपूर्वकं तत्त्वं जानंतीति नरो ज्ञानिस्तेषां लोकस्समूहस्तं वा ॥ ६४ ॥ तत्प्रदर्शनार्थं भक्तपुलाकन्यायेन सर्वांगरम्यत्वदर्शनाय । यस्य कृष्णस्य । पिबंत्यः सादरं पश्यंत्यः । नरपक्षे लिंगव्यत्यासेन पिबंत इति । सुभगं शोभनम् । न तृप्ता नालंबुद्धिं प्रापुः । निमेरिति । निमेषोन्मेषकर्तृत्वेन तत्र स्थितं निमिराजं प्रतीत्यर्थः । उत्सवो द्रष्टृजनाह्लादः नृष्वपि व्रजवासिनस्तेष्वपि गोप्यस्तत्प्रियसखायश्च । तन्माधुर्यपानप्रवराः परमधन्यतमा इत्याह—यस्येति । सर्वेष्वपि मध्ये परममधुरमाननं तदाननमप्यूर्ध्वाधोभागाभ्यां द्विधा विभक्तं महामाधुर्यं भवति । तत्रापि सर्वमहामाधुर्याणां चक्रवर्ती हास्यामृतमहामधुरिना तदधरभागमध्ये निवसतीत्यधरभागं वर्णयति—मकरकुंडलाभ्यां चारु देदीप्यमानौ यौ कर्णौ ताभ्यां भ्राजंतौ यौ कपोलौ ताभ्यां सुभगं दृष्टजनमनोहरं विलासैर्हर्षौत्सुक्यचापलादिभिर्द्योत्यमानैः सहितो हासो यत्र तत् । यद्वा—मकरकुंडलाभ्यामपि चारुकर्णौ 'भूषणभूषणांगम्' इत्युक्तेस्तयोरपि शोभावर्ध

जातो गतः पितृगृहाद्व्रजमेधितार्थो हत्वा रिपून्सुतशतानि कृतोरुदारः ॥ उत्पाद्य तेषु पुरुषः क्रतुभिः समीजे आत्मानमात्मनिगमं प्रथयञ्ज नेषु ॥ ६६ ॥ पृथ्व्याः स वै गुरुभरं क्षपयन्कुरूणामंतःसमुत्थकलिना युधि भूपचम्वः ॥ दृष्ट्या विधूय विजये जयमुद्विघोष्य प्रोच्योद्धवाय च परं समगात्स्वधाम ॥ ६७ ॥ इति श्रीमद्भागवते महापुराणे पारमहंस्यां संहितायामष्टादशसाहस्र्यां वैयासिक्यां नवमस्कंधे श्रीसूर्यसोमवंशानुकीर्तने यदुवंशानुवर्णनं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तश्चायं नवमस्कंधः ॥

हासो यस्मिन् । नित्यमुत्सवो यस्मिन् ॥ ६५ ॥ श्रीकृष्णस्य चरितं समासतो वर्णयति जात इति द्वाभ्याम् । जातो निजेन रूपेण पश्चात्पुरुषो मनुष्याकारः सन् व्रजं गतः व्रजवासिनामेधिता अर्था येन तेषु दारेषु सुतानां शतान्युत्पाद्य । आत्मनिगमं स्वकीयं वेदमार्गम् ॥ ६६ ॥ अंतःसमुत्थेन कलिना निमित्तेन गुरुभारं क्षपयन् दृष्ट्यैव भूपचमूर्विधूय विजये जयमर्जुनेन जितमित्येवमुद्घोषं कृत्वा परं तत्त्वमुद्धवायोपदिश्य स्वधाम सम्यक् स्वेनैव रूपेण जगामेति ॥ ६७ ॥ इति श्रीमद्भागवते नवमस्कंधे श्रीधरस्वामिविरचितायां भावार्थदीपिकायां टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥ समाप्तश्चायं नवमस्कंधः ॥ ९ ॥

कत्वात् । अंतर्वर्त्तिचर्व्यमानतांबूलस्य पार्श्वस्थयोर्हासकुंडलयोश्च छविसंगात् तांबूलहेतुकदरोत्तुंगिमवदेकतरत्वादतिस्वच्छत्वादतिसुकुमारत्वाच्च । अर्थान्मकरकुंडलाभ्यां सकाशादपि सविलासो हासः बिंबाधरदशनसृक्किणीशोभानुरंजितत्वात्सर्वमाधुर्यमहाराजचक्रवर्त्तित्वाच्च ज्योत्स्नाप्रवाहनिर्वापितसर्वसंतापश्रेणीकत्वात्सर्वभक्तश्चेतश्चकोराभिलोभनीयत्वात् युवतिजनकामांबुधिवर्द्धकत्वात् व्रजकुलकलाकुलजातिधर्मधैर्यध्वंसकमहोन्मादप्रवर्तककार्मणधर्मत्वात् यत्र तत् दृशिभिर्नेत्रांजालिभिः पिबंत्योऽपि न ततृपुः । निमेषोन्मेषमात्रव्यवधानमप्यसहमानास्तत्कर्त्तुर्निमेः कुपिता बभूवुरिति निमेषासहत्वेन रूढमहाभावलक्षणेनात्र स्त्रियो गोप्य एव नान्याः । नराः कृष्णप्रियनर्मसखाः सुबलादयो ज्ञेया नान्ये । इह प्रमाणवाक्यानि तूज्ज्वलनीलमणौ दृश्यानि इति विश्वनाथः ॥ ६५ ॥ समासतः सूत्ररूपेण पितृगृहान्मथुरातः । व्रजं गोकुलम् । अथ ते के जन्मकर्मणी इत्यपेक्षायां युगपत्स्फुरितं तच्चरितमापाततो निजौत्कंठ्यकुंठनेच्छया राजौत्कंठ्यवर्द्धनेच्छया च समासेन वर्णयति—पितुर्वसुदेवस्य गृहाद्व्रजंगतः किमर्थमेधितः प्रकटीकृत्य वर्द्धितो वृद्धिसीमां प्रापितोऽर्थः । सर्वपुरुषार्थशिरोमणिः । प्रेमा येन सः । संदर्भस्तु—एधितः पूर्वतोऽपि समेधितोऽर्थः श्रीमन्नंदादौ पितृत्वादिरूपो येन सः । वक्ष्यते च 'पुत्रीभूते जनार्दने । नंदस्त्वात्मज उत्पन्ने । नंदः किमकरोद्ब्रह्मन्' इत्यादौ प्रेमाख्यापनस्यैवावतारस्य मुख्यप्रयोजनत्वात्प्रेम्णश्च व्रज एव वृद्धिसीमां प्राप्तत्वाच्च । रिपून्हत्वेति । रिपुभ्यो मोक्षप्रदानमप्येकं प्रयोजनमिति । तेषु दारेषु सुतशतान्युत्पाद्येत्यादिना वर्णाश्रमधर्मस्थापनं च दर्शितं नराकृतिपरब्रह्मरूपत्वात् पुरुष आत्मानमीजे इष्टवान् । इज्यमानस्यान्यस्याभावात् । किमर्थं समीजे तत्राह—स्वकीयं वेदमार्गम् । भूपचमूहनने प्रयोजनं त्वर्जुनेन जितमिति प्रख्यापनमेव ॥ ६६ ॥ स कृष्णः । गुरुभरमसुरलक्षणभारम् । उद्घोषं कृत्वा डिंडिमं वादयित्वा । तेनैव रूपेणेति न तु तत्त्यक्त्वाति भावः । भक्तिज्ञानवैराग्यप्रख्यापनमप्यवतारप्रयोजनं दर्शयति—प्रोच्येति । स्वधाम द्वारकां समगात्संगतस्तैर्मिलितः । प्रपंचगोचरतां परित्यज्य नारायणस्वरूपमेव स्वधाम वैकुंठं चागादिति चक्र

वर्त्ती ॥ ६७ ॥ अथास्य माहात्म्यम्—"हरिरुवाच । मत्कपोली च भृकुटिर्नवमस्कन्ध इष्यते । एतस्य श्रवणाद्गोघ्नः सद्गतिं लभतेतराम् ॥ १ ॥ इतिहासं चात्र शृणु वंगेदेशे कृषीवलः । विश्राम इति विख्यातो बभूव द्विजपूजकः ॥ २ ॥ नानान्नमुप्त्वा भूमौ स प्रोत्पन्नं तन्नृपाय वै । ददौ करार्थं तच्छेषं स्वगृहं चानयत्पुनः ॥ ३ ॥ गृहं गत्वा ब्राह्मणेभ्यो ददौ चान्नं कृषीबलः । कदाचित्पक्विते क्षेत्रे स्थिता गा निशि दृष्टवान् ॥४॥ दंडेन तास्तताडेति मत्क्षेत्रं भक्षितं हि वः । निशम्य तद्ध्वनिं गावो दुद्रुवुस्तु दिशो दश ॥ ५ ॥ एका वृद्धा मृता धेनुस्तां दृष्ट्वा दुःखितोऽभवत् । उत्थाप्य तां नदीतीरे दूरे प्रक्षिप्तवान्पुनः ॥ ६ ॥ प्रायश्चित्तं न कृतवाँल्लोके ख्यातिभयात्तदा । देहांते नरकाँल्लेभे बहुकालं स पादजः ॥ ७ ॥ पुनश्चांडालतां प्राप्ते मृता माता मृतः पिता । मातृष्वसृगृहे सोंऽधो भूत्वा कुष्ठरुजा ऽजितः ॥ ८ ॥ उवास दश वर्षाणि ततो मातृष्वसा मृता । ततो यष्टिं गृहीत्वांऽधो गेहेगेहे क्षुदन्वितः ॥ ९ ॥ भ्रमन्दैवात्कदाचित्स ब्राह्मणस्य गृहं गतः । तत्र भागवती गाथा नवमस्कंधजा श्रुता ॥ १० ॥ तदा ववर्ष जलदो बहुधारासमन्वितः । स चांडालो मार्गगतः श्लोकार्द्धं नवमस्य हि । शुश्राव च्छायामाश्रित्य ततः पंके पपात ह ॥ ११ ॥ तदैव स मृतो लोकं वैकुंठं प्रजगाम वै । श्लोकार्द्धश्रवणेनैव मुक्तो गोवधपापतः । अत एतादृशं शास्त्रं न लोके पापराशिनुत् ॥ १२ ॥" यो रक्षसां वंशविनाशनाय श्रीरामरूपोऽर्ककुले बभूव । स एव तं भूभरनाशहेतोश्श्रीकृष्णरूपींदुकुले नतोऽस्मि ॥ १ ॥ श्रीस्वामिचरणव्याख्या नवमस्कंधगा च या । तस्या वंशीधरेणेयं कृता वृत्तिर्यथामति ॥ २ ॥ इति श्रीखरडपत्तनवास्तव्यपंडितश्रीवंशीधरशर्मविरचिते श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे चतुर्विंशोऽध्यायः ॥ २४ ॥

अप्रत्तं नस्त्वया किंनु भगवन् भुवनेश्वर ॥ यन्नोंतर्हृदयं विश्य तमो हंसि स्वरोचिषा ॥६॥ नमो ब्रह्मण्यदेवाय रामायाकुंठमेधसे ॥ उत्तमश्लो कधुर्याय न्यस्तदंडार्पितांघ्रये ॥ ७ ॥ कदाचिल्लोकजिज्ञासुर्गूढो रात्र्यामलक्षितः ॥ चरन् वाचोऽशृणोद्रामो भार्यामुद्दिश्य कस्यचित्॥८॥नाहं बिभर्मि त्वां दुष्टामसतीं परवेश्मगाम् ॥ स्त्रीलोभी बिभृयात् सीतां रामो नाहं भजे पुनः ॥९॥इति लोकाद्बहुमुखाद्दुराराध्यादसंविदः ॥ पत्या भीतेन सा त्यक्ता प्राप्ता प्रचेतसाश्रमम् ॥ १० ॥ अंतर्वत्न्यागते काले यमौ सा सुषुवे सुतौ ॥ कुशो लव इति ख्यातौ तयोश्चक्रे क्रिया मुनिः ॥११॥ अंगदश्चित्रकेतुश्च लक्ष्मणस्यात्मजौ स्मृतौ ॥ तक्षः पुष्कल इत्यास्तां भरतस्य महीपते ॥ १२ ॥ सुबाहुः श्रुतसेनश्च शत्रुघ्नस्य बभूवतुः ॥ गंधर्वान् कोटिशो जघ्ने भरतो विजये दिशाम् ॥१३॥ तदीयं धनमानीय सर्वं राज्ञे न्यवेदयत् ॥ शत्रुघ्नश्च मधोः पुत्रं लवणं नाम राक्षसम् ॥ हत्वा मधुवने चक्रे मथुरां नाम वै पुरीम् ॥१४॥ मुनौ निक्षिप्य तनयौ सीता भर्त्रा विवासिता॥ध्यायंती रामचरणौ विवरं प्रवि वेश ह ॥ १५ ॥ तच्छ्रुत्वा भगवान् रामो रुंधन्नपि धिया शुचः ॥ स्मरंस्तस्या गुणांस्तांस्तान्नाशक्नोद्रोद्धुमीश्वरः ॥ १६ ॥

किंप्रमत्तं किमदत्तं सर्वं दत्तमित्यर्थः । विश्य प्रविश्य॥६॥न्यस्तदंडैर्मुनिभिरर्पितौ चित्ते न्यस्तावंघ्री यस्य तस्मै । तेष्वर्पितावंघ्री येनेति वा॥७॥८॥९॥असंविदोऽज्ञात् । प्राचेतसो वाल्मीकिस्तस्याश्रमं प्राप्ता ॥ १० ॥ अंतर्वत्नी गर्भिणी । क्रिया जातकर्माद्याः ॥११॥१२॥१३॥१४॥१५॥ ईश्वरोऽपि शुचो रोद्धुं नाशक्नोत् ॥१६॥

ब्राह्मणे साधुर्ब्रह्मण्यः स चासौ देवश्चेति तस्य । ब्राह्मणदेवस्येति पाठः प्रचुरः स च स्पष्टार्थ एव । संस्तुतं चरितं समस्तभूदानलक्षणं वीक्ष्य प्रीताः । वत्साय लाति ददाति पयस्तमाददाति स्नेहाद्वेति वत्सला सैव वात्सल्यं स्वार्थिको ष्यञ् । धेनुरूपं द्रव्यं त्वं प्रत्यर्प्य अस्मभ्यं देहि भूपतिनिधिस्त्वेनेदं वाक्यं बभाषिरे । 'अर्प–अतिसर्जने ' दैवादिकः । "एकत्र पृथिवी सर्वा सशैलवनकानना । तस्या गौर्ज्यायसी प्रोक्ता" इति पराशरोक्तेः । यद्वा–विप्रैर्भगवतः स्वरूपज्ञानमादाय गुरुदक्षिणात्वेन पुनः स्वस्य तत्पालनेऽयोग्यतां च मत्वा ददे । यद्वा–प्रीतिदानं न दोषायेति वाल्मीकीयोत्तरकांडेऽगस्त्योक्तेः । 'प्रीताः प्रत्यर्पयामासुः' इति भावः ॥ ५ ॥ भगवत्त्वं भुवनेश्वरत्वं च तवैव क्षत्रियत्वाद्योग्यमिति संबुद्धिद्वयतात्पर्यम् । यद्यतः । अंतश्चित्ते । स्वरोचिषा निजज्ञानप्रकाशेन । तमोऽज्ञानलक्षणम् । अतः सर्वं दत्तमिति भावः ॥ ६ ॥ त्वमस्म भ्यमनश्वरं वनं दत्तवानयं तत्प्रतिकर्तुमसमर्थाः संतः केवलं नमनमेव कुर्म इत्याशयेनाहुः–नम इति । ननु न्यस्तदंडानां निष्कामत्वात्तदंघ्रिध्यानं किमर्थमित्याक्षेपनिवृत्त्या आह–तेषु न्यस्तदंडेषु । अर्पितौ समर्पितावंघ्री ज्ञानवैराग्यलक्षणे गती येनेति वा ॥ ७ ॥ कस्यचित्पुंसः रजकस्येति जैमिनीये ॥ ८ ॥ असतीमसाध्वीं तदेवाह–परवेश्मगामिति " नित्यं स्वं वेश्म संत्यज्य परगेहं प्रयाति या । सा नारी सर्वथा त्याज्या प्रत्यब्दं पुत्र सूरपि ॥" इत्यादिपुराणात् ॥ ९ ॥ दुराराध्यात् 'कः सर्वमाराधयितुं समर्थः ' इत्युक्तेः । पत्या श्रीरामेण भीतेन लोकापवादादिति शेषः । 'मृत्युश्च को वाऽपयशः स्वकीयम्' इति शुकोक्तेः । स्वयं स्वापवाद श्रवणं जीवन्मृतत्वापादकं तन्निवृत्तये सा सीता त्यक्तेति ॥ १० ॥ कुशलवनाम्नोरन्वर्थता च वाल्मीकीयोत्तरकांडे "कुशमुष्टिमुपादाय लवं चैव तु स द्विजः । वाल्मीकिः प्रददौ ताभ्यां रक्षां भूतविनाशिनीम् ॥ कुशाना मग्रभागस्तु कुशमुष्टिरिहोच्यते । अधोभागः कुशानां तु लवः प्रोक्तो मनीषिभिः ॥ कुशमुष्ट्या मार्जितो यः स कुशः प्रोक्त आख्यया । लवेन मार्जितो यो वै स लवः परिकीर्तितः ॥ " इति । तयोः कुशलवयोः ॥ ११ ॥ १२ ॥ १३ ॥ तदीयं गंधर्वीयम् । राज्ञे श्रीरामाय ॥ १४ ॥ विवासिता त्यक्ता विवरं भूबिलम् ॥ १५ ॥ तत् सीताया बिलप्रवेशनम् । वाल्मीकीये तु रामसंमुखमेव नानानीतविमानमारुह्य पृथ्व्या गृहीता

स्त्रीपुंप्रसंग एतादृक् सर्वत्र त्रासमावहः ॥ अपीश्वराणां किमुत ग्राम्यस्य गृहचेतसः॥१७॥तत ऊर्ध्वं ब्रह्मचर्यं धारयन्नजुहोत्प्रभुः॥त्रयोदशाब्द साहस्रमग्निहोत्रमखंडितम् ॥ १८ ॥ स्मरतां हृदि विन्यस्य विद्धं दंडककंटकैः ॥ स्वपादपल्लवं राम अत्मज्योतिरगात्ततः ॥ १९ ॥ नेदं यशो रघुपतेः सुरयाच्ञयात्तलीलातनोरधिकसाम्यविमुक्तधाम्नः ॥ रक्षोवधो जलधिबंधनमस्त्रपूगैः किं तस्य शत्रुहनने कपयः सहायाः ॥ २० ॥

न चातिचित्रमेतत् स्त्रीपुंसोः प्रसंगश्चासक्तिः । त्रासमावहतीति तथा विभक्तेरलुगार्षः।पाठांतरं सुगमम् । किमुतेति प्रासंगिकोक्तिः ॥ १७ ॥ अग्निहोत्रमजुहोत् प्रभुः रामः ॥ १८ ॥ आत्मज्योतिर्निजं धाम॥१९॥जलधिबंधनमस्त्रपूगैश्च रक्षसां वध इतीदं कविभिराश्चर्यमिव वर्णितमपि यशः स्तुतिर्न भवति।तत्र हेतुः । अधिकसाम्याभ्यां

पातालं जगामेति तत्कल्पांतराभिप्रायम् । शुचोऽश्रूणि । तस्याः सीतायाः । तांस्तान् सौशील्यप्रश्रयादीन् ॥ १६ ॥ एतादृक् वियोगे क्लेशकर एव । पाठांतरम् 'सर्वत्रैव भयावहः' इत्येवंरूपम् । भयं शोकमोहादि ॥ १७ ॥ ततः सीताभूनिवेशानंतम् । पूर्वं क्वचित्खंडितमिति न ध्येयं किन्तु ततः पूर्वमपि तथा ब्रह्मचर्यमित्यस्याप्यूर्ध्वरेतस्त्वं नार्थः किन्तु ब्रह्मणा लक्ष्म्या सीतया सह चर्यं चरणं वर्तनं बाहुलकाद्भावे यत् । धारयन्कु र्वन्नेव 'मम योनिर्महद्ब्रह्म' इति वचनात् । अन्यथा त्रयोदशाब्दसाहस्रमित्युक्तिरयुक्ता स्यात् । सर्वात्मना राज्यकरणस्य तावन्मात्रत्वात् । नाक्षत्रमासस्य सप्तविंशतिदिनात्मकस्य गणनयात्र गणना त्रयोदशाब्दसहस्राणाम् । यद्वाऽग्निर्हूयतेऽत्रेत्यग्निहोत्रं भूमंडलम् । अखंडितं ब्रह्मलोकसमं तल्लोकसममर्यादम् । त्रयोदशाब्दसाहस्रं धारयन् ब्रह्मचर्यं सीतासाहचर्यमजुहोत् स्वीचकार । ब्रह्मलोकस्याखंडितत्वं वेदानां तत्र मूर्तिमत्त्वश्रुतेः । जुहोतेः स्वीकारार्थस्तु 'हु—दानाऽदनयोः ' अत्र आदाने चेत्येके इत्युक्तेः । "नक्षत्रमासगणितं त्रयोदशसहस्रकम् । ब्रह्मलोकसमं चक्रे समस्तं क्षितिमंडलम् ॥" इति तीर्थः । मम त्वित्थं प्रतिमाति—ननु पृथ्व्यर्थितब्रह्मादि प्रार्थनानंतरं श्रीवाल्मीकीये "दशवर्षसहस्राणि दशवर्षशतानि च। वत्स्यामि मानुषे लोके पालयन्पृथिवीमिमाम ॥" इति श्रीभगवतैव प्रतिश्रुतं तत्कथं त्रयोदशाब्दसाहस्रमिति तत्राह—तत्रापि पृथिवीपालन एवैतत्काल प्रतिज्ञा श्रूयते तेन तदनंतरमग्निहोत्रादिकरणं समंजसमेव । "आयुवर्षाणि लक्षं स्युः कृते नृणां महात्मनाम् । त्रेतायामयुतं तच्च सहस्रं द्वापरे ततः । कलौ शतं पापवशात्तस्यापि ह्यनवस्थितिः ॥" इति पुराणांतरोक्तिविरोध परिहारस्तु "तपसा दानधर्मेण योगाभ्यासेन वर्द्धते । आयुर्द्धनं सुखं चेह चिकित्सा नेह विद्यते ॥ " इत्युक्तेर्ध्येयः । तथा च "अग्निहोत्रं परो धर्मो न तस्माद्विद्यते परम्" इत्युक्तेस्तस्मिन्नायुर्वृद्धिर्न न चित्रमन्यथा "षष्टि वर्षसहस्राणि जातस्य मम कौशिक " इति विश्वामित्रं प्रति दशरथोक्तिः कथं संगच्छेतेति । यच्च "शतायुर्वै पुरुषः " इति श्रुतौ शतपदं तदानंत्यमाह प्रतिपादितं चैतन्नीलकंठेन श्रीमहाभारते । "आनंत्यार्थाः स्मृताः सर्वे प्रायश्शब्दाः शतादयः । इतिहासपुराणेषु वाच्यार्थं ब्रुवते क्वचित् ॥" इत्युक्तेः । श्रौतं शतपदं कृतादित्रिष्वानंत्यपरं कलौ वाच्यार्थपरमिति न किंचिदसमंजसम् । यद्वा—त्रयोदशभिः सहितमब्दसाहस्रं त्रयोद शाब्दसाहस्रं तथा च त्रयोदशाब्दन्यूनायुताब्दपर्यंतं राज्यं कृत्वा त्रयोदशाधिकसहस्राब्दं यावदग्निहोत्रं चकार तेन "दशवर्षसहस्राणि दशवर्षशतानि च । वत्स्यामि मानुषे लोके" इति प्राचेतसोक्तिः "दशवर्षसहस्राणि रामो राज्यमचीकरत्" इति पुराणांतरोक्तिश्च समंजसा भवेदिति । यद्वा—त्रयेण प्रभावोत्साहमंत्ररूपेण शक्तित्रयेणोदश्नाति भुंक्ते राज्यमिति त्रयोदशो नृपस्तत्संबुद्धौ । तथा अब्दसहस्रमग्निहोत्रमजुहोत् । अखंडितं ब्रह्म चर्यं धारयन्नित्यन्वयः ॥ १८ ॥ विन्यस्य विधिवन्निधाय । आत्मना स्वयमेव ज्योतिः प्रकाशो यत्र तद्वैकुंठम् "यद्भ्राजमानं स्वरुचैव सर्वतः " इत्युक्तेः । ब्रह्माख्यं स्वरूपं वा "न तत्र सूर्यो भाति" इत्यादिश्रुतेः॥१९॥ स्तुतिराधिक्यं न । तत्र आधिक्याभावे । अधिकसाम्येत्यत्राधिकेति भावप्रधानो निर्देशः । आधिक्यसाम्याभ्यामित्यर्थः । अधिकसाम्यविमुक्तत्वं तु श्रीमहादेवस्यापि ध्येयत्वत्तादुक्तं तेनैव पाद्मे "रामरामेतिरामेति रमेरा मे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥ १ ॥" अस्यार्थस्तु—रमा लक्ष्मीस्तस्या ईरणमीः कंपनम् 'ईर—गतौ कंपने च ' इति धातोर्भावे क्विप् । यया सा रमेः रूपसंपत्तिस्तया रमेराऽर्थाद्रूपसंपत्त्या मनोरमे

यस्याऽमलं नृपसदस्सु यशोऽधुनापि गायंत्यघघ्नमृषयो दिगिभेंद्रपट्टम्॥तं नाकपालवसुपालकिरीटजुष्टपादांबुजं रघुपतिं शरणं प्रपद्ये॥२१॥यैः संस्पृष्टोऽभिदृष्टो वा संविष्टोऽनुगतोऽपि वा॥कोशलास्ते ययुः स्थानं यत्र गच्छंति योगिनः॥२२॥पुरुषो रामचरितं श्रवणैरुपधारयन्॥आनृंशस्य परो राजन्कर्मबंधैर्विमुच्यते॥२३॥राजोवाज ॥ कथं स भगवान्रामो भ्रातॄन्वा स्वयमात्मनः॥ तस्मिन्वा तेऽन्ववर्तंत प्रजाः पौराश्च ईश्वरे॥२४॥

विमुक्तं धाम प्रभावो यस्य तस्य किं कपयः सहायाः अतः सुग्रीवाद्याश्रयणं यथा लीलामात्रं तथैवेदमपि । युक्तं चैतदित्याह । सुराणां याच्ञयाऽऽत्ता स्वीकृता लीलार्था तनुर्येन तस्य॥२०॥एवंविधलीलाप्रयोजनं दर्शयन्प्रणमति। यस्य यशो नृपाणां युधिष्ठिरादीनां सदस्सु ऋषयो मार्कंडेयादयो गायंति । दिगिभेंद्राणां पट्टवदाभरणरूपम् । तत्पर्यंतं व्याप्तमित्यर्थः । नाकपाला देवाः वसुपाला वसुधापालाश्च तेषां किरीटैर्जुष्टं पादांबुजं यस्य तं रघुपतिम् । पाठांतरे तत्तस्य रघुपतेर्नाकपालादिभिर्जुष्टं पादांबुजं प्रपद्य इत्यर्थः ॥ २१ ॥ स रामः । संविष्ट उपवेशितोऽनुगतो वा यैस्ते कोशलदेशवासिनः सर्वेऽपि यत्र योगिनो गच्छंति तत्स्थानं ययुः ॥ २२ ॥ आनृशंस्यपर उपशमनिष्ठः सन्विमुच्यते ॥२३॥ स रामः स्वयं कथमवर्तत भ्रातॄन्प्रति वा कथमवर्तत । कथंभूतान् आत्मनः आत्मांशभूतान् । तस्मिन्वा ईश्वरे ते भ्रात्रादयोऽनु अनंतरं कथमवर्ततेति प्रश्नत्रयम् ॥ २४ ॥

सुंदरि संबुद्धिरियं पार्वतीं प्रति शिवस्य । वरानने सुमुखे रामनामास्ति मुखसौष्ठवं रामनाम्नैव नान्यथेति भावः । तदुक्तम् "मथुरार्णविलोमेन मध्यमं नो यदक्षरम् । यो न स्मरति तच्छिष्टं यन्मध्यं तच्च तन्मुखे॥" इति शिष्टैः यद्वा–मे वरानने इति योज्यं किंभूतं रामनाम रामस्य दाशरथे रामा सीता तस्या इतिर्गमनं यत्र तद्रामरामेति लंकापुरं रामरामेतिनि रामो रमणं यस्य स रामरामेतिरामो रावणस्तस्येतिः समाप्तिर्येन तद्रामरामेतिरामेतिसंज्ञासं ज्ञिनोरभेदोपचारो हि सूर्यादिशब्दवत् । मीमांसकैर्मंत्रस्यैव देवताविग्रहत्वेन स्वीकृतत्वात् पुनः किंभूतं सहस्रैरनंतैर्नम्यत उच्चार्यत इति सहस्रनाम 'णम–प्रह्वत्वे शब्दे च' इत्यन्प्रत्ययः । यद्वा–'म्ना–अभ्यासे' इतो मन् । पुनः किंभूतं तेन ब्रह्मणा तुल्यं तत्तुल्यम् " तदिति ब्रह्मणो नाम " इति श्रुतेः । यथा ब्रह्माभ्यासान्मोक्षस्तथा रामनामतोऽपीति भावः । यदुक्तमभियुक्तैः "यन्नामसंसर्गवशाद्व्रणों नष्टस्वरोऽप्यूर्द्ध्वगतिं प्रयाति। तन्नामपादं हृदि संनिधाय देही कथं नोद्र्ध्वगतिं प्रयायात् ॥" इति। अपरोऽप्यर्थोऽस्यास्ति तथाहि--हे वराननेऽहं रामे श्रीदाशरथावतिरमेऽतिशयेन तं सेवे। किंभूते रामेऽतिक्रांतो रामो जामदग्न्यो येन सोऽतिरामस्तस्मिन्नतिरामे पुनर्मनोरमे ऽतिसुंदरे संबुद्धिर्वेयम् । किंभूतोऽहं रामो रा धनं यस्य स रामराः । किं च मे यत्सहस्रनाम तत्तुल्यं रामनाम मत्तदोर्नित्यसंबंधात् । यन्मे नामसहस्रोच्चारणफलं तत्सकृद्रामनामोच्चारणेन भवतीति भावः । अत्र छेदस्तु-- "रामराऽमेतिरामेऽतिरमे रामे मनोरमे । सहस्रनाम तत्तुल्यं रामनाम वरानने ॥" इति । किं सहाया अपि तु न । यतो न सहायाः अतो हेतोः । इदमपि जलधिबंधनाद्यपि । लीलानात्रास्त्रीकारे वालिभयार्दितसुग्रीवस्य निजकार्यं कर्तुमशक्तस्य किं परकार्यसहायकत्वं स्यादिति ध्येयमत्र ॥ २० ॥ यस्य श्रीरामस्य । वसुपाला इत्यत्र धालोप आर्षः । वसुधारकत्वेन वसुपदं वा वसुधां लक्ष्यति तेन राजान इत्यर्थः । तीर्थस्तु वसुपालाः कुबेराद इत्याह । मूलपाठे तमिति छेदः । पाठांतरे 'पादांबुजं रघुपतेः' इति पाठे तदिति छेदः । इत्यर्थ इति । तत्पदं षष्ठ्या विपरिणमनीयमिति भावः ॥ २१ ॥ स यैरिति पाठः प्रचुरः । स्पृष्टो नमनादिना । कोशला अयोध्यावासिनः । योगिनो भक्तिज्ञानयोगसिद्धाः । ततः वैकुंठापरपर्यायं सांतानिकमिति प्राचेतसः ॥ २२ ॥ आसमंतान्नृशंस्यं क्रौर्यं तत्परो बानेन "रामोरामोराम इति सर्वेषामभवत्तदा । सर्वो राममयो लोको यदा रामोऽभवन्नृपः ॥" इति वाक्यमसूचि । तथा च पुरुषमात्रस्य श्रवणमात्रेणापि नाम्ना कर्मबंधविमोकोऽभूदिति भावः ॥ २३ ॥ कथं केन योगेन भ्रात्रादिषु रामो रमयितृत्वेनौरसवत् ।

श्रीशुक उवाच ॥अथादिशद्दिग्विजये भ्रातॄंस्त्रिभुवनेश्वरः॥ आत्मानं दर्शयन् स्वानां पुरीमैक्षत सानुगः॥२५॥आसिक्तमार्गां गंधोदैः करिणां मदसीकरैः॥ स्वामिनं प्राप्तमालोक्य मत्तां वा सुतरामिव ॥ २६ ॥ प्रासादगोपुरसभाचैत्यदेवगृहादिषु ॥ विन्यस्तहेमकलशैः पताकाभिश्च मंडिताम्॥२७॥पूगैः सवृन्दै रंभाभिः पट्टिकाभिः सुवाससाम् ॥ आदर्शैरंशुकैः स्रग्भिः कृतकौतुकतोरणाम् ॥ २८॥ तमुपेयुस्तत्रतत्र पौरा अर्हणपाणयः ॥ आशिषो युयुजुर्देव पाहि मां प्राक् त्वयोद्धृताम्॥२९॥ततः प्रजा वीक्ष्य पतिं चिरागतं दिदृक्षयोत्सृष्टगृहाः स्त्रियो नराः ॥ आरुह्य हर्म्याण्यरविंदलोचनमतृप्तनेत्राः कुसुमैरवाकिरन् ॥ ३० ॥ अथ प्रविष्टः स्वगृहं जुष्टं स्वैः पूर्वराजभिः ॥ अनन्ताखिलकोशाढ्यमनर्घ्योरुपरिच्छदम् ॥ ३१ ॥ विद्रुमोदुंबरद्वारैर्वैडूर्यस्तंभपंक्तिभिः ॥ स्थलैर्मारकतैः स्वच्छैर्भ्राजत्स्फटिकभित्तिभिः ॥३२॥ चित्रस्रग्भिः पट्टिकाभिर्वासोमणिगणांशुकैः ॥ मुक्ताफलैश्चिदुल्लासैः कांतकामोपपत्तिभिः ॥ ३३ ॥

तत्र श्रीरामस्य भ्रात्रादिषु प्रवृत्तिप्रकारमाह । अथेति अनेनैव भ्रातॄणामपि तदाज्ञाऽनुसारितया प्रवृत्तिरुक्ता।अथ सिंहासनस्वीकारानंतरम् ॥२५॥पुरीं वर्णयति त्रिभिः । गंधोदकैर्मदाबिंदुभिश्चासिक्ता मार्गा यस्याम् । सुतरां मत्तामिव समृद्धाम् । वा इति वितर्के । पाठांतरे वासितगां वासितां कामोन्मत्तां गामिवेत्यर्थः ॥२६॥२७॥२८॥ पौराणां तस्मिन्वृत्तिमाह । तमुपेयुरिति वराहरूपेण त्वयोद्धृतामिमां पृथ्वीं पाहीति॥२९॥प्रजानां तस्मिन्वृत्तिमाह।ततः प्रजा इति॥ ३०॥स्वयं कथमवर्ततेत्यस्योत्तरमाह । अथेति यावत्समाप्ति । स्वगृहं प्रविष्टः संस्तस्मिन् रेम इति पंचमेनान्वयः । गृहं वर्णयति।सार्द्धैस्त्रिभिः।अनंता येऽखिलानां रत्नादीनां कोशास्तैराढ्यम् ।अनर्घ्याः उरवः परिच्छदा यस्मिन्॥ ३१॥विद्रुममया उदुंबरा देहल्यो येषु तैर्द्वारैः । स्वच्छैः स्थलैः।तृतीयांतानां मंडितमिति तृतीयेनान्वयः ॥ ३२ ॥ वाससां मणिगणानां चांशुकैर्दीप्तिभिः । चित् चैतन्यं तद्वदुल्लासैरुज्ज्वलैः । यद्वा चिदिति क्वचित् वैडूर्यस्तंभादिषु यथाशोभमुज्ज्वलैर्मुक्ताफलैर्मंडितमित्यर्थः।कांताः कमनीयाः कामोपपत्तयो भोगसाध

यथौरसः स्वदेहोत्पन्नः पितरं रमयति तद्वदिति तीर्थः ॥ २४ ॥ तत्र त्रिषु प्रश्नेषु ॥ २५ ॥ आदिना प्रजादिग्रहः । अथ राज्यप्राप्तेरनंतरम् । अनेन दिग्विजयाज्ञापनेन अनुवर्त्तिनं प्रत्येवाज्ञा दीयते न त्वननुवर्त्तिनमिति । स्वानां प्रजादीनाम् । पाठांतरे 'वासितगाम्' इति पाठे । इत्यर्थ इति व्याख्या ॥ २६ ॥ चैत्यं पाषाणादिबद्धं वृक्षमूलस्थलं बुद्धशालास्थलं वा । आदिना प्रजागृहादिग्रहः ॥ २७ ॥ संवृतैः क्रमुकफलगुच्छैः । सवृन्दैः 'सुवृंदैः' इति पाठेऽप्ययमेवार्थः रंभाभिः कदलीस्तम्भैः । सुवाससां बहुमूल्यवस्त्राणाम् । पट्टिका अल्पध्वजाः । यत्र कुत्र न्यस्तैरादर्शैर्दर्पणैः । स्रग्भिर्मालाभिः । वस्त्रैरापणमार्गस्तृतैः । एभिस्सह कृतकौतुकानि विरचितमंगलानि च तोरणानि गृहाग्रभागाणि यस्यां ताम् । "गृहाणामग्रभागेऽपि तोरणं पल्लवस्रजि" इति धरणिः ॥ २८ ॥ तस्मिन्रामे । तं श्रीरामम् तत्रतत्र स्थले स्थिताः ॥ २९ ॥ तस्मिन् श्रीरामे । ततो रामराज्यावाप्तेरुत्तरम् ॥ ३० ॥ अथ पुरीदर्शनोत्तरकाले । अनर्घ्या अमूल्याः । उरवो बहवः । परिच्छदा उपकराः ॥ ३१ ॥ "उदुंबरस्तु देहल्यां वृक्षभेदे च पंडके । कुष्ठभेदेऽपि च पुमांस्ताम्रे तु स्यान्नपुंसकम् ॥" इति मेदिनी । "विद्रुमो रत्नवृक्षेऽपि प्रवालेऽपि पुमानयम्" इति च । भ्राजत् दीप्ता याः स्फटिकभित्तयस्ताभिः । क्वचित् 'भ्राजत्स्फटिक'--इत्यपि पाठः ॥ ३२ ॥पट्टिकाभिर्वितानैः । "छायायां च वितानेऽपि पट्टिका

धूपदीपैः सुरभिभिर्मंडितं पुष्पमंडनैः ॥ स्त्रीपुंभिः सुरसंकाशैर्जुष्टं भूषणभूषणैः॥३४॥तस्मिन् स भगवान्रामः स्निग्धया प्रिययेष्टया ॥ रेमे स्वारामधीराणामृषभः सीतया किल ॥ ३५ ॥ बुभुजे च यथाकालं कामान्धर्ममपीडयन् ॥ वर्षपूगान्बहून्नृणामभिध्याताङ्घ्रिपल्लवः ॥ ३६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे श्रीरामोपाख्यानं नामैकादशोऽध्यायः ॥ ११ ॥ छ ॥ श्रीशुक उवाच ॥ कुशस्य चातिथिस्तस्मान्निषधस्तत्सुतो नभः ॥ पुंडरीकोऽथ तत्पुत्रः क्षेमधन्वाऽभवत्ततः ॥ १ ॥ देवानीकस्ततोऽनीहः पारियात्रोऽथ तत्सुतः ॥ ततो बलः स्थलस्तस्माद्वज्रनाभोऽर्कसंभवः ॥ २ ॥ खगणस्तत्सुतस्तस्माद्विधृतिश्चाभवत्सुतः ॥ ततो हिरण्यनाभोऽभूद्योगाचार्यस्तु जैमिनेः ॥ ३ ॥ शिष्यः कौशल्य आध्यात्मं याज्ञवल्क्योऽध्यगाद्यतः ॥ योगं महोदयमृषिर्हृदयग्रंथिभेदकम् ॥४॥ पुष्यो हिरण्यनाभस्य ध्रुवसंधिस्ततोऽभवत् ॥ सुदर्शनोऽग्निवर्णश्च शीघ्रस्तस्य मरुः सुतः ॥ ५ ॥ योऽसावास्ते योगसिद्धः कलापग्राममाश्रितः ॥ कलेरंते सूर्यवंशं नष्टं भावयिता पुनः ॥ ६ ॥ तस्मात्प्रसुश्रुतस्तस्य संधिस्तस्याप्यमर्षणः ॥ महस्वांस्तत्सुतस्तस्माद्विश्वसाह्वोऽन्वजायत॥ ७ ॥ततः प्रसेनजित्तस्मात्तक्षको भविता पुनः ॥ ततो बृहद्बलो यस्तु पित्रा ते समरे हतः ॥ ८ ॥

नानि ताभिः ॥ ३३ ॥ भूषणानां भूषणभूतैः ॥३४॥३५॥ नृणां मध्ये । यद्वा नृणां नृभिरभिध्यातमङ्घ्रिपल्लवं यस्येति ॥३६॥ इति श्रीमद्भागवते नवमस्कंधे टीकायामेकादशोऽध्यायः ॥ ११ ॥ द्वादशे रामपुत्रस्य कुशस्यान्वय उच्यते ॥ एवमिक्ष्वाकुपुत्रस्य शशादस्येरितोऽन्वयः ॥१॥ कुशस्य रामपुत्रस्यातिथिः सुतोऽभवत्॥१॥ अर्कसंभवोऽर्कस्यांशात्संभूतः ॥ २ ॥ ततो विधृतेर्हिरण्यनाभः कथंभूतः जैमिनेः शिष्यो योगाचार्यः ॥ ३ ॥ तदाह । यतः सकाशात् कौशल्यो याज्ञवल्क्यऋषिराध्यात्मं योगमध्यगात् । महांत उदयाः सिद्धयो यस्मिंस्तम् । हृदयग्रंथेर्भेदकं च॥४॥५॥मरुं विशिनष्टि । योऽसाविति । पुनर्भावयिता भावयिष्यति॥६॥७॥पित्राऽभिम

न्यपध्वजेंशुके” इति निरुक्तिः । यद्वा–चिदव्ययं कचिदर्थे । इत्यर्थ इति । शुद्धचैतन्यत्वेदेदीप्यमानमिति भावः ॥ ३३ ॥ ३४ ॥ तस्मिन् गृहे । प्रियामनआह्लादकरी चेष्टा व्यवहारो यस्यास्तया । स्वारामधीराणां ज्ञानिनाम् । ऋषभः प्रियः ॥ ३९ ॥ निर्द्धारणार्थषष्ठीस्वीकारे भगवतो नरत्वमापतेत्तद्वारणाय यद्वेति । तृतीयार्थे षष्ठी ज्ञेया ॥ ३६ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे एकादशोऽध्यायः ॥ ११ ॥ एवम् इत्थम् उक्तरीत्या ( १ ) । तस्मात् अतिथिः । तत्सुतो निषधसुतः । अथ नभस्य । तत्पुत्रः पुण्डरीकपुत्रः । तत इत्यग्रिमेणान्वेति । तथा च क्षेमधन्वनो देवानीकः ॥ १ ॥ ततो देवानीकात् । अथानीकानंतरम् । तत्सुतोऽनीहसुतः । ततः पारियात्रात् । तस्माद्बलात् । ततः स्थलाद्वज्रनाभः ॥ २ ॥ तत्सुतो वज्रनाभसुतः । तस्मात् खगणात् । ततो विधृतेः ॥ ३ ॥ शिष्य इति पूर्वान्वयि । तत् योगाचार्यत्वम् । यतो हिरण्यनाभात् । कौशल्यः कोशलदेशवासी ॥ ४ ॥ ततः पुष्यात् ध्रुवसन्धिः । ततः सुदर्शनः । ततः अग्निवर्णः । ततः शीघ्रः । तस्य शीघ्रस्य । तस्येत्यावृत्त्या योज्यम् ॥ ५ ॥ यो मरुः । असावित्युक्तिस्त्वधुनापि तत्सत्त्वात् कलापग्रामो बदरिकाश्रमे ऋषिग्रामः ॥ ६ ॥ तस्मान्मरोः । तस्य प्रसुश्रुतस्य ।तस्यापि संधेरपि । तत्सुतोऽमर्षणसुतः । तस्मान्महस्वतः ॥ ७ ॥ ततो विश्वसाह्वात् । तस्मात्प्रसेनजितः । ततस्तक्षकात् । यो

एते हीक्ष्वाकुभूपाला अतीताः शृण्वनागतान् ॥ बृहद्बलस्य भविता पुत्रो नाम बृहद्रणः ॥ ९॥ उरुक्रियस्ततस्तस्य वत्सवृद्धो भविष्यति ॥ प्रति व्योमस्ततो भानुर्दिवाको वाहिनीपतिः ॥ १० ॥ सहदेवस्ततो वीरो बृहदश्वोऽथ भानुमान् ॥ प्रतीकाश्वो भानुमतः सुप्रतीकोऽथ तत्सुतः॥११॥ भविता मरुदेवोऽथ सुनक्षत्रोऽथ पुष्करः ॥ तस्यांतरिक्षस्तत्पुत्रः सुतपास्तदमित्रजित् ॥१२॥ बृहद्राजस्तु तस्यापि बर्हिस्तस्मात्कृतंजयः ॥ रणं जयस्तस्य सुतः संजयो भविता ततः ॥ १३ ॥ तस्माच्छाक्योऽथ शुद्धोदो लांगलस्तत्सुतः स्मृतः ॥ ततः प्रसेनजित्तस्मात्क्षुद्रको भविता ततः ॥ १४ ॥ रणको भविता तस्मात्सुरथस्तनयस्ततः ॥ सुमित्रो नाम निष्ठांत एते बार्हद्बलान्वयाः ॥ १५ ॥ इक्ष्वाकूणामयं वंशः सुमित्रांतो भविष्यति ॥ यतस्तं प्राप्य राजानं संस्थां प्राप्स्यति वै कलौ ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कन्धे इक्ष्वाकुवंशवर्णनं नाम द्वादशोऽध्यायः ॥ १२ ॥ श्रीशुक उवाच ॥ निमिरिक्ष्वाकुतनयो वसिष्ठमवृतर्त्विजम् ॥ आरभ्य सत्रं सोऽप्याह शक्रेण प्राग् वृतोऽस्मि भोः ॥ १ ॥ तं निर्वर्त्यागमिष्यामि तावन्मां प्रतिपालय ॥ तूष्णीमासीद्गृहपतिः सोपींद्रस्याकरोन्मखम् ॥ २ ॥

न्युना ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ तत्तस्मादमित्रजित् ॥ १२ ॥ १३ ॥ १४ ॥ निष्ठा वंशस्य स्थितिस्तस्या अंतः ॥ १५ ॥ तदेवाह । इक्ष्वाकूणामिति ॥ १६ ॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे टीकायां द्वादशोऽध्यायः ॥१२॥ इक्ष्वाकोरेव पुत्रस्य निमेर्वंशस्त्रयोदशे ॥ वर्ण्यते जज्ञिरे यत्र ब्रह्मज्ञा जनकादयः ॥ १ ॥ निमेरौरसः पुत्रो नाभूदिति दर्शयन्कथामाह निमिरित्येकादशभिः । सत्रमारभ्य वशिष्ठमृत्विजमवृत वव्रे ॥ १ ॥ तं शक्रस्य मखं निर्वर्त्य प्रतिपालय

बृहद्बलः । ते पित्राऽभिमन्युना । समरे महाभारतयुद्धे॥ ८॥ अनागतान्भविष्यतः ॥९॥ ततो बृहद्रणात्। तस्योरुक्रियस्य । ततो वत्सवृद्धात्। पुनस्ततः प्रतिव्योमात्। पुनर्भानोः पुनर्दिवाकात्॥ १०॥ ततो वाहिनीपतेः पुनः सहदेवात्। पुनर्वीरात् । अथ बृहदश्वात् । पुनर्भानुमतः । तत्सुतः सुप्रतीकसुतः । परेणान्वेत्ययम्॥ ११ ॥ अथ मरुदेवात् । अथ सुनक्षत्रात् । तस्य पुष्करस्य । तत्पुत्रोऽन्तरिक्षपुत्रः । तत्तस्मात्सुतपसः॥ १२ ॥ तस्याप्यमित्रजितोऽपि । तस्माद्बर्हिषः । तस्य जयस्य । ततो रणंजयात्॥ १३ ॥ तस्मात्संजयात् । अथ शाक्यात् । तत्सुतः शुद्धोदसुतः । ततो लांगलात् । तस्मात्प्रसेनजितः । तत इति परेणान्वेति क्षुद्रकादित्यर्थः ॥ १४ ॥ तस्मात् रणकात् । ततः सुरथात् । अंतो वंशावधिभूतः । बृहद्बलस्यान्वयो वंशः तत्र भवा बार्हद्बलान्वयाः॥ १५॥ तदेव वंशावसानमेव । अयं बुद्धिसन्निहितः सुमित्रोंतेऽवसाने यस्य स तथा । यतो यस्मात् । तं सुमित्रम्। संस्थां समाप्तिम् "संस्थाव्यवस्थाप्रणधिसमाप्त्याचारमंत्रिषु" इति हलायुधः॥ १६॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे द्वादशोऽध्यायः ॥ १२॥ वंशावसानमुक्त्वा पुनस्तस्य कथनं ज्ञातित्वेन अनौरसत्वेन वैलक्षण्यार्थमित्याह–इक्ष्वाकोरेवेति । तदेवाह–यत्र निमिवंशे । ब्रह्मज्ञा जीवन्मुक्ताः(१) । ऋत्विजं यज्ञकर्तारम् । सत्रं यागम् । सोऽपि वशिष्ठोऽपि। प्राक् तव यज्ञार्थवरणतः पूर्वम् । भो निमे॥ १॥ निर्वर्त्य समाप्य । "गृहं

निमिश्चलमिदं विद्वान् सत्रमारभतात्मवान् ॥ ऋत्विग्भिरपरैस्तावन्नागमद्यावता गुरुः॥३॥शिष्यव्यतिक्रमं वीक्ष्य निर्वर्त्य गुरुरागतः ॥ अशप त्पततादेहो निमेः पंडितमानिनः ॥ ४ ॥ निमिः प्रतिददौ शापं गुरवेऽधर्मवर्तिने ॥ तवापि पततादेहो लोभाद्धर्ममजानतः ॥ ५ ॥ इत्युत्ससर्ज स्वं देहं निमिरध्यात्मकोविदः ॥ मित्रावरुणयोर्जज्ञे उर्वश्यां प्रपितामहः ॥ ६ ॥ गंधवस्तुषु तद्देहं निधाय मुनिसत्तमाः ॥ समाप्ते सत्रयागेऽथ देवानूचुः समागतान् ॥७॥ राज्ञो जीवतु देहोऽयं प्रसन्नाः प्रभवो यदि ॥ तथेत्युक्ते निमिः प्राह माभून्मे देहबन्धनम् ॥८॥यस्य योगं न वांछंति वियोगभयकातराः॥भजंति चरणांभोजं मुनयो हरिमेधसः ॥९॥ देहं नावरुरुत्सेऽहं दुःखशोकभयावहम् ॥ सर्वत्रास्य यतो मृत्युर्मत्स्यानामुदके यथा ॥ १० ॥ देवा ऊचुः ॥ विदेह उष्यतां कामं लोचनेषु शरीरिणाम् ॥ उन्मेषणनिमेषाभ्यां लक्षितोऽध्यात्मसंस्थितः ॥११॥ अराजकभयं नृणां मन्यमाना महर्षयः ॥ देहं ममंथुः स्म निमेः कुमारः समजायत ॥ १२ ॥ जन्मना जनकः सोऽभूद्वैदेहस्तु विदेहजः॥मिथिलो मथनाज्जातो मिथिला येन निर्मिता ॥ १३ ॥

प्रतीक्षस्वेति । गृहपतिर्निमिः ॥२॥ इदं जीवित चलमस्थिरं विद्वान् ॥ ३॥ इंद्रस्य मखं निर्वर्त्यागतो गुरुः शिष्यस्य व्यतिक्रममन्यायं वीक्ष्य निमेर्देहः पतत्वित्यशपत् ॥ ॥ ४ ॥ ५ ॥ उर्वशीदर्शनात्स्कन्नं रेतस्ताभ्यां कुंभे निषिक्तं तस्मात्प्रपितामहो वशिष्ठो जज्ञे । तदाह । मित्रावरुणयोरिति । तथा च श्रुतिः । "कुंभे रेतः सिषिचतुः समानम्" इति॥ ६ ॥ ७ ॥ यदि प्रसन्नाः प्रभवः समर्थाश्चेत्तर्हि जीवत्वित्यूचुः ॥ ८ ॥ यस्य देहस्य योगं न वांछंत्यपि तु मोक्षायैव भजंति ॥९ ॥ १० ॥ निर्मिर्विदेह एव सन्नुष्यतां वसतु कामं यथेच्छम् । एवं सति युष्माभिः प्रार्थितं जीवितमस्य भविष्यति न च देहबन्ध इति भावः ।स चाध्यात्मसंस्थितो लोचनयोः स्थितः सन्नुन्मेषणनिमेषाभ्यां तत्प्रवर्तकत्वेन लक्षितो वर्तत इति शेषः॥११॥तदेवं मृतादपि निमेर्देहाद्वंशप्रवृत्तिं दर्शयति । अराजकभयमिति॥१२॥तस्यान्वर्थानि त्रीणि नामान्याह । जन्मनाऽ

यज्ञे सद्मनि च देहे स्वीकृतवस्तुनि । भूमंडलेऽपि " इति निरुक्तिः । सोऽपि वशिष्ठोऽपि ॥ २ ॥ आत्मवान् विवेकी स्वतंत्रो वा । यावता कालेन । अपरैर्वशिष्ठेतरैः ॥ ३ ॥ पंडितमानिनः मूर्खस्य ॥ ४ ॥ अधर्मवर्त्तिने लोभिने । तदेवाह -लोभादिति ॥ ५ ॥ मित्रावरुणसंभवत्वे प्रमाणमाह—तथा चेति । उर्वशीदर्शनस्कन्नस्य मित्रावरुणौ रेतसस्सेकं कुंभे चक्रतुः । समानं समकालम् ॥ ६ ॥ तस्य निमेर्देहम् । गंधवस्तुषु गंधवासितहरिद्रादियुततैलेषु ॥ ७ ॥ देवैस्तथेत्युक्ते ॥ ८ ॥ यस्य देहस्य । हरिस्सूर्यस्तद्वत्प्रकाशमाना मेधा बुद्धिर्यस्य तस्य विष्णोः । यद्वा—हरिर्भक्तजनतापहरणशीला मेधा धारणावती धीरिते मया पापान्मोचनीया इत्येवंरूपा यस्य तस्य ॥ ९ ॥ नावरुरुत्से स्वीकर्त्तुं नेच्छामि दुःखं तीव्रवेदना । शोक इष्टवियोगजः क्लेशः । भयं संचलनम् । इतोऽपि देहं नेच्छामीत्याह—सर्वत्रेति । जले महाजलचरात्स्थले वासायोग्यत्वाच्च ॥ १० ॥ निरधिष्ठानवासोऽस्य कथं संभवेत्तत्राह-लोचनेष्विति । एवं सति लोचनयोर्वासे सति । इति भाव इति । उभयोर्मनोरथः संपद्यत इत्याशयः । कथमस्य सद्भावो ज्ञेय इत्यत्राह उन्मेषेति । स च निमिः । लोचनशब्दोक्तचक्षुरिन्द्रियस्याध्यात्मत्वात्तत्र वासेनाधिभूतदेहसंबंधो न संभवतीति भावः । "चक्षुराध्यात्ममुच्यते । अधिभूतं ततो रूपं सूर्यस्तत्राधिदैवतम्" इति महाभारतोक्तेः । परंपरासंबंधस्य गौणसंबंधस्वान्मुख्यसंबंधाभाव एव तदभिप्रेत इति ध्येयमत्रेति ॥ ११ ॥ वेनात्पृथुवंशवद्वंशप्रवृत्तिमाह—तदेवमिति ॥ १२ ॥ तस्य मृतदेहोद्भूतकुमारस्य । अन्वर्थानि यथार्थानि असाधारणेनान्यत्राविद्यमानेन ।

तस्मादुदावसस्तस्य पुत्रोऽभून्नंदिवर्धनः ॥ ततः सुकेतुस्तस्यापि देवरातो महीपते ॥१४॥ तस्माद्बृहद्रथस्तस्य महावीर्यः सुधृत्पिता ॥ सुधृतेर्धृष्टकेतुर्वै हर्यश्वोऽथ मरुस्ततः॥१५॥ मरोः प्रतीपकस्तस्माज्जातः कृतिरथो यतः ॥ देवमीढस्तस्य सुतो विश्रुतोऽथ महाधृतिः ॥१६॥ कृतिरातस्ततस्तस्मान्महारोमाथ तत्सुतः ॥ स्वर्णरोमा सुतस्तस्य ह्रस्वरोमा व्यजायत ॥ १७ ॥ ततः सीरध्वजो जज्ञे यज्ञार्थं कर्षतो महीम् ॥ सीता सीराग्रतो जाता तस्मात्सीरध्वजः स्मृतः ॥१८॥ कुशध्वजस्तस्य पुत्रस्ततो धर्मध्वजो नृपः॥ धर्मध्वजस्य द्वौ पुत्रौ कृतध्वजमितध्वजौ ॥ १९॥ कृतध्वजात्केशिध्वजः खांडिक्यस्तु मितध्वजात्॥ कृतध्वजसुतो राजन्नात्मविद्याविशारदः॥२०॥ खांडिक्यः कर्मतत्त्वज्ञो भीतः केशिध्वजाद् द्रुतः॥ भानुमांस्तस्य पुत्रोऽभूच्छतद्युम्नस्तु तत्सुतः॥२१॥ शुचिस्तत्तनयस्तस्मात्सनद्वाजस्ततोऽभवत् ॥ ऊर्ध्वकेतुः सनद्वाजादजोऽथ पुरुजित्सुतः॥२२॥

साधारणेन । जन एव जनकः । यद्वा स्वदेहद्वारा जनकत्वात्स निमिर्जनकोऽभूदित्यर्थः । मिथिला येन निर्मिता इत्यनेन व्युत्पत्त्यंतरमथार्दुक्रम्॥१३॥१४॥ सुधृत सुधृतिस्तस्य पिता ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ तस्य केशिध्वजस्य भानुमान् ॥ २१ ॥ २२ ॥

स्वार्थिककप्रत्ययेन जनक इति । असाधारणत्वं तु तत्र नास्ति पृथुराज्ञि तद्दर्शनादत आह–यद्वेति । इत्यर्थ इति । 'जनयतीति जनकः' इति निरुक्तेः । स्वयमेव देहं द्वारीकृत्याध्यात्मसंस्थितत्वात्कुमारं जनयामासेति भावः । अत्राध्यात्मसंस्थित इत्यनुवृत्त्य तस्य च योगसंस्थित इति व्याख्या कार्येति । मथनेन भवनं यस्येति मिथिलो निपातनात् । शवानां शयनं यत्रेति श्मशानमितिवत् । यद्वा–मिथिला पूरिति निर्मेयाऽस्येति मिथिलः अर्शआदित्वादच् । इत्यभिप्रेत्यैव स्वामिचरणैरुक्तम्–इत्यनेन व्युत्पत्त्यंतरमित्यादि ॥१३॥तस्मान्मिथिलात् । तस्योदावसोः । ततो नंदिवर्द्धनात् । तस्यापि सुकेतोरपि ॥१४॥ तस्माद्देवरातात् । तस्य बृहद्रथस्य महावीर्यः स एव सुधृत्पिता सुधृतेः पितेत्यर्थः । सुधृच्छब्दस्तान्त इदंतश्चेत्याह–सुधृतेरिति । अथ धृष्टकेतोः । ततो हर्यश्वात्॥१५॥तस्मात्प्रतीपकात् । 'कृतरथः' इत्यपि पाठः । यतः कृतिरथात् । तस्य देवमीढस्य । अथ विश्रुतात्॥१६॥ ततो महाधृतेः । तस्मात्कृतिरातात् । अथानंतरम् । तत्सुतो महारोमसुतः । तस्य स्वर्णरोमा ॥१७॥ततो ह्रस्वरोम्णः । सीरो हलं तदेव ध्वजः कीर्तिव्यंजको यस्य स सीरध्वजः । तस्मात्सीराग्रतः सीताख्यकन्योपलब्धिरूपध्वजाद्गमकात् । 'ध्वज–गतौ' इति धातुः । ननु तत्र कर्षणभूमौ कन्या कुतः समागतेति चेदत्राद्भुतरामायणीयोपाख्यानात्तज्जानीहि तच्चेत्थम्–[ कदाचित्सर्वदिग्विजयं कृत्वा रावणः सभागतान्सप्तर्षीनाह भवतो विना सर्वे देवासुरादयः मां करं ददति यूयं तं कथं न दत्थ त ऊचुरकिंचना वयं किं दास्यामस्तच्छ्रुत्वा स आह । यद्येवं तर्हि स्वरुधिरं दत्त तच्छ्रुत्वा ते तन्नाशार्थं स्वरुधिरं गात्रेभ्यो निःस्राव्य पात्रे कृत्वा तस्मै ददुः स च तत्पात्रं पृच्छंत्याः किमिदमिति मंदोदर्याः समक्षं तस्या अप्रदर्श्यैवैकांते भूदेशे निखाय्वा स्थापितम् । रावणे कचिद्गते स्त्रीस्वात् सा च तत्पात्रमुद्धृत्य विधिवशात्तत्रत्यं रुधिरं पपौ । तेन तस्याः कन्यागर्भो बभूव । तं दृष्ट्वा रावणभीता राक्षसविद्याबलात्कुरुक्षेत्रदेशमागत्य गर्भात्कन्यां निस्सार्य पात्रे कृत्वा भूमौ तत्संस्थाप्य लंकामाययौ । तत्रैव यज्ञार्थं काकतालीयन्यायेन ह्रस्वरोमनाम्ना मिथिलेशेन भूमिं कर्षता सा लब्धा सीराग्रतो लब्धत्वात्तस्याः सीतेति नामकृतम् ] 'सीता लांगलपद्धतिः' इति कोशादिति संक्षेपः॥१८॥तस्य सीरध्वजस्य । ततः कुशध्वजात्॥१९॥इहात्मविशारद इति । खांडिक्यस्य तदभावप्रदर्शनार्थमुक्तम् । वस्तुतः सर्वेषां मैथिलानामात्मविशारदत्वस्याध्यायांतिमपद्ये कथनात्॥२०॥ केशिध्वजाद्भीतस्त्रस्तः । कारणांतरे तेन जितो गतः पलायितः । 'द्रुतः' इत्यपि पाठः । तत्सुतो भानुमत्सुतः ॥२१॥ तत्तनयः शतद्युम्नपुत्रः ततस्तदनंतरम् । तस्माच्छुचेः । अथोर्द्ध्व

अरिष्टनेमिस्तस्यापि श्रुतायुस्तत्सुपार्श्वकः॥ततश्चित्ररथो यस्य क्षेमधिर्मिथिलाधिपः॥२३॥तस्मात्समरथस्तस्य सुतः सत्यरथस्ततः॥आसीदुपगु रुस्तस्मादुपगुप्तोऽग्निसंभवः ॥ २४ ॥ वस्वनंतोऽथ तत्पुत्रो युयुधो यत्सुभाषणः ॥ श्रुतस्ततो जयस्तस्माद्विजयोऽस्मादृतः सुतः ॥२५॥ शुनक स्तत्सुतो जज्ञे वीतहव्यो धृतिस्ततः॥ बहुलाश्वो धृतेस्तस्य कृतिरस्य महावशी ॥२६॥ एते वै मैथिला राजन्नात्मविद्याविशारदाः ॥ योगेश्वर प्रसादेन द्वंद्वैर्मुक्ता गृहेष्वपि॥२७॥ इति श्रीमद्भागवते महापुराणे नवमस्कंधे निमिवंशानुवर्णनं नाम त्रयोदशोऽध्यायः ॥१३॥ श्रीशुक उवाच ॥ अथातः श्रूयतां राजन् वंशः सोमस्य पावनः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यंते पुण्यकीर्तयः॥१॥सहस्रशिरसः पुंसो नाभिह्रदसरोरुहात् ॥ जात स्यासीत्सुतो धातुरत्रिः पितृसमो गुणैः ॥२॥ तस्य दृग्भ्योऽभवत्पुत्रः सोमोऽमृतमयः किल ॥ विप्रौषध्युडुगणानां ब्रह्मणा कल्पितः पतिः॥३॥

तत्तस्मात्सुपार्श्वकः ॥ २३ ॥अग्निसंभवोऽग्नेरंशात्संभूतः ॥२४ ॥ यद्यस्मात्सुभाषणः ॥ २५ ॥ २६ ॥ योगेश्वरा याज्ञवल्क्यादयस्तेषां प्रसादेन ॥ २७ ॥ इति श्रीमद्भागवते नवमस्कंधे टीकायां त्रयोदशोऽध्यायः ॥ १३ ॥ चतुर्दशादिभिः सोमवंशमाहासमाप्तितः ॥ यस्मिन्नैलादयो भूपाः कीर्त्यंते पुण्यकीर्तयः ॥ १ ॥ चतुर्दशे गुरोः पत्न्यां तारायां सोमजाद् बुधात् ॥ जातश्चैलः षडुर्वश्यामायुर्मुख्याजीनजनत् ॥ २ ॥ १ ॥ २ ॥ दृग्भ्यः आनंदाश्रुभ्यः अत एवामृतमयः । किलेत्याश्चर्ये । पाठांतरे दृशो नेत्रात् । वक्ष्यमाणदर्पकारणमाह । विप्रेति ॥ ३ ॥

केतोः ॥ २२॥ तस्यापि पुरुजितोपि ! पुनस्तस्य श्रुतायुः । तस्माच्छ्रुतायुषः । ततः सुपार्श्वकात् । यस्य चित्ररथस्य ॥२३॥ तस्मात् क्षेमधियः । तस्य समरथस्य । ततस्सत्यरथात् । तस्मादुपगुरोः ॥२४ ॥ अथोपगु प्तात् । तत्पुत्रः वस्वनंतपुत्रः । यस्माद्युयुधात् । ततः सुभाषणात् । तस्माच्छ्रुतात् । पुनस्तस्माज्जयात् । अस्माद्विजयात् ॥२५॥तत्सुतः ऋतसुतः । पूर्वश्लोके क्वचित् 'विजयोऽस्मात्ततः सुतः' इत्यपि पाठः । तत्र चेत्थं ज्ञेयम् । अस्माज्जयाद्विजयः ततो विजयात्सुतः शुनकः । तत्सुतः शुनकसुतः । ततो वीतहव्यात् । तस्य बहुलाश्वस्य । अस्य कृतेः ॥ २६ ॥ एते मिथिलप्रभृतयः खांडिक्यं विना । आदिना पंचशिखासूर्यादिग्रहः।द्वंद्वै रागद्वेषादिभिः । गृहेष्वपि गृहस्था अपि मुक्ता आत्मारामा इत्यर्थः ॥ २७ ॥ इति श्रीमद्भागवतभावार्थदीपिकाप्रकाशे नवमस्कन्धे त्रयोदशोऽध्यायः ॥ १३ ॥ आसमाप्तितः स्कन्धसमाप्तिपर्यंतम् । यस्मिन्सो मवंशे ( १ )। गुरोर्बृहस्पतेः । ऐलः पुरूरवाः । षट् पुत्रान् ( २ ) । अथात इति । अथ सूर्यवंशकथनानंतरम् । यतः वंशकथनं पुरुषार्थसाधनमतो हेतोरित्यर्थः । ज्ञानं पुरुषार्थसाधनं सर्वत्र श्रूयते कथं वंशश्रवणं तद्भवेदिति चेदाह--पावन इति अंतःकरणशुद्धिकरः । तत्र हेतुः--यस्मिन्निति । पुण्यकीर्त्तिनरयशःश्रवणस्य पुरुषार्थत्वं तु शौनकादिप्रश्नतोऽवसीयते तथाहि--"तत्कथ्यतां महाभाग यदि कृष्णकथा श्रयम् । अथ वास्य पदांभोजमकरंदलिहां सताम् ॥ किमन्यैरसदालापैरायुषो यदसद्व्ययः" इति ॥ १ ॥ सर्वमूलकारणीभूतहरिरेवास्य मुख्यादिपुरुष इति स्मारयति- सहस्रशिरस इति । "सहस्रशीर्षा पुरुषः" इत्यादि श्रुतिप्रतिपादितस्य पुंसः पुरुषस्य । पितृसमो ब्रह्मणा तुल्यः । गुणैः तपःप्रभावादिभिः ॥ २ ॥ तस्य अत्रेः । अत एवानंदाश्रुजलोद्भूतत्वादेव । अमृतस्वरूपः अमृतं जलं सुधास्वीकारे तु क्षयो न भवेत् । यद्वा--

श्रीशुक उवाच ॥ इत्यादिश्याऽमरगणान्प्रजापतिपतिर्विभुः ॥ आश्वास्य च महीं गीर्भिः स्वधाम परमं ययौ ॥ २६ ॥ शूरसेनो यदुपतिर्मथुरामावसन्पुरीम् ॥ माथुराञ्छूरसेनांश्च विषयान्बुभुजे पुरा ॥ २७ ॥ राजधानी ततः साऽभूत्सर्वयादवभूभुजाम् ॥ मथुरा भगवान्यत्र नित्यं सन्निहितो हरिः ॥ २८ ॥

॥ २६ ॥ भोजेंद्रबंधनागारेऽवताराय प्रस्तावकथामाह । शूरसेन इत्यादिना यावदध्यायसमाप्ति । मथुरामावसन् मथुरायां वसन् । विषयान्देशान् ॥ २७ ॥ २८ ॥

केतेषु बहुनामा बभूव ह" तदुक्तं स्वयमेव मायया । "वैवस्वतेंतरे प्राप्ते अष्टाविंशतिमे युगे । नंदगोपगृहे जाता यशोदागर्भसंभवा ॥ ततस्तौ नाशयिष्यामि विंध्याचलनिवासिनी" इति । तथा रासलीलासि द्ध्यर्थं भगवत्प्रेयसीनां पतिपश्वादिमोहनं योगमायाया एव कार्यं न तु मायायास्तेषां भगवद्वैमुख्यादर्शनात् । मायामोहितत्वे तद्वैमुख्यस्यावश्यंभावात् । 'योगमायामुपाश्रितः' इति तत्रोक्तेश्च । दुर्योधनादिशाल्वाद्यसुरेषु विश्वरूपगरुडवाहनादित्वदर्शिष्वपि नायमीश्वरः किं तु धृष्टो यादव इति मोहनं माययैव न तु योगमाययेति तेषां भगवद्वैमुख्यदर्शनात् । एवं तत्तत्स्थले भगवदभिमुखविमुखमोहनं योगमायातदंशीभूतमायाकृतमूह्यम् । यत्तु वात्सल्यादिमहाप्रेमवतां यशोदानंदादीनाम् । विश्वरूपवरुणलोकादिदर्शनांते वात्सल्याधिक्यैश्वर्यज्ञानेप्यसंभ्रमादेवैश्वर्याननुसंधानलक्षणं मोहनं तन्न योगमायाया नापि मायायाः किं तु प्रेम्ण एव स स्वभाव इति "वैष्णवीं व्यतनोन्मायां पुत्रस्नेहमयीं विभुः" इति तु मोहसाधर्म्यात्तत्र मायाशब्दप्रयोग इति ॥ २५ ॥ प्रजापतीनां मरीच्यादीनां पतिर्ब्रह्मा गीर्भिः गीयन्त इति ग्यः गायतेः क्विपीत्वम् "गीर्वाणी च सुरा पत्नी गी रम्या गीः सुधाभिधा" इति सौभरिः । ईर्य्यन्त उच्चार्य्यन्त इतीरः । "ईर्वाक् प्रोक्ता तथेरा च भूमौ मद्ये शुभे स्त्रियाम्" इति द्विरूपकोशः । तथा च ग्यो रम्याश्च ता ईरो वाचो गीरस्ताभिः रम्यवाग्भिः । आश्वास्य सांत्वयित्वा । परमं ब्रह्मांडांतर्वर्त्तिसर्वलोकेभ्यो भूरादिभ्य उत्कृष्टं परतमं परं मा यस्मात्तदिति व्युत्पत्तेः ॥ २६ ॥ शूरसेनः कार्तवीर्यसुतः "तस्य पुत्रसहस्रेषु पंचैवोर्वरिता मृधे । जयध्वजः शूरसेनो वृषभो मधुरूर्जितः" इति नवमस्कंधोक्तेः । मथुरां मथुरायाम् "उपान्वध्याङ्वसः" इत्याधारस्य कर्मत्वाद्द्वितीया । मथुरायाः प्रांते माथुरास्तान् । शूरसेनेनाधिष्ठिताः शूरसेनास्तान् । श्रीवाल्मीकीये तु शत्रुघ्नकृतलवणवधोत्तरं वरदानार्थमागतदेवेभ्यः शत्रुघ्न इमं वरं वव्रे । "इयं मधुपुरी रम्या मथुरा देवनिर्मिता । निवेशं प्राप्नुयाच्छीघ्रमेष मेऽस्तु वरः परः ॥ तं देवाः प्रीतमनसो बाढमित्येव राघव । भविष्यति पुरी रम्या शूरसेना न संशयः॥" किञ्च–"स पुरा दिव्यसंकाशो वर्षे द्वादशमे शुभे । निविष्टः शूरसेनानां विषयश्चाकुतोभयः" इति तथा च । शूरा सेना यस्यां शूरस्य शत्रुघ्नस्य वा सेना यस्यां सा शूरसेना मथुरैवेति ज्ञायते । तत्प्रान्तदेशश्च तेनैव निवेशितः शूरसेनसंज्ञोऽभूदिति । विषयान्देशान् "नीवृज्जनपदो देशो विषयस्तूपवर्तनम्" इत्यमरः ॥ २७ ॥ ततः शूरसेनमारभ्येत्यर्थः । राजधानी "राज्ञो नित्यं यत्र वासो राजधानी तु सा पुरी" इत्यभिधानात् । यद्वा "राज्ञां प्रधाननगरं राजधानीति कथ्यते" इति शब्दार्णवः । "मथ्यते तु जगत्सर्वं ब्रह्मज्ञानेन येन वा । तत्सारभूतं यद्यस्यां मथुरा सा निगद्यते॥" इति तापनीयश्रुतेः । "मथुरायां स्थितिर्ब्रह्मन्सर्वदा मे भविष्यति । मथुरायां विशेषेण मां ध्यायन्मोक्षमश्नुते" इति स्मृतेश्च । यत्र मथुरायां संनिहितः स्थितः । 'नित्यं संनिहितः' इत्यनेन स्वयं भगवान्परिपूर्णः कृष्णस्तत्र स्वधामनि सदा वर्त्तमान एवाविर्भूय प्रपंचगोचरीभवति न तु कुतश्चिद्वैकुंठादिभ्य आगत्यावतरतीति व्यंजितम् । किं च तदाविर्भावसमये वैकुंठश्वेतद्वीपादिभ्यस्तदंशा आगत्य तत्र मिलिता भवंति लीलांते पुनस्तत्रतत्र यान्तीति तेषामेव वैकुंठादिभ्योऽवतरणं चेति प्रसिद्धिर्ज्ञेया "परावरेशो महदंशयुक्तो ह्यजोपि जातो भगवान्यथाग्निः" इत्यादिषु तृतीये तथा व्याख्यानात् । इति विश्वनाथः । श्रीसनातनगोस्वामी तु नित्यं कालादिदोषेणान्यत्रेवांतर्द्धानं निरस्तम् । अस्याश्च नित्यत्वं पाद्मनिर्वाणखंडे । "अहो न जानंति नरा दुराशयाः पुरीं मदीयां परमां सनातनीम् । सुरेंद्रनागेंद्रमुनींद्रसंस्तुतां मनोरमां तां मथुरां पराकृतिम्" इति

तस्यां तु कर्हिचिच्छौरिर्वसुदेवः कृतोद्वहः ॥ देवक्या सूर्यया सार्धं प्रयाणे रथमारुहत् ॥ २९ ॥ उग्रसेनसुतः कंसः स्वसुः प्रियचिकीर्षया ॥ रश्मीन्हयानां जग्राह रौक्मै रथशतैर्वृतः ॥ ३० ॥ चतुःशतं पारिबर्हं गजानां हेममालिनाम् ॥ अश्वानामयुतं सार्धं रथानां च त्रिषट्शतम् ॥ ३१ ॥ दासीनां सुकुमारीणां द्वे शते समलंकृते ॥ दुहित्रे देवकः प्रादाद्याने दुहितृवत्सलः ॥ ३२ ॥ शंखतूर्यमृदंगाश्च नेदुर्दुंदुभयः समम् ॥ प्रयाणप्रक्रमे तावद्वरवध्वोः सुमंगलम् ॥ ३३ ॥ पथि प्रग्रहिणं कंसमाभाष्याऽऽहाऽशरीरवाक् ॥ अस्यास्त्वामष्टमो गर्भो हंता यां वहसेऽबुध ॥ ३४ ॥ इत्युक्तः स खलः पापो भोजानां कुलपांसनः ॥ भगिनीं हंतुमारब्धः खड्गपाणिः कचेऽग्रहीत् ॥ ३५ ॥ तं जुगुप्सितकर्माणं नृशंसं निरपत्रपम् ॥ वसुदेवो महाभाग उवाच परिसांत्वयन् ॥ ३६ ॥

सूर्यया नवोढया । प्रयाणे प्रयाणार्थम् ॥ २९ ॥ रश्मीन्प्रग्रहान् ॥ ३० ॥ पारिबर्हमुपस्करम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ आभाष्य रेरे कंसेति संबोध्य हंता हनिष्यति ॥ ३४ ॥ कुलपांसनः कुलदूषणः आरब्ध उद्युक्तः कचे केशबंधे ॥ ३५ ॥ नृशंसं क्रूरम् । महाभाग इति । अयं भावः । स्वजन्मनि हर्षेण देवैरानकदुंदु

तापिन्यामपि तासां मध्ये साक्षाद्ब्रह्मगोपालपुरीहीति ॥ २८ ॥ सूर्य्यया "सूर्या स्यादौषधीभेदे सूर्यभार्यानवोढयोः" इति धरणिदेवः । तस्यां मथुरायाम् । कृतोद्वहः कृतविवाहः ॥ २९ ॥ रश्मीन्प्रग्रहान् "रश्मिः पुमान् दीधितौ च पक्षप्रग्रहयोरपि" इति मेदिनी । विवाहकाले रथरश्मिग्रहणमत्यंतबंधुना कार्यमिति दर्शनार्थं रश्मिग्रहणं कृतवानिति व्यजते । रौक्मैः सौवर्णैः । 'रुक्मं तु कांचने लोहे' इति मेदिनी ॥ ३० ॥ विवाहकाले दुहित्रे यद्दीयमानं राजयोग्यं धनं तत्पारिबर्हम् । "पारिबर्हो राजयोग्यदेयद्रव्यपरिच्छदे" इति मेदिनी । अयुतं दशसहस्राणि । "अयुतं दशसाहस्रे विविक्ते त्रिषु वैष्णवे" इति धरणिः । त्रयश्च षट् च त्रिषट् तानि शतानि यत्र पारिबर्हे स तथा तम् । यद्वा–त्रिगुणितानि षट् त्रिषट् तानि शतानि यत्रेति वा नवशतान्यष्टादशशतानि वेति ज्ञायते ॥३१॥ सुकुमारीणां मृद्वीनाम् 'सुकुमारो मृदौ त्रिषु' इति मेदिनी । देवकः कंसपितृव्यः । याने स्वगृहात्कन्यागमने ॥ ३२ ॥ प्रयाणप्रक्रमे गमनारंभे । तावदादौ । वरवध्वोः सुमंगलं यथा भवति तथा शंखाद्याः सममेकदैव नेदुः ॥ ३३ ॥ प्रग्रहो हयरश्मिः सोऽस्यास्तीति प्रग्रही तम् "प्रग्रहस्तु तुलासूत्रे वंद्यां नियमने भुजे । हयादिरश्मौ रश्मौ च सुवर्णालुमहीरुहे" इति मेदिनी । अस्या देवक्याः । "अशरीरं वा वसंतम्" इति श्रुतेरशरीरः परमात्मा तद्रूपा वाक् । यद्वाऽस्य वासुदेवस्य शरीरमशरीरं तत्संबंधिनी वाक् यद्वा । न लक्षितं शरीरं योगतपोभ्यां विना येषां तेऽशरीरा देवास्तेषां वागशरीरवाक् । पुत्र इति वक्तव्ये गर्भ इत्युक्तिस्तु कृष्णस्य सप्तमपुत्रत्वार्थाष्टमगर्भत्वार्थी ज्ञेयेति ॥ ३४ ॥ कुलं पंसति नाशयतीति कुलपांसनः 'पसि–नाशने' कर्त्तरि ल्युट् दीर्घो निपातनात् । पंसतीति पंसनः पंसन एव पांसनः कुलस्य पांसनः कुलपांसन इति वा । कुलं पांतीति कुलपा उग्रसेनादयस्तानंसति विभजत इतस्ततः करोतीति कुलपांसनस्तमिति वा । 'अंस–विभागे' अत एव । कुलदूषण इत्येवार्थः स्वामिचरणैः प्रकाशितः । 'कचः केशे गुरोः सुते' इति मेदिनी ॥ ३५ ॥ महाभागास्त्वन्येऽपि महान् भागो भाग्यं शुभाशुभं यस्येति व्युत्पत्तेः 'भागो भाग्यैकदेशयोः' इति रुद्रः । अत आह–इत्ययं भाव इति । यद्वा–स्वपत्नीवधे प्रवृत्तमपि दृष्ट्वा क्रोधानुदयान्महाभाग इति । ननु तादृशः क्रूरः कथं सांत्वयितव्यस्तत्राह–महाभाग इति । भाग्यवतः प्रातिकूल्यं तुं

वसुदेव उवाच ॥ श्लाघनीयगुणः शूरैर्भवान्भोजयशस्करः ॥ स कथं भगिनीं हन्यात्स्त्रियमुद्वाहपर्वणि ॥ ३७ ॥ मृत्युर्जन्मवतां वीर देहेन सह जायते ॥ अद्य वाऽब्दशतांते वा मृत्युर्वै प्राणिनां ध्रुवः ॥ ३८ ॥ देहे पंचत्वमापन्ने देही कर्मानुगोऽवशः ॥ देहांतरमनुप्राप्य प्राक्तनं त्यजते वपुः ॥ ॥ ३९ ॥ व्रजंस्तिष्ठन्पदैकेन यथैवैकेन गच्छति ॥ यथा तृणजलूकैवं देही कर्मगतिं गतः ॥ ४० ॥

भिध्वंनिकरणाद्धाविभगवदवतारेण शक्यप्रतीकारता संभवतीति । सांत्वयन् स्तुत्या कृपाविषयत्वेनोपपत्तिभिश्च साममार्गेण संबोधयन् ॥ ३६ ॥ श्लाघनीयाः स्तुत्या गुणा यस्य सः । भोजकुलस्य यशःसंपादकः । स्त्रियं तत्रापि भगिनीं तत्राप्युद्वाहपर्वणि ॥ ३७ ॥ ननु मरणभयान्निहन्मीति चेत्त तथापि मरणस्यापरिहरणीयत्वाद्देहांतरस्यावश्यं भावित्वात्तत्रापि च भोगप्रेमास्पदत्वादीनामविशेषान्मरणभयेन पापाचरणमयुक्तमित्यभिप्रेत्याह । मृत्युर्जन्मवतामित्यादिना । देहेन सहेति विधात्रा ललाटे लिखितत्वादिति । तत्रापि कालविलंबार्थं हन्मीति चेत्तत्राह । अद्य वेति । अवश्यंभाविनि मरणे विलंबमात्राय पापाचरणमयुक्तमिति भावः ॥ ३८ ॥ किं च । अस्मिन् देहे गते यदि देहांतरं न स्यात्तदा युज्येत पापेनापि तत्पालनम् । न तु तदस्तीत्याह । देहे पंचत्वमिति । आपन्ने आपन्नप्राये कर्मवशादयत्नत एव प्रथमं देहांतरं प्राप्य पश्चात् प्राक्तनं वपुः पूर्वदेहं त्यजतीत्यर्थः ॥ ३९ ॥ अत्र दृष्टांतः । व्रजन्निति यथा व्रजन्पुरुषः एकेन अग्रतो निहितेन पदा तिष्ठन्भुवमवष्टभ्य देहं बिभ्रत्पश्चादन्येन पूर्वप्रदेशादुत्थाप्य पुरोनिहितेन पदा गच्छति तद्वत् । अत्र च स्वीकारपरित्यागौ नात्यंतभिन्नविषयाविति स्पष्टम् । दृष्टांतांतरमाह । तथा तृणजलूकेति । सा हि यथा देहार्धेन

व्याघ्रादिरपि न करोतीति वा । स्वजन्मनि वसुदेवजन्मनि हेत्वादिभिः संभवदर्थप्रतिपादनमुपपत्तिः । सांत्वयन् साममार्गेण संबोधयन्प्रबोधयन् ॥ ३६ ॥ सामप्रकारमाह—"संबंधलाभाभेदाश्च गुणकीर्तनमेव च । उपकारश्च पंचैव सामभेदा इहोदिताः ॥" इति । श्लाघनीयेति । गुणकीर्त्तनं, भोजेति संबंधः भगिनीमित्यभेदः, स्वहंतृजनन्या अपि स्त्रिया अवधेन धार्मिकत्वयशोरूपलाभः, मम भार्यादानेनोपकारश्च । स्त्रियं तत्रापि भगिनीं तत्राप्युद्वाहपर्वणि तत्रापि भवान्महायशस्वीति हनने ऐहिकं दुर्यशोमुत्र नरकपातश्चेति दृष्टादृष्टलक्षणभेदोपि दर्शितः । वास्तवार्थस्तु—विपरीतलक्षणया श्लाघनीयेषु गुणः कोर्थः शून्यः 'गुणः शून्ये च शब्दादौ' इति कोशात् । भोजाः कलहप्रियाः प्रसिद्धास्तेषां यशः कलहाधिक्यम् । स कथं भगिनीं हन्यादपि तु सर्वं कुलमिति ॥ ३७ ॥ तत्रापि देहांतरेपि । अविशेषात्तुल्यत्वात् । तद्भयेन मरणभयेन । अयुक्तमनुचितम् । 'विधात्रा ललाटे' इति "लिखिता चित्रगुप्तेन ललाटेऽक्षरमालिका । आयुः कर्म च वित्तं च विद्या निधनमेव च ॥" इत्युक्तेः । यद्यपि 'जातस्य हि ध्रुवो मृत्युः' इत्याद्युक्तेर्मृत्युरप्रतीकार्य्यस्तथापीति तत्र कालविलंबे अवश्यंभाविनीति । "अवश्यं भाविभावानां प्रतीकारो यदा भवेत् । तदा दुःखैर्न युज्येरन्नलरामयुधिष्ठिराः ॥" इत्याद्युक्तेः । इति भाव इत्याशयः । हे वीरेति । त्वं मृत्योर्भेतुं नार्हसि । यद्वा—नहि वीराः स्त्रीषु प्रहरंतीति भावः ॥ ३८ ॥ अत्र विषयेऽन्यदप्याह—किंचेति । तत्पालनं देहपालनम् । तदस्तीति देहांतराभवोस्तीति । अवश इति कर्मानुगत्वात् । यद्वाऽवशो भगवद्वशः । त्यजत इत्यार्षमात्मनेपदम् ॥ ३९ ॥ अत्र पूर्वदेहपरित्यागदेहांतरस्वीकारे । व्रजन् गच्छन्नित्यर्थः । अवष्टभ्य गृहीत्वा । अत्र च भूमिदृष्टांते च । नात्यंतभिन्नविषयौ एकस्या एव पृथिव्या विषयत्वात् । जलूकेति षष्ठस्वरमध्यपाठोपीति । आहितसंस्कारेण स्थापितसंस्कारेण तदेव श्रुतदृष्ट

स्वप्ने यथा पश्यति देहमीदृशं मनोरथेनाऽभिनिविष्टचेतनः ॥ दृष्टश्रुताभ्यां मनसाऽनुचिंतयन्प्रपद्यते तत्किमपि ह्यपस्मृतिः ॥ ४१ ॥ यतोयतो धावति दैवचोदितं मनो विकारात्मकमाप पंचसु ॥ गुणेषु मायारचितेषु देह्यसौ प्रपद्यमानः सह तेन जायते ॥ ४२ ॥ ज्योतिर्यथैवोदकपार्थिवेष्वदः समीरवेगानुगतं विभाव्यते ॥ एवं स्वमायारचितेष्वसौ पुमान्गुणेषु रागानुगतो विमुह्यति ॥ ४३ ॥ तस्मान्न कस्यचिद्द्रोहमाचरेत्सतथाविधः ॥ आत्मनः क्षेममन्विच्छन्द्रोग्धुर्वै परतो भयम् ॥ ४४ ॥

तृणांतरमवष्टभ्य पूर्वं तृणं त्यजति एवं कर्मपथे वर्तमानो जीवोपि ॥ ४० ॥ देहविषयावेव स्वीकारपरित्यागौ दर्शयितुं दृष्टांतांतरमाह । स्वप्न इति । दृष्टं राजादिदर्शनं श्रुतमिंद्रादिश्रवणं ताभ्यामाहितसंस्कारेण मनसा तदेवानुचिंतयन् ईदृशं जाग्रद्दृष्टश्रुतसदृशं देहं राजादिरूपं किमप्यनिरुक्तं पश्यति क्षणांतरे च तदेवाहमिति प्रपद्यतेऽभिमन्यते ततश्च जाग्रद्देहादपगतस्मृतिर्भवति पुरुषो यथा तथेति । जाग्रत्येव तद्दर्शयितुं दृष्टांतांतरमाह । मनोरथेनेति । अत्रापि दृष्टश्रुताभ्यामित्यादि सर्वं योज्यम् । तथा च वक्ष्यति "जंतोर्वै कस्यचिद्धेतोर्मृत्युरत्यंतविस्मृतिः । जन्म त्वात्मतया पुंसः सर्वभावेन भूरिद ॥ विषयस्वीकृतिं प्राहुर्यथा स्वप्नमनोरथः । स्वप्नं मनोरथं चेत्थं प्राक्तनं न स्मरत्यसौ ॥" इत्यादि । तद्वदत्रापि कर्मवशाद्देहांतरं प्राप्य प्राक्तनं त्यजतीति ॥ ४१ ॥ ननु विचित्रदेहहेतूनां कर्मणां कृतत्वाद्देहविशेषप्राप्तौ किं कारणमत आह । यतोयत इति । देहस्य पंचत्वसमये पंचसु गुणेषु भूतेषु मायया नानादेहरूपेण रचितेषु दैवेन फलाभिमुखेन कर्मणा चोदितं प्रेरितं नानाविकारात्मकं मनो यतोयतो यंयं देहं देवतिर्यगादिरूपं प्रतिधावति धावच्च सत् यंयम् आप अभिनिवेशेन प्राप्तं तत्रतत्र असौ देही जायते । ननु मनसः कर्तृत्वात्तदेव जायतां न त्वकर्ताऽऽत्मेत्यत आह ।प्रपद्यमान इति । तदेवाहमिति मन्यमानस्तेन मनसा सह जायते॥ ४२॥ ननु सत्यं भविष्यत्येव किमपि देहमात्रं तथाप्यस्यातिप्रियस्य राजदेहस्य रक्षणायाकृत्यमपि क्रियत इति चेत्तत्राह। ज्योतिरिति। अदश्चंद्रादिज्योतिः उदकयुक्तेषु पार्थिवेषु घटादिषु यद्वा उदकेषु पार्थिवेषु तैलघृतादिषु प्रतिबिंबत्वेन स्थितं समीरस्य वायोर्वेगमनुगतं कंपादियुक्तं प्रतीयते यथा एवं स्वाविद्यारचितेषु गुणेषु देहेषु रागेणानुगतः प्रविष्टो मुह्यति अभिनिवेशं प्राप्नोति । आत्मनस्तावद्देहाद्यध्यासाज्जन्मोक्तं सह तेन जायत इति। ततश्चान्योन्यधर्माध्यासाद्यथा देहादिधर्माः कार्श्यादय आत्मनि प्रतीयंते एवमात्मधर्माः प्रेमास्पदत्वादयोपि देहादिष्विति राजसूकरदेहयोर्विशेषाभावाद्व्यर्थो मृत्युप्रतीकार इति भावः॥ ४ ३॥ एवमुक्तं सामोपायमुपसंहरन्भेदमाह—तस्मादिति । परतोऽ

ततश्चाहमिति मननाच्च । तद्वदत्रापीति । स्वप्नमनोरथवन्मरणावस्थायामपीति । प्राक्तनं पूर्वम् ॥ ४० ॥ ४१ ॥ कर्मणा देहमात्रप्राप्तिरवश्यं भाविन्यपि देहविशेषाप्तिः कथमित्याशंकते—नन्वित्यादिना । तत्र कारणमाह—यत इत्यादिना । पंचत्वसमये मृत्युकाले । चोदितं प्रेरितम् । यंयं देहं तत्रतत्र तस्मिंस्तस्मिन्देहे । देही जीवः "यंयं वापि स्मरन्भावं त्यजत्यंते कलेवरम् । तंतमेवैति कौन्तेय" इत्यादिस्मृतेः । जीवस्य जननमयुक्तमित्याह—नन्वित्यादिना । तदेव मन एव । मनोध्यासेनात्मनो जन्मेति भावः ॥ ४२॥ उदकेन युक्ताः पार्थिवा उदकपार्थिवा घटादयस्तेषु तथा घटादानामस्वच्छद्रव्यत्वात्प्रतिबिंबग्राहित्वं न संगच्छत इत्यरुच्याह—यद्वेति । एवं तद्वत् । अशोभने शोभनाध्यासो रागस्तेन उक्तार्थतात्पर्यमाह—अयं भाव इति । तावत्साकल्येन । ततश्चाध्यासाच्च । विशेषाभावाद्भेदाभावात् । प्रतीकारो निवृत्त्युपायः ॥ ४३ ॥ एवं पूर्वोक्तरीत्या । यस्मादात्मा कर्मफलभोक्ता

एषा तवानुजा बाला कृपणा पुत्रिकोपमा ॥ हंतुं नार्हसि कल्याणीमिमां त्वं दीनवत्सल ॥ ४५ ॥ श्रीशुक उवाच ॥ एवं स सामभिर्भेदैर्बोध्यमानोऽपि दारुणः ॥ न न्यवर्तत कौरव्य पुरुषादाननुव्रतः ॥ ४६ ॥ निर्बंधं तस्य तं ज्ञात्वा विचिंत्यानकदुंदुभिः ॥ प्राप्तं कालं प्रतिव्योढुमिदं तत्रान्वपद्यत ॥ ४७ ॥ मृत्युर्बुद्धिमताऽपोह्यो यावद्बुद्धिबलोदयम् ॥ यद्यसौ न निवर्तेत नापराधोऽस्ति देहिनः ॥ ४८ ॥ प्रदाय मृत्यवे पुत्रान्मोचये कृपणामिमाम् ॥ सुता मे यदि जायेरन्मृत्युर्वा न म्रियेत चेत् ॥ ४९ ॥ विपर्ययो वा किं न स्याद्गतिर्धातुर्दुरत्यया ॥ उपस्थितो निवर्तेत निवृत्तः पुनरापतेत् ॥ ५० ॥

भिद्रुह्यमाणात् । तत्संबंधिनश्च यमादपि इहामुत्र च भयमिति भेदो दर्शितः॥ ४४॥ पुनः सामाऽऽह–एषेति । पुत्रिकोपमा दारुमयीव अचेतनप्रायेत्यर्थः ॥ ४५॥ बोध्यमानः उपदिश्यमानः।स्वयं दारुणः पुनः पुरुषादान्दैत्याननुसृत इति॥ ४६॥ आनकदुंदुभिरिति पदं महाभाग इत्यत्रोक्ताभिप्रायम् । प्रतिव्योढुं प्रतिकर्तुं वंचयितुमित्यर्थः।इदं वक्ष्यमाणमपत्यार्पणमन्वपद्यत ज्ञातवान् ॥ ४७ ॥ ननु खलोयमेतदपि न मन्येतेत्याशंक्य स्वस्मिन्नेवाह–मृत्युरिति ॥ ४८ ॥ तस्मादुपेक्षादोषपरिहारायैवं करिष्यामीत्याह । प्रदायेति। मृत्यवेऽस्मै कंसाय । नन्विदमपि नैव न्याय्यमित्याशंक्याह–सुता इति । अस्यां यदि सुता मे जायेरंस्तदा यद्यपि तद्वत्तु जीवनं तु तावदस्या भवेदेव । तदंतरा यद्ययमेव म्रियेत तदा न किंचिदन्याय्यम् ॥ ४९ ॥ यदि च सुता भविष्यंति न चायं म्रियेत तदा मत्पुत्रादेवास्य मरणमिति विपर्ययो वा किं न स्यात् । ननु प्रौढस्य कंसस्य तव बालकात्कथं मृत्युः स्यात्तत्राह । गतिरिति । "अस्यास्त्वामष्टमो गर्भो हंता" इत्युक्तवतो धातुः । अत इदानीमपत्यार्पणप्रतिज्ञैव मंत्रः । तथा सति उपस्थितो

तस्मादिति । स आत्मा तथाविधः कर्मानुरूपदेहादिगृहीता । परतः परलोके वा भयं दुःखलक्षणम् । भेदस्तु ऐहिकपारलौकिकभयप्रदर्शने स्वीकृतहठान्निवर्त्तनम् । प्रत्युग्रे संस्तुतिसामैवोचितमिति पुनस्तदेवाह–एषेति । नवोढा कृपणा भयेन रोदनादिपरा पुत्रिकोपमा पुत्रीसमेति दयां जनयति । यद्वा–पुत्तलिकासदृशी अचेतना भद्राभद्रानभिज्ञा । इमामेनां कल्याणीं निरपराधां दीनवत्सल इति श्लेषेण दीनं मृतप्रायं वत्समेव लाति विप्रेभ्यो ददाति । यद्वा–दीनादपि वत्समपि लाति गृह्णातीति इमां त्वं हंतुं नार्हसि काकार्हस्येवेति निंदैव ॥ ४४ ॥ ४५ ॥ यज्ञादिकर्मकर्तृशुद्धकुरुवंशोद्भूतस्य तव तुल्यता तस्य नास्तीत्याह–हे कौरव्येति । पुरुषादाननुव्रतः तत्स्वभावमापन्नः ॥ ४६ ॥ तस्य कंसस्य निर्बंधं हठम् । "निर्बंधो हठमुक्तयोः" इति धरणिः । विचिंत्य इत्थमयं पापो बोधनीय इति विचार्य ॥ ४७ ॥ आर्यविमृष्टाप्यर्थो नार्यैर्नांगीक्रियत इत्याशंकते–नन्वित्यादिना । अयं कंसः । एतत् मद्विचारितम्। वक्ष्यमाणसुतार्पणादिना भार्यामोक्षणम्। स्वयमेव वसुदेव इत्यर्थः । प्राह मृत्युरित्यादिना । अपोह्यो निराकर्त्तव्यः । बुद्धिश्च बलं चोदयश्च ते बुद्धिबलोदयाः ज्ञानसामर्थ्यवैभवाः यावंतो बुद्धिबलोदयास्तावंतो मृत्युप्रतीकारा इति यावद्बुद्धिबलोदयम् । "यावदवधारणे" इत्यव्ययीभावः । असौ मृत्युः । बुद्धिवैभवादिसत्त्वेऽकार्येणापि मृत्युप्रतीकारः कार्योऽन्यथाऽपराधो दोषः स्यादिति । यद्वा–अकार्येणापि मृत्यावनिवृत्तेऽकार्यकरणलक्षणापराधो न भवति प्रतिकर्तुरिति भावः ॥ ४८ ॥ यतो मृत्यूपेक्षणे दोषस्तस्माद्धेतोः । उपेक्षा औदासीन्यम् । एवं वक्ष्यमाणप्रकारम् । अहो पुत्रप्रदानं मारकाय न्याय्यमेवेति चेत्तत्राह–नन्विति । अन्याय्यम् अयुक्तम् ॥ ४९ ॥ विपर्ययो वैपरीत्यम् । विपर्ययोऽसंभव इत्याह–नन्विति । 'प्रौढो युवातिवलयोः' इति मेदिन्यादयः । तत्र बालकादपि प्रौढमरणे धातुर्गतेर्वैचित्र्यमाह–

अग्नेर्यथा दारुवियोगयोगयोरदृष्टतोऽन्यन्न निमित्तमस्ति ॥ एवं हि जंतोरपि दुर्विभाव्यः शरीरसंयोगवियोगहेतुः ॥ ५१ ॥ एवं विमृश्य तं पापं यावदात्मनिदर्शनम् ॥ पूजयामास वै शौरिर्बहुमानपुरःसरम् ॥ ५२ ॥ प्रसन्नवदनांभोजो नृशंसं निरपत्रपम् ॥ मनसा दूयमानेन प्रहसन्निदमब्रवीत् ॥ ५३ ॥ वसुदेव उवाच ॥ न ह्यस्यास्ते भयं सौम्य यद्वै साहाशरीरवाक् ॥ पुत्रान्समर्पयिष्येऽस्या यतस्ते भयमुत्थितम् ॥ ५४ ॥ श्रीशुक उवाच ॥ स्वसुर्वधान्निववृते कंसस्तद्वाक्यसारवित् ॥ वसुदेवोऽपि तं प्रीतः प्रशस्य प्राविशद्गृहम् ॥ ५५ ॥ अथ काल उपावृत्ते देवकी सर्वदेवता ॥ पुत्रान्प्रसुषुवे चाष्टौ कन्यां चैवानुवत्सरम् ॥ ५६ ॥

मृत्युरयं तावन्निवर्तेत । निवृत्तः पुनः कालांतरे आपतेच्चेत्तदा नापराधो ममेत्यर्थः । अथ वाऽस्य मत्पुत्रादुपस्थितो यो मृत्युरस्या वधान्निवर्तेत अन्यथा स्यात्तदा स पुनरनेन मम मंत्रेण निवृत्तोप्यापतेत् । भवेदेव तदिष्टमित्यर्थः । यद्वा गतिर्धातुर्दुरत्ययेत्येतस्यैव प्रपंच उपस्थित इति ॥ ५० ॥ प्राणिनामदृष्टं च पुनर्दुर्वितर्क्यमिति सदृष्टांतमाह । अग्नेरिति । वने वृक्षान्प्रदहन्वह्निः सन्निहितानपि वृक्षान्परित्यज्य कदाचिद्दूरस्थानपि दहति ग्रामे गृहान्वा न ह्यस्य प्राण्यदृष्टव्यतिरेकेण किंचिन्नियामकमस्ति यथा । एवं जंतोर्जन्ममरणयोरपि हेतुर्दुर्विभाव्योऽचिंत्यः अत एतदुपर्यस्या अदृष्टमेव हेतुरिति भावः ॥ ५१ ॥ यावदात्मनिदर्शनं स्वप्रज्ञावधि विचार्य ॥ ५२ ॥ तस्य विश्वासाय विकसितमुखांभोजः प्रहसन्नब्रवीत् ॥५३॥ यत् यथा अशरीरिणी वागाह तथा हि निश्चितम् । अस्याः सकाशात्ते भयं नास्ति । यतो येभ्यः पुत्रेभ्यस्ते भयमुत्थितम् । अष्टमो हंतेत्युक्तेरन्योन्यापेक्षया सर्वेप्यष्टमा भवेयुरिति सर्वानपि तानस्याः पुत्रान्समर्पयिष्ये ॥५४॥ तद्वाक्ये सारः उपपत्तिः तद्वित् निववृते निवृत्तः ॥५५॥ प्रसूतिकाले उपावृत्ते

धातुरीश्वरस्य दुरत्ययाऽतिक्रांतुमशक्या यतोऽतः कारणात् । तथा सति अपत्यार्पणप्रतिज्ञामंत्रे सति । उपस्थित इदानीमागतः । 'भक्षितेऽपि लशुने व्याधिर्नो नष्टः' इति न्यायेनापत्यार्पणेपि जीवति दुर्मतिकंसे कालांतरे मृत्युभयं तदवस्थमित्यस्वरसादाह—अथ वेति । अस्य कंसस्य । अस्या देवक्याः । न हि मंत्रौषधाद्यैः कालोऽतिक्रम्यतेऽतः किं मंत्रेणेत्यरुच्याह—यद्वेति । प्रपंचः विस्तारेण कथनम् ॥ ५० ॥ नन्वदृष्टमेव जनिमृतिहेतुस्तच्च ज्ञातुं न शक्यमित्याह—प्राणिनामिति । अदृष्टं शुभाशुभं कर्म दुर्वितर्क्यं ज्ञातुमशक्यं दृष्टांतप्रपंचोऽग्नेरिति । सन्निहितान्निकटवार्तिनः । अस्य दहनस्य । नियामकं विनिगमकम् । एवं वृक्षादिवत् । जंतोः प्राणिमात्रस्य । दुर्विभाव्यः दुर्वितर्क्यः ॥ ५१ ॥ नृशंसं क्रूरम् "नृशंसो घातुकः क्रूरः" इत्यमरः । दूयमानेन तप्यमानेन । विहसन्निति बाह्यानंदमाह । महतां सत्यपि क्लेशे नो विकृतिः( क्रोधादिरूपा ) इति भावः॥५२॥ ॥ ५३ ॥ यतो येषां पुत्राणां ते तव सकाशाद्भयं मृत्युरूपमागतं तानस्याः पुत्रान्समर्पयिष्ये श्रीकृष्णस्य तद्भयाभावात्तदसमर्पणेऽपि न वसुदेवस्य मिथ्यावादित्वं स्यादिति वास्तवोर्थः प्रतीयते । यद्वा—श्रीकृष्णस्य न कस्यापि पुत्रत्वमस्ति "न माता न पिता तस्य न भार्या न सुतादयः" इत्यग्रे वक्ष्यमाणत्वात् । यथाश्रुतेऽपि न दोषः । 'भगवान्देवकीसुतः' इत्युक्तिस्तु देवक्यां सुतवदाविर्भूतत्वादाविर्भावपरा । आविर्भावमेवाग्रे वक्ष्यति—"आविरासीद्यथा प्राच्यां दिशींदुरिव पुष्कलः" इति ॥ ५४ ॥ तद्वाक्ये वसुदेववाक्ये ॥ ५५ ॥ न हि तस्या एव भगवान्देवता तस्य सर्वेषां दैवतत्वादित्यरुच्याह—सर्वदेवमयीति । 'सर्वदेवमयो हरिः'

कीर्तिमंतं प्रथमजं कंसायानकदुंदुभिः ॥ अर्पयामास कृच्छ्रेण सोऽनृतादतिविह्वलः ॥५७॥ किं दुःसहं नु साधूनां विदुषां किमपेक्षितम् ॥ किमकार्यं कदर्याणां दुस्त्यजं किं धृतात्मनाम् ॥ ५८ ॥ दृष्ट्वा समत्वं तच्छौरेः सत्ये चैव व्यवस्थितिम् ॥ कंसस्तुष्टमना राजन्प्रहसन्निदमब्रवीत् ॥ ५९ ॥ प्रतियातु कुमारोऽयं न ह्यस्मादस्ति मे भयम् ॥ अष्टमाद्युवयोर्गर्भान्मृत्युर्मे विहितः किल ॥६०॥ तथेति सुतमादाय ययावानकदुंदुभिः ॥ नाभ्यनंदत तद्वाक्यमसतोऽविजितात्मनः ॥ ६१ ॥ नंदाद्या ये व्रजे गोपा याश्चामीषां च योषितः ॥ वृष्णयो वसुदेवाद्या देवक्याद्या यदुस्त्रियः ॥ ६२ ॥ सर्वे वै देवताप्राया उभयोरपि भारत ॥ ज्ञातयो बंधुसुहृदो ये च कंसमनुव्रताः ॥ ६३ ॥

प्राते सर्वः सर्वात्मा भगवानेव देवता यस्याः सा तथा । सर्वदेवतामयीति वा भगवदाश्रयत्वात् ॥ ५६ ॥ ५७ ॥ मृत्यवे पुत्रं कथमर्पितवानित्यपेक्षायामाह—किं दुःसह मिति । साधूनां सत्यसंधानाम् । पुत्रलालनसुखापेक्षा कथं त्यक्तेत्यत आह—विदुषामिति । भगवानेव तत्त्वं नान्यदिति जानतामित्यर्थः । ननु स्वयं नीते सति कंसो बालं न हन्यादिति मत्वा नीतवानिति किं न स्यादिति नेत्याह—किमकार्यमिति ॥ ननु देवकी कथं पुत्रं तत्याजेत्यत आह—दुस्त्यजमिति । चित्ते धृत आत्मा हरिर्यैस्तेषाम् ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ कंसस्य शांतिर्देवकार्यानुगुणा न भवतीति नारदस्य प्रत्यवस्थानमासीत् । तदाह—नंदाद्या इत्यादित्रयेण ॥ ६२ ॥ उभयोर्वसुदेवनं

इत्युक्तेः सर्वदेवस्वरूपहरेस्तदंतर्निविष्टत्वात् ॥ कन्यां सुभद्राम् । अनुवत्सरं वत्सरेवत्सरे एकैकम् । अष्टसु वर्षेष्वित्यर्थः । प्रतिवर्षमिति वीप्सा तु न व्याख्येया एकैकस्मिन्वर्षेऽष्टपुत्रोत्पत्तिप्रसक्तेः । पुत्रसमसंख्य कन्योत्पत्तिप्रसक्तेश्च । ननु वसुदेवेनैतादृशपुत्रनाशदुःखेन गार्हस्थ्यं किन्न त्यक्तमिति चेत्तत्रेदं बोध्यम् । हरिर्मदात्मजो भावी तन्मुखदर्शनं मम भविष्यतीत्याशया न तत्याज किञ्चाष्टमपुत्रोत्पत्तिसमयो झटिति भवत्वित्यौत्कं ठ्येनैव प्रतिवर्षमेकैको गर्भ आधीयते स्मेति भावः ॥ ५६ ॥ "द्वादशेऽहनि पिता नाम कुर्यात्" इति श्रुतेरजातेऽपि नामकरणे कीर्तिमदित्यादीनि तेषां भावीनि कल्पांतरीयाणि वा श्रीयोगिराजशुकदेवेनोक्तानीत्यदोषः । यद्वा—नामकर्मोत्तरं कंसाय ददावित्यर्थः । अतिविह्वलः अतिविक्लवः 'विक्लवो विह्वलः स्यात्तु' इत्यमरः । "वाचा विचालितं येन सुकृतं तेन हारितम्" इति स्मरणात् । "यदुक्त्वा विनिवर्तेत न तदास्यं गुदं हि तत् । इलेशे ह्यनुगः स्त्री स्याच्चटकेशेन भाषितम्" इत्यभियुक्तोक्तेश्च ॥ ५७ ॥ मारणाय पुत्रार्पणम् । "प्रजासवः प्राणभृतो हि ये ते" इति वक्ष्यमाणत्वादत्यसह्यमित्याशयेनाह—मृत्यवे कंसाय । "साधू रम्ये सज्जने च पुंसि सत्यपरे हरौ" इति धरणिदेवः । सत्यसंधानां सत्यप्रतिज्ञानाम् 'संधा संधिप्रतिज्ञयोः' इति धरणिः । तत्त्वं सत्यम् । अकार्यम् अकर्त्तव्यम् । कदर्याणां कुसंगिनां दरिद्राणां वा ॥ ५८ ॥ शौरेर्वसुदेवस्य तत्पुत्रार्पणरूपं समत्वं द्वंद्वसहिष्णुत्वं पुत्रे ममत्वाभावात् । इदं वक्ष्यमाणम् ॥ ५९ ॥ प्रतियातु स्वगृहमिति शेषः ॥ ६० ॥ असतः खलस्याविजितात्मनोऽव्यवस्थितचित्तस्य । तत् वाक्यम् । 'प्रतियातु कुमारोयम्' इत्यादिरूपम् । नाभ्यनंदत् सत्यं न मेने । "अव्यवस्थितचित्तानां प्रसादोऽपि भयंकरः" इत्यभियुक्तोक्तेः ॥ ६१ ॥ कंसे सुवृत्ते सति देवकार्यं न सेत्स्यतीत्याह—कंसस्येति । शांतिर्दयालुतादिरूपा चित्तवृत्तिः । अनुगुणाऽनुरूपा योग्येति यावत् । इति हेतोः । प्रत्यवस्थानं कंसपार्श्वे गमनम् । तदेवाह—त्रयेण नंदाद्या इत्यारभ्य वधोद्यममित्यंतश्लोकत्रयेणेत्यर्थः । अमीषां नंदादीनाम् । योषितो यशोदाद्याः ॥ ६२ ॥ केषांचित्कंसकंकादीनां दैत्यरूपत्वात्प्रायशब्दप्रयोगः । ते गोपा यदवश्च । उभयोर्यदुकुलगोपकुलयोः । ये चाक्रूराद्याः अनुव्रतास्तदनुसाराः कंसामंत्रणपक्षे भा ज्ञानं तत्रारत । भारतत्वादेवैतज्ज्ञानं तव नास्तीति भावः ॥ ६३ ॥

एतत्कंसाय भगवाञ्छशंसाभ्येत्य नारदः ॥ भूमेर्भारायमाणानां दैत्यानां च वधोद्यमम् ॥ ६४ ॥ ऋषेर्विनिर्गमे कंसो यदून्मत्वा सुरानिति ॥ देवकीगर्भसंभूतं विष्णुं च स्ववधं प्रति ॥ ६५ ॥ देवकीं वसुदेवं च निगृह्य निगडैर्गृहे ॥ जातंजातमहन्पुत्रं तयोरजनशंकया ॥ ६६ ॥ मातरं पितरं भ्रातॄन्सर्वांश्च सुहृदस्तथा ॥ घ्नंति ह्यसुतृपो लुब्धा राजानः प्रायशो भुवि ॥ ६७ ॥ आत्मानमिह संजातं जानन्प्राग्विष्णुना हतम् ॥ महासुरं कालनेमिं यदुभिः स व्यरुध्यत ॥ ६८ ॥ उग्रसेनं च पितरं यदुभोजांधकाधिपम् ॥ स्वयं निगृह्य बुभुजे शूरसेनान्महाबलः ॥ ६९ ॥ इति श्रीभागवते महापुराणे दशमस्कंधे पूर्वार्धे श्रीकृष्णावतारोपक्रमे श्रीकृष्णजन्म हेतुनिरूपणं नाम प्रथमोऽध्यायः ॥ १ ॥ श्रीशुक उवाच ॥ प्रलंबबकचाणूरतृणावर्तमहाशनैः ॥ मुष्टिकारिष्टद्विविदपूतनाकेशिधेनुकैः ॥ १ ॥ अन्यैश्चासुरभूपालैर्बाणभौमादिभिर्युतः ॥ यदूनां कदनं चक्रे बली मागधसंश्रयः ॥ २ ॥ ते पीडिता निविविशुः कुरुपंचालकेकयान् ॥ शाल्वान्विदर्भान्निषधान्विदेहान्कोसलानपि ॥ ३ ॥ एके तमनुरुंधाना ज्ञातयः पर्युपासत ॥ हतेषु षट्सु बालेषु देवक्या औग्रसेनिना ॥ ४ ॥

दकुलयोः ॥ ६३ ॥ वधोद्यमं दैवतकृतमिति शेषः ॥ ६४ ॥ ६५ ॥ निगडैः शृंखलैः अजनो विष्णुस्तच्छंकया ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ इति श्रीमद्भागवते महापुराणे दशमस्कंधे टीकायां प्रथमोऽध्यायः ॥ १ ॥ द्वितीये कंसघाताय देवक्या गर्भगो हरिः । ब्रह्मादिभिः स्तुतः सा च सांत्वितेति निरूप्यते ॥ १ ॥ यदुभिः स व्यरुध्यतेत्युक्तं तमेव विरोधं प्रपंचयति त्वरया देवकीगर्भस्यान्यत्र संचारेण भगवतः प्रवेशं वक्तुम् प्रलंबेत्यादिसार्धश्लोकत्रयेण महाशनोघासुरः ॥ १ ॥ २ ॥ ३ ॥ अनुरुंधाना अनु

एतत् नंदाद्या इत्यादि यदुक्तम् । गोपकुलयदुकुलयोः । द्वेषोत्पत्त्या झटिति भगवदवतारेण कंसस्य मृत्युर्भविष्यतीति ज्ञानवत्त्वाद्भगवानिति ।"उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम्।वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति" इति लक्षणस्य तत्र सत्त्वादिति । 'चातकानां वामतो गतिः' इति वद्देवानामपि गतिर्वामैवातः प्रथमस्यैवाष्टमत्वमायाति । यद्वा–द्वितीयतो गणने प्रथमस्य तृतीयतो गणने द्वितीयस्यैवमग्रेऽपि गणनात्सर्वेषामष्टमत्वमायातीत्थं च शशंसेति संबंधः ॥ ६४ ॥ ऋषेर्नारदस्य । विनिर्गमे गमने सति । स्ववधं प्रति मत्वा च ॥ ६५ ॥ निगडैरंदुकैः 'अंदुको निगडोऽस्त्री स्यात्' इत्यमरः । निगृह्य निरुद्ध्य । अयमेव मत्संहर्ता विष्णुरिति शंकया । जातंजातमुत्पन्नमुत्पन्नम् । हतवान्न तु जन्मकाल एव । तथा सति नामकरणासंभवे कीर्त्तिमंतमित्युक्तेरसांगत्यं स्यादिति भावः । युग्मम् ॥ ६६ ॥ परप्राणैः स्वप्राणांस्तर्पयंति ये तेऽसुतृपः । राजानस्तु प्रायशो बाहुल्येन "मा राज्यश्रीरभूत्पुंसः श्रेयस्कामस्य मानद । सुजनानुत वा बंधून्न पश्यति ययांधदृक् ॥" इति वक्ष्यमाणत्वात् ॥ ६७ ॥ प्राक्पूर्वजन्मनि जानन् नारदोक्तेरिति शेषः । स कंसः ॥ ६८ ॥ चात्तत्संबंधिनोपि । स्वयं बुभुजे न केनचिदभिषिक्त इत्यर्थः ॥ ६९ ॥ इतिश्रीमद्भागवतभावार्थदीपिकाप्रकाशे दशमस्कन्धे पूर्वार्द्धे प्रथमोऽध्यायः ॥ १ ॥ गर्भगः तदंतः ( चित्ते ) प्रविष्टः "गर्भो भ्रूणे ध्वनौ धार्ष्ट्ये सेक्तारि ज्ञानबाल्ययोः । मध्ये कुक्षौ हंतुसंध्योः पनसस्य च कंटके ॥ चित्ते गर्त्ते मुखे चापि" इति धरणिः । सा च देवकी च । सांत्विता निर्भया कृता इति (१) । त्वरया वेगेन । अन्यत्र रोहिण्याम् । संचारेण प्रापणेन । सार्द्धश्लोकत्रयेण प्रलंबेत्यारभ्य पर्युपासत इत्यंतेन ॥१॥ २ ॥ ते यदवः । निविविशुः निवेशं चक्रुः । परस्मैपदमार्षम् "नेर्विशः" इत्यात्मनेपदे प्राप्ते ॥ ३ ॥ एकेऽक्रूरादयः । तं कंसम् । औग्रसेनिना कंसेन ॥ ४ ॥

सप्तमो वैष्णवं धाम यमनंतं प्रचक्षते ॥ गर्भो बभूव देवक्या हर्षशोकविवर्धनः ॥५॥ भगवानपि विश्वात्मा विदित्वा कंसजं भयम् ॥ यदूनां निजनाथानां योगमायां समादिशत् ॥ ६ ॥ गच्छ देवि व्रजं भद्रे गोपगोभिरलंकृतम् ॥ रोहिणी वसुदेवस्य भार्याऽऽस्ते नंदगोकुले ॥ अन्याश्च कंससंविग्ना विवरेषु वसंति हि ॥ ७ ॥ देवक्या जठरे गर्भं शेषाख्यं धाम मामकम् ॥ तत्संनिकृष्य रोहिण्या उदरे सन्निवेशय ॥ ८ ॥ अथाऽहमंशभागेन देवक्याः पुत्रतां शुभे ॥ प्राप्स्यामि त्वं यशोदायां नंदपत्न्यां भविष्यसि ॥ ९ ॥

वर्तमानाः ॥ ४ ॥ धाम कला तदेव सप्तमो गर्भो बभूव । किं तद्धामेत्यत आह—यमनंतमिति । हर्षशोकविवर्धनः । आनंदरूपस्यावतीर्णत्वाद्धर्षः पूर्वगर्भसाधारणदृष्ट्या च शोक इति ॥ ५ ॥ ६ ॥ ७ ॥ ननु सा गोकुले किमित्यास्ते अत आह—अन्याश्चेति । न केवलं सैव अन्या अपीति । विवरेषु अलक्ष्यस्थानेषु । जठरे संतम् । ननु गर्भ आकृष्यमाणः कथं जीवेदत आह—मामकं धामेति । तत्ततः ॥ ८ ॥ किमर्थमेवं कार्यमित्यत आह--अथेति । अनंतरमेवेत्यर्थः । अंशभागेनेति । अंशैः शक्तिभिर्भजतेऽधितिष्ठति सर्वान्ब्रह्मादिस्तंबपर्यंतानित्यंशभागस्तेन परिपूर्णेन रूपेणेत्यर्थः । यद्वा अंशैर्ज्ञानैश्वर्यबलादिभिर्भाजयति योजयति स्वीयानिति यथा तेनेति । यद्वा अंशेन पुरुषरूपेण मायाया भागो भजनमीक्षणं यस्य तेन । यद्वा अंशेन मायया गुणावतारादिरूपा भागा भेदा यस्य तेन । यद्वा अंशा एव मत्स्यकूर्मादिरूपा भजनीया न तु साक्षात्स्वरूपं

कला अंशः । शयनीयत्वाद्वा धामेति ॥ ९ ॥ निज आत्मैव नाथो येषां ते तथा तेषाम् ॥ ६ ॥ नंदगोकुले बृहद्वनाख्ये ॥ ७ ॥ मम धामत्वेन तस्याविनाशित्वमेवेत्याह—मामकं धामेति 'भवानेकश्शिष्यते शेषसंज्ञः इत्यग्रे वक्ष्यमाणत्वात् । ततो गर्भात् । ननु शुद्धस्वरूपायां भगवत्प्रकाशिकायां महाशक्तौ देवकीदेव्यां प्राकृतानां षड्गर्भाणां कथं प्रवेशस्सत्यं शुद्धस्वरूपे श्रीभगवति समाष्टिव्यष्टीनां प्रविष्टत्वेऽपि यथा न तद्योगस्तथैव देवक्यामपि षड्गर्भाणामित्यर्थः । तदुक्तम् 'मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः । न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम्'' इति । किन्तु जनेषु भक्तिपरिपाटीप्रदर्शनार्थैवेयं लीलेत्यवगम्यते । तथाहि भक्तजने श्रवणकीर्तनादिरूपा भक्तिस्तिष्ठति तद्गर्भ एव तदानुषंगिकफलभूतत्वात् षड्विषयभोगाश्च तिष्ठंति हत एतैरेव संसारांधकूपे पतिष्यामीति । ततः प्रकटीभूताद्भयात्कालेन ते निवर्त्तंते च ततो भगवद्यशः श्रवणकीर्त्तनपारिचर्यादिमयी भक्तिरतिप्रवृद्धा भवति तस्यां च भगवान्रूपगुणमहोदधिः प्रादुर्भवति भक्तेर्भगवत्प्रकाशकशुद्धसत्त्वस्वरूपत्वात् ''भक्तिरेवैनं दर्शयति'' इति श्रुतेः । एवमेव 'मरीचिर्मनसोऽभवत्' इति श्रवणान्मरीचेर्मनोऽवतारत्वं तत्पुत्राणां षण्णां षड्विषयावतारत्वं देवक्या भगवत्प्रादुर्भावकत्वाद्भक्त्यवतारत्वं 'भयात्कंसः' इत्युक्तेर्भयमयत्वेन कंसस्य भयावतारत्वम् अतो भक्तिगर्भगतानां षड्विषयाणां संसारभयमेव निवर्त्तकं तथैव षड्गर्भाणां कंसो हंता विषयनिवृत्तौ सत्यां यथा भक्तिगर्भे भगवद्यशः परिचर्यादिमयी प्रेमभक्तिरेव भवेत्तथैव देवक्यां षड्गर्भनिवृत्त्यनंतरं सप्तमो गर्भो भगवद्यशोनिवासशय्यासनच्छत्रादिरूपोऽनंतः ततः प्रेमभक्त्याविर्भावानंतरं यथा भगवत्साक्षात्कारो भक्तेरष्टमो गर्भस्तथैव 'देवक्याश्चाष्टमो गर्भो भगवान्' इति तत्त्वमत्र द्रष्टव्यमिति विश्वनाथः ॥८॥ एवं गर्भसंकर्षणमित्यर्थः । अथेत्यव्ययस्य मंगलादिरूपबह्वर्थकत्वादनंतरार्थमेवात्र ग्राह्यमित्याह—अनंतरमेवेति । पूर्वव्याख्याने शक्तिभिरित्युक्तेः काः शक्तय इति जिज्ञासोत्पत्तेर्ब्रह्मादिषु कथंचिच्छक्तिदर्शनेऽपि स्तंबादिषु तददर्शनाच्चास्वरसप्रतीतेः पुनराह—यद्वेति । इहापि स्वीयानित्युक्तेः पक्षपातित्वेन वैषम्यनैर्घृण्ययोः प्रतीतेररुच्या पुनराह—यद्वेति । इहापि पुरुषरूपेणेत्युक्तेर्जीवस्यापि '' द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च '' इति श्रीमुखोक्तेः । पुरुषरूपत्वेन मायाभागित्वं स्यात् । किञ्च भागशब्दस्येक्षणार्थे वृत्तेरदर्शनादप्यस्वरसप्रतीतेः पुनराह—

अर्चिष्यंति मनुष्यास्त्वां सर्वकामवरेश्वरीम् ॥ धूपोपहारबलिभिः सर्वकामवरप्रदाम् ॥ १० ॥ नामधेयानि कुर्वंति स्थानानि च नरा भुवि ॥ दुर्गेति भद्रकालीति विजया वैष्णवीति च ॥ ११ ॥ कुमुदा चंडिका कृष्णा माधवी कन्यकेति च ॥ माया नारायणीशानी शारदेत्यंबिकेति च ॥ ॥ १२ ॥ गर्भसंकर्षणात्त्वं वै प्राहुः संकर्षणं भुवि ॥ रामेति लोकरमणाद्बलं बलवदुच्छ्रयात् ॥ १३ ॥

यस्य तेन । यद्वा अंशैर्ज्ञानबलादिभिर्भजनमनुवर्तनं भक्तेषु यस्य तेन सर्वथा परिपूर्णेन रूपेणेति विवक्षितम् "कृष्णस्तु भगवान्स्वयम्" इत्युक्तत्वादिति । तां प्रोत्साहयति त्वं यशोदायामिति त्र्यक्षरोनसार्धचतुष्टयेन ॥ ९ ॥ सर्वान्पुत्रादीन्कामयंते ये तेषां वरामीश्वरीं श्रेष्ठां नियंत्रीमर्चकानां सर्वान्कामवरान्प्रददाति या ताम् ॥ १० ॥ ११ ॥ १२ ॥ त्वद्विक्रमेण च तस्य व्यपदेशा भविष्यंतीत्याह—गर्भसंकर्षणादित्यादिना । रामेति च संबोधनं करिष्यंति । त्वया संकृष्टेन तेन लोकस्य रमणाद्रत्युत्पादनात् ॥ १३ ॥

यद्वेति । इहापि मायासंबंधप्रतीतेर्मायिकत्वमायाति तादृशस्य तु न सर्वथा परिपूर्णत्वं सेत्स्यतीत्यरुच्या पुनराह—यद्वेति । न तु साक्षात्स्वरूपम् । " यतो वाचो निवर्त्तंते " इत्यादिश्रुतेर्वाङ्मनसाऽगोचरत्वात् । तेन निर्गुणं स्वरूपं लभ्यते तत्र चांशादिकल्पनमप्ययुक्तमयोग्यत्वात् योग्य एव पृथिव्यादावंशंशादिकल्पना दृश्यते नायोग्ये वियदादाविति अतोऽयमर्थोऽपि न तोषकर इत्यरुच्या पुनराह—यद्वेति । इह भक्तेष्वित्युक्तेऽपि राग द्वेषादयस्तत्र नैवोह्याः कल्पवृक्षादिवदिति । सर्वथा सर्वप्रकारेण । तां योगमायाम् । प्रोत्साहयति सोत्साहां करोति—त्वमित्यारभ्योच्छ्रयादित्यंतेन सार्द्धचतुष्कश्लोकेन ॥ ९ ॥ नियंत्रीं प्रेरिकां स्वामिनीमिति यावत् ॥ १० ॥ नामधेयानि नामानि । दुःखेन गम्यते प्राप्यत इति दुर्गा । भद्रं कल्याणं कलयति सृजति भक्तानामिति भद्रकाली । यद्वा—भद्रा मंगलरूपा चासौ काली नीलरूपेति भद्रकाली । विजयते सर्वदुःखानि सर्वदुष्टदैत्यान्वेति विजया । विष्णोरियं शक्तिर्वैष्णवी ॥ ११ ॥ कौ भूमौ मुद्धर्षोऽनयेति कुमुदा । शत्रुषु चंडति कोपं करोतीति चंडिका । ' चंडिकोपे ' । सदानंदरूपत्वात्कृष्णा कृष्णभगिनीत्वाद्वा । ' अदृश्यतानुजा विष्णोः ' इति वक्ष्यमाणत्वात् । " नंदगोपगृहे जाता यशोदागर्भसंभवा " इति मार्कंडेयाच्च कृष्णवर्णत्वाद्वा कृष्णेति । मधुवंशे जातत्वान्माधवी मधोर्भगवतो भगिनीत्वेन दयितत्वाद्वा माधवी । कं सुखं नयति प्रापयति दुष्टदैत्य नाशनेन सर्वं जगदिति कन्या ' जगत्स्वास्थ्यमतीवाप ' इति मार्कंडेयोक्तेः । ' णीञ्—प्रापणे ' अतः कः । यद्वा—कनति तत्तद्रूपेण द्योतसे सर्वत्रेति कन्या ' कनी—दीप्तौ ' कन्यैव कन्यका । स्वार्थे कप्रत्ययः । ' मायः पीतांबरेऽपि स्यात् ' इति कोशान्मायस्येयं माया । मीयते कार्यान्यथानुपपत्त्या ज्ञायते इति माया । अघटनघटनापटीयसी भगवच्छक्तिः । तद्रूपा नारस्य जनसमुदायस्यायनं प्रवृत्तिर्यया सा नारायणी " जलायना नराधारा समुद्रशयनाऽपि वा । नारायणी समाख्याता नरनारीप्रवर्त्तिका ॥ " इति देवीपुराणोक्तरीत्या नारायणीपदं व्याख्येयम् । ईष्टे इतीशाना । सर्वेश्वरी सर्वदेवस्तुत्यत्वात् । तथात्वम् 'शक्रादयः सुरगणाः' इत्यादिना ' देव्या हते तत्र महासुरेन्द्रे ' इत्यादिना च मार्कंडेये स्फुटतरम् । शीर्यते ज्ञानेनेति शारः संसारः । ' शॄ—हिंसायाम् ' तं द्यति खंडयतीति शारदा ' सैषा प्रसन्ना वरदा नृणां भवति मुक्तये । सा विद्या परमा मुक्तेर्हेतुभूता सनातनी ॥ " इत्युक्तेः । " या मुक्तिहेतुरविचिन्त्यमहाव्रता च " इत्याद्युक्तेश्च । यद्वा—शरणं शारो हिंसा तं ददाति महिषादिदैत्येभ्य इति शारदा । शरदृतौ पूज्यत्वाद्वा शारदा । ' शरत्काले महापूजा क्रियते या च ' इति मार्कंडेयोक्तेः । अम्ब्यते शब्द्यते दुःखे या सा अम्बा ' अबि—शब्दने ' यद्वा—अम्ब्यते स्नेहेनोपगम्यते या सा ' अबि—गतौ ' " अकर्त्तरि च कारके संज्ञायाम् " इत्युभयत्रापि स्त्रियां घञ् ततष्टाप् स्वार्थिके अम्बिकेति ॥ १२ ॥ तत्पुरुषार्थोत्कर्षमाह—त्वदिति । तस्याकृष्टगर्भस्य । व्यपदिश्यत उच्चार्यतेऽर्थादाहूयते यैस्ते व्यपदेशा नामानि । रत्युत्पादनात्प्रीत्युत्पादनात् । बलवतामुच्छ्रयात् उन्नतत्वात् । तम् आकृष्टगर्भ

